

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र

श्रीमन्निगमान्तमहादेशिकविरचितः

# तत्त्वमुक्ताकलापः

## सर्वङ्कषाव्याख्यासहितः




व्याख्याता

महामहोपाध्याय-शास्त्ररत्नाकर-सर्वशास्त्रकलानिधि-पण्डितरत्नेत्यादि-

बिरुदभूषितः भारतराष्ट्रपतिसंमानितः

नव्यमङ्गलाभिजनः

वरदाचार्यः









आर्षग्रन्थप्रकाशनम्

पम्पापतिवीथी, जयनगरम्

मैसूरु-५७००१४, कर्नाटक - सं. २०६०

इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरो वाङ्मयं च ।
यन्नास्मिन् क्वापि नैतत्, क्षममिह कुहकैरिन्द्रजालं न तैस्तैः एकं तत् सर्वसिद्धयै कलयत हृदये तत्त्वमुक्ताकलापम् ।।

ॐ

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र

श्रीमन्निगमान्तमहादेशिकविरचितः

# तत्त्वमुक्ताकलापः

## सर्वङ्कषाव्याख्यासहितः




व्याख्याता

महामहोपाध्याय-शास्त्ररत्नाकर-सर्वशास्त्रकलानिधि-पण्डितरत्नेत्यादि-

बिरुदभूषितः भारतराष्ट्रपतिसंमानितः

नव्यमङ्गलाभिजनः

वरदाचार्यः





आर्षग्रन्थप्रकाशनम्

पम्पापतिवीथी, जयनगरम्

मैसूरु-५७००१४, कर्नाटक - सं. २०६०

प्रधान आर्थिक सहयोगः

श्री स्वामिनारायण गुरुकुल - राजकोट (गुजरात)

प.पू.सद्. कोठारी श्री देवकृष्णदासजी स्वामी

प.पू.सद्. शास्त्री श्री माधवप्रियदासजी स्वामी (वेदांताचार्यः)

Tattvamuktakalapa of Srimad Vedantadesika with Commentary Sarvankasha by K.S. Varadacharya, Pages: 818+xlviii+xxx

Publishers : Arsha Grantha Prakashana
# 2842, Pampathi Road, Jayanagar
Mysore-570014 (Karnataka, INDIA)
Tel : 0821 - 2567536



No. of Copies : 1000, First Edition : 2004,
Price : Rs. 800/-



# समर्पणम्



''ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि, तान् प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ।।''

इति निराशाया निरीक्षाया वा नावकाशः, यतो निरीक्षैव काचिदिह न लेशतोऽप्यस्ति । एवम्-

''ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु ।।''

इति दर्पस्य धार्ष्टयस्य वा न गन्धलेशः, यतोऽयं व्याख्याकारः सप्तपर्वदास्यसुखाकाङ्क्षी । किन्तु-

''सारासारविवेकज्ञाः गरीयांसो विमत्सराः ।
प्रमाणतन्त्रास्सन्तीति''
तेभ्यस्त्वैतत् समर्पितम् ।।

नव्यमङ्गलाभिजनः
वरदाचार्यः




॥ श्रीस्वामिनारायणाय नमः ॥

## हार्दो भावः

रामानुजं योगिवर्यं वन्दे वेदान्तदेशिकम् । नत्वा च वरदाचार्यं हार्दं भावं निवेदये ॥

सुप्रथितेषु वेदान्तदर्शनेष्वन्यतममिदं सविशेषाद्वैतनामकं विशिष्टाद्वैतदर्शनम् । तत्र चौपनिषदं मतं स्थूणानिखननन्यायेन परिशोध्य चिदचिद्विशिष्टस्य ब्रह्मतत्त्वस्य प्रतिपादनमुखेन हेयप्रत्यनीकस्य कल्याणगुणाकरस्य श्रीमन्नारायणस्यैव परमप्रमेयत्वं संसाध्यते । उक्तं च न्यायपरिशुद्धौ कवितार्किकसिंहैःश्रीवेङ्कटनाथैः 'यद्विषयेण भ्रमेण संसरामः यद्विषयेण तत्त्वज्ञानेन चावर्ज्येमहि तदिह नः ''प्रकर्षेण मेयं प्रमेयम्'' इति । तदनुसृत्यैव च न्यायसिद्धाञ्जने ब्रह्मैकमेव तत्त्वम्, तत्र प्रकारप्रकारिणोः प्रकाराणाञ्च मिथोऽत्यन्तभेदेऽपि वैशिष्टयादि विवक्षयैकत्वव्यपदेशस्तदितरनिषेधश्च' इति तत्त्वस्वरुपं निर्धारितम् ।

भेदे, अभेदे, भेदाभेदे च अविरोधमेव हि समर्थयन्ति भगवद्रामानुजाचार्यवर्याः–'सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदः समर्थितः । एकमेव ब्रह्म नानाभूतचिदचिद्वस्तुप्रकारं नानात्वेनावस्थितमिति भेदाभेदौ । चिदचिदवस्तुनःएवम् ईश्वरस्य च स्वरुपस्वभाववैलक्षण्यादसंकराच्च भेदस्समर्थित ः ।' इति ।

ईदृशमप्रतिमानितरसाधारणं च मतं सर्वतन्त्रस्वतन्त्रैः श्रीमद्वेदान्तदेशिकैर्विरचितानां प्रकरणग्रन्थानां वादग्रन्थानाञ्च बलेनैव परपक्षकक्षीकारेण परिरक्षितमित्युक्तौ न ह्यतिशयोक्तिः । स्वसिद्धान्तस्य प्रत्येकस्य दर्शनप्रमेयस्यास्य च निखरभावः – इदमित्थंभावस्तत्त्वमुक्ताकलापादृते नान्यत्रोपलब्धचरः । अत एव च यदिहास्ति तदन्यत्रेत्यादिमहाभारत प्रशस्तिवचनं दर्शनक्षेत्रे अस्मिन्नेवान्वेतीत्यभियुक्ता अभिप्रयन्ति ।

अत्यन्तं जटिलस्य दर्शनशास्त्रमर्मगर्भितस्य चास्य ग्रन्थस्य व्याख्यानं वेदान्ताचार्यसदृशा एव निखिलदर्शनमर्मज्ञाः वस्तुतत्त्वस्य यथार्थावगाहिन महाभागाः वरदाचार्यसदृशा एव कर्तुं पारयन्ति । इदञ्च निखिलमहत्तमं विद्वद्भिरभिनिषेवणीयं च विस्तृतव्याख्यासमलङ्कृतं ग्रन्थरत्नं 'पाण्डित्यं निर्विंध बाल्येन तिष्ठासेत् ' इत्याकारकस्य श्रुतिवचनस्य मूर्तिमत्स्वरूपमिव विराजमानैः पण्डितरत्नेत्यादिपदवीविभूषितैः नव्यमङ्गलं वरदाचार्यैः विरचितं तत्त्वबुभुत्सूनां कल्पतरूप्रायमभवत् । एतेभ्यः विद्वज्जनसमुदायपरतः श्री स्वामिनारायण गुरुकुलपरिवारपरतश्च हार्दां कृतज्ञतां सभक्तिश्रद्धं समर्पये । अभ्यर्थये च भगवतः श्री स्वामिनारायणस्य चरणारविन्दसन्निधौ यत् ग्रन्थकृद्भ्य आचार्यवर्येभ्यस्तत्परिवारजनेभ्यश्चायुरारोग्यैश्वर्यादिकं परीवाहयन् अनुगृह्णत्विति । विश्वसिमि चाधिजिगमिषवश्च सर्वेऽपि अध्येतारो ग्रन्थकृत्परिश्रमं सार्थकं करिष्यन्तीत्यपि ।

इत्थम्-विद्वज्जनविधेयः देवर्षिः शास्त्री माधवप्रियदासः

श्री स्वामिनारायण गुरुकुल – राजकोट

## Praiseworthy Contribution to Philosophical Literature

Bhagawadpad Shri Ramanujacharyaji resided for 12 years in Melkote (Karnataka) and propagated the Vishishtadwait Philosophy. He reestablished Melkote as the centre of Sanskrit and Vedant learning. Academy of Sanskrit research is established in this pious and religious town Melkote in 1978, with a view to remove the darkness of ignorance by lighting the torch of spiritual knowledge.

In this Academy students, really desirous of higher education of Sanskrit are welcome. Shashtri Nirmaldasji of Shri Swaminarayan Gurukul, Rajkot got the opportunity of getting higher knowledge of Sanskrit in this Academy. Over and above other scholarly Pandits, **Pandit Ratnam Mahamahopadhyay K. S. Vardacharyaji,** who has been honoured by the Award given by the President of India, was deeply yet lucidly explaining the principles of Vishistadwait Philosophy, pointing out the various characteristics of Jiv, Jagat and Brahman giving many relevant references.

Sadhu Nirmaldasji was highly impressed by the above clearcut and explanatory lectures of Shri Vardacharyaji and so he requested him that if a commentray on Vishishtadwait is written by him and published, it will be very useful. Further he also informed me and Sadguruvarya Shashtri Swami Madhavpriyadasji regarding the above commentry.

Bhagwan Shri Swaminarayan has also clearly stated in the Shikshapatri that, **'मतं विशिष्टाद्वैतं मे'** "Our doctrine of philosophy is Vishishtadwait. So we very willingly and voluntarily offered to sponsor all the expenses of printing and binding of Tattvamuktakalapa of Srimad Vedantadesika with Commentary Sarvankasha, if it is published.

After this Pandit Ratnam Vardacharyaji has finalised the commentary working day and night and today we are highly pleased that it is published. This philosophical commentary will be highly useful not only to the students of higher Sanskrit study but also to all the persons interested in the philosophy.

This commentary is the most valuable and praiseworthy historical contribution to the Philosophical Sanskrit Literature, for which Pandit Ratnam K. S. Vardacharyaji will be ever remembered. May Bhagwan Shri Swaminarayan bestow healthy and long life to Shri Vardacharyaji and more strength for the spread of Vedantik and spiritual knowledge.

**Vasant Panchami, S.Y. 2060**
**Date : 26th January 2004**

**Sadguruvarya Swami Devkrishnadasji**
Shri Swaminarayan Gurukul-Rajkot

---

**अन्ये आर्थिक सहयोग दातारः**

* शास्त्री स्वामी श्री निर्मलदासजी (वेदांताचार्य), श्री स्वामिनारायण गुरुकुल – (राजकोट–गुजरात)
* शास्त्री स्वामी श्री घनश्यामनंदनदासस्य प्रेरणया – श्री गोविंदभाई मेघजीभाई हीराणी, धर्मपत्नी जीवीबाई हीराणी, पुत्र जेन्तीलाल हीराणी – (माधापर–कच्छ),(कारडीफ–यु. के.)
* शास्त्री स्वामी सत्यप्रसाददासजी, श्री स्वामिनारायण मंदिर – (भुज–गुजरात)
* शास्त्री मावजीभगत, श्री स्वामिनारायण मंदिर – (भुज)
* शास्त्री श्री कृष्णजीवनदासजी –कोडाई गुरुकुल
* सांख्ययोगीन्यः स्त्रीभक्ताः, श्री स्वामिनारायण मंदिर – (नारणपर–कच्छ)
* श्री स्वामिनारायण मंदिर – कलाकुंज (सुरत–गुजरात)
* प्रिन्टींग– सूर्या ओफसेट – (अहेमदाबाद–गुजरात)

# Preface



We are happy to place this great work in the hands of our esteemed readers. Panditaratnam Mahamahopadhyaya K.S.Varadacharya, the author of the new commentary "Sarvankasha" offered the final draft of this work at the holy feet of Lord Tirunarayana at Melkote on the occasion of his 80th birthday celebrations. A sense of contentment and fulfillment felt by the author by this humble act delayed the action of finalising the presentation of this work to the readers. Anyhow by the grace and blessings of the Lord Tirunarayana this work has been able to see the light of the day.

While studying the numerous ancient texts of our sastra the author was perplexed to find that while there were commentaries (Bhasyas) for the Nyaya, Vyakarana and Purvamimamsa sastras which were universally accepted, there was no evidence of an existence of such a single Bhasya authored by a Maharishi for Vedanta sutras. The author feels that perhaps that such a Bhasya existed and was lost due to the appearance of the cyclone of Vijnanavada of the Buddhist, which swept away the major aspects of Vedanta Philosophy. Hence the Acharyas who appeared later had no choice but to author commentaries (Bhasyas) on the Brahmasutras suitable to the times that they were in. Perhaps this was the reason for not having a universally accepted commentary for the Brahmasutras that is precisely in line with the real intentions of the author of the Brahmasutras.

As a first step to remedy such a situation the author has tried to bring out a commentary for the purview of the impartial truth loving scholars of today. This does not mean that the author is presenting an entirely a new commentary of the Brahmasutras of Bhagavan Badarayana. For such a need does not exist, as there is not much of a controversy or difference of opinion in connection with a large portion of the Brahmasutras. The major controversy lies only with regard to the sutras associated with the form and the relationship between the three main factors namely Jiva, Jagat and the Brahman. If one were to reconcile these controversies all the problems disappear by themselves.

The author having this aim in view took up "Tattvamuktakalapa", which mainly deals with the form and the relationship between Jiva, Jagat and Brahman and has tried to present a commentary which will resolve the difference of opinion that exists between the different commentaries of today on the Brahmasutras.

Hence the author feels that this commentary may not be in line with the commonly accepted Visistadvaitic commentaries on "Tattvamuktakalapa". That is why the author has named this introduction as "Satyanveshana" (a quest for truth). If providence wills the author proposes to pen at least one more work onto delineate clearly the hidden truths of the sastras.

Many scholars have assisted in bringing out this work. In the beginning, Vedantacharya Sastri Sadhu Satya Prasad Das and his associate Sadhus, Vidwan V. Sowmya-narayanan, Vidwan B.V. Ramapriya and others were associated with this work. Later on, Vidwan S.Krishnan, Sri K.V. Ramapriya M.A., Vidwan M.A. Alwar and Chi. Ananth took active interest and have been instrumental in bringing out this work.

**Vedantacharya Sastri Sadhu Satya Prasad Dasji Swami**, belonging to **Sri Swaminarayan Mandir, Bhuj, Kucth**, Gujarat, has donated a computer and other accessories. The entire printing and binding cost has been taken care of by **Vedantacharya Sastri Sadhu Nirmal Dasji Swami**, belonging to **Sri Swaminarayan Gurukul, Rajkot, Gujarat**. We gratefully acknowledge their contributions and pray to the Almighty Lord that He bestow a long life, health and prosperity on all these persons associated with the publication of this mammoth work.

**Mysore**
**1.08.2003**

**Publishers**
**Arsha Grantha Prakashana**



श्रीः

श्रीमते रामानुजाय नमः । श्रीस्वामिनारायणाय नमः ।

साधु शास्त्री निर्मलदासः
वेदान्ताचार्यः

श्रीस्वामिनारायण गुरुकुलम्
राजकोट, गुजरात्
19-8-2000

श्रीस्वामिनारायणभगवता हि भगवद्रामानुजप्रतिपादितं विशिष्टा(सविशेषा)द्वैततत्त्वमेव स्वसंमतम्, तदेव स्वशिष्यैरध्येयमिति कण्ठत एव शिक्षापत्र्याम् 'विशिष्टाद्वैतं मतम् मे' इति, 'शारीरकाणां भगवद्गीतायाश्चावगम्यताम् । रामानुजाचार्यकृतं भाष्यमाध्यात्मिकं मतम् ॥' इति चाभिहितमिति ज्ञात्वा, इतः प्रायः दशवर्षेभ्यः प्राक् गुर्जरप्रदेशात् न्यायविशिष्टाद्वैदवेदान्तादिसंस्कृतशास्त्राध्ययनार्थं महीशूरपुरीं यादवाद्रिं प्रति च समागतास्स्वामिनारायणसंप्रदायानुयायिनो नैके साधवः । तदात्वे संस्कृतभाषानिबद्धवेदशास्त्रादिज्ञान-रहितानां अज्ञानमात्रधनानां तादृशसाधूनां सच्छास्त्रसद्बोधनद्वारा सन्मार्गप्रदर्शनाय लब्धाः इमे महागुरवः 'पण्डितरत्नम्' 'महामहोपाध्याय' 'शास्त्ररत्नाकर' इत्यादिनानान्वर्थबिरुदभाजः, विदितसकलशास्त्रसाराः, महाज्ञानिनः, अपारकरुणाशालिनः, असूयाऽऽलस्यादिदोषप्रत्यनीकाः, ख्यातिलाभपूजादिविमुखाः, तपोधनाः, 'के. एस्. वरदाचार्यः' इति सुगृहीतनामधेयाः महान्तो गुरुवराः । तेषामेतेषां सन्निधौ वर्षपञ्चकपर्यन्तं, न्यायशास्त्रं, उपनिषदः, सांख्यकारिका एवं नानाविशिष्टाद्वैतसम्बद्धा मूलग्रन्थाः, प्रकरणग्रन्थाश्च समधिगतस्तैस्तैस्साधुभिः, तेषामेवासीमकृपया ॥

एवं गुरुवरैः तादृशसाधूनां कृते आमूलचूलं सम्यक् पाठितेषु ग्रन्थेष्वन्यतमः सर्वतन्त्रस्वतन्त्र-कवितार्किकसिंह-श्रीमन्निगमान्तमहादेशिकविरचितः तत्त्वमुक्ताकलापः । तादृशग्रन्थपाठनावसरे स्वानुपममेधा-प्रज्ञाप्रतिभाविलासवशात् निरुपाधिकभगवद्गुरुभक्तिवशाच्च स्वदृष्टाः अद्यतनप्राक्तनग्रन्थादिष्वनपलभ्यमानाः, भारतीयसंस्कृतेः, शास्त्राणाम्, अस्मद्वैदिकसप्रदायस्य च मूलस्तम्भा इव विराजमानास्सहस्रशो विचाराः परैरूहितुमप्यशक्याः स्वीयसुधासदृशवाग्भिर्वर्षिताः साधूनामुपरि परमकृपयैव केवलं, आचार्यवर्यैः। पूर्वं ह्यस्माकं मनस्यन्तराले सत्स्वन्केषु मतेषु श्रीशङ्कराचार्यादिभिः प्रतिपादितेषु श्रीस्वामिनारायणभगवता भगवद्रामानुजप्रतिपादितमेव मतं स्वसंमतमितमिति कुत उद्घोषयामासुः? तादृशं वैशिष्ट्यमस्य किमस्तीति कश्चन संशय आसीत् । एतेषामाचार्याणां सकाश अध्ययनानन्तरमेव स संशयः संपूर्णतया स्वयमेव गळितो बभूव । इदमेव दर्शनमत्यन्तप्रामाणिकं बादरायणादिसंमतमिति निश्चयो बभूव ॥

एतादृशाद्भुतमहाविचारश्रवणेनात्मानं धन्यं मन्यमानास्साधवः तदैव, आगामिजिज्ञासुपरम्परायाः कृते यथायथं सर्वेऽप्येते विचाराः ग्रन्थरूपेण परिरक्षणीया इति सप्रश्रयनिर्बन्धं आचार्यवर्यान् बहुधा प्रार्थया-मासुः । एतादृशीं प्रार्थनां प्रथममनङ्गीकुर्वन्तोऽपि, लोकस्यास्य सौभाग्यवशादनन्तरं कथञ्चिदङ्गीकृत्याचार्यवर्या

इमे सर्वङ्कषाख्यां तत्त्वमुक्ताकलापव्याख्यां, सकलशास्त्रीयाध्यात्मिकादिनानाक्षेत्रस्थगहनरहस्यसद्विचारबोधिकां एतत्कालानुगुण**वैज्ञानिकविचारशाणविधेयक्षतिरहितां** परमया हार्दया च मुदा निबबन्धुः। परं त्वेतद्ग्रन्थमध्ये तत्र तत्र 'शिष्टं समये स्पष्टीभविष्यति' इति वाक्यखण्डनदर्शनेन अयमपि ग्रन्थः न समग्रविषयप्रतिपादक इति ज्ञायते। एतदधिकृत्य तैस्साकं विचारकरणे च तैरुक्तं समाधानं न्याय्यमिति चाङ्गीकृतम्। तैः किल— 'सत्यमिदम्, यत्संपूर्णरीत्या विषया न प्रतिपादिता इति। तत्र च कारणद्वयं वर्तते। एकम्, बहुकालात्पूर्वं विद्वत्सभायामेव मया प्रतिपादितजीवेश्वरभेदविचारं सुदीर्घं संश्रुत्यान्ते सभाध्यक्षाः महाविभूतिपुरुषाः **श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रस्वतन्त्रपरकालमहादेशिकाः** 'भोः! भवदुक्तं सर्वं समीचीनमेव। परं तु अत्यन्तनवीनत्वात् पूर्ववासनापीडितैः पण्डितैर्नाङ्गीकर्तुं शक्यम्। एतादृशी परिस्थितिः भगवद्रामानुजस्यापि आसीदिति वेदार्थसंग्रहोपसंहारश्लोकव्याख्यायाम्— 'अस्मत्सवयसानेनोक्तं कथमस्माभिरङ्गीकर्तुं शक्यमिति मन्वानान् प्रत्याह—विमत्सरा' इति' इति सुदर्शनसूरिवचनेनावगम्यते। अतस्सावधानेन भवितव्यं भवता' इति प्राबोधयन्। द्वितीयं च, व्याख्या तत्तादृशस्य कवितार्किकसिंहग्रन्थस्य। ते किल सर्वज्ञा अपि तत्कालानुरोधेन यावद्वक्तुं शक्यं तावदेवावदन्निति तदीयश्लोकात्—(अद्रव्य.135)स्पष्टमवगम्यते। अतस्तद्व्याख्यायां व्याख्यामर्यादामतीत्य कथनं न युक्तम्। अतस्सूचनामात्रं कृतम्। आवश्यकं चेत्, भगवानपि तथा मन्येत चेत्, पश्यामस्समये इत्यभिहितम्। सोऽपि परमनिर्णयप्रतिपादको ग्रन्थोऽचिरादेव प्रकटो भवतु भगवत आदेशादित्याशास्महे॥

अद्य च एतादृशव्याख्यासहिततत्त्वमुक्ताकलापमुद्रणे यत्किञ्चित् सेवारूपं साह्यमस्माभिः विहितमिति महान् सन्तोषोऽस्माकम्। कलिमहिम्नातीवाधोधोविद्यमानाय जगते विशिष्य संस्कृतशास्त्रदर्शनाध्येतॄणां एतादृशसद्विचारगर्भेयं व्याख्या मार्गप्रदर्शिका भवतीत्यत्र नास्ति संशीतिलेशोऽपि। एतादृशमहत्पुण्यावहे आत्मनोऽपि भागधेयत्वं, तद्द्वारा महदभ्युदयं च विहितं भवेदित्याशास्यते। एतादृशप्रवृत्तौ स्वसामर्थ्यानुगुणसेवां विधातुं अवकाशं दत्तवद्भ्यः सर्वेभ्यः प्रणामान् विज्ञाप्य विज्ञप्तिरेषा भगवते, गुरुवरेभ्यश्च सादरं प्रणतिततिनिवेदनपूर्वकं च समर्प्यते॥

**स्वामिनारायणसंप्रदायानुयायी**
**शास्त्री वेदान्ताचार्यः**
**साधु निर्मलदासः**

श्रीः

श्रीमते रामानुजाय नमः । श्रीस्वामिनारायणाय नमः ।

साधु शास्त्री सत्यप्रसाददासः
वेदान्ताचार्यः

श्रीस्वामिनारायण मंदिरम्
भुज, कच्छ, गुजरात्
19-8-2000

श्रीस्वामिनारायणभगवतो गुरवः । श्रीकृष्णभक्तस्य उद्धवस्यांशावताराः श्री रामानन्द स्वामिनः । एते हि स्वस्याध्यात्मगुरुमन्विष्यन्त भारतदेशं सर्वं सञ्चरन्तः, क्रमेण श्रीरङ्गक्षेत्रं संप्रापुः । तत्र भगवद्रामानुजस्य वैभवं श्रुत्वा, तमेव स्वगुरुं हृदये स्वीचक्रुः । तस्मा बृन्दवनक्षेत्रेऽतितीव्रं तपश्चक्रुः । अन्ते भगवान् रामानुजः तस्य प्रत्यक्षो बभूव । तेषां श्रीवैष्णवचक्राङ्कनदीक्षां दत्त्वा, तत्त्वान्यप्युपादिशन् । प्रतिदिनकर्तव्यमाचारादिकं पूजाक्रमादिकं च रामानुजसंप्रदायानुसारेणैवाध्येतुमैच्छन् । परन्तु तदा तत्क्षेत्रे श्रीवैष्णवेष्वेव स्थितं संप्रदायकलहं दृष्ट्वा, तत्क्षेत्रं परित्यज्य सञ्चरन्तः क्रमेण गुर्जरदेशमागच्छन् । तद्देशस्य साधुतां ज्ञात्वा तत्रैव मठं स्थापयित्वा धर्मप्रचाररं चक्रुः ॥

श्रीस्वामिनारायणोऽपि स्वस्य गुरुमन्विष्यन् तद्देषां प्रप्तवान् । श्री रामानन्दोऽपि तं शिष्यत्वेन स्वीकृत्य तस्य सहजानन्द इति दीक्षानाम चक्रे । अतश्च श्रीरामानन्दसंमतः भगवद्रामानुजसिद्धान्त एव श्रीसजानन्दस्यापि संमतो बभूव । अत एव शिक्षापत्र्यां 'मतं विशिष्टाद्वैतं मे' इत्येवावदन् ॥

भुजकच्छदेशेऽस्माकं श्रीरङ्गरामानुजमुनयः(श्री कस्तूरिरङ्गाचार्याः) श्री रामानुजसिद्धान्त शिक्षका आसन् । तेषां परमपद प्राप्त्यनन्तरं श्रीरामानुजसिद्धान्ताध्ययनार्थं समीचीनं श्रीरामानुजसिद्धान्तशिक्षक-मन्विष्यन्तः वयं कतिपये मेलुकोटेक्षेत्रमागताः ॥

एतावता तादृशध्यापकालाभात् निराशापीडितानामस्मकं तत्क्षेत्रगमनानन्तरमेवावगतम् । एवं निराशाया एव आस्पदभूतेऽस्मिन् सन्दर्भेऽपि अस्ति कश्चिदवसरः आशायाः—यदद्यत्वेऽपि सन्ति ज्ञानविज्ञान-संपन्नाः महापुरुषाः अस्मद्गुरचरणश्रीवरदाचार्यसदृशा महामहिमाः, ये अनवरतं संस्कृतस्य संकृतेश्च रक्षणाय बद्धकङ्कणास्सन्तः अस्मादृशानां प्रामाणिकजिज्ञासूनां मार्गदर्शनं कुर्वन्तस्सन्ति इति ॥

तैः प्रवर्तितेषु जिज्ञासुपरम्परामार्गदर्शनकार्येषु अन्यतमं परन्तु प्रधानतमं कार्यं पठितृणां सर्वज्ञात्वा-पादकत्वेन प्रथितस्य तत्त्वमुक्ताकलापाख्यस्य महाग्रन्थस्य सर्वङ्कषाख्यव्याख्यारचनम् । एतद्व्याख्यारचनद्वारा एते महान्तः अस्मत्प्राक्तनमहर्षिप्रोक्तदर्शनानां हार्दं तात्पर्यं प्रकाश्य जिज्ञासुभ्यस्सर्वेभ्यः महान्तमनुग्रहं विधाय सर्वेषामस्माकं सादरप्रणतिशतपूर्वककृतज्ञतापात्रास्सन्ति । एवं शताधिकेभ्यः शिष्येभ्यः नैकानि शास्त्राणि

विना विरामं बोधयतां एतेषामुपायनं संस्कृतशास्त्राणां क्षेत्रस्य कृते वर्णनातीतमस्ति । तत्रापि विशिष्य गुर्जरप्रदेशादागताः **श्रीस्वामिनारायण**संप्रदायानुयायिनस्साधवः एतेषामनुग्रहपात्रभूताः, तस्मादेव कृतकृत्याः धन्याश्च । एतादृशानां महतां दिव्यसान्निध्ये कृतज्ञतानिवेदनपूर्वकं, 'अग्रेऽपि नानाग्रन्थरचनद्वारा प्रवचनद्वाराऽपि अस्माननुगृह्णन्त्वनवरतमेते' इति सप्रश्रयप्रार्थनापूर्वकं च साञ्जलिबन्धं प्रणतिततीर्निवेदयामि । एवमेतादृशमहाग्रन्थमुद्रणकार्ये *किञ्चित्सेवां कर्तुमवकाशं दत्तवद्भ्यः एतेभ्यो गुरुचरणेभ्यः, प्रकाशकेभ्यश्च पुनः पुनः कृतज्ञताः निवेद्य नमोवाकं समर्पयामि ॥

**साधुः सत्यप्रसाददासः**
**श्रीस्वामिनारायण मंदिरम्**
भुज्–कच्छ–गुजरात्

***सेवाविवरणम्**–

(१) **स्वामी सत्यप्रसाद दासः**
श्रीस्वामिनारायण गुरुकुल–गांधीधाम रू. ५०००

(२) कम्प्यूटर यंत्र सेवा–
**शास्त्री मावजी भगत** रू. ६०००
श्रीस्वामिनारायण मंदिर–भुज–कच्छ–गुजरात

# व्याख्याकर्तृपरिचयः



**तत्त्वमुक्ताकलापस्य** कर्तुः दैवादेशप्राप्तकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्रेत्याद्यन्वर्थप्रशस्तिमतः श्रीमन्निगमान्तमहादेशिकस्य विषये नूतनस्य वक्तव्यस्यालाभात्, सर्वजगद्विदितत्वात्तदीयचरितस्य, तद्विषये श्रमो न कृत इति क्षमां प्रार्थ्य, तद्व्याख्यातारमधिकृत्य किञ्चित्परिचयं दातुकामा वयम् ॥

तुण्डीर(काञ्ची)मण्डलं हि शिष्टैरलंकृतमिति प्रथितमेव । तस्य प्राच्यां दिशि **तिरुक्कडल्मल्लै** (Mamallapuram) इति प्रसिद्धदिव्यशे भूतमुनिरितिप्रसिद्धस्य (भूतत्ताल्ऴार्)सूरिवर्यस्यावतारक्षेत्रप्रान्ते महापण्डितानाम्, स्वाध्यायैकनिरतानां नित्यसूरिसदृशानां आचारशीलानां आवासभूतः **कोत्तिमङ्गलं** नाम एकः अग्रहारः पावनतमः वरीवर्ति ॥

'अनुष्ठानसमृद्ध्यर्थं ननु स्थानं विनिर्मितम् । नव्यमङ्गलनाम्नेदं नित्यसूरिसमोषितम् ॥'

'यत्र नाम बहवो महागुणा नित्यसूरिसदृशा भुवस्सुराः ।
वेदशास्त्रनिपुणा विरागिणः रागिणो गुणगुणालये हरौ ॥'

'कर्मठाः कलुषमार्गदूरगाः कम्पदाः कलिविलासशालिनाम् ।
ख्यातिलाभमुखदोषदूरगाः धर्मशास्त्रनिपुणा विरेजिरे ॥'

'अप्राकृतदिव्यलोकात्पतितः खण्ड एकः एतदग्रहारात्मना परिणतः किमु!' इति चाभिज्ञैः वर्ण्यमानम्, 'कोत्तिमङ्गल'मिति व्यवह्रियमाणम्, अग्रहारमिममुद्दिश्योच्यमानं वचः सर्वात्मना समञ्जसमित्येव भायाद्द्रष्टॄणाम् । एतदग्रहारमध्ये अच्छस्वच्छसलिलपूर्णः सरसिजषण्डालंकृतः तटाकः सर्वेषां अनुष्ठानोपयोगितया भ्राजमानो विराजते । यस्य तटाकस्य परितः प्रफुल्लविकसितप्रसूनमण्डिताः वृक्षाः, येषु वृक्षेषु मधुपिपासवः भ्रमराः समेत्य ओंकारमिवोद्घोषमाणाः भगवन्नामोच्चारणमस्माकं स्मारयन्तीत्यतितरां मोदमावहन्ति ॥

सर्वङ्कषाव्याख्याकर्तार इमे श्री वरदाचार्याः एतदग्रहारकृतजन्मान इति सामोदमावेदयामः । एषां पितरः श्रीसुन्दरराजाचार्या अन्वर्थनामान आसन् । माता श्रीरङ्गाम्बा । श्री वरदाचार्यस्य पितामहाः श्रीकृष्णमाचार्याः । एषां पितरः 'कोत्तिमङ्गलं अप्पा' इति प्रसिद्धाः महाविद्वांसः सर्वतन्त्रप्रवीणाः वत्स्य चक्रवर्ति श्री वीरराघवमहादेशिकाः । श्री कृष्णमाचार्याः स्वज्येष्ठभ्रातृवर्याणां 'अपरव्यासः' इति प्रसिद्धानां 'गोपालण्णा' इत्यादरात् व्यवह्रियमाणानां वत्स्यश्रीगोपालार्यमहादेशिकानां सविधे वेदकाव्यनाटकादीन् अधीतवन्तः ॥

इमे च कृष्णमाचार्याः नेल्वाय् अभिजनानां(मणप्पाक्कं) कौशिकानां साङ्गवेदाध्यायिनां परमैकान्तिसार्वभौमानां स्वीकृतपुत्रा अभूवन् । इमे श्रीवेङ्कटवरदाचार्याः श्रीशैलचतुर्वेदशतक्रतु-श्रीवाजिवक्त्र-करुणापरिपूर्णबोधानां दिगन्तविश्रान्तयशसाम् आचार्यसार्वभौमानां नावल्पाक्कं श्रीमद् अण्णयार्यमहादेशिकानां मातृष्वसेयाः, तथा श्री अण्णयार्यमहादेशिकमातुलेयानां महाविदुषां 'कोत्तिमङ्गलं अप्पा' इति प्रसिद्धानां

वात्स्यचक्रवर्ति-श्रीवीरराघवार्यमहादेशिकानां पैतृष्वसेयाश्चाऽभूवन्। एषां श्री वेङ्कटवरदाचार्याणां सकाशे एव 'अपरव्यासः' इति प्रसिद्धाः सर्वङ्कषाकर्तुः पितामहानां श्री कृष्णमाचार्याणां ज्येष्ठभ्रातरः कोत्तिमङ्गलं वात्स्यचक्रवर्ति-गोपालार्यमहादेशिकाः समग्रसाङ्गवेदमधीतवन्तः। श्रीसुन्दरराजाचार्याः स्वीयज्येष्ठपितृव्याणाम् अपरव्यासानां श्री गोपालार्यमहादेशिकानां सकाशात् प्राप्तचक्राङ्कनादिसंस्काराः, तेषामेव सविधे वेदकाव्य-नाटकादीत् अधीत्य स्वात्मभरं च न्यक्षिपन्। श्रीसुन्दरराजाचार्याश्च महाविदुषां नावल्पाक्कं चतुर्वेदशतक्रतु-श्रीनृसिंहताताचार्य महादेशिकानाम्, तथा स्वमातुलपादानां ओंगूर् वेलामूर वीरराघवाचार्याणां च सविधे तर्कशास्त्रमधीत्य श्री नृसिंहतातदेशिकानां सन्निधौ वेदान्तशास्त्रमधीतवन्तः॥

दुन्दुभिनामसंवत्सरे(1922 A.D.)जाता इमे वरदाचार्यमहोदयाः स्वपितृचरणानां सन्निधौ पञ्चसंस्कारादीन् प्राप्य, तेभ्य एव काव्यनाटकादीन्, तथा नावल्पाक्कं सोमयाजी श्री नारायणतातदेशिकानां सन्निधौ वेदांश्च स्वग्राम एवाधीत्य, ततः चेन्नपुर्यां काकुमानी आदिकेशवुलु श्रेष्ठिसंस्कृतपाठशालायाम्, अनन्तरं श्रीपदपुर्यां (Tirupati) श्रीवेङ्कटेश्वरसंस्कृतकलाशालायां न्यायशिरोमणिकक्ष्यायां न्यायशास्त्रं समधी-तवन्तः। कोत्तिमङ्गलं वात्स्य श्री वीरराघवमहादेशिकानां चरणयोः समर्पितात्मभराश्च बभूवुः॥

तिरुपतिकलाशालायां इमे मम सहपाठिनः आसन् इतीदं स्मृत्वा नितरां मोदते ममान्तरात्मा। ततः महीसुरपत्तने(Mysore) श्री परकालमठे मूर्धाभिषिक्तानां जगद्विख्यातानां श्रीमद् अभिनवरङ्गनाथ-ब्रह्मतन्त्रस्वतन्त्र परकालस्वामिनाम्, तथा तच्छिष्याणां महापण्डितानां आत्मकूर् दीक्षाचार्याणाञ्च सन्निधौ दशवत्सरान् प्राचीननव्यन्यायशास्त्रवेदान्तप्रौढग्रन्थान्, तथेतरदर्शनग्रन्थांश्च संसेव्य, उभयवेदान्तमहापण्डिता दार्शनिकाश्चाभवन्। आचार्यवर्याणां परमानुग्रहपात्राश्च रेजिरे। 'न्यायमञ्जरी'ति सुप्रसिद्धप्रौढन्यायग्रन्थस्य व्याख्यानिर्माणेन न्यायशास्त्रे एतेषां विद्यमानं अकुण्ठितपाण्डित्यं नितरामशोभत। कर्नाटकराज्यशासनञ्च ग्रन्थमेनं प्रशस्य विशेषतः सभाजयामास॥

काञ्चीकामकोटीपीठपरमाचार्याः एतेषां नानामुखं पाण्डित्यं प्रत्यक्षतोऽनुभूय 1953 वत्सर एवैनान् स्वर्णखचितेन 'पण्डिरत्नम्' बिरुदेनालंचक्रुः।2002तमे वर्षे भारतराष्ट्रपतिना सम्मानिताश्च। तिरुपतीस्थराष्ट्रिय-संस्कृतविद्यापीठोऽप्येनान्2003 वर्षे 'महामहोपाध्याय' बिरुदेन सभाजयामास। ख्यातिलाभपूजाविमुखा अपीमे, स्वयंप्राप्तशास्त्ररत्नाकर-सर्वशास्त्रकलानिधिप्रभृतिनानाबिरुदालंकृताः विख्यातविद्वद्गोष्ठीतिलकायमानाः, तटस्थसर्वमतपण्डितैश्च श्लाघ्यमानाः, ज्ञानाचारवैराग्यालंकृताः, शमदमाद्यात्मगुणसंपन्नाश्च। किं बहुना भुवि नानाशास्त्रपण्डिताः विरलाः। तेष्वपि नानाशास्त्रविमर्शनपूर्वकव्याख्यातारः अतिविरलाः। तत्रापि अध्यापनसमर्थाः अतीवमृग्याः। इत्थमेकसंश्रयदुर्लभाः इमे त्रयो गुणविशेषाः वरदाचार्येऽस्मिन् सङ्गमं प्राप्य त्रिवेणीसङ्गमं स्मारयन्त्यस्माकम्। एवं तारामण्डलेऽमृतकिरणवत् भ्राजमाना इमे बहून् संवत्सरान् अरोगदृढगात्रतां लब्ध्वा चिरन्तनसरस्वत्याः सेवां चिरं कर्तुं श्रियःपतिः श्रीमन्नारायणः अनुगृह्णात्विति प्रार्थयामः॥

**शिरुङ्गट्टूर, नडादूर श्रीभाष्यसिंहासनम्, कलैमामणिः**

**चेन्नै** **एस्. एन्. श्रीरामदेशिकदासः**

19-12-2002 **(भारतराष्ट्रपतिपुरस्कृतपण्डितः)**

## “सत्यान्वेषणम् !”

### [एतद्ग्रन्थाध्ययनकुञ्चिका]

सत्यं सत्यप्रियं सत्यकामादिगुणसंयुतम् । सत्यमार्गसहायं तं शरणं यामि सर्वशः ॥

**विद्यास्थानानि**— भारतीयानामार्षसंप्रदायानुमतं शिक्षणक्षेत्रं विद्यास्थानपदेनाभिधीयत इति प्रसिद्धम् । तानि च ‘अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥’ इति व्यासमहर्षिणा परिगणितानि । तानीमानि न केवलं विद्यास्थानानि, अपि च धर्मस्यापि स्थानानीति ‘पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥’ इत्युद्घोषितं याज्ञवल्क्यमहर्षिणापि । एतदुपर्यपि ‘आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादश स्मृताः ॥’ इत्यपि संवर्धितानि विद्यास्थानानि ॥

धर्मो नाम कः? न केवलं बाह्यक्रियारूपः, किन्त्वत्यन्तमान्तरः सूक्ष्मः परमदुर्ज्ञेयः सतामपीत्युच्यमानः— ‘यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः’ इति लक्ष्यमाणः अत्यन्तगहनः अतिशयविशेषः। अभ्युदयनिःश्रेयसयोः साधनम्, अभ्युदयपूर्वकनिःश्रेयससाधनं वा धर्मः इत्यधिकारिभेदेनार्थद्वयमपि विवक्षितम् । अयञ्च धर्मः नानाविधः नानासोपानोऽपि ‘सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते’ इति ज्ञानपर्यवसायीत्यभिहितम् । अत एव याज्ञवल्क्यः ‘अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्’ इति त्रिकालसत्यमाविश्चकार । बाह्याः क्रियारूपा हि धर्माः कालानुरोधेन परिवर्तनशीला इति सूचयति ‘सामयाचारिकान् धर्मान् व्याख्यास्यामः’ इति वदन्महर्षिवर्यः ॥

**चतुश्शास्त्राणि**— एवं धर्ममार्गे निष्कण्टके विराजमानेऽपि, बुद्धिजीविनो मनुष्यस्य बुद्धिवर्धनप्रयत्नस्य सहजत्वात् चतुर्दशविद्यास्थानेषु व्याकरणम्, मीमांसा, न्यायविस्तर इति त्रीण्यत्यादरपात्राण्यभूवन् कालक्रमेण । एषु मीमांसा पूर्वोत्तरभेदेन भिन्ना । आहत्य न्यायव्याकरणमीमांसावेदान्तपदैरभिधीयमानान्येतानि ‘चतुश्शास्त्रणि’ इति प्रथामापुः । एतानि च क्रमात् गौतमपाणिनिजैमिनिबादरायणमहर्ष्युपज्ञानि । एषु न्यायव्याकरणमीमांसासूत्राणां भाष्याणि वात्स्यायनपतञ्जलिशबरस्वामिभिर्विरचितान्यार्षाण्यद्भुतानि सर्वविदितानि सर्वसंप्रतिपन्नानि च । एतादृशं **संप्रतिपन्नमार्षं भाष्यं बादरायणसूत्राणां कुतो नोपलभ्यत** इत्याश्चर्यावहमेव॥

**वेदान्तशास्त्रम्**— यद्यपि विंशत्यध्यायात्मकमीमांसाशास्त्रवृत्तिकृता बोधायनमहर्षिणा वेदान्तसूत्राणामपि विस्तृता वृत्तिर्विरचिता । सा च संगृहीता उपवर्षेणेति प्रामाणिकः प्राचीनोल्लेखो दृश्यते* । वृत्तिकारमतस्योल्लेखस्तु श्रीशङ्करभाष्येऽपि तत्र तत्र दृश्यते । पूर्वोत्तरमीमांसावृत्तिकारमुपवर्षं श्रीशङ्कराचार्याः ‘भगवानुपवर्षः’ इति

---

*अस्य विस्तरः श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालयतिकृते श्रीभाष्यगूढार्थसंग्रहे द्रष्टव्यः ॥

सादरं निर्दिशन्ति। इदं द्वयमपि दौर्भाग्यवशाददर्शनं गतम्। एवं प्राचीनव्याख्यानस्यानन्तरं मध्यकाले भर्तृप्रपञ्चनाम्ना विदुषा वेदान्तसूत्राणां स्वरूपपरिणामप्रतिपादकं व्याख्यानं व्यरचि। फेनबुद्बुदतरङ्गरूपेण समुद्रवत् स्वस्वरूपेणैव ब्रह्म जगद्रूपेण परिणमते इत्ययं वदति। एवं स्वरूपपरिणामे ब्रह्मणो विकारित्वापत्त्या नाशप्रसङ्ग इत्यादिरीत्या बहुधा दूषितं तदात्वे प्रबलैः **बौद्धैः**। अत एतदपि व्याख्यानं कालक्रमेण गळितमभूत्। अयमेव **वेदबाह्यानां दिङ्नागादीनां बौद्धाना**मत्यन्तमुन्नतः कालः। प्रायः एतेषां प्रभावादेव एतस्मिन्नेव काले बोधायनोपवर्षयोर्वृत्तिरप्यदर्शनं गतेति प्रतिभाति। एतेषां निरोधार्थमेव नैय्यायिकेन **भारद्वाजोद्योतकरेण** न्यायवार्तिकम्, महामीमांसकेन **भट्टकुमारिलेन** श्लोकवार्तिकं च उदयनाचार्येण कुसुमाञ्जलिः आत्मतत्त्वविवेकश्च व्यरचि। वेदान्तिना तु तत्तादृशप्रौढविदुषा केनापि बौद्धदूषणानामुत्तरदानाय न प्रयतितम्।।

यद्यपि **मण्डनमिश्रः** किञ्चिदिवैतदर्थं प्रायततेति विज्ञायते **ब्रह्मसिद्धि**ग्रन्थतः। परं तु नायं ग्रन्थो वेदान्तसूत्रव्याख्यानरूपः, किन्तु स्वतन्त्रः। किञ्चायमपि मिश्रः महामीमांसकः परमवैदिकः वैदिकप्रक्रिययैव ध्याननियोगवादं प्रत्यपादयत्। अत एव ब्रह्मसिद्धिग्रन्थोऽवैदिकबौद्धनिराकरणे न पर्याप्तो बभूव ।।

**मतत्रयम्**—अयमेव समयः **श्रीशङ्कराचार्याणा**मवतारस्य। श्रीशङ्करावतारत्वेन परिगण्यमाना इमे महातार्किका अप्यासन्निति तदीयब्रह्मसूत्रभाष्यादिभिः स्पष्टं ज्ञायते। बौद्धपण्डितदुस्तर्कप्रवाहनिरोधकेष्वेते अग्रगण्या आसन्। एभिः **परिणामविशेषरूपविवर्तवादस्य** प्रतिपादनेन प्रतारिताः वेदविरोधिनः बौद्धपण्डिताः पराजिताः उत्तरदिशं पलायांबभूवुः। जैनपण्डितास्तु पश्चिमदिशं पलायांबभूवुः। दशमशतके उत्तरदिश्यवतीर्णः महातार्किकः **उदयनाचार्यः** बौद्धान्नाममात्रावशिष्टान् चक्रार। एकादशशतके दक्षिणदिश्यवतीर्णाः**भगवद्रामानुजाचार्याः** पश्चिमदिशि पलायितान् वेदबाह्यान् जैनान् नाममात्रावशिष्टान् व्यदधुः। एवं वैदिकमार्गो निष्कण्टकीकृतः संपूर्णरूपेणैषामेव काल इति एतेषां चरित्रसंशोधनया स्पष्टमव गम्यते। अतश्च**श्रीशङ्कराचार्यैरारब्धं वैदिकधर्मसंरक्षणं भगवद्रामानुजैः सम्यक् परिष्कृत्य परिपूरितम्**।।

भगवद्रामानुजपराजितेषु पश्चिमदिशं गतेषु जैनपण्डितेषु कतिपये पश्चिमपर्वतश्रेणीतोऽधस्तात् गहनं वेणुवन(मूडुबिदरे)माश्रित्य परशुरामक्षेत्रे स्वमतप्रचारायारेभिरे। तदानीमेव तत्रावतीर्णाः **श्रीमदांनन्दतीर्थाः** कृष्णभक्तिप्रचारेण तान् न्यरुन्धन्। अत एव जैना अन्ते गहनवेणुवनमात्रसीमिता अभूवन् ।।

वेदान्तशास्त्रस्य विंशत्यधिकव्याख्यानानां दर्शनेऽपि एभिरेव त्रिभिराचार्यैः देशकालाधिकारानुगुणं ब्रह्मसूत्रभाष्यरचनादिना विश्वजनीनो वैदिको मार्गः यतो निष्कण्टकीकृतः, यतश्चैतदनुयायिन एवात्यधिकाः, अत एवैषामाचार्याणां नामानि शाश्वतानि बभूवुर्वैदिकधर्मचरित्रे। तथा एतेषां सिद्धान्ता एव **'मतत्रय'**-नाम्ना प्रसिद्धिमापुः। इतरत्सर्वं कथञ्चिदेष्वेवान्तर्भवतीति मन्तव्यम् ।।

**मतत्रयस्वरूपम्**—एवं वैदिकमार्गरक्षणमेव परमोद्देशः एषां त्रयाणामप्याचार्याणामिति हेतोः मतत्रयमिति सौहार्ददर्शनेऽपि अद्यतनपण्डितबुद्ध्या इदमहिनकुलायितमेव दृश्यते लक्ष्यविस्मरणेन। तथा हि—

**निर्विशेषाद्वैतदर्शनं पण्डितैरद्य वर्ण्यमानम्**—भेदस्य लोकत एव सिद्धत्वेन तत्र श्रुतेरनुवादकत्वात् न स्वार्थे तात्पर्यं श्रुतेः । अद्वैतं तु शास्त्रैणेव प्रतिपत्तव्यमिति तदेव परमार्थः, भेदस्तु मिथ्यैवेति ॥

**द्वैतिन आनन्दतीर्थीया:** तदेतत् नानुमन्यन्ते । लोकतः प्रतिपन्नो भेदः अज्ञानकालिकः । पारमार्थिककालिकस्तु भेदः शास्त्रैकसमधिगम्यः । अतस्तत्रैव तात्पर्यं श्रुतीनाम् । अत एवाभेद औपचारिकः ॥

**निर्विशेषाद्वैतिन:**—तर्हि स्पष्टमद्वैतं वदन्तीनां 'ब्रह्म वेद ब्रह्मैव भवति' 'नामरूपे विहाय' 'नामरूपाद्विमुक्तः' 'शिवमद्वैतम्' 'अहं ब्रह्मास्मि' इत्यादिश्रुतीनां का गतिः?

**द्वैतिन:**—'व वा यथा तथैवैवं साम्ये' 'एवौपम्ये' इत्यादिकोशात् एवशब्दस्साम्यार्थकः । 'विष्णुरेव भूत्वा' इत्यादौ तथार्थः प्रसिद्धश्च । 'नामरूपे विहाय' इत्यत्र 'अविहाय' इत्येव पदच्छेदः । 'नामरूपाद्विमुक्तः' इत्यत्रापि, विप्रिय इत्यादाविव अमुक्त इत्येवार्थो विमुक्तपदस्य । 'अद्वैतम्' इत्यत्र द्वैतं नाम संशयः, संशयो नास्तीत्येवार्थः । हं नाम हेयो दोषः । तद्रहितं ब्रह्म । एवं सुष्टु मितत्वात् स्मि जीवः । तद्भिन्न इत्यर्थः । तथा च हेयरहितं जीवभिन्नं च ब्रह्मेत्येव 'अहं ब्रह्मास्मि' इत्यस्यार्थः। अतश्चाभेदः श्रुत्या कुत्रापि नोच्यते, प्रत्युत 'परमं साम्यमुपैति' इत्येवोच्यते ॥

एवमद्वैतमतस्य साक्षात्प्रतिकोटिभूतं द्वैतमतमेवेति करबदरसमानम् । अपि च **आनन्दतीर्थीया** एवायावद्द्रव्यभाविनां गुणानां गुणिनश्च जैनवत् भेदाभेदौ अङ्गीकुर्वन्ति, न तु रामानुजीयाः । एवं सत्यपि अन्यद्वक्तुमशक्ताः रामानुजमतमेव 'क्षपणकपक्षनिक्षिप्तम्' इत्युक्त्वा रामानुजमतं द्वैतमतादपि निकृष्टं प्रकटयन्तः सायणमाधवाचार्याः कियन्निष्पक्षपातिनः? इति निर्मत्सराः पश्यन्तु! ॥

**सविशेषा(विशिष्टा)द्वैतिनस्तु**—एवं व्याख्यानभेदस्यावकाशे सति, व्याख्यानोपव्याख्यानैर्विवादो न शमयितुं शक्यः, किन्त्वध्यात्मविज्ञानेनैव शमयितव्य इति मन्वाना **भगवद्रामानुजाचार्या:** अध्यात्मविज्ञानगर्भं सविशेषाद्वैतवादमातस्थिरे । अनेन हि बौद्धादिवादास्सर्वेऽपि सूत्तराः । वेदो हि न केवलं शब्दरूपः । सृष्टिसंबन्धिज्ञानविज्ञानमयः किल सर्वोऽपि वेदः । स च जगद्ब्रह्मणोः उपादानोपादेयभावं शरीरशरीरिभावं च बहुधा प्रदर्शयति । अध्यात्मविज्ञानरहस्यमत्रैवान्तर्निहितम् । एतत्प्रतिपादकश्रुतय एव समन्वयगर्भत्वात् 'घटकश्रुतयः' इत्युच्यन्ते । एतत्सूचितं तत्त्वमेव सविशेषाद्वैतमित्युच्यते ॥ एतद्विज्ञानस्य परिचये व्याख्यानभेदस्य न स्यादवकाशः । शब्दः किलार्थानुगः । अर्थस्वरूपे निर्णीते कथं व्याख्यानभेदः स्यात्? ॥

'क्रिया हि विकल्प्येत, न तु वस्तु' इति **प्रसिद्धो न्याय: सापवाद एवेति** कति वा जानीयुः! अयं हि न्यायः उपादानोपादेयभावरहितसिद्धवस्तुस्वरूपमात्रान्वयी, नोपादानोपादेयभावस्थलीयसाध्यावस्थवस्तुस्वरूपान्वयी । एकेन हि मृत्पिण्डेन किं घटो भवेत्? उत शरावः? उत मणिकः? उत देवताप्रतिमा? इति प्रश्ने, समीचीनमुत्तरं किं भवेत्? परस्परविरुद्धमपीदं सर्वमपि भवितुमस्त्यवकाशः कर्तुरिच्छानुगुणमित्येव ह्युत्तरं समीचीनं भवेत् । अत उपादानोपादेयभावस्थले नोक्तो न्यायोऽन्वेति ।

जगद्ब्रह्मणोस्त्वस्त्युपादानोपादेयभावः वेदविज्ञानसिद्धः। अतिस्थूले मृद्घटादौ परिणामस्य स्पष्टं दर्शनेऽपि विवदमानानामत्यन्तसूक्ष्मे ब्रह्मणि विवादस्सहज एव। परं तु विज्ञानान्वेषणेन समाधानं सुलभमेव॥

एवमेव शरीरवाचिनश्शब्दाः 'अयं मनुष्यः' 'अयं पशुः' इत्यादयः शरीरिणमेवाभिदधतीति भेदे सत्यप्यभेदानुभवाभेदव्यपदेशौ दृश्येते। परन्तु शरीरशरीरिणोरत्यन्तं भेदे सति स व्यपदेशः औपचारिक एव स्यादिति शब्दमात्रपरायणाः पण्डिता मन्येरन्। किन्तु शरीरशरीरिभावस्त्वत्यन्तं गहनः। 'यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा' (बृ.5-9-28) इत्यादिश्रुतीनां तात्पर्यं गाढं चिन्तनीयं शब्दं विस्मृत्य। तदानीमेव शरीरशरीरिभावविज्ञानरहस्यमपि सम्यगवगन्तुं शक्यम्। तदैव च 'शरीरशरीरिभावसमर्थनेनाभेदवाक्यानि समर्थितानि' इत्यनुक्त्वा 'अभेदस्समर्थितः' इति **भगवद्रामानुजैः** कथमुक्तमित्यस्यापि तत्त्वं ज्ञायेत॥

अत एव शास्त्रयोनित्वसूत्रस्याद्य प्रसिद्धं ब्रह्मणो वेदाख्यशास्त्रैकगम्यत्वव्याख्यानं श्रद्धालूनां कृत एव। वस्तुतस्तु प्राचीनं शास्त्रस्य योनिः=शास्त्रयोनिः इत्यादिव्याख्यानमेव सूत्रकारसंमतमित्यादिकं विस्तरेण प्रदर्शितमस्मिन् ग्रन्थे(पु.412-414)। शास्त्रं नाम सृष्टिविज्ञानम्। तदेव ब्रह्मसद्भावे प्रमाणमिति प्राचीनव्याख्यैवाद्यतनपरिस्थितौ साधीयसी। **'विज्ञानेनात्मानं वेदयते' 'वेदान्तविज्ञानसुनिश्चितार्थाः'** इत्यादिश्रुतिरप्येतदर्थपरैव। परं त्वन्ततोऽध्यात्मविज्ञानस्यात्ममात्रसाक्षिकत्वात् परेभ्यस्तत्प्रदर्शयितुं न शक्यत इति दृष्ट्या तत्सूत्रस्य द्वितीयं व्याख्यानमारचितम्॥

**श्रीमदानन्दतीर्थास्तु**—एतादृशविवर्तपरिणामवादक्लेशः किमर्थः? इतोऽपि गहनः शरीरशरीरिभावो वा सामान्यजनैः ज्ञातुमशक्य एव, यत्र पण्डिता अपि मुह्यन्ति। तार्किकवत् ब्रह्मणः निमित्तकारणत्वाङ्गीकारमात्रेणैव भक्तिभावपोषणं सुकरम्। भक्त्या तु वृद्धिं भजन्त्या सर्वं ज्ञातुं शक्येतैव स्वयम्। सामान्यजनानामेतावदेव पर्याप्तमित्यमन्यन्त॥

**श्रवणमनने**—एवं शब्दजाले संवर्धमाने जिज्ञासुलोकः किं कुर्यात्? एतदर्थमेवावतीर्णा महाविभूतिपुरुषाः सकलदर्शनपारावारपारीणाः महातपस्विनः सदा संकेतदूराः गुणैकपक्षपातिनः **श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकाः** तदा तदा सत्यमेवं प्रकटयेरन् बहुजनमध्य एव, न रहसि— '**भगवद्रामानुज** एवावतारपुरुषः, नेतर इति नाहमङ्गीकरोमि। व्याख्यातृणां यथातथात्वेऽपि मूलपुरुषास्सर्वेऽपि महात्मान एव। परं तु व्यवहारस्य पुरोवर्तिचेतनोद्देश्यकत्वात् कालदेशपुरुषानुगुणं भिद्येरन्नेव शब्दाः। एतावद्विन्यासविशेषमजानद्भिः शब्दमात्रपरायणैः पूर्वग्रहग्राहादात्मानं रक्षितुमशक्तैः तत्तद्व्याख्याकारैरेव सर्वं पूर्वपश्चिमीकृतम्। सारतस्तु **श्रीशङ्कराचार्यैरु**पक्रान्तम्, **भगवद्रामानुजैः** पूरितम्। तावदेव'. इति॥

एवं श्रुतस्यार्थस्य दृढीकरणाय संकेतादिकं दूरतस्संत्यज्य बहुधा यत्ने अन्तरात्मसाक्षिकं क्रियमाणे सति, अव्याजकरुणासिन्धोः ज्ञानविज्ञानसंपन्निधेः सहजसर्वज्ञस्य भगवतः **श्रीश्रीरङ्गविष्णोः** निरव-

ग्रहोऽनुग्रहः पङ्गोरुपरि गङ्गेव यदा प्रावहत, तदा सूर्यातपे नीहारा इवाच्छिद्यन्त सर्वसंशयाः स्वयमेव क्रमेण। समयविशेषे च स भगवान् स्पष्टमेवान्वग्रहीत् 'श्रीशङ्कराचार्याणां काले श्रीरामानुजाचार्या यद्यवतीर्णाः स्युः, तदैतेऽपि श्रीशंङ्कराचार्यक्रममेव नूनमनुसरेयुः। तथैव श्रीशङ्कराचार्या यदि श्रीरामानुजाचार्याणां कालेऽवतीर्णाः स्युः, तदा तेऽपि श्रीमद्रामानुजाचार्यमार्गमेव नूनमनुसरेयुः, न संशयः। उभयोर्हृदयमेकमेव। शब्दविन्यासस्तु तत्तत्कालानुगुणोऽनिवार्यः' इति॥

किमधिकोक्त्या! श्रुतीनामतिगहनत्वाद्धि तदर्थनिर्णयोपयोगिन्यायप्रदर्शनाय ब्रह्मसूत्ररचनमिति सर्वसंमतम्। भगवद्रामानुजमत एव ब्रह्मसूत्राणामत्यन्तानुकूल्यमिति सर्वेऽपि जानन्ति। अथाप्यत्यन्तप्रतीपमार्गगमने हैतुकानां विश्वासो न स्यादिति श्रुतिसूत्रयोर्विरोधमङ्गीकृत्येव**श्रीशङ्कराचार्याणां** व्याख्यानरचनादिकं तत्काले हैतुकानां बौद्धपण्डितानामुपच्छन्दनार्थमेव। अध्यासभाष्ये एकस्या अपि श्रुतेरनुदाहरणेनेदं स्पष्टम्। एवं हैतुकान् वैदिकान् कर्तुमेव प्रायतन्त चेत्**श्रीशङ्कराचार्याः**, तदनुयायिनस्तु वेदान्तशास्त्रं तर्कमयं कृत्वा वैदिकान् पुनरपि हैतुकान् कर्तुं प्रायतन्तेति, हन्त! मायाया महिमा। आचार्याणां ब्रह्मसूत्रविरोधवादो बौद्धपण्डितानां सान्त्वनायैव। यतस्तर्कस्यावधिर्ब्रह्मसूत्राण्येव। एतदवध्युल्लङ्घनेऽनिवार्यश्शून्यवादः। अतो बौद्ध-वैदिकसंस्कृत्योरयमेव सीमा॥

सर्वज्ञाः समर्था अपि गुरवः तत्तत्कालानुगुणमेव पुरोऽवस्थितान् प्रति तत्तत्कक्ष्यानुगुणं यत्किञ्चिद्ब्रूयुः। 'न बुद्धिभेदं जनयेत्' इति खलु न्यायः। इदं रहस्यं मर्मज्ञा एव जानीयुः। यथा—श्रीमद्रामानुजैरपि **जगतः सत्यत्वं** नास्तीति कण्ठत एवाभिहितमिति कति वा श्रीरामानुजीया अपि जानन्ति? एवमेव अद्वैतपण्डिता यथाद्य जानन्ति, न तथा जगतो मिथ्यात्वं श्रीशङ्कराचार्यैरप्युक्तमिति कति वा जानन्ति? सत्यत्वं हि तरतमभावापन्नमिति 'सत्यस्य सत्यम्' 'सत्यञ्चानृतं च सत्यमभवत्' इत्यादिश्रुतिसिद्धम्। अतस्सम्यगुक्तं '**गुरोश्शापस्तु शिष्यस्स्यात्**' इति। इदं सर्वकालेऽपि सर्वेषामप्याचार्याणां समानम्॥

**आचार्याणां हृदयम्**—आदौ किल बौद्धाः न वेदविरोधिन आसन्। क्रमश एवैते **तर्कशरणाः हैतुका भूत्वा** वेददूराः, वेदविरोधिनश्चाभूवन्। एतेषामग्रगण्यो दिङ्नागः। धर्मकीर्त्यादय एतदनुसारिणोऽत्यन्तप्रौढतार्किका आसन्। एषां प्रभावात् क्रैस्तद्वित्रशतकात् सप्ताष्टमशतकपर्यन्ते हि काले बौद्धजैनधर्मः सुप्रतिष्ठित आसीत् भारते। **भर्तृप्रपञ्चादिभिः** एतन्निरोधाय प्रयतनेऽपि न पूर्णफलेग्रहिरभूदेषां प्रयत्नः॥

अस्मिन्नेव समये वेदसंरक्षणधुरन्धरेण भगवता '**आल्वार्**' इति प्रसिद्धानां वैष्णवसूरीणाम्, '**नायन्मार्**' इति प्रसिद्धानां शिवभक्तानाञ्चावतारणेन साधारणजनेषु भगवद्भक्तिः बहुधा प्ररूढिता व्यधायि। दिव्यानि क्षेत्राणि शतशः प्रादुरभूवन्। बौद्धैः जैनैश्च देशभाषयैव स्वधर्मप्रचारकरणात्, एभिरपि देशभाषयैव भक्तिगाथा गीताः, अथवा भगवता गापिताः। अथापि **बौद्धजैनपण्डितास्तु** अत्यन्तप्रबला एवासन्। प्रबलबौद्धजैनपण्डितानां ग्राहग्रहात् देशो न संपूर्णतया मुक्तो बभूव। एतादृशपरिस्थितौ **श्रीशङ्कराचार्यैः** वैदिकमहातार्किकैः परिणामपदस्थाने **विवर्तपदं** प्रयुज्य ब्रह्मवादस्य

प्रतिपादनेन प्रतारिता बौद्धपण्डिता दिग्भ्रान्ता बभूवुः । **भगवद्रामानुजस्य** श्रीभाष्ये समन्वयाधिकरणे प्रतिपादितानां निष्प्रपञ्चीकरणनियोगवाद-ध्याननियोगवाद-वाक्यार्थज्ञानवादानां सूक्ष्मपरिशीलनेऽयमंशः सुज्ञेयः सूक्ष्ममतीनाम् । अतः **परिणामवाद** एव 'न विलक्षणत्वाधिकरण'न्यायेन **विवर्तवादः** आचार्यसंमतः । ब्रह्मसूत्रेषु 'आत्मकृतेः' 'परिणामात्' इत्यादिभिः श्रौतःपरिणामवाद एव बादरायण-संमत इत्यवश्यमभ्युपगन्तव्यम् । परिणामविवर्तवादतत्त्वं च ग्रन्थेऽस्मिन् (पु.458-464) विस्तरेण प्रत्यपादि । **सारतः कथने तु**—ज्ञानिनां दृष्ट्या परिणामः, अज्ञानिनां दृष्ट्या तु विवर्त इत्येव परमं तत्त्वम् । यथा तथा वा **श्रौतब्रह्मोपादानवाद एव श्रीशङ्कररामानुजयोस्संमतः** ॥

एवं श्रीशङ्कराचार्यैः बौद्धपण्डिततर्कमर्दनेन, सरलाद्भुतनानाविधस्तोत्रवाङ्मयेन च वैदिको भक्तिमार्गः पर्यपोषि । एवं बौद्धपण्डितानां दमनेऽपि, वैदिकपण्डितानां मनसि पूर्ववासनावशात् पाण्डि-त्याभिमानाच्च 'भक्तिमार्गः पामराणां कृते, न पण्डितानां कृते' इति गर्व आसीत् । किं बहुना! अद्यापि केचन पञ्चायतनपूजादिनिरता अप्यात्मनो ज्ञानमार्गिणो मन्यन्त एवेति न तिरोहितम्! भक्तिमार्गोऽवैदिक एवेति च तेषु तर्कशरणा बहवो मन्यन्ते ॥

एवं **श्रीशङ्कराचार्यैः** महता परिश्रमेण बौद्धपण्डितमुखपिधानेऽपि विवर्तपदतत्त्वमजानन्त-स्समनन्तरकालिकास्तदनुयायिनः दुरतिक्रमायाः पूर्ववासनामायायाः प्रभावात् वैदिकमार्गाघातायैवेव, केवलं बौद्धमार्गमेव रूपान्तरेण प्रोज्जीवयितुं प्रायतन्त । एतेषां प्रयत्नेन श्रीशङ्कराचार्याणां प्रयत्नो विफल इव बभूव । श्रीशङ्कराचार्यसमनन्तरकालिकेन **भास्कराचार्येण** विरचितस्य ब्रह्मसूत्रभाष्यस्या-ध्ययनेन **यादवप्रकाश**मतपरिशीलनेन चायमंशःस्पष्टो भवेत् ॥

एतादृश एव कालेऽवतीर्णैः**भगवद्रामानुजाचार्यैः** पर्यायबौद्धमार्गं निरुध्य पुनः वैदिकसनातन भक्तिमार्गः प्रतिष्ठापितो बभूव, यो हि 'न ऋते श्रान्तस्य सख्याय देवाः' इति ऋक्संहितायामुद्घोषितः । अयमेव मार्गः संप्रति भारते आसेतुहिमाचलं पण्डितानां पामराणां च सर्वेषां तत्तत्कक्ष्यानुगुणं हृदये रूढः आचरणे च विलसतीति न तिरोहितं चक्षुष्मतां सहृदयसरलप्रामाणिकजनानाम् ॥

**श्रीमान् वेङ्कटनाथार्यः**—एवं वैदिकमार्गे निष्कण्टकीकृतेऽपि भगवद्रामानुजसमनन्तरमेवागतेन बौद्धतन्त्रचिन्तामणिमन्त्रसिद्धेन श्रीहर्षेण पूर्ववासनावासितान्तःकरणेन 'मम वा माध्यमिकस्य वा वादेषु विजयः, नान्यस्य' इत्युद्घोषयता, वेदानां बौद्धागमानां च साम्यं मन्वानेन वैतण्डिकाग्रेसरेण पुनरपि नानाप्रकारेण वैदिकमार्गः खण्डितः कुतर्कशतसहस्रैः । एतन्निरसनार्थमेवावतीर्णैः **श्रीमद्वेङ्कटनाथार्यैः वेदमूर्तिना श्रीहयग्रीवदेवेन स्वयंवृतैः** कर्कशतर्कमयशतदूषण्या शतशश्शातितोऽयं खण्डनकारः, निरस्तश्च शून्यवादापरपर्यायो ब्रह्मसर्वस्वापहारको निर्विशेषवादः । परिपोषितश्च सर्वार्थगर्भाभ्यां तत्त्वमुक्ताकलापसर्वार्थसिद्धिभ्यां वैदिकस्सविशेषवादः । अत एवैनं खण्डनकारं वेदभाष्यकर्तारः **श्रीसायणमाधवाचार्या** अपि श्रीशङ्कराचार्यपराजितमेव वर्णयामासुः ॥

एवं श्रीमद्वेङ्कटनाथार्यैः निष्कण्टकीकृतेऽपि वैदिकमार्गे, खण्डनकारं श्रीशङ्कराचार्यपराजितं वर्णयद्भिरपि वेदोद्धारायैवागतंमन्यमानैः सायणमाधवाचार्यैः न शुद्धवैदिकमार्गः प्रदर्शितो लोकस्य। प्रत्युत, भगवद्रामानुजाशयरहस्यमजानन्त एव, श्रीरामानुजमतमास्तिकदर्शनेषु निकृष्टतममिति प्रकटनायैव सर्वदर्शनसंग्रहनामकग्रन्थं विरच्य, 'रामानुजमतं क्षपणकपक्षनिक्षिप्त'मिति कथनमात्रेण तृप्तिं प्रकटयन्तस्ते स्मारयन्ति 'स्वरसवाही विदुषोऽपि तथाऽऽरूढोऽभिनिवेशः' इति योगसूत्रम्, 'अभिनिवेशवशीकृतचेतसां बहुविदामपि संभवति भ्रमः' इति **भगवद्यामुनाचार्य**वचनं चेत्यहो मायाया महिमा! यतो विषयदृष्ट्या नास्त्यन्तरङ्गाशयभेदो **भगवद्रामानुजशङ्कराचार्ययोः**। स्थूलदृष्ट्या प्रतीयमानो भेदः कालानुगुणशब्दविन्यासभेदमात्रकृत इत्येव परमं सत्यम्॥

एवं **श्रीमत्परकालयतिवर**मुखाच्छ्रुतस्यार्थस्य भगवता **श्री श्रीरङ्गविष्णुनापि** पोषणेन विषये हृदये निरूढेऽपि केवलहैतुकपण्डितजनप्रश्नोपप्रश्नानामुत्तरदानाय मतत्रयरहस्यं सर्वं कूलङ्कषमधीतं बहुवत्सरान्। अस्यैव फलभूतोऽयं प्रकृतो व्याख्यानग्रन्थः॥

**समस्याः**—एवं विवादानां कारणस्य गाढान्वेषणरूपतपश्चरणप्रवृत्तस्य प्रथममिदं भगवद्वचनं स्मृतिपथमारूढम् 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥' इति। इदं च वाक्यद्वयात्मकमितराभ्यां व्याख्यातम्। **भगवद्रामानुजैस्तु** 'मनुष्याणां सहस्रेषु कश्चिदेव यतते। यततामपि केचन सामान्यतस्सिद्धा भवन्ति। तेष्वपि यः कश्चिदेव तत्त्वतः पूर्णसिद्धो भूत्वा सर्वं वेत्ति' इति वाक्यत्रयात्मकं व्याख्यातम्। ज्ञानिनोऽपि बहुविधा एवेत्यर्थः। यतो हि अध्यात्मक्षेत्रमतिगहनम्, बहुसोपानक्रमवच्च, अत एव ज्ञानिनां वचनान्यपि बहुविधानि भवितुमस्त्यवकाशः। अतश्चाचार्याः किं परस्परघर्षणार्थमेवावतीर्णाः? इत्यपि संशयो भवेदेव। **इयं प्रथमा** समस्या जिज्ञासूनाम्॥

एतदनन्तरं भगवद्रामानुजस्य वेदार्थसंग्रहवचनम् 'एवं सत्यभेदो वा, भेदो वा द्व्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थस्समर्थितो भवति? सर्वस्यापि वेदवेद्यत्वात्सर्वं समर्थितम्' इत्यादि विलक्षणं वचनम्। न तावन्मात्रम्। 'सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदः समर्थितः' इत्यप्यनन्तरवाक्यम्। अत्रोभयत्रापि 'अर्थ'पदमेव वर्तते, न तु 'वाक्य'पदमिति गाढमवधेयम्। अतः शरीरशरीरिभावे कीदृशं महद्रहस्यमस्तीति **द्वितीया समस्या**॥

**तृतीया च समस्या**—श्रीमद्भागवते 'इति नानाप्रसंख्यानं तत्त्वानामृषिभिः कृतम्। सर्वं न्याय्यं युक्तिमत्त्वात् विदुषां किमशोभनम्॥' इति सूचिता सर्वशास्त्रणां मर्यादा कीदृशी? या च 'विद्यास्थानं तु सर्वं प्रतिनियतनिजोपक्रियांशे प्रमाणम्' इत्याचार्यैरपि दृढीकृता॥

**परिहारः**—आदाविदमत्रावधेयम्। 'यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्॥' इति वर्ण्यमानमत्यन्तगहनमात्मतत्त्वं हि सर्वविधवादानामप्यवकाशं ददाति। अत एव जगद्ब्रह्मणोर्विषये भेद-अभेद-भेदाभेदवादानां प्रवृत्तिः। एवमुपादानत्वेन साकं शरीरशरीरिभावस्यापि

सत्त्वात्, वादा वर्धेरन्नेव बहुधा । अत एव च भगवद्रामानुजैः 'भेदो वा, अभेदो वा, भेदाभेदौ वा कोऽयमर्थस्समर्थितः?' इति स्वयं प्रश्नमुपक्षिप्यापि, विषयस्य गहनत्वात् निर्दिष्टमुत्तरं नोक्तम् ॥

आहत्य **पूर्णाध्यात्मविज्ञानेनैवासां समस्यानां परिहारस्साध्यः** । एवं वस्तुतत्त्वं वदत्येव मयि शब्दमात्रपराणाम्, अत एवार्थाद्दूरदूराणां कलहप्रियाणां केषाञ्चित्पण्डितानां 'तर्हि कोऽपि निर्णयो नास्त्येव वा?' इत्यादयः तुमुलाश्शब्दा नानाविधाः कर्णयोः पतन्ति नानादिग्भ्यः। एतेषां सर्वेषामपि **'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरः'** इति पातञ्जलसूत्रमेवोत्तरत्वेनोपायनीक्रियते । अथवा 'शाब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः । परिभ्रमंस्तत्र न विन्दतेऽर्थान् **मायामये वासनया शयानः** ॥' इति श्रीशुकवचनमेवोपायनार्हमेषाम्, यतः शब्दमात्रपरायणानामर्थप्रत्ययविषये दृष्टिरेव माययाऽपहृता भवति । अथवा **'गुरोश्शापस्तु शिष्यःस्यात्'** इति न्याय एवोपदेष्टव्य एतादृशेभ्यः । तिष्ठन्तु ते तथैव कलहप्रियाः! **आत्महितेच्छूनार्यान् सादरमाह्वयामः पूर्ववासनादिकं दूरतस्संत्यज्यास्य ग्रन्थस्य सावधानाध्ययनाय सर्वसाक्षिसाक्षिणं साक्षीकृत्य** ॥

एवमतिगहनविचारेषु सत्यान्वेषणे प्रवृत्तस्य वेदान्तशास्त्रपदवाच्यब्रह्मसूत्रणामेवोपरि किल लेखनी व्यापारयितव्येति प्रश्नः स्यात् । परन्तु ब्रह्मसूत्रेषु अभिप्रायभेदस्य कारणभूतो भागः वस्तुतः अल्प एव । शब्दमात्रपरायणा यद्यपि सर्वत्र विचारं वर्धयेरन् । परन्तु मूलतः जीवः, जगत्, ब्रह्म इत्येतत्तत्त्वत्रयस्वरूपे, एषां परस्परं संबन्धे चात्यन्तभिप्रायभेदास्सहजा एव । तादृशो भागोऽल्प एव । 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे.1-12) इति तत्त्वत्रयं विविच्य प्रदर्शयति श्रुतिः । प्रामाणिकविज्ञानान्वेषणेनैषां स्वरूपे निश्चिते सति विवादाः स्वयं विलीयेरन् ॥

सुसूक्ष्ममालोडने श्वेताश्वतरोपनिषत् वहूनां समस्यानां परिहाराय समर्थेति ज्ञातुं शक्यते । प्रसिद्धासु दशोपनिषत्सु असमाहितानां प्रश्नानामत्रोत्तरं लभ्यत इति सावधानतदध्ययनेन ज्ञातुं शक्यते । अत एव एतत्सिद्धान्ते तदुक्तक्रमेण तत्त्वत्रयज्ञानमेव मुक्तिहेतुरिति 'शिष्टा जीवेशतत्त्वप्रमितियुतपरोपासना मुक्तिहेतुः' (जड.4) इत्याचार्यैरुक्तम् । अत एवायं तत्त्वमुक्ताकलापः एतदर्थमेवाचार्यैर्व्यरचीत्यतः एतद्ग्रन्थव्याख्यानव्याजेन तेषां कूलंकषो विचारः अत्र कर्तुं शक्यो विस्तरेणेति मत्त्वात्रैव महान् परिश्रमोऽकारि सुविस्तरम् । एतदुपर्यपि यद्यावश्यकता स्यात्, इतोऽपि विस्तरेणायं तत्त्वत्रयवादो विचारमर्हत्येव । सर्वत्रापि दैवमेव प्रमाणमन्ततः ॥

**निगमनम्**—अद्यत्वे **विशिष्टाद्वैतमतमिति यत्पण्डिताः प्रायो जानन्ति,** पुनः पुनःकतिपयशब्दमात्रमावर्तयन्ति च, **न तन्मतीयोऽयं ग्रन्थः** । किन्तु भगवद्रामानुजस्यावतारो यदर्थमभूत्, तेषां मनसि निहितः सर्वलोकहितावहो यस्सर्वश्रुतिसमन्वयः, **श्रीमत्परकालयतिवरैः**, भगवता **श्रीश्रीरङ्गविष्णुना** चोपदिष्टश्च यः, तस्यास्य वैदिकज्ञानविज्ञानमूलकस्य **सविशेषाद्वैततत्त्वस्य** प्रकाशनार्थमेवागतोऽयं ग्रन्थः । 'द्वैतं सम्यक् ज्ञातुं प्रभवामः, अद्वैतमपि कथञ्चिद्ज्ञातुं प्रभवामः । विशिष्टा(सविशेषा)द्वैतं नाम किम्? ते किं वदन्ति?

किमर्थं तथा एते क्लिश्यन्ति? इति तु सम्यङ् न ज्ञातुं प्रभवामः' इति बहूनां मुखात् बहुधा श्रुतम्। एतदुत्तरदानरूपोऽयं ग्रन्थः। अतस्सावधानैरिदमध्येयमिति प्रार्थयामः॥

यद्यपि निर्विशेषवादिनो वदन्ति 'स्वसिद्धान्तव्यवस्थासु द्वैतिनो दृढनिश्चयाः। परस्परं विरुद्ध्यन्ते, तेनायं न विरुद्ध्यते॥' (मां.का.3-17) इति। अद्वैतस्य द्वैतनिषेधरूपत्वेनाद्वैतान्तर्गतत्वाद्द्वैतस्य 'तेनायं न विरुद्ध्यते' इत्यस्याभिप्रायः। परं तु, 'भावाभावौ निषेद्धुं तदुभयविधिवद्व्याहतत्वादशक्यम्' इति न्यायेन भेदाभेदयोःपरस्पराभावरूपत्वेनान्यतरेणान्यतरनिषेधासंभवात्। अतश्चैतेऽपि हि द्वैतमिथ्यात्वरूपे स्वपक्षे दृढनिश्चया एव। 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ.4-5-19) इत्यत्रत्यं मायापदं हि ते मिथ्यार्थकं मन्यन्ते। एवं सति 'तस्योपनिषत् सत्यस्य सत्यम्' इत्यस्य, छान्दोग्ये(8-3-5) बृहदारण्यके च(4-3-1) प्रदर्शितसत्यपदनिर्वचनस्य च का गतिः? अतः सर्वश्रुतिसमन्वयस्सर्वथा न भवत्येव निर्विशेषवादे। प्रत्युत सर्वश्रुतिसमन्वयः सर्वश्रुतिनिरसनरूप एव स्यात्तन्मते। सविशेषवाद एव सर्वश्रुतिसमन्वयादेव 'एवं सत्यभेदो वा भेदो वा द्व्यात्मकता वा कोऽययमर्थस्समर्थितः?' इति प्रश्नमुपक्षिप्यापि 'सर्वस्यापि वेदवेद्यत्वात् सर्वं समर्थितम्' इत्युक्तं भगवद्रामानुजैरित्यसकृदुक्तम्। नैतावन्मात्रम्; तदुपरि, गण्डस्योपरि पिटकः संवृत्त इव जगद्ब्रह्मणोःशरीरशरीरिभावस्य प्रतिपादनादभेदस्समर्थितः इत्यपि दुर्जरं वचनमपि द्रष्टव्यम्। जगद्ब्रह्मणोश्शरीरशरीरिभावेन साकमुपादानोपादेयभावोऽपि ह्युभयसंमतम्। उक्तवचनानां तात्पर्यमपि न तावत्सूहम्, यतो श्रीविद्यारण्ययतयोऽप्येतदजानन्तो रामानुजमतं क्षपणपक्षनिक्षिप्तममन्यन्त। अत्यन्तदुरूहेषु तप एव परममुत्तरम्। अस्य विस्तरस्तु ग्रन्थे द्रष्टव्यः। एवञ्चैतस्मिन् सिद्धान्त एव सर्वश्रुतिसमन्वयः॥

**एतावदेवात्रावधेयम्**—सर्वं हि वस्तु स्वरूपपररूपाभ्यां भावाभावात्मकम्। 'स्वरूपपररूपाभ्यां सर्वं सदसदात्मकम्' (श्लो.वा.) इति हि न्यायविदः। अतो ब्रह्म लौकिकैर्विशेषैर्विरहितमपि स्वासाधरणैरलौकिकैर्विशेषैर्विशिष्टमेव। अन्यथा हि ब्रह्मणः शशशृङ्गादेश्च वैलक्षण्यमेव न स्यात्। अत एव हि सूत्रकारोऽपि 'सर्वधर्मोपपत्तेश्च' 'सर्वोपेता च तद्दर्शनात्' इत्याद्याह। अत एवाचार्याणां निर्विशेषवादः तदानीन्तनानां प्रबलानां हैतुकानामुपच्छन्दनार्थमेव। अत एवाध्यासभाष्ये नैकापि श्रुतिरुपात्ता। केवलयुक्त्या कञ्चनार्थं प्रसाध्य 'यथा चायमर्थो वेदान्तानां तथा **वयमस्यां** शारीरकमीमांसायां प्रदर्शियिष्यामः' इत्युपसंहृतम्। श्रुतिस्तु 'परास्य शक्तिर्विविधैव श्रूयते **स्वाभाविकी** ज्ञानबलक्रिया च' इति ज्ञानशक्त्यादीनां स्वाभाविकतामेवाह। अतस्सविशेषमेव परं ब्रह्म। विशेषाश्च गुणविग्रहविभूतयः। एतादृशज्ञानमेवोत्तारकमिति **'तमेवं विद्वानमृतः'** इत्येवाह श्रुतिः। 'एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः। **सोऽविकम्प्येन** योगेन युज्यते नात्र संशयः॥' इति भगवानप्यगायत्। अत**स्सविशेषवाद एव** निर्विशेषवादप्रतिकोटिरूपः वैदिकः सर्वहितावहः। विशिष्टसविशेषपदयोः पर्यायत्वात् 'विशिष्टाद्वैत'पदमप्येतदर्थकमेव। एवं सत्येव श्रुतिवचनानां सर्वेषां समन्वयः। एतदेव 'कश्चिन्मां वेत्ति **तत्त्वतः**' इत्यादि वदतो भगवत आशयः। अत एव **मतत्रयादि**कल्पनमपि एकदेशदर्शिनां मतिभेदवतां

शुष्कपण्डितानामेव, न तु पूर्णदर्शिनाम्। 'अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' इति हि ब्रवीति। तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति। **अभावावसाने तु** प्रतिषेधे, किं सत्यस्य सत्यमित्युच्येत। तस्माद्ब्रह्मावसानोऽयं प्रतिषेधः, नाभावावसानः'(शं.भा.) इति सत्ये तारतम्यं सूचयतामाचार्याणाम्, सत्यपदेन जगद्व्यावृत्तिं वदनां श्रीभाष्काराणामपीदमेव संमतम्। श्रुतौ (छां.8-3-5, बृ.7-5-1) सत्यपदनिर्वचनमपीममेवार्थं दृढयति। एतदेवाध्यात्मविज्ञानसिद्धं सविशेषा(विशिष्टा)द्वैत-तत्त्वम्। बौद्ध-वैदिकसंप्रदायसीमाप्ययमेव ॥

**वस्तुतो वेदान्तशास्त्रं यत् प्राचीनैः बादरायणबोधायनोपवर्षादिभिः प्रत्यपादि, तस्य निश्चितस्वरूपनिर्णयाय महान् प्रयत्नो योऽकारि बहुवत्सरान्, तस्य फलमन्येऽपि जानन्त्वित्यर्थमेव कृतोऽयं परिश्रमः** । अत एव **न कस्यापि पक्षस्य खण्डनार्थमारचितोऽयं ग्रन्थः**, किन्तु सत्यान्वेषणार्थकृतबहुकालप्रयत्नफलभूतोऽयं ग्रन्थः। परन्तु बहूनामिदं सत्यं नूनं नूतनमेव भायादपि। समये तत्त्वमिदम् **इतोऽपि विस्तरेण** यथावत्प्रकाशयामः। प्रथमप्रयत्नत्वात्, ग्रन्थस्यातिविस्तृतत्वाच्च बहवो विषयाः पूर्णस्वरूपतः प्रदर्शयितुं न शक्या अभूवन्। तत्र तत्र ग्रन्थे सूचितश्चायमंशः। अतश्च—

समये त्वखिलं स्पष्टं भविष्यति यदीच्छति। भगवान् सर्वभूतात्मा सर्वलोकहिते रतः ॥

नव्यमङ्गलाभिजनः
**वरदाचार्यः**

# विषयानुक्रमणी*



## जडद्रव्यसरः



## जीवसरः



---

* इयं ग्रन्थक्रमानुसारिणी । विशेषविषयाणां कृते 'विषयाणाम् अकाराद्यनुक्रमणी' द्रष्टव्या ।

## नायकसरः



## बुद्धिसरः

## अद्रव्यसरः





# अत्यन्तमवधेया विशेषविषयाः







# विषयाणाम् अकाराद्यनुक्रमणी



# संकेताक्षरविवरणम्



| | | | |
|---|---|---|---|
| (अ.सा.) | अधिकरणसारावलिः | (तै.आ.) | तैत्तिरीयारण्यकम् |
| (अम.) | अमरकोशः | (तै.ब्रा.) | तैत्तिरीयब्राह्मणम् |
| (आप.ध.सू) | आपस्तम्बधर्मसूत्रम् | (तै.सं.) | तैत्तिरीयसंहिता |
| (आ.सि.) | आत्मसिद्धिः | (द.श./दया.) | दयाशतकम् |
| (ईश.) | ईशावस्योपनिषत् | (नारा.अ.) | नारायणाथर्वशिरः |
| (उ.रा.च.) | उत्तररामचरितम् | (ना.लि.स्व.) | नामलिङ्गानुशासनम् |
| (ऋ.सं.) | ऋक्संहिता | (नि.) | निरुक्तम् |
| (ऐ.) | ऐतरेयोपनिषत् | (नै.सि.) | नैष्कर्मसिद्धिः |
| (ऐ.आ.) | ऐतरेयारण्यकम् | (न्या.प.बुद्धिः) | न्यायपरिशुद्धिः |
| (कठ.) | कठोपनिषत् | (न्या.भा.) | न्यायभाष्यम् |
| (कल्प.) | कल्पतरुः | (न्या.मं) | न्यायमञ्जरी |
| (कुसु/न्या.कु.) | न्यायकुसुमाञ्जलिः | (न्या.सि.) | न्यायसिद्धाञ्जनम् |
| (कै.) | कैवल्योपनिषत् | (न्या.सू.) | न्यायसूत्रम् |
| (कौ.) | कौषीतक्युपनिषत् | (न्या.सू.वृ) | न्यायसूत्रवृत्तिः |
| (गी.) | भगवद्गीता | (पा.यो.सू.) | पातञ्जलयोगसूत्रम् |
| (गी.सं.) | गीतार्थसंग्रहः | (पा.सू) | पाणिनिसूत्रम् |
| (गौ/गौड.क्रा.) | गौडपादकारिका | (पु.सू) | पुरुषसूक्तम् |
| (गौ.ध.सू.) | गौतमधर्मसूत्रम् | (प्र.उ.) | प्रश्नोपनिषत् |
| (गौ/न्या.सू.) | न्यायसूत्रम् | (प्र.पं.) | प्रकरणपञ्चिका |
| (छां.) | छान्दोग्योपनिषत् | (प्र.हृ.) | प्रपञ्चहृदयम् |
| (जै.सू.) | जैमिनिसूत्रम् | (प्र.वा.) | प्रमाणवर्तिकम् |
| (त.टी.) | तत्त्वटीका | (प्र.स.) | प्रमाणसमुच्चयः |
| (त.प्र.) | तत्त्वप्रकाशिका | (बृ.) | बृहदारण्यकोपनिषत् |
| (त.सू.) | तत्त्वार्थाधिगमसूत्रम् | (बृ.सं.वा.) | बृहदारण्यकोपनिषत्संबन्ध-वार्तिकम् |
| (तै.आ.) | तैत्तिरीयोपनिषत्(आनन्दवल्ली) | | |

| | | | |
|---|---|---|---|
| (बो.च.पं.) | बोधिचर्यावतारपञ्चिका | (वि.पु.) | विष्णुपुराणम् |
| (ब्र.बि.) | ब्रह्मबिन्दूपनिषत् | (वि.धर्म.) | विष्णुधर्मोत्तरम् |
| (ब्र.सू.) | ब्रह्मसूत्रम् | (वे.सं.) | वेदार्थसंग्रहः |
| (भाग.) | भागवतम् | (वै.सू.) | वैशेषिकसूत्रम् |
| (म.ना.) | महानारायणीयोपनिषत् | (शं.) | शंकरभाष्यम् |
| (मनु.) | मनुस्मृति | (शठ.) | शठकोपसूरिः |
| (म.भा.) | महाभारतम् | (श.दू.) | शतदूषणी |
| (मा.का.) | माण्डूक्यकारिका | (श्री.भा.) | श्रीभाष्यम् |
| (मुं.) | मुण्डकोपनिषत् | (श्रीर.स्तव.उ.श.) | श्रीरङ्गराजस्तवः उत्तरशतकम् |
| (मु.मा.) | मुकुन्दमाला | (श्रु.प्र.) | श्रुतप्रकाशिका |
| (मु/मुक्ता:.) | मुक्तावली | (श्लो.वा.निरा.) | श्लोकवर्तिकम्, निरालम्बनवादः |
| (मुद्गल.) | मुद्गलोपनिषत् | (श्वे.) | श्वेताश्वतरोपनिषत् |
| (मो.) | मोक्षधर्मः | (सं.शा.) | संक्षेपशारीरकम् |
| (यजु.) | यजुस्संहिता | (सं.द.सं.) | सर्वदर्शनसंग्रहः |
| (यति.स.) | यतिराजसप्ततिः | (स.सि.) | सर्वार्थसिद्धिः |
| (या.स्मृ) | याज्ञवल्क्यस्मृतिः | (स.सि.सं.) | सर्वसिद्धान्तसंग्रहः |
| (र.त्र.सा.) | रहस्यत्रयसारः | (सां.का.) | सांख्यकारिका |
| (रा.) | रामायणम् | (सा.वि.) | सारासारविवेकः |
| (वन.) | वनपर्व | (सुबा.) | सुबालोपनिषत् |
| (व.पञ्चा.) | वरदराजपञ्चाशत् | (स्तो.र.) | स्तोत्ररत्नम् |
| (वा.प.) | वाक्यपदीयम् | | |



# गुरुवन्दनम्



गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे । वृणीमहे च तत्राद्यौ दंपती जगतां पती ॥

वन्दे **श्रीसुन्दरराजाचार्यं** मे पितरं गुरुम् । **श्रीरङ्गाम्बा**युतं दक्षं सर्वविद्यासु शिक्षकम् ॥
सर्वं साधयितुं शक्तं दीनबन्धुं सदा भजे । यदीयशिक्षावैशिष्ट्यात् जन्म मे परिवर्तितम् ॥
**श्रीमद्रामानुजाचार्यं** वेदमातृप्रदं च मे । जम्बूग्रामाभिजातं तं प्रणमामि पुनः पुनः ॥
वन्दे **नारायणाचार्यं** वेदविद्यागुरुं ततः । सौशील्यादिगुणोपेतं वेदतत्त्वविदां वरम् ॥
वन्दे **श्रीवीररघ्वीशं** नव्यमङ्गलभूषणम् । ज्ञानानुष्ठानवैराग्यरूपिणं गतिदं मम ॥
तिरुक्कण्णपुरं **श्रीनिवासाचार्यं** ततो भजे । न्यायशिक्षणमर्मज्ञं शिष्यवात्सल्यसागरम् ॥
पळवेरि **श्रीवेंकटवरदाचार्य**मादरात् । नौमि शिक्षणविद्यायां कुशलं शिष्यवत्सलम् ॥
पुरिशै **कृष्णमाचार्यं** वन्दे न्यायविशारदम् । उत्तमूर् **वीररघ्वीशाचार्य**वर्यं ततो भजे ॥
आत्मकूर् **दीक्षिताचार्यं** वन्दे मैसूरुवासिनम् । सर्वैरात्मगुणैः पूर्णं सर्वविद्याविशारदम् ॥
श्रीमच्छ्रीरङ्गनाथाख्यपरकालयतीश्वरे । विन्यस्तसर्वप्राणं तं शिक्षणक्रमवित्तमम् ॥
न्यायशास्त्रादिविद्यासु शिक्षकं मम सर्वशः । योऽव्याजपुत्रवात्सल्यात् सर्वं शास्त्रमशिक्षयत्॥
वन्दे ततश्च **श्रीरङ्गनाथाभिधयतीश्वरम्** । परकालमठाधीशम् विभूतिपुरुषं तथा ॥
योऽशिक्षयन्मां वेदान्तशास्त्रेषु सकलेष्वपि । सर्वमर्माणि सूक्ष्माणि दुर्ज्ञेयानीतरैस्तथा ॥
मम सत्यान्वेषणे यः सहायस्सर्वदाऽभवत् । गहने तत्त्वविषये सदा मार्गप्रदर्शकः ॥
सदा नतं च भगवद्रामानुजमुनीश्वरे । निगमान्तगुरोः पादे न्यस्तभारं नमामि तम् ॥
शिङ्गरार्यं श्रीनिवासवरदाचार्यमेव च । वेदविद्याप्रदौ वन्दे वेदविद्याविशारदौ ॥
ततस्तु **श्रीरङ्गविष्णुं** भगवन्तं नमाम्यहम् । **विजयाम्बा**युतं सर्वकल्याणगुणसागरम् ॥
अवातरद्यः कृपया लोकानां हितकाम्यया । ज्ञानविज्ञानरूपी च परमव्योमभास्करः ॥
मह्यं सर्वस्वदाता च सच्चिदानन्दविग्रहः । यदीयानुग्रहादेव चक्षुरुन्मीलितं मम ॥
अकारयत्स एवेदं स्वस्मै स्वप्रीतये स्वतः । कथं साध्यं मादृशानामिदमेतादृशं महत् ॥
एवमन्यान् गुरूंश्चैव ये वा स्युर्मेऽक्षरप्रदाः । नमामि सर्वानपि तान् ज्ञाताज्ञातान् पुनःपुनः ॥



॥ श्रीः ॥

श्रीमन्निगमान्तमहादेशिकैरनुगृहीतः

# तत्त्वमुक्ताकलापः

सर्वङ्कषाव्याख्यासहितः



श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥



## जडद्रव्यसरः

[मङ्गलाचरणम्]

1. लक्ष्मीनेत्रोत्पलश्रीसततपरिचयादेष संवर्धमानो
नाभीनाळीकरिङ्खन्मधुकरपटलीदत्तहस्तावलम्बः ।
अस्माकं संपदोघान् अविरलतुलसीदामसञ्जातभूमा
कालिन्दीकान्तिहारी कलयतु वपुषः कालिमा कैटभारेः ॥ १ ॥

---

### सर्वङ्कषा

विश्वं सृजन् करुणया परिपालयन् यः विश्वक्रियासु यमयत्यखिलान्तरात्मा ।
विद्यास्वयंवरपतिः विदधातु सोऽयां विश्वस्य मङ्गलममेयमहाविभूतिः ॥
तत्त्वमुक्ताकलापस्य प्रौढस्यातिमहीयसः । करोमि विपुलां व्याख्यां सतामाज्ञामनुस्मरन् ॥
तमाद्यं गुरुमानम्य शठकोपयतीश्वरौ । वेदान्ताचार्यमन्यांश्च व्याख्यास्यामि यथामति ॥
निश्शेषां वस्तुवृत्तिं निपुणमिह हि यो न्यास्थदाचार्यवर्यः
वागीशस्य प्रसादान्निखिलबुधमनोहारि कालानुरूपम् ।
सोऽयं कारुण्यमूर्तिः समय उपगते त्वद्य तस्यानुरूपं
मध्ये मां संविधाय स्वहृदयनिहितं प्राह विज्ञानदृष्ट्या ॥
अनुगृह्णन्तु सद्भावपवित्रितजगत्त्रयाः । अपूर्वप्रक्रियामेनां वीक्ष्य सर्वङ्कषां बुधाः ॥

श्रीमत्तुरगवदनतेजोबृंहिताश्चर्यशक्तिः सर्वतन्त्रस्वतन्त्रः श्रीमान् वेङ्कटनाथनामा वेदान्ताचार्यवर्यः जिज्ञासुजनहिताय चिकीर्षितस्य सविशेषा(विशिष्टा)द्वैतसिद्धान्तप्रकरणग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगमनाद्यर्थं स्वेष्टदेवतास्तुतिगर्भं श्रेयःप्रार्थनारूपं मङ्गलमादौ निबध्नाति—**लक्ष्मीति । कैटभारेः वपुषः एषः कालिमा** इत्यन्वयक्रमः । **कालिमा अस्माकं संपदोघान् कलयतु** इति प्रार्थना । इतरत् सर्वं कालिम्नः विशेषणम्। एषः कालिमा इति प्रत्यक्षवन्निर्देशः । भगवानिव तदीयगुणा अपि भक्तानामुपास्या इत्यतः कालिम्नः

[ग्रन्थकर्तृवैशिष्ट्यम्]

**2. नानासिद्धान्तनीतिश्रमविमलधियोऽनन्तसूरेस्तनूजो**
**वैश्वामित्रस्य पौत्रो विततमखविधेः पुण्डरीकाक्षसूरेः ।**

प्राधान्यम् । स च कालिमा **लक्ष्म्याः नेत्रोत्पलश्रिया** सह **सततपरिचयात् संवर्धमानः**=एधमानः । अत्र **सततपरिचयात्** इत्यनेन परमात्मनो लक्ष्मीसंबन्धः नित्य इति सूचितः । लक्ष्मीतत्त्वमधिकृत्य वक्तव्यं तत्प्रकरणे (नायक.8) वक्ष्यते । **नाभीनालीके**ति कमलमुपलक्षितम्, तत्र **रिङ्खत्ताम्**=सशब्दं परिभ्रमताम् **मधुकराणां पटली**=समुदायः, तया **दत्तः हस्तावलम्बः**=पोषणम् यस्य कालिम्नः, एवं **अविरलतुलसीदाम्ना**=निबिडतुलसीमालया **सञ्जातः भूमा**=बहुत्वम् यस्य, एवं **कालिन्द्याः**=यमुनायाः **कान्तिहारी,** यमुनानदी कृष्णवर्णेति प्रसिद्धम् । एतादृशः **कैटभारेः वपुषः कालिमा**=कृष्णवर्णः अस्माकं **संपदोघान्** कलयतु । अत्र **संपत्**=भगवत्प्राप्तिहेतुभूतं यत् किञ्चित् गृह्यते । अत्र 'वपुषःकालिमा' इति गुणगुणिभावः, 'कैटभारेः वपुषः' इत्यनेन दिव्यमङ्गलविग्रहविशिष्टत्वं ब्रह्मणः, 'लक्ष्मी'त्यादिना नित्यविभूतिसद्भावः'नाभीनालीके'त्यादिना चतुर्मुखसृष्टिरित्यादेस्सूचनात् लीलाविभूतिसद्भावः, 'अविरलतुलसी' इत्यादिना भक्तजनसेव्यत्वम्, 'कालिन्दी' 'कैटभारेः' इति पदाभ्यां कृष्णावतारस्य, हयग्रीवावतारस्य चैकरस्यमित्यादिकं सूचितम् । श्रीकृष्णावतारे गीतोपदेशेन, श्रीहयग्रीवावतारे पाञ्चरात्रोपदेशेन चोभयोरवतारयोर्ज्ञानप्रदत्वादिकमस्मदाचार्यानुगृहीते **हयशिरउपाख्यानव्याख्याने** स्पष्टम् । अत एव हयग्रीवावतारे मधुकैटभयोस्संहारेऽपि मधुसूदनकैटभारिपदे श्रीकृष्णेऽपि प्रयुज्येते इत्यपि द्रष्टव्यम् ।।

एवमत्र **सविशेषाद्वैत**पर्यायस्य **विशिष्टाद्वैत**सिद्धान्तस्य मूलभूता विषयाः सूचिताः । **निर्विशेषाद्वैत**-प्रतिकोटिभूतं हीदं **विशिष्टाद्वैत**दर्शनम् । अत्र विशिष्टपदस्य चिदचिद्विशिष्टमात्रपरत्वे गुणविग्रहयोर्लाभः क्लेशेन निर्वाह्यः । अतः—विशिष्टपदं सविशेषपर्यायमिति सर्वविदितम् । विशेषाश्च गुणविग्रहविभूतयः । गुणाश्च ज्ञानशक्तिबलैश्वर्यादयः इत्यादिश्रुतिसिद्धाः । विग्रहः अन्तरादित्यविद्यादिषु प्रसिद्धः । विभूतयश्चानन्ताः, प्राधान्येन नित्यलीलारूपाः । तेन चिदचितोस्सिद्धिः । एतादृशविशेषैः विशिष्टत्वात्, सगुणनिर्गुणविभागाभावात् सविशेषं ब्रह्मैकमेव परमं तत्त्वमिति श्रौतस्सिद्धान्तः। जगद्योनिभूतं हि ब्रह्मतत्त्वं शून्यरूपं न भवितुमर्हति । न्यग्रोधादिबीजानि वृक्षाकारेण विकसन्ते अथवा परिणमन्ते । न्यग्रोधबीजं हि तादृशविकासानुगुणसकलविशेषविशिष्टम् । अन्यथा हि तस्मात् यः कोऽपि वृक्षः स्यात् । अथवा न्यग्रोधबीजाकारात् शिलाशकलादपि आम्रवृक्षः स्यात् । अतः शून्यरूपात् ब्रह्मणः न जगदुत्पत्तिस्थित्यादिसंभवः । साक्षित्वमपि न निर्विशेषस्य भवेत् । किन्तु तदनुगुणविशेषविशिष्टस्यैव । अयमंशः सद्विद्यायां परब्रह्मणः स्वरूपस्वभावविवरणार्थं प्रवृत्तेषु खण्डेषु (8-16) दशमखण्डे न्यग्रोधबीजदृष्टान्तेनोपादानभूतं तत्त्वं सविशेषमेव, न शून्यरूपमिति विस्तरेणोपपादितं द्रष्टव्यम् । एवञ्च एतादृशविशेषणविशिष्टमेव ब्रह्म, न शून्यरूपम् । एवं सविशेषवादोऽयं समग्रः सर्वश्रुत्यनुगुणः, सर्वार्थगर्भः सर्वविधाधिकारिसमाश्रयार्ह इति सूचितम् ।। १ ।।

कर्तृवैशिष्ट्यं प्रतिपादयति उपादेयत्वोपयोगितया—**नानेत्यादिना** । **नाना**=अनेके **सिद्धान्ताः**= आस्तिकनास्तिकपक्षभेदाः, तेषां **नीतयः**=न्यायाः=सत्तर्कदुस्तर्कात्मकाः, तेषु **श्रमात्**=परिश्रमात् **विमला**=

**श्रुत्वा रामानुजार्यात् सदसदपि ततस्तत्त्वमुक्ताकलापं**
**व्यातानीत् वेङ्कटेशो वरदगुरुकृपालम्भितोद्दामभूमा ॥ २ ॥**

निर्मला **धीः** यस्य, तादृशस्य **अनन्तसूरेः** तनूजः, तथा **विततानाम्**=विस्तृतानाम् **मखानाम्**=यज्ञानां **विधाः**=प्रकाराः यस्य, अनेकयज्ञानुष्ठानपरस्य **वैश्वामित्रस्य**=विश्वामित्रगोत्रोद्भवस्य, इदं अनन्तसूरेरपि विशेषणं वा, **पुण्डरीकाक्षसूरेः**=पुण्डरीकाक्षयज्वनः **पौत्रः**, **वरदगुरुः**=वात्स्यवरदाचार्यनामकः प्राचार्यः, तस्य **कृपया**=अनुग्रहेण **लम्भितः**=प्रापितः **उद्दामः**=निरतिशयः **भूमा**=महत्त्वं यस्य, तादृशः **वेङ्कटेशः**=वेङ्कटनाथः, **रामानुजार्यात्**=आत्रेयरामानुजाचार्यात् 'वादिहंसाम्बुद'बिरुदात् 'अप्पिळ्ळार्' इति द्राविडनामधेयात् स्वमातुलात् **सत् असदपि**=हेयोपादेयानि सर्वाण्यपि **श्रुत्वा**=गुरुमुखादेव गृहीत्वा, ततः तद्बलादेव **तत्त्वमुक्ताकलापम्**=एतन्नामकमिमं ग्रन्थं **व्यातानीत्**=अकरोत् । **असदपि श्रुत्वेति** पूर्वपक्षाभिप्रायेण । त्यागार्थम् असत्पदार्थज्ञानमप्यावश्यकम् । **वरदगुर्वित्यादि** । अत्रेयमाख्यायिका—आत्रेयरामानुजाचार्योऽयं कदाचित् स्वभागिनेयम् एतद्ग्रन्थकारम् अनतीतपञ्चहायनं स्वगुरोः वात्स्यश्रीवरदाचार्यस्य समीपं सहानयत् । तदात्वे, एतद्वर्चःप्रभृति वीक्ष्यातीवप्रसन्नः परमगुरुः सः 'प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः । भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥' इत्यन्वग्रहीदिति । तदिदं स्मरत्यनेन विशेषणेन ॥

तादृशपरमगुर्वनुग्रहानुरूपं सर्वमुत्तरकाले समभूदिति ज्ञायते—'निर्विष्टं यतिसार्वभौमवचसामावृत्तिभिर्यौवनं निर्धूतेतरपारतन्त्र्यनिरया नीतास्सुखं वासराः । अङ्गीकृत्य सतां प्रसत्तिमसतां गर्वोऽपि निर्वापितः शेषायुष्यपि शेषिदम्पतिदयादीक्षामुदीक्षामहे ॥' (र.त्र.सा.32) इत्यनेनैतद्ग्रन्थकारवचनेन ॥

ननु 'नानासिद्धान्त' इति कथम्? सिद्धान्तपदं हि अन्तिमनिर्णयवाचि । निर्णयेऽन्तिमत्वं नाम पुनरविचाल्यत्वम् । तादृशो निर्णयो नाना कथं भवेत्? वस्तुनि विकल्पायोगात् । ननु—

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥

इत्येकस्मिन् वस्तुनि विविधधर्माणां कल्पितत्वदर्शनात् वस्तुनि विकल्पायोगादिति कथम्? इति चेत्; तर्हि मतानि भिद्येरन् कामं मतिभेदात् । सिद्धान्ताः कथं भिद्येरन्? किं मतसिद्धान्तपदे पर्याये? दृश्यन्ते किल सिद्धान्ता नानाविधाः इति चेत्, तदेव कथमिति पृच्छामः? वयं किं कुर्मः? इति चेत्, अयि साधो! मृदुमतिं भवन्तं न पृच्छामः । तिष्ठ त्वं किञ्चिदिव पार्श्वतः । भवत्कूटस्थान् प्रौढानेव पृच्छामः । अत्रैवं चिन्त्यताम् । 'एकस्यां प्रमदातनौ' इत्यनेन किमुच्यते? एकत्वप्रमदात्वादिकमपि हि धर्मः । किं तेऽपि कल्पिताः? अनादिवासनाकल्पनाधिष्ठानगतास्ते धर्माः कथं ताभिरेव वासनाभिः कल्प्येरन्? ननु एक एव मृत्पिण्डः घटशरावमणिकादिनानाविधविकल्पव्यवहारहेतुर्दृश्यत एवेति चेत्; तर्ह्येक एव घटः पटकुड्यकुसूलादिविकल्पहेतुर्भवतु! न भवेदेव, घटपटादीनामेकोपादानकत्वाभावात् । मृत्पिण्डघटादयस्तु न तथा, तेषामेकोपादनकत्वादिति चेत्; सत्यम्, आगत एव त्वं समीपम् । किन्तु इह 'पिण्ड' इति मा वोचः, 'मृत्' इत्येव वद । सैव खलूपादानम्, घटादावनुवृत्तिदर्शनात् । पिण्डत्वं तु निवर्तत एव । एवञ्च

**[ग्रन्थस्य नाम्न औचित्यम्]**

3. **प्रज्ञासूच्याऽनुविद्धः क्षतिमनधिगतः कर्कशात् तर्कशाणात्**
**शुद्धो नानापरीक्षास्वशिथिलविहिते मानसूत्रे निबद्धः ।**
**आतन्वानः प्रकाशं बहुमुखमखिलत्रासवैधुर्यधुर्यो**
**धार्यो हेतुर्जयादेः स्वहृदि सहृदयैस्तत्त्वमुक्ताकलापः ।। ३ ।।**

---

उपादानोपादेयभावस्थले, वस्तुन्यपि विकल्पो भवत्येव कक्ष्याभेदेन । एवमेव **'एकमेवाद्वितीयम्'** 'तदैक्षत बहुस्याम्' इत्यादि किल श्रूयते । एवञ्च घटशरावादिकं मृदुपादानकं यथा, तथा घटपटादिकमपि पृथिव्युपादानकमेव । एवञ्च कस्याञ्चित् कक्ष्यायां घटपटौ भिन्नोपादानकौ । कस्याञ्चित्तु एकोपादानकौ । एवं मृत् घटोऽपि भवेत्, शरावोऽपि भवेत् । अतश्च उपादानोपादेयभावस्थले कक्ष्याभेदेन विविधाः कल्पा भवन्त्येव । अत एव च तत्तत्कक्ष्यादृष्ट्या अधिकारिभेदेन सिद्धान्ता अपि भिद्येरन् । सर्वं यत्रैकं भवति स एव तु परमः सिद्धान्तः एकः । स तु **सविशेषाद्वैत**मित्युक्तमनुपदम्; अत्रैव सर्वश्रुतिसमन्वयात् । अन्येऽपि सन्ति पराः, परतराश्च सिद्धान्ताः । परमस्तु सिद्धान्त एक एव । अतः परपरतरदृष्ट्या 'नानासिद्धान्त' इत्यभिधानं युक्ततरम् । एवं तत्तत्सिद्धान्तानां पूर्वोत्तरावध्योरनिर्णयादेव कलहः प्रायः पण्डितानामप्येकदेशदर्शिनाम् **'अन्धदृष्टगज'**न्यायेन । समग्रदर्शिनां तु 'सर्वं न्याय्यं युक्तिमत्त्वात् विदुषां किमशोभनम्' (भाग.11-22-25)इत्यैकरस्यं भगवानेवाह । तर्हि परमतखण्डनादीनां का प्रसक्तिरिति चेत्, कुत्रचिन्मर्यादाप्रदर्शनाय, कुत्रचित् 'न हि निन्दा'न्यायेन वा विचारः कर्तव्यो भवति परमसिद्धान्तस्वरूपप्रदर्शनाय, न तु **वैतण्डिकवत्** खण्डनैदंपर्येण । अधिकं तत्तत्प्रकरणे भविष्यति ।। २ ।।

उपादेयत्वोपयोगितयैव विषयवैशिष्ट्यम्,प्रयोजनम्,नाम्न औचित्यं च प्रदर्शयति—**प्रज्ञेत्यादिना**। **तत्त्वान्येव मुक्ताः**, तासां **कलापः** तत्त्वमुक्ताकलापः । एवं तत्त्वानां मुक्तात्वेन, ग्रन्थस्यास्य तत्त्वमुक्ताकलापत्त्वेन रूपणार्थमुभयानुगतान् धर्मान् श्लेषेण प्रतिपादयति । **प्रज्ञासूच्यानुविद्धः**=ग्रन्थस्त्वयं प्रज्ञाख्यया सूच्याऽनुविद्धः । एवं **कर्कशात्**=कठोरात् **तर्काख्यशाणात् क्षतिं**=आघातम् **अनधिगतः** । दुस्तर्कदूर इत्यर्थः। इतररत्नानां शाणाघातः अनिवार्यः । मुक्तानां तु नास्ति शाणाघात इति विशेषः । **नानापरीक्षासु शुद्धः**=नानाविधतत्त्वविचारेषु नानाविधरत्नपरीक्षासु च शुद्धत्वेन निर्णीतः । **अशिथिलं यथा तथा**=सुदृढमिति यावत्, **विहिते मानाख्ये सूत्रे निबद्धः** । **बहुमुखं प्रकाशम्**=अनेकरीत्या तत्त्वानां ज्ञानम्, भास्वरतां च **आतन्वानः** । **अखिलाः त्रासादयः**=संभावितशङ्कात्वादिग्रन्थदोषाः, रत्नदोषाश्च, तेषां **वैधुर्येण**=राहित्येन **धुर्यः**=सर्वश्रेष्ठत्वेन निश्चितः । **जयादेः** शास्त्रे लोके च, **हेतुः तत्त्वमुक्ताकलापः सहृदयैः**=मात्सर्यादिहीनैः **हृदि**=मनसि, हृदये च **धार्यः**=धर्तुं अर्हः । धर्तुमर्हन्ति सन्तः । ग्रन्थस्य मनसि धारणेन प्रमेयशुद्ध्या स्वमतनिष्कर्षः, वादादिकेलिषु जयश्च, मुक्ताहाराणां धारणेन लोके आरोग्यादिप्राप्तिः, सर्वकार्यजयश्च अवश्यं भवेदेव । ग्रन्थान्ते 'स्यादित्थं शिक्षितार्थः' (अद्रव्य.139) इत्यादिना एतद्ग्रन्थाध्ययनस्य जयहेतुत्वमुच्यते । 'कर्कशात्तर्कशाणात् क्षतिमनधिगतः' इत्यनेन वेदान्तशास्त्रस्य दुस्तर्कैरनभिभवः उक्तः ।।

यद्यपि 'आर्षं धर्मोपदेशं च' इत्यादिना हि तर्कानुग्रहः वेदस्याप्यभिहितः। अत एव नयसूत्रात्मकस्य वेदान्तशास्त्रस्य प्रवृत्तिरुपवर्ण्यते; अथापि दुर्बलप्रकृतिदृष्ट्यैव तर्कानुग्रहः प्रमाणानामपेक्ष्यते। के ते दुर्बलाः? ये बुद्धिं स्वतन्त्रां वर्धयन्ति स्म, त एवाध्यात्मक्षेत्रे दुर्बलाः। किं नाम दौर्बल्यम्? स्वोद्देशसाधनासमर्थान्तःकरणवत्त्वम् **दौर्बल्यम्**। बुद्धिर्हि सतां स्वत एव ऋजुमार्ग एव गच्छेत्। 'प्रकृतेस्सुकुमारतरं न किञ्चिदस्ति' इति हि वृद्धाः। अत एव चोक्तं **शुकेन** 'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः॥' (भाग.3-7-17) इति। बुद्धिरेव खलु व्यक्ता प्रथमा माया। तत्त्वं तु बुद्ध्यतीतम्। 'बुद्धेरात्मा महान् परः। महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः॥' (कठ.1-3-10) इति हि श्रूयते। तावता बुद्धेरगोचर एव तत्त्वमिति न मन्तव्यम्, 'दृश्यते त्वग्रियया बुद्ध्या' (कठ.1-3-12) इत्यादिश्रुतेः। अत्रापि 'अग्रियया' 'सूक्ष्मया' इति विशेषणेऽवधेये। ज्ञानसदृशया बुद्ध्येत्यवगम्यताम्। ननु किमिदमुच्यते; बुद्धिरन्या, ज्ञानमन्यदिति? मा संरंभः। जानामि संरंभकारणम्। एतद्विचारः स्वावसरे विस्तरेण भविष्यति (बुद्धि.4)। एवञ्च येषां बुद्धिः स्वतन्त्रा संवृत्ता, त एव क्लिश्यन्ति। एतेषां कृत एव **विचारशास्त्रं** प्रवृत्तम्। अत एव 'वेदाख्यशास्त्राविरोधिना तर्केण' इत्यनेन **तर्कस्य मर्यादा** व्यधायि॥

ननु भोः! किमुच्यते, वेदाख्यशास्त्राविरोधिना तर्केणेति? तर्कानुगृहीतो हि वेदोऽपि प्रमाणमित्युच्यते भवतो विचारशास्त्रे। 'आर्षं धर्मोपदेशं च **वेदशास्त्रा**विरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥' (मनु.1-2-106) इति हि भवद्गुरोर्वचनम्। वेदशास्त्राविरोधिना=वेदाख्यशास्त्राविरोधिना। 'वेदाच्छास्त्रं परं नास्ति' इति हि भगवतो **बादरायणस्य(व्यासस्य)**वचः। एवञ्च 'वेदाविरोधिना तर्केण' इत्युक्तौ हि, वेदाविरोधी तर्कः प्रमाणम्, तर्कानुगुणो वेदश्च प्रमाणमित्यन्योन्याश्रयो दुष्परिहर इति चेत्, कुशलमतिस्त्वमभिनन्द्योऽसि। अत एवोक्तमस्माभिरुपक्रम एव— 'दुर्बलमतीनामेव तर्कापेक्षा' इति। ये तु सहजऋजुमतयः, तेषां बुद्धिर्न तर्कसहकारमीक्षते, स्वत एवार्थस्पर्शिनी तेषां बुद्धिः। तादृशा ऋषयः वेदार्थं स्वयं बुद्ध्वा, तदनुगुणं तर्कं प्रदर्शयन्ति दुर्बलबुद्धीनाम्=मन्दमतीनां बुद्धिदार्ढ्याय॥

ननु 'श्रोतव्यो मन्तव्यः' (बृ.4-4-5, 6-5-6) इति श्रुतिरेव युक्तिभिः प्रतिष्ठापनरूपस्य मननस्य कर्तव्यत्वं वदति। त्वया तु मन्दमतीनामेव युक्त्यन्वेषणमपेक्षितमित्युच्यते? कोऽयमाक्षेपः? किं श्रुतिस्सर्वज्ञान् ब्रह्मर्षीन् प्रति कथयति श्रवणमननादिकम्? वेदद्रष्टारः किल ब्रह्मर्षयः सनकादिवत्स्वयंप्राप्ततत्त्वज्ञानविज्ञानसंपदः लोकहिताय वेदाविर्भावस्थानान्यभूवन्। किं तेषामपि प्रत्यक्षीकृतसकलतत्त्वानां तर्कापेक्षां मन्यते भवान्? अतो विप्रतीपंगतमतीनां कृत एव तत्सर्वमुपदिश्यत इति सम्यगेवोक्तम्। अपि च वेदाख्यं **शास्त्र**मित्यर्थस्य कोऽर्थः? कः प्रश्नः? 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥' (श्लो.वा.) इत्युक्तमेव महामेधाविना। हन्त! विचारेऽपि छान्दसीं बुद्धिं न जहासि किल त्वम्! वेदान्तशास्त्रमिदम्। नात्र प्रवृत्तिनिवृत्त्योः प्रसक्तिर्लेशतोऽपि। तत्तु लक्षणम् कर्मपरभागे। ब्रह्मभागे वा शास्त्रपदार्थो विपरिवर्तेत किम्? पश्यतु भवान्। शासुधातुरेव शासनार्थकः। शासनं च 'कुरु' अथवा 'मा कुरु' इत्यन्यतररूपम्। अतस्सुष्ठूच्यते मेधाविना 'प्रवृत्तिर्वा' इत्यादि। कूपकूर्मोऽसि

[तत्त्वत्रयज्ञानस्वरूपम्]

**4. शिष्टा जीवेशतत्त्वप्रमितियुतपरोपासना मुक्तिहेतुः**
**शक्यस्तत्तत्प्रकारावगतिविरहिभिर्नैव याथात्म्यबोधः ।**

त्वम् । शासनं नाम किम्? उक्तं किल 'कुरु, मा कुरु' इत्यन्यतररूपमिति । अयि भोः! अयं शासनस्य प्रकारः । शासनस्य स्वरूपमुच्यताम् । वयमेव वा वदामः । अनतिक्रमणीयं शासनं **शास्त्र**मुच्यते । यथा राज्ञो विधिर्वा निषेधो वा । उभयमपि राज्ञोऽनतिक्रमणीयमेव । अन्ततः राज्ञा व्यवस्थापिता नियमाः शासनमित्युच्यन्ते । प्रकृते सृष्ट्यधीशेन क्लृप्ता एव नियमाः शास्त्रम् । तत्परा वेदाः परमं शास्त्रम् । तत् स्वतो जानन्ति महात्मानः। तादृशसृष्टिनियमानुगुणास्तर्का एव **सत्तर्काः**, विपरीतास्तु **दुस्तर्काः** । अतश्च अर्थानुगुणस्तर्कः प्रमाणानुग्राहकः, अर्थाननुगुणः बुद्ध्या कल्पितस्तु न तथेति रहस्यम् । वेदो हि ज्ञानराशिः, तत्प्रतिपादकः शब्दश्च । **ज्ञान**मेवार्थजन्यम्, अतस्तत्र तर्कापेक्षा न भवति, **बुद्धिस्तु** न नियमेनार्थजन्या, भ्रमादौ व्यभिचारात् । अतो बुद्धिजीविनां सहायार्थं सत्तर्कोऽपेक्ष्यते; न तु ज्ञानिनां कृते । अतोऽत्र कर्कशस्तर्कः—असत्तर्कः केवलबुद्ध्या कल्पितः **हैतुकानां** तर्कः । अत एव 'हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इति मनुः । अधिकं तु तत्तदवसरे भविष्यति ॥ ३ ॥

ननु परमात्मोपासनमेव मुक्तिहेतुः सिद्धान्तसंमतः । एवं सति तत्त्वमुक्ताकलापग्रन्थधारणाभिधानं कस्मै पुरुषार्थायाभिधीयत इत्यत्राह—**शिष्टेत्यादि** । **जीवेशतत्त्वप्रमितियुतपरोपासना**=जीवेश्वररूपयोः तत्त्वयोः **प्रमितिः**=याथात्म्यज्ञानम्, तया **युता**=सहिता जीवेश्वरयाथात्म्यज्ञानपूर्विकेति यावत् । तादृशी **परोपासना**=परमात्मोपासनमेव **मुक्तिहेतुः शिष्टा**=विहिता । 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे.1-6) इत्यादिश्रुतिविहिता ॥

ननु देहादिभ्यः पृथग्भूतमात्मानं प्रेरितारं परमात्मस्वरूपं मत्वेति 'अहं ब्रह्मास्मि' इति जीवब्रह्माभेदज्ञानं मुक्तिहेतुरुच्यते, न तत्त्वत्रयज्ञानमिति चेत्; तदा 'देहादिभ्यः' इत्यध्याहारक्लेशः, चकारवैयर्थ्यम्, प्रेरितृपदजुष्टादिपदानामस्वारस्यमित्याद्यनन्तदोषप्रसङ्गः । अतः आत्मानं प्रेरितारं च पृथङ्मत्वा, तेन जुष्टः, तत एवामृतत्वमेतीत्यर्थ एव स्वरसः । अपि च 'अहं ब्रह्मास्मि' इति ज्ञानमपि चिदचिदीश्वरतत्त्वज्ञानादेव भवेत्, न तु 'अहं ब्रह्मास्मि' इति वाक्यावृत्त्येत्यादिकमग्रे (जीव.29) विस्तरेण भविष्यति । **जीवे**ति प्रकृतेरप्युपलक्षकम् । तथा च जीवात्मनः **संसारहेतु**भूतयोः देहात्मभ्रमस्वतन्त्रात्मभ्रमयोर्मध्ये चिदचिच्छब्दवाच्यप्रकृतिपुरुषतत्त्वज्ञानात् देहात्मभ्रमः, जीवेश्वरतत्त्वज्ञानात् स्वतन्त्रात्मभ्रमश्च निवर्तत इति तत्त्वत्रयज्ञानमावश्यकमिति भावः । अचिद्भेदः यदि चिति जीवे ज्ञेयः, तदा अचिद्विशेषाणां स्वरूपस्वभावादिकमपि ज्ञेयमेव । अतश्च तत्त्वत्रयतत्त्वज्ञानं तत्तत्तत्त्वानां सामान्यरूपाणां विशेषरूपाणां च यथावस्थितस्वरूपस्वभावादिज्ञानमन्तरा न सम्भवेदिति सर्वाण्येतान्यवश्यज्ञेयानीति परावरतत्त्वविचारः मुमुक्षोरावश्यक एव ॥

यद्यपि चिदचिदीश्वररूपतत्त्वत्रयमेव एतत्संप्रदायसिद्धम्, अथापि तदनुबन्धितया सन्ति बहूनि तत्त्वानि । सर्वाणि तानि संकलय्य पञ्चधा विभज्य पञ्चसरत्वेन तेषां रूपणात् 'कलापः' इत्यभिहितम् ॥

**ते ते चार्था विदध्युः कुमतिविरचितास्तत्त्वबोधोपरोधं**
**तस्मान्निर्धूतसर्वप्रतिमतविमतिं साधये सर्वमर्थम् ।। ४ ।।**

**[तत्त्वज्ञानस्य महत्त्वम्]**

5. **आवापोद्वापतः स्युः कतिकति कविधीचित्रवत् तत्तदर्थे-**
**ष्वानन्त्यादस्तिनास्त्योरनवधिकुहनायुक्तिकान्ताः कृतान्ताः ।**

ननु परमात्मा एक एव किल परमं तत्त्वम् । एवं सति त्रीणि वा तत्त्वानि कथं भवेयुः? तदनुबन्धितया बहूनि वा तत्त्वानि कथं भवेयुरिति चेत्, तत् सत्यम् । परमं तु तत्त्वं एकमेव । अथापि 'परम'पदमेव ज्ञापयति अन्येषामपि अपरमतत्त्वानां सद्भावम् । अत एव श्रुतिरपि परमात्मानम् 'सत्यस्य सत्यम्' इति वदति । अतस्तत्त्वमनेकधा । तस्य भावः तत्त्वमिति हि व्युत्पत्तिः । तच्च तत्तद्वस्तुस्वरूपानुगुणं भिद्यते बहुधा । 'किं पुनस्तत्त्वम्? सतश्च सद्भावः असदश्चासद्भावः । सत् सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति, असच्च असदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति' (न्या.भा.1-1-1) इति हि **महानैय्यायिकः** । अस्तु नाम तत्त्वान्यनन्तानि तरतमभावापन्नानि । तेषां ज्ञानं क्वोपयुज्यत इति चेत्; सकलेतरविलक्षणतया हि गृह्यमाणं परमात्मतत्त्वं परमतत्त्वं भवेत् । अतः कर्तव्य एव यावच्छक्ति इतरतत्त्वानामपि विचारः । ये तु मृदुमतयस्तान् प्रत्यस्त्येवार्षवचनम् 'शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् । उपदेशाद्धरिं बुध्वा विरमेत्सर्वकर्मसु ।।' इति ।।

एतत्सर्वमभिप्रेत्याह—**शक्य** इत्यादि । **तत्तत्प्रकाराणाम्**=तत्तत्तत्त्वेषु विद्यमानानां प्रकारभेदादीनां **अवगतिः**=याथात्म्यज्ञानम्, **तद्विरहिभिः**=तद्रहितैः **याथात्म्यबोधः**=यथावस्थितवस्तुयाथात्म्यज्ञानम् **नैव शक्यः**=प्राप्तुं सर्वथा न शक्यः । अतः केवलतत्त्वत्रयज्ञानं निश्शङ्कपरोपासनासहकारि न भवितुमर्हति । अतः कूलंकषविचारः आवश्यकः । नन्वस्तु तत्त्वत्रयादिज्ञानमावश्यकम् । अथापि परमतखण्डनस्य का प्रसक्तिः? इत्यत्राह—**ते ते चार्था** इत्यादि । **कुमतिभिः**=कुयुक्तिमद्भिः कुतार्किकैः **विरचिताः**=कल्पिताः; **ते ते चार्थाः** इति कल्पनाबहुत्वदृष्ट्या, **तत्त्वबोधस्य उपरोधं विदध्युः** । **तस्मात् निर्धूतसर्वप्रतिमतविमतिं सर्वम् अर्थं साधये** । निर्धूताः सर्वाः प्रतिमतानां विमतयः=विरुद्धा मतयः, विविधा मंतयो वा यस्मादर्थात् सः। तादृशं सर्वमपि अर्थं साधये । सर्वेष्वपि प्रमेयेषु प्रतिपक्षिणां कुयुक्तिनिरसनपूर्वकं सिद्धान्तं सर्वं प्रदर्शयामीति भावः । अत एव ग्रन्थान्ते 'निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे' (अद्रव्य.135) इति एतद्ग्रन्थस्य सर्वार्थगर्भत्वं वक्ति ।। ४ ।।

ननु 'निर्धूतसर्वप्रतिमतविमतिम्' इति कथं सम्भवेत्? आगामिप्रतिपक्षाणां कुयुक्तयः कथमिदानीं निरस्येरन्? इति शङ्कायामाह—**आवापेत्यादि** । **आवापः**=विक्षेपः । **उद्वापः**=प्रक्षेपः । कस्यचिदंशस्य संयोजनम्, कस्यचिच्च वियोजनम् । एवं विलक्षणाः कृतान्ताः कति कति स्युः कामम्? तावता का वास्ति नूतनता? 'कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः' इति न्यायेन बुद्धेः विकल्पादेव कल्पनाभेदाः विविधाः भवन्तीत्यत्र निदर्शनम्—**कविधीचित्रवदिति** । 'वस्तुनि विकल्पायोगात्'इति न्याये जाग्रति कल्पनाभेदा वा

**अन्त्यं प्रत्यक् पराक् च प्रथममुभयधा तत्र जीवेशभेदात्**
**नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः ॥ ६ ॥**

जडद्रव्यम् **अव्यक्तकालौ=अव्यक्तम्**=प्रकृतिः, **कालश्च** इति द्वेधा विभक्तम्। **अन्त्यम्**=अजडं द्रव्यम् **प्रत्यक् पराक्** इति द्वेधा विभक्तम्। **प्रथमम्**=प्रत्यक् द्रव्यम् **जीवेशभेदात्**=जीवः ईश्वरः इति भेदात् **उभयथा विभक्तम्**। **अपरं**=पराक् द्रव्यम् **नित्या भूतिः मतिश्चेति**='नित्यविभूतिः' 'धर्मभूतज्ञानं' इति **द्वेधा विभक्तम्**। **इह** पराग्विषये, **केचित्** एकदेशिनः **आदिमाम्**='नित्या भूतिर्मतिश्चे'त्यत्र आदिमाम् नित्यविभूतिं **जडामाहुः**। वस्तुतस्तु सा अजडैव। एतत्तत्त्वं स्वावसरे (नायक.62) विस्तरेण भविष्यति ॥

ननु कोऽयं विभागः 'द्रव्यम्, अद्रव्यम्' इति। एवं सति 'घटः, घटभिन्नश्चेति पदार्थो द्विविधः' इत्यपि विभक्तुं शक्यम्। अतोऽकिञ्चित्करोऽयं विभागः (सा.वि.) इति चेत्, सहस्रसंवत्सरेभ्यः पूर्वतनां स्थितिं न जानन्नधिक्षिपसि त्वम्। देवेन स्वयं वृतैरप्याचार्यैरिभिर्न नूतनः कश्चित्सिद्धान्तः प्रवर्तितः, किन्तु भगवद्रामानुजसिद्धान्तस्यैव स्थूणानिखनवत्स्थापनं कृतम्। भगवद्रामानुजैरपि न नूतनस्सिद्धान्तः प्राकाशि। प्राचीनं वृत्तिकारमतमेव नाथमुन्यादिसंमतं पुनः स्थापितम्। हैतुकैः किल बौद्धैः, तदनुयायिभिः निर्विशेषवादिभिश्च 'व्यासो हासपदीकृतः परिहृतः प्राचेतसश्चेतसः क्षिप्तः केलिशुकः शुकस्स च मुधा बाधाय बोधायनः' (यति.65) इत्युक्तरीत्या श्रुतिस्मृतीतिहासपुराणादयो ग्रन्थाः भगवद्भक्तिवर्धकाः अर्थशून्याः कृताः। सविशेषवादस्थापनार्थमेवागतं शारीरकसूत्रप्रस्थानमपि निर्विशेषपरं व्याख्यातम्। परमात्मनः गुणविग्रह-विभूतयो निरस्ताः। निर्गुणत्वात् स्तुतिर्नष्टा, निराकारत्वात् ध्यानार्चनादिकं गतम्, निर्विशेषत्वात् भगवतो दयावात्सल्यादिकमुत्सारितम्। अतः जगदेव मार्गालाभात् दिग्भ्रान्तं यदाभूत्, तदा निर्विशेषवादप्रतिकोटितया सविशेषवादः सुदृढं स्थापनीयोऽभूत्। एतदर्थमेव श्रीभाष्यमवतारितं भगवद्रामानुजमुनिभिः। श्रीभाष्यस्य परमोद्देशः सविशेषवादस्थापनमेव। अत एव तैः स्वनिर्याणसमये श्रीभाष्याध्ययनाध्यापनमेव स्वशिष्यैः प्रथमकर्तव्यतयाऽऽदिष्टमिति तदीयचरित्रे प्राचीनैः स्पष्टमुदलेखि। एवं भगवद्रामानुजैस्सविशेषवादस्थापनेऽपि तत्समनन्तरकाल एव निस्तुलानामपौरुषेयवाणीनां बौद्धागमानां चाविशेषमेव पश्यता ज्ञानविज्ञानभेदमजानता बौद्धवासनावासितचेतसा केवलहैतुकेन **खण्डनकारेण** भस्मीकृते सर्वस्मिन्, वेदमार्ग एवार्थशून्ये सञ्जाते, केवलं श्रीभाष्यपठनेन को वा लाभः स्यात्! अतः प्रथमं भगवतः दयावात्सल्यादिकल्याणगुणेषु, ध्यानार्चन-प्रणामाद्याचारेषु, भगवद्दिव्यमङ्गलमूर्तिषु च यदि श्रद्धापूर्विका मतिरावश्यकी, तर्हि 'ब्रह्म न निर्विशेषम्, किन्तु सविशेषमेव' इति ब्रह्मणः सविशेषत्ववादः प्रथममाश्रयणीयः। विशेषाश्च ब्रह्मणि गुणविग्रहविभूतयः। ब्रह्मणः सगुणत्वेन स्तुतीनामर्थवत्ता, दिव्यमङ्गलविग्रहवत्त्वेन ध्यानार्चनप्रणामादीनामवकाशलाभः, नानाविधभगवद्वैभवानां परिचयेन 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः। सोऽविकम्प्येन योगेन युज्यते नात्र संशयः' ॥ (गी.10-7) इत्युक्तक्रमेण भक्तियोगस्य पोषणं च भवति। एतत्त्रयमन्तरा साधनादिकं कथं भवेन्मनुजानाम्। अतः ब्रह्मणस्सविशेषवादे श्रद्धा प्रथममास्थेया। तद्दृष्ट्या 'द्रव्यम्, द्रव्याश्रितं चेत्येवं तत्त्वं द्विविधम्' इति प्रदर्शनार्थमेवैवं विभागः कृतः। एवं विभागेन को लाभः? इति प्रश्नस्योत्तरं स्वयमेवाद्रव्यसरस्यारम्भे

[द्रव्यादीनां लक्षणानि]

7. **तत्र द्रव्यं दशावत् प्रकृतिरिह गुणैस्सत्त्वपूर्वैरुपेता**
**कालोऽब्दाद्याकृतिस्स्यादणुरवगतिमान् जीव ईशोऽन्य आत्मा।**

वक्ष्यत्याचार्यः। एवं 'द्रव्यम्, गुणश्च' इत्येव कुतो न विभक्तमिति चेत्, गुणपदं साङ्केतिकं जातं पण्डितानाम्। गुणगुणिनोरभेदवादोऽपि केषाञ्चित्। अतस्सर्वथा द्रव्यप्रतिकोटिभूततया सर्वसंग्रहार्थमेव विभागः प्रादर्शि। तत्राद्रव्यपदेन नञ्तत्पुरुषस्थलेऽभावबोधो न न्याय्यः, किन्तु भाव एव विलक्षणः कश्चित् तत्र विवक्षित इति सूचितम्। अतश्च द्रव्यं द्रव्याश्रितं (गुणः) चेति तत्त्वं द्विविधमित्यर्थः। तेन च बहुषु स्थलेषु बह्वीनां समस्यानां परिहारो भवतीति तत्तत्प्रकरणे व्यक्तीक्रियते। अतोऽयं विभागः सविशेषवादसूचकतयाऽऽदृत इति नाव्यावर्तक इत्यवधेयम्। अधिकमद्रव्यसरे॥

**अत्रेदमवधेयम्**—प्रत्यक्पराक्पदयोरर्थे अस्ति कश्चिद्विशेषः एतत्सिद्धान्ते। परमते प्रत्यगात्मा परमात्मैव। सिद्धान्ते तु जीवेश्वरभेदस्य, जीवानां परस्परं भेदस्य च सत्यत्वाङ्गीकारात् सर्वेऽप्यात्मानः स्वस्वदृष्ट्या प्रत्यगात्मान एव; परबुद्ध्या तु 'त्वम्' 'सः' इत्यपि व्यवहारात् आत्मा परागपि भवति। अत एवाहमर्थो जडाजडमिश्रित इत्यपि न। अयमर्थोऽग्रे (जीव.7) विस्तरेण विचार्यते। अत एव 'पराक्त्वम्' न जडत्वपर्यायम्। 'जडत्वम्' तु अस्वयंप्रकाशत्वम्। तच्च स्वयंप्रकाशे आत्मनि अन्यदृष्ट्यापि कथं स्यात्? अतः परत एव भासमानत्वं जडत्वम्। स्वतो भासमानत्वं अजडत्वम्। स्वतः स्वस्मै भासमानत्वं प्रत्यक्त्वम्। परस्मै स्वतः भासमानत्वं पराक्त्वम्, न तु परतो भासमानत्वम्। अथवा जडपर्यायः पराक्शब्दः अन्य एव, अजडसाधारणः पराक्शब्दः अन्य एव। अधिकं जीवसरे (7) भविष्यति॥ ६॥

उद्दिष्टानां लक्षणान्याह—**तत्रेत्यादिना**। **तत्र**=उद्दिष्टेषु तत्त्वेषु **दशावत् द्रव्यम्**। दशा नाम **अवस्था**। सा च आगन्तुकापृथक्सिद्धधर्मः। 'घटवत् भूतलम्' इत्यादौ घटादयो भूतलस्य धर्माः आगन्तुकाः। अतः घटोऽप्यवस्था स्याद्भूतलस्य। घटो हि द्रव्यम्=अवस्थावत्, न तु अवस्था। इदं तु अवस्थाया लक्षणम्, न त्ववस्थावतः। अतः तद्व्यावृत्त्यर्थम् अपृथक्सिद्धेति विशेषणम्। भूतलस्य घटादिः नापृथक्सिद्धधर्मः, किन्तु पृथक्सिद्धधर्म इति तद्व्यावृत्तिः। आगन्तुकेत्यनुपादाने, आत्मनः नित्यत्वादीनां अपृथक्सिद्धधर्मत्वादतिव्याप्तिः, अतः आगन्तुकेति। आत्मनः नित्यत्वं सहजम्, न त्वागन्तुकम्। अतः तद्व्यावृत्तिः। मृदः घटत्वादिधर्माः आगन्तुकाः अपृथक्सिद्धाश्च। तादृशधर्मवत्त्वात् मृदादीनां द्रव्यत्वम्। प्रकृतेर्महदादिरूपेण परिणामात्, महत्त्वादयो धर्माः प्रकृतेरागन्तुकाः अपृथक्सिद्धाश्च। तादृशधर्मवत्त्वात्प्रकृतौ लक्षणसमन्वयः। एवं कालस्य क्षणदिवसाद्यात्मना परिणामात् क्षणत्वादिधर्मानादाय, नित्यविभूतेः क्षेत्रारामाद्यात्मना परिणामात्, धर्मभूतज्ञानस्य च सुखादिरूपेण परिणामाच्च लक्षणसमन्वयः। जीवात्मपरमात्मनोस्तु स्वरूपपरिणामाभावेऽपि घटादिसंयोगानामागन्तुकत्वादपृथक्सिद्धत्वाच्च तादृशसंयोगमादाय लक्षणसमन्वयः। ननु विभोः परमात्मनो घटादिसंयोगस्यावर्जनीयत्वात् लक्षणसमन्वयेऽपि जीवस्याविभुत्वात् घटसंयोगः कथमिति चेत्, वाय्वादिसंयोगमादाय लक्षणसमन्वयसंभवात् न दोषः। एवं षण्णामपि द्रव्याणां द्रव्यत्वं ज्ञेयम्॥

**संप्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव**
**ज्ञातुर्ज्ञेयावभासो मतिरिति कथितं संग्रहाद् द्रव्यलक्ष्म ।। ७ ।।**

द्रव्यसामान्यलक्षणमुक्त्वा, विशेषलक्षणानि क्रमश आह—**प्रकृतिरित्यादि** । **इह**=द्रव्यवर्गे **सत्त्वपूर्वैः**=सत्त्वाद्यैः **गुणैः**=सत्त्वरजस्तमोभिः **उपेता**=युक्ता **प्रकृतिः** । सत्त्वादिगुणत्रयवत्त्वं प्रकृतेर्लक्षणम् । सांख्यास्तु त्रिगुणात्मिका प्रकृतिः, न त्रिगुणाश्रया, गुणगुणिनोरभेदादिति वदन्ति । सिद्धान्ते, गुणगुणिभावस्यानुपदमेव स्थाप्यमानत्वात् त्रिगुणाश्रया प्रकृतिः, न तु त्रिगुणात्मिकेति ज्ञेयम् । **कालः अब्दाद्याकृतिः स्यात्** । संवत्सरादिरूपपरिणामाश्रयः कालः । संवत्सरादिपरिणामाश्रयत्वं कालस्य लक्षणम् । **अणुः, अवगतिमान्**=चेतनः **जीवः** । अणुत्वे सति चेतनत्वं जीवस्य लक्षणम् । अणुत्वमात्रोक्तौ पृथिवीपरमाण्वादावतिव्याप्तिः । अतः चेतनत्वम् । चेतनत्वमात्रोक्तौ ईश्वरे अतिव्याप्तिः । अतः अणुत्वम् । ईश्वरस्य विभुत्वात् नातिव्याप्तिः। **अन्यः**=जीवभिन्नः **आत्मा** चेतनः **ईशः**=परमात्मा । जीवभिन्नत्वे सति चेतनत्वं परमात्मनो लक्षणम् । जीवभिन्नत्वमात्रोक्तौ घटादावतिव्याप्तिः; अतः चेतनत्वम् । चेतनत्वमात्रोक्तौ जीवात्मन्यतिव्याप्तिः; अतः जीवभिन्नत्वम् । **नित्यभूतिः त्रिगुणसमधिका, तथैव सत्त्वयुक्ता**=सत्त्वगुणयुक्ता **संप्रोक्ता** । त्रिगुणभिन्नत्वे सति सत्त्वगुणवत्त्वम् नित्यविभूतेर्लक्षणम् । वस्तुतस्तु तमश्शून्यत्वे सति सत्त्वगुणवत्त्वम्, रजश्शून्यत्वे सति सत्त्वगुणवत्त्वं वा नित्यविभूतेर्लक्षणम्, लाघवात् । प्रथमदलाभावे प्रकृतिद्रव्य एवातिव्याप्तिः, तत्र सत्त्वगुणस्य सत्त्वात् । द्वितीयदलाभावे आत्मनि अतिव्याप्तिः, आत्मनि रजस्तमोगुणयोरभावात् । सत्त्वगुणस्यापि तत्राभावात्, अतिव्याप्तेः परिहारः । **ज्ञातुः**=आत्मनः **ज्ञेयावभासः**=ज्ञेयवस्तुविषयकः प्रकाशः **मतिः**=धर्मभूतज्ञानम् । सकर्मकः सकर्तृकः प्रकाशः धर्मभूतज्ञानम् इत्यर्थः । ज्ञानं हि कंचित्पुरुषं प्रति किञ्चिदर्थप्रकाशरूपं सर्वानुभवसिद्धमिति तु सकर्मकावभासत्वम् धर्मभूतज्ञानस्य लक्षणम् । सकर्मकः= सविषयकः अवभासः=प्रकाशरूपः धर्मभूतज्ञानम् । सकर्मकत्वमात्रोक्तौ गमनादिक्रियाणामपि ग्रामादिकर्मकत्वात् गमनादिक्रियायामतिव्याप्तिः । अतः प्रकाशरूपत्वमुक्तम् । गमनादिक्रियाणां प्रकाशरूपत्वाभावान्नातिव्याप्तिः। प्रकाशरूपत्वमात्रोक्तौ, आत्मनि अतिव्याप्तिः, तस्य स्वप्रकाशत्वात् । अतः सकर्मकत्वमुक्तम् । आत्मा तु न सविषयकः पदार्थ इति नातिव्याप्तिः । आत्मनः निर्विषयत्वे कथं ज्ञानरूपत्वमिति चेत्, तस्य स्वमात्रविषयकत्वात् निर्विषयत्वं नास्ति । तर्हि तत्र सकर्मकत्वस्यापि सत्त्वात् कथमतिव्याप्तेः परिहार इति चेत्, विषयपदं हि लोके घटादावेव प्रसिद्धम् । तादृशविषयत्वम् आत्मनः नास्तीति नातिव्याप्तिः । नन्वेवमपि आत्मनो धर्माणां प्रत्यक्त्वादीनां आत्मनैव भानात् सकर्मकावभासत्वमात्मनोऽनिवार्यमिति चेत्, एतत्तत्त्वमग्रे (जीव.7) विचारयामः । **इति**=इत्येवं **संग्रहात्**=संक्षेपेण **द्रव्यलक्ष्म**=द्रव्याणां लक्षणम् **कथितम्** । **वस्तुतस्तु**—सत्त्वपूर्वैर्गुणैरुपेता प्रकृतिरित्युक्तम् । रजोगुणवत्त्वं तमोगुणवत्त्वम् वा एकैकमेव लक्षणं लघु वक्तुं शक्यम्, अन्यत्र कुत्राप्यतिप्रसक्तेरभावात् । एवं सति त्रिगुणवत्त्वं स्वरूपपरिचायकम् । एवं त्रिगुणसमधिका सत्त्वयुक्ता नित्यविभूतिरिति लक्षणमपि गौरवग्रस्तम् । रजश्शून्यत्वे सत्त्ववत्त्वम्, तमश्शून्यत्वे सति सत्त्ववत्त्वं वा लक्षणं पर्याप्तम् । सत्त्ववत्त्वमात्रोक्तौ प्रकृतावतिव्याप्तिरिति हि **त्रिगुणसमधिका** इत्युक्तम्; रजश्शून्यत्वस्य, तमश्शून्यत्वस्य वा विवक्षेणेनैवातिव्याप्तेः परिहारात् ।।

[गुणानां द्रव्यातिरिक्तत्वसमर्थनम्]

**8. एकार्थप्रत्यभिज्ञा भवति दृढतरा दर्शनस्पर्शनाभ्यां**
**संघातादेरयोगादवगमयति सा वस्तु रूपादितोऽन्यत्।**

वस्तुतस्तु—'विलक्षणसत्त्ववत्त्वम्' लक्षणमिति कथनमेव वरम्। नित्यविभूतिगतं सत्त्वं हि प्रकृतिगतसत्त्वापेक्षयात्यन्तविलक्षणम्। प्रकृतिर्हि जडा। तद्गतं सत्त्वमपि जडरूपमेव। नित्यविभूतिस्तु अजडा, स्वप्रकाशा। रजस्तमस्समानाधिकरणसत्त्वाद्विलक्षणमेव तदसमानाधिकरणं शुद्धसत्त्वम्। अतः विलक्षणसत्त्ववत्त्वमेव लघुलक्षणं वक्तुं शक्यम्। अधिकं नायकसरे। एवमन्यदपि ज्ञेयम्॥

ननु उक्तलक्षणेषु लेशतो गौरवसत्त्वेऽप्यतिव्याप्त्यादिदोषाणामभावात् लक्षणस्य लक्षणान्तरादूषकत्वन्यायेनोक्तेषु दोषः कः? इति चेत्; लक्षणस्येतरव्यावृत्त्यर्थतया लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वपक्षे व्यतिरेकव्याप्तिग्रहणासम्भवात्। अतः कथमुक्तानि लक्षणानि समर्थनीयानीत्यत्रोक्तम्—**संग्रहादिति**। अयं भावः—व्यवहारस्यापि लक्षणप्रयोजकत्वात्, यादृशरीत्या निर्वचने वस्तुस्वरूपपरिचयो भवेत् तादृशरीतेरेवादर्तव्यत्वेन, गुरुरूपस्यापि लक्षणत्वानपायादित्यादिविषयाणामपि वक्तव्यत्वदृष्ट्या **संग्रहात्** इत्युक्तम्। विस्तरस्तु अन्यत्र द्रष्टव्य इति भावः॥ ७॥

विभक्तानां द्रव्याणां लक्षणकथनानन्तरं क्रमशः परीक्षां प्रारिप्सुः, आदौ द्रव्याद्रव्यविभागस्यैवाप्रामाणिकतां वदतां बौद्धानां मतं निराकरोति—**एकार्थेत्यादिना**। बौद्धाः खलु वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदेन चतुर्विधाः। वैभाषिकाः जगत्सत्यतावादिनः। जगतः प्रत्यक्षत्वम्, क्षणिकत्वं चैतत्सम्मतम्। सौत्रान्तिकानामप्येतत्समानम्, किन्तु जगतोऽनुमेयत्वमिति विशेषः। उभयोरपि क्षणिकविज्ञानसन्ततिरूपः आन्तरः पदार्थोऽपि सम्मतः। आन्तरक्षणिकविज्ञानसन्ततिरेकैव सत्या, बाह्यं तु सर्वं मिथ्येति योगाचाराः। माध्यमिकास्तु सर्वशून्यवादिनः। तत्र प्रकृते, वैभाषिकाः वदन्ति—गन्धरसरूपस्पर्शस्वभावाः चतुर्विधाः परमाणव एव जगन्मूलभूताः। गन्धरसरूपस्पर्शस्वभावा पृथिवी, रसरूपस्पर्शस्वभावं जलम्, रूपस्पर्शस्वभावं तेजः, स्पर्शमात्रस्वभावो वायुः। आकाशस्तु पदार्थो नास्त्येव। गुणगुणिनोः 'सहोपलम्भनियमादभेदः' इति न्यायेन पृथगनुपलम्भात् गन्धाद्यात्मका एव ते, न तु गन्धाद्याश्रयाः। अधिकं तु तत्तदवसरे भविष्यति। ततश्च द्रव्यम्, अद्रव्यमिति विभाग एवानुपपन्न इति। तत्रोत्तरम्—**एकार्थप्रत्यभिज्ञेत्यादि**। **दर्शनस्पर्शनाभ्यां**=चक्षुरिन्द्रियत्वगिन्द्रियाभ्यां **दृढतरा**=अपलपितुमशक्या **एकार्थप्रत्यभिज्ञा**=एकपदार्थविषयिणी प्रत्यभिज्ञा **भवति** सर्वेषाम्। **सा**=प्रत्यभिज्ञा **सङ्घातादेः**=समुदायभावादेः तन्मते **अयोगात्** असम्भवात् **वस्तु**=घटादिद्रव्यं **रूपादितः** गुणेभ्यः **अन्यत्**=भिन्नं **अवगमयति**=प्रकटयति इति योजना॥

**अयं भावः**—दीपाद्यालोके घटादिकं चक्षुषा पश्यतामेव सताम्, अकस्माद्दीपादिनाशे तदेव घटादिकं त्वचा स्पृशताम् 'अनुपदं चक्षुषा दृष्टमेव घटं हस्तेन स्पृशामि' इत्यनुभवः सर्वेषामपि भवति। अनेन चक्षुरिन्द्रियत्वगिन्द्रिययोः उभयोरपि गोचरः कश्चन पदार्थः अनुभवेन सिद्धः अङ्गीकार्यः। चक्षुरिन्द्रियं हि रूपं गृह्णाति, न तु स्पर्शम्। त्वगिन्द्रियं हि स्पर्शं गृह्णाति, न तु रूपम्। 'दृष्टमेव स्पृशामि'इति

प्रत्यभिज्ञारूपः प्रत्ययस्तु उभयेन्द्रियग्राह्यं किञ्चिदस्तीति बोधयति । रूपं वा, स्पर्शो वा नोभयेन्द्रियग्राह्यः; अतः रूपस्पर्शयोराश्रयभूतः कश्चिदतिरिक्तः पदार्थः इन्द्रियद्वयग्राह्यः अङ्गीकरणीयः । स एव द्रव्यमित्युच्यते । अतश्च इन्द्रियद्वयग्राह्यं द्रव्यम्, रूपं स्पर्शश्चेति एकैकेन्द्रियग्राह्यो गुण इति द्रव्याद्रव्यविभागः दुरपह्नवः ॥

ननु वस्तूनां सर्वेषामपि क्षणिकत्वात्, आलोके दृष्टः पदार्थः अन्यः, अन्धकारे स्पृष्टश्च पदार्थः अन्य एवेति 'दृष्टमेव स्पृशामि' इति प्रत्यभिज्ञा भ्रान्तिरेवेति तेन न कस्यचिद्वस्तुनः सिद्धिः संभवतीति चेत्, तत्रोक्तं— **दृढतरा** इति । एकस्य ज्ञानस्य भ्रान्तित्वं हि, अनन्तरकाले बाधकप्रत्ययदर्शनेन वक्तव्यम् । यथा शुक्तिं दृष्ट्वा रजतमिति भ्रान्तौ जातायाम्, अनन्तरं 'नेदं रजतम्' इति बाधकप्रत्ययः दृश्यते । नैवमत्रानन्तरकाले कदाचित् कस्यचित् 'दृष्टमेव मया न स्पृश्यते' इति बाधकप्रत्ययो दृश्यते । अतः सा प्रतीतिः **दृढतरा**=अपलपितुमशक्या, न भ्रान्तिः । अनन्तरकाले बाधकप्रत्ययाभावेऽपि, प्रतीतेः भ्रान्तित्वे घटादीनामपि, मिथ्यात्वं स्यात् । वैभाषिकसौत्रान्तिकौ जगत्सत्यत्ववादिनौ । अतो नेष्टापत्तिसंभवः । न च बाधकप्रत्ययाभावेऽपि, कारणदोषवशात् जातं ज्ञानं भ्रान्तिरेव भवति । यथा कामिलादोषवशात् 'पीतः शङ्खः' इति ज्ञानजननानन्तरं 'शङ्खः न पीतः' इति बाधकज्ञानस्य न हि संभवः । तद्वदत्रापि स्यादिति चेत्, न ह्यत्र तथा दोषवशादिदं 'दृष्टमेव स्पृशामि' इति ज्ञानं जातम् । तथा कस्यापि कदापि तथा अनुभवाभावात् । अतश्च कारणदोषबाधकप्रत्यययोरभावात् इयं प्रत्यभिज्ञा न भ्रान्तिरितीदमपि **दृढतरा** इत्यनेनोक्तम् ॥

यद्यपि 'पीतःशङ्खः' इतिभ्रमस्थले 'शङ्खो न पीतः' इति बाधकज्ञानं पूर्वमेव वर्तते । अथापि दोषवशादेव 'पीतश्शङ्खः' इति प्रत्ययो भवति । अत एव किल प्रतिबध्यज्ञानं दोषविशेषाजन्यमिच्छन्ति विपश्चितः । अत एव 'एकश्चन्द्रः' इतिबाधकनिश्चये सत्यपि, अङ्गुल्यवष्टंभादिदोषेण 'द्वौ चन्द्रौ' इति प्रत्यक्षं वर्णयन्ति । अतो बाधकप्रत्ययाभावेऽपि, कारणदोषस्याप्यत्राभावात्, लौकिकबुद्धयः न भ्रमाः । ननु च 'प्रत्ययः सर्वोऽपि मिथ्या, प्रत्ययत्वात्, स्वाप्नप्रत्ययवत्' इत्याद्यनुमानानि तेऽवतारयन्त्येव किल! जानामि बृहस्पते! परिशीलयामस्सर्वं तत्तत्प्रकरणे । प्रत्यभिज्ञाप्रामाण्यमुत्तरत्र विस्तरेण (श्लोकः.26) स्थापयिष्यते ॥

ननु रूपस्य स्पर्शस्य वा प्रत्येकं एकैकेन्द्रियग्राह्यत्वेऽपि उभयोर्मेलनदशायां द्वयमपि द्वीन्द्रियग्राह्यं भवतु, प्रत्येकमसतो रक्तरूपविशेषस्य सुधाहरिद्रयोर्मिश्रणे दर्शनादित्यत्रोक्तम्— **संघातादेरयोगादिति** । **अयं भावः**— 'मिश्रणे' इत्यस्य कोऽर्थः? तत्तु वस्तुस्थैर्यवाद एव संभवेत् । वस्तूनां क्षणिकत्वे हि प्रत्येकं स्थितमेव वस्तु अन्यत्, मिलितकाले स्थितमेव अन्यत् । अतः कस्य मिश्रणावस्था वर्णितुं शक्या? न च वस्तूनां क्षणिकत्वेऽपि, अवयवातिरिक्तमवयविनमनङ्गीकुर्वतां सर्वेषां पूर्वक्षणे प्रत्येकता, अनन्तरक्षणे संघातभावः वर्तत एवेत्यवस्थाभेदः वर्तत एवेति चेत्, क्षणिकवादे हि संघातभावोऽपि दुरुपपादः । एककालावच्छेदेन, एकदेशावच्छेदेन वा मेलनं हि संघातः । कालस्त्वतिरिक्तः तन्मते नास्त्येव । देशः यद्यतिरिक्तः, तर्हि स एव 'द्रव्य'पदवाच्य इति सिद्ध्यति । अतस्तन्मते द्वयमप्यसंभवि । एतत्सर्वं **संघातादेरयोगात्** इत्यनेन सूच्यते ॥

**एकस्मिन् दूरतादेरविशदविशदप्रत्यभिज्ञादि तद्वत्**
**नैकत्वेऽप्यक्षभेदाद्भिदुरमिव, मिथस्संश्रयादिप्रसङ्गात् ॥ ८ ॥**

ननु यद्यपि देशो वा कालो वा अतिरिक्तः नाङ्गीक्रियते । अथापि संख्यादिगुणानामतिरिक्तानामनङ्गीकारेऽपि संख्यादिविलक्षणव्यवहारनिर्वाहवत् बुद्धिकल्पितकालादिकमादायैव विलक्षणव्यवहारो भवतु, का हानिरिति चेत्, एवमपि प्रकारान्तरेणातिरिक्तसिद्धिः इत्याह— **एकस्मिन्नित्यादि** । **एकस्मिन्नेव** वस्तुनि **दूरतादेः** हेतोः **अविशदविशदप्रत्यभिज्ञादि, तद्वत्**=पूर्ववत् रूपादितः वस्तु अन्यत् अवगमयतीत्यर्थः ॥

**अयं भावः**—दूरात् किञ्चित् वस्तु पश्यन् सर्वोऽपि, कदाचित् रूपादिकं स्पष्टतया द्रष्टुं न शक्नोति । कदाचिच्च रूपं पश्यन् आश्रयभूतं वस्तु किमिति स्पष्टं निश्चेतुं न शक्नोति । द्रव्यगुणयोरभेदे, द्रव्यग्रहणमेव गुणग्रहणम्, गुणग्रहणमेव द्रव्यग्रहणं भवेदिति, कथं निश्चेतुं न शक्येत? न च प्रथमं गृहीतं वस्तु अन्यदेव; समीपमुपसृप्य निर्णीयमानं वस्तु भिन्नमेवेति न विरोध इति वाच्यम्; 'तदेवेदम्' इति अबाधितप्रत्यभिज्ञाया दर्शनात् वस्तुभेदः न वक्तुं शक्यः । न वा प्रत्यभिज्ञायाः अप्रामाण्यशङ्का, उपर्येव दत्तोत्तरत्वात् । अतः द्रव्यगुणभेदः अनिवार्यः । तदिदं सूचितं—**एकस्मिन्, प्रत्यभिज्ञादि** इति पदाभ्याम् । **दूरतादेः** इत्यत्र आदिना आलोकन्यूनतादेः ग्रहणम् । **प्रत्यभिज्ञादि** इत्यत्र आदिना संशयविपर्यययोर्ग्रहणम् । ऊर्ध्वत्वादिसामान्याकारविशिष्टं वस्तु दूरात् पश्यताम् 'स्थाणुर्वा पुरुषो वा' इति संशयः सर्वेषामनुभवसिद्धः। तत्र ऊर्ध्वत्वादिसाधारणाकारस्य तदाश्रयद्रव्यस्य च ग्रहणे सत्यपि स्थाणुत्वपुरुषत्वान्यतराकारानिर्णयात्, धर्मस्य तदाश्रयधर्मिणश्च भेदः अनिवार्यः । एवं फालफल्यादिसामान्याकारग्रहणम्, शुक्तित्वादिविशेषाकाराग्रहणञ्च यदि न स्यात्, तर्हि शुक्तौ रजतभ्रमस्तत्र कथं स्यात् । अतः इदं सर्वं धर्मातिरिक्तं धर्मिणम्, गुणाद्यतिरिक्तं गुणिनमन्तरा सर्वथा न घटेतेति द्रव्यगुणविभागः अवर्जनीय इति । अविचारितरमणीयमेव विकल्पानां स्वरूपमित्यादिकमपि तदवसरे (बुद्धि.33) विचार्यते ॥

ननु वस्तुन एकत्वेऽपि ग्राहकस्येन्द्रियस्य भेदात् भेदव्यवहारः युज्येत । चक्षुषा ग्रहणे 'रूपम्' इति त्वचा ग्रहणे 'स्पर्शः' इति च एकमेव वस्तु व्यपदिश्यते इति न कोऽपि विरोध इति शङ्कते—**नैकत्व इत्यादि** । **एकत्वेपि**=वस्तुन एकत्वेऽपि **अक्षभेदात्**=ग्राहकेन्द्रियभेदात् **भिदुरमिव**=भिन्नमिव भवति, वस्तुतस्तु न भिन्नम्; इति चेत्; एतन्निराकरोति—**नेति** । हेतुमाह—**मिथःसंश्रयादिप्रसङ्गादिति** । अन्योन्याश्रयदोषप्रसङ्गादित्यर्थः । ग्राह्याणां रूपरसादीनां परस्परविलक्षणत्वाद्धि ग्राहकाणीन्द्रियाण्यपि परस्परं विलक्षणानि साध्यन्ते । 'रूपसाक्षात्कारः किञ्चित्करणकः कार्यत्वात्, घटादिवत्' इत्यादिरीत्या हि चक्षुरादीन्द्रियाणि विविच्यन्ते । एवं सति ग्राहकाणामिन्द्रियाणां भेदात् ग्राह्याणां रूपरसादिविषयाणां भेद इति यद्युच्यते, तर्हि ग्राह्यभेदसिद्धौ ग्राहकेन्द्रियभेदसिद्धिः, ग्राहकेन्द्रियभेदसिद्धौ ग्राह्यविषयभेदसिद्धिरिति अन्योन्याश्रयदोषः । मिथस्संश्रयादीत्यादिना चक्रकग्रहणम् । ग्राह्यग्राहकयोर्मध्ये ग्रहणस्याप्यन्तर्गतत्वात्, तस्य पृथक्करणे, ज्ञानभेदात् विषयभेदः, विषयभेदात् ग्राहकेन्द्रियभेदः, ग्राहकेन्द्रियभेदादेव ज्ञानभेदः इति त्रयाणां परस्पराश्रयणात् चक्रवत् भ्रमणात् 'चक्रक'संज्ञकः दोषः भवति ॥

ननु सृष्टिप्रक्रियायामिन्द्रियाणामाहङ्कारिकत्वेन, विषयानुरोधेनेन्द्रियकल्पनाया अभावात् कथमन्योन्याश्रय इति चेत्, तत्प्रक्रियायास्समष्टितत्त्वविषयकत्वेन, तत्र विचारस्यैवाप्रसक्तेः। किञ्च तद्दृष्ट्या विषयाणामपि प्रत्येकं सृष्ट्यभिधानादतिरिक्तविषयसिद्धिर्निष्प्रत्यूहैव ॥

**अपिंच**—यदि रूपरसयोः ग्राहकभेदाधीनो भेदः, शुक्लपीतादीनां रूपाणां चक्षुषैव ग्रहणात्, ग्राहकभेदाभावात्, शुक्लनीलपीतादिभेदः न भवेदिति, रूपं सर्वमप्येकमेव भवेत्। एवं रसादावप्यवान्तरभेदो न सिद्ध्येत्, ग्राहकभेदाभावादिति द्रव्यगुणभेदः निरुपाधिकः सिद्धः ॥

ननु पृथिव्यामाम्रपनसादौ पाकवशात् रूपादेः परिवृत्तिः सर्वानुभवसिद्धा। तत्र रूपादेः कार्यत्वमवर्जनीयम्। कार्यं चेदुपादानकारणमप्यावश्यकम्। रूपादिकं प्रति हि द्रव्यमेवोपादानकारणम्। एवञ्च गुणं प्रति द्रव्यस्योपादानत्वात्, उपादानोपादेययोरभेदस्य भवद्भिः स्थापनात् (श्लो.20) गुणगुणिनोरभेदस्सिद्ध एवेति कथं द्रव्यातिरिक्तगुणसिद्धिः? न च प्रामाणिकैरपि गुणगुणिव्यवहारकरणात्, अनन्तरकालबाधादर्शनाच्च तयोर्भेदसिद्धिरिति शङ्क्यम्; 'राहोश्शिरः' इतिवत् कल्पितेनापि भेदव्यवहारनिर्वाहात् इति चेत्, उपादानोपादेययोरभेदे, प्रत्यक्षबाधादर्शनेऽपि यौक्तिकबाधस्य सत्त्वात्। ननु प्रत्यक्षस्य प्रबलत्वात् कथं युक्त्या बाध इति चेत् 'सैवेयं दीपज्वाला' (58) इति ज्वालैक्यप्रत्यक्षस्यानुमानेन बाधस्य सर्वैरङ्गीकारात् ॥

न च ज्वालैक्यप्रत्यक्षं हि प्रत्यभिज्ञारूपम्। प्रत्यभिज्ञा च न केवलेन्द्रियजन्या। तत्तांशे संस्कारजन्यत्वात्। अत एवेदं ग्रहणस्मरणात्मकं ज्ञानं न सर्वांशे प्रमाणम्। एवं दुर्बलत्वादेवास्य युक्त्या बाधः, न तु केवलयुक्त्या प्रत्यक्षबाध इति वाच्यम्; केवलेन्द्रियजन्यस्य 'इदं रजतम्' इति प्रत्यक्षस्य 'इयं शुक्तिः' इति प्रत्यक्षेणैव बाधदर्शनात्, प्रत्यक्षस्यापि बाधो दृश्यत एव। न च प्राथमिकज्ञानस्य न केवलेन्द्रियजन्यत्वम्, रजतसन्निकर्षाभावात्। अतस्तस्य बाध्यत्वं युज्यत एवेति वाच्यम्, एवमप्युपादानोपादेययोरभेदस्य युक्तिसिद्धत्वेन, वासनाजन्यस्य गुणगुणिभेदव्यवहारस्यापि बाधात्, न गुणगुणिभेदसिद्धिरिति चेत् ॥

**अत्रोच्यते**—सर्वमिदमाकाशनर्तनमेव। गुणं प्रति द्रव्यस्योपादानत्वं हि वैशेषिकसमयसिद्धम्। सिद्धान्ते तु परिणामवादाङ्गीकारात् पूर्वावस्थाविशिष्टं द्रव्यमुत्तरावस्थाविशिष्टद्रव्यं प्रत्युपादानं भवति। रूपरसादयोऽप्यवस्थाविशेषा एव। पाकवशाद्रूपपरावृत्तिस्थलेऽपि पूर्वरूपविशिष्टं द्रव्यं रूपान्तरविशिष्टतया परिणमते। अतश्च तत्र केवलरूपादिपरावृत्तेरभावात्, तद्विशिष्टद्रव्यस्यैव तथा परिमाणात्, सर्वत्र द्रव्यमेवोपादानम्, उपादेयञ्चेति, उपादानोपादेययोरैक्येन द्रव्यैक्यस्यैव सिद्धिः, न गुणगुणिनोरैक्यसिद्धिः। किञ्चोपादानोपादेयभावस्यैव भेदप्रयुक्तत्वेन, द्रव्यगुणयोरभेदस्य नावकाशः इतरत्सर्वं तत्तदवसरे ॥

यत्तु—'सहोपलंभनियमात् अभेदो गुणतद्वतोः'। तथाहि—यदि भेदः, तर्हि कदाचिद्वा तदन्तरा तदुपलभ्येत। यथा घटमन्तरा पट उपलभ्यते। एवं कदाचिदपि गुणगुणिनोस्तथानुपलंभान्नास्ति भेद इति—तदपि सहत्वस्यैव भेदगर्भत्वात् स्ववचनविरुद्धम्। रूपमन्तरापि अन्धकारे घटोपलब्धिः त्वगिन्द्रियेण वर्तत एव। एवं स्पर्शमन्तरापि घटोपलब्धिरप्यालोके वर्तत एव। अतः गुणगुणिभावो दुरपह्नवः ॥

[धर्मधर्मिभावसमर्थनम्]

**9. धर्मो निर्धर्मकश्चेत् कथमिव भविता सोऽभिलापादियोग्यो**
**धर्मेणान्येन योगे स च भवति तथेत्यव्यवस्थेति चेन्न।**

ननु 'सहोपलंभनियमादभेदो नीलतद्धियोः'(प्र.वा.) इति बौद्धभिक्षोर्वाक्यानुकरणमेतत्; अस्तु, शब्दः किं तस्यैव स्वभूतः? 'सहोपलंभनियमादभेदो नीलशब्दयोः' इत्यपि पठ्यताम्। नीलः=अर्थः। एवञ्च ज्ञानार्थयोरिव, अर्थशब्दयोरभेदवादः सहोपलंभनियममूल एव। एवं गुणगुणिनोरप्यभेदवादे सहोपलंभ एव हेतुः। सिद्धिः किल स्थितिः प्रतिपत्तिश्च। एवमेव जीवब्रह्मणोरपि अविनाभावस्यांशांशिभावमूलकस्य सत्त्वात्, तत्रापि 'सहोपलंभनियमादभेदः परजीवयोः' इत्यपि पठ्यताम्। अथवा 'सहोपलंभनियमादभेदोऽयुतसिद्धयोः' इत्येव सर्वानुगतं वा पठ्यताम्। परीक्षकाणां मतिभेदमूलकमतभेदकारणेषु अविनाभावकृतः सहोपलंभनियमः प्रधानं निदानम्। परं तु सहत्वस्य भेदगर्भत्वान्न सहोपलंभनियमादभेदसिद्धिप्रत्याशा। ननु यदि शरीरशरीरिणोरविनाभावः, तर्हि 'नीलो घटः' इतिवत् जीवशरीरयोरपि समानाधिकरणप्रतीतिः स्यादिति चेत्, नेति क आह? 'अहं मनुष्यः' इत्यादिसामानाधिकरण्यप्रतीतिरस्त्येव किल! नन्वियमौपचारिकी प्रतीतिरिति चेत्, विचार्यत एतज्जीवसरे॥

ननु यदि जीवपरयोरविनाभावः; तर्हि, 'अहम्' इति स्वोपलंभे परोऽपि भायादिति चेत्; क एवमाह? 'न भाति' इति। 'अहम् ब्रह्मास्मि' इत्युपलंभ एव प्रमाणम्। अत एव 'अहं ब्रह्मास्मि' इत्यनुभवः अस्मिन्नेव मते स्वरसतः शरीरशरीरिभावकृतः संगच्छते, न तु स्वरूपैक्यवादिमते। अधिकं तु पश्चात्। 'नीलः' इति प्रतीतौ नैल्यमेव विषयः, न तु द्रव्यमिति वैभाषिकाः। द्रव्यमेव भासते, न गुण इति सांख्याः। नैल्यविशिष्टं द्रव्यं भासत इतीतरे। एतत्सर्वत्रापि गुणगुणिनोरविनाभाव एव मूलम्। एवमेव जीवपरमात्मनोरप्यविनाभावात् भेदाभेदादिवादास्संवृत्ताः। किञ्च यत्र सहैवोपलंभः, तत्राविनाभाव इत्येव व्याप्तिः; न तु यत्राविनाभावस्तत्र सहोपलंभ इति। सामग्रीसामर्थ्याधीनत्वादुपलंभस्य। गुरुत्वादिकं तु न कदापि द्रव्येण सहोपलभ्यते। एवं चक्षुषा घटादिग्रहणे रसादिकं तेन न हि गृह्येत। अतो नोक्तापत्तिः॥

एवञ्चाविनाभावस्थले सर्वत्राप्येवं विवादः सहज एव। तर्हि निर्णयः क इति चेत्; द्वयोस्सत्त्वे खल्वविनाभावः। अतोऽविनाभाव एव भेदं सहोपलंभं च प्रदर्शयतीति सिद्ध एव निर्णयः। वाचो विग्लापनमेवेतरत्सर्वम्। अत एव न वयं भेदाभेदवादिनः। एतदेव मनसि निधाय समन्वयाधिकरणे भगवद्भिर्भाष्यकारैर्विस्तरेणादूषि भेदाभेदवादः। एतेन एतत्सिद्धान्तसूक्ष्मस्वरूपापरिज्ञानमूलमेव 'परस्परविरुद्धभेदादिपक्षत्रयकक्षीकारेण क्षपणकपक्षनिक्षिप्तम्' इति **सर्वदर्शनसंग्रह**कारस्य शब्दालङ्कारवचनमलङ्कारमात्रं मन्तव्यम्। सर्वैरपि विवेकिभिः प्रामाणिकव्यवहाराणामवश्यनिर्वाह्यत्वे 'शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः?' (नाय.27)। अधिकं तत्रैव द्रष्टव्यम्॥ ८॥

एवं विशेषणविशेष्यभावादौ बौद्धैरापादितामन्यामप्यनुपपत्तिम् अनूद्य परिहरति—**धर्म** इत्यादिना। प्रथमं तन्मतमनुवदति, उत्तरार्धेण च तन्निराकरोति। सविशेषवादस्य धर्मधर्मिभावे पर्यवसानात्, धर्मधर्मिभावम्

**कश्चिद्धर्मोऽपि धर्मी स्फुटमतिमथने स्वान्यनिर्वाहकत्वं**
**तन्निष्कर्षप्रयोगेष्वपि भवति पुनस्तस्य धर्मी विशेषः ॥ ९ ॥**

एवं दूषयन्ति बौद्धाः, तदनुकारिणश्च। 'घटवत् भूतलम्' इत्यादिव्यवहारे घटभूतलयोः विशेषणविशेष्यभावस्य दर्शनेऽपि, अपृथक्सिद्धस्थले स वक्तुं न शक्यते, मतुप्प्रत्ययाभावात्। अतश्च पृथक्सिद्धविशेषणस्थलन्यायः अपृथक्सिद्धस्थले न वक्तुं शक्यः। अतश्च 'नीलो घटः' इत्यादावुभयोरभेद एव न्याय्यः। अन्यथा हि नील पदार्थः सविशेषणकः, उत निर्विशेषणकः? इति विकल्पेः, आद्ये तद्विशेषणं सविशेषणकम्, उत निर्विशेषणकम्? इति विकल्पे, आद्यपक्षेऽनवस्थाया दुर्वारत्वात्, द्वितीयपक्ष एवाश्रयणीयः। एवञ्च नीलादावप्येवमेवाङ्गीक्रियतामिति, सर्वं वस्तु विशेषणशून्यमेवेति निर्विशेषवस्तुसिद्धिः। एवं घटादावपि घटत्वादिकं नातिरिक्तम्। सुदूरं गत्वापि 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायेन निर्विशेषं वस्त्वङ्गीकर्तव्यं चेत्, घटादिरेव निर्विशेषोऽस्तु, लाघवात्। अन्यथा अनवस्थापत्तेः। एवञ्चाविनाभावस्थले सहोपलंभनियमादभेद एव न्याय्यः। भेदव्यवहारस्तु 'राहोश्शिरः' इतिवत् कल्पनारूप एव। तदेतत्संग्रहेणोक्तं पूर्वार्धेन। **धर्मः निधर्मकश्चेत्**=घटत्वरूपः धर्मः निर्धर्मकः, सधर्मको वा? यदि निर्धर्मकः, तर्हि सः घटत्वरूपधर्मः **अभिलापादियोग्यः कथमिव भविता?** निर्धर्मकस्य वस्तुनः शब्देन बोधनं सर्वथा न संभवति; प्रवृत्तिनिमित्तमन्तरा शब्दस्य प्रवृत्तिरेव न संभवति इति हि भवतां मतम्। यदि निर्धर्मको धर्मः शब्देनाभिलपितुं शक्यः; तर्हि तेनैव न्यायेन धर्मित्वेनाभिमतमपि वस्तु, निर्धर्मकमपि शब्दबोध्यं भवतु। अतश्च सर्वमपि निर्धर्मकं भवितुमर्हति। **अन्येन**=अतिरिक्तेन **धर्मेण योगे**=संबन्धे अङ्गीकृते, **स च**=सोऽपि धर्मः **तथा**=अन्येन धर्मेण युक्तः **भवति इति अव्यवस्था**=एवं रीत्या अव्यवस्था दुर्वारा। निर्धर्मकं किमपि न भवतीति, यदि तदर्थं धर्मः सधर्मकः इति उच्येत, तर्हि घटत्वरूपे धर्मे धर्मान्तरमङ्गीकर्तव्यम्। तदा तच्च धर्मान्तरं पुनः सधर्मकमेव वक्तव्यम्, इति धर्मकल्पनाया विश्रान्त्यभावात् अनवस्थाप्रसङ्गः। अतः धर्म-धर्मिभावः दुर्निरूपः। ततश्च गुणगुणिभावस्यापि तन्मूलकत्वात्, सोऽपि दुर्निरूप इति गुणातिरिक्तः गुणी नाम न कश्चिदस्ति **इति चेत्; न**=नायमाक्षेपो युक्तः। तर्हि उक्तदोषयोः कः समाधिः? इति चेदुच्यते— **कश्चिदित्यादि**। **धर्मोऽपि कश्चित्** घटत्वादिः **धर्मी**=सधर्मक एव, निर्धर्मकं वस्तु किञ्चिदपि नास्त्येव जगति। अतश्च 'धर्मो निर्धर्मकः, उत सधर्मकः?' इति विकल्पयोः, द्वितीय एव कल्पः सिद्धान्तः। तर्हि अनवस्थापरिहारः कथमित्यत्र **स्फुटमित्यादि**। **अतिमथने**=अतिसूक्ष्मपरिशीलने **स्वान्यनिर्वाह-कत्वम्**=स्वपरनिर्वाहकत्वं धर्माणाम् **स्फुटम्**=स्पष्टं ज्ञायेतैव ॥

**अयं भावः**—गवादिभिरपृथक्सिद्धः गोत्वादिरूपो धर्मः परस्परव्यावृत्तो यदि न स्यात्, तर्हि सर्ववस्तूनां साङ्कर्यप्रसङ्गः। अतस्सर्वमपि वस्तु सधर्मकमेव। तावता नानवस्थादिदोषप्रसङ्गः। गवाश्वादिव्यवहारे हि गोत्वाश्वत्वादिकं वस्तुविशेषणतया भासत एव। गोत्वाश्वत्वादिकं न केवलं गवाश्वादिमात्रव्यावर्तकम्, अपि तु स्वयमपि परस्परव्यावृत्तमेव स्वतः भासते; तयोः परस्परमव्यावृत्तत्वे, कथं ते गवाश्वादिव्यावर्तके भवेताम्। अत एव 'जात्यखण्डोपाध्यतिरिक्तानां किञ्चिद्रूपेणैव भानम्; जात्यखण्डोपाध्योस्तु स्वरूपत एव भानम्' इति

नियमः। अतः गवादिव्यवहारे गोत्वादिकं स्वयं अश्वत्वादिव्यावृत्तं सत्, गवादिकमपि अश्वादिभ्यो व्यावर्तयतीति न काचिदनुपपत्तिः। तदिदमुक्तम् **स्वान्यनिर्वाहकत्वम्** इत्यनेन। सर्वानुभवसिद्धस्य कथमपह्नव इति भावः॥

ननु! अस्त्विदं गोपदव्यवहारे कथमपि। 'गोत्वम्' इति व्यवहारे गोत्वपदं निर्धर्मबोधकम्, उत सधर्मबोधकम्? आद्ये निर्धर्मकवस्तुसिद्धिः। द्वितीये अनवस्था दुर्वारिति चेत्, तत्राह—**तन्निष्कर्षेत्यादि**। **तन्निष्कर्षप्रयोगः**=धर्ममात्रबोधकपदप्रयोगः। गोत्वमात्रबोधकं गोत्वादिपदं सर्वसंमतमेव। अतस्तादृशं पदं निष्कर्षपदमित्युच्यते। तत्रापि गोत्वादिकं सधर्मकमेव अर्थं बोधयति। कोऽसौ धर्म इति चेत्, गोत्वत्वमेव। तर्ह्यनवस्थाप्रसङ्ग इति चेत्; गोत्वत्वस्यातिरिक्तत्वे हि तथा। गोत्वत्वं हि गोत्वे विद्यमानो धर्मः। गोत्वं हि गवेतरासमवेतम्, निखिलगोसमवेतम्। अतश्च गोत्वत्वम्=गवेतरासमवेतत्वे सति निखिलगोसमवेतत्वम्। एवञ्च सकलगोव्यक्तय एव गोत्वे विशेषणतया भासन्ते। तथा च गोत्वे गवां विशेषणत्वम्, गोषु गोत्वं विशेषणम्। तत्तद्ज्ञानयोश्च भिन्नत्वान्नान्योन्याश्रयः। ततश्च गोत्वं गौर्वा सविशेषमेव वस्तु तत्तच्छब्दैरभिधीयत इति न कस्यापि शब्दस्य निर्विशेषवस्तुवाचकत्वमिति सिद्धम्। तदिदमुक्तम्—**तस्य धर्मी विशेष इति**। **तस्य**=गोत्वस्य **धर्मी**=गोव्यक्तिरेव **विशेषः**=विशेषणम्=व्यावर्तकधर्म इत्यर्थः॥

ननु गोव्यक्तिविषयकज्ञाने गोत्वं विशेषणतया भासते। तदानीं तु गोत्वं न गोत्वत्वरूपेण भासते, किन्तु स्वरूपत एवेति पूर्वोक्तन्यायेन युक्तम्। परन्तु गोत्वपदजन्यगोत्वविशेष्यकज्ञाने गवां विशेषणतया भानाङ्गीकारे गवां स्वरूपतो भानासंभवात्, तत्र गोषु गोत्वस्य भानमवशाद्वक्तव्यम्। ततश्च गोत्वं विशेष्यतयाऽपि भासते, विशेषणतावच्छेदकतयापि भासत इत्यपि वक्तव्यम्। एवञ्च अन्योन्याश्रयोऽवर्जनीय इति चेत्; उच्यते—गोव्यक्तीनामनन्तत्वेन भानासंभवेन तासां प्रातिस्विकतया भानानपेक्षणात्। एकगोव्यक्तिनिष्ठत्वेन गोत्वभानेनापि प्रतीतेर्निर्वाहात्। एकस्या व्यक्तेः तद्व्यक्तित्वेन भाने धर्मान्तरभानानपेक्षणात्। नानाव्यक्तिभान एवानुगमार्थं जात्यपेक्षा, न त्वेकव्यक्तिभाने। गोत्वत्वं गवेतरावृत्तित्वे सति निखिलगोवृत्तित्वरूपम्, नातिरिक्तमिति वस्तुस्वरूपविवरणमात्रम्, तत्तथैव भासत इति न नियमः। तेन नानवस्थादिः। किञ्च शास्त्रीयत्वादस्य व्यवहारस्याधेयतात्वादिवत् स्वरूपरूपत्वेऽपि न कश्चिद्दोषः॥

ननु 'गवि गोत्वं वर्तते' इति व्यवहारे गोत्वस्याधारतया गोर्भाने, तत्र गोः स्वरूपतो भानासंभवात्, गोत्वपुरस्कारेणैव भानं वक्तव्यम्। एवञ्चात्र गोत्ववति गोत्वभाने आधारकोटौ गोत्वभानात् स्वस्य स्वाधारत्वप्रसङ्गोऽनिवार्य एवेति चेत्, तत्र गोव्यक्तेः तद्व्यक्तित्वेनैव भानस्योक्तत्वात्, गोत्वपुरस्कारेणाभानान्नेयमापत्तिः। अत एव निष्कर्षकशब्दो द्विविधः—विशेषणमात्रबोधनतात्पर्यकः, विशेष्यमात्रबोधनतात्पर्यकश्चेति। अतः 'गोषु गोत्वं वर्तते' इति व्यवहारे गोव्यक्तीनां बहूनां भानात्, तद्व्यक्तित्वेन बहूनां भानासंभवात् गोत्वपुरस्कारेणैव भानमावश्यकमित्यपि न; व्यक्तीनामपि व्यक्तित्वेनैवानुगमात्तथा भानसंभवात्। अथवा गोपदवाच्यत्वेनैव गोव्यक्तीनां भानेनैव निर्वाहान्न दोषः। तथाच गोपदवाच्येषु गोत्वं वर्तत इत्यर्थः॥

**वस्तुतस्तु**—लोके हानोपादानादीनां सर्वेषां व्यवहाराणां व्यक्त्यालम्बनत्वेन, जातेः प्रत्येकं व्यवहारस्यादर्शनान्नेयमाशङ्का। अत एव भाषासु जातिवाचकपदमेव नास्ति। शास्त्रे तु एते सर्वे केवलं

शब्दविकल्पा एव, न वस्तुस्वरूपविषया इति मन्तव्यम्। यथा 'भूतले घटः' इत्युक्ते घटे आधेयता भासते। सा च घटरूपैव, अन्यथाऽनवस्थाप्रसङ्गः। एतत्परिहाराय तेषामतिरिक्तत्ववर्णनं तु वृश्चिकमुखाद्भीतस्य सर्पमुखपाततुल्यम्। एवं आधेयतायाः घटरूपत्वेऽपि 'घटे आधेयता वर्तते' इति व्यवहारे घटस्य आधेयतायाश्च केवलशब्दकृतो भेदो भासते। अत एतादृशा एव शब्दविकल्पमात्ररूपा इत्यवगन्तव्यम्॥

अत एव योगसूत्रे 'विकल्पः' न प्रमा, नापि भ्रमः, किन्तु तृतीयो राशिरित्युक्तम्। तर्हि बौद्धोक्तः चतुर्विधो विकल्पः किमङ्गीकार्य इति चेत्, न। अनुपदमेव गुणगुणिभावस्य स्थापितत्वात्। अनुभवं परित्यज्य शब्दमात्रवर्धने स्यादेवायं वादः। अत एव गोत्वपदस्योपरि पुनः भावप्रत्ययो न साधुरिति शाब्दिकाः। तावता गोत्वमेव नातिरिक्तमिति नार्थः, किन्तु गोत्वत्वं नातिरिक्तमित्येवार्थः। गोत्वपदमेव लोकव्यवहारे न प्रयुज्यते चेत्, गोत्वत्वपदं को वा प्रयुञ्जीत?॥

ननु यत्र कुत्रचिद्व्यवहारस्य शब्दविकल्परूपत्वे आवश्यके, सर्वत्राप्येते शब्दविकल्पा एव कुतो न स्युः इति चेत्, तदिदं विवाहप्रसङ्गे स्मशानकथाप्रसङ्गायितम्। 'आतिष्ठेममश्मानमश्मेव त्वम् स्थिरा भव' इति बृहस्पतौ मन्त्रं पठति, 'अरे! किमुच्यते? 'भस्मान्तं शरीरम्' इति किलोपनिषदिति यदि कश्चित्पठेच्चेत्, किं ब्रूमस्तम्? भगवानेक एव योगेश्वरः, तदनुग्रहलेशे सतीतरेऽपि। 'योगेश्वरः=कृत्स्नस्योच्चावचरूपेणावस्थितस्य चेतनाचेतनस्य च वस्तुनः ये ये स्वभावयोगाः, तेषां सर्वेषां योगानामीश्वरः' इति भगवद्भाष्यकाराः। यथेदं भस्मान्तं शरीरम्, तथैवेदममृतत्वस्यापि साधनम्। कस्यां कक्ष्यायां किमनुसन्धेयम्, कियदनुसन्धेयम्? इत्यज्ञानादेव समये च्यवन्ते प्रायो विपश्चितोऽपि। धर्मधर्मिभावादिविषयेऽपीदमवधेयम्। कुत्रचिद्गौणव्यवहारानुमतिमात्रेण मुख्यव्यवहार एव नास्तीति न ह्यर्थः॥

किञ्च लोकव्यवहारे हि प्रत्येकं जातिवाचकं पदमेव नास्ति। 'गोत्वम्' इत्यनेन समानार्थकं पदं किमस्ति भाषासु? 'विद्याविनयसंपन्नो ब्राह्मणः' 'गौःपूज्या' 'संपन्नो व्रीहिः' इत्यादौ हि गोव्रीहिब्राह्मणपदानि जातिप्रधानानीत्युच्यन्ते। गोत्वे अतिरिक्ता जातिर्नास्तीति कथनमात्रेण, 'गव्यपि गोत्वं मास्तु' इति भवेत्किम्? अत एव शास्त्रेऽपि 'गोत्वत्वं नाम गवेतरासमवेतत्वे सति निखिलगोसमवेतत्वम्' इत्यत्रैव विचारः समापनीयः। अत एव 'भावप्रत्ययान्तान्न भावप्रत्ययः' इति शाब्दिकाः। गोत्वत्वपदेऽपि 'गोत्वे यदि गोत्वत्वमतिरिक्तं स्यात्, तर्ह्यनवस्था स्यात्' इत्यारोपात्मकमेव वक्तव्यम्, न तु स्वरसतः। एवमेवाधेयताया आधेयस्वरूपत्वादिकमपि। 'भूतले धटः' इत्येतावानेव लोकव्यवहारः। 'घटः आधेयः' इत्यादिकं तु शास्त्र एव। 'आधेय'पदस्यैव लोकेऽप्रयोगे 'आधेयता' 'आधेयतात्वम्' इत्यादिपदानां किमु वक्तव्यम्॥

गुणगुणिभावाङ्गीकारे संबन्धानुपपत्तिभीत्या घटभूतलयोर्धर्मधर्मिभावोऽपि किमपलनीयः? 'घटवद्भूतलम्' इतिवत् 'नीलरूपवान् घटः' इत्यपि व्यवहारस्समानः। नीलादिपदान्येव गुणगुणिवाचकानि, न तु रूपादिपदानि। 'आनन्दी भवति' (तै.आ.) इति वेदेऽपि। संबन्धानुपपत्त्यादिकं तत्प्रकरणे परिह्रियते। न ह्येकत्र शब्दः अर्थशून्य इत्येतावता सर्वे शब्दा अर्थशून्याः स्युः, शून्यवादावतारात्॥

[आधाराधेयभावसमर्थनम्]

**10. तच्छून्ये तस्य वृत्तिः कथमिव घटते? तद्विशिष्टे तु वृत्तौ**
**स्वाधारत्वप्रसङ्गस्तत इव न गुणो नापि धर्मीत्ययुक्तम्।**
**तद्वृत्तिर्धर्मिमात्रे, न भवति तत एवास्य तच्छून्यताऽतो**
**नोक्तौ दोषौ, स्वधीवाग्विहतिरितरथा, तद्वदन्येऽपि जल्पाः ॥ १० ॥**

ननु तर्हि योगसूत्रे विकल्पानां प्रत्येकगणना कथमिति चेत्, योगसूत्रं स्वविषय एव पूर्णं प्रमाणम्, न तु प्रमाणप्रमेयादौ। एतच्छास्त्रस्य प्रत्येकं वर्तमानत्वात्। बौद्धानां वैदिकानां चात्यन्तं कलहे, तत्सन्धानार्थ-प्रयासफलैव तत्र विकल्पस्य प्रत्येकगणना। अतश्च 'आधेयतावान्' इत्यादिशास्त्रीयव्यवहाराणाम् आप्रमाणिक-त्वस्य परिहारार्थमेव तत्र सूत्रे विकल्पानां प्रत्येकताभिहिता। व्यासभाष्यं भवत्प्रतिकूलं दृश्यत इति चेत्, नायं व्यासः बादरायण इति सर्वसंमतम्। गुणगुणिभावविषयेऽस्त्येव विवादो बहोः कालात्पण्डितानाम्। लोकव्यवहारस्तु निराबाधस्तिष्ठत्येव, तन्मूलकश्शास्त्रव्यवहारोऽपि। चेतनचैतन्यपदयोः पर्यायत्वं को वा ब्रूयात्? ननु भवन्तोऽपि गुणविषये विप्रतिपद्यन्त एव किलेति चेत्, विप्रतिपत्तिर्वैशेषिकैस्सह गुणानां गणनादिविषये, न तु पदार्थविषये। अतस्सन्त्येव गुणा गुण्यतिरिक्ताः। अधिकमुपरिष्टात्॥ ९ ॥

धर्मधर्मिणोर्भेदे वृत्त्यनुपपत्तिमाशङ्क्य निराकरोति—**तच्छून्येत्यादिना**। 'नीलो घटः' इत्यादि-विशिष्टबुद्धौ, किं नैल्यशून्ये घटे नैल्यं वर्तते, उत नैल्यवति घटे नैल्यं वर्तत इत्युच्यते? आद्ये **तच्छून्ये**=नैल्यशून्ये घटे **तस्य वृत्तिः**=नैल्यस्य वृत्तिः **कथमिव घटते?** नैल्यशून्ये नैल्यं कथं स्यात्, व्याघातात्। द्वितीये, **तद्विशिष्टे वृत्तौ तु**=नैल्यविशिष्टे घटे नैल्यस्य वृत्तौ तु, **स्वाधारत्वप्रसङ्गः**=नैल्यस्य नैल्यमेव आधारः इति प्रसज्येत। एकस्यैवाधारत्वं आधेयत्वञ्च व्याहतमेव। 'नैल्यविशिष्टे नैल्यं वर्तते' इत्युच्यमान आधारकोटौ नैल्यं वर्तत इति, स्वस्य स्वयमेवाधारः इत्यायाति। **ततः**=तस्मात् कारणात् **इह**=अस्मिन् विचारे, **गुणः न, नापि धर्मी**=गुणी। किन्तु एकमेव वर्तत इति। तदेतन्निराकरोति—**इति अयुक्तम्**=असमञ्जसम्। एवमपलापः न युज्यते। कुत इत्यत्राह—**तद्वृत्तिः धर्मिमात्रे इति**। **तद्वृत्तिः**=धर्मस्य नैल्यादेः वर्तनम्, न नैल्यविशिष्टे, नापि नैल्यशून्ये, पूर्वोक्तदोषात्। किन्तु **धर्मिमात्रे**=घटमात्रे। **तत एव**=तस्मादेव हेतोः **अस्य**=धर्मिणः घटादेः **तच्छून्यता**=नैल्यादिशून्यता न **भवति**। **अतः उक्तौ दोषौ**=कल्पद्वयोक्तौ दोषौ **न भवतः**। **इतरथा**=एवमनङ्गीकारे **स्वधीवाग्विहतिः**=स्वधीविहतिः=स्वानुभवविरोधः, **स्ववाग्विहतिः**=स्ववचनविरोधश्च दुस्त्यजौ भवेताम्। धर्मधर्मिभावसामान्यस्यैव निराकरणे सर्वैर्मूकैरेव भवितव्यमिति प्रतिबन्दीमाह—**तद्वदिति**। **अन्ये**=वृत्त्यनुपपत्त्यादयः **जल्पाः अपि**=वाग्विलासा अपि **तद्वत्**=स्ववाग्विहत्यादिनिरस्ताः॥

**अयं भावः**—एवं धर्मधर्मिभावनिराकरणं किं अविनाभावस्थलमात्रे, उत सर्वत्रापि? अविना-भावस्थल एवेति चेत्; एवं विकल्पः विनाभावस्थलेऽपि हि समानः। तथाहि—'घटवत् भूतलम्' इत्यादावपि, घटशून्ये भूतले घटो वर्तते, उत घटविशिष्टे भूतले घटो वर्तते? इति प्रश्ने, पक्षद्वयमपि न

वक्तुं शक्यम्, दोषस्य स्पष्टत्वात्। किन्तु 'भूतले घटो वर्तते' इत्येवोच्यते; सर्वैरपि तथैव व्यवहारात्। भूतले वर्तमानं घटं पश्यन्, घटस्याधेयताम्, भूतलस्याधारतां च जानन् 'भूतले घटः' इति वा 'घटवद्भूतलम्' इति वा व्यवहरति। एवमेव 'नीलो घटः' इत्यत्रापि 'घटे नैल्यं वर्तते' इत्येतावन्मात्रकथने का हानिः?

ननु चक्षुषा घटं पश्यति, भूतलं च पश्यति। एतदुभयातिरिक्तं किमन्यत् पश्यति? एवं सति घटस्य आधेयताम्, भूतलस्य आधारताञ्च जानातीति कथमुच्यते? सुसूक्ष्मदर्शिनोऽपि घटे अतिरिक्तां आधेयतां वा, भूतले अतिरिक्तां अधिकरणतां वा न हि चक्षुषा पश्यामः इति चेत्; सत्यम्। सन्ति किल बहुविधा व्यवहाराः। ज्ञानं यादृशं, तादृशः खलु व्यवहारः। घटं पटं च एकस्मिन्नेव भूतले पश्यन् 'घटपटौ पश्यामि' इति व्यवहरति। घटं भूतलं च पश्यन् न तथा 'घटभूतले पश्यामि' इति व्यवहरति; किन्तु 'घटवद्भूतलं पश्यामि' इति, 'भूतले घटं पश्यामि' इति वा व्यवहरति। एतत् कुतः? इति वक्तव्यम्। 'घटपटौ पश्यामि' इत्यत्र घटपटयोस्संबन्धाग्रहणादेव, घटस्य पटस्य पृथङ्निर्देशः, द्विवचनञ्च। घटं भूतलं च पश्यंस्तु जनः घटभूतलातिरिक्तं तयोराधाराधेयभावमपि तत्र जानाति। अत एव 'घटवत्' इति संबन्धसूचकं मतुप्प्रत्यययुक्तं शब्दं व्यवहरति, 'भूतले' इति सप्तम्यन्तं वा व्यवहरति। तेन घटभूतलयोः संबन्धम्, तत्प्रयुक्तमाधाराधेयभावं च व्यवहरन्ति सर्वे। अतः 'घटविशिष्टं भूतलम्' इत्याकारिका विशिष्टबुद्धिः अपलपितुं न शक्या। तत्र यत् वैशिष्ट्यं स एव संबन्धः। एवमेव गुणविशिष्टद्रव्यविषयिणी बुद्धिरपि दुरपह्नवा॥

ननु तर्हि घटपदोपरि मतुप्प्रत्ययवत्, नीलपदोपरि 'नीलवान्' इति मतुप्प्रत्ययः स्यात्। 'नीलो घटः' इत्येव खलु सर्वोऽपि वक्ति। अतो नीलघटयोरभेद एव प्रामाणिक इति चेत्, न, नीलपदं हि नीलरूपवाचि। नीलरूपघटयोरभेदे 'नीलरूपो घटः' इति कुतो न प्रयुज्यते? 'नीलरूपवान् घटः' इत्येव सर्वैरुच्यते। अतोऽस्त्येव गुणवाचिपदात् मतुप्प्रत्ययः। अन्यथा नीलपदघटपदार्थयोरभेदे घट-कुंभादिपदवत् तयोः पर्यायता स्यात्। तर्हि नीलपदोपरि कुतो न मतुप्प्रत्यय इति चेत्; 'गुणवचनेभ्यो मतुबो लुगिष्टः' इत्यनुशासनमेव तत्र प्रमाणम्। अत एव 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' (अम.धी.17) इति कोशोऽपि। तावता 'नीलवान् घटः' इति व्यवहारो नाबद्धः। तर्हि 'रूप'पदात् कथं मतुप् इति चेत्, लोक एव प्रष्टव्यः। रूपादिशब्दाः शास्त्रे सामान्यशब्दाः, लोके तु सौन्दर्येऽर्थे प्रयुज्यन्ते। अतः रूपत्वव्याप्य-जातिमद्वाचकनीलादिपदानामेवायं न्याय इति लोकप्रयोगादेव निर्णेयम्। एवं रसादिवाचकपदेष्वपि द्रष्टव्यम्। गुणप्राधान्यविवक्षया वा 'तद्गुणसारत्वात्तद्व्यपदेशः' इति न्यायेन मतुप्प्रत्ययरहितः प्रयोगः। ननु नीलादिपदानां गुणिनि लक्षणैवेति चेत्, तावतापि गुणगुणिनोर्भेदस्यैव सिद्धेः। प्रयोगस्य तौल्ये, एकत्र शक्तिः, अन्यत्र लक्षणेत्यत्र नियामकाभावादुभयत्रापि शक्तेरेव न्याय्यत्वात्॥

ननु घटभूतलयोः आधाराधेयभावो नाम नातिरिक्तो धर्मः, किन्तु आधाराधेयरूप एव। एवञ्चाधार-तायाः आधेयतायाश्च भूतलघटरूपत्वेऽपि 'अधिकरणतावत् भूतलम्' 'आधेयतावान् घटः' इति मतुप्प्रत्ययो दृश्यते। तद्वदेव गुणगुणिनोरप्यभेदेऽपि मतुप्प्रत्ययः स्यात्। तावता कथमतिरिक्तत्वसिद्धिः? न चैतत्परिहारार्थम्

आधारत्वाधेयत्वादीनामतिरिक्तत्वमेवेति वाच्यम्; यदि घटे आधेयता अतिरिक्ता, तदा आधेयतायामाधेयतान्तराङ्गीकारप्रसङ्गादनवस्थापत्तिः । किञ्च तादृशाधेयतान्तरनिरूपिताधिकरणताया अपि आधेयतायामङ्गीकारप्रसङ्गः । एवमधिकरणतायामप्याधेयताङ्गीकार्या, अधिकरणापेक्षयाधिकरणताया आधेयत्वादिति बहुमुखानवस्थाप्रसङ्गः । अतः आधेयतादिकं नातिरिक्तमित्येव युक्तम् । एवञ्चानतिरिक्तत्वेऽपि मतुप्प्रत्ययः दृश्यत एवेति चेत्; तर्हि घटभूतलयोरपि भेदो न स्यात् । तत्रापि मतुप्प्रत्ययस्याभेदेऽप्युपपत्तेः । न चेष्टापत्तिः; को वानुन्मत्तः घटभूतलयोरैक्यं ब्रूयात् । न च पृथक्सिद्धिस्थले अस्तु सार्थको मतुप्प्रत्ययः । अपृथक्सिद्धिस्थले मास्तु इति शङ्क्यम्; 'नीलरूपवान् घटः' इति प्रयोगस्य दर्शितत्वात् । किञ्च 'दृष्टमेव स्पृशामि' इति प्रत्यभिज्ञया गुणगुणिनोर्भेदस्यैव प्रत्यक्षसिद्धतया मतुप्प्रत्ययः सार्थक एव । 'आधेयतावान् घटः' इत्यादिव्यवहारस्य केवलशास्त्रसंकेतपरिकल्पितत्वान्न तुल्यन्यायावतारः । 'प्रतीति-व्यवहाराभ्यां वस्तुसिद्धिः' इति हि न्यायः । 'आधेयतावान्' इत्यादिस्तु न प्रतीतिः, नापि व्यवहारः, किन्तु केवलं शास्त्रीयो निर्देशः । एतादृशशास्त्रीयव्यवहारनिर्वाहायैव कल्पितः शब्दविकल्पः । आधाराधेयभावस्तु घटभूतलयोरेव । अन्यथा 'भूतलवृत्तिघटो भूतले वर्तते, उत भूतलावृत्तिघटो भूतले वर्तते? नाद्यः,भूतलवृत्तिर्घटो भूतले पुनः कथं वर्तेत? न द्वितीयः, भूतलावृत्तिर्घटो भूतले कथं स्यात्?' इत्यपि स्यात् । अतः 'घटविशिष्टे' 'घटशून्ये' इत्यादि केवलशब्दाडम्बरमात्रम् । घटभूतलयोराधाराधेयभावः किल प्रत्यक्षदृष्टः। न तत्र शब्दापेक्षा । शब्दप्रयोगोऽपि 'भूतले घटः' इत्येतावानेवेत्यादिकं पूर्वमेवोक्तम् । अतो न वृत्त्यनुपपत्तिः॥

एवमपि पुनः पुनस्तदेवोच्यते चेत्, इदमत्र वक्तव्यम् । अस्मत्पक्षस्य दुष्टत्वं वदता, 'दुष्ट' शब्दस्य दोषविशिष्टवाचकत्वात्, अस्मत्पक्षः धर्मी, दोषः धर्मश्चाङ्गीकार्य एव । एवञ्च दोषविशिष्टे दोषो वर्तते, उत दोषशून्ये दोषो वर्तते? प्रथमपक्षे दोषस्य दोष एवाधारः स्यात् । स्वस्य स्वाधारत्वं तु व्याहतम्। द्वितीयपक्षे दोषशून्ये दोषः कथं स्यात्? एवं स्ववचनविरोधः स्वानुभवविरोधश्च दुष्परिहरः । अतो विशिष्टबुद्धिरनिवार्यैव ॥

ननु! न केवलं वृत्त्यनुपपत्तिः । किन्तु संबन्धानुपपत्तिरपि । घटः, भूतलं चेति द्वावपि स्वतन्त्रौ पदार्थौ । न हि तौ स्वस्वरूपे परस्परापेक्षौ । अतः स्वतन्त्रयोरुभयोर्वैशिष्ट्यप्रतीतिः केवलविकल्परूपा, न प्रामाणिकी । न च तयोरन्यः संयोगः संबन्धो वर्तते, तस्यापि संबन्धान्तरापेक्षायामनवस्थानात् । अनपेक्षायाञ्च, संयोगस्य संबन्धान्तराभावे, घटस्यापि मास्तु संबन्धः । न चेष्टापत्तिः, एवं तर्हि हिमवद्विन्ध्ययोरपि सम्बन्धव्यवहारः स्यात् । अतस्संबन्धव्यवहारः कल्पित एवेति विशिष्टबुद्धेः कल्पितत्त्वं दुर्वारम् । अतश्च धर्मधर्मिभावस्य कल्पितत्वात् द्रव्याद्रव्यविभागः न घटत एवेति चेत्, तत्राह— **तद्वदन्येऽपि जल्पा इति।** अन्ये जल्पा अपि=संबन्धानुपपत्त्यादिप्रलापा अपि तद्वत् वृत्त्यनुपपत्त्यादिवदेव स्वतो निरस्ताः । मत्तोन्मत्तप्रलापादीनां किमस्ति मौल्यम्! तदिदं 'जल्पाः' इति पदेन सूचितम् । घटभूतले न हिमवद्विन्ध्यतुल्ये । नापि तत्पदे घटकलशपदवत्पर्याये । नापि नैल्यघटवदविनाभूते । अतश्च घटभूतलपदयोः पर्यायत्वाभावात्, घटभूतलयोर्विनाभावात्, तयोराधाराधेयभावदर्शनाच्च तयोर्विशिष्टव्यवहारो विलक्षणो दुरपह्नवः । अतः

'घटभूतलयोः भिन्नपदार्थयोः, हिमवद्विन्ध्ययोरिव संबन्धो न भवति' इत्यादिकं हि जल्पमात्रम्। प्रत्यक्षसिद्धं संबन्धं अपलपतां वाद एव नास्त्यधिकारः। घटभूतलयोर्मध्येऽतिरिक्तः पदार्थः को वा भासते? तयोरन्तरालाभावमात्रं दृश्यते। अतो नैरन्तर्यमेव संयोगः, न त्वतिरिक्त इति चेत्, विचार्यत इदमद्रव्यसरे। एवञ्च धर्मधर्मिभावस्य दुरभिलपत्वात्, गुणगुणिभावः, आधाराधेयभावोऽपि दुरभिलपः॥

ननु यदि गुणगुणिनौ भिन्नौ स्याताम्, कदाचित् कस्यचित् घटभूतलवद्भिन्नावुपलभ्येताम्। तथानुपलंभान्नास्ति तयोर्भेद इति चेत्, किं गुणगुणिनावङ्गीकृत्येदमापाद्यते, उतानङ्गीकृत्य? आद्ये, कथमङ्गीकृत्य निराकरणं घटेत? द्वितीये तयोरनङ्गीकारादेव निराकरणं न घटेत। न हि शशशृङ्गं निराकर्तव्यम्, तस्याभावादेव। 'यदि तौ भिन्नौ स्याताम्, तर्हि प्रत्येकमप्युपलभ्येताम्' इति तर्क एवात्र विवक्षित इत्यपि न—भेदाभेदयोः उपलंभं प्रत्यप्रयोजकत्वेनोक्ततर्कस्य प्रतितर्कपराहतत्वात्। ततश्चोक्ततर्कस्य तर्काङ्गपञ्चकान्यतमहान्या दुस्तर्कत्वम्। तथा हि—'पर्वतो वह्निमान्, धूमात्' इति प्रयोगे; 'धूमोऽस्तु, वह्निर्मास्तु' इत्यप्रयोजकशङ्कायां कृतायां, 'यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यात्, इत्यनुकूलस्तर्कः अप्रयोजकशङ्कावारणाय कर्तव्यः। अस्य तर्कस्य अङ्गानि पञ्च—१. आपाद्यापादकयोर्व्याप्तिः। २. आपाद्यस्य विपर्यये पर्यवसानम्। ३. आपाद्यस्य परानिष्टत्वम्। ४. अस्य तर्कस्य परपक्षासाधकत्वम्। ५. अस्य तर्कस्य प्रतितर्केणापराहतिश्चेति॥

१. अत्र वह्न्यभावः आपादकः, धूमाभाव आपाद्यः। तयोः 'यत्र वह्न्यभावः तत्र धूमाभावः' इति व्याप्तिर्वर्तते। २. एवम् आपाद्यः धूमाभावः आरोपात्मकः, पर्वते धूमस्य दर्शनात्। अतः अत्र 'धूमाभावः स्यात्' इतिज्ञानं भ्रमरूपमेव वक्तव्यम्। ३. एवम् आपाद्यः धूमाभावः परानिष्टः। 'धूमोऽस्तु' इति तेन धूमस्याङ्गीकारात्। ४. एवम् उक्ततर्कस्य परपक्षासाधकत्वं स्पष्टमेव। ५. एवं अस्य तर्कस्य प्रतितर्केणापराहतिश्च। कथमिति चेत्, 'यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यात्' इत्यस्य 'यदि वह्न्यभावेऽपि धूमःस्यात्, तर्हि कारणमन्तरापि कार्यं स्यादिति अनुकूलतर्कस्यैव सत्त्वेन प्रतिकूलतर्कापराहतिवर्तते। अतोऽङ्गपञ्चकयुक्तत्वादयं **सत्तर्कः**। अत्रैव 'धूमवान् वह्नेः' इति प्रयोगे, 'वह्निरस्तु, धूमो मा अस्तु' इत्यप्रयोजकशङ्कायाम्, 'यदि धूमो न स्यात्, तर्हि वह्निरपि न स्यात्' इति तर्को वक्तव्यः। नैतत्संभवति, अयोगोलके धूमाभावेऽपि वह्नेर्दर्शनात्। अतोऽत्रापाद्यापादकयोर्व्याप्तिरेव नास्तीत्ययं **दुस्तर्कः**। एवञ्च प्रकृते, 'यदि गुणगुणिनौ भिन्नौ स्याताम्, तर्हि घटपटवत् प्रत्येकमप्युपलभ्येताम्' इति वा, 'सहैव नोपलभ्येताम्' इति वा वक्तुं न हि शक्यम्। पदार्थसामग्र्याः उपलंभसामग्र्याश्च परस्परं भिन्नत्वात्। न हि वस्तुगतभेदाभेदादिः उपलंभं प्रति साक्षात् परंपरया वा प्रयोजको भवति। गुणगुणिनोर्भेदे 'दृष्टमेव स्पृशामि' इति प्रत्यभिज्ञाया अनुपदं प्रदर्शितत्वात्। तथा च 'यत्र वस्तुनोर्भेदः, तत्र नास्ति सहोपलंभः' इति व्याप्त्यभावान्नायं सत्तर्कः॥

ननु न केवलं सहोपलंभः, हस्तिहस्तिपकयोरपि तत्सत्वात्। किन्तु नियतस्सहोपलंभ एवाभेदसाधकः। अस्ति च गुणगुणिनोस्तथात्वमिति चेत्, उपलंभसामग्र्याः वस्तुभेदाभेदसामग्र्याश्च भिन्नत्वेन सहोपलंभनियमस्यापि वस्त्वभेदाप्रयोजकत्वेन दत्तोत्तरत्वात्। वस्तुभेदस्य प्रमाणान्तरेण सिद्धेर्दर्शितत्वात्।

[चतुर्विंशतितत्त्वनिरूपणम्]

11. स्वच्छन्देनागमेन प्रकृतिमहदहंकारमात्राक्षसिद्धिः
नाध्यक्षेणाप्रतीतेः, न पुनरनुमया व्याप्तिलिङ्गाद्यसिद्धेः ।
सत्त्वाद्युन्मेषभिन्नान्महत इह तथा स्यादहङ्कारभेदः
प्राच्यादक्षाणि मात्राः प्रजनयति परो मध्यमस्तूभयार्थः ।। ११ ।।

सहोपलंभस्यान्यथासिद्धेश्च दर्शितत्वात् । सहत्वस्यैव भेदसाधकत्वेन वैपरित्याच्च । अतः द्रव्यगुणभेदः दुरभिलपः । ततश्च द्रव्याद्रव्यविभागोऽपि सुप्रतिष्ठित एव ॥

**अत्रेदमवधेयम्**—अर्थः, ज्ञानम्, शब्दव्यवहारः इति क्रमः । एतत्त्रयमपि पृथक्कृत्य, चिन्तयितुं क्षमाणां धीराणामेव विचारार्हता न्याय्या । ये तु दुर्बलबुद्धयो गाढं चिन्तयितुं न क्षमन्ते, केवलं शब्दमवलम्बते, ते कथमेवं चिन्तयितुं निर्धारयितुं वा प्रभवेयुः? प्रायः शब्दमात्रपरायणैः पण्डितैः तत्त्वं निर्णेतुं सर्वथा न शक्यम् । परं तु तादृशैर्ग्रन्थकारैस्सर्वमपि शास्त्रं कलुषीकृतं क्रमश इत्येव परमं सत्यम् । इदमेव वक्ति 'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरः' (पा.यो.सू.3-17) इति सूत्रम् । अत्र समासनियमानुसारेण शब्दपदस्यादौ निवेशः क्रमस्तु 'अर्थप्रत्ययशब्दानाम्' इत्येव ॥ १० ॥

एवं द्रव्याद्रव्यविभागं प्रसाध्य, द्रव्यनिरूपणमुपचिक्रमिषुः प्रथमं प्रकृतिद्रव्ये प्रमाणजिज्ञासायाम् सांख्यास्तु 'सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात्' इति अतीन्द्रियाणां सामान्यतोदृष्टानुमानात् प्रकृत्यादीनि साधयन्ति । सिद्धान्ते सामान्यतोदृष्टानुमानस्यानङ्गीकारात् श्रुत्यैवातीन्द्रियार्थसिद्धिमाह—**स्वच्छन्देनेत्यादिना** । **स्वच्छन्देन**=स्वतन्त्रेण=परमुखनिरीक्षणव्यसनरहितेन । प्रत्यक्षादीनामपि संभावितदोषत्वेन कदाचित् संवादाद्यपेक्षा अनिवार्या । वेदानां तु तादृशदोषगन्धस्याप्यसंभवेन वैदिकानां त एव परं प्रमाणम् । वेदानां वैशिष्ट्यादिकं बुद्धिसरे भविष्यति । अतः तादृशेन **आगमेन**=वेदेन, **प्रकृतिमहदहङ्कारमात्राक्षसिद्धिः** । **प्रकृतिः**=त्रिगुणाश्रयद्रव्यम् । **महत्**=महत्तत्त्वम् । **अहङ्कारः**=अहङ्काराख्यं अभिमानकारणभूतं तत्त्वम् । **मात्राणि**=तन्मात्राणि शब्दस्पर्शरूपरसगन्धरूपाणि पञ्च । यद्यपि पञ्चानामपि तन्मात्राणां नाहङ्कारिकत्वं सिद्धान्ते । वक्ष्यत्येतदनुपदमेव; तथाप्यत्र केवलप्रमाणमात्रप्रदर्शनम्, सृष्टिक्रमस्तु वक्ष्यमाणरीत्यैव । **अक्षाणि**=पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, मनश्चेत्येकादशेन्द्रियाणि । एतेषां **सिद्धिः** आगमेनेत्यन्वयः । कुत एवमित्यत्राह—**नाध्यक्षेणेत्यादि** । **अध्यक्षम्**=प्रत्यक्षाख्यं प्रमाणम्, तेन न सिद्धिः। कुतः—**अप्रतीतेः**=तेषामतीन्द्रियत्वेन प्रत्यक्षेण प्रतीतेरभावात् । **न पुनरनुमया**=वाक्यालङ्कारे, अप्यर्थे वा पुनः । नाप्यनुमानेन, तेषां सर्वथातीन्द्रियत्वेन व्याप्तिग्रहणादीनामसंभवात् । तदिदमुक्तम्—**व्याप्तीत्यादि**। **व्याप्तेः**, **लिङ्गस्य** च असिद्धेः । **आदिना** दृष्टान्तस्य संग्रहः । अनन्तरं सृष्टिक्रमं प्रतिपादयति—**सत्त्वादीत्यादिना** । **इह**=सृष्टिप्रक्रियायाम्, **सत्त्वादीनाम्**=सत्त्वरजस्तमसां गुणानां **उन्मेषैः**=उद्भवैः, बहुवचनं कार्यबहुत्वाभिप्रायेण; **भिन्नात् महतः**=महत्तत्त्वात्, **तथा**=सात्त्विकराजसतामसरूपेण यथा महत्तत्त्वं त्रिविधम्, तथैव **अहङ्कारभेदः**=अहङ्कारतत्त्वस्यापि भेदः **स्यात्** । आद्यं प्रकृतितत्त्वम् अव्यक्तम्, प्रधानम्,

**[भूतानां सृष्टौ विशेषः]**

**12. तत्राहङ्कारजन्यं भजति परिणतैः शब्दमात्रं नभस्त्वं**
**तद्वत् तन्मात्रपूर्वास्तदुपरि मरुदग्न्यम्बुभूम्यः क्रमात् स्युः ।**

त्रिगुणम् इत्यादिशब्दैः अभिधीयते । तस्मात् त्रयोविंशतितत्त्वानि व्यक्ततत्त्वानि क्रमशः भवन्ति । तेषु आद्यं व्यक्ततत्त्वम् 'महत्' इत्युच्यते । व्यक्ततत्त्वेषु अस्यैव इतरापेक्षया महत्त्वात् 'महत्' इत्युच्यते । इदमेव सांख्यैः बुद्धितत्त्वमित्युच्यते । एतत्तत्त्वं बुद्धिसरे भविष्यति । तस्मात् अहङ्काराख्यं तत्त्वम् उद्भवति । महतत्त्वस्यापि गुणत्रयवत्त्वात् सात्त्विकमहत्, राजसमहत्, तामसमहत् इति महत्तत्त्वं त्रिविधं भवति । यद्यपि त्रिष्वप्येतेषु त्रयो गुणाः सन्त्येव; तथापि उद्भवाभिभववशात् तथा व्यवह्रियन्ते । सत्त्वस्योन्मेषे रजस्तमसोः अभिभवात् सात्त्विकमहत् भवति । एवमेव रजस उन्मेषे राजसमहत्, तमस उन्मषे तामसमहच्च भवति । 'रजस्तमश्चाभिभूय सत्त्वं भवति' इत्यादौ गीतायाम् (14-10) अस्य विस्तरो द्रष्टव्यः । एवं त्रिविधात् महतः, तथैव सात्त्विकराजसतामसभेदेन अहङ्कारोऽपि त्रिविधः । सात्त्विकाहङ्कारस्य 'वैकारिकः' इति, राजसस्य 'तैजसः' इति, तामसस्य 'भूतादिः' इति च संज्ञा । तेषु **प्राच्यात्**=आद्यात् सात्त्विकाहङ्कारात् **अक्षाणि**=इन्द्रियाणि पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि, मनश्च इत्येकादशेन्द्रियाणि भवन्ति । एतेषां स्वरूपादिकं अग्रे भविष्यति । **परः**=तामसाहङ्कारः **मात्राः**= तन्मात्राः **प्रजनयति** । 'तन्मात्राणि' इति नपुंसकान्तोऽप्यस्ति शब्दः; मात्रतन्मात्रशब्दौ पारिभाषिकौ, पर्यायौ, द्रव्यवाचिनौ च । अत एव 'तदेव तन्मात्रम्' इति न विग्रहः । **मध्यमस्तु**=राजसाहङ्कारस्तु **उभयार्थः**=सात्त्विकतामसाहङ्कारयोः सहकारी, न कस्यापि जनकः । एतत्सूचनार्थमेव 'तु' शब्दः ॥

ननु पञ्चभूतव्यतिरिक्तानामेकोनविंशतितत्त्वानां आगमेनैव सिद्धिरिति कथनात्, पञ्चभूतानां प्रत्यक्षेणैव सिद्धिरित्युक्तमिव भवति । अत एवाग्रे 'प्रत्यक्षं व्योम' (श्लो.42) इत्याद्यप्युच्यते । परंतु तत्र पञ्चीकृतानां व्यष्टिरूपत्वात् प्रत्यक्षत्वमुपपद्यते। प्रकृत्यादयस्तु समष्टिरूपाः। तदन्तर्गतानां भूतानामपि समष्टिरूपत्वेन तेषां न प्रत्यक्षेण सिद्धिः । अतः कथमत्र निर्वाह इति चेत्, प्रकृतिमहदित्यादिकं भूतानामप्युपलक्षकम् । ततश्च समष्टिभूतानामपि श्रुत्यैव सिद्धिः । प्रत्यक्षत्वं तु व्यष्टीकृतस्याकाशस्योच्यत इति न विरोधः । अथवा अत्रोक्तास्सर्वेऽपि व्यष्ट्यन्तर्गता एव। व्यष्टावपि प्रकृत्यादयस्सन्त्येव। तेषां व्यष्टावप्यतीन्द्रियत्वात् श्रुत्यैव सिद्धिः। भूतानां तु प्रत्यक्षेण सिद्धिरिति न विरोधः। नैतावता समष्टिसृष्टिरेव नास्तीत्यर्थः, श्रुतिसिद्धत्वात्तस्याः॥ ११॥

अनन्तरसृष्टिप्रक्रियायां सांख्यप्रक्रियातो विशेषं निरूपयति—**तत्रेत्यादिना**। **तत्र**=एतादृशसृष्टि-प्रक्रियायाम्। **अहङ्कारजन्यम्**=तामसाहङ्कारात् उत्पन्नम् **शब्दमात्रम्**=शब्दतन्मात्रम्, **परिणतैः**=परिणाम-विशेषैः, **नभस्त्वम्**=आकाशत्वं **भजति**=प्राप्नोति। **तदुपरि**=तदनन्तरम् **तद्वत्**=तथैव, **तन्मात्रपूर्वाः**= तत्तत्तन्मात्रपूर्वाः, **मरुदग्न्यम्बुभूम्यः**=वायुः, तेजः, जलम्, पृथिवी इति चत्वारि भूतानि **क्रमात्**=क्रमशः **स्युः**=भवेयुः । सांख्याः तामसाहङ्कारात् युगपदेव पञ्चतन्मात्राणि भवन्ति, पञ्चतन्मात्रेभ्यः पञ्चभूतानि च युगपदेव भवन्ति । 'अष्टौ प्रकृतयषोडशविकाराः' इत्याथर्वणश्रुत्यैतत्सिद्ध्यति । अन्यथा हि द्वादश

**सूक्ष्मस्थूलस्वभावस्वगुणसमुदयप्रक्रियातारतम्यात्**
**तन्मात्राभूतभेदः कललदधिनयात् कल्पितस्तत्त्वविद्भिः ॥ १२ ॥**

प्रकृतयः, द्वादश विकारा भवेयुरित्याहुः । सिद्धान्ते तु तच्छ्रुतेस्तात्पर्यस्यान्यथा विवरणात् (श्लो.15) 'आत्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' (तै.उ.आ.1) इति श्रुतौ क्रमदर्शनाच्च, आकाशे शब्द एक एव गुणः, तज्जन्ये वायौ शब्दः स्पर्शश्चेति द्वौ गुणौ, तज्जन्ये अग्नौ=तेजसि शब्दः, स्पर्शः, रूपम् इति त्रयो गुणाः, तज्जन्ये जले शब्दः, स्पर्शः, रूपम्, रसः इति चत्वारो गुणाः, तज्जन्यायां पृथिव्यां शब्दः, स्पर्शः, रूपम्, रसः, गन्धश्चेति पञ्च गुणाः, इति एकैकगुणवृद्धेः दर्शनाच्च, तामसाहङ्कारात् शब्दतन्मात्रम्, तस्मादाकाशः, तस्मात् स्पर्शतन्मात्रम् तस्माद्वायुः, तस्मात् रूपतन्मात्रम्, तस्मात्तेजः, तस्मात् रसतन्मात्रम्, तस्मादापः, तस्मात् गन्धतन्मात्रम्, तस्मात् पृथिवी इत्येवं क्रमशः पञ्चतन्मात्राणि, पञ्चभूतानि च भवन्ति । यद्यपि उक्ततैत्तिरीयश्रुतौ तन्मात्राणां सृष्टिर्नोक्ता, अथापि सुबालश्रुत्यनुसारात्सिद्धिः, सृष्टिप्रक्रियायाः 'धाता यथापूर्वमकल्पयत्' (तै.महा.) इत्येकरूपंत्वात् ॥

तन्मात्राणां स्वरूपं विवृणोति—**सूक्ष्मेत्यादि । सूक्ष्मस्थूलस्वभावेति** बहुव्रीहिः । 'सूक्ष्मस्थूलाः स्वभावाः येषाम्' इति, **'सूक्ष्मस्थूलस्वभावाः स्वगुणाः येषाम्'** इति पुनरपि बहुव्रीहिः । सूक्ष्मस्थूलस्वभावविशिष्टशब्दादिगुणवन्ति तन्मात्राणि भूतानि च । तेषां **समुदयः**=उत्पत्तिः=परिणामः । तस्य **प्रक्रियायाः तारतम्यात् तन्मात्राभूतभेदः**=तन्मात्राणां भूतानाञ्च परस्परं भेदः **कललदधिनयात्, तत्त्वविद्भिः कल्पितः** इत्यर्थः ॥

सूक्ष्मस्थूलस्वभावस्वगुणपदयोः कर्मधारयो न । तदा हि गुणानां प्रत्येकमुत्पत्तिः नैयायिकवत् स्यात् । तदानीं हि गुणानां द्रव्याणां च उपादानोपादेयभावः स्यात् । इत्यादिकं पूर्वमेव(पु.16) प्रपञ्चितम् । अतः गुणानामुदयो नाम गुणविशिष्टद्रव्याणामेव परिणामः । अतोऽत्र बहुव्रीहिसमासः । तदा तु सूक्ष्मस्थूलस्वभावस्वगुणानि तन्मात्राणि भूतानि च । तेषां समुदयः—उत्पत्तिरित्यर्थः । तन्मात्राण्यपि द्रव्यविशेषाण्येव, न केवलगुणरूपाणि । केवलगुणस्य प्रत्येकमवस्थानासंभवात् । तन्मात्राणां प्रकृतिद्रव्यपरिणामरूपत्वेन द्रव्यत्वानपायात् । अतश्च द्रव्याणामेव तेन तेन रूपेण परिणामात्, द्रव्याणामेवोपादानोपादेयभावः, न तु द्रव्यगुणयोरिति न काप्यनुपपत्तिः । तथा च सूक्ष्मस्वभावयुक्तगुणविशिष्टद्रव्यस्य स्थूलस्वभावयुक्तगुणविशिष्टद्रव्यात्मना परिणाम एव तत्तदुत्पत्तिपदार्थः । यथा—तामसाहङ्कारः सूक्ष्मशब्दविशिष्टशब्दतन्मात्ररूपेण परिणमते । तच्च शब्दतन्मात्रं स्थूलशब्दविशिष्टाकाशात्मना परिणमते । तच्चाकाशं सूक्ष्मशब्दस्पर्शविशिष्टस्पर्शतन्मात्ररूपेण परिणमते । तच्च स्पर्शतन्मात्रं स्थूलशब्दस्पर्शविशिष्टवायुरूपेण परिणमते । स च वायुः सूक्ष्मशब्दस्पर्शरूपविशिष्टरूपतन्मात्ररूपेण परिणमते । तच्च रूपतन्मात्रं स्थूलशब्दस्पर्शरूपविशिष्टतेजोरूपेण परिणमते । तच्च तेजः सूक्ष्मशब्दस्पर्शरूपरसविशिष्टरसतन्मात्ररूपेण परिणमते । तच्च रसतन्मात्रं स्थूलशब्दस्पर्शरूपरसविशिष्टजलरूपेण परिणमते । तच्च जलं सूक्ष्मशब्दस्पर्शरूपरसगन्धविशिष्टगन्धतन्मात्ररूपेण परिणमते । तच्च गन्धतन्मात्रं स्थूलशब्दस्पर्शरूपरसगन्धविशिष्टपृथिवीरूपेण

परिणमते इति पञ्चतन्मात्राणां पञ्चभूतानां च उत्पत्तिप्रकारः। तन्मात्राणां भूतानां च **कललदधिनी** दृष्टान्तौ। पयस आतञ्चनेन दधिरूपेण परिणामः न हि हठादेकक्षणे भवति। किन्तु क्रमश एव। तत्र मध्यावस्था कललमित्युच्यते। तच्च न पयः, नापि दधि। अत एव नाम्लम्, नापि मधुरम्। तद्वदेव पूर्वभूतोत्तरभूतयोः मध्ये **तन्मात्रात्मक**परिणामो भवतीत्यर्थः। एवं सत्येव एकैकगुणवृद्ध्यादिकं संगच्छेत॥

ननु 'प्रकृतिरिह गुणैस्सत्त्वपूर्वैरुपेता' इति प्रकृतिमात्रस्य लक्षणमुक्तम्। महदादीनां लक्षणानि कुतो नोक्तानि? इति चेत्, चिदचिदीश्वररूपतत्त्वत्रयज्ञानमेव मुक्तिहेतुरिति सिद्धान्तः इत्यादिकं हि पूर्वमेवोक्तम् (श्लो.4)। तत्राचित्पदेन हि त्रिगुणप्रकृतिरेवोच्यते। इतराणि तत्त्वानि तद्विकृतिरूपाणि। अतो मूलप्रकृतेः प्राधान्यात्तल्लक्षणमुक्तम्। इतरेषां तु सुगमं लक्षणम्। एतद्विस्तरः **न्यायसिद्धाञ्जने** द्रष्टव्यः। तत्संगृह्य किञ्चिदुच्यते—प्रकृतेः अव्यक्तत्वात्, तदधिकृत्य वचोऽप्यधिकं न प्रसरेत्। महदादयस्तु व्यक्तानीत्युच्यन्ते। यद्यपि महदादितत्त्वान्यपि नास्माकं व्यक्तानि। हन्त! किं बहुना? पृथिव्यादितत्त्वान्यपि नास्माकं कदापि व्यक्तानि। पञ्चीकृतं स्थूलं भौतिकं पृथिव्यादिकमस्मच्चक्षुर्गोचरः। अतोऽस्मद्दृष्ट्या तत्त्वं सर्वमव्यक्तमेव। अथापि प्रकृतिव्यतिरिक्तानि तत्त्वानि कदाचित्केषाञ्चिद्योगिनां भवेयुर्गोचराः। प्रकृतिस्तु तेषामप्यगोचरः। अतस्तत्तत्त्वमव्यक्तमुच्यते। अत एवोच्यते भगवता 'दैवी ह्येषा **गुणमयी** मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥' (गी.7-14) इति। सांख्यैः या प्रकृतिरित्युच्यते, सैव वेदान्तिभिः मायेत्युच्यते। जीवावारकत्वात् तम इति, सृष्ट्यादिकार्ये भगवतः प्रधानोपकरणत्वात् प्रधानमिति चोच्यते। एवमक्षरशब्दोऽपि प्रकृतौ प्रयुज्यते—'अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते' (सु.2) इत्यादौ प्रकृतेर्विलक्षणावस्था निर्दिश्यन्ते। प्रकृतेर्निरन्वयविनाशाभावात् कुत्रचित्तथा कथनम्। एतस्मादव्यक्तात्प्रथमं महत्तत्त्वं भवति। महदादीनां तत्त्वान्तरत्वमपि सुबालादिसिद्धम्। व्यक्ततत्त्वेष्वस्य बृहत्त्वात् महदित्युच्यत इत्यनुपदमेवोक्तम्। एवं जीवबुद्धिप्रसरहेतुत्वात् बुद्धितत्त्वमितीदमुच्यते॥

यद्यपि सिद्धान्ते 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्'(न्या.सू.1-1-15) इति गौतमीयप्रक्रियया बुद्धिः, ज्ञानमिति पर्याये पदे। अथाप्यस्ति विशेषोऽत्रेत्यग्रिमसरे विव्रियते। 'बुद्धिरव्यक्तमेव च' (गी.13-5) इतिवचनमत्र स्मर्तव्यम्। शिष्टं पश्चात्॥

महत्तत्त्वात् अहंकाराख्यं तत्त्वं प्रभवति। एवञ्च महत्तत्त्वाव्यवहितोत्तरावस्थावद्द्रव्यत्वमेवास्य लक्षणम्। अथवा 'अहम्' इति जीवस्य प्रत्यक्त्वव्यवहारादिहेतुत्वात् तत्तत्त्वमहंकारपदेनोच्यते। ततश्च प्रत्यक्त्वव्यवहारकारणं तत्त्वमहंकारः। यद्यपि प्रत्यक्त्वमात्मनोऽसाधारणधर्मः; अथापि तद्व्यवहारस्तु संसारिजीवानां शरीरसंबन्धादेव। शरीरं च चतुर्विंशतितत्त्वोपादानकमिति अग्रे (श्लो.23) प्रदर्श्यते। अतश्शरीरेऽहंकारतत्त्वस्य सत्त्वात् स्थूलाहंबुद्धिः, अहंभावना चात्मनः अहमिति अभिमानपूर्वकव्यवहारहेतुर्भवतीति अहंव्यवहारहेतुरहंकारः। अधिकमग्रे (जीव.2, 4) भविष्यति। त्रिगुणद्रव्योपादानकत्वात् सर्वाण्यप्युत्तरतत्त्वानि त्रिगुणवन्त्येव। अत एव सात्त्विकादिभेदवन्ति। अत एवाहंकारोऽपि सात्त्विकराजसतामसभेदेन त्रिविधः। सात्त्विकाहंकारादेकादशेन्द्रियाणि, तामसाहंकाराच्छब्दतन्मात्रं च जायते। राजसस्तूभयानुग्राहकः॥

सात्त्विकाहंकारात् घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पञ्चज्ञानेन्द्रियाणि, गन्धरसरूपस्पर्शशब्दग्राहकाणि, वाक्पाणिपादपायूपस्थानि, वचनादानगमनोत्सर्गानन्दविशेषकरणानि पञ्चकर्मेन्द्रियाणि, मनश्चेत्येकादशेन्द्रियाणि भवन्ति । एवञ्च सात्त्विकाहङ्काराव्यवहितोपादानकत्वमिन्द्रियाणां सामान्यलक्षणम् । विशेषलक्षणान्यप्येवं सुज्ञेयानि । मनसस्तु सुखादि साक्षात्कारहेतुत्वं लक्षणम् । सुखादीनां स्वप्रकाशत्वेऽपि, तदनुसन्धानहेतुत्वं मनस एव । व्यवसायानुव्यवसाययोर्भेदविचारस्तदवसरे भविष्यति ॥

केचित्तु—सात्त्विकाहंकारात् पञ्चज्ञानेन्द्रियाणि मनश्च, राजसाहंकारात्पञ्चकर्मेन्द्रियाणि च भवन्तीत्याहुः । अपरे तु मनः उभयात्मकमुभयविधेन्द्रियप्रेरकत्वादित्याहुः ॥

तामसाहंकारजन्यत्वे सति आकाशोपादानत्वं शब्दतन्मात्रस्य लक्षणम् । शब्दतन्मात्रादाकाशम् । आकाशात् स्पर्शतन्मात्रम् । तस्मात् वायुः । ततोरूपतन्मात्रम् । ततः तेजः । तेजसः रसतन्मात्रम्, तत आपः । ततो गन्धतन्मात्रम् । ततः पृथिवी ॥

सांख्यास्तु भूतादेः पञ्चतन्मात्राणि साक्षादेव जायन्ते । तेभ्यः पञ्च भूतानि युगपद्भवन्तीत्याहुः । परं त्वेवं सति पञ्चभूतेष्वेकोत्तरगुणवृद्धिरहेतुका स्यादिति पूर्वोक्तक्रमणैवोत्पत्तिर्युक्ता ॥

केचित्तु, भूतादेः पञ्चतन्मात्राणि युगपदेव भवन्ति । शब्दतन्मात्रसहकृतादहंकारात् आकाशः । स्पर्शतन्मात्रसहकृतादाकाशाद्वायुः । रूपतन्मात्रसहकृतवायोस्तेजः । रसतन्मात्रसहकृतात्तेजसः आपः । गन्ध तन्मात्रसहकृताभ्यः अद्भ्यः पृथिवीति वदन्ति । तन्मात्रतत्त्वानां संज्ञाबलात्, गुणानां क्रमवृद्धेः 'आकाशाद्वायुः' इत्यादिश्रुतेश्चैवमिति भावः । अत्यन्तातीन्द्रियेषु व्यर्थचर्चया न कोऽपि लाभ इत्यवधेयम् ॥

एवञ्च आकाशाव्यवहितपूर्वोपादानत्वं शब्दतन्मात्रलक्षणम् । शब्दतन्मात्राव्यवहितोपादानकत्वम्, शब्दवत्त्वे सति स्पर्शशून्यत्वं वा आकाशस्य लक्षणम् । स्पर्शतन्मात्राव्यवहितोपादानकत्वम्, रूपशून्यत्वे सति स्पर्शवत्त्वं वा वायोर्लक्षणम् । रूपतन्मात्राव्यवहितोपादानकत्वम्, रसशून्यत्वे सति रूपवत्त्वं वा तेजसो लक्षणम् । रसतन्मात्राव्यवहितोपादानकत्वम्, गन्धशून्यत्वे सति रसवत्त्वं वा अपां लक्षणम् । एवं गन्धतन्मात्राव्यवहितोपादानकत्वम्, गन्धवत्त्वं वा पृथिव्या लक्षणम् । एवम् **'वैशेषिकशैलीमनुसृत्य यथावस्थितपदार्थस्वरूपं ह्यत्र विशोध्यते'** (न्या.सि.बुद्धि.) इत्याचार्यसार्वभौमैरेवाभिधानात् तत्तन्त्रोक्तान्यपि लक्षणानि यथार्हं शोधयित्वा योजनीयानि । तस्य तन्त्रस्य तदर्थमेवावतारादिति ॥

ननु तन्मात्राभूतयोर्विशेषः कः? न च 'कललदधिनयात्' इत्यादिना तेषां स्वरूपं प्रदर्शितमेवेति वाच्यम्; भूतापेक्षयातिरिक्तत्वमात्रमेव तेन सिद्धम्, स्वरूपपरिचये तद्दृष्टान्तमपर्याप्तम् । 'तन्मात्र'पददर्शने हि तस्य द्रव्यत्वं नास्तीति प्रतीयते । 'तदेव=तन्मात्रम्' इति किल पदनिष्पत्तिः । तथा च 'रूपतन्मात्रम्' 'रसतन्मात्रम्' इत्यादिपदैः गुणमात्रमुच्यते, न तु तदाश्रयद्रव्यम् । यथा आकाशवाय्वोर्मध्ये 'स्पर्शतन्मात्रं' परिगण्यते । एवञ्चाकाशाख्यद्रव्यस्य स्पर्शगुणमिश्रणे वायुर्भवतीति सिद्ध्यति । एवं वायुना साकं रूपस्य मिश्रणे तेजो भवति । एवञ्च तत्र तत्र मध्येऽधिकस्य तत्तद्गुणस्य मिश्रणमात्रादेवानन्तराणि एकैकगुणवृद्ध्या

पञ्चभूतानि भवन्ति । द्रव्यं तु सिद्धमेव गुणाश्रयतया । अतस्तन्मात्राणि स्वतन्त्रगुणरूपाणि कुतो न स्युरित्यादिपरीक्षाया अवश्यकर्तव्यत्वे, तत्परित्यागः कुत इति चेत्; व्यस्मार्षीः किल त्वमाचार्यसार्वभौमस्य हितवचनम् 'चिन्तासाफल्यमान्द्यात् श्रमबहुलतया तत्र तज्ज्ञैरुदासि' (श्लो.15) इति । तन्मात्राणि हि श्रुतिमात्रसिद्धानीति प्रमाणं प्रदर्शितम् । प्रमेयस्वरूपमपि 'कललदधिनयात्' इत्यनेनैव प्रदर्शितम् ॥

ननु भोः दृष्टान्तः प्रदर्शितः । दार्ष्टान्तिकं कीदृशमुच्यताम्? दृष्टा किल क्षीरदध्योर्मध्ये काचनावस्था द्रव्यस्य । तदात्वे हि तत् न क्षीरम्, नापि दधि । दधिवत् कठिनमपि न, क्षीरवत् द्रवमपि न तत् । एवं क्षीरवन्मधुरमपि न, दधिवदाम्लमपि न । तद्वदेव शब्दतन्मात्रं नाहंकारः, नाप्याकाशः; किन्तु मध्ये 'कलल'वत् विलक्षणं द्रव्यमित्यादिकं स्वयमेव ज्ञातुं शक्यम् । अयि भोः! अत्रैव वर्तते क्लेशः। 'शब्दतन्मात्रम्' इत्युच्यते, अथापि 'द्रव्यम्' इत्युच्यते । कथमिदं विरुद्धार्थकं पदद्वयमेकत्र प्रयुज्यते? आः! अवगतं तव संशयबीजम् । 'मात्र'पदश्रवणाधीनसांकर्यप्रयुक्तस्संशयः। मात्रपदव्युत्पत्तिः भवद्बुद्धिस्था, न त्वाचार्योक्ता । संज्ञा हि सा 'तन्मात्रम्' इति । गुणगुणिभावस्य समर्थनादेव (श्लो.4) शब्दोऽन्यः, शब्दतन्मात्रं चान्यदिति सुगमम् । किं सुगमम्? अद्रव्यं पृथग्विभक्तमेव किल! अतस्तन्मात्रं स्वतन्त्रं वस्तु सिद्धमेवेति चेत्; अत्रैवास्ति क्लेशः, भोः! अद्रव्यं पृथग्विभक्तम्, अत एव स्वतन्त्रमिति तु किञ्चिदिव सत्यम् । अद्रव्यं हि द्रव्यादपृथग्भूतम्, द्रव्यभिन्नम्, द्रव्यपरतन्त्रञ्च । अयि भोः! किमिदमुच्यते? अपृथग्भूतम्, भिन्नमिति च । पृथक्त्वं हि भेदसाधकम् । अपृथक् चेत् कथं भिन्नं भवेत्? सत्यम्, पृथक्त्वं हि भेदापादकमेव । परं तु पृथक्त्वमन्यत्, पृथक्सिद्धिश्चान्या । गुणो हि गुणिनो भिन्नोऽपि, पृथक् न वर्तते । अथापि तयोर्भेद अवर्जनीय इति पूर्वमेव (श्लो.8) प्रसाधितम् । एवञ्च तन्मात्रपदस्य संज्ञात्वेन रूढत्वात्, यौगिकत्वाभावात् तन्मात्रपदं न गुणवाचि, किन्तु द्रव्यवाच्येव । अत एव 'रूपतन्मात्रम्' 'रसतन्मात्रम्' इत्याद्युच्यते, न तु 'रूपमात्रम्' 'रसमात्रम्' इत्यादि । अत एव 'तन्मात्रा' इति स्त्रीलिङ्गान्तमपि पदं दृश्यते । 'तन्मात्राभूतभेदः'(श्लो.12) इति प्रयोगोऽपि द्रष्टव्यः । किमधिकोक्त्या! प्रकृतेरेवैते परिणामविशेषाः। प्रकृतिस्तु द्रव्यमेव, उपादानत्वात् । तत्परिणामभूतानि तन्मात्राण्यपि द्रव्याण्येव नूनम् । शिष्टमद्रव्यसरे ॥

नन्वनुपदमेव (श्लो.16) तत्तच्छब्दवाच्यस्य परमात्मन एव सर्वत्रोपादानत्वसमर्थनात् तदिदं लक्षणं परमात्मन्यतिव्याप्तं स्यात्किलेति चेत्, कोऽयं महान् विषयः? **'वेदान्ताध्ययनेन हि व्युत्पत्तिः पूर्यते'** इति न्यायेन तथा वक्तव्यम्, न तु लोकदृष्ट्या । अथवा त्रिगुणत्वे सतीति विशेष्यताम् ॥

सति प्रमेयनिष्कर्षे शब्दोऽपि स्ववशे यदि । शब्दस्तु योज्यतां बुद्ध्या न स्याद्दोषो यथा, तथा ॥
सर्वव्यावृत्तमश्वत्वं यदि प्रत्यक्षतो भवेत् । अतिव्याप्त्यादिदोषाः किं तदा स्युरिति चिन्त्यताम् ॥
दीयतां वस्त्वनुभवे दृष्टिश्शुद्धा यथा भवेत् । शब्दायत्ता नैव जातु ह्यर्थानां तु परिस्थितिः ॥

अस्तु भोः! इदं सर्वम् । तत्त्वत्रयदृष्ट्या प्रकृतिरित्येकमेव तत्त्वम् । परिणामदृष्ट्या तु चतुर्विंशतितत्त्वानीति व्यवह्रियत इत्युक्तम् । जगदेव खलु प्रकृतेःपरिणामरूपम् । एवं सति परिणामदृष्ट्या वा कथं चतुर्विंशतित्वम्? अनन्तानीत्येव किल वक्तव्यमिति चेत् ; संप्रदायस्तथेति तु सुलभमुत्तरमात्मगौरव-

[सृष्टिक्रमो नियत एव]

13. अद्भ्योऽग्निस्तेजसस्ता इति न हि वचसोर्बाधितुं युक्तमेकं
निर्वाहः कल्पभेदाद्यदि, न, दृढमितात् तत्त्वसृष्ट्यैकरूप्यात्।
व्यष्टौ ताभ्यः कदाचित् तदुपजनिरतो व्यत्ययस्तत्समष्टौ
आदावप्सृष्टिवादः श्रुतिमितमितरन्न प्रतिक्षेप्तुमीष्टे ॥ १३ ॥

---

रक्षकम्। परं तु ज्ञानविज्ञानसंपन्नास्त्वाचार्याः सर्वमालोच्य त्रिगुणतत्त्वं परस्परमत्यन्तविलक्षणपरिणामविशेष-दृष्ट्या चतुर्विंशतितत्त्वात्मकमिति पर्यगणयन् **समष्टिसृष्टौ**। **व्यष्टिसृष्टि**दृष्ट्या पदार्थास्त्वनन्ता इत्येतावत्त्वत्र पर्याप्तम्। अत्रैवास्ति परिणामविवर्तयोर्वैलक्षण्यादिविचारः। सर्वं क्रमशः (श्लो.22) स्पष्टीभविष्यति ॥

अस्त्विदमपि यथोक्तं तथैव। **तत्त्वं** नाम किमुच्यते? तत्त्वमिति पदं तु द्विविधम्। एकं 'तस्य भावः तत्वम्', यौगिकम्। एतत्तु तच्छब्दार्थदृष्ट्या यत्किञ्चिदपि भवितुमर्हति। अन्यच्च तत्त्वपदं संज्ञारूपं समष्टिपदार्थवाचकम्, न तु धर्मवाचकम्। लोकरूढ्या तु अनारोपितम्, अबाधितं सत्यभूतं वस्तु तत्त्व-मुच्यते। एतत्तु अनेकविधम्, भवितुमर्हति। 'सत्यस्य सत्यम्' इत्यादिवचनात् तरतमभावापन्नं तत्। निरुपाधिकं सत्यं ब्रह्मैकमेव। तत्तद्देशकालोपाधिकं सत्यमितरत् सर्वं भवति। एवं विभागापरिचयमूलकमेव 'ब्रह्मैकमेव सत्यम्, इतरत्तु मिथ्या' इत्यादयः परेषां वादा इत्यादिकं क्रमाद्व्यक्तीभविष्यति ॥ १२ ॥

उक्तसृष्टिप्रक्रियायां प्रमाणविरोधमाशङ्क्य परिहरति—**अद्भ्य इति**। **'अद्भ्योऽग्निः'** इति तैत्तिरीया-रण्यकवाक्यम्। **तेजसः**=अग्नेः **ताः**=आपः; 'अग्नेरापः' इति तैत्तिरीयोपनिषद्वाक्यम्। इति वचसोः मध्ये, **एकम्**=अन्यतरत् वाक्यम्, **बाधितुं न हि युक्तम्**। उभयोरपि वाक्ययोः श्रुतित्वात् कथमन्यतरस्या-प्रामाण्यं वक्तुं शक्यम्। तर्हि अस्तु कल्पभेदात् विरोधपरिहारः। एकस्मिन् कल्पे अग्नेरापः, अपरस्मिन् अद्भ्योऽग्निरिति इत्यपि न संभवतीत्याह— **निर्वाह** इत्यादिना। **दृढमितात् तत्त्वसृष्ट्यैकरूप्यात्** कारणात्, **कल्पभेदात् निर्वाहो यदि, न**। 'धाता यथापूर्वमकल्पयत्' इति यथापूर्वमेव सृष्टेरभिधानात् कल्पभेदेन, सृष्टिक्रमभेदो नास्त्येव। किञ्च पञ्चसु भूतेषूत्तरोत्तरं गुणवृद्धिरूपविज्ञानादपि 'अग्नेरापः' इत्येव सुवचम्। शब्दस्पर्शरूपरसगन्धानामेकैकगुणवृद्ध्या आकाशादिपञ्चभूतानामुत्पत्तेरुक्तत्वात्। तर्हि का गतिरित्यत्राह— **व्यष्टावित्यादि**। **व्यष्टौ**=व्यष्टिसृष्टौ **कदाचित् ताभ्यः**=अद्भ्यः **तदुपजनिः**=अग्नेरुत्पत्तिः, न तु समष्टौ। **अतः**=एतस्मादेव कारणात् **तत्समष्टौ**=तयोः समष्टिसृष्टौ **व्यत्ययः**=विपरीतमेव, अग्नेरेव आप इति न विरोधः। सृष्टिर्हि द्विविधा, **समष्टिसृष्टिः, व्यष्टिसृष्टि**रिति। पञ्चीकरणानन्तरसृष्टिः व्यष्टिसृष्टिरित्युच्यते। पञ्चीकरणं च समनन्तरमेव निरूप्यते। पञ्चीकरणात्पूर्वं सृष्टिः समष्टिरित्युच्यते। तत्त्वानां सृष्टिः समष्टिसृष्टिः, व्यक्तीनां सृष्टिः व्यष्टिसृष्टिरित्यपि वदन्ति। समष्टिसृष्टौ तु 'अग्नेरापः' इत्येव क्रमः। व्यष्टिसृष्टौ तु, कदाचित् मेघेषु विद्युदादितेजसो दर्शनात् 'अद्भ्योऽग्निः' इत्युच्यते। 'अबिन्धनं विद्युदादि' इति हि पठन्ति। अतो न विरोधः। विपरीतमेव किं न स्यादिति चेत् 'अग्नेरापः' इति खलु सृष्टिप्रकरणम्। 'अद्भ्योग्निः' इति न सृष्टिप्रकरणम्, स्थूलजगद्विषयकं तत्। एकैकगुणवृद्धि-

**[सृष्टिक्रमे जैनमतविमर्शः]**

14. **पृथ्व्याः स्पर्शादिभेदो द्रवमृदुकठिनीभावभेदश्च दृष्टः**
**तद्वत् पृथ्वीजलाग्निश्वसनपरिणतिर्लाघवायेति जैनाः ।**
**तत्र द्रव्यैक्यमिष्टं क्रमजनिविलयौ त्वागमादप्रकम्प्यौ**
**तर्कैकालम्बिगोष्ठ्यां भजतु बहुमतिं तादृशी लाघवोक्तिः ॥ १४ ॥**

दर्शनाच्च 'अग्नेरापः' इत्येव युक्तम् । अद्भ्योऽग्निश्चेत्, अप्सु शब्दस्पर्शरूपरसानां दर्शनात् अग्नावपि रसोपलब्धिः स्यात् । अतः 'अग्नेरापः' इत्येव क्रमः । नन्वेवमपि 'आपो वा इदमग्रे सलिलमासन्' 'अप एव ससर्जादौ' इत्यादि श्रुतिस्मृतिषु अपामेव प्राथम्यं श्रूयते न त्वाकाशादीनाम् । अतः कथं पूर्वोक्तनिर्णय इत्यत्राह— **आदावित्यादि** । **आदौ**=प्रथमम् **अप्सृष्टिवादः**=अपां सृष्टिवचनम्, **श्रुतिमितम्**=सृष्टि-प्रकरणगतश्रुत्या प्रमितम् **इतरत्**=आकाशादिप्राथम्यम्, **प्रतिक्षेप्तुम्**=निरसितुम् **न ईष्टे**=न समर्थो भवति । मनुस्मृतिस्तु श्रुत्यनुगुणं नेया । 'ससर्जादौ' इत्यत्रादिपदार्थस्य सापेक्षत्वात् यथाकथञ्चिन्नेतुं शक्य-त्वान्न विरोधः । 'आपो वा इदमग्रे सलिलमासन्' (ते.आ.9) इति श्रुतिरपि न सृष्टिप्रकरणगता । अतश्चाग्रपदस्य सापेक्षत्वात् अण्डसृष्टिदृष्ट्यार्थो वर्णनीयः । अत्र 'आपः' इति तत्त्ववाचि, 'सलिलम्' इति भूतवाचि ॥

ननु यदि 'अग्नेरापः' इत्येव क्रमः, तर्हि कार्ये जले उपादानस्यौष्ण्यस्यानुवृत्तिः कुतो न दृश्यते? 'कारणगुणाः कार्ये संक्रामन्ती'ति खलु न्यायः । न च त्रिगुणत्वमात्रं सर्वत्रानुवृत्तमेवेति वाच्यम्; त्रिगुणाना-मतीन्द्रियत्वेन तस्य व्यवहारव्यवस्थापकत्वासंभवात् । व्यवहारानादरे तु न किञ्चिदपि सुनिरूपं भवेत् । त्रिगुणत्वं हि प्रमेयत्ववदव्यावर्तकम् । तथा च सर्वसांकर्यप्रसङ्ग इति चेत्; विचारयामो विस्तरेणे-दमसत्कार्यवादपरीक्षायामुत्तरत्र (श्लो.22) ॥ १३ ॥

किमर्थमेवं व्यष्टिसमष्ट्यादिक्लेशकल्पनम् । एकमेव द्रव्यं विविधविचित्ररूपेण परिणमते चेत्, विचित्रक्रमेणापि तद्भवतु? इति जैनगन्धेन पृच्छन्तं प्रत्याह— **पृथ्व्या** इत्यादि । **पृथ्व्याः स्पर्शादिभेदः**=जल-तेजसोरदृष्टः विलक्षणः स्पर्शः दृष्टः । **आदि**पदेन रूपादीनां ग्रहणम् । एवं **द्रवमृदुकठिनीभावभेदश्च दृष्टः**=द्रवभावः जतुघृतादौ, मृदुभावः कार्पासादौ, कठनीभावः अयःप्रभृतिलोहादिषु, एषां भेदश्च=विशेषश्च दृष्टः । पूर्वमतादृशानामपि तादृशत्वापादनमपि संस्कारविशेषवशात् युज्यत इति **च्वि**प्रत्ययेन सूच्यते । मृदुमृत्तिकया रचितो घटः आमनिक्षिप्तः कठिनो भवत्येव । एकमेव द्रव्यं विचित्रगुणविशिष्टं परिणमत इत्यनुभवसिद्धम् । उष्णस्पर्शवतस्तेजसः शीतस्पर्शवज्जलं जायते इत्युच्यते । **तद्वत्**=एवमेव **पृथ्वी-जलाग्निश्वसनपरिणतिः**=**पुद्गलाख्यं** एकमेव द्रव्यं पृथिवीजलतेजोवायुरूपेण परिणमते । एवमङ्गीकारस्य फलं दर्शयति— **लाघवायेति** । मनुष्यबुद्धेः लाघवपक्षपातित्वात्, इति **जैनाः** आहुः । अविरुद्धं भागमङ्गीकृत्य, इतरांशं निराकरोति— **तत्रेत्यादिना** । **तत्र**=तस्यां प्रक्रियायाम् **द्रव्यैक्यम्**=एकमेव द्रव्यं प्रकृत्याख्यं विविधविचित्रगुणविशिष्टं परिणमत इति **इष्टम्**=अङ्गीकृतमेव सिद्धान्ते । तर्हि कुत्र विवाद इत्यत्राह—

**क्रमेत्यादि**। उत्पत्तिलयक्रमादिकं 'आकाशाद्वायुः' 'पृथिव्यप्सु प्रलीयते' इत्यादि नियतमिति **आगमात् अप्रकम्प्यौ**=चालयितुमप्यशक्यौ। इदं तत्त्वभेदस्याप्युपलक्षणम्। पुद्गलाख्यं एकं तत्त्वं पृथिव्याद्यात्मना परिणमते, पृथिव्यप्रभृतितत्त्वभेदो नास्ति, एकस्या एव मृदः घटादिभेदेन परिणामेऽपि तत्त्वभेदो यथा नास्ति, तथेति जैनाः। सिद्धान्ते पुद्गलाख्यं तत्त्वं नाङ्गीक्रियते, श्रुत्यादिप्रमाणाभावात्। एवं पृथिव्यप्रभृति-तत्त्वभेदोऽप्यङ्गीक्रियते, श्रुत्यनुसारात्, इति जैनप्रक्रिया न वैदिकैरङ्गीकर्तुं शक्या। ननु अस्ति किल महल्लाघवमित्यत्र सोपहासमुत्तरमाह—**तर्कैकेत्यादि**। स्वबुद्ध्या तर्कबलेन तत्त्वकल्पने स्यात्तथा। तर्कस्य प्राधान्यमनङ्गीकुर्वतां वैदिकानां गोष्ठ्यां केवललाघवगौरवगणना न बहुमतिं लभते। अतः तादृशी भवत्प्रति-पादिता **लाघवोक्तिः**=लाघववचनम्, तर्कमेकमेवावलम्बतां अवैदिकानां **गोष्ठ्यां बहुमतिं भजतु;** वयं तु श्रुत्यैकावलम्बाः इत्युपहासः॥

तर्कमात्रावलम्बनस्य किल फलं सर्वज्ञेश्वरनिराकरणम्। ननु वैदिका अपि सांख्यमीमांसकादयः भवदभिमतं नित्यसर्वज्ञं निराकुर्वन्ति श्लोकवार्तिकादावतिविस्तरेण। कमपराधमतिरिक्तं पश्यस्यस्मासु? आस्तिकनास्तिकपदेऽपि 'अस्ति नास्ति दिष्टं मतिः' (पा.सू.4-4-60) इति भवदीयेन परमवैदिकेनोक्तमपि विस्मृतं भवद्भिः। अस्ति परलोक इति मतिर्यस्य, स आस्तिकः। नास्ति परलोक इति मतिर्यस्य स नास्तिकः। दिष्टमिति मतिर्यस्य स दैष्टिकः इति च विवरणं भवद्भिरेव क्रियते। दिष्टमिति परलोकसाधनं पुण्यपापादिकमुच्यते। परलोकं परलोकसाधनं चाङ्गीकुर्वतामस्माकं नास्तिकता वा कथमुच्यते भवद्भिः? सांख्यमीमांसकयोस्त्वास्तिकता च कथम्? तयोः वेदप्रामाण्याभ्युपगन्तृत्वान्न नास्तिकतेति चेत्, तदिदं संकेतमात्रम्। न हि भवदीयसूत्रं तादृशार्थे भवद्भिरपि व्याख्यातम्। अर्थस्समानश्चेत् शब्दोपरि भारं निक्षिप्य 'नास्तिको वेदनिन्दकः' इत्यादिनिन्दया कस्य वा को लाभः?॥

निधाय हृदये हस्तं निर्मत्सरमथोच्यताम्। त्यक्त्वा संकेतभीरुत्वं धैर्यमालम्ब्य कथ्यताम्॥
अयि भोः! परमं सत्यं त्रिकालेऽपि हितं नृणाम्। शृणु मात्सर्यमुत्सृज्य भूत्वा सत्यपरायणः॥

प्रथममिदमुच्यतां शान्तात्मन्! परलोकः कश्चिदस्ति, तत्साधनं च किञ्चिदस्तीति कथमवगतमा-युष्मता? द्वयमप्युभयसंमतमेव किल। तदुपरि चर्चा किमर्था? उभयसंमतमित्युक्त्वा मा पलायस्व। तादृश-परलोकस्य तत्साधनस्य च सत्त्वे प्रमाणं किमिति पृच्छामः। अस्मदागमा एवेति चेत्, भवदागमापेक्षया वेदाः अतिप्राचीना इति किं न जानासि? अस्मदागमाः स्वतन्त्रतपोमूला भवदागमापेक्षारहिता इति चेत्, अयि भोः!

किं त्वदीया वद स्वर्गादवतीर्णाः, न मानवाः? य एव वैदिका आसन् भवदीयास्त एव हि।
त्वन्मूलपुरुषा नैव जात्वासन् वेदनिन्दकाः। त्वदीयोऽमरसिंहश्च धर्मं वैदिकमाह हि॥
यदा भवन्तस्संपन्नाः विद्वेषाद्वेदनिन्दकाः। तदारभ्यैव यूयं च घोषिता वेदनिन्दकाः॥
भगवान् पाणिनिर्नैव जैनः, परमवैदिकः। वेदमूलं च तत्सूत्रमाहास्तिक्यं तु वैदिकम्॥
वेदाङ्गेषु च मूर्धन्यमाहुर्व्याकरणं बुधाः। तत्रोच्यमानं सर्वं च वेदमूलं भवेद्ध्रुवम्॥
सर्वार्थपूर्णा वेदाः, न केवलं पारलौकिकाः। वदन्ति वेदास्सर्वेषां हितं त्रैकालिकं ध्रुवम्॥

**[तत्त्वेषु प्रकृतिविभागः]**

**15. तत्त्वेष्वाथर्वणेऽष्टौ प्रकृतय उदिताः षोडशान्ये विकाराः**
**निष्कर्षेदम्परेऽस्मिन् वचसि तदितरत् सर्वमावर्जनीयम्।**
**दृष्ट्वा सांख्यं पुराणादिकमपि बहुधा निर्वहन्त्येतदेके**
**चिन्तासाफल्यमान्द्यात् श्रमबहुलतयाऽप्यत्र तज्ज्ञैरुदासि ॥ १५ ॥**

धर्मार्थकाममोक्षाख्याः पुरुषार्थाश्चतुर्विधाः । एतेषां साधनानीह भवेयुर्विविधानि हि ॥
सर्वमेतच्च लभ्येत कुत्र वान्यत्र चिन्त्यताम् । अधिकारानुरूपेण लभ्यमत्रैव नान्यतः ॥
अतो मात्सर्यमुत्सृज्याश्रय मार्गं तु वैदिकम् । श्रेयो न परमं किञ्चिल्लभ्येतान्यत्र वेदतः ॥
वैदिकानामपि सतां या चेश्वरनिराकृतिः । तत्राशयश्च समये त्वग्रे व्यक्तीभविष्यति ॥ १४ ॥

'तत्त्वसृष्ट्यैकरूप्यात्' इत्युक्तौ विरोधमाशङ्क्य परिहरति—**तत्त्वेष्वित्यादि**। **आथर्वणे**=अथर्वशाखासंबन्धिवाक्ये, **तत्त्वेषु**=चतुर्विंशतितत्त्वेषु **अष्टौ प्रकृतयः, अन्ये षोडश विकाराः उदिताः**। 'अष्टौ प्रकृतयः षोडश विकाराः' इत्याथर्वणी श्रुतिः । चतुर्विंशतिप्राकृततत्त्वेषु प्रकृतिमहदहङ्काराः, पञ्च तन्मात्राणि चेति मिलित्वा अष्टौ प्रकृतयः । इतराणि षोडशतत्त्वानि विकृतयः इति गणितानि । प्रकृतितत्त्वम् आद्यम्। ततो महत्तत्त्वम् । ततोऽहङ्काराख्यं तत्त्वम् । ततः सात्त्विकाहङ्कारात् एकादशेन्द्रियाणि, तामसाहङ्कारात् पञ्चतन्मात्राणि । पञ्चतन्मात्रेभ्यः पञ्चभूतान्युत्पद्यन्त इति सांख्यानां प्रक्रिया । एवञ्च अन्तिमानि पञ्चभूतानि, एकादशेन्द्रियाणि च केवलविकृतिरूपाणि=तत्त्वान्तरानुपादानानि । इतराण्यष्टौ प्रकृतयः=तत्त्वान्तरोपादानानि इति 'अष्टौ प्रकृतयः षोडश विकाराः' इति गणना समञ्जसा भवति । सिद्धान्ते तु, शब्दतन्मात्रादाकाशस्य, आकाशात् स्पर्शतन्मात्रस्योत्पत्तिरिति क्रमाङ्गीकारात्, पञ्चभूतेषु पृथिव्येकैव विकृतिरूपा । इतराणि तु चत्वारि भूतानि प्रकृतिविकृतिरूपाणि । ततश्च एकादशेन्द्रियाणि, पृथिवी चेति द्वादशतत्त्वानि केवलविकृतयः, शिष्टानि च द्वादश प्रकृतयो भवन्ति । तथा च द्वादश प्रकृतयः, द्वादश विकृतय इति सिद्धम् । एवञ्च जगत्सृष्टेरैकरूप्यानङ्गीकार एव वरम्, श्रुतिविरोधस्य सुलभतया परिहारात् ॥

ननु 'धाता यथा पूर्वमकल्पयत्' इत्यादिना सृष्टेरैकरूप्यमावश्यकमिति यद्याग्रहः, तत्राह—**निष्कर्षेत्यादि**। 'अष्टौ' 'षोडश' इति संख्यानिर्देशेन इदं वाक्यं चतुर्विंशतितत्त्वेषु प्रकृतिविकृतितत्त्वविवेचनार्थमेव प्रवृत्तमिति स्पष्टं भवति । अतः **अस्मिन् वचसि**='अष्टौ प्रकृतयः' इत्यादिवाक्ये **निष्कर्षेदंपरे**=तत्त्वस्वरूपाणां निष्कृष्य प्रदर्शनार्थमेव प्रवृत्ते सति **तदितरत् सर्वं**=तद्व्यतिरिक्तं तद्विरुद्धार्थप्रतिपादकं सर्वं वाक्यजातम् **आवर्जनीयम्**=आ सर्वथा त्याज्यम् । अथवा तदनुगुणतया नेयम् । अथवा सृष्टिप्रक्रियानेकरूपेति वा अङ्गीकार्यम् । भवदुक्तसिद्धान्तप्रक्रियैव साधीयसीति तु न सर्वथा युक्तम् ॥

एवमाक्षेपे निर्दिष्टं समाधानं वक्तुमनिच्छन् औदासीन्यं सूचयति—**दृष्ट्वेत्यादिना**। एवं विवादे **एके**=केचन **सांख्यं**=सांख्यशास्त्रम्, **पुराणादिकम् अपि**, आदिपदेन भारतादीतिहासग्रहणम्, **दृष्ट्वा**,

[परमात्मैव सर्वत्रोपादानम्]

16. निश्शेषं कार्यतत्त्वं जनयति स परो हेतुतत्त्वैश्शरीरी
तत्तत्कार्यान्तरात्मा भवति च, तदसौ विश्रुतो विश्वरूपः ।
तेजोऽबन्नाभिधेये बहुभवनमभिध्यानलिङ्गं च दृष्टं
तस्मादीशाननिघ्नाः प्रकृतिविकृतयः स्वस्वकार्यप्रसूतौ ॥ १६ ॥

**एतत्**=उक्ताथर्वणवाक्यम्, **बहुधा**=अनेकप्रकारेण **निर्वहन्ति**=श्रुतीनां परस्परविरोधो यथा न स्यात् तथा अर्थं प्रतिपादयन्ति । किमर्थं भवतोऽत्रौदासीन्यमित्यत्राह—**चिन्तेत्यादि** । **चिन्तायाः**=एतादृशविचारस्य, यत् **साफल्यम्**=सफलता, तस्य **मान्द्यात्**=अत्यल्पत्वात् **श्रमबहुलतया**=श्रमस्यैवाधिक्याच्च **तत्र**=उक्तविषये, **तज्ज्ञैरपि**=तत्समाधानज्ञानवद्भिरप्यस्माभिः **उदासि**=औदासीन्यमूढम् ॥

ननु! कथमेवमौदासीन्यम्? किं सृष्टेरैकरूप्यं मास्त्वित्याशयस्तर्हि? इति चेत्; पञ्चभूतेषु एकैकगुणवृद्धिदर्शनात्, पञ्चतन्मात्रेभ्यः युगपत्पञ्चभूतानामुत्पत्तेरसंभवेन सांख्यप्रक्रियायाः पूर्वमेव निरासात्, सृष्टेरैकरूप्यमेव सिद्धान्तः । एवं सति वचनानां व्याख्यानेन महत् किं साधनीयम्? वृथाकालहरणमात्रमिति भावः । आशयश्च **सर्वार्थसिद्धावुक्तः**—'न प्रधानविरोधः स्यादीदृशानवधारणे । इति शिक्षयितुं शिष्यान् प्राचां क्वचिदनिश्चयः ॥' इति । **वस्तुतस्तु**—चतुर्विंशतितत्त्वेषु मानुषशरीरारम्भकतत्त्वगणनार्थं इयमुक्तिरागता । प्रकृतिमहदहङ्काराः, पञ्चभूतानि चेत्याहत्य अष्टौ शरीरोपादानभूतानि प्रकृतयः । पञ्चतन्मात्राणि, एकादशेन्द्रियाणि चेति षोडश शरीराश्रितानि, अत एव शरीरानारंभकाणि इति भावनया अष्टानां प्रकृतित्वं, षोडशानां विकृतिरूपत्वम् आथर्वणश्रुतेराशयः **न्यायसिद्धाञ्जना**दिषु द्रष्टव्यः ॥ १५ ॥

ननु उत्तरोत्तरतत्त्वं प्रति पूर्वपूर्वतत्त्वस्यैवोपादानत्वस्याभिधाने, जगतः ब्रह्मोपादानत्वरूपः सिद्धान्तः गत एव । मूलतत्त्वस्यैव ब्रह्मोपादनत्वेऽपि तत्सिद्धान्तः संगच्छेतेति चेत्, तर्हि 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतौ, 'इमानि' इति निर्देशात्, 'भूतानि' इति बहुवचननिर्देशाच्च, जगति प्रत्यक्षसिद्धानां सर्वभूतानामपि साक्षात् ब्रह्मोपादानकत्वश्रवणानुरोधेन सर्वेषामपि वस्तूनां ब्रह्मोपादानकत्वस्यैवाङ्गीकारात् अपसिद्धान्तापत्तिः । अस्तु तर्हि साक्षादेव ब्रह्मणः सकाशात् सर्वेषामप्युत्पतिरिति यदि, तर्हि क्रमश एव सृष्टिरित्युक्तिविरोध **इत्युभयतःपाशा रज्जुः** इत्यत्र 'तदभिध्यानादेव तु तल्लिङ्गात्सः' (ब्र.सू.2-3-14) इति सूत्रोक्तं समाधानमाह—**निःशेषमित्यादि** । तदभिध्यानरूपात् परमात्मलिङ्गात् **सः परः**=परमात्मा **हेतुतत्त्वैः**=उत्तरोत्तरतत्त्वोपादानभूतैः पूर्वपूर्वतत्त्वैः **शरीरी**=शरीरविशिष्टस्सन्नेव **निश्शेषं कार्यतत्त्वम्**=उत्तरोत्तरकार्यरूपं सर्वं तत्त्वं **जनयति**=उत्पादयति । **तत्तत्कार्यान्तरात्मा**=तत्तत्कार्यवर्गस्यापि अन्तर्यामी **च**=तत्तत्कार्यशरीरकोऽपि **भवति** । **तत्**=तस्मादेव कारणात्, पूर्वपूर्वतत्त्वशरीरकपरमात्मन एवोपादानत्वात्, उत्तरोत्तरतत्त्वशरीरकपरमात्मन एवोपादेयत्वाच्च **असौ**=परमात्मा **विश्वरूपः**=जगद्रूपी **विश्रुतः**=श्रुतिस्मृत्यादिषु प्रसिद्धः । अत एव **तेजोऽबन्नाभिधेये**=तेजोऽबन्नशब्दवाच्ये तत्त्वे, **बहुभवनम्, अभिध्यानलिङ्गं च दृष्टम्**=प्रत्यक्षश्रुतिसिद्धं दृश्यते । छान्दोग्ये सद्विद्यायाम् 'तदैक्षत बहुस्याम्' इति तच्छब्दवाच्यस्य

[पञ्चीकरणप्रक्रिया]

**17. द्वेधा भूतानि भित्त्वा पुनरपि च भिनत्त्यर्धमेकं चतुर्धा**
**तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं चतुर्भिः ।**

ब्रह्मणः 'ऐक्षत' इति अभिध्यानम्=सङ्कल्पः, 'बहु स्याम्' इत्यात्मन एव जगद्रूपेण बहुधाभवनं च यथा दृश्यते, तथैव 'तत्तेज ऐक्षत बहु स्याम्' इति तेजसोऽपि संकल्पः, बहुधाभवनम्, 'ता आप ऐक्षन्त बह्व्यः स्याम' इति अपामपि सङ्कल्पः बहुधाभवनं च दृश्यते । 'अप्'शब्दस्य नित्यबहुवचनत्वात् 'ऐक्षन्त' 'बह्व्यः'इति बहुवचनम् ॥

यद्यपि तेजसः, अपामेव च सङ्कल्पः, बहुधाभवनं च श्रूयते; न तु अन्नशब्दवाच्यपृथिव्या इति 'तेजोऽबन्न' इति अन्नपदग्रहणं न युज्यत इव; तथापि, अन्नशब्दवाच्यायाः पृथिव्याः तत्त्वान्तरानुपादानत्वेन तत्र संकल्पप्रसक्त्यभावात् श्रुतौ पृथिव्याः संकल्पाश्रवणेऽपि, जगति पृथिव्या बहुधाभवनदर्शनात्, परमात्मनश्च सर्वान्तर्यामित्वात्, पृथिव्या अपि सङ्कल्पः अर्थात्सिद्ध्यतीत्यभिप्रायेण 'अन्न'शब्दोऽप्याचार्यैः क्रोडीकृतः । न हि परमात्मा चतुर्विंशतितत्त्वमात्रशरीरी, तावन्मात्रकारणं वा किन्तु जगच्छरीरी, जगत्कारणं च । तस्मात् स्थूलेऽपि जगति मृत्पिण्डघटादिरूपोपादानोपादेयेष्वपि तत्तच्छरीरकस्यैव परमात्मनः उपादानत्वम्, उपादेयत्वं चेत्येतत्सूचनायैव श्रुतावश्रुतसंकल्पस्याप्यन्नस्य संग्रहः कृतः । एवञ्च व्यष्टौ, समष्टौ च परमात्मैवोपादनमिति सिद्ध्यति । दृश्यन्ते च श्रुतयः 'पृथिव्या ओषधयः' इत्याद्याः । तथा च जडानां तेजःप्रभृतीनां संकल्पासंभवात्, तेजःप्रभृतिशब्दाः तत्तच्छरीरकपरमात्मवाचकाः । **तस्मात्**=स्वयं बहुधा भवनस्य, संकल्परूपचेतनलिङ्गस्य च दर्शनात्, **प्रकृतिविकृतयः**=प्रकृतिरूपा वा विकृतिरूपा वा सर्वे पदार्थाः **स्वस्वकार्यप्रसूतौ**=तत्तत्कार्योत्पादने **ईशाननिघ्नाः**=परमात्मशरीररूपत्वात् परमात्माधीना एव । एवं सांख्यसंमतसृष्टिक्रमात् सिद्धान्तसंमतसृष्टिक्रमस्य वैलक्षण्यं निरूपितम् । अतः परब्रह्मण एव सर्वत्र स्थूले सूक्ष्मे वा जगति उपादानत्वात् परब्रह्मणः जगदुपादानत्वे, क्रमसृष्टौ वा न कोऽपि विरोधः ॥ १६ ॥

एवं सृष्टिप्रक्रियाम्, तत्र प्रसक्तं विचारं च परिसमाप्य, व्यष्टिसृष्टिं निरूपयति—**द्वेधेत्यादिना**। सृष्टिर्हि द्विविधा—**समष्टिसृष्टिः, व्यष्टिसृष्टिश्चेति**। तत्त्वानां सृष्टिः समष्टिसृष्टिरित्युच्यते। तत्त्वव्यञ्जकव्यक्तीनां सृष्टिः व्यष्टिसृष्टिरित्युच्यते । पृथिवीतत्त्वम् अन्यत्, पृथिवी चान्या । पृथिव्याः समष्टिरूपं पृथिवीतत्त्वन्त्वतीन्द्रियम्, पृथिवीत्वपदवाच्यं तु पृथिवीपदप्रवृत्तिनिमित्तया सिद्धं पृथिवीतत्त्वापेक्षयातिरिक्तं स्थूलपृथिवीनिष्ठम् । स्थूला पृथिवी यद्यपि प्रत्यक्षा, तथापि पृथिवीसामान्यस्यानुगतावयवसंस्थानरूपाया जातेः प्रत्यक्षसिद्धत्वं न भवत्येव । अत एव गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिस्तार्किकैः साध्यते । अतः पृथिवीपदप्रवृत्तिनिमित्ततयैव पृथिवीत्वसिद्धिः । अतः पृथिवीत्वमेकम्, पृथिवीव्यक्तयः अनन्ताः, स्थूलाश्च । एवं व्यष्टिसमष्टिभेदः विष्णुपुराणमनुस्मृत्यादौ वर्णितः 'नानावीर्याः पृथग्भूताः ततस्ते संहतिं विना । नाशक्नुवन् प्रजास्स्रष्टुमसमागम्य कृत्स्नशः ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥'(वि.पु.1-2-52,53) इति ॥

**इत्थं पञ्चीकृतैस्तैर्जनयति स जगद्धेतुरण्डादिकार्या-**
**ण्यैदंपर्यं त्रिवृत्त्वश्रुतिरधिकगिरामक्षमैका निरोद्धुम् ॥ १७ ॥**

अत्र 'समेत्यान्योन्यसंयोगम्' इत्यंशं व्यष्टिसृष्टिरूपं विवृणोति—**सः जगद्धेतुः**=जगत्कारणभूतः परमात्मा **भूतानि**=पृथिव्यादिपञ्चभूतानि समष्टिरूपाणि **द्वेधा भित्त्वा**=विभज्य, **पुनरपि** द्वेधाविभक्तयोर्मध्ये **एकं अर्धं चतुर्धा भिनत्ति**=विभजति जगत्स्रष्टा परमात्मा। **एकैकस्य तैः चतुर्भिः भागैः परम् अर्धमर्धम् अनुकलयति**=संयोजयति । प्रतिभूतम् एवं विभागात् तत्र तत्र वीप्सा । एवं च सर्वेष्वपि भूतेषु अष्टधाविभक्तेषु अर्धभागः=चत्वारो भागाः तत्तद्भूतस्य, इतरार्धे=शिष्टचतुर्भागस्थाने इतरभूतचतुष्टयांश-मिश्रणमेव पञ्चीकरणम्। एवं पृथिव्याम् अर्धभागः पृथिवी, इतरार्धभागे इतरचतुर्भूतानि च भवन्ति। इदं पृथिवीपञ्चीकरणम्। एवमेव इतरभूतानामपि पञ्चीकरणानि ज्ञेयानि ॥

**इत्थं पञ्चीकृतैः तैः** पञ्चभिर्भूतैः **अण्डादिकार्याणि**=ब्रह्माण्डादिकार्याणि **जनयति**। ननु छान्दोग्ये 'त्रिवृतं त्रिवृतमेकैकां करवाणि' इति त्रिवृत्करणस्यैव श्रवणात् तेजोऽबन्नानामेव मिश्रणम्, न तु पञ्च-भूतानामिति पञ्चीकरणमप्रामाणिकमिति चेत्तत्राह—**ऐदम्पर्यमिति**। **एका त्रिवृत्त्वश्रुतिः** छान्दोग्ये विद्य-माना, **अधिकगिराम्**=पञ्चीकरणपराणां बहूनां वाक्यानाम् **ऐदम्पर्यं**=तात्पर्यम् **निरोद्धुम्**=निरसितुम् **अक्षमा**=न समर्था ॥

**अयं भावः**—यद्यपि छान्दोग्यश्रुतौ त्रिवृत्करणमेव श्रूयते, न तु पञ्चीकरणम्। परन्तु तत्प्रकरणे भूतत्रयमात्रसृष्टेः अभिधानात् त्रिवृत्करणमुक्तम्। इतरभूतद्वयं तु अर्थात्सिद्धमेव, अन्यथा तैत्तरीयश्रुत्यादौ श्रुतायाः पञ्चभूतानां सृष्टेरपि बाधः स्यात्। सर्वसम्मतानि च पञ्चभूतानि। अतः छान्दोग्ये भूतत्रयमात्र-सृष्टिश्रवणेऽपि इतरभूतद्वयसृष्टिरपि अर्थात् सिद्धा। एवमेव त्रिवृत्करणेन पञ्चीकरणमपि स्वतः प्राप्नोत्येवेति पञ्चीकरणमेव प्रामाणिकम्। त्रिवृत्करणं पञ्चीकरणस्यैव प्रदर्शकम्। यदि पञ्च भूतानि प्रमाणिकानि, तर्हि पञ्चीकरणमपि प्रमाणिकम्। अतो न कश्चन विरोधः। छान्दोग्ये भूतत्रयस्यैव परिगणनं कुत इत्यन्यदेतत् ॥

अत्रेदं प्रसङ्गात् किञ्चिदुच्यते—इमां पञ्चीकरणप्रक्रियामाश्रित्यैव सिद्धान्ते शुक्तिरजतादिबुद्धीनां यथार्थत्वमुपपाद्यत इति प्रसिद्धम्। परन्तु रज्जुसर्पभ्रमे रज्जौ सर्पावयवसद्भावः कथं वा समर्थनीयः? अन्ततः, देहात्मभ्रमे देहे आत्मावयवसद्भावं को वा ब्रूयात्? अतो भ्रमहेतुभूतस्य उभयानुगतस्य सादृश्य-प्रयोजकस्याकारस्य प्रदर्शनमात्रम् 'शुक्तौ रजतावयवसद्भावात्' इत्यादिवचनैर्विवक्षितं मन्तव्यम्। शतशकट-परिमितशुक्तीनां शोधनेऽपि न हि गुञ्जाप्रमाणमपि रजतं लभ्येत। अतः आभरणादिहेतुभूतरजतावयवानामपि शुक्तौ सत्त्वं न विवक्षितम्, ज्ञानविज्ञानविरोधित्वात्तस्य। अस्ति किल भ्रमस्थलेऽधिष्ठानाध्यस्तयोर्लेशतो वा सादृश्यम्। न हि लोष्टं दृष्ट्वा रजतभ्रमः कस्यचिद्भवति। न वा घटं दृष्ट्वा सर्पभ्रमः कस्यचिद्भवति। किन्तु शुक्तिरजतयोः समानः फाळफळयाकार एव शुक्तौ रजतभ्रमहेतुः। एवं रज्जौ दैर्घ्याद्याकारः साधारणः सर्पभ्रमहेतुर्दृश्यत एव। एवमनात्मनि देहे आत्मभ्रमहेतुः उभयसाधारणः क आकारो वर्तते? अयि भोः साधो! तर्हि 'अहम्' इति प्रतीतिः शरीरविषयिणी कथं भवति? भ्रान्तिः किल सा। तथा भ्रान्तिः

[परमाणूपादानतावादनिरासः]

18. कार्यं नैवारभेरन् समधिकमणवः सर्वतस्संप्रयुक्ताः
दिक्संयोगैकदेश्यात् न घटत इह ते दिक्कृतोऽप्यंशभेदः ।

शरीरविषयिण्येव भवति, न तु घटादिविषयिणीति कुत इति विविच्यताम् । घटः खलु जडः । तत्र अहंप्रतीतिः कथं भवेत्? तर्हि शरीरं किमजडम्? किमनुत्तरोऽसि? बह्वस्त्यत्र विचारणीयम् । आत्मनि देहभ्रमो वा, देहे आत्मभ्रमो वा? प्रथममेतदेव निर्णेतव्यं वर्तते । देहःखलु प्रसिद्धः, तत्रैवात्मभ्रमः स्यादिति चेत्, शुकशाबक! प्रसिद्धे अप्रसिद्धस्य वा कथं भ्रमः? सर्पो यस्याप्रसिद्धः, तस्य सर्पभ्रमो भवेत् किम्? पुनरनुत्तरो जातस्त्वम् । न तावान् सुखोपपादोऽयम्, यथा त्वं मन्यसे । मास्त्विदानीमयं विचारः । अग्रे जीवसरे पश्यामः । त्वमपि सन्नद्धो निरीक्षस्व ॥

अत इदमत्र विवक्षितम्—पञ्चीकरणप्रक्रियया सर्वं सर्वत्र वर्तत इत्यादिकं केवलं तत्त्वदृष्ट्या, न तु स्थूलदृशा । व्यष्टिसृष्टेः पूर्वं खलु पञ्चीकरणम् । तथा च समष्टिसृष्टावेव तत् । समष्टिसृष्टिर्नाम तत्त्वानां सृष्टिः । अतः पञ्चीकरणमपि तत्त्वानामेव, न तु दृश्यमानानां पृथिव्यादिभूतानाम् । अत एव घटस्फटिकादिषु जलादीनामन्वेषणमुन्मत्तप्रयत्नायेत । अतः पृथिव्यादिभूतानि अन्यानि, पृथिवीत्वादितत्त्वानि चान्यानि । परिदृश्यमानमिदं जगत् न केवलं भूतानां सङ्घातरूपम्, अपितु भूतविकाराणां भौतिकानां सङ्घातात्मकम् । एतादृशे स्थूले भौतिके जगति तत्त्वमन्तर्गुहायामेव निहितम् । अत एव— 'इन्द्रियैरुपलब्धं यत्तत्त्वेन तु गृह्यते । जातास्तत्त्वविदो बालाः तत्त्वज्ञानेन किं फलम् ॥' इति हैतुका उपहसन्ति । अत आचार्याणां शुक्तौ रजतावयवसद्भावादिवचनं वैदिकैः प्रभाकरैस्तथोक्तत्वात् । अथवा बालोपच्छन्दवद्-ग्राह्यम् । किं वान्यत्कुर्युर्महात्मानो दृष्टपरावरा आचार्याः । यतः—

गुरोः शापस्तु शिष्यः स्यात् भक्तो भगवतस्तथा । धर्मसङ्कटहेतुत्वात् मर्मज्ञैः प्रोच्यते तथा ॥
न त्यक्तुं प्रभवन्त्येते शिष्यान् वात्सल्यमूर्तयः । नापि जीर्णयितुं शक्ता मूर्खांस्तांस्तपसापि वा ॥
गुरुरेव विजानीयात् सङ्कटं तं न चेतरः । अतः परीक्ष्य निर्धार्यम्, नापातवचनादिभिः ॥
सिद्धं सत्संप्रदाय इत्याद्यमाचार्यलक्षणम् । अध्येयमवधानेन स्वात्मनो हितमीप्सुभिः ॥ १७ ॥

एवं सिद्धान्तसंमतः सृष्टिक्रमः परिणामवादरूपः प्रतिपादितः । अयमेव च सत्कार्यवादः । अथ स्वपक्षप्रतिष्ठापनाय कार्यकारणभावस्थलीयवादान् परीक्षयिष्यन् प्रथमं साक्षादेतत्प्रतिकोटिभूतम् असत्कार्यवादं आरम्भवादापरपर्यायं वैशेषिकसंमतं विमृशति—**कार्यमित्यादिना** । कार्यकारणभावविषये **आरम्भवादः, परिणामवादः, सङ्घातवादः, विवर्तवादश्चेति** वादचतुष्टयं प्रसिद्धम् । प्रथमो वैशेषिकानाम्, द्वितीयः सांख्यानाम्, सिद्धान्तिनाञ्च, तृतीयः बौद्धैकदेशिनां जगत्सत्यत्ववादिनां वैभाषिकानाम्, चतुर्थः जगन्मिथ्यात्व-वादिनां बौद्धैकदेशिनां विज्ञानाद्वैतवादिनाम्, शून्याद्वैतवादिनां माध्यमिकानाम्, शब्दाद्वैतवादिनाम् वैयाकरणैक-देशिनां, वेदान्त्येकदेशिनां ब्रह्माद्वैतवादिनाञ्च । आरंभवाद एवासत्कार्यवाद इति कैश्चिन्नवीनैरुच्यते । कार्यं पूर्वमसदेव । पूर्वमेव कार्यस्य सत्त्वे कारकव्यापाराणां वैय्यर्थ्यम्, अनुभवविरोधश्च । 'घटं कर्तुमारभते' इति

व्यवहारात् अस्य 'आरंभवादः' इति व्यवहारः। निरुपाधिकासत्कार्यवादिनस्तु शून्यवादिनो माध्यमिका एव। वैशेषिकनये 'असतः' इति षष्ठी। कार्यस्य पूर्वमसत्त्वमात्रं विवक्षितम्, न तु सर्वथाऽसत्त्वम्। माध्यमिकनये तु पञ्चमी। कारणस्य मिथ्यात्वं तत्संमतम्। एतद्दृष्ट्या असतः कारणात् कार्यमुत्पद्यते, यतोऽसतः उत्पद्यते कार्यम्, अत एव कार्यमप्यसत्। तथा च कार्यकारणभाव एव दुर्निरूपत्वान्नास्ति इति अयमसत्कार्यवादो माध्यमिकानाम्। अत एवैषां '**शून्यवादिनः**' इतिव्यवहारः। वैशेषिकसंमतस्त्व-सत्कार्यवादः—असतः कार्यस्योत्पत्तिरिति तावन्मात्रमर्थः। असत्त्वमपि न सर्वथाऽसत्त्वरूपं निरुपाधिका-सत्त्वम्, किन्तु तत्कार्यस्य तत्कारकव्यापारात्पूर्वमसत्त्वरूपम्। उत्पत्त्यनन्तरं तु सदेव घटादि कार्यम्। परिणामवादः सांख्यानाम्। एतेषां निरुपाधिकसत्कार्यवादः माध्यमिकसंमतशून्यवादस्य निरुपाधिकासत्कार्य-वादस्य साक्षात् प्रतिकोटिभूतः। अत एवाचार्यैः वियदधिकरणारंभ अयं पक्षः 'सर्वं सांख्यास्तु नित्यम्' (अ.सा.220) इत्यनूदितः। सिद्धान्तेऽपि यद्यपि **सत्कार्यवाद** एव, अथाप्यस्ति किञ्चिद्वैलक्षण्यमिति अग्रे (श्लो.24) स्पष्टीभविष्यति। कारणमात्रं न सत्, घटादिकार्यमपि पूर्वमेव सत्, कारकव्यापारैरभिव्यज्यते इति सांख्याः। अग्रे (श्लो.24) अयं वादो विचार्यते। सङ्घातवादो नाम, अवयवानां सङ्घातः=समुदायः=समूह एवावयवी, न त्वतिरिक्तः। सिद्धान्तेऽवयवातिरिक्तावयविनो निराकरणेऽपि न सङ्घातवादो विवक्षितः, किन्तु परिणामवादः। धान्यराशिप्रभृतिषु सङ्घातवाद एव वैशेषिकाणामपि। घटपटादौ तु न सङ्घातवादः, किन्तु आरंभवादः, अवयवी अवयवातिरिक्त एव। अयमेव वादोऽत्र विमृश्यते। विवर्तवादिषु शून्यविवर्तवादिनां माध्यमिकानां पक्षोऽनुपदं प्रदर्शितः। उपर्यपि (श्लो.32, बु.स.18, अद्रव्यस.132) विमृश्यते। विज्ञानमेकं सत्यम्, क्षणिकं च। तस्यैव विवर्तः प्रपञ्चस्सर्वोऽपि। अत एव विज्ञानातिरिक्तं सर्वं मिथ्यैवेति विज्ञानविवर्तवादस्य विवरणं (बु.स.20) भविष्यति। शब्दविवर्तवादः **भर्तृहरेः**। अयमपि अग्रे (बु.स.34) विचार्यते। ब्रह्मविवर्तवादः शाङ्कराणाम्। अयमपि पक्षः अग्रे (ना.स.33) विव्रियते॥

एवञ्चात्र वैशेषिकसंमतः आरंभवादः विमृश्यते। अत एवात्र 'आरभेरन्'पदप्रयोगः। मृदः पिण्डत्वावस्थानिवृत्तिपूर्वकघटत्वावस्थाप्राप्तिरेव घटस्योत्पत्तिरित्ययं परिणामवादः। अवयवद्वयसंयोगवशात् अतिरिक्तः अवयवी घटादिः पूर्वं असन् नूतनतया उत्पद्यते इति आरंभवादः। कार्यं यदि आकाशवत् सत्, तर्हि कस्योत्पत्तिः? यद्यसत्, तर्हि शशशृङ्गादिवदसतः कथमुत्पत्तिः? तर्हि शशशृङ्गमपि कदाचिदुत्पद्येत इति बौद्धैर्दूषिते, असदेव कार्यमुत्पद्यते। शशशृङ्गादिकं तु नासत्, किन्तु **अलीकम्**। न तत्तौल्यं घटादेः, दृश्यमानत्वात् इति वैशेषिकानामाशयः। तदेतदत्र दूष्यते—**कार्यमित्यादिना**। **सर्वतः**=सर्वदेशा-वच्छेदेन **संप्रयुक्ताः**=संयुक्ताः=**परमाणवः अधिकं**=अतिरिक्तम् अधिकपरिमाणविशिष्टं **कार्यं नैव आरभेरन्**=कदापि नोत्पादयेयुः॥

**अयं भावः**—प्रलयकाले निश्चलेषु सत्सु परमाणुषु, जीवादृष्टसहकृतेश्वरसिसृक्षावशात् परमाणुषु क्रिया जायते। ततः प्रथमं परमाणुद्वयसंयोगात् द्व्यणुकमुत्पद्यते। त्रिभिर्द्व्यणुकैः त्र्यणुकमुत्पद्यते। एव-मनेकानां त्र्यणुकानां परस्परसंयोगात् महती पृथिवी जायते। एवमेव जलतेजोवायवोऽपि भवन्ति इति तेषां

**बुद्धेस्त्वंशानपेक्षा स्फुरति विषयिता विश्रमस्त्वस्तु दृष्टे**
**नो चेत् आरम्भकांशप्रभृतिषु नियता दुर्निवाराः प्रसङ्गाः ॥ १८ ॥**

सृष्टिप्रक्रिया। अत्र दोषमाह—परमाणुद्वयसंयोगः कथं भवतीति वक्तव्यम्? परमाण्वोः जायमानः संयोगः तयोः कात्स्न्येन जायते, उत एकदेशावच्छेदेन? कात्स्न्येन यदि संयोगः, तदा द्व्यणुके परिमाणाधिक्यं न स्यात्। परिमाणे आधिक्यं नाम, तेन द्रव्येणाधिकदेशाक्रमणम्। अल्पो हि घटः महाघटापेक्षया अल्पम् आकाश(दिग्)देशं व्याप्य वर्तते; महाघटस्तु अल्पघटापेक्षया अधिकं देशं व्याप्य वर्तते। एवं केवलेन कपालेन यावानाकाशदेशः आक्रम्यते, तदपेक्षया अधिको देशः घटेन आक्रम्यते। अतः कपालापेक्षया घटः महान् भवति। एवञ्च प्रकृते परमाणुद्वयस्य परस्परसंयोगे एकपरमाण्वपेक्षया द्व्यणुकस्याधिकं परिमाणं=अधिकदेशाक्रमणं भवेत्। तच्च परमाण्वोः एकपार्श्वसंयोग एव भवेत्। अत एव द्व्यणुकं 'दीर्घ'पदेनाभिधीयते। यदि परमाण्वोः पार्श्वसंयोगो नास्ति, तर्हि सर्वांशेन संयोगो वाच्यः। तदा हि परमाण्वपेक्षया द्व्यणुकम् अधिकपरिमाणवन्न स्यात्, परमाणुद्वयेनापि एकस्यैव देशस्याक्रमणात्। अस्तु तर्हि एकस्मिन् परमाणौ एकदेशावच्छेदेनैव परमाणुद्वयसंयोग इति द्वितीयः कल्पः, स्पर्शवतोः द्रव्ययोः सप्रतिघत्वनियमेन घटाकाशयोरिव कात्स्न्येन्यन संयोगासंभवात् इति चेत्, तर्हि निरवयवे एकदेशः, अन्य-देशः इति विभागासंभवात् परमाणोः सावयवत्वप्रसङ्गः। तत्रेष्टापत्तावपसिद्धान्तः, अनवस्था च ॥

ननु निरवयवयोरपि परमाण्वोः प्राच्यादिदिग्विभागस्य सत्त्वात् तत्तद्दिगवच्छेदेनैव संयोगोऽस्तु इति चेत्, तत्राह—**दिक्संयोगेत्यादि। दिक्संयोगस्यापि ऐकदेश्यात्**=एकदेशावच्छेदेनैव वक्तव्यत्वात्, निरवयवे परमाणावेकदेशाभावादेव **दिक्कृतोऽपि अंशभेदः ते न घटते**। सिद्धान्ते दिशः अतिरिक्ततयानङ्गी-कारात् **'ते'** इत्युक्तिः ॥

ननु घटपटादिवस्तुद्वयविषयकम् एकं ज्ञानं यदा भवति, तत्र निरंशेऽपि एकस्मिन् ज्ञाने घटविषयकत्वं पटविषयकत्वं च प्रत्येकमेव वक्तव्यम्, अन्यथा परस्परसाङ्कर्यप्रसङ्गः। एवञ्च निरंशेऽपि भागभेदः दृश्यते किलेत्यत्राह—**बुद्धेस्त्वित्यादि। बुद्धेस्तु**=ज्ञानस्य तु **अंशानपेक्षा**=अंशभेदापेक्षामन्तरेण **विषयिता**=वस्तुद्वयविषयत्वं असंकीर्णं **स्फुरति**=प्रतीयते=अनुभवसिद्धम्। 'न हि दृष्टेऽनुपपन्नं नाम किञ्चित्' इति न्यायेनानुभवसिद्धं तु अपलपितुमशक्यम्। परमाणवस्त्वतीन्द्रियाः। तत्र नायं न्यायः प्रवर्तते। एतादृश-वैलक्षण्यसूचनार्थमेव **'तु'**शब्दः। इदमपि परमतानुसारेण। सिद्धान्ते तु ज्ञानस्य सावयवद्रव्यत्वेन दोषाभावात् नेयमाशङ्का। ननु भवतामपि अवयवधारायाः क्वचिद्विश्रान्तिर्वाच्या। यत्र विश्रान्तिः, स पदार्थः निरवयवो वक्तव्यः, अन्यथानवस्थाप्रसङ्गात्। ततश्च तत्र कथं अणुद्वयसंयोगः? इति चेत्तत्राह—**विश्रमस्त्वि-त्यादि**। सिद्धान्ते अतीन्द्रियपरमाणोरनङ्गीकारात्, दृष्टायां त्रुटावेव विश्रान्तेरङ्गीकारात् 'न हि दृष्टेऽनुपपन्नं नाम' इति परमाणुद्वयसंयोगादिः युज्यत एव। भवन्मतेऽपि **दृष्ट** एव एतस्मिन् **विश्रमः अस्तु**। तथा च अतीन्द्रियपरमाण्वसिद्धिः। ननु प्रत्यक्षे महत्त्वं कारणमित्यनुभवसिद्धम्। यदि त्र्यणुक एव परमाणुः स्यात्, तर्हि तत्र महत्त्वस्यावश्यकत्वात्, अणु-अणुतर-अणुतमशब्दानामर्थशून्यत्वं स्यात्किलेति चेत्, अणुत्वमहत्त्वादीना-

[परमाणुसाधनक्रमनिरासः]

19. **स्यात् भागानन्त्यसाम्ये परिमितिसमता सर्षपक्ष्माभृतोश्चेत्**
**मैवं भागेष्वनन्तेष्वपि समधिकता स्थौल्यहेतुर्गिरेः स्यात् ।**

मापेक्षिकत्वात्, महत्स्वेव तारतम्यमादाय तेषां पदानामर्थवत्त्वसंभवान्न कश्चिद्दोषः । ननु त्रुटेः चाक्षुषत्वमुभयसिद्धम् । चाक्षुषप्रत्यक्षं प्रति महत्त्वं कारणम् । ततश्च त्रुटेः महत्परिमाणवत्त्वात् परमाणुपदवाच्यत्वं कथं स्यात्। महत्त्वं हि घटादौ सावयव एव दृष्टम् । अतश्च 'त्रुटिः सावयवा, महत्त्वात्, घटवत्' इत्यनुमानेन त्रुटेः सावयत्वे सिद्धे, तत्र अवयवधारायाः विश्रान्तिः न भवत्येवेति चेत्, तत्राह— **नो चेदित्यादि** । **नो चेत्**=त्रुटावेव विश्रान्तिमनङ्गीकृत्य, महत्परिमाणवत्त्वात् तस्यास्सावयवत्वमुच्यते चेत्, **आरम्भकांशप्रभृतिषु=आरंभकाः**= जगदारंभकाः=जगदुपादानभूताः ये **अंशाः**=परमाणवः **तत्प्रभृतिषु**=तदादिष्वपि **नियताः**=नियमेन विद्यमानाः **प्रसङ्गाः**=तर्काः **दुर्निवाराः**=वारयितुमशक्याः । ततश्च परमाणूनामपि सावयवत्वं स्यात् ॥

**अयं भावः**— 'त्रुटिः सावयवा, महत्परिमाणवत्त्वात्' इत्यनुमानेन द्व्यणुकसिद्धिः, 'त्रुट्यवयवाः सावयवाः, महदारंभकत्वात्, कपालवत्' इत्यनुमानेन परमाणुसिद्धिः इति वैशेषिकैरुच्यते । एवं सति 'त्रुट्यवयवावयवाः सावयवाः, महदारंभकारंभकत्वात्, कापालिकावत्' इत्यनुमानेन त्रुट्यवयवभूतद्व्यणुकावयवाः परमाणवोऽपि कपालावयवभूतकापालिकदृष्टान्तेन सावयवाः स्युः । इष्टापत्तौ, कापालिकावयवलोष्टदृष्टान्तेन पुनस्तत्राप्यवयवसिद्धिरित्यनवस्था स्यात् । अतः त्रुटावेव विश्रान्तिर्वाच्येति परमाणूनामसिद्ध्या परमाणूनां जगदुपादानत्वं न प्रामाणिकमिति ॥

**अत्रेदमवधेयम्**—वैशेषिकोक्तपरमाणूपादानत्वनिराकरणात्, परमाणवो न सन्तीति वा, तेषामुपादानत्वं नास्तीति वा नार्थः । सांख्योक्तप्रकृत्युपादानत्वनिराकरणं यथा वा अब्रह्मात्मकप्रकृत्युपादानत्वनिराकरणे विश्राम्यति, ब्रह्मात्मकप्रकृतिपरिणामवादश्च संमत एव सिद्धान्ते, तथैव उपादानकारणपरंपरा न परमाणौ विश्राम्यति, किन्तु ततः पृष्ठतोऽपि बहुदूरं परमात्मपर्यन्तं गच्छतीति, तत्रापि सांख्यवत् केवलपरमाणूनामुपादानत्वं नास्ति, किन्तु ब्रह्मात्मकानामेवेति तदुक्तपरमाणुकल्पनप्रक्रिया न श्रुतिसंमतेति तात्पर्यमवगन्तव्यम् ॥

**वस्तुतस्तु**—इदानीन्तनभौतिकविज्ञानाभिवृद्धिदृष्ट्या इदं सर्वमपि न प्रतिष्ठितं भवति । अथापि तत्काले यावच्छक्यम्, तावदेवात्र प्रदर्शितम् । वेदान्तिनामासक्तिस्तु, लौकिकसर्वप्रमाणातीते परमात्मन्येव, इतरविषये नास्त्यधिकं नैर्भर्यमिति मन्तव्यम् ॥ १८ ॥

अवयवपरम्परायाः विश्रान्तिरावश्यकीत्यंशमपि निराकरोति— **स्याद्भागेत्यादिना** । प्रथमपादेन पूर्वपक्षमनुवदति । अवयवपरम्परायाः क्वचिद्विश्रान्त्यनुपगमे, **सर्षपक्ष्माभृतोः**=सर्षपस्य पर्वतस्य च **भागानन्त्यसाम्ये**=अवयवानन्त्यस्य समानत्वे प्राप्ते **परिमितिसमता**=परिमाणसाम्यं **स्यात्**। अयमाशयः— एकः पटः महान् भवति, अपरश्च अल्पो भवति । तत् कुतः? इति प्रश्ने, यस्य पटस्य कारणभूताः तन्तवः अल्पाः स पटः अल्पः, यस्य तु तन्तवो बहवः, स तु पटः महान् भवतीत्येव उत्तरं वक्तव्यम् । अवयवेयत्ताया अभावे इदं कथं वक्तुं शक्यम्? एवं परिमाणतारतम्ये अवयवतारतम्यस्यैव प्रयोजकत्वे सिद्धे,

**व्यक्त्यानन्त्येऽपि जात्योः परतदितरता, पक्षमासाद्यनन्तम्,**
**श्रौतोपादानसौक्ष्म्यं न भवदभिमतं तत्प्रथिम्नः श्रुतत्वात् ॥ १९ ॥**

यदि अवयवपरम्परायाः कुत्रापि विश्रान्तिर्न स्यात्, तदा सर्षपे मेर्वादिपर्वते वा अवयवतारतम्यस्य दुर्निरूपत्वे, तत्प्रयुक्तावयवितारतम्यस्यासंभवात् मेरुसर्षपयोरपि साम्यमेव स्यादिति । तदेतन्निराकरोति— **मैवमिति** । कुत इत्यत्राह— **भागेष्वित्यादि** । **भागेषु**=अवयवेषु **अनन्तेष्वपि**=संख्यातुमशक्येष्वपि **गिरेः**=मेर्वादिपर्वतस्य **समधिकता**=सामान्यरूपेण ज्ञायमानमवयवाधिक्यमेव **स्थौल्यहेतुः**=सर्षपापेक्षया स्थौल्यकारणं **स्यात्** । गणयितुमशक्यत्वेऽपि न्यूनाधिक्यभावः कथं ज्ञातुं शक्य इत्यत्र दृष्टान्तः— **व्यक्त्यानन्त्येऽपीत्यादि** । **व्यक्तीनाम्**=पृथिवीत्वाश्रयघटत्वाश्रयव्यक्तीनाम् **आनन्त्येऽपि**=असंख्यत्वेऽपि **जात्योः**=पृथिवीत्वघटत्वयोः **परतदितरता**=परत्वापरत्वे सर्वविदिते । पृथिवीत्वं परा जातिः, घटत्वं अपरा जातिरिति सर्वसंमतम् । तत्र पृथिवीत्वाश्रयाणां घटत्वाश्रयाणां च त्रैकालिकानां व्यक्तीनां गणनं न हि कस्यचिच्छक्यम् । अथापि पृथिवीत्वं परम्, घटत्वमपरमिति सर्वे यथा जानन्ति, तथैव मेरुसर्षपयोरपि तारतम्यं सर्वे ज्ञास्यन्ति । एवं **पक्षमासादि**= पक्षमाससंवत्सरादिकम् **अनन्तम्**=संख्यातुमशक्यम् । अथापि तारतम्यं सर्वविदितम् । अतः अवयवधाराया विश्रान्त्यभावेऽपि न कापि हानिः । ननु! पृथिवीत्वघटत्वादिजातीनां परापरभावः न व्यक्तिसंख्याप्रयुक्तः, किन्तु शब्देनैव प्रतीयमानव्याप्यव्यापकभावप्रयुक्तः । पृथिवीपदं हि घटपटकुड्यादिसाधारणम् । घटपदं हि न तथा, किन्तु घटमात्रपरम् । एवमर्थयोर्व्याप्यव्यापकभावदर्शनादेव जात्योः परत्वापरत्वनिर्णय इति दृष्टान्तो विषमः। किञ्च— मेरुसर्षपादिषु अनुभवसिद्धं तारतम्यं नाङ्गीक्रियत इति न । किन्तु तत्तारतम्यं किंकृतमिति कारणं पृच्छ्यते । अवयवधारायाः क्वचित् विश्रान्त्यभावे, अवयवेषु आधिक्यं न्यूनत्वं वा न हि निरूपयितुं शक्यमिति चेत्; अत्रोक्तं समाधानमनुपदमेव **विश्रमस्त्ववस्तु दृष्टे** इति । अतीन्द्रियाणामनुमानात् साधनं न संभवतीत्येवाचार्याशयः । ननु 'सर्वगतं सुसूक्ष्मम्' 'अणोरणीयान्' इत्यादिना अतिसूक्ष्मं श्रुतिसिद्धं कथं निराक्रियत इत्यत्राह— **श्रौतेत्यादि** । **श्रौतम्**=श्रुतिप्रसिद्धं यत् **उपादानसौक्ष्म्यम्**=जगदुपादानभूतस्य परस्य ब्रह्मणः सौक्ष्म्यम्, तत् **न भवदभिमतम्**=न भवत्संमतपरमाणुपरिमाणात्मकम्, किन्तु अत्यन्तदुर्ज्ञेयत्वरूपम्। कुतः? इत्यत्र हेतुः— **तत्प्रथिम्नः**=तस्य परब्रह्मणः महत्त्वस्य **श्रुतत्वात्**=तत्रैव श्रुतौ 'महतो महीयान्', 'विभुं सर्वगतम्' इति श्रवणात् । अतः परमाणुसद्भावे प्रमाणाभावात् परमाणुकारणतावादः न साधीयान् ॥

**इदमत्रावधेयम्**— पृथिवीत्वघटत्वयोः परापरजातित्वं तु व्यक्तीनामानन्त्येन प्रातिस्विकतया गृहीतुमशक्यत्वेऽपि, पदार्थविभागवेलायामेव, 'पृथिवी' व्यापकं वस्तु, 'घटः' तदपेक्षया व्याप्यं वस्त्विति ज्ञायते स्वतः । अतः पृथिवीत्वं व्यापकम्=अधिकदेशवृत्ति, घटत्वं व्याप्यम्=पृथिवीत्वापेक्षया न्यूनदेशवृत्ति इति ज्ञायत एव । एवं पक्षमासादिव्यवहारे, मासस्य पक्षद्वयात्मकत्वज्ञानस्य सर्वेषां सत्त्वात्, पक्षत्वं व्याप्यम्, मासत्वं तु तदपेक्षया व्यापकमित्यपि स्वतो ज्ञायत एव । कथं ज्ञायते? कालस्यातीन्द्रियत्वादिति चेत्, लोक एव प्रष्टव्यः । व्याप्यव्यापकभावस्तु शब्दानां शक्तिग्रहणेनैव ज्ञायते । अवसरे विचारयाम इममर्थम् । एवञ्च प्रकृतेऽपि व्याप्यव्यापकभावो लोकत एवावसीयते । मेरुसर्षपयोरपि तथैव अल्पत्वमहत्वे लोकत एवा-

[उपादानोपादेययोर्भेदनिरासः]

20. **कार्योपादानभेदे न कथमधिकता गौरवादेः स्वकार्यम्**
**नान्यत्वं नामसंख्याव्यवहृतिधिषणाकारकालादिभेदैः ।**

वसीयेताम्—इति चेत्, लोकतः कथमवसीयेत इत्येव पृच्छामः। प्रत्यक्षमेव नियामकमिति चेत्, तथा प्रत्यक्षं कथमुपपादनीयमित्येव प्रश्नः। घटयोर्द्वयोस्तारतम्ये दृष्टे हि, 'कथमिदं तारतम्यम्' इति प्रश्ने, अल्पावयवजन्यत्वम्, महावयवजन्यत्वमेव किल सर्वैः कारणमुच्यते। तद्वत् मेरोः अधिकावयवजन्यत्वम्, सर्षपस्य तु न्यूनावयवजन्यत्वञ्च महत्त्वाल्पत्वयोः कारणं वक्तव्यम्। यावच्चावयवधारायाः कुत्रचिन्न विश्रान्तिः, तावत्कथं वा इदमुपपादयितुं शक्यम्? अतोऽत्र नानुभवोपर्यक्षेपः, अनुभवकारणे विज्ञान एव प्रश्न इति मन्तव्यम्। आचार्यैस्तु अनुभवमात्रमादाय दूषणं प्रदर्शितं शिष्यश्रद्धावर्धनायेति मन्तव्यम्॥ १९॥

वैशेषिकसंमतमवयवातिरिक्तावयविवादमपि निराकरोति परिणामवाददार्ढ्याय—**कार्योपादाने**त्यादिना। **कार्योपादानभेदे**=**कार्यस्य**=पटादेः **उपादानस्य**=समवायिकारणस्य तन्त्वादेश्च **भेदे**=परस्परं भेदे सति, अवयविनः अवयवातिरिक्तत्वे इत्यर्थः। **गौरवादेः**=गुरुत्वादीनां **आधिक्यम्**=कार्ये द्विगुणत्वं **कथं न?** गुरुत्वस्यातीन्द्रियत्वेऽपि अनुमानात् तद्ज्ञानं भवेदेव। तत् कुतो न? ननु गुरुत्वं द्विगुणं स्यात्, अतीन्द्रियत्वान्न तदुपलब्धिरिति चेत्, तत्राह—**स्वकार्यम्**=गुरुत्वाधिक्यज्ञानम्, पतनाद्यतिशयो वा **कथं न?** वैशेषिकास्तु अवयवावयविनोरत्यन्तभेदवादिनः। एवं सति अवयविनि विद्यमाने, अवयवानामपि तत्र सत्त्वात्, अवयवेषु यावत् गुरुत्वं वर्तते, तावद्गुरुत्वस्यावयविन्यपि आवश्यकत्वात्, अवयवगुरुत्वम् अवयविगुरुत्वं चेति मिलित्वा द्विगुणगुरुत्वमवयविनि स्यात्। अस्तु का हानिरिति चेत्, द्विगुणं गुरुत्वमुपलभ्येत। गुरुत्वस्यातीन्द्रियत्वात् कथमुपलब्धिरापाद्यत इति चेत्; गुरुत्वकार्यस्य पतनादेः तुलाया अवनतेर्वा द्विगुणत्वप्रसङ्गः। तथाऽदर्शनात् अवयवातिरिक्तः अवयवी अप्रामाणिक एव। अत्र 'अधिकतः' इति पाठं केचित्कल्पयन्ति। तदानीमधिकपदस्याधिक्यार्थकत्वकल्पनाक्लेशः। एतदपेक्षया 'स्वकार्ये' इति पाठे 'स्वकार्ये गौरवादेः अधिकता कथं न?' इति वा, 'स्वकार्ये नामसंख्यादिभिः अन्यत्वं न' इति वा स्यात्॥

ननु कथमेवमुच्यते? तन्तुपटयोः कथं अभेदसंभवः? तर्हि वसनपटपदवत् तन्तुपटपदयोरपि पर्यायत्वप्रसङ्गः इत्याद्याशंक्य निराकरोति—**नान्यत्वमित्यादि**। **नामसंख्याव्यवहृतिधिषणाकारकालादिभेदैः** तन्तुपटयोः **अन्यत्वं**=भेदः **न** इत्यन्वयः। नाम-संख्या-व्यवहृति-धिषणा-आकार-कालादिपदानां द्वन्द्वः। अनन्तरं भेदपदेन ततुरुषः। 'द्वन्द्वान्ते श्रूयमाणं प्रत्येकं संबध्यते', इति न्यायेन भेदपदस्य नामादिपदैः संबन्धात् नामभेदः, संख्याभेदः, व्यवहृतिभेदः, धिषणाभेदः=बुद्धिभेदः, आकारभेदः, कालभेदश्च। नामभेदः—कार्यस्य पट इति नाम, कारणस्य तु तन्तव इति। संख्याभेदः—पट एकः, तन्तवस्तु बहवः। व्यवहारभेदः—पटेनाच्छादनादिः, तन्तुभिः बन्धनादिः। बुद्धिभेदः—पट इति बुद्धिरन्या, अन्या च तन्तव इति। आकारभेदः—पटस्याकारश्चतुरश्रत्वादिः, तन्तूनां दीर्घ आकारः। कालभेदः—पूर्वकाले तन्तवः, अनन्तरकाले पटः। एभिः हेतुभिः उभयोः भिन्नत्वं न। 'कालादि' इत्यत्र आदिपदेन कारणभेदः

**द्रव्याभेदेऽप्यवस्थान्तरत इह तु ते पत्रताटङ्कवत् स्युः**
**नो चेदंशांशिनोःस्यात् प्रतिहतिरुभयोः स्पर्शवत्त्वाविशेषात् ॥ २० ॥**

गृह्यते । पटस्य कारणानि तन्तवः, तन्तोश्च कारणं कार्पासः । एवमनेकैः कारणैरुभयोर्भेदेऽनिवार्ये सति द्विगुणगुरुत्वकार्यं प्रति अवयविगुरुत्वस्य प्रतिबन्धकत्वकल्पनान्न द्विगुणगुरुत्वकार्योत्पत्तिरिति चेत्, एवं सत्यपि भेदाभावे हेतुमाह—**द्रव्याभेदेऽपीत्यादिना । द्रव्ययोः**=तन्तुपटयोः **अभेदेऽपि ते**=भेदाभावेऽपि नामभेदादयः **पत्रताटङ्कवत्**=तालपत्रकर्णाभरणवत् **इह अवस्थान्तरतः**=अवस्थाभेदेनैव **स्युः** । ग्रामीणाः किल स्त्रियः तालपत्रं वर्तुलाकारेण परिवर्त्य कर्णे आभरणवत् धरन्ति, विश्लेषणे तालपत्रमेव । 'धान्यराशिः' इत्यादावप्येवमेव । अवस्थाभेदमादायैव नामभेदादीनाम् उपपत्त्या अवयवातिरिक्तः अवयवी नास्त्येवेति । असंयुक्ताः तन्तवः अवयवाः इत्युच्यन्ते । संयोगविशेषविशिष्टास्तन्तवः पट इत्युच्यन्ते । सुसूक्ष्ममीक्षणे तन्तवः, परस्परं विलक्षणसंयोगश्चेत्युभयातिरिक्तं न हि किञ्चिदुपलभ्यते । असमवायिकारणत्वेन वैशेषिकैरुच्यमानावयवद्वयसंयोगविशिष्टा अवयवा एव पट इत्युच्यन्त इति नातिरिक्तावयविनः कल्पना युक्ता । अत एवावयविगुरुत्वस्य प्रतिबन्धकत्वकल्पनागौरवप्रसङ्गोऽपि न । सांख्यसंमतसत्कार्यवादात् सिद्धान्तसंमतसत्कार्यवादस्यायमेव विशेषः । सांख्याः घटत्वाद्यवस्थानामपि पूर्वं सत्त्वमाहुः । सिद्धान्ते तु पूर्वमसतः अवयवसंयोगस्यानन्तरमेव जननात्, अवस्थानामागन्तुकत्वमेव । अधिकं तु 24 श्लोके व्यक्तीभविष्यति । एवमनङ्गीकारे बाधकमप्याह—**नो चेदित्यादिना** । 'न' इत्यनेन समानार्थकमव्ययम् **'नो'** इति । एवं यदि नाङ्गीक्रियते, तदा **अंशांशिनोः**=अवयवावयविनोः **उभयोः स्पर्शवत्त्वाविशेषात्**=स्पर्शवत्त्वस्य समानत्वात् **प्रतिहतिः**=परस्परं प्रतिघातः **स्यात्**=दुर्वार एव स्यात् । स्पर्शवन्ति द्रव्याणि नैकदेशावच्छेदेन स्थातुं प्रभवन्ति । घटवति भूतले स्पर्शवत् अन्यत् द्रव्यं कथं तिष्ठेत्? प्रकृते तन्तवोऽपि स्पर्शवद्द्रव्याणि । पटोऽपि स्पर्शवद्द्रव्यम् । द्वयं कथमेकदेशावच्छेदेन तिष्ठेत्? 'स्पर्शवतां सप्रतिघत्वनियमात्' । अतः अवयवापेक्षयावयवी अतिरिक्तो नास्त्येव । आकाशकालादिविभुद्रव्याणामेकदेशावच्छेदेनावस्थानात् स्पर्शवत्त्वविशेषणम् । ननु अवयवावयविनोरयुतसिद्धत्वात्, युतसिद्धानां स्पर्शवतामेव सप्रतिघत्वनियम इति चेत्, अवयविनोऽतिरिक्तत्वसिद्धावेव तथा कल्पनसंभवात्, तस्यैवाभावात् न कल्पनावकाशः ॥

**वस्तुतस्तु**—न्यायशास्त्रस्य 'लोकायतम्' इत्येव प्राचीनं नाम । चार्वाकदर्शनं पण्डितैरनन्तरं कल्पितम् । जीवसर इदं विमृश्यते । अत एव 'प्रतीतिशरणा नैयायिकाः' इति न्यायः प्रवृत्तः । लोकप्रतीतिदृष्ट्या तु अवयवातिरिक्तोऽवयव्यावश्यकः । नो चेल्लोके एकत्वव्यवहारः कुत्रापि समर्थयितुं न शक्यः। राशिसेनावनादौ नैयायिकानामपि एकत्वव्यवहारः संमत एव । परं तु स व्यवहार औपचारिक इत्येव सर्वसंमतम् । कुत्रचिद्व्यवहारः औपचारिको यदि वक्तव्यः, तदा कुत्रचित्स व्यवहारो मुख्य एषितव्यः। मुख्यार्थमन्तरा, औपचारिकार्थकल्पना कुत्रापि न संभवतीत्येव सर्वतीर्थकाराणामाशयः (ना.स.4) । एकत्वव्यवहारस्य मुख्यत्वं नाम अनौपाधिकं वस्तुगतमेकत्वमेव । एवम् एकत्वं यत्र वस्तुनि नास्ति, तत्र बुद्धिकल्पितमुपाधिमादायौपचारिकमेकत्वं वक्तव्यं भवति । लोके कुत्र वा वस्तुनि, मुख्यं एकत्वं गृहीतम्?

[उपादानोपादेययोरभेदे स्वारस्यम्]

21. इत्थं वृत्त्यादिखेदो न भवति, न च नः कल्पनागौरवं स्यात्
वस्त्रे दीर्घैकतन्तुभ्रमणविरचिते वस्त्रधीर्नापि बाध्या।

आकाशादयस्त्वतीन्द्रियाः। तद्गतमेकत्वमप्यतीन्द्रियम्। आत्मन्येकत्वं गृह्यते किल! न हि कस्यचित् 'अहमेको वा, द्वौ वा?' इति संशयो जायते। अतस्तत्रैकत्वं मुख्यं गृह्यत एवेति चेत्, एतदपि न। 'अहम्' इति क उच्यत इदानीम्? शरीरमेव वा, शरीरातिरिक्तं वा वस्त्विदानीमहमर्थः? शरीरं चेत्, तस्य सङ्घातरूपत्वात्, न मुख्यमेकत्वं भवेत्। शरीरातिरिक्तस्त्वात्मा नेदानीं प्रतीयेतेति जीवसरे निरूप्यते। ननु सेनावनादावतिरिक्तावयवी नास्ति, घटपटादौ तु वर्तत इत्यत्र विनिगमकं किमिति चेत्, 'घटं कर्तुमारभते' 'पटं कर्तुमारभते' इति स्वरसो व्यवहारो यत्र, तत्रातिरिक्तोऽवयवी, नान्यत्र। अत एवैतस्यारंभवाद इति नाम। अतः 'एकः पटः, तन्तवस्तु बहवः' इति प्रतीतिर्मुख्यैवेति वक्तव्यम्। अतो लोकव्यवहार-दृष्ट्यावयव्यतिरिच्यते। 'घटं कर्तुमारभते' 'पटं कर्तुमारभते' इत्यबाधितव्यवहारदर्शनात् आरंभवादादीनां विषयभेदोऽस्ति इत्यादिकं समये भविष्यति। एवमतिरिक्तत्वे आवश्यके सति, इतरत्सर्वं तदनुगुणं नेयम्। वेदान्तिनां त्वान्तरे वस्तुन्येव नैर्भयम्। अथाप्याचार्यैः कुत एवं निर्णीतमिति चेत्, समय इदमपि स्पष्टी-भविष्यति। सद्यस्तु 'न हि निन्दा' न्यायोऽनुसन्धीयताम्, स्वपक्षे शिष्याणां श्रद्धातिशयाधानायेति। अथवा परिणामवाददृष्ट्येत्यवगम्यताम्॥ २०॥

अवयवातिरिक्तावयव्यनङ्गीकारे लाघवातिशयं प्रदर्शयति—**इत्थमित्यादिना**। **इत्थं**=एवं अतिरिक्ता-वयव्यनङ्गीकारात्, **वृत्त्यादिखेदः**=बौद्धैरभिहितः वृत्तिविकल्पप्रयुक्तःक्लेशः **न भवति** एतत्सिद्धान्ते। बौद्धाः खलु सङ्घातवादिनः। परमाणुसङ्घात एव अवयवीत्युच्यते, यथा वृक्षसङ्घातो वनमित्युच्यते। अतिरिक्तावयविवादम् एवं दूषयन्ति—कपालद्वयजन्यः घटः अतिरिक्त इति खलूच्यते। स घटः कपालद्वये प्रत्येकं वर्तते, उत मिलितयोरेव? प्रथमकल्पे, प्रत्येकं कात्स्न्येन वर्तते, उत एकदेशतः? कात्स्न्येन वर्तते इति पक्षे, एककपालेऽपि घटप्रतीतिः स्यात्, कात्स्न्येन वर्तमानत्वात्। प्रत्येकं एकदेशत एव वर्तते, अतः प्रत्येकं न घटप्रतीतिरिति चेत्, तर्हि घटरूपोऽवयव्यपि पुनः सावयवः स्यात्। अवयवैर्जातोऽवयवी अखण्ड एक इति खलु भवत्सिद्धान्तः। प्रत्येकं न वर्तते, किन्तु कपालयोर्मिलितयोरेव वर्तत इति द्वितीयकल्पोऽपि न युक्तः; प्रत्येकमसत्त्वे, मिलितयोरपि सत्त्वस्यासंभवात्। अतः अतिरिक्तावयव्यङ्गीकारे वृत्तिविकल्पो दुर्वारः इति। अयमाक्षेपः सिद्धान्ते न लगति॥

'वृत्त्यादि' इत्यादिपदेन उत्पत्तेः परिग्रहः। सहस्रतन्तुकपटोत्पत्तिस्थले, आरंभे द्वित्रतन्तूनां संयोगे जाते तदनुगुणः अल्पः पट उत्पद्यते, न वा? यदि उत्पद्यते, तदा तदनन्तरं अल्पपटतन्तुसंयोग एव महापटं प्रति कारणं वक्तव्यम्, न तु तन्तुद्वयसंयोगः। उत्तरतन्तुसंयोगकाले पूर्वस्य अल्पपटस्य नाशात् तन्तुद्वयसंयोग एव तदानीं भवतीति यदि, तर्हि प्रतितन्तुसंयोगं नूतनाल्पपटोत्पत्तिः, पूर्वतनाल्पपटनाशः पटान्तरोत्पत्तिश्चेति कल्पनीयं स्यात्। तथा च गौरवमनन्तम्। यदि नोत्पद्यते इति द्वितीयः कल्पः, तदा असमवायिकारणे

**देशाधिक्यं समेतेष्वणुषु, न हि ततः स्थूलधीबाधशङ्का**
**संसर्गादेर्विशेषादवयविपरिषद्राशिवन्यादिवादः ॥ २१ ॥**

तन्तुद्वयसंयोगे जातेऽपि पटः कुतो नोत्पद्यत इत्यत्र हेतुर्वक्तव्यः । न चान्तिमतन्तुसंयोगे जाते, तदैवावयवपूर्त्या पटः उत्पद्यते, न तु पूर्वमिति वाच्यम्; एवं तर्हि अन्तिमतन्तुसंयोगात्पूर्वं परिदृश्यमानस्य नाम किम्? 'पट' इत्येव किल सर्वे वदन्ति, न तु 'तन्तव इमे' इति । अतः द्वितीयोऽपि न साधीयान् ॥

एवं संबन्धानुपपत्तिरपि । अवयवावयविनोरत्यन्तं भेदे हि तयोः संबन्धः कः? न तावत्संयोगः; अपसिद्धान्तात्, अदर्शनाच्च । नापि समवायः, असिद्धेः, 'द्रव्ययोस्संयोगः', इति नियमभङ्गश्च । अवयवावयविभावरहितयोर्द्रव्ययोरेव संयोग इति कल्पने च गौरवम् । अतस्तयोर्भेदे संबन्धो दुरुपपादः । असंबन्धे तु द्वयं प्रत्येकमुपलभ्येत । 'अवयवी' इति मतुबर्थप्रत्ययोऽपि न स्यात्, तस्य संबन्धार्थकत्वात् । एवञ्च वृत्त्यादिक्लेशः अतिरिक्तावयविवादे दुष्परिहरः । अत एव **नः**=अस्माकं अतिरिक्तावयव्यनङ्गीकारात् **कल्पनागौरवं च**=पूर्वोक्तरीत्या कल्पनाप्रयुक्तगौरवमपि **न भवति** ॥

अपि च, **दीर्घैकतन्तुभ्रमणविरचिते**=**दीर्घस्य एकस्यैव तन्तोः भ्रमणेन**=पुनः पुनः परिवर्तनेन **विरचिते वस्त्रे वस्त्रधीः**='इदं वस्त्रम्' इत्यनुभवोऽपि **न बाध्या**=बाधार्हा न भवति । एकस्यापि तन्तोः पटरूपेण परिणामात् न बाधः । अतिरिक्तावयविवादे तु तन्तुद्वयसंयोगरूपासमवायिकारणाभावात् न पटोत्पत्तिसंभव इति पटबुद्धिः बाधिता भवेत् । ननु सिद्धान्ते वा कथमत्र निर्वाहः? अतिरिक्तावयव्यभावेऽपि विलक्षणसंयोगविशिष्टानामवयवानां पटपदार्थत्वेन, प्रकृते अवयवद्वयसंयोगाभावात् । न चैकस्यैव तन्तोः परिवर्तनदशायां तादृशविलक्षणसंयोगजननात् नानुपपत्तिरिति वाच्यम्, अस्य समाधानस्य नैयायिकमतेऽप्यनपायादिति चेत्,; सत्यम् । एतादृशदूषणानामुक्तिदूषणमात्ररूपत्वेन न वस्तुनिष्ठत्वमिति, शिष्यबुद्धिवैशद्यार्थत्वं ज्ञेयम् ॥

ननु अवयवापेक्षया अवयवी महान् भवेदेव, अवयवास्तु तदपेक्षया अल्पा एव । महत्त्वं नामाधिकदेशव्याप्तिः । अतश्च महत्त्वाश्रयोऽवयवी अल्पत्वाश्रयावयवेभ्यो भिन्न एव स्यात् । एवञ्च परिमाणाधिक्ये उभयोः कथमभेदः? इत्यत्राह—**देशेत्यादि** । अवयवानां प्रत्येकमल्पत्वेऽपि **समेतेषु**=एकत्र संहतेषु **अणुषु देशाधिक्यम्**=परिमाणाधिक्यकार्यं अधिकदेशव्याप्तिरूपं युज्यत एव । अल्पो नाम न्यूनदेशं व्याप्य वर्तमानः । महान् नाम तदपेक्षया अधिकं देशं व्याप्य वर्तमानः । तच्चावयविनि अवयवसमुदायरूपे सत्यपि समुदायेनाधिकदेशव्याप्त्या राश्यादाविव युज्यत एव । **ततः**=तत एवावयविनि **स्थूलधीबाधशङ्का न हि**=अवयविनि महत्परिमाणवत्त्वबुद्धेः बाधशङ्का न भवत्येव, अल्पो धान्यराशिः, महान् धान्यराशिरितिवत् ॥

ननु यद्यवयवसमुदाय एवावयवी, तदा तन्तुराशिष्वपि पटबुद्धिः स्यात् । मृत्पिण्डेऽपि अवयवबहुत्वसत्त्वात् घटबुद्धिः स्यादित्यत्राह—**संसर्गादेरित्यादि** । यथाकथञ्चित् तन्तुसंयोगः न पटव्यवहारहेतुः, किन्तु पटोत्पत्तिहेतुभूतः विलक्षणः तन्तुसंयोग एव । तन्तुराशिषु परस्परं तन्तूनां संयोगे सत्यपि न हि पटः

[उपादानोपादेययोरभेदे प्रमाणम्]

22. **द्रव्यैक्यं प्रत्यभिज्ञा प्रथयति परिमित्यन्तरेऽन्याप्रतीतेः**
**अंशूत्कर्षक्षयादिक्षममपि च ततो राशिवत् स्थूलमेकम् ।**

उत्पद्यते, किन्तु ओतप्रोततया विलक्षणतन्तुसंयोगे सत्येव । इदं तु वैशेषिकानामपि समानम् । स एव विलक्षणस्संयोगः पटव्यवहारहेतुः । केवलतन्त्वपेक्षया विलक्षणसंयोगादिविशिष्टाः तन्तवः=अवस्थाविशेषमापन्नाः तन्तव एव पट इत्युच्यन्ते । अतः **संसर्गादेः विशेषात्**=वैशेषिकमते असमवायिकारणतया अभिमतात् विलक्षणात् अवयवसंयोगविशेषादेव **अवयविपरिषद्राशिवन्यादिवादः**=दृष्टान्तदार्ष्टान्तिकयोस्समुच्चित्य कथनम् । अवयवी दार्ष्टान्तिकः, इतरे दृष्टान्ताः । **परिषत्**=सभा, **राशिः**, **वन्या**=वनसमूहः, आदिपदेन मालादिग्रहणम् । एषु अतिरिक्तः अवयवी तैरपि नाङ्गीक्रियते । संयोगविशेषविशिष्टानि कुसुमान्येव माला । एवमेव घटपटादावपि कुतो न स्यात् । तथा च पूर्वं तादृशविलक्षणसंयोगस्याभावात्, कारकव्यापारेण तादृशविलक्षणसंयोगस्य जननात् न कारकव्यापारवैयर्थ्यम् । अत एवावस्थाभेदोऽपि । कारणावस्थायां हि तादृशविलक्षणसंयोगो न वर्तते; कार्यावस्थायां तु कारकव्यापारैर्जायते । अतः कारणसमुदायमात्रं न कार्यम्, किन्तु संयोगरूपावस्थाविशेषविशिष्टानि उपादानकारणानि कार्यं भवति । अत एव तादृशसंयोगविशिष्टत्वेन कार्यस्यापूर्वत्वमप्युपपद्यते । एतावतैवोपपत्तौ अवयवातिरिक्तोऽवयवी नास्त्येव ॥

नन्वेवं सति **सुभगाभिक्षुकन्याया**वतारः । विलक्षणावयवसंयोगानां पूर्वमसत्त्वात् असत्कार्यवादः कथं खण्ड्यते? अवस्थानां पूर्वमसत्त्वेऽपि तदाश्रयस्य द्रव्यस्य सत्त्वात् सत्कार्यवाद एवेत्युत्तरं तु **'आम्रान् पृष्टः कोविदारानाचष्टे'**, इतिवत्संवृत्तम् । द्रव्यमादाय यदि सत्कार्यवादः, तर्ह्यवस्थामादायासत्कार्यवादोऽप्यभ्युपेय एवेति चेत्, अवस्थाया नियमेन द्रव्याश्रितत्वात् द्रव्यस्यैव प्राधान्यात् सत्कार्यवाद एव । अवस्थाविशिष्टरूपेण द्रव्यमसदेवेति चेत्, सत्यम् । अत एवोक्तमसकृत्, न वयं सांख्यसंमतसत्कार्यवादिनः, नापि वैशेषिकसंमतासत्कार्यवादिनः, किन्तु मध्यस्थपरिणामवादिन इति ॥ २१ ॥

अवयवातिरिक्तावयविवादे बाधकान्युपन्यस्य, उभयोरनतिरेके साधकप्रमाणमाह—**द्रव्यैक्यमित्यादिना**। **परिमित्यन्तरे**=परिमाणभेदे सत्यपि **अन्याप्रतीतेः**=अतिरिक्तपदार्थस्याप्रतीतेः **प्रत्यभिज्ञा**= 'तदेवेदम्' इति प्रत्यभिज्ञा **द्रव्यैक्यम्**=उपादानोपादेयद्रव्ययोः अभेदम् **प्रथयति**=प्रकटयति । पत्रताटङ्कादौ आकुञ्चनप्रसारणादिना न्यूनाधिकदेशव्याप्तिरूपपरिमाणभेददर्शनेऽपि 'तदेवेदम्' इति ऐक्यप्रत्यभिज्ञायाः सर्वसंमतत्वात् उपादानोपादेययोः अत्यन्तं भेदो नास्त्येव । अवस्थाविशिष्टवेषेण एकमेव द्रव्यम् 'उपादानम्', 'उपादेयम्' इति भिन्नतया व्यपदिश्यते । मृत्पिण्डः उपादानम्, घटः उपादेय इत्यत्र हि पिण्डत्वावस्थाविशिष्टा मृत् उपादानम्, घटत्वावस्थाविशिष्टा मृत् उपादेयेत्यर्थः । एतदपेक्षयातिरिक्तं किं वर्तते? अतः अवस्थाभेदमात्रम्, न तु द्रव्यभेदः ॥

नन्वेवं यदि उपादानोपादेययोरैक्यमङ्गीक्रियते, तर्हि अशुद्धैर्ग्रामसारैः सस्यादेः पोषणात्, तत्र जातानां तण्डुलादीनां तादृशग्रामसारपरिणामभूतानां तदभिन्नानां भक्षणात् शिष्टानां प्रायश्चित्तीयता स्यात् । अथ

सांख्यवत् सिद्धान्ते उपादानोपादेययोरत्यन्ताभेदानङ्गीकारात् न दोष इतिचेत्; एवं तृप्यन्तं छान्दसं त्वां किं ब्रूमः? सांख्यवद्दोषो माअस्तु। अन्यादृशो दोषोऽस्तीति प्रायश्चित्तीयता कथं वार्यते? अतः सत्कार्यवादादसत्कार्यवाद एव धर्मशास्त्रानुगुण इति चेत्—न—शब्दपरिवर्तनमात्रेण प्रत्यक्षतो दृश्यमानं ग्रामसारैः पोषणं वैज्ञानिकं कथमपगच्छेत्? परन्त्वत्रायमस्ति विशेषः—मृदः घटाद्यात्मना परिणामः प्रत्यक्षदृष्टः। 'मृदयं घटः' इति प्रत्यभिज्ञापि सर्वानुभवसिद्धा। सस्यादिपरिणामस्थले नैतादृशः परिणामः। स्वपोषणाय दत्तं गोमयादिग्रामसारं स्वपादैः चूषन्तः, स्वस्वरूपानुगुणं तं ग्रामसारमद्भुतरीत्या परिवर्तयन्तः रूपरसगन्धान् विचित्रान् प्रदर्शयन्तः कीदृशमिन्द्रजालं सस्यादिषु वर्तमाना जीवाः कुर्वन्तीति स्मारं स्मारं मूकैर्भवितव्यं सर्वैः। ग्रामसारपरिणामभूतमेव विविधसस्यानां विविधपुष्पफलादिकमिति वैज्ञानिकोऽयं विषयः केन वानुन्मत्तेनापलपितुं शक्यः। परन्तु तत्र वैज्ञानिकोऽपि सत्यांशः न द्रव्यैक्यप्रत्यभिज्ञां लेशतोऽपि जनयतीत्याश्चर्यमेतत्। परन्तु जानन्ति विज्ञानिनः। एवमेव ब्रह्मणः विविधविचित्रशक्तिपूर्णस्य परिणामरूपमपीदं जगत्, न तथा ज्ञायते, प्रत्यभिज्ञायते वा चर्मचक्षुष्कैः। ज्ञानविज्ञानसंपन्नास्तु 'सर्वं खल्विदं ब्रह्म' (छां.3-14-1) इति जानन्तः प्रत्यभिजानन्तश्च नन्दन्ति। तादृशसर्वात्मकब्रह्मदर्शिनि देहस्मरणादिकं किं भवेत्? एतादृशं विलक्षणं परिणाममेव 'विवर्तम्' आतस्थुः श्रीशङ्कराचार्या इति समये स्थाप्यते। अतः सस्यफलादौ ऐक्यप्रत्यभिज्ञाया अभावात् न प्रायश्चित्तादिप्रसङ्गः॥

ननु प्रत्यभिज्ञाया अभावेऽपि वस्तुनोरैक्यात् प्रत्यवायोऽपरिहार्य एव किलेति चेत्; मृदः घटरूपेण परिणामापेक्षया ग्रामसाराणां पुष्पफलादिरूपेण परिणामस्यात्यन्तविलक्षणत्वान्न दोषलेशः। तत्तत्सस्यादिषु वर्तमानो हि जीवः चैतन्यस्वरूपः शब्दस्पर्शरूपरसगन्धान् अपूर्वतया परिवर्त्त्य सर्वं पवित्रीकृत्यैव परिणमयति। अन्यथा हि रथ्याजलानां गङ्गायां मेलनेन गङ्गाया अपि पावनत्वं न स्यात्। एतदपेक्षयापि ग्रामसाराणां परिणामोऽत्यन्तं विलक्षणोऽत्यन्तं विस्मयकारीति विवेकिनामत्याश्चर्यावहम्। तावता परिणामो नास्तीत्यसत्कार्यवादस्तु विज्ञानविरुद्धः। मनस्समाधानार्थमुच्यते यदि, तर्हि समाधत्स्व कथञ्चित्। अन्ततः—किं न स्मर्यते 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति। अत एतादृशविवर्तस्थले न कश्चन प्रत्यवायः। तावता वस्तुतत्त्वं कथमन्यथा भवेत्? भोजनकाले तु भगवद्व्यतिरिक्तस्मरणं निषिद्धमित्यपि स्मर्तव्यम्। एवं सत्यपि भोजनसमये ग्रामसारस्मरणं कस्यचिद्दौर्भाग्यशालिनो यदि भवेत्, तदा भगवद्वैभवम् एतादृशेन्द्रजालरूपं स्मृत्वा पापं क्षपितव्यम्, न शक्यं चेदुपोषितव्यम्॥

ननु श्रुतौ 'यथा सौम्य' इत्यादिना मृत्कार्यदृष्टान्त एव प्रदर्शितः, न तु सस्यादिदृष्टान्त इति चेत्, अस्य वैज्ञानिकत्वेन सर्वैर्ज्ञातुमशक्यत्वात्प्रसिद्धो दृष्टान्तः प्रादर्शि। मृन्निर्मितं गजाश्वदेवतामूर्त्यादिकमेव वा दृष्टान्तीक्रियताम्। मृदा निर्मितमपि गजादिकं पश्यन्तः, 'गजोऽयं अत्यद्भुतो वर्तते' इत्येव वदन्ति। देवप्रतिमां पश्यन्तश्च दिव्यं देवं पश्यन्ति पुरतः, न तु मृदम्। मृदं पश्यतां तत्र देवो न स्यात्। देवं पश्यतां तत्र मृन्न स्यात्। 'पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्' इत्यादिश्रुत्या अन्नादिपरिणामा अपि पृथिव्या एव। किं बहुना! वेदान्तः अन्नपदं पृथिवीपर्यायं ब्रवीतीति 'ता अन्नमसृजन्त' इत्यादौ संप्रतिपन्नम्॥

किं बहुना! भुक्तमन्नं रसरक्तमांसमेदोमज्जास्थिरूपेण क्रमेण परिणमत इति प्रसिद्धम्। मातुश्शरीरे मातुःरक्तं क्षीररूपेण परिणमते । गोरक्तं क्षीररूपेण परिणमते । द्वयममृततुल्यमिति शास्त्रम् । नो चेत् स्तन्यपानं रक्तपानमेव भवेदिति महान् प्रत्यवायःस्यात् । तत्राप्यसत्कार्यवाद एवेति चेत्, तत् क्षीरं कुत आगतम्? किमाकाशादिति वक्तव्यम् । ईश्वर एव सर्वत्र सर्वं करोतीति चेत्, करोत्वीश्वरः । उपादानं किम्? किं वस्तु किं रूपं करोति? अतोऽसत्कार्यवाद इति संकेतमात्रात् नात्मरक्षणं भविष्यति । परिणामवादस्तु वैज्ञानिकः मनस्तृप्त्यर्थं तथाङ्गीकुर्म इति चेत्, अङ्गीक्रियतामित्युक्तमेव ॥

महद्रहस्यमत्रैव ह्यस्ति किञ्चिद्विचिन्त्यताम् । एतावतापि कालेन केनाप्यवहितं न हि ॥
कथमेवमभूत् नैव ज्ञातुं केनापि शक्यते । मायां पृच्छ, न चेत्कालरूपिणं तं स्वयं प्रभुम् ॥

**इदमत्र तत्त्वम्**—परिणामस्थले एवैक्यप्रत्यभिज्ञा । विवर्तस्थले तु द्रव्यैक्यं विज्ञानमात्रगम्यम्, न प्रत्यक्षगम्यम् । ग्रामसारेण वर्धितानां सस्यवृक्षलतादीनां धान्यफलपुष्पादीनां तत्परिणामरूपत्वं को वा विश्वसेत् विज्ञानिनमृते? 'अग्नेरापः' इति वदति श्रुतिः । 'कारणगुणाः कार्ये संक्रामन्ति' इति न्यायः कुत्र गतः? कुतो गतः? अत्रैवास्ति सृष्टेः रहस्यं सर्वम् । एतदपरिशीलनादेव पण्डितानां कलहो नाद्यापि शान्तः । कुत एवमिति चेत्, मायां पृच्छ, अथवा तत्स्वामिनं भगवन्तं पृच्छ । तथा च कार्ये कारणप्रत्यभिज्ञायां परिणामः, अप्रत्यभिज्ञायां तु विवर्त इत्येव युक्तम् । अधिकं पश्चात् ॥

सुसूक्ष्मं सृष्टिविज्ञानं परिशीलयताम् 'आराममस्य पश्यति न तं पश्यति कश्चन' (बृ.6-3-14) इति सृष्टिकर्तुर्वैभवं वैशिष्टयं च सर्वं ज्ञायेत । अत्र 'अस्य' इत्यनेन पूर्वं तत्रैव 'स हि कर्ता' इति प्रस्तुतः परमात्मा ग्राह्यः, न तु जीवः, अर्थविरोधात् । परमात्मनोऽघटितघटनासामर्थ्यस्यान्यत्किमपेक्षितं साक्ष्यम् 'अग्नेरापः' इत्येतदपेक्षया । अग्नेरपां परिणामरूपता कथं वा मानवबुद्ध्या प्रत्यभिज्ञातुं शक्यः? अतस्सृष्टि-विज्ञानं परिणामविशेषरूपविवर्तरूपमेव । इदमेव न विलक्षणत्वाद्यधिकरणानां सर्वेषामपि विषयः । अत एव जगदिदं ज्ञानिनां दृष्ट्या ब्रह्मस्वरूपम्, आरामरूपं च । इतरेषां तु विज्ञानदृष्ट्या ब्रह्मस्वरूपम्, अज्ञानिनां दृष्ट्या तु केवलजडस्वरूपम् ॥

पूर्वग्रहादिकं त्यक्त्वा चिन्त्यतां सत्यमीदृशम् । सत्यैकनिष्ठास्सन्तोऽत्र प्रमाणं स्युरमत्सराः ॥
वर्धयित्वा बहून् शब्दान् केशाकेशि विधाय च । लाभः को वाऽऽप्त इति च चिन्त्यतामात्मसाक्षिकम्॥
सर्वज्ञा अपि गुरवः सूचनान्मायिनो ध्रुवम् । नैव प्राचीकशन् ते हीत्येवं मन्यामहे वयम् ॥
कालेनैवोत्तरं देयम्, तदधीनाः किलेतरे । स चागतश्च कालोऽयं अद्य दैवं वदत्यहो ॥

अतिरिक्तावयव्यनङ्गीकारे तात्त्विकं लाघवमाह—**अंशूत्कर्षेत्यादि** । अंशुशब्दः अंशपर्यायः । **अंशवः**=अवयवाः । तेषां **उत्कर्षः, क्षयादिश्च**=आधिक्यन्यूनत्वे । तयोः **क्षमम्**=योग्यम् । **ततः**=अति-रिक्तावयव्यभावादेव **स्थूलम् एकम्**=अवयविपदवाच्यम् **राशिवत्**=धान्यराश्यादाविव **अंशूत्कर्षक्षयादिक्षम-मपि च** भवति । अतिरिक्तावयविवादे हि, अवयवितः एकपरमाणुविश्लेषे, संश्लेषे वा पूर्वावयविनः नाशः,

**नो चेत्, अश्रान्तचण्डानिलजलधिधुनीदन्तिदावानलाद्यैः**
**क्षोणीयं क्षुद्यमाना क्षणमपि चरमामण्ववस्थां न जह्यात् ॥ २२ ॥**

**[शरीरस्य पाञ्चभौतिकत्वम्]**

**23. संघातोऽनेकभूतैरपि भवति यथा ह्येकभूतस्य भागैः,**
**देहादिः पञ्चभूतात्मक इति निगमाद्युक्तिभिश्च प्रसिद्धम् ।**

नूतनावयविनः उत्पत्तिश्च अङ्गीक्रियते । इदन्त्वत्यन्तानुभवविरुद्धम् । अतिरिक्तावयव्यनङ्गीकारे तु, एकस्य धान्यराशेः कतिपयधान्यानां विश्लेषे, संश्लेषे वा अवयविनाशोत्पत्यादेरभावात् न कोऽपि कल्पनादिक्लेशः ॥

एवमनङ्गीकारे महदनिष्टमाह—**नो चेदित्यादिना** । **नो चेत्**=एवं यदि नाङ्गीक्रियते, हठादतिरिक्तावयवी यदि साध्यते, तदा **अश्रान्तचण्डानिलजलधिधुनीदन्तिदावानलाद्यैः**=**अश्रान्ताः**=अविरताः **चण्डानिलः**=वात्यादिः । **जलधिः**=समद्रः । **धुन्यः**=नद्यः । **दन्तिनः**=दिग्गजाः, तैः पौराणिकप्रक्रियया भूमेरधः अष्टदिक्षु भूमिं वहन्तो वर्तमाना महागजाः भारपीडिताः स्वांसं यदा चालयन्ति, तदा भूमिरपि तेन चलनेन कंपते इति पौराणिकाः । अथवा, **दन्तिनः**=सामान्यगजाः । ते मत्ता भूमिं घट्टयन्ति । तेन कतिपयाणूनां विश्लेषोऽनिवार्यः । **दावानलः**=दावाग्निः । **आद्यैः**=एतदादिभिः अवयवविश्लेषहेतुभिः **इयं क्षोणी**=भूमिः **क्षुद्यमाना**=चूर्णीक्रियमाणा **चरमाम्**=प्रलयकालिकीम् **अण्ववस्थाम्**=अणुत्वावस्थाम् **क्षणमपि न जह्यात्**=न त्यजेत् आदिपदेन भूकम्पादिः गृह्यते ॥

**अयमाशयः**—एकस्य परमाणोः विश्लेषेऽपि पूर्वावयविनो नाशः, अवयव्यन्तरोत्पत्तिश्च वैशेषिकैः अङ्गीक्रियते । एवञ्च, महावात्याः, समुद्रतरङ्गारभट्यः, नदीभूकम्पाद्याश्च परमाणुविश्लेषहेतवः सततं संभाव्यन्ते किल । एभिः भूमिरूपावयविनः पूर्वं स्थितवतः नाशः अनिवार्यः । यावता च पुनरवयव्यारम्भः, तावतैव उक्तहेतुष्वन्यतमस्यानिवार्यतया पुनः पुनः अवयवानां विश्लेषेण अवयविनः नाश एव स्यात् । ततश्च भूम्याख्यावयविनः निष्पत्तिरेवासंभाविनी स्यात् । इदं चात्यन्तमनुभवादिविरुद्धम् । अतः अतिरिक्तावयव्यनङ्गीकार एव वरम् । वस्तुतस्तु—आरम्भवादिनां लोकायतपदवाच्यानां नैयायिकानां नायं शास्त्रस्य विषयः । ईश्वरानुमानादिकमपि न शुद्धनैयायिकानामिति अग्रे नायकसरे वक्ष्यते । अथापि दोषस्य समाधेयत्वाभिप्रायेण दूषणमुक्तम्, शिष्यबुद्धिवैशद्याय ॥ २२ ॥

एवमतिरिक्तावयविनिरासादेव मानवशरीरादेः केवलपार्थिवत्वमपि वैशेषिकैरुक्तं निरस्तप्रायमिति प्रतिपादयति—**सङ्घात** इत्यादिना । **यथा हि एकभूतस्य भागैः**=अंशैः **सङ्घातः**=सङ्घीभावः भवति घटादौ, तथैव **नैकभूतैरपि**=एकातिरिक्तभूतैरपिं सङ्घातः भवति । **अतः देहादिः**=अस्मद्देहादिकम् **पञ्चभूतात्मकः**, न तु केवलं पार्थिव इति **निगमाद्युक्तिभिः**=वेदादीनाम् वचनैः 'चतुर्विधाहारमयं शरीरम्' इत्यादिगर्भोपनिषद्वचनैः, **आदिना** 'पञ्चभूतात्मकं वपुः' इत्यादिपुराणादिवचनसंग्रहः । **प्रसिद्धम्**=सर्वसंमतम् अपलपितुमशक्यम् । '**च**'कारात् युक्तेरपि संग्रहः । अथवा 'निगमात्, युक्तिभिः' इति वा पदच्छेदः ।

**न त्वेवं संकरः स्यात्; व्यवहृतिनियमः सूत्रितस्तारतम्यात्,**
**देहादौ येन भूतान्तरयुजि भवतो भौमतादिव्यवस्था ।। २३ ।।**

चकारह्लोकानुभवोऽपि ग्राह्यः । शरीरे क्लेदनस्वेदनादिभिः पञ्चभूतानामपि सत्त्वानुभवात् । पञ्चानामपि कारणत्वे समाने, अवयवातिरिक्ते अवयविनि निरस्ते च एकस्यैव तत्रोपादानत्वम्, इतरेषामनुपादानत्वम् इति कल्पना अप्रामाणिकी । **एवम्**=पञ्चानामप्युपादानत्वेऽपि **सङ्करः**=पृथिवीत्वादिजातिसाङ्कर्यम् न **स्यात्;** अवयवातिरिक्तावयविनः अनङ्गीकारादिति हेतुः । अवयवातिरिक्तावयव्यङ्गीकारे, पञ्चानामपि भूतानामुपादानत्वे च, एकस्मिन् शरीरे पृथिवीत्वजलत्वादीनां समावेशात् जातिसाङ्कर्यं स्यात् । पृथिवीत्वं विहाय जलत्वं कासारादौ, जलत्वं विहाय पृथिवीत्वं घटादौ, उभयोः समावेशो मानुषशरीरे इति । परन्तु सिद्धान्ते अतिरिक्तस्य एकस्यावयविनः अनङ्गीकारात्, तत्तद्भागेषु तत्तज्जातेः सत्त्वेऽविरोधात् न जातिसाङ्कर्यप्रसङ्गः ।।

ननु यदि जातिसाङ्कर्यं न दोषः, तर्हि 'सङ्करो नरकायैव' (गी.1-42) इति भगवद्वचनं कथमिति चेत्; 'जायते वर्णसङ्करः' इति पूर्वं वाक्यं विस्मृत्य वर्णसांकर्यपरं सङ्करपदं जातिसङ्करपरमिति भ्रान्तोऽसि त्वम् । पूर्वं तस्य विस्मरणं मम न्याय्यम्, पुरोगामिनस्तव 'उत्साद्यन्ते जातिधर्माः'(गी.1-43) इति पुरतो वर्तमानं 'जातिधर्म'पदं विस्मृतं किल! । हन्त! रोषितस्त्वम्! महानयं विचारः शान्तचित्तैर्निर्वर्तनीयः। करिष्यामस्समये (अद्रव्य.133-133) । पृथिवीत्वादिजडवस्तुगतजातिविचारोऽन्यः, अन्यश्च मानवगत जातिवर्णविचार इति सांप्रतं समापयामः ।।

पञ्चानामप्युपादानत्वे समाने, पार्थिवशरीरम्, जलीयशरीरम् इत्यादिव्यवहारः कथमित्यत्राह— **व्यवहृतीत्यादि** । **व्यवहृतिनियमः**='इदं पार्थिवम्' इत्यादिव्यवहारव्यवस्था **तारतम्यात्**=पृथिवीभागाधिक्यात् इतरभागानां न्यूनत्वाच्च **सूत्रितः**=सूत्रेण प्रतिपादितः । सूत्रकारेण कथनमात्रात् प्रमाणविरुद्धं कथमङ्गीकर्तुं शक्यमित्यत्र— **देहादावित्यादि** । **भूतान्तरयुजि**=भूतान्तरविशिष्टे मानुषदेहादौ **भवतः**=वैशेषिकस्य तव **भौमतादिव्यवस्था**=पार्थिवत्वादिव्यवस्था **येन**=येन प्रमाणेन, तेनैव प्रमाणेन सूत्रकारेणापि तथोक्तम् ।।

**अयमर्थः**—मानुषदेहे पञ्चानामपि कारणत्वे, पृथिवीभागस्यैवोपादानत्वम्, इतरेषां तु सहकारित्वमात्रमिति कथं निर्णीयते? न चानिर्णये का हानिरिति वाच्यम्, मानवशरीरस्य पार्थिवत्वव्यवहारानापत्तेः, इति प्रश्ने, पृथिवीभागाधिक्यादिति खलूत्तरम् । एतदेव सिद्धान्तेऽपि पार्थिवत्वादिव्यवहारनियामकमिति न कश्चिद्दोषः। सूत्रकारेणापि एतदेवाभिहितम् । छान्दोग्ये 'अन्नमशितं त्रेधा विधीयते' (छां.6-5-1) इत्युपक्रम्य 'अन्नमयं हि सौम्य मनः' (छां.6-5-4) इति श्रूयते । पञ्चीकरणप्रक्रियया अन्ने पृथिव्यादिपञ्चभूतभागानामपि सत्त्वे, मनसि केवलमन्नमयत्वं कथमुच्यते इति शङ्कायाम्, तत्रोक्तम्, 'वैशेष्यात्तु तद्वादः' (ब्र.सू.2-4-19) इति । वैशेष्यम्=आधिक्यम् । अन्ने इतरभागानां सत्त्वेऽपि पृथिवीभागस्याधिक्यात्, मनः अन्नमयमित्युच्यते इति । एवमेव मानुषदेहेऽपि इतरभूतापेक्षया पृथिवीभागाधिक्यात् पञ्चानामुपादानत्वेऽपि पार्थिवत्वव्यवहार इति नानुपपत्तिः ।।

यद्यपि सिद्धान्ते मन आहङ्कारिकम्, न तु पार्थिवम्। अथाप्यन्नमयमिति कथनम् 'आहारशुद्धौ सत्त्वशुद्धिः'(छां.7-26-2) इति प्रमाणात् आहाराधीनत्वान्मनःस्थितेः 'अन्नमयं हि सौम्य मनः' इत्युक्तिः। अन्नशुद्धिः किंरूपेत्यन्योऽयं विचारः, न केवलं सांकेतिक इतिपरमवधीयताम् ॥

नन्वत्र सङ्घातशब्दप्रयोगात् पञ्चभूतसङ्घातापेक्षया अतिरिक्तशरीरनिराकरणाच्च सङ्घात एव अवयविस्थानापन्न इत्युक्तं भवति। तर्हि उपादानोपादेयभावस्थले सङ्घातवाद एवाचार्याभिमतो वा? न चेष्टापत्तिः अवयविनिरासादिति वाच्यम्, आरम्भवादिनः वैशेषिकाः, सङ्घातवादिनो बौद्धाः(वैभाषिकाः), विवर्तवादिनों माध्यमिकबौद्धाः, परिणामवादिनो वयमिति खलु प्रसिद्धिः। अतः कः सिद्धान्त इति चेत्, नात्र सङ्घातशब्दः बौद्धसङ्केतितार्थप्रतिपादकः, किन्तु समुदायार्थकः। सिद्धान्ते समुदायत्वमप्येकावस्था। अतः 'द्रव्याभेदेऽप्यवस्थान्तरतः' इति पूर्वोक्तावस्थान्तरवादः=परिणामवाद एवाचार्याभिमतः। प्रत्येकावस्था एका, समुदायावस्था अपरा इति अवस्थाभेद एव सङ्घातपदेनापि विवक्षितः। बौद्धास्तु क्षणिकवादे अवस्थाया अव्यावर्तकत्वात्, अवस्थाभेदमपि नाङ्गीकुर्वन्ति। अवस्थाभेद एव परिणामवाद इति असकृदभिहितं पुरस्तात्। अतः अवयवातिरिक्तावयविनिराकरणमात्रेण न बौद्धमतसाङ्कर्यम् ॥

ननु प्रत्येकापेक्षया समुदाये को विशेषः? इति चेत्, उक्तमेव पूर्वम् 'संसर्गदिर्विशेषात्' (श्लो.21) इति। अतिरिक्तावयविवादेऽपि पुरुषव्यापारस्य तादृशसंयोगसंपादन एव हि पर्यवसानम्। ततश्च 'पटं कर्तुमारभते' इत्यादिव्यवहाराणामपि विषयलाभः। एवञ्च वैशेषिकमते असमवायिकारणतयाङ्गीकृतः अवयवानां विलक्षणसंयोगोत्पत्त्या, तादृशसंयोगविशिष्टावयवा एव सिद्धान्ते अवयविव्यवहारनियामकाः। तादृशसंयोगजन्यः अतिरिक्त एवावयवीति वैशेषिकमते। संयोगाख्यपदार्थस्यैवानङ्गीकारात् अवयवसङ्घातमात्रं अवयवीति बौद्धमतमिति विशेषः। अधिकं 'संसर्गदिर्विशेषात्' इत्यत्र (श्लो.21) द्रष्टव्यम् ॥

निष्ठुरसत्कार्यवादिनः सांख्या अपि हि 'सङ्घातपरार्थत्वात्' (सां.का.17) इत्यवयविस्थाने सङ्घातपदं प्रयुञ्जते, न तावता ते सङ्घातवादिनः। अतः न बौद्धच्छायापातप्रसक्तिः। बौद्धमते निष्ठुरासत्कार्यवादः। सिद्धान्ते तु उपादानदृष्ट्या सत्कार्यवादः। अवस्थादृष्ट्या त्वसत्कार्यवाद एव। अथापि अवस्थानां स्वतन्त्रपदार्थत्वाभावान्नासत्कार्यवादस्सिद्धान्त इति विशेषः ॥ २३ ॥

एवं सिद्धान्तसंमतस्य सत्कार्यवादस्य स्थिरीकरणार्थम् एतत्प्रतिकोटिभूतम् आरम्भवादाख्यम् असत्कार्यवादं वैशेषिकसंमतं निरस्य, 'असदकरणादुपादानग्रहणात् सर्वसंभवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥' (सां.का.9) इति सांख्यैरुक्तं सत्कार्यवादं विमृशति। 'कार्यं सत्' इति प्रतिज्ञा। तत्र हेतुः—असदकरणादिति। असतः करणासंभवात्। न हि असत् शशशृङ्गादि केनापि कर्तुं शक्यम्। क्रियते च तिलेभ्यस्तैलम्, तिलेषु तैलस्य सत्त्वादेव। एवम् उपादानग्रहणाच्च सत् कार्यम्। तैलार्थी तिलानेव प्रथममुपादत्ते, न तु सिकतादि। कुतः? तिलेष्वेव तैलस्य सूक्ष्मतया दर्शनात्। एवम्—**सर्वसंभवाभावात्—सर्व**स्मात् सर्वसंभवस्याभावात्। कार्यं पूर्वमसच्चेत्, सर्वस्मात्सर्वमपि कार्यं स्यात्, असत्त्वस्य समानत्वात्। अतः कार्यं पूर्वं स्वोपादाने सत्। ननु किञ्चित्कारणं किञ्चित्कार्यं प्रत्येव शक्तं दृष्टम्। न हि

[साङ्ख्यसंमतसत्कार्यवादनिरासः]

**24. सन्ति प्रागप्यवस्थाः सदितरकरणाप्राप्तनिष्पत्त्यदृष्टेः**
**शक्ताशक्तप्रभेदादिभिरपि यदि, न; स्वोचितात् कार्यदृष्टेः ।**

घटकरणशक्ता मृत् पटं कुर्यात् । न वा पटकरणशक्तास्तन्तवो घटं कुर्युः । एवं शक्तिविशेषसद्भावात् सर्वस्मात् सर्वसंभवप्रसङ्गो न भवेदिति चेत्, सत्यम् । इदमेतत्कार्ये शक्तमित्यस्य कोऽर्थः? कारणस्य शक्तत्वं नाम तत्र सूक्ष्मरूपेण कार्यस्य स्थितिरेव—यथा तिलेषु तैलम् । अतश्च शक्तिः कार्यस्य सूक्ष्मावस्थैव; अन्यस्य दुर्वचत्वात् । अतः कार्यं पूर्वं सत् । एवं कारणभावाच्च कार्यस्य कार्यं सत् । 'घटः मृदुपादानकः, मृदभिन्नत्वात्' यदि मृद्भिन्नः स्यात्, तदा मृदुपादानको न स्यात्, यथा पटः इत्यनुमानात् मृद्घटयोरभेदः । अत एव 'मृदयं घटः' इत्यभेदव्यपदेशः । इति कारिकार्थः । एतत्कारिकोक्तप्रक्रिययैव पूर्वपक्षमनुवदन्, तत्र विवादविषयांशसूचनेन पूर्वपक्षं प्रदर्शयति—**सन्तीत्यादिना** । 'कार्यं सत्' इत्यनुक्त्वा, 'अवस्थाः प्रागपि सन्ति' इति प्रतिज्ञानात्, घटत्वाद्यवस्थानामपि पूर्वं मृदि सत्त्वम् तत्संमतम्; सिद्धान्ते तु मृद एव घटरूपेण परिणामाङ्गीकारात्, पिण्डत्वघटत्वाद्यवस्थानामेवासत्त्वम् । मृदः सर्वत्रानुवर्तमानत्वात् सत्त्वमित्यङ्गीक्रियते । तथा चावयवातिरिक्तावयविनिराकरणात् सिद्धान्ते 'कार्यं सत्' इत्युच्यते । सांख्यसिद्धान्ते तु घटत्वाद्यवस्थानामपि पूर्वं सूक्ष्मरूपेण सत्त्वम्, कारकव्यापारेणाभिव्यक्तिमात्रमित्यङ्गीक्रियते इत्युभयोर्वैलक्षण्यम् । अनेन सिद्धान्तसंमतसत्कार्यवादः वैशेषिकसंमतासत्कार्यवादाद्यथा विलक्षणः, तथा सांख्यसंमतसत्कार्यवादादपि विलक्षण इत्यवधेयम् (पु.29) । **अवस्थाः प्राक् अपि सन्ति** इति प्रतिज्ञा । **सदितरेत्या**दिर्हेतुः । **सदितरत्**=असत्, **तस्य करणम्**=असतःकरणम्, **तस्य अदृष्टेः** इत्यन्वयः । एवम् **प्राप्तिः**= संबन्धः, **अप्राप्तस्य**=असंबद्धस्य **निष्पत्तेः अदृष्टेः** इत्यन्वयः । **सदितरकरणादृष्टेः, अप्राप्तनिष्पत्त्यदृष्टेः** इति हेतुद्वयम् । असतः शशशृङ्गादेः केनापि करणासंभवात् सदेव कार्यम् । कारिकायां चकारात्सूचितम् 'अप्राप्तनिष्पत्त्यदृष्टे'रिति ॥

ननु यदि कार्यं सत् तर्हि घटादीनां पूर्वमेव सत्त्वे, दण्डचक्रपुरुषादिभिः किं क्रियते? इति चेत्, सूक्ष्मरूपेण वर्तमानस्य स्थूलरूपप्राप्तिरूपाभिव्यक्तिः क्रियते । यथा तिलेषु सूक्ष्मतया स्थितस्य तैलस्य यन्त्रादिकारकैः अभिव्यक्तिमात्रं पुरुषप्रयत्नसाध्यम्, तथैव सर्वत्र । नो चेत् सिकताभ्योऽपि तैलमुत्पद्येत ॥

एवम् 'अप्राप्तनिष्पत्त्यदृष्टेः'—प्राप्तिः=संबन्धः । अप्राप्तस्यासंबद्धस्य निष्पत्तेरदर्शनात् कार्यं सत् । तथाहि—दण्डचक्रादिकारकाणां कार्यस्य च संबन्धोऽस्ति, न वा? यदि नास्ति, तर्हि कारणस्य कार्यस्य च संबन्धविशेषाभावात् सर्वं सर्वस्मादुत्पद्येत, असंबद्धत्वाविशेषात् । यदि संबन्धोऽस्तीत्युच्यते, तर्हि कार्यं सदेव । असत्त्वे, असता कथं कारणानां संबन्धः? अतः कार्यकारणभावव्यवस्था यदि वक्तव्या, तर्हि कार्यस्य सत्त्वमावश्यकम् । तथोक्तम् 'असत्त्वान्नास्ति संबन्धः कारणैस्सत्त्वसङ्गिभिः । असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥' इति ॥

एवं **शक्ताशक्तप्रभेदादिभिरपि** पूर्वमपि कार्यं सदेव। एतस्मिन् कार्ये इदं शक्तम्, न त्वन्यदिति प्रभेदात्=भेदस्य सत्त्वात् इत्यर्थः। घटोत्पादने मृदामेव शक्तिः, तैलोत्पादने तिलानामेव, न त्वन्येषामिति सर्वसंमतम्। तिलेषु तैलस्य सत्त्वादेव, तैलोत्पादने तिला एव शक्ताः, नान्य इति सर्वानुभवसिद्धम्। एवमेव घटोत्पादने मृदेव शक्तेति घटोऽपि तत्र सूक्ष्मरूपेण वर्तते। अतः कारणेषु कार्यस्य सूक्ष्मरूपेणावस्थानमेव शक्तिः, अनवस्थानमेवाशक्तिरिति कार्यं कारणे पूर्वमपि वर्तते, अनन्तरमभिव्यज्यते इत्येव युक्तम्॥

आदिपदेन सांख्यकारिकोक्तानां 'उपादानग्रहणात्' इत्यादीनां त्रयाणां ग्रहणम्। उपादानम्=समवायिकारणतया वैशेषिकैरङ्गीकृतं वस्तु। तस्य ग्रहणात्। तैलार्थी तिलानुपादत्ते प्रथमम्, न त्वन्यत्। तत्कुतः? तत्र तत्कार्यस्य सत्त्वादेव। अन्यथा हि अन्यदप्युपाददीत। अतः कार्यं स्वोपादाने सत्। एवं कारणभावात्=उपादानात्मत्वात् उपादेयस्य कारणसत्त्वस्य कार्यसत्त्वात्मत्वात् कार्यमपि सदेव। तन्त्वात्मत्वं च पटस्य—'पटः न तन्तुभ्यो भिद्यते, तन्त्वविनाभूतत्वात्; यत् यस्माद्भिद्यते, तत्ततो विनाभूतम्, यथा घटपटौ, अथवा तन्तुघटौ' इत्यनुमानात्सिद्ध्यति। न चैवं सति गुणगुणिनोरप्यभेदः स्यादिति वाच्यम्; इष्टापत्तेः। एवं सर्वस्मात्सर्वसंभवाभावोऽपि ग्राह्यः। इदं पूर्वपक्ष एव विवृतम्। आभिर्युक्तिभिः अवस्थापि पूर्वं सत्येव॥

तदेतन्निराकरोति—**नेति**। तत्र हेतुमाह—**स्वोचितादित्यादि**। **कार्यदृष्टेरिति**। दृश्यते पूर्वमदृष्टं कार्यं कारकव्यापारादभिनिष्पाद्यमानम्। तथा च प्रत्यक्षविरोधः। कार्यस्यासत्त्वे उपादानव्यवस्थैव न स्यादित्युक्तं किलेत्यत्र—**स्वोचितादिति** हेतूक्तिः। औचित्यं च योग्यता। तत्कार्ययोग्यात् कारणात् तदनुगुणं कार्यं भवेदेव। प्रत्यक्षं तिरस्कृत्य कार्यकारणभावापलापिनम् अग्रे (श्लो.32) अभिगमिष्यामः। प्रकृते तमभिगतवन्तं सांख्यं विमृशामः। कार्यं असच्चेत्, शशशृङ्गवत् स्यादित्याक्षेपे; कार्यं सदेव, कारणव्यापारैः अभिव्यज्यते इति अवस्थानामपि पूर्वं सत्त्वं अत्यन्तानुभवविरुद्धम्। ननु तिले तैलस्य सत्त्वं सर्वानुभवसिद्धं किलेति चेत्, तत्रापि तैलार्हतामात्रं ज्ञायते, न तु तैलमेव दृश्यते। एवमेव मृदि घटार्हतामात्रं ज्ञायेत; न तु घटोऽपि सूक्ष्मरूपेण वर्तेत इति। एवं तन्तुष्वपि पटार्हतामात्रं ज्ञायेत, न तु पटोऽपि सूक्ष्मरूपेण तन्तुषु वर्तेत। तर्हि उपादाननिमित्तयोः को भेद इति चेत्, यस्यानुवृत्तिः कार्ये दृश्यते तदुपादानम्, इतरत्तु निमित्तमात्रमित्यन्वयव्यतिरेकमात्रेणैव उपादानभावः सुनिर्णेयः, न तु कार्यसत्त्वमपि उपादानत्वप्रयोजकम्। एवं तर्हि निमित्तकारणानां कारणत्वमेव न स्यात्। न हि तत्रापि कार्यस्य सत्त्वं तस्यापीष्टम्॥

यच्चोक्तम्—असतः शशशृङ्गादेरुत्पत्त्यसंभवादिति कार्यस्य सत्त्वमावश्यकमिति, तदपि न; सतोऽप्याकाशादेः करणासंभव उक्त एव। तर्हि कस्समाधिरिति चेत्, कार्यस्य आकाशशशशृङ्गविलक्षणत्वात्। न हि कार्यं घटादि आकाशवत् सर्वदा सत्। न वा शशशृङ्गवत् सर्वदाऽसत्। किन्तूभयविलक्षणमिति घटादेः कार्यत्वोपपत्तिः। अधिकमग्रे (श्लो.32) वक्ष्यामः॥

यदपि कारणे कार्यस्यासत्त्वे सर्वस्मात् सर्वस्योत्पत्तिरित्यादि, तदपि न; कार्यस्य सत्त्वे कारकव्यापारवैय्यर्थ्यापाताद्दोषः समानः। अभिव्यक्त्यर्थः कारकव्यापार इति चेत्; अभिव्यक्तिः पूर्वं सती उतासती? प्रथमपक्षे कारकव्यापारवैयर्थ्यम्। द्वितीये असत्कार्यवादप्रसङ्गः, अभिव्यक्तेः पूर्वमसत्त्वात्॥

**तस्मिन् सत्येव तस्माज्जनिरपि नियता तन्निमित्तादिनीतेः**
**व्यक्तिर्व्यक्ताऽनवस्थां भजति, न च कृतामात्थ, नैवं कृतौ नः ॥ २४ ॥**

तर्हि असम्बद्धस्योत्पत्तावव्यवस्थापरिहारः कथमिति चेत्; उपादानेन साकं कारकव्यापाराणां संबन्धसत्त्वेनैवाव्यवस्थापरिहारात्। कर्ता उपादानकारणमधिष्ठायैव किल सर्वं करोति। उपादानेऽपि कार्यस्यासत्त्वात्कथं संबन्ध इति चेत्, उपादानोपादेययोरत्यन्तभेदस्याभावात्, उपादानेन साकं संबन्धस्य पर्याप्तत्वात्। 'मृदं घटं करोति' 'तन्तून् पटं करोति' इति खलु लोकव्यवहारः। अत एव 'असत्त्वान्नास्ति संबन्धः' इत्याद्यपि निरस्तम्, उपादानोपादेयभावस्यान्वयव्यतिरेकसिद्धत्वेन, उपादानेन साकं कारकसंबन्धस्य सत्त्वेन, तयोरभेदस्यापि तत्त्वेन, तावतैव व्यवस्थोपपत्तेः नाव्यवस्था॥

यदपि कारणस्य तत्कार्ये शक्तत्वं कार्यस्य सूक्ष्मरूपेण तत्रावस्थानमेवेति, तदपि न; निमित्तकारणेऽपि कार्यस्य सत्त्वप्रसङ्गात्। किञ्च मृदा घटमात्रं न क्रियते, किन्तु शरावमणिकादिकमपि क्रियते। न तावन्मात्रम्, क्रीडागजाश्वादिकम्, नानाविधदेवताप्रतिमादिकमपि क्रियते। एवञ्चेदं सर्वमपि मृदि स्यात्। अन्ततो मृदेव परमात्मवत्सर्वोपादानं स्यात्। एतादृशं सत्त्वमप्रयोजकत्वम्॥

यदपि उपादानग्रहणादित्यादि, तदपि निमित्तानामपि ग्रहणस्य दर्शनात् अन्यथासिद्धम्। उपादानस्य ग्रहणे प्राथम्यं दृश्यते इति चेत्, कर्तुरिव प्राथम्यदर्शनात् व्यभिचरितं प्राथम्यम्। ननु तर्हि उपादानपदं कर्तरि, निमित्तकारणे वा प्रयुज्येतेति चेत्; सत्यम्, घटार्थी कुलालमन्विष्यत्येव; परं तु मृदं विना किं कुर्यात् सः उपादानकारणं निमित्तापेक्षयाभ्यर्हितम्, कार्ये तस्यानुवृत्तिदर्शनात्। तावता तत्र कार्यस्य सत्त्वाङ्गीकारे न किञ्चित्प्रमाणं विद्यते। प्रत्युत सर्वापेक्षया कर्तुरिव प्राधान्यात्, तत्रापि कार्यस्य सत्त्वप्रसङ्गः॥

उपादानोपादेययोरत्यन्ताभेदस्तु प्रतीतिपराहतः। यदपि मृद्घटयोरविनाभावप्रयुक्तः अभेद इति, तदपि न; अविनाभावस्यैव भेदगर्भत्वेन हेतोर्विरुद्धत्वात्। अविनाभूतयोः गुणगुणिनोः भेदस्य च पूर्वमेव साधनात्। उपादानात्मत्वं चोपादेयस्योपादानस्योपादेयेऽनुवृत्तिदर्शनादेव वक्तव्यम्। अनुवृत्तिदर्शनञ्चावस्थाभेदसाधकम्। मृत्पिण्डो हि मृद्घटो भवति। ततश्च मृदः अनुवृत्तिः, पिण्डत्वस्य निवृत्तिः, घटत्वस्योत्पत्तिश्चेति, एकमेव द्रव्यमनेकावस्था भजत इति अवस्थाभेदमात्रवादिनः सिद्धान्तिन एवेदमनुकूलम्॥

आहत्य अन्वयव्यतिरेकाधीनत्वात् कार्यकारणभावस्य अवस्थानामपि सत्त्वमनुभवविरुद्धमित्याह— **तस्मिन्** इत्यादि। **तस्मिन् सत्येव तस्मादेव** कार्यस्य **जनिरपि तन्निमित्तादिनीतेः**=तत्कार्यनिमित्तकारणन्यायेनैव **नियता,** न तु कारणे कार्यसत्त्वमावश्यकम्, निमित्तकारणस्याकारणत्वप्रसङ्गात्। निमित्तकारणत्वं अन्यव्यतिरेकाभ्यां गृह्यत इति चेत्, उपादानत्वस्यापि तत्समम्। 'सत्येव' इत्येवकारात् व्यतिरेकोऽपि विवक्षितः। तथा च 'यत्सत्वे यत्सत्त्वम्, यदभावे यदभावः, तदेव तस्य कारणम्' इत्यन्वयव्यतिरेकावेव कार्यकारणभावनियामकौ॥

यदि हठः क्रियते, तर्हि प्रतिबन्दीमप्याह—**व्यक्तिरित्यादिना। व्यक्तिः**=अभिव्यक्तिः **व्यक्ता**= यद्यभिव्यज्यते, **अनवस्थां भजति**=प्राप्नोति। **कृतां न च आत्थ**=उत्पन्नां न हि ब्रवीषि, अपसिद्धान्तात्॥

**अयमर्थः**—अभिव्यक्तिः पूर्वमासीत्, न वा? पूर्वमेव सत्त्वे, कारकव्यापारवैयर्थ्यम् । असत्त्वे, असत्कार्यवादप्रसङ्गः । अभिव्यक्तिः सूक्ष्मरूपेण वर्तते, कारकव्यापारैरभिव्यज्यत इति चेत्, अभिव्यक्तेः अभिव्यक्तिः पूर्वमासीन्न वा? इति क्रमेण अनवस्थाप्रसङ्गः ॥

ननु अवस्थानामुत्पत्तिपक्षेऽपि दोषः समानः । अवस्था उत्पद्यते न वा? आद्ये अनवस्था, द्वितीये नित्यत्वप्रसङ्गः इति विकल्पावतारादित्यत्राह—**नैवमित्यादि**। **नः**=अस्माकं **कृतौ**=अवस्थानां नूतनतया करणे **एवं न**=उक्तरीत्या दोषो नास्ति ॥

**अयमर्थः**—अवस्थानामद्रव्यत्वेन तासामुत्पत्तिः प्रत्येकं नाङ्गीक्रियते । परिणामवादे मृदः पिण्डत्वावस्थाप्रहाणपूर्वकं, घटत्वावस्थाप्राप्तिरेव घटस्योत्पत्तिः । अवस्था तु न कश्चनातिरिक्तः पदार्थः, आगन्तुकाः घटत्वादयः धर्मा एव अवस्थापदार्थः । ननु घटत्वं हि जातिः, सा च संस्थानरूपा । सा कथमवस्था भवतीति चेत्—संस्थानं अवयवसन्निवेशविशेषः=अवयवसंयोगविशेषः । एवञ्च 'संसर्गादिर्विशेषात्' (श्लो.21) इत्यत्रोक्तरीत्यावयविनः अवस्थाविशेषरूपत्वात् मृदः घटात्मना परिणामः=घटत्वावस्थाप्राप्तिरेव घटस्योत्पत्तिरिति सिद्धम् । एवञ्च सिद्धान्ते, कार्यं वैशेषिकवत् सर्वथाऽसदित्यपि न, सांख्यवत् सर्वथा सदित्यपि न । पूर्वापरावस्थाश्रयद्रव्यस्यैक्यात्, मृदः सर्वत्र प्रत्यभिज्ञानात्, केवलमवस्थानां भेदाच्च सांख्यवैशेषिकवादयोः मध्यस्थो वादः सिद्धान्तिनाम् । अवस्थाश्रयमृद एवोपादानत्वादुपादेयत्वाच्च तस्याः सर्वत्रानुवृत्त्या सत्कार्यवाद एवायम् । अतः यथादर्शनं व्यवस्थापनात्, नानुभवविरोधः, युक्तिविरोधो वा ॥

ननु अभिव्यक्तिवादेऽप्ययं समाधिः कुतो न स्यादिति चेत्, घटत्वाद्यवस्थानामपि सूक्ष्मरूपेण पूर्वमेव सत्त्वमङ्गीकृत्य, तासामभिव्यक्तिस्तैरङ्गीक्रियते । अभिव्यक्तिः पूर्वं सती, उतासती इति विकल्पे, असत्त्वपक्षेऽसत्कार्यवादप्रसङ्गेन, सत्त्वपक्षस्यैव स्वीकार्यतया, अवस्थायाः, तदभिव्यक्तेश्च सत्त्वात्, कारकव्यापारवैयर्थ्यस्य दुर्वारत्वात्, घटोपलब्धिप्रसङ्गाच्च उत्पत्तिवादेन साम्यमभिव्यक्तिवादस्य दुर्वचम् । अतस्सिद्धान्तसंमतः मध्यस्थवाद एव प्रामाणिकः । अधिकमग्रे (श्लो.32) भविष्यति ॥ २४ ॥

सर्वं सदा वर्तते, अनन्तरं कारकव्यापारैरभिव्यज्यते, इति वादः निराकृतः । जगति सर्वं क्षणिकमेव, स्थिरं किञ्चिदपि नास्त्येव इति वैभाषिकवादनिराकरणमनन्तरप्रसक्तम् । ते ह्येवं वदन्ति—परस्परविरुद्धानां धर्माणामेकत्र समावेशो न संभवतीति तवापीष्टम् । तेन यत्र विरुद्धौ धर्मौ दृश्येते तत्र वस्तुनोर्भेद आवश्यकः । एवञ्च कुसूलस्थिते बीजादौ अङ्कुरजनकत्वाभावात्, क्षेत्रस्थे तस्मिन् अङ्कुरजनकत्वदर्शनात्, अङ्कुरजनकत्वाजनकत्वयोरेकत्र विरोधात्, कुसूलस्थबीजमेवान्यत्, क्षेत्रस्थं चान्यदिति सिद्ध्यति । ननु कालभेदादुभयोर्न विरोधः, एक एव देवदत्तः पूर्वं काश्यां दृष्टः, अनन्तरं च कदाचित् काञ्च्यां दृश्यते । काशीस्थितितदभावौ कालभेदेन दृश्येते किलेति चेत्; देवदत्तशरीरस्य प्रतिक्षणं उपचयापचयादिभिः भेदस्य आवश्यकत्वेन शरीरयोर्भिन्नत्वेन दृष्टन्तासिद्धेः । एवञ्च क्षेत्रस्थबीजे अङ्कुरोत्पादकत्वदर्शनात् तत्र **कुर्वद्रूपत्वाख्यः** कश्चन विशेषो वर्तते । तत्पूर्वक्षणे अङ्कुराकरणात् तादृशविशेषाभावेन पूर्वक्षणबीजापेक्षया अनन्तरक्षणे बीजं भिन्नमेवेति सिद्धमिति वस्तूनां क्षणिकत्वं सिद्धम् । तथा चानुमानम् 'विमतं क्षणिकम्,

[क्षणिकवादनिरासः]

25. **वस्तुस्थैर्यं विरुद्धानुपहितविषया साधयेत् प्रत्यभिज्ञा**
**नैकस्मिन् शक्त्यशक्ती कृतितदितरयोः साह्यभेदेन सिद्धेः ।**

सत्त्वात्, यथा जलधरः' इति । सत्त्वं हि अर्थक्रियाकारित्वम्=यत्किञ्चित्फलरूपकार्यकारित्वम् । अन्ततः ज्ञेयत्वस्य केवलान्वयित्वात् ज्ञानरूपकार्यकारित्वं सर्वत्र वर्तत इति प्रतिक्षणं परिणामशालिमेघदृष्टान्तेन सर्वेषां क्षणिकत्वसिद्धिरिति । तत्रोत्तरमाह—**वस्तुस्थैर्यमित्यादि** । **प्रत्यभिज्ञा**='सोऽयं घटः' इत्यादिप्रत्यभिज्ञा **वस्तुस्थैर्यम्**=वस्तूनां स्थिरताम्, क्षणिकत्वाभावं **साधयेत्** । उक्तप्रत्यभिज्ञायाः प्रत्यक्षत्वेन, क्षणिकत्वानुमानेन प्रत्यक्षस्य बाधासंभवात् इति भावः । ननु 'सेयं दीपज्वाला' इत्यादिप्रत्यभिज्ञायाः भ्रान्तित्वस्य सर्वसंमतत्वात् (श्लो.31) प्रत्यक्षस्यापि अनुमानेन बाधो दृश्यत इत्यत्रोक्तम्—**विरुद्धानुपहितविषयेति** प्रत्यभिज्ञाविशेषणम् । **विरुद्धैः** धर्मैः **अनुपहितः**=असंस्पृष्टः **विषयः** यस्येति विग्रहः । प्रतिक्षणं तैलादि-क्षयस्य प्रत्यक्षतो दर्शनात्, कारणभेदे कार्यभूताया अपि ज्वालायाः भेदस्यावश्यकत्वात्, 'दीपज्वालाः भिन्नाः, भिन्नभिन्नकारणजन्यत्वात्, दीपान्तरज्वालावत्' इत्यनुमानेन ज्वालाभेदसिद्ध्या 'सेयं दीपज्वाला' इति ऐक्यप्रत्यभिज्ञायाः भ्रमत्वस्य, सर्वसंमतत्वेऽपि 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञायाः अनन्तरकाले बाधाद्यदर्शनात् भ्रन्तित्वं न संभवतीति भावः ॥

ननु क्षेत्रस्थबीजे अङ्कुरजनकत्वदर्शनात् तदनुगुणशक्तिरावश्यकी; तत्पूर्वक्षणबीजे अङ्कुर-जनकत्वाभावदर्शनाच्च शक्त्यभावश्च सिद्धः । ततश्च शक्तिशक्त्यभावरूपविरुद्धधर्मद्वयस्यैकस्मिन्नसंभवात्, शक्तिशून्यस्य शक्तिमतश्च भेदः आवश्यकः । 'इदं बीजं तद्बीजाद्भिन्नम्, अङ्कुरजनकत्वात्' इति वा, तद्बीजमेतद्बीजाद्भिन्नम्, अङ्कुराजनकत्वात्' इति वानुमानेन बीजयोर्भेदे सिद्धे 'सेयं दीपज्वाला' इति प्रत्यभिज्ञावदेव 'एकमिदं बीजम्' इति प्रत्यभिज्ञापि औपाधिकी, साजात्यमूलकत्वादिति सिद्ध्यतीति चेत्—**एकस्मिन् शक्त्यशक्ती, न** भवतः । दृश्येते किल शक्त्यशक्ती इति चेत्, न; शक्त्यशक्त्योः अतीन्द्रिय-त्वेन न ते दृश्येते । करणाकरणाभ्यां तदनुमानमिति चेत् न; **कृतितदितरयोः साह्यभेदेन सिद्धेः** । **कृतितदितरयोः**=अङ्कुरकरणाकरणयोः **साह्यभेदेन**=साह्यम्=सहकारि, तद्भेदेन **सिद्धेः**=निश्चयात् । ततश्च शक्तत्वेऽपि मृत्सलिलादिसहकारिकारणसत्त्वे अङ्कुरोत्पत्तिः, तदभावे चाङ्कुरानुत्पत्तिः । तावतैव करणाकरणविरोधपरिहारात् बीजयोर्भेदो न सिद्ध्यत्येव । करणाकरणाभ्यामेव शक्तितदभावयोरनुमानमित्यपि न; सहकारिसमवधानासमवधानाभ्यामेव तत्परिहारे, अनुमानस्यान्यथासिद्धत्वात् । ननु सिद्धान्तेऽपि अतिरिक्तायाश्शक्तेरङ्गीकारात् कथं तन्निरास इति चेत्; न शक्तिं निराकुर्मो वयम्, किन्तु करणाकरणाभ्यां भेदानुमानम् । कथं तर्हि शक्तिः सिध्यति? 'परास्य शक्तिर्विविधैव श्रूयते'(श्वे.6-8) इति श्रुत्यैव शक्तिसिद्धिः । अत्यन्तातीन्द्रियवस्तुसाधने अनुमानस्य शक्त्यभावात्, ऐन्द्रियिकवस्तुष्वेव देशकालादि-व्यवहितेष्वनुमानप्रवृत्तेर्वेदान्तिभिरङ्गीकारात् । किञ्च शक्तेरनुमानेन साधनेऽपि, बीजे अङ्कुरजनकशक्तिरेव सर्वदा वर्तते । सहकारिसमवधाने तत् कार्यं करोति, अन्यदा तु न । अथवा यत्र प्रकारान्तरेण निर्वाहो न भवति

**एकस्मिन् कालभेदात् भवति च सहकार्यन्वयानन्वयादिः**
**नो चेन्नो देशभेदादपि सुपरिहरः तेन नैकं क्वचित् स्यात्॥ २५॥**

**[प्रत्यभिज्ञाप्रामाण्यसमर्थनम्]**

**26. तत्त्वेदंत्वे हि कालान्तरघटनमये नैककाले घटेतां**
**कालद्वैतेऽनवस्थाद्यत इह न मितिः प्रत्यभिज्ञेति चेन्न।**

तादृशस्थल एव शक्तेरङ्गीकारात्। बीजादौ शक्त्यनङ्गीकारेऽपि श्रुत्या परमात्मनि शक्त्यङ्गीकारेणैवातिरिक्त-शक्तेस्सिद्धिः। अधिकं तत्रैव (अद्रव्य.98-99)। अतश्च विरुद्धधर्माध्यासाभावात् न क्षणिकत्वसिद्धिः॥

ननु सहकारिसमवधानासमवधाने अपि परस्परविरुद्धे एकस्मिन् कथं संभवत इत्यत्राह— **एकस्मि-न्नित्यादि। एकस्मिन्नेव वस्तुनि सहकार्यन्वयानन्वयादिश्च**=सहकारिसम्बन्धासम्बन्धादिकमपि **कालभेदात् भवति**। एकदेशैककालावच्छेदेन एकस्मिन् वस्तुनि विरुद्धधर्मौ न मिलत इत्येव नियमः॥

एवमनङ्गीकारे तस्याप्यनिष्टापत्तिं प्रदर्शयति— **नो चेदित्यादि। नो चेत्**=एवं यदि नाङ्गीक्रियते, तदा **देशभेदादपि** विरुद्धधर्मसमावेशः **नो सुपरिहारः**=परिहर्तुं न शक्यते। **तेन**=एवं परिहाराभावेन **क्वचित् एकं न स्यात्**=क्वचित् किञ्चदपि न सिद्ध्येत्। कूर्वद्रूपत्वरूपातिशयविशिष्टं बीजं यत्र यदाऽङ्कुरं जनयति, तदेव बीजं तस्मिन्नेव समये तत्पार्श्वदेशावच्छेदेन अङ्कुरं न जनयेदिति सर्वसंप्रतिपन्नम्। एकत्र कालभेदेनापि अङ्कुरजनकत्वतदभावौ यदि न भवतः, तर्हि देशभेदेन अङ्कुरजनकत्वतदभावौ कथम् एकत्र स्याताम्? अतः भवद्दृष्ट्या तत्र कुर्वद्रूपे बीजे सूक्ष्मो भेदः अङ्गीकर्तव्यः, एतद्देशावच्छेदेनाङ्कुरजनको भागः एकः, देशान्तरावच्छेदेनाङ्कुराजनको भागश्चापर इति नास्ति विरोध इति वक्तव्यम्। एवमपि न दोषनिस्तारः। यो भागोऽत्रेदानीमङ्कुरजनकः, सः देशान्तरे तदानीं अङ्कुराजनक एव। अतश्च तस्मिन् विरुद्धधर्मसमावेशात् पुनरपि भेद आवश्यक इति क्षणिकवादोऽपि दुर्निरूपः स्यात्। ततश्च शून्यवाद एव स्यात्॥

अयि स्थूलमते! अस्मदन्तरङ्गमेव भवता न ज्ञातम्। प्रकाशयामः परमं रहस्यम्—

बौद्धाः खलु वयं लोके जगति ख्यातकीर्तयः। क्रमेण सर्वनास्तित्ववादे विश्रान्तिरिष्यते॥
क्षणिकत्वनिरासेन बाह्यार्थानां निराकृतौ। विज्ञानमात्रसत्यत्वे विश्रान्तिस्तु भवेत्स्वतः॥
तत्राप्यनुपपत्तिश्चेत् विश्रान्तिः शून्यसाधने। अतश्शून्यं परं तत्त्वं सिद्ध्यति स्वयमेव हि॥
जानामि भोः भवन्तं वा, भ्रातरं भवतस्तथा। त्वया प्रतारिता हन्त! कियन्तोऽवापि पण्डिताः॥
'अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः'। स्मर्यतां चाप्ययं न्यायो महामेधाविना त्वया॥
परीक्षयामस्सर्वं चाप्यस्मिन् ग्रन्थे यथाक्रमम्। यथावसरं चापि सावधानं निरीक्ष्यताम्॥

अतश्च कुर्वद्रूपे वस्तुनि देशभेदात् अकुर्वद्रूपत्वस्य यथा विरोधो नास्ति, तथैव कालभेदादपि करणाकरणयोर्विरोधो नास्तीति वस्तूनां न क्षणिकत्वसिद्धिः॥ २५॥

'सोऽयं घटः' इत्यादिप्रत्यभिज्ञायाः प्रकारान्तरेण विरुद्धानुपहितविषयत्वमाक्षिप्य समाधत्ते— **तत्त्वेदंत्व** इत्यादिना। 'सोऽयम्' इत्यत्र 'सः' पूर्वकालसंबन्धं वक्ति, 'अयम्' इति एतत्कालसंबन्धम्।

**स्वस्य स्वाभावकाले विहतिनियमनात् स्वेन चात्रैककाल्यात्**
**काले कालानपेक्षे कथमपि सुवचौ नानवस्थाविरोधौ ॥ २६ ॥**

शक्त्यशक्त्योः एकत्रैव कालभेदेनोपपादनसंभवेऽपि, विरुद्धकालद्वयसंबन्धस्तु एकस्य दुरुपपादः। कुत इति चेत्, कालद्वयसंबन्धः किम् एककालावच्छेदेन न विरुद्ध इत्युच्यते, उत भिन्नकालावच्छेदेन न विरुद्ध इत्युच्यते? आद्ये पक्षे विरोधः स्पष्टः। 'अयम्' इत्यनेन वर्तमानकालसंबन्धः उच्यते, वर्तमानेऽस्मिन् 'सः' इति पूर्वकालसंबन्धः कथं घटेत? अतीतस्य वर्तमानत्वम्, वर्तमानस्यातीतत्वं चात्यन्तविरुद्धं खलु। एतत्काले अतीतकालस्य नष्टत्वात्। अतः एककालावच्छेदेनोभयकालसंबन्धः न भवत्येव। अतः द्वितीयः कल्पः आश्रयणीयः, भिन्नकालावच्छेदेनैव कालद्वयसंबन्धात् न विरोध इति। इदमपि न संभवति, अनवस्थाप्रसङ्गात्। अतीतत्ववर्तमानत्वरूपविरुद्धकालद्वयसंबन्धः भिन्नकालावच्छेदेन एकस्मिन् वस्तुनि न विरुद्ध इति यदि विरोधपरिहारः तदा, 'भिन्नकालावच्छेदेन' इत्यनेन पुनः कालद्वय-संबन्धः वक्तव्यः। स किं एककालावच्छेदेन, उत भिन्नकालावच्छेदेन? इत्येवं विकल्पप्रसक्त्या, पूर्वोक्तरीत्या पुनः पुनः कालान्तर-कल्पनेन अनवस्था दुर्वारा। तदिदमुच्यते—**कालान्तरघटनमये**=भिन्नकालद्वयसंबन्धरूपे, **तत्त्वेदंत्वे हि**='सः' इति अतीतकालसंबन्धरूपः, 'अयम्' इति च एतत्कालसंबन्धरूपः इति विरुद्धकालद्वयसंबन्धः **एक-काले**=एककालावच्छेदेन **न घटेताम्**=न संभवतः। अतः, **कालद्वैते**=विरोधपरिहारार्थं पुनः काल-द्वयसंबन्धाधिकरणकालभेदाङ्गीकारे **अनवस्थादि**=अनवस्थादिदोषप्रसक्तिः, **अतः इह**=वस्तुस्थिरत्वे **प्रत्यभिज्ञा न मितिः**=न प्रमितिरूपा, किन्तु भ्रान्तिरूपैवेति न तया किञ्चित् सिद्ध्यति। **इति चेत् न**=इत्याक्षेपो न युक्तः। तत्र हेतुमाह—**स्वस्येत्यादि**। **स्वाभावकाले**=यस्मिन् काले स्वस्याभावो वर्तते, तस्मिन् काले **स्वस्य**= घटादेर्वस्तुनः **विहतिनियमनात्**=**विहतेः**=व्याघातस्य **नियमनात्**=व्यवस्थापनात्। प्रकृते च तादृशव्याघातो नास्ति, कुतः? **अत्र च**=प्रकृते कालद्वयसंबन्धिनि घटादौ **स्वेन**=घटस्वरूपेण= घटस्वरूपदृष्ट्येति यावत्, तत्कालद्वयस्य **ऐककाल्यात्**=एककालत्वात् घटकालत्वरूपेणैककालत्वात् न विरोध इति पूर्वेण संबन्धः॥

**अयमाशयः**—यस्मिन् देशे यस्मिन् काले यस्य सत्त्वं प्रतिपन्नम्, तस्मिन्नेव देशे तस्मिन्नेव काले तस्यैवाभावः विरुद्ध्यते। 'सोऽयं घटः' इत्यादौ तच्छब्देन देशान्तरसंबन्धः, कालान्तरसंबन्धो वा यस्य घटस्य पूर्वं प्रतिपन्नः, तस्यैव तद्देशकालसंबन्धाभावः 'अयम्' इत्यनेन यदि प्रतीयेत, तदैव तयोः=तच्छब्दार्थैतच्छब्दार्थयोर्विरोधः स्यात्। तच्छब्देन तत्कालसंबन्धः, इदंशब्देन एतत्कालसंबन्धश्च कालद्वयसंबन्धिनः घटस्य अविरुद्धावेव, कालद्वयेऽपि घटस्य स्थितत्वात्॥

ननु कथं न विरोधः? इदंशब्देन वर्तमानत्वमुच्यते। तच्छब्देन चातीतत्त्वमुच्यते। अतीतस्य वर्तमानत्वं कथम्? वर्तमानस्यातीतत्त्वं वा कथम्? इति चेत्; अतीतत्त्वं वर्तमानत्वं च सूर्यपरिस्पन्दादिदृष्ट्या उच्यते। तद्घटदृष्ट्या तु सर्वोऽपि कालः तद्घटस्य वर्तमान एव कालः। कालः अखण्डः कश्चन अतीन्द्रियः विलक्षणः पदार्थः। कालस्य प्रत्यक्षत्वसमर्थनस्याशयः तत्प्रकरणे (68) प्रकाश्यते। दिनमास-

**[प्रत्यक्षेणैव क्षणिकत्वसिद्धिनिरासः]**

**27. प्रत्यक्षं वर्तमानं प्रथयति यदिहावर्तमानाद्विभक्तं**
**तस्मात् तेनैव सिद्धं क्षणिकमिति न सत्, तावदित्यप्रतीतेः ।**
**तत्कालासत्त्वमेव ह्यपनयति सतो वर्तमानत्वबोधः**
**कालेऽन्यत्रापि सत्त्वं प्रमितमिति कथं तद्विरोधप्रसङ्गः ।। २७ ।।**

---

संवत्सरादिव्यवहाराः किल सूर्योदयास्तमयाद्युपाधिकाः । सूर्योदयास्तादीनां यथा कालोपाधित्वम्, तथा अन्येषामपि कालोपाधित्वं वर्तते । 'राज्ञः अशोकस्य काले' इति व्यवहारे अशोकः यावत्पर्यन्तं राजासीत्, तावान् काल एक एव । एवं एको घटः यावद्दिनपर्यन्तं तिष्ठेत्, तावान् कालस्सर्वोऽपि घटकाल एक एव । अतश्च एकस्यैव घटस्य कालद्वयसंबन्धादिव्यवहारः सूर्यपरिस्पन्दादिदृष्ट्यैव । न तु घटस्य स्वकालदृष्ट्या कालद्वयसंबन्धः वर्तते । अतः घटदृष्ट्या एकस्मिन्नेव काले सूर्यपरिस्पन्दाद्युपाधिक-कालद्वयसंबन्धः 'सोऽयम्' इत्यनेनाभिलप्यते । तदिदमुच्यते— **स्वेन चात्रैककाल्यादिति** । कालद्वयसंबन्धिनि घटे स्वेन रूपेण एककालत्वमेव, सूर्यपरिस्पन्दादिदृष्ट्या तु अनेककालत्वम् । अतश्च, कालद्वयसंबन्धः एककालावच्छेदेन, उत भिन्नकालावच्छेदेन? इति विकल्पयोः प्रथम एव कल्पः सिद्धान्तः । घटदृष्ट्या एककालावच्छेदेन, सूर्यपरिस्पन्ददृष्ट्या कालद्वयसंबन्धः न विरुद्ध्यत इति न काप्यनुपपत्तिः ।।

द्वितीयस्यानङ्गीकारादेव नानवस्थेत्युच्यते— **काले कालानपेक्ष** इत्यादिना । एवं घटकालस्य घटदृष्ट्या कालान्तरानपेक्षत्वात् नानवस्था; **न वा प्रथमकल्पोक्तविरोधः** । **काले**=घटकाले **कालानपेक्षे**=कालान्तरा-नपेक्षे सति **अनवस्था, विरोधश्च न सुवचौ** इत्यर्थः । एवञ्च वस्तूनां अनेककालवर्तित्वरूपस्थैर्ये सिद्धे एकक्षणमात्रवर्तित्वरूपं क्षणिकत्वं न प्रामाणिकम् ।। २६ ।।

'स्वस्य स्वाभावेन साकमेव विरोधः' इति भवदुक्तन्यायेनैव वस्तूनां क्षणिकत्वसिद्धिरित्याशङ्क्य परिहरति— **प्रत्यक्षमित्यादिना** । प्रत्यक्षं प्रमाणं वर्तमानमात्रग्राहीति सर्वसंमतम् । तेन अवर्तमानत्वरूपः विरोधः निराकार्यः, वर्तमानत्वावर्तमानत्वयोर्विरोधात् । अवर्तमानत्वं नाम भूतत्वम्, भविष्यत्त्वं च । तयोः वर्तमानत्वेन विरोधात्, उभयं वर्तमानत्वग्रहणेन व्यावर्तितम् । ततश्च तत्क्षणमात्रवर्तित्वरूपस्य वर्तमानत्वस्य सिद्ध्या वस्तूनां क्षणिकत्वसिद्धिः । **प्रत्यक्षं**=प्रत्यक्षप्रमाणं **वर्तमानं**=घटादिकं **अवर्तमानात् विभक्तं**=भूतात् भविष्यतश्च व्यावृत्तमेव **यत्**=यस्मात् **प्रथयति**=प्रकाशयति, **तस्मादेव तैनैव**=वर्तमानत्वप्रत्यक्षेणैव **क्षणिकं**=घटादिकं पूर्वमपि नासीत्, अनन्तरमपि न भविष्यतीति क्षणिकम्, न तु स्थिरमिति **सिद्धम्**=निश्चितम्। अतश्च प्रत्यक्षेणैव क्षणिकवस्तुसिद्धिः इति पूर्वपक्षे; एतन्निराकरोति— **न सदिति** । तत्र हेतुः— **तावदित्य-प्रतीतेः** इति=वर्तमानमात्रमिति प्रतीतेरभावात् । ननूक्तं किल तत्तदभावयोर्विरोधात् वर्तमानत्वं तद्विरुद्धम् अवर्तमानत्वं व्यावर्तयतीति इति चेत्, तत्र हेतुं विवृणोति— **तत्कालेत्यादि** । **सतः**=वर्तमानकाले विद्यमानस्य **वर्तमानत्वबोधः**=वर्तमानत्वप्रत्यक्षम्, **तत्कालासत्त्वमेव हि अपनयति**=वर्तमानकालासत्त्वमेव हि व्यावर्तयति, न तु भूतकालिकत्वम्, भाविकालिकत्वं वा व्यावर्तयति । **'हि'** इति प्रसिद्धौ । सर्वानुभवसिद्धमेतदेवेत्यर्थः ।।

**अयं भावः**—सत्यम्, वर्तमानत्वं तद्विरुद्धं अवर्तमानत्वं व्यावर्तयतीति। परन्तु अवर्तमानत्वमित्यत्र नञः अन्योन्याभावः अर्थः, उतात्यन्ताभावः। न प्रथमः, स्वस्मिन् स्वभेदस्य विरुद्धत्वेऽपि, अन्यत्रोभयसत्त्वे विरोधाभावात्। घटघटभेदयोः भूतले सत्त्वस्य न हि विरोधः। असामानाधिकरण्यं विरोधः, सामानाधिकरण्यं चाविरोधः। एवञ्च घटघटभेदयोस्सामानाधिकरण्यं वर्तत एव। घटघटवद्भेदयोरेव विरोधः। न तु घटघटभेदयोः। घटभेदवति खलु भूतले घटो वर्तते। भिन्नयोरेव किलाधाराधेयभावः। द्वितीयकल्पे, तत्तदभावयोरेव विरोधः। एवञ्च वर्तमानत्ववर्तमानत्वाभावयोरेव विरोधः, न तु वर्तमानत्वभूतत्वयोः, वर्तमानत्वागामित्वयोर्वा। एकस्यैव वर्तमानत्वं भूतत्वं च कथं भवेत् इति चेत्; कालभेदात्संभवेत्। विरुद्धः कालभेदो वा एकत्र कथं भवेत् इति चेत्; 'स्वस्य स्वाभावकाले' इत्यादिना गतश्लोक एव दत्तोत्तरमेतत्। तथा च प्रत्यक्षेण न क्षणिकत्वसिद्धिः। तदेतदुच्यते—**तावदित्यप्रतीतेः** इत्यादिना। **तावदिति**=वर्तमान एवेति **अप्रतीतेः**=वर्तमानत्वग्रहणकाले अग्रहणात्। ननु 'सर्वं वाक्यं सावधारणम्' इति हि न्यायः। 'नीलो घटः' इत्युक्ते हि पीतादिव्यावृत्तिः स्वतः सिद्ध्यत्येव। अतः **'तावत्'**=तावदेव इत्यपि प्रतीयत एवेति चेत्, तत्राह—**तत्कालेत्यादि**। **सतः**=वर्तमानस्य वस्तुनः **वर्तमानत्वबोधः**=वर्तमानत्वप्रतीतिः न तु शब्दप्रयोगः, **तत्कालासत्त्वमेव हि अपनयति**। 'घटोऽस्ति' इत्युक्ते, घटस्यास्तित्वम् अथवा सत्त्वम्, अथवा वर्तमानकालसंबन्धः बोध्यते। तेन तद्विरुद्धं वर्तमानकालसंबन्धाभावमात्रं व्यावर्त्यते, तत्तदभावयोरेव विरोधात्। **अन्यत्र कालेऽपि**=अन्यस्मिन् भूते, भविष्यति वा कालेऽपि **सत्त्वम् प्रमितम् इति**=प्रमाणेन निश्चितमिति हेतोः, **तद्विरोधप्रसङ्गः कथम्**=वर्तमानत्वेन विरोधप्रसक्तिः कथम् भवेत्, न कथञ्चिदपि। 'नीलो घटः' इत्युक्ते 'अनीलव्यावृत्तिः'=नीलविरुद्धपीतादिव्यावृत्तिरेव प्रतीयेत, न तु संख्यापरिमाणाद्यविरुद्धधर्मव्यावृत्तिः। अतः वर्तमानत्वग्रहः न भूतभविष्यद्व्यावृत्तिं साधयेत्॥

भूतकालवर्तित्वं केन गृह्यत इति चेत्; 'सोऽयम्' इति प्रत्यभिज्ञयैव। तस्य प्रामाण्यं विवादग्रस्तमिति चेत्, पूर्वस्मिन् श्लोके दत्तोत्तरमेतत्। आगामिकालवर्तित्वं कथं गृह्येतेति चेत्, अनुमानादिना। गृहक्षेत्रादीनां क्रयविक्रयादिकम् आगामिकालदृष्ट्या हि चलति। तत्सर्वमूहमात्रमिति चेत्, क्षणिकत्वेऽपि विरोधमुपपादयतां शून्यवादिनां किमुत्तरं वक्तव्यम्। वस्तुनः क्षणिकत्वेऽपि प्रवाहतः सत्त्वस्याङ्गीकारात् नानुपपत्तिरिति चेत्, क्षणिकत्वे सिद्धे हि गत्यन्तराभावात् तथा वक्तव्यम्। स्वरसतः स्थिरत्वस्यैव सर्वानुभवसिद्धत्वात्, तत्र विरोधे मानाभावाच्च न कथञ्चिदपि क्षणिकत्वसिद्धिः॥

ननु आशाजीविनामिदमागामिकालनिरीक्षणादिकम्। विवेकिनस्त्वश्वस्तना एवेति रहस्यं किं न जानासि? एवं वदतः तव का वा निरीक्षेत्युच्यताम्॥

गतं न शोचयेत्प्राज्ञः नाप्यागामि निरीक्षयेत्। अश्वस्तनस्तु वेदान्ती कथ्यते हि भवादृशैः॥
एवं वदन् भवान् किंनु भवेः वद गजस्तनः?। बकव्रती वा मार्जालव्रती वा त्वम् ऋतं वद॥
वेदान्तशास्त्रमेतत्तु वैराग्यायोपदिश्यते। लोकायतं चाप्यस्त्येव व्यवहारस्य सिद्धये॥ २७॥

[अहेतुकध्वंसवादनिरासः]

28. **उत्पन्नानां विनाशे ध्रुवभवितृतया हेत्वपेक्षाविहीने**
**जन्मन्येवोपरोधात् क्षणिकमिह जगत् सर्वमित्यप्यसारम्।**
**लिङ्गं ह्येष्यत्त्वमात्रं जननविधुरता तत्क्षणानुक्षणत्वे**
**तत्त्वं तज्जन्यता वा तदिदमनियमासिद्धिबाधादिदूष्यम्॥ २८॥**

पुनः **विभज्यवैभाषिकोक्तं** प्रकारान्तरेण जगतः क्षणिकत्वसाधनप्रकारमाशङ्क्य परिहरति—**उत्पन्नाना-मित्यादि**। **विनाशे**=ध्वंसे **ध्रुवभवितृतया**=ध्रुवभावित्वेन हेतुना **हेत्वपेक्षाविहीने**=हेतुनिरपेक्षे सिद्धे सति **उत्पन्नानां** पदार्थानां **जन्मन्येव**=उत्पत्तिसमय एव **निरोधात्**=ध्वंसात् इह **सर्वं जगत् क्षणिकम्**=एकक्षण-मात्रवर्तीति सिद्धम्। **अयं भावः**—नाशाख्यः कश्चन पदार्थः ध्वंसपर्यायः भावरूपोऽभावरूपो वा लौकिकपरीक्षकसर्वसंमतः दुरपह्नवः। स च नित्य इत्यपि, अन्यथा ध्वस्तस्य पुनरुन्मज्जनप्रसङ्गः। ध्वंसो यद्यनित्यः, तर्हि तस्य नाशः कदाचित् स्यादेव। एवञ्च घटस्य ध्वंसो नाम घटनाशः, तस्य नाशे=घटनाशस्य नाशे पुनः घट उज्जीवेत्। घटाभावाभावो हि घट एव। अतश्च नित्यत्वादेव सः हेतुनिरपेक्ष इति च स्वतस्सिद्धम्। न च ध्वंसस्य नित्यत्वेऽपि उत्पत्तेरङ्गीकारात्, तस्य हेतुनिरपेक्षत्वं नास्तीति वाच्यम्; उत्पत्तिमतो हि नाशः अनिवार्यः। अत एव हि 'जातस्य हि ध्रुवो मृत्युः' इति भवत्कूटस्थोपदेशः। न च मुद्गराघातादेः ध्वंसं प्रति कारणत्वस्य दृष्टत्वात् न निरपेक्षः ध्वंसः इति वाच्यम्; तेषां अभिव्यक्तिकारणत्वेनाप्युपपत्तेः। अपि च मुद्गराघातस्य ध्वंसं प्रति हेतुत्वं तवापि न हीष्टम्; अवयवविश्लेषकरण एव मुद्गराघातस्य त्वयापि पर्यवसानाङ्गीकारात्। न चान्ततः ध्वंसं प्रति प्रतियोगिनः कारणत्वस्यास्माभिरङ्गी-कारात् ध्वंसस्य हेतुजन्यत्वं वर्तत एवेति वाच्यम्; पतितोऽसि मदीये जाले। ध्वंसं प्रति प्रतियोगि कारणमिति सत्यम्। ध्वंसस्य समवाय्यसमवायिकारणे तु न स्त एव। प्रतियोगि तु निमित्तकारणम्। अत एव निमित्तस्य प्रतियोगिनः सिद्धौ, ध्वंसे कारणान्तरनिरपेक्षतायाश्च भवताप्यङ्गीकारात्, कालस्य क्षेपे कारणाभावेन, जातस्य मृत्युः ध्रुवस्सिद्धः। न च कालेश्वरादृष्टादीनां कार्यसामान्यकारणानां सत्त्वान्न प्रतियोगिमात्रजन्यो ध्वंस इति वाच्यम्, कालेश्वरादिसद्भाव एव प्रमाणाभावेन, तेषां कारणत्वं हि दण्डापूपायितम्। अतश्च प्रतियोगिनि सिद्धे विवृतवदनेन ध्वंसेन स ग्रस्यत एवेति एकक्षणायूंषि सर्वाणि। अतः उत्पत्तिक्षणमात्रवर्तिनः सर्वे भावा इति जगत् सर्वं क्षणिकं इति सिद्धम्। तथा चानुमानम् 'ध्वंसः हेतुनिरपेक्षः, ध्रुवभावित्वात्' इति॥

तदिदं निराकरोति—**इत्यप्यसारमिति**। कुत इत्यत्राह—**लिङ्गं हीत्यादि**। हेतुं विकल्पयति—**एष्यत्वमित्यादिना**। उक्तानुमाने 'ध्रुवभावित्वात्' इति हेतोरर्थः कः? नियमेन आगामित्वरूपं एष्यत्वसामान्यं अर्थः? सदातनत्वम्, अत एवोत्पत्तिरहितत्वपर्यवसितं सत्ताध्रौव्यं अर्थः? प्रतियोगिनः ध्वंसस्य च समानकालिकत्वमर्थः? उत प्रतियोगिक्षणाव्यवहितसमनन्तरकालिकत्वमर्थः? अथवा प्रतियोग्यात्मकत्वमेवार्थः? उत प्रतियोगिजन्यत्वमर्थः? ध्रुवभाविपदस्य हि कथञ्चिदेते अर्था भवन्ति॥

पदानामर्थस्तु—**एष्यत्वमात्रम्**, सामान्यतः आगामित्वमर्थः। **जननविधुरता**=उत्पत्तिरहितत्वमर्थः? **ध्रुवभावि**=सदातनम्। **तत्क्षणत्वम्**=स एव क्षणः यस्य ध्वंसस्य, **तत्त्वम्**=प्रतियोगिसमानक्षणत्वमर्थः।

**अनुक्षणत्वम्**=तदनुक्षणत्वम्=प्रतियोगिक्षणसमनन्तरक्षणभावित्वम् अर्थः। क्षणानुक्षणपदयोः द्वंद्वः, ततो भावप्रत्ययः, अनन्तरं प्रतियोगिवाचकतत्पदेन तत्पुरुषः। भावप्रत्ययात्पूर्वं वा तत्पुरुषः। ततश्च तत्क्षणत्वम्, तदनन्तरक्षणत्वं चार्थः। अथवा **तत्त्वम्**=प्रतियोग्यात्मकत्वमर्थः। यद्वा **तज्जन्यता वा**=प्रतियोगिजन्यत्वमर्थः॥

एवं विकल्पितानां पक्षाणां क्रमाद्दोषानाह—**तदिदमित्यादिना**। तदिदमिति सामान्ये नपुंसकम्। एवं हेतोरर्थवर्णनम्, **अनियमासिद्धिबाधादिदूष्यम्=अनियमः**=व्यभिचारः। **असिद्धिः** प्रसिद्धा। **बाधश्च** प्रसिद्धः। **आदिना** विरोधस्य ग्रहणम्। एभिः दूष्यम्॥

तत्र **प्रथमे** एष्यत्वे, अनियमः, हेतुनिरपेक्षत्वरूपसाध्यस्याभाववति हेतुसापेक्षे ध्वंसभिन्ने घटादौ एष्यत्वस्य सत्त्वात् व्यभिचारः। **द्वितीये** जननविधुरत्वे, असिद्धिः। ध्वंसस्य प्रतियोगिजन्यत्वस्य सर्वसंमतत्वेन, जननविधुरत्वस्य पक्षे असिद्धिः। हेत्वभाववत्पक्षः स्वरूपासिद्धिः। ननु तन्मते ध्वंसस्य नित्यत्वाङ्गीकारात् जननविधुरत्वं तत्रास्त्येवेति कथमसिद्धिरिति चेत्, न; ध्वंसस्य तत्त्वतः सामान्यरूपेण नित्यत्वेऽपि, प्रतियोगिसिद्धिसमनन्तरं तत्तत्प्रतियोगिकध्वंसत्वेन रूपेण जन्यत्वस्यावश्यकत्वात्, विशेषरूपेण जन्यत्वस्य सत्त्वात्। अन्यथा घटोत्पत्तेः पूर्वमपि घटध्वंसप्रसङ्गः। **तृतीये,** प्रतियोगिनः एकक्षणमात्रवृत्तित्वाङ्गीकारात्, प्रतियोगिना सह समानक्षणत्वाभावात् असिद्धिः। **चतुर्थे,** तदनन्तरक्षणभावित्वे सिद्धे, तस्यैव हेतुत्वरूपत्वात्, हेतुनिरपेक्षत्वविरुद्धत्वाद्धेतोः विरोधो दोषः स्पष्टः। कार्याव्यवहितपूर्वक्षणवृत्तिर्हि कारणमुच्यते। कारणाव्यवहितोत्तरवृत्ति चेत् कार्यम्, कार्याव्यवहितपूर्ववृत्तित्वमपि प्रतियोगिनिरूपितेनैव लभ्यत एव। तदेव च कारणत्वमिति। **पञ्चमे,** ध्वंसे प्रतियोग्यात्मकत्वस्यासंभवात् हेत्वसिद्धिः स्पष्टा। **षष्ठे,** तज्जन्यत्वे सिद्धे हेत्वनपेक्षत्वं कथमुच्यते? अतः विरोधः स्पष्ट एव। अतश्च ध्वंसः हेत्वनपेक्षः, ध्रुवभावित्वादित्यनुमानस्यासंभवात् न क्षणिकत्वस्य सिद्धिः। ननु तदुक्तानुमानस्यास्तु दूषणम्; अथापि ध्वंसः खलु न समवायिकारणापेक्षः, अनङ्गीकारात्। अत एव नासमवायिकारणमपि। एवञ्च ध्वंसं प्रति प्रतियोग्येव निमित्तकारणमिति तु सर्वसंमतम्। एवञ्च प्रतियोगिनि जाते, कारणस्य सिद्धत्वात् कुतः कार्यभूतो ध्वंसः तदैव न भवेत्। 'जातस्य हि ध्रुवो मृत्युः' इति हि न्यायः इति चेत्, उच्यते—'नाभावो विद्यते सतः' इत्यपि तत्रैवोक्तमपि पश्य। किञ्च ध्वंसं प्रति प्रतियोगिमात्रं न हेतुः, कालेश्वरादृष्टादीनां साधारणकारणानामप्यपेक्षणात्। कालेश्वरादयो न सन्तीत्युक्तं किलेति चेत्, अत एव ते सन्त्येवेति सिद्धम्। न ह्यसतश्शशशृङ्गादावेवं चर्चा। अतश्च कूश्माण्डचौर्यकथाप्रसङ्गन्यायेन सिद्धा एव ते। अधिकं च तत्तदवसरे। अतश्च तेष्वन्यतमविलम्बेन कार्यस्य उत्पत्तिक्षण एव नाशासंभवात् न क्षणिकत्वसिद्धिः। एवं ध्वंसस्य विलम्बे, वस्तुनोऽनुवृत्तेः सिद्ध्या, स एव 'स्थिति'पदस्यार्थः। 'जातस्य हि' इत्याद्यपि, नाशस्यानिवार्यतां वक्ति, न तु प्रतियोगिसमनन्तरक्षणभाव्यताम्। अतः उक्तयुक्त्या न क्षणिकत्वसिद्धिः॥

**इदमत्रचिन्तनीयम्**—दारुकाष्ठादिकं गृहाद्बहिरनावृतप्रदेशे प्रक्षिप्तं शीघ्रं नश्यति। गृहान्तः रक्षितं तु शतवर्षकालमपि तिष्ठति। विशिष्य रक्षणोपायाचरणेन ततोऽपि बहुवत्सरांस्तिष्ठेयुः। एवं शरीरमपि व्याध्यादिग्रस्तं चिकित्सारहितं चेत्, नश्यत्येव। औषधसेवादिभिस्तु रक्ष्यत इत्यप्यनुभवसिद्धम्। अन्यथा हि

[क्षणिकवादेऽनुपपत्तिप्रदर्शनम्]

**29. कालानन्तर्यसाम्ये क्षणिकवपुषि ते देशकालाद्युपाधौ**
**सर्वे पूर्वे भवेयुस्तदुपरि भवतां कारणानि क्षणानाम्।**
**सन्तानैक्यव्यवस्था निजफलनियतिर्वासनानां च न स्यात्**
**कार्पासे रक्तितादि क्रमविपरिणमत्संस्कृतद्रव्यतः स्यात्॥ २९ ॥**

आयुर्वेदशास्त्रमर्थशून्यमेव स्यात्। अतश्चैकमेव वस्तु द्वित्रक्षणस्थाय्यपि, द्वित्रदिनस्थायि, द्वित्रवर्षस्थायि चेत्यनुभवसिद्धम्। ततश्चैवं नाशे सहजेऽप्युपायैः कालानुवृत्तिरपि प्रत्यक्षसिद्धा। कालान्तरानुवृत्तिरेव स्थितिरुच्यते। अतश्च क्षणिकत्ववादोऽयं दुर्बल एव। सर्वाण्यपि कदाचिन्नश्यन्तीति तु सत्यम्। परन्तु कालक्षेपस्यापि सत्त्वादेतदपि सत्यमेव। अतश्च मानवबुद्ध्या निर्णेतुमशक्ये विषये, 'एवमेव' इति निर्णयस्यासंभवात्, सकलशास्त्रव्यवहाराद्यनुसारात् वस्तुस्थैर्यमनिवार्यम्। वैराग्यार्थं क्षणिकोपदेशश्चेत्तदङ्गीकृतमेव 'आस्थानिवृत्त्यर्थमवादिबौद्धैः' इति। न तावता वस्तुस्वरूपनिर्णय इति॥ २८॥

क्षणिकवादेऽनुपपत्तिं प्रदर्शयति—**कालेत्यादि। देशकालाद्युपाधौ ते क्षणिकवपुषि सति, कालानन्तर्यसाम्ये सति सर्वे पूर्वे क्षणाः, तदुपरि भवतां क्षणानां कारणानि भवेयुः। ततश्च, सन्तानैक्यव्यवस्था, वासनानां निजफलनियतिश्च न स्यात्। कार्पासे रक्तादि क्रमविपरिणमत्संस्कृतद्रव्यतः स्यात्** इत्यन्वयक्रमः॥

बौद्धाः खलु चतुर्विधा इत्युक्तं (श्लो.8) प्राक्। तत्र वैभाषिकाः सौत्रान्तिकाश्च जगत्सत्यतावादिनः। योगाचारास्तु विज्ञानमात्रसत्यतावादिनः। माध्यमिकास्तु सर्वमिथ्यात्ववादिनः। पूर्वे त्रयोऽपि स्वाभ्युपगतस्य वस्तुनः क्षणिकत्वं वदन्ति। विज्ञानशब्दवाच्यस्य धातुनोऽपि क्षणिकत्वं ते वदन्ति। एते 'अहम्' इति प्रतीतिविषयमात्मानं (जी.स.2) नाङ्गीकुर्वन्ति। अतस्ते **'नैरात्म्यवादिनः'** इति प्रसिद्धाः। 'अहम्' इति प्रतीतौ अखण्डः कश्चित्पदार्थो न विषयः, किन्तु सः सङ्घातरूपः। तत्र विज्ञानाख्यः स्वयंप्रकाशः कश्चन धातुविशेषोऽपि घटकः। संवृत्त्याख्यवस्तुप्रभावात् स धातुः संघातरूपतामापद्यते। एतादृशसङ्घातरूपोऽयमहमर्थ एवात्मा। अतश्चाहमर्थः न वास्तविकः। किन्तु प्रातीतिकः। सोऽपि क्षणिकः। अत्रैवं दूषणमुच्यते-वस्तुस्थैर्यवादिभिः नैय्यायिकादिभिः, 'आत्मनः क्षणिकत्वे बाल्ये विलोकितस्य वस्तुनः वार्धक्ये स्मरणं न स्यात्, आत्मनः क्षणिकत्वेन द्रष्टुः आत्मनः वार्धक्ये नाशात्, अन्येन दर्शनम् अन्येन स्मरणं च कथं घटताम्' इति। अस्योत्तरं तैरेवमभिधीयते—यद्यपि आत्मानः क्षणिकाः। अथापि, अनादिसिद्धा वासना, तत्तत्क्षणपरंपरारूपे आत्मन्यनुवर्तते; यथा कस्तूरिकायाः वस्त्राणामधस्तात् स्थापने, कस्तूरिकायाः गन्धः उपर्युपरि वस्त्रेषु संक्रमते, तथा अनुभवजन्या वासनापि क्षणिकात्मपरंपरायां संक्रममाणा कालान्तरे स्मृतिं जनयतीति। अस्य 'वासनासंक्रमः' इति संज्ञा। नैयायिकसंमतभावनाख्यसंस्कारवत्तैरियं वासनेत्युच्यते। वस्तुनः नाशेऽपि, तत्रोत्पन्ना वासना तु अनुवर्तत इत्यत्र दृष्टान्तं प्रदर्शयन्ति— 'यस्मिन्नेव हि सन्ताने आहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥' इति। सन्ताने=क्षणिकविज्ञानपरंपरायाम्॥

[क्षणिकत्वसाधकानुमाननिरासः]

30. **मेयत्वाद्यैर्विगीतं क्षणिकमिह जगत् स्यात् क्षणोपाधिवच्चेत्**
**बाधो दृष्टान्तहानिः स्थिर इति विदितो यत् क्षणस्याप्युपाधिः ।**

श्वेतकार्पासबीजे संस्कारविशेषात् आधीयमानः रक्तवर्णः, तद्बीजजन्ये कार्पासे अनुवर्तते इति प्रत्यक्षसिद्धम् । तद्वदेव, पुण्यपापादिकर्मवासना वा, स्मृतिहेतुवासना वा उत्तरत्राप्यनुवर्तते इति, पुण्यपापफलानाम्, स्मरणस्य वा व्यवस्था भवतीति न काप्यनुपपत्तिरिति वदन्ति । तदेतदत्र दूषयति ॥

वस्तूनां क्षणिकत्वेऽपि क्षणिकवस्तुपरंपरायाः सत्त्वात्, वासनानुवृत्त्या स्मरणादिव्यवस्था संगच्छत इति न युज्यते । परंपरायाः परस्परं भेदस्य दुर्निरूपत्वात् । क्षणिकवादे, प्रतिक्षणं वस्तुनः नाशेऽपि तेन क्षणेन तत्तुल्यवस्त्वन्तरजननात्, पूर्वक्षणवर्तिवस्तुनः उत्तरक्षणवर्ति वस्तु प्रति कारणत्वस्य च सत्त्वात्, कार्यकारणपरंपरायाः सत्त्वेन क्षणिकपरंपराः परस्परं भिद्यन्त एव । अत एव वासनापि तत्तत्परंपरायामनुवर्तत इति व्यवस्थोपपत्तिरिति न साधीयः । कारणत्वं हि नियमेनाव्यवहितपूर्वक्षणवृत्तित्वम् । तत्रोत्तरक्षणान् प्रति सर्वेषामपि पूर्वक्षणानां पूर्ववर्तित्वं समानम् । एवं च अस्यैव क्षणस्य एतत्क्षणं प्रति पूर्ववृत्तित्वम्, नान्यस्य इत्यत्र नियामकाभावात् सर्वेऽपि पूर्वक्षणाः सर्वानप्युत्तरक्षणान् प्रति कारणानि स्युः, पूर्ववृत्तित्वाविशेषात् । न चैतद्देशैतत्कालवर्तिनां एतद्देशैतत्कालवर्तिनः क्षणा एव कारणानि भवन्ति, नान्यानि । भवन्मतेऽपीदमनिवार्यम् । एककालावच्छेदेन, भिन्नदेशेषु जायमानानां पटानां कारणभूतास्तन्तवः अविशेषेण सर्वपटान् प्रत्यपि कारणानि भवेयुरित्याक्षेपे, देशभेदेन कार्यभेदस्य सत्त्वात् कारणभेदः उपपादनीयः । तदत्रापि समानमिति वाच्यम्, क्षणिकवादेऽतिरिक्तस्य स्थिरस्य कालस्य, देशस्य वानङ्गीकारात्, व्यवस्थाया दुर्वचत्वात् । तदिदमुक्तम्— **'ते देशकालाद्युपाधौ क्षणिकवपुषि'** इति । एवञ्च स्मरणादिव्यवस्था तन्मते दुरुपपादा ॥

ननु दर्शनानुरोधेन खलु सर्वं वक्तव्यम् । दृश्यते च कार्पासबीजादौ आहितस्य संस्कारस्यानुवृत्तिः तद्बीजपरंपरायामेव, न त्वन्यत्रेति व्यवस्था । तद्वदेव सर्वेषामपि क्षणानां सूक्ष्मातिशयविशेषस्य परस्परविलक्षणस्याङ्गीकारात् अनुवृत्तिव्यवस्था सुवचैवेति चेत्, तत्राह— **कार्पासेत्यादि** । वस्तुस्थैर्यस्य, स्थिरस्य देशकालाद्युपाधेश्च सिद्धान्तेऽङ्गीकारात् व्यवस्था सुवचा, वस्तुभेदस्य उपपादनात् । कार्पासबीजानामपि परस्परभेदस्य परिणामभेदस्य च उपपादयितुं शक्यत्वात् न दोषः । क्षणिकवादे तु एतन्न संभवतीत्यनुपदमेवोपपादितम् ॥

किञ्च, वासनासंक्रमोऽपि तन्मते दुरुपपादः । वासनाया अपि क्षणिकत्वेन, आश्रयेण साकं नाशात्, कथमुत्तरत्र संक्रमः? तत्तुल्यवासनान्तरोत्पत्तिरेव संक्रम इति चेत्; क्षणिकविज्ञानसन्तत्या प्रत्यभिज्ञाया अनिर्वाहे, तन्निर्वाहकतया कल्पिताया वासनाया अपि क्षणिकत्वेन 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायावतारप्रसङ्गः । अतश्च स्मरणादिव्यवस्था तन्मते दुर्वचैवेति क्षणिकवादो न साधीयः ॥ २९ ॥

क्षणिकत्वसाधकमनुमानान्तरमनूद्य दूषयति— **मेयत्वाद्यैरित्यादि** । **इह विगीतं**=विमतं जगत् **मेयत्वाद्यैः**=प्रमेयत्वादिहेतुभिः **क्षणिकम्, क्षणोपाधिवत् स्यात्; चेत्**=यदि इति पूर्वपक्षः । 'विमतं जगत्

**सामग्री कार्यशून्या क्षणः, इयमपि च तद्धेतुसंघः, न चासौ**
**हेतुर्नान्यस्स्थिरास्ते क्रमवदुपधिवत्स्यात्क्षणत्वं स्थिरेऽपि ॥ ३० ॥**

क्षणिकम्, प्रमेयत्वात्, क्षणोपाधिवत्' इति प्रयोगः । 'आद्य'पदेन **सत्त्वादि**परिग्रहः । लोके क्षणशब्दः, तदर्थः कालविशेषश्च सर्वसंमतः । तेन यः कश्चन क्षणपदार्थः सर्वैरप्यङ्गीकार्य एव । न हि क्षणशब्दः, शशशृङ्गशब्दतुल्यः । अतः तद्दृष्टान्तेनैव इतरेषां सर्वेषामपि वस्तूनां क्षणिकत्वं साधयामो वयम् । न च भवत्संमतः क्षणव्यवहारः अस्माकं सर्वथा न संमतः । किन्तु स्थिरस्यैव कस्यचिद्वस्तुनः उपाधिविशेष-संबन्धात् क्षणव्यवहारहेतुतां वदामः । अतश्च दृष्टान्ताभावात् उक्तमनुमानमप्रयोजकमिति चेत्; अस्तु तर्हि क्षणव्यवहारोपाधिभूतः कश्चित्पदार्थः भवत्संमत एव दृष्टान्तः । तस्य स्थिरत्वे हि न क्षणोपाधित्वं तस्य युज्यते । अतस्स एवास्तु दृष्टान्तः । अतश्च दृष्टान्तलाभात् नाप्रयोजकं तदनुमानमिति पूर्वपक्षः ॥

तत्र दोषमाह—**बाध** इत्यादि । प्रथमं प्रत्यक्षबाधः । 'वह्निः अनुष्णः, प्रमेयत्वात्, घटवत्' इत्येतत्तुल्यः सोऽपि प्रयोगः । ननु दृष्टान्तस्य सत्त्वात् बाधनिश्चयः कथमित्यत्राह—**दृष्टान्तहानिरि**ति । अक्षणिकस्य कथं दृष्टान्तत्वम्? इत्यत्राह—**स्थिर** इत्यादि । **यत्**=यस्मात् **क्षणस्य**=क्षणव्यवहारस्य **उपाधिरपि स्थिरः इति विदितः**=निश्चितः, अतः दृष्टान्तहानिः । कोऽसौ, स्थिरोऽपि क्षणव्यवहारोपाधिः? इत्यत्राह—**समाग्रीत्यादि । कार्यशून्या सामग्री क्षणः**=क्षणव्यवहारोपाधिः । **अयमाशयः**—सामग्री नाम सर्वकारणसमुदायः, यस्यां संपन्नायां समनन्तरक्षणे कार्येण भवितव्यम् । यथा घटकारणानि दण्डचक्रसलिल-कुलालादीनि प्रत्येकं कारणानि भवन्त्यपि, अन्यतमापाये न घटो भवति । सर्वाण्यपि यदि मिलितानि, तदा समनन्तरे क्षणे घटः अवश्यं भावी । अतश्च घटप्रागभावस्यायमन्तिमक्षणः । घटे उत्पन्ने हि घटप्रागभावो नश्यति । अतश्च घटसामग्र्येव घटप्रागभावस्यान्तिमः क्षणः । न च सिद्धान्ते प्रागभावोऽपि नाङ्गीक्रियत इति शङ्क्यम्; प्रागभावः अतिरिक्तो नास्तीत्येतावन्मात्रम् । एवञ्च घटरूपकार्यशून्या सामग्री घटाव्यवहितपूर्वक्षण-मात्रे वर्तते । अतः सैव क्षणोपाधिः । ननु तर्हि एकक्षणमात्रवृत्तिः सामग्र्याख्यः कश्चित् क्षणिकपदार्थः सिद्ध इति, न दृष्टान्तहानिः इत्यत्राह—**इयमित्यादि । इयमपि**=सामग्र्यपि, **तद्धेतुसङ्घः** । तस्य घटादिकार्यस्य हेतूनां समुदाय एव, न त्वतिरिक्त पदार्थः । तथा च कारणानां समुदाय एव सामग्री, न त्वतिरिक्तः पदार्थः। अतो दृष्टान्तहानिरेव । ननु समुदायस्य प्रत्येकानतिरेके प्रत्येककारणान्येव यदि सामग्री, तर्हि एककारण-सत्त्वेऽपि कार्योत्पत्तिप्रसङ्गः । अतः प्रत्येकापेक्षया सामग्री अतिरिक्तैव । सा च क्षणिका सिद्धेत्यत्राह—**न चासौ हेतुः । असौ**=सामग्री **न हेतुः**=प्रत्येकं हेतुः न सामाग्री, किन्तु हेतूनां समुदाय एव । तर्हि अन्या स्यात् सामाग्री इत्यत्राह—**नान्य इति** । न वा प्रत्येकातिरिक्तः समुदायः । **ते**=प्रत्येकपदार्थास्तु स्थिराः । अतः न क्षणिकत्वसिद्धिः ॥

ननु किमिदं विलक्षणमुच्यते, समुदायः प्रत्येकस्वरूपोऽपि न, अतिरिक्तोऽपि नेति । कोऽस्ति तर्हि तृतीयः पक्ष इति चेत्, उच्यते—सेनावनसभादिवदिदमप्यवगन्तव्यम् । सेनादिपदार्थानां सेनाघटकपदात्यपे-क्षयाऽतिरिक्तत्वमपि न केनाप्यङ्गीक्रियते, एकपदात्यात्मकत्वमपि नाङ्गीक्रियते । किन्तु, बुद्ध्या कल्पितं

किञ्चिद्देशकालाद्युपाधिमपेक्ष्य 'एका सेना' इत्युच्यते । एकदेशावच्छेदेन मिलितानां नराणां समुदायः 'सभा' इत्युच्यते । एवमेव, एककार्योद्देशेनैकस्मिन् काले देशे मिलितानि कारणानि सामग्रीत्युच्यन्ते । तानि च प्रत्येककारणानि स्थिराण्येव, न क्षणिकानि । अतश्च स्थिराण्येव तानि, कार्याव्यवहितप्राक्क्षणापेक्षया 'सामग्री' इत्युच्यन्ते । ततश्चौपाधिकम्, अथापि वास्तविकं प्रत्येकमेकत्वमेव । अतश्च स्थिराणामेव सतां कारणानां क्षणोपाधित्वं भवेदेवेति 'दृष्टान्तहानिः' सुदृढा । ननु स्थिरस्य वस्तुनः कथं क्षणोपाधित्वम्? स्वस्मिन् विद्यमानं धर्मं स्वसन्निहिते वस्तुनि यत् आरोपयति, स किलोपाधिरुच्यते । यथा जपाकुसुमं स्वयं रक्तं सत्, स्वसंयुक्ते स्फटिके रक्तत्वव्यवहारहेतुः उपाधिरित्युच्यते । प्रकृते स्वस्मिन्नेकत्वाभावे तद्वस्तु कालस्य कथं क्षणोपाधिर्भवेदित्यत्राह—**क्रमवदित्यादि**। **स्थिरेऽपि** वस्तुनि, क्रमविशेषविशिष्टोपाधिवत्, **क्षणत्वम्**=क्षणव्यवहारोपाधित्वं स्यात् । **अयं भावः**—वैशेषिकमते क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, उत्तरसंयोगोत्पत्तिः इति क्रमेण एकैकस्याः क्रियायाः चतुःक्षणावस्थायित्वं उच्यते । तत्र 'स्वजन्यविभागप्रागभावावच्छिन्नं कर्म' एकः क्षणः, इत्युच्यते । एवं स्वजन्यविभागावच्छिन्नपूर्वसंयोगः द्वितीयक्षणोपाधिः इति । एवञ्च एकस्मिन् वस्तुनि क्रमशः ये भवन्ति संयोगविभागादयः, तानादाय एकैकस्यापि क्षणव्यवहारस्योपाधित्वं उच्यते । एवं स्थिराणामपि तत्तदुपाधिसंयोगवशात् क्षणव्यवहारोपाधित्वं वर्णितुं शक्यते । यद्यपि सिद्धान्ते क्रिया अतिरिक्ता नाङ्गीक्रियते (अद्र.107) । एवं विभागः, प्रागभावो वा नाङ्गीक्रियते । अतः वैशेषिकोक्ता प्रक्रिया न वर्णयितुं शक्या; अथापि पूर्वसंयोगनाशः, उत्तरसंयोगोत्पत्तिश्चाङ्गी-क्रियेते । तदादायापि, स्वजन्यपूर्वसंयोगनाशावच्छिन्नं कर्मेति वा, स्वजन्योत्तरसंयोगावच्छिन्नं स्वम् इति वा क्षणः वर्णयितुं शक्यते । यद्यपि क्रिया अतिरिक्ता नास्तीत्युच्यते, अथापि क्रियाव्यवहार एव नास्तीति न, क्रिया आश्रयद्रव्यातिरिक्ता नास्तीत्येवार्थः । एवमेव प्रागभावादिविषये ज्ञेयम् । अत्र वक्तव्यं उपरिष्टाद्भविष्यति (अद्र.स.108) । वस्तुतस्तु—वस्तुन एकक्षणमात्रवृत्तित्वे, विनाशोन्मुखस्यैतस्योत्तरक्षणं प्रति कारणत्वमेव दुरुपपादमिति क्षणपरंपरापि न सिद्ध्येदित्यवगन्तव्यम् ॥ ३० ॥

बौद्धाः निरन्वयविनाशवादिनः । अन्वयः अनुवृत्तिः । सिद्धान्तसंमते परिणामवादे, घटस्य नाशेऽपि कपालादिरूपेण स दृश्यत इत्यङ्गीक्रियते । लेशतोऽप्यनन्तरमननुवृत्तिः यथा, तादृशविनाशो नाङ्गीक्रियते । अतः सिद्धान्ते **सान्वयविनाश** एव सर्वत्र । बौद्धास्तु एतद्विपरीततया निरन्वयविनाशवादिनः। वस्तु स्वनाशानन्तरं सर्वथा नानुवर्तत इत्यर्थः । अयञ्च **निरन्वयविनाशः प्रतिसंख्यानिरोधः, अप्रतिसंख्यानिरोधः** इति द्विविधः । घटादेः मुद्गराद्याघाते यो नाशः, सः 'प्रतिसंख्यानिरोधः' इत्युच्यते । पूर्वतनकंबुग्रीवाद्या-कारविरुद्धाकारस्य दर्शनात् तथोच्यते । क्षणिकवादे घटादेः प्रतिक्षणं नाशः, तत्तुल्यघटान्तरोत्पत्तिश्च या भवति, तस्य नाशस्य प्रत्यक्षतः अदर्शनात्, पूर्वोक्तनाशविलक्षणत्वात् 'अप्रतिसंख्यानिरोधः' इत्युच्यते । एतादृशं नाशद्वयं वस्तुस्थैर्यवादिनामपि दीपादावावश्यकम् । तैलवर्त्यादीनां नाशात् दीपज्वाला प्रतिक्षणं भिन्नैवेति सिद्धान्तेऽपि संमतम् । अथापि सः नाशः न प्रतिक्षणं दृश्यते । एवञ्च 'सेयं दीपज्वाला' इति यथा भ्रमः, तथैव 'सोऽयं घटः' इत्यपि भ्रम एवेति, प्रत्यभिज्ञया न वस्तुस्थैर्यसिद्धिरिति वदन्ति । एवं दीपज्वालायां प्रतिक्षणं नाशस्य, अन्ते संपूर्णदीपनाशस्य च सर्वेषां संमतत्वात्, तद्दृष्टान्तेन सर्वत्रापि

[निरन्वयविनाशनिरासः]

31. **दीपादीनां कदाचित् सदृशविसदृशाशेषसन्तत्यपेते**
**ध्वंसे दृष्टेऽप्यशक्या तदितरविषयेऽनन्वयध्वंसक्लृप्तिः ।**
**बाधादेर्दर्शितत्वात् अपिच दृढमिते सान्वयेऽस्मिन् घटादौ**
**दुर्दर्शावस्थया स्युः पयसि लवणवत् लीनदीपादिभागाः ॥ ३१ ॥**

[कार्यकारणभावदूषणनिरासः]

32. **सत्त्वेऽसत्त्वेऽपि पूर्वं किमपि गगनतत्पुष्पवन्नैव साध्यं**
**हेतुप्राप्तिर्न पश्चाद्भवितुः, अघटितोत्पादनेऽतिप्रसङ्गः ।**

---

नाशद्वयं ते साधयन्ति । इदं नाशद्वयमपि निरन्वयमित्यपि वदन्ति । तदेतत्सर्वं निराकरोति—**दीपादीना-मित्यादिना** । दीपस्य संपूर्णनाशस्य सर्वदा द्रष्टुमवकाशालाभादिसंभवात्, **'कदाचित्'** इत्युक्तम् । आदि-पदेन बुद्बुदादिसंग्रहः । **सदृशसन्ततिः**=तैलनाशादिनानुमीयमाना; **विसदृशसन्ततिः**=अन्तिमदीपज्वालाया नाशे । दीपज्वालानाशानन्तरं कस्यानुवृत्तिर्दृश्यते? अतस्तत्र निरन्वयविनाश आवश्यक इति पूर्वपक्षिण आशयः । एतादृशा**शेषतेजस्सन्तत्या अपेते**=रहिते **ध्वंसे दृष्टेऽपि, तदितरविषये**=घटपटादौ **अनन्वयध्वंस-क्लृप्तिः**=निरन्वयविनाशकल्पना **अशक्या** । दीपे तैलनाशादिना ज्वालाभेदः आवश्यकः । नैवं घटादौ किञ्चित् कारणं दृश्यते । न च अर्थक्रियाकारित्वरूपस्य सत्त्वस्य तत्र विद्यमानत्वेन, करणाकरणाभ्यां घटादावपि भेदः आवश्यक इति वाच्यम्; एतद्वादस्य पूर्वमेव (श्लो.25) निरासात् । तदिदमुच्यते—**बाधादेर्दर्शितत्वादिति । बाधः** 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञायाः ऐक्यविषयिण्याः, **दर्शितत्त्वात्** पूर्वं (26श्लोके) । 'सेयं दीपज्वाला' 'सोऽयं घटः' इति प्रत्यभिज्ञयोर्हि वैलक्षण्यं सर्वानुभवसिद्धम् । एवञ्च दीपज्वालादृष्टान्तेन, घटादौ निरन्वयविनाशकल्पनवत्, घटादिदृष्टान्तेनैव अन्तिमदीपनाशस्य सान्वयविनाशत्व-कल्पनमेव कुतो न स्यादिति पृच्छति—**अपि चेत्यादिना । घटादौ अस्मिन्**=विनाशे मुद्गरादिजन्ये, **सान्वये**=कपालाद्यनुवृत्या सान्वये **दृढमिते**=प्रत्यक्षप्रमाणेन निश्चिते सति दीपनाशेऽपि सान्वयत्वमेव कुतो न स्यात्? ननु घटादौ नाशानन्तरं कपालादिदर्शनेऽपि, दीपनाशानन्तरं किं दृश्यत इत्यत्र **लीनदीपादिभागाः, पयसि लवणवत्, दुर्दर्शावस्थया**=चक्षुषा गृहीतुमशक्याः **स्युः** । चक्षुषा अग्रहणेऽपि दीपानुवृत्तिः कथं स्यादित्यत्र दृष्टान्तः **पयसि लवणवदिति** । चक्षुषा गृह्यमाणलवणखण्डः जले प्रक्षिप्तश्चेत्, क्रमशः विशीर्णः जले लीनो भवति । चक्षुषापि न गृह्यते, त्वचापि न गृह्यते, रसनेन्द्रियेण तु गृह्यत एव । तद्वदत्रापि, दीपनाशसमनन्तरक्षणे औष्ण्याद्यनुवृत्तिरपि लेशतः त्वगिन्द्रियेण गृह्यत एव । एवञ्च दीपनाशः सान्वय एव । तैलनाशेनानुमीयमानः प्रतिक्षणं ज्वालानाशोऽपि अनुपदं ज्वालान्तरानुवृत्त्या लेशतः तत्रानुवर्तेतैव । अतः निरन्वयविनाशः कुत्रापि न साधीयान् ॥ ३१ ॥

एवं कार्यकारणभावे प्रसक्तान् विचारान् परिसमाप्य, कार्यकारणभाव एव नास्ति इति वदन्तं नास्तिकत्वेन पण्डितकल्पितं चार्वाकं शून्यविवर्तवादिनं माध्यमिकञ्च निराकरोति—**सत्त्व इत्यादिना** ।

**जन्यं जन्मान्यथा वा, द्वयमसत् अनवस्थानकार्यक्षतिभ्याम्**
**इत्याद्यैर्हेतुसाध्यं न किमपि यदि न, स्वक्रियादेर्विरोधात् ॥ ३२ ॥**

हेतुसाध्यं किमपि न इति प्रतिज्ञा । **हेतुः**=कारणम् । **साध्यम्**=कार्यम् । प्रतिज्ञातार्थे हेतुः—**सत्त्व** इत्यादि ॥ कारकव्यापारात् पूर्वं कार्यं आसीत्, उत न? पूर्वं कार्यस्य **सत्त्वे, असत्त्वे वा गगनतत्पुष्पवत्** **किमपि साध्यम् नैव**=कारकव्यापारसाध्यं नैव किञ्चिदस्ति । पूर्वमेव कार्यस्य सत्त्वे **गगनवत्** तत् न साध्यम् । असत्त्वे **तत्पुष्पवत्**=गगनकुसुमवत् नैव साध्यम् । गगनस्य नित्यत्वात् कार्यत्वं न संभवति; गगनकुसुमस्य अप्रसिद्धत्वात् कार्यत्वं नास्ति ॥

ननु कार्यं गगनवत् न सर्वथा सत्, नापि गगनकुसुमवत् सर्वथा असत् । किन्तु पूर्वमसत्, कारकव्यापारानन्तरं च सत् । अतः गगनतत्कुसुमविलक्षणं कार्यमिति चेत्, दूषणान्तरमाह—**हेत्वित्यादि** । कारणानां कार्यस्य किं संबन्धोऽस्ति, उत न? नाद्यः; कुतः? **पश्चाद्भवितुः**=अनन्तरं भविष्यतः, तदानीमसतः कार्यस्य, **हेतुप्राप्तिः**=कारणैस्सह संबन्धः **न**, असता सह संबन्धासंभवात् । न द्वितीयः, संबन्धं विनैव कारणं कार्यं यदि जनयेत्, तदा **अघटितोत्पादने**=स्वेनासंबद्धस्योत्पादने, **अतिप्रसङ्गः**=असंबद्धत्वाविशेषात् सर्वं सर्वस्मादुत्पद्येतेति मृदोऽपि पटस्स्यात्, तन्तुभ्योऽपि घटस्स्यात् । तदुक्तम्—असत्त्वान्नास्ति संबन्धः कारणैस्सत्त्वसङ्गिभिः । असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥ इति ॥

किञ्च **जन्म**=उत्पत्तिः, **जन्यम्**, उत **अन्यथा**=न जन्यं **वा?** घटादीनामुत्पत्तिरिति यदुच्यते, तत्र उत्पत्तिः उत्पद्यते, उत नोत्पद्यते? **द्वयम्**=कल्पद्वयमपि **असत्**=न साधीयः । तत्र हेतुः—**अनवस्थानेत्यादि**। उत्पत्तेः उत्पत्त्यङ्गीकारे **अनवस्था** । अनङ्गीकारे, **कार्यक्षतिः**=कार्यस्यैव क्षतिः, कार्याभाव एव स्यात्, उत्पत्तेरभावात् । **इत्याद्यैः** युक्त्याभासैः **हेतुसाध्यम्**=कारणं कार्यमिति **किमपि न**=न भवत्येव । **यदि**=एवं यदि उच्यते, **तत् न** । अत्र हेतुः—**स्वक्रियेत्यादि** । एवं कार्यकारणभावस्यैवापलापे, स्वीयप्रयत्नादेः **विरोधात्**=असंभवात्स्वानुभवविरोधादयुक्तं सर्वम् । अत्र स्वीयप्रयत्नपदेन लौकिकशास्त्रीयप्रयत्नद्वयमपि विवक्षितुं शक्यम् । एवं कार्यकारणभावं निराकुर्वता तेनापि, प्रतिदिनं किञ्चित्कार्यार्थं प्रयत्नः क्रियत एव । अन्ततः भोजनादिप्रयत्नस्य अवर्जनीयत्वात् । यदा च क्षुन्निवृत्त्यर्थं भुङ्क्ते, तदा क्षुन्निवृत्तिसाधनत्वं भोजनस्य सिद्धमेवेति कार्यकारणभावसिद्धिः । अथवा एवं कथयतः कार्यकारणभावखण्डनरूपं प्रयोजनं अङ्गीकर्तव्यं किल । एवञ्च भवद्वचनकार्यकारणभावनिरसनयोः कार्यकारणभावः सिद्ध एव । अतः स्वानुभवविरुद्धमुच्यत इति प्रतिबन्दिप्रदर्शनम् ॥

ननु भोः! खण्डनं नैव फलोद्देशेन कुर्महे । प्रतिबोधयितुं त्वां तु तत्त्वदृष्ट्या प्रचक्ष्महे ॥
कार्यकारणभावाख्यमायायां त्वं तु मा पत । तस्य नास्त्यवधिर्जातु वृथाक्लेशे पतिष्यसि ॥
आत्मा सुखे नियोक्तव्यः न कालहरणे वृथा । भुक्त्वा पीत्वा सुखं शेष्व स्वात्मानं रक्ष वागुरात् ॥
भो महात्मन्! कृतज्ञोऽहं सुखं स्वप्तुं यतेऽनिशम् । तत्साधनं भवद्धस्ते स्थितं तद्दीयतां धनम् ॥
सुकरस्तूपदेशःस्यादलसानां भवादृशाम् । **बिडालवृत्तिरित्युक्तः** पञ्चतन्त्रं तु पठ्यताम् ॥

परोपदेशका ये तु स्वानुष्ठानविवर्जिताः । धर्मस्य शत्रवस्ते हि लोकद्वयविवञ्चिताः ॥
सर्वस्य दुर्निरूपत्वमस्त्येव मितबुद्धिनाम् । तावता सर्वमिथ्यात्वं न कथञ्चिद्भविष्यति ॥
इक्षुक्षीरादिभेदस्तु दुर्निरूपः प्रदर्श्यते । अथापि ज्ञायते भेदः मानवैः सूक्ष्मबुद्धिभिः ॥
**दुर्निरूपत्वम**न्यत्स्यात् **दुर्ज्ञेयत्वं** तथेतरत् । तथेतरच्च **मिथ्यात्वं** सांकर्यं नास्ति तत्त्वतः ॥

ननु भोः! किमयं परोपदेशः? 'शेषं कोपेन पूरयेत्' इति वा? भवतां प्रथमो गुरुरेव कार्यकारणभावं निराचकारेत्यजानन्तं त्वां किं वा ब्रूमः? 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इति खलूपादिशत्सः । वैराग्यार्थं तथोपादिशदिति यदि, तर्ह्ययमेव प्रथमःपलायनवादः । न तावन्मात्रम् । 'मा कर्मफलहेतुर्भूः' इति पुरुषप्रयत्नस्य फलहेतुत्वं कण्ठत एव निषेधति किल! कथमेतत्?

समये स्मारितस्सम्यक् धीरेणायुष्मता त्वया । अवकाशो हि दत्तो मे, धारय शृणु विस्तरात् ॥
समग्रं पठितं नैव तेनैवं वक्षि दुर्मते? तदीयमेव वाक्यं तु श्रूयतां सावधानतः ॥
'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक्चेष्टाः दैवं चैवात्र पञ्चमम् ॥'
इत्युक्त्वा स पुनः प्राह त्वादृशानां हितेच्छया । 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः ॥
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ।' मिलितानां तु हेतुत्वे एको हेतुः कथं भवेत्? ॥

तिष्ठ तिष्ठ भो ब्रह्मन्! स्वीये जाले स्वेनैव पातितमाप्यात्मानं न जानासि किल! मिलितानां कर्तृत्वं वदता ह्यस्मत्**प्रतीत्यसमुदयवाद** एवोपदिष्टः । किं कुप्यसि वृथाऽस्मभ्यम्?

पुनरप्युत्तानप्रज्ञतैव प्रदर्शिता मूढेन । पञ्चानां कारणत्वं वदन् चेतनं केन पदेन निर्दिशत्यवधेहि । 'अधिष्ठानं तथा कर्ता' इति 'कर्ता' इति खलु चेतनं निर्दिशति । तेन च सिद्धं कर्तृत्वं चेतनस्य । इतरकारकाणि तु तस्यैव सहकरिष्यन्ति । इतरकारकाणां सर्वेषां कारकत्वसंपादकः खलु कर्ता । तावता प्रतीत्यसमुदायवादः कुत्रागतः? एकैकमपि खलु क्रियानिर्वर्तकम्, अत एव कारकम् । न हि वयं सामग्रीपदार्थमत्यजाम । तावता प्रत्येककारणतामपि नात्यजाम । वक्ष्यते च सर्वमनुपदम् ॥

**वस्तुतस्तु**—इदमवधीयतामत्र । किं वृथा शब्दवर्धनेन? अत्र पञ्चमं दैवं नाम किम्? 'यदचिन्त्यं हि तद्दैवम्' (रा.अ.22-20) इत्यार्षं दैवस्वरूपविवरणम् । अहंकारिणां दृष्ट्या तत्पञ्चममपि विवेकिनां तु दृष्ट्या तदेव प्रथमम् । ननु तर्हि पुरुषप्रयत्नस्य स्थानमेव नास्ति किम्? केनोक्तं तथा? कार्यकारण-भावं निराकुर्वता त्वयैव तथोच्यते । वस्तुतस्तु—'प्रथमम्' इत्युक्तिरेवेतरेषामपि सत्त्वं सूचयति । परं तु अहंकारिणां त्वदुक्तमेव प्रथमम्, विवेकिनां तु दैवं प्रथमम् । पञ्चसु कारणेषु प्रधानमपि कारणं दैवं पञ्चमत्वेन कथने हेतुरपि अहंकारिभिर्दुर्ज्ञानत्वादेव । लोके तु तादृशा एव बहव इति सामान्योक्तिरियम् 'पञ्चम'मिति । विशेषोक्तिस्तु 'मा कर्मफलहेतुर्भूः' इति । 'कर्मण्येवाधिकारस्ते' इति खलूपक्रमः । एत एव किल विवेकिन उत्तमाधिकारिणः । कार्यकारणभावस्तु वर्तत एव ॥

वत्स! साक्षाद्भगवतः गीतामक्षरशःपठ । त्यक्त्वा वा दूरतो गच्छ मा भूस्त्वं त्वर्धपण्डितः ॥
सर्वं यथावत् शृणुयाः स्पष्टं सर्वं भविष्यति । मुक्त्वा पूर्वग्रहं सर्वं निरीक्ष्य भगवत्कृपाम् ॥
सारतस्तु कार्यकारणभावो यदि नाङ्गीक्रियते, तर्हि स्ववचनक्रियादिविरोधो दुष्परिहर इत्यनुपदमेवोक्तम् ॥

नन्वस्तु प्रतिबन्दी तन्मुखपिधानार्थम्। प्रामाणिकमुत्तरमुच्यताम् इति चेदत्रोच्यते। कार्यं सच्चेत्, गगनवत्, असच्चेत् गगनकुसुमवत्स्यादित्यत्रोत्तरम्, जगति विद्यमानानां पदार्थानां राशिद्वयकरणादियमापत्तिः। तृतीयराशेरपि सत्त्वात् न द्वैराश्यं केवलम्। सर्वदा सत् किञ्चित् यथा गगनम्, इदं नित्यमुच्यते। सर्वदा असत् किञ्चित् यथा गगनकुसुम्, इदं **तुच्छ**मित्युच्यते। कदाचित् दृश्यन्ते, कदाचित्तु न दृश्यन्ते इति तृतीयो राशिरप्यस्ति। घटादयो हि नूतनतया पुरुषेणोत्पादिता दृश्यन्ते। मुद्गरादिना मर्दिता नश्यन्ति, अनन्तरं न दृश्यन्ते। अतः यथानुभवं तृतीयराशेरपि सत्त्वात् तदेवात्रोत्तरम्। तर्हि भवन्तः असत्कार्यवादिनो वा? इति चेत्, कारणात्मना सत्त्वस्य, अवस्थात्मना चासत्त्वस्य च यथानुभवम् अङ्गीकारात्, शशशृङ्गतौल्यमपि न, गगनतौल्यमपि न। अवस्थानां अद्रव्यत्वेन स्वतन्त्रत्वाभावात्तदादाय नासत्कार्यवादापादनावकाशः॥

कार्यस्यासत्त्वे, कार्यकारणयोः संबन्धाभावात् सर्वस्मात्सर्वस्योत्पत्तिप्रसङ्ग इत्यस्योत्तरम् अन्वय-व्यतिरेकदर्शनसिद्धः कार्यकारणभाव एव तयोः संबन्धः, नान्यः कश्चिदपेक्ष्यते। कारकाणाम् असता संबन्धः कथं वक्तुं शक्यः इति चेत्, अस्त्येवोपादानेन साकं दण्डचक्रादीनां संबन्धः। उपादानमेवावस्थाविशेषमापन्नं उपादेयम्=कार्यमित्युच्यते। 'मृदं घटं करोति' 'काशान् कटं करोति' इति किल व्यवहारः। अतः कारकाणां उपादानकारणेन सह संबन्धे सति, उपादानोपादेयोः अभेदस्य पूर्वमेव (श्लो.20, 21) स्थापित-त्वात् असम्बद्धोत्पत्तिर्नास्त्येव॥

उत्पत्तेरुत्पत्तिरस्ति, न वा? इत्यादेस्त्वेवमुत्तरं वक्तव्यम्। उत्पत्तिर्नाम कार्यस्य घटादेः धर्मः, न स्वतन्त्रः पदार्थः। 'उत्पन्नो घटः' इत्युक्तौ, उत्पत्तेः घटधर्मत्वं स्पष्टम्। अतः घटादेः उत्पत्तिरेव, उत्पत्तेरप्युत्पत्तिरूपा। अतः अनवस्थादिदोषस्य नावकाशः। मृदः घटाकारेण परिणाम एव खलु घटस्योत्पत्तिरिति परिणामविशेष एवोत्पत्तिपदस्यार्थः। अतः न कश्चन दोषः॥

ननु कार्यकारणयोः कः संबन्धः? इति प्रश्ने, 'कार्यकारणभाव एव तयोः संबन्धः' इत्येतत्, 'झोऽन्तस्य झोऽन्त एवार्थः' इत्युत्तरवदुपहास्यम्। कार्यकारणभावस्याप्रामाणिकत्वात् स एव संबन्धः कथं भवेत्। एवं कार्यकारणभावापलापवादिनः—**आकस्मिकतावादिनः, स्वभाववादिनः, अनिर्वचनीयतावादिन-श्चेति**त्रिविधाः। कार्यं सर्वमाकस्मिकमेव, इदमेवास्य कार्यस्य कारणमिति नास्त्येव, सर्वत्रापि व्यभिचारादिदर्शनात् इति वाद आकस्मिकतावादः माध्यमिकादीनाम्। कण्टकतैक्ष्ण्यादिवत् सर्वं स्वभावादेव भवतीति स्वभाववादिनः। केषाञ्चित्कण्टकवृक्षाणां कण्टकानि कियत्तीक्ष्णानि भवन्ति। पुरुषेण तादृशं वस्तु कर्तव्यं चेत्, कियान् प्रयत्नः क्लेशश्च भवेत्। तादृशं कण्टकं तत्तद्वस्तुस्वभावादेव भवति, न तु प्रयत्नादिकारणादिति सर्वत्रापि स्वभाववाद एव श्रेयान्। अन्यथा हि 'अस्मादिदमेव कार्यं भवति, न त्वन्यदि'ति कुतः? इति प्रश्ने, 'तद्वस्तुनः स्वभावस्तादृशः' इत्येवान्ते समर्थनीयमित्येषामाशयः। अयं वादोऽपि चार्वाकानाम्। केनापि प्रकारेण न निर्णेतुमेव शक्यते कार्यकारणभावः, स्वभावस्यापि व्यवस्थितस्याभावादिति अनिर्वचनीयत्व प्रयुक्तनिस्स्वभाववादिनां शून्यवादिनां माध्यमिकानाम्, तदनुयायिनां सर्वेषां विवर्तवादिनां चायं तृतीयवादः। तथोक्तम्— 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतः॥' (मा.का.वै.32) इति॥

सुसूक्ष्ममीक्षणे एषां वादानां परस्परं साङ्कर्यमपि ज्ञातुं शक्यम् । यतः मानवबुद्धिदृष्ट्या हि सर्वमाकस्मिकम्, सर्वं दुर्निरूपमेव । न तावता मानवबुद्धिस्तूष्णीमुपविशति । सर्वेषामपि वादानां प्रवर्तकाः महाज्ञानिन एव सदुद्देशेनैवेमान् वादान् प्रवर्तयामासुः । समनन्तरमागताः शुष्कपण्डितास्तु सर्वं नाशयन्तीति 'आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहंगतास्तत्र कथञ्चिदन्ये ॥' (श्लो.वा.निरा.201) इत्याह महामेधावी कुमारिलः । सोंऽशोऽत्रापि समानः । मानवबुद्धिदृष्ट्यात्र विद्यमाना समस्येयमेव । कारणवर्गेऽन्ततोऽतीन्द्रियाणां कालेश्वरादृष्टादीनामपि वर्तमानत्वात् कथमन्वयव्यतिरेकवशात् कार्यकारणभावनिर्णयसंभवः? ईश्वरानङ्गीकारपक्षेऽपि तत्तज्जीवीयादृष्टविशेषस्य कारणत्वानपायात् समस्या समानैव । अत एव बहुषु स्थलेषु फलव्यभिचारोऽपि सर्वानुभवसिद्धः । अथापि जनास्सदा स्वेष्टसाधने प्रयत्नशीला एव दृश्यन्ते । क्लेशतो वा कार्यकारणभावस्याग्रहे, कथं जनानां प्रवृत्तिः संभवेत्? अतीन्द्रियाणामपि सामग्र्यन्तर्गतत्वात् अन्वयव्यतिरेकग्रहणं क्लिष्टमेव । कार्यकारणभावोऽन्यः, तन्निर्णयश्चान्यः ॥

एवमन्योऽपि क्लेशो वर्तते । मृद्दण्डचक्रादीनां घटकारणानां बहूनां सत्त्वात्, प्रत्येकं तेषां कारणत्वमस्ति, न वा? प्रत्येकं कारणत्वसत्त्वे, एकस्मादपि कार्योत्पत्तिप्रसङ्गः । प्रत्येकं कारणत्वाभावे, समुदिताद्वा कथं कार्यं स्यात्? न हि शतमप्यन्धाः पन्थानं पश्येयुः । एतद्दोषपरिहारायैव **'प्रतीत्यसमुदयवादः'** आश्रितो बौद्धैः। कारणानि सर्वाणि परस्परं मिलितान्येव कार्यमुत्पादयन्ति, न तु प्रत्येकशः । अतः कारणत्वं न प्रत्येकधर्मः, किन्तु समुदायगतो व्यासज्यवृत्तिधर्मः । एवं व्यासज्यवृत्तित्वादेव, प्रत्येकसमुदायविकल्पः न कर्तव्य इति तेऽभिप्रयन्ति । यथा द्वित्वादिकं व्यासज्यवृत्तीत्युच्यते । तत्र प्रत्येकं द्वित्वस्य सत्त्वे, एकस्मिन्नपि द्वित्वोपलब्धिप्रसङ्ग इति न प्रत्येकं द्वित्वमङ्गीक्रियते, किन्तु मिलितयोरेव । तद्वत् समुदितानामेव कारणत्वमिति वादः **'प्रतीत्यसमुदायवादः'**। परन्तु कारणत्वस्य द्वित्वादिवत् व्यासज्यवृत्तित्वमनुभवपराहतम् । तुरीवेमादिकं पश्यन् पुरुषः,'एतानि पटजनकानि' इति जानात्येव, तथा व्यवहरति च । तर्हि प्रत्येकादेव कुतो न कार्योत्पत्तिरिति चेत्, कारणत्वं हि द्विविधं दृश्यते— **स्वरूपयोग्यतारूपम्, फलोपधायकत्वरूपञ्चे**ति । आद्यं तदर्हतारूपम्, द्वितीयं तु सामग्रीत्वावस्थायां तैरेव फलस्य=कार्यस्योत्पादनरूपम् । असेः निशितस्य छेदनकारणत्वं हि स्वतो वर्तत एव । छेदनकार्यनिष्पत्तिस्तु छेदकच्छेद्यादिसामग्रीमेलनाधीना । स्वरूपयोग्यतारूपकारणत्वस्य प्रत्येकं सत्त्वेऽपि न कापि हानिः, प्रत्यकमसत्त्वे समुदाये कथं सत्त्वम्? ॥

प्रत्येकं कार्योत्पादकत्वादर्शनमात्रादुक्तः प्रतीत्यसमुदयवादोऽपि पलायनवाद एव । न हि येषां केषाञ्चिन्मेलनाद्यत्किञ्चित्कार्यं दृश्यते । मृदादिसमुदायाद्घट एव, तन्त्वादिसमुदायात्पट एवेत्यादिव्यवस्था वा कथम्? महारथाद्याकर्षणादौ प्रत्येकमदृष्टा रथाकर्षणशक्तिः मिलितायां जनतायां दृश्यत इति, प्रत्येकशक्तिरेव न ह्यनपेक्षिता । एवं बहुधा कार्यकारणभावदर्शनेऽपि तदपलापः आत्मवञ्चनायेत । मृदो घटहेतुत्वम्, तन्तूनां पटहेतुत्वम्, तण्डुलानामन्नहेतुत्वं वा को वा मतिमानपलपेत्? । अतः प्रत्येकं विद्यमाना तत्तत्कार्ययोग्यता, सामग्र्यवस्थायां फलोपधायिका भवतीत्येव प्रामाणिकम् । अन्ततः भोजनादेः क्षुन्निवृत्तिहेतुत्वं केन वा जीवेनापलपितुं शक्यम्?

ननु तर्हि दण्डादौ घटकारणत्ववत्, घटनाशकत्वस्यापि दर्शनात्, विरुद्धकार्यस्वरूपयोग्यत्वं वक्तव्यम्, परस्परविरुद्धधर्मौ कथमेकत्र स्यातामिति चेत्, एतत्तु इतरसामग्रीसमवधानादिति, न स्वरूपे विरोधः। आघातादिसामग्रीघटितो दण्डः घटनाशकः, नोदनादिसहितस्तु घटजनको भवतीति का हानिः? 'अन्नं मृत्युं तमु जीवातुमाहुः' (तै.ब्रा.) इत्येकस्यैव परस्परविरुद्धकार्यकारित्वमुच्यते किल। तावता न भुङ्क्षे किं त्वम्? सम्यक् प्रयुक्तम् अन्नं जीवातुर्भवति; असम्यक् प्रयुक्तम् अथवाऽसमये प्रयुक्तं तु मृत्युर्भवति। एवम् एक एव दीपः घटादिप्रकाशकः, वर्तिविकारकः, तैलनाशकश्च युगपदेव भवति। एकमेव मुखं देवतास्तुतिहेतुः, देवतानिन्दाहेतुर्वा भवति। परस्परं नाश्यनाशकभावापन्ना हि अग्नितैलकार्पासाः प्रदीपायन्ते। सर्वस्याप्यद्भुतमालोकं वितरन्ति। अत्रान्यतमस्य कारणत्वहानौ जलेनापि दीपः प्रज्वलेत्। पाषाणोऽपि वर्तिकायेत। सूक्ष्मा तत्तत्कार्ययोग्यता तु दृश्यत एव। **'योजकस्तत्र दुर्लभः'** इति गाथाप्यत एवागता। एतद्दृष्ट्यैवातिरिक्तातीन्द्रियशक्तिवादोऽप्यवतीर्णः। परन्तु सोऽपि पलायनवाद एव। शक्तेरतीन्द्रियत्वात्तदङ्गीकारमात्रेण को लाभः? ननु तर्हि शक्तिरतिरिक्ता कुतोऽङ्गीकृता सिद्धान्ते? एतत्तु तद्विचारे पश्यामः। तत्तत्कार्ययोग्यता तु दुरपह्नवा। कार्यकारणभावश्च दुरपह्नवः। अतः सामग्रीविशेष एव सर्वत्र कार्यविशेषहेतुः। अतो नायं दोषः॥

अत एव तदपलापो बुद्धिदौर्बल्यमूलक एव। अत एवायं पलायनवादः। **'न हि भिक्षुकास्सन्तीति स्थाल्यो नाधिश्रीयन्ते'**। अतीन्द्रियसामग्रीघटितत्वात्, कथमन्वयव्यतिरेकयोर्निर्णय इति चेत्, कार्येण कारणानुमानात्, सामान्यतो ज्ञातुं शक्येत। कुत्रचित्सामग्रीलेशवैकल्येऽपि, लोके मानवप्रयत्नसाफल्यस्यापि बहुलमुपलंभात् दुरपह्नवः कार्यकारणभावः। अन्ततो भोजनादिप्रवृत्तेः सर्वजनविदितत्वात्, अन्नादेः क्षुन्निवृत्तिसाधनत्वं सर्वानुभवसिद्धं दुरपह्नवम्। दुर्निरूपत्वं तु सर्वेषामपि वस्तूनां कस्याञ्चित् कक्ष्यायामवर्जनीयमेव। तावता प्रथमकक्ष्यायामेव न किञ्चिद्वक्तुं शक्यमिति मौर्ख्यमात्रम्। इक्षुक्षीरगुडादिषु माधुर्यस्य दुर्निरूपत्वेऽपि, वैलक्षण्यं न ज्ञायत एवेति कथनमात्मवञ्चनम्, मौढ्यम्, परप्रतारणं वा। माधुर्यं तु तिक्तापेक्षया सुनिरूपमेव। अतः तत्तत्कक्ष्याभेदेनैव विषयस्वरूपनिर्णयस्य कर्तव्यत्वात्, 'सर्वं न्याय्यं युक्तिमत्त्वात् विदुषां किमशोभनम्॥' (भाग.11-22-25) इति सम्यगुक्तं सर्वज्ञेन भगवता। ननु यदि सर्वं न्याय्यम्, तर्हि हेयोपादेयविभागः कथम्? इति चेत्; सम्यक् पृष्टमायुष्मता। वर्जनीयेषु द्वंद्वेषु हेयोपादेयावप्यन्तर्भूतौ मुमुक्षोरिति किं न जानासि? एकमेव वस्तु एकस्यैवाधिकारिणः कालभेदेन हेयम्, उपादेयं वा भवति किल। यथा दिवा हेयं क्षीरं, रात्रावुपादेयम्। अतस्सर्वेऽपि वादाः अधिकारिभेदेन, समयभेदेन वोपादेया एव। अधिकं मोक्षप्रकरणे विवृणुमः। मास्तु विस्तारः, इदमेवमुच्यताम्! अन्नं सर्वेषामप्युपादेयं किल! हेयं तत्कस्य? अयि भोः! अतीव बालिशस्त्वम्। क्षुद्रहितस्य कथं तदुपादेयम्? अतश्च हेयोपादेयभावः अधिकारि-काल-देशादिभेदेनैव। अतः कार्यकारणभावस्य दुर्निरूपत्ववर्णनं वक्तुरशक्तिं साधयेत्, न तु कार्यकारणभावाभावम्। अतोऽस्त्येव स इति निर्णयः॥ ३२॥

ननु सत्त्वासत्त्वापेक्षया तृतीयो राशिः कथं भवेत्? एकं सत् स्यात् अथवा असत् स्यात्। उभयात्मकं एकं कथं भवेत्? परस्परं विरोधात्। अतश्च, सतोऽपि कारणापेक्षा नास्ति, असतोऽपि कारणापेक्षा

[कारणस्वरूपनिष्कर्षः]

**33. कादाचित्कस्य कालावधिनियतिकरं पूर्वसत् कारणं स्यात्**
**भावोपष्टम्भशून्यो न खलु तदवधिं प्रागभावोऽपि कुर्यात्।**

नास्ति। तृतीयस्तु राशिर्नास्त्येवेति कार्यकारणभावः अप्रामाणिकः, इत्याक्षेपं समाधत्ते—**कादाचित्कस्ये-त्यादिना**। अस्तीति प्रतीतिविषयत्त्वं सत्त्वम्, तथा नास्तीति प्रतीतिविषयत्त्वं असत्त्वम्। एतदुभयमपि निरुपाधिकं सोपाधिकं च। सदा सर्वत्र वर्तमानत्वं निरुपाधिकं सत्त्वम्। तत्र सदा वर्तमानत्वं नित्यत्वम्। सर्वत्र वर्तमानत्वं विभुत्वम्। एतदुभयमपि परमात्मन एव। जीवात्मनस्तु अणुत्वात् सर्वत्र वर्तमानत्वं नास्ति। सदा वर्तमानत्वं तु अस्ति। एवं निरुपाधिकमसत्त्वं शशशृङ्गादेरेव। अत्रापि शशशृङ्गयोः संबन्ध एव असत्त्वपर्यवसानम्। शशशृङ्गपदस्यैवाभावात्। अयमर्थो बुद्धिसरे सयुक्तिकं निरूप्यते। परमात्मगुणानां सदा वर्तमानत्वेऽपि सर्वत्र वर्तमानत्वं नास्ति, परमात्मगुणस्य परमात्मन्येव सत्त्वात्, अन्यत्रासत्त्वात्। एवमेव केषाञ्चित् अनित्यानां परिमितानां घटादीनां सदा वर्तमानत्वमपि नास्ति, सर्वत्र वर्तमानत्वमपि नास्ति। किन्तु 'अत्र वर्तते, तत्र नास्ति; इदानीं वर्तते, तदानीं नासीत्' इत्यादिसार्वजनीनप्रतीतिव्यवहारयोः सत्त्वात्, निरुपाधिकं सत्त्वमपि नास्ति, निरुपाधिकमसत्त्वमपि नास्ति। अतस्तेषां कादाचित्कं क्वाचित्कं च सत्त्वं सोपाधिकम्। अनयोः आद्यम् अनित्यत्वरूपम्, द्वितीयम् अविभुत्वरूपम्=परिमितत्वरूपम्=मूर्तत्वरूपम्। तत्र अनित्यं कादाचित्कं वस्तु कार्यमित्युच्यते। कादाचित्कं वस्त्वेव तृतीयो राशिः। अतश्च **'कादाचित्कस्य'** इत्युपक्रमादेव तृतीयराशिरप्यस्तीति राशिद्वये कार्यकारणभावाभावेऽपि, तृतीये राशौ कार्यकारणभावस्या-वश्यकता सूचिता। **कादाचित्कस्य**=कदाचिदेव भवतः घटादेः कार्यस्य **कालावधिनियतिकरम्**= एतावता असतोऽपि इदानीमेव सतः पूर्वकालावधेः व्यवस्थापकं **पूर्वसत्**=कार्याव्यवहितपूर्वकाले **सत्** यत्, तदेव **कारणं स्यात्**=कारणपदवाच्यं भवेत्॥

**अयं भावः**—घटादयो हि पदार्थाः न सर्वदा दृश्यन्ते। नापि कदाचिदपि न दृश्यन्ते इत्यपि। किन्तु कदाचित् दृश्यन्ते, कदाचिन्न दृश्यन्त इति सर्वानुभवसिद्धम्। तत्रापि कदा दृश्यन्ते, कदा न दृश्यन्त इति व्यवस्था नास्तीत्यपि न; किन्तु कुलालादिसामग्रीसमवधाने सति, एतावता कालेनादृश्यमानोऽपि घटः, समनन्तरकाले दृश्यत इत्यनुभवसिद्धम्। एवञ्च घटादेः कादाचित्कत्वेऽपि, कुलालादिव्यापारानन्तरत्वरूप-नियतकालविशेषे सत्त्वदर्शनात्, तदव्यवहितपूर्वकालस्य तत्पूर्वावधित्वात्, तदव्यहितपूर्वकाले विद्यमाना एव पदार्थाः घटस्य कारणानीत्युच्यते। एवञ्च कारणं नाम कार्यस्य पूर्वावधिरेवेति कार्यकारणभावः न दुर्निरूपः॥

ननु 'कार्यं प्रागभावप्रतियोगि' इति लक्षणमुच्यते कार्यस्य। अतः प्रागभाव एव पूर्वावधिरस्तु, किमधिकेनेत्यत्राह—**भावेत्यादि**। **भावोपष्टंभशून्यः**=भावरूपपदार्थान्तरोपोद्बलनशून्यः **प्रागभावोऽपि, तदवधिं**=कार्यस्य पूर्वावधिं **न खलु कुर्यात्**=नैव कुर्यात्। कुत इति चेत्, प्रागभावो हि अनादिः। दण्डचक्रकुलालादिसामग्रीसमवधानात् पूर्वमपि घटप्रागभावस्य सत्त्वेन, तदैव घटः कुतो नाभूत्? इति प्रश्ने, यदि प्रागभावातिरिक्तं मृदादिकारणान्तरं नाङ्गीक्रियेत, तर्हि उत्तरं वक्तुं न शक्येत। अतश्च दण्डचक्रादिरूपः

**कार्यं निर्हेतुकं चेत्, कथमिव न भवेत् नित्यता तुच्छता वा?**
**कादाचित्कस्वभावाद्यदि, न, नियमनादन्यथाऽतिप्रसङ्गात् ॥ ३३ ॥**

प्रागभावातिरिक्तः भावरूपोऽपि पदार्थः घटस्य पूर्वावधिभूतः कारणपदवाच्यः आवश्यक एव। ननु नित्यानां यथा कारणानपेक्षत्वं स्वभावः, तथा कार्याणामपि कारणानपेक्षत्वं स्वभावादेव भवत्वित्यत्राह—**कार्यमित्यादि**। **कार्यमपि निर्हेतुकं चेत्; नित्यता, तुच्छता वा कथमिव न भवेत्**=कार्यं कथं वा हेतुनिरपेक्षं स्वभावात् भवेत्, तर्हि नित्यत्वं, अलीकत्वं वा स्यादेव। ननु वह्नेः औष्ण्यम्, जलस्य शैत्यं च स्वभावः, न किञ्चित्कारणप्रयुक्तः। एवमेव नित्यानां नित्यत्वं यथा स्वभावः, तथा कादाचित्कत्वमपि स्वभाव एव खलु। एवं सति हेतुसापेक्षत्वं कुतः? इत्यत्राह—**कादाचित्कस्वभावादिति** इति **यदि, न,** तत्र हेतुः—**नियमनादिति**। यद्यपि कादाचित्कत्वं कादाचित्कस्य स्वभाव एव। परन्तु, तत् कादाचित्कत्वम्=कदाचिदेव भवनम्, नाव्यवस्थितम्, किन्तु व्यवस्थितं खलु दृश्यते। दण्डचक्राद्यनन्तरमेव किल घटः दृश्यते। एवं तन्तुतुरीवेमाद्यनन्तरमेव पटो दृश्यते, न कदापीदं व्यभिचरितं दृष्टम्। न तावन्मात्रम्, तुरीतन्तुवेमाद्यनन्तरं पट एव न घटः, दण्डचक्राद्यनन्तरं घट एव न पटः इत्यपि नियमो दृश्यते। अतः कादाचित्कत्वेऽपि व्यवस्थाया दर्शनात्, तादृशव्यवस्थाहेतुभूतमेव कारणमित्युच्यते। अतः नियतः कार्यकारणभावः कादाचित्कवस्तुस्थले आवश्यकः। एवं प्रदर्शनेऽपि, यदि हठादुच्यते, कार्यकारणभावो नास्तीति, तत्राह—**अन्यथेत्यादि** । **अन्यथा**=कादाचित्कस्य नियतपूर्ववर्ति किञ्चित् कारणं यदि नाङ्गीक्रियते, तदा, **अतिप्रसङ्गात्**=अतिप्रसङ्गप्रसङ्गः। यदि कार्यकारणभाव एव न स्यात्, तर्हि यदा कदाचिदपि दृश्येत कार्यम्, न तु दण्डचक्राद्यनन्तरमेव घटः, दण्डचक्राद्यनन्तरं घट एवेति द्विविधनियमोऽपि न स्यात्। तथा नियमदर्शनात् तादृशनियमः आवश्यकः। अतश्च नियतपूर्ववर्ति यत्, तदेव कारणमुच्यत इति कार्यकारणभावः नियमसिद्धः। अन्ततः भोजनादेः क्षुण्णिवृत्तेश्च कार्यकारणभावं ज्ञात्वा प्रतिदिनं सर्वैः क्रियमाणं भोजनादि असम्बद्धमेव स्यात्। अतः तन्निराकरणं त्वात्मवञ्चनमात्रमिति ॥

ननु अतीन्द्रियाणामपि केषाञ्चित्सामग्र्यन्तर्गतत्वस्य भवतैवोक्तत्वात्, कथं कार्यकारणभावश्शक्यनिर्णयः? कथं वा जनानां प्रवृत्तेस्संभवः? अथवा कार्ये प्रवर्तमानास्सर्वे किं भ्रान्ताः? इति चेत्, जनानां प्रवृत्तिविषये वक्तव्यं समनन्तरसरे (श्लो.9) ग्रन्थकृतैव विव्रियते। कार्यकारणभावनिर्णयविषये, सृष्टिप्रक्रिया लेशतो वा ज्ञायते चेत्, एवं प्रश्न एव नोत्तिष्ठेत्। 'पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि।' इत्युक्तरीत्या इदं हि विश्वं भौतिकम्, दैविकम्, आत्मिकञ्चेति त्रिलोकीरूपम्। इदं त्रयमपि परस्परसापेक्षम्, अत एव परस्परमोतप्रोतञ्च। अस्मदीयं ज्ञानमज्ञानं वा, अङ्गीकारमनङ्गीकारं वा नैतदपेक्षते। स्थूलं जगत्, परिदृश्यमानं भौतिकम्। तत्पृष्ठत आधिदैविकविस्तारः। तत्पृष्ठत आध्यात्मिकविस्तारश्चेति त्रयं मिलित्वैव सर्वं प्रचलति। अत इदं प्रथममवगन्तव्यम्—मानवबुद्धिः स्वत एवापरिपूर्णा, यतो मानवः स्वयमपूर्णः। तया स्वीयं भौतिकं क्षेत्रमेव सम्यगवगन्तुं न शक्यते, किमुत बुद्ध्यतीताधिदैविकाध्यात्मिकविषये। अतस्तदुपायः प्रथममन्वेषणीयः, येनोपायेन देवानात्मानं च ज्ञातुमयं प्रभवेत्। 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते

[इन्द्रियाणां भौतिकत्वनिरासः]

**34. नेत्रादेर्दीपिकादेरिव नियमयुतं तैजसत्वादिसाध्ये**
**रूपादिग्राहकत्वं यदि करणतया, स्यादसाधारणत्वम्।**

सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥'(मुं.2-2-9) 'स्मृतिलंभे सर्वग्रन्थीनां विप्रमोक्षः' (छां.7-26-2) 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विज्ञातम्' (बृ.4-4-5, 6-5-6) । 'तपसा ब्रह्म विजिज्ञासस्व' (तै.भृ.1) इत्यादीनि प्रमाणानि किं वदन्तीति जिज्ञासितव्यम्, अनन्तरं तपसा ज्ञातव्यं च ॥

वक्ष्यामः क्रमशस्सर्वं तत्त्वं स्वावसरे रहः । यावच्छक्यं यथामानम्, सन्तः पश्यन्त्वमत्सराः ॥

अत एवोच्यते—'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥' (गी.16-21) इति । किमिदमुच्यते 'एतत्त्रयं त्यजेत्' इति! कथमेषां त्यागस्तावत्सुलभः? चन्द्रानयनवदिदमुच्यते । सत्यम्—मर्म जानाति किल भवान् । तर्हीदमप्यवधीयताम्— 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥' (गी.16-24) इति । किमिति भोः विस्मृतं व्यासवचनम्—'श्रुतिश्च भिन्ना स्मृतयश्च भिन्ना महामतीनां मतयश्च भिन्नाः । नैको ऋषिर्यस्य मतं प्रमाणम् महाजनो येन गतस्स पन्थाः' इति । ज्ञायते व्यासवचनम् । किन्तु को लाभः! के ते महाजनाः? किंगोत्राः, किन्नामधेयाः, किंलक्षणा वा ते? पुनः पुनः प्रश्नोत्तरेण को वा लाभः? श्रद्धा, निष्ठा, तितिक्षा वा यदि स्यात्, अन्ततः प्रामाणिक्यार्तिर्वा यदि स्यात्, तदा नूनं सर्वं सुलभमेव । नूनम्! तादृशानां साहाय्ये तिष्ठत्येव सदा सर्वभूतसुहृत् । य एवमाह स्वतः—'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्व-भूतानां ज्ञात्वा मां शान्तिमृच्छति ॥' (गी.5-29) इति । किमिति भोः! सर्वं पुराणप्रवचनं संवृत्तम् । मनस्समाधानमुच्यताम्! उच्यते किल भवतैव 'पुराणम्' इति । तदेव समाधानम् । 'पुरापि नवं यत्, तत् खलु पुराणम्' । अतस्समस्यापि न नूतना, उत्तरमपि न नूतनम् । आर्तिरैकैवावश्यकीत्यलं विस्तरेण । अत एवोच्यते भगवता वेदार्थसङ्ग्रहे—'तेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यते' इति । प्रपत्तिविषये यद्वक्तव्यं तज्जीवसरे (श्लो.31) भविष्यति ॥ ३३ ॥

त्रिगुणद्रव्यस्य जगदुपादानत्वकथनप्रसङ्गे, तद्विपरीतपरमाणूपादानतावादस्य, तत्प्रसङ्गात् कार्यकारण-भावस्य च निरूपणमावश्यकमभूत् । एवं प्रसक्तं परिसमाप्य उपक्रान्तं विचारमनुवर्तयति । तत्र प्रथममिन्द्रियाणां सात्त्विकाहंकारोपादानत्वं न संभवति, तेषां भौतिकत्वादिति वैशेषिकमतं निराकरोति—**नेत्रादेरित्यादिना**। इन्द्रियाणां सात्त्विकाहंकारोपादानत्वं न सङ्गच्छते; तेषां भौतिकत्वस्य तन्त्रान्तरे साधनात् । तथा हि 'चक्षुरिन्द्रियम् तैजसम्, रसाद्यग्राहकत्वे सति रूपग्राहकत्वात्, प्रदीपवदि'त्यनुमानम् । **नेत्रादेरि**त्यादिना इतरसर्वेन्द्रियाणां ग्रहणम् । **दीपिकादेरिवेति** दृष्टान्तः । तैजसत्वादिसाध्ये **नियमयुतं रूपादिग्राहकत्वम्** स्पर्शाद्यग्राहकत्वे सति रूपग्राहकत्वादिरूपं यदुक्तम्, तत्र **रूपग्राहकत्वं** किंरूपं विवक्षितम्, किं रूपसाक्षात्कारकरणत्वम्, उत रूपसाक्षात्कारसहकारित्वम्? उत कारणकरणसहकार्यादिसर्वसाधारणं

तत्साहाय्यं त्वसिद्धं भवति गमकतामात्रमप्यञ्जनादौ
अक्षाहङ्कारिकत्वं श्रुतिपथनिपुणैर्घोषितं नैव बाध्यम् ॥ ३४ ॥

[भूतानामिन्द्रियाप्यायिकत्वम्]

35. तन्मात्रेष्विन्द्रियाणां श्रुतिरिह न लयं वक्ति किंतु प्रवेशम्
नो चेत्, पृथ्व्यादिवाक्येष्विव हि लयपदं व्योम्नि चाक्षेषु च स्यात् ।

रूपज्ञानकारणत्वम्? तत्र, **यदि करणतया,** तदा **असाधारणत्वम्**=सर्वसपक्षव्यावृत्तः, पक्षमात्रवृत्तिः हेतुः असाधारण इति यो दोष उक्तः, सः हेतोः **स्यात्**। रूपसाक्षात्कारकरणत्वरूपं रूपग्राहकत्वं यदि हेतुः, तदा प्रदीपादौ दृष्टान्ते रूपसाक्षात्कारकरणत्वस्याभावात् हेतोः पक्षमात्रवृत्तित्वादसाधारण्यं दोषः । द्वितीये रूपसाक्षात्कारसहकारित्वेन साध्ये, **तत्साहाय्यं त्वसिद्धं भवति**=साक्षादेव कारणानि तु सहकारीण्युच्यन्ते। 'व्यापारवत्कारणं करणम्' इति लक्षणात् सद्वारककारणानि तु करणानीत्युच्यन्ते। एवञ्च रूपसाक्षात्कार-सहकारित्वं पक्षे चक्षुषि असिद्धम्, इन्द्रियस्य करणत्वेन सहकारित्वाभावात्। अतः स्वरूपासिद्धो हेतुः। हेत्वभाववत्पक्षः स्वरूपासिद्धिः इति लक्षणात्। अस्तु तर्हि तृतीयः कल्पः, सर्वस्यापि क्रोडीकारादित्यत्राह—**गमकतामात्रमप्यञ्जनादौ असिद्धमिति** । नेत्राञ्जनानामौषधादीनामपि नेत्रसहकारित्वात्, रूपसाक्षात्कार-हेतुत्वमस्ति, अथापि तत्र पार्थिवत्वमेव, न तैजसत्वम्। अतश्च तैजसत्वरूपसाध्याभाववति हेतोः सत्त्वाद-नैकान्तिको हेतुः। **असिद्धम्,** तैजसत्वमिति शेषः। सकलदोषपरिहारक्षमविशेषणदानादिना परिष्कारेऽपि, न दोषपरिहार इत्याह—**अक्षाहङ्कारिकत्वमित्यादि** । येन केनापि परिष्कारेणापि **श्रुतिपथनिपुणैःघोषितम् अक्षाणाम्**=इन्द्रियाणाम् **आहङ्कारिकत्वम्**=अहङ्कारोपादानकत्वम् **नैव बाध्यम्**=युक्तिभिः नैव बाध्यं भवेत्। युक्त्यपेक्षया शास्त्रस्य बलीयस्त्वात्। 'देवा वैकारिका दश' इति कथनात् इन्द्रियाणां सात्त्विका-हङ्कारोपादानकत्वमेव, न तु भौतिकत्वम्। देवाः=इन्द्रियाणि । 'सहैव सन्तं न विजानन्ति देवाः' (तै.आ.3-11-24) इत्यत्र वेदे देवाः=इन्द्रियाणि इति व्याख्यानात्। सात्त्विकाहङ्कारस्य वैकारिक इति संज्ञा (श्लो.11) ॥ एवमेव 'घ्राणेन्द्रियं पार्थिवम्, रूपाद्यग्राहकत्वे सति गन्धग्राहकत्वात्, कुङ्कुमगन्धाभिव्यञ्जक-गोघृतवत्' इत्याद्यनुमानान्यपि आगमबाधितानीति ज्ञेयम्। अतश्च वेदान्तिनाम् इन्द्रियाणामाहङ्कारिकत्वेन, अनुमानेन भौतिकत्वसाधनं न शक्यम् ॥ ३४ ॥

ननु 'इन्द्रियाणि तन्मात्रेषु लीयन्ते'(सुबा.) इति सुबालोपनिषदि तन्मात्रेषु इन्द्रियाणां लयः श्रूयते । लयश्च सर्वत्रोपादानकारण एव । एवञ्च इन्द्रियाणां तन्मात्रेषु लयात्, तन्मात्राणां भूतसूक्ष्मरूपत्वात्, तेषामेवेन्द्रियोपादानत्वात् सिद्धं भौतिकत्वमिन्द्रियाणाम्, न त्वाहङ्कारिकत्वमिति शङ्कायामाह—**तन्मात्रेष्वि-त्यादि**। **श्रुतिः**=उक्तसौबालश्रुतिः **इन्द्रियाणां तन्मात्रेषु लयं न वक्ति, किन्तु प्रवेशम्**=संश्लेषमात्रम्। **नो चेत्**=एवमनङ्गीकारे **इह**=अस्यां श्रुतौ **लयपदम्**='लीयते' इति लयवाचकं पदम् **पृथ्व्यादि-वाक्येष्विव**='पृथिव्यप्सु प्रलीयते' इत्यादिपूर्वतनवाक्येष्विव, **व्योम्नि**=आकाशविषये, **अक्षेषु च**=इन्द्रिय-विषये च स्यात्; न चैतदिष्टम्। 'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु' (सुबा.) इति उपनिषदानुपूर्वी।

भूतैराप्यायितत्वात् क्वचिदुपचरिता भौतिकत्वोक्तिरेषाम्
अन्नाप्तेजोमयत्वं श्रुतिरपि हि मनःप्राणवाचामुवाच ॥ ३५ ॥

**[कर्मेन्द्रियसाधनम्]**

**36. रूपादिज्ञानसिद्धौ यदि करणतया कल्पनं धीन्द्रियाणां**
**तद्वत् गत्यादिकर्मस्वपि करणतया सन्तु कर्मेन्द्रियाणि ।**

---

आकाशस्य इन्द्रियेषु लयः संश्लेषमात्रमेव स्यात्, न तु मुख्यो लयः । आकाशस्येन्द्रियोपादानकत्वाभावात् । अतः तन्मात्रेषु इन्द्रियाणां लयः नात्र विवक्षितः । तस्मादिन्द्रियाणि अहङ्कारतत्त्वोपादानकान्येव ॥

ननु 'घ्राणमुक्तं पृथिव्याः' 'वाय्वात्मकं स्पर्शनमामनन्ति' इत्याद्यायुर्वेदवचनेषु इन्द्रियाणां भौतिकत्वमुक्तं किलेति शङ्कां परिहरति—**भूतैरित्यादिना । क्वचित् एषाम्**=इन्द्रियाणाम् **भौतिकत्वोक्तिः भूतैराप्यायितत्वात् उपचरिता** । आप्यायनं पोषणम्, उपोद्बलनं वा । तत्तद्भूतैः तत्तदिन्द्रियाप्यायनं वर्तत एव । अत उक्तवचनम् औपचारिकम्, न मुख्यमित्यवगन्तव्यम् । तत्र श्रुतावप्यौपचारिकप्रयोगे प्रमाणमाह—**अन्नेत्यादि । श्रुतिरपि हि मनःप्राणवाचां अन्नाप्तेजोमयत्वं आह**= 'अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' (छां.6-5-4) इति हि श्रुतिः मनस अन्नमयत्वम्, प्राणस्याम्मयत्वम्, वाचस्तेजोमयत्वं चाह । तत्र मयडर्थः मुख्यः न कस्यापि संमतः । किन्तु पोषकत्वमादायौपचारिकः मयट् इत्येव सर्वसंमतम् । अतः श्रुतावप्यौपचारिकाः प्रयोगास्तात्पर्यविशेषगर्भा दृश्यन्त एव । तद्वदेवेन्द्रियाणां भौतिकत्वोक्तिरप्यौपचारिकी ॥

ननु मातापितृसहस्रेभ्योऽपि वत्सलतरं वेदाख्यं शास्त्रमित्यसकृदुच्यते । तादृशी मानवहितायैव प्रवृत्ता वाणी विवादस्यावकाशो यथा न लेशतोऽपि स्यात्, तथा किमिति सत्यं स्पष्टं नोपदिशतीति चेत्, किमित्यङ्ग! न जानासि, इममपि संशयं सैव दैवी वाक् परिहरत्यसकृत् 'परोक्षप्रिया इव हि देवाः । प्रत्यक्षद्विषः' इति । इदमपि 'अपात्रे सत्यं मा गच्छतु' इत्यभिप्रायेणैव । प्रसिद्धैव किलेयं श्रुतिः 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिस्तेऽहमस्मि । असूयकायानृजवेऽयताय न मां ब्रूया वीर्यवती तदा स्याम् ॥' इति । इदमपि वा कुतः? अन्यस्मै तु 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इत्युपदिश्यत इति चेत्, सत्यम् । तदप्यन्येषां हितायैव । 'अहिरेव विजानीयादहेः पादान्न संशयः' इति न्यायः प्रसिद्ध एव ॥

तपसैवाधिगम्येषु विषयेषु स्वबुद्धितः । विवदेयुर्यदि जनाः, किं कुर्याद्दिव्यवागपि ॥
जिज्ञासेरन् यदात्मार्थं श्रद्धया विनयेन च । नूनं कृपामयी सैव किङ्कुर्याद्दिव्यवागियम् ॥

अन्तत आचार्यवर्यैश्शिक्षितं स्मर्तव्यम्—'चिन्तासाफल्यमान्द्ये श्रमबाहुल्ये, तत्रोदासितव्यम्' इति (जड.श्लो.15, 64) ॥ ३५ ॥

ज्ञानेन्द्रियवत् कर्मेन्द्रियाणामपि अतिरिक्तत्वं साधयति—**रूपादीत्यादि । रूपादिज्ञानसिद्धौ करणतया यदि धीन्द्रियाणाम्**=ज्ञानेन्द्रियाणाम् **कल्पनम्**=अनुमानम्, **तद्वदेव गत्यादिकर्मसु**=गमनादिक्रियासु

कर्मज्ञानाक्षहेत्वोः समपरिहरणा ह्यन्यथासिद्धिशङ्का
तस्मादेकादशाक्षाण्यपि निगमविदो मन्वते न्यायपूर्वम् ॥ ३६ ॥

**[मन एकमेवान्तःकरणम्]**

37. सांख्यैस्त्रेधोक्तमन्तःकरणमिह मनोबुद्ध्यहङ्कारभेदात्
चित्तं चान्ये चतुर्थं विदुरुभयमसत् तादृशश्रुत्यभावात् ।
तत्तत्तत्त्वोक्तिमात्रं न हि करणभिदामाह क्लृप्तिस्तु गुर्वी
बुद्ध्याद्याख्या निरूढा क्वचिदिह मनसो वृत्तिवैचित्र्यमात्रात् ॥ ३७ ॥

---

**करणतया कर्मेन्द्रियाण्यपि सन्तु** अनुमानेन सिद्ध्यन्तु । सिद्धिः न निरोद्धुं शक्येत्यर्थः । चक्षुर्गोळकाद्यतिरिक्तं चक्षुरिन्द्रियमावश्यकम्; गोळकादीनां सामिचीन्येपि क्वचित् रूपादिग्रहणादर्शनात् गोळकाद्यतिरिक्तं चक्षुरिन्द्रियमावश्यकमिति यदि, तर्हि तेनैव न्यायेन हस्तपादादीनां सामिचीन्यदर्शनेऽपि आदानादितत्कार्याणां क्वचिददर्शनात्, हस्ताद्यवयवातिरिक्तं हस्तादिकर्मेन्द्रियं सूक्ष्मं आवश्यकमेव । ननु चक्षुर्गोळकस्य समीचीनत्वेऽपि कदाचित् रूपादिग्रहणादर्शनात्, अतिरिक्तं चक्षुरिन्द्रियमावश्यकम् । न हि तथा हस्तादौ दृश्यते यत्र कार्यवैकल्यम्, तत्र सिरावैकल्यं स्यादेवेति—कर्मेन्द्रियाणि नातिरिक्तानि इति चेत्, तत्राह—**कर्मज्ञानेत्यादि**। **कर्मज्ञानाक्षहेत्वोः**=कर्मेन्द्रियज्ञानेन्द्रिययोः अङ्गीकारे यः हेतुरुच्यते, तत्र **अन्यथासिद्धिशङ्का** कर्मेन्द्रियस्यातिरिक्तस्याभावेऽपि निर्वोढुं शक्यते इति शङ्का, **समपरिहरणा**=उभयत्रापि परिहर्तुं शक्यैव । अतश्च अङ्गीक्रियते चेदुभयमङ्गीक्रियताम्, त्यज्यते चेत् उभयमपि त्यज्यताम्, ज्ञानेन्द्रियस्याङ्गीकरणम्, कर्मेन्द्रियस्य निराकरणमिति तु सर्वथा न संभवति । हस्तादिषु सूक्ष्मवैकल्यवशादेव आदानादिकार्यस्य लोप इति चेत्, ज्ञानेन्द्रियमन्तरापि चक्षुर्गोळकादौ सूक्ष्मवैकल्यादेव रूपादिग्रहणाभावः संभवेदिति शङ्कायाम्, तादृशसूक्ष्मवैकल्यादर्शनात्, अतिरिक्तचक्षुरिन्द्रियमन्तरा अग्रहणस्य समर्थनासंभवात् चक्षुरिन्द्रियमतिरिक्तमावश्यकमिति समाधानमुच्यते । एतत्सर्वं कर्मेन्द्रियविषयेऽपि समानम् । उपसंहरति—**तस्मादिति** । उक्तयुक्तिभिः **निगमविदः**=वेदतत्त्वज्ञाः **एकादशाक्षान्यपि**=पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, मनश्चेति एकादशेन्द्रियाण्यपि **न्यायपूर्वं**=उक्तन्यायपूर्वं **मन्वते** अङ्गीकुर्वन्ति ॥ ३६ ॥

एकादशेन्द्रियेषु मनः अन्तःकरणमित्युच्यते । तत्र सांख्यादिप्रक्रियामनूद्य निराकरोति—**सांख्यैरित्यादिना** । **इह**=अन्तःकरणविषये **सांख्यैः मनोबुद्ध्यहङ्कारभेदात् अन्तःकरणं त्रेधा उक्तम्** । **अन्ये** पातञ्जलाः त्रिभिस्सह **चित्तम्** इति **चतुर्थं च** मिलित्वा अन्तःकरणं चतुर्विधमिति **विदुः** । **उभयम् असत्** न समीचीनम् । कुतः? इत्यत्र—**तादृशश्रुत्यभावादिति**। अन्तःकरणचतुर्विधत्वबोधकसुसपष्टश्रुत्यदर्शनादित्यर्थः। ननु प्रश्नोपनिषदि (4.8) सुवालोपनिषदि च (5 खं) मनोबुद्ध्यङ्कारचित्तानां निर्देशः वर्तते इति शङ्कायामाह-**तत्तदित्यादि** । **तत्तत्तत्त्वानां उक्तिमात्रम्, करणभिदाम्**=अन्तःकरणभेदम् **न ह्याह** । नामनिर्देशमात्रात् अन्तःकरणत्वं तेषां न हि सिद्ध्येत् । मा अस्तु श्रुतिः, अध्यवसायहेतुतया बुद्धिम्, अभिमानहेतुतया अहङ्कारम्, संङ्कल्पहेतुतया मनः, चिन्तनहेतुतया चित्तं चानुमानेन साधयामः इत्यत्राह—**क्लृप्तिस्तु गुर्वीति**।

[इन्द्रियनानात्वम्]

**38. एकं तत्तत्प्रदेशप्रतिनियततया शक्तिभेदं प्रपन्नं**
**देहव्यापीन्द्रियं चेत्, प्रथममिह भवेदागमेनैव बाधः ।**
**नो चेत्, स्यात् देहभेदप्रतिनियततया सर्वजन्तोः तदेकम्,**
**भेदाम्नानादक्लृप्तेरपि न च भजते देह एवेन्द्रियत्वम् ।। ३८ ।।**

**क्लृप्तिः**=कल्पनम् अनुमानेन साधनं तु, **गुर्वी**=गौरवदोषग्रस्ता भवति । मानवबुद्धिस्तु सदा लाघवपक्ष-पातिनी । अतः अनुमानेन न तत्सिद्धिः । अन्यथा चिन्तनहेतुतया चित्तवत्, संशयादिहेतुतया अन्तःकरणा-न्यनन्तानि भवेयुः । मनसैव तेषां निर्वाहे प्रकृतेऽपि तथैवास्तु । 'सर्वं मन एव' (बृ.3-5-3) इति सर्वेषां मनोवृत्तिशेषरूपतायाः स्पष्टमुक्तेः । 'मनश्च....बुद्धिश्च' (सुबा.७) इति धीशब्दस्यापि तत्र श्रवणात्, बुद्धेः मनोभिन्नत्वात् मनोवृत्तिभेदरूपत्वं तेषां कथमित्यत्राह—**बुद्ध्यादीति**। **इह**=एतन्मते **मनसः वृत्तिवैचित्र्य-मात्रात् बुद्ध्याद्याख्या**=बुद्ध्यादिसंज्ञा **निरूढा**=संकेतिता । सहकारिवैचित्र्यवशात् कार्यवैचित्र्यं लोके दृश्यत एव । तद्वन्मनस एव वृत्तिभेदा एते । अन्यथा सिद्धान्ते बुद्धिशब्दस्य धर्मभूतज्ञाने प्रसिद्धेः, धर्मभूतज्ञानमपि मनोवृत्तिरूपं वक्तव्यम् । न चेष्टापत्तिः; धर्मभूतज्ञानस्य जीवधर्मत्वाङ्गीकारात् ।।

ननु तर्हि मनोवृत्तौ कथं धीशब्दः इति चेत्; अयं धीशब्दः धर्मभूतज्ञानवाचिधीशब्दादन्य एवेत्यवगम्यताम् । अत्र प्रथमं 'तादृशश्रुत्यभावात्' इत्युक्तम् । अनन्तरं श्रुतौ प्रदर्शितायाम्, तस्य तात्पर्यमन्यत् इत्युक्तम् । एवञ्चानन्तरकालिकास्सर्वेऽपि विचाराः श्रुतिव्याख्यानभेदप्रत्युक्ता इत्ययमंशः मनसि सुदृढं स्थापनीयः । बुद्धेरध्यवसायहेतुत्वेऽपि, अहंकारस्याभिमानहेतुत्वेऽपि 'अन्तरिन्द्रियम्' इति संज्ञा तु मनस एव, नेतरयोरित्यभिप्रायेण वा तथोक्तमित्यवगन्तव्यम् । अतश्च बुद्धिचित्ताहंकाराणामनिन्द्रियत्वेऽप्यन्तः-करणत्वे न कश्चन विरोधः इति वा निर्वाह्यम् ।। ३७ ।।

ननु एवं यदि मनसैव सर्वनिर्वाहः, तर्हि इन्द्रियभेदोऽपि मा अस्तु, सर्वेषामप्यहंकारोपादानकत्वस्य समत्वात्, इत्याशंक्य समाधत्ते—**एकमित्यादिना। देहव्यापि एकम् इन्द्रियम् तत्तत्प्रदेशप्रतिनियततया**= चक्षुर्गोळकनासाग्रजिह्वादिप्रदेशानां विलक्षणत्वात्, **प्रतिनियततया**=व्यवस्थिततत्वेन **शक्तिभेदम्**=रूपादि-तत्तद्विषयग्रहणानुकूलशक्तिविशेषम् **प्रपन्नम्**=प्राप्तं भवति । एक एव प्राणः यथा हृदयाद्युपाधिवशात् पञ्चधा भूत्वा प्राणापानव्यानोदानसमानभेदात् पञ्चधा भवति, एवमेव प्रकृतेऽपि भवतु । अत्र प्राणशब्दः पञ्चप्राणवाची, प्राणविशेषवाची च । एवमेक एव प्राणः उपाधिवशात् परस्परविलक्षणं कार्यं करोति, तथैव देहव्याप्येकमेवेन्द्रियम् स्थानभेदात् संज्ञाभेदं प्राप्य कार्यभेदमपि करोतीत्यङ्गीकारे लाघवमस्तीत्यभिप्रायः । **चेत्**=एवञ्चेत् **इह**= एतद्विषये **प्रथमम् आगमेनैव बाधः**=श्रुत्या बाधः **भवेत्**। श्रुतौ चक्षुरादीनां पृथगेव निर्देशात् श्रुतिविरोधः। श्रुतेरन्यथानयनं क्रियतामिति चेदाह—**नो चेदित्यादि**। इन्द्रियनानात्वं यदि नोच्यते, **तर्हि सर्वजन्तोः**= सकलप्राणिनामपि **तत्**=इन्द्रियम् **देहभेदप्रतिनियततया**=तत्तत्प्रदेशप्रतिनियततया यथा व्यवस्था, तथैव देहभेदेन अनुभवव्यवस्थाया वक्तुं शक्यत्वात् **एकम् स्यात्**, तत्पक्षापेक्षयात्यन्तलाघवात् । अस्तु का

[इन्द्रियाणामणुत्वम्]

39. **सूक्ष्माण्येकादशाक्षाण्यपि; न यदि, कथं देहतो निष्क्रमादिः**
**चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमोऽप्यस्तु मानम्।**
**वृत्त्याऽक्ष्यादेर्दवीयःप्रमितिजनकता; वृत्तिराप्यायनार्थैः**
**भूतैर्जातः प्रसर्पः; श्रुतिमितमपि चानन्त्यमेषां स्वकार्यैः ॥ ३९ ॥**

हानिरिति चेत्, तर्हि ततोऽपि लाघवात् देह एवेन्द्रियं भवतु, जीवोपकारत्वरूपस्याकारस्य देहेन्द्रिययोः समानत्वात्, तत्तदवयवभेदेन दर्शनादिकार्यभेदस्य वक्तुं शक्यत्वाच्च । अस्तु तदपि, का हानिरिति चेत्, **भेदाम्नानात्**=इन्द्रियाणि ह्याहङ्कारिकाणि, देहस्तु भौतिकः । इन्द्रियाणि अतिसूक्ष्माणि, देहस्तु अतिस्थूलः । एवमादिबहुधाभेदस्य देहेन्द्रिययोः श्रवणात्, **अक्लृप्तेरपि**=केवलं तर्कमूलककल्पनायाः सिद्धान्तेऽनङ्गीकाराच्च **देह एव इन्द्रियत्वं न च भजते**=नैव भजते । लाघवमात्रगणने जीवभेदोऽपि न स्यात् । अत्रापीष्टापत्तौ, समाधानं जीवसरे विस्तरेण भविष्यति ॥ ३८ ॥

इन्द्रियेषु वक्तव्यान् विशेषानाह—**सूक्ष्माणीत्यादिना**। एषामाहङ्कारिकत्वकथनेनैवानित्यत्वं सिद्धमेव । परिमाणजिज्ञासायाम् 'अणवश्च' (ब्र.सू.2-4-6) इत्यादिसूत्रसिद्धत्वात् **एकादशाक्षाण्यपि सूक्ष्माणि**=एकादशेन्द्रियाण्यपि अणुपरिमाणानि । सिद्धान्ते परमाणूनामप्यनित्यत्वमवगन्तव्यम् । **न यदि**= सूक्ष्मत्वं यदि न स्यात्, तर्हि, **देहतः निष्क्रमादिः कथम्?**=शरीरात् जीवस्य उत्क्रमणसमये इन्द्रियाणामपि निष्क्रान्तिः कथं भवेत्? यदीन्द्रियाणाम् अणुत्वं न स्यात्, तर्हि मध्यमपरिमाणवत्त्वम्, विभुत्वं वा वक्तव्यम् । विभुत्वे निष्क्रान्तिर्न स्यात् । मध्यमपरिणामत्वे सूत्रविरोधः । 'निष्क्रमादि' इत्यत्र **आदि**पदेन देहान्तरप्रवेशादिकमुच्यते । जीवेन साकमिन्द्रियाणां निष्क्रमणम् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृ.6-4-2) 'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' (गी.15-8) इत्यादौ दृश्यते । प्रथमस्य प्राणशब्दस्य मुख्यप्राणः, द्वितीयस्येन्द्रियाणि चार्थः । **चित्ताणुत्वे तु**=मनसः अणुत्वविषये तु **सर्वेन्द्रियसमुदयने**=दीर्घशष्कुलीभक्षणादौ सर्वेषामपीन्द्रियाणां विषयसंबन्धे सत्यपि **धीक्रमोऽपि**=बुद्धेः क्रमेणोत्पत्तिरपि **मानम्**=प्रमाणम् **अस्तु**। 'युगपद्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्'(न्या.सू.1-1-16) इति गौतमसूत्रम् । जीवेन सहोत्क्रान्त्या मनसः अणुत्वं सिद्धमेव; अतः 'धीक्रमोऽपि' इति अपिशब्दनिर्देशः । चित्तसंज्ञकस्यातिरिक्तान्तःकरणस्य पूर्वमेव (श्लो.37) निरासात् मनसि चित्तशब्दप्रयोगः । इन्द्रियाणाम् अणुत्वे शरीर एवावस्थानात्, बहिर्गमनाद्यसंभवात् दूरस्थानां वस्तूनां कथं ग्रहणमित्यत्राह—**वृत्त्येत्यादि** । **अक्ष्यादेः**=चक्षुरादीन्द्रियस्य **वृत्त्या**=व्यापारविशेषेण **दवीयःप्रमितिजनकता**=दूरस्थवस्तुविषयकप्रमात्मकज्ञानजनकत्वं संगच्छते । **वृत्ति**र्नाम का? इत्यत्र—**आप्यायनार्थैः भूतैः जातः प्रसर्पः वृत्तिः** इत्युच्यते । इन्द्रियाणामणुत्वेऽपि श्रोत्रादीन्द्रियाणां आकाशप्रभृतीनि पञ्च भूतानि यथाक्रमम् आप्यायकानि इत्युच्यन्ते । **आप्यायनं** नाम तत्तदिन्द्रियैः तत्तत्कार्यजनने सहकारः, उपोद्बलनम्, पूरणं वा । एवञ्च इन्द्रियाणामणुत्वेऽपि तत्तत्सहकारिभूततेजःप्रभृतिभूतस्य प्रसरणवशात् चक्षुरादिकं दूरस्थमपि

गृह्णाति। अतः नानुपपत्तिः। ननु इन्द्रियाणि प्रकृत्य 'सर्व एवानन्ताः' (बृ.3-5-13) इति श्रुतिदर्शनात् कथं इन्द्रियाणामणुत्वमित्यत्राह—**श्रुतीत्यादि**। **श्रुतिमितम्**=उक्तश्रुतिप्रतिपादितमपि एषाम् **आनन्त्यम्**=अनन्तता **स्वकार्यैः**=तत्तदिन्द्रियकार्यैः मन्तव्यम्। विभुत्वे दोषस्योक्तत्वात्, इन्द्रियाणामसंख्यकार्यकारित्वात्, तत्प्रभावदृष्ट्या 'अनन्ताः' इत्युक्तम्। 'अणवश्च' इति सूत्रे 'यो हैताननन्तानुपास्तेऽनन्तं स लोकं जयति' (बृ.3-5-13) इत्यनन्तत्वस्योपासनार्थत्वश्रवणात् न तत् पारमार्थिकमिति भाषितत्वादेवमुक्तम्। ननु उपासनार्थत्वमात्रात् कथं तस्य पारमार्थिकत्वाभावः? सताप्युपासनसंभवात्, अन्यथा उपास्यत्वात् ब्रह्मणोऽप्यसत्त्वप्रसङ्गादिति चेत् सत्यम्। परन्तु 'स यो हैतानन्तवत उपास्तेऽन्तवन्तं स लोकं जयति अथ यो हैताननन्तानुपास्तेऽनन्तं स लोकं जयति' (बृ.3-5-13) इत्यभिधानात्, प्राणानामन्तवत्त्वेनोपासनेऽन्तवल्लोकप्राप्तेः, अनन्तत्वेनोपासनेऽनन्तलोकप्राप्तेश्चाभिधानात्, धर्मद्वयस्य परस्परविरुद्धस्यैकत्रासंभवात्, नानया तत्स्वरूपनिर्णयसंभवः। किन्तु प्रकरणान्तरगतेन 'तमुत्क्रामन्तम्' इत्यादिनैव। धर्मद्वयकथनं तूपासनार्थम्॥

ननु श्रुतिर्वा कथं परस्परविरुद्धधर्मद्वयमेकस्मिन्नुपास्यं वदेदिति चेत्, अत एवात्रान्तवत्त्वमनन्तत्वं च न स्वरूपगतो धर्मः, किन्तु तेषां कार्यतारतम्यप्रयुक्तो धर्म इत्याहुर्भाष्यकाराः। दृश्यते किल लोके इन्द्रियशक्तितारतम्यं जनेषु। अतो धर्मद्वयमपि पुरुषभेदकृतादुपासनादुपपद्यत इति न कश्चन विरोधः। न चेन्द्रियाणां कार्यतारतम्यप्रयोजकं शक्तितारतम्यं तत्तज्जीवकर्मतारतम्याधीनमिति, अन्तवत्त्वेनानन्तत्वेन वोपासनया किं साधनीयमिति वाच्यम्; एतादृशोपासनानां पूर्वकर्मप्रायश्चित्तरूपत्वात्। न च कर्मफलस्यावश्यभोक्तव्यत्वश्रवणात्, एतादृशोपासनं किं कुर्यादिति वाच्यम्; तर्हि प्रायश्चित्तशास्त्रादीनाम्, आयुष्यहोमादीनाञ्चानर्थक्यप्रसङ्गात्। न च परमहितरूपं वेदाख्यं शास्त्रं कथमेतादृशसांसारिकफलोपायानुपदिशतीति वाच्यम्, परमहितरूपतयैवैषामुपदेशात्। नानाविधाधिकारिभिः व्याप्तेऽस्मिन् जगति तत्तदनुगुणपुरुषार्थसाधनमार्गाणामप्यवश्योपदेश्यत्वात् विश्ववाङ्मयेन वेदेन। श्येनादिकमप्यधिकारिविशेषे आवश्यकमित्यादेः वेदार्थसंग्रहे प्रदर्शनात्। 'त्रैगुण्यविषया वेदाः' (गी.2-45) इति भगवद्वचनाच्च। अधिकं तु तत्तत्प्रकरणे। अतः एकादशेन्द्रियाण्यप्यणुपरिमाणानि॥ ३९॥

इन्द्रियाणि आप्यायकभूतद्वारा वस्तुना संबद्धानि गृह्णन्तीत्युक्तम्। अतः तानि प्राप्यकारीणि=प्राप्य स्वग्राह्यवस्तुना सह संबध्य कारीणि=कार्यकारीणि=ज्ञानजनकानि इति सिद्धम्। **बौद्धास्तु** चक्षुरिन्द्रियम्, **श्रोत्रेन्द्रियं** द्वयमात्रम् अप्राप्यकारि, इतराणि तु प्राप्यकारीणि इति वदन्ति। न हि चक्षुरिन्द्रियस्य बहिर्विद्यमानस्य च वस्तुनः कश्चन संबन्धो दृश्यते। आप्यायकभूतद्वारा संबन्धोऽस्तीति कथनं प्रतारणमात्रम्। साक्षात् संबन्धस्याभावे, परंपरासंबन्धस्य नियामकत्वे परंपरया सर्वं संबद्धमिति सर्वग्रहणप्रसङ्गः। अतः चक्षुरिन्द्रियं न प्राप्यकारि, किन्तु अप्राप्यकारि=असंबध्य ज्ञानज्ञानकम्। एवं श्रोत्रेन्द्रियमपि। एतत्तु समनन्तरश्लोके विचार्यते। ननु यदि चक्षुरिन्द्रियं अप्राप्यकारि, तर्हि पृष्ठदेशस्थम्, कुड्यादिना व्यवहितं सर्वमपि चक्षुरिन्द्रियं गृह्णीयात् इति चेत्, न, चक्षुराभिमुख्यस्य प्रयोजकत्वात्। न ह्याभिमुख्यमात्रं संबन्धरूपं भवेत्, अन्धानां पुरतः वस्तुनस्सत्त्वेऽपि अग्रहणात्, नैरन्तर्यस्यैव संबन्धरूपत्वात्। नैरन्तर्यं तु विषयचक्षुरिन्द्रिययोः कदापि न

[इन्द्रियाणां प्राप्यकारित्वम्]

**40. प्राप्यग्राहीन्द्रियत्वात् विमतमितरवत् प्राप्तिरुक्तप्रकारा,**
**वृत्तिं दृष्टेर्न रुन्धे विरलपटनयादम्बुकाचादिरच्छः ।**
**नो चेत् गृह्येत योग्यं सममिह निखिलं निष्फले छादकादौ**
**स्थैर्ये तद्योग्यभावो न हि गलति, समा सन्ततिस्त्वन्मतेऽपि ॥ ४० ॥**

संभवि, चक्षुष एवाघातप्रसङ्गात् । अतः चक्षुरिन्द्रियमप्राप्यकारि इति मतं निराकरोति—**प्राप्यग्राहीत्यादि**। **विमतम्**=चक्षुरिन्द्रियम् **प्राप्यकारि, इन्द्रियत्वात्, इतरवत्**=त्वगादीन्द्रियवत् । न हि त्वगिन्द्रियं स्वासंबद्धं गृह्णाति । तद्वदेव चक्षुरिन्द्रियमपि स्वासंबद्धं कथं गृह्णीयात्? अतः चक्षुरिन्द्रियं प्राप्यकारि ॥

ननु त्वन्मते वैशेषिकमत इव चक्षुषः तैजसत्वानङ्गीकारात्, प्रसरणं न संभवि । कथं तर्हि विषयेण संबन्धः? चक्षुरिन्द्रियाप्यायकभूतस्य तेजसः प्रसरणसत्त्वात्, तद्द्वारा विषयसंबन्धः प्रत्यक्षकारणं भवति इति चेत्; परंपरासंबन्धस्य प्रत्यक्षनियामकत्वेऽनियमप्रसङ्गस्य कथितत्वात् । अतः चक्षुषः कथं प्राप्यकारित्व-मित्यत्राह—**प्राप्तिरित्यादि**। **प्राप्तिर्नाम, उक्तप्रकारा**=वृत्तिराप्यायनार्थैर्भूतैः जातः प्रसर्प एव विषयेन्द्रिय-संबन्धपदस्यार्थः पूर्वश्लोके उक्तः । तथा च नायं परंपरासंबन्धः, किन्तु विलक्षणः इन्द्रियवृत्तिरूपः पदार्थः। अतः साक्षात्संबन्ध एव सः इति भावः । ननु जलान्तर्विद्यमानं वस्तु चक्षुषा गृह्यते । एवं स्वच्छस्फटिकादिना अन्तरितं वस्त्वपि चक्षुषा गृह्यते । अत्र आप्यायकभूतस्य तेजसः प्रसरणं कथं भवेत् । स्पर्शवतां द्रव्याणां सप्रतिघत्वनियमात् जलान्तः, स्फटिकान्तर्वा तेजसः प्रसरणासंभवादित्यत्राह—**वृत्तिमित्यादि**। **अच्छः**=स्वच्छः **अम्बुकाचादिः**=जलम् स्फटिकादिश्च, **विरलपटनयात्** विरलतन्तुसंयोगजन्यवस्त्रन्यायेन **दृष्टेः**=चक्षुरिन्द्रि-यस्य **वृत्तिं**=वृत्त्याख्यं चक्षुर्व्यापारम्, **न रुन्धे**=न प्रतिरुणद्धि । यत्र वस्त्रे तन्तुसंयोगाः नातिनिबिडा भवन्ति, तादृशं वस्त्रं सूर्यप्रकाशादिकं न संपूर्णतया प्रतिरुणद्धीति प्रत्यक्षसिद्धम् । तद्वत् जलादावपि तेजःप्रसरणं नासंभवि । किं बहुना! अतिरिक्तावयविवादे, अवयवावयविनोः स्पर्शवत्त्वेऽपि एकदेशावच्छेदेनावस्थानं सप्रतिघत्वाभावश्च अङ्गीक्रियते । अनुभवानुरोधात्तथात्वमित्यादिकं प्रकृतेऽपि समानम् । प्रतप्ते जले औष्ण्योपलब्ध्या, तेजःकणानां सूक्ष्माणां जले प्रवेशस्यावश्यकत्वाज्जलादौ आप्यायकतेजःप्रसरणे विरोधाभावात् । स्फटिकद्रव्यं तु विलक्षणं प्रकाशप्रसरणं न प्रतिरुणद्धीति वस्तुस्वभावाधीनम् । अतः इन्द्रियवृत्तेः प्रसरणस्य नासंभवः ॥

एवमनङ्गीकारेऽनिष्टमापादयति—**नो चेदित्यादि । नो चेत्**=यदि चक्षुरिन्द्रियम् अप्राप्यकार्येव स्यात् तदा, **इह**=अस्मिन् विषये **छादकादौ**=आच्छादककुड्यादौ **निष्फले**=प्रत्यक्षनिरोधनाक्षमे सति **योग्यम्**=चक्षुर्ग्रहणयोग्यम् **निखिलम्**=समस्तमपि **समम्**=युगपदेव **गृह्येत**। यदि चक्षुरिन्द्रियम् अप्राप्यकारि, तर्हि पृष्ठभागस्थितमपि गृह्णीयात् । आभिमुख्यमावश्यकमित्युक्तं किं विस्मृतमिति चेत्, तर्हि; चक्षुषः पुरतः विद्यमानस्य, कुड्यादिना, कवाटादिना वा आच्छादने जातेऽपि आभिमुख्यस्यानपायात् अग्रहणं न समर्थयितुं शक्यम् । सिद्धान्ते तु इन्द्रियवृत्तेः तैः निरोधात् न ग्रहणम् । तन्मते तु आभिमुख्यमात्रस्यैव प्रयोजकत्वेनाग्रहणं

न सूपपादम्। अतः चक्षुरिन्द्रियमपि प्राप्यकार्येव। अथवा **समम्**=चक्षुषः पुरतो विद्यमानं पिहितम् अपिहितं द्वयमपि समानतया **गृह्येत**, आभिमुख्यस्यानपायात्। ननु तत्तद्योग्यतैव तत्तदिन्द्रियग्रहणे हेतुरिति वदतां भवतामिव, कवाटादिना पिधाने योग्यतैव नश्यतीति वदामः। अतः समं न गृह्येतेति नानुपपत्तिरिति चेत्, योग्यता यदि नष्टा, तर्हि पुनः कवाटोद्घाटने कथं गृह्येत? वस्तूनां क्षणिकत्वात्, तत्तत्क्षणे योग्यतायाः नाशः, पुनरुत्पत्तिर्वा संगच्छेतेति चेत्तत्राह—**स्थैर्य** इत्यादि। वस्तूनां क्षणिकत्वस्य पूर्वमेव निराकृतत्वेन स्थैर्यसिद्ध्या न तद्वक्तुं शक्यम्। वस्तूनां **स्थैर्ये तद्योग्यभावः**=तत्तदिन्द्रियग्रहणयोग्यत्वम्, **न हि गलति**=न ह्यपैति। अत एव वयं वस्तूनां क्षणिकत्वं वदाम इति चेत्, तत्तु निराकृतमित्युक्तम्। वैभवेनापि वदामः **त्वन्मतेऽपि**=क्षणिकवादेऽपि **सन्ततिः समा**=सदृश्येव=एकरूपैव। घटादेः मुद्गराघातादिना पूर्वघट-सन्तानविसदृशसन्तानारंभः अङ्गीक्रियते। न ह्येवमत्र कवाटपिधानादिना चक्षुर्ग्रहणयोग्यघटसन्ताननाश-पूर्वकं चक्षुर्ग्रहणायोग्यविसदृशघटक्षणारंभहेतुः कश्चिद्दृश्यते। न च कवाटपिधानक्रियैव विसदृशसन्ताना-रंभहेतुः स्यादिति वक्तुं शक्यम्; दूरे जायमानायाः क्रियायाः विषयस्य च संबन्धलेशस्याप्यभावात्। असंबध्यापि किञ्चित्कारित्वे अव्यवस्थाप्रसङ्गात्। पिधानापसरणे पुनरग्रहणप्रसङ्गात्। योग्यक्षणोत्पत्तिहेतो-रन्यस्यादर्शनात्। दूरतो वर्तमानस्य पुरुषस्यापेक्षया यदि योग्यता नष्टा, तर्हि स एव विषयः समीपस्थेन तदानीमेव गृह्यते किल! तत् कथमुपपद्येत, योग्यताया नष्टत्वात्। पुरुषापेक्षयापि योग्यता यदि भिद्येत, तर्हि न किञ्चिदपि सुनिरूपं स्यात्। अतः चक्षुरिन्द्रियस्य प्राप्यग्राहित्वाङ्गीकारमन्तरा निर्वाहासंभवात् चक्षुरिन्द्रियमपि प्राप्यग्राहि॥

**वस्तुतस्तु**—'प्राप्यकारीणि' इत्यस्य इन्द्रियं स्वयं वा आप्यायकभूतद्वारा वा विषयेण संबद्धं सत् विषयं गृह्णाति इत्येवार्थः बौद्धानां विवक्षितः। घ्राणरसनत्वगिन्द्रियाणि हि स्वसंबद्धानेव विषयान् गृह्णन्ती-त्यनुभवसिद्धम्। अतस्तानि प्राप्यकारीणि। परन्तु घ्राणादीनि विषयदेशं प्रति न गच्छन्ति, किन्तु विषया एवेन्द्रियदेशमागत्येन्द्रियसंबद्धा भवन्ति। एतादृशो विषयसंबन्धः चक्षुःश्रोत्रयोरपि समानः। अथापि प्रतिफलनरूपस्संबन्धः चक्षुरिन्द्रिये, न तु साक्षाद्विषयसंबन्धः असंभवात्। श्रोत्रेन्द्रियमपि उत्पन्नं शब्दं तथैव न गृह्णाति। वीचीतरङ्गन्यायेन स्वदेशमागतं तत्सदृशमेव शब्दं गृह्णातीत्यभिप्रायेण तयोः अप्राप्यकारित्वम् उच्यते तैः, न तु विषयसंबन्धमन्तरैव चक्षुःश्रोत्रे स्वविषयं गृह्णीत इत्यर्थः। शब्दः दूरे उत्पन्नः वीचीतरङ्ग-न्यायेन श्रोत्रदेशमागतः श्रोत्रसंबद्धः तेन गृह्यते। एवं चक्षुरिन्द्रियमपि, बहिः अप्रसरदेव छायारूपेणागतं विषयं गह्णाति। एतदर्थमेव विषयाभिमुख्यमपेक्ष्यते। कुड्यादिना व्यवधाने छायापतनस्यासंभवान्न ग्रहणम्। अतश्च अप्राप्यकारि इत्यस्यासंबद्ध्य कारीति नार्थः। किन्तु बहिः अप्रसृत्य करोतीतिमात्रमर्थः। नवीनभौतिक-विज्ञानमप्येवमेव वदतीति ज्ञेयम्। आचार्यैस्तर्हि कथमेवमभिधानमिति चेत्, आचार्याः खलु अद्यतन-भौतिकविज्ञानिन इव भौतिकविज्ञानप्रयोगपरिशोधनादिभिर्नैतादृशानर्थान् निरूपयन्ति। किन्तु, तदानीन्तन-संप्रदायाद्यनुरोधेनैवैवं प्रतिपादयन्ति। अतश्च तदानीं बौद्धैरुक्तयोः प्रक्रिययोस्तदानीं तथात्वात्, तत्खण्डन-परन्यायवार्तिकाद्यनुरोधेन तथाभिधानमिति न कश्चन विरोधः॥ ४०॥

[शब्दग्रहणप्रकारः]

**41. शब्दं गृह्णाति दूराभ्युदितमपि बहिस्सन्तता श्रोत्रवृत्तिः**
**दिग्भेदासन्नतादिग्रहणमपि तदा तत्र तत्सन्निधानात्।**
**इत्येकेऽन्ये तु दूरान्तिकगतजनताशब्दधीकालभेदात्**
**श्रोत्रायातस्य तस्य ग्रहमनुमितिमप्याहुरस्मिन् दिगादेः ॥ ४१ ॥**

अस्तु चक्षुरिन्द्रियस्याप्यायकतेजस्संबन्धात् प्राप्यकारित्वम्। श्रोत्रेन्द्रियस्य तु तदपि न संभवति। तदाप्यायकभूतस्याकाशस्य विभुत्वेन प्रसरणासंभवात्। अतः श्रोत्रमप्राप्यकार्येवेति शङ्कामपनयति—**शब्दमित्यादिना**। **बहिः**=कर्णशष्कुलीदेशात् बहिः **सन्तता**=व्याप्ता, प्रसृता **श्रोत्रवृत्तिः**=श्रोत्रेन्द्रियस्य वृत्तिः **दूराभ्युदितमपि शब्दम्**=दूरे जातमपि शब्दम् **गृह्णाति**=विषयीकरोति। ननु चक्षुराप्यायकस्य तेजसः प्रसरणं युज्यते। श्रोत्राप्यायकस्य आकाशस्य विभुत्वात् कथं प्रसरणमिति चेत्, सांख्यानां सिद्धान्तिनां च आकाशस्याविभुत्वान्न कश्चिद्दोषः॥

शब्दग्रहणविषये पक्षद्वयं प्रतिपादयन्ति विद्वांसः—श्रोत्रमेव आप्यायकभूतसहकारेण बहिः व्याप्य शब्दोत्पत्तिदेशं गत्वा शब्दं गृह्णाति इत्येकः पक्षः। शब्द एव येन केन प्रकारेण कर्णविवरप्रदेशमागतः, तत्रत्येन श्रोत्रेन्द्रियेण गृह्यते इत्यन्यः पक्षः। आद्यः सांख्यानाम्, द्वितीयः वैशेषिकाणाम्। प्रथमपक्षे स्वारस्यविशेषं दर्शयति—**दिगित्यादिना**। श्रोत्रागतस्यैव शब्दस्य ग्रहणमिति पक्षे 'प्राच्यां शब्दः श्रूयते' इत्यादिप्रतीत्यस्वारस्यम्। **दिग्भेदः**=प्राचीप्रतीच्यादिदिग्विशेषः। तत्र आसन्नः शब्दः, **आसन्नता**=तत्सन्निहितता शब्दधर्मः। तादृशानाम् **ग्रहणमपि तत्र**=तत्तद्दिशि **तत्सन्निधानात्** श्रोत्रेन्द्रियगमनात् युज्यते। न हि श्रोत्रं प्राप्ते शब्दे दिग्भेदोऽस्ति। कर्णशष्कुलीदेशस्यैकत्वात्, तत्रागते शब्दे दिग्भेदाभावात्। तर्ह्ययमेव सिद्धान्तो वा? इत्यत्राह—**इत्येक** इति। एके—सांख्याः। अन्ये तु—सिद्धान्तिनस्तु, अस्य 'आहुः' इत्यनेनान्वयः। एतत्पक्षप्रवृत्तेः मूलमाह—**दूरान्तिकेत्यादि**। **दूरे अन्तिके च गता या जनता**=जनसमूहः। **तस्य** यः तुमुलः **शब्दः**, तत्र **भेदो** दृश्यते। दूरे जातः शब्दः, तत्रत्यैः तारतया गृह्यते, दूरस्थैस्तु मन्दतया गृह्यते। दूरे काष्ठच्छेदादौ शब्दग्रहणे कालभेदः प्रत्यक्षसिद्धः। श्रोत्रेन्द्रियवृत्तिः तद्देशं गता शब्दं यदि गृह्णीयात्, तदा शब्दस्वरूपे अयं भेदः न युज्येत। **धीभेदः**=तदनुगुणः तद्विषयकानुभवेऽपि भेदः। एवं **कालभेदः**=समीपस्थैः शब्दोत्पत्तिसमनन्तरमेव स गृह्यते। दूरस्थैस्तु स एव शब्दः विलम्बेन गृह्यते। **आदि**शब्देन वाय्वादिप्रयुक्तग्रहणभेदो ग्राह्यः। यस्यां दिशि वायुर्वाति, तद्दिशि स्थितैः शब्दः स्पष्टं गृह्यते, प्रतिदिशि स्थितैस्तु अस्पष्टं गृह्यते। अतः एतादृशकालभेदादिभिः **श्रोत्रायतस्य**=श्रोत्रप्रदेशं प्राप्तस्य **तस्य**=शब्दस्य **ग्रहम्**=ग्रहणम् **आहुः**। तर्हि दिग्ग्रहणं कथम्? न हि श्रोत्रदेशं प्राप्ते शब्दे दिक्संबन्धोऽस्तीत्यत्राह—**अनुमितिमिति**। **अस्मिन्**=द्वितीयपक्षे **दिगादेः अनुमितिमपि**=अनुमितिं च **आहुः**। **तस्य ग्रहम्, दिग्ग्रहणे अनुमितिरूपतां चाहुः**। **दिगादेः**=इत्यादिना आसन्नत्वदूरस्थत्वादीनां ग्रहणम्। 'दूरे शब्दः' 'समीपे शब्दः' इत्यादावपि अनुमितिरेव स्वरसेति भावः। 'वीणानादः' 'भेरीशब्दः' इत्यादौ हि अनुमानमवर्जनीयम्, वीणादीनां श्रोत्राग्राह्यत्वात्। एवमेव दिग्ग्रहणमपि अनुमानमेव, श्रोत्रेन्द्रियेण दिग्ग्रहणासंभवात्॥

ननु प्रथमपक्षे श्रोत्रेन्द्रियवृत्तेः शब्दोत्पत्तिदेशप्रसरणसंभवेन शब्दग्रहणसंभवेऽपि, द्वितीयपक्षे कथं शब्दस्य श्रोत्रदेशागमनसंभवः, शब्दस्य गुणत्वात्, गुणे क्रियाया अभावात्। न च शब्दो द्रव्यमेव किं न स्यादिति वाच्यम्, गन्धस्यापि प्रसरणदर्शनेन द्रव्यत्वप्रसङ्गात्। न च तत्रापीष्टापत्तिः, शब्दस्पर्शरूपरसगन्धानां पञ्चभूतगुणत्वेन द्रव्यत्वाभावात्। गुणे च क्रियाया असंभवात्। मा अस्तु गुणत्वं तेषाम्। अत एव द्रव्यगुणविभागोऽपि मास्त्विति चेत्, पूर्वमेवास्य वादस्य (श्लो.8) निरस्तत्वात्। अतः शब्दादीनां गुणत्वात्, प्रसरणासंभवात् कथमिदं युज्यते इति चेत्, शब्दस्य शब्दान्तरजनकत्वेन वीचीतरङ्गन्यायेन, जले तरङ्गात्तरङ्गोत्पत्तिवत्, शब्दतरङ्गस्य श्रोत्रप्राप्त्या ग्रहणात्। अत एव जले तरङ्गानां यथा क्रमशः न्यूनीभावः, तथैव शब्देऽपि क्रमशः क्षयः। अत एव समीपस्थेन तारतया श्रूयमाणः शब्दः दूरस्थेन मन्दतया गृह्यते। दूरात् काष्ठच्छेदादिकं पश्यन् जनः, यदा कुठारपतनं दूरतः पश्यति, तदैव तच्छब्दं न गृह्णाति, किञ्चिदिव विलम्बेनैव गृह्णाति; पार्श्वस्थस्तु तदैव गृह्णाति। एतेन ज्ञायते शब्द एव श्रोत्रदेशमागच्छतीति। न च श्रोत्रेन्द्रियस्य तद्देशगमनेनायं विलम्ब इति शंक्यम्, शब्दस्य तत्रैव तावत्कालमवस्थानासंभवात् शब्दस्य ग्रहणमेव न स्यात्। अतः द्वितीयपक्ष एवाचार्यसंमतः॥

ननु भोः! परिह्रियतामियमत्र समस्या। 'प्राच्यां शब्दः' 'दूरे शब्दः' इति प्राच्यादिदिशः, दूरादिदेशस्य परोक्षत्वादनुमितिर्दिगादेरस्तु। 'वीणानादः' 'भेरीशब्दः' इत्यादौ यदा वीणादिः परोक्षः, तदास्तु तदंशेऽपि शब्दवैलक्षण्येन वीणासंबन्धादीनामनुमानम्। वीणाम्, भेरीं वा पुरतः पश्यत एव जायमानः 'वीणानादः' 'भेरीशब्दः' इत्यनुभवः किं चाक्षुषः, उत श्रौत्रः? चक्षुरिन्द्रियं तु वीणां गृह्णीयात्, न तु नादम्। श्रोत्रेन्द्रियं तु शब्दं गृह्णीयात्, न वीणाम्, भेरीं वा। न चैतादृशस्थलविशेषे चक्षुरिन्द्रियं, श्रोत्रेन्द्रियं चोभयमपि स्वकार्यं करोतीति वक्तुं शक्यम्; चक्षुरिन्द्रियेण शब्दग्रहणस्य, श्रोत्रेन्द्रियेण वीणादिद्रव्यग्रहणस्य वा चक्षुश्रवोऽतिरिक्ते कुत्राप्यसंभवात्। इन्द्रियविषयव्यवस्थायाः पूर्वमेव (श्लो.8) स्थापितत्वाच्च। नैयायिकोक्तालौकिकसन्निकर्षस्य सिद्धान्तेऽनङ्गीकाराच्च। न चेन्द्रियद्वयेनैकं ज्ञानं जायताम्? का हानिः? इति वाच्यम्; अनुपदमेव 'चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमः' (श्लो.39) इति युगपज्ज्ञानद्वयोत्पत्तेर्निरासात्। न चेदं ज्ञानद्वयरूपमेवेति वाच्यम्, वीणायाः शब्दस्य च संबन्धाग्रहणप्रसङ्गात्। अतो 'वीणानादः' इत्यनुभवः कथं निर्वाह्यः? इति चेत्; किमर्थमेवं संभ्रमः? 'अलौकिकसन्निकर्ष'पदं श्रुतवतामयं संभ्रमः। अलौकिकपदमनैन्द्रियकपर्यायम्। ज्ञानमेव सन्निकर्षस्तत्रेत्यर्थः। **सर्वत्र शब्दं परित्यज्य प्रमेयम्, अनुभवं च पूर्वग्रहं विना परिशीलयतां दुष्परिहरं न किञ्चिदस्ति**। अन्ततः अग्रे व्याप्तिग्रहणप्रकारप्रतिपादनसमये 'तज्जात्याधारभावाद्युगपदखिलमप्यक्षिसंबन्धि तत्र' (बु.47) इत्युक्तः जातिमूलकः संबन्ध एव नैयायिकैः सामान्यलक्षणेत्युच्यते। अस्य विस्तरस्तत्प्रकरणे भविष्यति। अतो नैयायिकैरुक्तं सर्वं निरसनीयमिति न निर्बन्धः। प्रत्युत **'व्यवहारे न्यायनयः'** इत्येव वरम्। 'वीणानादः' इत्यत्रापि 'सुरभि चन्दनम्' इत्यादाविव चक्षुरिन्द्रियजन्यं वीणाज्ञानमेव, स्मृतिद्वारा तादृशविशिष्टज्ञाने वीणामुपस्थापयति। अत्र वीणाभानं ज्ञानलक्षणयैव। अथवा श्रोत्रेन्द्रियजन्यं विलक्षणनादज्ञानमेव विशिष्टज्ञाने चक्षुर्जन्ये वीणाविषयकनादमुपस्थापयति। आद्यं श्रौत्रं प्रत्यक्षम्; द्वितीयं तु चाक्षुषमिति विवेकः। 'सुरभि

[आकाशस्य प्रत्यक्षत्वम्]

42. **प्रत्यक्षं व्योम, नीलं नभ इति हि मतिश्चक्षुषैवास्मदादेः,**
**कूपोऽसौ, रन्ध्रमेतत्, खग इह पततीत्यादिधीश्चात्र मानम्।**
**आधारोऽत्रातपादिः यदि, भवति कथं तस्य चेहेति बोधः?**
**तस्यांशैश्चेत्त्र्यणौ तत् शिथिलगति, न च व्योमवाक् आतपादौ ॥ ४२ ॥**

चन्दनम्' इत्यत्र हि सौरभं घाणग्राह्यम्, चन्दनखण्डस्तु चक्षुर्ग्राह्यः। चक्षुरिन्द्रियजन्ये चन्दनज्ञाने, तत्पूर्वं घ्राणेन्द्रियजन्यं सौरभज्ञानमेव सौरभमुपस्थापयति। अथवा घ्राणेन्द्रियजन्ये सौरभज्ञाने, तत्पूर्वक्षणे चक्षुरिन्द्रियजन्यं चन्दनज्ञानं चन्दनमुपस्थापयति। आद्यं चाक्षुषम्, द्वितीयं घ्राणजम्। एवमेव द्वीन्द्रियजन्यमिव भासमानं सर्वमपि भिन्नेन्द्रियग्राह्यवस्तुद्वयविषयकज्ञानमुपपादनीयम्, युगपत् इन्द्रियद्वयव्यापारासंभवात्। अथवा अन्यतरस्यानुमानेन वोपस्थितिरिति ज्ञेयम्॥ ४१ ॥

एवं क्रमेणाहंकारिकाणां मध्ये सात्त्विकाहंकारिकाणामिन्द्रियाणां परीक्षानन्तरं तामसाहंकारिकस्य शब्दतन्मात्रस्य परीक्षायां प्रसक्तायामपि, तस्यातीन्द्रियत्वेन श्रुत्यैव सिद्धेः पूर्वमेव प्रतिपादिततत्वात् (श्लो.11) तत्राधिकविचाराभावात्, तदनन्तरप्राप्तमाकाशं परीचिक्षिषुः, प्रथमं तत्र प्रमाणमाह— **प्रत्यक्षमित्यादिना**। **व्योम**= आकाशम् **प्रत्यक्षम्**=प्रत्यक्षविषयः इति प्रतिज्ञा। तत्र हेतुः— **हि**=यस्मात् **नीलं नभः इति मतिः अस्मदादेः चक्षुषैव** सिद्धा, अतः व्योम प्रत्यक्षम् इत्यन्वयः। अत्यन्तदूरवर्तिन्याकाशे 'नीलं नभः' इति प्रतीतिः भ्रान्तिः स्यात्, समीपस्थे आकाशे तथा प्रतीतेरभावादित्यत आह— **कूप इत्यादि**। **'असौ कूपः'** इति अन्तरालदेशं निर्दिश्य वदन्ति। एवं **'एतत् रन्ध्रम्'** इति सूचीरन्ध्रादौ व्यपदिशन्ति। किञ्च दूरे **'खगः इह पतति'**=डयते इति प्रयुज्यते। अत्र सर्वत्र कूपरन्ध्रेहपदानामाकाशमेवार्थः। इदं सर्वं चाक्षुषमेव, चक्षुरन्वयव्यतिरेकानुविधानात्। अतः— **इत्यादिधीश्च अत्र**=आकाशस्य चाक्षुषप्रत्यक्षत्वे **मानम्**=प्रमाणम्। ननु 'नीलं नभः' इति प्रतीत्या नीलरूपसिद्धावपि, कूपादौ नीलरूपस्याभानात् कथं कूपादीनां चाक्षुषत्वम्, रूपशून्यत्वादिति चेत्, समनन्तरश्लोके विचार्यते इदम्। सूर्यातपादेरेव तथा निर्देशः, तदन्वयव्यतिरेकानुविधानस्यापि सत्त्वादित्यनूद्य दूषयति— **आधार इत्यादिना**। **अत्र**=उक्तप्रतीतिषु **आधारः**=इहेत्यादिना निर्दिश्यमानः पदार्थः **आतपादिः यदि**, तर्हि **तस्य च**=तस्याप्यातपस्य **'इह' इति बोधः कथं भवति**='इह सूर्यातपः' इत्यपि प्रतीतिर्दृश्यते। अत्र सूर्यातपस्याप्याधारतया निर्दिश्यमानः 'इह' इत्यत्रेदंपदार्थः कः? न हि स्वस्य स्वाधारत्वसंभवः, एकस्यैवाधाराधेयभावासंभवात्। शङ्कते— **तस्य**=आतपस्य **अंशैः**=अवयवैः **चेत्**=इहेति निर्देश इति यदि, समाधत्ते— **त्र्यणावित्यादि**। **तत्**=एवं कथनम् **त्र्यणौ शिथिलगति**=क्षीणप्रक्रियं भवति। 'इह तन्तुषु पटो दृश्यते' इत्यादिव्यवहारात्, अवयविनः अवयवा एव मुख्याधारभूताः। अवयविनः अतिरिक्तत्वे अनतिरिक्तत्वे वा व्यवहारः समानः। अतः अवयविनाम् अवयवा एव मुख्याधाराः। देशस्तु दिगुपाधितया आधारतया व्यपदिश्यते, कालवत्। न च सिद्धान्ते दिशोऽतिरिक्ततयानङ्गीकारात् कथमिदमुच्यत इति वाच्यम्; अतिरिक्ताया दिशोऽनङ्गीकारेऽपि, यस्य तादृशव्यवहारनियामकत्वम्,

[आकाशाप्रत्यक्षत्वनिरासः]

**43. रूपस्पर्शोज्झितत्वात् न भवति गगनं दर्शनस्पर्शनार्हं**
**घ्राणश्रोत्रे रसज्ञाऽप्यवगमयति न द्रव्यम्, अन्यत्त्वबाह्यम्।**

तस्य भूतलादिरूपोपाधिः भविष्यति। अधिकं तु तत्प्रकरणे वक्ष्यते। अतः सर्वाधारः काल इतिवत् दिगपि सर्वाधारा। भूतलादिदेशास्तु दिगुपाधिभूताः, कालस्य सूर्यपरिस्पन्दादिवत्। अतः 'इह आतपः' इत्यत्र आतपाधारतया आतपावयवा एव 'इह' इति निर्दिश्यन्त इति चेत्, आतपत्र्यणुकपर्यन्तमेवं वक्तुं शक्यम्। त्र्यणुकस्य तु आधारतया द्व्यणुको निर्देष्टव्यः। द्व्यणुके महत्त्वाभावेनाप्रत्यक्षत्वात् 'इह' इति निर्देशः न हि संभवति। अतः आतपः न 'इह' पदस्यार्थः। अभ्युपगम्येदमुक्तम्। वस्तुतस्तु—**न च आतपादौ व्योमवाक्**=आकाशब्दः युज्यते। न ह्यनयोः पदयोः पर्यायता कस्यापीष्टा। चक्षुरुन्मीलनसमनन्तरमेव पुरतः आकाशः दृश्यत एव सर्वस्यापि। कूपादिशब्दा अपि अन्तरालप्रदेशमेव वदन्ति। न च पृथिवीभागाभाव एव कूपपदार्थः, भावरूपतयैव सर्वैर्व्यवहारात्। आकाशस्याभावरूपता त्वनुपदं निरस्यते। अतः आकाशः प्रत्यक्षसिद्धः॥

**इदमत्र चिन्त्यम्**— 'इह कूपो दृश्यते' 'इहाकाशे खगो डयते' इत्यादिव्यवहारे 'इह' शब्दस्यार्थः कः? 'इह' इत्यस्य पुरोदेशोऽर्थः इति सर्वोऽपि जानाति। तर्हि पुरोदेशपदार्थः कः? सिद्धान्ते आकाशपदार्थस्य सावयवत्वात्, आकाशावयवा एव 'इह'शब्दस्यार्थो वक्तव्यः। अन्तिमः 'इह'शब्दार्थः आकाशत्र्यणुको वक्तव्यः। 'इह आकाशत्र्यणुकः' इति कथने 'इह'शब्दार्थः कः? अवयवधारायाः त्र्यणुके विश्रान्त्यङ्गीकारात्, त्र्यणुकस्यावयवाभावात् इहेति कस्य निर्देशः? अत एतादृशा आक्षेपास्सर्वत्र समाः। इदं सर्वम् आचार्यवर्याणां वैभवप्रदर्शनमात्रपरं शिष्यबुद्धिश्रद्धादिदार्ढ्यार्थमिति मन्तव्यम्। अतः 'इह' इति सूर्यालोकावच्छिन्नः पुरोभाग एव कथ्यत इति स्वरसम्। अधिकं 64 श्लोके द्रष्टव्यम्॥ ४२॥

आकाशस्य प्रत्यक्षत्वसंभवमाक्षिप्य समाधत्ते—**रूपेत्यादिना**। इन्द्रियाणि षट्। तेषु **गगनं रूपस्पर्शोज्झितत्वात्**=रूपेण स्पर्शेन च रहितत्वात् **दर्शनस्पर्शनार्हं न भवति**=चक्षुस्त्वगिन्द्रियग्रहणयोग्यं न भवति। इन्द्रियद्वयमेव द्रव्यग्रहणसमर्थम्। तत्र चाक्षुषप्रत्यक्षं प्रति रूपं कारणम्। स्पार्शनप्रत्यक्षं प्रति स्पर्शः कारणमिति सर्वानुभवसिद्धम्। गगने तु रूपमपि नास्ति; स्पर्शोऽपि नास्ति। ततश्च गगनं न चक्षुषा, नापि त्वचा ग्रहीतुं शक्यमिति, 'नीलं नभः' इति प्रतीतिरपि भ्रान्तिरेव स्यात्। इतरैरिन्द्रियैस्तद्ग्रहणं भवेदिति शङ्कामपनयति—**घ्राणेत्यादिना**। **घ्राणश्रोत्रे रसज्ञापि**=घ्राणेन्द्रियम्, श्रोत्रेन्द्रियम्, रसनेन्द्रियम् च **द्रव्यं न अवगमयति**=द्रव्यविषयप्रत्यक्षं न जनयति, तेषां गन्धशब्दरसात्मकगुणमात्रग्रहणसमर्थत्वात्। अस्तु तर्हि मनः गगनग्राहकम्, मनो हि सर्वग्रहणसमर्थम्, इत्यत्राह—**अन्यदिति**। **अन्यत्**=मनस्तु **अबाह्यम्**=बाह्यवस्तुग्रहणसमर्थं न। षट्सु इन्द्रियेषु, मनः आन्तरसुखदुःखादिग्रहण एव समर्थम्। बाह्यवस्तुग्रहणविषये मनः तत्तदिन्द्रियसहकारि भवति, न तु स्वातन्त्र्येण बाह्यवस्तुग्रहणसमर्थम्। तदेतद्वैलक्षण्यं 'तु'शब्दः सूचयति। इतरेषु पञ्चस्वपि घ्राणश्रोत्ररसनेन्द्रियाणि यथासंख्यं गन्धशब्दरसमात्रग्राहकाणि, न तु तदाश्रयद्रव्यग्राहकाणि।

**तस्मान्नाध्यक्षवेद्यं वियदिति यदि, न, प्रत्ययस्यापरोक्ष्यात्**
**पञ्चीकारेण नैल्यं पटमलिनिमवत् भाषितं वोपकुर्यात् ॥ ४३ ॥**

चक्षुरिन्द्रियम्, त्वगिन्द्रियं द्वयमेव रूपस्पर्शादिगुणग्राहकम्, तदाश्रयद्रव्यग्राहकं च। इदं द्वयमपि न गगनग्रहणसमर्थम्। रूपाभावात् चक्षुः न गगनं ग्रहीतुमलम्। स्पर्शाभावात् त्वगिन्द्रियमपि नालम्। इन्द्रियजन्यं ज्ञानमेव प्रत्यक्षमित्युच्यते। नैकमपीन्द्रियम् गगनग्रहणसमर्थम्। उक्तकारणात् **वियत्**=गगनम् **अध्यक्षवेद्यं न**=प्रत्यक्षग्राह्यं न भवति। एवं च 'प्रत्यक्षं व्योम' इति प्रतिज्ञा कथं साधीयसीति। निगमयति—**तस्मादित्यादि**। **तस्मात् वियत्**=आकाशम् **अध्यक्षवेद्यं न**=प्रत्यक्षविषयो न॥

**इति यदि**=इति चेत्, **न**=नेदं युक्तम्। कुत इत्यत्र हेतुः=**प्रत्ययस्य**=अनुभवस्य **आपरोक्ष्यात्**=अपरोक्षरूपत्वात्॥ **अयं भावः**—ज्ञानं द्विविधम्—स्मृतिः अनुभवश्चेति। अनुभवो द्विविधः—परोक्षः अपरोक्षश्च। परोक्षस्तु व्याप्तिज्ञानजन्यः अनुमितिरूपः, शब्दजन्यशाब्दबोधरूपश्च। प्रकृते चक्षुरुन्मीलनसमनन्तरमेव जायमानः पुरःप्रदेशानुभवः न व्याप्तिज्ञानजन्यः, न वा शब्दजन्यः, उभयोरप्यभावात्। विषये विप्रतिपत्तिस्तु न भवितुमर्हति। ननु अनुभवो यथा प्रत्यक्षः परोक्षश्चेति द्विविधः, तथा विधान्तरमप्यस्ति, प्रमा भ्रमश्चेति। अन्यथा रज्जुसर्पानुभवसत्यसर्पानुभवयोः वैलक्षण्यं न स्यात्, उभयोरपरोक्षत्वात्। रज्जुसर्पज्ञानं ह्यपरोक्षरूपमिति सर्वसंमतम्। अतः अपरोक्षत्वमात्रात् न वस्तुसिद्धिरिति चेत्, सत्यम्; तदपि विचारयामः। ज्ञानस्य भ्रमत्वं हि कारणदोषबाधकप्रत्ययाभ्यां ज्ञातव्यम्। 'नभो न नीलम्' इति बाधकप्रत्ययः न हि कस्यचिदस्ति। कूपरन्ध्रादिशब्दवाच्यान्तरालविषयकप्रतीतेः न हि अनन्तरकाले बाधकप्रत्ययो दृश्यते। नापि कश्चन कारणदोषो वा दृष्टचरः। अतोऽयं प्रत्ययः प्रमैव॥

ननु नायं प्रत्ययः चाक्षुषः, चाक्षुषप्रत्यक्षं प्रति रूपस्य कारणत्वात्, आकाशे च रूपाभावात्; तथा चानुमानम् 'कूपादिप्रत्ययः, न चाक्षुषः, रूपरहितवस्तुविषयत्वात्'; अथवा 'कूपादिः न चाक्षुषप्रत्यक्षविषयः, रूपरहितत्वात्' इति। न चेदमप्रयोजकम्, चाक्षुषप्रत्यक्षं प्रति रूपस्य कारणत्वात्। अन्यथा आत्मनोऽपि चाक्षुषत्वं स्यादिति चेत्; रूपजातिसंख्यादिप्रत्ययैरनैकान्तिकत्वात्। रूपरहितानामपि रूपादीनां प्रत्यक्षं चाक्षुषं सर्वसंमतम्। न च रूपरहितत्वेऽपि रूपम् अन्येषां चाक्षुषप्रत्यक्षहेतुः स्वयमचाक्षुषं कथं स्यात् इति चेत्; न, अन्येषां चाक्षुषप्रत्यक्षहेतुः चक्षुरिन्द्रियम् न हि प्रत्यक्षम्। लोके चक्षुश्शब्दवाच्यगोलकस्य पार्थिवत्वात्, तन्न चक्षुरिन्द्रियम्, किन्तु तदतिरिक्तमन्यदेव चक्षुरिन्द्रियम्। तत्तैजसमितीतरे, तच्चाहङ्कारिकमिति सिद्धान्तः। अत एव तदतीन्द्रियम्। एवञ्च चक्षुरिन्द्रियस्याप्रत्यक्षत्वेऽपि तत् घटादिप्रत्यक्षे कारणम्। एवं रूपमपि भवतु। एवं गोत्वादिविषयकं प्रत्यक्षं चाक्षुषम्। गोत्वं तु रूपरहितम्। एवमेव संख्यादिकमपि। किञ्चेदं सर्वं अद्रव्यविषयकम्। अतः द्रव्यविषयकत्वमपि प्रत्ययविशेषणमिष्टम्। कूपादिकं तु द्रव्यमेव। अतः द्रव्यविषयकचाक्षुषं प्रत्येव रूपं साक्षात्कारणम्। जातिगुणादीनां चाक्षुषद्रव्याश्रितत्वादेव चाक्षुषत्वमिति चेत्, न। चाक्षुषघटाश्रितस्य गुरुत्वस्य चाक्षुषत्वाभावात्। अभावस्य रूपरहितस्य चाक्षुषत्वात्; 'येनेन्द्रियेण यत् गृह्यते, तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते' इति किल भवतां नियमः। अतः यथानुभवमेव

[आकाशानुमाननिरासः]

**44. शब्दस्याधारभूतं कथमपि गगनं शक्यते नानुमातुं**
**स्वेच्छातः पारिशेष्यक्रम इह कथितोऽतिप्रसङ्गादिदुस्थः ।**

व्यवस्था वक्तव्या । अन्ततः—**पञ्चीकारेणेत्यादि**। एतत्सिद्धान्ते पञ्चीकरणप्रक्रियाया अङ्गीकारात्, आकाशेऽपि पृथिव्यंशस्य सत्त्वात्, तत्संबन्धात् गगनमपि प्रत्यक्षं भवतु । **भाषितं**=श्रीभाष्येऽभिहितं **पञ्चीकारेण**= पञ्चीकरणप्रक्रियया **नैल्यम् उपकुर्यात्**=आकाशप्रत्यक्षे सहकारि स्यात्कामम् । पार्थिवभागगतं रूपम् आकाशप्रत्यक्षहेतुर्भवतु । अन्यप्रत्यक्षं प्रति अन्यदीयं रूपं कथं हेतुः स्यादित्यत्र दृष्टान्तः—**पटमलिनवदिति**। श्वेतं वस्त्रं मलिनवस्तुसंयोगात् यदा कर्बुरवर्णं भवति, तदा तत्र पटस्थश्वेतरूपस्याग्रहणेऽपि, तत्संयुक्तमलिन-वस्तुगतकर्बुरवर्णग्रहणेनैव पटमपि गृह्णाति चक्षुः । तत्र पटचाक्षुषं प्रति स्वाश्रयसंयुक्तत्वसंबन्धेनैव रूपं कारणम् । एवमङ्गीकारे अनुभव एव कारणम् । अतः अनुभवानुरोधेन कारणान्वेषणं कर्तव्यम् । तस्मात् गगनस्य प्रत्यक्षत्वे सिद्धे कारणं यत्किञ्चित् कल्प्यताम् ॥

**वस्तुतस्तु**—पुरोवर्तिसमीपदेशे नैल्यादर्शनात् 'नीलं नभः' इति प्रतीतिः दूरत्वादिदोषादेव । पञ्चीकरणप्रक्रियया सर्वं सर्वत्र वर्तत इति 'शुक्तौ रजतावयवसद्भावात्' इति श्रीभाष्यमपि गुरुमतानुवादः, संभवस्थलाभिप्रायकं वा, रजतावयवपदेन रजते दृश्यमानफालफल्यहेतुभूतधातुविशेषाभिधानाद्वा वा योजनीयम्। अन्यथा देहे आत्मभ्रमो न स्यात्, देहे आत्मावयवाभावादित्यादि तत्रत्यव्याख्यादिषु स्पष्टम् । पञ्चीकरणमपि तत्त्वक्षेत्राभिप्रायकम्, न तु स्थूलभौतिकाभिप्रायकम्, वहुविधविज्ञानविरोधापत्तेः । अतः इदमपि आचार्याणां तर्ककौशलप्रदर्शनमात्रम् । किमाश्चर्यमितोऽपि, यत् अन्यानि प्रकाशयन्नालोकः तेजो द्रव्यमपि न स्वतः प्रत्यक्षः । कुड्यादिप्रतिघात एव स चाक्षुष इति नव्यविज्ञानिनां प्रयोगपर्यन्तो निर्णयः । एतादृशभौतिकविषये नवीनं विज्ञानं बहुपराक्रान्तं प्रत्यक्षसिद्धम् । काणादैः कृतमन्वेषणमप्यारंभकालिकम् । वेदान्तशास्त्रं तु तत्त्व-विषयकम्, न स्थूलजगद्विषयकम् । अत एतादृशविषयेष्विदानीमौदासीन्यमेव वरमिति मन्तव्यम् ॥ ४३ ॥

एवं स्वपक्षमभिधाय, परोक्तम् आकाशानुमानप्रकारं निराकरोति—**शब्दस्येत्यादिना** । 'शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः, पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्' इति परिशेषानुमानेन पृथिव्याद्यष्टद्रव्यातिरिक्तस्य नवमद्रव्यस्याकाशस्य सिद्धिरिति वैशेषिकाः । 'शब्दः गुणः द्रव्याश्रितत्वात्' इत्यनुमानेनोक्तानुमानहेतौ विशेष्यासिद्धिनिरासः । एवं द्रव्याश्रितत्वेन गुणत्वे सिद्धे, 'शब्दः न पृथिव्यादि-चतुष्टयगुणः, अपाकजत्वे सति अकारणगुणपूर्वकविशेषगुणत्वात्, सुखादिवत्' इत्यनुमानेन, पृथिव्यप्तेजो-वायूनां शब्दाश्रयत्वाभावः सिद्ध्यति । पृथिव्यादिचतुष्टये हि विद्यमाना विशेषगुणाः रूपादयः कारणगुण-पूर्वका एव दृष्टाः । कार्यगतगुणं प्रति समवायिकारणगतगुणः असमवायिकारणं भवति । यथा पटरूपं प्रति तन्तुरूपम् । शब्दस्तु न तथा दृश्यते; कार्य एव हि शब्दः साक्षादुत्पन्नो दृश्यते । यदि शब्दः पृथिव्यादौ कारणगुणपूर्वकः स्यात्, तर्हि भेर्यादौ जायमानः शब्दः भेर्यवयवेष्वपि जायेत । न हि तथा दृश्यते । अतः शब्दः न कारणगुणपूर्वकः । अत एव न पृथिव्यादिचतुष्टयविशेषगुणः । पृथिव्यां पाकवशात् यदा

**निष्क्रान्त्यादेर्न तद्धीः, सति नभसि यतो नास्ति कुड्यादिकेऽसौ**
**रोधस्त्वावारकैश्चेत्, तदभवनवशात् निष्क्रमादिश्च सिध्येत् ॥ ४४ ॥**

रूपादिकमुत्पद्यते, तदा रूपादिकं पाकवशादवयविन्येव साक्षादुत्पद्यते इति **पिठरपाकवादिनो** नैयायिकाः। अतः रूपादौ व्यभिचार इति अपाकजत्वे सतीति विशेषणम्। पटगतरूपस्यापाकजत्वात्तत्र व्यभिचारवारणाय अकारणगुणपूर्वकत्वविशेषणम्। एवं 'शब्दः न दिक्कालमनसां गुणः, विशेषगुणत्वात्'। दिक्कालादिषु न कोऽपि विशेषगुणो वर्तते। अतः शब्दस्य दिगादयः नाश्रया भवन्ति। एवम् 'शब्दः नात्मगुणः, बहिरिन्द्रियग्राह्यत्वात्, रूपवत्'। आत्मगुणाः सुखादयो हि मनोग्राह्याः। शब्दस्तु श्रोत्रग्राह्यः। अतश्चात्मगुणत्वाभावसिद्धिः। एवञ्च पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रित इति नवमद्रव्यस्य आकाशस्य सिद्धिः ॥

ननु शब्दः द्रव्यमेव भवतु, मास्तु गुणत्वं तस्येति चेत्, न; शब्दो न द्रव्यम्, चक्षुस्त्वगन्यतराग्राह्यत्वात्। चक्षुरिन्द्रियम्, त्वगिन्द्रियमिति द्वयमेव हि द्रव्यग्राहकं दृष्टं लोके। शब्दस्तु न ताभ्यां गृह्यते। अतः शब्दो न द्रव्यम्, किन्तु गुण एव। एवञ्च आकाशस्यातिरिक्तस्य सिद्धिरिति वदन्ति। तदेतदुच्यते—**शब्दस्य आधारभूतं गगनं अनुमातुं न शक्यते**। किन्तु पूर्वश्लोकोक्तक्रमेण प्रत्यक्षेणैव सिद्ध्यति। यः **पारिशेष्यक्रमः**=परिशेषात् सिद्धिक्रमः **स्वेच्छातः इह**=एतद्विषये **कथितः**=उक्तः, **सः अतिप्रसङ्गादिदुःस्थः**=एवमेकैकगुणस्याप्याश्रयतयाऽनेकद्रव्यसिद्धिप्रसङ्गः। तत्तद्गुणेष्वपि विचित्रावान्तरगुणानामपि दर्शनात्, मृदुत्वकठिनत्वादिवैलक्षण्यदर्शनाच्च तत्तदाश्रयाणामप्यतिरिक्तद्रव्यत्वं स्यात्। अतिप्रसङ्गादीत्यत्रादिपदेन विपरीतप्रसङ्गस्य ग्रहणम्। शब्दो हि नाकाशमात्रगुणः, किन्तु पञ्चभूतानामपि गुणः। एकैकगुणवृद्ध्या सृष्टिः, विपरीतेन च लयः इत्यादिकं हि पूर्वमेव (श्लो.12) निरूपितम्। अतः शब्दाश्रयतया आकाशानुमानं न साधीयः ॥

एवं रीत्यन्तरमपि दूषयति—**निष्क्रान्त्यादेरित्यादिना**। आदिना प्रवेशपरिग्रहः। निष्क्रमणं प्रवेशनमित्याकाशलिङ्गम् (वै.सू.2-1-69) इति सूत्रम्। द्वारात् निष्क्रमणप्रवेशनादिकमपि आकाशसाधकं लिङ्गम् इति ते वदन्ति। तदपि न, कुड्यादेरन्तरपि आकाशो वर्तते। कुड्यस्य पाते आकाशदर्शनात् इति वन्दन्ति। तर्हि कुतस्तत्र निष्क्रमणादिकं न इति चेत्, कुड्यस्य प्रतिबन्धकत्वादिति वदन्ति। एवम्, **न** वक्तुं शक्यते। कुत इत्यत्र **कुड्यादिके**=कुड्याद्यन्तरपि **नभसि**=आकाशे **सति असौ**=निष्क्रान्त्यादिः **यतः नास्ति**। अतः आकाशमात्रं न निष्क्रान्त्यादिकारणम्। **रोधः**=प्रतिबन्धः **आवारकैश्चेत्?**=आवरणहेतुभिर्यदि, कुड्यादिभिः तर्हि **तदभवनवशात्**=कुड्याभावमात्रेणापि **निष्क्रमादिश्च सिद्ध्येत्**=अन्वयव्यतिरेकवशात्, प्रतिबन्धकाभावस्य कारणत्वनियमादेव निष्क्रमणादिकार्यसिद्ध्याऽऽकाशोऽन्यथासिद्धः। ततश्च शब्दाश्रयतया, निष्क्रमणादिकारणतया वा नाकाशसिद्धिः, किन्तु श्रुत्यैव ॥ ४४ ॥

शरीरोपादानभूतानां पञ्चभूतानामसाधारणकार्यगणनप्रकरणे, 'पृथिव्याः धारणम्, जलस्य आप्यायनम्, तेजसः पाचनम्, वायोः शोषणम्, आकाशस्य अवकाशदानम्' इत्यादि तत्तत्प्रकरणेषु श्रूयते। भुक्तस्यान्नस्य

[आकाशानुमानान्तरनिरासः]

45. **यत्त्वाकाशोऽवकाशप्रद इति कथितं शास्त्रतः, तत्र याऽसौ**
**अन्योन्यस्पर्शभाजां विहतिरिह, न सा प्राच्यतत्त्वेष्विव स्यात्।**
**इत्यैदम्पर्यमूह्यं, न यदि, कथमिवान्येषु लभ्योऽवकाशः**
**सिद्धादेः स्वप्रभावाज्जल इव कथितो युज्यते मज्जनादिः ॥ ४५ ॥**

गलद्वाराऽन्तर्गमनाद्यर्थमाकाशस्यावश्यकत्वात् अवकाशदानमाकाशस्य कार्यमित्यर्थः। निष्क्रमणम्, प्रवेशनमपि अवकाशदानस्य रूपान्तरम्। अतः कार्येण कारणानुमानस्य सर्वसंमतत्वात्, निष्क्रमणादिकार्येण तद्धेतोराकाशस्यानुमाने का हानिः? इत्याशङ्कामनूद्य परिहरति—**यत्त्वित्यादिना**। **यत्तु आकाशः अवकाशप्रदः इति शास्त्रतः कथितम्**, अत्र 'शरीरेष्ववकाशं च नभः कुर्यात्तथा परः' इति शास्त्रमानन्ददायिन्यामुदाहृतम्। **तत्र**=तद्विषये **इति**=एवंप्रकारं **ऐदम्पर्यम्**=तात्पर्यम् **ऊह्यम्**=ऊहनीयम्। एवंप्रकारमिति कोऽयं प्रकारः? इत्यत्राह—**स्पर्शभाजां या असौ अन्योन्यं विहतिः, सा प्राच्यतत्त्वेष्विव इह न स्यात् इति ऐदंपर्यमूह्यमित्यन्वयः**। 'स्पर्शवतां सप्रतिघत्वम्'=स्पर्शवन्तः घटपटादयः एककालैकदेशावच्छेदेन न मिलन्ति। द्वौ घटौ, घटपटौ वा एकस्मिन् देशे एकस्मिन् काले स्थातुं न प्रभवतः। तथा मेलने परस्परम् आघातः स्यादिति नियमः। **सेयं** व्याहतिः आकाशापेक्षया **प्राच्यानि**=एतदनन्तरपूर्वाणि यानि **तत्त्वानि** स्पर्शवन्ति वाय्वग्निजलपृथिवीरूपाणि, तेष्विव आकाशे **न स्यात्**=न भवति, आकाशे स्पर्शाभावात् इति **बोधनाय**=आकाशस्य सर्वत्रावकाशो वर्तत इति ज्ञापनार्थम् 'आकाशोऽवकाशप्रदः' इत्युच्यते, न तु तेनाकाशानुमानमिष्टम्। **न यदि**=एवमनङ्गीकारे **अन्येषु**=आकाशात् प्राक्तनेषु महदहङ्कारादिषु **अवकाशः कथमिव लभ्यः?** तेषामपि स्पर्शशून्यत्वात् परस्परं सप्रतिघत्वाभावात् अवकाशप्रदत्वं वर्तते। अतः आकाश एक एव अवकाशप्रद इति न युक्तम्॥

ननु सिद्धपुरुषाः जले भूमावपि निमज्जन्तीति वदन्ति। भूमेः सिद्धपुरुषदेहस्य च स्पर्शवत्त्वात् सप्रतिघत्वमवर्जनीयमिति, उक्तशास्त्रं कथं प्रमाणम्? कथं वा भूमौ निमज्जनमिति चेत्, तत्राह—**सिद्धादेरित्यादि**। **आदिना** तत्तुल्याः देवाः गृह्यन्ते। **तेषां स्वप्रभावात्**=सिद्धानां योगाभ्यासादिजन्यात् प्रभावात्, देवानां धर्मविशेषवशात् **जले इव** =जले यथा सर्वेषां मज्जनम्, तथा भूमावपि **मज्जनादिः**=निमज्जनम्, उन्मज्जनं च **कथितः**=योगशास्त्रेषु अभिहितः युज्यते। स न सहजः। अतः नोक्तनियमविरोधः। 'सर्वे नियमाः सापवादाः' इत्यस्त्याभाणकः। वह्नेर्दाहकत्वं स्वभावस्सर्वविदितः। मणिमन्त्रौषधादिप्रयोगे दाहो न भवति। अत एव नियमानां सर्वेषामपि आदौ 'असति विरोधे' इति योजयन्ति। यथा 'सर्वं वाक्यं सावधारणम्' इति नियमस्य 'असति विरोधे सर्वं वाक्यं सावधारणम्' इत्येवार्थः। अतः प्रकृते आकाशस्य नानुमानात्सिद्धिः। अस्माभिः जले मज्जनवेलायां जलस्य द्रवत्वेन जलावयवानां पार्श्वतो गमनात् सप्रतिघत्वनियमस्य यथापवादः, तथा पृथिव्यादौ योगजप्रभावात् नियमस्यापवाद इति भावः। तथा च निष्क्रमणादिलिङ्गैरपि नाकाशानुमानसंभवः, किन्तु श्रुत्यैवाकाशसिद्धिः॥ ४५ ॥

[आकाशस्य भावरूपत्वम्]

46. **सद्रूपेणैव भानात् न भवति वरणाभावमात्रं विहायः**
**संसर्गाभावमात्रं न च भवति, यतो नास्ति संसर्गिबोधः ।**
**अत्यन्ताभावनाशावजननिरपि वा सत्सु तेष्वेव न स्युः**
**तादात्म्याभावसिद्धिः कथमपि न भवेत् तंतमर्थं विहाय ॥ ४६ ॥**

ननु आकाशाख्यपदार्थस्यैवाभावात्, 'सति कुड्ये चित्रकर्म' इति न्यायेन सः प्रत्यक्षो न वा? इति विचार एव हास्यास्पद इति वदतां बौद्धानां मतं निराकरोति— **सद्रूपेणेत्यादि**। पृथिव्यप्तेजोवायव इति चत्वार्येव भूतानि इति वैभाषिकबौद्धाः । आकाश इति पदस्य आवरणाभावः अर्थः । कुड्यादीनि आवरणरूपाणि सर्वानुभवसिद्धानि । कुड्यादेरपसरणे तत्र कुड्याद्यावरणनिवृत्त्या निष्क्रमणप्रवेशादिकं भवति । अतः आकाशः अभावरूपः, न तु भावपदार्थः । अस्त्वभावोऽपि सप्तमः भावपदार्थ इति चेत्, तदपि न, केनाप्यनङ्गीकारात् । सिद्धान्तेऽपि हि अभावः नातिरिक्तः पदार्थः । 'भूतले घटो नास्ति' इत्यत्र न हि कश्चित्पदार्थो दृश्यते । तर्ह्यस्तु घटाभावः भूतलमेवेति पक्षः, तावतापि सिद्ध एव कश्चन पदार्थः इति चेत्, कः सिद्धस्तत्र? भूतलं तु पूर्वमेव सिद्धम् । तच्च न घटाभावमात्रम्, किन्तु तत्रावर्तमानपटाभावादिसर्वाभावरूपम् वक्तव्यमिति कथं घटाभावः भूतलस्वरूप उच्यते । अतः अभावः निरुपाख्यः तुच्छ एव शशशृङ्गादिवदिति बौद्धाः । तदेतन्निराकरोति । अभावः किल चतुर्विधः । अयं किम् आवरणसामान्याभावरूपः, उतावरणविशेषाभावरूपः? न सामान्याभावरूपः । तत्कुतः **विहायः**=आकाशः **वरणाभावमात्रम्**=आवरणसामान्याभावमात्ररूपो **न भवति**। तत्र हेतुः— **सद्रूपेणैव भानात् इति**। 'अस्ति' 'नास्ति' इति प्रतीती किल परस्परमत्यन्तविलक्षणे भावाभावविषयिण्यौ दृष्टे । 'अश्वो न' इति अश्वतादात्म्यनिषेधमात्ररूपो गौः कदापि न हि भवति; किन्तु 'गौः अश्वो न' इत्युल्लेखे सति 'गौः' इति स्वस्वरूपेण भावरूपतयापि प्रतीयते । अन्यथा 'अश्वः गौर्न' इति प्रतीतेरपि सत्त्वादन्योन्याश्रयादिः स्यात् । 'सद्रूपेणैव' इत्येवकारेण तुच्छत्वव्यवच्छेदः। शशशृङ्गादिकं हि कदापि कस्यापि 'अस्ति' इति प्रतीतिविषयो न दृष्टः । आकाशस्तु कूपरन्ध्रद्वारादिप्रतीतिविषयो दृष्टः । न हि द्वारपदार्थः अन्यः कश्चिद्भवितुमर्हति । अतः आकाशः सद्रूपः कश्चित्पदार्थ एव ॥

एवं सामान्यरूपेणाकाशस्याभावरूपतां निरस्य, विशिष्यापि तस्याभावरूपता न संभवतीति प्रदर्शयन्, प्रथमम् 'संसर्गाभावः तादात्म्याभावश्चेति अभावो द्विविधः । संसर्गाभावश्च अत्यन्ताभावः, प्रध्वंसाभावः, प्रागभावश्चेति त्रिविधः' इत्युक्तप्रक्रियया प्रथमं संसर्गाभावसामान्यरूपताम्, ततः विशेषरूपतां च क्रमशो निरस्यति— **संसर्गेत्यादिना**। 'भूतले घटो नास्ति' इत्यादौ हि भूतलसंसर्गिणः=भूतलसंबन्धार्हस्य घटस्य निषेधरूपः दृष्टः । प्रतियोगिन एवाप्रसिद्धौ न हि निषेधस्य प्रसक्तिः । अतः **यतः संसर्गिणः**=प्रतियोगिनः **बोधः नास्ति**, किन्तु केवलस्यैव आकाशस्य स्वतन्त्रतया प्रतीतिः, अतः संसर्गाभावमात्रं **न च भवति**=नैव भवति । विशेषरूपेणापि संसर्गाभावरूपतां निराकरोति— **अत्यन्तेत्यादिना**। **अत्यन्ताभावनाशौ**=अत्यन्ता-

भावरूपो वा, प्रध्वंसाभावरूपो वा, **अपि वा**=अथवा **अजननिः**=प्रागभावरूपो वा आकाशो न भवितुमर्हति। कुतः? **तेषु**=आवरणरूपेषु प्रतियोगिषु **सत्स्वेव न स्युः**=अत्यन्ताभावः निरुपाधिकः कुत्रापि वक्तुं न शक्यः; देशकालप्रतियोगिविशेषनिर्देशमन्तरा न ह्यत्यन्ताभावप्रतीतिर्भवेत्। 'अत्रेदानीं घटो नास्ति' इत्येव खल्वनुभवः। 'इहेदानीं आवरणं नास्ति' इति खल्वावरणाभावप्रतीतिर्वक्तव्या। तत्र 'इह' इति कस्य निर्देशः? आकाशस्यैव स निर्देशः वक्तव्यः। सिद्धस्तर्ह्यावरणाभावातिरिक्तः 'इह'शब्दार्थः आकाशः। **एवं प्रध्वंसाभावः**, प्रागभावश्च न सामान्यधर्मावच्छिन्नप्रतियोगिताकौ। प्रध्वंसः खलु यस्य कस्यचिदेव घटादेः। घटसामान्यध्वंसस्तु प्रलयकाल एव। प्रतियोगिनि घटविशेषे अन्यत्र सत्यपि, अन्यत्र घटव्यक्त्यन्तरध्वंसः व्यवहारार्ह एव। एवमेव प्रागभावोऽपि। 'भविष्यति' इति प्रतीतिः किल न घटसामान्यविषयिणी; सर्वेषां घटानां युगपदुत्पत्तेरसंभवात्। अतो भविष्यतीति घटविशेषविषयिणी। नीलघटे सत्यपि, 'पीतघटो नष्टः' 'रक्तघटो भविष्यति' इति व्यवहारस्य सार्वजनिकत्वात्। अतस्तत्र आवरणान्तराभावस्य व्यवहारेऽपि आवरणविशेषस्यापि सत्त्वेन नाकाशप्रतीतेः संभवः। अतः आवरणप्रध्वंसाभावरूपो वा, आवरणप्रागभावरूपो वा आकाशः न भवितुमर्हति। प्रागभावस्योत्पत्त्यभावात् तस्य 'अजननि'पदेन निर्देशः॥

एवमावरणान्योन्याभावरूपोऽपि नाकाशः। कुत इति चेत्—**तं तं अर्थं विहाय**=प्रतियोगिनम्, अनुयोगिनं चार्थं विहाय, **तादात्म्याभावस्य**=अन्योन्याभावस्य **सिद्धिः कथमिव भवेत्?**, न कथञ्चिदपि भवेत्। 'अयमयं न' इति खलु अन्योन्याभावः। 'घटः पटो न' इति हि घटस्य पटात्मत्वाभावः कथ्यते। एकस्मिन् आवरणे सत्यपि, आवरणान्तरभेदस्य प्रतिव्यक्त्यावश्यकत्वात्, आवरणे सत्यपि आवरणविशेषभेदस्य तस्मिन् सत्त्वात् आकाशप्रतीतिर्वक्तव्या। नन्वावरणविशेषभेदस्यावरणविशेषान्तरे सत्त्वेऽपि अन्योन्याभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिकत्वमावश्यकम्। अन्यथा 'घटो न घटः' इत्यपि प्रतीत्यापत्तिः। अतः आवरणत्वावच्छिन्नभेद एवावरणतादात्म्याभावः। अतो नोक्तापत्तिरिति चेत्, अस्तु तत्। परं तु अनुयोगी कः। 'आकाशः आवरणं न' इति खलु प्रतीतिर्वक्तव्या। तथा च अनुयोगितया सिद्ध एवाकाशः। न चाकाशपदं त्यक्त्वा 'इदमावरणं न' इत्येव प्रतीतिरस्त्विति वाच्यम्, तदापीदंपदस्यार्थतया कस्यचित्सिद्धतया नेष्टसिद्धिः। किञ्चाकाशपदावरणाभावपदयोः पर्यायत्वात् 'घटः कलशः' इतिवत् स्यात्। ननु 'घटः घटत्ववान्' इति व्यवहारः कथं प्रामाणिकः? तत्र घटपदस्यापि घटत्वाश्रयबोधकत्वात् पर्यायत्वापत्तिः। न च तत्र घटपदस्य घटत्वाश्रयो नार्थः, किन्तु घटपदबोध्यः कश्चिदर्थः। स च घटव्यक्तिमात्रमपि। अतो न तयोः पर्यायत्वमिति चेत्, एवं सत्यपि प्रकृते आकाशव्यक्तेस्सिद्ध्या नाकाशोऽभावरूपो भवेत्। अतोऽनुयोगितयाऽऽकाशसिद्धिर्निष्प्रत्यूहैव। अतः अन्योन्याभावात्मकत्वाङ्गीकारमात्रेण नाकाशप्रतीतिर्निर्वोढुं शक्या॥

तदेवम् आकाशस्य आवरणाभावरूपत्वासंभवः, अभावस्यातिरिक्ततामङ्गीकृत्य प्रत्यपादि। वस्तुतस्तु सिद्धान्ते, अभावस्य भावान्तररूपताङ्गीकारात् आवरणाभावस्यापि भावान्तररूपत्वमेवावश्यकम्। तच्च भावान्तरम् आकाश एव भवितुमर्हति, नान्यदिति नाकाशस्य **तुच्छत्वनिरुपाख्यत्वसिद्धिः**। अत्र वक्तव्यमग्रेऽद्रव्यसरे (श्लो.129 इत्यादौ) भविष्यति॥ ४६॥

[आकाशस्यानित्यत्वम्]

47. **नित्यत्वाद्यम्बरादेर्यदि निरवयवद्रव्यताद्यैः प्रसाध्यम्,**
**कः स्यात् बाधो विपक्षे, कथमिव निगमे बाधकेऽत्रानुमा स्यात्।**
**बाधः सामान्यदृष्ट्या श्रुतिसमधिगते नैव कुत्रापि शक्यः**
**तेनामूर्तत्वलिङ्गान्न सृजति विमतो मूर्तमित्याद्यपास्तम्॥ ४७॥**

एवमाकाशस्य तुच्छत्वं निराकृत्य, आकाशे विद्यमानं विवादान्तरमप्याक्षिप्य समाधत्ते—**नित्यत्वादीत्यादिना। अम्बरादेः**=आकाशादेः, **निरवयवद्रव्यताद्यैः**=निरवयवद्रव्यत्वादिहेतुभिः, **नित्यत्वादि**= नित्यत्वादिकं **यदि प्रसाध्यम्** इष्टम् इति पूर्वपक्षसंग्रहः। नित्यत्वादीत्यत्रादिना विभुत्वग्रहणम्। 'आकाशो नित्यः, निरवयवद्रव्यत्वात्;' 'आकाशः विभुः, निरवयवद्रव्यत्वात्' इत्यनुमानम्। अम्बरादेरित्यादिना मनसः ग्रहणम्, सिद्धान्ते मनसोऽपि जन्यत्वात्। द्रव्यताद्यैः इत्यत्राद्यपदेनामूर्तत्वादिग्रहणम्। यथायोग्यं पक्षसाध्यहेतवो योजनीयाः॥

निराकरोति—**कः स्यादित्यादिना। विपक्षे**=विपरीतपक्षे=हेतोरप्रयोजकशङ्कायाम् **बाधः कः स्यात्**=वैपरीत्ये आपादिते बाधकतर्कः कः? 'हेतुरस्तु साध्यं मा स्तु' इत्यप्रयोजकशङ्कायां कृतायां तद्वारकः, 'यदि हेतुः न स्यात्, तर्हि साध्यमपि न स्यात्' इति अनुकूलस्तर्कः प्रदर्शनीयः। यदि न शक्यते, तदा इदमनुमानमप्रमाणं स्यात्। प्रकृते,'निरवयवद्रव्यत्वमस्तु नाम, नित्यत्वं मास्तु', अथवा 'विभुत्वं मास्तु' इति आपादनं विवक्षितम्। एवमापादिते, 'यदि नित्यत्वं न स्यात्, तर्हि निरवयवद्रव्यत्वमपि न स्यात्' इत्यनुकूलस्तर्कः वक्तव्यः। अत्रेष्टापत्तौ तादृशतर्कस्याभावात् उक्तानुमानमप्रयोजकम्। लोके हि सावयवं घटादि अनित्यम्, अविभु च दृष्टम्, तेन निरवयवं नित्यं स्यात्, नो चेत् निरवयवं न स्यात् इत्यस्त्यनुकूलस्तर्कः इत्यत्राह—**कथमिवेत्यादि । निगमे**='आकाशः संभूतः'(तै.आ.1) इत्याकाशस्योत्पत्तिप्रतिपादके वेदे **बाधके**=उक्तानुमानस्य बाधके सति **अनुमा**=अनुमानं **कथमिव स्यात्**=प्रतिष्ठितं भवेत्। 'नरशिरः कपालं शुचि, प्राण्यङ्गत्वात्, शङ्खवत्' इत्यनुमानम्, 'स्पृष्ट्वा नरशिरोऽस्थ्यादि सवासा जलमाविशेत्' इत्यादि धर्मशास्त्रविरोधात् अप्रमाणं यथा, तथेदमपि। घटादिप्रतिदृष्टान्तः प्रदर्शितः किलेत्यत्राह—**बाध इत्यादि। श्रुतिसमधिगते**=वेदप्रतिपादिते विषये, **सामान्यदृष्ट्या**=लोकदृष्टसामान्याकारमादाय **बाधः**= श्रुत्यर्थबाधः **कुत्रापि** विषये नैव **शक्यः**=न वक्तुं शक्यः; श्रुतेः इतरसर्वप्रमाणापेक्षया बलवत्त्वात्। अतः श्रुत्या आकाशस्यानित्यत्वे सिद्धे तद्विरुद्धतयोक्तं अनुमानमप्रमाणम्। एवमेवान्यदपीति प्रदर्शयति—**तेनेत्यादि । तेन**=श्रुतिविरोधेनैव **अमूर्तत्वलिङ्गात्**=अमूर्तत्वहेतुना **विमतं**=आकाशादि, **मूर्तम्**=वाय्वादि **न सृजति**=नोत्पादयति **इत्यादि**=इत्याद्यनुमानमपि **अपास्तम्**=निरस्तं द्रष्टव्यम्। 'आकाशः न वाय्वाद्युपादानम्, अमूर्तत्वात्, मनोवत्' इत्यनुमानप्रयोगः। वायुस्तु मूर्तद्रव्यम्। आकाशं त्वमूर्तम्। अमूर्तात् मूर्तं कथमुत्पद्येतेत्याद्याक्षेपोऽपि 'आकाशाद्वायुः' इति वायोराकाशादुत्पत्तिप्रतिपादकश्रुत्या बाधितत्वादप्रमाणमित्यर्थः॥ ४७॥

[अतिरिक्तदिक्तत्त्वनिरासः]

**48. प्राक्प्रत्यक्त्वादिभेदं भजतु वियदिदं भानुयोगादिभेदात्**
**अस्यैवोपाधिभेदादधिकदिश इव स्तां परत्वापरत्वे ।**
**व्योमोत्तीर्णेऽपि देशे प्रभवतु तदुपाध्यन्वितैस्तत्तदर्थैः**
**दूरत्वादिव्यवस्था स्वयमुत विभुना ब्रह्मणा किं परैर्नः ॥ ४८ ॥**

सृष्टिप्रकरणे दिशः कुत्राप्यप्रतिपादनात् अतिरिक्ता दिक् नाङ्गीक्रियते । एवं सति प्राच्यादि-व्यवहारः कथम्? इत्याशङ्कानिराकरणेन प्रसङ्गात् दिशं निराकरोति—**प्रागित्यादिना** । **इदं वियत्**= संप्रतिपन्नम् आकाशतत्त्वमेव **भानुयोगादिभेदात्**=सूर्यसंयोगादिभेदात् **प्राक्प्रत्यक्त्वादिभेदम्**= प्राचीत्वप्रतीचीत्वादिभेदं **भजतु**=प्राप्नोतु । आकाशस्तु प्रत्यक्षसिद्धः स्थापितः । तत्र सूर्यसंयोगोऽपि प्रत्यक्षसिद्धः । अतश्च 'सूर्योदयसंबद्धः आकाश एव प्राची दिक्, सूर्यास्तमयसंबद्धः आकाश एव प्रतीची दिक्' इति निरूपयितुं शक्यत्वात् अतीन्द्रिया अतिरिक्ता दिक् किमर्थमङ्गीकार्या । तथाङ्गीकारेऽपि तस्या एकत्वात् प्रागादिभेदः उपाधिभेदादेव वक्तव्यः । एवं सति प्रत्यक्षसिद्धेनैव व्यवहारनिर्वाहे अप्रत्यक्षा अतिरिक्ता दिक् गौरवग्रस्ता नाङ्गीक्रियताम् । एवं दैशिकपरत्वापरत्वव्यवहारोऽपि अतिरिक्तदिक्साधको न भवतीति वक्ति—**अस्येति** । **अस्यैव**=आकाशस्यैव, **अधिकदिश इव**=अतिरिक्ताया दिशो यथा **उपाधिभेदात्**=प्रदेशसंयोगरूपोपाधिभेदात् **परत्वापरत्वे**=दिक्कृते दूरत्वसमीपत्वरूपे परत्वापरत्वे **स्ताम्**= भवताम्, असधातोः लोटि प्रथमपुरुषद्विवचनरूपम् । 'दूरे वर्तते' 'समीपे वर्तत' इत्यादिव्यवहारस्सर्व-संमतः । अस्माकं वस्तुनश्च मध्ये प्रदेशाधिक्ये दूरत्वम्, प्रदेशन्यूनत्वे समीपत्वम् इति वक्तव्यम् । एतादृशोपाधिभूतप्रदेशसंयोगाधारतया दिक् अङ्गीकार्या इति वैशेषिका वदन्ति । अत्रापि तादृशोपाधि-संयोगस्याधारः आकाश एव परत्वापरत्वव्यवहारनियामको भवतु; अतिरिक्ताया दिशोऽङ्गीकारे गौरवं दुर्वारम् । अतो दिक् नातिरिक्ता ॥

ननु भवत्सिद्धान्ते आकाशस्य विभुत्वानङ्गीकारात्, तद्रहितः देशोऽपि कश्चित्स्यादेव । तत्र कथं दिग्व्यवहार इत्यत्राह—**व्योमेत्यादि**। **व्योमोत्तीर्णे देशेऽपि**=आकाशरहिते देशेऽपि **तदुपाध्यन्वितैः तत्तदर्थैः**= आकाशस्य दिग्व्यवहारहेतुभूतप्रदेशभेदसंबद्धाः तत्र तत्र सुलभाः ये पदार्थाः सूर्यातपकालादयः सन्त्येव । तदन्विता ये केचित्, तैरेव **दूरत्वादिव्यवस्था प्रभवतु**=दूरत्वसमीपत्वादिव्यवस्था वर्णयितुं शक्यैव । अतः अन्यथासिद्धत्वात् अतिरिक्तदिशः आवश्यकता नास्त्येव ॥

ननु उपाध्यन्विताः पदार्थाः के? अपि च एकत्र आकाशेन व्यवहारः, अन्यत्र कालादिना व्यवहारः इति कथनेऽनवस्थागौरवप्रसङ्गादयो भवेयुः । तदपेक्षया एक एव पदार्थः सर्वत्र व्यवहार-हेतुर्यद्युच्यते, तदेव लाघवमिति चेत्, एवमपि 'धर्मिकल्पनातो वरं धर्मकल्पना' इति न्यायेन, प्राच्यादिव्यवहारहेतुभूतोपाधिसंयोगविशिष्टतया अतिरिक्तधर्मिणः पदार्थस्य कल्पनापेक्षया, क्ऌप्ते वस्तुनि आकाशे, तादृशोपाधिसंयोगरूपधर्ममात्रस्य कल्पने लाघवमस्त्येव । न चैकस्य पदार्थस्य तथात्वकल्पनाया

[दिग्व्यवहारनिर्वाहः]

49. **अन्यस्मिन्नन्यधर्मान् घटयतु वियदाद्यत्र नातिप्रसक्तिः**
**सिध्यत्कार्योपयुक्तोपनयननियमोपेततच्छक्तिक्लृप्तेः ।**

असंभवात् अव्यवस्था दुर्वारिति चेत्, एवमपि लाघवमस्त्येवेत्याह—**स्वयमुतेत्यादि** । **अतः**=अपि च **स्वयंविभुना**=स्वरूपत एव सर्वव्यापिना, स्वयमेव सर्वसमर्थेन वा **ब्रह्मणा**=परब्रह्मणा **दूरत्वादि-व्यवस्था प्रभवतु, परैः**=इतरपदार्थैः **नः किम्**=इति प्रगल्भवादः । अतश्चैकेनैव सर्वत्रापि निर्वाहान्नास्त्यव्यवस्था ॥ ४८ ॥

ननु दिशः एकत्वेन प्राच्यादिभेदः औपाधिक एव वक्तव्यः । उपाधयश्च सूर्योदयादयः स्वसंबन्धात् दिशि प्राच्यादिभेदमुपजनयन्तः घटदावपि वस्तुनि 'प्राच्यां घटः' 'प्रतीच्यां वाराणसी' इत्यादिव्यवहारहेतवो भवन्ति । यदि दिक्स्थाने आकाश एव तादृशव्यवहारहेतुः स्यात्, तर्हि कालेश्वरादिना विनिगमनाविरहः । सर्वेषामेषां पदानां पर्यायता च स्यात् । तथा च व्यवहारव्यवस्था च न स्यात्, इत्येतत्समाधत्ते—**अन्यस्मिन्नित्यादिना** । दिशः अङ्गीकारेऽपि तस्या अतीन्द्रियत्वाङ्गीकारात्, सूर्योदयस्थानत्वेन लोके आकाशस्यैव प्रदर्शनात्, **अन्यस्मिन्**=घटादौ **अन्यधर्मान्**=सूर्योदयावच्छिन्नदेशधर्मान् **वियदादि**=प्रत्यक्षसिद्धं आकाशाद्येव **घटयतु**=आरोपयतु, तेन प्रांच्यादिव्यवहारहेतुः आकाशादिरेव, **अत्र अतिप्रसक्तिः न=नास्त्येव**। उपाधीनामयं स्वभावः, स्वधर्मं स्वसंयुक्ते वस्तुनि आरोप्य व्यवहारजननमिति । यथा जपाकुसुमं स्वस्मिन् विद्यमानं लौहित्यं स्वसंयुक्ते स्फटिके आरोप्य 'लोहितः स्फटिकः' इति व्यवहारहेतुः । तद्वदेव आकाशरूपैकदेशावच्छेदेन सूर्योदयघटयोः संबन्धात् दिग्व्यवहारहेतुत्वम्, तदनुगुणशक्तिमत्त्वं चास्तु का हानिः? शब्दसमवायिकारणतया क्लृप्तस्याकाशस्य, प्राच्यादिव्यवहारहेतुत्वं कथमिति न शंक्यम्; सिद्धान्ते शब्दस्य पञ्चभूतधर्मत्वात् । शब्दस्याकाशमात्रधर्मत्वेऽपि आकाशस्य शब्दजननशक्तस्य, दिग्व्यवहारजननशक्तिरपि कथं स्यादित्यपि न शङ्क्यम्, एकस्यैव दीपस्य प्रकाशकारित्वस्य अङ्गुल्यादिदाहकत्वस्य, वर्तिविकारकारित्वस्य, तैलक्षयकारित्वस्य एवमन्यान्यकार्यकारित्वस्य च युगपदेव दर्शनेऽपि न काचिदव्यवस्था दृश्यते । सामग्रीभेदः खलु प्रत्यक्षसिद्धः । तद्वदत्रापि उपाधिभेदात् कार्यविशेषानुकूलायाः शक्तेः, सिद्धे दृष्टे च वस्तुन्यङ्गीकारे का हानिः? तदेतदाह—**सिद्ध्यदित्यादि** । **सिद्ध्यत् यत् कार्यम्**=लोकानुभवसिद्धं यत् कार्यम्, **तदुपयुक्ता**=तदनुकूला **शक्तिरित्यन्वयः**, मध्ये वर्तमानं शक्तिविशेषणम् । तदनुकूला, **उपनयननियमोपेता च या** तादृशी शक्तिः । **उपनयनम्**=स्वसन्निहिते आरोपणम् इति यावत् । स्वस्मिन् विद्यमानं स्वसन्निहित एव आरोपयति इति उपाधेः स्वभावः । तस्य यो **नियमः** पूर्वोक्तः, **तदुपेता**=तद्विशिष्टा या, सा **शक्तिः**=उपनयननियमोपेततच्छक्तिः; **तस्याः** क्लृप्तिः=कल्पनम् कार्ये यादृशं दृष्टम्, तदनुगुणा शक्तिः कारणे कल्प्यते । सिद्धान्ते शक्तिः अतिरिक्तः पदार्थः । एवञ्च, दर्शनानुरोधेन विषयव्यवस्था, न तु 'एवं सति अन्यदपि कार्यं कुतोऽनेन न भवति' इत्याक्षेपः कर्तुं शक्यः । अन्यस्य कार्यस्यादर्शनात् । क्लृप्तपदार्थस्य अन्यकार्यानुगुणशक्तिमत्त्वकल्पनेनैवोपपत्तौ, 'धर्मिकल्पनातो वरं धर्मकल्पना' । अयमंशः वैशेषिकाणामपि

**एवं ह्येवाधिकायामपि दिशि भवतोऽतिप्रसङ्गो निषेध्यः,**
**धर्मो धर्मश्च कल्प्यौ तव, तदितरता स्यात्तु काले स्वमानात् ॥ ४९ ॥**

**[दिशोऽनतिरिक्तत्वे प्रमाणम्]**

50. **संख्यानं तत्त्वपङ्क्तौ क्वचिदपि न दिशः, कालवद्वा न भेदः**
**कण्ठोक्तः, व्याक्रियादिव्यवहरणमपि ह्यन्यथैवोपपन्नम् ।**
**श्रोत्रादुक्तस्तु लोकप्रभृतिवदुदयस्तस्य तत्राप्ययो वा**
**नैतावत् तत्त्वभेदं गमयति, न च तच्छ्रौत्रतामान्यपर्यात् ॥ ५० ॥**

---

समान इत्याह— **एवमित्यादि**। **हिः** प्रसिद्धौ । **अधिकायाम्**=अतिरिक्तायामङ्गीकृतायामपि **भवतः**=भवत्संमतायां **दिशि अतिप्रसङ्गः**=इयमेव शक्तिः वर्तते, नान्या वर्तत इति कुतः? इत्यापादनम्, **निषेध्यः**=निराकरणीयः, यत् दृश्यते तदनुगुणं कारणं कल्प्यम्, नाधिकमिति क्रमेणैव निरस्तव्यः । **'भवतो निषेध्यः'** इति वान्वयः । एतावता मतद्वयं समानमिति न भ्रमितव्यमित्याह— **धर्मेत्यादि**। भवन्मते कारणत्वरूपो धर्मः, तदाश्रयतयाऽतिरिक्ता **धर्मी च**=दिक् च इति द्वयं कल्पनीयम् । अस्माकं तु क्लृप्ते आकाशे दिग्व्यवहारहेतुत्वरूपधर्ममात्रकल्पनमिति लाघवमस्ति । तर्हि अनेनैव न्यायेनातिरिक्तः कालोऽपि मास्त्विति चेत्, तत्राह— **तदितरतेत्यादि**। **काले तु**=कालविषये तु **तदितरता**=आकाशाद्व्यतिरिक्तता **स्वमानात्**=कालस्यातिरिक्तत्वसाधकप्रमाणात् **स्यात्**। तत् अग्रे (श्लो.65) भविष्यति । कालः अतिरिक्तः, दिक् तु नातिरिक्तेत्यर्थः ॥ ४९ ॥

नन्वेवं सति स्पर्शाश्रयतया अतिरिक्तो वायुरपि न सिद्ध्येत्; सिद्धस्यैवाकाशस्य शब्दाश्रयत्ववत् स्पर्शाश्रयत्वकल्पनयाप्युपपत्तेः इति शङ्कायाम्, यदि वायोः स्पर्शाश्रयतयानुमानम्, तदेयमापत्तिः । श्रुत्युक्तत्वादतिरिक्तो वायुः अङ्गीक्रियते । न तथा दिश इति समाधानमाह— **संख्यानमित्यादि**। **क्वचिदपि**=सृष्टिप्रकरणे कुत्रापि **दिशः संख्यानम्**=गणनम् **न**। **कालवद्वा भेदः न कण्ठोक्तः**='रूपान्तरं तत् द्विजकालसंज्ञम्' (वि.पु.) इति कालस्येव दिशः भेदोऽपि कुत्रापि स्पष्टं नोक्तः । ननु कथं नोक्तमिति । स्मरति हि भगवान् पाणिनिः वेदाङ्गमूर्धन्यस्य व्याकरणस्य कर्ता 'दिग्देशकालेष्वस्तातिः' (पा.सू.5-3-27) इत्यादीति चेत्, तत्राह— **व्याक्रियादिव्यवहृतिरपि**=व्याकरणशास्त्रीयव्यवहारोऽपि **अन्यथैव**=व्याकरणस्य शब्दशास्त्रत्वात्, अर्थस्यातिरिक्तत्वानतिरिक्तत्वविषये तस्य प्रमाणत्वाभावादिति निर्वहिणापि **उपपन्नम्**=उपपत्तियुक्तं भवेत् । ननु 'दिशः श्रोत्रात्' (पु.सू.) इति भगवतः श्रोत्रात् दिशः उत्पत्तिः, 'दिशः श्रोत्रम्' इति लयसमये दिशि श्रोत्रस्य लयश्च वेदेऽपि कण्ठत एवोक्त इत्यत्राह— **श्रोत्रादित्यादि**। **श्रोत्रात्**=भगवतः श्रोत्रात् **उक्तः तस्य**=दिक्तत्त्वस्य **उदयस्तु**='दिशः श्रोत्रात्' इति कथितः दिशः उत्पत्तिः **तत्र**=श्रोत्रे 'दिशः श्रोत्रम्' इत्युक्तः **अप्ययो वा**= लयो वा **लोकप्रभृतिवत्**='नाभ्या आसीदन्तरिक्षम्'(पु.सू.) इत्यन्तरिक्षलोकस्य नाभेरुत्पत्त्यादिवदेव व्यष्टिविषयतया, ज्ञेय इति शेषः । अथवा 'उक्तः' इति पदस्यावृत्तिः । **एतावत्**=एतावन्मात्रम् **तत्त्वभेदम्** =दिशः अतिरिक्ततत्त्वताम् **न गमयति**=न बोधयति । **तच्छ्रौत्रतां च**=दिशः श्रोत्रोपादानकतां च **न गमयति**। कुतः? **आन्यपर्यात्**=अन्यपरत्वात् । मनसः चन्द्रोत्पत्त्यादिवदेव व्यष्टौ कदाचित्तथात्वाभिप्रायात्तथोक्तिः इत्यादिक्रमेणान्यथासिद्धत्वात् दिशः अतिरिक्तता नास्ति ॥ ५० ॥

[वायोः प्रत्यक्षत्वम्]

51. **वातो वातीति साक्षान्मतिरितरसमा स्पर्शतो नानुमाऽसौ**
**अन्धेऽन्येषु प्रसङ्गात् न पुनरगमकं स्पर्शनं रूपशून्ये।**

एवमाकाशपरीक्षां तत्प्रसक्त्या दिक्परीक्षां च परिसमाप्य, अनन्तरम् 'आकाशाद्वायुः' इति क्रमप्राप्तवायुपरीक्षामुपक्रमते—**वात** इत्यादि। वायुः शब्दस्पर्शधृतिकम्पनैरनुमीयत इति वैशेषिकाः। वायुः वेगेन यदा वाति, तदा विचित्रः शब्दः अनुभवसिद्धः। एवं स्पर्शविशेषः, वृक्षादिकंपनम्, शीर्णपत्रादीनामाकाशे प्लवनम् इत्यादिकमपि अनुभवसिद्धम्। एभिः तद्धेतुतया वायुः अनुमीयते, न तु वायुः प्रत्यक्षः। बाह्यप्रत्यक्षं प्रति रूपस्य कारणत्वात्, वायौ तदभावाच्च वायुः न प्रत्यक्षः। ननु रूपं चाक्षुषप्रत्यक्षं प्रति खलु कारणम्। वायौ रूपाभावात् मास्तु चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षे रूपं कथं कारणमिति चेत्—सत्यम्; तत्तदिन्द्रियजन्यप्रत्यक्षं प्रति तत्तद्गुणा एव कारणम्। परन्त्वयं विशेषकार्यकारणभावः। सामान्यकार्यकारणभावः आवश्यकः किल। सर्वं हि वस्तु सामान्यविशेषात्मकम्। यथा ज्ञानविशेषाः प्रत्यक्षानुमितिशब्दाः। तेषां करणानि यथासंख्यम् इन्द्रियव्याप्तिज्ञानशब्दाः। एवमपि ज्ञानसामान्यकारणम् आत्ममनस्संयोगादि। एतदभावे बाह्यप्रत्यक्षमपि न जायेतेति सर्वसंमतम्। तद्वदत्रापि तत्तदिन्द्रियाणि तत्तज्ज्ञानविशेषकारणानि। तथा बाह्यप्रत्यक्षसामान्यकारणमपि किञ्चित् वक्तव्यमेव। एवमेवाद्वितीयं ब्रह्मापि प्रमेयत्वादिना सामान्यात्मकम्, बृहत्वबृह्मणत्वादिना विशेषात्मकम्। सामान्यविशेषौ च परस्परसापेक्षौ, सामान्यमन्तरा न विशेषः, विशेषमन्तरा च न सामान्यम्। एवं घटादावपि—घटं प्रति मृत्पिण्डः कारणमिति सामान्यम्। तद्घटं प्रति तन्मृत्पिण्डः कारणमिति विशेषः। परन्तु तन्मृत्पिण्डतद्घटयोरन्वयव्यतिरेकग्रहणासंभवात्, अन्वयव्यतिरेकयोस्सामान्यरूपेणैव संभवात्, घटत्वावच्छिन्नं प्रति मृत्त्वावच्छिन्नं कारणमिति सामान्यकार्यकारणभावोऽप्यावश्यकः। अतः बाह्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपं सामान्यकारणम्; वायौ तदभावात् न बाह्यप्रत्यक्षसंभवः। अतः स्पर्शाद्यनुमेयो वायुः। शिष्टं समनन्तरश्लोके॥

ननु दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिना द्रव्यं पूर्वं साधितं किल। तत्रान्धकारेऽपि त्वगिन्द्रियेण घटादिप्रत्यक्षमङ्गीकृतं किल। एवं सति अत्र परं कथमुच्यते वायौ रूपाभावात् त्वगिन्द्रियेणाप्यग्रहणम्? उच्यते, अन्धकारे त्वचा यद्यपि द्रव्यप्रत्यक्षं भवत्येव। परन्त्विदं विशेषकारणम्। सामान्यकारणं तु बाह्यप्रत्यक्षं प्रति रूपम्। तदस्त्येव घटे। अतः सामान्यसामग्रीसहितया विशेषसामग्र्या घटप्रत्यक्षं भवत्येव। वायौ तु तादृशसामान्यसामग्र्यभावात् न बाह्यप्रत्यक्षसंभवः, तदभावेन च त्वगिन्द्रियं स्पर्शं गृह्णीयात्, न तु वायुम्। अन्यथा वायाववात्यपि त्वचा वायुप्रत्यक्षप्रसङ्गः। अतः अनुमेय एव। तदेतन्निराकरोति—**वातः**=वायुः **वाति इति इतरसमा**='घटो दृश्यते' इत्यादीतरप्रत्यक्षसदृशी **यतः**, ततः **साक्षान्मतिः**=साक्षात्काररूपैव प्रमितिः। अन्यथा 'घटो दृश्यते' इति प्रतीतिरपि रूपेण घटानुमितिरूपा स्यात्। ननु घटः, तदाश्रितं रूपं चेति द्वयमीक्ष्यते चक्षुषा। नैवं वायुः, स्पर्शः तदाश्रितश्चेति द्वयमनुभूयते, स्पर्शमात्रं प्रतीयते। तेन च तदाश्रयः वायुस्तु अनुमीयत इत्येव युक्तमित्यत्राह—**स्पर्शत** इत्यादि।

**अन्याक्षग्राह्यतादृग्विधगुणविरहो ह्यन्यदक्षं न रुन्धे**
**निर्गन्धो नीरसोऽपि स्फुरति यदनलो दर्शनस्पर्शनाभ्याम् ॥ ५१ ॥**

**[वायुगतसङ्ख्यादीनामपि त्वचा ग्रहणम्]**

52. **संख्याद्याः स्पर्शनाः स्युस्तदधिकरणकाः स्पर्शने गन्धवाहे**
**तेषां द्रव्योपलंभप्रतिनियतनिजाध्यक्षयोग्यत्वतश्चेत् ।**

**असौ**='वातो वाति' इति प्रतीतिः **स्पर्शतः**=स्पर्शगुणात् **नानुमा**=न अनुमितिः । एवमनङ्गीकारे अतिप्रसङ्गमाह—**अन्ध इत्यादिना । अन्धे**=रूपग्रहणसामर्थ्यरहिते पुरुषे **अन्येषु**=वायुभिन्नपृथिव्यादिष्वपि **प्रसङ्गात्**=अनुमितिरूपताप्रसङ्गात् । अन्धः घटं स्पृशन् 'घटोऽयम्' इति वदति । न हि सः एवं वदति 'मया स्पर्शमात्रं गृह्यते, न तु घटः' इति । निमीलितचक्षुषा अनन्धेनापि तथा व्यवहारप्रसङ्गात् । अत एव **'अन्धे'** इति पदं रूपग्रहणरहितस्पर्शग्रहीतृपुरुषपरम् । रूपग्रहणराहित्यं च आन्ध्येन वा, अन्धकारादिना वा चक्षुर्निमीलनादिना वा स्यात् । न च तत्र सर्वत्र रूपस्यापि तत्र सत्त्वात् रूपवत्त्वमेव द्रव्यग्रहणप्रयोजकमस्त्विति शंक्यम्; अन्धेन रूपं न गृह्यते; अथापि त्वचा स्पर्शः, रूपाश्रयो घटश्च गृह्यते इत्यस्यासंबन्धप्रलापत्वापातात् । रूपाश्रयत्वस्य त्वगिन्द्रियग्राह्यत्वस्य च संबन्धाभावात् । तदेतदाह—**न पुनरित्यादि । रूपशून्ये** वस्तुनि **स्पर्शनम्**=त्वगिन्द्रियम् **अगमकम्**=प्रत्यक्षाजनकम् **न पुनः**=रूपशून्यत्वं त्वगिन्द्रियजन्यप्रत्यक्षविरोधि नैव भवेत् । कुत इत्यत्र—**अन्याक्षेत्यादि । अन्याक्षग्राह्यतादृग्विधगुणविरहः**=**अन्यत् अक्षम्**=इन्द्रियं चक्षुरादि, **तद्ग्राह्यः तादृग्विधः गुणः**=रूपम्, **तद्विरहः**=तदभावः **अन्यत् अक्षम्**=त्वगिन्द्रियम् **न रुन्धे हि**=न प्रतिबध्नाति=प्रतिबन्धकं न भवति हि । रूपाभावः त्वगिन्द्रियेण वस्तुग्रहणं प्रति प्रतिबन्धको न भवति । तत्र संप्रतिपन्नं दृष्टान्तमाह—**निर्गन्ध इत्यादिना । निर्गन्धः**=गन्धरहितः **नीरसोऽपि**=रसरहितोऽपि **अनलः**=तेजः **दर्शनस्पर्शनाभ्याम्**=चक्षुस्त्वगिन्द्रियाभ्यां **यत् स्फुरति**=यतः प्रतिभाति, अतः अन्याक्षग्राह्यतादृग्विधगुणविरहः अन्यदक्षं न रुन्धे । गन्धराहित्यं यथा चाक्षुषप्रत्यक्षाप्रतिबन्धकम्, तथैव रूपराहित्यमपि त्वाचप्रत्यक्षप्रतिबन्धकं न भवत्येवेत्यर्थः । ननु बाह्यप्रत्यक्षसामान्यसामग्रीभूतस्य रूपस्याभावे कथं केवलविशेषसामग्री कार्यं जनयेत् । अन्यथा आत्ममनस्संयोगाभावेऽपीन्द्रियं प्रत्यक्षजनकं भवेदिति चेत्; रूपस्य बाह्यप्रत्यक्षत्वावच्छिन्नं प्रति कारणत्वस्यैभावान्न दोषः । तर्हि बाह्यप्रत्यक्षसामान्यं प्रति किं कारणमिति चेत्, न किञ्चिदित्येव । यावत्संभवमेव सामान्यकार्यकारणभावः, न तु सर्वत्र । यद्वा रूपाद्यन्यतमत्वमेवास्तु प्रयोजकम्; न तु रूपमात्रम् । अतः वायुः त्वगिन्द्रियजन्यप्रत्यक्षविषय एव । अधिकं समनन्तरश्लोके ॥ ५१ ॥

वायोः प्रत्यक्षत्वे तद्गतसंख्यादिकमपि प्रत्यक्षतो गृह्येतेत्यादि परोक्तं बाधकमुपन्यस्य निराकरोति—**संख्याद्या** इत्यादिना । **गन्धवाहे**=वायौ **स्पार्शने**=त्वगिन्द्रियग्राह्ये सति, **तदधिकरणकाः**=वायौ वर्तमानाः **संख्याद्याः**=संख्यापरिमाणादयोऽपि **स्पार्शनाः**=त्वगिन्द्रियग्राह्याः **स्युः**=भवेयुः । तत्र हेतुः—**तेषामित्यादि । तेषां**=संख्यादीनाम् **द्रव्योपलंभप्रतिनियतनिजाध्यक्षयोग्यत्वतः**=**द्रव्यस्य**=संख्याद्याश्रयस्य द्रव्यस्य

**इष्टं त्वंशे, न चात्मप्रभृतिषु सह ते तैः प्रसिद्ध्यन्ति सर्वे**
**तद्बाह्ये व्याप्तिरिष्टा यदि, सततगतेरप्यसावस्तु बाह्ये ॥ ५२ ॥**

**उपलंभे**=प्रत्यक्षत्वे **प्रतिनियतं**=नियमेन व्याप्तम्, यत् **निजाध्यक्षयोग्यत्वम्**=आश्रयग्रहणयोग्येन्द्रिय-जन्यप्रत्यक्षविषयत्वम्, तन्नियमात् इत्यर्थः । संख्यादीनां गुणानां प्रत्यक्षं प्रति तदाश्रयद्रव्यग्रहणसमर्थमिन्द्रियमेव कारणं दृष्टम्, अन्वयव्यतिरेकवशात् । यथा घटगता संख्या, घटग्रहणसमर्थेन्द्रियेण चक्षुषा त्वचा च गृह्यते इति नियमः सर्वसंमतः । एवञ्च वायोः यदि त्वचा ग्रहणम्, तर्हि वायुगता संख्यापि त्वचा गृह्येत । चेत्=इति चेत्; समाधत्ते—**इष्टं त्वंशे**। 'प्रथमो वायुः ववौ, द्वितीयो ववौ' इत्याद्या अनुभवा दृश्यन्त एव। 'अधिकरणग्राहकमिन्द्रियम्, तद्गतगुणमपि गृह्णाति' इत्ययं नियमः सर्वांशे नेष्टः, घटग्राहकेण चक्षुषा, घटगतगुरुत्वस्याग्रहणात् । अत उक्तम् **अंशे**=क्वचिद्विषये **इष्टमिदम्**, न तु सर्वत्रेति त्वयापि वक्तव्यमेव । एतादृशं व्याप्तिभङ्गमात्मन्यपि प्रदर्शयति—**न चेत्यादि** । **आत्मप्रभृतिषु**=आत्मादिवस्तुषु **ते सर्वे**=तत्र वर्तमानाः सर्वे गुणाः **तैः सह**=आश्रयभूतैः आत्मादिभिस्सह **न च प्रसिद्ध्यन्ति**=नैव गृह्यन्ते । आत्मा तु 'अहम्' इति मानसप्रत्यक्षविषयः अङ्गीक्रियते । तत्र आत्मना सह आत्मगताः अणुत्वमहत्त्वपरिमाणादयः धर्माधर्मादयश्च न हि केनापि गृह्यन्ते । अतः 'आश्रयग्राहकम्, तदाश्रितमपि गृह्णाति' इति नियमः न सार्वत्रिकः। किन्तु अनुभवानुरोधेनैव व्यवस्था वक्तव्या । पुनश्शङ्कते—**तद्बाह्ये**=आत्मव्यतिरिक्त एव विषये **तद्व्याप्तिः**=पूर्वोक्तव्याप्तिः **इष्टा यदि**=संमता यदि; **तर्हि, असौ**=व्याप्तिः **सततगतेः अपि बाह्ये**=वायुभिन्नपृथिव्यादिविषय एव **अस्तु**, न तु वायौ, इत्यपि कुतो न स्यात् । नियमाः खलु अनुभवेनैव निरूप्यन्ते । अतः वायोः प्रत्यक्षत्वे न कापि हानिः ॥

**वस्तुतस्तु**—पञ्चस्विन्द्रियेषु द्रव्यग्राहकं द्वयमेव, चक्षुः, त्वक् च । तत्रापि, लोके 'प्रत्यक्षतो दृष्टम्' 'प्रत्यक्षदर्शनम्' इत्यादिव्यवहारास्सर्वेऽपि चाक्षुषा एव दृष्टाः । अतः इतरेन्द्रियजन्यज्ञानानां शास्त्रदृष्ट्या प्रत्यक्षत्वेऽपि, लोकदृष्ट्या चाक्षुषज्ञान एव प्रत्यक्षत्वव्यवहारात्, 'बाह्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपं कारणम्' इति वायुः न प्रत्यक्षः । न च विपरीतमेव किं न स्यात्, बाह्यप्रत्यक्षत्वावच्छिन्नं प्रति स्पर्श एव कारणमस्त्विति शङ्क्यम्; आलोकस्याचाक्षुषत्वप्रसङ्गात् । अस्त्वालोकोऽनुमेय एवेति तु न; घटादीनामप्यनुमेयत्वप्रसङ्गात् । अतो रूपमेव बाह्यप्रत्यक्षत्वप्रयोजकमिति तेषामाशयः। किञ्च वायोः त्वगिन्द्रियग्राह्यत्वे, अपवरके वर्तमानो निश्चलो वायुः कुतस्त्वचा न गृह्यते? न च तत्र वायुरेव नास्तीति वाच्यम्, तत्र स्थितानां श्वासोच्छ्वासदर्शनात् । अतः वायुर्न प्रत्यक्षः, किन्तु स्पर्शाद्यनुमेयः । वेदान्तिभिस्तु केवललोकव्यवहारापरिगणनात्, तन्निराकरणम् । 'वातो वाति' इत्यनुभवोऽपि स्पर्शविषयक एव । एवं च—

'मर्यादानामसाङ्कर्यात् शास्त्राणां विषयस्थितेः । खण्डनानां नावकाशः भावाविष्करणं परम् ॥
परं तु कालमाहात्म्यान्महर्ष्याशयदूरगाः । खण्डनैकव्यसनिनो जाता हन्त! विपश्चितः ॥
बौद्धा यदा विप्रतीपं गताः पाण्डित्यगर्विताः । तदारभ्य व्यसनिनो जाताः प्रायो विपश्चितः ॥

[प्राणोऽपि वायुविशेष एव]

**53. न प्राणो वायुमात्रं सह परिपठनात्, न क्रिया द्रव्यतोक्तेः**
**तेजोवद्वा न तत्त्वान्तरमगणनतो वायुतानुज्झनाच्च।**
**तस्माद्वातो विशेषं घनजलकरकान्यायतः प्राप्य कंचित्**
**देहान्तर्दाशविध्यं भजति बहुविधोपक्रियो वृत्तिभेदैः ॥ ५३ ॥**

आचार्यसार्वभौमोऽयं न समो यद्यपीतरैः। अवृणोद्यं स्वयं ज्ञानविज्ञानाद्यधिदेवता ॥
यत्किञ्चित्साधने वापि समर्थो बाधनेऽथवा। चर्चमेवं करोति स्म तत्तत्कालानुरोधतः ॥
तथापि शिष्यबुद्ध्यादिवैशद्यार्थं तदा तदा। तस्यैवानुग्रहाद्ज्ञेयस्तद्वचोऽर्थो न चान्यथा ॥
गुरोश्शापस्तु शिष्यःस्याद्भक्तो भगवतस्तथा। स्मर्तव्योऽयं सदा न्यायः बहुसंशयनाशकृत् ॥

इदं रहस्यं तत्तदवसरे व्यक्तीभविष्यति ॥ ५२ ॥

वायुसामान्यं विचार्य, वायुविशेषं विचारयति—**न प्राण इत्यादि**। कर्मिणां शरीरधारणहेतुः प्राण-पदवाच्यः कः? इति प्रश्ने—**प्राणः**=प्राणपदवाच्यः न **वायुमात्रम्**=सामान्यवायुरूपः न, प्राणशब्दः न वायुसामान्यवाचीति यावत्। तत्र हेतुः—**सहपरिपठनात्**=‘एतस्माज्जायते प्राणः—खं वायुः’ (मुं.उ.2-1-3) इति एकस्मिन्नेव वाक्ये प्राणस्य, वायोश्च सृष्टेः सहैव स्पष्टं पाठात्। उभयोः पर्यायत्वे, उभयोः एकत्र पाठः न युक्तः। **न क्रिया**=उच्छ्वासनिःश्वासादौ प्राणपदप्रयोगदर्शनात् उच्छ्वासादिक्रियैव प्राण इत्यपि न। कुतः? **द्रव्यतोक्तेः**=अपानाद्यवस्थावत्त्वाभिधानात्; क्रियाया अद्रव्यत्वेनावस्थावत्त्वाभावात्। **तेजोवत्**=तेज इव **तत्त्वान्तरं वा न**=स्वतन्त्रतत्त्वान्तररूपमपि न। कुतः—**अगणनतः**=तत्त्वसृष्टिप्रकरणे प्राणस्य गणनादर्शनात्। हेत्वन्तरं—**वायुतानुज्झनाच्च**=वायुत्वापरित्यागाच्च। ‘प्राणवायुः’ इति वायुविशेषतयाभि-धानादिति यावत्। किं तर्हीत्यत्र सिद्धान्तमाह—**तस्मादित्यादि**। **तस्मात्**=उक्तयुक्तिभिः **वातः**=वायुरेव सन् **घनजलकरकान्यायतः**=**घनः**=मेघः, **जलम्** प्रसिद्धम्, **करका**=घनीभूतं जलम्, एता विलक्षणा अपामवस्थाविशेषाः। **एतन्न्यायात्**=एवमेवावस्थातः **कंचित् विशेषं प्राप्य, देहान्तः**=देहस्यान्तरेव, न तु बहिः, प्राणस्य बहिर्निस्सरणे हि मरणमेव; अतः नासिकायां निस्सरन् वायुः प्राणाधीनक्रियावान् वायु विशेषः। **वृत्तिभेदैः**=विलक्षणव्यापारैः **बहुविधोपक्रियः**=नानाविधानुपकारान् कुर्वन् **दाशविध्यम्**=दशधा भेदम् **भजति**=प्राप्नोति ॥

‘प्राणोऽपानस्समानश्चोदानव्यानौ च वायवः। हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ॥
उदानः कण्ठदेशस्थो व्यानस्सर्वशरीरगः। नागश्च कूर्मः कृकरो देवदत्तो धनञ्जयः ॥
वाग्द्वारे नाग आख्यातः कूर्म उन्मीलने स्मृतः। कृकराच्च क्षुतं ज्ञेयम् देवदत्ताद्विजृम्भणम् ॥’

इति प्राणस्य कार्यविशेषा अभिहिताः। इदं च स्थूलदृष्ट्या। सूक्ष्माः अनन्ता वृत्तयः वायोः योगशास्त्रादिषूक्ताः द्रष्टव्याः ॥ ५३ ॥

[प्राणस्य इन्द्रियत्वाभावः]

54. **प्राणोऽक्षं प्राणशब्दात् उपकरणतया क्षेत्रिणश्चेत्ययुक्तं**
**शब्दैक्यं ह्यैकजात्यं व्यभिचरति न च प्राणताऽक्षेषु मुख्या ।**
**देहस्यानक्षभावेऽप्युपकृतिरधिका तत्समाऽक्षोक्त्यदृष्टिः**
**न प्राणे सात्त्विकाहंकरणविकृतिता, लक्षणं तद्धि तेषाम् ।। ५४ ।।**

[वैश्वानराग्नेः स्वरूपम्]

55. **प्राणापानाख्यभस्त्रारभसविसृमरः प्राप्य वैश्वानराख्यां**
**मध्येदेहं हुताशो वसति जलनिधावौर्ववत् सर्वभक्षः ।**

---

प्राणविषये पक्षान्तरमनूद्य निराकरोति—**प्राण** इत्यादिना । **प्राणः**=प्राणवायुः **अक्षम्**=इन्द्रियमेव । कुतः? **प्राणशब्दात्**=प्राणशब्दः यतः इन्द्रियवाच्यप्यस्ति । **क्षेत्रिणः**=जीवस्य **उपकरणतया च**=चक्षुरादिवत् उपकारकत्वसामान्याच्च । निराकरोति—**इति अयुक्तम्** इति । कुतः? **शब्दैक्यं हि**=शब्दानुपूर्व्यैक्यं **ऐकजात्यं व्यभिचरति**=अर्थस्य एकजातीयतां व्यभिचरति; हर्यादिनानार्थकपददर्शनात् । **प्राणता**=प्राणशब्द-वाच्यता **अक्षेषु**=इन्द्रियेषु **न मुख्या,** किन्तु इन्द्रियाणामपि प्राणाधीनत्वात् इन्द्रियेषु कदाचित् प्राणशब्द-प्रयोगः । जीवोपकारकत्वात् प्राणस्य इन्द्रियवाचित्वं यदि, **देहस्य अनक्षभावेऽपि**=इन्द्रियत्वाभावेऽपि **उपकृतिः**=जीवोपकारः **अधिकः** । एवञ्च शरीरमपि प्राणपदवाच्यं स्यात् । उपकारकत्वातिशयेऽपि शरीरे इन्द्रियपदप्रयोगः नास्तीति प्राणः न शरीरमिति चेत्, **अक्षोक्त्यदृष्टिः**=इन्द्रियवाचित्वादर्शनं **तत्समा**= इन्द्रियेषु मुख्यतया प्राणपदाप्रयोगोऽपि सम एव । अप्रकम्प्यं प्रमाणमाह—**न प्राणे इत्यादि** । **प्राणे सात्त्विकाहङ्करणविकृतिता न**=सात्त्विकाहङ्कारपरिणामरूपता प्राणे नास्त्येव, किन्तु वायुविशेषरूपत्वात् स्पर्शतन्मात्रोपादानकत्वमेव । तेन किमायातम्—**तद्धि**=सात्त्विकाहङ्कारोपादानकत्वं हि **तेषां लक्षणम्**= इन्द्रियाणां लक्षणम् । अतः प्राणः नेन्द्रियाणि, किन्तु वायुविशेष एव । जीवप्राणधारणे इति पाठात्, जीवस्य व्यवहारेषु अत्यन्तमन्तरङ्गोपाधिषु प्राणः बुद्धिश्च प्रधानभूतौ । अत एव बहुषु जीवशब्दस्थाने प्राणशब्दः, बुद्धिपर्यायविज्ञानशब्दश्च श्रूयते । यथा 'प्राणो ह पिता प्राणो माता' (छां.7-15-1) 'विज्ञानं यज्ञं तनुते' (तै.आ.5) इत्यादौ । अत्र वक्तव्यमधिकं जीवसरे भविष्यति ।। ५४ ।।

वायुनिरूपणानन्तरम् अग्नेर्निरूपणे कर्तव्ये, प्राणविचारप्रसङ्गात् तत्तुल्यस्य अग्नेरप्यवस्थाविशेष-रूपस्य वैश्वानराग्नेः स्मरणात् तद्विचारोपक्रमेणैवाग्निविचारमुपक्रमते—**प्राणापानेत्यादिना** । **प्राणापानाख्यो यो** वायुपूरक**भस्त्रा**यन्त्रतुल्यः श्वासोच्छ्वासयन्त्रः शरीरस्थः, तस्य यः **रभसः**=वेगः, तेन **विसृमरः**= प्रसरणशीलः **हुताशः**=अग्निः **वैश्वानराख्याम्**=वैश्वानरसंज्ञां **प्राप्य, सर्वभक्षः**=भुक्तं सर्वं जीर्णयन् **जलनिधौ**=समुद्रे **और्ववत्**=बडबाख्याग्निरिव **मध्येदेहम्**=प्राणिनां शरीरान्तः **वसति**; हुताशः इति कर्तृवाचकम् । वैश्वानराग्नेः प्राणापानाभ्यां पोषणात्, तयोः भस्त्रायन्त्रत्वेन रूपणम् ।।

**तत्तद्विद्यासु वेद्यं त्वन इव हि परब्रह्मणः सोऽपि रूपं**
**नात्मानौ तौ जडत्वात् जनिविलयमुखैर्भेदकण्ठोक्तिभिश्च ॥ ५५ ॥**

**[प्रभास्वरूपम्]**

**56. धर्मो भाति प्रभैका, बहलविरलताद्यत्र दृष्टानुसारात्,**
**सा दीपांशा विशीर्णा इति यदि, बहुधा कल्पनागौरवादिः ।**

'अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' (गी.15-14) इति वचनं स्मर्तव्यम् । प्राणस्य, वैश्वानरस्य च विशेषरूपस्य प्राणिनां पोषकत्वप्रदर्शनम्, इतरभूतानामपि उपलक्षकम् । पञ्चापि भूतानि प्राणिनां शरीरे विशेषरूपेण भगवत्सान्निध्यप्रयोजकानि वर्तन्ते । आकाशो दहररूपेण, वायुः प्राणरूपेण, तेजः वैश्वानररूपेण, आपः शुक्ररूपेण, पृथिवी रसरूपेण च वर्तन्ते । एतानि च द्यावापृथिव्योः सङ्कटकानि । अत एव किल प्राणविद्या, वैश्वानरविद्या इति ब्रह्मविद्यासु गण्यते । अधिक-मन्यत्र । अध्यात्मशास्त्रे एतत्कथनस्य तात्पर्यमाह—**तत्तदित्यादि** । दहरविद्यादिरूपासु तत्तद्ब्रह्मविद्यासु **वेद्यम्** एतादृशं **रूपं तु, अन इव**=प्राण इव **सोऽपि**=वैश्वानरोऽपि **परब्रह्मणः**=परमात्मनः रूपम् । परन्तु **तौ**=प्राणः वैश्वानरश्च **आत्मानौ न**=न चेतनात्मकौ । कुतः? **जडत्वात्**, पञ्चभूतानि हि जड-रूपाणि । एवं **जनिविलयमुखैः**=उत्पत्तिनाशादिभिः; 'एतस्माज्जायते प्राणः' इति उत्पत्तेः नाशस्य च दर्शनात् । एवं **भेदकण्ठोक्तिभिश्च**=प्राणादेः आत्मनश्च स्पष्टं हि भेदः अभिधीयते । प्राणः अन्यः; प्राणी चान्यः । एवमितरत्रापि । अत एते जडतत्त्वेष्वेवान्तर्भवन्ति ॥ ५५ ॥

सामान्यरूपेण तेजस्तत्त्वस्य सुगमत्वात्, तत्र मुख्यान् विचारणीयांशान् प्रतिपिपादयिषुः, सिद्धान्तस्यात्यन्तमवश्यापेक्षितं प्रभाप्रभावद्द्रव्यं प्रथमं निरूपयति—**धर्म** इत्यादि । धर्मिभूतो दीपो यथा, तथा प्रभा इत्येकाऽपि, अत्रैकशब्दः अन्यपरः, **धर्मः**=धर्मरूपः **भाति**=लोके सर्वानुभवविषयो वर्तते । आत्मतत्त्वं हि स्वप्रकाशत्वात् तेजोरूपं वक्तव्यम् । एवं सति तस्य धर्मभूतं ज्ञानमपि स्वप्रकाशं संमतम् । धर्मस्यापि ज्ञानत्वम्, धर्मिणोऽपि ज्ञानत्वमिति कथम्? इति परेषां प्रश्नः । अत एव दार्शनिकेषु आत्मानम्, तद्धर्मं ज्ञानं चाधिकृत्य महान् विवादः प्रसरति । यदि आत्मा ज्ञानस्वरूपः, तर्हि सः न ज्ञानधर्मको भवितुमर्हति । 'अहं ज्ञानवान्' इत्यादौ धर्मतया भासमानं तु ज्ञानम्, नात्मस्वरूपजातीयं मुख्यं ज्ञानम्; किन्तु गौणं बुद्धिवृत्तिरूपमिति सांख्याः, अद्वैतिनः, द्वैतिन इत्यादयः बहवः । विज्ञानवादिनस्तु आत्मा ज्ञानस्वरूपः, निर्धर्मकश्च । धर्मधर्मिभावस्तु संवृत्त्या कल्पित इत्याहुः । वैशेषिकास्तु ज्ञानं मुख्यं धर्म एव, ज्ञाधात्वर्थत्वात् । आश्रयभूतः आत्मा तु न ज्ञानस्वरूपः इत्याशेरते । सिद्धान्ते तु आत्मा ज्ञानस्वरूपः ज्ञानधर्मकश्च । एकजातीययोः कथं धर्मधर्मिभावः? इति शङ्कां दीपदृष्टान्तेन परिहरन्ति श्रीभाष्यकाराः । आत्मनः स्वप्रकाशत्वमात्रात् ज्ञानस्वरूपत्व-मुच्यते । धात्वर्थभूतं ज्ञानं तु आत्मधर्मभूतमेव । अत एव सिद्धान्तेऽस्य धर्मभूतज्ञानपदेन व्यवहारः । अधिकं जीवसरे(श्लो.5) । यद्यप्ययं विचारः जीवसरसंबन्धी, विचार्यते च तत्र विस्तरशः । परन्तु तत्र दृष्टान्तभूतस्य दीपस्य जडत्वात्, दीपस्वरूपनिर्णयः अत्र क्रियते । 'दीपः' इति धर्मस्य धर्मिणश्च सामान्यशब्दः ।

**रत्नादीनां स्थिराणां विशरणविहतेः निष्प्रभत्वादि च स्यात्**
**एतेजस्तत् सप्रभाकं तिमिरहरतया साऽपि तेजोविशेषः ॥ ५६ ॥**

'दीपज्वाला' 'दीपप्रभा' इति व्यवहारस्य सर्वसंप्रतिपन्नत्वात्, उभयत्रापि दीपपदयोगाच्च प्रभावतः दीपस्य, प्रभायाश्च धर्मधर्मिभावस्य सर्वानुभवसिद्धत्वाच्च, एकजातीययोरपि धर्मधर्मिभावः संगच्छते इत्याचार्याः। प्रभा प्रभावांश्च एक एव पदार्थः, भेदव्यवहारस्तु 'राहोः शिरः' इतिवदौपचारिक इति परे। यथादर्शनं विषयव्यवस्थायाः कर्तव्यत्वे, विना प्रमाणम् एकस्यौपचारिकत्वकल्पनं न युक्तमित्याचार्याणामाशयः ॥

ननु यदि प्रभा स्वतन्त्रद्रव्यम्, तर्हि दीपे शान्तेऽपि स्वतन्त्रा प्रभा तिष्ठेदेकक्षणं वा। एवं सा प्रभा दीपसमीपे अधिकनिबिडा दृश्यते। दूरदूरे तु क्रमशः विरला दृश्यते। कथमिदं एकस्यैव वस्तुनः संगच्छत इत्यत्राह—**बहलविरलतादीति**। दीपसमीपे **बहलता**=निबिडता, दूरे **विरलता** च **अत्र**=प्रकृते दीपप्रभायाम् **दृष्टानुसारात्**=अनुभवानुरोधात् संगच्छते। वस्तूनां स्वरूपनिर्णये अनुभव एव हि शरणम्। दीपज्वालापि हि मूलादारभ्याग्रपर्यन्तं नैकरूपा दृश्यते। तत् कुतः? इत्यत्रानुभव एव ह्युत्तरम् ॥

विशीर्णा दीपावयवा एव प्रभा इति पक्षे दोषमाह—**सेत्यादि**। **सा**=प्रभा **विशीर्णाः दीपांशाः**= दीपावयवा एव इति **यदि, बहुधा कल्पनागौरवादिः**=अदृश्यमानं विशरणम्, दीपकलिकायाः प्रभायाश्च आरंभभागस्य च स्वरूपे अत्यन्तवैलक्षण्यम्, दाहकत्वादाहकत्वे, प्रसरणे विलक्षणो वेगः, कलिकायाः, प्रभायाश्च मिलित्वा एकद्रव्यारब्धत्वम् इत्यादिबहुविधकल्पनाप्रयुक्तं गौरवं दुष्परिहरम्। अपि च **रत्नादीनां स्थिराणां**=अक्षणिकानाम् **विशरणविहतेः**=विशरणस्य व्याहतत्वात्, प्रभायाः प्रसरणम् रत्नावयवानामेव वक्तव्यम्। तदा अन्ते रत्नस्यैव नाशः स्यात्, तत्तु न दृश्यते, प्रत्युत 'तदेवेदम्' इति प्रत्यभिज्ञया विपरीतमेव दृश्यते। अन्ते **निष्प्रभत्वमेव**=प्रभाशून्यत्वमेव स्यात्। एतदप्यनुभवविरुद्धम्। अतः विशीर्णदीपावयवा एव प्रभेत्ययं पक्षः न साधीयान् ॥

इदं च लोकव्यवहारमाश्रित्य। वस्तुतस्तु रत्नस्य पार्थिवत्वमेव, 'हरिशिलालोकवत्' (श्लो.60) इति आचार्यैरेवाभिधानात्। हरिशिला=मरकतशिला। न हि शिला तेजःपदार्थः। अतः 'हरिशिलालोकः' 'सूर्यालोकः' इत्युभयं न समानम्। आलोकप्रतिफलनाधारत्वात् रत्नस्य, प्रतिफलितायाः प्रभायाः 'रत्नप्रभा' इति व्यवहारः। अतः प्रत्येकं दीपस्य यथा तेजस्त्वम्, तथा रत्नस्य तेजस्त्वं नाचार्यसंमतम्, शिलात्वाभिधानात्। लोकसंमतं वा। वज्रादेः पार्थिवत्वं हि विज्ञानसिद्धम्। 'मणिप्रदीपप्रभयोः' (बु.द्वि.12) इत्यादि प्राचीनबौद्धव्यवहारदर्शनात्, अन्यैरपि स एव क्रमोऽनुसृतः। अत इदं स्थूलदृष्ट्येति मन्तव्यम् ॥

**तत्**=तस्मात् **सप्रभाकं**=प्रभाविशिष्टमेव **तेजः**=दीपरूपं द्रव्यम् **तेजोविशेष एव**। ननु प्रभायाः कथं तेजस्त्वम्? उष्णस्पर्शाभावात् इत्यत्राह—**तिमिरहरतया**=भास्वररूपवत्तयेति भावः। एतत्प्रयुक्तम् किल तिमिरहरत्वम्। न तु हरणक्रिया सार्वदिकी, क्रियाया नित्याया असंभवात्; उपलक्षणं तु भवेत् सा उष्णस्पर्शवत्। ननु तिमिरहरणं किं दीपकलिकायाः क्रिया, उत दीपप्रभाया इति चेत्, दीपस्य, न तु

[प्रभास्वरूपे पक्षभेदविमर्शः]

**57. भाष्ये भास्वत्प्रभादौ प्रतिहतिबहुलीभावपूर्वं यदुक्तं**
**तेन स्रोतस्समाधिं परमतनयतः प्राहुरेके प्रभायाम्।**
**वस्तुन्यस्ते विकल्पे स्फुटविघटनयोर्वक्तुराप्तस्य वाचो-**
**स्तात्पर्यं तर्कमानानुगुणमधिगुणैश्चिन्त्यमन्तेवसद्भिः ॥ ५७ ॥**

---

तदेकदेशस्य। दीपशब्दः ज्वालायाः, प्रभायाश्च साधारणः। अतः कलिका, प्रभा च प्रत्येकं दीपैकदेश एव। ननु यदि प्रभा स्वतन्त्रं द्रव्यान्तरम् तर्हि दीपनाशेऽपि साऽवतिष्ठेत्, यथा घटनाशेऽपि पटस्तिष्ठति। घटपटयोरुभयोरपि स्वतन्त्रद्रव्यान्तरत्वप्रयुक्तं ह्येतदिति चेत्; द्रव्यान्तरत्वेऽपि स्वातन्त्र्याभावान्न तथा। घटनाशे यथा वा तेन सह तद्रूपादेर्नाशः, तथा चिन्त्यताम्। न च रूपं ह्यद्रव्यम्, प्रभा तु द्रव्यमिति वैलक्षण्यं शङ्कनीयम्, पारतन्त्र्ये दृष्टान्तोऽयम्। न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वांशसाम्यं कुत्रापि दृष्टम्, संमतं वा। अतः प्रभा, प्रभावान् इत्यादिप्रामाणिकप्रयोगात् प्रभायाः द्रव्यान्तरत्वेऽपि यथा वा अवयवावयविनोरुभयोरपि द्रव्यत्वेऽपि नियतं पारतन्त्र्यं परमते, तथा प्रभाप्रभावतोरपि। अतश्च दीपकलिकानाशे दीपप्रभाया अपि नाशो युज्यत इति प्रभा द्रव्यान्तरम्, तथैव प्रामाणिकव्यवहारात् ॥ ५६ ॥

अत्र पक्षान्तरमाशङ्क्य समाधत्ते—**भाष्य** इत्यादिना। **भाष्ये**=श्रीभाष्ये, **भास्वत्प्रभादौ**=सूर्यकिरणादौ **प्रतिहतिबहुलीभावपूर्वम्**=सूर्यकिरणस्य हस्तादिना **प्रतिहतिः**, तत्प्रयुक्तश्च **बहुलीभावः** इत्येतत्पूर्वकं **यत्**=प्रसरणम् **उक्तम्**; तेन प्रसरणाभिधानेन **एके**=केचन सयूथ्याः **प्रभायाम्**=प्रभायाः स्वरूपविषये **परमतनयतः**=सांख्यमतन्यायेन **स्रोतःसमाधिम्**=प्रवाहप्रक्रियाम् **आहुः**। जलं यथा वा प्रवहत् क्रमशः क्षीणं भवति, तथैव प्रभायाः प्रसरणं प्रवाहरूपमाहुः। नो चेत् प्रभायाः प्रतिघातः, संकोचविकासादिकं च दुर्घटं भवेत्। एवञ्च प्रभा प्रभावान् इति स्वतन्त्रं पदार्थद्वयम् इति कथम्?

तर्ह्यस्तु पक्षद्वयमपि, का हानिः? इति चेत् तत्राह—**वस्तुनीत्यादि**। **वस्तुनि विकल्पे अस्ते**=निरस्ते सति, **स्फुटविघटनयोः**=स्पष्टविरोधयोः **आप्तस्य वक्तुः वाचोः**=वचनयोः, **तात्पर्यम्**, **अधिगुणैः**= अधिगतप्रज्ञाविवेकविनयादिसद्गुणैः **अन्तेवसद्भिः**=शिष्यैः **तर्कमानानुगुणम्**=तर्कसहितप्रमाणानुगुणं यथा, तथा तात्पर्यम् **चिन्त्यम्**=आलोचनीयम्। **अयं भावः**—'क्रिया विकल्प्यते, न तु वस्तु' इति न्यायः प्रसिद्धः। अतः परस्परविरुद्धौ पक्षौ कथं समानतया अङ्गीकर्तुं शक्यौ। क्रियाविषये विकल्पसंभवेऽपि वस्तुनि न संभवः। अन्यतरपक्षस्य परित्याग एव भवत्विति न वक्तुं शक्यम्; उभयोरपि पक्षयोराप्तोक्तत्वात्। अतस्तात्पर्यभेदात्कथंचित् समन्वयः कर्तव्यः। अन्ततः, 'परमतमनुसृत्य तथोक्तम्' इत्येवं कल्पनया वा विरोधः परिहरणीयः ॥

तर्कमानानुगुणमित्यत्र तर्कमानेत्यत्र न द्वंद्वः। तर्कस्य प्रमाणानुग्राहकमात्रत्वेन, प्रमाणत्वाभावात्। अतः तर्कानुगृहीतमानानुगुणमित्येवार्थः। आरोपात्मकस्य तर्कस्य प्रमाणत्वासंभवात्। ननु तर्हि 'प्रमाणतर्कानुगुणम्' इति सर्वार्थसिद्धिवचनं कथमिति चेत्? किं मन्यसे त्वमत्र महात्मन्! जानाम्युपहासम्। किन्तु

[दीपज्वालायाः स्वरूपम्]

58. **प्राच्ये स्नेहादिनाशे चरम इव दृढोऽनन्तरं दीपनाशः**
**सामग्र्यन्याऽन्यकार्यं जनयति च न चानेकदीपप्रतीतिः ।**

भवद्दृष्ट्या 'तर्कप्रमाणानुगुणम्' इति खलु वक्तव्यम्, न तु 'प्रमाणतर्कानुगुणम्' इति । 'तर्कमान'पदयोः यथाकथञ्चित्, तर्कानुगुणमानपरत्वसंभवः, न तथात्र वक्तुं शक्यम् । प्रमाणानुग्राहकतर्कपरत्वे हि तर्कस्य प्राधान्यमवर्जनीयम् । अतश्च तर्कस्यार्थनिश्चायकत्वसिद्धिरप्यवर्जनीयेति चेत्, तर्हि प्रमाणतर्केति वा कथं द्वंद्वः? अल्पाच्तरं हि पूर्वं वक्तव्यम् । न च अभ्यर्हितं पूर्वमिति कुतो न भवेत् इति चेत्, तर्हि प्रमाणस्य तर्कापेक्षयाभ्यर्हितत्वमावश्यकम् । अतश्च प्राधान्याप्राधान्यस्वरूपविवेचनक्लेशपरिणामभूतमिदं साङ्कर्यम् । चक्षुषा रूपग्रहणे हि आलोकस्यानिवार्यता वर्तते । न हि तावता रूपग्रहणे आलोकस्यैव प्राधान्यं वक्तुं शक्यम् । अथ सन्त्यनेकानि कारणान्येकस्य कार्यस्य । तेषु कस्य प्राधान्यं विविच्य वक्तुं शक्यमिति चेत्; प्रतीत्यसमुदयवादमुपक्षिपसि त्वम् । तत्तु पूर्वमेव (पु.59) परिशीलितम् । किमधिकोक्त्या? आचार्यवर्यैरेवाग्रे (बुद्धि.43, 60) 'मानप्रत्यूहघाती' इति प्रमाणानां प्रामाण्यविरोधिशङ्कादिनिरासकस्तर्क इति प्रमाणसंरक्षकत्वमेवोक्तं तर्कस्य, न तु स्वयं प्रमाणत्वम् । 'प्रमाणानुग्राहकस्तर्कः' इत्यस्याप्ययमेवार्थ इति विषयसिद्धिः प्रमाणैरेव । मानवस्य विचारप्रियत्वात्, अस्ति तर्कस्य महत् स्थानमिति सूचयितुमेवाचार्यैः 'तर्कमानानुगुणम्' 'प्रमाणतर्कानुगुणम्' इत्याद्युक्तमिति तर्कः क्वचिदपि विषये न स्वतः प्रमाणमित्यवगन्तव्यम् । किं वृथाशब्दवर्धनेन! 'मानाधीना मेयसिद्धिः' । मानानि च प्रत्यक्षानुमानागमाः इत्येव सिद्धान्तः । अतः तर्कः मानानुग्राहकः, न मानम् । बौद्धैः तर्कस्य स्वातन्त्र्याङ्गीकारादेव ते 'हैतुकाः' संवृत्ताः ॥

वस्तुतस्तु सत्तर्कः, दुस्तर्कश्चेति तर्को द्विविधः प्रमाणानुग्राहकस्तर्कः सत्तर्कः । प्रमाणाननुग्राहकः उच्छृङ्खलस्तर्कः दुस्तर्कः, कुतर्क इत्यादिशब्दैः व्यवह्रियते । ननु तर्कानुगृहीतमेव प्रमाणं प्रमाणं भवति, प्रमाणानुगुण एव सत्तर्क इति चेदन्योन्याश्रये पर्यसानमिति का गतिरिति चेत्, महानयं विचारः । तर्कप्रकरण एव (बुद्धि.60) विचारयामः, सह्यताम् । विषयानुरोधी सत्तर्कः, तदननुरोधी दुस्तर्क इति सारो गृह्यताम् ॥

अत्र आप्तस्य वक्तुः इत्येकवचनेन, वाचोः इति द्विवचनेन च, एकस्यैव वचनयोः परस्परविरोधे, अन्यतराप्रामाण्यं यथा न वक्तुं शक्यम्, किन्तु विषयभेदादिना निर्वाहः, उभयोरपि एकेनैवोक्तत्वात्, तथा वक्तृभेदेऽपि, उभयोरपि प्रामाणिकत्वेऽन्यतराप्रामाण्यं न वक्तुं शक्यम्, किन्तु अधिकारिभेदेन, अवस्थाभेदेन, कालभेदेन वा कथञ्चिन्नयनमेव वरम् । न तु महतां विषये अपचारः कर्तव्यः इति शिक्षयितुमत्राचार्यैरेवमनुगृहीतमिति ज्ञेयम् । अत एव 'धर्मस्य तत्त्वं निहितं गुहायाम्' इतिवत् **'तत्त्वस्य तत्त्वं निहितं गुहायाम्'** इत्याद्यपि पठितव्यम् ॥ ५७ ॥

ननु पूर्वं 'दीपादीनाम्' इत्यादौ दीपस्य क्षणभङ्गुरत्वमुक्तम् । तत् कुतः? इत्यत्र, तत् साधयति- **प्राच्य इत्यादि । चरमे इव, अन्तिमे स्नेहादिनाशे**=तैलवर्त्योर्नाशे यथा, तथैव **प्राच्ये**=पूर्वतने **स्नेहादिनाशे, अनन्तरं दीपनाशो दृढः** । तथा च 'प्राथमिकः तैलनाशः स्वानन्तरक्षणे दीपनाशजनकः, तैल-

**साम्यादेः स्यात्तु तद्धीः प्रवहणभिदुराः सप्रभास्तत् प्रदीपाः**
**निर्बाधा भास्करादौ प्रथयति नियतं प्रत्यभिज्ञा स्थिरत्वम् ।। ५८ ।।**

नाशत्वात्, अन्तिमतैलनाशवत्' इत्यनुमानेन प्रतिक्षणं दीपनाशः सिद्ध्यति । अनेन दीपज्वालाभेदः सिद्धः। एवं ज्वालाभेदानुमानेऽप्रयोजकशङ्कायां तद्वारकमनुकूलतर्कमाह— **सामग्रीत्यादिना । अन्या च सामग्री अन्यकार्यं जनयति** । कारणभेदात् कार्यभेदः संप्रतिपन्नः । तन्तूनां भेदे पटभेदम्, मृदो भेदे घटभेदं को वा न जानाति । प्राथमिकतैलबिन्दुना प्राथमिकज्वालावत्, द्वितीयतैलबिन्दुना द्वितीयायाः ज्वालायाः उत्पत्तिरप्यनिवार्या । तथा चानुमानम्— 'द्वितीयः तैलबिन्दुरपि दीपज्वालान्तरजनकः, तैलबिन्दुत्वात्, प्राथमिकतैलबिन्दुवत्' इति । ज्वालाभेदसिद्धावपि तेषां नाशे किं प्रमाणमित्यत्र-**न चेत्यादि । अनेकदीपप्रतीतिः**=अनेकदीपज्वालानां युगपदनुभवः **न च**=नैवास्ति । 'यदि स्यादुपलभ्येत' इति योग्यानुपलब्ध्यैव ज्वालानां नाशोऽपि सिद्ध्यत्येव । एवं भेदे सिद्धे 'सैवेयं दीपज्वाला' इति प्रत्यभिज्ञा कथमित्यत्र— **साम्यादेः** इत्यादि । **साम्यादेः**= साजात्यादिकारणवशात् **तद्धीः**='सैवेयम्' इत्यैक्यधीः **स्यात्तु**=भवतु कामम्, तावता न कापि हानिरिति सूचयितुं **तुशब्दः** । 'साम्यादेः' इत्यादिपदेन दोषादेरपि ग्रहणम् ।।

**अयं भावः**— 'सैवेयं दीपज्वाला' इति कस्य प्रतीतिमादायाक्षेपः? किं ज्वालाभेदज्ञानवतः, उत तद्रहितस्य? ज्ञानवतस्तत्प्रतीतिः साम्यात्=साजात्यात् । 'सैवेयं गूर्जरी' 'ह्यः यदौषधं मया पीतम्, तदेवाद्यापि पीतम्' इत्यादौ सर्वेषामप्यस्ति तथा प्रतीतिः । ह्यः औषधं यत् पीतम्, तत् पीतमेव पूर्वेद्युः, अद्य तस्याभावात् पुनः कथं तस्य पानसंभवः? अतः साजात्यमूलमेव तथा वचनमिति संप्रतिपन्नम् । ज्ञानरहितानां व्यवहारस्तु भ्रममूलक एव । न तेन ज्वालैक्यसिद्धिः । एवं सर्वप्रमाणमूर्धन्ये प्रत्यक्षेऽपि प्रमाभ्रमविभागस्य सत्त्वादेव पक्षभेदाः प्रावर्तन्त । एतत्परिहारः कथं कर्तव्यः? इत्यादिकं बुद्धिसरे (श्लो.9,10) प्रदर्श्यते ।।

विचारमुपसंहरति— **प्रवहणेत्यादिना । तत्**=तस्मात् **सप्रभाः प्रदीपाः प्रवहणभिदुराः**=भिन्नभिन्नज्वालानां प्रवाहरूपा एवेत्येव युक्तम् । प्रभाविशिष्ट एव दीपपदार्थः । स च प्रवाहरूपेण स्थिरः, न तु स्वरूपतः । तर्हि प्रत्यभिज्ञा स्थैर्यविषयिणी नास्त्येव किम्? इति शङ्कायामाह=**निर्बाधेत्यादि । भास्करादौ**= सूर्यादौ तेजसि **निर्बाधा प्रत्यभिज्ञा**=बाधकरहिता 'स एवायम्' इति प्रत्यभिज्ञा **नियतं**=अव्यभिचरितं **स्थिरत्वं प्रथयति**=प्रकटयति । यत्र वस्तुभेदो निर्णीतः, तत्रैव तथा । वस्तुभेदाभावे तु सूर्यादिरूपज्योतिषि तथात्वं नास्त्येवेति सूर्यादीनां स्थिरत्वसिद्धिः । वस्तुतस्तु घटादौ प्रत्यभिज्ञायाः प्रामाण्यमबाधितमेवेति न कापि हानिः सिद्धान्ते ।।

ननु शब्दप्रयोगस्य स्वायत्तत्वे ज्वालाभेदं जानतां कुतस्तथा व्यवहार इति चेत्, ज्वालाभेदः न हि प्रत्यक्षसिद्धः । किञ्च स्वायत्ते शब्दप्रयोगे किमिति 'गङ्गायास्तीरे घोषः' इत्यनुक्त्वा 'गङ्गायां घोषः' इति व्यवहरन्ति प्रामाणिका अपि । 'शूरो देवदत्तः' इत्यनुक्त्वा 'सिंहो देवदत्तः' इति वदन्ति जनाः । अत्र प्रत्यक्षव्यवहारापेक्षया कुत्रचित्परोक्षव्यवहार एव स्वारस्यातिशयः प्रतीयत इति मन्यन्ते सुशिक्षिता जनाः ।

**[सुवर्णस्य पर्थिवत्वम्]**

**59. वर्णानां तादृशत्वादतिकठिनतया गौरवस्यापि भूम्ना**
**धात्रीभागौः प्रभूतैः स्फुटमिह घटिता धातवो हाटकाद्याः ।**

अत एवास्या वृत्तेः 'गौणी' इति व्यवहारः । एतादृशस्थले मुख्यव्यवहारापेक्षया गौणमेव व्यवहारमाद्रियन्ते सुशिक्षिताः, यत एवं व्यवहारे गुणः प्रकटो भवति । अतः 'स्वायत्ते शब्दप्रयोगे' इत्यादिनियमे 'अर्थविशेषतात्पर्याभावे सति' इत्यपि योजनीयम् । अर्थविशेषतात्पर्ये सति तु गौणोऽपि प्रयोग उपादेय एव । न तावन्मात्रम्, गौण एव प्रयोग उपादेयः । एवञ्च प्रकृतेऽपि 'ह्यो यद्दत्तमौषधम्, तदेवाद्यापि दत्तम्' इत्यप्रयोगे, 'अद्यान्यदेवौषधं दत्तम्' इति कथने ह्यो दत्तौषधं परिवर्त्यान्यदेवौषधं विलक्षणं दत्तमित्यर्थः स्यात् । तेन दिनद्वयौषधयोस्साजात्यं न स्यात् । एवं 'गङ्गायां घोषः' इत्यादावपि 'गङ्गातीरे घोषः' इति कथने तीरपदार्थः कदाचिदपेक्षानुरोधेन अनेकक्रोशपर्यन्तप्रदेशरूपोऽपि भवेत् । तेन विवक्षितार्थो न सिद्ध्येत् । अतः अर्थदृष्ट्या गौणप्रयोग एव श्रेयान्, यतः सः 'गौणः' । अत एतादृशप्रयोगस्थले गौणप्रयोग एवादरणीयः । अत एव च 'गौणमुख्ययोर्विरोधे मुख्ये कार्यसंप्रत्ययः' इति नियमोऽपि शब्दशास्त्रमात्रसीमितः, न त्वर्थप्रधानशास्त्रे ॥

नामव्याकरणं ह्येतच्छब्दशास्त्रं समीरितम् । रूपव्याकरणं चान्यद्वेदोपनिषदादिकम् ॥

अर्थप्रधानशास्त्रेऽपि 'न विधौ परश्शब्दार्थः' इति नियमोऽपि न्यायप्रदर्शनपरब्रह्मसूत्रादिशास्त्र-सीमितः । उपदेशप्रधानशास्त्रे तु अर्थस्वारस्यानुरोधेन गौणप्रयोगोऽनिवार्यः । गौणप्रयोगः कीदृशगुणप्रयुक्तः? इत्यत्र तु अनुभव एव शरणम् । अनुभवा अपि कक्ष्याभेदेन यदि भिद्येरन्, तदा तत्कक्ष्यानिर्णयेनैव विषयनिर्णयः । प्रकृतेऽध्यात्मशास्त्रे 'प्रस्थानत्रय'वाच्येषु शास्त्रेषु शारीरकमीमांसाशास्त्रं न्यायप्रधानम् । इतरे द्वे उपदेशप्रधाने । तत्राप्युपनिषदः सर्वथानुभवप्रधानाः । गीताशास्त्रमप्युपदेशप्रधानम् । यद्यप्युपासना, भक्तिः, ज्ञानमिति पर्यायपदानि संप्रदायदृष्ट्या, अथाप्यर्थे सूक्ष्मं तारतम्यं वर्तते । त्रयाणामुद्देशैक्येऽपि विन्यासे विशेषो वर्तत एवेत्यादिकं तत्तत्प्रकरणे प्रदर्श्यते ॥

**अत्रेदमवधेयम्**—अत्रैव सर्वेऽपि ग्रन्थपण्डिता विफला जाताः, यत् अर्थप्रधानेऽपि शास्त्रे गुणस्य प्राधान्यममन्वाना वृथा शब्दं वर्धयायासुः । सहस्रनामपीठिकायाम् 'यानि नामानि गौणानि विख्यातानि महात्मनः। ऋषिभिः परिगीतानि' इत्येतदवधेयम् । वेदान्तशास्त्रे कथमिदं संभवि? इति तु न प्रष्टव्यम् ॥

न संभवेद्यदि ब्रह्मन्! तूष्णीं त्वं तिष्ठ का क्षतिः? कं वा लाभमपश्यन् ते वृथाशब्दविवर्धनात् ॥
सत्यापचारभीत्या हि स्थातव्यं स्वहितेप्सुभिः । वदामो बहुधा सत्यमुपर्यपि तदा तदा ॥
सर्वदा कटु सत्यं स्यादहंकृतिमतां ध्रुवम् । पूरयेयुर्निन्दयैव पापभीतिं विनैव ते ॥ ५८ ॥

तेजोविचारे सुवर्णस्य तैजसत्वं वैशेषिकोक्तं निरस्यति—**वर्णानामित्यादिना** । **वर्णानां**=पीतिम-वर्णादीनां **तादृशत्वात्**=पार्थिवत्वात्, पीतरूपं हि पृथिव्या एव । **अतिकठिनतया**=शिलादाविव अत्यन्तसहजकठिनस्पर्शवत्त्वात् **गौरवस्य भूम्ना अपि**=गुरुत्वस्य अधिकतया च **इह**=जगति **हाटकाद्या**

**तादृक्त्वेऽपि स्फुरत्ताद्यनितरसुलभं किञ्चिदन्वीक्ष्य तज्ज्ञैः**
**व्याख्यातं तैजसत्वं विधितदितरयोस्तन्त्रसौकर्यसिद्ध्यै ॥ ५९ ॥**

**[तमसोऽतिरिक्तत्वम्]**

**60. नैल्यात् भौमं तमिस्रं चटुलबहलताद्यन्वयात् तन्न नैल्यं**
**छायावत्पारतन्त्र्यं त्वयस इव मणौ दृष्टिसिद्धात् स्वभावात् ।**

**धातवः**=सुवर्णप्रभृतयः धातवः **प्रभूतैः**=अधिकतरैः **धात्रीभागैः**=पृथ्वीभागैः **स्फुटम्**=स्पष्टं यथा तथा **घटिताः**=मिश्रिता एव । पञ्चीकरणप्रक्रियया पृथिव्यामपि तेजोभागः वर्तत एव । अत एव वर्णे भास्वरत्वं दृश्यते । परन्तु पञ्चीकरणे पृथिव्यादिव्यहारभेदकारणस्य (श्लो.23) अभिहितत्वात् सुवर्णे पृथिवीभागाधिक्य-हेतूनामनुपदमुक्तानां प्राबल्याच्च सुवर्णं पार्थिवमेवेत्याशयः । ननु तर्हि 'भुञ्जीत तैजसे पात्रे' 'तैजसं न यतेर्ग्राह्यम्' 'न हरेत्तैजसम्' इत्यादौ सुवर्णस्य तैजसत्वेनाभिधानात्, कथं पार्थिवत्वमुच्यते इत्यत्राह— **तादृक्त्वेऽपीत्यादि । तादृक्त्वेऽपि**=पूर्वोक्तयुक्त्या सुवर्णस्य पार्थिवत्वेऽपि, **अनितरसुलभम्**=तेजोभिन्नेतर-भूतेषु द्रष्टुमशक्यम् **स्फुरत्तादि**=भास्वररूपादिकं **किञ्चित्**=लेशतः **अन्वीक्ष्य**=समीक्ष्य, **तज्ज्ञैः**=तद्रहस्यज्ञैः धर्मशास्त्रकारैः **विधितदितरयोः**=उक्तरूपयोः विधिनिषेधयोः विषये **तन्त्रसौकर्यसिद्ध्यै**=शास्त्रीय-व्यवहारस्य सौलभ्यसिद्ध्यर्थं **तैजसत्वम्**=तेजस्यन्तर्भावरूपं तैजसत्वम् **व्याख्यातम्**=विशेषेण ख्यापितम् । तेजसः स्वतः पावनत्वश्रेष्ठत्वादिगुणयोगात्, सुवर्णे तद्दर्शनात् विधिनिषेधौ सार्थकाविति प्रदर्शनबुद्ध्या धर्मशास्त्रकारैः सुवर्णं तैजसमित्युक्तम् । तत्तु प्रकृततत्त्वनिर्णयाय नोपयुज्यत इति भावः । अत्र वक्तव्यं पूर्वमेवोक्तम् (श्लो.17) ॥ ५९ ॥

तेजोनिरूपणानन्तरम् अपां निरूपणे प्रसक्ते, तत्र विशिष्यवक्तव्यांशस्याभावात्, तदनन्तरप्राप्तां पृथिवीं निरूपयन्, आदौ अत्यन्तविवादग्रस्तं तमस्स्वरूपं विचारयति—**नैल्यादित्यादिना । तमिस्रम्**=तमः **भौमम्**=पार्थिवम्, **नैल्यात्**=नीलरूपवत्त्वात् । यत्र नैल्यम्, तत्र पार्थिवत्वम् इति व्याप्तेः सत्त्वात् तमः न अभावः, नापि मीमांसकमत इवातिरिक्तद्रव्यम्, किन्तु पार्थिवम् । नैल्यं रूपमेव तम इति न्यायकन्दलीकार-मतम् । तदपि निरस्यति—**न नैल्यमिति** । तत्र हेतुः—**चटुलबहलताद्यन्वयादिति । चटुलत्वं**=विरलत्वम्, चलनशीलता वा । **बहलत्वम्**=घनीभूतता । गुणे एतादृशधर्माणामनन्वयात् न नीलरूपमेव तमः । ननु छायापि तमोविशेषः। सा तु नियमेन छायाहेतुभूतपुरुषाद्यधीना । यदि तमः द्रव्यम्, तर्हि पुरुषादिनियत-पारतन्त्र्यं कथमित्यत्र—**अयसः**=लोहविशेषस्य **मणौ**=कान्तमणौ इव **छायावत्पारतन्त्र्यम्**=छायाहेतु-भूतपुरुषादिपारतन्त्र्यम् **दृष्टिसिद्धात् स्वभावात्**=प्रत्यक्षसिद्धात् पदार्थानां स्वभावात् भवति । छाया नाम पुरुषादिभिः सूर्यातपस्यावरणात् आलोकाभावप्रयुक्ता भवति । सा तु पुरुषचलनाद्यधीना प्रत्यक्षं दृश्यते । सा कथं स्वतन्त्रं द्रव्यान्तरं स्यात् । अतः छायायाः तमोरूपायाः आलोकाभावरूपता आवश्यकी । अतः तमः नातिरिक्तं द्रव्यमिति चेत्, नियतान्यपारतन्त्र्यमात्रात् पदार्थान्तरत्वाभावे, अयसः अयस्कान्तमण्यधीनत्वस्य नियतत्वेऽपि पदार्थान्तरत्वं सर्वैः स्वीकृतम् । अतः नियतपारतन्त्र्यमपि न द्रव्यत्वे बाधकम् । इदमापाततः—

**स्पर्शाख्यातिर्न रूपं हरति हरिशिलाऽऽलोकवत्, तत्र चाक्ष्णोः**
**नालोकोऽर्थ्यः ससिद्धाञ्जननयनदिवाभीतदृष्ट्यादिनीतेः ॥ ६० ॥**

अयसो मणिपारतन्त्र्यं सामीप्ये सत्येव, छाया तु पुरुषेणावरणेन सृष्टा । अत एव छाया न पदार्थान्तरमित्यन्ते वक्ष्यते । ननु तमः न रूपिद्रव्यम्, स्पर्शशून्यत्वात् इति चेत्— **स्पर्शाख्यातिः**=स्पर्शस्याग्रहणम् **हरिशिलालोकवत् रूपं न हरति**=इन्द्रनीलरत्नप्रभावत् रूपाभावमपि न साधयेत् । इन्द्रनीलरत्नस्य प्रभायां हरितवर्णं दृश्यते, न तु स्पर्शः । यद्यप्यनुपदमुक्तं रत्नादीनां पार्थिवत्वम्; अथापि स्थूलदृष्ट्यैवेदम् । अथवा जलसंयुक्तवह्नेः उष्णस्पर्शः गृह्यते, न तु रूपम् । अन्यस्य गुणस्याग्रहणं गृह्यमाणं गुणं कथं अपलपेत्? यत् न गृह्यते, तत्र तदभावः सिद्ध्येत्, न त्वन्यस्य गृह्यमाणस्यापि अपलापः, जले लीनलवणवत् । नन्वेवमपि तमसः रूपिद्रव्यत्वे आलोकसहकृतचक्षुर्ग्राह्यत्वं स्यात्; रूपिद्रव्यचाक्षुषत्वावच्छिन्नं प्रति आलोकस्य सहकारित्व-नियमात् । तथा च 'तमो न रूपिद्रव्यम्, आलोकासहकृतचक्षुर्ग्राह्यत्वात्, आलोकाभाववत्' इत्यनुमानेन तमसः रूपवद्द्रव्यत्वाभावः साध्यत इति चेत्, तत्राह— **तत्र चेत्यादि** । **तत्र च**=तमसः ग्रहणे च, चकारस्त्वर्थः, तेन वैलक्षण्यं सूच्यते । इतररूपवद्द्रव्यविलक्षणत्वात्, तत्प्रत्यक्षे **अक्ष्णोः**=चक्षुरिन्द्रियस्य; नात्र द्विवचनं विवक्षितम्, स्वरूपकीर्तनमात्रम्, **आलोकः न अर्थ्यः**=अपेक्षणीयः । घटादेः चाक्षुषे परं कथम् आलोकः अपेक्षणीय इत्यत्र दृष्टान्तमाह— **ससिद्धाञ्जनेत्यादि** । **सिद्धाञ्जनम्**=निधिशास्त्रप्रसिद्धः नेत्राञ्जन-विशेषः । तेन सहितम् ससिद्धाञ्जनम्, तादृशं नयनम् । **दिवाभीताः**=घूकाः पक्षिविशेषाः । **तेषां दृष्टिः**=दर्शनम् । अथवा **दृष्टिः**=चक्षुरेव । 'दृग्दृष्टी' इत्यमरः । अकर्तरि च कारके संज्ञायां क्तिन् । सिद्धाञ्जनलिप्तं नयनम्, घूकादीनां नयनं च दृष्टान्तः । अञ्जनविशेषलिप्तं चक्षुः अन्धकारेऽपि पदार्थान् पश्यति, भूम्या तिरोहितं निध्यादिकमपि गृह्णातीति तन्त्रशास्त्रप्रसिद्धम् । घूकादयस्तु रात्रावेव पश्यन्तीति प्रसिद्धम् । 'दिवाभीतः' इति तेषां नामान्तरम् । **एतन्नीत्या**=न्यायेन आलोको न अर्थ्यः=अपेक्ष्यः । एवञ्च एषां चक्षुषा द्रव्यग्रहणे आलोकः नापेक्ष्यते । एवं तमसो ग्रहणेऽपि आलोकापेक्षा मास्तु का हानिः? इत्याशयः । ततश्च यथा आलोकविषयकचाक्षुषे आलोको नापेक्ष्यते, तथा तमोविषयकचाक्षुषेऽपि आलोको न कारणमिति अनुभवानुरोधेन कल्प्यताम् । द्रव्यचाक्षुषेऽपि, आलोकविषयके आलोकः न सहकारीति सर्वसंमतम् । तथा च आलोकासहकृतचक्षुर्ग्राह्यत्वं आलोक एवास्ति इति तत्र व्यभिचारः । यदि 'आलोक-भिन्नत्वे सति' इति हेतुविशेषणं विवक्षितम्, तर्हि 'तमोभिन्नत्वे सति' इत्यप्युच्यताम्, अनुभवानुसारात् । तस्मात् तमः पार्थिवमेव ॥

**वस्तुतस्तु**— 'यस्तमसि तिष्ठन्' (बृ.5-7-13) इत्याद्यन्तर्यामिब्राह्मणे तमश्शब्दवाच्यस्य परमात्मशरीरत्वोक्त्या, तस्याभावरूपता न संभवतीत्यभिप्रायेणैव तमसः द्रव्यत्वं साध्यते । न च तत्र तमश्शब्दार्थः प्रकृतिरेव, प्रकृतेरवस्थाविशेष एव वा, न तु पार्थिवपदार्थः; 'यस्य पृथिवी शरीरम्', इति पृथिव्याः प्रत्येकं निर्देशादिति वाच्यम्; पदस्य समानत्वादेव एतत् साधितम् । परन्तु, 'शब्दैक्यं ह्यैकजात्यं व्यभिचरति' (श्लो.54) इति पूर्वमुक्तन्यायस्यात्रापि समानत्वात्, प्रकृतिपर्यायः तमश्शब्दः अन्य एव ।

[तमो नालोकाभावादिरूपम्]

**61. नालोकाभावमात्रं तिमिरम्, अविरतं नीलमित्येव दृष्टेः**
**नैल्यं त्वारोपितं चेत्, कथमिव न भवेत् क्वापि कस्यापि बाधः ।**
**आरोपे चात्र नैल्यं न भवति नियतं भास्वरान्यत्वसाम्यात्**
**नात्रादृष्टं नियन्तृ प्रतिनियतगुणारोपक्लृप्तेर्गुरुत्वात् ।। ६१ ।।**

'तमःपरे देवे एकीभवति' (सु.) इति श्रुतिरपि । सूर्येऽस्तमिते, भूम्यैव सूर्यालोकतिरोधाने, भूमिच्छायायामेव लोकेऽन्धकारव्यवहारात्, सूर्यालोकाभाव एव लौकिकं तमः इत्येव स्वरसम् । किं बहुना! लोके परिदृश्यमानायाः छायायास्सूर्यालोकाभावरूपता तु सर्वानुभवसिद्धा । सूर्यालोकस्य तिरोधानं हि तत्र प्रत्यक्षसिद्धम् । न च 'छायातपौ' (कठ.3-3-1) इति श्रुत्या छायायाः स्वतन्त्रद्रव्यत्वमावश्यकमिति चिन्त्यम्; जीवस्यात्यन्तपारतन्त्र्यबोधनायैव तथानिर्देशात् । छाया हि छायावत्परतन्त्रा । न च सिद्धान्तेऽतिरिक्ताभावानङ्गीकारात्तमसः भावरूपत्वमावश्यकमिति वाच्यम्; तथापि छायाया तदधिकरणभूम्यादिरूपतैवेति नातिरिक्तपदार्थत्वसिद्धिः । एवञ्च वैदिकैः पूर्वमीमांसकैः तमसोऽतिरिक्तत्वसाधनमपि तमश्शब्ददृष्ट्यैव । एतज्जानन्तोऽप्याचार्याः 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इतिवत्, वैदिकजनसौहार्दसूचनायैवं वदन्तीति भाव्यम् ।। ६० ।।

तमसः आलोकाभावरूपत्वमपि निराकरोति—**नालोकेत्यादिना** । **तिमिरम्**=तमः **आलोकाभावमात्रं न** । आलोकाभावान्वयव्यतिरेकवत्त्वं तमःप्रतीतावस्तीत्यतः तमसः आलोकाभावरूपत्वमङ्गीक्रियते, परन्तु तावन्मात्रं तमः न भवत्येव । तत्र हेतुः-**'नीलम्' इत्येव अविरतं दृष्टेः** । न ह्यभावस्य नीलरूपवत्त्वसंभवः। नाप्यन्यथा कदाचिदपि प्रतीतिः, सर्वदापि एकरूपतयैव प्रतीतेः । कदाचिदपि बाधकप्रत्ययादर्शनादिति भावः। प्रतीतिमात्रान्न वस्तुसिद्धिः, चन्द्राल्पत्वादेरपि सत्यत्वप्रसङ्गात् । तत्र दूरत्वादिर्दोष इति चेत्, प्रकृतेऽपीति वदतो **न्यायकन्दलीकारस्य** मतं निराकरोति—**नैल्यं तु आरोपितमेव इति चेत्**; बाधकप्रत्ययाद्यभावेऽपि आरोपाङ्गीकारे, **क्वापि**=यत्र कुत्रापि **कस्यापि**=यस्य कस्यापि **बाधः कथमिव न भवेत्**=सर्वत्र सर्वस्यापि बाध एव स्यात्, सर्वत्र सर्वस्याप्यारोपसंभवात् । तथा च न किञ्चिदपि सिद्ध्येत् । दूषणान्तरमप्याह—**आरोपे चाङ्गीकृते, अत्र**=प्रकृते तमसि **भास्वरान्यत्वसाम्यात्**=भास्वरशुक्लेतरत्वस्य इतरसर्वरूपेषु साम्यात् **नैल्यम् नियतं** न भवति । आलोके तु भास्वरशुक्लं वर्तते । आलोको यत्र नास्ति, तत्र तदन्यत् यत्किञ्चित् रूपमपि न प्रतीतुमर्हति । एवं सति, सर्वत्र सर्वेषां नीलरूपमेवारोपितं भासत इति कथं नियमः कर्तुं शक्यते । दृश्यते च नीलिमा । सूचितं च 'नैल्यमित्येव' इति एवकारेण । अतः नैल्यस्यारोपो न भवति । ननु अदृष्टविशेषवशात्, सर्वेषामपि सर्वदापि नीलरूपस्यैवारोपो भवतु, संसारिणामेकरूपतया त्याज्ये उपादेयत्वबुद्धिवदिति चेत्—**अत्र अदृष्टं न नियन्तृ**=नियामकं न भवितुमर्हति । तत्र हेतुः—**प्रतिनियतेत्यादि** । **प्रतिनियतः गुणः**=नैल्यम् । **तस्यारोपक्लृप्तेः**=आरोपकल्पनस्य **गुरुत्वात्**=गौरवग्रस्तत्वात् न कल्पनासंभवः। संसारिदृष्टान्तो विषमः, असंसारिणामपि सत्त्वात् । कल्पनस्य लाघवपक्षपातित्वात् । सर्वेषां सर्वदा एकरूपेण अदृष्टं फलोन्मुखं सत् एकरूपामेव प्रतीतिं जनयतीति कल्पनं

**[तमसोऽतिरिक्तत्वे हेतुः]**

62. **ध्वान्तं तेजश्च नासीदिति मुनिभिरुपाख्यायि संवर्तवार्ता**
**भावाभावौ निषेद्धुं तदुभयविधिवत् व्याहतत्वादशक्यम्।**
**अन्तर्यन्तुश्च तेजस्सहपठिततमो देह इत्यामनन्ति**
**स्याच्चाभावोऽपि भावान्तरमतिमथने वक्ष्यमाणक्रमेण ॥ ६२ ॥**

केवलहठमात्रम्। नैल्यं आरोपितं चेत्, कुत्रारोपितम्, आरोपस्याधिष्ठानं किम्? न ह्यधिष्ठानमन्तरारोपसंभवः। तादृशाधिष्ठानस्य दुर्वचत्वात् नैल्यमारोपितमिति न साधीयः। अतश्च तमसः अतिरिक्तत्वकल्पन एव लाघवात् तमः अतिरिक्तः पदार्थः, न तेजोभावमात्रम्। तत्रापि मीमांसकमतवत् नातिरिक्तं द्रव्यम्, नीलरूपस्य पृथिव्यसाधारणत्वात्। अतः तमः पार्थिवं द्रव्यम् ॥

**वस्तुतस्तु**—ग्रीष्मातपेन संतप्तस्य गृहान्तःप्रवेशसमये कृष्णवर्णातिरिक्तं रूपं सर्वथा न प्रतिभातीति सर्वानुभवसिद्धम्। एतेन ज्ञायते चक्षुरिन्द्रियं किञ्चिदपि स्वकार्यं कर्तुं यदा न शक्नोति, चक्षुरिन्द्रियस्यैव स्थगितत्वात्, तदा एवं कृष्णवर्णमात्रं भासत इव, न तु वस्तुतः कृष्णवर्णं तत्र वर्तते। अतः 'नीलं तमः' 'नीलं नभः' इत्यादिप्रतीतयः भ्रान्तय एव। अतः पूर्वश्लोकान्ते उक्तः आशयः अत्रापि स्मर्तव्यः ॥ ६१ ॥

तमसः अभावरूपत्वे श्रुतिविरोधमप्याह—**ध्वान्तमित्यादि**। **ध्वान्तं**=तमः **तेजश्च नासीत् इति संवर्तवार्ता**=प्रलयवर्णना **मुनिभिः उपाख्यायि**=अभ्यधायि। 'नासीत् तमः ज्योतिरभूत्' इति हि प्रलयवर्णना दृश्यते पुराणादौ। तमोऽपि नासीत्, ज्योतिरपि नाभूदिति खलूच्यते। यदि तेजोभावस्तमः, तर्हि 'ज्योतिः नाभूत्' इत्येव वक्तव्यम्। 'तमोऽपि नासीत्' इति प्रत्येकं तमसोऽपि निषेधात्, ज्योत्यभावातिरिक्तं तम इति सिध्यति। अस्तु ऋषिवचनम्। किमायातं तावतेत्यत्र तदुपपादयति—**भावाभावाविति**। **भावाभावौ, तदुभयविधिवत् व्याहतत्वात्**=पदार्थयोः तत्तदभावरूपत्वेन, उभयोः विधिः यथा व्याहतत्वात् न संभवति, तथा उभयनिषेधोऽपि, व्याहतत्वात्, **निषेद्धुम्**=निषेद्धुमपि अशक्यम्। ययोः विरोधः नियतः, तयोर्मध्ये एकस्य निषेधे, अन्यः स्वयमेवागच्छेत्। उभयोर्निषेधस्तु वक्तुमशक्य एव। यथा आलोकतमसोः। आलोकस्य निषेधे, तमः तत्र स्यादेव। तमसः निषेधे, आलोकस्तत्र स्यादेव। 'आलोकोऽपि नास्ति, तमोऽपि नास्ति' इति तु कदापि न वक्तुं शक्यम्। तदुभयनिषेधोऽपि तदुभयविधिवत् 'आलोकोऽ प्यस्ति', 'तमोऽप्यस्ति' इतिवत् व्याहत एव। श्रुतिरपि तमसो द्रव्यत्वे प्रमाणमित्याह—**तेजस्सहपठिततमः अन्तर्यन्तुः**= अन्तर्यामिणः परमात्मनः **देहः इत्यामनन्ति** वेदाः। 'यस्य तेजः शरीरम्' इत्यनेन साकमेव 'यस्य तमश्शरीरम्' इत्यप्यन्तर्यामिब्राह्मणे श्रूयते। तेन तेजोवदेव तमोऽपि द्रव्यान्तरमिति स्पष्टम्। वस्तुतस्तु नास्माभिराग्रहात् तमसः द्रव्यत्वं साध्यते, वस्तुस्थितिकथनमिदमित्याह—**स्याच्चेत्यादि**। **च**=किञ्च **अतिमथने**= कूलंकषविचारे, **वक्ष्यमाणक्रमेण**=अद्रव्यसरान्ते (श्लो.129) 'सोऽभावो यः' इत्यादि क्रमेण अभावोऽपि भावान्तरमेव स्यात्, न त्वतिरिक्त इति तेजोभावोऽपि द्रव्यान्तररूप एव। नीलरूपप्रतीत्या, तेजोऽभावः पृथिवीरूपे पर्यवस्यतीति तमः पृथिवी। अत्र वक्तव्यं पूर्वश्लोक एवोक्तम्। शिष्टं तु अभावविचारे ॥

[भूगोलपरीक्षा]

63. **तिष्ठत्युर्वी भचक्रं पवनरयवशात् भ्राम्यतीत्युक्तमाप्तैः**
**भ्रान्तैः क्लृप्तं त्रिलोकीभ्रमणमिह तथा मेदिनीभ्रान्तिपातौ।**
**तद्भ्रान्तौ प्राक्प्रतीचोः प्रसजति पतने पत्रिणोस्तारतम्यम्,**
**पाते गुर्व्यास्तु तस्याः प्रलघु दिवि समुत्क्षिप्तमेनां न यायात्॥ ६३॥**

---

**अत्रेदमप्यतिगाढमवधेयम्**—प्रकृतिवाचकतमःपदस्यार्थः न कस्याप्यनुभवगोचरः, अव्यक्तत्वादेव। लोके यदुच्यते 'नीलं तमः' इति तु न प्रकृतिविषयकम्, प्रकृतौ नीलरूपाभावात्। अतो लोके तमःपदम् अन्धकारपर्यायम्। अन्धकारो नाम कः? इति विचारे, सूर्यास्तमयानन्तरमेव तमोऽनुभवात्, गोलाकाराया भूमेः पार्श्वान्तरे सूर्यस्य गमनात् भूमेः छायैवान्धकारः। यदि सूर्योऽपि कदाचित्क्षीयेत, तदा भूमेः छायाया अपि न प्रसक्तिः। तेजसः आवरणे हि छाया। यदा तेजोऽपि शान्तं भवति, तदानीं छायाया न हि प्रसक्तिः। तदा हि, मध्यावारकस्य पार्श्वद्वयमप्येकरूपमेव खलु भायात्। तदा तस्य नाम किम्? प्रकारान्तरेणापि चिन्त्यताम्। गृहान्तर्गाढान्धकारेऽपवरके यदा दीपमारोपयामः, तदा प्रकाशोऽपवरकं व्याप्नोति। तत्र यदि कञ्चन दारुखण्डं मध्ये स्थापयामः, तदा तद्दारुखण्डस्यैकपार्श्वे दीपालोकः, पार्श्वान्तरे दारुखण्डच्छाया च सुस्पष्टमीक्षितुं शक्यते। यदा च दीपमवरोपयामः, तदा दारुखण्डस्य पार्श्वद्वयमप्येकरूपमेव दृश्येत। तदा छाया कुत्र गता? एवमेव सूर्येऽस्तं गते भूमेश्छाया रात्रिरुच्यते। सूर्य एव कदाचिन्नष्टे, अहः कदा? रात्रिःकदा? एतत्कालदृष्ट्यैव, प्रलयकाले तमो नासीत्, ज्योतिरपि नासीदित्युच्यते। बृहदारण्यके जनकयाज्ञवल्क्यसंवादे 'किंज्योतिरयं पुरुषः' (बृ.6-3-2) इत्युपक्रम्य 'अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते, शान्तेऽग्नौ, शान्तायां वाचि किंज्योतिरेवायं पुरुषः' इति प्रश्नः, 'आत्मैवास्य ज्योतिः' इत्युत्तरं च कियत्सुन्दरमवर्णीति दृष्ट्वाऽऽनन्दितव्यं मनीषिभिरित्युपरम्यते॥ ६२॥

पृथिवीतत्त्वनिरूपणप्रसक्त्या पृथिवीगोलमधिकृत्य, पुराणोक्तमनुवदति—**तिष्ठतीत्यादि**। **उर्वी**= भूमिः **तिष्ठति**=स्थिरा एकत्र तिष्ठति। **भचक्रम्**=ग्रहतारानक्षत्रादिगणः **पवनरयवशात्**=मरुद्वेगवशात् **भ्राम्यति**=परिभ्रमते इति आप्तैः पुराणकारैः उक्तम्। **भ्रान्तैः कैश्चित् इह**=एतद्विषये **त्रिलोकीभ्रमणम्**= त्रैलोक्याः भ्रमणम् **क्लृप्तम्**=कल्पितम्। तथा **मेदिनीभ्रान्तिपातावपि**=आर्यभटादिसंमतः भूभ्रमणवादः, जैनोक्तः भूपतनवादश्च भ्रान्तैः **क्लृप्तौ**। भूभ्रमणपक्षे दोषं प्रदर्शयति—**तद्भ्रान्तावित्यादि**। **तद्भ्रान्तौ**=भुवः भ्रमणे **पत्रिणोः**=पक्षिणोः **प्राक्प्रतीच्योः**=प्राग्दिशि, प्रत्यग्दिशि च **पतने**=डयने तारतम्यं प्रसजति॥

**अयमर्थः**—भूभ्रमणवादिनो हि वदन्ति भूमिः पश्चिमदिशः पूर्वां दिशं भ्रमतीति। एवं तर्हि, द्वौ पक्षिणौ, युगपत् आकाशमुत्पत्योपरि गतौ। ततः तयोरेकः प्राग्दिशम्, अपरश्च प्रत्यग्दिशं चाभिमुखीकृत्य युगपत् यदा डयेताम्, तदा पक्षिणोः उपर्याकाशे स्थितत्वात् भूमेश्च पूर्वदिगभिमुखं भ्रमणात्, पूर्वदिशं प्रति गतः पक्षी स्वलक्ष्यं कदापि न प्राप्नुयात्, भूमेः पूर्वदिशि वेगेन भ्रमणे पक्षिणा तल्लक्ष्यप्राप्तेः असंभवात्। प्रत्यग्दिगभिमुखं गतस्तु पक्षी, विनैव पश्चिमदिग्गमनं स्वयमेव स्वलक्ष्यं प्राप्नुयात्। यावदयमाकाशे क्षणं

[ज्योतिश्शास्त्रादीनां मर्यादा]

64. ज्योतिश्शास्त्रं पुराणाद्यपि न हि निगमग्राह्यमन्योन्यबाध्यम्
विद्यास्थानं तु सर्वं प्रतिनियतनिजोपक्रियांशे प्रमाणम् ।
तात्पर्यं तर्कणीयं तदिह बहुविदा भूपरिध्यादिभेदे[दैः]
दुर्ज्ञानं सर्वथा यन्मुनिभिरपि, परैस्तत्र तूदासितव्यम् ॥ ६४ ॥

तिष्ठति तावत्येव भूमिः भ्रममाणा, तत्पक्षिलक्ष्यं स्वयमेव तस्य सुगमं कुर्यात् । एकस्य स्वलक्ष्याप्राप्तिः, अन्यस्य विनैव गमनं स्वलक्ष्यप्राप्तिरिति तयोः पतने तारतम्यं भवेत् । न चैतत् दृश्यते । अतः भूभ्रमणवादो न युक्त इत्याशयः ॥

इदानीन्तनैस्तु विज्ञानिभिः, केवलं भूमिः न भ्रमति; किन्तु भूमेः परिसरायमाणः उपरितनवायुमण्डल-भागोऽपि तया सह भ्रमति । अतः न तारतम्यमित्युच्यते । अत्राचार्यैः वायुमण्डलरहितकेवलभूभ्रमणवादः खण्ड्यते । भूपतनवादे दोषं प्रदर्शयति—**पात इत्यादि** । **गुर्व्याः**=अधिकगुरुत्ववत्याः **तस्याः**=पृथिव्याः **पाते तु**=सदाधःपतने तु **दिवि**=आकाशे **समुत्क्षिप्तम्**=पुरुषेण उपरि क्षिप्तम् **प्रलघु**=पृथिव्यपेक्षयात्यन्त-न्यूनगुरुत्ववत् लोष्टादि **एनाम्**=भुवम् **न यायात्**=कदापि न प्राप्नुयात् । भूमेः अत्यन्तगुरुत्वात्, लोष्टादेरत्यन्तलघुत्वात्, उपरिक्षिप्तं लोष्टं यावदधः पतति, तावत्येव भूमेः बहुदूरमधः पतनात्, तल्लोष्टं कदापि भुवं न प्राप्नुयात् ॥

**वस्तुतस्तु**—आचार्यैः भूगोळनिर्णयाख्यः स्वतन्त्रो लघुग्रन्थः कश्चित् पुराणानुसाराद्विरचितः । विष्णुपुराणादिपुराणप्रक्रियामनुसृत्य तत्र वर्णितम् । पौराणिकी प्रक्रिया हि भूमेः परितः सप्तसागरादिकं वर्ण-यति । तदत्यन्तं प्रत्यक्षादिविरुद्धम् । भूमेर्गोळरूपतायाः आर्यभटादिभिः ज्योतिष्कैरप्यङ्गीकारात्, सप्तसागरा-दीनां भूमावेव एतैर्निरूपणाच्च खगोळशास्त्राननुगुणमप्येतत् । अतश्च यद्यपीदम् इदानीन्तनवैज्ञानिकदृष्ट्या न समर्थनीयं भवेत्; अथापि **पौराणिकी प्रक्रिया अबद्धा इति न भ्रमितव्यम्** । योगशास्त्ररहस्यज्ञानां सा प्रक्रिया सुगमा स्यात् । आचार्यैरपि योगशास्त्रप्रक्रिययैव वर्णितमिति मन्तव्यम् । अधिकमत्राप्रस्तुतम् ॥ ६३ ॥

आर्षाणां ग्रन्थानां परस्परं विरोधे, कथमस्माभिः वर्तितव्यम्? इत्यत्र तत्त्वं शिक्षयति—**ज्योति-रित्यादिना** । **निगमग्राह्यम्**=निगमेन वेदेन स्वाङ्गतया परिग्राह्यं **ज्योतिश्शास्त्रम्, पुराणाद्यपि**=इतिहासपुराणा-दिकं च **अन्योन्यबाध्यं न हि**=परस्परबाध्यबाधकरूपं कदापि न भवति । **सर्वं तु विद्यास्थानं**— 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥' इति । 'पुराण तर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति च ब्रह्मर्षिभिः परिगणितानि मीमांसान्यायविस्तरादीनि विद्यास्थानानि सर्वाणि **प्रतिनियतनिजोपक्रियांशे**=व्यवस्थिततया तत्तत्साध्योपकारांशे प्रमाणम् । कुत्रचित्तेषां परस्परविरोधप्रतीतौ किं कर्तव्यमित्यत्राह—**तात्पर्यमित्यादि** । **तत्**=तस्मात् **इह**=प्रकृतविषयेषु **बहुविदा**=अन्यन्तसूक्ष्मविशालबुद्धिमता, **भूपरिध्यादिभेदैः**=भूमेः परिमाणपरिसरादिविशेषादिभिः **तात्पर्यम्**=अन्तरङ्गाशयः **तर्कणीयम्**=ऊहनीयम् । अत्यन्तविरोधप्रतीतौ,

[कालोऽतिरिक्तः]

**65. सूर्यावृत्त्याद्युपाधिव्यतिकरवशतः कालताऽस्त्वम्बरादेः**
**अन्यस्मिन्नन्यधर्मोपनयननियमः प्राग्वदत्रेति चेन्न ।**

तैरेव पक्षभेदप्रदर्शनादौ वा का गतिरित्यत्राह— **दुर्ज्ञानमित्यादि** । **मुनिभिरपि**=तत्तादृशमहर्षिभिरपि **यत्**= यादृशं तत्त्वं **दुर्ज्ञानम्**=ज्ञातुमशक्यमभूत्, यतः पक्षभेदादिकं प्रदर्श्यते, **तत्र तु**=तादृशविषयेषु **परैः**= अस्मदादिभिः अनृषिभिः **उदासितव्यम्**=केवलस्वबुद्ध्या खण्डनमण्डनादिष्वनवतरद्भिः तटस्थबुद्ध्या तूष्णीं स्थातव्यम् । अथवा तपसा तत्त्वमन्वेष्टव्यम् ॥

**अत्रेदमवधेयम्**— 'श्रुतिश्च भिन्ना स्मृतयश्च भिन्नाः महामतीनां मतयश्च भिन्नाः । नैको ऋषिर्यस्य मतं प्रमाणम् महाजनो येन गतस्स पन्थाः ॥' इति महाभारतवचनं सर्वविदितम् । परन्त्विदं धर्मस्य सूक्ष्मतामधिकृत्यैव प्रवृत्तमिति 'पन्थाः' इति पदेनैव ज्ञायते । 'क्रिया विकल्प्यते, न तु वस्तु' इति न्यायेन धर्माचरणविषये विकल्पादिकं सर्वैरङ्गीकृतम् । वस्तुषु विकल्पो न संभवतीत्यपि प्रायिकम् । कृकलासप्रभृतिप्राणिनां शरीरवर्णः स्वावासानुगुणं परिवर्तत इति सर्वप्रसिद्धम् । जलचरः प्राणिविशेषः कश्चित् एकस्मिन्नेव समये स्त्र्यपि भवति, पुमानपि भवति । सुसूक्ष्मपरीक्षणे उपादानोपादेयभावस्थले कदाचिद्वस्तुन्यपि विकल्पास्संभवन्ति । अतः एव— 'एकत्वे सति नानात्वं नानात्वे सति चैकता । अचिन्त्यं ब्रह्मणो रुपं कस्तद्वेदितुमर्हति ॥' (वे.सं.) इति ब्रह्मणोऽप्यत्यन्तविचित्ररूपत्वं वर्ण्यते । अत्र 'सति'द्वयेनैकत्वनानात्वयोस्समानकालिकत्वमुक्तमप्यवधेयम् । एवमेव भगवद्विभूतेरप्यत्यन्तविचित्रत्वं वर्ण्यते 'इदं हि विश्वं भगवानिवेतरः' (भाग.9-5-20) इति । इदं विश्वं हि इतरो भगवानिवानन्तोऽपरिच्छिन्नः, दुर्ज्ञेयश्चेत्यर्थः । अतो वृथा चर्चाः परित्यज्य तपःप्रभृतिसाधनानुष्ठानपरेनैर्भवितव्यम् । 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' (मुं.2-2-8) इति श्रुतिः । अद्य तु खगोळशास्त्रादिकं बहुधाभिवर्धितम् प्रयोगार्हमेव निश्चप्रचं दृश्यते । किं बहुना! शस्त्रचिकित्सया मानवानां हृदयादिकमेव अन्यदीयहृदयादियोजनया परिवर्त्यते चिकित्सकैः । अतः—

अद्य विज्ञानवृद्धिस्तु बहुधा दृश्यतेऽद्भुता । क्षीणं त्वध्यात्मविज्ञानं समस्या वर्धते ततः ॥
ज्ञानविज्ञाननिकषाशिलादिषु परीक्षकैः । घृष्ट्वा घृष्ट्वा पदार्थानां स्वभावादिपरीक्षया ॥
तत्त्वं सम्यङ्विनिश्चित्य वक्तव्यं विबुधोत्तमैः । नो चेल्लुप्येत श्रद्धादिः, सर्वनाशाय तद्भवेत् ॥
तपःप्रभृतिभिर्दीर्घकालाविरतसेवितैः । निरुपाधिकभक्त्यादिप्रसन्नस्येश्वरस्य च ॥
महात्मनां च कृपया प्राप्यं ज्ञानं यदुच्यते । शक्यं कथं वा तल्लब्धुं केवलैर्ग्रन्थपङ्क्तिभिः ॥ ६४ ॥

प्रकृतिः कालश्चेति द्वेधा विभक्तयोः जडद्रव्ययोः अन्यतरायाः प्रकृतेर्निरूपणं परिसमाप्य, शिष्टस्य कालस्य विषये अधिकवक्तव्यस्याभावात्, प्रत्येकसरव्यवस्थाया अनावश्यकतां मन्वानः आचार्यः, तद्विचारमत्रैव क्रोडीकरोति— **सूर्येत्यादि** । नवीनः **शिरोमणिः** केवललाघवगौरवगणनापरः परिणामज्ञानशून्यः आकाशकालदिग्रूपाणि विभुद्रव्याणि मा सन्तु, अन्यतमेनैवाकाशेन, अन्ततः ईश्वरेणैव सर्वनिर्वाहादित्याह ।

**कल्पान्तेऽप्येककालः प्रकृतिपुरुषवत् ब्रह्मणो रूपमन्य-**
**न्निर्दिष्टोऽनाद्यनन्तो मुनिभिरिति, ततः कार्यता चास्य भग्ना ॥ ६५ ॥**

तत्पक्षमनुवदति— **सूर्यावृत्त्याद्युपाधिव्यतिकरवशतः**=सूर्यपरिस्पन्दाद्युपाधिसंबन्धवशात् **अम्बरादेः**=आकाशस्य, ईश्वरस्यैव वा **कालता**=कालरूपता **अस्तु**। आकाशादीनि द्रव्याणि विभूनि नित्यानि च इति वैशेषिकाः। एतानि सर्वाणि किलातीन्द्रियाणि। आत्मवर्गे यद्यपि जीवः स्वस्वानुभवसिद्ध इति केचित्। परन्तु 'अहम्' इत्यनुभूयमानः शरीरादिविशिष्ट एव, न तु शुद्ध आत्मा। अतः जीवस्यापि ईश्वरवत् अनुमानेनैव सिद्धिः। अत एव 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्' (न्या.सू.1-1-10) इत्युक्तम्। ततश्च किमर्थमतीन्द्रियाण्येतावन्ति द्रव्याणि। नित्यविभुद्रव्येषु अन्यतमेन सर्वोऽपि व्यवहारो निर्वोढुं शक्यते। एभिः साध्यमानो हि व्यवहारः केवलमौपाधिकः। काले सूर्यपरिस्पन्दादिः उपाधिः। दिशि तत्तद्देशसंबन्धादिः। शब्दाश्रयत्वमप्येषु अन्यतमस्यैव, लाघवात्। अन्ततः ईश्वरोऽपि विभुर्नित्यश्च। तस्यैवोपाधिसंबन्धात् क्षणादिव्यवहारहेतुत्वम्, शब्दाश्रयत्वं चास्तु। किमतिरिक्तद्रव्यकल्पनागौरवेण; **'धर्मिकल्पनातो वरं धर्मकल्पना'** इतिन्यायादिति पूर्वपक्ष्याशयः। तदेतत्संग्रहेणोच्यते— **अन्यस्मिन्नित्यादि**। **अन्यस्मिन्**= स्वसन्निहिते घटादौ **अन्यधर्मोपनयननियमः**=**अन्यस्य** उपाधेः ये **धर्माः**=न्यूनाधिक्यादयः, तेषां **उपनयनस्य**=स्वसंबन्धादारोपस्य यो **नियमः**=व्यवस्थाविशेषः वर्तते, सः **अत्र**=कालेऽपि **प्राग्वत्**=पूर्वं दिशि प्रतिपादितक्रमेणैव भवति। अतः मास्तु कालः अतिरिक्तः। पूर्वम् 'अन्यस्मिन्' इत्यादि (श्लो.49) श्लोकेऽयमर्थः प्रतिपादितः। कालस्तु स्वयं अतीन्द्रियः। व्यवहारस्सर्वोऽप्यौपाधिकः। एवं सति क्लृप्तेनैव निर्वाहे मास्तु अतिरिक्तः कालः इत्याशयः॥

एवं वदन्नयं **तार्किकशिरोमणिः** 'मधु पश्यसि दुर्बुद्धे प्रपातं नैव पश्यसि' इतीमं न्यायमपि विसस्मार। विभुद्रव्यमेकं पर्याप्तम्, किं द्वितीयेनेति चेत्, तर्हि ऐकात्म्यवादी 'ईश्वरेणैवेकेन अन्तःकरणरूपोपाधिवशात् सुखदुःखादिवैलक्षण्यादिनिर्वाहे, अतिरिक्ताः जीवा अपि मा सन्तु' इति वदन् कथं तेन प्रतिवक्तव्यः, तत्पक्षे अत्यन्तलाघवसत्त्वात्। यदीष्टापत्तिः, साधितं तार्किकप्रवरेण न्यायशास्त्रप्रामाण्यम्। एवं वदन् स ऐकात्म्यवादी यदि, तर्हि संपूर्णं न्यायशास्त्रमेव परित्यक्तं न जानाति किल? अस्त्वेवं व्यावहारिकं प्रामाण्यं गौतमशास्त्रस्येति चेत्, एवं वदन्नस्त्येव कश्चित् वेदान्तिनंमन्यः **खण्डनकारः**। कुतो न जानाति स वेदान्तिनंमन्यः वेदान्तशास्त्रस्यापि प्रामाण्यं व्यावहारिकमेवेति। अत एवैतान्प्रत्याचार्योपहासः 'अलं वैदिकत्वकञ्चुकवहनवृथाप्रयासेन' इति। अतो न्यायशास्त्रमेवानेन गळहस्तितम्। अत इमं साहसं प्रामाणिकाः वैदिकाः नानुमन्येरन्नित्यभिप्रायेणाह— **इति चेन्नेति**। केवललाघवापेक्षादिकं लौकिकव्यवहार एव भवेत्, न तु अध्यात्मशास्त्रे गहने बुद्ध्यतीत इत्याशयः। प्रकृते काले वक्तव्यमाह— **कल्पान्त इत्यादि**। **कल्पान्तेऽपि**= प्रलयेऽपि **एककालः**=अतिरिक्तः कालः **प्रकृतिपुरुषवत्**=त्रिगुणद्रव्यजीववदेव **अनाद्यन्तः**=उत्पत्तिनाशरहितः **ब्रह्मणः**=परमात्मनः **अन्यत् रूपम् इति मुनिभिः**=पराशरादिभिः **निर्दिष्टः**, मुख्यविशेष्यदृष्ट्या पुंल्लिङ्गः। **ततः**=प्रकृतिपुरुषवदेव नित्यत्वादेव **अस्य**=कालस्य **कार्यता**=अनित्यता च **भग्ना**=निरस्ता।

[कालस्य परमात्मातिरिक्तत्वम्]

**66. कालोऽस्मीति स्वगीता कथयति भगवान् काल इत्याप्तवर्यो**
**हेतुः सर्वस्य नित्यो विभुरपि च परः किं परेणेति चेन्न।**
**कालान्तर्यामितादेः स खलु समुदितः संप्रतीते तु भेदे**
**साधर्म्यं नैक्यहेतुः, स हि तदितरवत् घोषितस्तद्विभूतिः ॥ ६६ ॥**

विष्णुपुराणे 'रूपान्तरं तत् द्विजकालसंज्ञम्' इति कालस्य रूपान्तरत्वमुक्तम्। 'स्वरूपात्स्वामिनो रूपम्' इति रूपशब्दः मूर्तिपरो दृष्टः। तदनुरोधेन श्रीभाष्यकारैरपि 'स्वरूपरूप' इति गद्ये निर्देशः कृतः। अतः कालः परमात्मशरीरभूतत्वात् अतिरिक्त एव ॥ ६५ ॥

कालस्य परमात्मरूपत्वमाशंक्य समाधत्ते—**काल** इत्यादिना। **'कालोऽस्मि' इति स्वगीता कथयति**='कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' (गी.11-32) इति भगवद्गीता वदति। **भगवान् कालः इति आप्तवर्यः**=पराशरः **कथयति**। 'अनादिर्भगवान् कालः' इति विष्णुपुराणवचनम्। **च**=किञ्च, **परः**=परमात्मा **सर्वस्य जगतः हेतुः**=कारणम् इति सर्वसंप्रतिपन्नम्। एवं **नित्यः**, **विभुरपि**; अतः सर्वदेशेषु सर्वकालेष्वपि सर्वकारणं भगवान् इति कालेन यत् साध्यम्, तत्सर्वं परमात्मनैव साध्यम्। तस्मात् **परेण**=अतिरिक्तेन **कालेन किम्**=किं साधनीयम्, सर्वस्यापि परमात्मनैव निर्वाहात्। अतः परमात्मातिरिक्तः कालो मास्तु इति चेन्न। कुत इति चेत्—**स खलु**=परमात्मा किल **कालान्तर्यामितादेः समुदितः**=कालान्तर्यामित्वादेर्हेतोः 'कालोऽस्मि' इत्येवं **समुदितः**=उक्तः=शरीरशरीरिभावप्रयुक्तसामानाधिकरण्यात् तथोक्तः। एवं शरीर-शरीरिभावेन **भेदे संप्रतीते**=स्पष्टमवगते सति **साधर्म्यम्**=सर्वकारणत्वनित्यत्वविभुत्वादिभिः परमात्मना सह साधारणधर्मवत्त्वम् **ऐक्यहेतुः न**=एकत्वसाधकं न भवति। तथा सति सदृशपदार्थयोरभेदस्सर्वत्र स्यात्। किञ्चित् वैधर्म्यमपि वर्तेतेति चेत्, प्रकृतेऽपि जडत्वसर्वज्ञत्वादिभिः वैधर्म्यस्यापि सत्त्वात् नेष्टसिद्धिः। भेदोऽपि स्पष्टमुच्यत इत्याह—**स हीत्यादि**। हीति प्रसिद्धौ। **स हि**=कालो हि **तदितरवत्**=कालातिरिक्तचतुर्मुखादिवत् **तद्विभूतिः**=भगवद्विभूतिरूपः **घोषितः**=मुक्तकण्ठमभिहितः। विभूतिर्नाम 'विभूतिर्भूतिरैश्वर्यम्' इति कोशात् ऐश्वर्यम्। ऐश्वर्यम् नाम ईश्वरस्य भावः। सर्वेश्वरस्य भगवतः भावः=असाधारणः कश्चित् धर्मः यत्र दृश्येत, सः भगवदैश्वर्याविर्भावस्थलभूतः विभूतिरित्यर्थः। 'ब्रह्मा दक्षादयः कालः' इति चतुर्मुखप्रजापतिप्रभृतिभिस्सह कालस्यापि कथनात्, कालः अतिरिक्तः पदार्थः ॥

**वस्तुतस्तु**—कालस्य भगवद्रूपत्वप्रतिपादकप्रमाणानामेव स्वरसत्वात्, भगवतः रूपभेदादिकमादायापि भेदस्य निर्वाहात् कालः नातिरिच्यत इत्येवाचार्याणामन्तरङ्गाशयः। एवं सत्यपि क्लेशेन पदार्थान्तरत्वसाधनं तु ग्रन्थारंभेऽभिहितस्य विभागव्यवहारस्य सुकरत्वार्थम् इति भाति। तादृशविभागस्यान्यथाकरणे पुनः प्रकारान्तरेण क्लेशास्समुन्मिषेयुः। तादृशक्लेशपरिहारश्रमापेक्षया एतदेव वरमित्यभिप्रायेणातिरिक्तत्वमुच्यते ॥

ननु अतिरिक्तकालानङ्गीकारे तत्त्वविभागे के वा क्लेशाः स्युः? इति चेत्; श्रूयतां सावधानम्। प्रथमं तत्त्वं द्रव्याद्रव्यप्रभेदात् द्वेधा विभक्तम्। तत्र द्रव्यं जडमजडमिति द्विविधम्। जडं च प्रकृतिः कालश्चेति

[कालस्य नित्यत्वम्]

67. कालस्योत्पत्तितः प्राक् परमपि च लयात् कालनास्तित्ववादी
स्वोक्तिव्याघातभग्नो न वदति यदि तत्, को वदेत् कालसृष्टिम्।

द्विविधम्। अत्रातिरिक्तःकालो यदि न स्यात्, तदा प्रकृतिरेकैव जडे परिगणनीया। तदा हि जडमजडमिति विभागस्त्याज्यः। किन्तु प्रकृतिः अजडश्चेति विभागो वक्तव्यः। अयं विभागो न साक्षात्प्रतिस्पर्धिरूपो भवति। तदपेक्षया प्रकृतिः पुरुषश्चेति विभागो युक्तः। एवं विभागे नित्यविभूतेर्धर्मभूतज्ञानस्य विभजनं त्यक्तं भवेत्। अथवा धर्मभूतज्ञानस्य जीवे, नित्यविभूतेः ईश्वरे चान्तर्भावो वक्तव्यः। एवं सति तयोश्चेतनत्वमागच्छेत्, अनन्तर्भावे जडत्वं स्यात्। एतादृशक्लेशानां परिहाराय जडाजडविभाग एव युक्तः। एवं सत्येव जीवस्य देहातिरिक्तत्वं स्पष्टं भवेदित्यभिप्रायेण, जडे कालगणनार्थं चातिरिक्तं वक्तव्यमभूदिति॥

वैज्ञानिकदृष्ट्या तु कार्यसामान्यस्य देशः (Space) कालश्च (Time) इति द्वयमप्यत्यन्तमावश्यकम्। अतोऽङ्गीक्रियते चेत् कालो दिक्चेति द्वयमप्यङ्गीकर्तव्यम्, अथवा द्वयमेव त्याज्यम्। न तु कालमङ्गीकृत्य दिशो निरासो युक्तः। दिगुपाधिरेव, भूतलादिः देशः कालोपाधयश्च सूर्यपरिस्पन्दादयोऽपि कालः। जन्यानां कालोपाधित्वम्, मूर्तानां दिगुपाधित्वमिति तत्तत्त्वविदः। कालः, दिक् (देशः) ईश्वरः, अदृष्टं चेति चत्वारि कार्यसामान्यसाधारणकारणानि। परमात्मनैवान्यनिरपेक्षेण सर्वकार्यनिर्वाहसंभवे मास्तु दिगिति चेत्, तर्हि मास्तु कालोऽपीति स्यात्। तत्रापीष्टापत्तौ ईश्वरेणैव सर्वनिर्वहे 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम्'(गी.17-18) इति पञ्चानां हेतुत्वोक्तिर्विरुध्येत। न च ब्रह्मणस्सर्वशक्तेस्सत्यसङ्कल्पस्य संकल्पमात्रेण सर्वस्रष्टृत्वस्य सूत्रभाष्यादिषूक्तत्वत्, कालाद्यपेक्षा कुत इति चेत्, भो ब्रह्मन्! तर्हि 'सापेक्षत्वात्' (ब्र.सू.2-1-34) इति जीवकर्मपेक्षत्वोक्तिः कथमित्युच्यताम्। वैषम्यनैर्घृण्यपरिहारार्थमेव जीवकर्मपेक्षेति चेत्, तर्हि देशकालाद्यव्यवस्थापरिहाराय देशकालापेक्षाप्यस्त्येव। अतः 'सर्वकार्ये निमित्तम्' (श्लो.69) इति यदि काल आवश्यकः, तर्हि देशोऽप्यावश्यक एव। ननु देशस्यावश्यकत्वेऽपि दिशः कथमावश्यकतेति चेत्, अन्नस्यावश्यकत्वेऽपि तण्डुलस्यावश्यकता नास्तीतिवदुपहास्यमिदम्। मासादेरेव कारणत्वात् कालो वा तर्हि कुतः? तेषां कालोपाधित्वम् यदि, तर्हि देशादेरपि दिगुपाधित्वमेवेति सर्वं समानम्। अत एव 'मूर्तानां दिगुपाधित्वम्' इत्यनुपदमुक्तम्, वैज्ञानिकं च। अतः शिष्यबुद्धिपरीक्षणार्थमेव, कालप्रत्यक्षत्वसाधनवत् (श्लो.68) सर्वमिदमिति ज्ञेयम्। कुशलमतिभिस्त्वन्तेवसद्भिः **तदनुग्रहादेव तदीयाशयो**ऽवगन्तव्यः॥ ६६॥

केचन तान्त्रिकाः (शैवाः) कालमनित्यं वदन्ति। तन्निराकरोति— **कालस्येत्यादि**। कालस्यानित्यत्ववादी, **कालस्य उत्पत्तितः प्राक्**=उत्पत्तेः पूर्वम्, **लयात् परमपि च**=कालस्य नाशानन्तरं च **कालनास्तित्ववादी**=कालः नास्तीति वदन् **स्वोक्तिव्याघातभग्नः**=स्ववचनविरोधेनैव निरस्तो भवति। **यदि न वदति**=उत्पत्तेः पूर्वम्, नाशात्परं च कालः नास्तीति यदि नोच्यते, **तत्**=तर्हि, तदानीमपि कालस्य सत्त्वसिद्ध्या **कालसृष्टिं को वदेत्**=कालस्य नित्यत्वे सिद्धे कथं कालस्य सृष्टिर्वक्तुं शक्या॥

**आप्तस्तत्सृष्टिवादः तदुपधिपरिणत्यादिभिः सार्थकस्स्यात्**
**नो चेत्, तत्रापि पूर्वापरवचनहतिः दुर्निवारप्रसङ्गा ॥ ६७ ॥**

**[कालस्य प्रत्यक्षत्वम्]**

68. **कालोऽध्यक्षावसेयः क्षणलवदिवसाद्यंशतोऽर्थान् विशिंषन्**
**साक्षाद्धीस्तत्तदर्थेष्विव भवति हि नः क्वापि कालान्वयेऽपि ।**

**अयं भावः**—कालोऽपि ईश्वरेण सृज्यत इति **शैवतन्त्रैकदेशिनः** । यदि कालः नूतनया सृज्यते, तदा तत्सृष्टेः पूर्वं कालो नासीत् इति सिद्ध्यति । एवं कालस्य नाशे सति, तदनन्तरमपि कालो नास्ति, नष्टत्वादिति वक्तव्यम् । इदं च स्ववचनविरुद्धम् । 'कालस्योत्पत्तेः पूर्वम्' इत्यत्र 'पूर्व'पदस्यार्थः काल एव हि भवति । एवं 'कालस्य नाशानन्तरम्' इति कथने 'अनन्तर'पदस्यार्थोऽपि काल एव हि भवति । तेन भवदुक्तकालस्य प्राक्, पश्चाच्च काले सिद्धे, कालः तदा नास्ति इति कथने वचनविरोधः स्पष्टः । 'तदा'शब्द एव हि कालवाची । एतत्परिहाराय पूर्वं परं नास्तीति न वयं वदाम इति चेत्, यदि नास्तीति नोच्यते, तर्हि अस्तित्वसिद्ध्या कालस्य सर्वदा अस्तित्वमेव सिद्धमिति, सर्वदा सतः कथं सृष्टिरुच्यते? अतः कालो नित्य इत्येव वक्तव्यमिति ॥

**पाशुपता** ह्येते षट्त्रिंशत्तत्त्ववादिनः । शिवः, शक्तिः, सदाशिवः, ईश्वरः, विद्या, माया, कालः, कला, अविद्या, नियतिः, रागः, पुरुषः, प्रकृत्यादयश्चत्वारिंशदित्याहत्य36 तत्त्वानि । आद्यं तत्त्वद्वयं सर्वोत्तीर्णम्। अनन्तरं पञ्चतत्त्वानि शुद्धतत्त्वानि । कलादि पञ्च तत्त्वान्यशुद्धतत्त्वानि । इतराणि 24 प्रसिद्धानि । प्रकृते कालविषये 'विद्याकालौ भवत्कृतौ' इति कालस्य सृष्टिरुच्यते किल इत्यत्राह—**आप्त इत्यादि** ।**आप्तः**= प्रामाणिकप्रोक्तः**तत्सृष्टिवादः**=कालसृष्टिवादः**तदुपधिपरिणत्यादिभिः**=कालोपाधिविषयकतया, कालपरिमाणविषयकतया वा**सार्थकः**=अर्थवान् स्यात् । उपाध्युपहितयोः अभेदोपचारात्, कालोपाधीनां चक्षुर्निमेषादीनामुत्पत्त्या, कालस्योत्पत्तिरुक्ता स्यात् । अथवा, कालस्य परिणामपक्षे, परिणामविशेषप्राप्तौ परिणामिन एवोत्पत्तिव्यवहारवत् स्यात् । यथा सिद्धान्ते धर्मभूतज्ञानस्य नित्यत्वेऽपि घटादिविषयकतया परिणामे प्राप्ते 'घटज्ञानमुत्पन्नम्' इति पटविषयकत्वे जाते'घटज्ञानं नष्टम्' इति च व्यवहारः, तद्वत् ।**नो चेत्**=एवमनङ्गीकारे **तत्रापि**=पूर्वोक्तवचनेऽपि**पूर्वापरवचनहतिः**=पूर्वापरवाक्यानां व्याघातः**दुर्निवारप्रसङ्गा**, अयं बहुव्रीहिः, हतेः विशेषणम्, वारयितुमशक्यैवेत्यर्थः । कालोत्पत्तेः पूर्वम्, कालनाशानन्तरं च पूर्वोक्तरीत्या'पूर्व' 'अनन्तर' पदाभ्यां कालास्तित्वस्यैव सिद्ध्या, तथा अकथने च कालस्य सदातनत्वसिद्ध्या च व्याघातः स्पष्ट एव । अतः कालः नित्यः, अतिरिक्तश्चेत्येव वरम् । 'आप्तस्तत्सृष्टिवादः' इति वदन् आचार्यवर्योऽयं 'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥' इति महाभारतवचनं स्मारयति । इदमौदार्यं महतामादर्शभूतं कदापि न विस्मर्तव्यम् । शिष्टं पूर्वश्लोकान्ते द्रष्टव्यम् ॥ ६७ ॥

एवं कालस्यातिरिक्तत्वं प्रसाध्य, तस्य प्रत्यक्षत्वमप्याह—**काल** इत्यादिना । **कालः क्षणलवदिवसाद्यंशतः**=क्षणलवदिवसमासादिभेदतः **अर्थान्**=पदार्थान् **विशिंषन्**=विशेषयन् **अध्यक्षावसेयः**=

**तत्संयोगाः परत्वादय इति च; ततोऽप्येष नैवानुमेयः**
**नो चेत्, न क्वापि लोकव्यवहृतिविषयोऽव्यक्तवत् स्यादनेहा ॥ ६८ ॥**

प्रत्यक्षविषयो भवति । लोके हि सर्वः घटादिग्रहवेलायामेव 'इदानीं घटः' इति घटस्य वर्तमानतामपि पश्यति । वर्तमानता नाम वर्तमानकालसंबन्धः । अतश्च चक्षुषैव वर्तमानकालग्रहणात् कालः प्रत्यक्षः । एवं तत्तदिन्द्रियैः तत्तद्वस्तुग्रहणवेलायां वर्तमानकालः तत्तदिन्द्रियग्राह्य एव । प्रमाणान्तरादर्शनात्, कालव्यवहाराच्च । तच्च वर्तमानत्वं घटादेः भूतात् व्यावर्तकम् । अतः **विशिंषन्**=भूतादिभ्यः वर्तमानं व्यावर्तयन्नित्यर्थः । एवं व्यावर्तयन् एवं प्रदर्शकत्वादेव, हेतौ शतृ, कालः अध्यक्षावसेय इत्यन्वयः । तत् अनुमानमेव कुतो न स्यादित्यत्राह— **साक्षादित्यादि** । **हि**=यतः **नः**=अस्माकं सर्वेषाम् **तत्तदर्थेष्विव**=तत्तत्पदार्थेषु यथा विशेषणानां ग्रहणम्, तथैव **क्वापि**=कुत्रचित् **कालान्वयेऽपि**=कालसंबन्धेऽपि **साक्षाद्धीः**= प्रत्यक्षात्मकं ज्ञानमेव भवति । यथा 'नीलो घटः' इति प्रतीतिः नीलरूपविशिष्टघटविषयिणी, तद्वदेव 'सन् घटः' इति वर्तमानत्वरूपविशिष्टघटविषयिणी । अतः उभयोः प्रत्यक्षत्वम् समानम् इति नानुमानमिदम् ॥

एवं कालस्य प्रत्यक्षत्वे, **परत्वादयः**=अधिककालसंयोगरूपं परत्वम्, न्यूनकालसंयोगरूपमपरत्वं च **तत्संयोगाः**=कालसंयोगरूपा एव **इति च**=इत्यपि प्रत्यक्षसिद्धा एव । **ततोऽपि** हेतोः **एषः** कालः **नैव अनुमेयः** । **नो चेत्**=एवमनङ्गीकारे, **अनेहा**=कालः **अव्यक्तवत्**=प्रकृतिवत् **क्वापि**=कुत्रापि **लोकव्यवहृतिविषयः**=लोके पामराणामपि दैनन्दिनव्यवहारेष्वपि विषयः न स्यात् । त्रिगुणं प्रकृतिद्रव्यं हि अव्यक्तपदवाच्यम्, अत एव कस्यापि न व्यक्तम्=व्यवहारेषु गोचरो न भवतीति सर्वानुभवसिद्धम् । कालस्तु एतद्विपरीततया पामराणामपि 'अद्य' 'तदा' 'श्वः' 'ह्यः' इत्यादिषु प्रतिवाक्यं व्यवहारविषयो भवतीति सर्वप्रसिद्धम् । सर्वथा, सर्वदा अतीन्द्रियश्चेत् कालः कथमेतावत्सु व्यवहारेषु विषयो भवतीति वक्तव्यम् । अतः तावत्प्रसिद्धस्य तस्य प्रत्यक्षत्वमनिवार्यम् । रूपरहितस्य कथं प्रत्यक्षत्वमित्यादिकं तु पूर्वमेव समाहितम् ॥

**वस्तुतस्तु**— कालः केनेन्द्रियेण गृह्यते? चक्षुषैव, तथानुभवादिति चेत्; अत्रेदं प्रष्टव्यम्— त्वचा घटग्रहणेऽपि घटस्य वर्तमानत्वं गृह्यत एव, अतः चक्षुषैवेति कथम्? अस्तु त्वचापि ग्रहणं का हानिरिति चेत्; न कापि हानिः, किन्तु घ्राणेन्द्रियादिभिः गन्धादिग्रहणे तत्र गन्धेऽपि वर्तमानत्वं घ्राणादिभिः गृह्यत इति वक्तव्यम् । अस्तु तथैव, सर्वैरपीन्द्रियैरयं गृह्यत इति चेत्; जिह्वयापि स गृह्यत एवेति वक्तव्यम् । एवं पञ्चभिरपीन्द्रियैर्ग्राह्यं वस्तु लोके शशशृङ्गादितुल्यम् । अयमेव कालस्तादृशो विलक्षणोऽस्तु, का हानिरिति चेत्, घ्राणेन्द्रियादिकं तत्तद्गुणमात्रग्राहकम्, न तु द्रव्यग्राहकमिति सर्वसंप्रतिपन्नम् । कालस्तु द्रव्यम् । तस्य कथं घ्राणेन ग्रहणम्? गृह्यते किल गन्धस्य तदा तत्राऽस्तित्वमिति चेत्, अस्तित्वं हि सत्त्वम् । तच्च प्रमाणसंबन्धमात्रम्, न तु कालसंबन्धः । नो चेत् 'पर्वतो वह्निमान्' इत्यादौ पर्वते वह्नेरस्तित्वग्रहणात्, कालोऽनुमेयोऽपि स्यात् । ततः कालः सर्वप्रमाणगम्यः स्यात् । अतः कालः न प्रत्यक्षः, किन्त्वतीन्द्रिय एव । कालस्यैन्द्रियकत्वे भूतभविष्यतोः कथं ग्रहणम्? प्रत्यक्षं हि वर्तमानमात्रग्राहि सर्वेषाम् । मनसेति चेत्, मनः न बाह्ये स्वतन्त्रम् । प्रत्यक्षत्वे, कालोपाधिरिव, उपहितः कालोऽपि कस्यापि पृथक् प्रत्यक्षतया गृह्येत; तथा न

[क्षणदिवसादिव्यवहारनिर्वाहः]

69. **कालस्योपाधिभेदात् कतिचिदभिदधत्यब्दमासादिभेदम्**
**तत्तद्रूपेण कालः परिणमत इति प्राहुरेके, तदा तु ।**
**ये तत्रोपाधयः स्युः त इह परिणतिं प्राप्नुयुः सानुबन्धाः**
**नित्यो व्यापी च तादृक्परिणतिभिरसौ सर्वकार्ये निमित्तम् ॥ ६९ ॥**

[जगतः भगवद्विभूतिरूपत्वम्]

70. **वायुर्दोधूयते यत् यदयमुडुगणो बम्भ्रमीति द्रुतं खे**
**तेजो जाज्वल्यते यत् यदपि जलनिधिर्माधवीं दोधवीति ।**

---

गृह्यते । किञ्च गाढान्धकारे भूगृहे निरन्तरं वसता हि सूर्योदयास्ते यदा न गृह्येते, तदा तस्य कालज्ञानमपि न स्यादेव । तत्रापि तस्य त्वगादि कार्यकारि स्यात् । अथापि कालव्यवहारो न भवेदेव । अतः कालस्सर्वथातीन्द्रिय एवेत्येव युक्तम् । आचार्यैरिवं साधनं तु कालस्यातिरिक्तत्वसाधनेनास्याप्यवर्जनीयत्वादिति भाव्यम् । कालस्यातिरिक्तत्वेनाभिधाने तात्पर्यं च पूर्वमेव (श्लो.66) प्रादर्शि ॥ ६८ ॥

यदि कालः नित्यः विभुश्च तर्हि क्षणलवदिनादिव्यवहारः कथमित्यस्योत्तरमाह— **कालस्येत्यादिना।** **उपाधिभेदात्**=सूर्यपरिस्पन्दचक्षुर्निमेषादिरूपोपाधिभेदात् **कालस्य**=एकस्य नित्यस्य विभोः कालस्य **अब्दमासादिभेदम्**=संवत्सरमासादिभेदं **कतिचित्**=नैयायिकाः, तदनुसारिणः अस्मदीयाश्च केचन अभिदधुः । **एके**=अन्ये तु 'एके मुख्यान्यकेवलाः' इत्यमरः । कालः **तत्तद्रूपेण**=संवत्सरमासक्षणादिभेदेन **परिणमते**= प्रकृतिद्रव्यवत् अस्यापि द्रव्यत्वात् परिणामं प्राप्नोतीति प्राहुः । कालस्य स्वतन्त्रप्रत्यक्षद्रव्यत्वाभ्युपगमे परिणामाङ्गीकार एव स्वरस इति एतत्पक्षे आदरातिशयं सूचयितुं 'प्राहुः' इत्युक्तम् । **तदा तु**=परिणामाङ्गीकार-पक्षेऽपि **तत्र**=औपाधिकभेदपक्षे **ये**=सूर्यपरिस्पन्दचक्षुर्निमेषादयः **उपाधयः स्युः, ते सर्वे, इह**=अस्मिन् परिणामपक्षेऽपि **सानुबन्धाः**=तत्तद्तुलिङ्गादिसहितास्सन्तः परिणतिं प्राप्नुयुः, अन्यथा स्वतः परिणामासंभवात्, अव्यवस्थाप्रसङ्गः । आहत्य तु, स्वरूपतः प्रकृतिवत् **नित्यः व्यापी च**=विभुश्च सर्वदेशेषु सर्वदा च कालव्यवहारदर्शनात्, **तादृक्परिणतिभिः**=पूर्वोक्ततादृशक्षणदिवसादिपरिणतिविशिष्टस्सन्नेव **असौ**= कालः **सर्वकार्ये**=सर्वेष्वपि कार्येषु **निमित्तम्**=नैयायिकमत इव निमित्तकारणं भवति ॥

इदं लोकायतदृष्ट्या । वेदान्तदृष्ट्या तु— 'अन्तःपुरुषरूपेण कालरूपेण यो बहिः । समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥' (भाग.3-26-18) इत्येतदेव परमं सत्यम् । तथा च कालस्य नित्यविभूतेश्चेश्वरेऽन्तर्भावे, धर्मभूतज्ञानस्य जीवेऽन्तर्भावे च (जीव.4), चित्(जीव), अचित्(प्रकृतिः), ईश्वर-श्चेति तत्त्वत्रयमेव शिष्यत इति 'भोक्ता भोग्यं प्रेरितारं च मत्त्वा' (श्वे.1-12) इत्युक्तः तत्त्वत्रयसिद्धान्त एव साधीयान् । इतरत्सर्वं बुद्धिवैशद्यायैव ॥ ६९ ॥

वेदान्तिनां युष्माकं परमात्मचिन्तां परित्यज्य काकदन्तपरीक्षावत् एतादृशजडद्रव्यचिन्तनं युक्तं वेत्याक्षेपे, एतच्चिन्ताफलं प्रदर्शयति— **वायुरित्यादिना** । पौनःपुन्यद्योतनार्थं यङन्तप्रयोगाः । **वायुः दोधूयते,**

**भूर्यद्वा बोभवीति स्थिरचरधृतये तच्च तादृक्च सर्वं**
**स्वायत्ताशेषसत्तास्थितियतनपरब्रह्मलीलोर्मिचक्रम् ॥ ७० ॥**

**इति तत्त्वमुक्ताकलापे**

## जडद्रव्यसरः

धूञ् कम्पने, सदा चलतीति **यत्, यच्च अयम्, उडुगणः**=तारानक्षत्रादिसमुदायः **खे**=निरालम्बे आकाशे **द्रुतम्**=अतिवेगेन **बंभ्रमीति**=सदा भ्रमति, **तेजः जाज्वल्यते इति यत्, यदपि जलनिधिः**=समुद्रः **माधवीम्**='विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम्' (भूसूक्तम्) इति श्रुत्या माधवपत्नीं भुवम् **दोधवीति**=स्वतरङ्गार्भटैः सदा चालयतीवेति **यत्**, यङ्लुगन्तः; एवमपि **भूः**=भूमिः **स्थिरचरधृतये**=स्थावर-जङ्गमानां धारणार्थं **बोभवीति**=सदा समर्था भवतीति **यत्**, अयमपि यङ्लुगन्तः; **तच्च तादृक् च यत्**=उक्तं सर्वम्, एतादृशमन्यदन्यच्च यादृशं चित्रविचित्रादि जगति वर्तते, **तत् सर्वम्, स्वायत्ताशेषसत्तास्थिति-यतनपरब्रह्मलीलोर्मिचक्रम्**=स्वाधीननिखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिविशेषस्य अस्मत्प्रभोः परब्रह्मणः अनन्तलीलासागरतरङ्गरूपाणि सर्वाणि । अत एवात्र जगन्मिथ्यात्वसाधनक्लेशोऽपि न स्वीकृतस्तार्किक-सिंहैः । निर्विशेषवादफलभूतोऽयं जगन्मिथ्यात्ववादः । निर्विशेषवादस्य निरवकाशत्वप्रदर्शनेनैव स्वयं गळहस्तितो जगन्मिथ्यात्ववादः । शिष्टमपि नायकसरे विस्तरेण भविष्यति ॥

श्रीतुरगवदनतेजोबृंहिताश्चर्यशक्तिः, अत एव सर्वज्ञः सर्वतन्त्रस्वतन्त्रः परमाचार्योऽयम् अन्ते— 'इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरं वाङ्मयं च' (अद्रव्य.134) इति नामरूपविशिष्टं जगत्सर्वम् परमात्मविभूतिरूपमभिदधाति । भगवानपि— 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः । सोऽविकम्प्येन योगेन युज्यते नात्र संशयः ॥' (गी.10-7) इति विभूतियोगचिन्तनस्य भक्तिवर्धकत्वं स्पष्टमाह । विभूतिर्नाम भगवद्वैभवम् । अस्य विविधविचित्ररचनस्य जगतो भगवद्वैभवप्रकाशकत्वात्, जगदपि तद्विभूतिः । एतदनुगुणविचित्रशक्तिमत्त्वमेव योगः । भगवान् खलु योगेश्वरेश्वरः । 'आराममस्य पश्यति न तं पश्यति कश्चन' (बृ.6-3-14) इति श्रुतिरत्रानुसन्धेया । **ज्ञानिभक्तानामिदं जगत् भगवद्विहारभूमिः=आरामः । अज्ञानिनां तु कारागारः । शुष्कज्ञानिनां तु मिथ्या** । 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.2-9-33) इति हि भगवान् व्यासः । अत एव अस्य लीलाविभूतिरिति नाम । नित्यलीलारूपोभयविभूतिविशिष्टमेव ब्रह्म सदेति भगवान् रामानुजोऽपि । तच्छिष्य-वर्यमात्मानं धन्ययन्नयमप्याचार्यसार्वभौमः 'सर्वमिदमस्मत्प्रभोः प्रभाव एव, पश्यत' इति भगवदनुभवसाम्राज्यं प्रविविक्षूणां कृते भगवद्योगविवृद्ध्यै एतच्चिन्तनम् इति शिक्षयति ॥

एवमस्य परमात्मविभूतिरूपत्वादेव जगत्सत्यत्वं पृथङ्न स्थाप्यतेऽस्मिन् जडद्रव्यसरे, किन्तु अग्रे (नायक.स.43 श्लोकादारभ्य) ईश्वरसर एव । ब्रह्मभिन्नं सर्वं मिथ्येति मते साधनं सर्वम्, साध्यं च फलम्,

साधकस्सर्वोऽपि मिथ्या किल भवति। 'न निरोधो न चोत्पत्तिः न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतः ॥' (मां.का.2-32) इति किल तैः स्पष्टमुच्यते। अत एवैभिरेवाचार्यैः तत्सिद्धान्तं विषयीकृत्य 'चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः सिद्धान्ताः'(यति-61) इत्युक्तम्॥

ननु तर्हि 'सर्वं न्याय्यं युक्तिमत्त्वात्' इति वदतस्ते शून्यवादो वा जगन्मिथ्यात्ववादो वा कथं निरसनीयः? अयि भोः! जानामि त्वां पुरोभागिनासीरम्! जानामि च 'वीरहा विषमः शून्यः' इति भगवन्नामानि। परन्तु त्वमेव न जानासि वार्तानां मर्यादाम्॥

रामानुजीया एव प्रायस्तं सूक्ष्मं सम्यङ्न जानन्ति, त्वं कथं जानीयाः! जन्माद्यधिकरणे भगवद्रामानुजैः सत्यपदेन जगद्व्यावृत्तिर्वर्ण्यते। अतो जगतोऽनृतत्वरूपं मिथ्यात्वमस्माकं संमतमेव, असत्यत्वरूपं मिथ्यात्वमेव निरस्यते। को भेदोऽसत्यत्वमिथ्यात्वयोः? अयि भोः! 'सत्यं चानृतं च सत्यमभवत्' इति श्रुतिरपि नाधीता त्वया। किं विस्तरेण! 'अशेषचिदचित्प्रकारकं ब्रह्मैकमेव तत्त्वम्' (न्या.सि.1) इति प्रतिजानात्ययं सिंहः। अतः ब्रह्म न निर्विशेषम्, किन्तु सविशेषमेव। अत एव सविशेषाद्वैतदर्शनमिदम्। भवदाचार्यस्यापीदमेव संमतमिति सर्वमग्रे स्पष्टं भविष्यति॥

यदि चास्य जगतः सर्वथा हेयत्वम्, तदा हेयाहेयद्वन्द्वापातात् कथं मुक्तिः? ननु तर्हि मोक्षस्योपादेयत्वं न स्यात्; उपादेयत्वाङ्गीकारे हेयस्यापि प्राप्त्या द्वन्द्वापातादिति चेत्, सत्यम्, आरम्भावस्थायामेवेयं स्थितिः। परिपूर्णपक्वावस्थायां तु 'वैकुण्ठवासेऽपि न मेऽभिलाषः' (व.पञ्चा.54) इति हि घोषयत्ययमाचार्यतल्लजः। 'इदमर्थवादमात्रम्'—इत्यादिकं तु असंप्रदायज्ञानामज्ञानमात्रम्। 'निरन्तरं निर्विशतस्त्वदीयमस्पृष्टचिन्तापदमाभिरूप्यम्। सत्यं शपे वारणशैलनाथः!' इति शिष्टं पादत्रयम्। अतो मुक्तिः उर्वारुकफलबन्धमुक्तिसदृशा येषाम्, तेषां प्रत्येकमोक्षापेक्षा न स्यादेव। अत इदं सर्वं संपूर्णफलस्वरूपचिन्तनम्, तत्तदधिकारिभेदेन, नेतरसैद्धान्तिकानामिव काकदन्तपरीक्षेति बोधयन्नस्मान् सदाधमर्णीकरोत्ययमाचार्यसार्वभौम इति सर्वं सुमङ्गलम्॥ ७०॥

आचार्यवर्यो ह्ययमेवमत्र सर्वं जगद्विष्णुविभूतिरूपम्।
दृष्ट्वातिधन्यो विरजो बभूव तथैव चास्मांश्च चकार धन्यान्॥

**इति तत्त्वमुक्ताकलापव्याख्यायां सर्वङ्कषाख्यायाम्**

## जडद्रव्यसरः



# जीवसरः



[आत्मनश्शरीरातिरिक्तत्वम्]

71. **योमे हस्तादि वर्ष्मेत्यवयवनिवहद्भाति भिन्नः स एकः**
**प्रत्येकं चेतनत्वे बहुरिह कलहो वीतरागो न जातः ।**
**तत्सङ्घातातिरिक्तेऽप्यवयविनि कथं तेष्वसिद्धा मतिः स्यात्**
**सङ्घातत्वादिभिर्वा घट इव तदचित् स्यान्ममात्मेत्यगत्या ॥ १ ॥**

---

जडद्रव्यनिरूपणानन्तरम् यथाविभागमजडद्रव्यनिरूपणे प्राप्ते, तत्रापि प्रथमस्य प्रत्यगर्थस्य निरूपणे क्रमप्राप्ते, तत्राप्याद्यं जीवतत्त्वं निरूपयितुमुपक्रमते— **यो म** इत्यादिना । **मे**=मम **हस्तादि** मम **वर्ष्म**=शरीरम् इति **अवयवनिवहात्**=हस्ताद्यवयवसमुदायात् **भिन्नः यः भाति**=सर्वानुभवगोचरो भवति **स एकः**= अवयवातिरिक्तः अखण्डः अन्य एव, न **सङ्घातः**=समुदायः, प्रकृते भूतसमुदायः । सङ्घाती=सङ्घातघटकः प्रत्येकपदार्थः । सङ्घातस्य सङ्घात्यात्मकत्वेन=सङ्घातघटकपदार्थानतिरिक्तत्वेन एकत्वासंभवात्, 'एकः' इत्यनेन अहमर्थस्य एकतया भानात् सङ्घातात्मकत्वनिरासः। न च सिद्धान्ते अतिरिक्तावयविनः निरासात्, घटादिगतैकत्वस्यामुख्यत्वात्, प्रकृतेऽपि एकत्वममुख्यमेवास्तुं, का हानिः? इति वाच्यम्; नैय्यायिकवत् अवयविनः अभावेऽपि, अवयवसंयोगस्यातिरिक्तस्याङ्गीकारात्, तादृशसंयोगविशिष्टानामवयवानां विशिष्टरूपेणातिरिक्तत्वव्यवहारविषयत्वेन, एकत्वस्य तद्गतत्वेन मुख्यत्वमेव । साङ्ख्यसंमतसत्कार्यवादो वा, वैशेषिकसंमतासत्कार्यवादो वा तथैव न मण्ड्यते, खण्ड्यते वेति पूर्वमेवोक्तम् (जड.24) । अधिकं तत्तदवसरे भविष्यति । शरीरातिरिक्तत्वे युक्तिमाह— **प्रत्येकमित्यादिना**। अवयवसङ्घातरूपत्वादवयविनः, अवयवानां प्रत्येकं आत्मत्वम्, उत संघातस्येति विकल्पे **इह**=अस्मिन्वादे **प्रत्येकम्**=अवयवानामेकैकशः **चेतनत्वे**=चेतनत्वं यदि स्यात् **बहुः**=बहुविधः **कलहः**=परस्परं अभिप्रायभेदस्य नियतत्वात्, सदा परस्परं सङ्घर्षः अनिवार्यः । ननु स्वार्थनिरपेक्षाः संभूय कार्यं कुर्वन्तीति दृश्यते किल; तथा कुतो न भवतीत्यत्र **वीतरागः**=संपूर्णस्वार्थरहितः **न जातः**=नाद्यावधि जातः दृश्यते । यदा कदाचित् यस्मिन् कस्मिंश्चित् अभिप्रायभेदः स्यादेव; बुद्धिभेदस्यावर्जनीयत्वात् । प्रत्येकमहमर्थत्वे एकेनानुभूतस्यान्येन प्रतिसन्धानानुपपत्तिरपि दोषो ज्ञेयः । यः पूर्वमनुभूतवान्, तस्यैव खलु कालान्तरे स्मरणम् । तर्ह्यस्तु समुदाय एव चैतन्यम्, प्रतिसन्धानस्य निर्वाहात् इत्यत्र=**अवयविनि**=अवयव्याख्ये पदार्थे **तत्सङ्घातातिरिक्तेऽपि** सति=तेषाम् अवयवानां समुदायातिरिक्तत्वे सत्यपि **तेषु**=प्रत्येकमवयवेषु **असिद्धा**=असती **मतिः कथं** तत्र **स्यात्?** सर्वथा असत्कार्यवादस्य पूर्वमेव निरस्तत्वात् । **सङ्घातः**=समुदायः तद्घटकपदार्थापेक्षया वस्तुतोऽत्यन्तं नातिरिक्त इति सूचनाय **अपिशब्दः** । अवयविनश्शरीरस्य प्रत्येकावयवापेक्षयातिरिक्तत्वेऽपि, प्रत्येकमसतः

चैतन्यस्य समुदाये वा सत्त्वं विरुद्धमेव, 'न हि शतमप्यन्धाः पन्थानं पश्यन्ति' इति न्यायात् । उपचयापचयादिभिः शरीरस्य प्रतिक्षणं भिन्नत्वात्, बाल्ये विलोकितस्य यौवनादिषु स्मरणानुपपत्तिरपि दूषणं ज्ञेयम् ॥

एवं तत्साधकं प्रमाणं निरस्य, बाधकमुपन्यस्यति—**सङ्घाततत्वादिभिरित्यादि** । **वा**=अथवा सङ्घाततत्वादिभिर्हेतुभिः **तत्**=शरीरम् **अचित्**=चैतन्यशून्यम् **घट इव स्यात्** । 'शरीरम् न चैतन्यवत्, सङ्घाततत्वात्' इत्यनुमानम् । भूतानां जडत्वस्य सर्वसंमतत्वात्, भूतसङ्घातरूपं शरीरमपि जडमेव । ननु 'मे शरीरम्' इति प्रतीत्या अहमर्थस्यात्मनः शरीरस्य च भेदः सिद्ध्यति किलेति चेत्, 'ममात्मा' इत्यपि अहमर्थस्यात्मनश्च भेदो दृश्यते । न चेदमौपचारिकम्; 'मम शरीरम्' इत्यस्यापि तथात्वसंभवात् । न च 'मम शरीरम्' 'ममात्मा' इति द्वयमपि ते औपचारिकम् । मम तु ममात्मा इत्येकमेवौपचारिकमित्यस्ति लाघवमिति वाच्यम्, अतिरिक्तस्यात्मनः अनङ्गीकर्तुर्मम आत्मशब्दस्यापि शरीरपरत्वेन 'मम शरीरम्' इत्यनेनैकार्थ्यात् 'ममात्मा' इति प्रतीतेरिति चेत् तत्राह—**स्यादित्यादि** । **मम आत्मा इति तु अगत्या**=गत्यन्तराभावादौपचारिकमेव । न च द्वयोः साम्यं शंक्यम्; आत्मशब्दस्य शरीरप्रतिसंबन्धिन्येव प्रसिद्ध्या 'ममात्मा' इत्यस्यास्वारस्यं ते दुर्निवारम् । 'आत्मा देहे' इत्यादिकोशदर्शनेन आत्मपदस्य मनःपर्यायस्यापि सत्त्वेन 'ममात्मा' इत्यस्य 'मम मनः' इत्याद्यर्थकत्वेन औपचारिकत्ववारणसंभवात् । अतः शरीरातिरिक्त एवात्मा ॥

यद्यपि प्रत्यगर्थयोः जीवापेक्षया ईश्वरस्यैव प्राधान्यात् तदेव प्रथमं निरुपणीयम्; परं त्वेवं हि सति जडद्रव्यसरतोऽपि प्रथममीश्वरसरः स्यात् । प्रसिद्ध्यतिशयात् तत्प्राथम्यमिति यदि, तर्हि जीवस्यापि 'अहम्' इत्यापामरं प्रसिद्ध्यतिशयात् बुद्ध्यारोहसौलभ्याभिप्रायेण विभागसमय एव तस्य प्रथमनिर्देशाच्च तस्यैव प्रथमं चिन्ता युक्ता । किञ्च रत्नदर्शनं प्रति रत्नपेटिकादर्शनवत्, परमात्मदर्शनं प्रति तच्छरीरभूतजीवात्मदर्शनस्यावश्य-कत्वात् प्रथमं जीवनिरूपणम् । अपि च, आचार्यवर्योऽपि स्वग्रन्थस्य 'तत्त्वमुक्ताकलापः' इति नाम निर्दिशन्, मुक्तासरे मध्यममणित्वेन ईश्वरं निरूपयितुकामः, तदनुरोधेन द्वितीयसरे जीवं निरूपयति । एतदभिप्रायेणैव तृतीयं मध्यमसरं 'ईश्वरसरः' इत्यनिर्दिशन् 'नायकसरः' इति निर्दिशति । रत्नहारेषु हि मध्यमरत्नस्य 'नायकरत्नम्' इति प्रसिद्धिः ॥

एवं जीवनिरूपणे प्रसक्ते, प्रथमं तस्य देहाद्यतिरिक्तत्वसाधनस्यैवास्तिकानां प्रथमकर्तव्यत्वात्ते-नैवोपक्रमः । आत्मनो हि अहमर्थत्वं सर्वसंमतम् । न तु परमतवदहमर्थानात्मत्ववादिनो वयम् । लोके चापामरपण्डितप्रवरम् 'अहम्' इति प्रतीतिः शरीरविषयिण्येव सर्वानुभवसिद्धा । पामराणामेवेयं शरीरेऽहं-बुद्धिः, न तु आत्मज्ञानिनामिति तु न मन्तव्यम्; 'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे' (गी.9-1) 'इदं विवस्वते योगं प्रोक्तवानहम्' (गी.4-1) इत्यादौ सर्वज्ञश्रेष्ठेन भगवताऽपि 'प्रवक्ष्यामि' इति कथनात् । प्रवचनं हि शब्दप्रयोगः। स च कण्ठताल्वाद्यभिघातजन्यः प्रसिद्धः । स च शरीरव्यापारः । यद्यप्युपदेशोऽपि बहुविधः मानसिकादिभेदेन । तेषु वाचिकोपदेश एव सर्वजनप्रसिद्धः । तत्रास्ति शरीरस्य मुख्यं स्थानम् ।

ततश्च 'प्रवक्ष्यामि' इत्युत्तमपुरुषलभ्योऽहंशब्दः लोकदृष्ट्या शरीरवाच्येव। ज्ञानिदृष्ट्या, शरीरविशिष्टवाची वा। केवलात्मवाची तु सर्वथा न भवति, केवलस्यात्मनः शब्दप्रयोगसामर्थ्याभावात्। न च केवलस्य शरीरस्य जडत्वेन शरीरं वा केवलं कथमुपदिशेदिति शङ्क्यम्, चार्वाकमते चैतन्यस्य शरीरधर्मत्वेन, उपदेशादीनां तादृशशरीरकार्यत्वात्। मृतशरीरे चैतन्यस्य व्यभिचारप्रदर्शनमज्ञानमूलमेव, 'मृतशरीर'मित्यत्र मृतस्य शरीरमित्यर्थो वा, मृतं शरीरमित्यर्थो वा? आद्ये चार्वाकमते शरीरातिरिक्तस्यात्मनोऽनङ्गीकारात् ममात्मेतिवद्दोषाप्रसक्तिः। द्वितीये तु शरीरस्य मृतिर्नाम चैतन्यशून्यता। तत्र च कारणम्—यादृशरीत्या भूतानां मेलने चैतन्याभिव्यक्तिः, तद्वैकल्यमेव। अतस्तत्र शरीरत्वव्यवहारः भूतपूर्वगत्याश्रयणेनैव। सिद्धान्तेऽप्येतत्समानम्। चेतनवियोगानन्तरं तत्र शवपदप्रयोग एव युक्तः। अतश्शरीरं नाम चैतन्याभिव्यक्त्याधारभूतमेव। तादृशमेव उपदेशादिकारणम्, न भूतमात्रमिति न दोषः। किं बहुना भगवतैव 'ज्ञानिनः' 'तत्त्वदर्शिनः' इति प्रशंसापूर्वकम् 'उपदेक्ष्यन्ति' इत्यभिधानात् ज्ञानिनामपि अहंबुद्धिः शरीरविशिष्टविषयिण्येव। अन्यथा उपदेशानुपपत्तिर्जागरूकैव। अतश्च प्राप्ताप्राप्तविवेकन्यायेन शरीरस्यै-वाहमर्थत्वात् शरीरमेव आत्मा, न त्वतिरिक्तः॥

किं बहुना! 'विज्ञाघन एवैतेभ्यो भूतेभ्यःसमुत्थाय तान्येवानु विनश्यति,न प्रेत्य संज्ञाऽस्तीति' (बृ.6-5-13, 4-4-12) इति श्रुत्यैव भूतचैतन्यवादोऽभिहितः। न चैत्पूर्वपक्षरूपम्; अनन्तरं तन्निरासस्य लेशतोऽप्यदर्शनात्। प्रत्युत, मैत्रेय्या तद्वाक्यश्रवणेन 'अत्रैव मा भगवानमूमुहत्, न प्रेत्य संज्ञास्तीति' इति स्वस्या मोहे प्रतिपादिते 'न वा अरेऽहं मोहं ब्रवीमि' इति याज्ञवल्क्येन स्वोक्तस्यैव समर्थनाच्च शरीरमेवात्मेति चार्वाकवादं प्रथमं निराकरोति॥

यद्यपि चार्वाकमतमिति वा चार्वाकदर्शनमिति वा प्रत्येकमेकं दर्शनं नास्त्येव, किन्तु तत् पण्डितैः कल्पितः पोषितश्च कश्चन काल्पनिकशिशुरेव। एतत्तत्त्वञ्चाग्रे (श्लो.3) स्पष्टीक्रियते। अथापि पण्डितकुलप्रसिद्ध्यैवाचार्यैरपि चार्वाकमतमनूद्य दूष्यते।'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः' (आ.सि.) इति किल परमाचार्याः। अतो देहाद्यतिरिक्तत्वमात्मनस्साधनीयम्। तत्र च प्रथमकक्ष्यायां देहस्यैव प्रसक्तेः तस्य प्रथमं निराकरणं युक्तमेव। इन्द्रियाद्यात्मवादश्चाचिरादेव निराक्रियते॥

ननु चूर्ण(सुधा)हरिद्रयोः मेलने, पूर्वमसतः रक्तवर्णस्य दर्शनात् प्रत्येकमसतोऽपि समुदाये उत्पत्तिः दृष्टचरीति चेत्, सत्यम्; परन्तु सर्वथा असतः उत्पत्तौ, चूर्णहरिद्रयोर्मेलन एव तथेति कथं नियमः? सिकताहरिद्रयोर्मेलनेऽपि भवतु तथा, असत्त्वाविशेषात्। अतः प्रकारान्तरेण स्थितं प्रकारान्तरेण परिणमत इति, अभिव्यज्यत इति वा परिणामविशेषस्वभावोऽयम्। न हि मृदो घट इव तन्तुभ्योऽपि घटस्स्यात्। अतः पूर्वं असतः उत्पत्तिः, अभिव्यक्तिर्वा न संभवत्येव। एतादृशः **परिणामविशेष एव विवर्त** इत्युच्यते इति तत्प्रकरणे विशदीकरिष्यामः॥

ननु कोऽयं सुभगाभिक्षुकन्यायः ? वयमप्येतदेव हि वदामः, प्रत्येकमदृष्टमपि चैतन्यं विलक्षणभूतसङ्घातभाववशादाविर्भवति इत्येव। 'विज्ञानघन एव' इति श्रुतिरप्येतदेवाभिप्रैति। अतश्शरीर-

मेवात्मेत्यत्र कं दोषं पश्यसि त्वम्? सत्यं भोः! परन्तु इदमत्र निरुच्यताम्। 'अहं'प्रतीतेश्शरीरविषयत्वात्किल तथोच्यते भवता। तर्हि 'अहं पश्यामि' 'अहं स्पृशामि' इत्यप्यनुभवात् चक्षुरादावपि अहं प्रतीतेस्सत्त्वात् कथं शरीरमेवात्मा? न च इन्द्रियशरीरयोरैक्यम्, केवलशरीरस्य द्रष्टृत्वाद्यसंभवात्। न चेन्द्रियाणि सर्वाण्यपि भूतपरिणामविशेषाण्येव सन्तु, वैशेषिकवदिति वाच्यम्, तथापि शरीरेन्द्रिये भिन्ने एव। किञ्च केवलभौतिकान्येव तानि पश्येयुरपि। परन्तु तेषाम् 'अहम्' इति प्रत्यग्दर्शनं कथमिति कथ्यताम्। सोऽप्यस्तु परिणामविशेष इति चेत्, 'अहं मन्ये' इत्यत्राहंपदार्थः कः? न च तदपि भवेदेव भौतिकं किञ्चिदिति चेत्, सर्वेन्द्रियाणां स्तम्भेऽपि गाढान्धकारेऽपि हि चिन्तयति मनः। तत्तु न कस्याप्यैन्द्रियिकम्। अतीन्द्रियं किञ्चिदपि नास्त्येवेति किल तवोद्धोषः। तादृशे स्वयंसिद्धः प्रत्यक्त्वानुभवः कथम्? अस्त्विदं सर्वमेकत्र। तर्हीदमत्रोच्यताम्, चैतन्यमिति किञ्चिदस्तीत्यत्र किं प्रमाणम्? न हि चक्षुरादिभिः चैतन्यं कस्यापि गृह्यते। अहमनुभवस्तु गाढान्धकारेऽपि भवति। अतश्चैतन्यसद्भाव एव प्रमाणं प्रदर्शयितुं न शक्यमतीन्द्रिय वस्त्वनङ्गीकुर्वता त्वया। अतश्शरीरेन्द्रियमनस्सु प्रत्यक्त्वानुभव कथं शरीरमात्रात्मवादिना निर्वाह्यः? तस्मात् केवलं शरीरं नाहमर्थः। किन्तु तदतिरिक्तं किञ्चित्। एतद्विस्तरश्च चतुर्थे श्लोके भविष्यति ॥

यत्तूक्तम् ज्ञानिनामप्यहंप्रत्ययः शरीरविषय एवेति, अहो! एवं वदन् त्वमेव स्वीयमज्ञानं प्रकटयसि! यतो ज्ञानिनमङ्गीकृत्यैवं पृच्छसि। तर्हि 'अहं वदामि' 'अहं गच्छामि' इति व्यवहारस्तेषामपि कथं दृश्यत इति चेत्, सत्यम्। तस्मिन् यद्यपि शरीरं विषयः, परन्तु शरीरमात्रं न विषयः। शरीरशरीरिणोः संबन्धं केवलमाभिमानिकं गृहगृहपत्योरिवेति भावयसि त्वम्। आः! गृहगृहपत्योः संबन्धो वा किं सामान्यरूप इति मन्यसे त्वम्? तत्रापि ज्ञानिनां दृष्ट्या तु गृहगृहपतिसंबन्धः न केवलं लौकिकः, अपि तु अस्ति धर्मकृतोऽपि सूक्ष्मः कश्चित् संबन्धस्तयोः। ननु भोः! संबन्धः आभिमानिकः, न कश्चित्तदतिरिक्तो दृश्यते इति चेत्; किं देहेऽप्यात्मबुद्धिः नाभिमानिकी? आभिमानिक्येव। अथाप्यतिरिक्तोऽप्यस्ति कश्चित्, यत्प्रयुक्ता धर्मभूतज्ञानस्य व्याप्तिश्शरीरे तवापि। अन्यथा हि अनात्मनि देह इव घटेऽपि प्रत्यक्त्वभानं स्यात्, घटे स्वीयत्वाभिमानसत्त्वात्। अयि सूक्ष्ममते! तर्हि पुत्रात्मवादे किं कारणं पश्यसि? ब्रह्मबन्धो! किं न श्रुता श्रुतिः 'आत्मा वै पुत्रनामासि' इति। तत्र वा कथमिति पृच्छामो ब्रह्मर्षिणं त्वाम्। **उक्तमेवाभियुक्तैः** 'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात्' इति गौणः **पुत्रात्मवाद** इति। कथं स गौणः? इति पुनः पृच्छामः। अभिमानमात्रकृतश्चेत्, घटादावपि हि समानमेतत्। पितुः रूपगुणादिकमप्यादत्ते पुरुषः। अत एव किल 'आत्मा वै पुत्रः' इति श्रुतिर्वक्ति। पिता पुत्रः कथं भवेत्? इति चेत्, अस्ति तत्रापि सूक्ष्मस्संबन्धो देह इवेत्यधिकमप्रसक्तमत्र ॥

वस्तुतस्तु **पुत्रात्मवादे**ऽप्यस्ति रहस्यं किञ्चित्। कथमन्यथा द्रोणाचार्यस्य पुत्रमरणेन प्राणवियोगः? कथं वा व्यासस्य शुकवियोगे 'पुत्र'इत्याक्रन्दनम्? कथं वा वसिष्ठस्य स्वपुत्राणां दुर्गतिज्ञानेन प्राणत्यागप्रयत्नः। श्रीरामस्य वा सीतावियोगे कथं प्राणधारणाक्षमता? किमेतेऽज्ञानिनः? एवमेव केषाञ्चित् स्वपुत्रपत्न्यादि- ष्वप्यभिमानाभावोऽपि लोके दृश्यत एव। किमेतावता ते ज्ञानिनः? अभिमानोऽपि सर्वस्यापि सर्वत्रापि भवति

किम्? अत एव किल भगवद्भाष्यकारैः 'आत्मनस्तु कामाय' इत्यत्रात्मपदं परमात्मपरमुक्तम्। ऋणपुत्रपत्नीवतां कथमेतद्रहस्यज्ञानं भवेत्? ननु तर्हि लुब्धानां धनहानौ प्राणहानेर्दर्शनात् अर्थानामप्यात्मत्वं स्यादिति चेत्— किं न दृष्टमार्षवचनम् 'अर्था बहिश्चराः प्राणाः' (म.भा.) इति। अर्थहान्या प्राणहानिर्वा किं न दृष्टचरी? अत एव 'पुत्रदेह' इति स्थाने **'पुत्रगेह'** इत्यपि पठनीयमेव। लोकदृष्ट्या केषाञ्चित्तदविनाभूततापि भवेत् लेशतः। एवञ्च आत्मनस्तावद्दूरव्याप्त्या तत्तदविनाभावादेषां आपाततो बाह्यानामप्यात्मत्वम्॥

ननु बाह्यानां गृहारामादीनां कथमात्मत्वमिति चेत्; देहो वा किमान्तरः? कथं तर्हि तस्मिन्नात्मत्वभ्रमः? बाह्ये देहे यद्यात्मत्वभ्रमः, तर्हि गेहे वा कुतो न भवेत्? देहे चैतन्यव्याप्तिरस्तीति चेत्, किं तत् धर्मिचैतन्यम्? उत धर्मचैतन्यम्? धर्मिचैतन्यं देहाद्बहिः कथं प्रसरेत्? अतो धर्मचैतन्यमेवेति चेत्, तस्य पराक्त्वेन, प्रत्यक्त्वाभावात् 'अहम्' इति प्रत्यक्त्वभानं वा कथम्? अयि भोः! पण्डितंमन्य! न तावत्सुलभं त्विदम्, यथा जानन्ति सर्वेऽपि। चिन्त्यतामवधानतः॥

परन्तु—पराग्वस्तुष्वपि यः प्रत्यक्त्वभ्रममापादयति, स मूलभूतः प्रत्यगर्थ एवात्माऽन्येषामपि प्रत्यक्त्वं स्वसंबन्धादेवारोपयन् विडम्बयन्निव, क्रीडतीव, 'श्रोत्रस्य श्रोत्रं मनसो मनो यत्' इत्यद्भुतं वर्ण्यमानस्सर्वनिवाश्चर्ये मज्जयतीति तं को अद्धा वेद? को वा प्रावोचत्? इत्यलमतिचर्चयानयातिगहनया॥

एवमेव शरीरात्मनोः संबन्धोऽप्यतिगहनः, न केवलं संयोगः, किन्तु अपृथक्सिद्धिः। अतः पूर्णज्ञानिनामपि व्यवहारदशायां त्रिविधव्यवहारः अवर्जनीयः—शरीरप्रधानः, आत्मप्रधानः, समप्रधानश्चेति। न हि केवलं शरीरं शिष्यायोपदेष्टुं प्रभवेत्, नापि केवलमात्मा। अपि तु तत्तद्विषयानुगुणं तत्तत्कक्ष्यायां स्थित्वा ते व्यवहरन्ति। 'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान्। जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः॥' इति व्यासवचनमवधेयम्। 'भूतात्मा परमात्मा' इति च सहस्रनामस्वपि पठ्यते। एतत्तत्त्वमप्यग्रे (श्लो.3) व्यक्तीभविष्यति। अतः'उत्तमाधिकारिणां वल्मीकसर्परज्जुसर्पयोर्भेदो नास्ति' इत्यादिवचनमपि 'समलोष्टाश्मकाञ्चनः' इतिवत् तत्तत्पुरुषोपरि संभाव्यमानपरिणामदृष्ट्या, न व्यवहारदृष्ट्या। लोष्टस्य लाभे नाशे वा, काञ्चनस्य तथात्वे वाविकृतचित्ता ज्ञानिनः। यथाश्रुतार्थे हि ते उन्मत्ता एव भवेयुः। यद्यप्यस्ति ज्ञानोन्मादस्तेषामपि। अत एव'परिणामदृष्ट्या इत्युक्तम्। अधिकं त्वन्यत्र॥

यत्तु शरीरमेवात्मेति, तर्हि मृतशरीरेऽपि तथा व्यवहारापत्तिः। चैतन्यविशिष्टमेवात्मेति मृतशरीरस्य न तथात्वमिति चेत्; भूतचतुष्टयातिरिक्ततत्त्वमनङ्गीकुर्वतः अतीन्द्रियचैतन्यसत्त्वे किं प्रमाणम्? स्वानुभव एवेति चेत्, किंकरणकोऽयमनुभव इति वक्तव्यम्। न करणाधीनं तत् किन्तु सहजमिति चेत्, स्वप्रकाशवस्त्वङ्गीकृतवते नमस्तुभ्यम्। किञ्च परशरीरे चैतन्यं तर्हि केन सिद्ध्यति? यद्यनुमानेन, तर्ह्यपसिद्धान्तः, प्रत्यक्षमेकमेव प्रमाणमित्यङ्गीकारात्। किञ्च स्वानुभव इत्यत्रापि वक्तव्यम्, अतीतानागतादीनां कथमनुभवः? अनुभवस्य वर्तमानमात्रविषयकत्वात्। अविचारितरमणीयमेव सर्वं स्वभावात् भवतीति चेत्; तर्हि तद्वदेव पूर्वापरजन्मनामपि स्वभावादेव संभवः कथं वारयितुं शक्यः। अस्माकं तथा न दृश्यत

इति चेत्, उक्तं किल दर्शनं वर्तमानमात्रविषयकमिति। अत एव वदामः चार्वाकदर्शनमिति दर्शनमेकं वस्तुतो नास्त्येव। पण्डितैः परस्परविरुद्धतया कल्पितमिदं दर्शनमसमग्रम्, क्रमेण संवर्धितमिति। अधिकमनन्तरश्लोके द्रष्टव्यम्॥

**वस्तुतस्तु**—आत्मनःशरीरानतिरेके तस्यानित्यत्वेन नाशदर्शनात् कृतहानाकृताभ्यागमप्रसङ्गस्य दुर्निवारत्वेन सुखदुःखादिव्यवस्थाया असंभवात् सकललोकवैयाकुली अनिवार्या। शरीरातिरिक्तत्वे तु पूर्वोत्तरजन्मनां सिद्ध्या, पूर्वकर्मानुरोधेन सुखदुःखव्यवस्थया सर्वं सुपरिहरम्। ननु पूर्वापरजन्मनोस्सद्भावे प्रमाणाभावात्कथमिदम्। न च तावता सुखदुःखव्यवरथा कथमिति शंक्यम्; कण्टकतैक्ष्ण्यादिवत् स्वभाव-व्यवस्थाया आवश्यकत्वे तयैवोपपत्तेरितिचेत्, अयं विचारो भविष्यत्यग्रे (श्लो.25) विस्तरेण॥

किञ्च,शरीरस्यैवात्मत्वे आत्मन एवाहमर्थतया, किं कृत्स्नस्य देहस्यात्मत्वम्, उत तदेकदेशस्य? एकदेशस्यात्मत्वे विनिगमनाविरहः, हस्तपादादावप्यहंप्रत्यप्रसङ्गः। हस्तपादादेः व्याधिग्रस्तत्वे 'अहं व्याधितः' 'अहं पङ्गुः' इत्यादिव्यवहारादिष्टापत्तिरिति न वक्तुं शक्यम्; 'अहं काणः' 'अहं बधिरः' इत्यादिव्यवहारादिन्द्रियाणामप्यात्मत्वप्रसङ्गेन विनिगमनाविरहः। न च कृत्स्नस्य देहस्यात्मत्वमित्याद्यपक्ष एवास्त्विति वाच्यम्; आबालपण्डितं हृदयप्रदेशावच्छेदेनैव 'अहम्'प्रतीतेरनुभवात्। अत एव 'हृदि ह्येष आत्मा' इति श्रुतिः। न च हृदयस्यैवास्त्वहमर्थत्वमिति वाच्यम्, हृदयस्य जडत्वात् हृदयस्यावच्छेदक-तयैवाहंप्रतीतेरनुभवात्। अत एव 'हृदि' इति सप्तम्युपपत्तिः। अन्यथा हि 'हृदेष आत्मा' इत्येव स्यात्। किं बहुना! शरीरस्यैवात्मत्वे तस्य प्रतिक्षणमुपचयापचभ्यां भेतात् बाल्ये विलोकितस्य वार्धक्ये स्मरणानुपपत्तिः। अतश्शरीरातिरिक्त एवात्मा। अधिकमग्रे क्रमशो भविष्यति॥ १॥

ननु 'स्थूलोऽहं जानामि' 'कृशोऽहं सुखी' इत्यादिप्रतीत्या देहधर्मैः स्थूलत्वकृशत्वादिभिस्सह भवदभिमतसुखाद्यात्मधर्माणां सामानधिकरण्यानुभवव्यवहारयोः बहुलं दर्शनात् अहमर्थत्वेनाभिमतः आत्मा शरीरमेव, स्थौल्यादीनां भवदात्मन्यसंभवात्। लोकव्यवस्था तु कण्टकतैक्ष्ण्यादिवत्, पश्वादिवद्वा स्वभावादेवोप-पद्यते। न हि कण्टकानां तैक्ष्ण्यं केनचित् बुद्धिपूर्वकं कृतम्। न वा पश्वादीनां पूर्वकर्मापेक्षा। अत एव अन्धकारे निमीलितचक्षुषो वा स्वशरीरस्थितिचलनादिकं स्वसंवेद्यं संगच्छते। यदि शरीरमहमर्थो न स्यात्, कथमिदं स्वसंवेद्यत्वं सर्वानुभवसिद्धं संगच्छेत। न चेदमानुमानिकम्; हेत्वादेरदर्शनात्, अपरोक्षतयैवानु-भवाच्च। एवमपरोक्षतयैवानुभवे सति शरीरातिरिक्तस्य प्रत्येकमदर्शनाच्च शरीरमेवाहमर्थ आत्मा। एतेन 'सङ्घातत्वादिभिर्वा' इत्याद्यपि निरस्तम्। अबाधितापरोक्षानुभवस्यातिप्रबलत्वेन तेन अनुमानस्य बाधात्। किञ्च 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति, न प्रेत्य संज्ञास्ति' (बृ.4-4-12) इति स्पष्टं शरीरचैतन्यवादं श्रुतिरेव वर्णयति। न चेदं पूर्वपक्षरूपम्; एतद्वचनं श्रुत्वा 'अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति' इति पृष्टवत्यै मैत्रेय्यै 'न वा अरे अहं मोहं ब्रवीमि' इति हि प्रत्याह याज्ञवल्क्यः। अतो भूतचैतन्यवादः श्रुतिसंमतः। अपि च शरीरातिरिक्तस्यात्मनस्सद्भावे प्रमाणं किम्? न तावत् 'अहम्' इत्यनुभवः, शरीरवत एव तथानुभवात्। न च 'मम शरीरम्' इति व्यवहारात्तत्सिद्धिः, 'मामात्मा'

[आत्मनश्शरीरातिरेके प्रमाणम्]

72. **स्याद्वाऽसौ चर्मदृष्टेरयमहमिति धीर्देह एवात्मजुष्टे**
**निष्टप्ते लोहपिण्डे हुतवहमतिवद्भेदकाख्यातिमूला।**
**श्रुत्यार्थापत्तिभिश्च श्रुतिभिरपि च नस्सर्वदोषोज्झिताभिः**
**देही देहान्तराप्तिक्षम इह विदितः संविदानन्दरूपः ॥ २ ॥**

इतिवदुपपत्तेः। 'ममात्मा' इति प्रतीतेस्त्वयैवौपचारिकत्वाङ्गीकारादिति शङ्कायामाह—**स्याद्वासावित्यादिना।** **निष्टप्ते**=सम्यक् तप्ते **लोहपिण्डे**=अयःपिण्डे **हुतवहमतिवत्**=वह्निबुद्धिवत् **भेदकाख्यातिमूला**=भेदकाकाराज्ञानमूला **'अयमहम्' इत्यसौ धीः**=अनुभवः **चर्मदृष्टेः** स्थूलबुद्धेः **आत्मजुष्टे देह एव** आत्मसहितदेहविषयिण्येव **स्याद्वा**=भवेद्वा। **वा** इति प्रौढिवादः। तेन 'न मांसचक्षुरभिवीक्षते तम्' इतिवत् ज्ञानिनो ये न भवन्ति, तेषां चर्मचक्षुषां स्वात्मसंदर्शनं कथं वा संभवीति सूचितम्। 'देह एव' इत्यत्र एवकारोऽयोगव्यवच्छेदे, न त्वन्ययोगव्यवच्छेदे, इन्द्रियप्रभृतिष्वपि 'अहं पश्यामि' इत्यादावहमिति प्रतीतेर्जायमानत्वात्॥

वस्तुतस्तु वैदिकानां वेदेनैव तत्सिद्धिरित्याह—**श्रुत्यर्थापत्तिभिश्चेत्यादि।** **श्रुत्यर्थापत्तिभिश्च** =श्रुत्यैव सिद्धा अर्थापत्तयः, ताभिश्च 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिभिः पारलौकिकफलविधायकैः वाक्यैश्च। शरीरातिरिक्तात्मनोऽभावे एतादृशविधयः अर्थशून्यास्स्युः। इयमेव श्रुतार्थापत्तिरित्युच्यते। **अपि च श्रुतिभिः** इति दृष्टार्थापत्तिः। ननु 'पीनो देवदत्तः' इत्यादौ पीनत्वादिः दृष्टोऽर्थः। तदनुपपत्त्या रात्रिभोजनकल्पनं दृष्टार्थापत्तिरिति प्रसिद्धम्। भवता तु 'श्रुतिः' दृष्टार्थापत्तिरुच्यते, कथमिदम्? श्रुतिः खलु शब्दः। सत्यम्! लौकिकानां सा दृष्टार्थापत्तिः। वैदिकानां तु श्रुतिरेव दिव्यं चक्षुः। दृश्यते किल वैदिकानां निर्देशः—'श्रुतिस्मृतिभ्याम्' इति वक्तव्ये 'दृष्टस्मृतिभ्याम्' (ब्र.सू.3-1-8) इति। प्रत्यक्षा श्रुतिः, श्रुतार्थानामनुपपत्तिश्च विवक्षिता। **सर्वदोषोज्झिताभिः**= पौरुषेयत्वप्रयुक्ताप्रामाण्यशङ्काहेतुदूराभिः श्रुतिभिश्चेति श्रुतिविशेषणं तस्या वैशिष्ट्यप्रदर्शनार्थम्। **नः**=वैदिकानामस्माकम् **इह**=एतद्विषये **देही**=देहस्वामी, अत एव देहातिरिक्तः **देहान्तराप्तिक्षमः**=देहान्तरप्राप्त्यर्हः=जन्मान्तरप्राप्त्यर्हः अत एव शरीरातिरिक्तः, स्वरूपतस्तु **संविदानन्दरूपः**=ज्ञानानन्दमयः **विदितः**=निश्चितः। **'च'**कारेण स्मृतिरपि विवक्षिता 'देही नित्यमवध्योऽयं देहे' (गी.2-30) इत्यादिरूपा। श्रुतिश्च 'ज्ञाज्ञौ द्वावजौ' (श्वे.1-9) इति 'अस्य प्रकरणग्रन्थत्वेन स्वीयानुद्दिश्यैव एतद्ग्रन्थकरणात्, देहातिरिक्तात्मसद्भावे श्रुतिरेव प्रमाणतयोपन्यस्यते। नास्तिकैस्साकं विवादे तु, तैः वेदप्रामाण्यानङ्गीकारात्, नैवं वक्तुं शक्यम्; अनुमानमेव प्रमाणं प्रदर्शनीयम्। अत एव 'सुखदुःखज्ञानान्यात्मनो लिङ्गम्' (न्या.सू.1-1-2) 'प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः' (मुक्ता.प्रत्यक्ष) इत्याद्युच्यते। एकस्मिन्नेव विषये प्रमाणद्वयप्रवृत्तौ न कश्चन विरोध इति ज्ञेयम्। समनन्तरश्लोकेऽपीदं स्पष्टम्॥

ननु भोः! इदं प्रथमं विविच्यताम्। 'अयमहम्' इति धीः किं देहे आत्मभ्रमः, उत आत्मनि देहभ्रमः? भ्रमस्थले सर्वत्र हि त्रयमावश्यकम्—अधिष्ठानम्, अध्यस्तम्, साधारणाकारश्चेति। यथा रज्जुरधिष्ठानम्, तत्राध्यस्तस्सर्पः, अध्यासहेतुश्च उभयोस्साधारणाकारो दैर्घ्यादिः। 'अयं सर्पः' इति भ्रमे इदं त्रयमावश्यकम्। तथा प्रकृते 'अयम्' इति शरीरम्, 'अहम्' इत्यात्मा। उभयोस्साधारणाकारः प्रत्यक्त्वमेव वक्तव्यम्। जडस्य शरीरस्य प्रत्यक्त्वं कथं वा भवेत्?

ननु चात्राचार्यैः 'निष्टप्ते लोहपिण्डे' इत्यादिनात्यन्ततप्ताय एव दृष्टान्ततयाभ्यधायि। सम्यक् तप्तं रक्तवर्णं अयः 'अयं वह्निः' इत्येव वदन्ति जनाः। तद्वत् शरीरं सर्वमाविश्य जीवो वर्तते यतः, तत एव 'अयमहम्' इति व्यवहरन्ति जनाः। अतोऽत्रोभयसाधारणाकारो नापेक्ष्यते। न हि अयसोऽग्नेश्च साधारणाकारो वर्तते। आरोपस्थले सर्वत्राप्येवमेव। 'लोहितः स्फटिकः' इत्यादौ स्पष्टमिदम्। न हि स्फटिकजपाकुसुमयोः साधारणधर्मः कश्चिदस्ति। अयसि वह्निव्यवहारो हि द्विविधः—अयसो वह्नेश्च भेदं जानतां प्रौढमतीनाम् व्यवहार एकः, भेदमजानतामभेदं पश्यतामप्रौढमतीनामपरः। आद्यस्त्वारोपः, अत एवौपचारिकः। द्वितीयस्तु आरोपाज्ञानाद्भ्रमः। आचार्यैस्तु 'भेदकाख्यातिमूला' इति विशेषणात् द्वितीय एवात्र दृष्टान्तत्वेनाभिमत इति भाति। न चौपाधिकत्वाज्ञानमेव विवक्षितम्, न तु भ्रम इति वाच्यम्; अयि भोः साधो! अज्ञातौपाधिकत्वभ्रमत्वयोः को विशेषः? विविच्यताम्। शुक्तिरजतभ्रमोऽपि सादृश्यौपाधिक एव। भास्वरशुक्लरूपमेव किलात्रोपाधिः। एवञ्च 'लोहपिण्डे हुतवहमतिवत्' इति भ्रमोऽपि एवमेव वक्तव्यः। बालास्तु आरोपमपि न जानन्ति; उपाधिमपि न जानन्ति। किन्तु अनुभवमात्रं तेषाम्। अत एव खलु 'इन्द्रियैरुपलब्धं यत् तत् तत्त्वेन तु गृह्यते। जातास्तत्त्वविदो बालाः तत्त्वज्ञानेन किं फलम्' इत्युपहसन्ति बौद्धाः। अतश्च प्रकृते 'अयो दहति' इतिवत् देहात्मभ्रमश्चेत्, कारणमुपपाद्यताम्। अयसः अग्न्यावेशः प्रत्यक्षसिद्धः। प्रकृते देहे जीवव्याप्तिः कथम्, तस्याणुत्वात्। न च तद्धर्मस्य ज्ञानस्य व्याप्तिरस्तीति वाच्यम्। धर्मभूतज्ञानस्य प्रत्यक्त्वाभावात्। 'स्थूलोऽहं जानामि' इत्यस्य प्रत्यक्त्वानुभवरूपत्वात्। अतः कथं देहात्मभ्रमः? ॥

अथवा पश्यामो गहनानिमाननुभवान् अग्रेऽख्यातिप्रकरणे (बुद्धि.14)। प्रकृते 'अयमहम्' इति धीः अयसि वह्निव्याप्तिवत्, देहे चैतन्यव्याप्त्या जायत इति स्पष्टमुक्तम्। सवपिक्षयान्तर्वर्तमानं प्रत्यगात्मतत्त्वम् बुद्धिमनइन्द्रियप्राणशरीरपर्यन्तं संक्रान्तं सत्, तत्र सर्वत्राहंप्रत्ययं जनयति। एवञ्च यस्य संक्रमणेनेतरदपि प्रत्यगिव भाति, तस्यैव प्रत्यक्त्वं सहजम्, इतरत्र तु तदौपाधिकम्। अतः प्रत्यक्चैतन्यं शरीरमभिव्याप्य, प्रसृत्य शरीराकारमापन्नमहंप्रत्ययहेतुः प्रौढमतीनाम् 'अयो दहति' इतिवत्। अत एव निमीलितचक्षुषोऽपि शरीरं स्वयं भासते। न हि तत्र स्थूलं शरीरं भातुमलम्, तस्य जडत्वेन बाह्यत्वात्। नापि मानसं भानम्, बाह्ये विषये मानसोऽस्वातन्त्र्यात्। अतः प्रत्यगात्मचैतन्यमेव सर्वत्राहंप्रत्ययहेतुः॥

ननु धर्मभूतज्ञानस्यैव शरीरव्याप्तेः प्रतिपादनात्, तस्य प्रत्यक्त्वाभावात्, तदवच्छिन्ने शरीरे कथं प्रत्यक्त्वभानमिति चेत्, अग्रे चतुर्थश्लोकेऽस्यार्थस्याचार्यैरेवोपक्षेपादधिकं तत्र विचारयामः। प्रकृते, निमीलितचक्षुषः

शरीराकारेण परिणतस्य चैतन्यस्य स्वप्रकाशत्वात्, प्रत्यक्त्वाच्च तदवच्छिन्ने शरीरेऽपि अयसि वह्निवत् प्रत्यक्त्वभानमावश्यकम्। अथवा प्राणस्य सर्वशरीरव्याप्तिर्वर्तत एव। प्राणस्य जीवव्यवहारोपाधिष्वत्यन्तं प्राधान्यम् 'प्राण एव प्रज्ञात्मा' (कौ.3-9) इत्यादिना सर्वसंप्रतिपन्नम्। स च सर्वं शरीरं व्याप्यैव वर्तते। एवञ्चाहमर्थोऽपि प्राणं व्याप्य, तद्द्वारा शरीरं व्याप्य वर्तत इति शरीरेऽहंप्रत्ययः प्राणोपाधिकोऽपि भवितुमर्हति। अथवा किमर्थं दैन्यम्! पञ्चभूतान्यपि आत्मन उपाधय एवेति, तदात्मके देहेप्यहमर्थव्याप्तिर्वर्तत एव। अत एव 'किण्वादिभ्यो मदशक्तिवत्' इत्यपि नात्यन्तमप्रामाणिकम्। तावत्येव विश्रान्तिर्नेत्येतावदेवात्र ज्ञेयम्। एतेन 'विज्ञानघन एव' इत्याद्यपि व्याख्यातम्। अत्रेदमपि पठ्यताम् 'पुरुषे त्वेवाविस्तरामात्मा। स हि प्रज्ञानेन संपन्नतमः। विज्ञातं वदति, विज्ञातं पश्यति, वेद श्वस्तनम्, वेद लोकालोकौ, मर्त्येनामृतमीक्षत इत्येवं संपन्नः। अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानम्' (ऐ.आ.2-3-2) इति। 'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान्। जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः॥'(महाभा.) इति च॥

**वस्तुतस्तु**—वह्निरेव दहति, न त्वयः इति विवेकवतामपि वह्नेराधारमन्तरा स्थातुमशक्यत्वेन 'अयो दहति' इति विशिष्टव्यवहारः सहजतया दृश्यत एव। स्वायत्तशब्दप्रपञ्चानामपि अर्थविशेषविवक्षया औपचारिकाः 'गङ्गायां घोषः' 'गौर्वाहिकः' इत्यादिव्यवहाराः बहुलं भवन्त्येवेति प्रदर्शितमेव। सर्वज्ञः सर्ववित् श्रीकृष्णोऽपि हि 'अहं वक्ष्यामि' इत्येव वदति, न तु 'मम मुखं वक्ष्यति' इति। 'बाधितानुवृत्त्या'दिकं दृष्टान्तमात्रम्। तत्राग्रहप्रदर्शनादिकं भावापरिचयमूलकमित्यग्रे (श्लो.74) विचार्यते। 'अहं वक्ष्यामि' इति न श्रीकृष्णस्य वचनम्, किन्तु व्यासस्येति चेत्, अहो! कियानाग्रहस्तव। अस्तु! सर्वज्ञः नारायणकलावतारः श्रीव्यासः श्रीकृष्णं मानुषीं तनुमाश्रितं शरीरातिरिक्तं जानाति,न वा? यदि न जानाति, रक्षितं भारतीयानां सर्वस्वं सर्वमज्ञानिकुलशेखरेण त्वया! यदि जानाति, तर्हि 'भगवानुवाच' इति कथं वदेत्? 'भगवन्मुखमुवाच' इति खलु वक्तव्यम्। वचनानुकूलप्रयत्नस्यात्मनिष्ठत्वात् स्यात्काममिति चेत्, तर्हि तदौपचारिकमेव। किञ्च 'अहं गच्छामि' इति ज्ञानिनाम् व्यवहारः कथं स्यात्; 'मम पादौ गच्छतः' इत्येव स्यात्। न च तदेव मुख्यं प्रामाणिकम्, इतरत्तु औपचारिकमेवेति वाच्यम्; 'स्वायत्ते शब्दप्रयोगे' इत्यादिकं कुत्र गतम्? अस्त्येव सर्वं व्यवहारावस्थायामिति चेत्, पारमार्थिक्यामवस्थायां कस्यापि व्यवहारस्याभावात्, सर्वमपि व्यावहारिकमेवेति अवस्थाभेदकल्पनादिकं स्वपरवञ्चनमात्रम्। को मतिमान् 'नाहं गच्छामि, मम पादौ गच्छतः' इति व्यवहरेत्। अतः ज्ञानिनामपि अस्ति त्रिविधो व्यवहारः 'ज्ञानानन्दमयोऽहम्' 'अहं ब्रह्मास्मि' इत्यादिः केवलात्मविषयकः एकः। 'मम शरीरम्' इति भेदविषयकः अपरः। 'अहं वदामि' 'अहं गच्छामि' इति शरीरविशिष्टात्मविषयकस्तृतीयः। अतः ज्ञानिनामपि 'अहम्' इतिधीः शरीरविशिष्टविषयिणी वर्तत एवेति सूचनार्थमेव '**वा**' इति प्रौढिवादसूचनम्। 'अयो दहति' इत्यादावपि, अयस्संयुक्तवह्नेरेव दाहकत्वं जानन्तोऽपि, तप्तमयः यदा रक्तवर्णं भवति, तदा तत्र तं वह्निमेव जानन्ति। अङ्गारादावपि वह्निबुद्धिरेवमेव। न हि निराश्रयो वह्निः कुत्रचिदनुभवसिद्धः। अतस्तत्रायस आकारमापन्नं वह्निमेव, 'अयो दहति' इति वदन्ति। यदा वर्णं न भवति, तदा तत्राग्नेरग्रहणात् 'अयो दहति' इति व्यवहार औपाधिक इत्युच्यते।

[आत्मन इन्द्रियाद्यतिरेकः]

**73. बाह्याक्षेभ्योऽन्य आत्मा तदखिलविषयप्रत्यभिज्ञातुरैक्यात्**
**कर्तुः स्मृत्यादिकार्ये करणमिति मनो मानसिद्धं ततोऽन्यत् ।**

ये तु बालाः अग्निसद्भावं तत्राजानन्तः अयस एव दाहकत्वं मत्वा तथा व्यवहरेयुः, तदा स भ्रम एव । अतश्च 'अयमहम्' इति बुद्ध्या शुद्धस्यात्मनोऽसिद्धावपि श्रुत्यैव देहातिरिक्तात्मसिद्धिरिति तात्पर्यम् ॥

यदपि चोक्तम् 'कृशोऽहं सुखी' इति कृशत्वसुखयोः सामानाधिकरण्यदर्शनात् शरीरमेवात्मेति, तत् ज्ञानिनामपि त्रिविधव्यवहारस्सहज एवेत्यनुपदं प्रदर्शितत्वात्, शरीरस्थौल्यस्य दुःखहेतुताम्, तत्कार्श्यस्य सुखहेतुतां च जानतां तथा व्यवहारः प्रामाणिक एव । शरीरशरीरिणोस्संबन्धस्यात्यन्तविलक्षणतायाः पूर्वश्लोकव्याख्यायामेव प्रदर्शितत्वेन तत्प्रयुक्तस्यास्य व्यवहारस्यौपाधिकत्वेऽपि भ्रमत्वं नास्त्येव ॥

किमङ्ग भोः! 'कृशोऽहम्' इति प्रतीतिर्न तर्हि भ्रमरूपा? वक्तुःस्वरूपमनुविधत्ते भ्रमत्वादि-निर्णयः । अतः न तथा सुनिर्णेयः, यथा त्वं मन्यसे ब्रह्मन्! किमिदमुच्यते, महात्मन्? वक्तृस्वरूपानुगुणो निर्णय इति । गर्दभोऽपि कस्यचिदश्वायेत किम्? बालोऽसि त्वम् । वह्न्यौपाधिकमयसो दाहकत्वं जानतः 'अयो दहति' इति व्यवहारो न भ्रममूलः । तद्वदेव शरीरातिरिक्तमात्मानं जानतः 'कृशोऽहम्' इति प्रतीतिरपि । वह्नेरेव दाहकत्वं जानताम् 'वह्निर्दहति' इत्येव खलु स्याद्व्यवहारः, न तु 'अयो दहति' इति? न बालस्त्वम्, किन्तु बालिशः । 'देवदत्तः काष्ठैस्तण्डुलं पचति' इति व्यवहारो न दृष्टपूर्वः किं त्वया । पाको नाम विजातीयतेजस्संयोगः । 'वह्निना तण्डुलं पचति' इति खलु वक्तव्यम्, कथम् 'काष्ठैः' इति? काष्ठपदं वह्नावौपचारिकमिति चेत्, स्वायत्ते शब्दप्रयोगे कथमौपचारिकं प्रयुङ्क्ते विद्वज्जनः । न तावन्मात्रम् । एवं काष्ठानां करणत्वादेव हि काष्ठसौष्टवविवक्षया 'काष्ठानि पचन्ति' इति प्रयोगश्शाब्दि-कैरपीष्यते । निराश्रयस्य वह्नेः स्थित्यसंभवाद्धि काष्ठाधिष्ठितवह्निबुद्ध्या 'काष्ठ'पदप्रयोग इतिचेत्, तर्ह्येवमेव विवेकिनामपि 'अयो दहति' इति प्रयोगस्सहजः । तथैव महावेदान्तिनामपि चैतन्यावच्छेदमन्तरा आत्मनोऽवस्थानासंभवात्, व्यवहारानर्हत्वाच्च 'अयमहमस्मि देवदत्तः' इति व्यवहारोऽत्यन्तं प्रामाणिकः । ये त्वर्धवेदान्तिनः, अत एव मूर्खरूपाः, त एव स्वस्य ज्ञानितां प्रकटयितुं 'नाहं करोमि, मम शरीरं करोति' इति विलक्षणं व्यवहरेयुः । अतश्च विशुद्धात्मस्वरूपदृष्ट्या 'कृशोऽहं सुखी' इति व्यवहारः औप-चारिकः । 'गौर्वाहिकः' इति प्रयोगो न हि वाहिकस्य गोत्वं साधयेत् । एवं 'कृशोऽहम्' इत्यादि-व्यवहारोऽपि । अतः शरीरातिरिक्त एवात्मा ॥ २ ॥

सन्त्यन्येऽपि पक्षाः शरीरात्मवादिनामिव इन्द्रियाद्यात्मवादिनामपि । 'देहेन्द्रियमनःप्राणधीभ्योऽन्यः' इति ह्याचार्याः । देहातिरिक्तत्वं च साधितम् । 'अहं पश्यामि' 'अहं शृणोमि' इत्यादिप्रतीतिस्वारस्यात् इन्द्रियस्य अहमर्थत्वप्रतीत्या इन्द्रियाण्येवात्मेति, देहात्मवादनिराकरणानन्तर**मिन्द्रियात्मवादं** निराकरोति—**बाह्येत्यादि**। इन्द्रियेष्वपि मनः आन्तरम् । चक्षुरादि बाह्यं तु तदपेक्षया प्रसिद्धतरम् । अतः प्रथममस्य वर्णनम्।

**बाह्याक्षेभ्यः**=बाह्येन्द्रियेभ्यः चक्षुरादिभ्यः**आत्मा**=अहमर्थः**अन्यः**=**अतिरिक्तः**। कुतः? इत्यत्र 'दर्शन-स्पर्शनाभ्यामेकार्थग्रहणात्' (न्या.सू.3-1-1) इति पारमर्षं वचः स्मरन्नाह—**तदखिलविषयप्रत्यभिज्ञातुः**= **तेषाम्**=इन्द्रियाणाम् **अखिलाः** ये **विषयाः** रूपरसगन्धस्पर्शशब्दाः, तेषां **प्रत्यभिज्ञातुः**=प्रतिसन्धातुः **ऐक्यात्**=एकत्वात्। अस्ति हि 'योऽहमपश्यं पूर्वम् यम्, सोऽहमद्य तं स्पृशामि' इति द्रष्टुः स्प्रष्टुश्च ऐक्यानुसन्धानम्। द्रष्टृ चक्षुरिन्द्रियम्, स्पष्टृ तु त्वगिन्द्रियम्। उभयोरैक्यासंभवात्, उभयातिरिक्त एव कश्चित् एकः द्रष्टा च स्प्रष्टा च भवति। 'यस्य गन्धमजिघ्रम्, तदिदं कुसुमं पश्यामि' इति अस्ति पञ्चानामपीन्द्रियाणां परस्परं प्रत्यभिज्ञा। अतः इन्द्रियातिरिक्त एवात्मा। 'अहं पश्यामि' 'अहं जिघ्रेमि' इत्यादयस्तु, चैतन्याभिव्यक्तिसहकारित्वप्रयुक्तत्वादौपचारिका नार्थसाधनक्षमा इत्यादिकमग्रे व्यक्तीभविष्यति। अतः इन्द्रिया-तिरिक्तत्वं आत्मनः सिद्धम्। 'प्रत्येकं चेतनत्वे बहुरिह कलहो वीतरागो न जातः' इत्येतद्दूषणमत्राप्यूह्यम्॥

'अहमाददे' 'अहं वाच्मि' इत्यादिव्यवहारात् कर्मेन्द्रियाणामप्यहमर्थत्वनिराकरणमत्र विवक्षित-मित्यभिप्रायेण 'बाह्याक्षपदम्'। 'प्रत्यभिज्ञातुरैक्यात्' इति हेतुः समानो ज्ञानकर्मेन्द्रिययोः। 'योऽहं तत्रा-गच्छम्, स एवाहमिदमाददे' इति गन्तुरादातुश्चैक्यप्रत्यभिज्ञायास्सत्त्वात्। अतः कर्मेन्द्रियाणामनेकाना-मात्मत्वासंभवः, ज्ञानेन्द्रियन्यायेनैव सिद्ध्यतीत्यभिप्रायेण पृथगनुक्तिः। एवं 'प्रत्येकं चेतनत्वे बहुरिह कलहः' इत्यादिन्यायोऽत्रापि समानः॥

अस्तु तर्हि **मन एवाहमर्थः**, 'अहं स्मरामि' 'अहंमन्ये' इत्यादौ मनस एव कर्तृत्वं भाति, तस्य एकत्वात् स्थिरत्वाच्च पूर्वोक्तदोषाणां परिहारात् इत्यत्राह—**कर्तुरित्यादि**। मनः अस्तीत्यत्र न हि प्रत्यक्षं प्रमाणम्, अतीन्द्रियं हि मनः। रूपादिसाक्षात्कारकरणतया यथा चक्षुरादिसिद्धिः, तथा स्मृत्यादिकरणतया मनसः सिद्धिः। तथा च स्मृतेः करणतयैव मनसः सिद्ध्या, स्मर्ता=स्मृतिकर्ता अन्यः वर्तत एवेति, स एवात्मा; न तु करणतया सिद्धं मनः। **कर्तुः**=**स्मरणकर्तुः**=स्मृत्यादिकार्ये; आदिपदेन सुखदुःखाद्यनु-भवग्रहणम्। एवञ्च स्मृतिसुखादिसाक्षात्कार**करणतया मनः मानसिद्धम्**=अनुमानरूपप्रमाणसिद्धम्। एवञ्च मनस्साधनकाल एव स्मृतिकर्ता=स्मर्ता आत्मा सिद्ध एवेत्यतोऽपि मनः न आत्मा। अत एव 'स्वयमेवात्मनात्मानं वेत्थ त्वम्'(गी.10-15)इतिवदेकस्यैव कर्तृत्वकरणत्वे भवेतामित्यस्य नावकाशः। मनस्साधनकाल एवात्मनस्सिद्धत्वेन धर्मिग्राहकप्रमाणविरोधापत्तेः। 'अहं मन्ये' इत्यादिकं तु पूर्ववदौप-चारिकम्, 'मनसा स्मरामि' इत्यपि प्रयोगाच्च। ननु अतीन्द्रियवस्तुसद्भावे श्रुतिरेव प्रमाणं प्रदर्शितं पूर्वम् (जड.श्लो.11)। अत्र तु स्मृत्यादिकरणतया मनसः सिद्धिरिति कथमुच्यत इति चेत्, सत्यम्; परमतानुरोधेन, प्रमाणसंप्लववादाद्वा तथोक्तिरिति विभाव्यम्॥

मनसः आत्मत्वे निरस्ते, ततोऽपि पराः **प्राणाः आत्मा** भवन्तु, सुषुप्तौ मनस उपरतावपि प्राणानामनुपरतेः। मरणानन्तरं 'जीवो गतः' इति स्थाने 'प्राणा गताः' इति व्यवहरन्ति। जीवशब्दोऽपि 'जीव प्राणधारणे' इति धातोर्निष्पन्नः जीवप्राणयोर्निकटं संबन्धं वक्ति। 'प्राणो हि पिता प्राणो माता' (छां.7-15-1) इति जीववाचिपित्रादिशब्दैः समानाधिकरणतया प्राणशब्दो निर्दिश्यते। अतः प्राण एवास्तु आत्मा,

**प्राणाः सङ्घातरूपा वपुरुदितनयान्न ध्रुवं चेतयन्ते**
**ज्ञानं च ज्ञातृधर्मः क्षणिकमपि च वस्तेन नास्याऽऽत्मभावः ।। ३ ।।**

इति चेत्—**सङ्घातरूपाः प्राणाः, वपुरुदितनयात्=वपुषि**=शरीरे **उदितः** यः **नयः**=न्यायः—'प्रत्येकं चेतनत्वे बहुरिह कलहो वीतरागो न जातः' इत्युक्तः, तादृशन्यायात् **ध्रुवम्**=दृढम् अथवा सर्वथा न **चेतयन्ते**=चैतन्याश्रया न भवन्ति, चेतना न भवन्तीति भावः। प्राणशब्द एकवचनान्तः मुख्यप्राणमात्रवाची। तस्य वृत्तयः पञ्च। एतद्दृष्ट्या तु नित्यं बहुवचनान्तः प्राणशब्दः। प्राणवृत्त्यन्तर्गतोऽपि कश्चित् प्राणो वर्तते, 'हृदि प्राणो गुदेऽपानः' इत्यादिप्रमाणात्। अतश्च प्राणशब्दो मुख्यप्राणमात्रवाची कश्चित्, अन्यञ्च तद्वृत्तिवाचीति मन्तव्यम्। प्रकृते पञ्चप्राणानामात्मत्वं निराक्रियते। 'पुंसि भूम्न्यसवः प्राणाः' 'हृदि प्राणः' इति कोशो द्रष्टव्यः। प्राणानां प्रत्येकं चैतन्यम्, उत समुदाये? द्वेधाप्यसंभवः पूर्वोक्तन्यायेन (पुट-1) बोध्य इत्यर्थः। 'जीव'धातुः जीवप्राणयोर्निकटसंबन्धं वक्ति, न त्वभेदम्। 'जीवो गतः' इति स्थाने 'प्राणो गतः' इत्युक्तिरपि जीवप्राणयोरत्यन्तनिकटसंबन्धमूला। संसार्यात्मनस्सकलव्यापारस्यापि प्राणाधीनत्वात् 'प्राणस्येदं वशे सर्वम्' (प्रश्न.2-13) इत्यादिश्रुत्या च तद्दृढीकरणात् 'प्राणो हि पिता' इत्यादिनिर्देशः। 'प्राणी' इति वक्तव्ये प्राधान्यात् 'प्राणः' इति निर्देशः। अन्यथा हि केवलप्राणस्य जडत्वात् प्राणोपासकस्येतरसर्वश्रेष्ठत्वकथनं विरुद्ध्येत। अतः प्राणा अपि न जीवाः ।।

ननु मुख्यप्राणस्यैकत्वात् उक्तदोषासंभवात् स एवास्त्वात्मेति चेत्, तादृशप्राणस्य लोकतोऽसिद्धेः, श्रुत्यैव सिद्धेः, श्रुत्यैव च प्राणनित्यतायाः, जीवनित्यतायाश्च कथनात् मुख्यप्राणोऽपि नात्मा। जीवदृष्ट्या प्राणस्य स्थानं महदिति दृष्ट्यैव मन आत्मवादानन्तरं प्राणात्मवादविचारः कृतः। वस्तुस्वरूपदृष्ट्या तु प्राणापेक्षया मनः उपरितनं तत्त्वम्। मनो ह्याहङ्कारिकम्। प्राणास्तु वायुविशेषरूपाः, अत एव भौतिकाः। विचारितं चेदं पूर्वसर एव(श्लो.43)। एवं सत्यपि जीवोपकारदृष्ट्या प्राणो मनोऽपेक्षयापि उपरितनः, 'मनःप्राणे' इति हि मरणकाले मनउत्क्रान्त्यनन्तरमेव प्राणोत्क्रान्तिश्रवणात्। तत्त्वोत्पत्तिदृष्ट्या तु प्राणादूर्ध्वं मनः। एतद्दृष्ट्या प्राणमयकोशानन्तरमेव मनोमयकोश उक्तस्तैत्तिरीयके ।।

प्राणात्मवादापेक्षया परो **विज्ञानात्मवादः**। पुरुषे मृते 'जीवो निर्गतः' 'प्राणो निर्गतः' इतिवत् 'ज्ञानं नष्टम्' इत्यप्यस्ति लोकव्यवहारः। अतः ज्ञानमेवात्मा इति सांख्याः, बौद्धैकदेशिविज्ञानवादिनः, ब्रह्मविवर्तवादिनश्च। एतन्मतत्रयमपि एकयैव युक्त्या निराकरोति—**ज्ञानं चेत्यादि**। **ज्ञानं च**=ज्ञानं तु **ज्ञातृधर्मः**=ज्ञातुः आत्मनः धर्मः। **तेन अस्य**=ज्ञानस्य **आत्मभावः**=आत्मत्वम् **न**। बौद्धमतेऽधिकदूषणम्—**अपि च वः क्षणिकमपि** इति। क्षणिकात्मवादिनः किल ते। एतेषामेव 'योगाचाराः' इत्यपि प्रथा। शरीरस्य क्षणिकस्यात्मत्वे, बाल्ये विलोकितस्य, तदनन्तरं स्मरणानुपपत्त्यादिकमत्रापि समानमिति भावः। ज्ञानं किल 'जानामि' इति धात्वर्थतया प्रतीयते। धात्वर्थश्च क्रियाविशेषः। क्रिया च कर्तुः धर्मः। 'अहं करोमि' 'अहं जानामि' इति खलु व्यवहारः। अत्र 'अहम्' इत्यन्यः शब्दः, 'जानामी'ति चान्यः शब्दः।

'जानामि' इति धात्वर्थस्याश्रयतया प्रतीयमानः अहम्पदार्थः खलु आत्मा । ज्ञातुः अहमर्थस्यात्मनो धर्मः ज्ञानम् । अतः ज्ञानात्मवादोऽपि न प्रामाणिकः, किन्तु **ज्ञात्रात्मवाद** एव प्रामाणिकः ॥

ननु सिद्धान्ते आत्मनः ज्ञानरूपत्वाङ्गीकारात्, ज्ञानपदेन निर्देशः आवश्यक एवेति, कथं तन्निरास इति चेत्, तत्त्वं न जानाति भवान् । आत्मनः स्वप्रकाशत्वात् 'ज्ञानस्वरूपः' इत्युच्यते । 'ज्ञानम्' इति पदं तु धर्मवाच्येव । 'अहम्' इत्येव आत्मवाची शब्दः । अधिकमग्रे (श्लो.5) भविष्यति ॥

यद्यप्यत्र ज्ञानात्मवादः विज्ञानात्मवादश्च नैकः । सांख्याः, तदनुसारिणः वेदान्त्येकदेशिनश्च ज्ञानात्मवादिनः । योगाचारास्तु विज्ञानात्मवादिनः, न तु ज्ञानात्मवादिनः । जीवात्मा च विज्ञानात्मा । 'विज्ञानात्मा पुरुषः' (प्र.5-9) 'विज्ञानात्मा सह देवैश्च सर्वैः' (प्र.5-11) इत्यादाविदं स्पष्टम् । एतत्तत्त्वं समये व्यक्तीभविष्यति । ज्ञानविज्ञानपदयोः 'ज्ञानविज्ञानतृप्तात्मा' (गी.6-8) 'ज्ञानं विज्ञानसहितम्'(गी.9-1) 'ज्ञानं विज्ञानमास्तिक्यम्'(गी.18-42) इत्यादावसकृत् सहप्रयोगात् पर्यायत्वं न भवति । पदद्वयसमभिव्याहारे तथात्वेऽपि, प्रत्येकं तयोः पदयोः नास्ति पर्यायत्वमिति तु न वाच्यम्; अर्थभेदज्ञानवतस्तत्तदर्थे व्यवस्थिततयैव पदस्य प्रयोक्तव्यत्वात् । स्थूलदृष्टिव्यवहारस्यार्थसाधकत्वासंभवात् । अतश्चात्र ज्ञानपदप्रयोगो न युज्यत इव; तथापि बहुभिस्तथा व्यवहारात्तदनुसारेणैवमुक्तम् । एतेन 'अस्तु तर्हि क्षणिकविज्ञाने गौरवात् नित्यविज्ञानमेवात्मा' (मु.प्रत्य.) इत्यादिकमप्यापातत एव । स्थूलदृष्ट्या ऋतसत्यपदवत् ज्ञानविज्ञानपदे पर्यायतया प्रयुज्येते । एतत्प्रसिद्ध्यनुरोधेनैवाचार्यैः नवीनानां रीतिरनुसृतेति द्रष्टव्यम् । वस्तुतस्तु बौद्धा नैरात्म्यवादिनः। अतः 'विज्ञानात्मवादी' इत्यपि न युक्तम्; किन्तु 'विज्ञानवादी' इत्येव युक्तम् । परं तु स्कन्धपञ्चकात्मनि जीवे विज्ञानस्या प्राधान्यात् 'विज्ञानात्मवादी' इति नवीनानां क्वचिन्निर्देशः ॥

ननु केषामेते मतभेदाः? **चार्वाकाणा**मेवेति बहवः । 'शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः। तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ मनोऽपि न तथा'(मुक्ता.) इत्यादावपि वर्णिता एते । इन्द्रियादयः किलानुमानगम्याः। तर्हि 'प्रत्यक्षमेकं प्रमाणमिति चार्वाकाः' इति कथम्? चार्वाकभेदा इत्यस्त्वित्यादिकथनं बालिशभावमूलम् । एवं सति 'असुराणां व्यामोहनार्थं सुरगुरुणा चार्वाकमतमुपदिष्टम्' इत्यादेस्तिलाञ्जलिरेव । किञ्च 'प्रत्यक्षमेव प्रमाणम्' इत्युक्त्वा 'प्रत्यक्षसिद्धानि भूतानि चत्वार्येव सन्ति' इत्यप्युक्त्वा, 'तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्' इति कथने, चैतन्यस्य केन प्रमाणेन सिद्धिः? इति प्रश्ने किमुत्तरम्? न हि चैतन्यं चक्षुरादिग्राह्यम् । नापि मनोग्राह्यम्, मनस एव प्रत्यक्षेणासिद्धेः । अतो विचारासहत्वात्, प्राचीनैरनुल्लेखाच्च 'चार्वाकदर्शनम्' पण्डितकुलकल्पनामात्रम् ॥

**इदमत्रावधेयम्**—आत्मा नामाहमर्थः। अयमेव प्रत्यगर्थः।'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्(कठ.2-4-1) इति श्रुतिरपि। तथाच'अहम्' इति प्रतीतिर्यत्र यत्र भवति, तस्य सर्वस्याप्यात्मत्वं प्रसज्यत एव। तत्र प्रथमं स्थूले शरीरे 'अहम्' इति प्रत्यक्त्वं सर्वानुभवसिद्धम्। अत आत्मवादस्यात्रैवोपक्रमः। अत एव 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति' (बृ.4-4-12) इति याज्ञवल्क्येनोपदेशे, 'अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति' इति मैत्रेय्या स्वस्य मोहे कथितेऽपि, याज्ञवल्क्यः 'न वा अरे अहं मोहं ब्रवीम्यलं

[आत्मा ज्ञानाश्रयः]

**74. धीर्नित्या यस्य पक्षे प्रसरति बहुधाऽर्थेषु सैवेन्द्रियाद्यैः**
**तेनाऽऽत्माऽजागलस्थस्तन इव किमिह स्वीक्रियेतेति चेन्न ।**

वा अर इदं विज्ञानाय' इति प्रत्युवाच सः। अध्यात्मविज्ञानस्येदं प्रथमसोपानरूपमित्याशयः। एतद्विवरणरूपमेवान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयात्मवादास्तैत्तिरीयकवर्णिताः। अस्य साधनवर्णनरूपा भृगुवल्ली। एवं 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयः' (बृ.6-4-5) इत्याद्यपि द्रष्टव्यम्। एवं मधुविद्यायां 'यश्चायमध्यात्मं शारीरः'(बृ.4-5-1) इत्याद्यारभ्य'यश्चायमध्यात्मं मानुषः'(13) इत्याद्यपि द्रष्टव्यम्॥

आसीदैन्धनिकः कश्चित् जीवन् कष्टेन दुर्भगः। एधेभ्यस्स ययौ जातु वनप्रान्तं समीपगम्॥
तत्रागतस्तदा साधुः कश्चित्तं दययाब्रवीत्। किमत्र क्लिश्यसे गच्छ वनान्तरिति चाब्रवीत्॥
सोऽपि गत्वा वनस्यान्तरपश्यच्चन्दनद्रुमान्। विस्मितस्स तु तत्काष्ठान् विक्रीय सुखितोऽभवत्॥
पुनः कदाचित्तं साधुः गन्तुं प्राहाग्रतोऽपि सः। सोऽपि गत्वा ततोऽप्यन्तस्त्वपश्यद्राजताश्शिलाः॥
ता आदाय तु दीनस्सः क्रमशो धनिकोऽभवत्। पुनरप्याह तं साधुस्ततोऽन्तर्गन्तुमग्रतः॥
सोऽपि गत्वा ततस्तत्र सुवर्णशकलान् बहून्। दृष्ट्वानीय प्रमुदितस्ततोऽपि धनिकोऽभवत्॥
पुनरप्याह तं साधुस्ततोऽन्तर्गन्तुमग्रतः। सोऽपि गत्वा ततस्तत्र वज्रवैडूर्यकान् बहून्॥
निधीननन्तान् संप्राप्य नित्यानन्दयुतोऽभवत्। एवं हि वर्ततेऽध्यात्मरहस्यं गहनं क्रमात्॥
भूतात्मानमुपक्रम्याऽऽपरमात्मानमेव च। सर्वं स एव सर्वात्मा भाति सर्वत्र सर्वदा॥

तथा हि श्रुतिस्मृतयः—'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद'(बृ.4-4-6,6-5-7), 'पुरुषे त्वाविस्तरामात्मा'(ऐ.ब्रा.) 'स वा एष पुरुषः पञ्चधा पञ्चात्मा, येन सर्वमिदं प्रोतम्'(म.ना.50), 'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान्। जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः॥', 'एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः। त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः' 'एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति॥' इत्याद्याः। वस्तुतस्त्विदं सर्वं 'क्षीरे सर्पिरिवार्पितम्'(श्वे.1-16) इत्युक्तरित्यनुसारितैत्तिरीयपञ्चकोशमूलम्। श्रीभाष्यकारा अपि संसार्यात्मनो भूतमयत्वं वदन्ती (ब्र.सू.4-2-5) त्यप्यवधेयम्॥

शिष्टं सर्वं बुद्धिमद्भिस्स्वयमूह्यं ततोऽथवा। सेव्यास्सन्तो मार्गयित्वा सत्सङ्गस्सर्वभेषजम्॥ ३॥

ननु मास्तु क्षणिकविज्ञानस्यात्मत्वम्, प्रतिसन्धानाद्यसंभवप्रसङ्गात्। अथापि आत्मनः नित्यज्ञानरूपत्वे एतद्दोषाभावात्, लाघवाच्च, आत्मा ज्ञानमात्रस्वरूपः, न तु ज्ञाता इत्यङ्गीकारे का हानिः? न चात्मनो धर्मित्वेन तस्य बाह्यवस्तुग्रहणादिकं कथमिति शङ्क्यम्; धर्मिण एव उपाधिभिः स्वतो वा प्रसरणेन बाह्यविषयकत्वसंभवादित्याशङ्कापरिहारव्याजेन दार्शनिकानां शिरश्शूलायितसमस्यायाः परिहारं सूचयत्याचार्यसिंहस्तुरगवदनतेजोबृंहितधैर्यः—समाधत्ते—**धीरित्यादि** । **यस्य**=सिद्धान्तिनस्तव **धीः**=धर्मभूतज्ञानम्

**कल्प्यं चेदात्मतत्त्वं कथयितुमुचितं लाघवं तत्र युक्त्या**
**नित्या सा यस्य तद्वानपि निगममितो गौरवं नास्य भारः ॥ ४ ॥**

**नित्या**=परिणामित्वेऽपि स्वरूपतो नाशरहिता, त्रिगुणद्रव्यवत्। **सैव**=तादृशं नित्यं धर्मभूतत्वेनाभिमतं ज्ञानमेव **इन्द्रियाद्यैः**=इन्द्रियादिभिः द्वारभूतैः **अर्थेषु**=बाह्यान्तरसकलविधपदार्थेषु **प्रसरति**=प्रसरणशीलो यदि भवति तदा, **तेन**=उक्तक्रमेण नित्यत्वम्, विषयसंबन्धश्चेत्यर्थद्वयस्याप्येकेनैव निर्वाहात्, **अजागलस्थस्तन इव**=स्तनस्तु वत्सानां क्षीरपानोपयोगी अवयवविशेषः। अजानां गलेषु लम्बमानः स्तनसदृशोऽवयवस्तु निरर्थक इति स दृष्टान्ती कृतः। तद्वत् विफलः **आत्मा** तव मते **किम्**=किमर्थम् **स्वीक्रियते**=अङ्गीक्रियते?

'धर्मभूतज्ञान' पदवाच्यं यद्वस्तु अङ्गीक्रियते, तत्तु नित्यम्, द्रव्यम्, परिणामशीलं चेति संमतम्। सांख्यादिभिः प्रकृतेः परिणामित्वेऽपि नित्यत्वमङ्गीकृतम्। भट्टोऽपि 'विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता' (श्लो.वा.आत्म.22) इत्याह। अतः भवन्मते धर्मभूतज्ञानपदवाच्यं वस्त्वेव धर्मिस्थानापन्नं आत्मपदवाच्यं भवतु। एवमेव सर्वनिर्वाहे स्वरूपस्यापि ज्ञानत्वम्, धर्मस्यापि ज्ञानत्वमिति ज्ञानस्वरूपं वस्तुद्वयं किमर्थमङ्गीकार्यमित्याक्षेपाशयः॥

यद्यप्यत्रात्मनो धर्मिणः प्राधान्यात्, तदङ्गीकृत्य धर्मानङ्गीकारशङ्कैव न्याय्या। परन्तु बाह्यविषयग्रहणाय धर्मज्ञानस्यावश्यकत्वात्, आत्मनः प्रसरणस्यं विवादविषयत्वात्, योगाचारमत एवमङ्गीकारेण प्रसिद्धतया च स एव धर्मिस्थानापन्न आत्मा भवतु इत्याशङ्का वर्णिता॥

एवमाक्षेपे प्रमेयदृष्ट्या दोषस्य वक्तुमशक्यत्वात् श्रुतिविरोधमेवोत्तरमाह—**कल्प्यं चेदित्यादि**। **आत्मतत्त्वं**=आत्माख्यं तत्त्वं **कल्प्यं चेत्**=युक्त्यैव समर्थनीयं यदि, तदैव **तत्र**=कल्पनायाम् **युक्त्या लाघवम्**=कल्पनालाघवं **कथयितुम् उचितम्**=औचित्यवद्भवेत्। प्रकृते; **सा**=धीः **नित्या यस्य**=मम वेदान्तिनः **निगममिता**=श्रुत्यैव प्रमिता, **तद्वान् अपि**=तादृशनित्यज्ञानाश्रयः आत्माऽप्यतिरिक्तः नित्यश्च **निगममितः**=श्रुत्यैव सिद्धः **अस्य**=तादृशस्य मम **गौरवम्**=कल्पनागौरवम् **भारः**=भाररूपम् **न**=न भवति। युक्त्या कल्पनायां बुद्धेः लाघवपक्षपातित्वात् तथाङ्गीकरणीयमिति नास्माकं वेदावलम्बिनां गौरवप्रसक्तिरिति भावः। यत्र पक्षान्तरप्रसक्तिः, तत्रैव तयोर्मध्ये कुत्र लाघवम्? कुत्र वा गौरवम्? इति चिन्ता कर्तुं शक्यते। श्रुतौ यद्यथोच्यते तत्तथैवाङ्गीकार्यमिति पक्षान्तरप्रसक्तेरभावात् न लाघवगौरवविचारावकाशः॥

**अत्रेयं मूलभूता समस्या**—'अहं सदा सुखी स्याम्' इत्याशंसनमात्मनां सर्वेषां समानम्। अस्यामाशंसायाम् 'अहम्' इति व्यपदेशार्हं वस्त्वेव सर्वव्यवहाराणां मूलबिन्दुभूतं प्रत्यग्वस्तु। तदाशंसते स्वस्य सदा सत्ताम्, सुखं च। एतत् कथं भवेत्? इति मूलभूतः प्रश्नः। आत्मा, तस्य सदा सत्ता, सुखेन सदा सत्ता इत्यंशा अत्र विषयाः। अतश्च निरतिशयपुरुषार्थः स्वनाशरूपो न भवितुमर्हति, किन्तु स्वस्य नित्यसुखरूप एव भवेत्। सुखं नामात्यन्तानुकूल्यज्ञानजन्य आत्मधर्मः। एतत्स्वरूपमद्रव्यसरे भविष्यति। आत्मैव सर्वेषामत्यन्तानुकूल इत्यत्रापि न विवादः। एवमात्मनस्सदासुखरूपत्वेऽपि तथा

ज्ञानाभावादेव दुःख्यति जनः । आत्माऽन्यः, तस्य ज्ञानं चान्यदित्यप्यनेन सिद्ध्यति । 'अहं ज्ञानवान्' इत्यनुभवात् ज्ञानं त्वात्मनो धर्म इति संप्रतिपन्नम् । तर्हि 'अहम्' इति कः? आत्मा । स कीदृशः? सर्वेषामपि सदा 'अहम्' इति भानस्य सत्त्वात् स स्वप्रकाशः, अत एव ज्ञानस्वरूप इति वेदान्तिनः । एवञ्चेत् स्वरूपमपि ज्ञानम्, धर्मोऽपि ज्ञानम् । कथमिदं भवेत्? न हि रूपे रूपं वर्तेत? इत्येव मूलभूता समस्या ॥

एतत्परिहाराय बहुधायतन्त महामेधाविनः । तत्र—**नैरात्म्यवादिभिः**, तत्रापि बुद्धाद्व्ह्वनन्तर-कालिकैः, हैतुकैः **शून्यवादिभिर्माध्यमिकैः** बौद्धैः—'बुद्धिजन्मनि पुंसस्तु विकृतिर्यद्यनित्यता । अथाविकृति-रेवात्मा प्रमातेति न युज्यते ॥' (प्र.स.2-61) इति आत्मवादो दूषितः । आत्मा इति कश्चिद्धर्मी, तस्य च ज्ञानं धर्मः । सुषुप्तौ संपूर्णतया ज्ञानस्य नाशात् स च धर्मः तदा तदा उत्पद्यते नश्यति च इति तार्किकसंमते आत्मवादे अङ्गीक्रियते । अत एवैते **आगन्तुकचैतन्यवादिनः** इत्युच्यन्ते । तत्रेदं दूषणं तैरुच्यते—पुंसः=आत्मनः बुद्धिजन्मनि=बुद्धेः उत्पत्तौ सत्याम्, यदि तु विकृतिः=पुंसः कश्चनान्यथाभावो यदि=परिणामविशेषो यदि भवति, तदा पुंसः अनित्यता=उत्पत्तिनाशशालिता अनिवार्या । अथ=अथवा आत्मा अविकृतिरेव=अन्यथाभावरहितः, पूर्वं यथाऽऽसीत्, तथैवावतिष्ठेत यदि, तदा आत्मा प्रमाता इति न युज्यते=न वक्तुमर्हो भवति । बुद्धेरुत्पत्तेः पूर्वं यथा आसीत्, तथैव चेत् आत्मा वर्तेत, तर्हि बुद्ध्युत्पत्तेः पूर्वं सुषुप्ताविव तस्य प्रमातृत्वाभावेन, पश्चादपि प्रमातृत्वं न स्यात् । यदि अन्यथाभावोऽङ्गीक्रियते, तदा विकारित्वं स्यात् । विकारित्वे च घटादिवदनित्यत्वापत्तिः । तथा च प्रमाता कश्चिन्नास्ति । स एव चाहमर्थः । तस्यैवाभावे दुःखं कस्य ? 'अहमेव न किञ्चिच्चेत् भयं कस्य भविष्यति?' । अतश्च **नैरात्म्यवाद** एव दुःखनिवृत्तिस्साध्या, न त्वात्मवादे । एवञ्च 'प्रमाणम्, प्रमेयम्, प्रमाता' इति त्रिपुट्याः वस्तुतः अभावात् शून्यमेव परमं तत्त्वमिति । **'नैरात्म्यवादिनः,' 'शून्यवादिनः' 'अहमर्थानात्मत्ववादिनः' 'सर्वापलापवादिनः'** इति **माध्यमिकानां** नामान्तराणि ॥

जगत्सर्वं **त्रिपुटी**रूपम् कर्ता,कर्म,करणम्—छेत्ता,छेद्यम्,छेदनम्—द्रष्टा,दृश्यम्,दर्शनम्—प्रमाता,प्रमेयम्,प्रमाणम् इति । जगत्सत्त्वे प्रत्यक्षमेव प्रमाणमित्युच्यते वैदिकैः । प्रत्यक्षदर्श्येव प्रमातेत्युच्यते । त्रिपुटीनिराकरणे प्रमातुरभावात् , तत्प्रत्यक्षमपि गतम् । अतस्तेन न जगत्सत्यत्वसिद्धिरिति सर्वापलापिनोऽभिप्रयन्ति । वैदिकैकदेशिभिर्जगन्मिथ्यात्ववादिभिरप्यनेनैव क्रमेण **त्रिपुटी** निराकृता 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' (नै.सि.1-35) इति वदद्भिः । पूर्वसर एव धर्मधर्मिभावस्य प्रसाधितत्वात्, आत्मनः प्रमातृत्वमपि प्रामाणिकमेव । अधिकमग्रे (श्लो.8) भविष्यति ॥

एवमागन्तुकचैतन्यवादे दूषिते, शून्यवादखण्डनार्थं प्रवृत्ताः एवमाहु**स्तार्किकाः** । अहमर्थस्यैव कस्यचिदभावे, कस्य दुःखनिवृत्तये प्रयत्नः कार्यः । तदिदं **वृद्धिमिच्छतो मूलहानिरिव** दुःखनिवृत्त्यर्थप्रयत्नेन स्वस्यैव नाशे पर्यवसानम् । अतोऽत्रैवं वक्तव्यम्—धर्मधर्मिणोरत्यन्तं भेदात् धर्मस्य नाशेऽपि धर्मिणः न नाशप्रसक्तिः । 'घटवत् भूतलम्' इति घटभूतलयोः धर्मधर्मिभावः प्रत्यक्षसिद्धः। तत्र धर्मस्य घटस्य नाशे,

न हि धर्मिणः भूतलस्य नाशो दृश्यते। न हि कुण्डले नष्टे, कुण्डली देवदत्तोऽपि नश्यति। न च कुण्डले नष्टे, कुण्डली अस्ति, न वा? इति प्रश्ने, 'कुण्डली नास्ति' इत्येव खलु वक्तव्यम्। तर्हि सिद्धः कुण्डलिनः अभावः इति वाच्यम्; क्षणिकवादस्य निरस्तत्वात्, देवदत्तस्य स्थिरत्वेनैकत्वात् देवदत्ते प्रत्यक्षेणैव दृश्यमाने कुण्डलिनोऽभावः विशेषणीभूतस्य कुण्डलस्य, कुण्डलसंयोगस्य वाऽभाव एव पर्यवस्यतीति **आचार्योदयनः** (कुसु.1)। अतः तत्र देवदत्तनाशो वा, तदन्यथाभावो वा सर्वथा नास्त्येवेति वास्तविकी स्थितिः। न च घटभूतलयोः धर्मधर्मिभावः न नियतः, घटशून्यस्य भूतलस्य, भूतलावृत्तेर्घटस्य च प्रत्येकं दर्शनात्। गुणगुणिनोः जातिव्यक्त्योर्वा न तथा; उभयोरविनाभावाङ्गीकारात्। अतोऽत्र धर्मनाशे धर्मिणोऽयथाभावः अवर्जनीय इति वाच्यम्; 'घटवत् भूतलम्' 'ज्ञानवानात्मा' इत्यादिव्यवहारस्य समानत्वात्। युतसिद्धस्थले, अयुतसिद्धस्थले च भेदस्यैकरूप्याद्वेत्यादिकं पूर्वमेव गतम्। अतो धर्मगतः नाशादिः धर्मिणं लेशतोऽपि नान्यथयति, घटनाशो भूतलमिव। एवञ्चात्मनः, तद्धर्मस्य ज्ञानस्य चात्यन्तं भेदात् 'बुद्धिजन्मनि पुंसस्तु' इत्याद्यापादनस्य नावकाश इति समादधिरे। एत **एवागन्तुकचैतन्यवादिनः वैशेषिकाः नैयायिकाश्च**। **सविशेषवादिभिस्सिद्धान्तिभिरप्ययमेव** क्रमोऽन्वसारि॥

भीतास्त्वितरे आत्मानं निर्विशेषमातस्थुः।'अहं ज्ञानवान्' इत्यादिसधर्मकत्वव्यहारस्तर्हि कथम्? इत्यत्र—मिथ्येति केचन, औपाधिक इति च केचन। तत्र प्रथमः पक्षः **ब्रह्मविवर्तवादि**नाम्। द्वितीयस्तु **सांख्यानाम्, नवीनवेदान्तिनां च**। ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति प्रथमपक्षेऽङ्गीकारात्, मिथ्याभूतेन धर्मेणात्मनः ब्रह्मपदाभिधेयस्य न काचन विपत्तिः। द्वितीयपक्षे (सांख्यपक्षे) तु 'अयो दहति' इति व्यवहारवत्, चिच्छायापत्त्या, अन्तःकरणरूपोपाधिवशाद्वा 'अहं जानामि' इति व्यवहारः। नवीनानामपि वेदान्तिनामयमेव पन्थाः। एतत्पक्षद्वये जगतो न मिथ्यात्वमिति विशेषः। अन्तःकरणवृत्तिरेव ज्ञानम्, स्वसन्निहिते आत्मनि 'लोहितः स्फटिकः' इतिवत् भासते। आत्मनि कदाप्यागन्तुकधर्मानङ्गीकारात् न विकारित्वप्रसङ्गः इत्येतेषामाशयः॥

**कुमारिलस्तु** धीरः, अस्तु नामान्यथाभावः। तावता न हि वस्तुनो नाशः। अन्यथाभावोऽपि कश्चन धर्मः। धर्मो धर्मिणमन्तरा, निराश्रयः कथं तिष्ठेत्। अतश्च नित्यत्वविकारित्वयोर्न विरोधः इति 'नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते। विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता॥'(श्लो.वा.आत्म.22) इत्याह। अनित्यपदप्रयोगमात्रेण किमायास्यति? न हि वयं निरन्वयविनाशवादिनः। 'णश अदर्शने' इति किल धातुः। अदर्शनमात्रेण न वस्तुनः कात्स्र्न्येनोच्छित्तिः। अतो न काप्यनुपपत्तिरिति भावः॥

एवमेव सिद्धान्तेऽपि कुमारिलवत् परिणामाङ्गीकारेऽपि हान्यभावात्, किमर्थं वस्तुद्वयमङ्गीकार्यम्। एवञ्च धर्मभूतज्ञानपदवाच्यं वस्त्वेव सर्वनिर्वाहकात्मपदार्थो भवतु, न तु तदाश्रयः अतिरिक्तः कश्चिद्धर्मी। महामेधाविना कुमारिलेनाऽपि तथैवाङ्गीकारादिति पूर्वपक्षाभिप्रायः॥

**कुमारिलस्तु** मीमांसकः, न तु वेदान्ती। अत एव सः निरालम्बनवादान्ते 'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या। दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन॥' (श्लो.वा.

निरा.1-5.148) इति आत्मविषयो निर्णयः वेदान्ताश्रयणेनैव भवेदित्याह । एतच्छब्दस्तत्र आत्मपरः । अतश्च वेदान्ते यथोच्यते, तथैव वक्तव्यम्, न त्वन्यानुकरणं युक्तमित्यभिप्रायः । प्रायः सिद्धान्ते दीप-दीपप्रभादृष्टान्तेनात्मनो ज्ञानस्वरूपस्य सतो ज्ञानाश्रयत्वस्याङ्गीकारात्, दीपस्य प्रभाविशिष्टद्रव्यत्वात् संकोच-विकासौ **कूर्माङ्गभङ्गविकासन्यायेन** सहजौ, न दोषावहौ । अयमर्थोऽग्रे(श्लो.5) विस्तरेण विचार्यते ॥

रक्षात्मानमेवं स भट्टोऽतिचतुरो कृती! । वेदान्तिनस्तु कुर्वन्ति केशाकेशि निरन्तरम् ॥
जिज्ञासुलोकः किं कुर्यात्? कि श्रद्धैवोत्तरं भवेत् । विचारशास्त्रं किं तर्हि निरस्यामो महार्णवे ॥
पूर्वग्रहादिकं त्यक्त्वा स्मृत्वा तं भक्तवत्सलम् । विश्लेषितुं समस्यां तां कथञ्चित्तु यतामहे ॥

**सिद्धान्ते**—का वा सा श्रुतिः? या सर्वं भारं वोढुं क्षमा? आचार्यैस्तु वृत्तौ 'न विज्ञातुर्विज्ञाते-र्विपरिलोपो विद्यते' (बृ.6-3-30) इत्येकैव श्रुतिरुदाहृता । सा तु सुषुप्तिकालिकस्थितिवर्णनपरा । तदानीं धर्मभूतज्ञानस्याननुभवात्, तस्य विपरिलोपो न विद्यते इति कथनमनुभवविरुद्धमिति धर्मिज्ञानपरं तत्परै-र्वर्णितम् । एवमत्यन्तविवादग्रस्तमिदम् । अत्यन्तावश्येके विषये **वृत्ति**रप्यत्यन्तकृशेत्यप्यवधेयम् ॥

**सांप्रदायिकास्तु** 'अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा' (बृ.6-5-14) इति श्रुतिमेव धर्मभूतज्ञाननित्यत्वपरं वर्णयन्ति । अत्र 'अरे' इति मैत्रेय्या याज्ञवल्क्येन संबोधनम् । अयमात्मा अविनाशी= नाशरहितः नित्यः; तथा अनुच्छित्तिधर्मा च । अनुच्छित्तिः=उच्छित्यभावः, सः धर्मः यस्येति हि समासः। तेन आत्मनः उच्छित्यभावः सिद्ध्येत्; धर्मस्य ज्ञानस्य नित्यत्वं कथं सिद्ध्येदिति न शङ्क्यम्; 'अविनाशी' इति पदेनैव आत्मन उच्छित्त्यभावस्य सिद्ध्या पौनरुक्त्यापत्तेः । अतः न उच्छित्तिः=नाशः यस्य सः, अनुच्छित्तिः, नित्य इत्यर्थः । तादृशो धर्मः यस्य सः, अनुच्छित्तिधर्मा इत्येव विग्रहो वाच्यः । तेन तस्य धर्मस्य ज्ञानस्यापि नित्यत्वं सिद्ध्यतीति नित्यधर्मभूतज्ञानवानित्यर्थः । एवं श्रुत्या आत्मनः, तद्धर्मभूत-ज्ञानस्यापि नित्यत्वमभिहितमिति अन्यतरपरित्यागशङ्काया नावकाश इति भावः ॥

ननु विनाशपदेनादर्शनमात्रं सिद्ध्येत्, न वस्तुस्वरूपनिवृत्तिः । 'नश अदर्शने' इति हि धातुः । यथा मृत्पिण्डस्य घटरूपेण परिणामे, मृत्पिण्डादर्शनम् । दीपादेश्शान्तौ तु वस्तुस्वरूपोच्छेद एव दृष्टः । एतादृशोच्छेदाभावः 'अनुच्छित्तिधर्म'पदेनोच्यते । अतः सान्वयनिरन्वयविनाशद्वयाभावस्तेन सिद्ध्यतीति न पौनरुक्त्यमिति चेत्, प्रथमसर (श्लो.31)एव नाशद्वयनिराकरणात् सर्वोऽपि नाशः सान्वय एव । अतः 'न विद्यते उच्छितिः विनाशः यस्य सः, अनुच्छित्तिः=नाशरहितः=नित्यः, तादृशः धर्मः यस्येति' बहुव्रीहिगर्भबहुव्रीहिणा धर्मस्य ज्ञानस्य उच्छित्यभावः कथ्यत इत्येव साधु । एवं 'न विज्ञातुः विज्ञातेर्विपरिलोपो विद्यते'(बृ.उ.6-3-30) विज्ञातुः आत्मनः या विज्ञातिः ज्ञानं विद्यते, तस्य लोपाभावः श्रुत्याभिधीयते । आत्मनः स्वप्रकाशत्वात् ज्ञानरूपत्वम्, ज्ञानाश्रयत्वं च श्रुत्याभिधीयत इति धर्मस्य, धर्मिणश्च नित्यत्वं श्रुत्युक्तत्वादविरुद्धम् । 'उपयन्नपयन्' इत्यादेर्निर्दिष्टमुत्तरं तु ब्रह्मोपादानत्वप्रकरणे (नायक.25) भविष्यति ॥

ननु भोः! किमिदं भवन्तोऽपि शब्देनैव तृप्यन्ति! दीपादावुभयविधनाशस्यावर्जनीयतायाः 'दीपादीनां कदाचित्'(जड.31) इत्यादौ भवतैव प्रतिपादनात् । निरन्वयविनाशनिराकरणपूर्वकं सान्वयविनाशस्थापन-

मात्रेण लोकानुभवो न हि निराकर्तुं शक्यः, 'दीपादावुभयविधध्वंसे दृष्टेऽपि' इत्यङ्गीकारात्। 'दीपादि' इत्यादिपदेन शरीरपरिग्रहः। शरीरं हि प्रतिक्षणमवयवोपचयापचयशालीति सर्वसंप्रतिपन्नम्। क्रियाऽतिरिक्तः पदार्थोऽस्ति न वा? इति विचारे सत्यपि क्रियाया आशुतरविनाशित्वं सर्वसंप्रतिपन्नम्। अत एव किल 'चिरध्वस्तं फलायालं न कर्मातिशयं विना'(न्या.कु.1-9) इति न्यायावतारः। अतो विनाशस्य सान्वयत्व-स्थापनमात्रेण विनाशद्वैविध्यमनिवार्यम्। किमधिकोक्त्या! 'वि(प्र)ज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति'(बृ.4-4-12, 6-5-12)इत्येतावतैवातृप्यन्ती भगवती श्रुतिः 'न प्रेत्यसंज्ञास्ति' इत्यप्यनु-गायति। अत्र 'विनश्यति' इति पूर्वरूपादर्शनकथनेन रूपान्तरेण दर्शनसिद्ध्या सान्वयविनाशः, 'न प्रेत्य संज्ञास्ति' इति निरन्वयविनाशश्च विवक्षित इति स्पष्टम्। 'भस्मीभूतस्य देहस्य पुनरागमनं कुतः?' इत्ययमंशः 'न प्रेत्य संज्ञास्ति' इत्यनेनाभिधीयते। 'नश अदर्शने' इति धातुना कुत्रचिददर्शनमात्रम्, न संपूर्णसत्ता इति 'विनश्यति' इत्यस्याभिप्रायः। देहादेश्च प्रतिक्षणमुत्पत्तिविनाशशालित्वेऽपि देहे भस्मीकृते नैवं प्रतिसन्धानादिसंभवः। प्रतिक्षणं विनाशः, भस्मीकृते तु देहे उच्छेद इति हि तारतम्यं सर्वानुभव-सिद्धम्। एतादृशो द्विविधोऽपि नाश आत्मनि नास्तीत्यपि अवश्यं वक्तव्यम्, कूटस्थनित्यः खलु सः। अतः 'अविनाशी वा अरेयमात्मा' इति सान्वयविनाशो निराक्रियते, 'अनुच्छित्तिधर्मा'(बृ.6-5-14) इति निरन्वयविनाशो निराक्रियते। अत एवात्र 'उच्छित्ति'पदस्वारस्यमपि। शरीरनाशे हि 'शरीरोच्छेद' पदं प्रयुज्यत एव लोके। अतश्च 'न उच्छित्तिः=अनुच्छित्तिः' इति तत्पुरुष एव स्वरसः। गत्यन्तराभावे हि गुरुर्बहुव्रीहिस्सह्यः॥

किञ्च 'न विद्यते उच्छित्तिः यस्य' इति बहुव्रीहौ 'यस्य' इत्यत्र यच्छब्दार्थः कः? धर्मभूतज्ञानमेवेति चेत्? किं तत्र नियामकम्। 'धर्म'पदमेवेति चेत् तद्धि साधारणं पदम्, न तु ज्ञाने रूढम्। प्रत्युत ज्ञानस्य ज्ञानाश्रयत्वासंभवात् प्रत्यक्त्वस्वयंप्रकाशत्वादिधर्मैस्सावकाशं तत्पदं धर्मभूतं ज्ञानमेव वक्तीति न स्वरसम्। भगवद्रामानुजवेदान्तदेशिकादिभिस्तथोक्तत्वात् प्रश्नानर्हं तदिति चेत्, तर्हि 'स्वगोष्ठीनिष्ठः समयः' इत्युपहासास्पदमेव तत्स्यात्। गुरुवचनेषु श्रद्धात्यन्तमावश्यकीति चेत्,

श्रद्धां निष्ठां तितिक्षां वा जानाम्यावश्यकीं नृणाम्। तथैवावश्यको नृणां विचारो बुद्धिजीविनाम्॥
विचारशास्त्रं व्यर्थं स्यादन्यथा व्यासकर्तृकम्। अतः श्रद्धादिदार्ढ्यार्थं विचारो न निवार्यते॥
अत एव किल प्रोक्तमृषिभिः दीर्घदर्शिभिः। शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम्॥
मध्ये पलायनं नैव धीराणां युज्यते सताम्। आचार्याणां कृपा स्याच्चेत् किं वा स्याद्दुर्गमं वद॥
हित्वा पूर्वग्रहादीनि चिन्त्यतां गहनं मुहुः। समर्प्यतां च सर्वस्वं मार्गस्तु सुलभो भवेत्॥

पश्यन्तु श्रुतिवाक्यानि— 'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद' 'इदं सर्वं यदयमात्मा'(बृ.4-4-6, 6-5-7) 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयः धर्ममयोऽधर्ममयः सर्वमयः'(बृ.6-4-5) इत्यादीनि। श्रुतानीदृशानि वाक्यानि शतशः। सन्ति किल व्याख्यानानि विविधानि। को निर्णयः कथञ्च इत्येव पृच्छामः। सत्यम्—

न व्याख्यानशतैर्वापि चर्चाभिर्वाऽसकृत्कृतैः। न प्रसन्नो भवेदात्मा विना सर्वसमर्पणात्॥
शब्दारण्यं महादुर्गं त्यक्त्वा सर्वं समर्प्य च। सर्वप्रसादहेतुं तं प्रार्थयात्मप्रसादनम्॥
तत्प्रसादात् परं सत्यं स्वयं ज्ञास्येत सुस्फुटम्। सर्वग्रन्थिविमोक्षादिः स्वयं स्यान्नात्र संशयः॥
तस्यैव सुलभो ह्येव आत्मा यं वृणुते स हि। तमेवैकं वृणु त्वं च त्यक्त्वान्यत्सकलं त्विह॥
स त्वात्मा तादृशायैव स्वात्मानं दर्शयेत् ध्रुवम्। त्यज हैतुकचर्चां त्वं प्रथमं सर्वनाशिनीम्!॥

ननु किमिदमत्र दैन्यम्, अत्यन्तं निष्कृष्य प्रदर्शनीये विषये विमतश्रुतिचरणशरणवरणं नाम? समासशास्त्रदृष्ट्या तु भवन्निर्वाहः क्लिष्ट एव। बहुव्रीहिगर्भबहुवीह्यपेक्षया हि तत्पुरुषगर्भः स्वरसः। अतः दैन्यं दैन्यमेवेति चेत्, बालिशस्त्वं न जानासि वैदिकानामसदृशीं धीरताम्। 'तस्य धीराः' 'कश्चिद्धीरः' 'तमेव धीरो विज्ञाय' इत्यादिश्रुतिर्यतो न दृष्टा त्वया। भोः वैदिकंमन्य!

पाञ्चालिकां किं प्रदर्शर्य बिभीषयसि वैदिक! न कपोता वयं नापि शुका उत्तरमुच्यताम्॥
मृत्योर्मृत्युं प्रपन्ना ये वैदिकास्तानृते भुवि। धीरः को वा भवेत्पूर्वदेवस्त्वं नैव वेत्सि तत्॥
वाग्विलासं वृथा त्यक्त्वा तूत्तरं सम्यगुच्यताम्। जानीमो भवतो भावं श्रूयतां सावधानतः॥
एवं चेन्निर्विकारत्वं कथं तस्येति चेच्छृणु। **कूर्माङ्गभङ्गन्यायेन** तत्त्वमत्र विचिन्त्यताम्॥
गम्भीरत्वाद्विचारस्य तथेदंप्रथमत्वतः। यथाशक्ति कथञ्चिच्च वक्ष्यते परमं रहः॥

अत्रेत्थमस्य विचारस्य प्रथमोऽवतारः—आत्मतत्त्वस्वरूपनिर्णयः 'अनुच्छित्तिधर्मा' पदार्थनिर्णयाधीन इति प्रथममवधेयम्। अनुच्छित्तिधर्मपदार्थनिर्णयश्च तद्विग्रहनिर्णयाधीनः। तत्र 'धर्मादनिच् केवलात्' इत्यनुशासनात् उत्तरत्र बहुव्रीहेरविवादत्वेऽपि 'अनुच्छित्ति' पदे कथं विग्रहः? उक्तमेव किल तत्रापि बहुव्रीहिरिति। कथमाचार्योक्तावपि न समाश्वासः?

नूनं ममास्ति विश्वासः समाधेयः परःकथम्? नञ्तत्पुरुषमाहुर्ये ज्ञानमात्रात्मवादिनः॥
आहत्य, प्रथमं पश्य विवादं पदनिर्णये। उत्तरं स्वमतश्रद्धा यदि सर्वत्र तद्भवेत्॥
विचारशास्त्रं सर्वं च व्यर्थमित्येव कथ्यताम्। ःथैवेत्युत्तरं चेत्ते, जडानां लक्षणं हि तत्॥

यदपि तत्पुरुषसमासे पौनरुक्त्यमित्युक्तम्, तदप्यनुपदमेव पर्यहारि। नन्विदं बौद्धवासनामूलकमिति चेत्, न। 'दीपादीनां कदाचित्सदृशविसदृशाशेषसन्तत्यपेते ध्वंसे दृष्टेऽपि'(जड.श्लो.31) इति भवतैव नाशे वैलक्षण्यस्योपपादनात्। सूत्रकारैरेव 'प्रतिसंख्याप्रतिसंख्यानिरोध' (ब्र.सू.2-2-21) इत्यत्र विनाशद्वयवर्णनात्। दृष्टस्यार्थस्य दुरपह्नवत्वाच्च। सावकाशप्रत्यभिज्ञो एको नाशः, निरवकाशप्रत्यभिज्ञोऽपरो नाशः। आद्यो घटनाशादिः, द्वितीयो दीपनाशादिः। एतादृशोभयविधनाशनिषेधस्य आत्मन्यावश्यकत्वात्। तत्पुरुषसमासापेक्षया बहुव्रीहिस्तु जघन्य एवेति न्यायसिद्धम्। अन्ततः—

व्याख्याभेदावकाशस्य सत्त्वे, मानं कथं भवेत्? भवन्मतेऽर्थे तच्छब्दस्त्वन्यथासिद्ध एव हि॥
सिद्धान्ता निखिला ह्यद्य व्याख्यारीतेः प्रभेदतः। दृश्यन्ते, तत्कथं भारश्शब्दस्योपरि धार्यते॥

ननु शब्दैकसमधिगम्यत्वं ब्रह्मणस्सर्ववेदान्तिसंमतम्। स न्यायो जीवविषयेऽप्यन्वीयतामिति चेत्; तर्ह्युच्यतां सिद्धान्तभेदः किंमूलक इति। सर्वेऽपि स्वमतमेव श्रुतिसंमतं वदन्ति। श्रद्धैव चेदुत्तरम्, तदपि तेषामपि समानम्॥

पूर्वपक्षो बलिष्ठोऽभूदुत्तरं दुर्बलं बत। तत्तादृशाः खल्वाचार्याः ब्रूयुरेवं कथं? वद॥
अतोऽस्ति तेषां हृदये हयग्रीवकृपावताम्। अन्विष्यतां रहस्यं किं त्वत्र स्यात्तपसा धिया॥

ननु परमरहस्यानां वेदैकसमधिगम्यत्वं हि शास्त्रयोनित्वाधिकरणन्यायसिद्धम्। तदनुसारेणाचार्यैरपि 'निगममितो गौरवं नास्य भारः' इति कथने कं दोषं पश्यति भवान्? शान्तं पापम्! किमुच्यते 'आचार्यवचने कं दोषं पश्यति?' इति? आशयानभिज्ञो भवान्। तत्तादृशः कवितार्किकसिंहः सर्वतन्त्रस्वतन्त्रः विद्याधिदेवेन स्वयंवृत आचार्यसार्वभौमः अनवसर एव तादृशं प्रबलमाक्षेपं स्वयमुत्थाप्यालंकृत्य, एवं व्याख्यानान्तरावकाशप्रदं वचनं प्रदर्श्य दूरं गच्छति कुतः? **वृत्तौ** कियद्विजृंभतेऽयमन्यत्र। अत्र तु द्वित्रपङ्क्तिः प्रदर्श्य मौनी बभूव कथम्? इत्यालोचयितुमप्यशक्तानां श्रद्धाजडानां भवादृशामाचार्याशयान्वेषणा-सामर्थ्यम्, असमर्थञ्च व्याख्यानं वीक्ष्य—

स्मृतावागच्छति वचः वाल्मीकेरद्भुतार्थकम्। 'संस्कारेण यथा हीनां वाचमर्थान्तरं गताम्॥'
कियदर्थवती गाथा प्राचां पश्यातिसुन्दरा। **'गुरोश्शापस्तु शिष्यः स्यात्'**? इत्याद्या बहुधा श्रुताः॥
तस्याचार्यवरेण्यस्यानुग्रहाद्वच्मि पश्य भोः! क्रमेणावहितो भूत्वा जाड्यं त्यक्त्वावधारय॥
इत्येवं प्रथमस्त्वत्रावतारः, शृणु चेतरत्। आन्तं च सावधानं च धारयैतत् पुनः पुनः॥
धृत्वेदं भव सज्जस्त्वं विचारेऽस्मिन्ननन्तरम्। दर्शयामो द्वितीयं चावतारमतिनूतनम्॥
शास्त्रयोनित्वन्यायश्च विस्तरेण विचार्यते। द्रक्ष्यसि ह्यग्रिमसरे तत्प्रसङ्गे, निरीक्ष्यताम्॥
नानाविधानां व्याख्यानां विरुद्धानां परस्परम्। पश्यतां किल संन्यासः कुत्र वोपकरिष्यति॥
श्रद्धैवात्रोत्तरं स्याच्चेत् तन्मार्गे गच्छ मा चिरम्। जाड्यं श्रद्धा च पर्यायौ न जात्वित्यवधारय॥
वरमर्धविचारात्तु जाड्यं यत् सहजं नृणाम्। न हि **कूपार्धतरणं** कस्यचित्स्यात् सुखावहम्॥
यथाशक्तिविचारस्तु कूपार्धतरणायते। शास्त्रज्ञानं बहुक्लेशमित्यादि वचनं स्मर॥

प्रथममिदमुच्यताम्—कस्येमे शरीरेन्द्रियप्राणमनोविज्ञानात्मवादाः? कः संशयः? प्रसिद्धमेवेदमेते चार्वाकमतभेदा इति। उक्तमत्रोपक्रम एव—चार्वाकमतमित्येकं मतमेव नास्ति, पण्डितैः कल्पितमिति। कथमेवमुच्यते—आचार्यैरिवात्रश्लोकावतरणिकायां चार्वाकनाम्नैवोल्लिखितम्? सत्यम्, तत्राप्युक्तम्—पूर्वमेव पण्डितकुलकल्पितास्ते पक्षा इति। तर्हि कथमाचार्यैः खण्ड्यन्ते? तत्तावन्मात्रात्मकत्वमात्मनः खण्ड्यते नास्तिक्यपरिहाराय॥

किं तर्हि शरीराद्यात्मवादः प्रामाणिकः? 'अहं स्थूलः' अहमित्यादिप्रतीतिः कथमित्युच्यतां? उक्तमेव किल 'निष्टप्ते लोहपिण्डे हुतवहमतिवत्' इति। दृष्टान्तस्तु समीचीनः। दार्ष्टान्तिके कथं समन्वयः? जीवात्मा अणुरित्युच्यते। अतो धर्मभूतज्ञानस्य व्याप्तिरेव शरीरे वाच्या। धर्मभूतज्ञानं तु पराक्,

न प्रत्यक्। अतस्तेन शरीरे कथं प्रत्यक्त्वमारोप्येत। तर्हि आचार्यैः कथमुक्तं इति चेत्, तदेव जिज्ञासया पृच्छ्यते। अनुभवः कथं निर्वाह्यः? इत्येव जिज्ञासा। अहमर्थ एव खलु सर्वव्यवहाराणां निर्णायकः मूलभूतः स्वयंप्रकाशः पदार्थः। तादृशोऽहमर्थोऽपि भ्रमरूपो यदि व्यभिचरितः स्यात्, तर्हि कुत्र समाश्वासः?

आः स्मृतम्! अत एवोक्तमास्माकीनैः अहमर्थो नाखण्डः पदार्थः, किन्तु प्रत्यक्परागर्थमिश्रित एवेति। अत एव वयमपि समाश्वसिमः। भो ब्रह्मन्! किं श्रूयते इयं लोकोक्तिः? 'कृतश्च शीलविध्वंसः न चानङ्गश्च साधितः। आत्मा च लघुतां नीतः तच्च कार्यं न साधितम्॥'(न्या.मं.) इति॥

अत एवाह भगवान् स्वधर्मे निधनं वरम्। न वा व्याधिश्च शान्तःस्यात् परधर्मसमाश्रयात्॥

न हि 'अहमि'त्यनुभवे सुसूक्ष्ममीक्षणेऽपि परागंशं प्रत्येति कश्चित्। परागर्थो वा कथं स्वयं भासेतेत्येव समस्या। 'अयो दहति' इत्यादौ हि अयोऽपि पश्यति, दाहमप्यनुभवति। द्वयमपि पराक्। बालानां भ्रमेऽपि, विवेकिनो जानन्त्येव। नैवं प्रकृते। तर्हि का गतिरिति चेत्—प्रथममिदं चिन्त्यतां—निमीलितचक्षुषः, गाढान्धकारे वर्तमानस्य वा 'अहमत्रास्मि, इदं कुर्वन्नस्मि' इति स्वशरीरस्थितिः, तच्चलनादिकं वा स्पष्टं किल ज्ञायते, तत्कथमिति। बाह्येन्द्रियैस्तदसंभवि। मनस्तु बाह्ये न स्वतन्त्रम्। अथापि कथं तदा शरीरभानम्। शरीरं तु जडम्। तत्कथं स्वयंप्रकाशेत? स्वयं जडमपि स्वप्रकाशेन ज्ञानेन व्याप्तत्वात् तथेति चेत्, 'ज्ञानेन' इति किमुच्यते? धर्मः, उत धर्मी? धर्मस्तु न प्रत्यक्। धर्मी तु अणुः। भानं तु मध्यमपरिमाणस्य शरीरस्य॥ इदं सर्वं मनसि कृत्वैवातिजागरूकोऽसावाचार्यसार्वभौम उपक्षिपत्याक्षेपम्—'धीर्नित्या यस्य' इत्यादिना। आक्षेपस्तु बलवान्, समाधानं त्वतिदुर्बलम्। अनेन प्रकृतसमस्यायाः कः परिहारः?

यत्र वेदःप्रमाणं स्यादतिशङ्का कथं भवेत्? सत्यम्, परं तु व्याख्यानभेदात् कलुषिता मतिः॥
कस्य स्यात् कुत्र विश्वासः? श्रद्धा चेदुत्तरं बत! विज्ञानान्वेषणेनैव निर्णेयं तर्हि वस्तु सत्॥

आत्मा त्वहमर्थ इत्यत्र नास्ति कस्यापि विवादः, यतः 'अहम्' इति प्रत्यक्प्रकाश एव कश्चन न स्याद्यदि, तर्हि सर्वविधव्यवहारोऽपि नूनं लुप्येत। नैरात्म्यवादः, अहमर्थानात्मत्ववादश्च विस्तरेण पर्यालोचितः (श्लो.2)। अहंत्वमेव प्रत्यक्त्वम्। प्रत्यक्त्वानुभवश्च परमात्मनि विश्राम्यतीति च **भूमाधिकरण**भाष्यसिद्धम् (ब्र.सू.1-3-8)। पर्यवसानं परमात्मनि चेत् प्रारम्भः कुत्रेत्यपि प्रश्न उदेत्येव। लोकानुभवदृष्ट्या शरीर एवाहंप्रत्ययस्योपक्रमस्सर्वेषामिति नास्ति विवादः। अत एव तैत्तिरीयानन्दवल्ल्यपि **स्थूलारुन्धतीन्यायेन** अन्नमयादुपक्रम्य आनन्दमये विश्राम्यति। समनन्तरं प्रवृत्ता भृगुवल्ल्यपि अन्नमयात्मन उपक्रम्य, आनन्दमयात्मनि विश्राम्यति। अत्र मयट्प्रत्ययः कथमित्यादिविचारस्त्वन्यः शब्दशास्त्रानुबन्धी। अध्यात्मं तु केवलार्थानुभवप्रधानम्। कथमत्र शब्दप्रयोगचर्चाया अवकाशः? शब्दः खल्वनुभवमनुधावति, अनुभवश्चार्थम्। अत आत्मोपदेशपरंपरा शरीरात्मवादोपक्रमा। व्यक्तिविशेषदृष्ट्या अपवादरूपेण पुत्रगेहात्मवादानां संभवेऽपि देहात्मवाद एवोत्सर्गसिद्धः। अनहमि देहे कथं भवत्यहंप्रत्यय इति शंकायां तप्तायसि वह्निबुद्धिवदित्याचार्यैः

समाधानेऽपि, देहे धर्मभूतज्ञानस्यैव व्याप्त्या, अस्य च प्रत्यक्त्वाभावेनानुपपत्तिः प्रादर्शि। एतत्परिहारोद्देशेनैव धीर्नित्या यस्य पक्षे इति श्लोकोऽपि प्रवृत्तः। परन्तु—

न बुद्धिभेदं जनयेत् वासनापीडितं जगत्। मा भूदुभयतो भ्रष्टमित्युदासि दयालुभिः॥
'यत्रोदासी'ति यत्प्रोक्तं ग्रन्थान्थे ह्येभिरेव च। इदं निदर्शनं तस्येत्येवं भाति, विलोकय॥
तमोमयमभूत् सर्वं ज्ञानं क्षीणं हि सर्वशः। युगसन्धिं विलोक्याद्य कथ्यते तदनुग्रहात्॥

प्रायस्सर्वासूपनिषत्सु अस्माकं जगन्मूलतत्त्वस्य च संबन्धनिरूपणाय सृष्टिप्रक्रिया येन केन प्रकारेण प्रतिपाद्यत इति सर्वविदितम्। ब्रह्माधिष्ठिता हि प्रकृतिर्महदादिक्रमेण चतुर्विंशतितत्त्वात्मना परिणमत इत्यपि प्रायस्सर्वसम्मतम्। अन्तिमम् च तत्त्वं पृथिवी। 'तेजोऽतस्तथा ह्याह' (ब्र.सू.2-3-10) 'आपः' (11) 'पृथिवी' (12) इति सूत्रैरपीदं दृढीकृतम्। परन्तु तैत्तिरीये 'आत्मन आकाशस्सम्भूतः' (तै.उ.आ.१) इत्यारभ्य 'अद्भ्यः पृथिवी' इति सृष्टिनिरूपणं न परिसमाप्यते। अनन्तरमपि 'पृथिव्या ओषधयः। ओषधीभ्यो अन्नम्। अन्नात् पुरुषः' इति पुरुषसृष्टिरपि प्रतिपाद्यते। कुतः पृथिवीसृष्टावेव न विरमति श्रुतिः? इति सम्यगालोचनीयम्। एवं सृष्ट्युपदेशस्योद्देशश्च कः? किमियं काकदन्तपरीक्षा ? इत्यप्यालोचनीयम्। तत्त्वानां सृष्टेः पृथिव्यां पर्यवसानेऽपि सृष्टिप्रवाहः पृथिव्यां न परिसमाप्तः, यतः सा तु समष्टिरूपा। व्यष्टिसृष्टिरपि सृष्टिपदार्थान्तर्भूतेति 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' (बृ.उ.3-4-7) इति स्पष्टमुच्यते। नामरूपव्याकरणमिति व्यष्टिसृष्टिरूपम्। अत एवेयं व्यष्टिसृष्टिः परब्रह्मकर्तृका, उत चतुर्मुखकर्तृका? इति संशयवारणाय संज्ञामूर्तिक्लृप्त्यधिकरणम् (ब्र.सू.2-4-17) प्रवृत्तम्। एतदधिकरणावतरणिकायां श्रीभाष्ये इदं स्पष्टम्। अतो व्यष्टिसृष्टिरपि परमात्मकर्तृकैव। तर्हि व्यष्टिसृष्टेः समाप्तिः कुत्र? आप्रलयं व्यष्टिसृष्टिरेवेति चेत् सृष्टिप्रलयावेव शिष्येताम्, स्थितिर्गलहस्तिता भवेत्। ततश्च स्थितिकारणत्वं ब्रह्मलक्षणं न स्यात्। अतः व्यष्टिसृष्ट्यवधिरेवोच्यते—'पृथिव्या ओषधयः। ओषधीभ्यो अन्नम्। अन्नात् पुरुषः' इत्यनेन। न च तदुपर्यपि प्राणमयादीनां कथनादत्रैव कथं विश्रान्तिरिति वाच्यम्, सृष्ट्युद्देशविवरणार्थमेव तेषां प्रवृत्तेः। अत एव 'स वा एष पुरुषोऽन्नरसमयः' इत्यारभ्य प्रतिपर्यायं 'स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः' इति पुनःपुनः पुरुषविधत्वमनूद्यते, 'तस्यैष एव **शारीर** आत्मा' इत्यावर्त्यते च पुनःपुनः॥

ऐतरेये चेदं स्पष्टं पुरुषसृष्टौ सृष्टिर्विश्राम्यतीति। तत्र हि देवानां सृष्ट्यनन्तरं 'ता एताः देवताः सृष्टाः इत्यारभ्य 'तमशनायापिपासाभ्यामन्ववार्जत्' (ऐ.2-1) इति अशनायापिपासयोराविर्भावमुक्त्वा 'ता एनमब्रुवन्। आयतनं नः प्रजानाहि। यस्मिन् प्रतिष्ठिता अन्नमदामेति' इत्यशनायापिपासाशान्त्यर्थं देवताभिः प्रार्थितः परमात्मा प्रथमं 'ताभ्यो गामानयत्' इति गाः ससर्ज। तत्रातृप्तिं पश्यन् अनन्तरं अश्वानसृजत्। तत्राप्यतृप्तिं दृष्ट्वा मानवानसृजत्। मानवान् दृष्ट्वा देवतास्तृप्ता अभूवन्निति 'ताभ्यः पुरुषमानयत्, ता अब्रुवन् सुकृतं बतेति पुरुषो वा व सुकृतम्'(ऐ.२) इति कथनात् सृष्टिः मानवसृष्टौ विश्रान्तेत्यभिहिता।

मनुस्मृतावपि 'भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः । बुद्धिमत्सु नराःश्रेष्ठाः' इति क्रमेण नराणां सृष्टिस्सूच्यते । न चोपर्यपि 'नरेषु ब्राह्मणाः स्मृताः' इत्यादेः श्रवणात् कथं नरेषु विश्रान्तिरुच्यते इति शंक्यम्, ब्राह्मणानामपि नरत्वेन योनिभेदाभावात् । सृष्टौ तारतम्यप्रदर्शनपूर्वकं सृष्ट्युद्देशकथनप्रकरणत्वात् तस्य । अत एव सूच्यते इत्येवास्माभिरुक्तं अर्थादयमर्थस्सिद्ध्यतीत्यभिप्रायेण ॥

विषयदृष्ट्या प्रथमं भूतात्मनां आविर्भावः, ततः इन्द्रियात्मनाम्, प्राणात्मनाम्, मनआत्मनां च क्रमेण विकासः । 'प्राणिनाम्' इत्यत्र प्राणशब्दो हि इन्द्रियाणामपि वाचकः । अनन्तरं मानवानां विकासः । ज्ञानार्थकात् मनधातोर्हि निष्पन्नानि मनः, मनुः, मनुज इत्यादिपदानि । अत्रैव सृष्टेस्समाप्तिः । अनन्तरं तु 'नरेषु ब्राह्मणाः स्मृताः' इत्यादिना मानवजन्मनः परमोद्देशभूतस्य मोक्षाख्यनिरतिशयपुरुषार्थावाप्त्यनुगुणो ज्ञानविकासस्यारम्भः, अयमेव स्थितिकालः । अत एव 'ब्रह्मवेदिनः' इत्युपसंह्रियते । तदिदं स्पष्टमेवोच्यते— 'पुरुषे त्वेवाविस्तरामात्मा । स हि प्रज्ञानेन संपन्नतमः । विज्ञातं वदति, विज्ञातं पश्यति, वेद श्वस्तनम्, वेद लोकालोकौ, मर्त्येनामृतमीक्षत इत्येवं संपन्नः । अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानम्' (ऐ.आ.2-3-2) इति । एतद्वचनात्पूर्वं स्थावरजङ्गमादिक्रमेणात्मनः आविर्भावः=विकासः प्रत्यपादि ॥

कियद्वा ब्रूयुराचार्याः शक्यं दिङ्मात्रदर्शनम् । श्रद्धया विनयाद्यैश्च शिष्टं ज्ञेयं तपोबलात् ॥

एवञ्च सृष्टेरन्तिमकक्ष्यायां वर्तमानस्य मानवस्य शरीरे भूतात्मा, इन्द्रियात्मा, प्राणात्मा, मनआत्मा, विज्ञानात्मा च मिलिता वर्तन्ते । आनन्दमयात्माऽपि यद्यपि वर्तते, परन्त्वनभिव्यक्तः । अत एव 'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान् । जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः ॥' इति वचनमपि प्रवृत्तम् । अत्र 'आत्मा च परमात्मा च' इत्यपि पाठः । तदापि आत्मा जीवात्मैव । अत एव जीवात्मदर्शनानन्तरमेव परमात्मदर्शनं संप्रतिपन्नम् ॥

अत एव 'एवमात्मात्मनि गृह्यते' (श्वे.1-15) 'कालेनात्मनि विन्दति' (गी.4-38) इत्यादिवचनानि सुज्ञातार्थानि । जगत्सृष्टौ तत्त्वशः जीवानां तारतम्याभावेऽपि, जीवस्य फलतःसंघातरूपत्वात् तारतम्यम-वर्जनीयम् । तारतम्यमेव **सृष्टिः**, साम्यमेव च **प्रलयः** । अतो विशिष्टेन रूपेण सृष्टा जीवाः प्रथमं भूतशब्दवाच्या भवन्ति । जीवसत्त्वलक्षणचैतन्यमेव यथा न दृश्येत, तादृशसूक्ष्माणव एव 'भूतानि' इत्युच्यन्ते । अचित्तत्त्वं यदैकं सूक्ष्माकारं भवति, तदैव अणुशब्दवाच्यं भवति । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छां.6-3-2) इति नामरूपव्याकरणस्य जीवद्वारकत्वात् एकैकोऽप्यणुः स्थूलतोऽचिद्रूपः, तत्र सूक्ष्मजीवसंबन्धः, अन्तर्यामिभूतपरमात्मसंबन्धश्चेति तत्त्वत्रयात्मक एव वर्तते । अनन्तरं प्राणस्या-विर्भावः । तदानीं सः प्राणीत्युच्यते । अनन्तरमेकैकेन्द्रिय**विकास**क्रमेण वर्धन्ते । स्थावराः एकेन्द्रियजीवाः। त्वगिन्द्रियमेव वर्तते तेषाम् । ततो घ्राणेन सह द्वीन्द्रियाः शंखादयो भवन्ति । ततो रसनेन्द्रियेण सह त्रीन्द्रियाः मक्षिकादयः । ततः श्रोत्रेन्द्रियेणसह चतुरिन्द्रियाः सरीसृपादयः । ततश्चक्षुषा सह पञ्चेन्द्रियाः पश्वादयः । ततो मनसा सह षडिन्द्रिया मानवाः । एवं क्रमेणैव **विकासो** भवतीत्यादिकं पुराणादिषु वर्ण्यते । बुद्धेर्विकास एव

सृष्टेः परमं प्रयोजनम्। बुद्धिविकासस्य फलं तु क्रमशः परमात्मतत्त्वज्ञानम्, तेन च परमात्मप्राप्तिरित्येवं सृष्टिचक्रं परिवर्तते । तदेतदुक्तम्—'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मुं.2-1-1) इति। तत्राद्यजीवाणुदृष्ट्यैव 'तोयेन जीवान् व्यससर्ज भूम्याम्' (म.ना.1) इत्यादिवचनम् प्रवृत्तम्। विस्तरस्त्वन्यत्र ॥

एतेन 'यःकारयति कर्माणि क्षेत्रज्ञं तं प्रचक्षते । यः करोति तु कर्माणि भूतात्मानं विदुर्बुधाः ॥

जीवसंज्ञोऽन्तरात्मान्यः सहजस्सर्वदेहिनाम्। येन वेदयते सर्वास्सुखदुःखादिकाःक्रियाः॥'(12) इति मानवं वचोऽपि व्याख्यातम्। अतो विज्ञानात्मेव भूतात्मापि स्वप्रकाशः॥

एवञ्च प्रत्यगर्थस्य शरीरादिषु व्याप्त्या सर्वत्राप्यहं प्रत्ययः 'अयो दहति' इतिवदुपपद्यते। तावता धर्मभूतज्ञानमेवानपेक्षितमिति तु न वक्तव्यम्, बाह्यानां घटादीनां ग्रहणार्थं तस्यावश्यकत्वात्। 'अहं ज्ञानवान्' इत्याद्यनुभवात्। धर्मिज्ञानस्य घटादिविषयकत्वासंभवात्। नाप्यन्तःकरणधर्मभूतं गौणं ज्ञानमादाय निर्वाहसंभवः, सांख्यप्रक्रियायाः उत्तरत्र(श्लो.70,71,72) विमर्शनात्। स्वरसस्य लोकव्यवहारस्य कदापि बाधादर्शनाच्च ॥

ननु धर्मभूतज्ञानस्थान एव धर्मिणो निवेशस्यैव धीर्नित्या इत्यादिश्लोकतात्पर्यात्, पुनरतिरिक्तं धर्मभूतज्ञानं किमर्थमिति चेत्, पूर्वश्लोकद्वयेन शरीरेन्द्रियमनःप्राणबुद्ध्यात्मवादानां प्रसक्तत्वात्तेषु अहं-बुद्धेस्समर्थनार्थमेवैतच्छ्लोकप्रवृत्त्या तावत्येव पर्यवसानमाचार्यहृदयस्थं, न तु घटादिविषयकत्वमपि धर्मिण एव भवत्विति। यदा च धर्मिज्ञानमेव संकोचविकासशीलम्, तदा एतादृशज्ञानोद्दलितं बुद्ध्याख्यं तत्त्वमेव बाह्यवस्तुग्रहणाय समर्थमिति वक्तव्यम्। जीवस्य वस्तुतो विज्ञानात्मत्वात्, बुद्धेरपि विज्ञानरूपत्वं सृष्टिविज्ञान-सिद्धम्। अत एव महत्तत्त्वावस्थाविशेषस्य बुद्धिरिति संज्ञेत्यादिकमन्यत्र विचारितम्। एवं जीवात्मनः परमात्मांशवदेवेतरेषामप्यात्मनां तदंशत्वादेव 'त्वमेवं पञ्चधा स्थितः' इत्युक्तिः । अत एव 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः' (बृ.6-4-5) इत्याद्यपि संगच्छते। न च तर्हि 'चक्षुर्मयः' इत्यारभ्य 'सर्वमयः' इत्युपसंहारात्सर्वत्राप्यहंत्वं स्यादिति वाच्यम्, सर्वत्र ब्रह्मदर्शिनाम् 'अहमेवेदं सर्वम्' इत्येवानुभवात्। सर्वात्मभावस्यैव परमकाष्ठात्वात्। अज्ञानिनां तु जीवे विश्रमः। अत एव च तैत्तिरीयेऽपि प्रतिपर्यायम् 'तस्यैष एष शारीर आत्मा, यःपूर्वस्य' इति च स्वरसतस्संगच्छते ॥

एतद्दृष्ट्यैव 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय' इत्यादिश्रुत्वा स्वस्या मोहं प्रदर्शितवत्यै मैत्रेय्यै 'नाहं मोहं ब्रवीमि, एतावदेव खल्वरे अलं विज्ञानाय' इति याज्ञवल्क्यस्यातिगंभीरतया प्रतिवचन-मुपपन्नतरम्। भूतात्मानमारभ्य परमात्मपर्यन्तमात्मपरंपरायास्सत्त्वेन, भूतात्मवादस्य, औपाधिकत्वेऽपि प्रामाणि-कत्वात्। न च तर्हि तस्य विनाशकथनं कथं घटेतेति शंक्यम्, अदर्शनस्यैव नाशपदार्थत्वात्। उत्तरत्र 'अविनाशी वारेऽयमात्मा' इति नित्यत्वप्रतिपादनाच्च । अत एव तावन्मात्रेण संशयो न निवर्तेतेति 'अनुच्छित्तिधर्मा' इति आत्मन उच्छेदाभावः कथ्यते। आत्मनश्शरीरानुगुणपरिणामे जैनमतात्को विशेष इति चेत्, तावत्येवात्मनोऽपर्यवसानात्, कस्याञ्चिदवस्थायामेवात्मनस्तथात्वात्, परमात्मनोऽप्यात्मशब्दार्थत्वात्,

प्रत्यगर्थपरंपरायाः परमात्मनि पर्यवसानस्य **भूमाधिकरणे** भाषितत्वात्। एतदर्थस्य जैनैरनङ्गीकाराच्च न जैनमताविशेषः। न च स्वरूपपरिणामवादस्य बहुधा निराकरणं तर्हि कथमिति शंक्यम्, अन्तर्यामित्वेन परिणामस्यात्माधिकरणे वर्णिततत्वात्, नायकसरेऽस्य विस्तरेण परीक्ष्यमाणत्वाच्च। एतत्सर्वं करतलामलकवत्पश्यद्भिरेव **भगवद्भाष्यकारैः** 'भेदो वाऽभेदो वा द्व्यात्मकता वा कोऽयमर्थस्समर्थितः?' इति स्वयं पर्यनुयुज्यापि, विषयस्यातिगंभीरत्वात् 'सर्वस्यापि श्रुतिवेद्यत्वात् सर्वं समर्थितम्' इत्यनुगृहीतं **वेदार्थसंग्रहे** तत्कालानुगुणम्॥

ननु तत्रैवोपरि शरीरशरीरिभाव एवाभेदवाक्यस्य मूलमित्युक्तं किलेति चेत्, अयि भोः! **गण्डस्योपरि संवृत्तं पिटकं त्वमेव न जानीषे**। स्पष्टमुच्यताम्— 'अभेदवाक्यं समर्थितम्' इत्युक्तं वा 'अभेदस्समर्थितः' इत्युक्तं वा! किं तर्हि शरीरशरीरिणोरभेदः? नाहं वदामि, त्वयैव वक्तव्यम्। जीवः खलु परमात्मनः शरीरम्। एवं तयोरुपादानोपादेयभावोऽप्यस्ति। तयोः कथमवस्थानमित्यत्र 'सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्' (श्वे.1-16) इति वीक्ष्यताम्। क्षीरे सर्पिर्वर्तते, न वा? नो चेदसत्कार्यवादापत्तिः। अस्ति चेत्, प्रदर्शय। 'स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्यानिर्मथनाभ्यासदेवं पश्येन्निगूढवत्॥' (श्वे.1-14) इत्यवलोक्यताम् जीवात्मवदेव भूतात्मपर्यन्तमेवावलोक्यताम्। 'आत्मनमरणिम् कृत्वा' इत्यस्योपक्रमः 'स्वदेहमरणिं कृत्वा' इति। स्वदेहम्=भूतात्मानमारभ्य जीवात्मपर्यन्तं ज्ञात्वाऽनन्तरमन्ते 'आत्मानम्' इति पठ्यताम्। 'एवमात्मात्मनि गृह्यते' 'आत्मन्येवात्मानं पश्येत्' 'तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति' इत्यादिकमवलोक्यताम्॥

**अपि चात्रात्यन्तमवधेयमिदम्**—वस्तुतः शरीरशरीरिणोस्संबन्धः न केवलं संयोगः, अपि त्वपृथक्सिद्धिः=अविनाभावः। यथा वा 'क्षीरे सर्पिरिवार्पितम्' इत्यनेन क्षीरे दध्यादिक्रमेण सर्पिर्दृश्यते, तथैव भूतात्मानमारभ्य परमात्मपर्यन्तदर्शनम्, एषां सर्वेषामविनाभावोऽपि। इदं सर्वं क्रोडीकृत्य यदि गहनं चिन्त्यते, तदा सर्वं स्वयं स्पष्टं भवेत् गुर्वनुग्रहात्॥

एतावदेव पर्याप्तं सुधियां दिक्प्रदर्शनम्। ज्ञायतामवधानेन स्वात्मनोऽनुग्रहात् त्वया॥

इदं सर्वं हृदि निधाय 'पुरुषे त्वेवाविस्तरामात्मा' इत्याद्युक्तमपि विमृश्यताम्॥

आरोह त्वमुपर्युपर्यन्तं स्वीयप्रयत्नतः। सहकुर्यात् कियद्वान्यः धीर! गच्छोपरि क्रमात्॥
किं न श्रुता गाथा **'नारिकेलमधिरोहतः कियद्दूरं पृष्ठावलंबनम्'** इति। अग्रे(श्लो.42) पुनः पश्य॥

देवास्तिष्ठन्ति साहाय्ये तवान्तर्गच्छतः पथि। देवास्सर्वेऽप्यस्य बलिमाहरन्तीति हि श्रुतिः॥

नन्वेवं तर्हि शरीरात्मवादखण्डनं सर्वेषां कथमिति चेत्, उक्तमुत्तरम्। भूतात्मा खलूपक्रमः। उपक्रम एव न विश्रान्तव्यम्, उपर्युपरि गन्तव्यमिति स्मारणार्थमेव। अत्रैव स्थित्वा खण्डनादिना न कोऽपि लाभः॥

**स्थूलारुन्धत्याख्यनयः** प्रसिद्धो न श्रुतस्त्वया। येनैवं पृच्छसि ब्रह्मन्! पृच्छ वृद्धान् बहुश्रतान्॥
किं वा मन्यन्त एते हि विद्वांसोऽध्यात्मपद्धतिम्। आत्मा किं वर्तते ग्रन्थे कुड्ये वान्विष्यतां वद॥

ननु 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे.6-19) 'केवलो निर्गुणश्च' (श्वे.6-11) 'असंगो ह्ययं' (बृ.6-3-15)इत्यादिभिःसर्वातीततयाऽसंगोदासीनस्वभावतया च प्रतिपन्नस्य प्रत्यगात्मनः परब्रह्मणः नित्यशुद्धबुद्धमुक्तस्वभावत्वात् कथं पञ्चधाऽवतरणम्, कथं वा संसारबन्धादिक्लेशो वा भवेत्? यदि च भवेत्, तर्हि तस्य परमपुरुषार्थरूपता कथं भवेत्? अवाप्तसमस्तकामस्य केन हेतुनैवं हेयजगदात्मना परिणामो भवेत्? इति चेत्, सत्यम्। अत्रैवावतरति **विवर्तवाद** इत्यादेः सर्वस्याप्युत्तरं समनन्तरसरे (श्लो.22) विस्तरेण भविष्यति। संक्षेपात्तु 'क्षीरे सर्पिरिवार्पितम्' (श्वे.1-16) इति श्रुतिरवधेया। क्षीरम्, दधि, मण्डम्, नवनीतम्, घृतमितीदं सर्वमेकत्रैव कथं वर्तत इति चिन्त्यताम्। पञ्चकोशतत्त्वस्यात्यन्तगाढचिन्तने उत्तरं लभ्येत। **सविशेषाद्वैतवादस्य** रहस्यं सर्वमत्रैव वर्तते॥

आत्मतत्त्वं तु गहनम् स्वत एव स्वरूपतः। विशिष्य तद्विचारस्तु ततोऽपि गहनो भवेत्॥

श्रुतिस्मृती हि 'आश्चर्यो वक्ता—आश्चर्यो ज्ञाता' (कठ-1-2-7) इति, 'आश्चर्यवत्पश्यति कश्चिदेनं आश्चर्यवद्वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्॥' (गी-2-29) इति च वदतः। तदधिकृत्य यद्यदुच्यते, तत्सर्वमल्पमेवेत्यवधारय॥

एतादृशं तु तत्त्वं यः इदमित्थमिति ब्रुवन्। श्रुतिमप्यतिशेते सः नमस्तस्मै महात्मने॥
नानाविधविचाराणां महामेधाविनामपि। अवकाशं ददात्येतत् जातु नान्तोऽस्य विद्यते॥
आत्मा चिन्तामणिः प्रोक्तः कल्पवृक्षश्च कामधुक्। यादृशीं भावनां कुर्यात् तादृशं लभते फलम्॥
अतो यद्रूपविज्ञानान्मुच्यते दुःखसन्ततेः। तादृग्रूपं तु तत्तत्त्वमुपादेशि महात्मभिः॥
सर्वाहंकारसंभेत्तृ दैवीसंपत्प्रदायि च। सर्वसौहार्दसौजन्यसौशील्यादिगुणप्रदम्॥
विजानतामविज्ञातं विज्ञातमविजानताम्। समस्यात्मकमप्येतत् समस्यानां विनाशकम्॥
जगत्सर्वमभिव्याप्य नानारूपैर्विराजते। परमात्मानमारभ्याऽऽभूतात्मानमिति श्रुतम्॥
सर्वदोषप्रत्यनीकरूपं सर्वगुणाकरम्। सर्वानन्दमयं तत्त्वं सर्वक्लेशविनाशकम्॥
सर्वात्मकं सदा सर्वसाक्षि सर्वस्य कारणम्। अप्रमेयमचिन्त्यं चेत्येतत्संग्रह उच्यते॥
लौकिके दीपविषये विवदन्ते मनीषीणः। ज्वालायाश्च प्रभायाश्च दीपशब्दो हि वाचकः॥
उभयानुगतो दीपशब्दः संकीर्त्यते बुधैः। बाह्येऽस्मिन् स्याद्विवादश्चेत् आत्मतत्त्वे किमुच्यते॥
अप्रमेयं हि चित्तत्त्वं प्रत्यगात्मादिशब्दितम्। भूतात्मादिस्वरूपेण पञ्चधाऽवतरेत्स्वयम्॥
प्रत्यक्त्वसंक्रमादेवं सर्वमप्यहमुच्यते। देहेऽहंबुद्धिरेवं स्यात् न स्याद्गतिरिहान्यथा॥
कालप्रभावात्तत्त्वज्ञा अप्याचार्याः कृपालवः। शिष्यकक्ष्यानुरोधेन ह्युपदेशादिकं ददुः॥
न बुद्धिभेदं जनयेदित्यादि भगवद्वचः। स्मरन्तस्तावदेवोचुः यावत्स्याज्जगतो हितम्॥
अतो यथाश्रुतवचो न पर्याप्तं भवेदिह। तपसा श्रद्धया भक्त्या विनयाद्यैश्च चिन्तयेत्॥
गुरोश्शापस्तु शिष्यःस्यात् भक्तो भगवतस्तथा। धर्मसंकटहेतुत्वात् प्रोच्यते मर्मवित्तमैः॥

**[आत्मनः ज्ञानस्वरूपत्वम्]**

**75. ज्ञानत्वं वक्ति पुंसः श्रुतिरिह न पुनर्बुद्धिमात्रस्य पुंस्त्वं**
**प्रत्यक्षादेः प्रकोपादनुगतकथने ज्ञानमर्थप्रकाशः।**

नोद्धर्तुं शक्नुयुर्मूढान् न वा त्यक्तुं दयालवः। रहस्यं केचिदेवेह जानीयुर्भाग्यवैभवात् ॥
नायं लभ्यः प्रवचनान्मेधामात्रेण वापि सः। शतशः शब्दजालैर्वा तदीयवरणाद्विना ॥
सर्वतर्कविदूरं यत् सर्वशब्दावशं च यत्। ज्ञात्वा तदात्मतत्त्वं तु लेशतोऽपि कृती भवेत् ॥
दुर्दर्शमतिगंभीरं वेदवेद्यं परात्परम्। बुद्ध्वा तदात्मतत्त्वं तु नमस्कुर्मो यथामति ॥ ४ ॥

ननु 'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' (प्रश्न.4-9) इति लोकसिद्धद्रष्टृत्वादिमतः जीवस्य 'विज्ञानात्मा' इति ज्ञानस्वरूपत्वम् उच्यते। अतस्तस्य ज्ञातृत्वं श्रुतिविरुद्धमिति शङ्कां निराकरोति—**ज्ञानत्वमित्यादिना**। **इह**=एतद्विषये **श्रुतिः**='एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इत्यादिश्रुतिः, **पुंसः**=आत्मनः **ज्ञानत्वम्**= ज्ञानस्वरूपत्वं वक्ति, **बुद्धिमात्रस्य**=ज्ञानमात्रस्य ज्ञानानाश्रयस्य **पुंस्त्वम्**=आत्मत्वम् **न पुनः**=न तु **वक्ति**। तत्र हेतुः—**प्रत्यक्षादेः**=प्रत्यक्षश्रुतिसूत्रादिसकलप्रमाणानाम् **प्रकोपात्**=विरोधप्रसङ्गात् ॥

**अयमर्थः**—लोके तावत् 'अहं जानामि' 'ज्ञानवानहम्' इत्याद्यबाधितानुभवस्य दर्शनात् ज्ञानाश्रयत्वम् आत्मनः अवर्जनीयम्। 'अहं जानामि' इत्यनुभवस्य 'नाहं जानामि' इति बाधः कदापि कस्यापि न हि दृश्यते। ननु 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृ.4-4-14) इति श्रुत्याऽऽत्मनो ज्ञेयत्वं निषिध्यते। 'अहं जानामि' इत्यनेन तु ज्ञेयत्वमात्मनो लोके प्रत्यक्षसिद्धम्। शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रस्यैव बलीयस्त्वात्, ज्ञानाश्रयत्वं मिथ्येति चेत्, न हि तत्रात्मनो ज्ञेयत्वं निषिध्यते, किन्तु ज्ञानान्तराधीनसिद्धिकत्वमेव निषिध्यते। तेन यथा घटादीनां ज्ञानेनैव सिद्धिः, जडत्वात्, न तथात्मनः सिद्धिः, तस्य स्वतस्सिद्धत्वादिति स्वप्रकाशत्वमुच्यते, अन्यथा तद्वाक्यमर्थशून्यं स्यात्। स्वप्रकाशत्वे ज्ञानान्तरविषयत्वं कथं स्यादिति चेत्, स्वयंप्रकाशत्ववेद्यत्वयोः विरोधाभावस्त्वग्रे (नायक.3) विस्तरेण साध्यते। अन्ततः आत्मनो ज्ञेयत्वाभावे प्रमेयत्वमपि न स्यात्। प्रमेयत्वाभावे च मिथ्यात्वमेव स्यात्। किञ्च प्रमेयत्वं हि केवलान्वयि। तत्कथमात्मनो व्यावर्तेत? या च श्रुतिरुक्ता आत्मनः ज्ञानरूपत्वे, सा आत्मनः ज्ञानाश्रयत्वं न प्रतिषेधति। 'एष हि द्रष्टा' इति हि श्रुतिः लोकप्रसिद्धमाकारमनूद्य, तस्य ज्ञानस्वरूपत्वं वक्ति, न हि लोकप्रसिद्धिं निरुणद्धि। तत्र तात्पर्यं नास्ति हीति चेत्, सत्यम्, सिद्धस्य पुनः साधनं न ह्यपेक्ष्यते। तावता सिद्धमपगच्छतीति नार्थः। अतः आत्मा ज्ञानस्वरूपः ज्ञानाश्रयश्चेति लोकानुभवश्रुत्योः समन्वय एव ॥

ननु ज्ञानस्वरूपस्य सतः ज्ञानाश्रयत्वं कथं युज्यते? समानस्वरूपयोः पदार्थयोराश्रयाश्रयिभावः न हि दृश्यते। न हि रूपे रूपं वर्तेत, किन्तु द्रव्ये इति शङ्कायामाह—**अनुगतेत्यादि**। **अनुगतकथने**= आश्रयाश्रयिणोरुभयोरपि स्वप्रकाशत्वेनोभयानुगतं रूपं यदि वक्तव्यम्, तदा **ज्ञानम् अर्थप्रकाशः**=ज्ञानं नाम

**स्वस्यैवाऽऽत्मा तु सिद्धिं मतिरनुभवति स्वान्ययोस्सिद्धिभावं**
**ज्ञातुर्जाड्यप्रसङ्गव्युदसनविषया ज्ञानमात्रोक्तयोऽपि ।। ५ ।।**

कस्यचिदर्थस्य प्रकाशरूपता । अयं चानुगताकारः उभयोः समान इत्युपपादयति– **स्वस्यैवेत्यादिना** । **आत्मा तु स्वस्यैव सिद्धिं स्वयमनुभवति,** न तु स्वभिन्नवस्तुविषयकं भवति । **स्वान्ययोः**=स्वस्य स्वान्यबाह्यविषयाणां च **सिद्धिभावम्**=सिद्धिरूपताम्=प्रकाशरूपतां **मतिः**=धर्मभूतं ज्ञानम् **अनुभवति**। अत उभयोः ज्ञानपदवाच्यत्वम् ।।

समानस्वरूपयोः आश्रयाश्रयिभावः न भवतीत्यपि, आत्मनः तद्धर्मस्य ज्ञानस्य च सर्वांशे साम्याभावादेव समाहितम् । आत्मा तु प्रत्यक्, ज्ञानं तु पराक् । उभयोरपि प्रकाशरूपता समाना । केनचिद्रूपेण साम्यमपि आश्रयाश्रयिभावविरोधीति तु न; प्रमेयत्वेन सर्वेषामपि समानत्वेन द्रव्यगुणयोरप्याश्रयाश्रयिभावाभावप्रसङ्गात् । किञ्चिद्वैषम्यं तु प्रकृतेऽप्युक्तमेव । वस्तुतः आत्मा तु न धात्वर्थः, सिद्धरूपत्वात् । क्रियावाचिनो हि धातवः । क्रिया च सर्वमतेऽपि साध्यरूपा । अत एव ज्ञाधातुप्रकृतिकज्ञानपदं धर्मभूतज्ञानवाचि, न त्वात्मवाचि । आत्मनस्तु वाचकं पदम् 'अहम्' इत्येव । अत एवात्मनोऽहमर्थत्वमुच्यते । अयमर्थ उपनिषद्येव स्पष्टः । तथाहि– 'आत्मैवेदमग्र आसीत्पुरुषविधः । सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्' (बृ.3-4-1) इति 'तस्योपनिषदहमिति'(बृ.7-5-4) इति च अहंपदमात्मवाचि प्रथमं पदमिति कण्ठत एवोक्तम् । नन्वत्र 'पुरुषविधः' इत्यभिधानात् प्रजापतिवाच्यस्य विराडूपस्य हिरण्यगर्भस्यैवोद्गारः, न त्वात्मन इति चेत्, सत्यम् । हिरण्यगर्भः खलु समष्टिजीवः । परन्तु तस्यैव 'आत्मैवेदमग्र आसीत्' इत्युपक्रमात् आत्मन एव पुरुषादिपदवाच्यत्वं तत्तद्विकासावस्थाभेदेन । ब्रह्मैकमेव नानाऽभवदिति 'तदात्मानं स्वयमकुरुत' इति स्पष्टमुपनिषत्स्वभिधानात् । सगुणनिर्गुणभेदकल्पनादिकं कल्पनामात्रमित्यनन्तरसरे विशदीक्रियते । 'अहम्' इति पदमेव, तद्वाच्यस्य प्रत्यक्त्वम्, अत एव स्वप्रकाशत्वं च स्पष्टं प्रदर्शयति । अतश्च ज्ञाधातुप्रकृतिकज्ञानपदस्यापि स्वप्रकाशवस्तुवाचकत्वात् 'आत्मा ज्ञानस्वरूपः' इति कथ्यते । न तावता ज्ञानपदं धर्मधर्मिसाधारणमिति भ्रमितव्यम् । अत एव समानस्वरूपयोराश्रयाश्रयिभावानुपपत्तेर्नावकाशः । स्वप्रकाशस्य धर्मज्ञानस्य पराक्त्वं कथमित्यपि न शंक्यम्; परस्मै परतो भासमानत्वस्यैव जडत्वात् । परस्मै स्वतो भासमानत्वस्यैव प्रकृतपराक्पदार्थत्वात् । एतत्तत्त्वं तु पूर्वमेव (जड.5) विवृतम् । पुनः अग्रे (श्लो.6) भविष्यति । द्रव्ययोरप्युभयोः धर्मधर्मिभावादिः न्यायनयेऽवयवावयविनोरिवोपपद्यते । अतः आत्मापि स्वप्रकाशः, तद्धर्मभूतं ज्ञानमपि स्वप्रकाशरूपमेव । न च द्रष्टृत्वादिकमपि तत्रोच्यते किलेति भ्रमितव्यम्; 'एष हि' इति प्रसिद्धसूचक'हि'पदेन द्रष्टृत्वादीनां लोकसिद्धानामनुवादेन तस्य विज्ञानस्वरूपत्वप्रतिपादनपरत्वादस्य वाक्यस्य । द्रष्टृत्वादिकं हीन्द्रियादिप्रयुक्तम् । न च **'अप्राप्ते शास्त्रमर्थवत्'** इति न्यायेन, लोकप्राप्तेऽर्थे श्रुतेस्तात्पर्यासंभवात्, द्रष्टृत्वादीनां निषेधसिद्धिरिति वाच्यम्; अनुवादो न हि निषेधरूपः । द्रष्टृत्वादौ श्रुतिः न प्रमाणम्, किन्तु लोकानुभव एवेति

कथनमात्रेण तेषां निषेधासिद्धेः । 'अनुच्छित्तिधर्मा' इत्यनेन धर्मभूतज्ञानासिद्धिरनुपदमेवोक्ता । न च 'एष हि' इति तावन्मात्रमेवानुवादः, इतरत्सर्वं विधेयमेवेति वाच्यम्; द्रष्टृत्वादीनामपि विधाने, अस्मदिष्टस्यैव सिद्धेः । किञ्च द्रष्टृत्वादीनामपि लोकावगतत्वेन विधेरसंभवात् । लोकसिद्धद्रष्टृत्वादिविलक्षणमिदं द्रष्टृत्वादिकमिति पक्षे, 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेन बहूनां विधानेऽपि न वाक्यभेदप्रसङ्गः । अतः लेकप्रसिद्धं ज्ञातारमनूद्य, तस्य स्वप्रकाशस्वरूपत्वमत्रोच्यत इति जीवः स्वप्रकाशस्वरूपः, ज्ञानाश्रयश्च । एतादृशाश्रयाश्रयिभावस्य लोके कुत्राप्यदर्शनादेव श्रुत्या तद्विधानावश्यकता ॥

ननु 'विज्ञानघन एव' (बृ.4-4-12) इति एवकारेण विज्ञानातिरिक्ताकारनिषेधात्, विज्ञातृत्वमप्यात्मनो निषिध्यते किलेत्यत्राह—**ज्ञातुरित्यादि** । **ज्ञानमात्रोक्तयोऽपि**=ज्ञानमात्रस्वरूपः आत्मा इत्येतदर्थकानि वाक्यान्यपि **ज्ञातुः**=ज्ञानाश्रयस्यैव सत आत्मनः **जाड्यप्रसङ्गव्युदसनविषयाः**=कस्मिंश्चिदप्यंशेऽपि=नित्यत्वैकत्वप्रत्यक्त्वाद्यंशेऽपि अप्रकाशजडरूपता नास्तीति प्रतिपादनपराः ज्ञेयाः ॥

एवं हि श्रुतिः 'स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत, न हास्योद्ग्रहणायैव स्यात्, यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति'(बृ.4-4-12) इति 'स यथा सैन्धवघनः अनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ.6-5-13) इति च । सैन्धवघनः लवणखण्डः । प्रकरणान्तरे सैन्धवखिल्यः इति । खिल्यः=खिलः=एकदेशः । एतत्प्रतिकोटिशब्दः अखिलः इति । लवणखण्डनिर्मित्तः प्रतिमा खिल्य इति केचित् । लवणस्य रसमयत्वप्रदर्शनार्थमेव 'उदके प्रास्त' इत्यादिकमुक्तम् । एवञ्च लवणखण्डे, 'अस्मिन् भागे लवणरसो वर्तते, अस्मिंस्तु भागे नास्ति' इति यथा न कदापि भवति, कृत्स्नोऽपि लवणखण्डः लवणरसमय एव, एवमेवास्मिन्नात्मस्वरूपेऽपि, एकदेशेऽपि अविज्ञानरूपता=जडरूपता नास्तीत्यभिप्रायेण 'प्रज्ञानघनः' 'विज्ञानघनः' इति सैन्धवघनवत् अभिधीयते । मूर्तौ घनः (पा.सू.3-3-66) इति सूत्रम् । मूर्तिः आकारः द्रव्याणामेवाकारः सहजः । रसस्तु गुणः । तस्याकारकल्पने मूर्तिमान् रसः=रसघनः । एवं ज्ञानस्याप्याकारो नास्ति स्वतः । विषयैरेव तस्याकारो भवति । आत्मस्वरूपं तु निर्विषयम् । अतः ज्ञानस्य स्वत आकारो नास्ति तत्कल्पनया विज्ञानघन इति । न तेन विज्ञानाश्रयत्वव्यवच्छेदः सिद्ध्यति । विशेषणैः स्वविरुद्धाकार एव सर्वत्र व्यवच्छिद्येत । न हि सैन्धवे लवणे रूपादिरेवकारेण व्यवच्छिद्यते । 'अनन्तरोऽबाह्यः' इत्यादिशब्दैरप्ययमर्थः सिद्ध्यति ॥

'अनन्तरः' 'अबाह्यः' इति व्यतिरेकनिर्देशः । वस्तुनः आन्तरं रूपम्=स्वरूपम्, बाह्यं रूपम्=धर्मः । स्वरूपतः, धर्मतश्चेत्यर्थः । एतेन अजडस्यात्मनो धर्मा अपि अजडा एवेति प्रत्यक्त्वादिधर्माणामात्मगतानां स्वयंप्रकाशत्वमपि सिद्धम् । अजडे आत्मनि जडधर्माणां सत्त्वे, अहमर्थो जडाजडरूपः स्यात् । न हि धर्मशून्यं धर्म्येवाहमर्थ इति वक्तुं शक्यम्, यतो निर्धर्मकवस्तुमात्रप्रतीतिः 'इदमित्थमिति हि सर्वा प्रतीतिरुपजायते' इत्यादिना भगवद्भाष्यकारैर्निराकृता । 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्यादिना अहंप्रतीतौ

जडाजडविषयकत्वस्य परैः प्रतिपादितस्य 'अहंप्रत्ययसिद्धो ह्यस्मदर्थः । युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्राहं जानामि इति सिद्धो ज्ञाता युष्मदर्थ इति वचनम् 'जननी मे वन्ध्या' इतिवद्व्याहतार्थकम्' इत्यादिना श्रीभाष्यकारैः स्पष्टं निराकरणाच्च आत्मधर्मा अपि स्वप्रकाशा एव ॥

ननु यद्यात्मधर्मा अपि स्वप्रकाशाः, तर्हि मुक्ताविवाद्यापि सर्वधर्मविशिष्टस्य धर्मिणो भानापत्त्या मुक्तिसंसारयोरविशेषप्रसङ्गः । न चायमाक्षेपः धर्मिभास्यत्वपक्षेऽपि समानः, धर्मिणः स्वयंप्रकाशत्वेन, निर्धर्मकवस्तुभानासंभवेनात्मधर्माणां धर्मिणैव भानादिति शङ्क्यम्; सामग्रीसद्भावमात्रेण भाननिर्बन्धासंभवात् । भानस्य वस्तुस्वरूपाधीनत्वात् । अन्यथा गुरुत्वादीनामपि प्रत्यक्षे भानप्रसङ्गः इति चेत्; एतत्समाधानं प्रकृतेऽपि समानम् । कर्मबद्धस्य सर्वधर्मविशिष्टस्यैव धर्मिणो कार्त्स्न्येन भानस्यासंभवात् । यद्भासते, तत्कथं भासत इत्येव विचारात् । आत्मगतानुकूल्यप्रातिकूल्यादेः पित्तोपहतस्य पयोमाधुर्यभानवत्, कर्मणा कार्त्स्न्येना-भानस्य, लेशतो भानस्य च फलबलेन कल्पनीयत्वात् । एवमात्मस्वरूपभान एव संसारमुक्त्यवस्थयो-र्वैषम्यस्यावश्यकत्वे, धर्माणां स्वप्रकाशत्वे संसारमोक्षावस्थयोरविशेषापादनं कैमुतिकन्यायेनैव समाहितम् । 'अनन्तरोऽबाह्यः' इति सर्वांशस्यापि ज्ञानरूपतायाः श्रुत्या कण्ठत एवाभिहितत्वाच्च । एवं प्रमाणानुरोधेन विषयनिर्णये वैज्ञानिके सति, वचनविरोधादिकं लेखकप्रमादात्, वैभवतः, औदासीन्यात्, शिष्यबुद्धि परीक्षार्थ-त्वादिभिर्वा समाधेयम् । प्रमाणाधीना अथवा विज्ञानाधीना हि प्रमेयसिद्धिः, न तु ग्रन्थपङ्क्त्यधीनेति मन्तव्यम् । ज्ञानरूपस्य सतः ज्ञानाश्रयत्वं च दीपदृष्टान्तेन साध्यते । दीपशब्दार्थश्च पूर्वस्मिन्नेव सरे (श्लो.56) विस्तरेण निरूपितः । अतः आत्मा न ज्ञानमात्रस्वरूपः, अपि तु ज्ञानाश्रयोऽपि ॥

ननु सिद्धान्ते आत्मनः अणुपरिमाणस्य सहजत्वाङ्गीकारात्, परिमाणकल्पनाभावात् कथमुच्यते 'विज्ञानघनः' इति कल्पिताकारनिर्देश इतीति चेत्; आत्मनो ह्यणुत्वं न पृथिवीपरमाणुगतपरिमाणतुल्यम्, पृथिव्याः घनीभूतपदार्थत्वेन मूर्तरूपत्वात्, आत्मनोऽतादृशत्वात् । पृथिवीपरमाण्वपेक्षया जलपरमाणुः मृदुलः । तेजःपरमाणुस्तु ततोऽपि विलक्षणः। वायुपरमाणुस्तु ततोऽपि विलक्षणः । आकाशपरमाणुस्तु स्पर्शस्याप्यभावात् अत्यन्तविलक्षणः, अस्मद्बुद्ध्या दुर्ज्ञानश्च । अत्रैवैतादृशत्वे, तन्मात्रादीनां परिमाणः कियान् दुर्ज्ञानो भवेत्? एवंस्थिते पञ्चविंशस्याप्राकृतस्य जीवस्य परिमाणः पृथिवीपरमाणुपरिमाणवत्कथं भवेत्? अतोऽस्मद्बुद्धिशब्दाद्यगोचर एवेति दुर्ज्ञानः तत्परिमाणोऽवगन्तव्यः । एतद्दृष्ट्या जीवपरिमाणस्या-स्मत्स्थूलबुद्धिकल्पितत्वात् 'विज्ञानघनः' इति निर्देशो युज्यत एव ॥

**वस्तुतस्तु**—परमाणु-परममहत्परिमाणविषयोऽतिगहनः । लोके परिमाणव्यवहारस्सर्वोऽपि मध्यमपरिमाणविषयक एवेत्यवधेयम् । अधिकमद्रव्यसरे (श्लो.45-50) ॥

किञ्च पञ्चभूतेषु पृथिव्येकैव स्वतो मूर्तिमती । जलतेजसोश्चाक्षुषत्वेऽपि न हि निर्दिष्टः कश्चनाकार-स्तयोः । नदीकासारसमुद्रादीनामाकारः पृथिव्युपाधिमूलक एव । कुंभजलम् , शरावजलम् इत्यादाविदं स्पष्टम् । भौतिकस्य तेजसस्तु दार्वाद्युपाधिरहितस्य चाक्षुषत्वमेव हि दुर्वचम् । 'अग्नेरूर्ध्वज्वलनम्'

**[आत्मनः स्वप्रकाशत्वम्]**

**76. आत्मा स्वेनैव सिद्ध्यत्यहमिति निगमैर्यत् स्वयंज्योतिरुक्तः
स्वापेऽप्यस्य स्वसिद्धावशयिषि सुखमित्यक्षता प्रत्यभिज्ञा ।**

इत्यादिकमपि दार्वाद्युपाधिभिर्दृश्यत्वप्राप्त्यनन्तरमेव । अतस्सर्वेषां मूर्तिदात्री भूतधात्र्येव । एवं सति जीवस्य पृथिवीपरमाण्वादिनिदर्शनेन मूर्तिकल्पनं कथं युज्येत? ननु 'अङ्गुष्ठमात्रो रवितुल्यरूपः' (श्वे.5-8) 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्'(भ.भा.) इत्यादौ जीवस्याङ्गुष्ठप्रमितत्वमुच्यते किल । एतत्कथमिति चेत् ? सम्यक् पृष्टमायुष्मता । तर्ह्यणुपरिमाणत्वं कथमनेन सिद्ध्यतीति त्वयैव वक्तव्यम् । अधिकं त्वध्यात्मम् ॥

जिज्ञासयैव पृच्छाम इति चेत्, शृणु सादरम् । एतादृशविचारस्तु रहस्येव न संशयः ॥
अध्यात्मशास्त्रं गहनमत्यन्तमवधारय । त्यज्यतां वाग्विलसितं, दयां वर्षतु माधवः ॥
तावत्तु सह्यतां सर्वं सर्वं सम्यग्भवेत् ध्रुवम् । **विनीतानां** किलाध्यात्मशास्त्रं वश्यं भवेत् क्रमात् ॥

किञ्च पूर्वं (श्लो.4) धर्मभूतज्ञानविशिष्टजीवस्वरूपविषये अत्यन्तगहनताया अभिधानात्, धर्मभूतज्ञानस्य च मुक्तौ विभुत्वेऽपि संसारावस्थायां तस्य संकोचविकासशालिनः व्यवस्थितपरिमाणस्य दुर्ज्ञेयत्वादपि, तद्विशिष्टस्य जीवस्य मूर्तिकल्पनमावश्यकम् । अत एवात्रापि 'एतेभ्यो भूतेभ्यस्समुत्थाय' इति श्रुतम् । 'संसार्यात्मनः सर्वभूतमयत्वश्रुतेः'(4-2-5) इति श्रीभाष्यमप्यवधेयम् ॥

इतोऽप्यत्यन्तसूक्ष्मेऽर्थे जिज्ञासा यदि ते भवेत् । अन्वेषय महात्मानं ज्ञानविज्ञानशेवधिम् ॥
बुद्ध्यतीतेषु तत्त्वेषु वृथा शब्दविवर्धनम् । त्यक्त्वा तु स्मर्यतां कृष्णः ज्ञानविज्ञानदस्सदा ॥ ५ ॥

'स्वस्यैवात्मा तु सिद्धिमनुभवति' इति कथम्? 'सुखदुःखज्ञानान्यात्मनो लिङ्गम्' (गौ.सू.1-1-12) इति किल सुखदुःखज्ञानाद्याश्रयतयात्मानुमानं वक्ति न्यायसूत्रम्? स्वतस्सिद्धत्वे तस्य 'निगममितः' इति वा अनुपदं कथमुक्तिः? इत्यादिशङ्कां वारयति—**आत्मेत्यादिना । यत्**=यस्मात् **निगमैः**='अत्रायं पुरुषः स्वयंज्योतिर्भवति' (बृ.6-3-9), 'हृद्यन्तर्ज्योतिः पुरुषः' (बृ.6-3-7), 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृ.4-4-14) इत्यादिश्रुतिभिः **आत्मा स्वयंज्योतिः**=स्वप्रकाशः उक्तः, अतः **आत्मा 'अहम्' इति स्वेनैव सिद्ध्यति**=अहमित्यनुभवविषयतया आत्मा सर्वेषां स्वतः सिद्धो भवति । सर्वेषां स्वस्वात्मनः स्वतस्सिद्धत्वेऽपि परात्मनः तथात्वाभावात्, प्रमाणान्तरापेक्षाप्यस्तीति श्रुतिवेद्यत्वमप्युच्यते । सिद्धान्ते स्वप्रकाशस्यापि प्रमाणान्तरविषयत्वे विरोधो नास्ति । 'केन प्रमाणेन वस्तुनः सिद्धिः' इति वस्तुसाधकप्रमाणप्रश्नः अन्यः, प्रमाणाविषयत्वविचारः अन्यः । आत्मा यद्यपि स्वत एव सिद्ध्यति, अथापि परात्मनः । स्वदृष्ट्या स्वतस्सिद्धत्वाभावात् शास्त्रवेद्योऽपि भवतीत्याशयः ॥

अथवा 'अहम्' इत्यनुभवस्य सर्वैरङ्गीकारेऽपि, वैशेषिकादिभिः आत्मनः स्वप्रकाशत्वानङ्गीकारात्, माध्यमिकैः 'न ह्यङ्गुल्यग्रमात्मानं स्पृशति' इति न्यायेन स्वस्मिन् स्वस्य विषयत्वस्य विरुद्धतया स्वप्रकाश-

त्वासंभवस्य प्रतिपादनाच्च आत्मनः स्वप्रकाशत्वे श्रुतिरेव प्रमाणमित्याशयः । ननु आत्मनः स्वप्रकाशत्वे कथं विवादो भवेत् । न हि प्रकाशमानं दीपं पश्यन् कश्चित् विवदतीति चेत्; सत्यम्; आत्मनोऽत्यन्तगहनत्वादेव विचारस्यावसरः । किञ्च जाग्रद्दशायां हि शरीरादिविशिष्टस्यैव भानात् शरीरादीनामस्वप्रकाशत्वात्, विवादः स्यादेव । किञ्च 'अहम्' इति प्रतीतेः इन्द्रियादिष्वपि समानत्वात् कथं निर्णयः? अत एव श्रुतिरपि 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति' (बृ.6-3-9) इति विप्रतिपत्त्यप्रसङ्गात् सुषुप्तिसमय एवात्मनः स्वयंप्रकाशत्वं वदति । अत एव च जाग्रद्दशायामज्ञानिनामहंबुद्धिः भूतात्मादिविषयिण्येवेत्येव परमं रहस्यम् । 'न ह्यङ्गुल्यग्रम्' इति तु अङ्गुल्यग्रस्य जडत्वादात्मनस्त्वजडत्वाच्च समाहितम् ॥

न च सिद्धान्ते सूक्ष्मशरीरस्यामोक्षमनुवर्तनाङ्गीकारात् सुषुप्तावप्यहमिति प्रतीतिर्विशिष्टविषयिण्येवेति कथं तदा केवलस्यात्मनः स्वप्रकाशत्वमिति वाच्यम् ; अचित्संबन्धस्य सत्तयैव व्यवहारकारणत्वेनाहंप्रतीतौ विषयत्वाभावादचिदंशस्य । तर्हि जाग्रदवस्थायामपि, तथैव कुतो न स्यादिति चेत्, जाग्रत्काले स्थूलशरीरभानस्यानुभवसिद्धत्वात् सुषुप्तावात्मनस्स्वप्रकाशत्वकथनम् । वैशेषिकदर्शनस्याध्यात्मशास्त्रत्वाभावात्, अभ्युपगमवादेन जाग्रत्कालिकानुभवमात्राङ्गीकारेण वाऽस्वप्रकाशत्वमुक्तम् । ज्ञानिनां तु जाग्रद्दशायां देहातिरिक्तात्मप्रकाशस्तु वर्ततैव । तेषां त्रिविधव्यवहारः पूर्वमेव (श्लो.1) समर्थितः ॥

ननु आत्मनः सुषुप्तावपि स्वयंप्रकाशत्वे सुप्तोत्थितेन 'मामप्यहं एतावन्तं कालं न ज्ञातवान्' इत्येवानुसन्धानं कथम्? अत आत्मा न स्वयंप्रकाशः इति शङ्कां निराकरोति—**स्वापेऽपीत्यादिना** । **स्वापेऽपि**=सुषुप्तावपि **अस्य**=आत्मनः **स्वसिद्धौ**=स्वप्रकाशत्वे **सुखं अशयिषि**= 'सुखमहमस्वाप्सम्' इति प्रत्यभिज्ञा **अक्षता**=बाधकरहिता प्रमाणं भवत्येव ॥

अस्ति किल सर्वेषां सुप्तोत्थितानाम् 'अहं सुखम् अस्वाप्सम्', 'महानानन्दोऽभूत्तदा मम' इत्यादिः सुषुप्तिविषयको व्यवहारः । 'मन्दमगच्छम्' इत्यादाविव 'सुखम्' इति क्रियाविशेषणम् । तेन सुषुप्तिकालिकः आनन्दः, सुखं वा प्रत्यभिज्ञायते । तच्च सुखं जाग्रद्दशादौ यथा विषयसंबन्धाधीनम्, न तादृशं भवितुमर्हति सुषुप्तौ, तदा बाह्यविषयसंबन्धस्यासंभवात् । अतस्तत्सुखमात्मस्वरूपसंबन्ध्येव । सुखं नामानुकूलत्वप्रकारज्ञानजन्यः धर्मभूतज्ञानस्यावस्थाविशेषः जाग्रद्दशायामनुभवसिद्धः । सर्वेषामपि स्वात्मा खलु स्वस्य अनुकूलतमः, 'आत्मनस्तु कामाय सर्वं प्रियं भवति' (बृ.4-4-5) इति हि प्रसिद्धम् । यद्यपि श्रीभाष्यकारैः अत्रात्मशब्दः परमात्मपरो वर्णितः, उत्तरत्र तस्यैवोपास्यत्वाभिधानात्; प्रीतिद्वेषयोः जीवाधीनत्वा-भावाच्च । अथापि, संसारिणां स्वात्मैव परमानुकूलः । अतः स्वानुकूलेषु प्रीतिः, स्वप्रतिकूलेषु द्वेषश्च औत्सर्गिकः । एतद्दृष्ट्या 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यत्र यथाश्रुतार्थोऽपि स्वरसः । अतः तन्न त्यज्यते । तथैवोक्तोऽप्यर्थः वैज्ञानिकत्वान्न निवार्यते । श्रीभाष्यकारैरपि अग्रे 'आत्मपदस्य जीवपरत्वेऽपि' इति व्याख्यान्तरमप्यनुगृहीतम् । ततश्च सुषुप्तौ शुद्धस्यात्मनः भानात् तद्गतमनुकूलतमत्वमपि स्वयमेव भासते । तदेव च प्रतिसन्धीयतेऽनन्तरम् 'सुखमहमस्वाप्सम्' इति । ततश्च सुषुप्तावप्यात्मनः भानात् स्वप्रकाशत्वमात्मनस्सिद्धम् । तर्हि 'मामप्यहं न ज्ञानवान्' इति कथं व्यवहार इति चेत्, अस्य व्यवहारस्य

**चेतश्चान्यानपेक्षं मतिषु न हि भवेत् किञ्च वेदान्तदृष्ट्या**
**ज्ञानत्वादेष धीवत् स्वविषयधिषणानिर्व्यपेक्षस्वसिद्धिः ॥ ६ ॥**

जाग्रद्दशाकालिकत्वात्, जाग्रद्दशायां यादृशोऽयमहमर्थो भासते शरीरादिविशिष्टः, तादृशस्य सुषुप्तावभानात् तथा व्यपदेशः सुतरां संगच्छते ॥

ननु तर्हि सुषुप्तिरेव मुक्तिःस्यात्, शुद्धस्यात्मनो भानादिति चेत्, जाग्रत्कालिकदुःखाद्यभावमात्राभिप्रायेण 'शुद्धस्य' इत्यभिधानात्। आत्मस्वरूपसंबन्ध्यानुकूल्यस्यापि लेशत एव भानं सुषुप्तौ, बन्धस्यानिवृत्तेः। मुक्तावेव पूर्णसुखस्वरूपभानमिति मुक्तिसुषुप्त्योरजगजान्तरायितत्वात्। जीवात्मनः परमात्मनि लयो हि बहुविधः। सुषुप्तौ, मूर्छायाम्, मरणे, मुक्तौ चेति बहुविधास्ववस्थासु जीवात्मनः परमात्मनि लयप्रतिपादनात् लये तारतम्यं वर्तत एव। आस्वप्यवस्थासु अवान्तरतारतम्यमपि वर्तत एव। निद्रा, गाढनिद्रा, अत्यन्तगाढनिद्रा इत्यादितारतम्यस्यानुभवसिद्धत्वात्। निद्रायां गाढत्वं पुरुषभेदेनापि दृश्यते। तमोगुणतारतम्यमनिवार्यमेव। अतः परमात्मनि लयमात्रान्न पूर्णमुक्तिः। सुषुप्त्यादिकमधिकृत्य विस्तरेण विचारोऽग्रे (श्लो.26) द्रष्टव्यः ॥

ननु आत्मनोऽत्यन्तमान्तरत्वेन बाह्येन्द्रियैः ग्रहणासंभवेऽपि, मनसैव तद्ग्रहणं भवतु! किं स्वप्रकाशत्वकल्पनेनेत्यत्राह—**चेत इत्यादि**। **चेतश्च**=मनोऽपि **मतिषु**=स्वसाध्येषु ज्ञानेषु **अन्यानपेक्षम्**= सामग्र्यन्तरनिरपेक्षं **न हि भवेत्**=न हि समर्थं भवितुमर्हति। मनो हि बाह्यविषयेषु यथा न स्वतन्त्रं प्रवर्तते, किन्तु बाह्येन्द्रियद्वारैव, एवमान्तरविषयेऽपि सुखादिविशिष्टमात्मानमेव गृह्णीयान्मनः। केवलेन मनसा शुद्धस्याहमर्थस्य ग्रहणे सर्वेऽप्यात्मज्ञानिनो भवेयुः। सुषुप्तौ तु आत्मस्वरूपातिरिक्तस्य सुखस्याभावात् 'सुखमहमस्वाप्सम्' इति प्रतीत्या सुषुप्तौ मानसप्रत्यक्षसाधनमपि न संभवति। वस्तुतो मनसोऽपि सुषुप्तौ लयात्, अन्यथा निद्राया एवासंभवात्, सा प्रतीतिः आत्मनः स्फुरणकृतैव, न तु मानसी। किञ्च सर्वव्यवहाराणामहमर्थमूलकत्वेन, तस्य प्रकाशो यद्यन्याधीनः स्यात्, तर्ह्यनवस्था दुर्वारा। सुखदुःखादिभिरात्मानुमानकथनमपि परात्मदृष्ट्या, विशुद्धात्मदृष्ट्या वा। अतश्चात्मा स्वप्रकाश एव ॥

ननु 'सुखमहमस्वाप्सम्' इति प्रतीतौ दुःखाभाव एव विषयः, भारापगमे 'सुखी संवृत्तोऽहम्' इतिवत्। आत्मस्वरूपस्यैव सुखरूपत्वे, तस्य स्वप्रकाशत्वे च, आत्मनः सदा भासमानत्वेन सदा सुखानुभव एव स्यात्, सांसारिकदुःखानुभव एव कस्यापि न स्यात्। अत आत्मा न सुखस्वरूपः, न वा स्वप्रकाश इति शङ्कायाम्, अन्ततो वेदप्रामाण्यमूलकमेवात्मनः स्वयंप्रकाशत्वमित्याह—**किञ्चेत्यादि**। अपि **च वेदान्तदृष्ट्या**=वेदान्तस्य स्वतः प्रमाणभूतस्य दृष्ट्या **एषः**=आत्मा **धीवत्**=धर्मभूतज्ञानवदेव **स्वविषयधिषणानिर्व्यपेक्षस्वसिद्धिः**=**स्वः**=आत्मा, **तद्विषयिणी** या **धिषणा**=बुद्धिः **तन्निर्व्यपक्षा**= तत्सहकारानपेक्षिणी **स्वस्य सिद्धिः** यस्य सः, इति पुल्लिङ्गः शब्दः, **एष** इत्युक्तात्मविशेषणत्वात्। एवञ्चात्रैवमनुमानं विवक्षितम् 'आत्मा स्वविषयकज्ञानान्तराधीनसिद्धिको न, ज्ञानत्वात्, धर्मभूतज्ञानवत्' इति

[आत्मनः प्रत्यक्त्वम्]

77. प्रत्यक्त्वं पुंसि केचित् स्वविषयधिषणाधारतामात्रमाहुः
स्वस्मै स्वेनैव भानं तदिति समुचिते तत्स्वतस्सिद्धिसिद्धेः ।

धर्मभूतज्ञानं दृष्टान्तः, तस्य ज्ञानान्तराधीनसिद्धिकत्वेऽनवस्थाप्रसङ्गः इत्यादि बुद्धिसरे भविष्यति । उक्तानुमाने हेतोः स्वरूपासिद्धावापादितायाम्, तत्परिहाराय 'वेदान्तदृष्ट्या' इत्युक्तम् । 'अत्रायं पुरुषः स्वयं ज्योतिः' 'हृद्यन्तर्ज्योतिः पुरुषः' इत्यादिश्रुतिर्विवक्षिता ॥

ननु किमिदं विचित्रं वन्ध्यासुतसंभाषणप्रतिज्ञावदुच्यते? 'स्वविषयकज्ञानान्तराधीनसिद्धिकत्वाभावः आत्मनोऽनुमानेन साध्यते? अनुमानेनाविषयीकरणे कथमनुमानप्रवृत्तिः? इति चेत्, सत्यम्, विप्रतिपद्यमानं प्रत्येवानुमानाभिधानात् । महामेधावी कुमारिलोऽपि हि जडात्मवादी । अतस्तादृशान् प्रत्यनुमानप्रदर्शनम् । न हि सिद्धान्तेऽपि आत्मनो ज्ञानान्तरविषयत्वं निराक्रियते, किन्तु ज्ञानान्तराधीनसिद्धिकत्वमेव । सिद्धिर्नाम सत्तानिश्चयः, स चान्यत्र ज्ञानान्तराधीनः । आत्मनः स्वयंसिद्धत्वेऽपि न वेद्यत्वनिषेधः । अन्ततः आत्मपदजन्यबोधविषयत्वमात्मन आवश्यकमेव । अन्यथा तत्पदमर्थशून्यमेव स्यादिति न कश्चन विरोधः ॥

यदपि चोक्तम्—आत्मनस्सुखरूपत्वे स्वप्रकाशत्वे च लोके दुःखानुभव एव कस्यापि न स्यादिति, तन्न । आत्मस्वरूपानुकूल्यस्य संसारदशायां कर्मणावरणात्, आत्मस्वरूपगतमानुकूल्यं न संपूर्णतो भासते । अत एव बाह्यविषयानन्दसंपादनार्थं संसारिजीवानां प्रवृत्तिः । संसारदशायां विषयानन्दस्यैव सुखत्वभ्रान्त्या च जाग्रद्दशायां आत्मस्वरूपसुखभानमाच्छादितमिव भवति । सुषुप्तौ तु विषयसुखभानाभावादात्मस्वरूपसुखमेव भासते । अत एव भारापगमे 'सुखी' इतिवदपि न युक्तम् । आत्मनो जडत्वपक्ष एव तथा वक्तव्यत्वनिर्बन्धः । न तु स्वप्रकाशत्वपक्षे । अतस्सुषुप्तौ आत्मा स्वयं प्रकाशते ॥ ६ ॥

ननु आत्मा 'अहम्' इति स्वेनैव सिद्ध्यतीति न युक्तम् । 'अहम्' इति प्रतीतौ आत्मव्यतिरिक्तस्य जडस्यान्तःकरणस्यापि भानात् । 'अहम्' इति यं निर्दिशन्ति जनाः, तमेव अन्ये जनाः 'त्वम्' 'अयम्' 'सः' इत्यादिपदैरपि निर्दिशन्ति । अहंत्वं तु प्रत्यक्त्वरूपम्, त्वंत्वादिकं तु पराक्त्वरूपम् । त्वंत्वस्य चेतनैकान्तत्वेऽपि सः इति तत्त्वस्याचेतनसाधारणत्वात्, अहमित्यत्र जडांशोऽपि मिश्रित एव । अतश्चात्मनि 'अहम्' इति प्रतीत्या प्रत्यक्त्ववत् 'त्व'मादिप्रतीत्या पराक्त्वमप्यावश्यकम् । ततश्चाहंपदार्थः न शुद्धः आत्मा, किन्तु प्रत्यक्पराग्वस्तुमिश्रितः । तत्र प्रत्यगंशः आत्मा, परागंशस्तु अनात्मा अन्तःकरणमेवेति आत्मा नाहमर्थः किन्तु अन्तःकरणावच्छिन्नं चैतन्यमेवेति अहमर्थानात्मत्ववादिनां परेषां मतम् । एवं प्रत्यगात्मा जीव एवेति केचित्, परमात्मैवेति परे । एवं पराक्त्वं जडत्वपर्यायमिति केचित्, अजडत्वविशेष इति च केचित् । अत एतेषां स्वरूपं च निष्कृष्य प्रदर्शयति—**प्रत्यक्त्वमित्यादिना** । **केचित्**=आत्मनः अस्वयंप्रकाशत्ववादिनः वैशेषिकादयः **पुंसि**=आत्मनि **स्वविषयधिषणाधारतामात्रम्**=स्वविषयकज्ञानस्य

**प्रत्यङ्स्वापेक्षयाऽसौ त्वमयमिति मितः स्वेतरैः स्वस्वबुद्ध्या**
**भातं नित्यं परस्मै जडमजडमपि स्यात् परागर्थ एव ॥ ७ ॥**

स्वयमेव आधारतया भासमानत्वमात्रं **प्रत्यक्त्वमाहुः**। आत्मनः स्वयंप्रकाशत्वानङ्गीकारे जडात् घटादेः आत्मनः को विशेषः इति चेत्, घटादेः सदा ज्ञेयत्वमेव, ज्ञानाश्रयत्वरूपं ज्ञातृत्वं घटादेः नास्ति। 'जानाति' अथवा 'जानामि' इति व्यवहारः न हि घटादेः, किन्त्वात्मन एव। अत आत्मा हि स्वविषयकज्ञानस्य स्व एवाधारो भवति। इदमेव स्वयंप्रकाशत्वं च जडव्यावृत्तमिति ते अभिप्रयन्ति। परन्तु **तत्स्वतस्सिद्धिसिद्धेः=तस्य=**आत्मनः **स्वतस्सिद्धेः**=स्वप्रकाशत्वस्य **सिद्धेः**=पूर्वश्लोके एव प्रतिपादनात्। स्वतस्सिद्धत्वरूपस्य स्वयंप्रकाशत्वस्य धर्मभूतज्ञानेऽपि सत्त्वेन, **स्वस्मै स्वेनैव भानं तत्**=स्वतोभासमानत्वमात्रं न प्रत्यक्त्वं, किन्तु स्वतः स्वस्मै भासमानत्वमपि प्रत्यक्त्वम् **इति समुचितम्**= औचित्यवत् भवति। स्वतो भासमानत्वं प्रत्यक्त्वमिति अद्वैतिनः। परन्तु सिद्धान्ते तत् धर्मभूतज्ञानस्यापि समानम्। प्रकाशस्य फलभोक्ता यः, स एवात्मा प्रत्यक्पदार्थश्च भवति। धर्मभूतज्ञानं जीवात्मनो व्यवहारनिर्वाहकम्। तेन धर्मभूतज्ञानप्रकाशस्य फलं न धर्मभूतज्ञानस्य, किन्तु जीवात्मनो भवतीति जीवात्मा प्रत्यक्, धर्मभूतज्ञानं तु पराक् भवति। ननु आत्मनः प्रत्यक्त्वे, परदृष्ट्यापि तस्य तथात्वमावश्यकम्। न हि घटः एकं प्रति घटः, अन्यं प्रति अघटो भवति। तथा च स्वस्य यथा अहमिति भानम्, तथा परदृष्ट्यापि सः अहमित्येव गृह्येत, प्रत्यक्त्वात्। न हि तथा गृह्यते, किन्तु 'त्वम्' इत्येव। अतः कथं प्रत्यक्त्वमित्यत्राह—**प्रत्यङ् इत्यादि**। **असौ**=आत्मा **स्वापेक्षयैव प्रत्यङ्**=प्रत्यक्पदार्थः भवति। अतः स्वदृष्ट्या 'अहम्' इति व्यपदेशः। **स्वेतरैस्तु**=तदितरैस्तु **स्वस्वबुद्ध्या**=इतरतत्तत्पुरुषदृष्ट्या। अत्र स्वपदार्थः 'त्वम्' 'अय'मिति मितः' इत्यादिवाक्ये प्रधानकर्तारः इतरजनाः। तेषां बुद्ध्या तु **'त्वम्' 'अयम्' इति मितः**='त्वम्' 'अयम्' इति निर्देशार्हतयैव प्रमितो भवति। न तु 'अहम्' इति। एतादृशवैलक्षण्यसूचनायैव 'तु' शब्दः। अतः प्रत्यक्त्वं सर्वेषां स्वस्वदृष्ट्यैव। इतरदृष्ट्या तु 'त्वम्' 'अयम्' इति स एवाहमर्थः व्यपदिश्यते। तावता न अहमर्थस्य जडत्वप्रसङ्गः। 'अयम्' इति 'सः' 'असौ' इत्यादेरप्युपलक्षकम्। नानात्मवादेऽस्यापरिहार्यत्वं द्रष्टव्यम्॥

ननु भोः! किं बहुना! परमात्मा हि सर्वज्ञः परात्मानमपि प्रत्यक्षतो जानीयादेव; परात्मविषयकं परमात्मज्ञानं 'अहम्' इत्याकारकं कथं भवेत्? 'त्वम्' इत्येव भवेत्। तथा चैकत्र प्रत्यक्त्वपराक्त्वयोर्मिश्रणमनिवार्यमेवेत्यत्राह—**भातमित्यादि**। **जडम्, अजडमपि परस्मै भातम्, नित्यं परागर्थ एव स्यात्** इत्यन्वयः। तथा च परस्मै भासमानत्वमन्यत्, परतोभासमानत्वमन्यत्। अयमंशः पूर्वमेव (जड.6) निरूपितः। एवञ्च पराक्त्वस्य जडत्वरूपत्वाभावात्, प्रत्यक्त्वपराक्त्वयोर्जीवे सत्त्वेऽपि न विरोधः=स्वापेक्षया प्रत्यक्त्वस्य, परदृष्ट्या पराक्त्वस्य मेलनेऽपि न विरोधः। पराक्त्वस्याजडत्वरूपं ग्रन्थारंभ एव दर्शितम्। ननु दृष्टिभेदेन धर्मा भिद्येरन् किम्? किं न श्रुतमायुष्मता 'परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ। कुणपः

कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ।।' इति । विकल्पा एते न प्रमाणभावमश्नुवत इति चेत्, एतत्तत्त्वं पूर्वमेव (जड.2) विचारितम् । विचारयिष्यामोऽग्रेऽपि (बु.33) ॥

अथवा—ननु घटादयो हि परस्मै भासन्ते, न तु स्वस्मै । घटादीनां भानं हि चेतनार्थमेव । अतश्च परस्मै भासमानत्वं जडत्वरूपमेव । ततश्च चेतने स्वापेक्षया प्रत्यक्त्वम्, इतरापेक्षया पराक्त्वं चेत्, जडत्वमप्यावश्यकम् । तथा चाहंपदार्थो जडाजडमिश्रणरूप एवेति, अहमर्थः न शुद्ध आत्मेति चेत्, तत्राह—**भातमित्यादि । जडम् अजडमपि नित्यं परस्मै भातं** चेत्, तत् **परागर्थ एव स्यात्** । 'नित्यं परस्मै भातम्' इत्यस्य परस्मा एव भातमित्यर्थः । घटादयो हि नित्यं परस्मा एव भासन्ते, न कदापि स्वस्मै । अतस्ते जडाः । आत्मा तु परदृष्ट्या परस्मै भासमानोऽपि, स्वदृष्ट्या स्वस्मा एव भासते । अतः स न जडः । तथा च परस्मा एव भासमानत्वं जडत्वम्, न तु परस्मै भासमानत्वमात्रम् । एवकाररहितं परस्मै भासमानत्वं तु पराक्त्वम्, न जडत्वम् । तथा चाजडमपि पराग्भवेत् । तथा चात्मादिगतं पराक्त्वं अन्यत्, घटादिगतं चान्यदिति । आद्यं परस्मै भासमानत्वम् । द्वितीयं तु परस्मा एव भासमानत्वम्, एतदेव परतो भासमानत्वरूपं जडत्वम् । तथाचाहमर्थे प्रत्यक्त्वपराक्त्वयोर्मेलनम्; न तु जडत्वाजडत्वयोरिति अहमर्थः न जडाजडमिश्रणरूपः ॥

**परमार्थतस्तु**—लोकदृष्ट्या स्वप्रकाशानामपि दीपानामध्यात्मशास्त्रे परस्मा एव भासमानत्वेन जडत्वमेवाङ्गीक्रियते । एतन्न्यायेन धर्मभूतज्ञानं व्यवहारदृशा स्वप्रकाशमपि यदि धर्मिण्यन्तर्भूतम्, एतेनैव न्यायेन नित्यविभूतिरपि यदि परमात्म्यन्येवान्तर्भवेत्, तत्कक्ष्यायां पराक्त्वस्य जडत्वरूपत्वेऽपि न कापि हानिरित्येव पर्यवस्यति । इतरत्सर्वं व्यवहारसौकर्याय ॥

धर्मभूतस्य ज्ञानस्यावार्या स्यात्स्वप्रकाशता । तथा नित्यविभूतेश्च जडता नैव युज्यते ॥
एतदर्थं हि क्लिश्यन्ति हन्ताचार्या दयामयाः । **गुरोश्शापस्तु शिष्यःस्यादिति** सम्यगुदीरितम् ॥
एतन्मध्ये तथैकात्म्यवादिनोऽपि वृथैव हि । शब्दमात्रेण तृप्यन्तो मार्गं रुन्धन्ति देहिनाम् ॥

**वस्तुतस्तु**—जीवेशभेदस्य जीवानां परस्परं भेदस्य च समर्थयिष्यमाणत्वात्, अहंत्वत्वंत्वयोर्जडाजडरूपत्वं न संभवत्येव । अतश्च पराक्त्वं जडत्वपर्यायमन्यत्, अजडानुगतं चान्यदेव वक्तव्यमिति पराक्पदं नाना मन्तव्यम् । किं बहुना! सर्वेषामपि व्यवहाराणां शरीरविशिष्टविषयकत्वेऽपि प्रत्यक्त्वं तु आत्मन्येव पर्यवस्यति, न कुत्रापि जडे । प्रयोजकत्वमन्यत्, विषयत्वं चान्यदेव ॥

एतादृशीषु चर्चासु न कर्तव्यो मुधाग्रहः। करणे, जायते नूनं तत्त्वबाधो महान् बत! ॥
तपसापि दुरूहेषु विषयेष्वखिलेष्वपि । कथमेते तु मन्यन्ते वृथा चर्चां फलेग्रहिम्? ॥

अयिः भोः! किमिति पुनरप्युपक्रान्तविस्मरणम्? न वयमात्मनोऽहंप्रत्ययविषयत्वमेव नास्तीति वदामः। किन्तु लोके अहंप्रतीतावनहमोऽपि विषयत्वात्, सा प्रतीतिश्चेतनैकान्ता न भवतीत्येतन्मात्रं वदामः । अहमिति यं निर्दिशति जनः, तमेव त्वमित्यपि निर्दिशत्यन्यः कश्चित् । ततश्चैकत्र प्रत्यक्त्वपराक्त्वयोः

दर्शनात्, तयोर्धर्मयोरत्यन्तं विरोधात्, अहंपदार्थस्तत्र मिश्रित एव भाति। अतोऽत्रान्तःकरणावच्छिन्नस्यैवात्मनो भानात्, विशुद्ध आत्मा नाहमर्थ इति चेत्, न विस्मरणमस्माकम्। प्रतीतिप्रयोजकत्वमन्यत्, प्रतीविषयत्वं चान्यदेवेत्यादिकं पूर्वमेवाभिहितम्। लोके जनः यं मनसि निधाय अहमिति व्यपदिशति, सोऽर्थः पुरतो वर्तमानस्य परस्य सर्वथातीन्द्रियः। एवं सति तमेवार्थं त्वमिति परः कथं निर्दिशेत्? किन्तु शरीरं वा चेतनाधिष्ठितं शरीरं वा त्वमिति निर्दिशति, न तु शुद्धं चेतनम् अतीन्द्रियत्वात्। अतस्तत्र प्रत्यगर्थोऽन्यः, परागर्थोऽप्यन्य एवेति युष्मदस्मत्प्रत्ययगोचरत्वमेकस्य नास्त्येवेति न साङ्कर्यम्॥

ननु 'अहं स्थूलः' इति यदा कश्चिद्वदति, तदान्यः 'त्वं न स्थूलः, त्वत्तोऽपि स्थूलास्सन्ति किल' इति यदि वदेत्, तदैकस्यैवार्थस्याहमर्थत्वं त्वमर्थत्वञ्चायात्येवेति कथं न साङ्कर्यमिति चेत्; अतीव स्थूल-दृग्भवान्। संसारिणामयं व्यवहारः, न ज्ञानिनाम्। अतः शब्दार्थप्रत्ययानां साङ्कर्यमिदम्। अतोऽस्य 'भोस्साधो! नैवंविधेषु विश्वसितुमर्हसि' (न्या.मं.7) इति जयन्तभट्टवचनमेव समीचीनमुत्तरम्॥

एतेन 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्यादिना 'प्रत्यक्त्वपराक्त्वयोर्मिश्रणात् अहमर्थश्चिदचिद्ग्रन्थिरूपः न केवलचेतनः' इति वचनम्, लोकदृष्ट्याऽऽपातरमणीयम्, न क्षोदक्षममिति दर्शितम्। तथा हि श्रीभाष्यम्—'अहंप्रत्ययसिद्धोऽह्यहमर्थः, युष्मत्प्रत्ययसिद्धो युष्मदर्थः। तत्र 'अहं जानामि' इति सिद्धो ज्ञाता युष्मदर्थ इति वचनम् 'जननी मे वन्ध्या' इतिवद्व्याहतार्थम् (1-1-1) इति। एवञ्चेदं जीवात्मानमङ्गीकृत्य परमात्मानं निराकृतवतां सांख्यसौगतादीनां दृष्ट्या, न तु वैदिकवेदान्तिदृष्ट्या। अत एवाहमर्थानात्मत्वादोऽपि सौगतादिदृष्ट्यैव, न तु वैदिकवेदान्तिदृष्ट्येति श्रीभाष्यकाराशयः॥

**अयं भावः**—आत्मा नाहमर्थः इति वदतस्तवाशयः कः? किं 'अहम्' इति प्रतीतौ आत्मा विषयतया न भासते इति, अथवात्मा प्रत्यगर्थो न भवतीति, उत अहंशब्दवाच्यो न भवतीति। नाद्यः, 'अहं प्रत्ययविषयत्वात्' (ब्र.सू.शं.अध्यास.) इति भवदाचार्यैरेवात्मनोऽहंप्रत्ययविषयत्वाङ्गीकारात्। न द्वितीयः, आत्मनः प्रत्यक्त्वस्य कदाप्यनपायात्। नापि तृतीयः, 'अहम्' इत्येव सर्वैः स्वात्मनो व्यपदेशेन, स्वात्मंभिन्नस्याहंशब्दवाच्यत्वस्य कस्यापि केनाप्यनङ्गीकारात्। अहंत्वमेव प्रत्यक्त्वम्। तत्तु आत्मनः स्वरूपम्। तच्च न शब्दप्रयोगापेक्षम्। न च सुषुप्त्यादौ अहंशब्दप्रयोगाभावात्, आत्मनोऽ-हमर्थत्वं नास्तीति शङ्क्यम्; शब्दप्रयोगाभावमात्रेण वस्तुनोऽभावासिद्धेः। घटपदं विना घटोप-लब्धेर्दर्शनात्। अन्यश्च शब्दः, अन्यच्च ज्ञानम्, अन्यश्चार्थः। शब्दार्थप्रत्ययानां साङ्कर्यदिवैतादृश-वादानामुन्मेषः। वस्तुतस्तु त्रयमपीदं परस्परविलक्षणमेवेति तत्तदवसरे प्रदर्श्यते। ननु चामोक्षं सूक्ष्मशरीरसंबन्धस्यानपायात्, तद्विशिष्टस्यैवाहमर्थत्वात् शुद्ध आत्मा इदानीं कदापि नाहमर्थ इति चेत्, सूक्ष्मशरीरं हि सर्वथातीन्द्रियम्, अत एव शास्त्रैकगम्यम्। तस्य 'अहम्'प्रतीतिव्यवहारादिप्रयोजकत्वेऽपि वस्तुस्वरूपदृष्ट्या विषयत्वं कदापि नास्त्येव। एवञ्च प्रत्यक्त्वस्यैवाहंत्वात्, तस्य च कदाप्यनपायात् अहमर्थ एवात्मा॥

ननु किमित्येकदेशानुवादेन वञ्चयसि? 'न चायमेकान्तेनाविषयः, अहंप्रत्ययविषयत्वात्' इति ह्याचार्यवचनम्? तेनांशतोऽहमर्थस्य विषयत्वसिद्धिः। न तु कात्स्न्येंनेति चेत्; अयि भोः! त्वमेवैकदेशमनुवदसि। 'युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। उच्यते—न चायमेकान्तेनाविषयः अहंप्रत्ययविषयत्वात्' इति हि पूर्णं वचनम्। अनेन च प्रत्यगात्मनोऽविषयत्वमाशंक्याहंप्रत्ययविषयत्वमेव समर्थ्यत इत्यस्मदिष्टसिद्धिः। एकान्तेनाविषयत्वनिराकरणेनैकदेशविषयत्वमेव तत्प्रतीतेः सिद्ध्येत्, न तु कात्स्न्र्येन विषयत्वं सिद्ध्येदिति चेत्, घटादिप्रत्ययेष्वपीदं'समानम्। घटं साक्षात्पश्यतो जायमाने 'अयं घटः' इति प्रत्ययेऽपि न हि घटः कात्स्न्र्येन विषयः; अनेकगुणविशिष्टस्य केनाप्येकेन प्रमाणेन कृत्स्नग्रहणं हि कदापि कस्यापि न संभवत्येव। तावता घटस्याप्यविषयत्वं किं त्वं ब्रवीषि। तर्हि घटः ब्रह्म च समानं संवृत्तं भवतो ब्रह्मन्! एतादृशचर्चया को लाभः? कस्य?

ननु भोः! उपक्रान्तं पुनर्विस्मृतमेवायुष्मता। अहंप्रत्यये आत्मनो यथा विषयत्वम्, तथानात्मनोऽपि विषयत्वं वाच्यम्, अन्यथा तस्य 'त्वम्' इति निर्देशः कथं घटेत? एवञ्चाहमर्थे प्रत्यक्त्ववत्पराक्त्वमप्यवर्जनीयमिति विशुद्ध आत्मा नाहंप्रत्ययविषयः। दृश्यते च 'अहं स्थूलः' 'अहं कृशः' इत्यादिव्यवहारे परागर्थस्य शरीरस्यापि अहंप्रत्ययविषयत्वम्। स्थूलदशायां यथानहमोऽप्यहंत्वम्, एवं 'अहं सुखी' इत्यादावपि सूक्ष्मशरीरम्, अहंकाराख्यमन्तःकरणं वा अहंप्रत्ययविषयो भवति, न तु शुद्ध इति चेत्; 'अहं स्थूलः' इत्यादौ शुद्धस्य भानं नास्त्येवेत्यसकृदुक्तम्। 'अहम्' इति प्रतीतेः अन्तःकरणावच्छिन्नचैतन्यप्रयोज्यत्वेऽपि सूक्ष्मस्यान्तःकरणस्य तद्विषयत्वं त्वसंभवि। परापेक्षया तु तादृशान्तःकरणदृष्ट्या त्वमादिपदप्रयोगोऽप्यसंभव्येव। अतः 'युष्मदस्मत्प्रत्ययगोचरयोः' इत्याद्याचार्यवचनं संसार्यात्मदृष्ट्या स्थूलशरीरात्मविषयक एव, न त्वात्मविषयकः। ज्ञानिनां तु त्रिविधोऽपि व्यवहारः पूर्वमेव प्रदर्शितः। किञ्च—यस्य प्रत्यगर्थस्यावेशाज्जडमप्यन्तःकरणं प्रत्यगिव भातीत्युच्यते 'अहम्' इति, तस्यात्मनोऽहमर्थत्वं नास्तीतिवचनम्, यस्य वह्नेरावेशादयसोऽपि दाहकत्वात् 'अयो दहति' इति व्यपदिश्यते, तस्य वह्नेर्दाहकत्वाभाववचनवदुपहास्यम्। अहंत्वस्यैव प्रत्यक्त्वरूपत्वात्, अहमर्थत्वमपि प्रत्यक्त्वरूपमेवेति, शब्दप्रयोगरहितायामवस्थायामपि आत्मनोऽहमर्थत्वम्=प्रत्यक्त्वं दुरपह्नवमित्यहमर्थ एवात्मा॥

किं बहुना! भूमविद्यायाम्—'तरति शोकमात्मवित्' (छां.7-1-3) इति सर्वशोकनाशकमात्मवेदनमुपदेष्टुं प्रवृत्तेन सनत्कुमारेण भूमपदवाच्यं परं ब्रह्मोपदिश्य, तस्य सर्वात्मत्वम्—'स एवाधस्तात्। ......स एवेदं सर्वम्' इत्यादिनोपदिश्य, तस्यैव प्रत्यगात्मत्वमपि 'अथातोऽहङ्कारादेश एवाहमेवाधस्तात्' ...... 'अहमेवेदं सर्वम्'(7-26-1) इत्यादिनोपदिश्य, प्रकृतात्मोपदेशपरंपरात्रैव विश्राम्यतीति बोधनाय 'अथात आत्मादेश एवात्मैवाधस्तात् .......आत्मैवेदं सर्वम्'(7-26-2) इति समापितम्। अतश्च संदंशपतितस्याहमर्थस्यैव प्रकृतभूमत्वम्, आत्मत्वं च स्पष्टमभिहितमिति आत्मनोऽहमर्थत्वमेव पारमार्थिकम्। **अहंपदार्थत्वमन्यत्, अहमर्थत्वं चान्यत्, अहंत्वं चान्यदि**त्येवान्तिमो निर्णयः। एतेनाहमर्थविनाशो न मोक्षः, किन्तु अहमर्थवैपुल्यमेवेत्येव परमः सिद्धान्तः॥ ७॥

[आत्मनः कर्तृत्वादिः]

78. **बोद्धा कर्ता च भोक्ता दृढमवगमितः प्रत्यगर्थः प्रमाणैः**
**कर्तृत्वाभाववादे स्वयमिह भगवानान्यपर्यं त्वगायत्।**
**कर्ता शास्त्रार्थवत्त्वात् कृतिषु च स पराधीन आभाषि सूत्रैः**
**चित्रैः कर्मप्रवाहैर्यतनविषमता सर्वतन्त्राविगीता ॥ ८ ॥**

एवमात्मा ज्ञानस्वरूपः ज्ञाता=ज्ञानाश्रयश्चेति ज्ञाधिकरणोक्तं साधितम्। आत्मनः ज्ञातृत्वं यथा स्वाभाविकं तथैव कर्तृत्वमपि स्वाभाविकमिति कर्त्रधिकरणसिद्धं निरूपयति—**बोद्धेत्यादिना**। **प्रत्यगर्थः**=अहमर्थः **बोद्धा**=ज्ञानाश्रयः **कर्ता**=प्रयत्नाश्रयः **भोक्ता च**=भोगाश्रयश्च=सुखदुःखाद्याश्रयश्च प्रमाणैः प्रत्यक्षानुमानागमैः **दृढम्**=दुरपह्नवतया **अवगमितः**=निश्चितः ॥

ननु—'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥' (गी.3-27) इति गुणानामेव कर्तृत्वम्, न त्वात्मन इति भगवतैव किलोक्तमित्यत्राह—**कर्तृत्वाभावेत्यादि**। **इह कर्तृत्वाभाववादे**=आत्मनः कर्तृत्वं नास्तीत्याद्यभिधानेऽस्मिन् **भगवान्**=गीतोपदेष्टा **आन्यपर्यम्**=अर्थान्तरपरताम् **स्वयं तु अगायत्**=तस्यामेव गीतीयां स्वयमेव हि ह्यभिदधे। 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥' (गी.18-14) 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य योनयः ॥' (१५) इति एकस्य कार्यस्य निष्पत्तौ शरीरेन्द्रियादीनां पञ्चानां अवर्जनीयतामभिधाय, 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः' ॥ (गी.18-16) इति शरीरादिरहितस्य कर्तृत्वासंभवं हि स एवाह। लेखनादिकार्य प्रति पत्रमषीलेखन्यादिसाधनानामवर्जनीयत्वमात्रेण पुरुषस्य लेखने कर्तृत्वमेव नास्तीति को वा ब्रवीति मतिमान्? अत एव किलात्मानं 'कर्ता' इत्येव तस्मिन्नेव श्लोके स निरदिशत् ॥

ननु 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते'(गी.13-20) इति कर्तृत्वस्य प्रकृतिसंबन्धाधीनत्वस्य भगवतैवाभिधानात् कथं तदित्यत्राह—**कर्तेत्यादि**। यदि उक्तवचनेन प्रकृतिरेव कर्तृत्वे हेतुः, तर्हि 'पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति तत्रैवोक्तत्वात् पुरुषस्य भोक्तृत्वमप्यङ्गीकार्यम्। भोक्तृत्वस्य भोगकर्तृत्वरूपत्वात् कर्तृत्वं सिद्धमेव। किञ्च, यत्र भोक्तृत्वम्, तत्र कर्तृत्वमितिव्याप्तेः, तस्य कर्तृत्वमप्यावश्यकम्। अन्यथा अन्यः कर्ता, अन्यो भोक्ता इत्यापत्तिः। एवं सति **'पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति'** इति स्यात्। तत्रेष्टापत्तौ 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र.सू.2-3-33) इति सूत्रशास्त्रानुभवादिविरोधः ॥

एवं कर्तृत्वस्य सहजत्वेऽपि, अस्त्यन्यः कश्चन विशेष इत्याह—**कृतिषु** इत्यादिना। **स च जीवः कृतिषु पराधीनः**=परमात्माधीनः, न स्वतन्त्र इति **सूत्रैः**='परात्तु तच्छ्रुतेः' (ब्र.सू.2-3-40) इत्यादिसूत्रैः **आभाषि**=स्पष्टमभ्यधायि। अतः जीवस्य कर्तृत्वं सहजमपि परमात्माधीनम्। ननु तर्हि पुण्यपापादिकमपि परमात्मन एव स्यात्; धन्विन एव खलु पापम्, न तु बाणस्य। किञ्च परमात्मनः सर्वान् प्रति साधारणत्वात्

पुण्यपापादिकमपि सर्वेषां समं स्यात्। ततश्च सुखदुःखादितारतम्यं न स्यात्। तारतम्यस्यापि परमात्माधीनत्वे, परमात्मनः वैषम्यम्, निर्घृणता च स्यात्। किञ्च जीवस्य स्वातन्त्र्याभावे कर्तृत्वमपि तस्य न स्यात्। 'स्वतन्त्रः कर्ता' इति खलु भगवान् पाणिनिः। इत्याद्याशङ्कायामाह—**चित्रैरित्यादि। चित्रैः**=स्वयमेव तरतमगुरुलघुभावाद्यापन्नैः विचित्रैः **कर्मप्रवाहैः**=अनादेः कालात् बीजाङ्कुरन्यायेन प्रवाहरूपेण प्रवृत्तैः जीवकर्मभिः **यतनविषमता**=प्रयत्नवैषम्यम्, तत्प्रयुक्तफलवैषम्यमित्यादिकम् **सर्वतन्त्राविगीता**=सर्वेष्वपि तन्त्रेषु=सिद्धान्तेषु संमता। नास्माकमेवेयं कल्पनेत्यर्थः ॥

वेदान्तशास्त्रस्य प्रतिकोटिभूतं शास्त्रं सांख्यमिति मर्मविदः। एवं प्रतिकोटिभूतविषयेषु ज्ञातृत्ववत् कर्तृत्वमप्येको मुख्यो विषयः। आत्मा खलु चैतन्यरूपः, न तु चेतनस्तेषाम्। अत एव चेतनचैतन्यपदे तेषां समानार्थके। प्रकृतिपरिणामभूतबुद्धितत्त्वस्य सान्निध्यात् ज्ञातृत्वं कल्प्यते चैतन्यरूप आत्मनि। कर्तृत्वं तु प्रकृतेरेव, न त्वात्मन इति सांख्याः। तदेतन्निराकृत्य पुरुषस्य ज्ञातृत्वं कर्तृत्वं च स्थापयामास भगवान् बादरायणः 'ज्ञोऽत एव' 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र.सू.2-3-4-5) इत्यधिकरणाभ्याम्। पूर्वं 'ज्ञानं च ज्ञातृधर्मः' इत्यादिना ज्ञातृत्वमात्मनः प्रसाधितम्। कर्तृत्वं निरूप्यतेऽस्मिन् श्लोके ॥

सांख्यानां मते आत्मा पुरुषशब्देन व्यपदिश्यते। स ज्ञानस्वरूपः, न ज्ञानाश्रयः। 'अहं जानामि' इत्यादिव्यवहारस्तु पुरुषस्य प्रकृतिसंसर्गवशाद्भवति। प्रकृतेः प्रथमः परिणामः महानित्युच्यते। तस्यैव बुद्धितत्त्वम् इति नामान्तरम्। पुरुषः स्वयं निर्धर्मकोऽपि बुद्धितत्त्वसंबन्धवशात् आत्मानं ज्ञातारं कर्तारं भोक्तारं च मन्यते। यदीदं सर्वं आत्मनः सहजो धर्मः, तर्हि सहजस्य कदाप्यनपायात् तस्य मुक्तिरेव न स्यात्। लोके कर्तृत्वज्ञातृत्वादीनां दुःखमिश्रितत्वस्यैव दर्शनात्, एभ्यो धर्मेभ्यो मोचनमन्तरा मुक्तिः कदापि न संभवति। श्रुतिरपि 'असंगो ह्ययम्।'(बृ.6-3-15) इति सर्वसङ्गरहितत्वमेवास्य वक्तीति तेषामाशयः। सिद्धान्ते तु यद्यसङ्गत्वं स्वभावः, तर्हि संसारसंगो वा कथमस्य? न च तदपि वस्तुतो नास्त्येवेति वाच्यम्, 'उभयोरपि संयोगः, तत्कृतस्सर्गः' (सां.का.21) इति तदीयवचनविरुद्धत्वात्। प्रकृतिपुरुषयोरुभयोरपि विभुत्वेन सान्निध्यस्य सार्वदिकत्वादनिर्मोक्षप्रसङ्गः। कथं तर्हि 'असङ्गो ह्ययम्' इति श्रुतिरिति चेत्, उक्तं भगवतैवास्योत्तरम्—यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते॥ (गी.13-32) इति। तथा चात्मा स्वरूपतश्शुद्ध एव। कर्मकृतप्रकृतिसंसर्गवशात् स संसरति। अत एवौपाधिकः संसारः। स्वरूपतः 'असंगो ह्ययं पुरुषः' इत्युच्यत इत्यर्थः। एतन्मतं अग्रे श्लोकत्रयेण (70,71,72) उपवर्ण्य निराक्रियते। प्रकृते कर्तृत्वविषयमात्रं परीक्ष्यते साधनोपयोगित्वात्। निर्विशेषाद्वैतिनोऽपि आत्मनः कर्तृत्वं नाङ्गीकुर्वन्ति। तेऽप्यत्र विवक्षिताः ॥

इदं सर्वमपि बाह्यसांसारिककर्तृत्वमेवेति न शङ्क्यम्; न हि स्वशरीरप्रेरणादौ शरीरान्तरादि-सहकारस्तस्य वर्तते। 'स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति', (छां.7-25-2) इति मुक्तिकालिककर्तृत्वे शरीराद्यपेक्षा न हि तस्य वर्तते। कर्तृत्वस्य दुःखित्वव्याप्तत्वात् मुक्तौ कथं कर्तृत्वप्रसङ्गः।

अतः 'कामचारो भवति' इत्यादिकं अर्थवादमात्रम्। अथवा अवरमुक्तिविषयमित्यपि न; मुक्तौ परापरभेदाभावादेः तत्तत्प्रकरणे विचार्यमाणत्वात्। 'मुक्तः दुःखी, कर्तृत्वात्' इत्यनुमाने कर्मवश्यत्वस्योपाधित्वात्। यत्र यत्र दुःखम्, तत्र कर्मवश्यत्वम्, इति साध्यव्यापकता। यत्र यत्र कर्तृत्वम्, तत्र सर्वत्र कर्मवश्यत्वमिति ईश्वरादावदर्शनात् साधनाव्यापकत्वम्। ईश्वरेऽपि जगत्सृष्ट्यादिकर्तृत्वदर्शनात्। ईश्वरः जीवविशेष एवेत्यादिरपि तत्प्रकरणे विचार्यते। एतत्सर्वमभिप्रेत्योक्तम् 'दृढमवगमितः' इति॥

न चेदं सर्वं मिथ्यैवेति वाच्यम्; जगन्मिथ्यात्ववादस्यापि निराकरिष्यमाणत्वात्। यदि जीवस्य कर्तृत्वं, तर्हि 'हेतुः प्रकृतिरुच्यते' इत्यादिवचनं कथमिति चेत्, संसारावस्थायां कर्मवशाज्जडवद्बद्धस्य जीवस्य, करणकलेवरादियोगेन हि कर्तृत्वं अभिव्यज्यते, यथा वास्यादियोगेन तक्षणादिकर्तृत्वम्। एतदपि सूत्रितम्—'यथा च तक्षोभयधा' (ब्र.सू.2-3-39) इति। कार्यसामान्ये हि साधनादिकारकापेक्षा अवर्जनीया। तावता वर्धक्यादेः तक्षणादिकर्तृत्वमेव नास्तीति न हि कश्चित् विवेकी वक्ति। न ह्येकस्मात् कारणात् कुत्रापि कस्यचित् कार्यस्य निष्पत्तिः। नानाविधकारकमेलनेन हि कार्यं भवति। तत्र प्रत्येकं कारणत्वमेव नास्ति, मिलितानामेव कारणत्वमिति 'प्रतीत्यसमुदय' वादिनो बौद्धाः। इत्यादिकं पूर्वमेव (जड.32,33) विस्तरेणावर्णि। किञ्च वेदान्तशास्त्रस्य बादरायणप्रणीतस्य साक्षात्प्रतिकोटिभूतं सांख्यशास्त्रमिति प्रायस्सर्वत्राधिकरणेषु तस्य पूर्वपक्षतया वर्णनादेव निश्चप्रचम्। अत एव ज्ञाधिकरणम्, कर्तृत्वाधिकरणं च सांख्यविरुद्धतया ज्ञातृत्वकर्तृत्वयोः स्थापनाय प्रवृत्तम्। 'शास्त्रार्थवत्त्वात्' इति सूत्रेण ज्ञातृत्वकर्तृत्वभोक्तृत्वादीनां सामानाधिकरण्यस्यावश्यकता प्रादर्शि। अत एव कर्तापि कश्चन कारकः। तदभावे कार्यं कथं नाम भवेत्। अतः कर्तुरिव सतः आत्मनः, प्रकृतिसंबन्धात् आपूरणं भवति। नो चेत् 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादेर्विरोधः दुष्परिहरः॥

अत एव ज्ञाधिकरणम्, कर्त्रधिकरणम्, परायत्ताधिकरणं च वैदिकानां प्राणप्रायं मन्तव्यम्। वैदिकधर्मस्य मध्यकालिकबौद्धधर्मस्य चान्तरमेष्वधिकरणेष्वेव निहितम्। वैदिकास्तु सविशेषवादिनः, मध्यकालिकबौद्धाः तदनुयायिनश्च निर्विशेषवादिन इतीदमन्तरमप्यवगन्तव्यम्॥

ननु 'सर्वं न्याय्यं युक्तिमत्त्वात्' इति समर्थयतस्तव कथमेषां निराकरणं युज्यत इति चेत्, आशयानभिज्ञो भवान्। अस्त्येषां सर्वेषामपि शास्त्राणामसङ्कीर्णो मर्यादाविशेष इत्यन्यत्र विस्तरेण प्रदर्शयामः। इदं तु वेदान्तशास्त्रं साख्यशास्त्रस्योत्तरशास्त्रम्। जग्रत्स्रष्टुर्जीववैलक्षण्यप्रदर्शनपरम्। 'अध्यात्मविद्या'पदवाच्यं सर्वश्रेष्ठमत्र विचारविषयः॥

यथा लोकायतं शास्त्रं **गौतमेन** समीरितम्। लौकिकव्यवहाराणां विचारस्य प्रदर्शकम्॥
एतदध्यात्मशास्त्रं तु **बादरायण**कर्तृकम्। जीवानां मोक्षशास्त्रं स्यात् वेदान्तैः प्रतिपादितम्॥
पूर्वोत्तरे तु मीमांसे वाक्यशास्त्रं तु कथ्यते। वेद-वेदान्तवाक्यानां विचारो विषयस्तयोः॥
एवं निष्कृष्य मर्यादा द्रष्टव्या तु विवेकिना। न साङ्कर्यं क्वचिदपि शास्त्राणां तु परस्परम्॥

**अयमाशयः**—यत्तूक्तं 'धन्विन एव पापम्, न बाणस्य' इति, तत्रैवं समाधिः। परमात्मा हि सूर्यालोकवत् सर्वेषां समानः। मनुष्यास्तु अनादिकालप्रवृत्तपुण्यपापवशात्, तेनालोकेन पुण्यं वा साधयेयुः, पापं वा संपादयेयुः। तत्र मनुष्याणां बुद्धिरेव नियामिका। न हि पुरुषा बाणवज्जडाः, किन्तु चैतन्यवन्तः। अतश्च तत्तद्बुद्ध्याद्यनुरोधेन तारतम्येन प्रवर्तन्ते। अतश्च प्रयत्नतारतम्यं फलतारतम्यं च पुरुषबुद्ध्यनुगुणम्। अतो न बाणन्यायः। एवं परमात्मनः साधारणत्वादेव, चेतनबुद्ध्यनुगुणत्वाच्च न वैषम्यनैर्घृण्यादिप्रसक्तिः॥

यदप्युक्तम्—जीवस्य स्वातंत्र्याभावे पाणिन्यनुशासनविरोध इति, अस्त्येव जीवस्यापि स्वातन्त्र्यमितरकारकापेक्षम्। परमात्मापेक्षया तु पारतन्त्र्यम्। आपेक्षिकस्वातन्त्र्यस्यापि तस्मिन् सत्त्वात् नानुशासनविरोधः। यस्तु सुकृती स्वस्य स्वातन्त्र्याभावमनुभवपर्यन्तं जानाति, तमधिकृत्योच्यते 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥'(गी.5-10) इत्यादि। अन्यथा 'करोति यः' इति निर्देशोऽपि विरुद्ध्येत। एतेन—साधनानुष्ठानेऽपि नास्याधिकारः, कर्तृत्वस्याहंकारगर्भत्वात्, अहंकारस्य त्याज्यत्वेन सर्वैरप्यङ्गीकारात्—इत्यादिकं भावनाविशेषमात्रमिति मन्तव्यम्। अखण्डाद्विश्वचैतन्याज्जीवस्य प्रत्येकताभावहेतुरेवाहंकाराख्यं तत्त्वम्। तदेव यदि न स्याज्जीवस्य प्रत्येकताभावोऽप्यपगच्छेत्। तदा च का वा सेवा? को वा सेवकः? को वा सेव्यः? अतः 'अहं स्वतन्त्रः' इत्यहंकार एव हेयः। न तु सहजयथावस्थितात्मस्वरूपानुसन्धानरूपः। परमात्मनोऽपि हि 'हन्ताहम्' इत्यनुसन्धानं दृश्यते॥

अन्नपानादिकार्येषु कर्तृत्वं चेन्न दुष्यति। शास्त्रीयेषु च कार्येषु कथं दुष्येत्तु कर्तृता॥
जडाजडविभागोऽपि न स्यादेवान्ततस्तदा। सुसूक्ष्मभावनास्त्वन्याः शास्त्रतत्त्वं तथेतरत्॥
शास्त्रं विज्ञानरूपं स्यात् भावनास्तु मनोभवाः। अन्योन्यं न विरुद्ध्यन्ते क्षेत्रभेदात्तयोस्सदा॥
विचाराणां फलं शास्त्रं स्वरूपं च व्यवस्थितम्। अतश्चर्चाक्षमं शास्त्रं न तथा स्युस्तु भावनाः॥

**इदमत्र रहस्यमवधेयम्**—'यः कारयति कर्माणि क्षेत्रज्ञं तं प्रचक्षते। यः करोति च कर्माणि भूतात्मानं विदुर्बुधाः॥ जीवसंज्ञोऽन्तरात्मान्यः सहजस्सर्वदेहिनाम्। येन वेदयते सर्वाः सुखदुःखादिकाः क्रियाः॥' (मनु.12) इत्याह **भवभेषजशास्त्रम्**। सर्वत्र भूतात्मा कर्ता, परमात्मा नियामकः। जीवात्मा त्वभिमानात् सर्वं स्वस्मिन्नेवारोप्य पश्यति। तेन बद्धः सुखदुःखादिकमनुभवति। यदा तत्त्वं जानन् अभिमानं क्रमशस्त्यजति, एतादृशमधिकृत्यैवोच्यते 'सदा मुक्त एव सः' (गी.5-28) इति। अभिमानः स्वस्य परमात्मापेक्षया प्रत्येकताभिमानः। अयमेव स्वातन्त्र्याभिमानः। जीवाः खलु परमात्मांशभूताः। 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः, सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति॥'(मुं 2-11) 'ममैवांशो जीवलोके जीवभूतस्सनातनः' (गीता.15-7), अंशो नानाव्यपदेशात् (ब्र.सू.2-3-41)इत्यादावेतत्प्रसिद्धम्। अंशत्वं कीदृशमित्यत्र बहुधा विवादे सत्यपि, जीवास्सर्वेऽपि स्वतः चैतन्यस्वरूपाः ब्रह्मांशभूताः, अत एव तच्छेषभूताः। भगवद्गीतायाः षष्ठेऽध्याये बहुत्र ब्रह्मशब्दः जीवपर एव व्याख्यायि। त्रयोदशाध्यायगताः परमात्ममहेश्वरब्रह्मादिशब्दाः जीव एव योज्यन्ते॥

वत्स! शब्दं परित्यज्य स्यादर्थे तव धीर्यदि। विचारेऽधिकृतस्त्वं स्याः नो चेत्तिष्ठ ततो बहिः॥

[यत्नसार्थक्यम्]

79. यद्भव्यं तन्न न स्यात् यदभवितृ न तद्यत्नकोट्याऽपि सिद्ध्येत्
द्वेधाऽपि व्यर्थयत्ना नर इति यदि न स्वोक्तियत्नादिबाधात् ।

परब्रह्मणस्सकाशात् प्रत्येकताभावः यावान् दृढो भवति, तदनुगुणः तथैव पुण्यपापादिप्रवृत्तिः सुखदुःखादिश्चानिवार्यः । अयं प्रत्येकताभावः यावान् शिथिलो भवति, तदनुगुणतया तदीययोगक्षेमादिकं भगवानेव वहति । एतादृशमधिकृत्यैव 'एष एव साधु कर्म कारयति'(कौ.3-9) इत्यादीनि, विपरीते पुरुषे विपरीतानि वचनानि च प्रवृत्तानि । अत एवाहमर्थनाशो न मोक्षः, किन्त्वहमर्थवैपुल्यमेव ॥

अतश्च भगवान् कर्ता आदेष्टा, कारयिता, संमन्ता, अनुमन्ता, सहकर्ता, साक्षी च कक्ष्याभेदेन तत्तज्जीवानां भवति । येषां प्रत्येकताभिमानः संपूर्णतया शिथिलः, तत्र भगवान् कर्ता भवति । त एव अवतारपुरुषाः । एत एव 'जडवत्पारतन्त्र्य'निदर्शनभूताः । तेषां भारं भगवान् संपूर्णतया वहति । एते भगवच्छायारूपाः । एतान् मनसि कृत्वैव पूर्वोक्तं मनुवचनं प्रवृत्तम् । येषामस्ति लेशतोऽभिमानः तेषां आदेष्टा, कारयिता, संमन्ता, भवति । अनन्तरम् अनुमन्ता भवति । ये तु पूर्णाभिमानिनः,स तेषां केवलं साक्षी=उदासीनो भवति । ये तु दुरभिमानिनः, तान् दण्डेन योजयति । अत्रापि कक्ष्याभेदास्सन्ति । पार्श्वे वर्तमानानपि दूरबन्धून् वदन्ति जनाः । अतिदूरे वर्तमानानपि समीपबन्धून् वदन्ति । एवमेव जीवपरमात्मनो-रप्यन्तरमान्तरं विज्ञेयम् । 'तद्दूरे तद्वदन्तिके' (ईश.) इत्यादिवचनमप्येतदर्थकम् । जीवस्य कर्तृत्वविषयो विचारः न तर्केण निर्णेयः, तपसैव सुज्ञेयः । अतोऽत्र व्यर्थविचारेण वर्धेत विचार इति बोध्यम् ॥

एवं परमात्मनः कर्तृत्वं जीवस्वरूपानुगुणं वहुविधं भवति । अत एव तृतीयाध्यायगीतार्थसंग्रहे 'गुणेष्वारोप्य कर्तृताम् । सर्वेश्वरे वा न्यस्य' इति परमाचार्याः । किमधिकोक्त्या! वेदान्तशास्त्रं हि सांख्यशास्त्रस्य साक्षात्प्रतिकोटिभूतम् । समन्वयाध्यायस्सर्वोऽपि हि सांख्यप्रक्रियानिराकरणपरेति संप्रतिपन्नम् । अविरोधाध्याय प्रथमपादस्सर्वोऽपि तथैव । ज्ञाधिकरणादिकं तु सांख्यनिराकरणपरं स्पष्टम् । कर्त्रधिकरणमपि तथैव । साधनाध्यायफलाध्यायौ तु सांख्यप्रक्रियायाः संपूर्णप्रतिकोटिभूतौ । एवं स्थिते वस्तुतत्त्वे निर्विशेषा-द्वैतिनाम्, नवीन वेदान्तिनाञ्च सांख्यप्रक्रियानुसरणेन जीवस्वरूपादिनिरूपणं कथं वेदान्तशास्त्रं अनुमन्येतेति निर्मत्सरमालोचनीयम् । अधिकं परस्तात् ॥ एतदुपर्यपि यदि जिज्ञासा—

तद्विद्धि प्रणिपाताद्यैःसेवाद्यैः शिष्यवृत्तिभिः । उपदेक्ष्यन्ति ते तत्त्वं महान्तो योगिपुङ्गवाः ॥ ८ ॥

जीवानां प्रयत्नस्य वैफल्यमाशङ्क्य परिहरति—**यद्भव्यमित्यादिना** । अनादेः कालात् प्रवहमाणानां कर्मणामनुगुणं तत्तत्सुखदुःखादिकं भवतीति यदि, यदि च परमात्मापि तत्तत्कर्मानुगुणमेव फलप्रदः, तर्हि **यत्**=सुखदुःखादिकं **भव्यम्**=अवश्यं भावि पूर्वकर्मानुरोधेन **तत् न न स्यात्**=न स्यादिति न, स्यादेव, पूर्वकृतकर्मणस्तादृशत्वात् । **यत्**=यच्च सुखदुःखादि **अभवितृ**=सर्वथा न भवितुमर्हति, पूर्वकर्मणस्तादृशत्वात् **तत् यत्नकोट्यापि**=कोटिशो यत्नैरपि **न सिद्ध्येत्** । एवञ्च **द्वेधापि**=प्रकारद्वयेनापि **नरः**=मनुष्याः

**यद्यत्नेनैव भव्यं भवति यतनतस्तत् स्वहेतूपनीतात्**
**दुस्साधायत्नलभ्ये प्रति यदि यतते, तत्र नैष्फल्यमिष्टम् ॥ ९ ॥**

**व्यर्थयत्नाः**=निष्फलप्रयत्नाः, प्रयत्नापेक्षया पूर्वकृतकर्मणः प्रबलत्वात् । **इति यदि**=इति चेत्, **न**=नैतदेवम् । कुत इत्यत्र प्रथमं प्रतिबन्दीमाह— **स्वोक्तियत्नादिबाधात्** इति । **स्वोक्तिबाधः स्वप्रयत्नबाधश्च** । आदिपदेन सर्वलोकव्यवहारादि ग्राह्यम् । **अयमर्थः**—किमर्थमेवं वदसि त्वम्? मत्प्रबोधनार्थमिति चेत्, मत्प्रबोधनं यद्यवश्यंभावि, तर्हि भवद्वचनमन्तरापि भवेत् । यदि न भावि, भवद्वचनेनापि न भवेदेवेति त्वद्वचनवैयर्थ्यं दुष्परिहरम् । एवं वचनस्यापि प्रयत्नाधीनत्वात्, प्रयत्नस्य वैफल्यं सिद्धम् । तदीयेतरप्रयत्ना वा आदिपदेन विवक्षिताः । प्रतिदिनं भोजनार्थं प्रयत्नस्सर्वेषामनिवार्यः । किमर्थः स प्रयत्नः? प्राणरक्षणार्थमिति यदि, तस्यापि पूर्ववदेवावश्यभावित्वे, अभावित्वे वा यत्नः व्यर्थ एव । एवमेवेतरव्यवहारा अपि ॥

प्रतिबन्द्या अनुत्तरत्वात्, वास्तवं समाधानं पृच्छाम इत्यत्राह— **यदित्यादि** । **यत्** फलम् **यत्नेनैव भव्यम्**=साध्यम्, **तत्** फलम् **स्वहेतूपनीतात्**=**स्वस्य**=यत्नस्य हेतवः ये ज्ञानेच्छादयः, परप्रेरणादयो वा, एतादृशैः स्वहेतुभिः **उपनीतात्**=उत्पादितात् **यतनतः**=प्रयत्नाद्भवति । **दुस्साधायत्नलभ्ये**=दुस्साधम्, अतिकष्टेनापि साधयितुमशक्यम् यत्, तत् **प्रति**, एवम् **अयत्नलभ्यम्**=यत्नमन्तरापि पूर्वकर्मवशात् स्वयमेव लभ्यम् यच्च वर्तते, तत् **प्रति च यदि यतते, तत्र तु नैष्फल्यम्**= प्रयत्नस्य वैफल्यम् **इष्टमेव** । प्रयत्नस्तु तथाऽज्ञानादेव । अथापि तृतीयकोटेः सत्त्वात् 'व्यर्थयत्नाः नरः' इत्युक्तेरसंभवात्, अस्त्येव प्रयत्नस्य सार्थक्यमित्यर्थः ॥

पूर्वपक्षोक्तकोटिद्वयापेक्षया तृतीया कोटिरप्यस्ति? १) प्रयत्ने कृतेऽपि न भवेदेव इति किञ्चित् इत्येकः । २) प्रयत्नमन्तरापि भवेदेव स्वत इति द्वितीयः । ३) एवम्, प्रयत्ने कृते भवेत्, अकृते प्रयत्ने न भवेत् इत्यपि तृतीयोऽपि प्रकारः कश्चिदस्ति । अत्रैव मनुष्यप्रयत्नानां सार्थक्यम् । इतरप्रकारद्वये तु प्रयत्नः व्यर्थ एव । जनास्तु तथाज्ञानात् प्रवर्तन्ते । 'प्रयत्ने कृते फलं भवति' इत्यत्राप्यस्ति कक्ष्याद्वयम् । प्रयत्ने कृते फलं भवति, प्रयत्ने अकृते तु फलं न भवतीत्येका कक्ष्या । प्रयत्नोऽप्यवर्जनीयः, फलमप्यवर्जनीयमिति अपरा कक्ष्या । आद्याऽनियता, द्वितीया तु नियता । तत्र द्वतीयं पक्षं वर्णयति— **यद्यत्नेत्यादिना** । **प्रथमस्तु पक्षः** सुज्ञत्वान्न विवृतः । प्रथमपक्षे फलनैयत्याभावात्, प्रयत्नस्याप्यनैयत्यं विवक्षितम् । द्वितीयकल्पे तु, फलस्य नैयत्यम्, अत एव तद्धेतूनामपि स्वयमेव नैयत्यं विवक्षितम् । अत एवैतत्पक्षे 'स्वहेतूपनीतात्' इति प्रयत्नस्य विशेषणमुक्तम् ॥

एतत्तत्त्वमेवं वर्णयन्ति परावरज्ञाः— 'अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥' (भाग.) 'तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः । तल्लभ्यते दुःखवदन्यतस्सुखं कालेन सर्वत्र गभीररंहसा' (भा.1-5-18) इत्यादि । विना हि प्रयत्नं पूर्वकर्मवशात् दुःखान्यायान्त्येव सर्वेषाम् । तद्वत्सुखान्यपि पूर्वकर्मवशादेव भवेयुः स्वकाले । एवं सति सुखसंपादनाय

दैन्याश्रयणं मौर्ख्यमेव। अतः मानवप्रयत्नसार्थक्यं न दुःखनिवारणे, न वा सुखसंपादने। किन्तु केवलभगवत्कृपाप्राप्तये प्रयत्नः कार्यः। अत्रैव च पुरुषप्रयत्नसार्थक्यम्, यतस्सृष्टिरेव परमात्मप्राप्त्युद्देश्या। तत्र पूर्वकर्मणां प्रतिकूलत्वमपि नास्ति, अनुकूलत्वमपि नास्ति, भगवानेव भारं वहति॥

यथैव च शिशुर्मातुरुत्सङ्गं काङ्क्षते सदा। तथैव जीवः कश्चित् स्याद्यदि तस्येश्वरो भवेत्॥
साहाय्ये सर्वदैवेति सृष्टेस्तु नियमो मतः। ईश्वरांशा यतो जीवास्तत आकर्षणं तयोः॥
सहजम्, त्वन्यथाभावः कर्मोपाधिनिबन्धनः। अत एव मुमुक्षूणां परमात्मा सुहृत्तमः॥
स एव तेषां साधूनां योगक्षेमवहो मतः। सारोऽयं सर्वशास्त्राणां हृदि रक्ष्यं सदा नरैः॥
सत्सङ्ग एव सर्वस्याप्यौषधं परमं मतम्। गच्छेयुः दूरतो यस्मात्संशयाद्याश्च कश्मलाः॥
पुराणपठनं मा स्तु किं कुर्यात्सत्समागमः? सोऽपि पूर्वार्जितेनैव कर्मणा हि भवेन्नृणाम्॥
बुद्धिस्सर्वत्र कुशला दत्ता भगवता तव। सम्यक् सा तु प्रयुक्ता चेत् सर्वक्लेशक्षयो भवेत्॥
अथवा भगवद्वाक्यं श्रुणु सर्वार्थसाधकम्। सत्सङ्गादेव सदसद्विवेकस्स्यान्नृणामिह॥
'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥'
नेतोऽपि किञ्चित्केनापि शक्यं वक्तुं नृणां हितम्। शिष्टं त्वीश्वरसरे भविष्यति सुविस्तरम्॥

पूर्वजन्मकर्मणां स्थानं किम्? सर्वं जीवकर्माधीनं चेदीश्वरस्य स्थानं किमिति चेत्, पूर्वश्लोकोक्तं स्मर। अधिकमग्रिमसरे (श्लो.1) विचार्यते॥ ९॥

एतावता प्रबन्धेन जीवानां देहेन्द्रियमनःप्राणबुद्ध्यतिरिक्तत्वप्रदर्शनपूर्वकं जीवस्य स्वप्रकाशत्वप्रत्यक्त्वादिकं प्रदर्श्य, तस्य कर्तृत्वं स्वाभाविकमिति च प्रदर्शितम्। कर्तृत्वप्रसङ्गात् प्रयत्नस्य स्थानमपि प्रादर्शि। एतदुपरि जीवस्वरूपविषयेऽवश्यवक्तव्यं जीवनानात्वम्, ब्रह्मवैलक्षण्यं च प्रदर्शयितुं विस्तरेण विचारं प्रस्तोतुं प्रवृत्तः प्रथमं औपाधिकजीवभेदवादं **भास्करसंमतं** निराकरोति—भिन्ना इत्यादि। यथा महाकाशः घटाद्युपाधिवशात् 'घटाकाशः' 'गृहाकाशः' इत्यादिरीत्या भिन्नतया व्यवह्रियते, तथा परमात्मा **सत्यभूताविद्याख्योपाधि**संबन्धवशात् भिन्नतया व्यवह्रियते। उपाधिनाशे घटाकाशस्य महाकाशेन यथैक्यम्, तथैवैक्यं जीवपरयोः, स एव मोक्षः। अतः जीवब्रह्मणोर्भेद औपाधिकः, अभेद एव स्वाभाविकः। एवं घटादीनामुपाधीनां अनेकत्वात् यथा घटाकाशोऽप्यनेकतया व्यपदिश्येत, तथा जीवानां परस्परं भेदोऽप्यौपाधिकः। उपाधिभूताचिद्ब्रह्मणोस्तु भेदाभेदावुभावपि स्वाभाविकौ। आत्मवादे हि शरीरेन्द्रियमनोबुद्ध्यतिरिक्तः आत्मा नास्तीति चार्वाकाः तदेकदेशिनश्च। आत्माख्यः पदार्थ एव नास्तीति नैरात्म्यवादिनो, माध्यमिकाः। क्षणिकविज्ञानमेव आत्मव्यवहारविषय इति वैभाषिकसौत्रान्तिकयोगाचाराः। एते चत्वारोऽपि बौद्धाः आत्मनः अहमर्थत्वं नाङ्गीकुर्वन्ति। जीवमङ्गीकृत्य अतिरिक्तमीश्वरमपि नाङ्गीकुर्वन्त्येते। परंब्रह्माङ्गीकृत्य, तदरिक्ता जीवा न सन्तीति **ब्रह्मविवर्तवादिनः**। अत्रापि, **नानाशरीरकैकजीववादिनः** केचित्, **एकशरीरकैकजीववादिनः** केचित्। एवं बहुविधा वादास्तत्र तत्र निरस्यन्ते। एवं नानाविधविचित्रविवाद-

[भास्करमतनिरासः]

८०. **भिन्ना जीवाः स्वतः स्युः प्रतिनियततया धीस्मृतीच्छासुखादेः**
**चेतोभेदात् व्यवस्था न तु भवति यथा देहबाह्याक्षभेदात् ।**

विषयभूतस्य जीवेश्वरभेदस्य विस्तरेण विचारोपक्रमसूचनाय प्रथमं स्वमतप्रतिज्ञाया आवश्यकत्वात्, एतावता ग्रन्थभागेन प्रतिपादितं स्वमतमादावनूद्य प्रतिज्ञां प्रदर्शयति—**भिन्ना** इत्यादि । **जीवाः** स्वत एव परमात्मनोऽपि **भिन्नाः** परस्परञ्च भिन्नाः । जीवेश्वरभेदस्य सिद्धत्वात् , प्रतिशरीरं जीवा भिन्नाः इति निरूप्यते । **धीस्मृतीच्छासुखादेः**=बुद्धेः, स्मृतेः, इच्छायाः, सुखादेश्च **प्रतिनियततया**=व्यवस्थितरीत्या परस्परं विलक्षणतयैवानुभवात्, **जीवाः स्वतः**=स्वभावत एव, न तूपाधिवशात् **भिन्नाः** परस्परं भिन्नाः **स्युः** । सुखादेरित्यादिना दुःखादिपरिग्रहः । वदन्त्यन्येऽप्येवम्—'नानाऽत्मानो व्यवस्थातः' (वै.सू.3-2-20) 'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥' (सां.का.8) इति च । व्यवस्थातः=सुखदुःखादिव्यवस्थायाः । तस्य विस्तरः—जननेत्यादि । आत्मनः एकत्वे जननमरणादयः सर्वेषां एकदैव भवेरन् । तथाऽदर्शनात् पुरुषबहुत्वं सिद्धम् । एवं करणानि शरीरेन्द्रियादीनि प्रतिनियतान्येव, युगपच्च न प्रवर्तन्ते । त्रैगुण्यम्=सत्त्वरजस्तमांसि । तेषां विपर्ययः=परस्परविपर्यासः । कश्चित् सात्त्विकः । अन्यस्तु राजसः । अन्यश्च तामसः इत्यादि स्वभावभेदः । एभिः कारणैः जीवानां परस्परं भेद एव ॥

मायापरिणामभूतान्तःकरणभेदादेव सुखदुःखादिव्यवस्था भवेत् । किमर्थं जीवभेद इत्याशंक्य निराकरोति—**चेतोभेदादित्यादिना** । **देहबाह्याक्षभेदात्**=शरीराणाम्, बाह्येन्द्रियाणां भेदात् यथा **सुख-दुःखादिव्यवस्था न भवति,** तथा **चेतोभेदात्**=अन्तःकरणभेदादपि सुखदुःखादिव्यवस्था **न तु भवति**=नैव भवति । एक एव जीवः जन्मभेदेन नानाशरीराणि गृह्णाति । तत्र शरीरादीनां भेदे सत्यपि आत्मभेदो नास्ति । एकस्मिन्नेव समये सौभरिणा अनेकशरीरपरिग्रहस्य वर्णनादपि शरीरादिभेदः आत्मभेदप्रयोजकः सुखादिव्यवस्थाप्रयोजकश्च यथा न भवति, तथैव अन्तःकरणभेदोऽपि सुखदुःखादिव्यवस्थाप्रयोजको न भवति । देहभेदे सत्यपि सौभरेः 'सोऽहम्' इति प्रत्यभिज्ञा न हि न भवति । एवमिन्द्रियभेदे सति, अन्तःकरणमात्रभेदे सति च आत्मनः एकत्वेन प्रत्यभिज्ञाऽनिवार्या । तथाऽदर्शनात् अन्तःकरणभेदमात्रेण कर्मवैचित्र्यनिर्वाहो न भवत्येव । न चादृष्टविशेषवशादेव सर्वव्यवस्थोपपद्यतामिति वाच्यम्; संप्रतिपन्नस्थल एव तथा संभवात् । अन्यथा कुत्रापि काचिदपि व्यवस्था केनापि दुरुपपादा स्यादिति सर्वशास्त्रवैय्याकुलीप्रसङ्ग इत्यात्मनां नानात्वमर्जनीयम् । पुरुषभेदे सिद्ध एवादृष्टस्य व्यवस्थापकत्वसंभवः । अदृष्टस्यान्तःकरणधर्मत्वा-भावात् । व्यधिकरणयोर्भोगादृष्टयोः कार्यकारणभावासंभवः सांख्यमतविमर्शे (जी.70) व्यवस्थापयिष्यते ॥

किञ्च अन्तःकरणं हि सुखाद्यन्तःपदार्थसाक्षात्कारकरणतया सिद्ध्यति, रूपादिसाक्षात्कारे चक्षु-रादिरिव । 'अन्तःकरणम्' इति पदमेव तस्यान्तःकरणकारकतां वदति । करणं च कर्तारमपेक्षते । एवञ्च अन्योन्यविलक्षणसुखवतां जीवानां तत्करणान्यपि भिन्नानि भवेयुः । एवं कर्त्रधीनत्वे करणस्वरूपस्य,

**नित्यान् भिन्नांश्च जीवान् कथयति निगमस्तद्धि नोपाधितः स्यात्**
**आत्माद्वैतश्रुतीनामितरहृदयता तत्र तत्रैव सिद्धा ।। १० ।।**

करणाधीनो कर्तृभेदश्चेत् अन्योन्याश्रयोऽनिवार्यः । अतः कर्तुः सुखादिसाक्षात्कारकरणतया सिद्धस्य तस्य जीवभेदव्यवस्थापकत्वं कथमिव भवेत्? सुखादिकं हि प्रतिजीवं सुतरां व्यवस्थितमेव सर्वानुभवसिद्धम् । एतत्करणतया सिद्धमन्तःकरणमपि प्रतिजीवं भिन्नमेव भवेत् । नो चेत् सुखदुःखाद्यनुभवसाङ्कर्यं स्यात् ।।

अपि च **निगमः**=श्रुतिः **जीवान् नित्यान् भिन्नान्**=परस्परं भिन्नांश्च **कथयति**। 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मास्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' (श्वे.6-13) इति हि श्रुतिः । नित्यानां बहूनां चेतनानाम् नित्यः एकः यः चेतनः कामान् विदधाति, तम् इत्यन्वयः । नित्यत्वचेतनत्वादौ तारतम्यस्य दुर्वचत्वात् 'नित्यानाम्' इति नावधारणे षष्ठी । 'अनित्यानाम्' इतिच्छेदेनात्र निर्वहेऽपि उपरि तथाच्छेदासंभवः । 'एको बहूनाम्' इति तु दुर्निवहम् । अतः षष्ठ्यन्तानि जीवपराणि, प्रथमान्तानि परमात्मपराणि । यथाश्रुते त्वनन्वयः स्पष्टः । एवं व्याख्याभेदेऽपि जीवानां फलप्रदस्य परमात्मनः एकत्वम्, जीवानामनेकत्वं नित्यत्वं च कण्ठत एव सिद्धम् । इदमनेकत्वमौपाधिकं कुतो न स्यादित्यत्राह—**तद्धीत्यादि** । **तत्**=अनेकत्वम् **उपाधितः न हि स्यात्** । न ह्युपदेशप्रकरणे औपाधिकौपचारिकादिशब्दाः प्रयोगार्हाः । विधौ=अपूर्वार्थबोधनप्रकरणे परः=अमुख्योऽर्थः शब्दार्थो न भवितुमर्हति । तदर्थमेव प्रवृत्तेषु वाक्येषु लक्षणाङ्गीकारे कुत्रापि न कोऽप्यर्थः प्रतिष्ठितो भवेत् । प्रकृते तत्त्वोपदेशार्थमेव प्रवृत्तेषु वाक्येषु लक्षणाङ्गीकारे, किमपि तत्त्वं निश्चेतुं न शक्यमिति भावः ।।

अपि चैतादृशज्ञानस्य हि 'तेषां सुखं शाश्वतम्' इति शाश्वतसुखमुक्तिहेतुत्वमुच्यते । औपाधिकत्वज्ञानस्य तत् कथं भवेत् । भवद्दृष्ट्या हि एषामौपाधिकत्वज्ञानस्यैव शाश्वतसुखहेतुत्वं वक्तव्यम्, न त्वनौपाधिकत्व-ज्ञानस्य । अतः तत् स्वाभाविकमेव । ननु 'अयमात्मा ब्रह्म' 'अहं ब्रह्म' इत्यभेदस्यापि श्रुतौ दर्शनात् कथं निर्णयः इत्यात्राह—**आत्मेत्यादि** । **आत्माद्वैतश्रुतीनाम्**=आत्मनः ऐक्यप्रतिपादकानां श्रुतिवाक्यानाम् **इतरहृदयता**=अन्यतात्पर्यकत्वम् **तत्र तत्रैव**=तत्तत्प्रकरण एव पूर्वापरपरिशीलनादिना **सिद्धा**=निश्चिता । शरीरशरीरिभावकृतं वा, उपादानोपादेयभावकृतं वा सामानाधिकरण्यं तत्तत्प्रकरणानुरोधेन ज्ञेयम् ।।

**अत्रेत्थं विचारावतारः**—चिदचिदीश्वरतत्त्वज्ञानमेव सकलविधक्लेशनिवारकमिति ग्रन्थादावेव (जड.4) विस्तरेण प्रदर्शितम् । एतावता ग्रन्थभागेनाचिद्वैलक्षण्यस्य प्रदर्शनेऽपि ईश्वरवैलक्षण्यं न तावन्मात्रेण सिद्ध्येत् । यद्यपि 'नाहमीश्वरः' इति ईश्वरभेदोऽपि सर्वानुभवसिद्धः । परं त्वात्मपदवाच्यस्य चित्तत्त्वस्याति-गहनतया, केवलेन लौकिकानुभवेन नैतादृशा विषया निर्णेतुं शक्याः । 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठा'(कठ.2-8-9) इति श्रुतिरपि स्पष्टमेतद्वदति । श्रुतिमुखंनिरीक्षणे तु नैकरूपास्ता दृश्यन्ते । 'अयमात्मा ब्रह्म'(बृ.6-4-5)'तत्त्वमसि'(छां.6-8-7) इत्यादीनि जीवब्रह्मणोरभेदं वदन्ति । 'द्वा सुपर्णा सयुजा सखायौ' (मुं.3-1-1, श्वे.4-6) 'पृथगात्मानं प्रेरितारं च मत्वा'(श्वे.1-6) इत्यादीनि तयोर्भेदं

वदन्ति । अतः किं कर्तव्यमिति जिज्ञासायां व्याख्यानभेदात्पक्षभेदास्समुत्थिताः ॥ तत्र स्वपक्षः प्रथमपादेन समग्राहि । 'स्वतो जीवाः भिन्नाः' इति मूलप्रतिज्ञा । परमात्मनोऽपि भिन्नाः, परस्परमपि भिन्नाः । जीवस्वरूपं त्वेतावता विस्तरेण परीक्षितमेव । तेन सिद्धोऽयं निष्कृष्टस्तस्याकार इति भावः ॥

तत्र **जरदद्वैती स्वरूपपरिणामवादी भर्तृप्रपञ्चस्तु**—ब्रह्मैव स्वरूपेणैव जगदात्मना परिणमते मृद्घटादिवत् । अतश्चावस्थाभेदेन जीवब्रह्मणोः भेदोऽपि सत्यः, एवं अभेदोऽपि सत्य इति न दोष इत्याह ॥

**शाङ्करास्तु**—मृद्वत्स्वरूपपरिणामे मृद्वदेव नाशप्रसङ्गात् स्वरूपपरिणामवादो न युक्तः, किन्तु रज्जौ सर्पवत् विवर्तवाद एव युक्तः । तथा च ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वात्, अद्वैतमेव सत्यम् । द्वैतं तु मिथ्या । अत एव लोकावगतभेदानुवादमात्रं तन्निषेधार्थं क्रियते, भेदवाक्यानां स्वार्थे तात्पर्याभावात् न दोष इति **ब्रह्मविवर्तवादिन** आहुः । अत्रापि अन्तःकरणावच्छिन्नं चैतन्यमेव जीव इति **जीवाज्ञानवादिनः वाचस्पतेः** पक्षः । अन्तःकरणप्रतिबिम्बितं चैतन्यं जीव इति **ब्रह्माज्ञानवादिनः प्रकाशात्मयतेः** पक्षः ॥

**भास्कराचार्यस्तु** उपाधेर्मिथ्यात्वेऽनवस्थाप्रसङ्गात् उपाधिःसत्य एव । एवं सत्योपाधिकृतः जीवस्य ब्रह्म-भेदः, अभेद एव स्वाभाविकः । एवञ्च जीवो न मिथ्या, किन्त्वौपाधिकः । अचिद्ब्रह्मणोस्तु भेदाभेदावित्याचख्यौ॥

**यादवप्रकाशस्तु** ब्रह्मणस्साक्षाद्विकारं निविवारयिषुः ब्रह्मणश्शक्तित्रयमङ्गीकृत्य, तत्तच्छक्तिविशिष्टत्व-रूपेण ब्रह्मण्यंशत्रयमौपाधिकं परिकल्प्य, तत्तदंशस्य चिदचिदीश्वररूपेण परिणाममातस्थौ । तथा चांशांशिनोस्सर्वत्र भेदाभेदयोः स्वाभाविकत्वात् जडब्रह्मणोः, जीवब्रह्मणोश्च भेदाभेदौ स्वाभाविकावाह । तत्र प्रथमपादेन स्वपक्षं संग्रहेण प्रदर्श्य औपाधिकजीवभेदवादं विमृशति । अग्रे (श्लो.15) **बिम्बप्रतिबिम्बवादस्य** स्पष्टविमर्शनवत्, **अवच्छेदकवादस्य भामतीकर्तुः** वाचस्पतिमिश्रसंमतस्य प्रत्येकनिराकरणं यद्यपि न दृश्यते । परन्तु स पक्षः भास्करमतनिराकरणेनैव निरस्तप्राय इत्याचार्याणामभिप्रायः, अविद्यारूपौधिकजीवभेदस्योभयोः समानत्वात् ॥

ननु च 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' (ईशा.7) इति ऐकात्म्यदर्शनस्य शोकमोहनिवर्तकत्वं स्पष्टमुच्यते । शोकमोहनिवर्तकं ज्ञानं कथमिव भ्रमो भवेत्? अतः एकत्वमेव पारमार्थिकम्; अनेकत्वं तु कर्मोपाधिकमेवेति चेत्, न । एतच्छ्रुत्युपबृंहणभूतं भगवतो वचनमस्य तात्पर्यं स्पष्टयति—'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः॥' (गी.6-32) इति । अत्रस्थं 'आत्मौपम्येन' इति पदमवधेयम् । साजात्यमूलकमेवेदमैक्यमिति स्पष्टम् । न च साजात्यमूलकैकत्वापेक्षया, औपाधिकानेकत्वमेव वरम्, यतः 'अयो दहति' इत्याद्यौपाधिकस्थले हि अयसो दाहकत्वानुभवः अबाधितः । अत एकत्वं सहजम्, अनेकत्वं त्वौपाधिकं बहुलं दृष्टमिति चेत्, 'संपन्नो व्रीहिः' इत्यादावनेकत्वं सहजम्, एकत्वं तु जात्यौपाधिकं दृष्टमेव । अत उभयमपि समानम् । न च 'संपन्नो व्रीहिः', इत्यादौ तु एकत्वमनुभवबाधितम्, अत एवौपचारिकः प्रयोग इति युक्तम् । प्रत्यक्षेण पदार्थस्वरूपगुणादिव्यवस्थायां सिद्धायाम्, तदनुगुणकल्पनाया अदोषत्वात् । प्रकृते तु 'आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः' (कठ.1-3-7) 'आश्चयवत्पश्यति कश्चिदेनम् आश्चर्य-वद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्' (गी.2-29) इति

अत्यन्तदुरवगाहतया वर्ण्यमाने आत्मनि लाघवगौरवविचारस्यानवसरत्वात्। 'नैषा तर्केण मतिरापनेया' (कठ.1-2-9) 'तर्काप्रतिष्ठानात्' (ब्र.सू.2-1-11) इत्यादि सदा स्मर्तव्यम् ॥

ननु भोः! एवमतिगहनत्वादेव वदामो वयम्—श्रुतिर्यथा वदति, तथाङ्गीकर्तव्यमिति। श्रुतिर्ह्येकत्वं कण्ठत एव खलु वदति 'एकत्वमनुपश्यतः' इतीति चेत्— 'अग्रे एकमेवासीत्' इति कारणावस्थायामेकत्वम् 'बहु स्याम्' 'तदात्मानं स्वयमकुरुत' इति कार्यावस्थायामनेकत्वमिति सर्वं स्पष्टमेवाभिहितम्। एतदुपयपितः संशयानपि 'कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा' इति स्वयमुत्थाप्य सूत्रकारः 'श्रुतेस्तु शब्दमूलत्वात्' इति स्पष्टसमादधौ। एतदुपर्यपि किं वक्तव्यम्। शुष्कतर्कं विस्मृत्य चिन्त्यताम् ॥

किञ्च समष्टिक्षेत्रगतं तत्त्वैक्यम्, व्यष्टौ तु अनेकत्वमेवेति वैज्ञानिकोऽयं विषयः अग्नि-विष्फुलिङ्गादिभिः स्पष्टीक्रियते। ऐकात्म्यवादश्चाग्रे बहुधा विमृश्यते। परस्परमत्यन्तविरुद्धम् एकत्वमनेकत्वं चैकस्मिन् कथं भवेदिति चेत्, अध्यात्मशास्त्रस्य सर्वापवादरूपत्वेन बुद्धिकृतविरोधादेरत्र नावसरः। अन्यथा मुक्तिसाधनतदनुष्ठानादीनां भेदगर्भत्वेन, भेदस्य मिथ्यात्वे, साधनादीनामपि मिथ्यात्वप्रसङ्गेन शून्यवाद-प्रसङ्गः। अथवा एकस्य मुक्तौ सर्वमुक्तिप्रसङ्गः। असत्यात्सत्यसिद्धिसाधनादिकं **एकादश्यां ताम्बूलचर्वण-कथायेत**। सर्वमेतत् दृष्टान्तमात्रविश्रान्तं दार्ष्टान्तिकापरिचयमेव ज्ञापयेदित्यलमतिचर्चया। असत्यात् सत्यसिद्धिरप्यग्रे (श्लो-49) निराक्रियते ॥

ननु कोऽयं पक्षपातः? **किं सुभगाभिक्षुकन्यायः? 'न विधौ परःशब्दार्थः'** इति न्याय इदानीं कुत्र गतः? मा क्रुश साधो! स न कुत्रापि गतः। शरीरशरीरिभावकृतं वा, उपादानोपादेयभावकृतं वा सामानाधिकरण्यं न गौणम्, किन्तु मुख्यमेवेति सामानाधिकरण्यविचारे (बुद्धि.) निरूपयिष्यते। अतः एतत्सिद्धान्ते कस्या अपि श्रुतेर्न त्याग इति सर्वश्रुतिसमन्वयः। अत एव न कस्यापि बाधितार्थकत्वम्। अपि च 'इदमग्रे आसीदेकमेव' इत्येकत्वस्य प्रलयकालिकत्वात्, 'बहु स्याम्' इत्यनेकत्वस्य सृष्टिकालिकत्वा-त्कालभेदेनोभयोर्विरोधाभावादित्यादिकमग्रिमसरे विस्तरेण भविष्यति। अन्यथा सर्वशास्त्रबाधप्रसङ्गः। अधिकं तत्तन्निराकरणवेलायां विशदीक्रियते। अतः जीवाः परस्परं स्वत एव भिन्नाः ॥

यद्यप्ययमंशोऽग्रिमसरे (श्लो.27-33) बहुविस्तरेण विचारयिष्यते, तथाप्यत्र प्रसक्तत्वात्सारत इदमत्र वक्तव्यमतिगहनत्वाद्विषयस्य, यमधिकृत्याद्यावधि बहुधा प्रसृतः, प्रसारितश्च महान् कलिर्बहोः कालात्। अतः पुनःपुनरिदं वक्तव्यं पुनःपुनश्चिन्तनाय। यं विषयं विस्तरेण वर्णयन् भगवान् श्रीभाष्यकारः अन्ते **'एवञ्च सति अभेदो वा भेदो वा द्व्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थस्समर्थितः?'** इति प्रश्नं स्वयमुत्थाप्यापि **'सर्वस्य वेदवेद्यत्वात्सर्वं समर्थितम्'** इत्युत्तरयन्निर्भरो भवति समनन्तरम्। कुत एतत्? ननु कियानयं विषयः? किमनन्तरवाक्यमेव न दृष्टमायुष्मता? **'सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थित-मित्यभेदः'** इति जगद्ब्रह्मणोश्शरीरशरीरिभावनिबन्धनोऽभेदः इति स्पष्टं वदत्यपि कुत्र वा मुह्यस्यायुष्मन् भोः? भो ब्रह्मन्! न मुह्यामि। संशये किञ्चित्। परिहरिष्यति भवानिति पृच्छामि। प्रश्नस्तु 'कोऽयमर्थः समर्थितः?' इति। उत्तरं तु 'सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदस्समर्थितः' इति। किं

शरीरशरीरिभावः अभेदेनावस्थितेः प्रयोजकः, उत तथा व्यवहारस्य? प्रथमपक्षे शरीरशरीरिणोरभेदप्रसङ्गः स्पष्टः। द्वितीयपक्षे तु 'आम्रान् पृष्टः कोविदारानाचष्टे' इतिवत् स्यात् ॥

अतोऽत्रैवं वक्तव्यम् प्रतिभाति—शरीरशरीरिभावः न केवलमभेदव्यवहारप्रयोजकः, तथा व्यवहारानुगुणपरिणामविशेषस्यापि प्रयोजकः। जीवेश्वरयोस्संबन्धविवेचने 'तिलेषु तैलं दधिनीव सर्पिः'(श्वे.1-15) क्षीरे सर्पिरिवार्पितम् (16) इत्यादीन्यवधेयानि। एवमेतस्य तत्त्वस्य परिचय एवान्नमयादिकोशैः प्रतिपाद्यते **स्थूलारुन्धतीन्यायेन**। अन्नमयकोश एव 'भूतात्मा' इत्युच्यते। ततः प्राणमय आत्मा। प्राणाः—पञ्चप्राणाः, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि च। ततो मनोमय आत्मा। ततो विज्ञानमय आत्मा। तत आनन्दमय आत्मा। पूर्वपूर्वापेक्षया उत्तरोत्तर आत्मा आन्तरो भवति। अयमेवांशः 'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान्। जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः ॥' इत्यादावभिधीयते। विज्ञानात्मपदेन बुद्ध्यात्मा जीवात्मा च क्रोडीकृतौ। जीवात्मरचनायां बुद्धेः प्रधानत्वात्। 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे.5-8) इति हि श्रुतिः। 'जीवात्मा'पदं हि जीवपदार्थस्य, आत्मपदार्थस्य मिलितस्य वाचकः, यतस्तत्पदं नाखण्डपदम् , किन्तु समस्तपदम्। 'जीव'पदं च 'जीव प्राणधारणे' इति धातुतो निष्पन्नं प्राणाधीनस्थितिकस्य वाचकम्। आत्मपदं च चेतनवाचि। तथा च प्राणोपाधिकचेतनरूपार्थवाचि जीवात्मपदम्। प्राणेति बुद्धीन्द्रियमनसामुपलक्षकम्। एभिरुपाधिभिर्विशिष्ट एव जीवात्मपदवाच्यः। एवञ्चास्मिन्—शरीरे एतादृशो जीवः, तस्य नियन्ता मूलभूतः परमात्मा च उत्तरोत्तरमान्तरतयाऽवतिष्ठत इति सिद्धम्। अयमेवांशः 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्'(ब्र.सू.1-2-12) इत्यत्रोक्तः। 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ' (कठ.1-3-1) इत्युभयोरपि हृदयगुहावृत्तित्वमुच्यते। 'यो वेद निहितं गुहायाम्'(तै.आ.1) 'हृदि ह्येष आत्मा'(प्र.3-6) इत्यादौ प्रत्येकमपि जीवात्मपरमात्मनोर्हृदयहगुहावृत्तित्वमुच्यते। यथा बाह्यं सौरं ज्योतिः बाह्यैः दारुतृणारण्यादिभिरभिव्यक्तो नानारूपधारी नराणामुपकारायावरोहति, तथैव परंज्योतिरूपः परमात्मा जीवबुद्धिमनःप्राणशरीराद्याश्रित्यावतीर्णः नानाविधविचित्रकार्याणि निर्वहते, स्वस्मै स्वप्रीतये क्रीडन्निव। अत एव 'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा'(बृ.4-4-6) इति श्रुतिर्वदति। एकमेव परं तत्त्वम् 'तदैक्षत बहुस्याम्'(छां.6-2-3) 'सोऽकामयत बहुस्याम्'(तै.आ.6) इति संकल्पपूर्वकं नानाभावमापद्यतेति 'तदात्मानं स्वयमकुरुत'(तै.आ.7) 'आत्मकृतेः' 'परिणामात्'(ब्र.सू.1-4-26, 27) इति श्रुतिसूत्रादिभिः प्रतिपाद्यते। अखण्डस्यैकस्य बहुभावः कथम्? इति प्रश्ने 'इन्द्रो मायाभिः पुरुरूप ईयते'(बृ.4-5-19) इत्युत्तरमुच्यते। अत्रैवायस्तास्सर्वेऽपि पण्डितप्रवराः 'माया' पदार्थः कः? इति। वैदिकनिघण्ट्वनुसारेण मायापदस्य ज्ञानपर्यायत्वेऽपि मिथ्यापर्यायत्वमातस्थुरन्ते केवललौकिकप्रज्ञाः। 'शब्दमूलत्वात्' इति वदन्त एव स्वमतं तर्कमूलं प्रतिष्ठापयामासुस्तर्कप्रियाः ॥

नाद्यापि कलहः शान्तः पण्डितानां परस्परम्। प्रबोधिता अपि प्राज्ञैः काले काले महात्मभिः ॥
अणीयसोऽप्यणीयांसमात्मानं मेनिरे बृहत्। तर्कव्यसनिनोऽभूवन्न तपआदिपरायणाः ॥

[यादवप्रकाशमतनिरासः]

**81. जीवाः पृथ्व्यादिभूतेष्वणव इव मिथो भेदवन्तः स्वतोऽमी**
**सन्मात्रब्रह्मभागास्तदिह नियतयः सुस्थिता इत्ययुक्तम्।**
**ऐक्यस्याप्यक्षतत्वादनवधि च सति ब्रह्मणि स्यादवद्यम्**
**सत्यं तच्चेत्यभिज्ञैर्बहिरगणि मृषावादतोऽप्येष पक्षः ॥ ११ ॥**

तत्त्वस्थितिस्तु प्रथमं यथावत् धार्यतां हृदि। ततस्त्वेतत्कथमिति चिन्त्यतां श्रद्धया धिया ॥
आत्मा तु पञ्चधा स्थित्वा तत्तत्कार्येषु वर्तते। परस्परं च संपर्कोऽप्यस्ति सूक्ष्मस्सुदुर्गमः ॥
कार्यानुमेयं सर्वं स्यात् बहुधा चिन्तनेन च। अन्ततो हृदयेशस्यानुग्रहात् तत्त्वधीर्भवेत् ॥
देहाकारेण भूतात्मा प्रथमं ज्ञायते नृभिः। देहात्मभाववादादेरत्रैवोपक्रमोऽभवत् ॥
इन्द्रियाद्यात्मवादाश्चाप्येवं ज्ञेया विवेकिभिः। अन्योन्यमुपकुर्वन्तः शरीरे ते व्यवस्थिताः ॥
एवं सर्वत्र व्याप्त्यैव प्रत्यगर्थस्य, जायते। अहंबुद्धिर्नृणां लोके नान्यथा तद्भवेद् ध्रुवम् ॥
सर्वं वशेऽस्ति तस्यैव मायिनः परमात्मनः। वयं तु मायया बद्धाः कथं ज्ञास्याम उच्यताम्? ॥
दूरीकृत्य वृथा चर्चां त्यक्त्वा शब्दविवर्धनम्। आराधयामस्तं देवं त्यागाद्यैरात्मसद्गुणैः ॥
तत्प्रसादात्परं ज्ञानं चाप्स्यामश्शान्तिमव्ययाम्। तत्प्रसादादृते नान्या गतिरस्ति नृणां ध्रुवम् ॥
बौद्धानां वैदिकानां च ह्यत्रैवास्ति परं रहः। क्रमात्तर्कपरा जाता बौद्धाः श्रद्धां विहाय ते ॥
अतो हैतुकवादेन नष्टास्ते ह्यात्ममार्गतः। वैदिकास्तु तपोहीनाः श्रद्धातश्शिथिलाः क्रमात् ॥
इतोऽपि बहु वक्तव्यम्, क्रमात्सर्वं भविष्यति। दृष्ट्वैकदेशं निर्णेयं न हि किञ्चिच्च साहसात् ॥
धीर्नित्येत्यादिना चैतानर्थान् कालानुसारतः। रिरक्षिषुर्बुद्धिभेदात् आचार्योऽसावसूचयत् ॥ १० ॥

**यादवप्रकाशसंमतं** सर्वत्र स्वाभाविकभेदाभेदवादं विमृशति—**जीवा** इत्यादि। **पृथ्व्यादिभूतेषु अणव इव**=पृथिव्यादिभूतानि यथा सांशानि, तेषु च परमाण्वादिरूपाण्यपि यथा अनन्तानि सन्ति, तथैव **सन्मात्रब्रह्मभागाः अमी जीवाः** सन्मात्रस्वरूपब्रह्मांशभूता अमी जीवाः **मिथः स्वतः**=स्वभावत एव **भेदवन्तः**=परस्परं भिन्नाः। **तत्**=एवं भेदस्य स्वाभाविकत्वादेव **इह**=जगति **नियतयः**=सुखदुःखादि-व्यवस्थाः **सुस्थिताः**=सुप्रतिष्ठिताः। जीवेश्वरभेदस्य, जीवानां परस्परभेदस्य च स्वाभाविकत्वादेव सर्वा अपि व्यवस्थाः सम्यक् रक्षिता इत्यर्थः। ब्रह्म शक्तित्रयविशिष्टम्। तादृशविचित्रशक्तिप्रभावात् ब्रह्मैवांश-त्रयविशिष्टं भवति। एकोंऽशः अचेतनरूपेण, अपरोंऽशः चेतनरूपेण, अन्योंऽशः ईश्वररूपेण च परिणमते। तत्तद्देशे दोषाः, गुणाश्च व्यवस्थिता भवन्ति। अतो न साङ्कर्यम्। एते अंशा औपाधिकाः। अतो ब्रह्मणो न दोषाश्रयत्वप्रसङ्ग इति तस्याशयः ॥

तदेतन्निराकरोति—**इत्ययुक्तमिति**। तत्र हेतुमाह—**ऐक्यस्यापीत्यादि**। **ऐक्यस्यापि**=भेदवत् अभेदस्यापि **अक्षतत्वात्**=स्वाभाविकत्वेन संरक्षिततत्वादेव **सति**=सद्रूपे दोषरहिते **ब्रह्मणि अनवधि**=अनन्तम्

अवद्यम् च=दोषश्च स्यादेव । **तच्च**=तादृशमवद्यं च **सत्यम्**=अबाधितम्, सर्वसत्यत्वाङ्गीकारात् । **इति**=इति हेतोः **अभिज्ञैः**=विशेषज्ञैः **एष पक्षः**=स्वाभाविकभेदाभेदपक्षः **मृषावादतोऽपि**=जगन्मिथ्यात्व-वादिशाङ्करपक्षादपि **बहिः अगणि**=वेदबाह्यत्वेन परिगणितः ॥

**अयमत्र संग्रहः**—प्राचीनानि ब्रह्मसूत्रव्याख्यानानि कान्यासन्? तानि कस्य सिद्धान्तस्यानुकूलानि? तानि कुतो नष्टानि? इत्यादिविषये सन्ति अभिप्रायभेदाः विदुषाम् । **बोधायनोपवर्षौ** पूर्वोत्तरमीमांसयोर्वृत्तिकारा-वास्तामिति कथ्यते । भगवद्रामानुजैः **बोधायनवृत्तिः** उल्लिखिता स्वभाष्यमूलग्रन्थत्वेन । बोधायनशिष्येणोपवर्षेण सा वृत्तिः संगृहीतेति **प्रपञ्चहृदयग्रन्थ** उल्लिखितमित्यादिकं श्रीभाष्यगूढार्थसंग्रहे श्रीस्वामिपादैः विस्तरेण विचारितम् । **उपवर्षः** पूर्वोत्तरमीमांसावृत्तिकारत्वेन **श्रीशङ्कराचार्यैरप्यवर्णि** (ब्र.सू.भाष्य.3-3-53) । एतौ ग्रन्थौ बहोः कालात् पूर्वमेव नष्टौ । कतिपयवाक्यखण्डाः परं तत्र तत्रोद्धृता लक्ष्यन्ते । **द्रमिडभाष्यं** न ब्रह्मसूत्राणाम्, किन्तु छान्दोग्यस्य **ब्रह्मनन्दिना** कृताया **वाक्य**संज्ञकवृत्तेर्भाष्यम् । एतावपि ग्रन्थौ नष्टौ । अद्वैतिनामप्येतौ स्वीयत्वेन संमतौ । परंतु उपवर्षस्य पूर्वोत्तरमीमांसावृत्तिकारत्वात्, तद्गुरुः बोधायनोऽपि तादृश इति ज्ञायते । अतश्चैतावुभौ श्रीरामानुजसिद्धान्तानुकूलाविति ज्ञायते । एतदनन्तरं **भर्तृप्रपञ्चनामकेन** स्वरूपपरिणामाश्रयणेन ब्रह्मसूत्राणां व्याख्या कृता । स वादः बौद्धैः बहुधा खण्डितः—ब्रह्मणः स्वरूपपरिणामे मृदादिवत्कदाचित् नाशोऽनिवार्य इत्यादिरीत्या । अनन्तरकालिकैः सर्वैरपि वैदिकैः बौद्धोक्तदोषपरिहारार्थं बहुधा प्रयत्नः कृतः । **श्रीशङ्कराचार्या** एतन्मतं सूत्रभाष्ये, बृहदारण्यकभाष्यादौ च बहुधा खण्डयन्ति । श्रीशङ्कराचार्यैः जगतो मिथ्यात्वमालम्ब्य, दोषाणामपि मिथ्यात्वात् ब्रह्मणो नाशाद्यापत्तिर्वारिता । दोषाणामौपाधि-कत्वमाश्रित्य स्वभावतो दोषाभावान्न हानिरिति सिद्धान्तः प्रवर्तितः **भास्करेण** । एतन्मते उपाधिः मायाविद्यादि-पदवाच्या सत्यभूता प्रकृतिः । ब्रह्मणः प्रकृतेश्च भेदाभेदौ, जीवब्रह्मणोस्त्वभेदः स्वाभाविकः, भेदस्त्वौ-पाधिकः । **यादवप्रकाशस्तु** ब्रह्मणः शक्तित्रयमभ्युपगम्य, तत्तच्छक्तिविशिष्टांशेन चिदचिदीश्वररूपेण परिणामं चाङ्गीकृत्य ईश्वरांशे दोषाभावं वर्णयामास । **भगवद्रामानुजाचार्यैस्तु** पूर्वरूपानुपमर्देन तत्तदन्तर्यामित्वरूपेण परिणाममङ्गीकृत्य जगद्ब्रह्मणोः शरीरशरीरिभावोपपादनेन दोषपरिहारः कृतः आत्माधिकरणे । एतद्विस्तर-स्समनन्तरं भविष्यति । प्रकृतश्लोके यादवप्रकाशमतं दूष्यते । शङ्करसंमतविवर्तवादे दोषाणां मिथ्यात्वाद् ब्रह्मणो निर्दुष्टत्वं रक्षितम् । यादवप्रकाशेन भेदाभेदयोरङ्गीकारात्, भेदमादाय दोषपरिहारः यदि क्रियते, तदा अभेदस्यापि सत्त्वेन, तदादाय दोषप्रसङ्गः कथं परिहर्तुं शक्येत । न हि दोषादोषौ भवदाज्ञाधीनाविति मन्वानैः श्रीमद्रामानुजैः वेदार्थसंग्रहे 'ब्रह्माज्ञानपक्षादपि पापीयानयं भेदाभेदपक्षः' इत्यदूषि इति संग्रहः ॥

**यद्यपि भास्करमते**ऽपि जीवब्रह्मणोरभेदस्य स्वाभाविकत्वाङ्गीकारेण जीवदोषा ब्रह्मणि प्रसज्येरन्निति दोषस्समानः । न चान्तःकरणोपाधिकृतत्वाज्जीवभावस्य दोषाणामुपाधिगतत्वेन ब्रह्मणि न प्रसक्तिरिति वाच्यम्; अन्तःकरणावच्छिन्नस्य ब्रह्मण एव जीवत्वात् दोषाणां सत्यत्वाच्च ब्रह्मणि वारयितुमशक्यत्वात् । **यादवप्रकाशमते** तु ब्रह्मांशत्वाज्जीवानां दोषसंबन्धोऽपि ब्रह्मण एवेति विशेषात् 'पापीयानयं पक्षः' इत्यभिहितमिति भाव्यम् ॥ ११ ॥

[अनेकशरीरकैकजीववादनिरासः]

82. **देहत्वाद्यैर्विगीतं निखिलमपि मया ह्यात्मवत्, किं च पुंस्त्वात्**
**सर्वे जीवा अहं स्युः ; न यदि, भवति ते गौरवादीत्यसारम्।**
**श्रुत्यध्यक्षादिबाधात् ; प्रसजति च तदा तत्तदैक्यं घटादेः**
**पक्षादेर्वादिनोश्चेत्यलमिह कलहैस्तज्जिगीषादिमूलैः ॥ १२ ॥**

एवं भास्करयादवप्रकाशपक्षौ निराकृत्य **विवर्तवादिमतं** दुषयितुमुपक्रमते—**देहत्वाद्यैरित्यादि**। तत्र सन्ति बहवोऽवान्तरपक्षाः **व्याख्यातॄणां** अभिप्रायभेदात्। ब्रह्मपदवाच्यः परमात्मा एक एव सत्यः, इतरत्सर्वं मिथ्येति एभिः ब्रह्मविवर्तवादिभिरङ्गीकारात्; लोके परिदृश्यमाना व्यवहारव्यवस्था कथं समर्थनीया? इति प्रश्नस्योत्तरतया बहवः पक्षाः पण्डितैः परिकल्पिताः। 'सर्वं अविद्यावशात् संगच्छते' इति सारभूतमुत्तरम्। 'अविद्या नाम का?' इति प्रश्नस्योत्तरमपि बहुविधमुच्यते। 'अघटितघटनापटीयस्याः मायापरपर्यायाः अविद्यायाः सर्वमपि भूषणमेव, न तु दुषणम्' इत्येको मार्गः स्वपक्षसंरक्षणाय तैरादृतः। अतः पक्षभेदाः अनिवार्याः संवृत्तास्तस्मिन् मते। तत्र परमात्मैवाविद्यावशात् जीवो भवति। नानात्वम्, तन्निबन्धनसुखदुःखादिकं च सर्वं तस्यैव मायया कल्पितम्। तत्र 'आत्मा एक एव वर्तते' इत्यङ्गीकारात् एतन्मतस्य 'ऐकात्म्यवादः' इति नाम। अत्रापि 'आत्मा एक एव, शरीराणि तु बहूनि' इत्येकः पक्षः। अस्य 'नानाशरीरकैकात्म्यवादः' इति नाम। 'आत्माऽपि एकः, शरीरमप्येकमेव' इत्यन्यः पक्षः। अस्य 'एकशरीरकैकात्म्यवादः' इति नाम। अयं पक्षः समनन्तर (श्लोक.13) श्लोके निरस्यते। अत्र तु नानाशरीरकैकात्म्यवादः निरस्यते। '**विगीतं निखिलमपि**=विमतं सर्वमपि शरीरम्, **मया हि आत्मवत्**= मयैव सात्मकं भवति; तत्र हेतुः **देहत्वाद्यैरिति**। भोगायतनत्वादिकमादिपदार्थः। तथा च 'विमतं देवदत्तादिशरीरम् मदभिन्नात्मकम्, शरीरत्वात्, मच्छरीरवत्' इति प्रयोगो ज्ञेयः। सुखदुःखादिप्रतिसन्धाना-भावस्तु अन्तःकरणभेदाधीनः। एवं शरीरपक्षकानुमानवत् आत्मपक्षकमप्यमनुमानमाह—**किञ्चेत्यादिना**। **सर्वे जीवाः अहं स्युः**=मदभिन्ना एव भवेयुः। कुतः? **पुंस्त्वात्**=चेतनत्वात्, आत्मत्वाद्वा। 'आत्मानस्सर्वे मदभिन्नाः,आत्मत्वात्, यथा अहम्' इति प्रयोगः। यथा अहं मदभिन्नः, आत्मत्वात्, तथैव सर्वेप्यात्मानः मदभिन्नाः आत्मत्वादेवेत्यर्थः। उक्तार्थे प्रमाणमाह—**न यदीत्यादि**। एवं यदि नाङ्गीक्रियते, तर्हि= **गौरवादि**=आत्मनां नानात्वात् गौरवं वस्तुस्वरूपगतम्। कल्पनागौरवम्, ऐक्यश्रुतिविरोधपरिहारक्लेश इत्यादिकमादिपदग्राह्यम्। एतादृशयुक्तय एव 'बौद्धगृहाद्भिक्षिताः' इत्युपहसन्ति ॥

हन्त पश्यत मायायाः प्रभावं दुरतिक्रमम्। यां वर्णितुं प्रवृत्तास्ते पण्डिता मोहितास्तया ॥

तदेतन्निराकरोति—**इत्यप्यसारमिति**। तत्र हेतुः=**श्रुत्यादीति**। श्रुतिबाधः, अध्यक्षबाधः=प्रत्यक्ष-बाधश्च। आदिपदेन उक्तानुमानेऽप्रयोजकत्वापादने, तद्वारकानुकूलतर्काभावो ग्राह्यः। एवं बाधात् **इदमसारमि-त्यन्वयः**। 'एवमेतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति'(बृ.4-1-20)

('सर्व एत आत्मानः (शं.पा.)', 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मु.1-2-1) (भावाः=जीवाः इति शं. भाष्यम्) 'तोयेन जीवान् व्यससर्ज' (म.ना.1), 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां'(श्वे.6-13) इत्यादौ सर्वत्र जीवानामनेकत्वं कण्ठत एवोक्तम् । अतः ऐकात्म्यवादे प्रथमं श्रुतिविरोधः । लोकानुभवविरोधस्तु स्पष्ट एव । एवम् उक्तानुमानानामप्रयोजकत्वं च; 'शरीरत्वमस्तु, मद्भिन्नात्मकत्वमेवास्तु' इत्यप्रयोजकशङ्कायाम् 'यदि मद्भिन्नात्मकं स्यात्, तर्हि तत् शरीरं न स्यात्' इत्यनुकूलतर्काभावात् न युक्तम् ॥

प्रमाणविरुद्धं लाघवमप्रयोजकमित्याह—**प्रसजतीत्यादि** । घटादीनामपि बहुत्वे गौरवात् जगति द्वितीयो घटो न स्यात् । **तदा लाघवात्सर्वैक्ये घटादेः**=घटपटादेः **तत्तदैक्यं च प्रसजति** ॥ एवमेतत्सर्वमतीत्य लाघवमात्रमुच्येत चेत्, लोके गवाद्या अप्यनेके न स्युः । तेषामनेकत्वे पालनपोषणादिक्लेशात् गौः एक एव स्यात् । एकत्वमेव सहजम्, अनेकत्वं तु मिथ्यैवेति चेत् तत्राप्याह—**पक्षादेरित्यादि**। पक्षसपक्षादिभेदोपि न स्यात् । एवं वादिप्रतिवादिनोरपि भेदो न स्यात् । तत्रापि इष्टापत्तौ=**अलमिहेत्यादि**। वादिप्रतिवादिभेदाभावे, **तज्जिगीषादिमूलैः कलहैः अलम्**=कलहाः मिथ्येति तूष्णीं स्थीयताम् । अत एवोक्तम् महानैयायिकेन भट्टजयन्तेन 'कर्मैकं बुद्धिरप्येका जगत्येकस्सितो गुणः । तच्चैतन्नित्यमित्येताः स्त्रीगृहे कामुकोक्तयः ॥' (न्या.म.3) इति । 'स्त्रीगृहे कामुकोक्तयः' इति कामुकः कश्चिद्धूर्तः स्त्रियं वशीकर्तुं 'कुत्रास्ति पुण्यं वा पापं वा सर्वं कल्पितम्' इत्यादि वदेदित्युपहासः । जयन्तभट्टकालेऽद्वैतमतस्याधिकप्रचाराद्यभावात् तेन विस्तरेण विमर्शो नाकारि ॥

'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' (ब्र.बिं.12) इत्यादिकमपि परमात्मविषयकम् । 'एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥' (म.भा.) इत्यादौ स्पष्टमिदम् । 'भूतात्मा परमात्मा चैव' (सहस्रनाम) इति च प्रसिद्धम् ॥

'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान् । जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः ॥'

इत्येतस्य रहस्यं तु यावन्न ज्ञायते नरैः । तावत्स्यादेव शब्दानां वर्धनं तु परस्परम् ॥
ज्ञानविज्ञानसंपन्नस्सर्वत्र कुशली भवेत् । तयोरभावे सर्वत्र नूनं स्याच्छब्दवर्धनम् ॥
विज्ञानरहितं ज्ञानं अर्थदार्ढ्येऽप्रयोजकम् । ज्ञानहीनं च विज्ञानमनर्थायैव कल्पते ॥
द्वयं हि ब्राह्मणस्योक्तं सर्वशङ्कानिवारकम् । यद्यपि ज्ञानविज्ञानशब्दार्थौ बहुधा कृतौ ॥
तत्तत्प्रदेशानुगुणमाचार्यैर्बहुवित्तमैः । निष्कृष्टो वास्तवार्थस्तु कथ्यते शब्दयोस्तयोः ॥
ज्ञानमेव हि सर्वत्र व्यवहारे प्रयोजकम् । ज्ञानस्य कारणं यत्तु तद्विज्ञानं परिकीर्तितम् ॥
किञ्चैकात्म्यं समष्टौ तु स्याद्व्यवहाराप्रयोजकम् । नानात्मानस्तु व्यष्टौ स्युर्व्यवहारस्य सिद्धये ॥
सांकर्यं नैव हि व्यष्टिसमष्ट्योर्भावयेत्सुधीः । एवमेव विवादानां सूक्ष्मबुद्धिमतामपि ॥

[एकशरीरकैकजीववादनिरासः]

**83. साविद्यं ब्रह्म जीवः स च न बहुतनुर्नेतरे सन्ति जीवाः**
**स्वप्नादेकस्य लोके बहुविधपुरुषाध्यासवत् विश्वक्लृप्तिः।**
**नेतःप्राक् केऽपि मुक्ताः, न परमपि, स तु प्राप्स्यति श्रेय एको**
**मायोत्थौ बन्धमोक्षाविति च मतमसत् सर्वमानोपरोधात् ॥ १३ ॥**

शब्दार्थप्रत्ययादीनां सांकर्यं मूलमुच्यते। प्रदर्श्यते च समये सर्वं विस्तरशस्तथा ॥
इत्यलमेभिर्व्यवहारानङ्गभूतैरप्रयोजकैर्विचारैः ॥ १२ ॥

अथ एकशरीरकैकजीववादं मुख्यवेदान्तिपक्षमनूद्य निराकरोति—**साविद्यमित्यादिना**। **साविद्यं ब्रह्म जीवः**=अविद्याशबलितम्, अथवा अविद्योपहितं ब्रह्मैव जीव इत्युच्यते। अयमंशः पूर्वश्लोकोक्तपक्षेण समानः। विशेषस्तु—**स च न बहुतनुः**=स च जीवः न नानाशरीरकः। एकमेव शरीरं तस्य वर्तते। अत एव **इतरे जीवाः न सन्ति**। जीवोऽप्येकः, तस्य शरीरमप्येकमित्यर्थः। दृश्यमानानामनेकशरीराणां का गतिरित्यत्राह—**स्वप्नादित्यादि**। लोके **एकस्य जीवस्य स्वप्नात् बहुविधपुरुषाध्यासवत्**=स्वप्ने दृश्यमानानां बहुविधानां पुरुषाणां=जीवानां यथा अध्यासः, तद्वत् **विश्वक्लृप्तिः**=जगत्सृष्टिः=जगद्व्यवहाराणां सर्वेषां कल्पितत्वेनैव निर्वाहः भवेत् ॥

एवमात्मन एकत्वात्, लोकव्यवहारस्य चानुवर्तमानत्वात्—**इतःप्राक्केऽपि जीवाः=शुकशङ्कराचार्यादयोऽपि न मुक्ताः**=न मुक्तिं प्राप्ताः। स्वप्नद्रष्टुः जीवस्यैकत्वात्, तत्स्वप्नस्यानुवर्तमानत्वात्, तस्य निवृत्तौ सर्वेषामपि लयात् युगपदेव सर्वेषां मुक्तिः। तावत्पर्यन्तं मुक्तत्वव्यवहारादिकं मायामात्रमेव, न वास्तवम्। अत एव **परमपि**—इतः परमपि **स तु एकः**=तादृशः कश्चित् शुको वा, शङ्करो वा **श्रेयः**=मुक्तिम् **न तु प्राप्स्यति**=नैव मुक्तो भविष्यति। कुतः—**बन्धमोक्षौ**=बन्धः,मोक्षश्च इत्यादि सर्वमपि **मायोत्थौ**=मायानिर्मितौ, तथा प्रतिभासमात्रम्, न वास्तवम्। 'न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतः ॥' (गौड.2-32) इत्यादिवाक्यं अत्र स्मरणीयम् ॥

अहो बत! कियद्द्वैते वञ्चिताः पण्डितोत्तमाः। विचारयन्तो मायां तां निगीर्णा मायया तया ॥
स्वस्वबुद्धिग्रहग्रस्ताः व्यग्रास्तस्यैव साधने। मार्गाद्भ्रष्टाः स्वयं मोहादाचार्यानप्यपातयन् ॥
मुक्तिशास्त्रं च निखिलं बालोपच्छन्दनं जगुः। मायाया वैभवं हन्त ! पश्यन्त्वेतद्विमत्सराः ॥

एतन्निराकरोति—**इति मतं च असत्**=सर्वथा न समीचीनम्। कुतः? **सर्वमानोपरोधात्**=सकलप्रमाणविरुद्धत्वात्, तत्प्रयुक्तलौकिकशास्त्रीयसर्वव्यवहारविरुद्धत्वाच्च अयं वादः शून्यवादतुल्य एव। शून्यवादिनो निरधिष्ठानवादिनः, वयं तु ब्रह्माधिष्ठानवादिनः। अत एवोक्तम् 'नैतद्बुद्धेन भाषितम्' (मां.का.4-99) इति। ब्रह्म तु सत्यमेकमङ्गीकृतमित्यादिकं तु 'वागाडम्बरमात्रम्'। शून्यपदं हि बौद्धैः दुर्निरूपवस्तुपर्यायतैव प्रयुक्तमिति तदवसरे (ईश्वर.43)भविष्यति। अत एव 'नैतद्बुद्धेन भाषितम्' इत्यपि

गतप्रायम्। वस्तुतस्तु तस्य श्लोकखण्डस्य भवत्संमतोऽर्थो नैव विवक्षित इत्यपि तत्रैव व्यक्तीभविष्यति। एवमेव शून्यशब्दोऽपि 'वीरहा विषमश्शून्यः' इति भगवन्नामसु पाठात्, न भवत्संमतार्थक इत्यपि स्पष्टीभविष्यति ॥

**अयं भावः**—लोके विविधान् स्वप्नान् सर्वोऽपि जनः पश्यतीत्यनुभवसिद्धम्। स्वप्ने दृश्यमानाः पदार्थाः परमात्मनैव तादात्विकतया सृष्टाः इति यद्यपि निरूपितं 'सन्ध्ये सृष्टिराह हि' (ब्र.सू.3-3-1) इति। परन्तु स्वाप्नपदार्थानाम् उपादानं किम्? स्थानं च किम्? इत्यादि न निरूपितम्। अत्रैवं विचारमाहुः— विज्ञानात्मा हि जीवः। स तु शरीरं परित्यज्य बहिः न गच्छेत्। 'स्वे शरीरे यथाकामं परिवर्तते' (बृ.4-1-18) इति स्पष्टं शरीरान्तरेवावस्थानं कथितम्। शरीरस्यान्तः महानगरादीनां स्थानं कथं भवेत्? इति चेत्—भगवन्मायां दिदृक्षवे मार्कण्डेयाय भगवता प्रदर्शितम् (भाग.12-9) मायास्वरूपादिकमत्र स्मर्तव्यम्। प्रलयकाले शिशुरूपस्य वटपत्रशायिनो भगवत उदरे जगत्सर्वमपश्यत् मार्कण्डेयः। कथमिदं घटेत? इति चिन्तयते मार्कण्डेयाय या दुर्विभाव्या, सैव भगवन्मायेति सूचितम्। अत एव स्वप्नविषयेऽपि 'मायामात्रम्' (ब्र.सू.2-3-3) इत्यभिहितम्। अतः शरीरान्तरेव भगवन्मायया स्वप्नदर्शनम्। स्थानमस्तु! उपादानं किम्? विज्ञानात्मनो जीवस्य विज्ञानमेवोपादानम्। अत एव सः स्वस्मिन्नेव सर्वं पश्यति। शयितस्य तस्य शरीरतुल्यं शरीरान्तरम्, शत्रुमित्रादीनामन्येषां वा शरीरान्तराण्यपि पश्यति। सर्वाणि तानि वस्तूनि स्वस्मिन्नेव स्वविज्ञानेनैव निर्मितानि। 'प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' (बृ.4-1-17) इति श्रवणात्। एतद्दृष्ट्यैव प्रकरणान्तरे (बृ.6-3-9) 'स्वयं निर्माय'इति श्रुतिः ॥ स्वकर्मणा संपादितत्वात् 'स्वयं निर्माय' इति व्यपदेशः। तर्हि स्वप्नस्रष्टापि जीव एव भवतु इति तु न शंक्यम्; जीव एव यदि स्रष्टा. तर्हि स्वानन्दहेतूनेव स्वप्नान् सृजेत्, न दुःखहेतून्। जाग्रत्प्रपञ्चसृष्टिविषये 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' (ब्र.सू.2-1-21) 'अधिकं तु भेदनिर्देशात्'(ब्र.सू.2-1-22) इत्याक्षेपसमाधानादिकं स्वाप्नपदार्थसृष्टिविषयेऽपि समानं मन्तव्यम्। शिष्टमग्रे (श्लो.27) भविष्यति ॥

जगन्मिथ्यात्ववादे हि **'सृष्टिदृष्टिवादः' 'दृष्टिसृष्टिवादः'** इति वादद्वयं वर्तते। मायैव जगत उपादानं, मायाविशिष्टत्वाद्ब्रह्म उपादानमित्युच्यते। 'साविद्यं केऽपि' इत्यग्रिमसरे (श्लो.27) अयमंशः अनूदितः। मायोपादानकमिदं जगन्मायाकल्पितो जीवः पश्यतीति सृष्टिदृष्टिवादस्याशयः। एतद्दृष्ट्यैव शुक्तिरजतादिस्थले तादात्त्विकरजतसृष्टिरुच्यते। दृष्टिसृष्टिवादे तु 'सृष्टिः' इत्यस्य 'अध्यासः' इत्येवार्थः। जगत्सर्वं रज्जौ सर्प इवात्मन्यध्यस्तं सत् भासते। अत एवायं 'दृष्टिसृष्टि'पक्ष इत्युच्यते। तथा च 'दृष्टिरेव सृष्टिः', न तु सृष्टिः काचन पारमार्थिकीत्यर्थः। 'सृष्टिपूर्विका दृष्टिः'—सृष्टि-दृष्टिः। सृष्टिरन्या, दृष्टिरन्या इत्यर्थः। दृष्टिसृष्टिवादे तु दृष्टिः=दर्शनमेव सृष्टिरित्यर्थः। वस्तुसद्भावे ज्ञानमेव प्रमाणम्। ज्ञानात्पूर्वं पदार्थसद्भावे किं प्रमाणम्? ज्ञानार्थयोस्समानकालिकत्वात्, उभयोर्भेदे प्रमाणा-भावात् नास्त्येव ज्ञानातिरिक्तःपदार्थो वास्तवः, अतो जगन्मिथ्या। अतश्च दृष्टिरेव सृष्टिरित्ययमेव मुख्यवेदान्तिपक्ष इत्युच्यते। एतन्मते सृष्टिवाक्यादिकं बालोपच्छन्दनवाक्यतुल्यं, न स्वार्थे प्रमाणम् ॥

यद्यपि सृष्टिदृष्टिवादेऽपि सृष्टिवाक्यानि जगद्ब्रह्मणोरैक्यतात्पर्यकाणि, न स्वार्थतात्पर्यकाणि, प्रयोजनाभावात्। परं तु दृष्टिसृष्टिवादे तान्यर्थशून्यानीति विशेषः। यत्र यत्राविनाभावस्तत्र सर्वत्रैवमेवान्यतरापलापः दर्शनेषु दृश्यते। 'सहोपलंभनियमादभेदो नीलतद्धियोः' इति मूलभूतो बौद्धानां न्यायः। परन्तु तत्र सर्वत्र 'सहत्व'मेव कूश्माण्डचौर्यन्यायेन भेदसाधकमित्येतत्तत्त्वं तत्तत्प्रकरणे विविच्यते। एवञ्च मायावादिनां मते, आत्मनि जगदध्यस्तं सत् भासते जाग्रदवस्थायामपि। परमात्मनो जगदुपादानत्वमपि जगदध्यासाधिष्ठानत्वमेव। अयमेव च विवर्तवाद इत्यप्युच्यते। एतन्मतेऽध्यासाधिष्ठानं ब्रह्मैव जगत्सत्यत्ववादे जगदुपादानमिति, विवर्तवादपरिणामवादयोर्विशेषः। एवञ्च जाग्रत्प्रपञ्चो यथा ब्रह्मण्यध्यस्तः, एवमेव स्वप्ने विज्ञानात्मनि सर्वमध्यस्तं सत् भासते इति परे, तदेवोपादानमिति वयम्। व्यष्टिकालिकं दर्शनं स्वप्नः, समष्टिकालिकं दर्शनं जाग्रत्प्रपञ्चः। अत एवैकशरीरैकजीववाद एव मुख्यवेदान्तिपक्षः। एवञ्च परमते व्यष्टिस्वप्ने अध्यासाधिष्ठानभूतो विज्ञानात्मा यः, स एव सिद्धान्ते स्वाप्नपदार्थानामुपादानम्। परसंमताध्यासाधिष्ठानस्यैवोपादानत्वात्। एवञ्च स्वाप्नपदार्थानां स्वप्नस्य स्वविज्ञानेन निर्मितत्वेऽपि यथा सुखदुःखादिकं व्यवस्थितरीत्यैवानुभूयते, एवमेव जाग्रत्प्रपञ्चेऽपीति न कुत्रापि लेशतोऽपि साङ्कर्यम्। मायायाः प्रभावं को वा ऊहितुमपि प्रभवतीति परेषामाशयः। अत एव जाग्रत्प्रपञ्चोऽयं हिरण्यगर्भपदवाच्यस्य कस्यचिदात्मनस्स्वप्नः। अत इतरेषां शरीराणां प्रत्येकं जीवरहितत्वेऽपि स्वप्नद्रष्टृजीवविज्ञानेनेव मायाप्रभावात् सर्वापि व्यवस्था संगच्छते। अयमेव च मुख्यो वेदान्तिपक्ष इत्युक्तम्। एतत्पक्षे सर्वमपि प्रातिभासिकमेव, व्यावहारिकसत्यमपि पृथङ्नास्तीत्येतेषामाशयः॥

स्वप्नदृष्टान्तेन जगन्मिथ्यात्वसाधनं तु वृथाश्रममात्रम्। **श्रीशङ्कराचार्यैरेव हि**— 'न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात्? वैधर्म्यात्। वैधर्म्यं हि भवति स्वप्नजागरितयोः। किं पुनर्वैधर्म्यम्? बाधाबाधाविति ब्रूमः। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रबुद्धस्य— 'मिथ्या मयोपलब्धः महाजनसमागमः' इति। न चैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्याञ्चिदप्यवस्थायां बाध्यते' (ब्र.सू.2-2-29) इत्यभाषि। अतः स्वप्नजाग्रत्पदार्थयोरत्यन्तवैलक्षण्यात् स्वप्नदृष्टान्तेन न जगन्मिथ्यात्वसिद्धिः। न चाचार्यवचनम् आपातरमणीयम्। वस्तुतस्तु जाग्रत्प्रपञ्चस्यापि ब्रह्मज्ञानेन बाधः बहुधा आचार्यैर्वर्ण्यत एवेति वाच्यम्; एवमपि स्वाप्नजाग्रत्प्रपञ्चयोर्वैलक्षण्यानपायात्। किञ्च जाग्रत्स्वप्नपदार्थानां सर्वांशेऽपि साम्ये दृष्टान्तदार्ष्टान्तिकयोरविशेषापत्तिः। अपि च दृष्टान्तमात्राद्यदि वस्तुसिद्धिः, तर्हि जाग्रद्दृष्टान्तात् स्वाप्नपदार्थानामपि सत्यत्वं कुतो न स्यात्। जाग्रत्काले बाधान्नैवमिति चेत्, जाग्रत्कालेऽपि 'स्वप्न एव मया नानुभूतः' इति नं हि कश्चिद्वक्ति। न च 'स्वप्नस्त्वनुभूतः, तत्र दृष्टाः पदार्थास्तु न सन्ति' इत्येवानुभवात् पदार्थानां मिथ्यात्वं सिद्ध्यतीति वाच्यम्, 'न सन्ति' इत्यस्य 'इदानीं न सन्ति' इत्येव तात्पर्यात्, तदानीं पदार्थाभावासिद्धेः। एकस्यामवस्थायामनुभूतानामवस्थान्तरे निषेधासम्भवात्। अन्यथा तुरीयावस्थायां दृष्टानां देवतादीनां जाग्रदवस्थायामदर्शनान्मिथ्यात्वापत्तेः। अञ्जनादिना दृष्टस्य निध्यादेः केवलचक्षुषाऽदर्शनान्मिथ्यात्वापत्तेः। किं बहुना, 'दिव्यं ददामि ते चक्षुः' इति भगवद्दत्तदिव्यचक्षुषार्जुनेन दृष्टस्य विश्वरूपस्य केवलचक्षुषादर्शनान्मिथ्यात्वापत्तेः। अतः स्वप्नानुभवो जाग्रदवस्थाया मिथ्यात्वे दृष्टान्तो न भवितुमर्हत्येव॥

[एकजीववादे उपदेशानुपपत्तिः]

84. **स्वस्य स्वेनोपदेशो न भवति, न परब्रह्मणा निष्कलत्वात् , नाविद्या चेतयित्री, स्वतनुसमधिकं वर्ष्म निर्जीवमात्थ ।**

किञ्च 'केन कं पश्येत्' इति रीत्या ब्रह्मज्ञानानन्तरं ज्ञातुरेवापरिशेषात् प्रपञ्चबाधं को वा जानीयात्, को वा वदेत्, यथा जाग्रत्पुरुषः 'मिथ्यैव मया दृष्टो धनागमः' इति स्वप्नमधिकृत्य वदति । अतो भवद्दृष्ट्यापि ब्रह्मज्ञानानन्तरं व्यवहारस्यैवा भावात्, तद्विषयको बाधाबाधविचारः हास्यास्पद एव ॥

किञ्चोपनिषत्सु ब्रह्मसूत्रेषु, गीतायां वा मृदादिदृष्टान्ता एवोच्यन्ते, न कुत्रापि रज्जुसर्पादिदृष्टान्ताः। अत इयं कल्पना बौद्धानुकरणमेव, यतस्त एव स्वप्नदृष्टान्तेन जगन्मिथ्यात्वं साधयन्ति ॥

ननु जगतस्सत्यत्वे सत्यस्याहेयत्वात् जगतोऽपि हेयत्वं न स्यादिति चेत् , ज्ञानिनां हेयोपादेय-विभागस्यैवासंभवात् । अन्यथा ज्ञानिनो द्वन्द्वातीतत्वमेव न स्यात् । तर्हि जगतः कदापि न निवृत्तिः स्यात्, सत्यस्य निवृत्त्यसंभवादिति चेत्, शरीराद्यनुवृत्तिकारणाभावादेव जगदनुभवाधीनदुःखादिनिवृत्तिमात्रेण मुक्त्युपपत्तेः । अधिकमुपरिष्टात् तत्तत्प्रकरणे विचारयामः ॥

ननु च सिद्धान्ते स्वप्नस्य सत्यत्वाङ्गीकारात्, तद्दृष्टान्तेन जगतो मिथ्यात्वं न सिद्ध्यतीत्येव दूषणं कुतो नोच्यत इति चेत्, सत्यम् । परन्तु परैस्तथानङ्गीकारात्, दृष्टान्तस्योभयवादिसम्मतत्वस्यावश्यकत्वाच्च न तथोक्तम् । अपि च—स्वप्नस्सर्वोऽपि सत्य एवेत्यपि न सिद्धान्तसंमतम्, मिथ्याभूतस्वप्नस्यापि दर्शनात्। न च स्वाप्नपदार्थस्य भगवत्सृष्टत्वात् कथं मिथ्यात्वमिति वाच्यम्; जगतः सर्वस्यापि भगवतैव सृष्टत्वाङ्गीकारेऽपि जगत्सृष्टौ सत्यमिथ्याविभागस्य संमतत्ववदेव, स्वाप्नपदार्थविषयेऽपि विभागानपायात् । कथं विभागो ज्ञेय इति चेत्; स्वप्नतत्त्वविदामुपसर्पणेनैव तद्ज्ञातव्यमित्यलमप्रसक्तविषयविस्तरेण ॥

एवं मुख्यवेदान्तिदृष्ट्या सर्वमपि प्रातिभासिकम् । तेषां रज्जुसर्पवल्मीकसर्पौ समानावेवेत्यादिवचनम्, 'समलोष्टाश्मकाञ्चनः' इत्यादिवत् परिणामाभावमात्रविषयकम्, न तु तयोरेकरूपतया दर्शनं वेदान्तिनां भवतीत्यभिप्रायकम् । तदा हि ते भ्रान्ता उन्मत्ता एव वा भवेयुरित्यलमनेनाविवेकिदुराग्रहमूलकचर्चाविचारसंवर्धन-क्लेशेन । एवञ्च 'प्रत्ययः सर्वोऽपि मिथ्या, प्रत्ययत्वात्, स्वाप्नप्रत्ययवत्' इत्यप्यप्रयोजकम् । दृष्टान्तमात्रेण न हि वस्तुसिद्धिः । रज्जुसर्पादिदृष्टान्ता वा, स्वप्नदृष्टान्ता वा श्रुतौ कुत्रापि न प्रदर्शिता इत्युक्तमेव । अन्ततो महामेधाविनः **कुमारिलस्य**— 'युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् । आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहं गतास्तत्र कथञ्चिदन्ये ॥' इति निरालंबनवादान्तवचनमत्रानुसन्धेयम् ॥ १३ ॥

**ऐकात्म्यवादे** उपदेशानुपपत्तिरूपं महदसामञ्जस्यं प्रदर्शयति—**स्वस्येत्यादिना** । अविद्योपहितं ब्रह्मैव जीवः । स च एक एव । स्वप्नदृष्टान्तेनैवैतत्सिद्धिः । स्वप्ने हि शत्रुमित्रादीन् बहून् पश्यति । न हि ते जाग्रत्कालिका एव तत्रागच्छन्ति, तदानीमेव तेषामन्यत्र सत्त्वस्य प्रमाणसिद्धत्वात् । अतो स्वप्नः द्रष्टृपुरुषेणैव ते निर्मीयन्ते । अथापि सुखदुःखादयो व्यवस्थिता दृश्यन्ते । अतश्चैक एव चेतनो मायावशाद्भिन्न

**कश्चित् तत्त्वं ब्रवीतीत्ययमुपनिपतद्भ्रान्तिरुन्मुच्यते चेत्,**
**तादृक् भ्रान्तिः पुराऽपि ह्यभवदिति न ते किं तदैवैष मुक्तः ।। १४ ।।**

इव भवति, न तु ते वास्तविकाः । अतश्चैकमेव शरीरं जीववत्, इतराणि सर्वाणि शरीराणि निर्जीवानि, तेनैकेनैव जीवेन इतराणि शरीराणि जीववन्तीव भवन्ति इति खलु तव मतम् । एवञ्च, परं ब्रह्म एकम्, अविद्या एका, तदुपहितो जीव एकः इति त्रीण्येव वस्तूनि । तेषु कः कस्मै वेदान्तमुपदिशतीति वक्तव्यम्। तत्र **स्वस्य स्वेन उपदेशः न भवति**=आत्मन एकत्वात्, तस्योपदेशकत्वे, स्वस्मै स्वेनैवोपदेशः कर्तव्यो भवति; तत्तु विरुद्धमनुन्मत्तस्य उपदेश्योपदेशकयोर्भेदस्यावश्यकत्वात् । **निष्कलत्वात्**=निर्विशेषत्वात् **परब्रह्मणा उपदेशो न भवति** । असङ्गोदासीनस्वभावं हि ब्रह्म स्वतः । तादृशं निर्विशेषं ब्रह्म कस्मै किमुदिशेत्? **अचेतयित्री**=अचेतना जडा, स्वार्थे णिच्, **अविद्या नोपदेष्ट्री** । अथवा **चेतयित्री**=उपदेष्ट्री **न,** इति च्छेदः । अन्यस्य ज्ञानोत्पादनमेव ह्युपदेशः । शरीराण्यनन्तानि सन्ति किल । तत्तदवच्छेदेन, शरीरान्तरावच्छिन्नं प्रत्युपदेशो भवत्विति, चेत्—अवच्छेदवादे भामतीसंमते तत् भवेत्, न तु त्वन्मते । एकमेव शरीरं जीववत्, इतराणि निर्जीवानि इति किल तव मतम् । यतः **स्वतनुसमधिकम्**= स्वशरीरभिन्नं **वर्ष्म**=शरीरम् **निर्जीवम्**=जीवरहितं खलु **आत्थ**=ब्रवीषि । निर्जीवं शरीरं प्रति कथमुपदिशेत्।।

ननु शरीरान्तरं न निर्जीवम्, एकेन जीवेन सर्वाणि शरीराण्यपि जीववन्त्येव, अतिरिक्तजीवो निरस्यते । यथा वा स्वप्ने शयानः स्वप्नद्रष्टा पुरुषः बहून् जनान् पश्यति । परिदृश्यमानानि सर्वाण्यपि स्वाप्नवस्तूनि स्वप्नद्रष्टृपुरुषविज्ञानेनैव सृष्टानि । अन्यस्य प्रकारस्यासंभवात् । अत एव तेनैव सर्वमनुभूयते, न तु पार्श्वस्थेन । स्वप्ने बहूनां दर्शनेऽपि तेषां प्रत्येकमात्माभावेऽपि व्यवहारव्यवस्था, ज्ञानाज्ञानादिव्यवस्था, सुखदुःखादिव्यवस्था, गुरुशिष्यभावव्यवस्था च यथा मायाप्रभावात् असङ्कीर्णा दृश्यते, तथा जाग्रद्दशायामपि प्रतिशरीरं भिन्नभिन्नात्मनोऽभावेऽपि हिरण्यगर्भात्मनैव सर्वेऽपि व्यवहारा भवन्त्वित्यभिप्रायेण शङ्कते—**कश्चि-दित्यादिना**। सर्वेषां शरीराणां प्रत्येकमात्माभावेऽपि मायावशादेव कश्चिदेवं जानाति—'**कश्चित्** मह्यं मुक्तये **तत्त्वं ब्रवीति**' इति **उपनिपतद्भ्रान्तिः**=**उपनिपतन्ती** स्वयं मायावशात्प्राप्ता **भ्रान्तिः** यस्य, सः संजातभ्रान्तिः **कश्चित् उन्मुच्यते**=मुक्तो भवति । ननु 'कश्चित्तत्त्वं ब्रवीति' इति ज्ञानस्यापि मिथ्यात्वात्, मिथ्याभूतेन तेन भ्रमनिवृत्तिः कथमिति चेत्; रज्जुसर्पभ्रमादौ, 'नायं सर्पः, किन्तु जलधारा' इति भ्रान्त्यापि प्राथमिकी रज्जुसर्पभ्रान्तिर्निवर्तत एव । अतो निवर्तकज्ञानेन प्रमात्मकेनैव भवितव्यमिति नास्ति निर्बन्धः । तत्र भ्रमत्वं न ज्ञायते चेत् तावदेवालम् । अत एव किलाभिज्ञाः अप्रमाण्यज्ञानानास्कन्दितत्वमेव प्रतिबन्धकतावच्छेदक-मिच्छन्ति, न तु प्रमात्वम् । अतः द्वितीयस्य जीवस्याभावेऽपि, स्वप्न इव भ्रमवशादेव उपदेश्यो-पदेशकभावव्यवहारादयः संगच्छेरन्, **चेत्**=इति चेत्—**तादृग्भ्रान्तिः**=एतादृशोपदेश्योपदेशकभावभ्रान्तिः **पुरापि**=एतत्पूर्वकालेऽपि **अभवत्**=अभूदेव किल? गते महति काले बहूनां गुरूणां शिष्याणां च वृत्तत्वात्; एतादृशभ्रान्तेः तेषामप्यावश्यकत्वात्, **इति**=इतिहेतोः पूर्वमेव **तदैव**=तदानीमेव **एषः किम्**=कुतो **न**

[जीवस्य ब्रह्मप्रतिबिम्बत्ववादनिरासः]

**85. तोयाधारेषु दोषाकर इव बहुधोपाधिषु ब्रह्म शुद्धं छायापन्नं विशेषान् भजति, तनुभृतस्तत्प्रतिच्छन्दभूताः।**

मुक्तः? तदानीं तु स मुक्तः, तावता अद्य वर्तमानस्य किमायातम्? इति तु न वक्तुं शक्यम्; जीवस्य एकत्वेन पूर्वं तस्य मुक्तत्वे, इदानीं जगतः अनुवृत्तिरेव न स्यात्। 'नेतः प्राक् केऽपिमुक्ताः' इति किल भवन्मतम्। अत एवं कथनं भवद्वचनविरुद्धञ्च। वस्तुतः जीवस्य एकत्वेऽपि, अन्यशरीरावच्छेदेन सः तथा न जानाति किल! अतः संसारोऽनुवर्तते। स्वप्ने 'एवं कुतोऽभूत्, तथा कुतो नाभूत्?' इति प्रश्नः यथा न कर्तुं शक्यः, अस्मदनधीनत्वात् स्वप्नस्य, तथा स्वप्नतुल्यत्वात् जगतः, स्वप्नवदेव प्रश्नातीतमेव सर्वमिति चेत्; तर्हि दृष्टान्तदार्ष्टान्तिकयोरविशेषप्रसङ्गः। किञ्च स्वप्नवदेव सर्वस्यापि विषयस्य प्रश्नातीतत्वे कस्यापि कुत्रापि विश्वास एव न भवेत्, विचारशास्त्रं व्यर्थं भवेत्, साधनादि व्यर्थं भवेदिति लौकिकः पारमार्थिकश्च सर्वोऽपि व्यवहारः स्तब्ध एव स्यात्। तथा अदर्शनात् जगतोऽस्य स्वप्नवैलक्षण्यमनिवार्यमेव। स्वप्नवदेवाविचारितरमणीयमेव शास्त्रलोकदर्शनादिकमित्यादिकं तु विचारानुपयोगीति उन्मत्तप्रलापतौल्यं स्यादित्यनुपदमेवोक्तम्। शिष्टमग्रे (श्लो.47) वक्ष्यते॥

ग्रन्थास्तु ग्रथनीयास्ते हन्त! ख्यात्यादिसिद्धये। प्रश्नादिकं न कर्तव्यं विचित्रं तव दर्शनम्॥
वशे यस्यैतदखिलं तस्मिन् विश्वासहानितः। वैपरीत्यमिदं सर्वं, रक्षतात्तान् दयानिधिः॥ १४॥

एवमेकजीववादं निरस्य, एकजीववादे प्रतिपादितानां दोषाणां परिजिहीर्षया तैः प्रवर्तितमनेकजीववादं निरसितुमुपक्रमते—**तोयाधारेष्वित्यादि**। अनेकजीववादः द्विविधः, **अवच्छेदवादः**, **बिम्बप्रतिबिम्बवादश्चेति**। तत्राद्यः **भामती**कृतो **वाचस्पतिमिश्रस्य**। द्वितीयो **विवरण**कृतः **प्रकाशात्मयतेः**। तत्र भामतीकृतोऽयमाशयः। यद्यपि ब्रह्मैकमेव सत्यम्, इतरत्सर्वं मिथ्या। परन्तु लोके अनन्तानां जीवानां दर्शनात्, सुखदुःखादिव्यवस्थायाश्च दर्शनात् ब्रह्मण एवाविद्याख्योपाधिवशात् अनेकजीवभावापत्त्या सर्वं संगच्छते। यथा वा आकाशो महान् एक एव सन्नपि, घटाद्युपाधिवशात् 'घटाकाशः' 'मठाकाशः' इत्यादयो भेदव्यवहाराः दृश्यन्ते, तथैव विचित्रकार्यकारिण्याः मायायाः प्रभावात् ब्रह्मैव जीवभेदव्यवहारहेतुर्भवति। अतः अविद्याश्रयः जीव एव, न तु ब्रह्म। ब्रह्मणः नित्यशुद्धबुद्धमुक्तत्वेन अविद्याश्रयत्वं न भवत्येव। न च निष्कलस्य ब्रह्मणः अविद्यावशादेव जीवभावे वक्तव्ये, अविद्यायाः आश्रयो जीवः कथं भवेत्? अविद्यावशाद्धि ब्रह्मणो जीवभावः। सिद्धे जीवे, तस्याविद्याश्रयत्वमित्यन्योन्याश्रयदोषापत्तेरिति शंक्यम्; अत्यन्तासंभाव्यार्थसंपादकविचित्रशक्तियुक्तायाः अविद्यायाः प्रश्नातीतत्वेन, **'दुर्घटत्वमविद्याया** भूषणं न तु दूषणम्' इति न्यायेन ब्रह्मणः स्वयमेव जीवभावमापाद्य जीवाश्रयत्वसंभवान्न दोषः। यथोर्णनाभिः स्वाश्रयान् तन्तून् स्वस्मादेव सृजति, तथेयमविद्या मायापदवाच्या ब्रह्मणो जीवभावं कल्पयित्वा तमाश्रित्य वर्तते। अतो नानुपपत्तिः। एवमविद्यायाः जीव एवाश्रयः, न ब्रह्मेत्यङ्गीकारात् अयं **'जीवाज्ञानवादः'**

**इत्यप्यत्यन्तदुःस्थं, प्रसजति च तदा जीवनाशोऽपवर्गः**
**छाया छायावदैक्यं न भजति, न च तद्दर्शनं ब्रह्मणस्ते ॥ १५ ॥**

इत्युच्यते। एवमविद्यायाः विचित्रकार्यकारित्वात्, साऽऽत्मानमनेकधा प्रकाशयानेकोपाधिवशात्, तदवच्छिन्नस्य ब्रह्मणोऽनेकत्वं कल्पयन्ती जीवनानात्वव्यवहारकारणं भवति । अयमेवावच्छेदवाद इत्युच्यते । परन्तु 'अविद्यारूपोपाधिः मिथ्या' इति विशेषः । **भास्करमते** तु सा सत्येति विशेषः । 'भिन्ना जीवाः स्वतः स्युः' (श्लो.10) इत्यादिनानुपदमेव निरस्तस्य जीवाज्ञानवादस्य तैरेव मन्दाधिकारिकत्वाङ्गीकारादिमं पक्षं भास्करमतनिराकरणेनैव निरस्तप्रायमाचार्यो मन्यते ॥

एवमस्मिन् जीवाज्ञानवादे अन्योन्याश्रयदोषसत्त्वात्, तत्परित्यज्य, ब्रह्मण एवाविद्याश्रयत्वमभ्युपगम्य 'बिम्बप्रतिबिम्ब'वादाश्रयणेन लोकव्यवहारं निर्वहन्ति ब्रह्माज्ञानवादिनो **विवरण**कारादयः । तदिदमनूदितमत्र— **तोयाधारेषु**=जलस्याश्रयभूतेषु पल्वलसरस्तटाकादिषु, नानाविधघटशरावमणिकादिषु वा **उपाधिषु, दोषाकर इव**=चन्द्र इव, **शुद्धं ब्रह्म**=नित्यशुद्धबुद्धमुक्तस्वरूपमपि ब्रह्म **बहुधा**=नानाप्रकारम् **छायापन्नम्**=प्रतिबिम्बितं **सत्, विशेषान्**=विलक्षणाकारान् सुखदुःखादींश्च **भजति**। तस्मात् **तनुभृतः**=**जीवाः तत्प्रतिच्छन्दभूताः**= ब्रह्मप्रतिबिम्बभूताः ॥

तदेतन्निराकरोति—**इत्यप्यत्यन्तदुःस्थमित्यादिना**। दुःस्थत्वमेवाह—**प्रसजतीत्यादि** । **तदा च**= प्रतिबिम्बस्यैव जीवत्वे च **जीवनाशः अपवर्गः प्रसजति**=उपाधिनाशेन प्रतिबिम्बस्य नाशात्, तस्यैव जीवत्वात्, जीवनाश एव मोक्ष इत्यागच्छति। एवञ्च मुमुक्षुर्जीवः स्वनाशार्थं कथं प्रयतेत? ततश्च मुमुक्षुरेव कश्चिदपि न स्यादिति वेदान्तशास्त्रमनारम्भणीयमित्येव स्यात् । **साधनचतुष्टयस्य** संपन्नत्वादेव हेतोः वेदान्तशास्त्रमारंभणीयमिति हि भवद्भिस्समर्थितम्। नित्यानित्यवस्तुविवेकः, शमदमादिसंपत्तिः, ऐहिकामुष्मिकफलेषु वैराग्यम्, मुमुक्षुत्वं चेति खलु साधनचतुष्टयम् । तेषु मुमुक्षुत्वमेव न स्यादिति चेत्, कं प्रति वेदान्तशास्त्रं वक्तव्यम्। ननु उपाधिनाशे प्रतिबिम्बस्य छायावता बिम्बेन सहैक्यमेव, न नाश इति चेत्— **छाया**=प्रतिबिम्बम् **छायावता**=**बिम्बेन सह ऐक्यं न च भजति**=नैव भजति। ननु प्रतिबिम्बं बिम्बादनतिरिक्तं भवतामपीष्टम्। 'दर्पणादिप्रतिहतगतयो हि नायनरश्मयो निजमुखं गृह्णन्ति' इति खलु भवतां भाष्यम्। अतो बिम्बातिरिक्तप्रतिबिम्बस्याभावात् तन्नाशादिप्रसक्तिरपि नास्त्येवेत्यत्राह—**ते**=निर्विशेषवादिनस्तव **तद्दर्शनम्**=प्रतिबिम्बदर्शनम् **ब्रह्मणः न च**=ब्रह्मणो नैव संभवति, निर्विशेषब्रह्मणो दर्शनाद्यनङ्गीकारात्। वस्तुतस्सिद्धान्ते दर्पणे प्रतिबिम्बं नास्त्येव बिम्बदर्शनमात्रं तत्र। परं तु निर्विशेषस्य परब्रह्मणः कुत्र कस्य दर्शनम्? न हि दृष्टान्तकथनमात्रेण दार्ष्टान्तिकसिद्धिः ॥

**पूर्वपक्षिणोऽयं भावः**— 'एकमेवाद्वितीयम्' इत्यनेनात्मनः एकत्वेऽवगते नानात्वानुभवस्य का गतिरिति मूलभूतः प्रश्नः समुदेति । ब्रह्मण एव साक्षाज्जीवरूपेण परिणामात् नानात्वस्यापि सत्यत्वे, नानाजीवगतानां दुःखाज्ञानादीनां ब्रह्मणि साक्षात्प्रसङ्गात्, नानात्वं कल्पितमेवेति वक्तव्यम्। एकस्य नानात्व-

कल्पनम्, ब्रह्मणि दोषासंस्पर्शश्च यदि वक्तव्यः, तर्हि नानात्वमौपाधिकमित्यायास्यति । यथा चन्द्रः एकः शुद्धो गगने विराजते । स एव नानाविधजलाशयेषु, मणिकृपाणदर्पणादिषु वा प्रतिबिम्बितो यदा भवति, तदा उपाधिस्वरूपानुगुणं प्रतिबिम्बा अपि बहुविधा विलक्षणाश्च भवन्ति । एवमुपाधिभूतस्य मण्यादेः पात्रादेर्वा चलनादिना प्रतिबिम्बे चलनदर्शनेऽपि, बिम्बभूते चन्द्रे चलनादीनां लेशतोऽपि संबन्धो न भवति । तथैवाविद्यापरिणामभूतेषु अन्तःकरणरूपोपाधिषु स्वयं नानाभूतेषु यदा ब्रह्म प्रतिबिम्बितं भवति, तदा विलक्षणनानारूपतामापद्यते । उपाधिनिवृत्तौ च प्रतिबिम्बस्यापि निवृत्तिर्यथा, तथैवान्तःकरणरूपोपाधिनिवृत्तौ, तत्प्रतिबिम्बितजीवस्यापि निवृत्तिः । सैव मुक्तिरित्युच्यते । एवञ्चास्मिन् पक्षे सर्वे लोकव्यवहारा अपि रक्षिताः, ब्रह्मणो निरवद्यत्वं च रक्षितमित्ययमेव पक्षः बहूनां संमतः । अयमेव च **ब्रह्माज्ञानवादः**। 'कृपणमध्यमपक्वधियां नृणां मतिविलासविधात्रितयं क्रमात् । परिणतिर्बहुजीवतमस्विता परमपुंसि तमःपरिकल्पना ॥'(सं.शा.3-240) इति **सर्वज्ञात्ममुनिः** । कृपणः=अधमः । 'यथा सौम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' (छां.6-1-4) 'परिणामात्' (ब्र.सू.1-4-27) इति श्रुतिसूत्रादौ प्रतिपादितः **परिणामवादो**ऽधमाधिकारिणां कृते । तथा **भामत्यादौ** प्रतिपादितः **जीवाज्ञानवादो** मध्यमाधिकारिणाम् । **विवरणप्रतिपादितो ब्रह्माज्ञानवादस्तूत्तमाधि**कारिणाम् । अयमेव **मुख्यवेदान्तिपक्ष** इति पूर्वपक्षः ॥

**सिद्धान्तस्तु**—अपरिचितस्य वस्तुनः परिचयाधानाय दृष्टान्तः प्रदर्श्यते सर्वैः । लौकिकेऽपि विषये 'पर्वतो वह्निमान्, धूमात्' इति प्रयोगे, 'यो यो धूमवान् स वह्निमान्, यथा महानसम्' इति दृष्टान्तप्रदर्शनमनिवार्यमेव । परन्तु, तत्र वक्तुः, श्रोतुश्च दृष्टान्तस्य महानसस्य परिचयात्, यावानंशो दृष्टान्तदार्ष्टान्तिकयोस्समान इत्यादेर्लोकत एव निर्णयात् तन्मूलकतया पर्वते वह्निसिद्धिर्निष्प्रत्यूहैव । परन्तु अध्यात्मशास्त्रेषु सर्वैरपि प्रदर्श्यमानस्य दृष्टान्तस्य, दार्ष्टान्तिके कियत् साम्यम्? कियच्च वैषम्यम्? इति निर्णेता कः? सामान्यरूपेण वा दार्ष्टान्तिकपरिचयो यस्य, तेन किञ्चिदिवालोचयितुं शक्यम् । यथा वा पर्वतः परिचितः, वह्निरप्यन्यत्र परिचितः, पर्वते परं सन्दिग्धः । धूमदर्शनात्स निश्चीयत इत्यनुभवः । नैवमत्यन्तापरिचिते ब्रह्मणि दृष्टान्तमात्रात्कस्यचनार्थस्य निर्णयः । एवं स्थितौ उपनिषत्सु, ब्रह्मसूत्रगीतादिषु वा अप्रदर्शिता एव दृष्टान्ताः जलाशयः, घटाद्यवच्छिन्नाकाशः, रज्जुसर्पादिः, मणिकृपाणादिः, एवमेवान्येऽन्ये दृष्टान्ताः तत्तद्वादिभिः तर्कशरणैः दार्ष्टान्तिकपरिचयशून्यैः स्वयमूह्योह्य कथ्यन्ते किल! तेषां दृष्टान्तानां का गतिः? तद्द्वारा दार्ष्टान्तिकपरिचयः कथम्? तत्रापि विशिष्य, 'न तत्समश्चाभ्यधिकश्च दृश्यते न चेशिता नैव च तस्य लिङ्गम्' (श्वे.6-8) इत्येवमुच्यमानस्य वस्तुनो विषये अतिस्थूललौकिकदृष्टान्तैः उपर्युपरि कथं वादान् प्रवर्तयन्ति? कथं वा निर्णयः? उपनिषत्स्वपि ऊर्णनाभिप्रभृतिदृष्टान्ताः कथ्यन्ते किलेति चेत्, सत्यम् ; ते किल दृष्टपरावरा महर्षयः । तैः कियत्यंशे को वा दृष्टान्तः? इति ज्ञायेतैव । नैवं व्याख्याकारादीनां संभवः? 'औपनिषदं ब्रह्म' इति वदता सामान्यरूपेण वौपनिषदुक्तमनङ्गीकृत्य शुष्कतर्कैर्विचारवर्धनं युज्येत वा? सर्वमिथ्यात्वसाधने हि मोक्षसाधनादीनामपि मिथ्यात्वापत्तौ, पुनस्तदुपरि, असत्यात्सत्यसिद्धिसमर्थनादिकम्, तत्र पुनरुपनिषदनुक्तदृष्टान्तप्रदर्शनादिकम् **'वादे वादे जायते तत्त्वबाधः!'** इत्यत्रैव पर्यवस्येदत्यन्तालौकिके

[जीवोत्पत्तिवादनिरासः]

86. एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभागि-
त्याम्नातं तेन जीवोऽप्यचिदिव जनिमानित्यनध्येतृचोद्यम्।
तन्नित्यत्वं तु (हि) साङ्गश्रुतिशतपठितं सृष्टिवादः पुनः स्यात्
देहादिद्वारतोऽस्येत्यवहितमनसामाविरस्त्यैकरस्यम्॥ १६ ॥

विषये। 'औपनिषदम्' इत्यत्रोपनिषत्पदं ब्रह्मविद्यायां मुख्यम्, तत्प्रतिपादके शब्दे त्वौपचारिकमिति सर्वसंमतम्। ब्रह्मणश्शास्त्रैकवेद्यत्वं समनन्तरसरे विचार्यते। अन्ततः व्याख्यापरंपरावलम्बनं कियदित्यपि जिज्ञासुभिर्जनैः गाढं चिन्तनीयम्॥

मुधाग्रहो वा न्यूनस्स्यात् गाढं चिन्तयतां मुहुः। करणत्रयशुद्धिश्च स्यात्सर्वार्थस्य साधिका॥
हैतुकैर्दूषिते ब्रह्मपरिणामे कुयुक्तिभिः। तन्निराकरणार्थं तु तैस्तैर्वादाः प्रवर्तिताः॥
सर्वे ते वैदिकतमाः महामेधाविनस्तथा। तेष्वाद्य **उद्योतकरः** ततस्स्याच्च **कुमारिलः**॥
ततो **मण्डनमिश्रश्च** ततश्चाचार्य**शङ्करः**। ततश्च **भास्करः** पश्चात् **न्यायाचार्य**स्ततः परम्॥
**प्रकाशान्तो यादवश्च लक्ष्मणार्य**स्ततः परम्। एवं बौद्धनिरासाय त्वेभिर्यत्नो महान् कृतः॥
न्यायसिद्धान्तमार्गेण ब्रह्मणस्तु निमित्तताम्। आलम्ब्य तु कृतो यत्नो **नव्यवेदान्तिभि**स्ततः॥
एवं बहुविधान्वादान् दृष्ट्वा बंभ्रम्यतां नृणाम्। मानमत्र तटस्थाःस्युः कियद्वा केन साधितम्॥
त्यक्त्वाभिमानं चिन्त्येरन्, स्पष्टं सत्यं भवेत्तदा। श्रीमद्रामानुजेनैवं सन्मार्गे रक्षिते पुनः॥
**वैतण्डिकेन** कालुष्यं नीते, भाग्यवशाद्भुवः। **हयास्यरूपिणाऽऽचार्यैः** मार्गो निष्कण्टकीकृतः॥ १५॥

प्राचीनपरिणामाद्वैत्येकदेशिनः **ब्रह्मदत्तस्य** (स.सि) पक्षमनूद्य निराकरोति—**एकमित्यादिना**। **ब्रह्म एकमेव नित्यम्, तदितरत्**=तद्भिन्नम् **अखिलम्**=चेतनाचेतनादिकं सर्वम् **तत्र**=तस्मिन् ब्रह्मण्येव **जन्मादिभाक्**=जन्मस्थितिलयभाक् भवति। **इति आम्नातम्**=श्रुत्यैवाभिहितम्। 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' इति। अचिन्मिश्रितानि चेतनानि भूतशब्देनाभिधाय, तेषां ब्रह्मणस्सकाशादुत्पत्त्यादिरभिधीयते। **तेन**=एवं श्रुत्यैवाभिधानेन **जीवोऽपि**=चेतनोऽपि **अचिदिव**= अचित्पदार्थवदेव **जनिमान्**=उत्पत्तिमानेव, न तु नित्यः। एतेन 'प्रजापतिः प्रजा असृजत' (य.सं.3-1-2) 'जीवान् व्यससर्ज' (महा.1-1) इत्यादिश्रुतयः स्वरसा भवन्ति। न चैवं कृतहानाकृताभ्यागमप्रसङ्गः; संसारस्यानादित्वेन, बीजाङ्कुरवत् कर्मप्रवाहस्याप्यनादित्वेन परिहारात्। आसृष्टेराप्रलयमेकस्यैवावस्थानात् सुखादिव्यवस्थोपपत्तिः। प्रथमप्रवृत्तिस्तु प्रकृत्यैव भवति, पश्वादीनामिव। न हि पश्वादयो बुद्धिपूर्वकं प्रवर्तन्ते। 'पुरुषे त्वेवाविस्तराम्' इत्यादिश्रुतिर्द्रष्टव्या॥

तदेतद्दूषयति—**इत्यनध्येतृचोद्यमिति**। वेदैकदेशदर्शनजन्योऽयं वादः। न हि स्वाध्यायविधिरेकदेशाध्ययनं विधत्ते। संपूर्णसाङ्गवेदाध्ययने, नैवमुच्येतेत्याशयः। तदेतदाह—**तन्नित्यत्वमित्यादि**। **हि**=

यस्मात्, प्रसिद्धिसूचको वा 'हिः' । **तन्नित्यत्वम्**=चेतनानां नित्यत्वम् **साङ्गश्रुतिशतपठितम्**—अङ्गशब्देन स्मृतीतिहासपुराणादीनि ग्राह्याणि । 'न जायते म्रियते वा' 'नित्यो नित्यानाम्' इत्यादयः **श्रुतयः**। 'अजो नित्यः शाश्वतोऽयम्' इत्यादयः **स्मृतयः** । उत्पत्तिरपि श्रुत्यैवाभिधीयते । कथं तस्य परित्यागः? इत्यत्र—**अस्य**=जीवस्य **सृष्टिवादः पुनः**=सृष्टिवादस्तु **देहादिद्वारतः**=जीवानां देहस्यानित्यत्वेन, देहस्य सृष्ट्या, जीवस्यापि सृष्टिः औपचारिकी । आदिपदेन संस्कारविशेषः, ज्ञानविकासश्च गृह्येते । उपनयन-संस्कारेण द्विजशब्दव्यवहारविषयो भवति जीवः । एवं ज्ञानवैशद्येनापि तस्य तृतीय(ज्ञान)जन्मव्यवहारोऽपि भवति । अतः जीवाः नित्या एव । अत्र **'अण्ड-कीट-भ्रमर'** न्यायो ग्राह्यः । प्रथममण्डः, ततः कीटः ततो भ्रमरश्च भवति ॥

ननु जीवानामुत्पत्तिरपि श्रुतिसिद्धैव । अतः एतदेव मुख्यमङ्गीक्रियताम् । नित्यत्वश्रुतिः, 'वायुश्चान्तरिक्षं चैतदमृतम्' इति वायोर्नित्यत्वप्रतिपादकश्रुतिवत्, चिरकालस्थायित्वापेक्षया गौणी भवतु । न च कृतहानाकृताभ्यागमप्रसङ्गः; कर्मसिद्धान्ते अव्यवस्थाया दर्शनेन, अनवस्थायाश्चानिवार्यत्वेन च जीवनित्यत्वाङ्गीकारेऽपि दोषोऽपरिहार्य एव । दृश्यते किल साधवोऽपि बहवः बहुधा क्लिश्यन्ति; महापातकिनोऽपि बहवः अत्यन्तसुखिनो दृश्यन्ते । अतः कर्मसिद्धान्तोऽप्यविचारितरमणीयः । एवं जीवनित्यत्वाङ्गीकारमात्रेण दोषपरिहारादर्शनात् सन्तु जीवा अनित्याः । कर्मणामतिविचित्रत्वेन, अतिगहनत्वादनन्तत्वाच्चास्माभिरनवगमेऽपि व्यवस्था वर्तेतैवेति चेत्, एवमेवास्मदनवगतनीत्यैव, नूतनजीवानामुत्पत्त्या वा संसारव्यवस्था भवतु, मास्तु नाम जीवनित्यत्वम् । नच पक्षद्वयस्यापि श्रुतिसिद्धत्वे, अनित्यत्वपक्ष एवाश्रयणीय इति कथं निर्णय इति वाच्यम्; नित्यत्वमेवाश्रयणीयमिति वा कथं निर्णयः? प्रत्युत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानभक्तानां भवतां वेदान्तिनाम् जीवानित्यत्वपक्ष एवास्ति विनिगमकमित्यत्राह—**इत्यवहितमनसाम्** इत्यादि । **इति**=उक्तक्रमानु-सरणेनैव **ऐकरस्यम्** विरुद्धयोः श्रुत्योः एकरसता=एकाभिप्रायकता **अवहितमनसाम्**=सावधानचित्तानाम् पूर्वग्रहग्राहागृहीतानाम् **आविरस्ति**=स्वयमेव स्फुरेत् ॥

**अयं भावः**—आत्मनः नित्यत्वे युक्तयः समनन्तरश्लोके प्रतिपाद्यन्ते । श्रुतिः किमभिप्रेत्यैवं वक्तीत्येतदेवात्र विचार्यम् । जीवस्योत्पत्तिप्रतिपादिकास्तु श्रुतयः अतिविरलाः 'प्रजापतिः प्रजा असृजत' 'तोयेन जीवान् व्यससर्ज भूम्याम्' इत्याद्याः । इदं द्वयमपि न सृष्टिप्रकरणस्थम् । एतदपेक्षया उत्पत्तिनिषेधिन्यो बह्व्यः 'न जायते म्रियते' 'अविनाशी वा अरेऽयमात्मा' 'न हन्यते हन्यमाने शरीरे' 'वेदाविनाशिनम्' इत्याद्याः । साक्षादेव नित्यत्ववादिन्यः—'नित्यो नित्यानाम्' 'नित्यः शाश्वतोऽयम्' इत्याद्याः । 'प्रजा'शब्दे, प्रकर्षेण जायन्त इति प्रजा इति खलु व्युत्पत्तिः । तेन प्रतिक्षणमुत्पत्तिप्रतिपादनात् तेन शब्देन जीवग्रहणं न युक्तम् । 'तोयेन' 'भूम्याम्' इति पदद्वयेनैव सृष्टेः बहुकालानन्तरत्वं स्पष्टं प्रतीयते । अतस्तत्रोक्तमौपाधिकं भवितुमर्हति । अतश्चान्यथासिद्धैरेतादृशवाक्यैः न जीवात्मन उत्पत्तिः प्रतिपत्तुं शक्या । कृतहानाकृताभ्यागम-प्रसङ्गश्च जागरूक एव । अतः अनित्यत्वप्रतिपादकानां च वाक्यानामन्यार्थत्वं स्पष्टम् । अतः आत्मनाम् नित्यत्वमेव श्रुतिस्वरससिद्धम् ॥

यच्चोक्तं कर्मसिद्धान्त अव्यवस्था दृश्यत इति, तत् कर्मसिद्धान्तस्यातिगहनत्वमावेदयति। एवं गहनत्वे तत्र क्रियमाणा आपादनादयस्तस्य गहनतामेव पोषयेयुः, अथवाऽऽक्षेप्तुरल्पप्रज्ञताम्। ईश्वरविषयेऽपि सन्त्येवैतादृशा आक्षेपाः। तावता नेश्वरवादो दण्डसर्पमारणवन्नाद्यापि नाशितः। एतदेवालं एतादृशविषयाणां चिरञ्जीवित्वे। अधिकं तु तत्तत्समये॥

ननु 'विज्ञानघन एव एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति' (बृ.4-2-12) इति विज्ञानात्मनो जीवस्योत्पत्तिर्नाशश्च कण्ठत एवोच्यते। न चेदं पूर्वपक्षवर्णनपरम्; उत्तरत्र निराकरणादर्शनात्। प्रत्युत तद्वाक्यं श्रुत्वा 'अत्रैव मा भगवानमूमुहत्' इति पृष्टवत्यै मैत्रेय्यै 'न वा अरे अहं मोहं ब्रवीमि, अलं वा अरे इदं विज्ञानाय' इति याज्ञवल्क्येन दृढीक्रियते विज्ञानात्मनो नाशः उत्पत्तिश्च। विज्ञानात्मा तु जीव इति संप्रतिपन्नमेवेति, चेत्—जीव एव विज्ञानात्मा इति न, भूतात्मापि विज्ञानात्मैव। यतो ज्ञानात्मन एवैते विकासरूपा भूतात्मादयः। निरूपितं चैतत्पूर्वमेव (श्लो.2)। कोयं भूतात्मा? देवयोनिजविशेषो वा, यः 'भूतोऽमी देवयोनयः' इत्यादावुच्यते? न भेतव्यम्। नात्र स उक्तः। किन्तु 'एतेभ्यो भूतेभ्यः समुत्थाय' इत्युक्तः देहात्मैव भूतात्मा चार्वाकमतसंमतः। **चार्वाकमतं** खलु खण्ड्यते वैदिकैरिति चेत्, देह एव आत्मेति तु खण्ड्यते, न तु देहे अभिव्यक्तः आनखेभ्यः आलोमभ्यश्च पूर्णः प्रतीयमान आत्मा। किं न दृष्टं महात्मनामादिमस्य मनोर्वचनम्? 'योऽस्यात्मनः कारयिता क्षेत्रज्ञं तं प्रचक्षते। यः करोति तु कर्माणि भूतात्मानं विदुर्बुधाः। जीवसंज्ञोऽन्तरात्मान्यः॥' (म.स्मृ.12-12) इति भूतात्मानं जीवात्मानं च प्रत्येकं वदतीदं वचनम्। अयं तु भूतात्मा तदा तदाभिव्यज्यते, लीयते च। एतमधिकृत्यैवोक्तम् 'न प्रेत्य संज्ञास्तीति' इत्यपि। अतः जीवात्मा नित्यः श्रुतिसंमतः॥

ननु कोऽयं जीवसंज्ञोऽन्तरात्मा? महानयं प्रश्नः; उत्तरं तु न सुलभम्। यतोऽमुमधिकृत्यैवाद्यापि विवदन्त एव मनीषिणोऽपि। अमुमेवाभिप्रेत्य 'श्रुत्वाप्येनं वेद न चैव कश्चित्' इत्याहुर्महामनीषिणः। आत्मा नाम कश्चनाखण्डः पदार्थ एव नास्तीति **नैरात्म्यवादिनो** बौद्धाः। तेष्वपि, सर्वव्यवहारहेतुः जगन्मूलभूतः कश्चन धातुः अनिर्वचनीय एवेति **माध्यमिकाः**। स एव विज्ञानाख्यः क्षणिकः धातुः रूपविज्ञानवेदना-संज्ञासंस्कारात्मकसङ्घातभावमापन्नः आत्मेतीतरैः **योगाचारादिभिः** व्यवह्रियते। अतश्च स्कन्धपञ्चकात्मको जीव **इतीतरे बौद्धाः**। बोधात्मको जीवः संकोचविकासवांश्चेति **जैनाः**। चैतन्यस्वरूपः, अहंकाररूपान्तःकरणवशात् 'अहम्' इत्यभिमानविषयः अकर्ता, भोक्ता, पुरुषपदवाच्यः आत्मेति **सांख्याः, योगाश्च**। **चैतन्याश्रयः,** कर्ता, भोक्ता, अहमर्थश्चात्मेति **नैयायिकाः**। अहमर्थातिरिक्तः निर्धर्मकः, कर्तृत्वादिरहितः, नित्यशुद्धबुद्ध-मुक्तस्वभाव आत्मेति **ब्रह्मविवर्तवादिनः**। स्वतः अपरिच्छिन्नोऽपि जीवः आणवकार्मणमायेयमलवाच्येन पाशेन मायापर्यायेण बद्धः अणुः, कर्मपरवशःक्लेशाननुभवति। आणवमलम् अणुत्वापादकम्, कार्मणमलं कर्मवश्यत्वापादकम्, मायेयमलं किञ्चिदज्ञत्वापादकम्। मलत्रयनिवृत्तौ अणुत्वकर्मवश्यत्वकिञ्चिदज्ञत्वानां निवृत्त्या स्वातन्त्र्यविभुत्वसर्वज्ञत्वानामाविर्भावेन पतिपदवाच्येन शिवेन समो भवति जीवः। अतश्च पशुत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिरेव मुक्तिरिति **पाशुपताः**॥ आत्माऽतिसूक्ष्मत्वादणुः ज्ञानस्वरूपः ज्ञानाद्या-

[जीवानामनित्यत्वेऽनुपपत्तयः]

**87.** **स्थैर्यं चेन्नाभ्युपेतं भवभृति न भवेदैहिकार्थप्रवृत्तिः**
**देहान्तत्वे तु धर्म्ये पथि निरुपधिका विश्ववृतिर्न सिध्येत्।**
**आकल्पस्थायिपक्षे कृतमफलतया मुक्तिमार्गोपदेशैः**
**आमोक्षस्थायितायां श्रुतिरनभिमुखी पूरुषार्थे चतुर्थे ॥ १७ ॥**

श्रयोऽहमर्थश्चेति **सविशेषाद्वैतवादिनः सिद्धान्तिनः**। एवं बहुधा विकल्पसहो दुरूह एव स इत्येव वस्तुतत्त्वम्। अथापि साधनोपयोगि यावद् ज्ञातुं शक्यम्, तावदेव पर्याप्तमिति ब्रह्मसूत्रेषु स निरूपितः॥

यद्यपि 'अह'मर्थ एवात्मा, तस्यानहमर्थत्वे सर्वैहिकामुष्मिकव्यवहारविलयप्रसङ्गस्योक्तत्वात्। अथापि इदानीं शुद्धः अहंबुद्धौ न भासते। किन्तु भूतसूक्ष्मपदवाच्यसूक्ष्माचिन्मिश्र एव सः अहंबुद्धावद्य सर्वेषां विषयः। एतद्दृष्ट्यैव स्कन्धपञ्चकात्मको जीव इति वादोऽपि प्रवृत्तः। परन्तु 'अहम्' इति प्रत्यक्त्वानुभवस्य विषयस्तु शुद्धो जीव एव, स तु अद्याचिन्मिश्रोऽपि योगिनां परिशुद्धं तत्स्वरूपं तुरीयावस्थायां भासते। मुक्त्यवस्थायां तु अचिद्वियुक्तमेव तस्य स्वरूपम् 'अहं'प्रतीतिविषयस्सदा भवेत्। प्रत्यक्त्वस्यैवाहंत्वरूपत्वात् तस्य कदाप्यनपायात्। परमात्मनोऽपि 'हन्ताऽहम्' इति अहमित्येवानुभवः। अतः अहमर्थ एवात्मा। स च ज्ञानस्वरूपः ज्ञानाद्याश्रयश्च। अत एव स्वयंप्रकाशः। अतिसूक्ष्मदुरूहपरिमाणः, परमात्मनः शरीरभूतः, ज्ञानाश्रयः जीव इति **सिद्धान्तः**। तत्त्वस्यैवंत्वेऽपि यावन्मुक्ति सूक्ष्माचित्संबन्धस्यावर्जनीयतया तद्विशिष्टवेषेणोत्पत्तिरेव स्वरसेति चेत्, इष्टापत्तिः, औपाधिकोत्पत्तेरदोषत्वात्। **ब्रह्मदत्तेन** तु विपरीतमुच्यत इति तदुक्तं न प्रामाणिकमिति तत्रैव (श्लो.16) प्रदर्शितम्॥ १६ ॥

जीवानित्यत्ववादिनां चतुरःपक्षान् चतुर्भिःपादैर्निराकरोति—**स्थैर्यं चेदित्यादि**। विज्ञानात्मवादिनो बौद्धाः आत्मनः प्रतिक्षणं प्रवाहरूपेणानुवृत्तं प्रवाहतो नित्यं वदन्ति। तन्मते—**भवभृति**=जीवात्मनि **स्थैर्यम्**=स्वरूपतः स्थिरत्वम् **अभ्युपेतं न चेत्**=यदि नाङ्गीकृतं **ऐहिकार्थप्रवृत्तिः**=इहलोकसंबन्धिफलायापि प्रवृत्तिः न स्यात्। अद्य कर्तुरात्मनः नाशात्। वासनासंक्रमादीनामसंभवस्य पूर्व(जड.29)मेव निराकृतत्वात्। **देहात्मवादेऽपि** उपचयापचयादिभिः देहस्य भेदादिदं दूषणं समानम्॥

इन्द्रियप्राणमनोविज्ञानात्मवादिभिः आदेहपातं तेषां सत्त्वाङ्गीकारात् उक्तदोषाभावेऽपि—**देहान्तत्वे तु** देहनाशपर्यन्तमेकस्याङ्गीकारेणोक्तदोषाभावेऽपि, **धर्म्ये पथि**=धार्मिकमार्गे **निरुपधिका**=निरातङ्का **विश्ववृत्तिः**= जगतः पारलौकिकी प्रवृत्तिः **न सिद्ध्येत्**। 'विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा' (कुसु.1-8) इत्ययं पक्षः उदयनाचार्यैः विस्तरेण दूषितः। तत्प्रत्यभिज्ञापनार्थमत्रापि 'विश्ववृत्ति'पदमुपात्तम्। सर्वेषामपि सहजा दृश्यते पारलौकिकी प्रवृत्तिः। आत्मा देहपातानन्तरं यदि नानुवर्तेत, कथमेषां प्रवृत्तेस्संभवः? न हि ते सर्वेऽपि भ्रान्ताः। नापि विफले कश्चित् विवेकी प्रवर्तेत। अतः पारलौकिकः आत्मा अङ्गीकार्यः॥

अस्तु तर्हि आत्मा आप्रलयावस्थायी; पारलौकिकव्यवहाराणां तावतैवोपपत्तेः इतिचेत्— **आकल्पस्थायिपक्षे**—**कल्पः**=प्रलयः—'संवर्तः प्रलयःकल्पः' इत्यमरः। आप्रलयं जीवः अनुवर्तत

इति पक्षेऽपि **अफलतया**=फलरहितत्वेन **मुक्तिमार्गोपदेशैः कृतम्**='अलम्' इत्यर्थे 'कृतम्' इति। 'युगपर्याप्तयोः कृतम्' इति कोशः। पर्याप्तम्=अलम्। मोक्षोपदेशस्य फलाभावात्, 'अलं श्रमेण' इतिवत् प्रयोगः। न च प्रलयस्यातिविलम्बितत्वेन, तावद्विलम्वासहनयाद्यैव मे मुक्तिर्भवत्विती‌च्छया इदानीमेव साधनानुष्ठानस्य संभवात् सफलः मोक्षमार्गोपदेश इति वाच्यम्; प्रलयस्य सर्वनाशरूपत्वेन, 'आप्रलयं जीवो वर्तते' इत्यस्य जीवनाश एव मोक्ष इति पर्यवसानात्, इदानीमेव तदर्थप्रवृत्तिरित्यस्य स्वनाशार्थमिदानीमेव प्रवृत्तिरित्यर्थकतया मोक्षार्थप्रवृत्तेः सर्वथाऽसंभवः। ननु प्रलयस्य बहुकालानन्तरभावित्वात् तदानीमात्मनाशेऽपि मोक्षस्येदानीमेव प्राप्तुं शक्यत्वे तावत्कालं संसारक्लेशनिवृत्त्या मोक्षार्थप्रवृत्तिर्युज्यत इति चेन्न—मोक्षस्य वैराग्यादिपूर्वकं कष्टसाध्यत्वेन, विद्यमानस्य सुखस्य त्यागे प्रवृत्तेरसंभवान्मोक्षोपायोपदेशो व्यर्थ एव स्यात्॥

प्रलयकाले जीवो न नश्यति, किन्तु अहमर्थनाशपर्यन्तं वर्तते। स एव मोक्ष इति चेत्—**आमोक्षस्थायितायां चतुर्थे पुरुषार्थे** एतादृशे मोक्षरूपे पुरुषार्थे—**श्रुतिः अनभिमुखी**=प्रतिकूला वर्तते। 'स स्वराड् भवति' 'एतत्साम गायन्नास्ते' इत्यादिना अहमर्थनाशस्य निराकरणात्। न च अहमर्थो नाम अन्तःकरणम्। तस्य नाशेऽपि तदवच्छिन्नं यच्चैतन्यम्, तन्मात्रं शिष्यत एवेति चेत्, अत्राप्युत्तरमुक्तमेव—'मयि नष्टेऽपि मत्तोऽन्या काचित् ज्ञप्तिरवस्थिता। इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति' (श्री.भा.1-1-1) इति। अन्तःकरणमेव हि अहमर्थः, न तु चैतन्यम्। 'अहं मुक्तः स्याम्' इतीच्छया स्वस्य मुक्त्यर्थं खलु प्रवर्तते सर्वोऽपि। तत्राहमर्थनाशश्चेन्मोक्षः, स्वभिन्नस्य चैतन्यस्य मोक्षश्च स्वनाशेन। अतो मोक्षार्थप्रवृत्तिः स्वस्य कथं स्यात्। न च पुत्रस्य सुखार्थं माता सर्वं त्यजतीति लोके दृश्यते किलेति वाच्यम्; 'न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति' (बृ.4-4-5) इत्यत्र आत्मनः=स्वस्य (पत्याः) कामायैव प्रियो भवतीत्येव भवद्भिः व्याख्यानेन, स्वसंबन्धज्ञानस्यैव प्रीतिहेतुत्वात्। तत्र यदि कश्चित् 'स्व'पदार्थ एव न स्यात्, तदा, प्रीतिरपि न स्यात्॥

ननु स्वपुत्रस्य श्रेयसे माता बहुविधान् क्लेशाननुभवति। स्वसुखाभावेऽपि स्वीयसुखाय त्यागदर्शनात् कथमिदमिति चेत्, असूक्ष्मज्ञो भवान्। तत्रापि स्वस्य सुखार्थमेव माता कष्टं सहते, स्वपुत्रत्वात्तस्य न ह्यन्यपुत्रार्थं त्यागिनी सा। अतोऽन्ते स्वसुखमेव प्रवर्तकम्। यद्यपि यः कश्चिदविवेकी स्वीयार्थं स्वप्राणानपि त्यजेत्, परन्तु तत्रापि स्वीयत्वज्ञानमेव प्रवर्तकम्। अतश्च ऐहिकामुष्मिकसर्वव्यवहारस्याप्यहमर्थ एव परमाधारभूतः। अतः अहमर्थविनाशः अपुरुषार्थपर्यवसाय्येव॥

ननु 'महाभूतान्यहङ्कारः'(गी.7-4) इत्यत्राहङ्कारस्य प्रकृतिविकाररूपताया भगवतैवाभिधानेन तस्य हेयत्वसिद्ध्या मुक्तौ तस्यानुवृत्तिः कथमिति चेत्; **अहङ्कारः अन्यः अहमर्थश्चान्यः**। प्राकृतानां जनानां प्राकृताहङ्कारतत्त्ववशादहंप्रतीतिविषयत्वेऽपि ज्ञानिनामपि अहमिति व्यवहारदर्शनात्, प्रत्युत परमात्मनोऽपि 'हन्ताहम्' इत्यहंप्रतीतेः सत्त्वेन, आत्मनोऽहमर्थत्वानपायात्। ननु परमात्मानोऽहन्त्वमपि मायिकमेवेति चेत्, तदेतदग्रे (नायक.4) विस्तरेण विचार्यते। न च भूमविद्यान्ते 'अथातोऽहङ्कारादेशः' 'अथात आत्मादेशः' इति पृथग्व्यहारात्, आत्मनोऽहमर्थत्वं नास्तीति शङ्क्यम्; भूम्नः, अहमर्थस्य, आत्मनश्च सर्वात्मत्वमुप-

दिश्यते । भूम्नः, आत्मनश्च मध्ये अहमर्थस्योपदेशः । प्रथमं प्रकृतभूमविद्याविषयम्, अन्त आत्मानं च सर्वात्मकमुपदिश्य मध्येऽहंकारादेशस्याभिधानात् भूम्नः, अहमर्थस्य, आत्मनश्चाभेदबोधनार्थमेव तथाभिधानम्। अन्यथात्मनो भूमातिरिक्तत्वमेव स्यात्। अतस्त्रयाणामप्यभेद एव। कक्ष्याभेददृष्ट्या; विचित्रानुभवदृष्ट्या वा पृथगुपदेशः । अहंत्वमन्यत्, अहंपदार्थत्वं चान्यदित्यसकृदुक्तं(श्लो.7) न विस्मर्तव्यम् ॥

ननु! आत्मनोऽहमर्थत्वं सर्वथा नास्तीति न ब्रूमः, 'न चायमेकान्तेनाविषयः, अहं प्रत्ययविषयत्वात्' इति ह्याचार्याः । अतोऽहंपदार्थत्वमन्यत्, अहमर्थत्वं चान्यदित्येव युक्तम्। अन्यथात्मनः प्रत्यक्त्वभानमेव न स्यात्। प्रत्यक्त्वमेवाहन्त्वम्, अहमर्थत्वं च। प्रत्यक्त्वमेव हि स्वप्रकाशत्वम्। अहमर्थानात्मवादस्याप्येतावत्येव तात्पर्यम्। 'अहं' शब्दप्रयोगस्यासार्वदिकत्वात्। अत एव छान्दोग्ये तत्प्रकरणे श्रीशङ्कराचार्यैरपि 'अथातः अहङ्कारादेशः' इत्यादिव्याख्याप्रकरणे 'अहङ्कारेण देहादिसंघातोऽप्यादिश्यतेऽविवेकिभिरित्यतस्तदाशङ्का मा भूदित्यर्थं अनन्तरं आत्मादेशः आत्मनैव केवलेन सत्स्वरूपेण शुद्धेनादिश्यते' इति भाषितम् । अत्र 'देहादिसंघातोऽपि' इत्यपिशब्देन उत्तरत्र 'अविवेकिभिः' इतिशब्देन च, अविवेकिनाम् देहादिसंघातः अहंप्रतीतिविषयः, विवेकिनां तु संघातातिरिक्त एव अहंप्रतीतिविषय इति स्पष्टमुक्तम्। अतोऽहमर्थनाशो न मोक्षः, अहमर्थस्य चैतन्यस्यानुवर्तनात्। अत एव न जीवनाशोऽपवर्गः । अत्र कं दोषं पश्यसि त्वम्? इति चेत् अहो! आगतोऽसि मदीयमेव राजमार्गम्। 'प्रत्यगर्थस्य परमात्मनि पर्यवसानात्' इति हि श्रीमद्भाष्यम् (1-3-8) देहादारभ्य परमात्मपर्यन्तं 'अहं'प्रतीतिर्व्याप्नोति । सर्वत्रापि प्रत्यक्चैतन्यमेवाहमर्थः । अतश्च प्रत्यक्त्वरूपमहमर्थत्वं न कदाप्यपगच्छतीत्येव तत्त्वम्। अधिकमग्रे (नायक.4) ॥

तथा च अहमर्थः अन्यः, अहङ्कारश्चान्यः, अहं पदार्थश्चान्यः । अहमर्थो नाम प्रत्यगर्थः, 'अहम्'इति प्रतीतिप्रयोजकः । अहङ्कारस्तु 'अहम्' इति प्रत्यक्त्वाभिमर्शहेतुभूतं तथाव्यवहारोपयोगि तत्त्वान्तरं प्रकृतिपरिणामविशेषरूपम्। एतदपि न सर्वात्मना हेयम्; गर्वापरपर्यायस्याहंकारस्य, 'अहम्' 'मम' इत्याद्यभिमानादिरूपस्यैव च हेयत्वम्। अहंपदार्थस्तु 'अहम्' इतिशब्दप्रयोगकालिकः । येन केनापि प्रकारेण हेयत्वं तु विद्याया अपि 'ततो भूय इव ते तमो य उ विद्यायां रताः' इति श्रूयत एव । कथमित्यादिकमग्रे (श्लो.33) भविष्यति ॥

ननु भगवता भाष्यकारेणास्य श्रुतेरन्यथाव्याख्यतत्वात्तद्विरुद्धमिदमिति चेत्—

स्मराम्यहं भोः । सकलं तदुक्तं त्वत्तोऽपि सम्यक् तदनुग्रहेण ।
विचारयामश्च तदेतदग्रे (श्लो.33) सहस्व तावच्च कथञ्चिदद्य ॥

यदि नश्येदहङ्कारः साधनाचरणं कथम्? प्रत्येकताभावमूलो ह्यहङ्कारः प्रकीर्त्यते ॥
प्रत्येकता यदा नष्टा कमुपासीत कः कथम्? अहं ब्रह्मास्म्यनुभवस्सोपानं त्वन्तिमं विदुः ॥

अविद्यापदं विद्याविरोधिवाचकमिति परे। विद्यावत् अविद्यापि साधनानुगुणैवेति भगवद्भाष्यकाराः । इतरत्सर्वं व्याख्यानमिति संग्रहः । शिष्टमग्रे (श्लो.33) ॥ १७ ॥

[जीवानां विभुत्वनिरासः]

**88. व्याप्ताः सर्वत्र जीवाः सुखतदितरयोस्तत्रतत्रोपलंभात्**
**निर्वाह्ये देहगत्या गतिरिह वितथा तद्वतोऽपीति चेन्न ।**

ननु अहंप्रतीतौ नात्मा भासते । चैत्रः यं 'अहम्' इति प्रत्यक्तया निर्दिशति, तमेव मैत्रः 'त्वम्' इति पराक्तया निर्दिशति । अन्यश्च 'सः' इति परोक्षतया । अहमर्थः यदि प्रत्यगात्मा, तर्हि तस्य 'त्वम्' 'सः' इति पराक्त्वेन परोक्षत्वेन च निर्देशो न स्यादेव । अतः युष्मदस्मत्प्रत्ययगोचरःपदार्थः चिदचिन्मिश्ररूप एवेति चेत्, न; चैत्रः यं 'अहम्' इति निर्दिशति, मैत्रदृष्ट्या तस्यातीन्द्रियत्वेन 'त्वम्' इति निर्देशासंभवात्। पुरतो विद्यमानं स्थूलं शरीरं दृष्ट्वैव, तद्विशिष्टं चेतनम् त्वमिति मैत्रो वदति । यद्यपि त्वंशब्दोऽपि चेतनैकान्त एव, घटादीनां कदापि केनापि तथा निर्देशादर्शनात्, तथापि परात्मनः सर्वथातीन्द्रियत्वेन, तद्विशिष्टशरीरस्यैव त्वमिति निर्देशसंभवः । न च अहमिति निर्देशोऽपि इदानीं शुद्धस्य न संभवति । किन्तु शरीरविशिष्टस्यैव । तथा च अहंत्वंशब्दयोरेकविषयत्वमागतमेवेति वाच्यम्; अहमिति प्रतीतौ विषयस्येदानीमचिन्मिश्रत्वेऽपि, सर्वेषामपि स्वस्वदृष्ट्या आत्मनः प्रत्यक्तया स्वप्रकाशत्वेन, तदंशस्यैव 'अहम्' इति सर्वैरुल्लेखात् अहंबुद्धौ अचिदंशभानाभावात् । त्वमिति निर्देशे तु न स्वप्रकाशप्रत्यवस्तुनो विषयत्वसंभवः। ननु तर्हि सर्वेऽपि आत्मज्ञानिनो भवेयुरिति चेत्, सत्यम्, सर्वव्यहारमूलकन्दभूतस्यात्मनोऽभाने कस्यापि व्यवहारस्यासंभवादस्त्येव लेशत आत्मप्रकाशस्सर्वेषाम् । अत एव 'न चायमेकान्तेनाविषयः, अहं प्रत्ययविषयत्वात्' इति परैरप्युच्यते । परं तु तदात्मस्वरूपमविद्यावृतं खद्योतप्रायं लेशत एव भासते । ज्ञानिनां तु क्रमशोऽविद्याशैथिल्यानुगुणं विशदतया प्रत्यग्वस्तु भासते । अतः 'अहम्' इति प्रत्यक्त्वांशस्यैव भानात्, तत्तदात्मनां तत्तद्दृष्ट्या स्वप्रकाशत्वात्,प्रत्यगंश एव तत्र 'अहम्'विषयो भवति । स तु अन्यस्य कस्यापि अप्रकाशत्वात्, तदुपोद्बलितं शरीरादिकमेव 'त्वम्'निर्देशविषयो भवतीति नैकः पदार्थः युष्मदस्मत्प्रत्ययगोचरो भवति । अधिकं शब्दापरोक्षवादे भविष्यति । इतरत् पूर्वमेव(श्लो.7) गतम् ॥ १७ ॥

आत्मनित्यत्वविचारं परिसमाप्य, जीवात्मनां अणुत्वं सिषाधयिषुः तत्प्रतिकोटिभूतं वैशेषिकसंमतं विभुत्वमाशंक्य निराकरोति—**व्याप्ता इत्यादिना । जीवाः सर्वत्र व्याप्ताः**=विभुपरिमाणवन्त इति यावत्। तत्र हेतुः—सुखतदितरयोः तत्रतत्रोपलंभात् इति । **सुखस्य, तदितरस्य**=दुःखस्य च **तत्र तत्र**=तत्तद्देशेषु **उपलंभात्**=अनुभवात् । कार्यसामान्यं प्रति हि कालः, देशः, अदृष्टपदवाच्ये पुण्यापुण्ये, ईश्वरश्चेति चत्वारि साधारणकारणानि । 'बाल्ये योऽहं दुःख्यासम्, स एवाहमद्य सुखी' इति कालभेदेनैकस्य प्रत्यभिज्ञानात्, तावत्कालव्याप्त्या यथा नित्यत्वमात्मन आवश्यकम्, तथा काश्यादिदेशभेदेन सुखदुःखादेः प्रत्यभिज्ञानात् तावद्देशव्याप्तिरपि आत्मन आवश्यकी । अल्पदेशव्याप्तौ तस्य मध्यमपरिमाणरूपत्वादनित्यत्वापत्त्या, सर्वदेशव्याप्तिरावश्यकीति तस्य विभुत्वसिद्धिः । अथवा, एकस्य जीवस्य सुखदुःखानुगुणघटनादेर्देशान्तरादिष्वप्यावश्यकत्वात् तत्रात्मनस्सन्निधानमावश्यक (श्लो.19)मिति विभुत्वसिद्धिः । किञ्च सुखदुःखादीनां

**वक्त्री पञ्चाग्निविद्याप्रभृतिषु भविनां स्वस्वरूपेण सिद्धं**
**यातायातप्रकारं श्रुतिरगतिरिमां लाघवोक्तिं शृणोतु ॥ १८ ॥**

बहुषु देहदेशेषु युगपदुपलब्धेः इत्यर्थः। इतरपदेन ज्ञानादीनामपि ग्रहणम्। 'पादे शिरसि च मे वेदना' इति युगपदेव स्थानद्वयेऽपि वेदनानुभवदर्शनात् आत्मनः शरीरे पूर्णव्याप्तिरावश्यकी। आत्मनोऽणुत्वे युगपत् स्थानद्वयेऽवस्थानासंभवात् तथानुभवो न स्यात्। शरीरानुगुणपरिमाणवत्त्वे च, मध्यमपरिमाणवत्त्वेन घटादिवत् नाशप्रसङ्गः। किञ्च जन्मभेदेन शरीराणामपि न्यूनाधिकपरिणामवत्त्वात् आत्मनोऽपि वृद्धिह्रासादिमत्त्व-प्रसङ्गादनित्यत्वप्रसङ्गः। एकस्मिन्नेव जन्मन्यपि बाल्ययौवनाद्यवस्थाभेदेन शरीरस्य वृद्धिह्रासभाक्त्वाच्चा-त्मनोऽनित्यत्वप्रसङ्गः। न चात्मनो विभुत्वे, शरीराद्बहिरपि तस्य सत्त्वेन, शरीराद्बहिरपि सुखदुःखाद्युपलब्धि-प्रसङ्ग इति वाच्यम्। सुखदुःखाद्यनुभवं प्रति शरीरेन्द्रियादीनामप्यावश्यकत्वात्, शरीरबहिर्देशावच्छेदेन इन्द्रियाणामभावात् न सुखाद्यनुभवप्रसक्तिः। तत्र शरीरमवच्छेदकतया, इन्द्रियाद्याश्रयतया च कारणम्, मनः असमवायिकारणसंयोगाश्रयतया कारणम्, इन्द्रियाणि विषयग्राहकानि। इन्द्रियाश्रयत्वम् भोगावच्छेदकत्वं च शरीरलक्षणम्। सिद्धान्तसंमताया जीवाणुत्वसाधकयुक्तेरन्यथासिद्धिमाह— **देहगत्या**=उभयपक्षसंमतया शरीर-गत्यैव **निर्वाहे**=तत्र तत्र जीवगमनस्य निर्वोढुं शक्यत्वे, **तद्वतोऽपि**=देहिनो जीवस्यापि **इह**=तत्तद्देशे **गतिः**=गतिकल्पना **वितथा**=व्यर्था। तथा च तत्कल्पने गौरवम्॥

तदेतन्निराकरोति—**इति चेत्, नेति**। हेतुमाह—**वक्त्रीत्यादि** ॥ **पञ्चाग्निविद्याप्रभृतिषु**= उपनिषत्प्रतिपादितासु ब्रह्मविद्यासु अन्यतमा पञ्चाग्निविद्येति छान्दोग्ये (5-3) बृहदारण्यके (8-2) च पठिता। तत्प्रभृतिषु बहुषु स्थलेषु **भविनाम्**=संसारिजीवानाम् **स्वस्वरूपेण सिद्धम्**=तत्तज्जीवस्वरूपेणैव वर्णितम्, नतु शरीरद्वारकम् **यातायातप्रकारम्**=गमनागमनरीतिम् **वक्त्री**=प्रतिपादयन्ती, **अगतिः**= गत्यन्तररहिता=प्रकारान्तरेण नेतुमशक्या। **श्रुतिः**='आत्मा निष्क्रामति' (बृ.6-4-2) इत्याद्युपनिषद्वाणी **इमाम्**=भवता प्रतिपादिताम् **लाघवोक्तिम्**=लाघववचनम् **शृणोतु** इति नर्मोक्तिः। एकस्य वस्तुनः स्वरूपं यदा अस्मद्बुद्ध्या निर्णेतव्यं भवति, तदा अस्माकं बुद्धिः लाघवगौरवे परिशील्य, लघुपक्षमेवाश्रयेत्। '**अत्केचेन्मधु विन्देत** किमर्थं पर्वतं व्रजेत्' इति न्यायात्। श्रुत्यैव निर्णयेऽर्थे, युक्त्या निर्णयांशस्याभावात् लाघवगौरवचिन्ताया एवानवसरात्, न गौरवप्रसक्तिः॥

'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः (बृ.6-4-2) इति उत्क्रान्तिः, 'स वायुमागच्छति' (बृ.7-10-1) इति गतिः 'स तत्र पर्येति'(छां.8-12-3) इति मुक्तिकालिकविहार इत्यादिकं जीवानां श्रुतिसिद्धम्। इदं सर्वं आत्मनो विभुत्वे न संभवति। मध्यमपरिमाणवत्त्वेऽनित्यत्वप्रसङ्गः। अतः परिशेषादणुत्वसिद्धिः। देशान्तरे सुखदुःखघटनादिकं समनन्तरश्लोके समर्थ्यते। ननु 'एष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथा कामं परिवर्तते' (बृ.4-1-18) इति प्राणाधीनसञ्चारस्यैवात्मनो वर्णनात्, आत्मनः स्वस्वरूपेण गमनाभावात्, 'आत्मा निष्क्रामति' इत्यत्रापि आत्मपदं प्राणोपहितजीवपरमेव। 'स तत्र

[जीवाविभुत्वेऽनुपपत्तिनिरासः]

89. अव्यापित्वेऽपि पुंसोऽभिमतबहुवपुःप्रेरणे यौगपद्यं
ज्ञानव्याप्त्योपपन्नं बहुषु च वपुषोंऽशेषु निर्वाह एषः।

पर्येति' इत्यादिनाभिहितं मुक्तिकालिकसञ्चारादिकमपि, अर्थवादरूपं स्यात्। अथवा भवतां मते मुक्तावपि दिव्यानां शरीरेन्द्रियादीनामङ्गीकारात् औपाधिकमेव विहारादिकमपि स्यात्। अतश्च जीवस्य विभुत्वमेव युक्तमिति चेत्, 'प्राणान् गृहीत्वा' इति वाक्यस्य स्वप्नविषयकत्वात्, संसार्यात्मनः गमनादेरौपाधिकत्व-संभवात्। 'एष आत्मा निष्क्रामति' इति प्रकरणे 'तमुक्रामन्तं प्राणोऽनूत्क्रामति' इति प्रथममुत्क्रामन्तं आत्मानमनुसृत्य प्राणोत्क्रमणस्य प्रत्येकमेव श्रवणात्, जीवस्य प्रत्येकं गमनं सिद्धमेव ॥

यद्यपि जीवात्मन उत्क्रान्तिगत्यादिकं सूक्ष्मशरीरविशिष्टस्यैव, न तु शुद्धस्यात्मनः, परं तु सूक्ष्मं शरीरं बन्धप्रयोजकम्; 'देहयोगाद्वा सोऽपि'(ब्र.सू.3-2-5) इति सूत्रणात्। अतस्तदुत्क्रान्त्यादिकारणं न भवितुमर्हति। किञ्च मुक्तौ जीवात्मनः संपूर्णतया ज्ञानविकासात्, शरीरेन्द्रियादिकमलङ्कारमात्रमित्यङ्गीकारात् न तदधीनत्वं जीवस्याङ्गीकृतम्। एवं मुक्तेरेव सहजस्थितिरूपत्वाद्गमनादिकं स्वरूपकृतमिति जीवस्य स्वरूपतो गमनमनिवार्यम्। अधिकं मुक्तिप्रकरणे विचार्यते। अतो जीवात्माऽणुरेव ॥

'एषोऽणुरात्मा चेतसा वेदितव्यः'(मुं.3-1-9) 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे.5-8) इत्यादौ तु कण्ठत एवाणुत्वमुच्यते। यद्यप्युपनिषद्भाष्यकारैः परमात्मप्रकरणत्वात् एषोऽणुरित्यादिः परमात्मपरो व्याख्यातः, अणुः—दुर्ज्ञेय इत्यर्थ इति। परन्तु समनन्तरमन्त्रस्य जीवपरत्वात् **श्रीभाष्यकारैः** जीवपर एव व्याख्यातः (श्री.भा.2-3-23) ॥ **श्वेताश्वतरश्रुतौ** अवरपदश्रवणाज्जीवपरत्वे न विवादः। अरा एवाराः रथचक्रे नेमेः नाभेश्च संघटकाः दीर्घदारुखण्डाः। तस्याग्रम्—तदेकदेशः। रथो हि महान्। तस्य चक्रं ततोऽप्यल्पम्। चक्रस्याराः ततोऽप्यल्पाः। तस्याग्रं ततोऽपि सूक्ष्मम्। तावत्प्रमाणको जीव इत्यर्थः। 'वालाग्रशतभागस्य' इत्यत्राप्येवमेव। 'वालाग्रम्' इति अत्यल्पपरिमाणस्य संज्ञेति केचित्॥ १८ ॥

ननु जीवस्याविभुत्वे, एकदैव अनेकावयवानां प्रेरणादिकं कथं भवेत्? एवं सौभर्यादिमहर्षिभिः युगपदनेकशरीरग्रहणपूर्वकं भोगानुभववेलायाम्, सर्वशरीरसंबन्धः अणोरेकस्य जीवस्य कथं भवेत्। एतन्निर्वाहार्थं जीवस्य विभुत्वमनिवार्यं चेत्, वचनानि तदनुगुणानि नेतव्यानीत्यादिशङ्कां परिहरति—**अव्यापित्वेऽपीत्यादिना**। **पुंसः**=जीवस्य **अव्यापित्वेऽपि**=अविभुत्वेऽपि **अभिमतबहुवपुःप्रेरणे**=सौभर्यादिभिः स्वाभिमतानामनेकवपुषां प्रेरणादौ **यौगपद्यम्**=एककालिकत्वम् **ज्ञानव्याप्त्या**=धर्मभूतज्ञानव्याप्त्या **उपपन्नम्**=उपपत्तिमत्=युक्तं भवति। **वपुषः**=शरीरस्य **बहुषु अंशेषु च**=अनेकेष्ववयवेष्वपि युगपत्प्रेरणादौ **एषः निर्वाहः**=जीवस्य अविभुत्वेऽपि धर्मभूतज्ञानव्याप्त्यैव निर्वाहः ज्ञेयः ॥

ननु धर्मभूतज्ञानमपि मुक्तेः पूर्वं स्वयं विषयान् न व्यापुयात्, किन्तु इन्द्रियादिद्वारैव। त्वगिन्द्रियस्य शरीरे सर्वत्र व्याप्त्या तद्द्वारा धर्मभूतज्ञानस्यापि शरीरव्याप्त्या युगपदनेकावयवप्रेरणं युज्येत। न च

**यच्चादृष्टं क्रियां स्वाश्रययुजि तनुतेऽन्यत्रतत्कृद्गुणत्वात्**
**इत्येतत् सिद्धसाध्यं विभुन इह हि तत् बह्मणः प्रीतिकोपौ ॥ १९ ॥**

सुषुप्ताविन्द्रियाणामुपरत्या त्वगिन्द्रियस्याप्युपरतिरनिवार्या । अतस्तद्द्वारा कथं ज्ञानव्याप्तिरिति वाच्यम्, प्राणस्य सर्वशरीरव्याप्त्या तद्द्वारैव व्याप्तेस्संभवात् । एवमपि शरीरान्तरे कथं ज्ञानं व्याप्नुयात्? तथा च सौभरिशरीरेषु कथं धर्मभूतज्ञानेन प्रवृत्त्यादिसंभवः? एवमनेकशरीरेष्वपि अहमिति प्रत्यक्त्वानुभवो वा कथम्? इति चेत्, योगप्रभावजन्यादृष्टविशेषादेव सर्वशरीराधिष्ठानसंभवात् सर्वशरीरेष्वपि भोगसंभवः ॥

ननु एतच्छरीरान्तर्वर्तिजीवस्य धर्मभूतं ज्ञानं शरीरान्तरं यदि व्याप्नोति, तदा शरीरद्वयमध्यप्रदेशेऽपि धर्मभूतज्ञानसत्त्वमावश्यकम् । एवञ्च तत्रस्थपदार्थैस्साकं धर्मभूतज्ञानसंबन्धोऽप्यनिवार्यः । तथा च तेषामपि भानप्रसङ्ग इतिचेत् ; यथाकथञ्चिद्धर्मभूतज्ञानसंबन्धो न भानं प्रति प्रयोजकः, किन्त्विन्द्रियसन्निकर्षादिमूलकः विषयविषयिभावरूपसंबन्ध एव भानप्रयोजकः शरीरद्वयान्तराले एतादृशसंबन्धाभावान्न तेषां भानप्रसक्तिः । सर्वमिदं अदृष्टविशेषवशात्, योगप्रभावात्, ईश्वरेच्छया वा संगच्छत इति न दोषः । अनेकशरीरेषु प्रत्यक्त्वानुभवः कथमिति चेत्; सर्वत्रैतादृशविषयेषु द्वितीयचतुर्थश्लोकटिप्पण्यवधेया ॥

नन्वेवमपि, जीवस्याणुत्वं न संभवति । जीवस्याणुत्वे, धर्मिणं परित्यज्य धर्माणां पृथगवस्थानस्य सिद्धान्तेऽनङ्गीकारेण तददृष्टानामपि शरीरान्तरेव कार्यकारित्वात्, शरीरबहिर्देशावच्छेदेन फलजनकत्वं न संभवेदेव । सौभर्यादौ योगजधर्मविशेषप्रभावात् अनेकशरीराधिष्ठानादिसंभवेऽपि सामान्यतस्सर्वेषामपि जीवानां पुण्यपापानुगुणकार्याणां देशान्तरेऽप्यावश्यकत्वात्, दर्शनाच्च, जीवस्याविभुत्वे कथं तन्निर्वाहः? न चादृष्टं स्वस्याधारभूतं जीवं परित्यज्य स्वातन्त्र्येण बहिर्गन्तुं प्रभवति; गुणानामाश्रयं त्यक्त्वा गमनाद्यसंभवात् । धर्माधर्मात्मकस्यादृष्टस्यात्मगुणत्वात् । धर्माधर्मौ स्वाश्रयसंयुक्तदेशे एव स्वकार्यजनकौ, क्रियाहेतुगुणत्वात्, गुरुत्ववत् इत्यनुमानस्य सत्त्वात् । गुरुत्ववद्द्रव्यसंयुक्तं द्रव्यान्तरं गुरुत्ववद्द्रव्यगतवेगवशात् चलतीति लोके दृष्टम् । तत्र द्रव्यान्तरे जायमानचलनादिक्रियां प्रति गुरुत्ववद्द्रव्यसंयोगः अभिघाताख्यः कारणम् । तत्रापि अभिघातं प्रति गुरुत्वं कारणम् । गुरुत्वाभावे अभिघातस्यासंभवात् । तत्र गुरुत्वस्य स्वाश्रयद्रव्यसंयोग-द्वारैव द्रव्यान्तरे क्रियाजनकत्वं दृष्टम् । एवमेव जीवगतधर्माधर्मयोरपि, शरीरबहिर्देशावच्छेदेन फलजनकत्वं वक्तव्यं चेत्, तद्देशे तदनुगुणधर्माधर्मवदात्मसंयोगो वाच्यः । आत्मनः अणुत्वे तन्न वक्तुं शक्यम् । अतः आत्मनो विभुत्वमनिवार्यमिति शङ्कते— **यच्चेत्यादिना**। **यच्च**=यदपि, **अदृष्टम्**=धर्माधर्मरूपम् **स्वाश्रययुजि**= स्वाश्रयभूतद्रव्यसंबन्धवति **अन्यत्र**=अन्यस्मिन् देशे **क्रियाम्**=स्वसाध्यक्रियाम् **तनुते**=करोति । तत्र हेतुः— **तत्कृद्गुणत्वात्** इति । तादृशक्रियाजनकगुणत्वात् इत्यर्थः । गुरुत्वं दृष्टान्तः । **इति यच्च** इति पूर्वेणान्वयः। एकस्य जीवस्यादृष्टानुरोधेन देशान्तरवर्तिनां पुत्रमित्रादीनां शरीरेषु आरोग्यप्राप्त्यादेः, शत्रुशरीरेषु रोगादि-जनकत्वस्य तन्त्रमन्त्रशास्त्रसिद्धम् । न च सुकृतदुष्कृताधीनधर्मभूतज्ञानव्याप्त्यैव सर्वं सङ्गच्छत इति वाच्यम्; धर्मभूतज्ञानस्य धर्माधर्मप्रतिनिधित्वासंभवात् । धर्मभूतज्ञानसंकोचविकासादेः अदृष्टाधीनत्वात् ।

सुषुप्तौ धर्मभूतज्ञानस्यासत्कल्पत्वेन, तदानीमप्यदृष्टस्य श्वासोच्छ्वासाद्यर्थं कार्यकारित्वावश्यकत्वाच्च । अतः जीवस्य विभुत्वमन्तरा न निर्वाह इत्याशयः ॥

एतद्दूषयति—**एतत्सिद्धसाध्यमिति** । **एतत्**=उक्तमनुमानम् । **सिद्धसाध्यम्**=सिद्धं साध्यं यस्येति बहुव्रीहिः । सिद्धसाधनदोषग्रस्तमित्यर्थः । विवृणोति—**विभुन** इत्यादिना । **हि**=यस्मात् **तत्**=अदृष्टम् **इह**=एतत्सिद्धान्ते पर्यवसानदृष्ट्या **विभुनः**=विभुपरिमाणवतः **ब्रह्मणः**=परमात्मनः **प्रीतिकोपौ**= अनुग्रहनिग्रहरूपौ । 'तत्' इति सामान्यनिर्देशे सत्यपि पुण्यपापयोरुभयोरपि अदृष्टपदवाच्यत्वेन द्विवचन-निर्देशः । सर्वत्र सर्वफलप्रदस्स एव हि, 'कर्माध्यक्षः' (श्वे.6-1) इति श्रुतेः ॥

**अयमाशयः**—तत्तज्जीवसुखदुःखादिकं न केवलं तदीयकर्मानुगुणमेव भवेत्; किन्तु तत्पुत्रमित्र-कलत्रादीनामपि परस्परं तत्र फलभागित्वस्यावर्जनीयतया तेषां कर्मानुगुणमेव तद्भवेदिति किल प्रत्यक्ष-सिद्धम् । गृहयजमानस्यायुर्निर्णयं तत्पत्नीपुत्रादिकर्मानुगुणं किल निश्चिन्वन्ति दैवज्ञाः । अतः देशविदेशेष्वपि तत्तज्जीवकर्मानुगुणकार्याणि यदि निर्वाह्यानि, तदा तत्तददृष्टस्य तत्रतत्र कार्यकारित्वं वक्तव्यम् । अदृष्टं च धर्माधर्मौ आत्मगुणौ । तौ च स्वाश्रयं परित्यज्य अन्यत्र न गच्छेताम् । अतः गत्यन्तराभावात् आत्मनः सर्वगतत्वम्=विभुत्वं वक्तव्यमित्याक्षेपः । **परन्त्विदं** जीवस्य विभुत्वमन्तरापि प्रतिपादयितुं शक्यते । धर्माधर्मयोः स्वरूपं हि अतीव दुर्गममिति सर्वसंप्रतिपन्नम् । अत एव तयोः कार्यनिर्वर्तनक्रमोऽपि ततोऽपि दुर्गम एव । अत एव किल तयोरदृष्टमिति संज्ञा । 'अदृष्टम्' इति यस्य स्वरूपम्, तदधिकृत्य चिन्ता न कर्तुं शक्यते । यथा कार्यं दृश्यते, तदनुगुणशक्त्यादिकमपि तत्कारणस्याङ्गीकृत्य तूष्णीं स्थातव्यम् । 'कर्माध्यक्षः सर्वभूताधिवासः साक्षी'(श्वे.6-11) इति परमात्मानं वदति श्रुतिः । स तु विभुरिति संप्रति-पन्नम् । 'नित्यं विभुं सर्वगतम्' (मुं.1-1-6) इति श्रुतिरपि । स च सर्वान्तर्यामी । देवतावादे च तत्तत्कर्मभिः देवताप्रीतिकोपावेव फलप्रदत्वेन अङ्गीकृते । 'विग्रहो हविरादानं युगपत्कर्मसन्निधिः । प्रीतिःफलप्रदानं च देवतानां न विद्यते' इति कर्मब्रह्मवादिनः । वेदान्तिनस्तु सर्वमस्ति देवतानामिति वदन्ति । एतत्तत्त्वमग्रे (नायक.68) व्यक्तीभविष्यति । अतश्च भक्तानां दृष्ट्या सर्वसाक्षिणः सर्वान्तर्यामिणः कर्माध्यक्षस्य परमात्मनोऽनुग्रहनिग्रहयोरेव सर्वकर्मणां पर्यवसानं कर्तव्यम् । इतरत्सर्वं यदा न किञ्चिद्ज्ञायते, तदा आस्तिकेन, तूष्णीं स्थातव्यम् अथवा तीव्रतपोनिष्ठेन भवितव्यम् ॥

तपोभिरपि दुर्ज्ञेये चर्चया किं भविष्यति । तप एव किलार्याणां परमं धनमुच्यते ॥

एवमागतां विचारप्रक्रियां अविमृशन्तःकेचन, एतदुपर्यपि विचारं प्रवर्धयन्तः—यदि परमात्मनः अनुग्रहनिग्रहावेव पुण्यपापौ, तर्हि तयोः जीवनिष्ठत्वं कथमिति स्वयं पृच्छन्तः, 'विषयतासंबन्धेन जीवनिष्ठौ' इति बालिशभावेन नवीनन्यायकौतूहलेन चोत्तरयन्तस्तृप्यन्ति । विषयतासम्बन्धस्तु वृत्त्यनियामको नैतादृशं भारं वोढुं लेशतोऽपि प्रभवेदित्यलमनया शुष्कतर्कमय्या चर्चया भगवन्निग्रहहेतुभूतया ॥

यदीतोऽप्यस्ति कुतूहलम्—तर्हि यतिष्ये यथाशक्ति । अध्यात्मक्षेत्रे कुतूहलम्, आलस्यम्, अहङ्कारः, उद्वेगः, असूयेत्यादिकं तत्त्वनिर्णये प्रथमशत्रुरिति सदा स्मर्तव्यम् । केवलैर्वचनैर्न कोऽप्यर्थो विनिश्चितो भवेत्

[जीवविभुत्वानुमाननिरासः]

90. इष्टं प्रादेशिकत्वं विभुषु जनिमतां बुद्धिशब्दादिकानां
तेनादृष्टं च तादृक् न यदि, तव सुखाद्याश्रयव्यापकं स्यात्।
तस्मात् तत्स्वप्रदेशान्वयवति जनयेत् स्वं फलं यत्ननीत्या
भ्रातृव्यादौ च पीडां न घटयितुमलं, किं विभुत्वेन भोक्तुः ॥ २० ॥

सर्वमिदं जगत् क्रियाप्रतिक्रियारूपम्। जलं स्वसंयुक्तं आर्द्रीकरोति। वह्निः स्वसंयुक्तं भस्मीकरोति। परं तु जलेनार्द्रता न सर्वत्र, पद्मपलाशे न ह्यार्द्रता। न ह्याकाशो वह्निना भस्मीभवति। अतः जलस्यार्द्रीकरणं, तत्संयुक्तवस्तुनः आर्द्रीभवनस्वभावाधीनम्। एवं वह्नेर्दाहकत्वमपि तत्संयुक्तवस्तुस्वभावप्रयुक्तम्। तद्वदेव मनुजैः क्रियमाणानि कर्माणि, तदानीं क्रियारूपाणि, चेतने कञ्चनातिशयं जनयन्ति, यदधीनं कालान्तरे सुखादिकं भवति। यथा वा अनुभवेन कालान्तरस्मरणानुकूलः संस्काराख्यः अतिशयो जीवे जायते। अतः पुण्यपापादिकमपि यत्र फलजनकम्, तत्रैव स्युरित्यत्र न संशयः, कार्यकारणयोस्सामानाधिकरण्यनियमात्। परमात्मनः कर्माध्यक्षत्वात्, जीवस्याणुत्वेऽपि देशान्तरकालान्तरफलजनकत्वमात्रोपयोग्याकारः परमात्मनोऽभिधीयते, न तु परमात्मन एव पुण्यपापाधारत्वम्। अन्यथा बहूनां व्यवहाराणां शास्त्राणां च वैयाकुली स्यात्। यावानाक्षेपः, तावानेव परिहारः। अन्यथा संस्कारादयोऽपि न जीवगुणाः स्युः, सर्वशक्तस्य परमात्मनस्संकल्पादेव कालान्तरे स्मरणादीनां निर्वाहात्। अतः जीवानामणुत्वप्रयुक्ताक्षेपपरिहारोपयोग्याकारमात्रं परमात्मनः संमतमाचार्याणाम्। इतोऽप्यधिकं समनन्तरश्लोके अद्रव्यसरे च (श्लो.76)। नन्वेवं सति रचनानुपपत्त्यधिकरण (ब्र.सू.2-2-1) श्रीभाष्यविरोध इति चेत्, तत्तु वर्तत एव। तदनुगुणजीवगतातिशयोऽप्यावश्यकः, स्मृतिहेतुसंस्कारन्यायेन इत्येतावन्मात्रमत्रोक्तम्॥

अधिकार्यादिभेदेन पुण्यपापादि भिद्यते। शिशूनां पुण्यपापादि पित्रोरेवेति कीर्त्यते॥
कथमेतौ चेतनानां सुखदुःखादिकारणम्। सामानाधिकरण्यं स्यात् कार्यकारणवस्तुनोः॥
व्यवस्थापकदृष्ट्या तु स हि सर्वस्य कारणम्। परस्पराविरोधेन नेयं सर्वं मनीषिभिः॥
क्रियाप्रतिक्रियारूपं सर्वं कर्मोच्यते बुधैः। कथं तद्बन्धयत्यस्मान् मोचयत्यथवा कथम्॥
सर्वं च विज्ञानमयं तदधीनं जगद्भवेत्। निर्णयो ह्येतदायत्तः न शब्देन न चर्चया॥ १९॥

जीवस्य विभुत्वाङ्गीकारेऽपि, न तवेष्टसिद्धिरिति प्रदर्शयति—**इष्टमित्यादिना**॥ **विभुषु**=विभुपरिमाणवत्सु आत्मसु आकाशे च **जनिमतां बुद्धिशब्दादिकानाम्**=उत्पत्तिमतां ज्ञानशब्दादिगुणानाम् **प्रादेशिकत्वम्**=एकदेशवर्तित्वरूपम् अव्याप्यवृत्तित्वम् **इष्टम्**=भवतस्संमतम्। **तेन**=एवमात्मगुणानामव्याप्यवृत्तित्वेन **अदृष्टं च** अदृष्टपदवाच्यं पुण्यपापादिकमपि **तादृक्**=अव्याप्यवृत्त्येव भवेत्। **न यदि**=एवमनङ्गीकारे **तव**=त्वन्मते **सुखादि**=सुखदुःखादिकमपि **आश्रयव्यापकं स्यात्**=आश्रये आत्मनि सर्वत्र व्यापकं स्यात्, शरीरबहिर्देशावच्छेदेनापि सुखादिकमनुभूयेत। **तस्मात्**=एवमात्मगुणानां प्रादेशिकत्वात् **तत्**=अदृष्टम् **यत्ननीत्या**=प्रयत्न-

[जीवविभुत्वेऽनुपपत्तयः]

91. **स्वादृष्टोपार्जितत्वात् विभुषु यदवदन् विग्रहादेर्व्यवस्थां**
**तच्चैवं निर्निमित्तं, तत इह न कथं सर्वतस्सर्वभोगः।**

न्यायेन **स्वप्रदेशान्वयवति**=स्वस्य अदृष्टस्य यः प्रदेशः जीवस्य अवच्छेदकः शरीरदेशः, **तदन्वयवति**= तत्संबन्धवत्येव वस्तुनि **स्वं फलम्**=स्वीयं कार्यम् **जनयेत्**=उत्पादयेत्, न तु शरीरसंबन्धरहिते जनयेत्। सुखादिकं यद्यपि आत्मनि विभौ जायमानमपि शरीरावच्छेदेनैवानुभूयते। प्रयत्नस्तु, शरीरबहिर्देशावच्छेदेन शत्रुप्रभृतिषु ताडनादिना दुःखं जनयति। परं तु सोऽपि प्रयत्नः, स्वाश्रयस्यात्मनोऽवच्छेदकीभूतस्य शरीरस्य संयोगादेव अन्यस्मिन् शत्रुशरीरादौ स्वकार्यं जनयति, न तु प्रयत्नः बहिर्गत्वा शत्रुशरीरे स्वकार्यं जनयति। अदृष्टमपि तथैव स्वकार्यं जनयेत्। न तु शरीरदेशं परित्यज्य बहिर्गच्छेत्, अदृष्टस्य गुणत्वेन गमनक्रियानुपपत्तेः। एवञ्चादृष्टम् यत्ननीत्या **भ्रातृव्यादौ**=शत्रुप्रभृतिषु **पीडां घटयितुम्**=दुःखं जनयितुं च **नालम्**=न समर्थम्। एवं सति—**भोक्तुः**=जीवस्य **विभुत्वेन किम्?**=किं फलम्। उक्तरीत्या भवदिष्टासिद्धेः॥

**अयं भावः**—जीवात्मनः विभुत्वानङ्गीकारे, तत्तज्जीवस्य सुखदुःखादिहेतुभूतकार्याणां देशान्तर-लोकान्तरादिष्वावश्यकतया, तेषां कार्याणाम् तत्तज्जीवादृष्टकारितत्वं न स्यात्। कार्यकारणयोस्समानाधिकरण्य-नियमात्। अदृष्टस्यात्मगुणत्वेन आत्मानं परित्यज्यान्यत्र गमनासंभवात्। आत्मनः विभुत्वे तु अदृष्टवदात्म-संयोगस्य सर्वदेशेषु सत्त्वात् तत्तत्कार्यं भवेत्। अतः आत्मनो विभुत्वमावश्यकमिति तार्किका वदन्ति॥

**परन्तु**—अव्याप्यवृत्तिविशेषगुणवत्त्वम् आकाशात्मनोस्साधर्म्यमिति तैरुच्यते। अव्याप्यवृत्तित्वं नाम एकदेशावच्छेदेन सत्त्वम्। आकाशे शब्दः भेर्यादितत्तद्देशावच्छेदेनैव जायते। न तु विभावाकाशे सर्वदेशावच्छेदेन। एवमात्मनि ज्ञानसुखादिकं शरीरावच्छेदेनैव जायते। एवमदृष्टमपि शरीरावच्छेदेनैव सुखादिकं जनयेत्, न तु शरीरबहिर्देशावच्छेदेन। यथा प्रयत्नः स्वावच्छेदकशरीरसंयुक्त एव घटादिद्रव्ये चलनादिक्रियां जनयति, न तु शरीरसंयोगरहिते दूरदेशे वर्तमाने घटादौ। एवञ्च प्रयत्नवदात्मसंयोगस्य देशान्तरे सत्त्वेऽपि प्रयत्नः यथा क्रियां न जनयति, तद्वददृष्टवदात्मसंयोगस्य देशान्तरे सत्त्वेऽपि तत्तददृष्टं स्वकार्यं कथं जनयेत्? अतश्चात्मनः विभुत्वेऽपि नेष्टनिर्वाहः। ननु अदृष्टस्याचेतनत्वेन स्वयं फलजनकत्वासंभवात्, अदृष्टस्य प्रेरकतया परमात्मनः साधनात्, कर्माध्यक्षस्य परमात्मनः प्रभावात् देशान्तरे कार्यं भवेदिति चेत्; तर्हि, जीवस्याविभुत्वेऽपि एवं निर्वाहात्, मास्तु जीवानां विभुत्वमिति॥

**वस्तुतस्तु**—बुद्धिप्रधानानां नराणां बुद्धेः समाधानार्थम् दयार्द्रहृदया आचार्या अपि तदा तदा हेतुवादान् प्रकुर्युरपि। आत्मतत्त्ववदेव धर्माधर्मयोस्तत्त्वमप्यतिगहनम्, अदृष्टौ हि तौ। अतः आत्महितपरैः 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥' (गी.5-29) इति भगवतो वचनं सदा स्मरद्भिः विचारापेक्षया श्रद्धां पोषयद्भिः शान्तचित्तैर्भवितव्यमिति तु तत्त्वम्॥ २०॥

जीवविभुत्ववादेऽनुपपत्तिं प्रदर्शयति—**स्वादृष्टेत्यादिना**। **विभुषु**=जीवेषु विभुषु सत्सु **स्वादृष्टोपार्जितत्वात्**=तत्तज्जीवादृष्टसंपादितत्वात् **विग्रहादेः**=शरीरादेः, आदिना इन्द्रियादिग्रहणम्,

**आराध्ये विश्वसाक्षिण्यनुगुणफलदे त्वस्ति राजादिनीतिः**
**तत्साम्ये भोगसाम्यं न हि भवति यथाकर्म भोगप्रदानात् ।। २१ ।।**

**व्यवस्थाम्**=प्रतिनियतताम् **अवदन् यत्**=अवदन्निति यत्, **तच्च**=तदपि **एवम्**=उक्तप्रकारेण आत्मनो विभुत्वेऽपि, अदृष्टस्य शरीरबहिर्देशावच्छेदेन कार्यकारित्वे **निर्निमित्तम्**=युक्तिरहितम्, असमर्थनीयम्। **ततः**=तस्मात्कारणात् **इह**=अस्मिन् लोके **सर्वतः**=सर्वदेशावच्छेदेन **सर्वभोगः**=सर्वेषां सर्वसुखदुःखाद्यनुभवप्रसङ्गः **कथम् न भवेत्?**=भवेदेव ।।

**अयमाशयः**—जीवानां विभुत्वे सर्वेषां जीवानां सर्वत्र वर्तमानत्वेन सर्वशरीरसंबन्धः सर्वेषामवर्जनीयः। एवंसति सर्वशरीरावच्छेदेन जायमानानां सुखदुःखादीनां सर्वैरप्यनुभवप्रसङ्गः—इत्यापादने—तस्यैवं समाधानं वदन्ति। शरीररचनाया मूलं तत्तत्पुण्यपापादिकम्। यस्य जीवस्य पुण्येन पापेन वा यच्छरीरं निष्पन्नम्, तच्छरीरावच्छेदेन जायमानं सुखदुःखादिकं तेनैवानुभूयेत, न त्वन्येन; तच्छरीरस्यान्यकर्मणा अनिष्पन्नत्वादिति। परन्तु, अदृष्टस्य तत्तच्छरीरावच्छेदेनैव कार्यकारित्वे सत्येव इयं व्यवस्था वर्णयितुं शक्या। यदि च पूर्वोक्तरीत्या देशान्तरादावपि अदृष्टं कार्यकारि स्यात्, इतरशरीरावच्छेदेनापि सुखाद्यनुभवजनकं स्यात्। न चेतरशरीरस्य एतदीयादृष्टनिर्मितत्वाभावेन तदवच्छेदेन न सुखाद्यनुभवसंभव इति वाच्यम्; अदृष्टस्याचेतनत्वेन, स्वपरविभागज्ञानाभावेन, वह्न्यादिकं यथा येनोत्पादितमपि तद्धस्तमपि दहति, तथैवाविशेषेण सर्वान् प्रत्यपि कार्यकारित्वमवर्जनीयम्। न चादृष्टस्याचेतनत्वेऽपि कार्यकारणभावस्य सर्वत्र प्रतिनियतत्वं दृश्यते। यथा एतत्पटहेतुभिः तन्तुभिः एतत्पट एव जायेत, न त्वन्यः पटः। एवमत्रापि एतदीयादृष्टकारितं शरीरमेव एतदीयसुखदुःखादिहेतुः स्यादिति वाच्यम्; देशान्तरे शत्रुमित्रादिनिर्माणस्य एतदीयादृष्टजनितत्वाङ्गीकारात्, अन्ततः तच्छत्रुमित्रादिशरीरं प्रति एतदीयादृष्टस्यापि कारणत्वेन, तदवच्छेदेन सुखादीनामनुभवस्य वारयितुमशक्यत्वात्। अतः आत्मनो विभुत्वे भोगसाङ्कर्यप्रसङ्गः। अतः आत्मानः न विभवः ।।

ननु श्रीभाष्यकारैरेव शास्त्रयोनित्वाधिकरणे, एकस्य जीवस्य शरीरं न केवलं तदीयादृष्टनिर्मितम्, तदीयभार्यापुत्रादीनामपि तज्जीवनाधीनसुखदुःखादिमत्त्वात्, परस्परमेषां सर्वेषामप्यदृष्टं परस्परसहकारि भवतीत्यभिहितम्। दैवज्ञा अपि भार्याया माङ्गल्ययोगादिकम्, पुत्रस्य कर्मदशादियोगं च परीक्ष्यैव तद्यजमानस्य आयुरादिकं निश्चिन्वन्ति। एवञ्च सिद्धान्तेऽपि अन्यदीयमदृष्टम्, अन्यस्य शरीररचनादौ निमित्तं भवतीत्यङ्गीकारात्, सर्वेषां सर्वभोगप्रसङ्गोऽनिवार्य एवेत्यत्राह—**आराध्य** इत्यादि। **आराध्ये**=सर्वैरपि कर्मभिः आराध्यमाने **विश्वसाक्षिणि**=जगत्सर्वमपि साक्षाद्द्रष्टरि, **अनुगुणफलदे**=तत्तत्कर्मानुगुणफलदातरि सति, 'परमात्मनि' इति विशेष्यमध्याहार्यम्। परमात्मनि उक्तविशेषणविशिष्टे सति इत्यन्वयः। अथवा 'विश्वसाक्षिणि' इति विशेष्यम्। परमात्मनि तादृशे वर्तमाने, **राजादिनीतिः**=राज्ञां नीतिः **अस्ति**=प्रत्यक्षदृष्टास्ति। 'आदि' पदेन 'राज़ा वा राजमात्रो वा' इत्यादिदिशा तत्तुल्याः गृह्यन्ते ।।

'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।।' (गी.9-24)

'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥' (गी.5-29)

इत्यादिना सर्वाण्यपि सत्कर्माणि तत्तद्देवताद्वारा परमात्मप्रीतिकारणानि । तैः प्रीतः परमात्मैव फलमपि ददाति । एवं दुष्कर्माणि परमात्मनो निग्रहकराणि इति च प्रसिद्धम्। 'फलमत उपपत्तेः'(ब्र.सू.3-2-36) इति सूत्रकारेणापि न्यायपूर्वकं परमात्मन एव सर्वकर्मफलप्रदत्वं सिद्धान्तितम् । 'कर्माध्यक्षः सर्वभूताधिवासः साक्षी' (श्वे.6-11) इति श्रुतिरपि । अतः एकस्य शरीरस्य अनेकजीवादृष्टारब्धत्वेऽपि परमात्मन एव सर्वव्यवस्थापकत्वात्, सर्वज्ञत्वाच्च न काचिदनुपपत्तिः । तन्मते अदृष्टस्य जडत्वात् न तेन व्यवस्थासिद्धिः। न चेश्वरस्यादृष्टाधिष्ठातृत्वाङ्गीकारात्तन्मतेऽपि न दोष इति वाच्यम्; एवं यद्युपपत्तिः, तर्हि मास्तु जीवानां विभुत्वमित्यादिकमनुपदमेवोक्तम् ॥ जीवकृतकर्मणां परमात्मनश्च कस्संबन्धः? इति शङ्का-परिहाराय **'आराध्ये'** इत्युक्तिः । सर्वकर्मसमाराध्यः खलु परमात्मा । अतः जीवकृतैः पुण्यकर्मभिः भगवतः प्रीतिः, पापकर्मभिः कोपश्च भवेदेव । ईश्वरस्य तद्ज्ञानं कथं भवेत्? इत्यत्र **'विश्वसाक्षिणि'** इति । तस्य पक्षपाताभावप्रदर्शनार्थम्—**'अनुगुणफलदे'** इति । **अस्तीत्यादि** । लौकिका राजानोऽपि तत्तत्कार्यानुगुणं निग्रहमनुग्रहं च कर्तुं प्रभवन्ति चेत्, परमात्मविषयेऽतिशङ्कायाः प्रसक्तिरेव नास्तीत्याशयः ॥

ननु परमात्मा हि सर्वेषां समानः । 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः' (गी.6-29) इति ह्याह । सः कथं निग्रहानुग्रहौ कुर्यात्? कथं वा व्यवस्थेत्यत्राह—**तत्साम्य इत्यादि** । **तस्य**=परमात्मनः **साम्ये**=सर्वसमत्वेऽपि **भोगसाम्यम्**=सुखदुःखरूपस्य भोगस्य जीवकृतकर्मफलभूतस्य साम्यम् **न हि भवति**=नैव भवति । कुतः? **यथाकर्म भोगप्रदानात्**=तत्तज्जीवकृतकर्मानुगुणमेव कर्मफलभूतस्य भोगस्य प्रदानात्, भोगसाम्यं न भवतीत्यन्वयः । 'समोऽहम्' इत्यादि वदन्नेव भगवान् 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' (गी.6-29) 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु'(गी.16-19) इत्यप्याह । अतः तत्तत्कर्मानुगुणमेव फलदानात्, न फलसाङ्कर्यप्रसङ्गः, नापि पक्षपातप्रसङ्गः, राजनीतेरेव जागरूकत्वादिति भावः ॥

ननु भोः! किमियं दुरवस्था भवदीश्वरस्य? जीवाः स्वकृतकर्मपराधीनाः । भवदीश्वरस्तु अनन्तजीव-कर्माधीनः । साधितमीश्वरस्येश्वरत्वम्! हे ब्रह्मन्! 'पृष्टोऽपि न वदेदर्थं गुह्यं सिद्धान्तमेव च' इति वदन्ति धर्मसूक्ष्मज्ञाः । तथाप्यपगच्छतु नास्तिक्यं त इत्यनुकम्पयोच्यते । कर्मणां फलनैयत्यमात्रं हि तद्विज्ञानसिद्धम्, न तु कालदेशादिनैयत्यम् । न ह्यस्मिन् जन्मनि कृतानां कर्मणां फलमेतत्समनन्तरजन्मन्येव भविष्यतीत्युक्तं कुत्रचित्, शक्यं वैतत्! एकैकस्यापि नेदमेव प्रथमं जन्म । अनन्तकोटिपूर्वपूर्वजन्मसुकृतानां दुष्कृतानाञ्च कर्मणां सञ्चयःखलु प्रतिजीवमनिवार्यो वर्ततैव । तानि विविधानि विचित्राण्यसंख्यानि कदा कुत्र कीदृशं स्वफलं दास्यन्तीति न हि किञ्चिन्नैयत्वं वक्तुं शक्यम् । अथवा कतिपयकर्मणां कथञ्चित्तथात्वसंभवेऽपि सर्वाणि न तथेति हि वदन्ति मर्मज्ञाः । अत एव किल 'यदेव विद्यया करोति, तदेव श्रद्धयोपनिषदा वीर्यवत्तरं भवति' (छां.1-1-10) इति कर्माङ्गोद्गीथविद्यायाः तज्जन्मसमनन्तरमेव तत्कर्मफलप्राप्तिं वीर्यवत्तरत्वमिति तद्रहस्यज्ञा

[जीवाविभुत्वे प्रमाणम्]

92. **देहान्तर्मात्रदृष्टेः पृथगिह विषयिप्राणजीवोत्क्रमोक्तेः भुयोवाक्यानुसारादणुरिति वचने तादृशोपाध्यनुक्तेः।**

वदन्ति। ब्रह्मविद्यायाः 'उपनिषदा' इति पृथगभिधानात्, 'विद्यये'त्यस्य कर्मविज्ञानमर्थः। एवञ्च कर्मणां देशकालनैयत्याभावात्, तदेतत्परमात्माधीनम्। अनन्तविचित्राद्भुतशक्तिमतो भगवतः क्लेशादीनां लेशोऽप्यत्र न वर्तत इति 'अक्लिष्टकारिणम्' इत्यादिभिः प्रदर्शयन्ति महर्षयः। अतो निरङ्कुशस्वतन्त्र एव भगवान् वैषम्यनैर्घृण्यपरिहारायैव जीवकर्मापेक्षते, न तु स्वाशक्त्येत्यवगन्तव्यम्॥

किञ्चेदं सर्वमुत्सर्गरूपम्, अभक्तजनविषयम्। भक्तानां विषये तु 'जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥' (गी. 4-9) 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असंमूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते॥' (10-3) 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' (18-46) 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजा। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥' (18-66) 'ततस्तं म्रियमाणं तं काष्ठपाषाणसन्निभम्। अहं स्मरामि मद्भक्तं नयामि परमां गतिम्॥' (वराहपुराण) इत्यादीन्यपवादरूपाणि प्रमाणानि। 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' (9-20) 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्'(4-11) इति हि गायति सः। अत एव 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इति कथनमपर्याप्तं मन्यमानः 'मा कर्मफलहेतुर्भूः' (2-47) इति गायति सः। अतः 'सापेक्षत्वात्' इति कथनं तर्कशरणान् प्रति, न तु भगवच्छरणान् प्रति। सांख्ययोगस्मृत्यनुग्रहतर्कविचारप्रकरणस्थं हि 'सापेक्षत्वात्' इति। स्वपक्षं त्वाह बादरायणः 'फलमत उपपत्तेः' (ब्र.सू. 3-2-37) इति। अत आत्मतत्त्वमजानतां कृतेऽन्यत्समाधानम्। जानतां कृते त्वन्यदेव। अधिकं तत्तत्प्रकरणे॥

ज्ञात्वा ब्रह्मोभयलिङ्गं सर्वाभीष्टफलप्रदम्। प्राणस्य प्राणमित्याद्यं परमानन्दविग्रहम्॥
भजस्व सततं प्रीत्याऽनन्यभावनया प्रभुम्। संशयं सकलं त्यक्त्वा स्वकक्ष्यायां स्थिरो भव॥
भाग्यायत्ता भगवति भक्तिरव्यभिचारिणी। पुनःपुनर्न प्रश्नादि कर्तव्यं स्वहिते रतैः॥
'सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना। स स तस्याहमेवेति चरमश्लेकसंग्रहः॥'
अत्रापि यद्यविश्वासस्तत्राप्याहान्तिमं वचः। 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति'॥
तत्तादृशानां पापानां भेषजं सत्समागमः। दुस्सङ्गं दूरतस्त्यक्त्वा सत्सङ्गं कुरुतानिशम्॥
इतोऽपि यदि जिज्ञासा सेव्यास्सन्तस्सदा त्वया। अत एव श्रुतिः'तत्र वर्तेथाः'इति दृश्यते॥ २१॥

एवं जीवानां विभुत्वं निराकृत्य, तेषां अणुत्वे प्रमाणान्याह— **देहान्तरित्यादि**। **देहान्तर्मात्रदृष्टेः**= देहान्तरेव 'अहम्' इत्यनुभवदर्शनात्। पञ्चम्यन्तानामेषाम् **'व्याप्त्युक्तिः'** इत्यादिनान्वयः। देहाद्बहिः आत्मनः सत्त्वे प्रमाणादर्शनात्, शरीरानुगुणपरिमाणे जीवस्य नाशप्रसङ्गात् जीवः अणुरेव। **इह**=उपनिषत्सु **पृथक्**=प्रत्येकम् **विषयिप्राणजीवोत्क्रमोक्तेः**=**विषयिणाम्**=इन्द्रियाणाम् **प्राणस्य**=मुख्यप्राणस्य **जीवस्य**

**ईशादाराग्रमात्रो ह्यवर इति भिदावर्णनात् स्पन्दवाक्यात्**
**व्याप्त्युक्तिर्जातिधर्मप्रतिहतिविनिवृत्त्यादिमात्रेण जीवे ॥ २२ ॥**

**च उत्क्रमोक्तेः**=शरीरात् उत्क्रमणस्य अभिधानात्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति' (बृ.6-4-2) इति शरीरादुत्क्रामन्तं जीवमनुसृत्य प्राणादीनामुत्क्रान्तेः कथनात्, आत्मनः जीवस्योत्क्रमणं प्राणादिपरतया नेतुं न शक्यमिति बोधनार्थं इन्द्रियप्राणादीनां पृथक् निष्क्रमणमभिहितम्। कस्मिंश्चिन्मृते हि 'प्राणा गताः' इति व्यवहरन्ति। स औपचारिक इति प्रदर्शनार्थं प्राणातिरिक्त एव 'एष आत्मा निष्क्रामति' (बृ.6-4-2) इत्यत्र विवक्षितः। अतः जीवः न विभुः, विभुत्वे निष्क्रमणासंभवात्। एतादृशानां बहूनां वाक्यानां दर्शनात् अन्यथानयनं न शक्यमित्यभिप्रायेण—**भूयोवाक्यानुसारादिति**। **अणुरिति वचने तादृशोपाध्यनुक्तेः**='एषोऽणुरात्मा चेतसा वेदितव्यः' (मुं.3-1-9) इत्यत्र अणुत्वे उपाध्यनुक्तेः अणुत्वं स्वाभाविकमिति गम्यते। एवम्—**ईशात्**=परमात्मनः **अवरः**=निकृष्टो जीवः **आराग्रमात्रः**=अल्पपरिमाणकः **इति हि भिदावर्णनात्**=वैलक्षण्यवर्णनात्। 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे.5-8) इति परमात्मापेक्षया वैलक्षण्यमुक्त्वा जीवस्याणुत्वाभिधानाच्च। रथावयवश्चक्रम्। चक्रस्यावयव आरः। तस्याग्रम् आराग्रम् एकदेशः। अतिसूक्ष्मपरिमाणकः जीव इत्यर्थः। 'आराग्रम्' इत्यल्पपरिमाणे रूढं पदमिति केचित्। एवं—**स्पन्दवाक्यात्** 'स्वे शरीरे यथाकामं परिवर्तते' (बृ.4-1-18) इति शरीरान्तरेव जीवस्य सञ्चारः अभिधीयते। तच्चाणुत्वमन्तरा न संभवति। एवमेभिर्हेतुभिः **'जीवे व्याप्त्युक्तिः 'जातिधर्मप्रतिहतिविनिवृत्त्यादिमात्रेण'** इत्यन्वयः। एवञ्चार्थात् जीवः अणुरेव, न विभुः॥

ननु 'स चानन्त्याय कल्पते' (श्वे.5-9) 'नित्यः सर्वगतः' (गी.2-24) इत्यादौ जीवस्य विभुत्वमुच्यते किलेति शङ्कापरिहारायाह—**व्याप्त्युक्तिरित्यादि**। **जीवे व्याप्त्युक्तिः**=एवं श्रुतिस्मृतिषु सर्वगतत्वादिकथनम् **जातिधर्मप्रतिहतिविनिवृत्त्यादिमात्रेण**=जीवजातिदृष्ट्या, जीवधर्मस्य ज्ञानस्य व्यापकत्वदृष्ट्या, अतिसूक्ष्मत्वेन जीवस्य कुत्रापि वस्तुनि प्रतिघातासंभवेन प्रतिघाताभावमात्राभिप्रायेण वा भवेदिति शेषः। जीवस्य स्वतः अणुत्वेऽपि जीवजातीयस्य सर्वदेशेषु व्याप्त्या जीवः सर्वगत इत्युच्यते। जगत्सर्वमत्यन्तसूक्ष्मैर्जीवाणुभिर्व्याप्तमिति हि विज्ञानिनो वदन्ति। एवं जीवधर्मभूतज्ञानस्य 'यच्चाप्नोति यदादत्ते यच्चाप्ति विषयानिह। यच्चास्य सन्ततो भावः तस्मादात्मेति कथ्यते॥' इति निर्वचनेन व्यापनशीलत्वात्, मुक्तौ सर्वत्र व्याप्त्या च, तद्विशिष्टस्य जीवस्याप्यानन्त्यमुच्यते। एवं जीवस्य गतेः प्रतिहतिः कुत्रापि न भवति, तावान् सूक्ष्मोऽयमित्यभिप्रायेण वा कुत्रचित् तस्य विभुत्वमुच्यते, न तु स्वरूपतः। अतो जीवो न विभुः॥

**इदन्तु बोध्यम्**—जीवाणुत्वसमर्थनम् जीवस्य स्वरूपस्वभावादिविषये दुर्ज्ञानत्वप्रदर्शनाय। संसारिणां मानवानां बुद्धिः जीवात्मस्वरूपविषये प्रसरितुं लेशतोऽपि न शक्नोति। यतः आत्मतत्त्वं बुद्ध्यतीतम्, अलौकिकम्, अप्राकृतम्। तत् प्राकृतया बुद्ध्या कथं ग्रहीतुं शक्यते? 'यो बुद्धेः परतस्तु सः' (गी.3-42) इति हि गीता। यद्यपि भाष्ये प्रकरणानुगुणं कामपरतयायं खण्डो व्याख्यातः; अथापि 'इन्द्रियेभ्यः परा

[जीवः न देहानुगुणपरिमाणवान्]

93. नात्मा देहानुरूपं विविधपरिणतिर्निर्विकारोक्तिबाधात्
स्थूलोऽहं मूर्ध्नि जातं सुखमिति च मतिस्तस्य देहात्ममोहात् ।

ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥' (कठ.1-3-10) इत्यादौ बुद्ध्यपेक्षया आत्मनः परत्वस्य संमतत्वात्, गीतावाक्यस्य तच्छायानुसारित्वात्, अयमप्यर्थो न निषिद्धः । अथवा, अस्तु वाक्यम्, व्याख्यानं वा । विषयानुरोधेन अर्थः वर्णनीयः । तद्दृष्ट्या आत्मा बुद्ध्यतीत एव । अत एव 'नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन' (कठ.1-2-23) 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' (मुं.3-1-5) इत्याद्युच्यते । पृथिवीपरमाणोः परिमाणमेवातीन्द्रियम् । ततोऽपि जलपरमाणो रूपं दुर्ज्ञेयम्, ततोऽपि तेजःपरमाणोः, ततोऽपि वायुपरमाणोः, ततोऽप्याकाशपरमाणोः । सिद्धान्ते हि आकाशोऽपि सावयवः । एवं भौतिकवस्तूनां स्वरूपमेव दुर्ज्ञेयं चेत्, एतत्सर्वमतीत्य वर्तमानस्य पञ्चविंशस्य जीवस्याणुत्वं भौतिकाणुत्वापेक्षया विलक्षणम् अत्यन्तदुर्ज्ञेयमिति सदा चिन्तनीयम् । यत एवं वदन्ति मर्मज्ञाः— 'शाब्दस्य हि ब्रह्मण एष पन्थाः यन्नामभिर्ध्यायति धीरपार्थैः । परिभ्रमंस्तत्र न विन्दतेऽर्थान् मायामये वासनया शयानः ॥' (भाग.2-2-2) इति ॥ शाब्दस्य ब्रह्मणः शब्दरूपस्य ब्रह्मणः एष हि अयमेव हि पन्थाः=मार्गः । कः? यत् अपार्थैः=अर्थरहितैः नामभिः=केवलं संज्ञाभिः धीः=मानवानां बुद्धिः ध्यायति=चिन्तयति । अर्थः अवगत इव भाति किल? अपार्थैरिति कथम्? इत्यत्र वासनया पूर्ववासनया विशेषेण मायामये='अर्थोऽवगतः' इति भ्रममये तत्र=शब्दब्रह्मणि शयानः निश्चिन्ततया वर्तमानः, तत्रैव परिभ्रमन् मानवः अर्थान्=पदार्थान् न विदन्ते=न प्राप्नोत्येव । अर्थस्यालाभेऽपि, लब्ध इव भ्रमजनको भवति आत्मादिशब्दः। एतत्तत्त्वं अग्रे (बुद्धि.31) व्यक्ती भविष्यति । कतिपयपदानां शुकवदभ्यासमात्रेण अर्थः न स्वायत्तो भवति । भूमविद्यारंभे सनत्कुमारं प्रति नारदोक्तम्— 'ऋग्वेदं भगवोऽध्येमि' इत्यादिनारदवचनम्— 'यद्वै किञ्चिदध्यगीष्ठा नामैवैतत्' (छा.7-1-3) इत्यादि सनत्कुमारप्रतिवचनञ्चात्र सदा स्मर्तव्यम् ॥ २२ ॥

तत्त्वक्षेत्रं हि आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकमिति त्रेधा विभक्तम् । अत्यन्तस्थूलाधिभौतिकेऽपि सर्वं रहस्यमसर्वज्ञदुर्विज्ञेयम् । इतोऽपि गहनं विशालञ्चधिदैविकं बुद्ध्यतीतमेव । लेशत एतत्परिचयेऽपि मानवाहंकारः क्षीयेत । आध्यात्मिकं तु इतोऽपि कियद्गहनमिति ज्ञातुमप्यशक्यम्, वर्णयितुं तु सुतराम्, सुतमां परस्मै बुद्ध्याधानम् । एवमात्मनोऽतिदुर्ज्ञेयत्वादेव मानवानां कल्पनाः नानाविधाः प्रवृत्ताः । तत्र **जैनाः** आत्मा तत्तच्छरीरानुगुणपरिमाणवानिति मन्यन्ते । तन्निराकरोति—**नात्मेत्यादिना** । **आत्मा**= जीवात्मा **देहानुरूपम्**=तत्तद्देहानुगुणम् **विविधपरिणतिः**=देहानां विविधपरिणामवत्त्वेन, विविधपरिमाणवान्, **विविधाः परिणतयः** यस्येति बहुव्रीहिः, **न**=न भवति । कुतः? **निर्विकारोक्तिबाधात्** 'न जायते म्रियते वा' (कठ.1-2-18) इति जननमरणादिनिषेधात् आत्मा निर्विकारःसिद्धः । जननमरणे हि

**षड्भावविकारान्तर्भूते**। 'अस्ति, जायते, वर्धते, विपरिणमते, अपक्षीयते, नश्यति' इत्येते **षड्भावविकाराः**। एषु 'जायते' 'नश्यति' इत्यनयोः आद्यन्तयोर्निषिधः 'न जायते म्रियते' इत्याभ्याम्। आद्यन्तयोनिषिधे, मध्यवर्तिनामपि निषेधः सिद्धः। तेन च 'अस्ति' इति सदा सत्त्वमात्मनस्सिद्धम्। अतः देहानुगुणपरिमाणे आत्मनः सङ्कोचविकासयोरावश्यकत्वात् अचिद्वदेव आत्मा सविकारः स्यात्। ननु 'स्थूलोऽहम्' 'कृशोऽहम्' इत्याद्यनुभवात्, अहंपदार्थस्यात्मनः स्थूलत्वकृशत्वादिव्यवहारात्, आत्मनः शरीरानुगुणपरिमाणमावश्यकमित्यत्राह— **स्थूलोऽहमित्यादि**। 'स्थूलोऽहम्' इत्यादिवत्, **'मम मूर्ध्नि सुखं जातम्' इति च मतिः**=अनुभवः, **तस्य**=पुरुषस्य देहात्ममोहात् भवति। अज्ञानिनः तथा; ज्ञानिनस्तु औपाधिकः। पक्षद्वयेऽपि तादृशानुभवः न वस्तुसाधकः। 'लोहितः स्फटिकः' इत्ययं किलानुभवः, अजानतः भ्रमः, जानतस्तु औपाधिकः। द्वेधाऽपि स्फटिकस्य न लौहित्यसिद्धिः। एवं 'मूर्ध्नि सुखम्' इत्यस्य मूर्धावच्छेदेन आत्मनि सुखमित्यर्थः। आत्मनोऽणुत्वे, तस्य मूर्धावच्छेदेनाप्यभावात्, कथं 'आत्मनि' इत्युच्यते, इति चेत्, धर्मभूतज्ञानव्याप्त्येत्याद्युक्तमेव पूर्वम्॥

ननु 'स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति। अस्य यदेकां शाखां जीवो जहाति, अथ सा शुष्यति, द्वितीयां जहात्यथ सा शुष्यति, तृतीयां जहात्यथ सा शुष्यति' (छां.6-11-12) इति वृक्षे जीवात्मनः शरीरभूते तस्य संकोचस्य श्रवणात्, अस्त्येव सङ्कोचविकासादिकं जीवे इति चेत्, न। जीवस्याविभुत्वस्यानुपदमेव बहुभिः प्रमाणैः स्थापनात्, मध्यमपरिमाणत्वे चानित्यत्वापत्त्या अणुत्वे सिद्धे, धर्मभूतज्ञानव्याप्त्यैव शरीरव्याप्तेश्चाभिधानात्, धर्मभूतज्ञानस्य सङ्कोचविकासादेः अग्रे (बुद्धि.7) प्रतिपाद्यमानत्वात् 'जीवो जहाति' इत्यस्य धर्मभूतज्ञानसङ्कोच एव विवक्षितः। तस्यापि प्राणसञ्चारक्षय एव हेतुः। दृश्यते किल मानवशरीरेऽपि वातव्याध्यादौ प्राणसञ्चारक्षयेन हस्तपादादेः निष्क्रियत्वस्पर्शशून्यतादिकम्। अतः कर्मविशेषात् प्राणसञ्चारक्षये, धर्मभूतज्ञानसङ्कोचे सति 'जीवो जहाति' इत्युच्यते। महति गृहे कस्मिंश्चिद्भागे शिथिले सति, तद्भागावच्छेदेन मनुष्याः सञ्चारादिकं यथा त्यजन्ति, तथैव 'जीवो जहाति' इत्यस्याप्यर्थः॥

**वस्तुतस्तु**— पूर्वमेव (श्लो.4) 'धीर्नित्या यस्य पक्षे' इत्यादौ, शरीरव्याप्तिरियं जीवस्वरूपकृता, उत धर्मभूतज्ञानकृता? इति युक्त्या निश्चेतुमशक्यत्वस्य प्रतिपादनात्, पुनःपुनः पिष्टपेषणं न विवेकस्य लक्षणम्। अतो निरर्थकेष्वेतादृशविषयेषु 'दुर्ज्ञानं सर्वथा यन्मुनिभिरपि परैस्तत्र तूदासितव्यम् (जड.64) इत्याचार्योक्तदिशा वृथा कालस्य, बुद्धेर्वा व्ययो वर्जनीय इत्यवधेयम्। ननु किमिदमस्थाने वैराग्यम्? 'प्रज्ञासूच्यानुविद्धः क्षतिमनधिगतः कर्कशात्तर्कशाणात् शुद्धो नानापरीक्षासु' (जड.3) इत्याद्युक्त्वापि, इदानीं परीक्षातो वैमुख्यं कथं घटताम्? इति चेत्, सत्यम्। अत्राप्युक्तमाचार्यवर्यैरेव 'दुर्ज्ञानं सर्वथा यन्मुनिभिरपि परैस्तत्र तूदासितव्यम्' इति। 'उदासितव्यम्' इति कथनमात्रेण बुद्धिरुदासीना भवेत् किम्? उच्यतां समाधानं बुद्धेरिति चेत्—

सत्यं तत् ज्ञायते क्लेशः नास्माकं स्याद्वशे मतिः। यतः सा प्रथमा माया सर्वानपि विमोहयेत्॥

नानादेहश्च योगी प्रसजति भिदुरः पुंसि देहप्रमाणे
मुक्तौ देहात्ययात् स्यात् परिमितिविरहस्तत्प्रयुक्तेऽस्य माने ॥ २३ ॥

[जीवस्य देहानुगुणपरिमाणेऽनुपपत्तिः]

94. निर्मुक्तः त्वन्मते स्यात् कथमपरिमितो नित्यमूर्ध्वं प्रधावन्
देहः कश्चित् तदानीमपि यदि नियतः, स्यात्तु तन्निघ्नताऽस्य ।

---

सर्वक्लेशक्षयकरं शरणं याहि तं प्रभुम् । वात्सल्यादिगुणैः पूर्णः स ते मार्गं विधास्यति ॥
तर्कमधिकृत्योच्यतेऽग्रे (बुद्धि.42) विस्तरेण । तावत्कालं किञ्चिदाश्वसतु भवान् ॥

किञ्च **पुंसि**=जीवात्मनि **देहप्रमाणे**=देहानुगुणपरिमाणवति **नानादेहः योगी भिदुरश्च प्रसजति**= छिन्नो भिन्नश्च भवेत् । **सौभरिः** किल योगी युगपत् पञ्चाशच्छरीराणि गृहीतवान् । तत्र जीवः छिन्नो भिन्नो वा भवेत्, तेन विनाशोऽप्यवर्जनीयः स्यात् । किञ्च **अस्य**=जीवस्य **माने**=प्रमाणे **तत्प्रयुक्ते**=शरीरानुगुणे सति **मुक्तौ**=मुक्त्यवस्थायां **देहात्ययात्**=देहापगमात्; तैरपि मुक्तस्य भौतिकदेहो नाङ्गीक्रियते; **परिमिति-विरहः**=परिमाणाभावः **स्यात्**। ततश्च जीवः विभुः स्यात् । परिमाणाभावे विभुरिति कथमिति न शङ्क्यम्, परिच्छेदाभावस्यैव विभुत्वस्वरूपत्वात् । अथवा परिमाणमेव न किञ्चिदपि स्यात् । अतः जीवस्य किञ्चित् स्वाभाविकं परिमाणं वक्तव्यम्; तदेव चाणुत्वमुक्तम् ॥

यद्यपि जैनैकदेशिभिः सततोर्ध्वगतेरेव मुक्तित्वाङ्गीकारात् आत्मनः अन्तिमशरीरानुगुणपरिमाणोऽङ्गीकृतः, परन्तु तदा आत्मनोऽन्तवत्त्वप्रसक्त्या स पक्षो न युक्तः । समनन्तरश्लोक एवायं विषयो विचार्यते ॥ २३ ॥

अस्तु तर्हि विभुरेव जीव इति चेत् तत्राह—**त्वन्मते**=जैनस्य तव मते **निर्मुक्तः**=मुक्तात्मा **अपरिमितः**=परिमाणरहितः=विभुः **कथं नित्यम् ऊर्ध्वं प्रधावन् स्यात्**=विभोः क्रियायाः असंभवेन, सततोर्ध्वगमनं कथं स्यात्? अलोकाकाशपर्यन्तमेव गच्छति इति पक्षेऽपि विभोः क्रियाया असंभवाद्दोषस्तुल्यः। अलोकाकाशः लौकिकाकाशविलक्षण एतदाकाशस्योपरि वर्तमानः देशः । तत्रावस्थितिरेव तन्मते मुक्तिः । मृत्तिकालिप्तः अलाबुः जले पतेच्चेत् मृत्तिकाभारान्मज्जति । लिप्ता मृत्तिका जलसंपर्कात्क्रमशो विशीर्णापगच्छेच्च । यावती न्यूना मृत्तिका, अलाबुस्तावानुपरि गच्छेत् । मृत्तिकालेपे कार्त्स्न्येन नष्टे, अलाबुरपि संपूर्णतया जलस्योपरि भागे प्लवेत । एवमेव जीवः कर्मसंबन्धवशात् संसारे मग्नः क्लेशाननुभवति । सम्यग्दर्शनज्ञानचारित्ररूपेण **रत्नत्रय**पदवाच्येन मोक्षसाधनेन कर्मणां क्रमेण क्षयात्, ऊर्ध्वं गच्छन् प्रकृतिमण्डलमतीत्यालोकाकाशं प्राप्नोति । सैव मुक्तिरित्युच्यते । आत्मनो विभुत्वे गतेरसंभवात् ऊर्ध्वगतिः कथं समर्थनीया स्यात्? एतत्परिहाराय, **तदानीमपि**=मुक्तावपि **कश्चिद्देहः यदि नियतः**=नियमेन वर्तत एव इति यदि, **तदा अस्य**=मुक्तस्य **तन्निघ्नता**=तादृशशरीराधीनता तु स्यात् । सशरीरत्वस्यैव बन्धपदार्थत्वात् सा मुक्तिरेव न स्यात् ॥

**इच्छातो देहमेकं विशति स परिमित्यर्थमेवेति हास्यं**
**तस्मादास्माकनीत्या परिमितिरिह सा स्थायिनी या विमुक्तौ ॥ २४ ॥**

**[मोक्षासंभवशङ्कानिरासः]**

95. **कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे**
**तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा ।**

ननु वेदान्तिभिरपि मुक्तौ शरीरसद्भावपक्षस्याङ्गीकारात्, कथं सशरीरत्वमेव बन्धः? न च मुक्तिकालिकं शरीरं न प्राकृतम्। अतः तस्य बन्धरूपत्वं नास्तीति वाच्यम्; अस्माभिरपि तथैवाङ्गीकारादित्यत्राह— **इच्छात** इत्यादि। **सः**=मुक्तः **परिमित्यर्थमेव**=स्वस्य परिमाणवत्त्वायैव **एकम्**=एकशब्दः अन्यार्थकः, विलक्षणम् इति भावः **देहम् इच्छातः**=स्वेच्छेयैव, न तु कर्मप्रभावात् **विशति**=प्रविशति, स्वीकरोति **इति हास्यम्**= परिहासास्पदम्। किं कुर्मः, शरीरमन्तरा ऊर्ध्वगमनासंभवात्, तदर्थमेव शरीरं स्वीकरोतीत्यादिकम् अतीव हास्यास्पदम्, संपूर्णपराधीनत्वस्य स्वेनैव संपादनात्, सः मुक्त इति हास्यास्पदतर एव। किं कुर्मः मार्गान्तरं न स्फुरति किल इत्यत्र—**तस्मादित्यादि**। **तस्मात्**=भवदुक्तेः भवतैव समर्थयितुमशक्यत्वात् **आस्माकनीत्या**= अस्मत्सिद्धान्तनीत्यैव **इह**=जीवे **सा परिमितिः**=जीवस्य परिमाणम् **स्थायिनी**=नियता इत्युच्यताम्, एवं नियतत्वादेव **या**=असौ परिमितिः **विमुक्तौ**=मुक्त्यवस्थायामपि **स्थायिनी**=अनुवर्तेत, तादृशः परिमाण आवश्कः। ननु जीवः विभुपरिमाणवानेव। संसारावस्थायां कर्मणा तिरोहितं विभुत्वं मुक्तावाविर्भवतीति कथने को दोष इति चेत्, तर्हि तस्यालोकाकाशेऽवस्थितिकथनं विरुद्ध्येत। अतः जीवस्य नियतं परिमाणमवश्यं विभुत्वव्यतिरिक्तं वक्तव्यम्। मध्यमपरिमाणत्वे विनाशप्रसङ्गात् अणुत्वमेवाङ्गीकर्तव्यम्। दोषास्तु पूर्वोक्तदिशैव परिहर्तव्याः। वस्तुतस्तु जैनानामियं भ्रान्तिः भूतात्मनस्तादृशत्वादिति मन्तव्यम् ॥ २४ ॥

एवमत्यन्तावश्यकरूपविशिष्टजीवस्वरूपविचारं परिसमाप्य, अनन्तानन्तकर्मचक्रपतितस्यास्य मुमुक्षा-संभावना वा कथम्? साधनाद्यनुष्ठानं वा निरन्तरायं कथं संभवति? कथं मुक्तेस्संभवः? इत्याद्याशङ्कानां समाधानमाह—**कर्माविद्यादीत्यादिना**। **आदिपदेन** वासनाया ग्रहणम्। सर्वस्यापि मूलम् **अविद्या**। ततः **कर्म**। ततो **वासना**। एवं त्रयाणाम् परस्परकार्यकारणभावापन्नानां सदानुवर्तमानानां चक्रवद्भ्रमणात् **चक्रेति** चक्रत्वेन रूपणम्। अत्र रागद्वेषयोर्योजनयापि चक्ररूपणं शक्यम्। 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' (बृ.6-4-2) इति श्रुतिः। अत्र 'तम्' इति पूर्वप्रसक्तः शरीरादुत्क्रान्तः जीवः उच्यते। एवमुत्क्रामन्तं जीवं विद्याकर्मणी समन्वारभेते=समनुवर्तेते, एवं पूर्वप्रज्ञा च=वासना च समनुवर्तते। तत्तज्जन्मनि क्रियमाण-साधनाफलभूते विद्याकर्मणी। अनन्तानन्तजन्मकृतविद्याकर्मफलभूता वासना। 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥' (कठ.2-5-6,7) इत्यत्रापि जन्मान्तररचना कर्मज्ञानाधीनेत्युक्तम्। **श्रुतम्**=ज्ञानम्। अत्र 'स्थाणु' पदस्यार्थो कियान् दुरवगम इति न ज्ञातुं प्रभवन्ति भौतिकप्रज्ञाः ॥

**तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचित्**
**मुक्तैश्वर्यान्तसंपन्निधिरपि भविता कश्चिदित्थं विपश्चित्॥ २५ ॥**

ननु श्रुतौ 'विद्याकर्मणी' इति स्थितेऽत्र 'अविद्या कर्म' इत्युक्तिः कथमिति चेत्, ज्ञानार्थकाद्विदधातोर्निष्पन्नो विद्याशब्दः ज्ञानसामान्यवाची। कर्म च पुण्यपापरूपम्। ज्ञानं यद्यत्पूर्वं संपादितं विपरीतमविपरीतं वा; कर्म च यद्यत्कृतम्=सुकृतं दुष्कृतं वा; पूर्वप्रज्ञा=वासना च तम्=उत्क्रामन्तं जीवम् अन्वारभेते= अनुवर्तेते। विद्या इति सामान्यशब्दः विशेषे पर्यवस्यतीत्यभिप्रायेण श्लोके 'अविद्या'शब्दः। ब्रह्मविद्याव्यतिरिक्ता हि विद्या अविद्यैव। अविद्या विद्याशब्देन कथमुच्येत? न ह्यघटशब्दो घटं ब्रूयादिति चेत्, अनभिज्ञो हि भवान्, भ्रमप्रमादसंशयादयोऽपि ज्ञानप्रभेदा एवेति। गुणशब्दस्य प्रायः सद्गुणे प्रयोगेऽपि दुर्गुणसाधारणः खलु स शब्दः। तद्वद्विद्याशब्दोऽपि। अतोऽत्र विद्यापदेन न ब्रह्मविद्याभिधीयते, ब्रह्मविद्यायाः जन्मान्तरारंभकत्वाभावात्। अतः ब्रह्मविद्याव्यतिरिक्ता विद्यैव विविक्षिता। अत एव श्रुतौ 'श्रुतम्' इत्युक्तम्। 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥' (कठ.1-2-23, मु.3-2-3) इत्यादौ श्रुतशब्दवाच्यस्योपदेशजन्यज्ञानस्य=परोक्षरूपस्य ख्यातिलाभपूजाहेतोः निन्दा श्रूयते। तद्दृष्ट्या श्लोके 'अविद्या'पदमुक्तम्॥ 'एतद्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा'(गी.13-11) इत्याद्यपि द्रष्टव्यम्। **अथवा** ब्रह्मविद्यापि विद्याशब्दार्थान्तर्गता स्यात्। न ह्येकस्मिन् जन्मनि ब्रह्मविद्यायास्सिद्धिस्संभाव्यते। 'अनेकजन्मसंसिद्धः' (गी.6-45) 'बहूनां जन्मनामन्ते' (गी.7-19) इत्यादिदर्शनात्। एवं वासनापदमपि सदसद्वासनापरं वा। यत्पूर्वं कृतं तत्सर्वमनुवर्ततैव। 'तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्। पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥' (गी.6-43) इति हि गीयते। अतश्च ब्रह्मविद्याया ग्रहणेऽपि न दोषः। न च 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' ॥ इति (बृ.6-4-6) पुनरावृत्तिश्रवणात् कथं ब्रह्मविद्याया ग्रहणमिति चेत्, सर्वत्रापूर्णदर्शी त्वम्। तस्मिन्नेव वाक्य उपरि 'इति नु कामयमानः' (बृ.6-4-6) इति अदग्धकामानां पुनरावृत्तिमुक्त्वा, 'अथाकामयमानः' इति ब्रह्मविदां गतिरप्युच्यते। अतो विद्यापदं सर्वविद्या- परमेव। तर्ह्याचार्यैः कथमविद्यापदमत्रोक्तमिति चेत्, प्रकृते मुमुक्षोत्पत्तेः पूर्वस्थितेरेव कथनात् तत्पदं प्रयुक्तम्। वस्तुतस्त्वपुनरावृत्तिविषये महद्रहस्यं वर्तते, यथा जना मन्यन्ते, न तथेति तु तथ्यम्॥

तत्त्विदानीं वक्तुमर्हं न, यतः पूर्ववासनाः। पीडयन्त्यखिलान् पुंसः समये वक्ष्यते रहः॥

**इह**=अस्मिन् संसारे एतादृशाविद्याकर्मवासनाख्ये चक्रे **प्रतिपुरुषम्**=तत्तत्पुरुषभेदेन **अनादिचित्रप्रवाहे**=अनादिकालादेव विचित्रप्रवाहरूपे सति **तत्तत्काले**=तत्तत्कालानुगुणम् **विविधा**=अनेकप्रकारा **विपक्तिः**=परिपाकविशेषः **सर्वसिद्धान्तसिद्धा हि भवति**=सर्वैरपि सैद्धान्तिकैः अङ्गीकृतैव हि। आत्मनः शरीरातिरिक्तत्वसाधनेनैव पुनर्जन्म सिद्धम्। पुनर्जन्मवादिनां कर्मपरिपाकवादोऽप्यवर्जनीयः किल। अस्तु कर्मपरिपाकः बहुविधः। प्रकृते किमायातं तेन? इत्यत्रोच्यते—**तल्लब्धेत्यादि**। **तेन**= विचित्रकर्मप्रवाहमध्यागतसुकृतलेशपरिपाकवशेन **लब्धः**=प्राप्तः **स्वस्याः अवकाशः**, प्रथमगुरुकृपा अत्र स्वशब्दार्थः। **प्रथमः**

**गुरुः**=जगतः आदिगुरुः स एव भगवान्, अज्ञाननिरासकत्वात्, तादृश्या **कृपया गृह्यमाणः**=अनुगृह्यमाणः, कृपाविषयीक्रियमाणः 'यमेवैष वृणुते तेन लभ्यः' (कठ.1-2-33, मुं.3-2-3) इति श्रुतिः अत्र प्रमाणम्। **कदाचित् कश्चित् विपश्चित्** विवेकी, **इत्थम्**=लोके प्रत्यक्षतो दृश्यमानेन प्रकारेण **मुक्तैश्वर्यान्तसंपन्निधिरपि भविता=मुक्तस्य यत् ऐश्वर्यम्**='स स्वराड्भवति' (छां.7-25-2) इतिश्रुतिसिद्धं स्वातन्त्र्यादिकम् तत्पर्यन्ता या **संपत् तस्याः निधिरिव निधिः**=आश्रयः **भविता,** लुट्, अचिरादेव भवेदित्यर्थः। इदं सर्वं सर्वैरपि लोके दृश्यत एवेत्येतदर्थम् 'इत्थम्' इत्युक्तिः। 'कदाचित्' 'कश्चित्' 'विपश्चित्' इत्यादयश्शब्दाः मोक्षाधिकारिणां दौर्लभ्यं सूचयन्ति। अथापि दृश्यते किल लोके कोटिष्वेको वा मुमुक्षुः। अत एवोक्तं भगवता 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥' (गी.7-3) इति। व्याख्यातं च भगवता 'कश्चिदेव यतते। तेष्वपि कश्चिदेव सामान्यतः सिद्धो भवति। तेष्वपि कश्चिदेव तत्त्वतः सिद्धो भवति' इति। 'कश्चित् मां तत्त्वतो वेत्ति' इति कथनात्, बहवः न तत्त्वतो विदन्ति इति लाभात्, 'ज्ञानिष्वपि न सर्वे पूर्णज्ञानिनः' इति लाभाच्च भगवद्रामानुजैरेवं वाक्यत्रयरूपमिदं व्याख्यातम्। अधिकं **तात्पर्यचन्द्रिकायाम्**। अतो ज्ञानिनां वचनेष्वपि वैविध्यमनिवार्यम्॥

ननु तर्हि किं ज्ञानिनोऽपि नानाविधाः? संशयः कः? दृश्यते च किल प्रत्यक्षमेव सैद्धान्तिकानां महतामपि मतिभेदाः परस्परमत्यन्तविरुद्धाः। पश्यामश्च ब्रह्मसूत्रेष्वपि बादरि-औडुलोमि-आश्मरथ्य-काशकृत्स्न-जैमिन्यादीनां महर्षीणां मतभेदान्। तर्हि का गतिः जिज्ञासूनाम्? समीचीनः प्रश्नः। यदि त्वमार्तस्सत्यम्—शृणु सावधानम्—

ऋषयस्तु महात्मानस्त्वधिकार्यादिभेदतः। पक्षान्नानाविधानाहुरध्यात्मं गहनं किल॥
अन्धाभिमानं सङ्केतं जाड्यं पूर्वग्रहादिकम्। सन्त्यज्य शरणं गच्छेन्मुमुक्षुः सुहृदं सताम्॥

एवं तर्हि तत्तत्सिद्धान्तस्थापकाचार्या महात्मानोऽपि किमज्ञानिनः? अथवा विप्रलंभकाः? शान्तं पापम्! बालिशानामयं प्रश्नः। केनोक्तं तथा? परं तु—

कस्मिन् प्रकरणे कस्मै केन प्रोक्तं कदा कुतः? सर्वमेतदनादृत्य शब्दः स्वार्थं कथं वदेत्?॥
तत्रापि तर्कादूरेऽस्मिन् तथात्यन्तमलौकिके। तपसैवाधिगम्येऽर्थे शब्दो मौनमिवाश्रितः॥
तर्को न मानं कस्यापि मानानुग्राहको हि सः। स्वतोऽप्रतिष्ठितस्तस्मान्नातिभारं क्षमेत सः॥
सर्वं भारं क्षमो वोढुं भगवान् वर्तते किल। तस्मिन्निक्षिप भारं स्वं सर्वं ते संविधास्यति॥
आचार्याणां हि सर्वेषामैकरस्यं तु दृश्यते। भगवद्भक्तिविषये भक्तिस्सर्वं विधास्यति॥
सर्वमन्यत्परित्यज्य सत्यान्वेषणनिष्ठया। पूर्वग्रहादीन् संत्यज्य साक्षीकृत्य च हृच्छयम्॥
सत्यैकचित्तस्सततं कुरु तीव्रं दृढं तपः। मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः॥
सत्येन तपसा लभ्यं सत्यं नान्येन हेतुना। सत्ये निक्षिप्य भारं स्वं सत्यमन्वेषय द्रुतम्॥
'महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया। गन्तुं दुःखोदधेः पारं त्वर यावन्न भिद्यते॥'

ननु! अविद्या-कर्म-वासनानां चक्रवद्भ्रमणेन कथमेतच्चक्राद्विमुक्तिः । एकैकस्मिन्नपि जन्मनि बहुजन्मोपयोगिकर्मणामनन्तानां संभवेन, एवं सञ्चितैः कर्मभिः जन्मपरंपरैव पुनःपुनर्वर्धेत किलेति चेत्, सत्यम्। शृणु परमभागवतानां वचनमेतत्—'मा भीर्मन्दमनः! विचिन्त्य बहुधा यामीश्चरं यातनाः नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः । आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥' (मु.मा.) इति ॥

अयि भो मुमुक्षो! अस्तु भवदीयं पुराणम्! 'सञ्चितं कर्म' इति किम्? विव्रियताम्। किमयं प्रश्नः? तत्पदमेव स्वार्थं वक्तुमलम्—'पूर्वपूर्वजन्मसु कृतानि अदत्तफलानि पुण्यपापानि 'सञ्चितं कर्म' प्रोच्यन्त इति ॥ कथमिदं संभवि? पूर्वजन्मन एवाभावात्, पूर्वपूर्वजन्मसु कृतानि पुण्यपापानि कथंतरां भवेयुः? जीवानां जन्मपरंपरासु मानवं जन्मैवान्तिमं जन्मेति तत्तत्त्वविदो वदन्ति। मानवजन्मनः पूर्वं पशुपक्ष्यादिरूपाणि जन्मानि भवन्ति । तेषु च पुण्यपापप्रसक्तिरेव नास्ति । मानवजन्मनोऽनन्तराणि तु जन्मानि पुण्यफलानि देवयोनिरूपाणि। एतेष्वपि नास्ति पुनः पुण्यपापप्रसक्तिः। शास्त्रं सर्वं मनुष्याधिकारं किल। 'मनुष्याधिकारत्वात्' (ब्र.सू.1-3-24) इति भवद्भिरेवोक्तम्। अतश्च मानवानां पूर्वजन्मप्रसक्त्यभावात् सञ्चितं कर्म नास्त्येव ॥

एवमपि यदि यः कश्चित् 'नराणां न सन्ति पूर्वोत्तरजन्मानि, अस्मदागमे अनुक्ते'रिति आग्रही भवेत्, तं प्रति वदामः अकथने कारणमन्यत्स्यात्। तावन्मात्रेण वस्तु न सिद्ध्येत्। यदि पूर्वजन्म न स्यात् तदा मानवेष्वेव परिदृश्यमानं तारतम्यादिकमहेतुकं स्यात् ॥

किञ्च एतज्जन्मकृतानां पुण्यपापानां गतिः केति चिन्तनीयम्। तेषां स्वर्गनरकरूपं फलमुक्तमेव तत्रैवेति चेत्, कर्मसाध्यानि तानि फलानि नित्यानि कथं स्युः? 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यनिवार्यमेव खलु। किञ्च पुण्यपापानि किल नानाविधानि, तरतमभावापन्नानि च। अत एव तत्फलान्यपि गुणतः कालतः देशतश्च तरतमभावापन्नान्येव नूनं स्युः । अतस्तेषामवसाने पुनरावृत्तिरप्य निवार्या । वस्तुतः साधकस्य, लक्ष्यैकपरस्य, वर्तमानकालमात्रनिष्ठस्य, श्रद्धालोः पूर्वापरजन्मप्रश्न एव नोदेति। 'कर्मण्येवाधिकारस्ते' इत्येतत्तत्त्वं जानतामिदं सुगमम्। तावन्मात्रेणातृप्यन् स गीताचार्यः 'मा कर्मफलहेतुर्भूः' इत्यपि पुनः किमुपादिशदित्यप्यालोचनीयम्। एतद्दृष्ट्यापि पूर्वजन्माकथनं युज्यते ॥

केचित्प्राहुस्तत्त्वदृष्ट्या रहस्यं नरजन्मनः। नरस्यैकस्य जन्मानि यावन्ति स्युः पुनः पुनः ॥
मिलित्वा तानि सर्वाण्यप्येकं जन्मैव कीर्त्यते। यतो मानवजन्मैव साधनार्थमुदीरितम् ॥
अत एव मुमुक्षापि तेषामेव हि संभवेत्। अतश्च मानवं जन्म त्वेकमेव भवेन्नृणाम् ॥
शक्यं यदीदं विज्ञातुं पर्याप्तं गाढचिन्तने। वैशिष्ट्यं च रहस्यं च ज्ञायेत नरजन्मनः ॥
ईश्वरे यदि चाश्वासः किं पूर्वजनिचिन्तया! ईश्वरे यदि नाश्वासः किं पूर्वजनिचिन्तया! ॥

अध्यात्मकक्ष्यायामुत्तममन्तिमं सोपानं हेतुफलचिन्तात्याग एव । एतद्दृष्ट्या क्वचिद्धर्मग्रन्थेषु पूर्वोत्तरजन्मप्रस्तावो नोपलभ्येत। तावन्मात्रेण तदभावो न निर्णेतुं शक्यः। यतः जिज्ञासोः बुद्धिजीविनो नरस्य श्रद्धा, विना कारणज्ञानं न दृढा भवितुमर्हति सहजत एव। दुरन्ता हेतुचिन्तैवानर्थावहा। 'कर्मण्येवाधिकारस्ते'

इत्युक्तावस्था तु नापक्कमतेरविवेकिनो भवितुमर्हति। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति खलु प्रसिद्धो न्यायः। पारलौकिको दृढो विश्वास एव श्रद्धेत्युच्यते। अतोऽन्धश्रद्धा श्रद्धैव न भवतीति चेत्, तर्हि नामान्तरं तस्य दीयताम् 'अन्धाभिमानम्' इति। अन्धाभिमाने श्रद्धाया असंभवादसहनायामेव पर्यवसानं स्यात्। विवेकपूर्विका तु श्रद्धा सहनामेव दद्यात्। विवेको नाम विज्ञानपूर्वकः सदसन्निर्णयः। कारणजिज्ञासैव विज्ञानस्य मूलम्। 'कार्यकारणसिद्धौ ते प्रसन्ना बुद्धिरव्यथा' (रा.4-18-49) इति मर्यादापुरुषोत्तममधिकृत्य महर्षेर्विचनं विलोक्यताम्। अतश्च प्रमाणप्रश्नोऽन्यः, दुस्तर्कश्चान्यः। 'चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः सिद्धान्ता न समिन्धते' (यति.स.61) इति तार्किकसिंहस्योक्तिः गाढं चिन्तनीया। 'विज्ञानेनात्मानं वेदयते' इति हि श्रुतिः। तथा च कर्तव्यनिर्णयोपयोगि विज्ञानमन्यत्; निर्णयानन्तरं कर्मकरणकालिकश्रद्धा चान्यैवेति सांकर्यं न युक्तमित्येव हितावहं नराणाम्॥

ततश्च सञ्चितं कर्म भवेन्नृणां न संशयः। इतोऽपि यदि ते ज्ञेयम्, साधवस्सेव्यतां सदा॥
साहाय्ये सृष्टिविज्ञानं स्यान्नूनं तत्त्वनिर्णये। प्रोक्ते हि ज्ञानविज्ञाने ब्राह्मणानां स्वभावजे॥
तर्कातीतेषु तत्त्वेषु श्रुतयः शरणं मताः। अर्थः श्रुतीनां तपसा ज्ञेयाः दैवप्रसादतः॥

**सत्यसंप्रदायस्तु** 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' (बृ.6-4-2) इति पूर्वोत्तरजन्मनी प्रतिपादयति। ऐदम्पर्येणैतदर्थकप्रश्नस्य नचिकेतसा कृतस्योत्तररूपे वाक्ये— 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा च मरणं प्राप्य आत्मा भवति गौतम॥ योनिमन्ये प्रपद्यन्ते शरीरित्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥' (कठ.2-5-6,7) 'बहूनां जन्मनामन्ते' (गी.7-9) 'अनेकजन्मसंसिद्धः' (गी.6-45) इत्यादौ च पुनर्जन्मप्रक्रिया स्पष्टं प्रत्यपादि। मनुस्मृतावन्तिमेऽध्याये कर्मविज्ञानं विस्तरेण वर्णितम्। उक्तकठवाक्ये 'स्थाणु' पदेऽतिगहनं कर्मरहस्यं सर्वमन्तर्हितम्॥

सतां मुखात्तु श्रोतव्यं तद्रहस्यं नृजन्मनाम्। वृथा चर्चाः, कर्मतत्त्वं सत्यमित्यवधार्यताम्॥

ननु मतान्तरेषु पुनर्जन्माप्रतिपादनात्, तन्मतस्थैरनङ्गीकारात्, तेषु पूर्वजन्मकथाया अश्रवणाच्च कथमेकपक्षीयतया निर्णयो युक्तः? न च तेषामागमा न प्रमाणानीति वाच्यम्, तैरपि तथैवास्मदागमविषयेऽप्रामाण्यारोपसंभवात्। अन्यतरनिर्णयेऽभिमानादृते विनिगमकादर्शनादिति चेत्; यथा वा केवलानुपलब्धिरभावे न प्रमाणम्, किन्तु योग्यानुपलब्धिरेव; तथैवाप्रसक्त्याऽप्रतिपादनसंभवेन, अप्रतिपादनमात्रेणाभावनिर्णयो न भवेदव। आर्षागमानामेव समग्रत्वं दृश्यते। इतरे त्वागमाः प्रायः देशकालकुलाद्युद्देशेनैव प्रवृत्ता इति तत्र तत्रैवाभिहितम्। अन्ततो व्याख्यातृणां बुद्धिभेदस्य सर्वत्र दर्शनाच्च न सुलभो निर्णयः। मानवानां बुद्धिसुखदुःखसंस्कारादितारतम्यदर्शनेन, तन्मूलकानुभवानां प्रदर्शितानामप्यर्थनिर्णायकत्वासंभवात्। भारतीयागमानामपि तथात्वासंभवः कथं वारणीय इति चेत्, सत्यम्—

यदि विप्रतिपत्तिःस्यान्नृणामनुभवे, तदा। विज्ञानेनैव निर्णेयोऽनुभवानां यथार्थता॥
विज्ञानेऽपि विसंवादे तप एवोत्तरं तदा। विफलं न तपो जातु सात्त्विकं त्यागमूलकम्॥
बृहत्यारण्यके प्रोक्ता दिव्या बह्वर्थगर्भिता। ब्रह्मज्ञानां कथारीतिरध्येया सावधानतः॥

[मुमुक्षोत्पत्तिप्रकारः]

**96. कृच्छ्रात् संवर्तकष्टाद्यपगमजनितस्थूलदेहस्य जन्तोः**
**जाग्रत् स्वप्नः सुषुप्तिर्मरणमथ मृतेरर्धसंपदशाः स्युः ।**
**सर्वं दुःखान्धकारस्थगितमिह सुखं त्वत्र खद्योतकल्पं**
**त्यक्त्वा शुद्धाशयास्तन्निरवधिकसुखां निर्विविक्षन्ति मुक्तिम् ॥ २६ ॥**

आर्तिः प्रामाणिकी स्याच्चेत् उत्तरं नैव दुर्लभम् । सृष्टेरयं तु नियमः न जातु विफलीभवेत् ॥

अत्रेदं परमं तत्त्वं ज्ञेयम्—

**आत्मा चिन्तामणिः** प्रोक्तः सर्वं साधयितुं क्षमः । यद्यच्चिन्तयते गाढं तत्तद्रूपस्स नो भवेत् ॥
यद्धितं त्रिषु कालेषु त्रिषु लोकेषु सर्वथा । तादृशं चिन्तनं कार्यं नान्यथा तु कदाचन ॥
आर्षवाणिस्तु सर्वेषां सर्वकालेष्वपि ध्रुवम् । सर्वथाप्यावहेत् नूनं हितं सर्वशरीरिणाम् ॥
सनातना सैव वाणी सती सैव सदा हिता । सर्वेषामविशेषेण, सेव्यतां सज्जनैस्सदा ॥ २५ ॥

'कथं भविता?' इति जिज्ञासोरुत्तरमाह— **कृच्छ्रादित्यादि**। मुमुक्षुत्वं प्रति प्रथमम् आत्मव्यतिरिक्त-विषयेषु वैराग्यमावश्यकम् । एतच्च 'जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्' (गी.13-8)इत्याद्युक्तक्रमेण, संसारस्य दुःखमयत्वज्ञानसाध्यम् । एतदेवात्रोपपाद्यते । **संवर्तः**=प्रलयः । प्रलयकाले हि सर्वेषामपि कारणे परब्रह्मणि लयादसत्कल्पता । जीवानामपि धर्मभूतज्ञानस्य सर्वथा संकोचात्, करणकलेबराद्यभावाच्च जीवा जडतुल्या वर्तन्ते । अतः जीवेभ्यः करणकलेबरदानेन, ते साधनम् कर्तुं प्रभवेयुरित्युद्देशेनैव पुनः जगतः सृष्टिः । तदुक्तमाचार्यवर्यैः 'अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा । करणकलेवरयोगं वितरसि वृषशैलनाथकरुणे! त्वम्' (दया.श.21) इति । भगवतः 'समोऽहं सर्वभूतेषु' (गी.9-29) इति सर्वसमत्वात् 'करुणे' इति भगवत्करुणायास्संबोधनम् । **संवर्तकष्टाद्यपगमेन जनितः स्थूलदेहः यस्य सः, तादृशस्य जन्तोः**=प्राणिसामान्यस्य, **जाग्रदाद्यवस्थाः स्युः** इत्यन्वयः । 'कृच्छ्रात्' इति कथञ्चिदित्यर्थे । अस्य 'जनित'इत्यनेनान्वयः । सूक्ष्मदेहस्य यावत्संसारमनुवृत्तेरवर्जनीयत्वात्, प्रलयेऽपि तस्यानपगमात् 'स्थूलदेहस्य' इत्युक्तिः । बहुतरक्लेशेनैव मानवशरीरप्राप्त्या तथोक्तिः ॥

एवं शरीरप्राप्तिमात्रेणापि न निस्तारः । पुनरपि क्लेशान्तराणि समुद्रतरङ्गवदविच्छिन्नानि भवेयुरेवेति प्रतिपादयति—**जाग्रदित्यादिना। जाग्रत्, स्वप्नः, सुषुप्तिः, अथ मरणम्, मध्ये मृतेः अर्धसंपद्दशाः**=मरणा-वस्थाया अर्धगुणसंपत्त्या मूर्च्छावस्था अनेनोच्यते । मूर्च्छावस्थायां अनेकविभागसद्भावसूचनाय बहुवचनम् ॥

मूर्च्छावस्था 'मुग्धेऽर्धसंपत्तिः' (ब्र.सू.3-2-10)मरणवस्थायामर्धावस्था इत्यभिहिता । 'वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इत्यादिना मरणावस्थाभिहिता । जाग्रत्स्वप्न-सुषुप्तितुरीयरूपासु मानवावस्थासु तुरीयावस्थाव्यतिरिक्ताः सर्वा अपि त्याज्या इत्याह— **सर्वमित्यादिना।** पूर्वोक्तं **सर्वम् दुःखान्धकारस्थगितम्** =दुःखरूपो योऽन्धकारः, तेन व्याप्तम् । पुरोगमनविरोधित्वात्,

अन्धकारस्य दुःखत्वेन रूपणम्। एवमपि सांसारिकसुखे सुखत्वमेव नास्ति, दुःख एव सुखत्वभ्रम इति बौद्धोक्तं न समीचीनमिति बोधनार्थम्— **सुखं त्वत्र खद्योतकल्पम्** इत्युक्तम्। 'सर्वं दुःखम्, दुःखम्' इति **बुद्धेनोपदिष्टत्वात्**, संसारेऽस्मिन् सुखमेव नास्तीति **बौद्धा** वदन्ति। तन्न युक्तम्। यत्र कुत्रचित् सुखत्वपरिचय एव यदि न भवेत्, तर्हि दुःखे सुखत्वभ्रमो वा कथं भवेत्। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ.6-3-32) इति श्रुत्याऽऽनन्दानुभवस्सर्वोऽपि आनन्दमयात्मानुभवस्य लेश एवेति, अस्ति संसारेऽपि सुखलेशः। अत एवात्रापि सुखं 'खद्योतकल्पम्' इत्युक्तम्। अतः संसारे सुखानुभव एव नास्तीति न, किन्तु अल्पे सुखे महत्वभ्रमः, अस्थिरे सुखे स्थिरत्वभ्रमः इत्येव वक्तव्यम्। एतदपि जनानां सत्त्वपरीक्षार्थम्। सांसारिकसुखस्याल्पत्वात् दुःखसमानाधिकरणत्वाच्च तस्य त्यागः; न तु तत्र दुःखत्वज्ञानात्। 'दुःखमेव सर्वं विवेकिनः' (यो.सू.2-15) इत्येतदपि 'भोगा दुःखयोनय एव' (गी.5-23) इति रीत्या वैराग्यार्थम्। अत एव तत्र 'विवेकिनः' इत्युक्तम्। बुद्धवाक्यमपि एतदभिप्रायकमेवेत्यर्थः। **तत्**=तस्मात् एतादृशमल्पसुखं **त्यक्त्वा शुद्धाशयाः**=निर्मलमनसः निरवधिकसुखाम् 'स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य' (तै.आ.) इति श्रुतिसिद्धनिरतिशयानन्दरूपां **मुक्तिं निर्विविक्षन्ति**=प्राप्तुमिच्छन्ति॥

तुरीयावस्थायाः संसारिणामसंभवात्, तस्या दुःखरूपत्वाभावाच्च नात्र तस्या गणना। जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाः माण्डूक्योपनिषदि वर्णिताः। तत्र **जाग्रदवस्था** तु प्रसिद्धा। सा च बाह्यान्तरसमन्वयरूपा। बाह्यं तु घटादि, आन्तरं तु तस्यैव विज्ञानात्मत्वम्। उभयोरेकरूपतैव जाग्रदित्युच्यते। अत एवात्र 'बहिःप्रज्ञः'(माण्डूक्य.2-1) इत्यभिधानम्। **स्वप्नस्तु** अन्तःप्रज्ञावस्था, यतः बाह्यस्याभावेऽपि आन्तरं विज्ञानात्मकं वस्त्वनुभूयते। विज्ञानस्य सत्यत्वेन तदात्मकस्यान्तरस्यापि सत्यत्वात्, स्वप्नस्य सत्यत्वमुच्यते। आन्तरस्य आन्तरत्वेनाज्ञानात्, बाह्यत्वेन ज्ञानाच्च, तद्विषये जाग्रदवस्थादृष्ट्याऽन्यथाख्यात्या स्वप्नस्य भ्रमत्वव्यवहारः। स्वप्नकाले तु सत्यत्वमेव तस्य। स्वप्नस्य सत्यत्वप्रतिपादनमात्रेण स्वप्नः सर्वोऽपि सत्य एवेति केचन मन्येरन्। तन्न; जगतः सत्यत्वाङ्गीकारेऽपि शुक्तिरजतादीनामपि सत्यत्वमिति यथा नार्थः, तथैव स्वप्नेऽपि वातपित्तादिदोषमूलकानां मिथ्यात्वमेव। दोषमूलकत्वरहितानामेव दिव्यानां सत्यत्वम्॥

ननु तर्हि स्वाप्नानुभवस्य यदि सत्यत्वम्, तर्हि तद्विषयाणामपि सत्यत्वमावश्यकम्; अन्यथा हि ज्ञानम् अयथार्थं स्यात् इति चेत्; सत्यम्, स्वाप्ना अर्था अपि सत्या एव। तर्हि समनन्तरमेव प्रबोधे बाधः दृश्यते किल— 'स्वप्ने दृष्टो धनागमो मिथ्या' इत्यनुभवादिति चेत्; स्वप्नकाले तादृशबाधादर्शनात्, स्वप्नप्रपञ्चस्य जाग्रत्प्रपञ्चस्य च परस्परमत्यन्तभिन्नत्वात्। जाग्रत्कालिकबाधेन स्वाप्नकालिकपदार्थानां मिथ्यात्वासंभवात्। अन्यथा तुरीयावस्थायां जातस्य देवतासाक्षात्कारादेः जाग्रत्कालेऽननुभवात् तेषामपि मिथ्यात्वप्रसङ्गात्। मिथ्याभूतस्वप्नस्यापि सत्त्वात् जाग्रत्पदार्थविलक्षणत्वाच्च मिथ्यात्वव्यवहारोपपत्तेः। अतः स्वाप्नपदार्थाः सत्या एव। तर्हि ते पदार्थाः केन कुत्र निर्मिताः? इति चेत्, अद्भुतशक्तियुक्तेन परमात्मनैव ते तत्कालमात्रावस्थायित्वेन तन्मात्रानुभाव्यत्वेन च सृज्यन्ते। स्थानञ्च तेषां शरीरान्तरेवेत्यादिकं तु पूर्वमेवोक्तम्

(श्लो.13) । ननु 'बहिष्कुलायादमृतश्चरित्वा' (बृ.6-3-12) इति शरीराद्बहिर्गमनं श्रूयते । तत्कथं शरीरान्तरिति? स्थूलशरीरस्याकार्यकारित्वात्तथोक्तिः । केचित् 'इव' पदयोजनया व्यख्यान्ति । अथवा 'बहिष्कुलायात्' इति समस्तं पदम् । बाह्यशरीरविलक्षणं शरीरान्तरं स्वीकृत्येत्यर्थः । अत एवेदं शरीरं न शवं भवति । यथाश्रुतार्थे का हानिरिति चेत्, जीवस्यैवायोगिनः शरीरत्यागे शरीरस्य शवत्वापत्तेः। श्रुतिविरोधाच्च । शरीरान्तस्तावद्विशालं स्थानं नास्त्येव किलेति चेत्; तेषां पदार्थानां जाग्रत्कालिकपदार्थवद्भौतिकत्वाभावेन तेषां विज्ञानरूपत्वात्, तावद्विशालस्थानानपेक्षणात् । भगवता दिव्यप्रभावेन सृष्टत्वात् । अन्यथा मार्कण्डेयेन श्रीकृष्णस्यान्तर्दृष्टस्य विश्वरूपस्यापि मिथ्यात्वप्रसङ्गात् । ते किमुपादानकाः? इति चेत्, जीवस्वरूपानुबन्धिविज्ञानोपादानकाः, अत एव सप्रतिघत्वाद्यभावः, तत्तज्जीवमात्रानुभाव्यत्वञ्च । एवमत्याश्चर्यरूपत्वादेव स्वाप्नपदार्थानां मायारूपत्वमुक्तम् 'मायामात्रं तु' (ब्र.सू.3-2-3) इति । 'माया'पदस्य मिथ्यापर्यात्वं नास्तीत्यग्रे (नायक-8) निरूपयिष्यते । सर्वेन्द्रियाणां बुद्धेश्च व्यापारो जाग्रदवस्थायाम् । बाह्येन्द्रियोपरतिः स्वप्ने । मनस्तु व्यापृणोति । 'मनसैतान् कामान् पश्यन् रमते' (छा-8-12-5) इति श्रुतिः। मनसोऽप्युपरतिः, अत एव बुद्धेरप्यसत्कल्पावस्था **सुषुप्तौ** । 'सता सौम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' (छां.6-8-1) इति श्रुतिः । एवञ्च परमात्मनाऽविभक्तावस्थापन्नो भवति जीवः सुषुप्तौ । सुषुप्तौ, मूर्छायाम् मरणे मुक्तौ च जीवस्य परमात्मनि लयेऽपि परमात्मनि संपत्तेस्तारतम्यादवस्थानां वैलक्षण्यम्। उत्तरोत्तरावस्थासु संपत्तेर्गहनता ज्ञेया । एतेषां विस्तरःसन्ध्याद्यधिकरणेषु द्रष्टव्यः । तुरीयावस्था तु उक्तत्रितयविलक्षणा बुद्ध्यतीता विशुद्धज्ञानविज्ञानमयी, यस्यामवस्थायामेव देवदर्शनादिकं आत्मदर्शनं वा भवति उपचितपुण्यविशेषाणां मानुषाणाम् । जाग्रदादिचतसृष्वप्यवस्थासु जाग्रदाद्यवान्तरभेदा अपि सन्ति । जाग्रज्जाग्रत्, जाग्रत्स्वप्नः, जाग्रत्सुषुप्तिः, जाग्रत्तुरीय इत्येवमादि प्रत्येकं विस्तरो ज्ञेयः ॥

ननु संसारस्य त्याज्यत्वे सिद्धे, तस्य दुःखरूपत्वस्थापने, दुःखमिश्रत्वस्थापने वा किमर्थमेतावान् प्रयासःप्रदश्यत इति चेत्,प्रथमं प्रयोजनं सर्वत्र यथावस्थितवस्तुस्वरूपयाथात्म्यज्ञानसंपादनस्यावश्यकत्वप्रदर्शनमेकं फलम् । तेन च द्वंद्वक्षयो महान् लाभः। वस्तुतो जगतो भगवद्विभूतिरूपत्वज्ञानेन भगवद्वैभवानुसन्धानोपयोगित्वं द्वितीयं महत् फलम् ॥

'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः । सोऽविकम्प्येन योगेन युज्यते नात्र संशयः ॥' (गी.10-7) इति ह्याह सः । शिष्टं पूर्वमेव (जड.70) प्रतिपादितम् ॥

इतोऽपि यदि वैशद्यं वत्स त्वं वाञ्छसे सदा । शुकवाक्यामृतं सम्यक् पिब सर्वार्थदं नृणाम् ॥
नान्या गतिर्योगमार्गाद्योगेश्वरकृपाप्तये । स ह्यस्मान्मोचयेन्नूनं बन्धादुर्वारुकं यथा ॥ २६ ॥

मोक्षप्रसङ्गात्, तत्र प्रसक्ताः शङ्काः निराक्रियन्ते । सर्वेऽपि जीवाः मोक्षार्हाः, उत केचिदेव वा? आद्यपक्षे, सर्वेषां मोक्षप्राप्तौ, अनन्तरं जगत एव अवस्थानं न स्यात्, सृष्टिलीलायास्समाप्तत्वात् । 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.2-1-33) इति हि सृष्टेः लीलात्वमुक्तम् । सर्वेषामपि मुक्तत्वे, लीला समाप्ता

[नित्यसंसारिपक्षविमर्शः]

97. **कश्चिच्चेन्नित्यबद्धः किमयमहमिति स्यान्मुमुक्षोरुपेक्षा**
**मैवं, युक्तस्य मुक्तिर्भवति दृढमिति प्रत्ययात् तत्प्रवृत्तेः ।**
**नो चेत्, स्यामन्त्यमुक्तः किमहमिति न केऽप्यद्य मुक्तौ यतेरन्**
**सर्गस्थित्यादिसन्तत्यविरतिरत इत्येवमेकेऽन्यथाऽन्ये ।। २७ ।।**

किल । द्वितीये पक्षे तु, केचिदेव मोक्षार्हाश्चेत्, इतरे केवलं संसारिण एव भवेयुः । अस्तु तथैव । केचन नित्यसंसारिण एवेति चेत्, तत्र दोषमाह—**कश्चित्यादिना । कश्चित्** जीवः=**नित्यबद्धश्चेत्**=नित्यसंसार्येव यदि, न कदापि तस्य मोक्षः इत्यस्मिन् नित्यसंसार्यङ्गीकारपक्षे, **अयम्**=एतादृशो नित्यसंसारी **अहम् किम्?**=अहमेव भवेयम् किम्? **इति** संशये **मुमुक्षोः** पुरुषस्य **उपेक्षा**=मोक्षार्थप्रयत्ने औदासीन्यं स्यात् । अतः जातायामपि मुमुक्षायाम्, मोक्षार्थप्रयत्ने वैमुख्यमेव स्यात् । ततश्च न कोऽपि मुक्तो भवेत् । अतः नित्यसंसारिपक्षः न समीचीनः । इदं निराकरोति—**मैवमिति**। हेतुमाह—**युक्तस्येत्यादि । युक्तस्य**=मुक्त्यर्हस्य **मुक्तिः दृढं भवति**=नूनं भवत्येव **इति प्रत्ययात्**=विश्वासात् **तत्प्रवृत्तेः**=मुक्त्यर्थप्रवृत्तेः संभवात् नित्यसंसार्यङ्गीकारे मुक्त्यर्थप्रवृत्तिः न स्यादित्ययुक्तम् । **अयं भावः**—लोके हि फलस्यानन्तरकालिकत्वात्, कालेश्वरादृष्टाद्यधीनत्वाच्च, फलं नियमेन भवत्येवेति निश्चयः दृष्टफलेषु कृष्यादावप्यादावेव न संभवत्येव । किमुतात्यन्तगहनेषु मुक्त्यादिफलेषु बहुजन्मतपस्साध्येषु आदावेव निश्चयसंभवः । अतः चेतनत्वसामान्यरूपेण स्वरूपयोग्यतायाः सर्वेषु समानत्वात्, स्वस्य नित्यसंसारित्वानिश्चयादेव साधने प्रवृत्तिः । एवमनङ्गीकारे बाधमाह—**नो चेदित्यादि । नो चेत्**=एवं नित्यसंसारिसद्भावमात्रेण कस्यापि मोक्षार्थप्रवृत्तिर्यदि न स्यात्, **'अहम् अन्त्यमुक्तः किं स्याम्' इति**=इति बुद्ध्या, **केऽपि अद्य**=इदानीम् **मुक्तौ**=मुक्तिविषये, मुक्तिनिमित्तमिति वार्थः, **न यतेरन्**=न प्रयतेरन् ।।

**अयं भावः**—नित्यसंसार्यङ्गीकारमात्रेण कस्यचित् मुक्त्यर्थप्रवृत्तिः यदि न स्यात्, नित्यसंसार्यनङ्गीकारेऽपि प्रकारान्तरेणायं दोषस्समानः । सर्वेषां मुक्त्यर्हत्वेऽपि, किं क्रमशः सर्वे मुक्तिं प्राप्नुवन्ति, उत एकस्मिन्नेव समये युगपत्प्राप्नुवन्ति? नान्त्यः, अदर्शनात्, तथानङ्गीकाराच्च । नापि प्रथमः; क्रमश एव मुक्तिर्यदि, तदा अन्ते यः कश्चिन्मुक्तिं प्राप्स्यतीत्युच्यते, तस्येदानीं शतशः प्रयत्नकरणेऽपि मुक्तिः कथञ्चिदपि न भवितेति वक्तव्यम् । एवञ्च यस्याद्य मुमुक्षा भवति, तस्य 'अहं यदि अन्त्यो मुक्तः स्याम्, तर्हि अद्य तदर्थप्रयत्नेन न कोऽपि लाभः; अनन्तरं पश्यामः' इति बुद्धेः संभवेन अद्य तस्य वैमुख्यमेव स्यात् । एवञ्च मानवप्रकृतेरालस्यपक्षपातित्वात् कस्यापीदानीं मुक्त्यर्थप्रवृत्तिः न स्यात् । अतो दोषः पक्षद्वयेऽपि समानः । एवमपि नित्यसंसारिपक्ष एव औचित्याधिक्यमित्याह—**सर्गेत्यादि । अतः**=नित्यसंसारिणां सत्त्वादेव **सर्गस्थित्यादिसन्तत्यविरतिः**=सृष्टिस्थितिपरंपरायाः सदानुवृत्तेः संभवः । **आदिपदेन** प्रलयपरिग्रहः। तर्हि अयमेव वा सिद्धान्तः? इति चेत्, तत्राह—**इत्येवमेक इति । अन्ये**=इतरे तु **अन्यथा**=प्रकारान्तरेणैव

[नित्यसंसारिसद्भावासद्भावविमर्शः]

98. निश्शेषात्मापवर्गे विहतविहरणो विश्वकर्ता तदा स्यात्
नित्यं चेत् कोऽपि दुःख्येन्निरुपधिकदयाहानिरस्येति चेन्न ।
पक्षः पूर्वो यदि स्यात् , विहरणविरतिः स्वेच्छया नैव दोषः
शिष्टे पक्षे निरुद्धा निरुपधिकदया कुत्रचिन्नित्यमस्तु ॥ २८ ॥

---

वदन्ति । एतत्पक्षे, अस्त्येव सर्वेषां मुक्त्यर्हतेत्यर्थः । 'ममैवांशो जीवलोके जीवभूतःसनातनः' (गी.15-7) इत्यादिना जीवानां सर्वेषामेवाविशेषेण परमात्मांशत्वे समाने, मुक्त्यर्हता केषांचिदेव, केषाञ्चित्तु नेति कथनमत्यन्तासमञ्जसमिति भावः ॥ २७ ॥

तर्हि तथैव स्पष्टं कुतो नोच्यत इत्यत्र, पक्षद्वयमपि विमृशति—**निःशेषेत्यादि**॥ अशेषशब्दवत् निश्शेषशब्दः समस्तवाची । **निश्शेषात्मापवर्गे**=सर्वेषामेव जीवानां मुक्तौ प्राप्तायाम् **तदा** तस्मिन् समये **विश्वकर्ता**=जगत्स्रष्टा **विरतविहरणः**=विश्रान्तक्रीडः **स्यात्** । क्रीडया जगत्सृजतीति हि सिद्धान्तः । जगच्छब्दश्च चिदचिन्मिश्रवस्तुवाचकः । तत्र चेतनानां सर्वेषामपि मुक्तौ, सृज्यस्य वस्तुनः अभावात् कथं ईश्वरः जगत् सृजेत्? । ततश्च सृष्ट्याख्यलीला विरता स्यात् । केषांचिज्जीवानां मुक्तिः न भवत्येवेति पक्षे सृष्टिलीलापि अनुवर्तेत । अतः नित्यसंसारिपक्ष एव युक्त इत्यभिप्रायः ॥

अस्तु तर्हि स एव पक्ष इत्यपि न वक्तुं शक्यते । कुतः? **कोऽपि**=यः कश्चिज्जीवः **नित्यं दुःख्येत् चेत्**=नित्यसंसारित्वात् तस्य, संसारस्य च दुःखप्रचुरत्वात्, सः सदा दुःख्येव भवेत्, न कदापि तस्य मुक्तिप्रसङ्ग इति **अस्य**=जगत्स्रष्टुः भगवतः **निरुपाधिकदयाहानिः**=निरुपाधिक्याः सहजायाः अत एव निर्हेतुकेत्युच्यमानायाः **दयायाः हानिः**=अभावप्रसङ्गः । भगवान् किल सहजदयावानिति प्रसिद्धम् । मुक्त्यर्हानां सर्वेषामपि मुक्त्यनन्तरम् स्वक्रीडानुवृत्त्यर्थम् सः केषांचित् कदापि मुक्तिं न ददातीत्यङ्गीकारे मूर्खराजादिवत् भगवानपि हिंसाविहारी स्यात् । एवञ्च ब्रह्मणः निर्दुष्टत्वं न स्यात् । समस्तदोषरहितः खलु परमात्मोच्यते । अतः पक्षद्वयेऽपि दोषः समानः । तदेतन्निराकरोति—**चेत् न** इति । तृतीयपक्षस्याप्यसंभवात् कथं तर्हि निर्णय इति चेत्, तत्राह—**पक्ष इत्यादि** । **पूर्वः**=प्रथमः **पक्षः**=नित्यसंसार्यभावपक्षः **यदि स्यात्, तदा स्वेच्छया विहरणविरतिः**=स्वसङ्कल्पेनैव सृष्ट्यादिलीलायाः विरतिः **नैव दोषः**=दोषो न भवत्येव। अरतिपरिहाराय क्रीडासु प्रवृत्ता राजादयो हि अरतेः परिहारे स्वयमेव क्रीडातो विरमन्ते । 'स एकाकी न रमते' (बृ.3-4-3) इति खलु श्रुतिः । एवञ्च परमात्मनोऽपि राजवदेव अरतिपरिहारायैव सृष्टौ प्रवृत्तेः श्रवणात्, राजवदेव स्वसङ्कल्पेनैव सृष्टेर्विरतावपि न कश्चिद्दोषः । विरतेरन्यकृतत्वे हि स्वातन्त्र्यहानेः दोषरूपता स्यात् । अतः सृष्ट्यादिलीलायाः स्वतो विरतिः न दोषाय भवेत् ॥

एवमेव—**शिष्टे पक्षे**=अवशिष्टे द्वितीये पक्षे नित्यसंसारिसद्भावपक्षेऽपि **निरुपधिकदया**= परमात्मनः सहजा दया **कुत्रचित्**=कतिपयचेतनविषये **नित्यं निरुद्धा**=प्रतिरुद्धा **अस्तु** । केषाञ्चित् जीवानां

स्वरूपत एव मुक्त्यर्हताया अभावात्, तद्विषये भगवतो दयाया अभावः न दोषाय भवति । आद्यप्रवृत्तौ निर्हेतुकदयैव मूलम् । वैषम्यपरिहाराय केवलं जीवकर्मापेक्षेत्येव सिद्धान्तः । एवञ्च निरङ्कुशस्वतन्त्रस्यापि भगवतः, वैषम्यनैर्घृण्यपरिहाराय जीवकर्मानुगुणं तरतमभावेनैव जगत्सृजतीति हि सिद्धान्तः । अतः केषाञ्चित् जीवानां कर्मणस्तादृशत्वात् कदापि मुक्तिर्न भवेच्चेत्, तत्र परमात्मनो दोषो नास्त्येव । अन्यथा हि पातकिनामपि, साधनाद्यनुष्ठानमन्तरापि निरुपाधिकदययैव यदि भगवान् मोक्षं दद्यात्, तदा उन्मत्तराजवत् स्यात् परमात्मा । 'व्यवस्थितः प्रशान्तात्मा कुपितोऽप्यभयंकरः । अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥' इति खलु न्यायः । वस्तुतस्त्विदं सर्वं परमात्मस्वरूपापरिज्ञानमूलमेवेति मन्तव्यम् ॥

ननु पुनरपि अनिर्णय एव पर्यवसानमिति चेत्; सत्यम्, नैतादृशा विषयाः कदापि युक्तिभिर्निर्णेतुं न शक्या इति प्रदर्शनार्थमेवैवमभिहितम् । **वस्तुतस्तु**—अविशेषेणैव सर्वेषामपि जीवानां ब्रह्मांशत्वस्याभिधानात्, जीवेषु मुक्त्यर्हतदनर्हविभागः जीवस्वरूपविरुद्ध एव । अग्रेऽपि(श्लो.42) द्रष्टव्यम् ॥

स्वरूपयोग्यतारूपं कारणत्वं विलक्षणम् । फलोपधायकत्वं च तथान्यत्समुदीरितम् ॥
स्वरूपयोग्यतासत्त्वेऽप्यन्यहेतोरभावतः । फलोपधायकत्वं तु न स्यात् हानिर्न तावता ॥

**परमार्थतस्तु** 'न च तावता सर्वमुक्तिप्रसङ्गः, आत्मनामानन्त्यात्' इत्यारंभणाधिकरणे भाषितमेव परमप्रामाणिकं समाधानमत्रेत्यवधेयम् ॥

अवध्यभावान्नभसः ब्रह्माण्डानन्त्यघोषणात् । लीलाया विरतिर्न स्यान्न भेतव्यं त्वया वृथा ॥
नास्माभिश्चिन्तनीया सा लीलाविरतिरीशितुः। स्वरक्षणेऽप्यशक्तानां किमेतादृशचिन्तया ॥
योऽभयं सर्वजीवेभ्यो वक्ति 'मा शुच'इत्यमुम् । अनुशोचसि मूर्खस्त्वं कथं स्यात्तत्कृपा त्वयि ॥
पश्य तर्कस्य पाण्डित्यं निगमान्तगुरोः कियत्! विज्ञानस्याधिदेवेन वृतो हि स्वयमेव सः ॥
अत एव न हानिश्च तादृशाद्बुद्धिवादतः । इतरे तु प्रणश्येयुर्बुद्धिनाशान्न संशयः ॥
अत एवासकृत्सत्यमुच्यते सार्वकालिकम् । बुद्धिरेव महामाया नराणां प्रथमा मता ॥
सा तु संरक्ष्यतां शीघ्रं भगवत्यर्पणादिना । निष्कामकर्मयोगेन दीनानां सेवयापि च ॥
एतादृशीभ्यश्चर्चाभ्यो यावद्दूरे भवेन्नरः । काकदन्तपरीक्षाभ्यः तावदस्य हितं भवेत् ॥
बुद्ध्यतीतेष्वीदृशीषु न युक्ता बुद्धिजीविनाम् । चर्चाऽपहरेद्बुद्धिं दैवं व्यर्थप्रयोगतः ॥
कथं वा तर्हि मनसस्समाधानं भवेन्नृणाम् । इति चेत् क्रियतां सद्भिस्सङ्गो बुद्धिप्रसादकः ॥
ननु भोः! अस्त्विदं सर्वमेतत्प्रथममुच्यताम् । अवाप्तसर्वकामस्यारतिर्वा रतिरेव वा ॥
कथं भवेत्तस्य लीलाऽरतेश्चैव निवारिणी । अत एवं खलूचुस्ते महामेधाविनः पुरा ॥
'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा?' इति ।
पृच्छामि वद मेधाविन्! सृष्टेर्हेतुस्तु को भवेत् । स्वभाव इति को वार्थः देवस्येति किमर्थकः ॥
क्रीडार्थको दिवुर्धातुः **घट्टकुत्स्यामुषःस्मृतम्** । क्रीडैव चेत्स्वभावोऽस्य तदेवेष्टं महात्मनाम् ॥

[भक्तेरेव मोक्षसाधनत्वम्]

99. भक्तिर्मुक्तेरुपायः श्रुतिशतविहितः, सा च धीः प्रीतिरूपा
तन्निष्पत्त्यै फलेच्छाद्युपधिविरहितं कर्म वर्णाश्रमादेः ।

यत्र न ज्ञायते तत्त्वस्वरूपं लेशतोऽपि वा । स्वभाववादमाश्रित्य स्वाज्ञानं छाद्यतेऽखिलैः ॥
**पाराशर्या**दपि न हि **गौडपादो** महान् भवेत् । बुद्धिजीवी गौडपादः व्यासो ब्रह्मर्षिसत्तमः ॥
पाराशर्यादिभिः प्रोक्तो लीलावादस्ततो वरम् । भगवद्वैभवं तेन ज्ञातुं शक्यं हि लेशतः ॥
वेदान्तिनां हि सर्वेषां व्याससूत्रं परं मतम् । लीलैव केवलं सृष्टिरिति तत्सूत्रमाह हि ॥
सृष्टेःपूर्वं श्रुतिःप्राहारतिं तु परमात्मनः । अरतेः परिहाराय क्रीडन्ते किल पार्थिवाः ॥
सृष्टिहेतुस्स्वभावश्चेत् विरमेन्न कदापि सा । स्वभावःखलु दुर्लङ्घ्यः स्थित्यादेस्तर्हि का गतिः?॥
यदि स्वभावादेव स्युः सृष्टिस्थितिलयादयः । व्यवस्था वा कथं तत्र वद तत्त्वं महामते! ॥
सर्वं स्वभावादिति चेत् विचारस्त्यज्यतां तदा । विचारशास्त्रं व्यासेन कृतं तर्हि कथं वद ॥
अवाप्तसर्वकामस्य परदुःखजिहीर्षया । प्रवृत्तिर्नैव दोषाय, गुण एव भवेत्तु सा ॥
न मे पार्थास्ति कर्तव्यमित्याह भगवान् स्वयम् । निर्गुणं तु परं ब्रह्म सगुणं त्ववरं मतम् ॥
इत्यादिकल्पना नूनं कल्पनैव तु केवलम् । विचार्यतेऽग्रिमसरे त्वेतत्तत्त्वं विशेषतः ॥
नित्यसंसारिशब्दश्च प्रयुक्तो यत्रकुत्रचित् । मुक्त्यर्हत्वेऽपि तत्प्राप्तेरभावादुपपद्यते ॥
आकाशस्य ह्यनन्तस्य त्वन्तदेशविचिन्तनम् । न व्यर्थं केवलं किञ्च बुद्धिनाशस्य कारणम् ॥
स्वसीमायां वर्तितव्यं जीवेनाज्ञेन सर्वदा । मर्यादातिक्रमे नाशः सिद्ध इत्यवधार्यताम् ॥
काकदन्तपरीक्षादि त्यक्त्वा दूरे हितेप्सुना । भगवत्यर्प्यतां बुद्धिः प्रसन्ना येन सा भवेत् ॥
अतोऽवैज्ञानिकी प्रोक्ता नित्यसंसारिकल्पना । एतच्चिन्तां परित्यज्य भज चिन्ताहरं हरिम् ॥ २८ ॥

एवं जीवस्वरूपविचारं परिसमाप्य, तस्य मुक्तिं प्रतिपिपादयिषुः प्रथमं मुक्त्युपायं प्रतिपादयति— **भक्तिरित्यादिना** । **भक्तिरेव मुक्तेः उपायः श्रुतिशतविहितः**=अनेकश्रुतिभिः विहितः, विधेयप्राधान्यात् पुंल्लिङ्गः । **सा च**=भक्तिश्च **प्रीतिरूपा धीः**=निरतिशयप्रीतिरूपं ज्ञानमेव । 'महनीयविषये प्रीतिर्भक्तिः' इत्याचार्याः । प्रीत्यादिकं धर्मभूतज्ञानस्यावस्थाविशेषः । अतो ज्ञानमेव भक्तिः । अस्तु मुक्तेरुपायो भक्तिः । भक्तेरुपायः कः? इत्यत्र— **फलेच्छाद्युपधिविरहितं वर्णाश्रमादेः कर्म तन्निष्पत्त्यै**=भक्त्युत्पत्त्यै **भवति** । वर्णाश्रमादिधर्माणां हि प्राजापत्यादिलोकावाप्तिः फलं स्मर्यते । अथापि एतादृशफलेच्छादिरूपोपाधिरहितं वर्णाश्रमाङ्गभूतं=ब्राह्मणत्वादिवर्णाङ्गभूतं, ब्रह्मचर्याद्याश्रमाङ्गभूतं च कर्म चित्तशुद्धिद्वारा भक्त्युत्पत्तेः उपायो भवति । भक्त्युत्पत्त्यनन्तरं तु कर्म भक्त्याख्यब्रह्मविद्याङ्गं भवतीति वक्ष्यते (श्लो.31) ॥

ननु ब्रह्मविद्यापदवाच्यानां ज्ञानध्यानोपासनादीनामेव मोक्षसाधनत्वं श्रूयते, न तु भक्तेः कुत्रापि । 'यस्य देवे परा भक्तिः' (श्वे.6-23) इत्यत्रापि 'अर्थाः प्रकाशन्ते' इति कथनात् भक्तेः ज्ञानहेतुत्वमाह, न तु

**ज्ञानध्यानादिवाचां समफलविषया सैव युक्ता प्रतिष्ठा**
**सामान्योक्तिः समानप्रकरणपठिता पर्यवस्येद्विशेषे ।। २९ ।।**

मुक्तिहेतुत्वमित्यत्राह— **ज्ञानेत्यादि**। **ज्ञानध्यानादिवाचाम्**=ज्ञानध्यानोपासनशब्दानाम् **समफलविषया**= मुक्तिरूपसमानफलवती **सैव**=भक्तिरेव **प्रतिष्ठा**=पर्यवसानभूमिः **युक्ता**=न्यायसिद्धा ।। मोक्षसाधनं हि तत्तत्प्रकरणेषु 'निदिध्यासितव्यः' 'उपासीत' 'वेद' 'ज्ञात्वा' इत्यादिभिन्नभिन्नशब्दैरभिधीयते। अत्रोक्तानि ध्यानोपासनवेदनज्ञानादीनि समानार्थकानि वक्तव्यानि; अन्यथा साधनभेदेन तत्तद्ब्रह्मविद्यानां फलतारतम्यमनिवार्यं स्यात्। न चेष्टापत्तिः; तदा हि कर्मफलवदेव मुक्तेस्तारतम्यप्रसङ्गेन तस्य निरतिशयपुरुषार्थरूपत्वं न स्यात्। अत एव 'विकल्पोऽविशिष्टफलत्वात् (ब्र.सू.3-3-15) इति सूत्रविरोधप्रसङ्गश्च। ब्रह्मविद्यासु सर्वासु ब्रह्मण एव विषयत्वेऽपि, ब्रह्मगुणाः केचन केचनैव तत्तद्विद्यासु उपास्यतया विधीयन्ते; न तु सर्वे गुणाः सर्वत्रोपास्याः, गुणानामानन्त्येन दुष्करत्वात्। निर्गुणविद्येति का चिन्नास्त्येव, निर्विशेषं वस्त्वेव शशशृङ्गतुल्यम्। एवं सति एकैव विद्या मुक्तये पर्याप्ता? उत यथाशक्ति अन्यापि विद्या आवश्यकी? इति संशये; न आवश्यकी, सर्वासामपि विद्यानां फलस्य ब्रह्मप्राप्तिरूपस्य समानत्वात्, यथासंभवं यथारुचि काचिद्विद्यैवानुष्ठेया इति सूत्रार्थः। ततश्च सर्वब्रह्मविद्यानां मुक्तिसाधनत्वमेकरूपमेवेति, ध्यानोपासनादिशब्दैः एकरूपमेव साधनं विधीयत इति वक्तव्यम्। तदेव साधनं उपासनमित्युच्यते। तदेव च भक्तिरित्युच्यते। 'भज सेवायामिति' हि धातुः। 'सेवा भक्तिरुपास्तिश्च' (श्रु.प्र.) इति निघण्टुः ।। 'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति च। 'गुरुमुपासते' 'गुरुं सेवते' 'देवं भजते' 'देवमुपास्ते' इत्यादिप्रयोगाणां सर्वसंमतत्वात् उपासनापदं व्यापकार्थम्। ब्रह्मोपास्ते इत्यत्रोपासनं ज्ञानविशेषरूपम्। अतः ज्ञानध्यानादीनां भक्तौ पर्यवसानमनिवार्यम्। अन्यथा मुक्तौ तारतम्यप्रसङ्गः। सगुणमुक्तावस्त्येव तारतम्यम्, तत्क्रतुन्यायादित्यादि चोपरि (श्लो.31) विमृश्यते ।।

ज्ञानध्यानादिसर्वपदानामेकार्थबोधकत्वे न्यायमाह— **सामान्येत्यादिना**। **समानप्रकरणपठिता**= मोक्षसाधनस्वरूपसमानार्थप्रकरणेषु दृश्यमाना **सामान्योक्तिः**=सामान्यशब्दप्रयोगः **विशेषे पर्यवस्येत्**= विशेषार्थवाच्यकत्वे पर्यवस्येदेव। मुक्तौ तारतम्याभावात् साधनानामेकरूपत्वस्यावश्यकत्वे च, ध्यानोपासनादिपदानां पर्यायत्वस्य स्वरसत्वेन च, भक्तेरेव ज्ञानविशेषरूपायास्साधनत्वं सर्वश्रुतिसिद्धम्। ज्ञानवेदनादिसामान्यपदानां भक्तिरूपज्ञानविशेषबोधकत्वं शक्त्यैव संभवति। 'दृष्टे' इति दर्शनपदमपि, ध्यानस्य दर्शनपर्यवसायित्वात्, तदवस्थामादायोपपद्यते। सिद्धान्ते हि ज्ञानं द्रव्यं परिणामि च। अतः न कुत्राऽपि क्लेशः। परसंमतं ज्ञानमेव चेत् मोक्षसाधनम्, ध्यानोपासनादिविशेषपदानां सामान्ये पर्यवसानं लक्षणयैव वक्तव्यम्। 'सामान्यपदानां विशेषबोधकत्वं शक्त्यैव, विशेषपदानां सामान्यबोधकत्वं तु लक्षणयैव' इति न्यायस्य लोके, शास्त्रे च स्वरससिद्धत्वात्, दर्शनपर्यवसायि भक्तिरूपमुपासनमेव मोक्षसाधनम्, न तु ज्ञानसामान्यम्। मोक्षस्य संपूर्णज्ञानविकासरूपत्वात् 'अर्थाः प्रकाशन्ते' इत्युक्तिरपि न विरुद्ध्यते। 'भक्त्या त्वनन्यया शक्य

[भक्तिः ज्ञानरूपा]

**100. ध्यानाद्युक्त्या ध्रुवानुस्मृतिरिह विहिता ग्रन्थिमोक्षाय, सैव**
**स्पष्टा दृष्टिस्तथैव श्रुतिफलविषया, सेवनत्वादुपास्तिः ।**

अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ (गी.11-54) इत्युक्तं ज्ञानादिसाधनत्वमपि भक्तौ पर्वभेदस्य सत्त्वात्, आरंभे ज्ञानसाधनत्वमपि तस्याः संभवेत् । अतः 'यस्य देवे परा भक्तिः' इति 'पर'पदविशेषणात् परभक्तेरेव मोक्षाव्यवहितसाधनत्वं श्रुतिस्मृतिसिद्धम् ॥ २९ ॥

सर्वश्रुतिसामरस्यमेतत्सिद्धान्त एवेति विशदयति—**ध्यानाद्युक्त्येत्यादिना**। प्रकृते मोक्षतत्साधन स्वरूपविषये मूलभूतविचारस्त्वयम्—तत्र मोक्षस्वरूपे पक्षभेदा उपरि प्रदर्श्यन्ते । परन्तु 'मोक्ष' पदमेव सापेक्षार्थकम् । तत्पदश्रवणसमनन्तरमेव हि 'कस्मान्मोक्षः?' इति प्रश्नः समुदेति । 'बन्धान्मोक्षः' इत्युत्तरम् । 'तर्हि बन्धो नाम कः?' इति प्रश्ने, 'संसार एव बन्धः' इत्युत्तरम् । 'तर्हि एतत्संसाराख्यबन्धस्य निवृत्त्युपायः कः', 'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्थाः' (श्वे.3-8) इति ज्ञानमेव मोक्षोपायः । 'ज्ञानं कीदृशम्?' इत्यत्रैव विवादः । ज्ञानादेव बन्धस्य निवृत्तिश्चेत्, वंधस्य मिथ्यात्वमनिवार्यम् । यथा रज्जौ सर्पभ्रमे जाते, रज्जुज्ञानेन सर्पभ्रमनिवृत्त्या मिथ्यासर्पस्य निवृत्तिः । सत्यस्य सर्पस्य तु दण्डादिनैव निवृत्तिः । अतो ज्ञाननिवर्त्यत्वमेव मिथ्यात्वम् । बंधस्य संसारस्य सत्यत्वे ज्ञानान्निवृत्तिः न घटेत । अतः संसारो मिथ्येति सिध्यति । एतादृशस्य प्रत्यक्षभ्रमस्य निवृत्तिश्चेत् प्रत्यक्षात्मकेन ज्ञानेनैव भवेत् । रज्जुसर्पभ्रमस्य यथा रज्जुरिव प्रपञ्चभ्रमस्य ब्रह्मैवाधिष्ठानम् । अतश्चाधिष्ठानभूतब्रह्माऽपरोक्षज्ञानमेव प्रपञ्चभ्रमनिवर्तकमिति स एव मोक्षोपाय इत्यागतम् । एतादृशस्यापरोक्षज्ञानस्य तत्करणाधीनत्वात् न विधिसंभव इति, एतत्पक्षस्य **'अविधेयज्ञानवादः'** इति व्यवहारः ॥

एतत्सिद्धान्ते तु—'तमेव विदित्वा' इत्युक्तं ज्ञानं न अपरोक्षरूपम्; 'स्मृतिलंभे सर्वग्रन्थीनां विप्रमोक्षः' (छां.7-26-2) इति स्मृतिरूपपरोक्षज्ञानस्य मोक्षसाधनत्वश्रवणात् । एवम् 'ध्यायथ' (मुं.2-2-6) इत्यादौ ध्यानादीनामपि मोक्षसाधनत्वं श्रूयते । ब्रह्मप्राप्तिरूपफलस्याविशिष्टत्वात्, साधनमपि ध्यानादि-पदवाच्यं एकरूपमेव वक्तव्यम्, साधनस्वरूपभेदे फलभेदस्यावश्यकत्वात् । फलतारतम्ये तस्य परम-पुरुषार्थत्वं न स्यात् । साधनवाचकपदेषु 'स्मृति'पदमेवात्यन्तविशेषवाचकम् । यथा द्रव्यादिपदानां द्रव्यविशेषरूपघटवाचकत्वम्, तथा वेदनादिसामान्यपदानां 'स्मृति'रूपविशेषवाचकत्वं न्यायसिद्धम् । अतश्च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपमुपासनमेव भक्तिपर्यायं मोक्षसाधनम् सिद्धम् । एतादृशस्य ज्ञानविशेष-रूपस्य आवृत्तिगुणविशिष्टस्य मोक्षसाधनस्य विधानसंभवात् अस्य पक्षस्य **'विधेयज्ञानवादः'** इति व्यवहारः । ननु प्रपञ्चभ्रमस्यापरोक्षत्वात्, परोक्षेणोपासनेन कथं तन्निवृत्तिरिति चेत्, प्रपञ्चस्य भ्रमत्वासिद्धेः । अनेनैव तत्सिद्धावन्योन्याश्रयः । न च प्रपञ्चस्य सत्यत्वे, तस्यैव संसारपदवाच्यबन्धत्वात्, उपासनया कथं निवृत्तिरिति वाच्यम्, उपासनया प्रसन्नस्य परमात्मनोऽनुग्रहेणैव तन्निवृत्तेः । 'अमृतस्यैष सेतुः' (मुं.2-2-5)

**क्वाप्यैक्यं विद्युपास्त्योर्व्यतिकरितगिरा, भक्तिमेवाह गीता**
**सर्वं तद्वित्तिमात्रे फलवति विफलं, तेन सैवंविशिष्टा ।। ३० ।।**

'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'(ब्र.सू. 3-2-4) 'फलमत उपपत्तेः' (ब्र.सू.3-2-37) 'हार्दानुगृहीतः' (ब्र.सू.4-2-16) इत्यादिश्रुतिसूत्रादिभिः परमात्मन एवामृतत्वप्रापकत्वावगतेः । न च 'एषः' इति पूर्वमुक्तं ज्ञानमेव वक्तीति युक्तम् ; 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनःप्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चतामृतस्यैष सेतुः' इति पूर्णं वाक्यम् । तत्र ज्ञानं धात्वर्थः, न प्रधानार्थः । 'तमेवैकम्' इति तच्छब्देन पुंल्लिङ्गेन प्रसक्तस्य प्रधानार्थस्य 'एषः' इति पुंल्लिङ्गेन शब्देनाभिधानमेव स्वरसम् । अतः परमात्मन एव मोक्षप्रदत्वम् । 'संसारमोक्षस्थितिबन्धहेतुः'(श्वे.6-16) इति कण्ठत एव हि तथाभिधीयते । गरुडोपासनादौ देवताप्रसादस्य विषनिर्वर्तकत्ववत् भक्त्या प्रसन्नस्य परमात्मन एव मोक्षप्रदत्वान्न कश्चन विरोधः ॥

ननु वेदनस्य दर्शन एव कुतो न विश्रान्तिः, स्मृतावेव विश्रान्तिरिति कुत इति चेत्, सत्यम् । गाढभावनाया दर्शने विश्रान्तिरनुभवसिद्धा, सहजा च । ध्यानोपासनादिशब्दस्य स्मृतिपदस्य वा दर्शनपरत्वनिर्वाहश्च क्लेशसाध्यः । यदि सिद्धान्तरीत्यनुसरणेनोभयोः समन्वयस्तर्हि घट्टकुट्यां प्रभातम् । न च विनिगमकाभावः, देवतासाक्षात्कारादौ ध्यानस्य दर्शने विश्रान्तेर्दर्शनात् । परमात्मनस्तु जीवान्तर्यामितयैवावस्थानात्, ध्यानस्य दर्शनस्य च सूपपादत्वात् । 'सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्' (श्वे.1-16)'आत्मात्मनि गृह्यते' (श्वे.1-15) 'आत्मन्येवात्मानं पश्येत्' (बृ.6-23) इत्यादिप्रमाणसिद्धोऽयमर्थः। आवृत्त्यधिकरणन्यायसिद्धश्च । अत उपासनमेव भक्तिपदवाच्यं मोक्षसाधनमिति युक्तम् । 'स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्'(श्वे.1-14) इत्यत्रायमर्थः स्पष्टः ॥

तदेतत्सर्वं अभिप्रेत्याह **इह**=अस्मिन् वेदान्तशास्त्रे **ग्रन्थिमोक्षाय**=ग्रन्थिरूपस्य संसारबन्धस्य मोचनाय **ध्रुवानुस्मृतिः**=सुदृढाविच्छिन्नस्मृतिसन्ततिरेव **ध्यानाद्युक्त्या**=ध्यानोपासनादिशब्दैः **विहिता** । **सैव**=तादृशी स्मृतिरेव **स्पष्टा**=विशदतमरूपमापन्ना **दृष्टिः**=दर्शनरूपा च । तथैव **सा श्रुतफलविषया**=श्रुतं ब्रह्मप्राप्तिरूपं समानफलं विषयः यस्याः, तादृग्भूता **सेवनत्वात्**=सेवारूपत्वात् **उपास्तिः**=उपासनारूपा च भवति, 'गुरुं सेवते' 'गुरुमुपासते' इति समानार्थकप्रयोगदर्शनात् । तर्हि ज्ञानपदस्योपासनावाचित्वे प्रमाणं किमिति चेत्— **क्वापि**=प्रकरणविशेषे **व्यतिकरितगिरा**=परस्परव्यत्यस्तपदेन **विद्युपास्त्योः**=वेदनोपासनयोः **ऐक्यं** स्पष्टम् । 'मनो ब्रह्मेत्युपासीत' (छां.7-3-2) इति 'उपासना'पदेनोपक्रम्य, 'य एवं वेद' (छां.7-18-6) इति वेदनपदेनोपसंहारो दृश्यते । एवम् 'यस्तद्वेद यत्स वेद' (छां.4-1-4) इति वेदनपदेनोपक्रम्य 'यां देवतामुपास्से' (छां.4-2-2) इति उपासनापदेनोपसंहारो दृश्यते । तेन वेदनोपासनयोस्समानत्वं सिद्धम्। अयमंशः **श्रीशङ्कराचार्याणामपि** संमतः (ब्र.सू.4-1-1-शं) । एवं **गीता**=भगवद्गीतापि **भक्तिमेव आह**='पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया'(गी.8-22) इति भक्तेरेव परमात्मप्राप्त्युपायत्वमाह ।

[ब्रह्मविद्यास्वरूपम्]

101. विद्याः पञ्चाग्निवैश्वानरदहरमधुन्याससत्पूर्वसंज्ञाः
नना शब्दादिभेदात्, तुलितफलतया तद्विकल्पश्च शिष्टः ।

**तत्**=तस्मात् **वित्तिमात्रे फलवति**=ज्ञानसामान्यं मोक्षसाधनं यदि **सर्वम्**= पूर्वोक्तं सर्वं **विफलम्**=व्यर्थम्= अर्थशून्यं भवेत् । **तेन सा**=वित्तिः=मोक्षसाधनं ज्ञानम् **एवंविशिष्टा**=उक्तरित्या आवृत्यादिगुणविशिष्टा विशेषरूपा सिद्धेति शेषः । तथा चैतन्मत एव सर्वश्रुतिस्मृतीनां समन्वयः इति ज्ञेयम् । ननु भोः! न वयं भक्तेर्मोक्षसाधनत्वं निषेधामः, किन्तु तस्याः सगुणब्रह्मरूपावरमुक्तिसाधनत्वं वदामः । निर्गुणब्रह्मरूपपरमुक्तिस्तु ज्ञानादेवेति चेत्, भविष्यति विचारोऽयं विस्तरेण समनन्तरमेव ॥ ३० ॥

ननु ब्रह्मविद्यानामनेकत्वे फलमेकरूपं कथं भवेत्? एकत्वे संज्ञाभेदो वा तासां कथं भवेत्? इति शङ्कां समाधत्ते—**विद्या इत्यादिना**। **पञ्चाग्नि** (छां.5-3-1)- **वैश्वानर** (छां.5-11-1)-**दहर** (छां.8-1-5)-**मधु** (छां.3-1-1)-**न्यास** (तै.2-80)-**सत्** (छां.6-1)-**पूर्वसंज्ञाः**=एतदादिसंज्ञाः **विद्याः नाना**=भिन्ना एव । कुतः—**शब्दादिभेदात्**=संज्ञादिभेदात् । आदिपदेन उपास्यगुणादिभेदः ग्राह्यः । एवं शब्दादिभेदैः उपासनानां भेदेऽपि **तुलितफलतया**=समानफलवत्त्वात् **तद्विकल्पश्च**=विद्यानामनुष्ठानविकल्पश्च **शिष्टः**= शास्त्रेण निर्धारितः । 'नाना शब्दादिभेदात्' (ब्र.सू.3-3-56) इति सूत्रम् । अत्रैवं पूर्वपक्षः—उपनिषत्सु प्रतिपादिताः सद्विद्यादयः भिन्नाः, उताभिन्नाः? इति संशये, सर्वत्र उपास्यस्य ब्रह्मण एकत्वात्, विषयभेदाभावात् एकैव विद्या युक्ता इति पूर्वपक्षे—सिद्धान्तः—ता विद्याः नानैव=परस्परं भिन्ना एव । तत्र हेतुः—**शब्दादिभेदादिति**। शब्दः=तत्तद्विद्यासु विषयप्रतिपादकाः शब्दाः । आदिपदेन संज्ञादयः ग्राह्याः । यद्यपि उपास्यं ब्रह्म एकमेव । अथापि ब्रह्मविशेषणभूतानां गुणादीनां प्रतिविद्यं भेदो वर्तते । कुत्रचित् अपहतपाप्मत्वादिगुणविशिष्टं ब्रह्मोपास्यम् । कुत्रचित्तु सर्वान्तर्यामित्वादिगुणविशिष्टम् । एवमत्र ब्रह्मणः विशेष्यस्यैकत्वेऽपि तत्तद्गुणविशिष्टत्वरूपेण भेदो वर्तत एव । एवं संज्ञाभेदोऽपि स्पष्टः । एवं प्रधानविषयभूतरूपभेदाच्च विद्यानां भेदःसिद्धः । एवं विद्याभेदेऽपि फलभेदो नास्तीत्याह सूत्रकारः 'विकल्पोऽविशिष्टफलत्वात्' (ब्र.सू.3-3-15) इति । गुणभेदेन तद्विशिष्टब्रह्मणोऽपि भेदात् यदि विद्याभेदः तर्हि फलभेदोऽप्यवर्जनीयः । 'तं यथा यथोपासते, तथैव भवति'(मुद्गल.3) 'यथा क्रतुरस्मिंल्लोके पुरुषो भवति, तथेतःप्रेत्य भवति' (छां.3-14-1), इति साधनफलयोः समानविषयकत्वश्रवणात् इति चेत्, सत्यम्, 'तं यथा यथोपासते' इत्यतः पूर्वम् 'तमेतमग्निरिति' इत्यादिभिः प्रतीकोपासनान्यभिधाय, तेषां फलं परिमितमिति प्रतीकोपासननिन्दया ब्रह्मोपासनस्य समनन्तरवाक्योक्तस्य प्रशंसार्थं तथोक्तम् ॥

किं बहुना! श्रुतिः 'ब्रह्मविदाप्नोति ब्रह्म' इत्यनुक्त्वा 'ब्रह्मविदाप्नोति परम्' इति वदन्ती साधनस्य बहुविधत्वेऽपि फलभेदाभावं दर्शयति । 'ब्रह्मवित्' इति साधनमुच्यते । फलं तु 'परम्' इत्युच्यते । ब्रह्मशब्दो हि सगुण एव मुख्यः । गुणानामानन्त्यादसर्वज्ञदुर्ज्ञेयत्वेनोपासनाभेदस्यानिवार्यत्वेऽपि

**कर्मज्ञानाख्ययोगौ त्विह परभजनाधिक्रियार्थौ स्वदृष्ट्या**
**धर्मैर्वर्णाश्रमाणां त्रयमिदमवदन् सेतिकर्तव्यताकम् ॥ ३१ ॥**

'परमाप्नोति' इत्यभिधानात् सगुणनिर्गुणब्रह्मप्राप्तिरूपफलभेदाभावं स्पष्टं वदति । अतः विशेष्यस्य ब्रह्मणः एकत्वात्, ब्रह्मप्राप्तिरूपफलस्य सर्वसमानत्वात् फलभेदो नास्त्येव ॥

ननु ब्रह्मप्राप्तिरपि बहुविधा भवितुमर्हति । श्रूयते हि परापरब्रह्मभेदः 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः' (प्रश्न.5-2) इति । तत्र 'यतो वा इमानि भूतानि जायन्ते'(तै.भृ.1) इत्यादिनोक्तं मायाशबलितं जगत्सृष्टिस्थितिलयकारणभूतं सगुणं अपरं ब्रह्म । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.आ.1) इत्युक्तं मायातीतं निर्विशेषम्, निर्गुणम्, निराकारञ्च परं ब्रह्म । एतदुभयमपि प्रणववाच्यमित्यर्थः। अपरब्रह्मणः सगुणत्वात्, सविशेषत्वात्, साकारत्वाच्च उपास्यं ब्रह्मेत्युच्यते । निर्गुणम्, निराकारम्, निर्विशेषं च परं ब्रह्म नोपास्यम्, किन्तु ज्ञेयं ब्रह्मेत्युच्यते । एवञ्चापरं ब्रह्म अनेकविधं भवति; गुणानाम्, आकाराणां च अनन्तत्वात् । अत एवोपासनायाः फलभूतं च अर्चिरादिगतिप्राप्यमपरं ब्रह्म उपास्यविषयगुणादिभेदादनेकविधं भवति । परस्य तु ब्रह्मणः निर्विशेषत्वात्, निर्गुणत्वात्, निराकारत्वाच्च, तज्ज्ञानमपि एकरूपमेव, प्राप्यमप्येकरूपमेव । उपासनापि मानसं कर्म । अन्यस्तूपायो ज्ञानमार्ग इत्युच्यते । आद्यस्तु मन्दाधिकारिकः; द्वितीयस्तु उत्तमाधिकारिकः । तथोक्तम्— 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरुपणैः ॥' (कल्प.1-1-20) इति । एवञ्च—अपरब्रह्मविद्यानामुपासनारूपाणामपरब्रह्माप्तिरेव फलम्, तत्क्रतुन्यायादित्यत्राह—**कर्मज्ञानेत्यादि** ॥ ननु गीतायाम् 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' (3-3) इति भक्तेः कर्मयोगरूपत्वम्, ज्ञानं चान्यदिति प्रतीयत इवेत्यत्राह—**इह तु**=गीतायां तु । तु शब्दः वैलक्षण्यद्योतकः । किं तद्वैलक्षण्यमित्यत्र—**कर्मज्ञानाख्ययोगौ**=कर्मयोगज्ञानयोगौ **स्वदृष्ट्या**=**स्वः**=जीवात्मा, तस्य **दृष्टिः**=साक्षात्कारः आत्मावलोकनद्वारा **परभजनाधिक्रियार्थौ**=मोक्षसाधनभूतपरभक्तौ अर्हतासंपादनफलौ, न तु तौ साक्षान्मुक्तिसाधनभूतौ । अतः भवदभिमतसाधनभेदस्य, फलभेदस्य वा नावसरः ॥

एवमुपायस्वरूपमुक्त्वा, तदङ्गमाह—**धर्मैरित्यादि**। **इदं त्रयम्**=कर्मयोगज्ञानयोगभक्तियोगरूपत्रयमपि **वर्णाश्रमाणां धर्मैः सेतिकर्तव्यताकम्**=साङ्गकम् **अवदन्**, शास्त्राणि, आचार्यादयश्च । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू.3-8-26) इति यज्ञादीनामाश्रमाङ्गानां ब्रह्मविद्याङ्गत्वमपि युज्यत इत्युक्तम् । यज्ञादिसर्वकर्मापेक्षा च विद्या । यज्ञादिश्रुतेः='विविदिषन्ति यज्ञेन' (बृ.6-8-22) इति यज्ञादेः विद्याङ्गत्वश्रुतेः । अश्ववत्=यथा गमनसाधनभूतोऽश्वः सपरिकर एव भवेत्, तथा । ननु 'विविदिषन्ति' इत्येव श्रवणात् विविदिषाङ्गत्वमेव कर्मणाम्, न तु वेदनाङ्गत्वमिति चेत्, इच्छाया विधातुमशक्यत्वात् । 'अश्वेन जिगमिषति' इत्यादौ, अश्वस्य गमनसाधनत्वस्यैव प्रतीतेः । उपनिषदि सर्वत्रापि 'तिष्ठासेत्' 'निदिध्यासितव्यः' 'विजिज्ञासस्व' इति सन्नन्तप्रयोगस्य सहजत्वात्, प्रकृतेऽपि तथैवोपपत्तेः । अतः कर्माङ्गकात् ज्ञानादेव मोक्षः ॥

**अयमर्थः** —सगुणनिर्गुणब्रह्मभेदो वा, भक्तिज्ञानरूपसाधनभेदो वा नास्त्येव। 'परं चापरं च ब्रह्म यदोङ्कारः' इति श्रुतिः न परापरब्रह्मविषये प्रमाणम्। सर्वोऽपि हि शब्दः स्वात्मानम्=शब्दम्, अर्थम्, ज्ञानं च वक्तीति त्रयाणामपि वाचक इति हि शास्त्रज्ञाः। यथा 'गौः' इति शब्दः गोशब्दस्य, गोविषयकज्ञानस्य, गोव्यक्तेश्च वाचकः। तथा ओमिति शब्दोऽपि प्रणवशब्दस्य, तद्वाच्यस्य ब्रह्मणश्च वाचकः। तयोः वाच्यं ब्रह्म, परं ब्रह्म, वाचकशब्दः अपरब्रह्मेत्युच्यते। 'जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते' (गी.6-44) इत्यत्र, 'शाब्दस्य हि ब्रह्मणः' (भाग.2-2-2) इत्यत्र च शब्दब्रह्मशब्दः वाचकशब्दे वर्तत इति संप्रतिपन्नम्। 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते' (मुं.1-1-5) इति ब्रह्मविद्यायाः शब्दरूपाया, 'तपो ब्रह्म' (तै.भृ.1) इतिवत् अपरब्रह्मत्वम्, परविद्याप्राप्यस्य परब्रह्मत्वं च 'ब्रह्मविदो वदन्ति' इति कथनात्सिद्धम्। वाचकः शब्दः तज्ज्ञानस्यापि वाचक इत्यनुपदमेवोक्तम्। ऋग्वेदादिजन्यं ब्रह्मविषयकं परोक्षं शाब्दं ज्ञानम्। ब्रह्मविद्या तु उपासनात्मकं ज्ञानम्। अस्य फलं ब्रह्मप्राप्तिः। 'द्वे विद्ये वेदितव्ये इति चाथर्वणी श्रुतिः। परया त्वक्षरप्राप्तिः ऋग्वेदादिमयाऽपरा॥' (वि.पु.6-5-65) इत्यार्षमुपबृंहणञ्च। एवञ्च 'परं चापरं च ब्रह्म यदोंकारः' इत्यत्रापि अपरं ब्रह्म प्रणवशब्दः, परं ब्रह्म तद्वाच्यभूतं विवक्षितम्। न तु सगुणनिर्गुणरूपं प्राप्यं ब्रह्म। अस्य च विस्तरः पुनरीश्वरसरे भविष्यति॥

किञ्च तदभितपरब्रह्मणोऽवेद्यत्वाङ्गीकारात्, तत् ज्ञेयं ब्रह्मेत्यप्यसङ्गतम्। न चान्तःकरणवृत्तिरूपज्ञान-विषयत्वमङ्गीक्रियत एवेति वाच्यम्, उपासनाया अपि अन्तःकरणवृत्तिविशेषरूपत्वात्। उभयोरन्तःकरण-वृत्तित्वेऽपि वैलक्षण्यमस्त्येवेति वाच्यम्, तावतापि परब्रह्मणि ज्ञेयत्वं मुख्यं तव न संभवत्येव॥

किञ्च तन्मते अपरब्रह्मणो मिथ्यात्वात्, सत्येन परब्रह्मणा सह गणनमपि न संभवत्येव। न हि 'वल्मीकसर्पः, रज्जुसर्पश्चेति सर्पो द्विविधः' इति कश्चित् बुद्धिमान् वदेत्। न चापरब्रह्मणोऽपि व्यावहारिकं सत्यत्वमस्त्येवेति वाच्यम्; परब्रह्मणःसत्यत्वं पारमार्थिकम्, अपरब्रह्मणस्तु तत्त्वं व्यावहारिकमिति उभयोः सत्यत्वस्यैकरूपत्वाभावेन सत्यं द्विविधं पारमार्थिकसत्यं मिथ्यासत्यं चेतीतिवत् सहगणनासंभव एव॥

ननु 'यत्तदद्रेश्यमग्राह्यम्' इत्यादिना हि ब्रह्म निर्विकारं निर्विशेषमुच्यते। मूर्तामूर्तब्राह्मणे (बृ.4-3) पञ्चभूतान्येव परब्रह्मणो रूपाणीत्युक्त्वा 'अथात आदेशो नेति नेति', (बृ.4-3-6) 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति ब्रह्मणो निराकारत्वमत एव निषेधात्मकत्वं ब्रह्मणोऽभिधीयते। भवद्भिरपि 'सत्यं ज्ञानमनन्तम्' इति जगत्कारणत्वप्रयुक्तविकाररहितस्य शुद्धस्य ब्रह्मणः स्वरूपलक्षणपरमुच्यते। जगत्कारणत्वमपि विशेषणम्, उपलक्षणञ्चेत्यप्युच्यते। एवं ब्रह्मणो द्वेधावस्थानस्याङ्गीकारे ब्रह्मद्वैविध्यमङ्गीकृतमेवेति चेत्, अस्मद्दृष्ट्या ब्रह्म न द्विविधमात्रम् 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुत्या अनन्तविधम्। जगत्कारणत्वं विशेषणम्, उपलक्षणं चेत्यपि उपासनाभेदप्रयुक्तम्, न स्वरूपभेदप्रयुक्तम्। आनन्दादय एव सर्वविद्यानुयायिनो धर्माः, न जगत्कारणत्वादयः। अथापि जगत्कारणत्वं ब्रह्मणः कदापि नापगच्छति। ब्रह्माण्डानामनन्तत्वात्, सृष्टिस्थितिलयकारणत्वमपि सार्वदिकमेव, न कादाचित्कम्। अतो ब्रह्मणि द्विविधत्वं नास्त्येव। 'नेति नेति'

इत्यनेन ब्रह्मणो निषेधमात्ररूपत्वे शून्यवादाविशेष एव। किञ्च निर्गुणविद्यात्वेन भवत्संमतेषु भूमविद्यादिष्वपि 'स्मृतिलंभे सर्वग्रन्थानां विप्रमोक्षः' (छां.7-26-2) इति सगुणोपासनमेव मोक्षसाधनं श्रुतम्। सगुणविद्यासु दहरविद्यादिष्वपि कठोपनिषदि निर्गुणविद्यापरायां श्रुता 'शतं चैका च हृदयस्य नाड्यः' (छां.8-6-6) इति गतिप्रतिपादनपरा श्रुतिरेव दृश्यते। नैकापि ब्रह्मविद्या, अधिकरणं वा असंकीर्णं सगुणनिर्गुणविभागसाधकं प्रदर्शयितुं शक्यम्। किं बहुना! अनुपदमुक्तं 'ब्रह्मविदाप्नोति परम्' इतीदमेव पर्याप्तं द्विविधब्रह्मनिराकरणे। अत्र सविशेषवाचिना ब्रह्मपदेन 'नाना शब्दादिभेदात्' (ब्र.सू.3-3-56) इति सूत्रोक्तस्सिद्धान्तः, एवम् परपदेन 'विकल्पोऽविशिष्टफलत्वात्' (ब्र.सू.3-3-57) इति सूत्रोक्तस्सिद्धान्त एव च दृढीक्रियत इति मन्तव्यम्। अत एवं ब्रह्मभेदकल्पनं शून्यवादिनां बौद्धानां सान्त्वनायैवेत्यवगन्तव्यम्॥

ननु भवत्सिद्धान्तेऽपि ब्रह्मणः परव्यूहादिभेदाङ्गीकारात् परस्परं गुणतारतम्याद्यङ्गीकाराच्च को विशेषोऽस्मत्सिद्धान्तादिति चेत् ;सत्यम्। वासुदेवः षड्गुणपूर्णः, संकर्षणादयस्तु गुणद्वयवन्तः इत्यादिकमप्युच्यते। अस्माभिः ब्रह्मणः सदा सविशेषत्वात्, गुणानामाविर्भावतिरोभावमात्रम्। ब्रह्मविद्यासु सर्वासु एकस्यैव ब्रह्मणो विषयत्वेऽपि, उपासकानां पूर्वसंस्कारमूलकरुचिभेदेन, शक्तितारतम्याच्च गुणानामुपसंहारप्रयुक्तः विषयभेदो विद्याभेदश्च वर्तत एवेत्यादिकं सविशेषवादे संगच्छत एव, सर्वस्यापि सत्यत्वात्। एवं तर्हि प्राप्यं ब्रह्मापि भिद्यत एवेत्यङ्गीक्रियतामिति चेत्; मुक्तौ तारतम्याङ्गीकारे तस्याःकर्मफलतौल्यप्रसङ्गात् निरतिशयपुरुषार्थत्वं न स्यादिति मुक्तितारतम्यं नाङ्गीक्रियते। न च सालोक्यसामीप्यादिमुक्तिभेदः श्रूयते किलेति शंक्यम्, तेषां मुक्तित्वमौपचारिकमित्यादिकमग्रे (श्लो.67) विचार्यते॥

यद्यपि सिद्धान्ते भक्तौ **परभक्तिपरज्ञानपरमभक्ति**रूपपर्वभेदोऽङ्गीक्रियते, परन्तु तावता न साधनतारतम्यम्। ते भक्तेः पर्वभेदा एव। परमभक्तिरूपाया एव तस्याः अव्यवहितमोक्षसाधनत्वम्। अतस्साधनतारतम्यं वा फलतारतम्यं वा नास्त्येव॥

किमेवं मुधाऽऽग्रहः? गुणानामाविर्भावतिरोभावकृतः विशिष्टब्रह्मभेदः यदि प्रामाणिकः, तर्हि तथैव **यथाक्रतुन्यायेन** प्राप्यभेदस्यैव न्याय्यत्वात् मुक्तावपि भेद एव प्रामाणिक इति चेत्; तथात्वे मुक्तेः सातिशयत्वात् कर्मफलतौल्यप्रसङ्ग इत्युक्तमेव। तारतम्यरहितपरिपूर्णब्रह्मप्राप्तिश्च तादृशपरिपूर्णब्रह्मोपासनयैव वक्तव्या। एतत्तु जन्मशतेनापि कस्यापि कदापि न संभवति, ब्रह्मणः सर्वविधपरिच्छेदरहितत्वात्। तादृशस्य ब्रह्मणः साकल्येन ग्रहणे कस्यापि जीवस्य सामर्थ्याभावात्, कस्यापि कदापि परिपूर्णब्रह्मोपासनाया असंभवात्, परब्रह्मणः प्राप्तिरेव न कस्यापि कदापि स्यात्। अत एव 'अत्र ब्रह्म समश्नुते' (कठ.2-6-14) इत्युक्तस्योपासनाकालिकस्य सदेहमुक्तित्वेनाभ्युपगतस्य ब्रह्मानुभवस्य, शरीरपातानन्तरकालिकविदेहमुक्तिरूपब्रह्मानुभवस्य च खद्योतसहस्रांशवोरिव तुलनमपि कर्तुं न शक्यत इति दृष्ट्वैवैतत्सिद्धान्ते जीवन्मुक्तिनिराकरणम्। अत एव च साधनस्य परमात्मप्रीतिद्वारैव फलहेतुत्वस्य सूत्रकारैरेव 'फलमत उपपत्तेः' (ब्र.सू.3-2-36) 'हार्दानुगृहीतः' (ब्र.सू.4-2-16) इति स्पष्टं स्थापनात्, 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' (कठ.1-2-23) इत्युक्तक्रमेण कतिपयगुणविशिष्टपरमात्मोपासकस्यापि परमात्मानुग्रहात् पूर्णपरमात्मप्राप्तिर्भवेदेव। 'तं यथा यथोपासते' (मुद्ग.2-3) इत्येतदप्यनुपदमेव समाहितम्॥

[ब्रह्मविद्याविभागः]

102. **विश्वान्तर्यामितत्त्वं स्वयमिह चिदचिद्विग्रहैर्वा विशिष्टं
यस्यामालम्बनं, सा भवभयशमनी वीतरागस्य विद्या।
यस्तूपास्ते यथोक्तं तदितरदखिलं ब्रह्मदृष्ट्या स्वतो वा
नैतस्य ब्रह्मनाड्योद्गतिरपि न पदव्यर्चिरादिर्न मोक्षः ।। ३२ ।।**

**वस्तुतस्तु**—सगुणं ब्रह्म, ब्रह्म-विष्णु-रुद्ररूपत्रिमूर्तिरूपमेव तेषाम्। तेषां त्रयाणां देवताविशेष रूपत्वात् अध्यात्मकक्ष्यादृष्ट्या ब्रह्मत्वमेव नास्तीत्यपरब्रह्मत्वमपि न संभवत्येव। कथञ्चित्संभवेऽपि एतद्देवतो पासनस्य, परब्रह्मोपासनस्य च मेरुसर्षपवद्वैलक्षण्यात्, परब्रह्मोपासनेन तुलनया विचार एव सर्वथा न संगच्छते। अतः परापरब्रह्मभेदकल्पना न वस्तुस्वरूपानुगुणा। यद्यपि त्रिमूर्त्यन्तर्गतविष्णुविषये वक्तव्या विशेषास्सन्ति बहवः। तत्सर्वमग्रिमसरेऽतिविस्तरेण (श्लो.5-14) विचार्यते। किं बहुना! लोके ज्ञानमार्ग-प्रतिपादकत्वेन प्रसिद्धं सांख्यतन्त्रमेव वैदिकमूर्धन्येन बादरायणेन प्रणीतस्य वेदान्तशास्त्रस्यैदंपर्येण सर्वत्र निरसनीयं विवक्षितमिति करबदरसमानम्। अधिकमुपरिष्टात् (श्लो.42) ॥ ३१ ॥

उपनिषद्विहितासु ब्रह्मविद्यासु विशेषं प्रदर्शयति—**विश्वान्तर्यामीत्यादि**। **विश्वान्तर्यामितत्त्वं**=जगच्छरीरकं परमात्मतत्त्वम् **स्वयम्**=स्वस्वरूपतः **चिदचिद्विग्रहैः**=चेतनाचेतनरूपैः तस्य शरीरैः **विशिष्टं वा यस्याम् इह**=यादृश्याम् अस्याम् ब्रह्मविद्यायाम् **आलम्बनम्**=विषयः **सा वितरागस्य**=सर्वेषणाविमुक्तस्य मुमुक्षोः **भवभयशमनी**=संसाराख्यभयनाशिनी **विद्या भवति**। अनन्ताः खलु वेदा उपनिषदश्च। अतो ब्रह्मविद्या अप्यनन्ताः। अथापि विषयभेदेन प्रथमं ताः मुक्तिफलाः, काम्याश्चेति द्विविधाः। मुक्तिफला अपि साक्षान्मुक्तिफलाः, क्रममुक्तिफलाश्चेति द्विविधाः। साक्षान्मुक्तिफला अपि 'उपासात्रैविध्यात्' (ब्र.सू.1-1-32) इति सूत्रप्रतिपादिताः त्रिविधाः—अचिच्छरीरकपरमात्मोपासनम्, चिच्छरीरकपरमात्मोपासनम्, स्वरूपतः परमात्मोपासनमिति। स्वरूपतः परमात्मोपासनं नाम स्वरूपनिरूपकधर्मैः सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वैः सर्वविद्यानुयायिभिर्युक्तस्य परमात्मनः, निरूपितस्वरूपविशेषणभूतैः जगदुपादानत्वादिभिः विशिष्टस्य वा, हिरण्यवर्णदिव्यमङ्गलविग्रहविशिष्टस्य वा परमात्मनः उपासनम्। इदं त्रिविधमुपासनं प्राचीनवृत्तिकारसंमतमिति श्रीशङ्कराचार्यैरपि प्रतिपादितम्। पञ्चाग्निविद्यादीनां कैवल्यानुभवानन्तरं परमात्मप्राप्तिरिति क्रममुक्तिः फलमिति 'अप्रतीकालम्बनान्नयति' (ब्र.सू.4-3-14) इति सूत्रभाष्यादिषूक्तम्। पञ्चाग्निविद्यायां जीवस्यैव प्राधान्यात् सा विद्या ब्रह्मात्मकजीवविद्या। अतस्तस्या जीवस्वरूपप्राप्तिरूपकैवल्यपूर्वकपरमात्मप्राप्तिः फलम्। इतरविद्यासु ब्रह्मण एव प्राधान्यात् साक्षात्परमात्मप्राप्तिः फलमिति च विवेकः ॥

काम्यविद्यास्वरूपं वदति—**यस्त्वित्यादिना**। **यस्तु** उपासकः **तदितरत्**=पूर्वोक्तालम्बनेभ्यः अतिरिक्तम् **अखिलम्**=यत्किञ्चित्समस्तम् **यथोक्तम्**=तत्तत्प्रकरणोक्तप्रकारम् **ब्रह्मदृष्ट्या**=तत्तद्वस्तुषु ब्रह्म-भावनया **स्वतो वा**=अथवा तत्तद्रूपेण वा उपास्ते, **एतस्य**=एतादृशोपासकस्य ब्रह्मोपासकत्वाभावात्

[वर्णाश्रमधर्माणां स्थानम्]

103. **स्वान्तध्वान्तप्रसूतं दुरितमपनुदन् योगिनः सत्त्वशुद्ध्यै**
**सर्वो वर्णादिधर्मः शमदममुखवत् सन्निपत्योपकारी ।**

**ब्रह्मनाड्या उद्गतिः**, 'शतं चैका च हृदयस्य नाड्यः' (कठ.2-3-16),(छां.8-6-6) इत्युक्तया ब्रह्मनाड्या उत्क्रान्तिः **न, अर्चिरादिपदवी न, मोक्षोऽपि न**। इदं त्रयमपि शुद्धब्रह्मविदां मुमुक्षूणामेव। एतेषामतादृशत्वात् त्रयं नास्ति। अत एवैतेषां अपुनरावृत्तिरपि नास्त्येव। 'अन्नं ब्रह्मेत्युपास्ते' (छां.7-9-2) 'मनो ब्रह्मेत्युपासीत' (छां.7-3-2) इत्यादिः दृष्टिविधिरित्युच्यते ॥ ३२ ॥

पूर्वं (श्लो.31) कर्मणां विद्याङ्गत्वमुक्तं विवृणोति—**स्वान्तेत्यादि**। **सर्वः वर्णादिधर्मः**, आदिना आश्रमग्रहणम् । वर्णाश्रमधर्मः सर्वोऽपि **स्वान्तध्वान्तप्रसूतम्=स्वान्तस्य**=मनसः यत् **ध्वान्तम्**=तमः=अशुद्धिः तेन **प्रसूतम्**=जातम् यत् **दुरितम्**=पापम् तत् **अपनुदन्**=निवर्तयन्, हेतौ शतृ-प्रत्ययः, अन्तःकरणदोषनिवर्तकत्वात्, **योगिनः**=भक्तियोगनिष्ठस्य **शमदममुखवत्**=शमदमादिवत् **आदि**-शब्देन वैराग्यादीनां ग्रहणम्, **सत्त्वशुद्ध्यै**=अन्तःकरणनैर्मल्यद्वारेण **सन्निपत्योपकारी**=साधनस्वरूप-निष्पादको भवति ॥

'धर्मैर्वर्णाश्रमाणां त्रयमिदमवदन् सेतिकर्तव्यताकम्' इति कर्मयोगज्ञानयोगभक्तियोगानां त्रयाणामपि वर्णाश्रमधर्मा अङ्गत्वेनोक्ताः। साधनेन फलनिष्पत्तौ उपकारकारीणि अङ्गानीत्युच्यन्ते। यथा दर्शपूर्णमासादियागेन स्वर्गादिफलनिष्पत्तौ उपकारकाणि होमादीनि अङ्गानि भवन्ति। तानि च द्विविधानि—**सन्निपत्योपकारकाणि, आरादुपकारकाणि** चेति। 'व्रीहीन् प्रोक्षति' इत्यादीनि **सन्निपत्त्योपकारकाणि**। सम्यक् निपत्य=साधनस्वरूपं साधयित्वा उपकारकाणि इत्यर्थः। दर्शपूर्णमासहोमद्रव्याणि पुरोडाशा उच्यन्ते। तादृशहोमद्रव्यनिष्पादका व्रीहयः । तत्संस्कारकत्वात् प्रोक्षणस्य व्रीहिसंस्कारद्वारा पुरोडाशनिष्पादकं भूत्वा प्रोक्षणं होमस्वरूपं निष्पादयति। तथा च कर्माङ्गाश्रितानि सन्निपत्योपकारकाणि। द्रव्याद्यनुदिश्य विधीयमानानि अङ्गाश्रितानि आरादुपकारकाणि। 'आरात् दूरसमीपयोः' इति कोशः। अत्र सामीप्यवाची। साक्षात् यागेन परमापूर्वोत्पत्तौ उपकारकाणि=आरादुपकारकाणि। यथा प्रयाजादीनि। एतानि हि न द्रव्यसंस्कारादिद्वारा उपकारकाणि, किन्तु यागेन स्वर्गहेतुभूतपरमापूर्वोत्पत्तौ, अवान्तरापूर्वोत्पादनद्वारा उपकारकाणि। तथा च सन्निपत्त्योपकारकं साधनस्वरूपनिष्पादकम् । **आरादुपकारकं** तु साधनेन फलहेतुभूतापूर्वोपादने उपकारकम् । तथा च प्रकृते वर्णाश्रमादिधर्मः भक्तियोगरूपसाधननिष्पत्तावुपकारक इति सन्निपत्योपकारी भवति। तेन च वर्णा-श्रमरहितस्य भक्तियोगस्य साधनत्वमेव नास्तीत्यर्थः । अत्र दृष्टान्तः—**शमदममुखवदिति** । 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्येत्' (बृ.8-4-23) इति दर्शनात् शमादयो यथा-वश्यकाः तथा वर्णाश्रमधर्मोऽपि । न च कर्माचरणस्य बाह्यव्यापाररूपत्वात्, मनसः बहिर्मुखत्वे कथं ध्यानसंभव इति शंक्यम्; ध्यानेतरकाल एव कर्मानुष्ठानसंभवात्। कर्माचरणं हि द्यूतादिवत् न प्रवृत्ति-

**विद्यां चेत्यादिवाक्येऽप्यनुकथितमिदं नैकवाक्यानुरोधात्**
**कर्मापेक्षाभिसन्धिं क्वचन विवृणुते तत्समुच्चित्यवादः ॥ ३३ ॥**

रूपम्, किन्तु परमात्मार्पणदृष्ट्या कृतानां कर्मणां निवृत्तिरूपत्वेन, परमात्मानुग्रहद्वारा चित्तशुद्ध्यापादनेन ध्यानोपकारकत्वेनात्यन्तानुकूलत्वम् । निरन्तरध्यानमग्नस्य न किञ्चिदवशिष्यते, जडभरतवत् । अत एव समाधिस्थितेरपवादरूपम् । उत्सर्गस्तु 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' (गीता.3-5) इति भगवतैवोक्तः ॥

ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन'(बृ.6-4-22) इति यज्ञादीनां वेदनेच्छासाधनत्वश्रवणात् कथं वेदनाङ्गत्वं? न च इच्छायाः विषयानुकूल्यज्ञानजन्यत्वेन, यज्ञादिजन्यत्वं कथं भवेदिति शङ्क्यम्; परमात्मार्पणबुद्ध्या कृतानां कर्मणां चित्तशुद्ध्यर्थत्वेन चित्ते शुद्धे चित्तस्य परमात्माभिमुख्यं स्वयमेव भवेदित्येवं इच्छाप्रतिबन्धकपापनिवृत्तिद्वारा विविदिषासाधनत्वोपपत्तेरित्यत्राह— **विद्यां चेत्यादि**। केवलज्ञानस्य केवलकर्मणश्च साधनत्वं विनिन्द्य मिलितयोरेव कारणत्वं वक्ति श्रुतिः— 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥' (ईश.11) इति । **इदं**=कर्माङ्गकस्यैव ज्ञानस्य मोक्षसाधनत्वम् **नैकवाक्यानुरोधात्**=अनेकश्रुतिवाक्यानुसारात् **विद्यां चेत्यादिवाक्येऽपि अनुकथितम्**=अनूदितम् ॥

ननु 'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ।' (वि.पु.) 'हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया' (वि.पु.6-5-60)इति कर्मणामपि ज्ञानेन सह साधनत्वाभिधानात् समुच्चय एव न्याय इति चेत्तत्राह— **कर्मापेक्षेत्यादि**। **क्वचन**=क्वचित् विष्णुपुराणादौ **तत्समुच्चित्यवादः**=कर्मसमुच्चयवादः। 'हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया' इत्यत्र हि कर्मज्ञानयोः समप्राधान्यं प्रतीयत इव । तत् **कर्मापेक्षाभिसन्धिम्**=मुमुक्षुभिः कर्मणामवर्जनीयत्वरूपमभिप्रायम् **विवृणुते**=विशदयति, न तु समसमुच्चयं वक्ति ॥ मुमुक्षोः कर्मानुष्ठानस्यावर्जनीयत्वमात्राभिप्रायकत्वात्तादृशवचनानां न साक्षात्साधनत्वं तेषाम् । अन्यथा— 'नान्यः पन्थाः' 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' (गी.6-3) इत्यादिविरोधः । अतः विषमसमुच्चय एव युक्तः ॥

**अत्रैवं वेदान्तिनां विचारसरणिः**—मुमुक्षूणां दृष्ट्या कर्मणां स्थानं किम्? इति । **निर्विशेषाद्वैतिनः— शाङ्कराः**—एवमाहुः 'तमेव विदित्वाऽति मृत्युमेति । नान्यः पन्था अयनाय विद्यते' (श्वे.3-8) इति स्पष्टं ज्ञानातिरिक्तस्य मोक्षसाधनता निषिध्यते । मृत्युं अत्येतीत्यन्वयः । कर्मणः नियमेन भेदगर्भत्वात्, मुक्तेश्च ब्रह्मैक्यरूपत्वात् परस्परं भिन्नलक्ष्यत्वेन विरुद्धत्वात्, ज्ञानमेव मोक्षसाधनम्, कर्म तु ज्ञानविरोध्येव । अत एव 'नान्यः पन्थाः' इति ज्ञानव्यतिरिक्तस्य साधनत्वं निषिध्यते । 'विविदिषन्ति यज्ञेन' इति तु वेदनेच्छासाधनत्वमेव वक्ति, सनन्तश्रवणात् । इच्छायाः विषयस्वरूपाधीनत्वेन पुरुषप्रयत्नासाध्यत्वेऽपि इच्छाप्रतिबन्धकपापकर्मणां प्रायश्चित्तादिना यथा नाशः, तथा परमात्मार्पणबुद्ध्या कृतानां कर्मणां चित्तशुद्धिद्वारा इच्छासाधनत्वं संभवत्येव । 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादि वचनं स्पष्टमिदमाह । यच्च 'कर्मणैव हि

संसिद्धिम् आस्थिता जनकादयः' (गी.3-20) इत्यादिवचनम्,तदपि ज्ञानद्वारकमेव मोक्षसाधनं कर्म वक्ति; अन्यथा 'तमेव विदित्वा' इत्यादिवचनविरोधात्। अत एव च 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इत्यत्र 'उभयं वेद' इति विद्याविद्ययोरवश्यज्ञेयत्वकथनमपि, एकस्योपादेयत्वार्थम्, अपरस्य च त्यागार्थमेव। 'अविद्यया मृत्युं तीर्त्वा' इत्यत्र तरतिः 'वेदान्तं तरति' इतिवत् प्राप्तिं वक्ति। अविद्यया मृत्युं तरति=प्राप्नोति। अतः अविद्याशब्दवाच्यं कर्म त्यक्त्वा,विद्यया=ज्ञानेन अमृतमश्नुते इत्येवार्थः। अथवा, अविद्यया=कर्मणा मृत्युम्=ज्ञानोत्पत्तिप्रतिबन्धकं पापं तीर्त्वा, अत एव विद्यया ज्ञानेन=अमृतम् अश्नुते इत्यर्थः। अतः ज्ञानमेव मोक्षसाधनम्, न कर्म इति॥

**औपाधिकभेदवादिषु भास्करः**—ज्ञानकर्मसमुच्चयवदी। **ज्ञानकर्मसमुच्चयवादः** द्विविधः—**समसमुच्चयवादः, विषमसमुच्चयवादश्चेति**। आद्यः पुनर्द्विविधः, कर्मज्ञानयोः साधनत्वं व्यासज्यवृत्तीत्येकः, अव्यासज्यवृत्तीत्यपरः। तृतीये पक्षे अङ्गाङ्गिभावसमुच्चयात् कारणत्वं अङ्गिनि ज्ञान एव। आद्यो **भास्करस्य, द्वितीयो** यादवप्रकाशस्य। तृतीयः **एतत्सिद्धान्ते**। अव्यासज्यवृत्तित्वं नाम, साध्यैमोक्षेऽशद्वयसत्त्वात् साधनत्वमपि द्विनिष्ठम्। अनिष्टनिवृत्तिः इष्टप्राप्तिश्चेति हि सर्वत्र फलेंऽशद्वयम्। न हि रोगनिवृत्तिमात्रेण पूर्वतनस्थितिप्रप्तिः। किन्तु पोषकं साधनमप्यावश्यकम्। तद्वत्प्रकृतेऽपि कर्मणाऽविद्यानिवृत्तिः, ज्ञानेनानन्दावाप्तिः। तथाचायं साध्यसाधनद्विकभावेन कर्मज्ञानसमुच्चयवादः। विषयसमुच्चयवादो नामाङ्गाङ्गिभावेन समुच्चयवादः। अयं **भगवद्रामानुजस्य। भास्कर**स्यायमाशयः—'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इति चकारद्वयम्, उभयपदम्,सहपदं च उभयोस्समप्राधान्य एव स्वरसम्। न च 'उभयं सह वेद' इति वेदने सहत्वमुच्यते, न तु साधनत्व इति शङ्क्यम्; 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति तृतीयया उभयोरपि साधनत्वस्याभिधानात्। 'उभयं सह वेद' इति च एतदुपयोगि ज्ञानमाह। 'तीर्त्वा' इत्यस्य प्राप्त्यर्थकत्वं चास्वरसग्रस्तम्। कथञ्चिदङ्गीकारेऽपि तस्य त्याज्यत्वाभिधानं तु स्वकपोलकल्पितमेव। 'वेदान्तं तरति' इत्यादौ वेदान्तस्य त्याज्यत्वाप्रतीतेः संप्रतिपन्नत्वान्न प्रकृतोपयोगि तत्। अत्र 'मृत्युम्' इति श्रवणात् अर्थस्वाभाव्यात् तत्सिद्धिरिति चेत्; तर्हि 'वेदान्तं तरति' इति न दृष्टान्तः। क्त्वाप्रत्ययास्वारस्यञ्च। नाप्यत्र विद्योत्पत्तिप्रतिबन्धकपापनिवृत्तिमात्रम् विवक्षितम्; उत्पन्नाया विद्यायाः संरक्षणस्याप्यावश्यकत्वात्। अत एव खलु प्राप्तज्ञानस्यापि भरतस्य मृगजन्मप्राप्तिरुच्यते। न च तस्य ज्ञानं संपूर्णं न निष्पन्नम्। अतो मृगजन्मप्राप्तिरिति वाच्यम्, उत्पन्ने ज्ञाने संपूर्णासंपूर्णविभागस्य दुर्निरूपत्वेन तादृशसंपूर्त्यर्थमेव यावज्जीवं विद्यायाः अनुष्ठेयत्वस्यावश्यकत्वे सिद्धे, तत्प्रतिबन्धकपापानां निवृत्त्यर्थम् कर्मानुष्ठानस्यावश्यकत्वात्॥

अत एव खलु 'आप्रयाणात् (आप्रायणात्) तत्रापि हि दृष्टम्' (ब्र.सू.4-1-12) इति शरीरपातपर्यन्तमनुष्ठेयत्वं विद्याया उक्तम्। ननु तत्सूत्रमुपासनाविषयम्, न ब्रह्मविद्याविषयम्। सकृद्ब्रह्मदर्शनेनैव सर्वपापक्षयात्। 'आवृत्तिरसकृत्' इत्यपि अपरमुक्तिसाधनोपासनाभिप्रायम्, न तु परमुक्तिसाधनापरोक्षज्ञानाभिप्रायम्। अन्यथा 'नान्यः पन्थाः' इति ज्ञानातिरिक्तस्य साधनत्वनिराकरणानुपपत्तेः इति चेन्न; 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इति केवलकर्मणः साधनत्वनिषेधवत्, 'ततो भूय इव ते तमो य उ विद्यायां

रताः' इति केवलविद्याया अपि साधनत्वं निषिध्य 'विद्यां चाविद्यां चे'त्यादिना उभयोरेव साधनत्वाभिधानात्। 'नान्यः पन्थाः' इत्यपि ज्ञानस्यावर्जनीयत्वाभिप्रायम्। अतः ज्ञानकर्मसमुच्चयवाद एव साधीयान्। न च सकृद्दर्शनेनैव सर्वकर्मक्षयसंभवः, अननुभवात्। अत एव किल जीवन्मुक्तावस्थाङ्गीकारोऽप्युपपद्यते। न च भेदवासनाया बहुकालादनुवृत्त्या, अभेदप्रत्ययस्य तदपेक्षया किञ्चिदिव दौर्बल्यात् हठाद्बन्धनिवृत्तिर्न जायेत। एतद्दार्ढ्याय लेशतो विलंबोऽवर्जनीय इति वाच्यम्; त्वन्मते भेदवासनाया एव चित्ताशुद्धिरूपत्वेन, तन्निरसनाय भगवदर्पणबुद्ध्या कर्मानुष्ठानावश्यकत्वस्य सिद्धेः। न च कर्मानुष्ठानस्य भेदगर्भत्वेन विद्याविरोधित्वमेवेति वाच्यम्; एवं सति 'विविदिषन्ति यज्ञेन' इत्यस्यैव विरोधापत्तेः। कर्मणां विद्याविरोधित्वे, विद्योत्पत्तिक्षमत्वस्यापि चित्ते कर्मभिरनाधानप्रसङ्गात्। न च केवलकर्मणां तथात्वेऽपि, भगवदर्पणबुद्ध्या कृतानां भगवदनुग्रहात् चित्तशुद्धिहेतुत्वसंभव इति वाच्यम्, अस्यांशस्य विद्योत्पत्त्यनन्तरमपि समानत्वात्। न च **जडभरतादि**भिस्सकलकर्मत्यागदर्शनात्, ब्रह्मज्ञानिभिः कर्मानुष्ठानमेवाशक्यमिति वाच्यम्; शरीरप्रज्ञाशून्यानाम्, अत एव बालोन्मत्तवदस्वाधीनचित्तानां कर्मप्रसक्तेरेवासंभवेन कर्मत्यागप्रसक्तेरप्यभावात्। कर्माकरणवत्तैः साधनानुष्ठानस्याप्यदर्शनात्। तादृशानां चरितस्यादर्शरूपत्वाभावात्। श्रीरामकृष्णादीनां भगवदवताराणां परमज्ञानिनां च कर्मानुष्ठानस्यैवादर्शत्वसंभवात्। अन्यथा **ऋषभदेववत्** दिगम्बरत्वस्यापि धर्मत्वप्रसङ्गः। अतः कर्मसमुच्चितं ज्ञानमेव मोक्षसाधनमिति मोक्षसाधनत्वं कर्मज्ञानोभयस्मिन् व्यासज्यवृत्तीत्येव युक्तमित्याहुः॥

**यादवप्रकाशास्तु**—सत्यं कर्माण्यवर्जनीयान्येव। परन्तु 'अविद्यया मृत्युं तीर्त्वा' इति अविद्याया मृत्युतरणहेतुत्वस्य पृथगभिधानात्, कर्मणां मोक्षप्रतिबन्धकपापनिरसनमेव फलम्। एवम् 'विद्ययामृतमश्नुते' इत्यभिधानात् ज्ञानमेव मोक्षसाधनम्। न च प्रतिबन्धकनिवृत्तिमात्रसाध्यत्वं फलस्य, दीपादिना दर्शनप्रतिबन्धकान्धकारनिवर्तनेऽपि अन्धस्य वस्तुदर्शनाभावात्, प्रतिबन्धकाभावमात्रस्य कारणत्वासंभवात्। न च वस्तूत्पत्तिविचारोऽन्यः, अन्यश्च ज्ञानोत्पत्तिविचार इति शङ्क्यम्, बाधितानुवृत्त्यनुपपत्तेः। सर्वत्रापि हि फलस्वरूपे अंशद्वयं सर्वानुभवसिद्धमवर्जनीयम्, इष्टप्राप्तिः अनिष्टनिवृत्तिश्चेति। तत्रेष्टप्राप्तिः ज्ञानेन, अनिष्टनिवृत्तिश्च कर्मणेत्येव वक्तव्यम्। एवञ्च साध्यमपि अंशद्वयात्मकम्, साधनमपि तदनुगुणं ज्ञानकर्मरूपद्वयात्मकमिति साध्यद्विकसाधनद्विकरूपज्ञानकर्मसमुच्चय एव स्वरस इत्याहुः॥

**सिद्धान्तिनस्तु**—विद्योत्पत्तेः पूर्वमनुष्ठितानां कर्मणां विद्योत्पत्तिप्रतिबन्धकपापफलभूतचित्ताशुद्धिनिवारकत्ववदेव, उत्पन्नाया अपि विद्याया आदेहपातं संरक्षणस्याप्यावश्यकत्वेन, तदनुगुणचित्तशुद्धिसंरक्षणार्थं कर्मानुष्ठानमवर्जनीयमेव। न च सकृदुत्पन्नं ज्ञानं सर्वकर्मक्षयकरम्, पुनः पापप्रसक्तेरभावेन कथं चित्ताशुद्धिसंभव इति शंक्यम्; भगवन्मायायाः 'मम माया दुरत्यया' (गी.7-14) इति दुरत्ययत्वस्य 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' (गी.7-14) इति भगवदनुग्रहमात्रनिवर्त्यत्वस्य च कथनेन शरीरपातपर्यन्तमेव साधनानुवृत्तेः 'आप्रयाणात्' इत्यभिधानात्। न चेदमपरमुक्तिविषयम्, सगुणनिर्गुणभेदस्य परापरमुक्तिभेदस्य च तत्तत्प्रकरणे निराकृतत्वात्। नन्वस्तु उत्पन्नज्ञानसंरक्षणार्थत्वं कर्मणाम्, मुक्तिं प्रति हेतुत्वं कथं तेषाम्? 'नान्यःपन्थाः' इति ज्ञानव्यतिरिक्तस्य साधनत्वनिषेधात्। न च ज्ञानस्यावर्जनीयत्वमात्राभिप्रायकं तदिति वाच्यम्, 'नान्यः

पन्थाः' इति ज्ञानातिरिक्तस्य साधनताया अपि स्पष्टं निषेधादिति चेत्, न; कर्मणां ज्ञानाङ्गत्वेन साक्षान्मुक्तिहेतुताया अनङ्गीकारात्। अङ्गाङ्गिभावसमुच्चयमात्रेणैव 'विद्यां चाविद्यां च' इत्यादिसमुच्चयाभिधानस्य सार्थकत्वात्। कर्मणामत्यन्तावर्जनीयत्वबोधनार्थमेव चकारद्वयादीनामुपपत्तेः। न च 'अविद्यया मृत्युं तीर्त्वा' इति कर्मणां प्रत्येकं फलाभिधानात्, कथं ज्ञानाङ्गत्वमिति वाच्यम्; प्रतिबन्धकनिवृत्तेः अभावरूपत्वेन, अभावस्य भावान्तर-रूपत्वेन च, तस्य प्रत्येकफलरूपत्वाभावात्। विद्योत्पत्तेःपूर्वमनुष्ठितानां कर्मणां भगवदनुग्रहद्वारा चित्तशुद्ध्यर्थ-त्वस्यापि सत्त्वेन तदभिप्रायाद्वा तथोक्त्युपपत्तेः। विद्योतपत्त्यनन्तरं तु, विद्यानुवृत्त्यर्थत्वेन विद्याङ्गत्वोपपत्तेः। कर्मणां साक्षान्मोक्षसाधनत्वान्वयनिराकरणार्थमेव कर्मणः व्यवहितत्वेन वा तथाभिधानात्॥

ननु 'विविदिषन्ति' इति इच्छासाधनत्वमेव कर्मणाम्, न तु वेदनाङ्गत्वम्। तच्च चित्तशुद्धि-द्वारैवेच्छासाधनत्वमिति चेत्, 'अविद्यया' इति तृतीयाया अत्यन्तगौणत्वप्रसङ्गात्। 'अश्वेन जिगमिषति' इत्यादौ धात्वर्थगमनसाधनत्वाभिप्रायेणैव तृतीयायाः प्रयोगदर्शनाच्च। तद्वदेवात्रापि धात्वर्थवेदनसाधनत्वस्यैव तृतीयया बोधनात्। न च **जडभरतादी**नामात्मज्ञानिनां कर्मानुष्ठानादर्शनात्, कथं ज्ञानाङ्गत्वं कर्मणामिति वाच्यम्; स्वाधीनबुद्धिमतामेव शास्त्रवश्यत्वात्। शिष्टं पूर्वमेवोक्तम्। अतश्च यदि चित्तशुद्ध्यर्थत्वं कर्मणामुच्यते, तर्हि तादृशचित्तशुद्धेः आदेहपातं संरक्षणीयत्वेन कर्मानुष्ठानमवर्जनीयमेव। न च 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' (गी.4-38) इति ज्ञानतुल्यपवित्रवस्त्वन्तरस्याभावाभिधानात्, तदेव ज्ञानं चित्तशुद्धिमपि रक्षेदिति कृतं कर्मानुष्ठानेनेति वाच्यम्; तादृशस्यात्मज्ञानस्यात्यन्तं दुर्लभत्वात्, उत्सर्गरूपेणैव शास्त्रस्य वक्तव्यत्वात्। अन्ततो लोकशिक्षणार्थं वा स्वाधीनबुद्धीनां कर्मानुष्ठानावश्यकताया अभिधानात्। अन्यथा लोकनाशजनितपापेन विद्यानाशसंभवः। एवञ्च कर्मणामपि यावज्जीवमनुष्ठेयत्वमावश्यकम्॥

**वस्तुतस्तु**– 'बाल्येन तिष्ठासेत्' 'निदिध्यासितव्यः' विजिज्ञासितव्यम्' 'जिजीविषेत्' इत्यादौ सन्प्रत्ययार्थस्याविवक्षिततत्वं स्पष्टमिति, अत्रापि सन्प्रत्ययार्थो न विवक्षित इत्येव युक्तम्। अथवा कर्मचक्र क्रकचपतितस्य पुंसः सद्विषयाभिमुख्यं कथंचिदागतं चेत्, तावानेव महान् विषयः। इतरत् सर्वम् 'योगक्षेमं वहाम्यहम्' इति वदन् परमात्मैव सर्वं घटयेदिति सूचनाय सनन्तप्रयोगः इति वरम्॥

अतश्च, विद्योत्पत्तेः पूर्वमनुष्ठितानि कर्माणि विद्योत्पत्तिप्रतिवन्धकपापनिवृत्त्यर्थानि। विद्योत्पत्त्यनन्तरं कर्माणि विद्यानिष्पत्त्यर्थानि विद्याङ्गभूतानि। यस्य कस्यचित् शीघ्रं विद्यानिष्पत्तावपि, विद्यारक्षणाय वा कर्माणि कर्तव्यानि, अथवा लोकसङ्ग्रहार्थानि। अन्यथा तं दृष्ट्वा यदि कश्चिन्मन्दमतिः अनिष्पन्नविद्योऽपि भ्रान्त्या कर्म त्यजेत्, तन्नाशजनितं पापमस्यापि विद्यां नाशयेत्। अत एवोक्तं भगवता– 'लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि' (गी.3-20) उपर्यपि– 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥ यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः। मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥ उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम्। संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः॥ सक्ताः कर्मण्यविद्वांसः यथा कुर्वन्ति भारत। कुर्याद्विद्वांस्तथासक्तः चिकीर्षुः लोकसङ्ग्रहम्॥ न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्। जोषयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन्॥ (गी.3-20-26)' इति॥

लोकसङ्ग्रहः न शिष्यसङ्ग्रहः, अपि तु लोकः उच्छृङ्खलो यथा न नश्येत्तथावस्थापनम् । अत एव भाषितम् 'लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेत् ।' इति । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥' (21) इति हि न्यायः । जोषयेत्=जनानामपि कर्मणि प्रीतिमुत्पादयेत् । ननु लोकसंग्रहार्थकर्माधिकारिदृष्ट्या कर्मणां विद्याङ्गत्वाभावात् कथमङ्गाङ्गिभाव-निर्णय इति चेत्; सत्यम् । श्रकृिष्णेन स्वस्यैव निदर्शनत्वेन प्रदर्शनात् । तादृशाधिकारिणोऽत्यन्तं विरलत्वात्, आधिकारिकपुरुषमात्रविषयकत्वाद्वापवादरूपतया, उत्सर्गशास्त्रदृष्ट्या तथा सिद्धान्तात् । अतश्च यावत्पर्यन्तं भोजनाद्यवर्जनीयम्, तावत्पर्यन्तं यथाशक्ति कर्माप्यवर्जनीयमेव । अधिकमुत्तरश्लोकेषु स्पष्टीभविष्यति ॥

**मर्मज्ञास्त्वेवमाहुः**—यद्यपि भगवद्भाष्यकारैः तत्काले नैष्कर्म्यवादस्य प्रबलतया स्थितत्वात्, तस्य चात्यन्तापायकरत्वात्, तन्निराकरणपरतयायं मन्त्रो व्याख्यातः पूर्वोक्तक्रमेण । तथापि अत्यन्तव्यापकतयाप्यस्यार्थः प्रतीयते । तथा हि— 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इत्यत्र चकारद्वयोभयशब्दसहशब्दैः विद्याविद्ययोः समप्राधान्यमेव वदतीव स्वरसतो भाति । 'वेद' इति विद्याविद्ययोः ज्ञानस्यावश्यकता प्रतीयते । साधनयोः ज्ञानं तदनुष्ठानार्थमेव । एवं प्रत्येकं विद्यायाः, अविद्यायाश्च निन्दापि दृश्यते । एतत्सर्वपरिशीलेन श्रुतेराशया-न्तरमपि स्यादिति भाति । विद्यामयः पुरुषः । प्रकृतिस्तु अविद्यामयी । अविद्या नाम विद्येतरत्, विद्यासन्निहितं किञ्चित्, न तु विद्याविरोधि । अविद्या=क्रिया । 'प्रकर्षेण करोतीति प्रकृतिः' इति हि व्युत्पत्तिः । प्रकृतिः क्रियामयी । अतः क्रियाज्ञानयोः योग आवश्यकः इत्येको भावः । एवं प्रकृतिपुरुषावुभौ मिलित्वैव सर्वं साधयतः । चेतनसंबन्धमन्तरा प्रकृतिः किं कुर्यात्? प्रकृतिसंबन्धमन्तरा शरीरादिशून्यः पुरुषो वा किं कुर्यात्, 'शरीरमाद्यं खलु धर्मसाधनम्' । अतः साधनानुष्ठानं विद्याविद्ययोः=प्रकृतिपुरुषयोस्समावेशैक-निर्वर्त्यम् । अतः साधनाकालादारभ्य यावत्फलावाप्ति प्रकृतिपुरुषयोर्वास्तविकं समप्राधान्यं मन्त्रोऽयमभिप्रैति । तेन 'नात्यश्नतस्तु योगोऽस्ति' इत्याद्यभिहिता सदा सर्वत्र समचित्तता आवश्यकीत्युच्यते, 'समत्वं योग उच्यते' इति चेति सृष्टिविज्ञानदृष्ट्या चकारद्वयादीनामुपपत्तिः ॥ ३३ ॥

ननु 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ॥' (छा.8-15- ) इति श्रूयते । तेन यावज्जीवं कर्मानुष्ठानेनैव अपुनरावृत्तिरूपमोक्षप्राप्तेः श्रवणात् 'कर्मणैव हि संसिद्धिं आस्थिता जनकादयः' (गी.3-20) 'स्वकर्मणा तमभ्यर्च्य सिद्धिम् विन्दति मानवः' (गी.18-46) इत्यादौ कर्मणैव मुक्तेरभिधानाच्च विद्याया मोक्षसाधनत्वमेव न संभवति । किं तर्ह्यर्थशून्या उपनिषदः? कर्मकर्तुरात्मनः स्वरूपवर्णनपरास्ताः । सर्वं साधयितुं समर्थं पारलौकिकमात्मानं सम्यग्जानन् कर्म कुर्वाणो निरतिशयं फलमाप्नुयादित्येतदर्थं तासां प्रवृत्तेः । श्रूयते किल 'अपाम सोमममृता अभूम' (तै.सं.3-2-5) इति । 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ईश.2) इति च । 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति अग्नित्यागनिषेधश्रवणाच्च—इत्यादिना पुरुषार्थाधिकरणे (ब्र.सू.3-4-1) विस्तरेण पूर्वपक्षतया प्रतिपादितं

[विद्यायाः कर्माङ्गत्वनिरासः]

**104. संस्कारः कर्मकर्तुर्न भवति विहितं मुक्तये ज्ञानमन्यत्**
**नाप्येतत् कर्मणोऽङ्गं, न च सकृदसकृत्त्वाप्रयाणानुवृतम् ।**

कर्मभिरेव निरतिशयसुखावाप्तिर्भवतीतीमं **जरन्मीमांसकपक्षं** निराकरोति— **संस्कार इत्यादि** । अथवा एवं कर्मणो ज्ञानाङ्गत्वमुपवर्ण्य, ज्ञानस्यैव कर्माङ्गत्वमस्त्विति **पूर्वमीमांसकपक्षं** निराकरोति— **संस्कार इत्यादि** । **मुक्तये**=अपुनरावृत्तिरूपमुक्त्यर्थं उपनिषत्सु **विहितम् अन्यत्**=कर्माङ्गभूतात्मज्ञानविलक्षणं **ज्ञानम्**=आत्मस्वरूपज्ञानं **कर्मकर्तुः**=यज्ञादिकर्मानुष्ठातुः **संस्कारः**=संस्काररूपं **न भवति**। न भवतीत्यत्र हेतुत्रयं **'विहितम्' 'मुक्तये' 'अन्यत्'** इति पदत्रयं वक्ति। विहितम् इत्यनेन, विधातुमनर्हस्य वाक्यार्थज्ञानस्य औपनिषदत्वनिरासः। वाक्यार्थज्ञानं हि प्रमाणतन्त्रम्, न पुरुषतन्त्रम्। अतो विधातुमनर्हम्। उपासनात्मकं तु ज्ञानविशेषरूपं विहितत्वात् साक्षान्मुक्तिफलकम्, कर्मकर्तुस्संस्काररूपं न भवितुमर्हति । **मुक्तये** इत्यनेन अन्यार्थ विहितस्य अन्यशेषत्वनिरासः। **अन्यत्** इत्यनेन, कर्मकर्तुः स्वरूपविषयकत्वव्यवच्छेदः । आत्मनः शरीरातिरिक्तत्वज्ञानमात्रेणैव कर्मानुष्ठानसंभवात्, तदतिरिक्तानामुपनिषत्प्रतिपाद्यानां विलक्षणानां गुणाष्टकादीनां उपदेशस्य वैयर्थ्यं दुष्परिहरं भवेत्। एतदभिप्रायेणैव खलु पूर्वकाण्डे आत्मविचारो न कृत इति रहस्यज्ञा वदन्तीति श्रीशङ्कराचार्यैरपि पूर्वोत्तरमीमांसैक्यवादी **भगवानुपवर्षः** साक्षीक्रियते— 'भगवता **उपवर्षेण** प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ 'शारीरके वक्ष्यामः' इत्युद्धारः कृतः' (ब्र.सू.3-3-53.शं.) इति वदद्भिः। अतः उपनिषत्प्रतिपाद्यमात्मस्वरूपज्ञानं न कर्मकर्तुः संस्काररूपं भवितुमर्हति ॥

किञ्च उपनिषत्प्रतिपाद्यं ह्यात्मस्वरूपं जीवविलक्षणं जगदुपादानभूतं परमं तत्त्वम्; न तु जीवस्वरूपम्। न च संसारावस्थायां कलुषितं रूपमेव, नित्यस्वर्गरूपमुक्त्यवस्थायां विशुद्धं ब्रह्मेत्युच्यते । अनादिसर्वज्ञस्य निराकरणेनात्मनां सर्वेषां स्वरूपतस्समानत्वादिति वाच्यम्; 'निरवद्यं निरञ्जनम्'(श्वे.6-19) 'अपहतपाप्मा' (छां.8-7-1) 'असङ्गो ह्ययम्'(6-3-15) 'वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चन'(गी.7-26) इत्यादिश्रुतिस्मृतिशतविरोधापत्तेः । 'वीरहा वा' इत्यादिकं कर्मप्राशस्त्यपरतयाप्युपपद्येत। एवं 'कुर्वन्नेवेह' इत्यादिकमपि विद्याङ्गभूतकर्मपरतयाप्युपपद्येत। इदं सर्वं केवलार्थवादमात्रमिति चेत्; अहो! स्वजनकजननदर्शनशपथकृन्मूर्खवदुपहास्यतामात्मनो न जानाति भवानित्याश्चर्यमेतत्? यं परमात्मतत्त्वं वाङ्मनसागोचरम् स्मरन्तोऽपि महात्मनो मूका भवन्ति, उन्मत्ता इव भवन्ति, मूर्छिता इव भवन्ति, तादृशमत्याश्चर्यरूपं परमात्मतत्त्वमेतावल्लघु मन्यमानेन साकं विवदितुं साधवस्सर्वथा जुगुप्सेरन्नित्यास्तामयं विचारोऽत्रैव। अनादिसर्वज्ञनिराकरणमनन्तरसरे विमृशामः ॥

ननु! मास्तु नाम कर्मकर्तुस्संस्काररूपता ज्ञानस्य। कर्मण एव तद्ज्ञानमङ्गं भवतु। ज्ञानाङ्गकात् कर्मण एव परमपुरुषार्थावाप्तिर्भवतु।**याज्ञवल्क्यमहर्षेः** शिष्यो**जनकः** कर्मणैव सिद्धिं प्राप्त इति हि प्रसिद्धम्— 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (गी.3-20) 'इयाज सोऽपि बहून् यज्ञान्....तर्तुं मृत्युमविद्यया।' (वि.पु.6-6-12) इत्यादौ। अतः ज्ञानमेव कर्मणोऽङ्गमित्यत्र 'अन्यत्' इत्यनेन सूचितं वैलक्षण्यमाह— **नापीत्यादि**।

**अङ्गं तस्याऽऽसनाद्यं प्रणिधिसमुचित्तौ देशकालप्रभेदौ**
**इत्याद्यं साङ्गयोगप्रकरणविततं सूत्रभाष्यादिषूक्तम् ॥ ३४ ॥**

**एतत्**=उपनिषत्प्रतिपाद्यं निरतिशयपुरुषार्थरूपपरमात्मज्ञानम्**कर्मणः अङ्गम् नापि**भवितुमर्हति। स्वयं हि परम-पुरुषार्थभूतं तादृशं ज्ञानम्; यच्च ज्ञानं जातं चेत्, शरीरविस्मृतिमेव दद्यात् जडभरतादेरिव, तत् अन्यस्याङ्गम् विशेषतः कर्मणोऽङ्गं कथं भवेत्? अन्यदपि कर्मवैलक्षण्यमाह—**न च सकृदिति**। कर्माङ्गत्वे हि प्रोक्षणादिवत् सकृत्कृतः शास्त्रार्थः स्यात्। न च ज्ञानं तथा।**तु**=किन्तु**असकृत्**। 'आवृत्तिरसकृदुपदेशात्' (ब्र.सू.4-1-1) इति हि निर्णीतम्। अतः ज्ञानं कर्माङ्गं न भवितुमर्हति। ननु अवघातादिवत् स्यात्, 'व्रीहीनवहन्ति' इति विहितः अवघातः न हि सकृत् क्रियते। अतः असकृदावृत्तिरपि दृश्यते कर्मस्विति चेत्, तत्राह—**आप्रयाणानुवृतम्**। प्रयाणम्=शरीराज्जीवस्य उत्क्रमणम्। तावत्पर्यन्तं हि औपनिषदमात्मज्ञानमावर्तनीयमुक्तम्'प्रायणान्तमोङ्कार-मभिध्यायीत' (प्र.5-1), 'आप्रयाणात्' (ब्र.सू.4-1-12), इति श्रुतिसूत्रादिषु यावज्जीवमावर्तनीयमभिहित-मुपासनात्मकं ज्ञानं कथं कर्माङ्गं स्यात्। अवघातादेस्तु पुरोडाशार्थतण्डुलार्थतुषविमोचनरूपदृष्टफलार्थत्वेन याव-तुषमोचनं लोकतः प्राप्ताऽऽवृत्तिः। एवमुत्तरकर्मोपयागित्वं च। न चैवं प्रकृते, शरीरपातावधिकर्तव्यत्वात्॥

नैतावन्मात्रम्। तस्यैतस्योपासनस्य विहितानि यमनियमासनादीन्यङ्गान्यपि कर्माननुगुणानि ज्ञानस्य स्वतन्त्रतामावेदयन्तीत्याह—**अङ्गमित्यादिना**। **तस्य**=ध्यानोपासनादिवाच्यज्ञानस्य **आसनाद्यम् अङ्गम्**= आसनप्रभृत्यङ्गम्; 'आसीनस्संभवात्' (ब्र.सू.4-1-7) इत्यादिनाभिहितम्। यद्यपि 'यमनियमासन'(यो.सू.2-29) इत्यादिसूत्रानुसारात् 'यमाद्यम्' इति कथनमुचितम्; अथापि उक्तब्रह्मसूत्रानुसारात्, अस्य कर्मविरोधित्व-सूचनार्थञ्च 'आसनाद्यम्' इत्युक्तम्। न ह्यासीनेन कर्मानुष्ठानं शक्यम्। ध्यानं तु आसीनेनैव कर्तव्यम्। एवं सति उपासनं कर्माङ्गं कथं स्यात्? न चैतादृशस्योपासनस्य कर्म वा कथमङ्गं स्यादिति शङ्क्यम्; उपासनाव्यतिरिक्तकाल एव यावच्छक्ति कर्मानुष्ठानसंभवात्। न ह्युपासनं अहर्निशमनुष्ठातुं शक्यम्, प्रकृतेः स्वतः बाह्यप्रवणत्वात्। गुरूपदिष्टमार्गेण सायं प्रातरिति अभ्याससाध्यमुपासनमादौ। अवशिष्टकाले विहितकर्मणामनुष्ठानमपि शक्यम्। क्रमशः चित्तस्य अन्तर्मुखतायां जातायां जडभरतादिवत् शरीरविस्मरणे मूर्छाद्यवस्थायामिव, कर्मणामननुष्ठानेऽपि न पातकं किञ्चित्। अतः कर्माण्येव ज्ञानाङ्गानि, न तु ज्ञानं कर्माङ्गम्। 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते.। योगारूढस्य तस्यैव शमः कारणमुच्यते ॥' (गी.6-3) 'यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्यते। सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥' (6-4) इत्याद्यत्र स्मर्तव्यम्। अधिकं 36श्लोके भविष्यति। एवं—**प्रणिधिसमुचितौ**=ध्यानयोग्यै **देशकालौ च**=देशविशेषः कालविशेषश्च इत्याद्यं **साङ्गयोगप्रकरणविततम्**=**अष्टाङ्गयोग**प्रतिपादनप्रकरणेषु विस्तृतं यत्, तत् **सूत्रभाष्यादिषु**='आसीनस्संभवात्' इत्यादिसूत्रेषु तद्भाष्येषु च उक्तम्॥

'समे शुचौ शर्करावह्निवालुकाविवर्जिते' (श्वे.2-10) इत्यादौ देशविशेषादिकमुपदिष्टम्। **योगशास्त्रं** वेदाङ्गभूतमिति सूचनाय 'प्रकरणम्' इत्युक्तम्। 'एतेन योगः प्रत्युक्तः'(ब्र.सू.2-1-3) इत्यपि न

[वर्णाश्रमधर्माणामत्याज्यत्वम्]

105. **ब्रह्मण्यैकान्त्यभाजां मुहुरनुकथितो मोक्षधर्मेऽपवर्गः**
**तस्मान्नानामरेज्या न भवति परभक्त्यङ्गमित्यप्ययुक्तम्।**

योगप्रक्रियानिराकरणपरम्, किन्तु जगदुपादानत्वविषयकम्,न वा ध्याननिरासकम्, 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' (कठ.2-6-11) 'योगविधिं च कृत्स्नम्' (कठ.2-6-18) इति योगस्योपनिषत्स्वेव प्रतिपादनात्। 'आसीनस्संभवात्' (ब्र.सू.4-1-7) इत्यादौ ध्यानयोगस्य प्रतिपादनाच्च। 'कर्मणैव हि संसिद्धिम्' इत्यादिकमपि न ज्ञाननिन्दापरम्, किन्तु आत्मावलोकनहेतुभूतयोः ज्ञानयोगकर्मयोगयोः कर्मयोगस्य सुकरत्वात् तस्य श्रैष्ठ्यविषयकम्, न तु मुक्तिसाधनविषयकमिति भाष्ये व्यक्तम्॥ ३४॥

आस्तिकेष्वेव निरुपपदधर्मपदवाच्यानां वर्णाश्रमधर्माणां मोक्षविरोधित्वं मन्यमानौ द्वौ स्तः— **ब्रह्मविवर्तवादी, वीरवैष्णवश्च**। तयोः ब्रह्मविवर्तवादिमतं तत्सिद्धान्तनिरसनादेव निरस्तप्रायम्। अवशिष्टमपि निरस्यतेऽनुपदम्। मध्ये केवल**पाञ्चरात्रिकाः** केचनात्मानं विष्ण्वैकान्तिनं मन्यमानाः वर्णाश्रमधर्माणां नानादेवताराधनगर्भत्वात् विष्ण्वैकान्तभक्तस्य स्वरूपविरोधित्वं मन्यन्ते। 'सर्वधर्मान् परित्यज्य'(गी.18-66) इत्यत्र च भाष्यानुक्तोऽपि वर्णाश्रमधर्माणां स्वरूपत एव त्यागो विवक्षितः, सङ्कोचे मानाभावादिति वदन्ति। तदेतन्निराकरोति— **ब्रह्मणीत्यादिना। मोक्षधर्मे**=श्रीमतो महाभारतस्य शान्तिपर्वान्तर्गते मोक्षधर्मप्रकरणे पाञ्चरात्रसंमतवैष्णवधर्मनिरूपणप्रसङ्गे, **ब्रह्मणि**=ब्रह्मपदवाच्ये श्रीविष्णौ **ऐकान्त्यभाजाम्**=एकनिष्ठावताम् **अपवर्गः**=मोक्षः **मुहुः**=पुनः पुनः **अनुकथितः**=विस्तरेणाभिहितः। **तस्मात् नानामरेज्या**=विष्णुव्यतिरिक्ताग्नीन्द्रादिनानादेवतापूजनम् **परभक्त्यङ्गम्**=मोक्षसाधनभूतायाःपरभक्तेरङ्गम् **न भवति**=न भवितुमर्हति। अतश्च 'कर्माङ्गकात् ज्ञानान्मोक्षः' इत्यत्र कर्मणि न वर्णाश्रमधर्मा विवक्षिताः, किन्तु पाञ्चरात्रादिवैष्णवशास्त्रोक्ता एव धर्मा विवक्षिताः॥

**अयमाशयः**—भारतीयानां परमं प्रमाणं वेदाः। वेदास्सर्वेऽपि विष्णुपारम्यपराः। 'वेदैश्च सर्वैरहमेव वेद्यः' (गी.15-15) इति स्वयमेवाह भगवान्। अयमर्थस्समनन्तरसरे विस्तरेण विचार्यते। वेदादनन्तरं अवतीर्णाः इतिहासपुराणानि आगमाश्च। इतिहासौ तु सर्वप्रसिद्धौ श्रीमद्रामायणम्, श्रीमन्महाभारतं च। द्वयमपि विष्णुपारम्यपरमेव। पाञ्चरात्रं तु वैष्णवानां परमं प्रमाणम्। आगमेषु च 'ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्॥' (म.भा.मो.350-36) इति विष्णुभक्तानां प्रतिबुद्धत्वम्, अत एवेतरदेवताभक्तानामप्रतिबुद्धत्वं च प्रतिपादितम्। अत एव 'श्वपचोऽपि महीपाल विष्णुभक्तो द्विजाधिकः। विष्णुभक्तिविहीनस्तु विप्रोऽपि श्वपचाधमः॥' (पाञ्चरात्र) इत्यादिभिः बहुभिः प्रमाणैः वैष्णवत्वस्य ब्राह्मण्यापेक्षयाप्युत्कृष्टत्वं प्रतिपादितम्। अत एव वैदिकेभ्यः वर्णाश्रमधर्मेभ्यः, आगमप्रोक्ता वैष्णवधर्मा एव श्रेष्ठाः॥

ते च भक्ताः चतुर्विधाः आर्तः, अर्थार्थी, जिज्ञासुः, ज्ञानी चेति। आर्तः=दुःखपीडितः; तत्परिहारापेक्षी। अर्थार्थी=नूतनफलापेक्षी। जिज्ञासुः=आत्मस्वरूपावाप्तीच्छः। ज्ञानी=परमात्मनि निरतिशय-

**ऐन्द्रीप्रातर्दनादिप्रथितनयविदामन्तरात्मैकलक्ष्ये-**
**ष्वग्नीन्द्रादिप्रयोगेष्वखिलमपि विभुः कर्म भुङ्क्ते स एकः ॥ ३५ ॥**

प्रेमवान्। आद्यास्त्रयः एकान्तिनः, चतुर्थस्तु परमैकान्ती। एकान्ती=एकदेवतानिष्ठः, अथापि तदेव न मुमुक्षुः। यथा बालाः स्वाभिमतं फलं स्वपितुः सकाशात् प्राप्नुवन्ति; यथा वा सती स्वाभिमतं वस्त्राभरणादिकं स्वपत्युस्सकाशादेव प्राप्नोति, न त्वन्यपुरुषात्, तथा वर्तमानाः एकान्तिनः। परमैकान्तिनस्तु प्रौढाः परमात्मप्राप्तिमात्रेच्छवः। 'ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः। तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः' (गी.सं.29) इत्यादिकं **भगवद्यामुनाचार्यै**रभिहितमत्रानुसंधेयम्। एवञ्चैते विष्णुभक्ताः सतीन्यायनिष्ठाः नारायणादन्यं देवं मनसापि यतो न स्मरन्ति, अत एव वैदिककर्माणि अग्नीन्द्रादिदेवतापूजारूपाणि त्याज्यानि, पाञ्चरात्रोक्तवैष्णवधर्मेष्वेवादरः। तदेतत्संग्रहेणोक्तं **ब्रह्मणीत्यादिना**। परभक्तिः=मोक्षसाधनभक्तिः 'समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' (गी.18-54) इत्यादावुक्ता। एकान्तिनस्तु भक्ताः, 'चतुर्विधा भजन्ते मां जनाः' (गी.7-16) इत्यत्रोक्ताः आद्यास्त्रयः। परमैकान्तिनस्तु परभक्तिनिष्ठाः तत्रैवोक्ताः चतुर्थाः 'ज्ञानी'पदवाच्याः। इयं परभक्तिः अभिवृद्धा परज्ञानावस्थाम्, परमभक्त्यवस्थां च प्राप्नोति। भक्तेः परा काष्ठा **गद्यग्रन्थे** भगवद्रामानुजैः प्रोक्ता। एतादृशानां परभक्तिनिष्ठानां वर्णाश्रमधर्माः स्वरूपविरुद्धत्वात् त्याज्या इति भावः॥

एतन्निराकरोति—**इत्यप्ययुक्तमिति**। एतादृशवादः श्रुतिविरुद्धत्वादयुक्तः। कुत इत्यत्र—**ऐन्द्रीत्यादि**। **ऐन्द्रीप्रातर्दनादिरूपाः प्रथिताः**=प्रसिद्धाः **नयाः**=न्यायाः **तद्विदाम् ये अग्नीन्द्रादिप्रयोगाः, तेषु अन्तरात्मैकलक्ष्येषु**=तत्तदन्तरात्मभूतपरमात्मैकबोधनपरेषु सत्सु **अखिलमपि कर्म विभुः**= सर्वान्तरात्मा **स एक एव भुङ्क्ते**। अतः ब्रह्मविदामाशयापरिज्ञानात् भ्रान्तानां तादृशाः वादाः मुमुक्षुभिः नादरणीयाः॥

'आकाशात्पतितं तोयं यथा गच्छति सागरम्। सर्वदेवनमस्कारः केशवं प्रति गच्छति॥' 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते॥'(गी.9-24) इत्यादिना सर्वकर्मसमाराध्यः स एक एव भगवानिति स्पष्टं प्रतिपादितम्। अत एव अग्नीन्द्रादिशब्दा अपि परमात्मवाचकास्समर्थिताः। तेषां परमात्मपरत्वं च प्रकारद्वयेन निरूपितम्। एकः प्रकारः 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू.1-2-7) इत्युक्तः। अन्यस्तु 'शास्त्रदृष्ट्या तूपदेशः' (ब्र.सू.1-1-31)इत्युक्तः। आद्यो यथा—'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' (यजु.1-4-23) इति मन्त्रः पठ्यते। हे इन्द्र! त्वं कदाचन=कदाचिदपि स्तरीः=हिंसकः न असि। प्रत्युत दाशुषे=दानशीलाय यजमानाय सश्चसि= प्रीतिमानसि इति तस्यार्थः। अत्र 'इन्द्र' इति संबोधनादयं मन्त्रःयथाश्रुतरीत्या इन्द्रोपस्थाने विनियोज्यः। परन्तु 'कदाचन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति गार्हपत्याग्नेरुपस्थाने विनियुक्तः। अतः 'इदि परमैश्वर्ये' इति धातोर्निष्पन्नस्येन्द्रपदस्य योगव्युत्पत्या परमैश्वर्य संपन्नवाचित्वात् गार्हपत्याग्निरेव प्रशंसार्थम्

'इन्द्र' इति संबोध्यत इति निर्णीतं पूर्वमीमासायाम्। अयमेव ऐन्द्रीन्यायः। द्वितीयस्तु प्रतर्दनो नाम इन्द्रस्य दासः। तत्सेवया प्रसन्नः इन्द्रः 'वरं वृणीष्व किञ्चित्' इत्यवदत्। प्रतर्दनस्तु 'मह्यं यत् हिततमं भवेत्, तत् त्वमेव देहि' इत्यवदत्। तेन पुनः प्रसन्नः इन्द्रः 'तर्हि मामेव 'अमृतम्' इत्युपास्स्व' इत्यब्रवीत् (कौ. 3-1)। इन्द्रः आत्मानममृतं कथं वदेत्। परमात्मा एक एव किलामृतः, 'अन्तर्याम्यमृतः' इति श्रवणात् इति संशयः। परमात्मनः सर्वशरीरित्वात्, 'अहम्' इति प्रत्यवमर्शनस्य परमात्मनि पर्यवसानात्, 'माम्' इति स्वान्तर्यामिणं परमात्मानमेव निर्दिश्य तथावददिन्द्रः। एतादृशदर्शस्य 'शास्त्रदृष्टिः' इति व्यपदेशः। पामराणाम् अहम् इत्यनुभवः शरीरविषयकः। शरीरातिरिक्तात्मज्ञानिनां तु 'अहम्' इति निर्देशः शरीरान्तर्वर्त्तिजीवविषयकः। जीवान्तर्यामिपरमात्मज्ञानवतां तु 'अहम्' इति निर्देशः स्वात्मनोऽपि परमात्मशरीरत्वेन स्वान्तर्वर्तिपरमात्मविषयक इत्यर्थः। प्रत्यक्त्वानुभवस्य परमात्मैव पर्यवसानभूमिरिति **भूमाधिकरणे** (श्री.भा.1-3-8) प्रतिपादितम्। अतः चिदचिद्वाचिनः सर्वेऽपि शब्दाः ज्ञानिनां दृष्ट्या परमात्मवाचका इत्ययमेव प्रातर्दनन्यायः। स च उत्तरमीमांसायां (ब्र.सू.1-1-31) प्रतिपादितः। अतश्चेन्द्रः 'मामुपास्व' इति स्वशरीरकपरमात्मोपासनमेवोपादिशदित्यर्थः॥

एवञ्च यत्र योगव्युत्पत्या परमात्मप्रतिपादने विरुद्धं लिङ्गं न दृश्यते, तत्र **ऐन्द्रीन्यायः**। तत्र प्रतीयमानं अहिंसकत्वादि इन्द्रे, गार्हपत्ये च समानम्। अतः इन्द्रः तत्र गार्हपत्याग्निः। यत्र तु परमात्मपरत्वे विरुद्धं लिङ्गमुपलभ्यते, तत्र तत्तच्छरीरकपरमात्माभिधानं तैस्तैश्शब्दैरिति **प्रातर्दनन्यायः**। कौषितकीब्राह्मणगतायां प्रतर्दनविद्यायां त्वाष्ट्रहननादीनाम् इन्द्र.साधारणलिङ्गानां दर्शनेन, इन्द्रपदं न साक्षात्परमात्मवाचकम् किन्तु इन्द्रशरीरकपरमात्मवाचकम्। **'प्रातर्दनादि'** इत्यादिपदेन विभवावतारा ग्राह्याः। वसुदेवसूनुस्सन् श्रीकृष्णः 'इमं विवस्वते योगं प्रोक्तवानहम्' (गी.4-1) इति खलु वदति। अत एव किलार्जुनः पृच्छति— 'अवरं भवतो जन्म परं जन्म विवस्वतः। कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति'॥ इति। अत्र पूर्वश्लोके 'अहम्' इति निर्देशः दृश्यमानशरीरविशिष्टपरः। अत एतादृशापरिपक्वबुद्धिमूलकशङ्काभिः शास्त्रोल्लङ्घनं प्रत्यवायावहमेव भवेत्। किं बहुना! परमैकान्तिनामादर्शमूलपुरुषः प्रपन्नजनकूटस्थः श्रीशठकोपसूरिः 'मुनिये! नान्मुगने! मुक्कण्णप्प!' इति पदैः परमात्मानमाह्वयति किल! मुनिः=नारायणः, नान्मुगः=चतुर्मुखः, मुक्कण्णप्पः=त्रिनेत्रः। यद्यपि तानि पदानि उक्तन्यायेन तत्तदन्तर्यामिपराणि व्याख्यातानि, तथापि किमर्थमयं क्लेशः। तानि पदानि वर्जितुं शक्यानि किल। अथापि कुतः प्रोक्तानि? ते तु महाज्ञानिनः एतानि पदानि परमात्मपर्यवसितानीति स्पष्टं जानन्ति। वयं किलाज्ञतमाः कथं देवतान्तरवाचीनि पदान्युच्चारयेम? इति चेत्, सत्यम्; अज्ञतमत्वादेवात्यन्तजागरूकैर्भवितव्यम्, न स्वैरैरिति असकृद्वक्तव्यम्। 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ'(गी.17-24) इति खल्वाह भगवान्। शास्त्रं खलु परमं चक्षुर्विवेकिनाम्। तस्मादाज्ञानोदयं शास्त्रमनुवर्तितव्यमेव॥

यत्तूक्तं ब्राह्मण्यापेक्षया वैष्णवत्वं श्रेष्ठमित्यादि; तत्तु तथैव। परन्तु ब्राह्मण्यं हि द्विविधम्—मुख्यम्, गौणञ्च। मुख्यं तु जन्मकृतम्, गौणं तु गुणकृतम्। अनयोर्मध्ये गौणं ब्राह्मण्यमेव मुख्यापेक्षया=

केवलजन्मकृतब्राह्मण्यापेक्षया श्रेष्ठम् । मुख्यं ब्राह्मण्यमपि गौणब्राह्मण्यप्राप्त्यर्थमेव । वैष्णवत्वं तु केवलं गौणमेव, न तु जन्मसिद्धं मुख्यं वैष्णवत्वमस्ति । वैष्णवदीक्षाविहीनस्य वैष्णवत्वं तु नास्त्येव । ब्राह्मणस्य पुत्रः ब्राह्मण इत्येव शास्त्रम् । उपनयनसंस्कारेण गौणब्राह्मण्यप्राप्त्यर्थसाधनानुष्ठानार्हता तस्य भवति । अतस्तस्य द्वितीयजन्मत्वेन, द्विजपदेन च व्यवहारः । अतो द्विजत्वं स्वतपसैव लभ्यम् । न तु दीक्षादि-कर्मलभ्यम् । उपनयनसंस्कारः न वैष्णवदीक्षातुल्यः । अब्राह्मणानामपि हि वैष्णवदीक्षायामस्त्यधिकारः । उपनयनसंस्कारस्तु नास्त्यब्राह्मणानाम् ॥

ननु! छान्दोग्योपनिषदि **सत्यकाम**जाबालोपाख्याने अब्राह्मणस्यापि जाबालस्य गौतमेनोपनयनसंस्कारः कृत इति श्रूयते । अतोऽब्राह्मणानामप्यासीदुपनयनसंस्कार इति वैष्णवदीक्षातुल्यमेवोपनयनमपीति चेत्, नैवम्—जाबालस्य ब्राह्मणजन्यत्वरूपं मुख्यं ब्राह्मण्यमासीदिति ज्ञात्वैव **गौतमेन** स उपनीत इत्येव तत्र श्रूयते 'नैतदब्राह्मणो वक्तुमर्हति'(छां.4-4-5) इति । मात्रा जाबाल्या पूर्वं तथा नोक्तं किलेति चेत् ; सत्यम् । सा तु न ज्ञातवती । गुरुस्तु ज्ञातुं शक्तोऽभूत् । तदानीन्तनसमाजपद्धत्यादिविषये गुरूणां दिव्याध्यात्मशक्तिविषये च बहु वक्तव्यम् । परन्त्वप्रकृतमत्र । अब्राह्मण उपनीत इति तु सत्यदूरम् ॥

नन्वथापि महाभारते प्रसिद्धे **यक्षप्रश्ने** 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः ।' (वन.)इति स्पष्टं शूद्राणामपि कर्मणा द्विजत्वमुच्यते किलेति चेत्; तत्र प्रश्नस्य गौणब्राह्मण्यविषयकत्वेन, उत्तरस्यापि तद्विषयकत्वेन विरोधाभावात् । न च 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' (गी.4-13) इति गुणकर्मानुरोधेनैव चातुर्वर्ण्याभिधानात्, जन्मना ब्राह्मण्यं कथं भवेदिति वाच्यम्, तत्र गुणपदस्य सत्त्वादिगुण-परत्वेन तेषामतीन्द्रियत्वेन सर्वज्ञपरमात्मन एव तद्ज्ञानसंभवात् । सत्त्वगुणप्रधानो ब्राह्मणः, सत्त्वमिश्ररजो-गुणप्रधानो क्षत्रियः, तमोमिश्ररजोगुणप्रधानः वैश्यः, तमोगुणप्रधानो शूद्रः इति व्यवस्था च वर्णिता । अन्यथा जातिसाङ्कर्यं वर्णयितुं कथं शक्यम्? न च वर्णसाङ्कर्यमेव विवक्षितम्, न तु जातिसाङ्कर्यमिति शङ्क्यम्; 'उत्साद्यन्ते जातिधर्माः' (गी.1-43) इति जातिधर्मस्यैव तत्राभिधानात् । न च 'वर्णाश्रमाः' इत्येवाभिधानात् ब्राह्मण्यादिकं वर्ण एव, न तु जातिरिति वाच्यम्; ब्राह्मण्यस्य सृष्टेः परमविकासरूपत्वेन जातिरूपब्राह्मण्यस्यापि सृष्टिविज्ञानाधीनत्वेन निरसितुमशक्यत्वात् । अतः वर्णरूपं जातिरूपं चेति द्विविधं ब्राह्मण्यम् । तत्र जातिरूपब्राह्मण्यपेक्षया वर्णरूपं ब्राह्मण्यमेव श्रेष्ठम् ॥

एवं जातिरूपब्राह्मण्यापेक्षया वैष्णवत्वं श्रेष्ठम्, यतः वैष्णवत्वं गुणकृतमेकविधमेव; न तु जन्मकृतं वैष्णवत्वं किञ्चिदस्ति । कुत इति चेत्, वैष्णवत्वं हि मतप्रयुक्तम् । मतिविषयो हि 'मतम्' इत्युच्यते । यः विष्णुमेव सर्वोत्तमं मन्यते स हि वैष्णवः वैष्णवदीक्षार्हः । नैवं ब्राह्मण्यं स्वेच्छया येन केनापि संपादयितुं शक्यम् । यतः ब्राह्मण्यं प्रकृतेर्विकासस्य फलम् ; ब्रह्मदर्शनप्रयोज्यम् । वैष्णवत्वं तु बुद्धेर्विकासस्य फलम् । अतः वैष्णवत्वस्य स्थानं बुद्धिः, ब्राह्मण्यस्य स्थानं तु प्रकृतिः, प्रकृतिसंसृष्टश्चेतनो वा । बुद्धेः परिवर्तनं शक्यम्, न तु प्रकृतेः, तस्याव्यक्तत्वात् । अधिकं त्वद्रव्यसरे (श्ले..118) भविष्यति ॥

**सारतस्तु**—वैष्णवत्वमाधिदैविकक्षेत्रसंबन्धि । ब्राह्मण्यं तु आध्यात्मिकक्षेत्रसंबन्धि । आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकमिति क्षेत्रं त्रेधा विभक्तम्, उत्तरोत्तरविकासरूपञ्च । सर्वस्यापि पर्यवसानमाध्यात्मिक एव । अत एव शुद्धं वैष्णवत्वमपि आध्यात्मिकविकासस्य पूर्वावस्थारूपम् । सर्वमिदं केवलसांकेतिकं यदा जातम्, अत एवेतोऽप्यधिकं दुर्ज्ञेयमेव मानवानामद्य ॥

समीकरोतु सकलं धर्मदेवो जगद्गुरुः । सर्वलोकहितायाद्य सर्वभूतसुखाय च ॥

ननु **वैखानसानां** वैष्णवत्वमपि जन्मकृतमुच्यते; तत्कथमिति चेत्; अत्रेदमवधेयम्—'यद्यस्मादुद्भवति, तत् तत्रैव तिष्ठेत, अन्ते तत्रैव लीयेत' इति सृष्टेर्नियमः । यथा—मृद उत्पन्नो घटः मृद्येव तिष्ठति, अन्ते मृद्येव लीयते । अतः मृदेव घटस्योपादानमुच्यते । एवम् 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' (तै.भृ.1) इति जगत्सर्वं ब्रह्मणः सकाशादुत्पन्नम्, तत्रैव स्थितम्, अन्ते तत्रैव लीनं च भवति । एवं जन्मस्थिति-लयाधारत्वमेवोपादानत्वमुच्यते । एतादृशं जगदुपादानभूतं वस्त्वेव ब्रह्मेत्युच्यते । एवं तत्तत्कार्योप-योगिसंकल्पाश्रयः निमित्तकारणमुच्यते । यथा मृदः घटरूपेण परिणामोपयोगिसंकल्पवान् कुलालः घटस्य निमित्तकारणमुच्यते । एतादृशजगन्निमित्तोपादानभूताद्ब्रह्मणस्सकाशादेव बीजाद्वृक्ष इवेदं जगदाविर्भवति । बीजात् अंकुरादिक्रमेण विकासस्यावधिः पुनर्वृक्षे फले बीजमेव । एवं 'बीजाद्बीजम्' एकं चक्रं परिवर्तितं भवति । ब्रह्मणस्सकाशादाविर्भूता जीवा अपि एवं 'प्रजायन्ते तत्र चैवापियन्ति' (मु.2-1-1) इत्युक्तपूर्णलयस्याव्यवहितपूर्वावस्था जीवस्य 'ब्राह्मण्यम्' उच्यते । अत एव 'ब्रह्म ब्राह्मण आत्मना' (तै.ब्रा.) इति ब्रह्मब्राह्मणयोः ऐक्यमुच्यते । नात्र स्वरूपैक्यं भवितुमर्हति, उभयोः प्रत्येकं निर्देशात्; किन्तु साधर्म्यप्रयुक्तमैक्यम् । ब्राह्मणः ब्रह्मणः प्रतिनिधिरित्यर्थः। इयमेवावस्था ब्रह्मर्षित्वावस्था, सृष्टेर्विकासेऽन्तिमावस्था । तत्राप्यवान्तरविकासास्सन्त्येव । ब्राह्मणब्राह्मणः, ब्राह्मणक्षत्रिय इत्यादिरूपेण । एतादृश-ब्राह्मण्यप्राप्तिरेव मानवजन्मनः परममुद्देश्यम् ॥

'उद्धरेदात्मनात्मानम्' (गी.6-5) इत्युक्तरीत्या साधनीयं ब्राह्मण्यं तपसा प्राप्तुं यदा स्वयं न शक्नोति जीवः, तदा आत्मनः कक्ष्यातोऽवरुह्य देवतानुग्रहेण तत्स्थानं प्राप्तव्यं भवति । देवतासु श्रीविष्णुरेवैतेषामनुग्राहकः। अत एव श्रीविष्णोरवतारं श्रीकृष्णम् **'ब्रह्मण्यदेवः'** इति महाभारतं श्रीभागवतं च बहुधा वर्णयति । 'ब्रह्मण्यो देवकीपुत्रः' (नारा.अ.4) इति श्रुतिरपि । ननु तर्हि परमेश्वरपुत्रस्य 'सुब्रह्मण्यः' इति निर्देशात् स एव श्रीकृष्णादपि श्रेष्ठः स्यादिति चेत्, 'सुब्रह्मण्याह्वानम्' इति श्रौतप्रक्रिया स्मर्यताम् । विचारयाम इदं सर्वं समयान्तरे । किं बहुना! **श्रीशङ्कराचार्या** अपि 'योगिनामपि सर्वेषाम्' (गी.6-47) इत्यत्र, 'रुद्राद्युपासकापेक्षया श्रीविष्णूपासक एव श्रेष्ठः' इति भाषन्ते स्म । गीतायां ईश्वरपदम् 'ईशनशीलो नारायणाख्यः' इत्येव व्याचख्युः । अत एव मोक्षाश्रमिभिस्सर्वैरपि नारायणस्मरणमेव कर्तव्यमभिधीयते । अतः आधिदैविककक्ष्यायां वैष्णवत्वमेव परा काष्ठा । अतश्चाधिदैविकमार्गस्यादिमो मार्गो वैखानसमार्गः ।

[सात्त्विकत्यागस्वरूपम्]

**106. त्यागत्रैविध्यमुक्त्वा स्वमतमिह जगौ सात्त्विकं त्यागमीशः**
**तस्मात् वणाश्रमादित्यजनमपदृशां तामसं मोहमूलम्।**

तस्य श्रौततत्वादितरैस्तदाश्रयणमशक्यमिति दृष्ट्वैवानन्तरं पाञ्चरात्रतन्त्रमवतीर्णम्। आध्यात्मिककक्ष्यायां तु ब्राह्मण्यमेव परा काष्ठा। विस्तरस्तु ईश्वरसरे ॥

अतः गुणकृतब्राह्मण्यस्य सृष्टेर्विकासरूपत्वात् जन्मसिद्धमपि ब्राह्मण्यं भवितुमर्हति। वैष्णवत्वं तु मतिकृतमिति, तत्रैव समाप्त्या,सृष्टौ तस्यान्वयो न भवेत्। एवं च तादृशं वैष्णवत्वं जीवगतमेव भवेत्, न त्वात्मगतम्, आत्मनः बुद्ध्यतीतत्वात्। यद्यपि ब्राह्मण्यमपि तादृशमेव जन्मकृतम्। आत्मनि जातेरभावात्। अथापि वर्णरूपं ब्राह्मण्यं त्वात्मन एव, तस्य विकासरूपत्वात्। धर्मतो वा स्वरूपतो वात्मनो विकासात्। अत एव 'ब्रह्म ब्राह्मण आत्मना' इत्युक्तिः। अतः ब्राह्मण्यवैष्णवत्वयोः स्वरूपं यथावदवगन्तव्यम्। एतेनैव शैवैकदेशिनः केऽपि पाशुपतागमप्रामाण्यवादिनोऽपि दत्तोत्तराः। तत्त्वभूमौ विष्णु पदस्थाने 'शिव'पदयोजनमेवैषां विशेषः। अधिकं प्रकरणान्तरे द्रष्टव्यम्॥ ३५ ॥

कर्मत्यागविषये शिक्षणीयं परमं तत्त्वं विशदयति—**त्यागत्रैविध्यमित्यादिना। ईशः**=भगवान् धर्मसंस्थापनायावतीर्णः **त्यागत्रैविध्यम्**=त्यागेषु सात्त्विकराजसतामसभेदेन त्रिविधताम् **उक्त्वा इह**= तेषु त्रिषु **सात्त्विकं त्यागम् स्वमतम्**=स्वसंमतम् **जगौ**=गीतवान्। 'भगवद्गीता' इति खलु ग्रन्थनाम। अतः 'जगौ' इत्युक्तम्। गानस्य नादमूलत्वात् मानवसंस्कृतौ उत्तमकाष्ठारूपत्वात् सहजस्थितावतीर्णत्वात् 'गीता' इति व्यपदेशः। तत्र 'मे पार्थ निश्चितं मतमुत्तमम्' (गी.18-6) इत्यत्र 'मे मतम्' इत्यभिधानात् अत्रापि 'स्वमतम्' इत्युक्तिः। 'कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन। सङ्गं त्यक्त्वा फलं चैव स त्यागःसात्त्विको मतः ॥'(गी.18-9) इति कर्तृत्वाभिमानस्य फले आसक्तेश्च त्यागः 'सात्त्विकत्याग' इत्युक्तम्॥

**तस्मात्**=त्यागशब्दार्थस्यैतादृशत्वात् **वर्णाश्रमादित्यजनम् अपदृशाम्**=अपगतसम्यग्दर्शनानाम् **मोहमूलम्**=विवेकराहित्यमूलकम्, अत एव **तामसं** मन्तव्यम् 'मोहात् तस्य परित्यागः तामसः परिकिर्तितः।' (गी.18-7) इत्यभिधानात्। मानवेन शास्त्रविहितं सर्वं एकस्मिन् जन्मनि पूर्णतोऽनुष्ठातुं शक्यं वा? इति प्रश्ने, अन्योऽयं विषयः। अशक्तौ तु क्षमेतैव भगवान्॥ 'अपदृशाम्' 'मोहात्' पदाभ्यां बुद्धिदोषो वर्जनीय इत्यर्थः॥

**सारतो यदि वक्तव्यम्**—'अस्माभिः कर्मणां त्यागः कदापि न कर्तव्यः, किन्तु कर्मभिः अस्मत्त्यागः कर्तव्यः' इत्येव परमं रहस्यम्। 'कर्मभिरस्मत्त्यागः कथम्?' इति चेत्; 'यावत्पर्यन्तं अस्यार्थो न ज्ञायते; तावत्पर्यन्तं कर्म कर्तव्यम्, न त्याज्यम्' इत्येवान्तिममुत्तरम्। अथवानुपदमीक्ष्यताम्॥

**योगारूढस्य कर्मच्यवनमपि तदा सह्यमङ्गयर्थवाक्यैः**
**योगं त्वत्याश्रमिभ्यः परममिति वचो वक्ति मोक्षाश्रमेण ॥ ३६ ॥**

अत एव **योगारूढस्य**=योगं आरूढः=समाधौ स्थितः, समाधिकालिक इति यावत्। तादृशस्य तु, **तदा**=तादृशसमाधिकाले **कर्मच्यवनमपि**=कर्मणां च्युतिरपि **अङ्ग्यर्थवाक्यैः**=कर्मणामङ्गिभूत-समाधिशेषत्वप्रतिपादकैर्वाक्यैः **सह्यम्**=अङ्गीकार्यम्, न तत्र विरोधः आपादयितुं शक्यः। तदा अङ्गानां च्यवनम्, न तु त्यागः। 'नास्माभिः कर्म त्याज्यम्, किन्तु, कर्मभिरेव वयं त्याज्याः' इत्यनुपदमुक्तस्य इदमेकं निदर्शनमवगन्तव्यम्॥

**वस्तुतस्तु**—समाधिर्हि बाह्यप्रज्ञाशून्यावस्था, शरीरविस्मरणावस्था। अतस्तदानीं कर्माण्येवैनं त्यजन्ति, न त्वयं कर्म त्यजति, बाह्यप्रज्ञाया अभावात्। सकृत् समाधेस्सिद्धावपि, स्वयं स सर्वस्मिन् उत्तरकाले अनुवर्तेतेति न निर्बन्धः। ब्राह्यप्रज्ञावत एव कर्माचरणप्रसक्तेः। तथा च प्रकृते, यतः स्वतः बहिःप्रवणा प्रकृतिः, योगिनं बहिर्मुखमेव कुर्यात्। समाधिकालिकदिव्यशक्तेर्धारणसामर्थ्यं हि न प्रकृतेरिति तद्विदः। पापानां बहुविधत्वात्, एकवारसमाधिसिद्धिमात्रेण सर्वकर्मक्षयासंभवात्, तथाऽदर्शनाच्च। अतः पुनःपुनः चित्तशुद्ध्यर्थं भगवदर्पणबुद्ध्या कर्माचरणमावश्यकमेवेत्यावृत्त्यधिकरणसिद्धम्। अतः कर्मणां विविदिषासाधनत्वेऽपि पुनःपुनरुत्तरकार्यार्थं कर्माचरणमनिवार्यम्। तस्मात् 'मोहात्तस्य परित्यागस्तामसः परिकीर्तितः' इति सम्यगुक्तम्॥

ननु ब्रह्मविद्यायां प्राप्तायां पुनः तत्क्षयासंभवात्, चित्ताशुद्धेरप्रसक्त्या चित्तशुद्ध्यर्थकर्मानुष्ठानस्य कथमावश्यकता? इति चेत्, हन्त! बालिशस्त्वम्, अत एवं मन्यसे। जडभरतोपाख्यानादिकमपि न श्रुतम्। विद्याया आदेहपातमनुवृत्तेरावश्यकता किमर्थमभिहितेति च न जानासि। मायायाः वैभवमपि न जानासि। तस्याः प्रतिक्षणं संभावितत्वात्, योगाच्च्यवनस्य संभावितत्वेन, अन्ततः व्युत्थानकाले. यथावकाशं परमात्मार्पण-बुद्ध्या कर्मानुष्ठानमावश्यकमेव। कर्माणि हि भगवदर्पणबुद्ध्या कृतानि पापक्षयार्थानि। विद्योत्पत्तेः पूर्वं कृतानि कर्माणि चित्तशुद्धिद्वारा विद्यानिष्पत्त्यर्थानि। तदनन्तरं कृतानि कर्माणि आदौ विद्यासिद्ध्यर्थानि विद्याङ्गानि। तदनन्तरं कृतानि कर्माणि विद्यारक्षणार्थानि, लोकशिक्षणार्थानि। अन्यथा लोकनाशजनितं पापं ज्ञानं नाशयेत्। **विद्योत्पत्तिः**=विद्यारंभः **विद्यासिद्धिः**=समाधिसिद्धिः **विद्यारक्षणम्**=आदेहपातं तस्या अनुवृत्तिः। अतः यावच्छरीरप्रज्ञं कर्माणि न त्याज्यान्येव। अथवा तादृशो ज्ञानी यत्र कुत्रचिदरण्यगुहां गच्छेत्, यतोऽनधिकारी लोकस्तं दृष्ट्वा भ्रश्येत्॥

ननु 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच' (श्वे.6-21) इति दर्शनात् आश्रमातीतानामपि ब्रह्मविद्याश्रवणात्, कथं वर्णाश्रमधर्माणां विद्याङ्गत्वम्? इत्यत्राह—**योगमित्यादि**। **'अत्याश्रमिभ्यः परमम्' इति वचस्तु, मोक्षाश्रमेण योगम्**=विद्यासंबन्धं **वक्ति,** न तु आश्रमातीतैः। तदा हि 'आश्रमं अतिक्रान्ताः अत्याश्रमाः, तेभ्यः—अत्याश्रमेभ्यः' इत्येव स्यात्, न तु 'अत्याश्रमिभ्यः' इति मतुप्प्रयोगः। अतः अतिशयितः

[सन्न्यासस्य विद्याङ्गत्वनिरासः]

107. तुर्यो निष्कृष्य मोक्षाश्रम इति कथितस्तेन नान्येषु विद्या
शान्त्यादिव्याहतेश्चेत्यसदिह गुणिनां सर्वतो मुक्त्यधीतेः ।

आश्रमः=अत्याश्रमः, उत्तमाश्रमः=संन्यासाश्रमः; तद्वन्तः संन्यासाश्रमिणः संन्यासिनः इत्येवार्थः न त्वाश्रम-रहिताः । अतः आर्षसंस्कृतौ वर्णाश्रमधर्माः कदापि न त्याज्याः ॥

**परं त्विदमत्रावधेयम्**—वर्णाश्रमधर्मा अपि न स्वयं पुरुषार्थभूताः, किन्तु ज्ञानाङ्गभूता एव । एवञ्च यस्यकस्यचिच्चेतनस्य जन्मान्तरानुष्ठितधर्मवशादेव जन्मसिद्धमेव ज्ञानं सहजमाविर्भवेचेत्, तस्य पुरुषस्य वर्णाश्रमानुसरणमन्तरापि केवलतपसैव परमात्मप्राप्तिः स्यादेव । परन्त्वस्यापवादरूपत्वात्, तन्न शास्त्रं भवितुमर्हति । श्रीभागवते 'नवाभवन्महाभागा मुनयो ह्यर्थशंसिनः । **श्रमणा** वातरशना आत्मविद्या-विशारदाः ॥' (11-2-20) इत्यादिकं पश्यतां तीव्रतपोमार्गस्तत्तदात्मसाक्षिकोऽपि कश्चित् भवितुमर्हति । वर्णाश्रमधर्ममार्गस्तदपेक्षया सुकरः स्यात् ॥ शास्त्रमुत्सर्गरूपमेव वक्तुं शक्यम् । अयमंशोऽस्याचार्यस्यापि संमत इति तद्ग्रन्थाध्ययनेन ज्ञायते ॥

अस्यैव मोक्षो नान्यस्येत्याख्यातुं को हि शक्नुयात् । ऋते तमेकं वरदं भगवन्तं दयानिधिम् ॥ ३६ ॥

'अत्याश्रमिभ्य' इति श्रुतेः संन्यासिनामेव ब्रह्मविद्यायामधिकारः, न तु गृहिणामिति वादं प्रतिक्षिपति—**तुर्य इत्यादिना** । **तुर्यः**=चतुर्थः संन्यासाश्रमः **निष्कृष्य**=इतराश्रमापेक्षया निष्कर्षपूर्वकम् **मोक्षाश्रम इति कथितः**=धर्मशास्त्रकारादिभिः । **तेन**=एवं संन्यासाश्रमस्यैव मोक्षाश्रम इति व्यवहारेण **अन्येषु**=इतरेष्वाश्रमेषु **विद्या**=ब्रह्मविद्या **न**=न भवति । अत्रौचित्यमप्याह—**शान्तीत्यादि** । **शान्त्यादीनाम्**=शमदमादिनां **व्याहतेश्च**=व्याघातसंभवाच्च ॥

**अयं भावः**—ब्रह्मचर्यम्, गार्हस्थ्यम्, वैखानसः, संन्यासश्चेत्याश्रमाश्चतुर्विधाः प्रसिद्धाः । तेषु चतुर्थस्य संन्यासाश्रमस्य 'मोक्षाश्रमः' इत्युत्तरकालेऽभिधानात्, सन्यासिनामेव मोक्षप्रसक्तिः, नेतराश्रमिणामिति केचन (विवरणकारादयः) मन्यन्ते । किञ्च इतराश्रमेषु कार्यबाहुल्यात् शमदमादीनां भङ्गेन मोक्षसाधनानुष्ठानमपि न संभवति । ब्रह्मचारिणः गुरुसेवाध्ययनादिकम्, गृहस्थस्य संसारभरणादिकम्, वैखानसस्य=वानप्रस्थस्य शिष्योपदेशादिकमिति त्रिषु कर्मणां बाहुल्यं स्पष्टम्' वेदान्तश्रवणस्य, ब्रह्मविद्यानुष्ठानस्य वा शान्त्याद्यावश्यकता तत्तत्कक्ष्यानुरोधेन वर्तत एव । अतः संन्यासिनामेव ब्रह्मविद्यायामधिकार इति ॥

तदेतन्निराकरोति—**इत्यसदिति** । तत्र हेतुमाह—**गुणिनामित्यादि** । **मुक्त्यधीतेः**=मुक्तेरभिधा-नात् । 'यस्यैते चत्वारिंशत्संस्काराः न चाष्टावात्मगुणाः न स ब्रह्मणस्सायुज्यं सलोकतां गच्छति, यस्य तु संस्काराणामेकदेशोऽपि अथ चाष्टावात्मगुणाः स ब्रह्मणः सायुज्यं सलोकतां गच्छति' (गौ.ध.सू.) इति स्पष्टमेवान्वयव्यतिरेकाभ्यामात्मगुणवत एव मुक्तेरभिधानात्, संन्यासिनामेव मोक्ष इति न युज्यते ॥

**यावज्जीवं द्वितीयाश्रमवति पुनरावृत्त्यभावोऽप्यधीतः**
**स्मृत्याद्यैश्चैवमुक्तं , भवति तु चरमे योग्यताधिक्यमात्रम् ॥ ३७ ॥**

**[आश्रमाङ्गानां कर्मणां विद्याङ्गत्वसमर्थनम्]**

108. **यन्नित्यं तन्न काम्यं, तदपि न तदिति स्थापिते कर्मभेदेऽ-**
**प्येकं विद्याश्रमाङ्गं भवति हि विनियुक्त्यन्तरेणोपपत्तेः ।**

किञ्च संन्यासोऽपि कश्चिदन्तर्धर्म एवेति 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥' (गी.6-1) इत्यत्र स्पष्टम् । अत एव– 'वेदशास्त्रार्थतत्त्वज्ञः यत्र कुत्राश्रमे वसन् । इहैव लोके तिष्ठन् सः ब्रह्मभूयाय कल्पते ॥' (म.स्मृ.12-102) 'न्यायार्जित-धनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥' (या.स्मृ.प्रा.275) इत्यादि च स्मर्यते । लोके संन्यासिनां श्रैष्ठ्यवर्णनादिकम् अन्तर्धर्मदृष्ट्यैव ॥

किञ्च **यावज्जीवं द्वितीयाश्रमवत्यपि पुनरावृत्त्यभावः**=अपुनरावृत्तिः=मुक्तिः **अधीतः**= श्रुतावुक्तः। 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य– स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ॥' (छां.8-15-1) इति श्रुतौ 'कुटुम्बे' इत्यनेन गृहस्थस्य अपुनरावृत्तिरुक्ता । न चेयं क्रममुक्तिपरा; विद्यासु सगुणनिर्गुणविभागाभावस्य प्रतिपादितत्वात्, प्रतिपादयिष्यमाणत्वाच्च । **स्मृत्यादेश्च**=उपर्युक्तमनुस्मृत्यादिभिश्च **एवम्**=सर्वाश्रमिणामविशेषेण मुक्तिरिति **उक्तम्**=कण्ठत एव कथितम् । तर्हि 'मोक्षाश्रम'पदं कथं केवलं संन्यासाश्रमे प्रयुज्यत इत्यत्राह– **भवतीत्यादि**। **तु**=किन्तु **चरमे**=चतुर्थे संन्यासाश्रमे **योग्यताधिक्यमात्रम्**=मुक्तिप्राप्त्यर्हतायाः आनुकूल्यं केवलं भवति । इतराश्रमेष्विव कर्तव्यान्तराभावात् ध्यानादिकरणे अवकाशाधिक्यादिप्रयुक्तसाधनानुकूलता वर्तत इत्यभिप्रायेण तस्य 'मोक्षाश्रमः' इति व्यवहार आगतः । अत एव श्रीशङ्कराचार्यस्य साक्षाच्छिष्यैः **सुरेश्वराचार्यैरपि** 'निश्शेषकर्मसंन्यासः सहकारित्वाय कल्पते ॥' (बृ.सं.वा.218) इत्ययमेव पक्षः पर्यपोषि । किं बहुना! महर्षिषु न कोऽपि संन्यास्यासीत् । अतः संन्यासाश्रमः अनन्तरकालिक एवेति विपश्चिदपश्चिमाः । अत एव तृतीयाध्यायचतुर्थपादारंभे जैमिनिबादरायणयोः संन्यासाश्रमविषये विवादो दृश्यते । (ब्र.सू.3-4-18,19) अधिकं श्रीभाष्यरूढार्थसंग्रहे । अतो ब्रह्मविद्या सर्वाश्रमसाधारणी ॥ ३७ ॥

वर्णाश्रमधर्माणां विद्याङ्गत्वासंभवमाशङ्क्य परिहरति–**यन्नित्यमित्यादिना**। **यत् कर्म नित्यम्**= अवश्यकर्तव्यम्, अकरणे च प्रत्यवायजनकम् **तत् कर्म काम्यं न**=काम्यं कर्म न भवितुमर्हति । एवं **तदपि**=काम्यमपि **तत् न**=नित्यं न भवति । काम्यं नाम, कामनायां सत्यां कर्तव्यं कर्म । यथा 'चित्रया यजेत पशुकामः' इत्यादि । यस्य पशूनामपेक्षा वर्तते, तादृशेन पशुकामनावतानुष्ठेयं कर्म चित्रायागः । इतरैः तत् नानुष्ठेयं । नित्यं तु फलापेक्षाया अभावेऽपि अवश्यम् कर्तव्यं कर्म । अकरणे च प्रत्यवायः, करणे च न किञ्चित् फलम् । यथा सन्ध्यावन्दनादि नित्यमित्युच्यते । एवञ्च नित्यानि कर्माणि फलरहितानि,

**तत्रानुष्ठानतन्त्रं विदुषि तु घटते कर्तृकालाद्यभेदात्**
**प्राजापत्यादिलोकार्थिनि च; तदितरोऽनर्थरोधाय तद्वान् ॥ ३८ ॥**

काम्यानि तु फलार्थमेव कर्तव्यानि। वर्णाश्रमधर्मास्तु नित्याः फलापेक्षां विनैव कर्तव्याः। एवं सति विद्याङ्गत्वेन वर्णाश्रमधर्माः कथमनुष्ठातुं शक्याः? इत्याक्षेपे—समाधानमाह—**इति**=इत्येवं **कर्मभेदे**= नित्यकाम्यरूपे कर्मणां परस्परं भेदे **स्थापितेऽपि**=शास्त्रेण एवं व्यवस्थायां कृतायामपि, **विनियुक्त्यन्तरेण**= विनियोगभेदेन, प्रयोगभेदेनेति यावत्, **उपपत्तेः**=एकस्यैव नित्यत्वविद्याङ्गत्वयोः विरोधाभावोपपत्तेः **एकम्**= एकमेव कर्म **विद्याश्रमाङ्गम्**=विद्यायाः आश्रमस्य च अङ्गम् **भवति हि**=भवितुमर्हतीति न्यायसिद्धमेव। न्यायप्रसिद्धिसूचनाय '**हि**' इति पदम्॥

**अयं भावः**—पूर्वं हि (31 श्लोके) 'धर्मैर्वर्णाश्रमाणाम्' इत्यादिना वर्णाश्रमधर्माणां ब्रह्मविद्याङ्गत्व-मुक्तम्। पुनः (33 श्लोके) तद्दृढीकृतम्। इदं न सङ्गच्छते। वर्णाश्रमधर्मा हि नित्याः। नित्यकर्मणां तु फलेच्छां विनानुष्ठेयत्वं सर्वसंमतम्। तेषां विद्याङ्गतयानुष्ठेयत्वं यद्युच्यते, 'अङ्गिनो यत् फलम्, तत् अङ्गस्यापि' इति न्यायेन नित्यकर्मणां मोक्षफलकत्वात् काम्यत्वमनिवार्यम्। एवञ्चैकमेव कर्म नित्यं काम्यं च कथं भवेत्? इत्याक्षेपः। समाधानं तु प्रयोगभेदात् तथा भवितुमर्हतीति। प्रयोगभेदः=अनुष्ठानभेदः। यथा अग्निहोत्रादिकं 'यावज्जीवमग्निहोत्रं जुहोति' इति विहितं नित्यम्। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति तत् काम्यं च भवति। यजमानेन क्रियमाणसंकल्पाद्यपेक्षया एकमेव द्विविधं भवेदिति, न विरोधः। एवं प्रयोगभेदेन एकस्यैवोभयरूपत्वप्रतिपादकन्यायः '**विनियोगपृथक्त्वन्यायः**' इत्युच्यते॥

नन्वस्तु एकस्यैव नित्यत्वम्, काम्यत्वं च प्रयोगभेदात्। परन्तु एकमेव नित्यत्वेनाश्रमाङ्गतयैक-वारम्, विद्याङ्गतयैकवारमिति द्विवारं कर्म कर्तव्यं वेति शङ्कामपाकरोति—**तत्रेत्यादिना**। **तत्र**=एता-दृशस्थले=विनियोगपृथक्त्वन्यायावतारे **विदुषि तु**=ब्रह्मविद्यानिष्ठविषये तु, एवं **प्राजापत्यादिलोकार्थिनि च**='प्राजापत्यं गृहस्थानाम्' इति वचनेन नित्यकर्मणां प्राजापत्यादिलोकावाप्तिः फलमिति मते, तद्विषये च **कर्तृकालाद्यभेदात्**=तत्कर्मकर्तुः कर्माचरणकालस्य च एकत्वात्। **अनुष्ठानतन्त्रम्**=**अनुष्ठानस्य**= तत्कर्मानुष्ठानस्य **तन्त्रम्**='**एका क्रिया द्व्यर्थकरी बभूव**' इति न्यायेन प्रयोजनद्वयोद्देशेन एकानुष्ठानम् **घटते**=युज्यते। ननु तर्हि, यस्य ब्रह्मविद्यापि नास्ति, प्राजापत्यलोकावाप्तीच्छापि नास्ति, तेन नित्यकर्मणां त्याग एव स्यादित्यत आह—**तदितर** इत्यादि। **तदितरः**=यस्य पूर्वोक्तविद्यापि नास्ति, प्राजापत्यलोका-वाप्तीच्छापि नास्ति, तादृशस्यापि अकरणे प्रत्यवायप्राप्त्या, तदप्राप्तये **तद्वान्**=नित्यकर्मवान् भवत्येव। तेनापि नित्यकर्म अनुष्ठेयमेव॥

**अयमर्थः**—विनियोगपृथक्त्वन्यायेन नित्यत्वकाम्यत्वयोः समावेशे, द्विवारमनुष्ठेयं भवति किलेति संशयः। यतः—'सर्वेभ्यो दर्शपूर्णमासौ यजेत' इत्यादौ दर्शपूर्णमासयागः अपेक्षितसकलफलोद्देशेनापि कर्तुं शक्यः। 'चित्रया यजेत पशुकामः' इति पशुफलकः चित्रायागो विधीयते। 'पुत्रकामः पुत्रेष्ट्या

**[नित्यकाम्यकर्मविभागः]**

**109. मन्दस्यापि प्रवृत्तिः किमपि फलमनुद्दिश्य कस्यापि न स्यात्**
**नित्येऽनर्थोपरोधप्रभृति फलमतः काम्यतैवेत्ति चेन्न ।**

यजेत' इति पुत्रफलार्थं पुत्रकामेष्टिर्विधीयते । एतादृशनानाफलोद्देशेन दर्शपूर्णमासोऽपि विहितः । एवं सति, फलद्वयोद्देशेन दर्शपूर्णमासयागः एकवारं कृतश्चेत्पर्याप्तं किलेति संदेहः । एकफलोद्देशेन एकवारमनुष्ठेयः, फलद्वयोद्देशेन एकवारमनुष्ठातुं न शक्यमिति पूर्वमीमांसकैर्निर्णीतम् । एवमत्रापि नित्यकर्मणां प्राजापत्यलोकावाप्तिः फलम् इति 'प्राजापत्यं गृहस्थानाम्' इत्यादौ श्रूयते । एवं विद्यार्थत्वमपि वेदान्तिभिरुच्यते । अतः दर्शपूर्णमासन्यायेन एकफलोद्देशेनैव एकवारमनुष्ठानप्राप्त्या, द्विवारमनुष्ठाने प्राप्ते, द्वयोरपि काम्यत्वात्, एकानुष्ठानेन काम्यफलद्वयं न भवेत् इति केवलकाम्यविषये स न्यायः उक्तः । प्रकृते न काम्यद्वयसमावेशः, किन्तु नित्यकाम्ययोः समावेशः । अतः उद्देशद्वयेन सकृदनुष्ठानरूपं तन्त्रेणानुष्ठानं युज्यते । **तन्त्रेणानुष्ठानं** नाम **'आम्राश्च सिक्ताः पितरश्च** तृप्ताः एका क्रिया द्व्यर्थकरीबभूव' इति न्यायेनानुष्ठानम् । पितृतर्पणं कर्तव्यम्, आम्रवृक्षस्य जलसेचनमपि कर्तव्यम् । तयोः पितृतर्पणमवश्यकर्तव्यम्, न त्यक्तुं शक्यम् । आम्रसेचनं तु ऐच्छिकम् । बुद्धिमान् मनुष्यः यदि आम्रवृक्षस्य मूले पितृतर्पणं कुर्यात्, तदा पितरश्च तृप्ताः, आम्राश्च सिक्ता भवन्ति । एवं एकयैव क्रियया उद्देश्यद्वयपूर्तौ, तन्त्रेणानुष्ठानमिति न्यायः ॥

**प्रकृते**—अग्निहोत्रादीनां कर्मणां नित्यत्वमप्यस्ति, मुमुक्षुदृष्ट्या मोक्षार्थत्वमप्यस्ति । अतः एकेनैवानुष्ठानेनोभयमपि सिद्ध्यति । नित्यकर्मणां फलमेव नास्ति, अथापि अनुष्ठेयानि, 'अननुष्ठाने' इति प्रश्नोऽपि न कर्तव्य इति प्राचीनाः । **'प्रयोजनमनुद्दिश्य** मन्दोऽपि न प्रवर्तते' इति न्यायात्; यदि फलमेव नास्ति प्रवृत्तिरेव न स्यादिति 'प्रजापतिलोकावाप्तिः फलम्' इति सांप्रदायिकाः । राजाज्ञावत् अनुल्लङ्घनीयं इति प्राचीनाः । राजाज्ञाया उल्लङ्घने राजदण्डो यथा अनिवार्यः, तद्वत् नित्यानामकरणे प्रत्यवायो भवेत् । तथा करणे तादृशप्रत्यवायःपरिहृतो भवति किल; अतः प्रत्यवायपरिहारः फलमिति नवीनाः । एतद्विचारः उत्तरश्लोकेऽप्यनुवर्तते । वस्तुतस्तु मोक्षकामना न कामनायामन्तर्भवति, तद्व्यतिरिक्तकाम एव दोषावहः । या कामना रागरूपतामापद्येत, सैव दोषावहेति तत्त्वम् । अधिकं तत्तत्समये व्यक्ती भविष्यति ॥ ३८ ॥

ननु नित्यकर्मणां फलमेव यदि नास्ति, तर्हि न कोऽप्यनुतिष्ठेदित्याक्षिप्य समाधत्ते—**मन्दस्येत्यादिना। किमपि फलम् अनुद्दिश्य**=लेशतोऽपि फलोद्देशं विना, **मन्दस्यापि**=जडस्यापि **कस्यापि**=कस्यचित् **प्रवृत्तिः न स्यात्**=कस्मिंश्चित् कर्मणि प्रवृत्तिः न भवेदेव । किमुत प्रेक्षावतः । अतः **नित्येऽपि** कर्मणि **अनर्थरोधप्रभृति**=अन्ततः अकरणे प्रत्यवायपरिहारः फलम् वक्तव्यमेव । एवञ्च नित्येष्वपि फलस्यावश्यकत्वे **काम्यतैव**=तस्य काम्यत्वमेव किल भवति । अतः नित्यकाम्यविभागः कथम्? इति

**नित्येष्टोऽनर्थरोधस्तदितरदतथा, किंच शिष्टो विधीना-**
**माज्ञानुज्ञाविभागः, सुगम इह निरुक्त्यैव नैमित्तिकांशः ॥ ३९ ॥**

प्रश्ने—समाधत्ते—**इति चेत्, न** इति। कथं तर्हि विभागः इत्यत्र—**नित्येत्यादि। नित्यम् अनर्थरोधः**= प्रत्यवायपरिहारः यत्र **इष्टः**, तत् **नित्यमित्युच्यते। तदितरत्**=तद्व्यतिरिक्तपशुपुत्रादिफलकं तु **अतथा**= तद्भिन्नं काम्यमुच्यते। काम्यानां तु कर्मणाम् इह लोक एव फलं पशुपुत्रादि विवक्षितम्। अनिष्टपरिहारः अन्यः, इष्टप्राप्तिश्चान्या। तत्र अनिष्टपरिहारः नित्यकर्मणां फलम्, इष्टप्राप्तिः काम्यकर्मणां फलम्॥

ननु पशूनामभावे क्षीरदध्याद्यभावात्कष्टमनुभवति नरः। चित्रयागानुष्ठानेन पशुप्राप्तौ, तादृश-कष्टपरिहारात्, काम्येष्वपि अनिष्टपरिहारो भवति। अतः काम्येऽप्यस्ति अनिष्टपरिहारः। एवं नित्येष्वपि अकरणे प्रत्यवायरूपानिष्टपरिहाररूपफलसत्त्वादस्त्येव काम्यत्वम्। अतः कथं विभागः? इत्यत्रोक्तम्—**नित्येति**। अनिष्टपरिहारस्येष्टत्वेऽपि=इष्टप्राप्त्यानिष्टपरिहारेऽपि; लोके अनिष्टमन्यत्, इष्टं चान्यदेव। तयोः अनिष्टपरिहारः सर्वेषामप्यपेक्षितः, इष्टप्राप्तिस्तु न तादृशरीत्या सर्वेष्टा भवेत्। कण्टकैर्विद्धस्य पुरुषस्य कण्टकपरिहारः अन्यः, चन्दनानुलेपनञ्चान्यदेव। द्वयं कथमेकं भवेत्? अतः अनर्थपरिहारः **नित्यं इष्टः**=नियमेन सर्वैरपेक्ष्यते। 'अनिष्टपरिहारः इष्टः' इत्यंशोऽन्यः तदतिरिक्ता इष्टप्राप्तिश्चान्येति सर्वात्मसाक्षिकम्॥

वस्तुतस्तु 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इतिन्यायः दुर्बलविषय एव। अध्यात्मं तु धीराणामेवं। 'नायमात्मा बलहीनेन लभ्यः' (मु.3-2-4) 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' (कठ.2-1-1) इत्यादिश्रुतेः। अत एव 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्व-कर्मणि॥' (गी.2-47) इत्यप्यगायत्। पूर्वार्धेनागामिफलेऽसंबन्ध उच्यते। उत्तरार्धेन फलकाले पूर्वकृत-स्वकर्मण एवेदं फलमित्याकारकभूतकालचिन्ता निषिध्यते। ततश्च भूतभविष्यच्चिन्ता धार्मिकस्य न श्रेयस्करी, किन्तु वर्तमानमात्रचिन्तायाः कर्तव्यत्वमुच्यते। अत एव ऋषयः 'अश्वस्तनाः' इत्युक्ताः। तथा च नित्यकर्मणाम् अकरणे प्रत्यवायमात्रम्, न तु करणे प्रत्यवायपरिहारः फलमित्येव रहस्यम्॥

एतदुपर्यपि विवदन्तं प्रत्याह—**किञ्चेत्यादि। किञ्च**=अपि च **विधीनाम्**=लिङ्, लोट्, लेट् तव्यप्रत्ययार्थानां मध्ये **आज्ञानुज्ञाविभागः=आज्ञा**=अवश्यकर्तव्या अकरणे चानिष्टावहा। **अनुज्ञा**=यदि तत् अपेक्षितम् तर्हि तत् कुरु, यदि तन्नापेक्षितम् तदा न निर्बन्धः इत्येवं रूपः विभागः **शिष्टः**= शास्त्रादिसंमतः। 'यथा अहरहस्सन्ध्यामुपासीत' इत्याज्ञा ; 'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यनुज्ञा। उभयोर्महदन्तरं स्थूलमतीनामपि सुगमम्॥

ननु नैमित्तिकं इति प्रत्येकविभागः अनुपपन्नः। प्रायश्चित्तादिरूपस्य नैमित्तिककर्मणः प्रत्यवायपरि-हारार्थत्वेन, नित्यस्यापि प्रत्यवायपरिहारार्थत्वात् नित्यात् को विशेषः? । यदि च अकरणे भविष्यतः पापस्याप्रसक्तिहेतुः नित्यम्, प्रायश्चित्तं तु कृतस्य पापस्य निवृत्त्यर्थं क्रियमाणं इति नित्याद्विशेषः इत्युच्यते;

[नैमित्तिककर्मस्वरूपम्]

**110. कर्तव्यं यन्निमित्ते सति तदुभयधा, पापशान्त्यर्थमेकं,**
**तत् स्यात् काम्येन तुल्यं, परमकरणतो दोषकृन्नित्यतुल्यम् ।**
**सत्यां कामश्रुतौ संवलितमपि भवेत् तद्बलादेतदेव**
**त्यागे च प्रत्यवायस्त्वनधिकृतिमुखस्तत्रतत्रावसेयः ॥ ४० ॥**

तदा पश्वाद्यर्थं क्रियमाणं चित्राद्यपि प्रायश्चित्तरूपं नैमित्तिकं स्यात् । पश्वादीनामभावे पापमेव खलु कारणम् । चित्राद्यनुष्ठाने पशुः लभ्यते चेत्, तत्र प्रतिबन्धकं पापं निवृत्तमित्येव खल्वर्थः, इत्यत्राह—सुलभ इत्यादि । **इह**=अतादृशकर्मसु **नैमित्तिकांशः**=नैमित्तिककर्मविभागः **निरुक्त्यैव**=नैमित्तिकपदनिर्वचनेनैव **सुगमः**=सुखेनावगन्तुम् शक्यः । विचार उत्तरश्लोकेऽप्यनुवर्तते ॥ ३९ ॥

ननु कथं सुगमः? निमित्ते सति यत् कर्तव्यम्, तत् 'नैमित्तकम्' इति खलु निर्वचनं वक्तव्यम् । नित्यं वा काम्यं वा सर्वं किञ्चिन्निमित्ते सत्येव क्रियते । ततश्च जीवननिमित्तकं ह्यग्निहोत्रादिकमपि नैमित्तिकं स्यात् । कामनानिमित्तकं चित्राद्यपि नैमित्तकं स्यात् । प्राप्तपापपरिहारादिनिमित्तकं प्रायश्चित्ताद्यपि नैमित्तिकमेव । अतः नैमित्तिकांशः कथं सुगमः? इत्यत्र, निष्कृष्य प्रदर्शयति—**कर्तव्यमित्यादि**। **यत्** कर्म **निमित्ते सति कर्तव्यम्**, तत् नैमित्तिकम् इत्येव यद्यपि निर्वचनम् । परन्तु अस्ति तत्र विशेषः । को विशेषः? **तत्**=नैमित्तिकम् कर्म **उभयधा** भवति । **एकं पापशान्त्यर्थम्** विहितम् । अभक्ष्यभक्षणादिप्रसक्तौ क्रियमाणं प्रायश्चितरूपम् ; पञ्चगव्यप्राशनादिकम् । प्राशने पापं निवर्तते, अप्राशने न निवर्तेत । अतः एतादृशं **तत्**=प्रायश्चित्तादिरूपं कर्म **काम्येन**=कामनाप्रयुक्तकर्मणा सह **तुल्यं**=समानम् । कामनाऽप्रयुक्तत्वेऽपि एतत् काम्यतुल्यमेव, न तु चित्रादिवत् काम्यम् । चित्रादौ नूतनपश्वादेः प्राप्तिर्भवति । प्रायश्चित्ते तु न नूतनस्य वस्तुनः प्राप्तिः, किन्तु जातस्य पापस्य निवृत्तिमात्रम् । **परम्**=अन्यच्च नैमित्तिकम् उपरागादिनिमित्तकपितृकार्यादिकम् **अकरणतो दोषकृत्**=अकरणे प्रत्यवायहेतुः, अत एव **नित्यतुल्यम्**=सन्ध्यावन्दनादितुल्यम् । तथा दर्शश्राद्धादि च । उपरागामावास्यादिरूपकालविशेषनिमित्ते सति कर्तव्यं तत् । अतः नैमित्तिकम् । अथापि न प्रायश्चित्ततुल्यम्, ऐच्छिकं वा, अनियतकालिकं वा न । कालविशेषेऽवश्यकर्तव्यत्वात् । तथा च नैमित्तिकपदं न केवलं यौगिकम्, किन्तु योगरूढमिति भावः । नैमित्तिकेष्वपि विशेषोऽस्तीत्याह—**सत्यामित्यादि**। एतदेव नैमित्तिकमेव किञ्चित्, **कामश्रुतौ सत्याम्**=पुत्रगतपूतत्वादिकामनाप्रतिपादकश्रुतौ सत्यां तु **तद्बलात्**=तादृशश्रुतिबलादेव **संवलितमपि भवेत्**=काम्यसंवलितत्वेऽपि नैमित्तिकत्वानपायात् **त्यागे च**=अकरणे तु, **प्रत्यवायस्तु**=पापं तु स्यात् । कीदृशं तत् पापमित्यत्र—**अनधिकृतिमुखः**=उत्तरसंस्कारानर्हतादिरूपः प्रत्यवायः **तत्र तत्र**=तत्तत्प्रकरणेषु **अवसेयः**=निर्णेतव्यः । 'यस्मिन् जात एतामिष्टिं निर्वपति पूत एव' इति जातेष्टेः फलं पुत्रगतपूतत्वादिकं श्रूयते । 'यस्मिन् जात' इति श्रवणात् पुत्रजनननिमित्तत्वात् नैमित्तिकत्वं जातेष्टेस्सिद्धम् । 'पूत एव' इति पुत्रगतपूतत्वरूपफल-

[प्रवृत्तनिवृत्तकर्मविभागः]

**111. निष्कामं चेन्निवृत्तं तदिह न घटते मुक्तिकामाधिकारात्**
**स्वप्रीतिस्पर्शहीना न च भवति परप्रीतिरिष्टेति चेन्न।**
**युक्ता यस्मान्निवृत्तिर्बहुभयशबलात् तन्निवृत्तं निवृत्तं**
**सूते यत्र प्रवृत्तिस्तदभिमतमहितं तत्प्रवृत्तं प्रवृत्तम्॥ ४१॥**

स्यापि श्रवणात् अंशतः काम्यत्वमपि सिद्धम्। अतः पुत्रगतपूतत्वकामनाभावे तदननुष्ठेयं स्यादिति पूर्वपक्षे, अनुष्ठेयमेव, पुत्रः पूतो यदि न स्यात्तर्हि नामकरणादिषूत्तरकर्मसु पुत्रोऽनधिकृतः स्यात्। अतस्तन्नित्यत्ववदेवानुष्ठेयमिति निर्णयः। अतो नैमित्तिकमपि दर्शश्राद्धादि यथा नित्यम्, तथा जातेष्ट्यादिकं नैमित्तिकं काम्यं च भवेदपि नित्यमेव। अतो नित्यनैमित्तिककाम्यविभागः सुसूक्ष्ममवसेयः॥ ४०॥

ननु मनुस्मृतौ 'प्रवृत्तं च निवृतं च द्विविधं कर्म वैदिकम्' (12-88) इत्येवं कर्मणां विभागः प्रादर्शि। अतः नित्यम्, नैमित्तिकम्, काम्यं चेति त्रैविध्यं कथं घटते? इत्याक्षिप्य समाधत्ते—**निष्काममित्यादिना**। **निष्कामम्**=कामनारहितं कर्म **निवृत्तं चेत्**=निवृत्तं कर्मेत्युच्यते चेत्, **तत्**=एतादृशं लक्षणम्, **इह**=विद्याङ्गभूते कर्मणि **मुक्तिकामाधिकारात्**=मोक्षकामनावत एवाधिकारात् **न घटते**=न युज्यते। लोके, **स्वप्रीतिस्पर्शहीना**=स्वसन्तोषलेशसंबन्धहीना **परस्य प्रीतिः**=परमात्मप्रीतिः **इष्टा न च भवति**=नैव भवति। मनुस्मृतौ प्रवृत्तं, निवृत्तं चेति कर्म द्विविधमित्युक्त्वा 'इह वामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते। निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते॥' (12-89) इति, ऐहिकफलं वृष्ट्यादिकमुद्दिश्य क्रियमाणं वा, आमुष्मिकस्वर्गाद्युद्देशेन क्रियमाणं वा, कर्म प्रवृत्तं कर्म। सकलकामनाः सन्त्यज्य क्रियमाणं कर्म निवृत्तमुच्यते इति विवरणमपि कृतम्। एवञ्च विद्योद्देशेन वा, क्रियमाणं कर्म काम्यमेव भवति। विद्या ह्यैहिकी, मोक्षश्चामुष्मिकी। एतदुभयोद्देशेन क्रियमाणं काम्यमेव हि भवति। भवद्भिस्तु नित्यकर्मणामेव विद्याङ्गत्वमुच्यते। एवं आत्मज्ञानपूर्वकं कामनामन्तरा केवलपरमात्मार्पणबुद्ध्या क्रियमाणं निवृत्तं कर्मेत्युक्तम्। एतदपि विरुद्धम्; परमात्मार्पणबुद्ध्या क्रियमाणमपि काम्यमेव हि भवति। परमात्मार्पणं नाम, परमात्मप्रीत्युद्देशकमित्यर्थः। न च परमात्मप्रीत्युद्देशेनैव कर्तव्यत्वस्याभिधानात्, तेन कर्तुः कामनाप्रयोजनाभावात् कथं काम्यत्वमिति वाच्यम्; 'परमात्मा प्रसन्नः स्वेष्टं ददाति' इत्युद्देशेनैव तथा करणात्। लेशतोऽपि स्वसन्तोषरहितपरप्रीत्युद्देशेन कर्मकरणस्य लोके कुत्राप्यसंभवात्। 'न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति' (बृ.4-4-5, 6-5-6) इति श्रुतिरपि। अतश्चेदमपि काम्यमेव। अतश्च सर्वेषामप्यन्तत आनुषङ्गिकतया वा स्वसन्तोष एव फलमिति काम्यत्वमेवेत्ययमपि विभागः नासङ्कीर्णः इति पूर्वपक्षाभिप्रायः॥

एतन्निराकरोति—**इति चेत्, नेति**। तर्हि कथं विभागः? मनुस्मृतेर्वा क आशयः इत्यत्राह—**युक्तेत्यादि**। **बहुभयशबलात्**=नानाविधभयदुःखादिमिश्रात् संसारात् **निवृत्तिः यस्मात्**=यादृशात् कर्मणः

**युक्ता, तत्**=तादृशं **निवृत्तम्**=संसारनिवृत्तिहेतुभूतं कर्म **'निवृत्तम्'**=मनुस्मृतौ 'निवृत्तं कर्म' इति **अभिमतम्**=संमतम् । **यत्र तु** कर्मणि प्रवृत्तिः **अहितम्=अनिष्टं** संसारभयं **सूते**=उत्पादयति इति अभिमतम् **तत्**=तादृशम् **प्रवृत्तम्**=प्रवृत्तिहेतुभूतं कर्म **'प्रवृत्तम्'**='प्रवृत्तं कर्म' इत्युच्यते ॥

**अयं भावः**—वैदिकं कर्म नित्यनैमित्तिककाम्यभेदेन त्रिविधमुक्तम् । तेषु नित्यकर्माण्येव विनियोग-पृथक्त्वन्यायेन द्विविधफलसाधनानि । ब्रह्मविद्यानिष्ठदृष्ट्या तु एकेनैव प्रयोगेण नित्यत्वं विद्याङ्गत्वं च भवतीति साधितं पूर्वम् । काम्यं तु कर्म कामनावतैव कर्तव्यम् । प्रायश्चित्तरूपं नैमित्तिकमपि पापशान्तिकामना-वतैव कर्तव्यम् । अत एवानयोः ब्रह्मविद्याङ्गत्वं नास्ति ॥

**केचित्तु**—केवलकाम्यकर्मणामपि कामनां परित्यज्य, विद्याङ्गत्वं वदन्ति । परन्तु काम्यकर्मसु कामनावत एवाधिकारात्, इतरस्य प्रसक्तिरेव न भवति । अन्यथा केवलप्रायश्चितकर्मणामपि फलत्यागेन विद्याङ्गत्वं स्यात् । अतः नित्यत्वसंवलितकाम्यकर्माण्येवाग्निहोत्रादीनि विद्याङ्गानि, नान्यानीति कर्मतत्त्वविदः॥

वैदिककर्मणामेवं विभागे सिद्धे, **मनुस्मृतौ** अन्यथा विभागो दृश्यते । प्रवृत्तम्, निवृत्तमिति कर्म द्विविधमिति । मनुस्मृतेः सर्वांश एव प्रामाण्यात्, कथं समन्वयः? इति प्रश्ने, मनुस्मृतेः केवलकर्मशास्त्रत्वाभावात्, संपूर्णधर्मशास्त्रत्वात्, अध्यात्मगर्भत्वात्, एवं समन्वयो वक्तव्यः—सर्वेषामपि शास्त्राणां मानवश्रेय एव परमं लक्ष्यम् । परिणामदृष्ट्या कर्मणां द्वय्येव गतिः—एका परमात्मप्राप्तिरूपश्रेयोलक्ष्या । अपरा ऐहिका-मुष्मिकरूपप्रेयोलक्ष्या । प्रथमा मुमुक्षूणाम्, द्वितीया बुभुक्षूणाम् । मुमुक्षूणामतिविरलत्वात्, वेदानां त्रिगुणाधि-कारिकत्वात्, केवलराजसतामसप्रकृतीनां मुमुक्षोत्पत्तेरसंभवात्, तेषामपि कृते तत्तत्फलसाधनानि वक्तव्यानि । अतः मानवान् द्वेधा विभज्य,व्यवस्था मनुस्मृतौ सारतः प्रादर्शि । मुमुक्षूणां भोगान्निवृत्तत्वात्, तेषां मार्गः 'निवृत्तिमार्गः' इत्युच्यते । इतरेषां भोगप्रवणत्वात्, तेषां मार्गः 'प्रवृत्तिमार्गः' इत्युच्यते । 'श्रेयश्च प्रेयश्च मनुष्यमेतः' (कठ.1-2-1) इत्यत्रायं विभागो द्रष्टव्यः । कामनैव मुमुक्षाप्रतिबन्धिका । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' (कठ.2-6-14) (बृह.6-4-7) इति श्रुतिरिममर्थं स्पष्टं वदति । अतश्च निवृत्तिमार्गनिष्ठैः कर्तव्यं कर्म 'निवृत्तम्' इत्युच्यते । प्रवृत्तिमार्गनिष्ठैः क्रियमाणं कर्म 'प्रवृत्तम्' इत्युच्यते । एवञ्च मनुस्मृतेः न कश्चन विरोधः ॥

अस्तु नामेदं सर्वम् । 'वेदानां त्रिगुणाधिकारिकत्वात्' इत्युक्तम् । किं तामसानामप्याश्रयो वेदः? पृच्छ गीताचार्यम् 'त्रैगुण्यविषया वेदाः' (गी.2-45) इति य उपदिदेश । आः! स्मृतम् । एवं वदन्नेवायम् 'निस्त्रैगुण्यो भव'(गी.2-45) 'नाहं वेदैः' (गी.11-53) इति वेदानां त्याज्यत्वमेवोपादिशदिति श्रावितोऽहम् त्रिगुणातीतानां कृते तु पाञ्चरात्रमेवोपादेयम्, यतः तदुक्तमार्ग एव सात्त्विकसेव्यः । अत एव तच्छास्त्रं सात्त्वतमुच्यते इत्यपि श्रावितः ॥ हन्त! केन वा प्रतारितस्त्वमेवम्? 'नाहम् प्रतारितः, प्रबोधितः॥' आः! असंभाष्यस्त्वं वेदनिन्दकः सताम् ॥ मास्त्वाक्रोशः । उत्तरमुच्यताम् ॥ क्षुद्रप्रज्ञैरपमार्गं प्रदर्शितस्त्वम् । 'वेदैश्च सर्वैरहमेव वेद्यः' (गी.15-15) इति कुतो न श्रावितस्त्वम्? पाञ्चरात्रसंग्रहरूपा गीतेति तत्त्वविदः।

शृणु हिततमं वाक्यम्। 'श्रुतिः अशेषजगद्धितानुशासनपरा' इत्याह भगवान् भाष्यकारः। एकमेवाधिकारिण-मुद्दिश्य न प्रवृत्तो वेदः, जगदेव तस्योद्देशभूतम्। जगच्च त्रिगुणात्मकम्। सात्त्विकाः, राजसाः, तामसाश्चेति त्रिविधाः नराः। तत्र 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः॥' (म.भा.मो.344-49)इति जननकालिकमधुसूदनकटाक्षविषया एव सात्त्विका भवेयुः, त एव च मुमुक्षवो भवन्ति। राजसास्तु अर्थकामपराः। तामसास्तु ततोऽपि मूर्खाः स्वशत्रुं मारयितुमपि न संकुचन्ति। जगति जाताः सर्वेऽपि नैकरूपाः स्युः। विभिन्नरूपाणां मानवानां कामना अपि भिन्ना एव स्युः। तर्हि तादृशकामनापूरणोपायः कः? इति प्रश्ने जाते, तस्य सृष्टिविज्ञानानुगुणमुत्तरं वक्तव्यम्। नो चेत्, ते उच्छृङ्खला भवेयुः। एतादृशानिवार्यपरिस्थितौ देवता एव शरणीकर्तव्याः। अत एव खलु गीतम् 'यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः। प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः॥'(गीता.17-8)इति। सृष्टेर्मूलं तत्त्वमपि, तेषां साधनाद्यनुगुणं सहकरोति। तदप्युक्तम् 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजा-म्यहम्॥' (गी.8-11) इति। अत एव वेदे श्येनाद्युपदेशोपीत्यन्यत्र विस्तरः। अन्ततो बृहदारण्यकोपनिषदोऽन्तिमः खण्डः पठ्यताम्। अतः सर्वविधानामपि जनानामपेक्षितानां कामानां सृष्ट्यनुगुणविज्ञानेनैव पूरणे, जनाः क्रमशः वर्धेरन्। अत्यन्ततामसाः सामान्यतामसा भवेयुः। एवं क्रमशः राजसाः. सात्त्विकाश्च भवेयुः। अन्ते गुणातीता अपि भवेयुः। तदप्युक्तम्—'मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते॥' (गी.14-26) इति। अतो वेदे विश्ववाङ्मये सर्वमुपदिश्यते॥

वेदस्य खलु गांभीर्यं सौन्दर्यं वा विशालताम्। को हि ज्ञातुं प्रभवति तमृते पुरुषोत्तमम्॥

एतादृशम् अतिविपुलं सृष्टिविज्ञानं ज्ञातुमशक्तानां कृत एवानन्तरं वैष्णवधर्मादयः तत्तत्काले आविर्भवन्ति। अतश्च वैदिको मार्गः सहजः, सृष्टितत्त्वानुगुणः सनातनश्च। इतरे तु धर्मास्तदा तदाऽऽविर्भवेयुः, तिरोभवेयुरित्यलमतिविस्तरेण॥

गुणातीतानां कृते पाञ्चरात्रमेवोपादेयम्, अत एव तत् सात्त्वतमुच्यत इत्यादिकं तु परस्परविरोधात्, गुणातीतानां कर्तव्यस्यैवाभावाच्च न प्रत्येकदूषणमपेक्षते। सत्यप्येवं वेदा अपि न स्वयं पुरुषार्थाः, तैर्मार्गदर्शन-मात्रम्। लब्धमार्गस्य तु कस्याञ्चित् कक्ष्यायां वेदा अपि त्याज्या एवेति आपस्तम्ब एवाह—'वेदानिममम् च लोकं परित्यज्यात्मानमन्विच्छेत्' (ध.सू.2-25-13) इति। नैतावता सा वेदनिन्दा। किन्तु 'त्रैगुण्यविषया वेदाः' इतिवद्भावनीयम्। गुणातीतावस्थैव परमलक्ष्यभूतेति 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥' (गी.14-26) इत्युक्तम्। परन्त्वेतत्साधनमपि त्रिगुणद्रव्यसाहाय्येनैवेत्यभिप्रायेणैव 'विद्यां चाविद्यां च' (ईश-11) इत्यादिनोक्तं न विस्मर्तव्यम्। प्रधानं लक्ष्यं कदापि न विस्मर्तव्यमित्यपि 'ततो भूय इव ते तमो य उ विद्यायां रताः' (ईश.9) इत्युक्तमपि न विस्मर्तव्यम्। एवं भक्तिप्रशंसार्थं 'नाहं वेदैः' (गी.11-53) इत्युक्तमिति स्पष्टं तत्रैव॥ 'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्।' (याज्ञ.1-8) इत्येव सर्वशास्त्रार्थसारं वचः॥ ४१॥

[मोक्षस्य सर्वार्हत्वसमर्थनम्]

**112. पुंभिः सिद्धाधिकारैः ऋतव इव निराकाङ्क्षभावं भजन्त्यः**
**प्रोक्तास्त्रैवर्णिकार्हाः श्रुतिनयवशतो यद्यपि ब्रह्मविद्याः ।**
**अस्तेयाद्यैः प्रपत्त्या परिचरणमुखैरप्यधीतैः स्वजातेः**
**सर्वेऽपि प्राप्नुयुस्तां परगतिमिति तु ब्राह्मगीतादिसिद्धम् ॥ ४२ ॥**

वैदिको मार्गः कियान् विपुलः सार्वजनीनश्चेति प्रदर्शयति—**पुंभिरित्यादिना** । **ब्रह्मविद्याः**= उपनिषदि विहिताः ब्रह्मप्राप्तिफलाः वैश्वानराद्याः, **ऋतवः इव**=पूर्वकाण्डविहितयज्ञादय इव, **श्रुतिनयवशतः**= 'स्वाध्यायोऽध्येतव्यः' इति श्रुतिसिद्धन्यायानुरोधेन **सिद्धाधिकारैः**=वेदसिद्धार्हतावद्भिः **निराकाङ्क्षभावम्**= कर्त्राकाङ्क्षानिवृत्तिम् **भजन्त्यः**=अनुभवन्त्यः **यद्यपि त्रैवर्णिकार्हाः प्रोक्ताः**=त्रैवर्णिकाधिकारिकाः विहिताः। **तु**=किन्तु, **अस्तेयाद्यैः**=अहिंसास्तेयब्रह्मचर्यादिरूपैः गुणाष्टकैः, **प्रपत्त्या**=भगवच्छरणागत्या, **स्वजातेः अधीतैः**=चतुर्थवर्णस्य विहितैः **परिचरणमुखैः**=परिचर्यादिभिः स्वस्ववर्णधर्मैः **सर्वेऽपि**=त्रैवर्णिकव्यतिरिक्ता जना अपि **तां परगतिम्**=त्रैवर्णिकैः प्राप्यामुत्तगतिमेव **प्राप्नुयुः इति ब्राह्मगीतादिसिद्धम्**= ब्राह्मपुराणभगवद्गीताभिः निश्चितम् ॥ 'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥' इति **ब्रह्मपुराण**वचनम् । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' (गी.8-46) 'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्राः तेऽपि यान्ति परां गतिम् ॥' (गी.9-24) इति गीतावचनम् ॥ मोक्षं प्राप्तुमर्हाः के? इति विचारः पूर्वमेव (27-28श्लोके) प्रवृत्तः । तत्र जीवकोटिषु सर्वेषामपि मोक्षार्हता अस्ति न वा? इति संशये, केषांचित्तु कदापि मोक्षार्हता नास्त्येवेति नित्यसंसारिपक्षः, तादृशनित्यसंसारिणो न सन्तीति स्वपक्षश्च प्रदर्शितः । अत्र तु, सर्वेषां मुक्तिपक्षेऽपि, ब्राह्मणक्षत्रियवैश्यानामेव मुक्तिः, शूद्रस्य तु तज्जन्मनि मुक्तिर्नास्ति; सुकृतवशात् त्रैवर्णिकजन्मप्राप्तावेव मुक्तिः इति पक्षः विमृश्यते—**पुंभिरित्यादिना** । 'त्रैवर्णिकानामेव मोक्षः' इति पक्षेऽपि, त्रैवर्णिकानां मोक्षार्हता समाना इति केचन मन्यन्ते । अन्ये तु केचन, ब्रह्मविद्यार्हता त्रयाणां समाना । ब्रह्मविद्यायाः पूर्तिस्तु ब्राह्मणजन्मन्येव । वैश्यक्षत्रिययोस्तु ब्राह्मणजन्मप्राप्त्यनन्तरमेव विद्यायाःपूर्त्या मुक्तिरिति मन्यन्ते ॥

**वस्तुतस्तु**— 'यथा सुदीप्तात्पावकाद्विष्फुलिङ्गाःसहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधास्सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥' (मुं.2-1-1) इति जीवानामाविर्भावतिरोभावौ वर्ण्येते । आविर्भावतिरोभावयोर्मध्यकाल एव स्थितिरित्युच्यते । आविर्भावः=अभिव्यक्तिः, तिरोभावः=स्वकारणे लयः । कस्यापि वस्तुनो निरन्वयविनाशो नास्तीति पूर्वमेव (जड.31)निरूपितम् । प्रलयो बहुविधः—नित्यनैमित्तिकप्राकृतात्यन्तिकादिभेदेन । 'यत्रैतत्पुरुषस्स्वपिति नाम, सता सौम्य तदा संपन्नो भवति, स्वमपीतो भवति,तस्मादेनं स्वपीत्याचक्षते' (छां.6-8-1)इति प्रतिदिनं सुषुप्तौ अयं जीवः परमात्मनि लीनो भवति, स एव नित्यप्रलयः। परन्तु स न संपूर्णो लयः, यतः प्रातः पुनःकर्मफलानुभवार्थं स उत्तिष्ठते । एवमेव चतुर्युगावसाने, मन्वन्तरावसाने, कल्पान्ते, चतुर्मुखायुरवसाने चेत्यादिरूपा बहुविधाः प्रलया भवन्ति । तेषु सर्वेष्वपि जीवस्य न

संपूर्णलयः, पुनरावृत्तिरूप एव प्रलयः। मुक्तिस्तु अपुनरावृत्तिरूपो लयः।'यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥' (मुं.3-2-8) 'अविभागेन दृष्टत्वात्' (ब्र.4-4-4) इतिश्रुतिसूत्रादिषु स्पष्टमिदम्। ब्रह्मांशरूपो जीवः स्वतः शुद्धचैतन्यरूपोऽपि, संसारावस्थायां भूतसूक्ष्मसंपरिष्वक्त एव अहंबुद्धिगोचरो भवति। आशापाशपरिष्वङ्गो यावान् दृढः, तावान् दृढो भवति संसारः। आशापाशाभिवर्धनमार्ग एव**प्रवृत्तिमार्गः**। एतत्प्रतिकोटितया आशापाशशिथिलीकरणायानुसरणीयो मार्ग एव**निवृत्तिमार्गः**। एतादृशनिवृत्तिमार्गसाधनेष्वभ्यर्हितो मार्गः 'ब्रह्मविद्या' इत्युच्यते॥

अयं च निवृत्तिमार्गः द्विविधः—अव्यक्तमार्गः, व्यक्तमार्गश्चेति गीतायां द्वादशाध्याये उच्यते। अव्यक्तमार्गः, निराकारमार्गः, आत्मोपासनामार्गः, ज्ञानमार्गः इति पर्यायाः। व्यक्तमार्गः, साकारमार्गः, भक्तिमार्गः इति च पर्यायाः। भक्तिमार्गस्य परा काष्ठैव प्रपत्तिः। सर्वेषां साधनानां साकारनिराकारमार्गयोरेवान्तर्भावोऽनिवार्यः। वर्णाश्रमधर्ममार्ग एवाव्यक्तमार्गः। केवलकर्तव्यबुद्ध्या स्वधर्मानुष्ठाने चित्ते शुद्धे, स्वयमेव तदन्तर्मुखं भवति। क्रमेण परमपुरुषार्थावाप्तिः। व्यक्तमार्गे तु—परमात्मार्पणबुद्ध्या कर्मणामनुष्ठाने जनः भक्तियोगार्हो भवेत्। चित्तशुद्धिमन्तरा परभक्तिवाच्यायाः मोक्षसाधनभक्तेरङ्कुरः हृदि कथं भवेत्? स्वधर्माचरणमन्तरा वा चित्तशुद्धिः कथं भवेत्? न च प्रार्थनयैव चित्तशुद्धिर्भवेदिति शङ्क्यम्; तादृशी दृढतरा प्रार्थना वा चित्तशुद्धिमन्तरा कथं भवेत्? 'अनेकजन्मसंसिद्धः ततो याति परां गतिम्' (गी.6-45) 'येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्। ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥' (गी.7-28) इत्यादाविदं स्पष्टम्। स्वधर्मपरधर्मव्यवस्था च न स्वेच्छया कर्तुं शक्यते। अतः वर्णाश्रमधर्म एव स्वधर्मः॥

यद्यपि कृतयुगे हंसनामकः एक एव वर्णः, आश्रमो वाऽऽसीदित्युच्यते (भाग. 11-17-10)। परन्तु तत्रैव 'चत्वारो जज्ञिरे वर्णाः'(भाग.11-5-2)इति चतुर्णां वर्णानामाश्रमाणां चोत्पत्तिरपि वर्ण्यते। कथमेकस्मिन्नेव ग्रन्थे परस्परविरुद्धयोरुपदेशः। आः! शोभते वैदिकानामिदम्। युष्मद्वेद एव परस्परविरुद्धाभिधाने प्रसिद्धः किल— 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति। अतो युक्तं भवतां परस्परविरुद्धभाषणम्। असंभाष्यस्त्वं वस्तुतः। हितमिदं तूच्यते तथापि। सृष्टेरारंभकाले कृतयुगे जीवानां सहजशुद्धत्वात्, नावश्यकता वर्णाश्रमविभागस्य स्यात्। तथापि सृष्टिः यावद्विपुला वर्धते, तावज्जनसंमर्दादिरवर्जनीयत्वात्, सृष्टिमूलं परित्यज्य जीवैर्बहुदूरमागतत्वाच्च, प्रकृतिसंसर्गनिबन्धनमालिन्यादिदोषाणामनिवार्यत्वाच्च अनन्तरं विभाग आवश्यको भवेदेव। अतः सृष्टिनियमानुरोधेन भगवतैव वर्णाश्रमव्यवस्था कृतेति 'चातुर्वर्ण्यं मया सृष्टम्'(गीता.4-13) इत्युच्यते। मनुष्याणां रोगपरिहारार्थं चिकित्सारंभकाले रोगावस्था भिषग्भिः प्रथमं, किं रोगः आरंभावस्थायां वर्तते, उत मध्यमावस्थायाम्, उतोत्कटावस्थायाम्? इत्येतन्निश्चयानन्तरमेव चिकित्सास्वरूपनिर्णयः कर्तव्यः। एवमेव भवरोगचिकित्सायामपि कक्ष्यानिर्णय आवश्यकः। एवं चिकित्सायामपि भेदः आवश्यकः। एवं पथ्यभेदोऽप्यावश्यकः। अतः भवरोगचिकित्सार्थं कृतो विभाग एव वर्णाश्रमधर्मविभागः। चिकित्साभेदपथ्यभेदवदेव धर्मविभागः, नियमविभागश्च। यथा वा उत्कटरोगी चिकित्सया क्रमशः क्षीणरोगो भवति, तथैव 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।' (गी.18-46) इत्युक्तरीत्या,

यस्य यत् कर्म अवश्यकर्तव्यत्वेन प्राप्तम्, तादृशकर्मण आचरणेनैव चेतनस्य परिपक्वता भवेत्। अन्यस्य हितार्थं भगवदर्थं वा सर्वं त्यजन् ब्राह्मणः, अन्तःप्राणान् त्यजन् क्षत्रियः, बहिःप्राणान् त्यजन् वैश्यः, शरीरश्रमं त्यजन् शूद्रश्चेति सर्वेऽपि क्रमशः मुच्येरन्॥

ननु एकस्य एकैकं धर्मं वदति वेदः। अयं पक्षपातः किलेति चेत्, तर्हि एकैकस्य एकैकमौषधं ददत् भिषक् पक्षपाती स्यात्। अतः सर्वेभ्यः सर्वरोगेभ्यः एकविधमेवौषधम् ददत् भिषगेवोत्तमः स्यादिति वक्तव्यम्॥ रोगाणां तारतम्यादिकं प्रत्यक्षदृष्टम्। अतः तत्र औषधमप्यनेकविधमावश्यकम्। नैवमत्रेति चेत्; किं लोके मनुजास्सर्वेऽप्येकरूपा एव दृश्यन्ते? एवं विविधप्रकृतीनामेक एव मार्गः कथं भवेत्? परिश्रममन्तरा सुखं कुतः स्यात्? शरीरपरिश्रमः आरंभे, अनन्तरं आर्थिकपरिश्रमः, अनन्तरं मानसपरिश्रमः, अनन्तरं आत्मपरिश्रमः=तपोरूपः। 'न ऋते श्रान्तस्य सख्याय देवाः'(ऋ.सं.4-33-11)। केवलसुखासक्त-स्याहङ्कारादिमूढस्य देवास्सहायका न भवन्तीत्यर्थः। इदमेव वर्णाश्रमधर्ममूलम्। एवञ्च कृतयुगे प्रजानां स्वत एव भगवदाभिमुख्यम्, अथवा आत्माभिमुख्यमासीत्। अत एव 'कृतम्' इति तस्य नाम। यदा च किञ्चिद्धर्माद् भ्रंशः, एवं ये जनाः जागृताः ते तपसैव सिद्धा अभवन्नित्युच्यते— 'नवाभवन् महाभागाः मुनयो ह्यर्थशंसिनः। श्रमणा वातरशनाः आत्मविद्याविशारदाः॥' (भाग.11-2-20) इत्यादौ। **श्रमणाः**=वर्णाश्रमानन्तर्भूता विरक्ता अवधूताः। **वातरशनाः**=वाताशनाः, सन्धिश्छान्दसः, तीव्रतपःपरायणा इत्यर्थः। एतादृशतीव्रतपोमार्गोऽपवादरूपो ज्ञेयः। तादृशतीव्रतपस्यशक्तानां विलम्बेन फलप्रदो वर्णा-श्रमधर्ममार्गः। अयमेवाव्यक्तमार्गः। 'स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति' (तै.शि.5) इति तादृशाय ब्रह्मविदे देवाः किंकरा भवन्तीत्युच्यते। यदा चैतादृशं ब्राह्मण्यं दुर्लभमभूत्तदा, तेषामनुग्रहेणैव तत्राप्यमभूत्। अयमेव भक्तिमार्गः=व्यक्तमार्गः। अत्राप्यशक्तस्य तु प्रपत्तिः=सर्वसमर्पणम्, व्याजमात्रोपायः। परन्तु तेषामपि वर्णाश्रमधर्मविद्वेषाभाव आवश्यकः; यतो वर्णाश्रमधर्म एव सहजः, भगवतोपदिष्टः, औत्सर्गिकः, ऋजुः, सुकरश्च मार्गः। वैयक्तिकजीवनम्, सामाजिकजीवनं च धर्मानुगुणं यदि वक्तव्यम्, तर्हि वर्णाश्रमधर्म एवाश्रयणीयः, नान्य उपायो वर्तते। धर्मस्य अतिसूक्ष्मताम्, अत्यन्तगहनतां च ये न जानन्ति, प्रत्युत असूयाहंकारादिपीडिताः, त एव वर्णाश्रमधर्मं निन्देयुः॥

परन्तु, मानवा यदातिदुर्बला भवन्ति, तदा वर्णाश्रमधर्मोऽपि वीर्यहीन इव भवति। वीर्यहीनैः अनुष्ठीयमानो धर्मः अहङ्कारायैव भवेत्। यदा चार्थरहितेनाहङ्कारेणैते इतरानवमानयन्ति, तदा इतरेषामेतेषु असूयाविद्वेषाद्यनिवार्यं भवति। तेन च तैः क्रियमाणान् धर्मानपि निन्देयुरन्ये। अतो वर्णाश्रमनिष्ठानां भारोऽत्यन्तं महान्। अत एवात्राचार्यैः 'सर्वेऽपि प्राप्नुयास्तां परगतिम्' इत्यन्वग्राहि। नन्वत्र 'परिचरणमुखैः' इति 'परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।' इत्यादौ शूद्रायैव विहितः। तस्य शूद्रधर्मत्वात् 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' (गी.3-34) इतीतरैः स्वीकर्तुमशक्यत्वात् प्रपत्त्या सहास्य सर्वाधिकारिकत्वं कथं घटतामिति चेत्; सम्यक् पृष्टमायुष्मता। परन्त्विदमत्रावधार्यताम्—ब्रह्मविद्यायाः त्रैवर्णिकाधिकारिकत्वेन, शूद्राणां ब्रह्मविद्याया अप्राप्त्या मुक्तेरसंभवे, तेषामपि स्ववर्णप्राप्तपरिचर्यया भवेन्मुक्तिरित्यवदन्नाचार्याः॥

भो! कं विप्रलंभयसि त्वम्? परिचर्यया शूद्रस्य मुक्तिरित्यस्य, अनन्तरजन्मनि वैश्यो भवेत्; तत्रापि स्वधर्मनिष्ठया अनन्तरजन्मनि क्षत्रियो भवेत्; तत्रापि स्वधर्मनिष्ठयानन्तरजन्मनि ब्राह्मणो भवेत्। अनन्तरमेव मुक्तिः। आहत्य ब्राह्मणानामेव मुक्तिः इति खल्वर्थः। अतः सर्वेषामपि मुक्तिरित्यस्य ब्राह्मणजन्मप्राप्त्यनन्तरमिति शेषः। अत एवेतरैः आर्षधर्मः पक्षपातमय इत्युच्यते। किमुत्तरमत्र प्रतिपद्यसे त्वम्? अतीव कलुषितस्त्वमभूः। सत्यं सर्वदा कटु। स्वोत्कर्षपरनिकर्षभावनाफलमजानतः कतिचन ब्रह्मबन्धून् वृथाभ्यसूयसि त्वम्। गौणं ब्राह्मण्यमेव मुक्तिहेतुः, न तु मुख्यम्। गौणं ब्राह्मण्यं कीदृशम्, कियद्दुर्लभमिति प्रायो ब्राह्मणंमन्येष्वपि बहवो न जानन्ति। अव्यक्तमार्गदृष्ट्या तु गौणं ब्राह्मण्यमेव मुक्तिहेतुः। अव्यक्तमार्गस्य परिपूर्णं स्वरूपं प्रायो बहवो न जानन्त्येव। अत एव भगवान्, 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' (गी.12-5) इत्याह। एवम्— 'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥' (गी.12-2)इति व्यक्तमार्गमेव प्रशंसति च ॥

आचार्यवर्यास्त्वत्र व्यक्तमार्गदृष्ट्याऽवदन् 'सर्वेऽपि प्राप्नुयुस्ताम्' इति। 'परिचरणमुखैः' इत्यादि तु भगवत्कृपाप्रयोजकतया मुमुक्षोः शास्त्रानुवर्तनशीलताम्, विनयादिकं च प्रदर्शयितुमुक्तम्; न तु अव्यक्तमार्ग इव जन्मान्तरप्रयोजकतां प्रदर्शयितुम्। व्यक्तमार्गो हि भक्तिमार्गः। भक्त्या प्रसन्नो भगवान् हि फलं दास्यति। तर्हि भक्तिप्रपत्त्योः को भेदः? इति चेत्, उक्तमेवाचार्यैः— 'स्वतन्त्राङ्गप्रपत्तिभ्यां प्रपन्नावपि दर्शितौ। फलसाधनभक्तिभ्यां भक्तावपि च दर्शितौ ॥' इति। भक्तिप्रपत्त्योः पर्वभेदेन साध्यसाधनभाव इत्यर्थः। 'न ऋते श्रान्तस्य सख्याय देवाः' इतिन्यायेनारंभ एव श्रान्तानाम्, प्रथमं प्रपत्तेरेव प्रसक्त्या, प्रपत्तिः साधनकोटौ निविशते, भक्तिश्च तस्य फलरूपा। अयमेव **स्वतन्त्रप्रपत्तिमार्गः**। यदा भक्तेस्साधनत्वं, तदा प्रपत्तिरङ्गकोटौ निविशते। इयमेव **अङ्गप्रपत्तिः**। अतः प्रपन्नोऽपि भक्तो भवति, भक्तोऽपि प्रपन्नो भवति। भाष्ये भक्तेरुपायत्वं साधयन् भगवान् रामानुजः, वेदार्थसंग्रहे 'तेषां संसारमोचनं भगवत्प्रपत्तिमन्तरेण नोपपद्यते' इति शपथयति। श्रुतिरपि 'अमृतस्यैष सेतुः' (मु.2-2-4) इत्यन्वग्रहीत्। न च 'एषः' इति साधनं ज्ञानमेव वक्तीति शङ्क्यम्; 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति हि पूर्णवाक्यम्। तत्र 'तम्' इति पदं, मन्त्रारंभे 'यस्मिन्' इति यच्छब्देनोक्तं, परमात्मानमेव परामृशति। अतः 'एषः' इति पुल्लिङ्गशब्दः आत्मानमेव स्पृशति, न तु 'जानथ'इति तिबाच्छादितं ज्ञानम्, पुंलिङ्गानुपपत्तेः। एवञ्च ज्ञानम्, भक्तिः, प्रपत्तिरिति त्रयमपि परस्परमन्तर्णीतमेव भवति। अत एव 'आत्मारामाश्च मुनयः निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥' (भाग.1-7-10) इति ज्ञानभक्त्योः सामरस्यं वर्णितं **भक्तिरसायने**। एषु कस्य प्राधान्यम्, कस्याप्राधान्यमित्यादिकं न चर्चया निर्णेतुं शक्यम्। यतोऽधिकारिभेदाधीनं सर्वम्। अत एव— 'ध्यानेनात्मनि पश्यन्ति केचिदात्मनमात्मना। अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते। तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः॥' (गी.13-24,25) इति गीतं भगवता। अतः सुष्ठूक्तम्, 'सर्वेऽपि प्राप्नुयुस्तां परगतिम्' इति ॥

तर्कातीते तपोगम्ये विषयेऽतिविचारणा। विषयस्यापचाराय भवेत् मौनं ततो वरम् ॥

अन्ते तु सर्वमप्येतत् पर्यवस्येद्धिते नृणाम्। 'उद्धरेदात्मनात्मानम्' इत्येवान्तिमघोषणा ॥
'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।' इत्येव निर्णयो ज्ञेयः परमस्सार्वकालिकः ॥

**इदमत्रावधेयम्**—मोक्षसाधनविषये सन्ति बहुधा विप्रतिपत्तयः। **ज्ञानम्, भक्तिः, प्रपत्तिश्चेति** त्रयः स्वतन्त्रोपायाः क्रमशोऽशक्ताधिकारिका इति केचन। कर्मयोगेन साकं चत्वारोऽपि स्वतन्त्रोपाया इति केचित्। भक्तिरेव ज्ञानम्, नातिरिक्तम्। अतश्च भक्तिः प्रपत्तिश्चेति द्वयमेवोपायः, भक्तियोगेऽशक्तस्यैव प्रपत्तावधिकारः। यद्यपि प्रपत्तिरपि ज्ञानविशेषरूपैव; ज्ञानातिरिक्तस्य मोक्षसाधनत्वनिषेधात् ; अथापि उपासनारूपा भक्तिराकिञ्चन्यादिज्ञानापेक्षया विलक्षणा। ज्ञानयोगः कर्मयोगश्च आत्मावलोकनद्वारा भक्तेः साधनभूताविति सांप्रदायिकाः। भक्तिरेक एवोपायः, प्रपत्तेराकिञ्चन्यरूपत्वेनोपायत्वमेव नास्तीति संप्रदायैकदेशिनः। वचनरूपप्रमाणानां बहुविधत्वात् केवलैर्वचनैरर्थनिर्णयो न शक्यत एव। यद्यपि 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन। तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥'(गी.3-1) इति पृष्टवतेऽर्जुनाय 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ। ज्ञानयोगेन सांख्यानाम्, कर्मयोगेन योगिनाम् ॥' (3) इति साधकानां स्थितिद्वयमेवोक्तम् भगवता। निष्ठा=अचला मनसो स्थितिः। प्रकृते श्रेयस्साधनमार्गे स्थितिर्विवक्षिता। ज्ञानयोगः, कर्मयोगश्चेति मार्गद्वयमेव अनादिकालसिद्धम्=सृष्टिविज्ञानसिद्धमित्यर्थः। पुनरपि निष्कर्षं पृष्टवतेऽर्जुनाय 'सांख्ययोगौ पृथक् बालाः प्रवदन्ति न पण्डिताः। एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम् ॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥' (गी.5-4, 5) इत्युभयोरपि अविशेषेण मोक्षसाधनत्वमेव कण्ठत एवोक्तं भगवता। तथापि भगवद्भाष्यकारैः भक्तेरेकस्या एव मोक्षसाधनत्वादिदं योगद्वयमपि आत्मावलोकनद्वारा क्रमशो भक्तिसिद्ध्यर्थतया व्याख्यातम्। तथैव परैरपि, ज्ञानस्यैकस्यैव मोक्षसाधनत्वस्थापनोद्देशेन कर्मयोगस्य ज्ञानयोगसाधनत्वपरतयैव व्याख्यातम् ॥

किं कुर्युस्ते महात्मानः शिष्यवात्सल्ययन्त्रिताः। देशकालाधिकारादीनालोच्यैवानुरूपतः ॥
तत्त्वं वदेयुर्दयया न तु सर्वं यथास्थितम्। **गुरोश्शापस्तु शिष्यःस्यात्** इत्युक्तमसकृत्, स्मर! ॥

वेदविदूषकाणां मध्यकालिकबौद्धानां महानासीत्प्रभावः **श्रीशङ्कराचार्याणां** काल इति प्रसिद्धमेतत्। वैदिककर्मणां सर्वेषां ज्ञानस्यैव परमोद्देश्यत्वात्, 'कथञ्चित् ज्ञानं संरक्षामः' इति मत्वा नैष्कर्म्यवादः स्थापितस्तैः बौद्धोपच्छन्दनाय। श्रीरामानुजाचार्याणां काले तादृशनिर्बन्धाभावात्, आत्मानं ज्ञानाधिकारिणं मत्वा जनाः नैष्कर्म्यमार्गाश्रयणेन न नश्येयुरिति रहस्यं जानन्त एते भक्तेः प्राधान्यस्थापने, तदङ्गतया कर्मयोगोऽपि स्वयं प्राप्तप्रसरः स्यात्, तेन ज्ञानमपि भक्तेरेवाङ्गं च स्यादिति जनानां कक्ष्यां वीक्ष्य, भक्तेरपि ज्ञानविशेषरूपत्वात् 'ज्ञानादेव मोक्ष' इत्यस्य विरोधाभावाच्च भक्तेरेकस्या एव मोक्षसाधनत्वं स्थापयामासुस्ते। परं त्वत्र द्वादशाध्यायाध्ययने सर्वेषामप्यैकरस्यमेवेत्यादिकमन्यत्र दृष्टव्यम्॥

**वस्तुतस्तु**—प्रकृतिपुरुषसंसर्ग एव सृष्टेर्मूलमिति सर्वसंमतम्। तत्र पुरुषो विद्यामयः। प्रकृतिश्च तद्विलक्षणा क्रियामयी। अत एवाविद्यापदेनापि क्वचित् प्रकृतिरभिधीयते। अविद्या=विद्येतरत्=कर्म। कार्यसामान्येष्वपीदं द्वयमेव तत्तत्कार्यानुगुणं कारणं भवति। न हि केवलायाः प्रकृतेः केवलस्य पुरुषस्य वा

कर्तृत्वं संभवति। यद्यपि वेदान्तसिद्धान्ते जीवस्य कर्तृत्वं स्वाभाविकमिति 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र.सू.2-3-33) इत्यादिनोक्तमिति पूर्वमेव (श्लो.8) न्यरूपि। परं तु जडायाः प्रकृतेःकर्तृत्वं न संभवतीत्यपि रचनानुपपत्त्यधिकरणेनैव (ब्र.सू.2-2-1) सिद्धम्। एवं जीवस्यैव कर्तृत्वेऽपि इतरसाधनाद्यपेक्षा तस्य वर्तत एवेति च 'यथा च तक्षोभयथा' (ब्र.सू.2-3-38) इत्यत्राभिहितम्। कर्तृत्वे प्रकृतेरपेक्षायास्सत्त्वेनैव 'शरीरमाद्यं खलु धर्मसाधनम्' इत्यादिन्यायाः प्रावर्तन्त। प्रकृतेश्च क्रियाशीलत्वात्, क्रियागर्भा भक्तिः सुलभं मोक्षसाधनम्। पुरुषस्य विद्यापक्षपातित्वात् ज्ञानयोगे पुरुषः प्रधानम्, प्रकृतिस्सहकारिणी। आहत्य, पुरुषदृष्ट्या ज्ञानयोगः; प्रकृतिदृष्ट्या भक्तियोगश्च साधनमिति 'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने' (वि.पु.) इत्यादिवचनं प्रवृत्तम्। एतदभिप्रायेणैव 'लोकेऽस्मिन् द्विविधा निष्ठा' इत्याद्युक्तम्। साधकस्य समीचीनसाधनलाभे हि स्थितिर्लब्धा भवेत्। सा स्थितिः 'निष्ठा' इत्युच्यते। प्रकृतेर्दुर्जयत्वात्, मनसः प्रमादशीलत्वाच्च ज्ञानयोगापेक्षया भक्तियोग एव श्रेयानिति 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' (गी.5-2) इति कथ्यते। अत्र कर्मयोगः भक्तिः। केवल'योग'पदेनापि भक्तियोग एवोच्यते। ज्ञानयोगोऽपि 'सांख्य' पदेनाभिधीयते, न तु सांख्यसिद्धान्तसंकेतितज्ञानमार्गः॥

द्वादशाध्याये च इमौ सांख्ययोगावेव अव्यक्तव्यक्तोपासनापदाभ्यामभिधीयेते। 'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते। ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥' (1) इत्यर्जुनः पृच्छति। परमात्मा हि स्वरूपतो निराकारोऽपि भक्तानामनुग्रहायाकारवानपि भवतीत्यादिकमग्रिमसरे विस्तरेण विचार्यते। एतावता ब्रह्मणो द्वैविध्यादिकल्पनमत्यन्तमसमञ्जसमेव। एकमेव जलं शैत्याधिक्ये करकारूपं भजते। सैव करका औष्ण्याधिक्ये जलं भवति। तत्र कथं तयोर्भेदो वर्णयितुं शक्यः? गमनादिशीलः पुरुषः निद्रासमये न किञ्चिच्चलत्यपि। तावता निद्रालुर्देवदत्तः, गन्ता देवदत्तश्च परस्परं भिन्नावेव भवेतां किम्? तावानेव साकारनिराकारयोर्भेदः। एवमेव सगुणनिर्गुणयोर्वा सविशेषनिर्विशेषयोर्वा स्वरूपतो भेदो नास्तीत्यादिकमप्यग्रिमसरे भविष्यति। अत एवं मार्गभेदोऽपि पुरुषदृष्ट्यैव, न तु लक्ष्यदृष्ट्येति 'सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।' (गी.5-4) 'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' (गी.5-5) इति सुस्पष्टमभिधीयते। एवमेवात्राप्यर्जुनप्रश्ने— 'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥' (गी.12-2) इति साकारोपासकस्यैव श्रेष्ठत्वमुक्त्वा, 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते' (३) इत्युपक्रम्य, 'ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः। क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' (4) इति निराकारोपासकानामपि प्राप्यमेकमेव, किन्तु क्लेशोऽधिकतर इति सकारणमुच्यते। मार्गद्वयेऽपि 'उपासते' इत्येव वर्तत इत्येतदवधेयम्। निराकारं हि तत्त्वं बुद्ध्यतीतम्। तस्योपासनमल्पप्रज्ञैर्न कर्तुं शक्यम्। ये आधिकारिकांशपुरुषास्त एवाव्यक्तोपासनार्हाः, नेतरे॥

ननु भोः! संशयमिमं परिहर। अव्यक्तपदार्थः कः? प्रकृतिस्तु न भवेदेव 'ते प्राप्नुवन्ति मामेव' इति कथनात्। निर्मत्सरमुत्तरमुच्यताम्॥

जानामि भोः! तेऽन्तरङ्गं मर्मज्ञं न प्रकोपयेत्। किन्तु वक्ष्ये रहस्यं तत् श्रूयतां सावधानतः॥

ब्राह्मण्यं क्रमशो हीनं कलौ तस्य प्रभावतः। तपसा ब्रह्म जानीहीत्याह वैदिकधीरवाक् ॥
कथं कर्तुं शक्नुयुस्ते तपो वीर्यक्षयात् बत। तपोहान्या च विप्राणां ज्ञानं तेषां कथं भवेत् ॥
देवतानुग्रहेणैव ज्ञानं प्राप्यं न चान्यथा। भक्त्या प्रसन्नस्सर्वं हि दद्यात् स पुरुषोत्तमः ॥
भक्तिमार्गोऽवतीर्णोऽभूत् कामधेनुस्तु सा नृणाम्। एतादृशे च समये किं ब्रूयुर्गुरवो वद ॥
आत्मोपासनमार्गोऽपि भक्तिरूपोऽभवत्तदा। आचार्याणां हि सर्वेषां व्याख्या कालानुगा भवेत् ॥
ते प्राप्नुवन्ति मामेवेत्युक्ते भगवता स्वयम्। मत्सादृश्यं प्राप्नुवन्तीत्येव व्याख्याः न चान्यथा ॥
यदस्य परमं तत्त्वं ज्ञेयं त्वं यदि मन्यसे। वाक्यान्वयाधिकरणं सावधानमधीयताम् ॥

यद्यपि सन्ति 'भेदव्यपदेशात्' 'भेदव्यपदेशाच्चान्यः' (ब्र.सू.) इत्यादीनि बहूनि सूत्राणि जीवेश्वरभेदपराणि, परन्तु समग्रं प्रकरणमेव मैत्रेयीब्राह्मणमिमां जटिलां समस्यां विमृशतीति तदेवात्यन्तं विचारार्हम्। बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.4-4-5, 6-5-6) इति। अत्र आत्मपदं कं वक्तीति गाढमन्विष्यताम् ॥

**सत्यांशस्तु**—अत्र 'आत्मा वारे द्रष्टव्यः' इत्युक्त आत्मा किं जीवः, उत परमात्मा? इति संशयः। अरे इति संबोधनम्। सर्वेषां स्वात्मा हि अत्यन्तप्रियः, अतः स एवोपास्य इति बोधनाय 'न वा अरे पत्युःकामाय पतिःप्रियो भवत्यात्मनस्तु कामाय पतिःप्रियो भवति' इत्यादिकमुच्यते। अत्र वाक्ये 'जायायाः' इत्यध्याहार्यम्। जायाया हि पतिरत्यन्तं प्रियः। कुतः? इति चेत्, स्वसन्तोषार्थमेव, न तु पत्युः केवलं सन्तोषार्थम्। एवमेवोपर्यपि। एवञ्च सर्वेषामपि स्वात्मैवात्यन्तं प्रियतमं वस्तु। अतः आत्मा द्रष्टव्यः। कथम्? 'श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यः' इत्युपदिश्यते। पतिजायापुत्रादि- सहपाठात् आत्मा जीवात्मैव, न तु परमात्मा, तस्य पतिपुत्रादिसंसाराभावात्, अवाप्तसमस्तकामत्वाच्च। एवमुपसंहारेऽपि 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति, न प्रेत्य संज्ञास्ति' इति भूतेभ्यस्समुत्थानम्, नाशश्चोच्यते। एतदपि परमात्मनोऽसंभवात्, जीवविषयकमेव। एवञ्चोपक्रमोपसंहारयोर्जीवविषयकत्वात् जीव एवोपास्य इति **पूर्वपक्षे,** सिद्धान्त उच्यते 'वाक्यान्वयात्' (ब्र.सू.1-4-19) इति ॥

पतिजायादिपददर्शनमात्रेणास्य महाप्रकरणस्य तात्पर्यं कथमवगन्तुं शक्येत? न वा पतिजायादिपदघटितं वाक्यमेवोपक्रमः, 'विज्ञानघन एव' इत्युपसंहारो वा। किन्तु 'केनाहममृता स्याम्' इत्यमृतत्वोपायप्रश्नः खलु महोपक्रमे वर्तते। एवम् 'एतावदेव खल्वरे अमृतत्वम्' इति खलु परमोपसंहारवाक्यम्। एवं मध्येऽपि 'आत्मनि विदिते सर्वं विदितम्' इति एकविज्ञानेन सर्वविज्ञानमुक्तम्। एवम् 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः' इत्यादिना वेदादिसकलशास्त्रयोनित्वमुच्यते। एवम् 'इदं महद्भूतमनन्तरमपारम्' इति अपरिच्छिन्नत्वमुच्यतेऽस्यात्मनः। एतादृशानां वाक्यानां सांसारिणि जीवे कथमन्वयश्शक्यः? अतः 'आत्मा वारे द्रष्टव्यः' इति परमात्मन एव द्रष्टव्यत्वमुच्यते, न तु जीवात्मनः ॥

तर्हि जीववाचिपदानां कथं परमात्मनि समन्वयः? अत्रैव समस्याविर्भावः। जीवस्यापि परमात्मकार्यत्वेन एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं कार्यकारणयोरनन्यत्वसूचनाय जीववाचिशब्देन परमात्माभिधानमिति **आश्मरथ्या-**

चार्यमतम् । परं ज्योतिरुपसंपत्स्यमानस्य परमात्मना सहैक्यसूचनाय भाविगत्याश्रयणेन तथाभिधानमिति **औडुलोमि**मतम् । तृतीयं मतम् 'अवस्थितेरिति **काशकृत्स्नः**'(22) इति । 'अवस्थिति'पदमत्र न तावत्स्पष्टार्थम् । 'ब्रह्मण एव जीवभावेनावस्थितेः' इति परव्याख्यानम् । 'परमात्मनो जीवशरीरितया-वस्थितेः' जीवस्य परमात्मशरीरत्वात् शरीरवाचिशब्दानां शरीरिपर्यन्तबोधस्वाभाव्यात् तथावचनमिति सिद्धान्त-व्याख्यानम् । पूर्वमन्तराधिकरणे 'स्थानादिव्यपदेशाच्च' (ब्र.सू.1-2-14) इति सूत्रस्य विषयस्तु पक्षद्वयेऽपि 'यश्चक्षुषि तिष्ठन्' (बृ.5-7-3) इत्यन्तर्यामिब्राह्मणवाक्यमेव । अस्य व्यतिरेकाभिधानम् 'अनवस्थितेः'(17) इत्यादिसूत्रमिति स्पष्टम् । एवञ्चात्रावस्थितिः सूत्रशैलीस्वारस्यात् अन्तर्यामितयावस्थितिरेवेत्येव स्वरसम् ॥

ननु ब्रह्मर्षीणामप्येवं कथं मतभेद इति चेत्, अद्यतनपण्डितानामिव नायं मतभेदः, किन्तु दृष्टिभेदः। अत एवैषां समन्वयोऽप्यस्त्येव । आत्मतत्त्वं हि 'अविज्ञातं विजानतां विज्ञातमविजानताम्' इत्येवं रूपम् । एतत्प्रदर्शनमपि 'न बुद्धिभेदं जनयेत्' इति न्यायकृतम् । शरीरशरीरिभावतत्त्वपरिज्ञाने एतत्सर्वमपि सुगमम् । अत एव प्रत्येकं बादरायणमतं नोक्तम् ॥

व्यक्तीभवेत्तु समये सर्वं सत्यम् रहोमयम् । यदीच्छेत् भगवान् एवमाचार्याशिशिष्यवत्सलाः ॥

एवं पर्यालोचने—मैत्रेयीब्राह्मण एवेयं समस्या सूचिता । 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' (बृ.4-4-12) इति याज्ञवल्क्येनोक्ते, तद्वाक्यश्रवणेन 'अत्रैव मा भगवानमूमुहत्' इति मैत्रेय्या स्वस्या मोहेऽभिहितेऽपि 'न वा अरे अहं मोहं ब्रवीमि अलं वा अरे इदं विज्ञानाय'(17) इति याज्ञवल्क्येनोत्तरमभिहितम् । अस्त्यत्रैव समस्या ॥

रहस्यज्ञाश्च ते मग्ना आचार्या धर्मसंकटे । न बुद्धिभेदं जनयेदिति स्मृत्वा दयालवः ॥
विज्ञानं क्रमशो नष्टं हन्त! कालप्रभावतः । सुस्पष्टमेव वक्तव्यं जिज्ञासुस्वान्तशान्तये ॥
सृष्टेरन्तिमसीमा तु पुरुषः प्रोच्यते बुधैः । तस्मान्नान्तर्हितं सर्वं तदेवाद्य विविच्यते ॥
विषयस्यातिगांभीर्यात् पौनःपुन्येन चिन्तनम् । कर्तव्यमिति संप्रोक्तम्, दोषो न ह्यत्र विद्यते ॥

'आत्मन आकाशस्संभूतः' इति सृष्टेरुपक्रमः, 'अद्भ्यः पृथिवी' इति च समाप्तिः । उत्तरत्र व्यष्टिसृष्टिरित्यादिकं पूर्वमेवोक्तम् । 'अन्नात्पुरुषः' इति व्यष्टेस्समाप्तिः । 'स वा' इत्याद्यनूद्य तस्यान्नरस-मयत्वमुच्यते । शरीररचनायामन्नरसः प्रथमो धातुः । स एवोपरि रक्तमांसमेदोमज्जास्थिशुक्ररूपेण परिणतः शरीरं भवति । एतादृशमेव शरीरं भूतात्मतत्त्वस्याविर्भावकारणमिति 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय' इत्युच्यते । इदं हि शरीरं चेतनापृथक्सिद्धं चैतन्याभिव्यक्तिकारणम् । तादृशः परिणामः किं मनुष्यबुद्ध्या विश्लेषयितुं शक्यः?'क्रियाप्रतिक्रिया' न्यायेन तादृशविलक्षणपरिणामविशिष्टानि अभिव्यक्तचैतन्यानि भूतानि शरीराकाराणि 'भूतात्मा' इत्युच्यन्ते । एत एव जीवात्मनः सुप्तावस्थायामपि परिज्ञानमन्तरापि, मशकपि-पीलिकादिभ्य आत्मानं स्वयं रक्षन्ति कण्डूयनादिना । तत् कथं जडं भवेत्? किञ्च निमीलिताक्षस्यापि पुरुषस्य स्वशरीरसद्भावः, तत्क्रियादिकं च स्पष्टं भासते । तत् कथम्? शरीराकारेण परिणतं जीवचैतन्यमेव तदा

[ध्याननियोगवादविमर्शः]

**113. ध्यानादृष्टेन साक्षात्कृतिरुपजनिता बाधते चेत् प्रपञ्चं**
**तत्तुल्यार्थैव शाब्दी प्रमितिरपि न किं बाधते पूर्वमेव ।**
**ज्वालैक्यादौ परोक्षादपि हि निजगदुर्बाधमध्यक्षबुद्धेः**
**नाप्यत्रादृष्टरूपामहितविमथनीं शक्तिमङ्गीकरोषि ॥ ४३ ॥**

---

प्रकाशते, चैतन्यस्य स्वप्रकाशत्वात् । तच्च चैतन्यं किंरूपमित्यादिकं पूर्वमेव (श्लो.4) बहुधा शोधितमत्र स्मर्तव्यम् । एवं भूतात्मानमारभ्यापरमात्मानमस्मिन् शरीर एवावतिष्ठन्ते चैतन्यरूपाणि तानि । अत एवोच्यते 'पुरुषे त्वेवाविस्तरामात्मा' इति । **आविस्तराम्**=आविर्बभूवतराम् । एतादृशं व्यापकमवस्थानमेव 'अवस्थितेरिति काशकृत्स्नः' इत्यत्रावस्थितिपदस्यार्थः । स एव शरीरेन्द्रियादिषु 'अहं'प्रतीतिहेतुः, अन्ते 'अहं ब्रह्मास्मि' इत्यनुभवस्य च हेतुः अतस्सुष्ठूक्तम्—'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान् । जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः ॥' इति ब्रह्मर्षिवरिष्ठैः । अस्य विवरणमिव वचनान्यवधेयानि—'निजलालासमायोगात् कोशं वा कोशकारकः । कारणान्येवमादाय तासु तास्विह योनिषु ॥ सृजत्यात्मानमात्मा च संभूय करणानि च ॥ (3-148.याज्ञ) 'यथा हि भरतो वर्णैः वर्णयत्यात्मनस्तनुम् । नानारूपाणि कुर्वाणस्तथात्मा कर्मजास्तनूः॥'(162) इत्यादीनि ॥

एतावदेव पर्याप्तं सूक्ष्मधीभ्यस्तु सूचनम् । प्रामाणिकानां पुसां हि सहकुर्यात्स्वयं हरिः ॥
इतोऽपि खलु विस्तारोऽपेक्षितो यदि सह्यताम् । स एव दर्शयेत् सर्वं काले ह्याश्रितवत्सलः ॥ ४२ ॥

एवं स्वमतमुपन्यस्य, तत्प्रतिष्ठायै परमतानि विमृशन्, प्रथमं **ध्याननियोगवादं** निराकरोति—**ध्यानेत्यादिना** । **ध्यानादृष्टेन**=ध्यानजन्येनालौकिकेन नियोगेन **उपजनिता**=उत्पादिता **साक्षात्कृतिः**= ब्रह्मसाक्षात्कारः **प्रपञ्चम्**=प्रतीयमानं प्रपञ्चं **बाधते चेत्**=निवर्तयति यदि, **तत्तुल्यार्थैव**=ध्याननियोगजन्यसाक्षात्कारेण समानविषयिण्येव **शाब्दी**=श्रवणजन्या **प्रमितिरपि**=प्रमात्मकज्ञानमपि **पूर्वमेव**=साक्षात्कारजननात् पूर्वमेव **किम्**=कुतो **न बाधते**=प्रपञ्चभ्रमम् न निवर्तयति? 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.6-5-6) इति श्रुत्या श्रवणमनननिदिध्यासनानां विधानात्, प्रथमं आत्मस्वरूपं गुरुमुखात् श्रुत्वा, मनननिदिध्यासनयोः करणात् आत्मविषयकः साक्षात्कारो जायत इति ते वदन्ति । तत्रैव प्रश्नः—श्रवणजन्यज्ञानस्य साक्षात्कारस्य च भेदोऽस्ति, न वा? अस्ति चेत्, विषयभेद आवश्यकः, ज्ञानानां भेदस्य विषयभेदाधीनत्वात् । प्रकृते ब्रह्मणः निर्विशेषत्वात् विषयभेदो दुर्वचः । अथवा ब्रह्म सविशेषं स्यात् । तथा चापसिद्धान्तः। 'विषयभेदो नास्ति' इति द्वितीयकल्पे, प्राथमिकं ज्ञानमेव श्रवणजन्यं कुतः प्रपञ्चभ्रमं न निवर्तयति?

ननु प्राथमिकं ज्ञानं परोक्षरूपम् । प्रपञ्चभ्रमस्त्वपरोक्षरूपः । अपरोक्षभ्रमस्य परोक्षज्ञानं न बाधकं भवेत्, दुर्बलत्वात् । अतः मननदिध्यासनसंस्कृतः मानसः साक्षात्कार एव भ्रमनिवर्तक इत्यत्राह—**ज्वालैक्यादावित्यादि** । **ज्वालैक्यादौ**='सेयं दीपज्वाला' इत्यैक्यप्रत्यभिज्ञास्थले **परोक्षादपि**=

अनुमितिरूपाद्भेदज्ञानादपि **अध्यक्षबुद्धेः**=ऐक्यावगाहिनः 'सेयं दीपज्वाला' इति प्रत्यभिज्ञात्मकप्रत्यक्ष-ज्ञानस्य **बाधम्**=निवृत्तिम् **निजगदुर्हि**=सर्वेऽप्यवदन् किल। 'हि' इति प्रसिद्धिसूचनाय। ननु परोक्षरूपं गरुडविषयकज्ञानं न विषहरम्; गरुडध्यानजन्यमपरोक्षज्ञानं तु विषहरं लोके दृष्टम्। तद्वदेव श्रवणजन्यं ज्ञानं न प्रपञ्चभ्रमनिवर्तकम्। ध्यानजन्यं तु निवर्तकं भवेदित्यत्राह—**नात्रेत्यादि**। **अत्र**=प्रकृतज्ञाने **अहित-विमथिनीम्**=प्रपञ्चभ्रमनिवर्तनक्षमाम् **अदृष्टरूपाम्**=दृष्टविलक्षणाम् **अलौकिकीम् शक्तिम्**=शक्तिविशेषम् **न अङ्गीकरोषि**। तदा हि गरुडजपनिवर्त्यविषवत् प्रपञ्चस्य सत्यत्वप्रसङ्गः॥

श्रीशङ्कराचार्यात् प्राक् स्थितेषु वेदान्तिषु स्वरूपपरिणामवादी **भर्तृप्रपञ्चः** प्राचीनतमः। ब्रह्मस्वरूप-परिणामवादे बौद्धैर्बहुधा दूषिते, वेदान्तसमर्थनायोद्यतो श्रीशङ्कराचार्यात् प्राचीनतरः **मण्डनमिश्र**स्तु विवर्त-वादी। पूर्वोत्तरमीमांसाचार्यो मण्डनमिश्रः **ब्रह्मसिद्धौ ध्याननियोगवादं** समर्थयति। पूर्वमीमांसायामिवोत्तरमीमांसा-यामपि लिङो नियोगोऽर्थः। 'लिङ्'श्रवणेन हि सर्वोऽपि जानाति 'अयं मां नियोजयति' इति। लौकिकवाक्येषु वक्तुरिच्छैव नियोगः। अपौरुषेये वेदे तदसंभवात्, शब्दगत एव कश्चनातिशयः पुरुषं प्रेरयति। अयमेव **भाट्टैः** शाब्दी **भावने**त्युच्यते। 'आत्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. 4-4-5, 6-5-6) इति। यद्यपि श्रुतौ 'द्रष्टव्यः' इति दर्शनं विधीयते, अथापि दर्शनरूपस्य ज्ञानस्य विधानासंभवात्, 'निदिध्यासितव्यः' 'ओमित्येवात्मानं ध्यायथ स्वस्ति वः पाराय तमसः परस्तात्' (मुं.2-2-6) इत्यादौ मोक्षफलाय ध्यानमेव विधीयते। तेन च ध्यानविषयो नियोगो ज्ञायते। अग्निहोत्राद्यनुष्ठानेन जातो नियोगः यथा स्वर्गं ददाति, तथा ध्यानजन्यो नियोगो मुक्तिं ददाति। **नियोगो** नाम अलौकिकमपूर्ववत् स्वतन्त्रतत्त्वम्। 'चिरध्वस्तं फलायालं न कर्मातिशयं विना' (कु.1-9) इति न्यायेन, क्षणिकायाः यागरूपक्रियायाः कालान्तरभाविस्वर्गसाधनत्वे कथमाश्वासः? इति प्रश्ने 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र श्रूयमाणो विधिरेव, राजाज्ञावत् आश्वासं ददाति। विधिर्नाम लोके राजादिनियोगः। अपौरुषेये वेदे अलौकिको नियोग एव नूनं स्वर्गं दास्यति। एवं **'ध्यायथ'** इति ध्याननियोग एव मोक्षं दास्यति इति वादः **'ध्याननियोगवादः'**॥

परं तु —तन्मते बन्धस्य जगतो मिथ्यात्वात्, ब्रह्मज्ञानेन जगतो बाधो वक्तव्यः। तर्हि 'श्रोतव्यः' इति गुरुमुखात् श्रवणजन्यं ज्ञानं कुतो बन्धं न निवर्तयति? इति चेत्, 'क्षीरं मधुरम्' इति जानतोऽपि पित्तदोषेण रसनायां दूषितायां क्षीरं तिक्तं यथा भाति, तथा श्रवणेनैव जगन्मिथ्यात्वे निश्चितेऽपि, मनसि जगद्भ्रमहेतुभूतभेदवासनया दूषिते भ्रमनिवृत्तिर्न भवति, बन्धो न निवर्तते। ध्यानजन्यनियोगेन वासनायां निरस्तायां, तदेव मनः शुद्धं सत् ब्रह्मापरोक्षज्ञानं जनयति। अत एवेदं ज्ञानं मानसम्, न शाब्दम्। तेन जगतो मिथ्याभूतस्य बाधात्, बन्धः निवर्तते। इदं कथं ज्ञायते? इति चेत्, 'ध्यायथ' इति नियोगेन ज्ञायते। ज्वालैक्यभ्रमस्थले अनुमानेन भेदज्ञाने सत्यपि, चक्षुरिन्द्रियस्य ज्वालाभेदग्रहणसामर्थ्याभावेन न गृह्यते। एवं 'एकश्चन्द्रः' इति निश्चये सत्यपि अङ्गुल्यवष्टंभदोषेण चन्द्रद्वयदर्शने जाते, परस्परं बाध्य-बाधकभावो न दृश्यते; अन्यतरस्य दोषमूलकत्वेन दुर्बलत्वात्। तादृशदोषापनयनार्थमेव ध्यानादिप्रयास-

स्सर्वोऽपि । सर्वेषामपि समस्येयं समाना । 'श्रोतव्यः' इत्युक्तश्रवणजन्यज्ञानस्य, लोकानुभवस्य च महदन्तरं वर्तते । जगन्मिथ्यात्वपक्षे वा, जगत्सत्यत्वपक्षे वा अनुभवः सर्वेषां समान एव । शतशो वेदान्तश्रवणेऽपि न किञ्चिदपि कार्यकारि भवति, क्लेशादिकं तथैवानुभूयत इति सर्वानुभवसिद्धम् । तत्कुतः? अतः 'यश्चोभयोस्समो दोषः' इति न्यायेन न वयं प्रश्नार्हा इति चेत्, प्रपञ्चसत्यत्वपक्षे, सत्यस्य सकृच्छ्रवणमात्रेणानिवृत्तिर्युज्येतापि । प्रपञ्चमिथ्यात्ववादिनां मते तु मिथ्याभूतस्य वस्तुनः, तत्त्वज्ञाने जाते सकृदेव निवृत्तिरावश्यकी । निवृत्तिस्तु जातैव । परन्तु सर्पभ्रमनिवृत्त्यनन्तरमपि पूर्वं सर्पभयाज्जातस्य शरीरकंपादेरनुवृत्तिर्यथा दृश्यते, तथा प्रपञ्चभ्रमनिवृत्तावपि भेददर्शनमनुवर्तते । इयमवस्थैव जीवन्मुक्ति-रित्युच्यते इति नानुपपत्तिरित्यपि न समीचीनम्; भेददर्शनस्यैव भ्रमपदार्थत्वेन, 'प्रपञ्चभ्रमो निवृत्तः, भेददर्शन-मनुवर्तते' इत्युन्मत्तप्रलापायते । सिद्धान्ते तु शरीरकंपादेस्सत्यत्वात् सर्पभ्रमनिवृत्त्यनन्तरमपीषदनुवृत्ति-र्युज्यते । अतस्सर्वमिथ्यात्वपक्ष एवानुपपत्तिरपरिहार्या । 'मिथ्याभूतस्य सर्पस्य न हि दण्डेन मारणम्' इति खलु न्यायः । एतदर्थं बहुधा क्लिश्यन्ति जगन्मिथ्यात्ववादिनः ॥

सिद्धान्ते तु जगतस्सत्यत्वात् ज्ञाननिवर्त्यत्वं न संभवत्येव । मुक्तिरपि भगवदनुग्रहाधीना । 'फलमत उपपत्तेः' (ब्र.सू.3-2-36) इति हि बादरायणः । वेदान्तशास्त्रं भक्ति मार्गानुसारीत्यसकृद्वर्णितम् । भक्तिरेव सर्वं दास्यति । अव्यक्त(ज्ञान)मार्गे त्वेवं वक्तुं न शक्यते । सगुणनिर्गुणविभागादिकं न क्षोदक्षम-मित्यग्रिमसरे प्रदर्श्यते ॥

**वस्तुतस्तु**—मार्गः व्यक्तो वा, अव्यक्तो वा भवतु! मार्गद्वयेऽपि जगत् एकरूपमेव भवेत् । 'ज्ञान-मार्गिणां जगत् स्वप्नतुल्यम्, भक्तिमार्गिणां तु भगवदाराममरूपम्' इत्यादिकं तु कल्पनामात्रम् । न हि परिव्राट्कामुकशुनां भावनाभिः पुरोऽवस्थितं परिवर्तितं भवेत् । श्रवणवेलायां हि वेदान्तशास्त्रं केवलं दृष्टान्तमात्रावलम्बि । अत एव 'यथोर्णनाभिः'(मुं.1-1-7) 'यथा सुदीप्तात्पावकात्'(मुं.2-1-1) 'यथा नद्यःस्यन्दमानाः' (मुं.3-2-8) 'यथा पादोदरः' (प्र.5-5) 'यथा मक्षिकाः' (प्र.2-8) 'अरा इव रथनाभौ' (प्र.2-6) 'मुञ्जादिवेषीकाम्' (कठ.2-3-17) 'अग्निर्यथा'(कठ.2-2-9) 'वायुर्यथा'(10) 'सूर्यो यथा'(11) 'यथोदकम्' (कठ.2-1-18,19) 'यथा सौम्यैकेन मृत्पिण्डेन' (छां.6-1-8) 'यथा प्रियया संपरिष्वक्तः' (बृ.6-6-21) 'यथा वृक्षः' (बृ.5-1-28) 'यथा सैन्धवघनः' (बृ.6-5-13) 'यथा प्रकाशयति' (गी.13-33) 'सूत्रे मणिगणा इव' (गी.7-7) 'क्षीरवद्धि' (ब्र.सू.2-1) इत्यादौ सर्वत्र सत्यभूतानामेव दृष्टान्तत्वमुक्तम् । कुत्रापि रज्जुसर्पशुक्तिरजतादिदृष्टान्ताः कुतो न प्रदर्श्यन्त इति गाढं चिन्तनीयम् । एवं सति अनन्तरकालिकाः पण्डिता रज्जुसर्पादिदृष्टान्तं कल्पयित्वा वृथाऽऽग्रहेण किमर्थं क्लिश्यन्तीति न जानीमो वयम् ॥

अयि भोः! त्वं वा एवं मुधाग्रहं कुतो वहसि जगतस्सत्यत्वसाधनाय । यदि जगत् सत्यं स्यात्, तत्कथं हेयं भवेत्? सम्यक् पृष्टमायुष्मता । जगतः सत्यत्वे जनानां तस्य त्याज्यत्वबुद्धिरेव न स्यादिति सद्भावनया जगन्मिथ्यात्वमातिष्ठसे यदि, तर्हि श्लाघनीयोऽसि त्वम् । यतस्त्वम्

'युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् । आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहंगतास्तत्र कथञ्चिदन्ये ॥' (श्लो.वा.निरा.201) इति भट्टपादोक्तदिशा न ग्राहंगतः । संमतेयमतिरेकोक्तिस्साधूनामपि लोकहितप्रवणमनसां कदाचित् । यथा 'जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः। यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥' (भाग.1-5-15) इति साक्षाद्व्यासं प्रति भगवन्नारदवचनम् ॥

परन्तु प्रकृतेऽबाधितत्वं हि सत्यपदप्रवृत्तिनिमित्तम् । 'यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्' इति हि **श्रीशङ्कराचार्यैरप्युक्तम्** । एतच्च तत्तद्वस्तुस्वरूपानुरोधेन तरतमभावापन्नम् । यद्यपि सत्यपदं परिपूर्णार्थदृष्ट्या ब्रह्मण्येव पर्यवस्येत्; तावतान्यत्र तत्पदं न प्रयोक्तव्यमिति तु आग्रहमात्रम् । अबाधितत्वं च देशतः, कालतः स्वरूपतश्चेति त्रिविधमबाधितत्वं परिपूर्णं ब्रह्मण्येव । इतरत्र तु तत्तद्देशकालस्वरूपैरबाधितत्वम् वर्तत एव । घटपटादिर्हि यस्मिन् देशे, यस्मिन् काले, येन रूपेण प्रतिपन्नः, तत्रैव देशे, तस्मिन्नेव काले, तेनैव रूपेण बाधः लोके यस्य कस्यापि दृश्यते वा? घटस्य नाशानन्तरं संपूर्णतया तस्य बाधो दृश्यते किलेति चेत्; 'घटस्य नाशानन्तरम्' इति कथनेनैव सः न घटस्य कालः इत्युक्तं भवति । तेन घटस्यानित्यत्वमात्रं ख्यापितं भवति, न मिथ्यात्वम् । रज्जुसर्पादिस्थले तु 'पूर्वमत्र असन्नेव सर्पो मया ज्ञातः' इति, सर्पभानकालदेशयोरेव सर्पभावः गृह्यते । अतः रज्जुसर्पो मिथ्या । नैवं वल्मीकस्थसर्पः कदाचिदपि कस्यचिदपि बाधितो दृष्टः ॥

न च अस्त्येव व्यावहारिकं सत्यत्वं घटादीनामपि । परन्तु तेषामपि ब्रह्मज्ञानेन दृश्यते बाधः इति जीवन्मुक्तदर्शनदृष्ट्या वाच्यम्; किमभिप्रेतमायुष्मतः? किं श्रवणजन्यब्रह्मज्ञानदृष्ट्या? किं समाधिकालिकब्रह्मानुभवदृष्ट्या, उत मुक्तिकालिकब्रह्मानुभवदृष्ट्या? नाद्यः, अननुभवात् । न द्वितीयः, तदा ब्रह्मभिन्नवस्तुग्राहकसाधनस्याभावादेव घटादेरग्रहणम्, न तु घटादेरभावात्; अन्यैस्तदैव तद्घटादेर्दर्शनात् । न चान्यदृष्ट्या घटादेस्सत्त्वेऽपि, तत्पुरुषदृष्ट्या तदा नास्त्येव घटादिरिति वाच्यम्, योग्यानुपलब्धिर्हि अभावे प्रमाणम् । योग्यता च समाधिस्थपुरुषस्य नास्त्येव । अतस्तदा न घटाद्यभावसिद्धिः । स्वप्नजाग्रदवस्थयो-र्वैलक्षण्याभावभ्रमादेवमुच्यते । स्वाप्नपदार्थाः खलु तत्तत्पुरुषमात्रानुभाव्याः । नैवं जाग्रत्पदार्थाः । एवं सति प्रत्ययस्सर्वोऽपि मिथ्या, प्रत्ययत्वात्; स्वाप्नप्रत्ययवत्, इति वदतो बौद्धस्य भवान् सोदरः । इष्टमेव तदिति चेत् 'वैधर्म्यं हि भवति स्वप्नजागरितयोः । किं पुनर्वैधर्म्यम्? बाधाबाधाविति ब्रूमः । बाध्यते हि स्वप्नोपलब्धं वस्तु । ... नैवं जागरितोपलब्धं वस्तु स्तंभादिकं कस्यांचिदप्यवस्थायां बाध्यते' (ब्र.सू.2-2-29शं.) इति भवदाचार्यवचनं मन्त्रवज्जप । न तृतीयः, 'केन कं पश्येत्' (बृ.4-4-14) इति मुक्तौ घटादिद्रष्टुरहमर्थ-नाशस्य भवताभ्युपगमात् प्रत्यभिज्ञाया असंभव एव । जीवन्मुक्ताः जगदेव न पश्यन्तीति केचन मन्यन्ते । रज्जुसर्पवल्मीकसर्पभेदस्तेषां नास्तीत्यपरे । एवं परस्परविरुद्धवर्णनमप्यस्माकं भूषणमेवेति च मन्यन्ते । जीवन्मुक्तिविषयः परीक्ष्यतेऽग्रतः (श्लो. 73) ॥

एते ह्युपहसन्तीह ज्ञानिनो बालिशा बत । कल्पनामात्रमेतत्तु वक्ष्यामो नाधिकं त्विह ॥

**[निष्प्रपञ्चीकरणनियोगवादनिरासः]**

**114. निर्दिष्टो निष्प्रपञ्चीकरणविधिरसौ गौडमीमांसकाप्तैः**
**दृष्टो न क्वापि; दुर्निर्वहमपि करणाद्यत्र साध्याविशेषात्।**

एतेन तुरीयोऽपि पक्षः समाहितः। वस्तुतस्तु मुक्तिकालिकानुभावमधिकृत्याग्रे विस्तरेण विचारयामः॥

यदीदं सर्वमुदस्य जगन्मिथ्यात्वमातिष्ठसे त्वम्, तदा साधनादीनां सर्वेषाम्, रामकृष्णाद्यवताराणाम्, भारतीयानां सर्वस्वस्य वेदस्य च मिथ्यात्ववासनयाऽतिक्लेशितव्यं भवेदिति हितबुध्योक्त्वोपरम्यते। अत एवैतन्मतमधिकृत्य प्राक्तनैरेवोक्तम्—'वेदोऽनृतो बुद्धकृदागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम्। बोद्धानृतो बुद्धिफले तथानृते यूयं च बौद्धाश्च समानसंपदः' इति। अस्माकं मते तु—जगतः सत्यत्वेऽपि सत्यात् सत्यतरः स्वात्मानुभवः, सत्यततमश्च भगवदनुभवो मुक्तिरिति न काप्यनुपपत्तिः॥

**वस्तुतस्तु**—जगतस्सत्यत्वसमर्थनमपि तस्य भगवद्विभूतिरूपत्वानुसन्धनार्थं वस्तुस्थितिकथनमेव। तेन च साधकस्य द्वंद्वातीतत्त्वं सुलभम्। जगन्मिथ्यात्वपक्षे जगतः हेयत्वमावश्यकम्। एवञ्च हेयोपादेयविभागे सति, कथं द्वंद्वातीतत्वम्। उच्यते च द्वंद्वातीतानामेव मुक्तिः गीतायामसकृत् 'द्वंद्वैर्विमुक्ताः' इत्यादि। ननु 'सत्यात् सत्यतमप्राप्तिर्मुक्तिः' इत्यनुपदमेवोक्तं भवता। तर्हि जगतो हेयत्वमप्यावश्यकम्। एवं सति द्वंद्वातीतत्वं कथमिति चेत्; वस्तुयाथात्म्यज्ञानार्थं तथोक्तम्। अपि च साधनारंभकालदृष्ट्या, परमात्मव्यतिरिक्ते वैराग्याय तथोक्तम्। साधनेन भगवति प्रसन्ने, जगतो भगवद्विभूतिरूपत्वेऽवगते तु, अस्य त्याज्यत्वभावनाप्यपगच्छति। अत एव 'वैकुण्ठवासेऽपि न मेऽभिलाषः' (व.पं. 54) इत्युद्घोषयन्ति। अतोऽन्ते यद्भविष्यति, तत् स्वयं सहजतो भवेत्, **उर्वारुकस्य बृन्तादिव** मोक्षः। अतो न काचिदनुपपत्तिः। नन्वस्माकमपि जगन्मिथ्यात्वसाधनादिकमप्येवमेवेत्यादिकं समानमेवेति चेत्, श्लाघनीयोऽसि तर्हीत्यादिकमप्युक्तमेव। तत्त्वतस्तु—**ऋतसत्य**पदयोर्यथावदर्थानिर्णयमूलक एव जगन्मिथ्यात्ववाद इति समनन्तरसरे स्पष्टीभविष्यति॥ ४३॥

एवं ध्याननियोगवादं निरस्य, भर्तृप्रपञ्चसंमतं **निष्प्रपञ्चीकरणनियोगवाद**मपि निराकरोति—**निर्दिष्ट इत्यादिना। असौ निष्प्रपञ्चीकरणविधिः गौडमीमांसकाप्तैः निर्दिष्टः**=निरूपितः **क्वापि**=कुत्रापि वेदे **न दृष्टः**='यजेत' इतिवत् कुत्रापि न हि दृश्यते। लिङर्थो हि नियोगः। 'सप्रपञ्चं ब्रह्म निष्प्रपञ्चं कुर्यात्' इति न हि दृश्यते। 'ध्यायथ' इत्यादिकं त्ववरमुक्तिसाधनोपासनाविषयकं तेषाम्॥

**अयं भावः**—नित्यमुक्तस्वरूपमपि ब्रह्म अविद्यावशात् प्रपञ्चरूपेण परिणतं सत् प्रपञ्चविशिष्टं भवति। तादृशी स्थितिः यदि निवर्तेत, तदा ब्रह्म शुद्धमवशिष्येत्; सैव मुक्तिः। एते किल स्वरूपपरिणामवादिनः **जरदद्वैतिन** इति प्रसिद्धाः, न विवर्तवादिनः, मीमांसासंप्रदायनिष्ठाः। मीमांसायां विधिरेव प्रधानभूतः। अत एवात्र 'गौडमीमांसक' इति सोपहासोक्तिः। अयं च **निष्प्रपञ्चीकरणनियोगवादः** 'न दृष्टेर्द्रष्टारं पश्येः'(बृ.5-4-2) इत्यादिविधिमूलः उभयलिङ्गाधिकरणे

'दर्शनाच्च' (ब्र.सू.3-2-21) इत्यत्र श्रीशङ्कराचार्यैः विस्तरेण खण्डितः । एवं 'तत्त्वमसि'इति वाक्यजन्यज्ञानादेव बन्धनिवृत्तिः । श्रवणसमनन्तरं बन्धनिवृत्तिः न दृश्यते किल, तत् कुतः? इति प्रश्ने; चिरकालाद्दृढाया भेदवासनायाः प्रबलत्वात् असकृत् श्रवणमनननिदिध्यासनैः भेदवासनायाः क्षये, तदेव पूर्वश्रुतं 'तत्त्वमसि' इत्यादिवाक्यं प्रत्यक्षरूपं ज्ञानं जनयति । तेन प्रत्यक्षरूपः भेदप्रपञ्चोऽपि निवर्तते इति शाङ्करमते, तत्राऽपि विवरणकारमतेऽभिधीयते । अयमेव शाब्दापरोक्षवादः अनुपदं (श्लो.46) परीक्ष्यते । **भामती** तु मानसापरोक्षं वर्णयति । प्राचीनाद्वैतिमण्डनमिश्रसंमते **ध्याननियोगवादे,** ध्यानविध्यर्थभूतनियोगबलात्, मानसिकमद्वैतापरोक्षज्ञानं जायते, यथा अग्निहोत्रयागजन्यनियोगबलात् कालान्तरे स्वर्गो भवति, तथा । **भामतीकारो** वाचस्पतिमिश्रोऽपि मानसापरोक्षवादीत्युक्तम् । अयं ध्याननियोगवादः श्रीशङ्कराचार्यैः समन्वयाधिकरणे दूष्यते । भगवद्रामानुजैस्तु इदं द्वयमपि, शाब्दापरोक्षवादेन सह समन्वयाधिकरण एवादूषि ॥

ननु, 'न दृष्टेः द्रष्टारं पश्येः' इति श्रुतिरेव तादृशनियोगविधिः । 'दृष्टेः' इति पञ्चमी वा षष्ठी वा । दृष्ट्यपेक्षया द्रष्टारं न पश्येः; दृष्टेः कर्तारं न पश्येः, किन्तु दृष्टिरूपमेव पश्येः । धर्मास्त्वौपाधिकाः, न तु मिथ्याः । भर्तृप्रपञ्चो हि परिणामवादी, न तु विवर्तवादी । अत एव श्रीशङ्कराचार्यैः बहुधा स खण्ड्यते । अविद्यारूपोपाधिवशात् ज्ञातृत्वादयो धर्माः सांख्यवदौपाधिकाः । एवमौपाधिकधर्मविशिष्टं ब्रह्म, निरुपाधिकं शुद्धं कुर्यात्=जानीयात् इत्यर्थः । अतः 'विधिः न दृष्टः' इति न युक्तमिति चेत्, तत्राह— **दुर्निर्वह इत्यादि** । एवम् **अत्र**=अस्मिन् निष्प्रपञ्चीकरणनियोगे, **साध्याविशेषात्**=साधनस्य साध्येन साकं वैलक्षण्याभावात् **हेतोरसिद्ध्या करणादि**=करणम्, इतिकर्तव्यतादि च **दुर्निर्वहम्**=निरूपयितुमशक्यम् । एतादृशरीत्या विध्युपपादनमपि दुर्निर्वहम्, अत्र करणाद्यपि **दुर्निर्वहम्; साध्याविशेषादिति हेतुः** । 'न दृष्टेः' इत्यादेः द्रष्टारम्=दर्शनकर्तारम् आत्मानम् दृष्टेः अन्यम्=दृशिभिन्नम्, जडरूपं न पश्येः इत्यर्थः। वैशेषिका हि आत्मानं दर्शनकर्तारम् मन्यन्ते=ज्ञानाश्रयमेव मन्यन्ते न तु ज्ञानस्वरूपम् । तन्निवृत्त्यर्थं दर्शनकर्तारम्=ज्ञातारं सन्तं ज्ञानरूपं पश्येरित्यर्थः । अथवा दृष्टेर्द्रष्टारम्=पाकं पचतीतिवत् प्रयोगः । परैरपि एवमेव विवृतम् । दृष्टेः द्रष्टारं न पश्येः, किन्तु दृष्टिरूपमेव पश्येः इत्यर्थः । नायमर्थः शब्दलभ्यः । दृष्टेर्द्रष्टारं लोकसिद्धं जीवात्मानं न पश्येः, किन्तु परमात्मानं पश्येः इत्यप्यर्थो वक्तुं शक्यः। अतः तदुक्तं दुर्निर्वहम् । एवं अत्र करणाद्यपि दुर्निर्वहम् । नियोगस्य करणम्, इतिकर्तव्यतादि च किमिति वक्तव्यम् । यथा 'यजेत' इत्यादौ यागः करणमुच्यते । अत्र प्रपञ्चविलयः यदि करणम्, तदा 'प्रपञ्चविलयेन निष्प्रपञ्चं कुर्यात्' इति वक्तव्यम् । एवं सति 'निष्प्रपञ्चरूपनियोगस्य साध्यम्, प्रपञ्चविलयरूपकरणं च समानमेवेति, साध्यहेत्वोः समानत्वेन सिद्धसाधनं दोषः । करणस्यैवाभावेन इतिकर्तव्यता च दुर्वचा । एवं प्रयोक्ता च दुर्वचः । द्रष्टा खलु प्रयोक्ता, द्रष्टृत्वस्य निवृत्तौ प्रयोक्तुर्निवृत्त्या, स्वनाशार्थं स्वस्य प्रयत्नः बुद्धिमतः कस्य वा भवेत् । शुद्धं चैतन्यमवशिष्यत इति चेत्, तस्याहमर्थत्वाभावेन, प्रयोक्तुश्चाहमर्थत्वात्, स्वनाशपर्यवसानमनिवार्यम् । अतः करणाद्यपि दुर्निर्वहम् ॥

**मुक्तिर्नैयोगिकी चेत् , जगदपि न मृषा; नश्वरी सापि ते स्यात्**
**ध्वंसात्मत्वेऽपि तस्या न च वदसि भिदां ब्रह्मणस्तच्च नित्यम् ॥ ४४ ॥**

**[वाक्यजन्यज्ञानं न मोक्षसाधनम्]**

115. **वाक्यार्थज्ञानमात्रादमृतमिति वदन्मुच्यते किं श्रुतेऽस्मिन्?**
**बाढं चेत् मानबाधः, स यदनुभवति प्रागिवाद्यापि दुःखम् ।**

---

अपिच—**मुक्तिः यदि** स्वर्गादिवत् **नैयोगिकी**=नियोगसाध्या चेत्, तर्हि जगदपि **मृषा**=मिथ्या **न स्यात्**। मुक्तिर्हि बन्धनिवृत्तिः । सा यदि नियोगाद्भवेत्, तदा स्वर्गादिवत् **सापि**=मुक्तिरपि **ते नश्वरी**= अनित्या स्यात् । बन्धस्य नाशः=ध्वंसः। स च नित्यः । अतः नियोगसाध्यत्वेऽपि=तस्य नानित्यत्वमिति चेत्; **तस्याः**=मुक्तेः **ध्वंसात्मत्वेऽपि**=ध्वंसरूपत्वेऽपि **ब्रह्मणः भिदाम्**=भेदम् **न च वदसि**=न हि वदसि, स्वरूपाविर्भावः खलु मोक्षः । अतो ध्वंसः ब्रह्मस्वरूप एव । अस्तु का हानिः? इति चेत्— **तच्च**=ब्रह्म च **नित्यम्**। तस्य कथं नियोगसाध्यत्वम्? ॥

ननु सर्वेषामपि मते मुक्तेः प्रयत्नसाध्यत्वेऽनित्यत्वप्रसङ्गभिया, प्रतिबन्धकनिवृत्तावेव मनुष्यप्रयत्नानां सार्थक्याङ्गीकारात्, परमते वा कानुपपत्तिरिति चेत्; न। अस्मत्सिद्धान्ते मानवप्रयत्नस्य तावत्येव पर्यवसानेऽपि, न तावन्मात्रा मुक्तिः । किन्तु इष्टप्राप्तिरुपोंऽशः अतिरिक्तस्तत्र वर्तते । स तु भगवत्कृपासाध्यः । ननु व्यावहारिकदृष्ट्या तत्सूत्रं प्रवृत्तम्, न तु पारमार्थिकदृष्ट्येति चेत्; अश्रौषमिमं सङ्गीतकं बहुकृत्वः । तर्हि पारमार्थिकदृष्ट्या कथ्यतां किञ्चित्, श्रोष्यामः । यद्यदुच्यते, तत्सर्वं व्यावहारिकमेव । अवाच्यम्, अवेद्यं च हि परमतत्त्वं भवताम् । तदेतत् बहु विचारितं पूर्वम्, शिष्टं विचारयिष्यतेऽग्रे (नाय.4) । 'एष ह्येवानन्दयाति' (तै.आ.) 'तद्धेतुव्यपदेशाच्च' (ब्र.सू.1-1-14) 'फलमत उपपत्तेः' (ब्र.सू.3-2-47) । इति श्रुतिसूत्रादिभिः ब्रह्मण एव मुक्तिहेतुत्वमुच्यते इति नास्मत्सिद्धान्ते काचिदनुपपत्तिः । अधिकं पश्चात् (नाय.30) । मुक्तेर्नियोगसाध्यत्वं तु न संभवत्येव, मुक्तेः स्वर्गतौल्यप्रसङ्गात् ॥

**वस्तुतस्तु—भर्तृप्रपञ्चस्य स्वरूपपरिणामवादित्वात्,** प्रपञ्चस्य मिथ्यात्वम् न संमतम्, किन्तु मायिकत्वमात्रम् । 'स्याल्लोकवत्' (ब्र.सू.2-1-13) इत्यत्र फेनबुद्बुदतरङ्गन्यायेन ब्रह्मणः परिणामस्तेनावर्णि । अतो जगन्मिथ्यात्ववाद उक्तं दूषणं नात्र लगति । अथापि, तन्मतग्रन्थस्य लुप्तत्वात्, निर्गुणत्वादेस्समानत्वाच्च निर्गुणवादोक्तदूषणैरस्यापि दूषितत्त्वं मत्त्वैवमुक्तमिति द्रष्टव्यम् ॥ ४४ ॥

एवं प्राचीनमद्वैतमतद्वयं निराकृत्य, अन्तिमं शाब्दापरोक्षवादं निराकरोति—**वाक्यार्थेत्यादि। वाक्यार्थज्ञानमात्रात्**='तत्त्वमसि' इत्यादिवाक्यजन्यब्रह्मात्मैक्यज्ञानादेव**अमृतम्**=मोक्षः भवति**इति वदन्**भवान्, **अस्मिन्**=एतादृशवाक्ये**श्रुते मुच्यते किम्**=संसारबन्धात् मुक्तो भवति किम्? **बाढं चेत्**'सत्यम्, भवति' इति चेत्, **मानबाधः**=प्रत्यक्षविरोधः, **यत्**=यस्मात्**सः**=तादृशश्रवणजन्यज्ञानवान्**प्रागिव**=तादृशवाक्यश्रवणात् पूर्वं यथा, तथैव**अद्यापि**=श्रवणानन्तरमपि**दुःखम्**=संसारदुःखम्**अनुभवति**, तस्मात्**मानबाधः**इत्यन्वयः॥

**ध्यानादीनां विधानं भवति च वितथं, तन्न युक्तं न चेष्टं**
**ध्यानाद्यङ्गाढ्यशब्दोदितचरममतेर्नाधिकं वः प्रकाश्यम् ॥ ४५ ॥**

**अयमाशयः**—'द्वितीयाद्वै भयं भवति' (बृ.3-4-2) इति भेदज्ञानमेव भयकारणमुच्यते। स एव संसारः, बन्ध इति च कथ्यते। अद्वितीयत्वज्ञानमेव एतद्भयनिवृत्तिकारणम्=बन्धनिवृत्तिकाणम्। बन्धनिवृत्तिरेव चामृतत्त्वमित्यपि सिद्धम्। अतश्च 'तत्त्वमसि' 'अयमात्मा ब्रह्म' (बृ.6-4-5) इत्यादिब्रह्माद्वैतज्ञानमेव मुक्तिहेतुः=बन्धनिवृत्तिहेतुः सिद्धः। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'(ब्र.4-4-5, 6-5-6)इत्यत्रोक्तं श्रवणं चाद्वैतवाक्यश्रवणमेवात्मदर्शनहेतुः प्रतिपाद्यते। श्रवणजन्यमेतद्ज्ञानमेव वाक्यजन्यवाक्यार्थज्ञानं मुक्तिहेतुरुच्यते। अत्रैवं प्रश्नः—वाक्यजन्यमेतादृशज्ञानं तादृशवाक्यं श्रुतवतः व्युत्पन्नस्य सर्वस्यापि जायते। तत्राप्रामाण्यादिज्ञानमपि नास्त्येव। अथापि तस्य बन्धनिवृत्तिः तावन्मात्रादेव भवति वा? यदि भवतीत्युच्यते; कस्यापि तथा नानुभवः किल; पूर्ववदेव संसारबन्धस्तथैवानुभूयते किल। अत इदमनुभवविरुद्धम्॥

ननु उक्तमत्र समाधानम्—'नावगतब्रह्मात्मभावस्य यथा पूर्वं संसारित्वम्। यस्य तु यथापूर्वं संसारित्वम्, नासाववगतब्रह्मात्मभावः' इतीति चेत्तत्राह—**ध्यानादीनामित्यादि। आदिना** मननग्रहणम्। 'श्रोतव्यः' इत्युक्तवाक्यजन्यवाक्यार्थज्ञानमात्रेण यदि संसारनिवृत्तिः, तर्हि 'मन्तव्यः निदिध्यासितव्यः', **इति मननध्यानयोः विधानं वितथम्**=व्यर्थं **भवति। तत् न युक्तम्**=श्रुतिवाक्यस्य वैयर्थ्यं न हि युक्तम्। यूपादित्यादिवाक्यवत् गत्यन्तराभावे किं कर्तुं शक्यते? इत्यत्र—**न इष्टं च**=नाङ्गीकृतं चेति॥

दार्शनिकस्तु **भामतीकारः**, 'शतशःसंस्कृतमपि कलमबीजं न हि यवाङ्कुरं जनयेत्' इति न्यायेन शब्दस्यापरोक्षजनकत्वासंभवं पश्यन्, मानसमेवापरोक्षं ज्ञानमित्याह। यद्यपि श्रीशङ्कराचार्यैः परोक्षज्ञानम् अपरोक्षभ्रमनिवर्तकं न भवेत्—इति वादः नाङ्गीकृतः। अत एव 'वेदप्रमाणजनितब्रह्मात्मभावस्य संसारनिवृत्तिरवश्यं भवेत्' इति वेदोपर्येव भारो निक्षिप्यते तैः। अत एवात्र पूर्वम् (श्लो.43) परोक्षादपि प्रत्यक्षबाधः उपपादितः। अतोऽत्र शाब्दापरोक्षवादस्य नास्त्यावश्यकता; तथापि, 'परोक्षत्वापरोक्षत्वे न प्रमाणस्वरूपकृते; किन्तु प्रमेयस्वरूपकृते' इति बौद्धवादमवलम्ब्य शब्दस्यापरोक्षजनकत्वं विवरणकृता साध्यते। आहत्य च, पक्षत्रयेऽपि ध्यानमननयोस्सार्थक्यम्। भेदवासनाया बहोःकालादेव रूढमूलत्वात् श्रवणमात्रेण भेदवासनाधीनो भ्रमो न निवर्तेत। अतः पुनः पुनः श्रवणं मननं ध्यानं चावश्यकमेवेति न वैयर्थ्यमित्यत्राह—**ध्यानादीति। ध्यानादिभिः अङ्गैः आढ्येन**=प्राप्तबलेन **शब्देन उदिता**=उत्पन्ना या **चरमा**=अन्तिमा **मतिः**=अपरोक्षरूपं ज्ञानम्, **तस्यापि प्रकाश्यम्**=प्रकाशनीयम्, **अधिकम्**=अधिकांशः **वः**=निर्विशेषवादिनस्तव **न**=न भवत्येव। प्राथमिकश्रवणजन्यज्ञानापेक्षया मननिदिध्यासनयोः अधिकविषयत्वे, ताभ्यां प्रथमोत्पन्नज्ञानस्य पोषणं न सर्वथा भवेत्, भिन्नविषयकत्वात्। निर्विशेषवादे ब्रह्मविषयकज्ञानेषु तारतम्यादिकं न संभवति। एवं अधिकविषयत्वाभावे सति प्राथमिकं ज्ञानं न भ्रमनिवर्तकम्, अन्तिमं तु

निवर्तकमिति कथं युज्यते? परोक्षत्वापरोक्षत्वे तु न प्रयोजके इति च दर्शितमेव (श्लो. 43) । निरस्यते च समनन्तरश्लोक एव शब्दापरोक्षवादोऽपि । अतश्च वाक्यार्थज्ञानमपि न मोक्षसाधनम्, किन्तु भक्तिरूपापन्न-मुपासनात्मकं ज्ञानमेव । दूराद्वा रज्जुं पश्यन् 'अयं सर्पः' इति भ्राम्यति पुरुषः । समीपमुपसर्पन्, 'नायं सर्पः, किन्तु रज्जुः' इति निश्चिनोति । दीर्घत्वादिसामान्याकारदर्शनेन भ्रमः । सर्पत्वादिविशेषाकारदर्शनेन च भ्रमनिवृत्तिः । एवञ्च भ्रमसंशयादिकम्, तन्निवृत्तिर्वा वस्तुनस्सधर्मकत्व एव संभवेत् । ब्रह्म तु निर्वि-शेषम् । तत्रोत्पन्नं ज्ञानं सर्वदैकरूपमेव भवेत् । एवं सति प्रथमोत्पन्नं ज्ञानं न संसारभ्रमनिवर्तकम्, अनन्तरमुत्पन्नं तु निवर्तकमित्येवं विभागो निर्विशेषवादे दुरुपपाद एव ॥

**अत्रायमाशयः परेषाम्**—ध्यानादीनामुपयोगे पक्षत्रयं दृश्यते । प्रथमः पक्षः श्रीमदाचार्याणाम्—उत्तमसंस्कारवतां सकृच्छ्रवणेनापि बन्धनिवृत्तिर्भवेत् । न्यूनसंस्कारवतां अधिकारिभेदेन असकृच्छ्रवणम्, श्रवणमनने, श्रवणमनननिदिध्यासनानि चावश्यकानि । 'प्रज्ञामान्द्यं भवेद्येषां तेषां न श्रुतिमात्रतः । स्याद-खण्डाकारवृत्तिः विना तु मननादिना । श्रवणान्मननाद्ध्यानात्तात्पर्येण निरन्तरम् । बुद्धेः सूक्ष्मत्वमायाति ततो वस्तूपलब्धये ॥' (स.सि.सं.809,810) इत्यादाविदं स्पष्टम् । अत्र श्रवणमननध्यानादीनां त्रयाणामपि दर्शनार्थत्वमविशेषेणैवोक्तम् । सूत्रभाष्येऽपि 'मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात्' (ब्र.सू.भा. 1-1-4.शं.) इति श्रवणवदेव इतरेषामपि स्वतंत्रताभिहिता । एतद्विवरणरूपावेव **सर्ववेदान्तसिद्धान्तसार-संग्रह**श्लोकौ । परमात्मनो जीवात्मनश्च मध्ये मायैव जगन्मोहिनी यवनिका । 'गुणमयी मम माया' (गी.7-14) इति वचनं को वा वेदान्ती विस्मरति ॥

परन्तु 'सा दुरत्यया' इत्युक्तं तु प्रायः बहवो विसस्मरुरिव, यस्यैवेदं फलं तर्कदूरमपि वेदान्तशास्त्रं तर्कशास्त्रादपि शतगुणं तर्कीकृतम् । मायाया अव्यक्तपदवाच्यायाः व्यक्तं प्रथमं तत्त्वम् 'बुद्धिः' इत्युच्यते । बुद्धिरेव जीवानां प्रथमा माया । अस्य परमसत्यभूतस्य प्रत्यक्षं निदर्शनम्—आचार्यग्रन्थानन्तरकालिकी व्याख्यानपरंपरा ॥

तत्र पञ्चपादिकाविवरणकारः **प्रकाशात्मयतिः** 'तत्त्वमसि' इति शब्द एवात्मापरोक्षं जनयतीति साधयन् **'शब्दापरोक्षवादी'** इति प्रथामवाप । सोऽयं द्वितीयः पक्षः। अन्यश्च महादार्शनिक इति प्रसिद्धो **वाचस्पतिमिश्रः** भामतीकारः शब्दस्य परोक्षज्ञानसाधनस्यापरोक्षज्ञानजनकत्वासंभवं जानन्, आत्मापरोक्षं मानसं वदन् **'मण्डनमिश्रानुकारी मानसापरोक्षवादी'** इति प्रथांमवाप । सोऽयं तृतीयः पक्षः । इदं व्याख्यानद्वयम् 'विवरणप्रस्थानम्', 'भामतीप्रस्थानम्' इति व्यवह्रियते । तत्र प्रथमव्याख्यापक्षे—सत्यम् ; प्राथमिकं वेदान्तवाक्यश्रवणजन्यं ज्ञानं न संसारनिवर्तनक्षममेव । परं तु संसारो हि अपरोक्षभ्रमरूपः, वाक्यजन्यं ज्ञानं तु परोक्षं ज्ञानम् । परोक्षं ज्ञानम् अपरोक्षभ्रमनिवर्तकं कथं भवेत्? अतः मनननिदि-ध्यासनापोद्बलितं तु पूर्वश्रुतवाक्यजन्यं ज्ञानमपरोक्षतां प्राप्नोति । तस्य पूर्वश्रुतवाक्यमेव करणम् । स्वतः परोक्षज्ञानसाधनमपि शब्दः मनननिदिध्यासनसंस्कृतः अपरोक्षज्ञानसाधनं भवति । 'औपनिषदं पुरुषम्' (बृ.5-9-26) इति परमात्मनः औपनिषदत्वश्रवणात् । उपनिषदेकगम्य त्वं सर्ववेदान्तिसंमतम् । परन्तु उपनिषत्पदं ब्रह्मविद्यापरम् । शाब्दापरोक्षवादस्तु बौद्धवासनामूल इति स्पष्टम् ॥ ४५ ॥

[शाब्दापरोक्षवादनिरासः]

**116. उद्देश्यांशं त्वमाद्यं स्फुटमनुभवतां सम्यगध्यक्षवित्त्या**
**प्रत्यक्षत्वभ्रमोऽयं त्वमसि दशम इत्यादिवाक्यार्थबोधे ।**

परैरुपपादितं शाब्दापरोक्षवादं विमृशति—**उद्देश्येत्यादि** । पूर्वपक्षे काचनाख्यायिका वर्ण्यते । दशजना मिलित्वा कदाचित् देशान्तरं प्रतस्थिरे । मध्ये काचन महानदी तर्तव्याभूत् । कथंचित् तीर्त्वा पारंगतानां सर्वेषां मनसि संशयोऽभूत् 'सर्वेऽपि वयं तीर्णा वा, न वा' इति । तत्परिहाराय सर्वेषां गणनाय प्रवृत्तास्सर्वेऽपि आत्मानं परित्यज्येतरानेव गणयामासुः । तेन नवसंख्याका एव सर्वैरपि गणिताः । दशमस्यागणनात्, ते सर्वेऽपि 'दशमः नद्यां मृतः' इति दुःखिताः आक्रन्दनायोपचक्रमिरे । तेषामाक्रन्दनं श्रुत्वा पान्थः कश्चिदागत्य यदा कारणं पप्रच्छ, तदा ते 'वयं दशजनाः नदीं तीर्त्वाऽऽगताः। अस्मासु कश्चित् जले मग्नो मृतः' इत्युत्तरमवदन् । 'सन्ति किल यूयं दश' इति पान्थेनोक्ते, 'कथम्? पश्य, वयं नवैव वर्तामहे' इत्यात्मानं परित्यज्य परिगणय्य 'पश्य नवैव वयम्' इत्यवदन्नेकैकशः । तदा तेषामज्ञानं दृष्ट्वा स पान्थः 'त्वया नव गणिताः किल तर्हि त्वं दशमोऽसि' इति तं यदा प्रदर्शयामास, तदा सः 'दशमोऽहम्' इत्यात्मानं जानाति स्मेति ग्रामीणा कल्पिता कथा । तत्र अहमर्थस्य स्वयंप्रकाशत्वात् 'दशमोऽहम्' इति ज्ञानं स्वप्रकाशप्रत्यक्षरूपम् । तस्य च कारणम् 'दशमस्त्वमसि' इति पान्थस्य वचनमेव । अतः विषयस्यात्मनः स्वप्रकाशत्वेनापरोक्षत्वात्, शब्देन जायमानमपि ज्ञानं अपरोक्षमेव भवेत् । यथा वयं पुरतः घटादिकं चक्षुषा पश्यामः, तदा 'घटोऽयम्' इति केनचिच्छब्दे प्रयुक्ते, तेन शब्देन पुरतो दृश्यमानघटविषयकं ज्ञानं जायते । घटस्य दृश्यमानत्वात्, तेन शब्देनापि प्रत्यक्षघटज्ञानमेव जायेत, नान्यत् किञ्चिद् ज्ञानं भवेत् । अतः शब्दः अपरोक्षवस्तुबोधकः अपरोक्षरूपमेव ज्ञानं जनयेदिति शब्दापरोक्षवादः न निराकर्तुं शक्य इति ते मन्यन्ते ॥

तदेतत् निराक्रियत—**'त्वं दशमः असि' इत्यादिवाक्यार्थबोधे**=तादृशवाक्यजन्ये दशमपुरुषविषयक शाब्दबोधे, **उद्देश्यांशम्**=उद्देश्यभागरूपम् **त्वमाद्यम्**='त्वम्' इत्याद्यंशम् **सम्यगध्यक्षवित्त्या**=स्वयंप्रकाशरूपज्ञानेन **स्फुटम् अनुभवताम्**=स्पष्टमनुभवतां नराणाम् **अयम्**=उक्तानुभवः **प्रत्यक्षत्वभ्रमः**, न तु सः दशमत्वविशिष्टविषयकः प्रमारूपः प्रत्यक्षानुभवः, किन्तु परोक्ष एवानुभवः ॥

**अयमर्थः**—'त्वम् दशमः' इति वाक्ये 'त्वम्' इति उद्देश्यम् । 'दशमः' इति विधेयम् । ज्ञातम् उद्देश्यम्, अज्ञातं विधेयमिति व्यवस्था । 'त्वम्'शब्दस्य पुरोवर्तिचेतनवाचित्वात् तत् श्रुतवतःपुरोवर्तिनः स्वविषयकम् 'अहम्' इति ज्ञानं जायते । लोके पुरतः घटादिकं पश्यतां तद्विषयकः 'घटः अस्ति न वा?' इति संशयो यथा न जायते । तद्वदेव स्वविषयकः 'अहमस्मि न वा' इतिसंशयः कस्यापि न जायते । कुतः? स्वात्मनः सदा स्पष्टं भासमानत्वादेव । इदमेव स्वयंप्रकाशत्वम् । 'त्वं दशमः' इतिवाक्येन जाते 'अहं दशमः' इति ज्ञाने अहंपदार्थो विशेष्यतया स्वयंप्रकाशते । विशेषणभूतं दशमत्वं तु न स्वयंप्रकाशम्,

किन्तु शब्दजन्यमेव। वेदान्तिनां सर्वेषामात्मनः स्वयंप्रकाशत्वात् 'अहं गच्छामि' इत्यनुभवेऽपि 'अहम्' इत्यंशः स्वयंप्रकाशः। गमनरूपा क्रिया तु न स्वयंप्रकाशा। विशेष्यस्यात्मनःस्वप्रकाशत्वात् 'अहं गच्छामि' इत्यनुभवः संपूर्णोऽपि स्वप्रकाश इव भाति। यथा नैयायिकानां 'सोऽयं घटः' इति ज्ञानं प्रत्यभिज्ञाप्रत्यक्षमित्युच्यते। वस्तुतस्तु तत्र 'अयं घटः' इत्यंश एव प्रत्यक्षः। 'सः' इत्यंशस्तु न प्रत्यक्षः। तस्य पूर्वकालसंबन्धरूपत्वेन, तस्य तदानीमभावेन तदंशे स्मरणमेव। अथापि 'सोऽयं घटः' इति विशिष्टं ज्ञानमपि प्रत्यभिज्ञाप्रत्यक्षमित्युच्यते, प्रत्यक्षांशप्रभावात्। तद्वदेव 'अहं दशमः' इत्यत्र 'अहम्' इति विशेष्यांशस्य स्वप्रकाशत्वात् 'अहं दशमः' इति विशिष्टं ज्ञानमपि स्वप्रकाशप्रत्यक्षमिव भाति। अथवा तत्र भूतात्मनः तथाभावात् भूतात्मनोऽपि स्वप्रकाशत्वात् सः स्वप्रकाशानुभवः। सूक्ष्ममतयस्तु जानन्ति इमं सत्यांशम्॥

यदि च 'दशमोऽहम्' इति दशमत्वविशिष्टज्ञानस्यापरोक्षरूपत्वात्, तत्करणभूतस्य शब्दस्याप्यपरोक्षज्ञानजनकत्वमागतमित्युच्यते, तर्हि 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञाप्रत्यक्षसामग्र्यन्तर्गतस्य संस्कारस्यापि अपरोक्षज्ञानजनकत्वं स्यात्। अपि च विशिष्टज्ञानवादिनो हि वैशेषिकाः। 'पर्वतो वह्निमान्' इत्यादावपि, पर्वतांशे प्रत्यक्षत्वम्, वह्न्यंश एव अनुमितित्वमिति वदतां वेदान्तिनां तु 'दशमोऽहम्' इत्यत्रापि, 'अहम्' इति विशेष्यमेव स्वप्रकाशप्रत्यक्षरूपम्, दशमत्वरुपविशेषणं शब्दोपस्थाप्यमेवेति, विशिष्टमेकं ज्ञानं न प्रत्यक्षरूपमिति, शब्दस्य प्रत्यक्षजनकत्वोपपादनं निर्मूलम्। अधिकमन्यत्र॥

**इदमत्रावधेयम्**—नैयायिकाः सर्वत्र विशिष्टज्ञानैक्यवादिनः='सोऽयं घटः' इत्यादिकं किञ्चिद्विशेषणविशिष्टविशेष्यविषयकज्ञानम् एकमिति ते वदन्ति। वेदान्तिनस्तु—'सः' इत्यंशस्स्मृतिरूपः; 'अयम्' इत्यंशस्तु प्रत्यक्षरूपः। अतः ग्रहणस्मरणात्मकज्ञानद्वयरूपा 'प्रत्यभिज्ञा' नैकं ज्ञानमिति वदन्ति। बौद्धा अप्येवमेव वदन्ति। परन्तु स्मृतेः प्रामाण्यं नाङ्गीकुर्वन्ति। अतः तेषां प्रत्यभिज्ञया न वस्तूनां स्थिरत्वसिद्धिः। वेदान्तिनस्तु स्मृतेः प्रामाण्यमङ्गीकुर्वन्ति। तेन प्रत्यभिज्ञापि प्रमाणमिति साधयन्ति। परन्तु 'सः' इति 'अयम्' इति च भिन्नं ज्ञानं चेत्, उभयोः संयोजकं किम्? 'नीलो घटः' इति ज्ञाने 'नीलः' पटोऽपि भवितुमर्हति। 'घटः' रक्तोऽपि भवितुमर्हति। प्रत्येकयोर्नीलघटपदार्थयोः संयोजकः विशेषणविशेष्यभावः। स च विशेषणविशेष्यभावः 'नीलो घटः' इति विशिष्टबुद्धित्वप्रयुक्तः। 'नीलो घटः' इति बुद्धिः यदि विशिष्टबुद्धिर्न स्यात्, तदा 'नीलघटौ' इति समूहालम्बनबुद्धिरूपा सा स्यात्। अथवा 'नीलः घटश्च' इति समुच्चयबुद्धिरूपा सा स्यात्। अत्र स्थलद्वयेऽपि नीलपदार्थः अन्यः, घटपदार्थश्चान्यः। समूहालम्बने नानाविशेषणविशेष्यभावः प्रतीयते। 'नीलः' इत्यत्र नैल्यविशिष्टो नीलः कश्चित् पदार्थः, 'घटः' इत्यत्र घटत्वविशिष्टः घटः कश्चित्पदार्थश्च स्वतन्त्रतया प्रतीयते। अतः तत्र इतरेतरयोगे द्वंद्वसमासः। समुचये तु प्रत्येकं क्रियान्वयः; अतो न समासः॥

एवञ्च प्रत्यभिज्ञायां 'सः' इति स्मृतिरूपमन्यत् ज्ञानम्, 'अयम्' इति प्रत्यक्षरूपमन्यत् ज्ञानमिति यदि स्यात्, तदोभयोः संयोजकः कः? 'सोऽयम्' इति तु उभयोर्विशेष्यविशेषणभावो भासते। तेन तत्

एकमेव ज्ञानमिति च ज्ञायते। **बौद्धानां** तु पदार्थानां क्षणिकत्वात् तत्पदार्थः अन्यः, इदंपदार्थश्चान्यः। उभयोरैक्यज्ञानं तु 'सेयं दीपज्वाला' इतिवत् भ्रान्तिरेव। एवञ्च प्रत्यभिज्ञायां वस्तूनां स्थिरत्वप्रयुक्तमैक्यं न स्यादिति तेषामिष्टसिद्धिः। **नैयायिकानां** तु एकज्ञानत्वात्=विशिष्टबुद्धित्वात् वस्त्वैक्यसिद्धिः। **वेदान्त-सिद्धान्ते** का गतिः? न च 'पर्वतो वह्निमान्' इत्यत्र पर्वतः प्रत्यक्षः, वह्निरनुमेयः। एवं ज्ञानभेदेऽपि 'पर्वतो वह्निमान्' इति विशेष्यविशेषणभावमूलकः विशिष्टप्रत्ययः दृश्यते। एवमेव 'सोऽयम्' इत्यत्रापि भिन्नज्ञानोपस्थापितयोरपि निरूप्यनिरूपकभावप्रयुक्तो विशेषणविशेष्यभावो भासत एवेति चेत्, क एवमाह पर्वतः प्रत्यक्षः, वह्निरनुमेय इति? दृश्यते किल पर्वतः पुरत इति चेत्, किं पर्वतस्याप्रत्यक्षत्वे 'पर्वतो वह्निमान्' इत्यनुमितिरेव न भवेदिति मन्यसे त्वमायुष्मन्! कुत्र कथं तर्हि वह्निः सिद्ध्येत्? किं न जानास्यनुमितेर्वृत्तम्? 'पर्वतो धूमवान्' इति पक्षधर्मताज्ञानवेलायामेव चक्षुरिन्द्रियं विरतम्, स्वार्थानुमाने। अनन्तरं चक्षुर्निमीलनेऽपि, व्याप्तिस्मरणम्, परामर्शश्चेति मानसमेव। ततश्च 'पर्वतो वह्निमान्' इति ज्ञानं भवति व्याप्तिपरामर्शयोः बलात्। अतः 'पर्वतो वह्निमान्' इति विशिष्टमेकमेव ज्ञानम्। न च चक्षुर्निमीलने तथात्वेऽपि, चक्षुरुन्मीलनकाले पर्वतः प्रत्यक्ष एव खल्विति शंक्यम्; युगपद्ज्ञानद्वयस्यासंभवात्; पर्वतप्रत्यक्ष-मन्यदेव 'पर्वतो वह्निमान्' इत्यनुमितिरन्यैव। तस्य ज्ञानद्वयरूपत्वकथनं बौद्धैः प्रत्यभिज्ञायास्तथात्वकथनमनु-सृत्याभ्युपेत्योक्तमिति नेयम्। अधिकमप्रसक्तमत्र॥

नन्वथापि आत्मनः स्वप्रकाशत्वेन स्वयमेवोपस्थिततत्वात् 'अहं जानामि' इत्यत्र भिन्नसामग्र्युप-स्थापितयोरप्यस्ति विशेष्यविशेषणभाव इति चेत्; आत्मनोऽस्वप्रकाशत्वपक्षेऽस्याक्षेपस्यैवानवसरत्वात्। स्वप्रकाशत्वपक्षेऽपि, ज्ञानस्य तद्धर्मतयैवानुभवात्, विशेष्यविशेषणभावस्सहजत एव भासत इति विशिष्टज्ञानरूपत्वेऽपि न कापि हानिः। अथवा देहादिविशिष्टस्यैव तदानीमहंप्रतीतिविषयत्वम्। केवलस्य भानाङ्गीकारेऽपि, पर्वतादेरस्वप्रकाशत्वेन न तुल्यन्यायावतारः॥

एवञ्च अहंपदार्थस्य स्वप्रकाशत्वेऽपि, दशमत्वस्यातथात्वात् तदंशे शाब्द एव प्रत्ययः। अस्यापि स्वप्रकाशत्वे, पूर्वं तदभानासंभवात् मूलहानिः। तस्मात् दशमत्वं परोक्षरूपमेव। तद्विशिष्टरूपेण तु आत्मनोऽपि परोक्षत्वमेव। ज्ञानभेदेऽपि विशेष्यस्य अहमर्थस्य स्वप्रकाशत्वात्, तत्प्रभावात् 'दशमोऽहम्' इति ज्ञानमपरोक्षमिव भवति, न त्वपरोक्षम्, 'सोऽयम्' इति सामग्रीद्वयजन्यप्रत्यभिज्ञावत्॥

**बौद्धास्तु**—लोके वस्त्वेव परोक्षम्, अपरोक्षं चेति द्विविधम्। तदनुरोधेन प्रमाणमपि प्रत्यक्षम्, परोक्षं चेति द्विविधम्। एवं च परोक्षत्वम्, अपरोक्षत्वं वा वस्तुधर्मः, न तु करणधर्मः। यथा— घटे पुरतो विद्यमाने सति, चक्षुरिन्द्रियसन्निकर्षेण घटज्ञानमपरोक्षरूपं जायते; तथा घटशब्दे तदा प्रयुक्ते, तेन जायमानं घटज्ञानं अपरोक्षरूपमेव भवेत्। पुरतो दृश्यमाने सति, शब्दप्रयोगेण स घटः कथमदृश्यमानः स्यात् इति वदन्ति। एवमेतन्मतेऽपि आत्मनि सदापरोक्षतया भासमाने सति, शब्दप्रयोगमात्रेणात्मा अस्वप्रकाशः कथं भवेत्? शब्दजन्योऽपि बोधः आत्मविषयकश्चेत्, सः अपरोक्षावभास एव। अत एव 'तमसः पारं दर्शयति

भगवान् सनत्कुमारः' (छां.8-26-2) इति सनत्कुमारेण आत्मा नारदाय दर्शित इत्युच्यते। सनत्कुमारेण उपदेशे कृते, तेन नारदस्य दर्शनमभूदियुक्ते, उपदेशशब्देन दर्शनं जातमित्यर्थः । अतः शब्दः अपरोक्षज्ञानजनको भवतीति मन्यन्ते ॥

इदं सर्वम् अध्यात्मशास्त्ररहस्यापरिज्ञानमूलकम्! उपदेशः शब्दरूप एवेति मन्यन्ते। यद्येवं, तर्हि 'चित्रं वटतरोर्मूले वृद्धाश्शिष्या गुरुर्युवा। गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥' इति कथं मन्यसे त्वम्? तत्रापि शब्दानुमानमेवेति चेत् ; अत एवोक्तं पूर्वम् अध्यात्मशास्त्ररहस्यापरिज्ञानमूलं सर्वमेतदिति। 'दिव्यं ददामि ते चक्षुः' इति पूर्वभागमनवलोकयन् 'पश्य मे योगमैश्वरम्' (गी.11-8) इत्युत्तरभागमवलोकयन् कश्चित् अर्धप्रज्ञः 'पश्य' इति शब्देनैव विश्वरूपसंदर्शनं जातमिति यदि मन्येत, तादृशो मेधावी कथं बोधनीय इति न जानीमः । एतादृशस्थले गुरोरनुग्रहविशेषादेव शिष्यस्यान्तरङ्गे वस्तुदर्शनं जायते । नारदस्यात्मदर्शनमपि सनत्कुमारस्यानुग्रहादेव । 'चित्रं वटतरोर्मूले' इत्यादावपि श्रीदक्षिणामूर्तेस्तपश्शक्त्यैव महर्षीणामात्मसंदर्शनेन सर्वसंशयोच्छेदः । तत्तादृशा हि गुरवः केवलेन दर्शनेन, स्पर्शनेन, संकल्पेन वा सर्वं साधयितुं प्रभवन्ति। कुत्रचित् शब्दोपदेशसमनन्तरमात्मसंदर्शनजननेऽपि, शब्दो व्याजमात्रम्, न त्वपरोक्षकारणम्। पुरतो घटादिकं पश्यतः 'घटोऽयं' इति शब्दश्रवणे जाते तेन जायमानं ज्ञानं शाब्दं परोक्षमेव । तत्र चाक्षुषं ज्ञानमन्यत् शाब्दं चान्यदेव । युगपदिन्द्रियद्वयव्यापारासंभवात् । कालस्यातिसूक्ष्मत्वादन्तरालाग्रहणम्। अतोऽपरोक्षं कुत्रापि न शाब्दम् ॥

'प्रत्यक्षत्वम्' वा 'परोक्षत्वम्' वा वस्तुधर्म इति विचित्रमिदम् । एवं सति एकमेव वस्त्वेकस्य सन्निहितस्य चक्षुर्गोचरं यदा भवति, तदैव तदेव वस्तु दूरस्थस्य परोक्षमेव भवति, तदा तत्र प्रत्यक्षत्वम्, परोक्षत्वं चेति विरुद्धधर्मसमावेशप्रसङ्गः । अतः प्रत्यक्षत्वं परोक्षत्वं च करणाधीनमेव; न तु विषयाधीनम्। अत एव 'औपनिषदं पुरुषम्' इत्यत्रापि उपनिषद्वाक्यजन्यं परोक्षमेव । अन्यथा सर्वेऽपि ब्रह्मज्ञानिनो भवेयुः । ब्रह्मणः शस्त्रैकगम्यत्वमपि शास्त्रैकप्रमाणकत्वमेव, न तु शास्त्र-जन्यप्रत्यक्षविषयकत्वम्, सर्वानुभवविरोधात्। अतः प्रत्यक्षत्वपरोक्षत्वयोस्सांकर्यप्रसंगेन शाब्दापरोक्षवादो बौद्धवासनामूलक एव ॥

सत्यम् ; अत एव वयं वदामः 'धर्मास्सर्वे तत्तन्मनोरथकल्पिताः, अत एव मिथ्याभूताः' इति। तर्हि 'धर्मोपपत्तेः' 'धर्मोक्तेः' 'सर्वधर्मोपपत्तेश्च' इत्यादिसूत्राणां वा का गतिः? सर्वमिदं व्यवहारिक-मात्रमिति चेत्, अत्राप्युक्तं बहुधा। यद्यदुच्यत इदानीं तत्सर्वं व्यावहारिकमेव। भवदुच्यमानं निर्गुणं ब्रह्मापि व्याहारिकमेवेदानीम् । किं साधितमेतेन? पारमार्थिकं तु अवेद्यम्, अवाच्यं च । अतो वृथा क्लिश्यसे त्वम् ॥ **वस्तुतस्तु—**

कदाचित्तु बहोः कालात्पूर्वं शब्दः श्रुतःकथम्। जनयेत्त्वपरोक्षं सः स्मृतः, वद हठं विना ॥
आचार्याणां स्थानमेव न स्यादिति भयार्दिताः। स्वस्थानरक्षणव्यग्राः क्लिश्यन्ति बहुधा वृथा ॥

**शब्दात् प्रत्यक्षबोधे प्रसजति शिथिला तद्व्यवस्था; ततोऽर्थे**
**साक्षात्कारं न शब्दो जनयति विमतः सिद्धवच्छब्दभावात् ॥ ४६ ॥**

**[ऐकात्म्यवादे उपदेशानुपपत्तिः]**

**117. शिष्यो जीवस्त्वसिद्धः किमु, तव यदि वा भ्रान्तिसिद्धो, मितो वा**
**नासिद्धायोपदेशो भ्रमविषयमितौ नोपदेशार्हताऽस्य ।**

एवमनङ्गीकारेऽनिष्टप्रसङ्गमाह—**शब्दादित्यादि**। 'प्रत्यक्षम्' 'परोक्षम्' इत्यादिशब्दा एव प्रमाण-प्रमेयव्यवस्थामसङ्कीर्णां प्रदर्शयन्ति। परोक्षसाधनत्वेन सर्वसंमतात् **शब्दादपि प्रत्यक्षबोधे**=अङ्गीकृते सति, **तद्व्यवस्था शिथिला प्रसजति**। अनुमानविरोधमप्याह—**ततः अर्थ इत्यादि**। **विमतः शब्दः अर्थे साक्षात्कारं न जनयति**=स्ववाच्यार्थविषयकप्रत्यक्षाजनकः, **शब्दभावात्**=शब्दत्वात्, **सिद्धवत्**=प्रसिद्ध-शब्दवत्। 'विमतः शब्दः न अर्थप्रत्यक्षजनकः, शब्दत्वात्, इन्द्रियादिशब्दवत्' इत्यनुमानम्। इन्द्रियं ह्यतीन्द्रियम्। इन्द्रियपदेन चक्षुरादीनां बोधे भवत्यपि, तत्पदं कदापीन्द्रियविषयकमपरोक्षं न जनयति। शब्दस्तु श्रोत्रेन्द्रियेण गृह्यते। इन्द्रियादिशब्दविषयकं श्रोत्रेन्द्रियजन्यं ज्ञानं प्रत्यक्षमेव। प्रत्यक्षे विषयस्य कारणत्वात् विषयभूतः शब्दोऽपि स्वप्रत्यक्षे कारणम्। इन्द्रियपदविषयके प्रत्यक्षे तस्य कारणत्वात्, प्रत्यक्षजनकत्वाभावरूपसाध्याभाववति इन्द्रियशब्दे शब्दत्वहेतोस्सत्त्वात् व्यभिचार इति तद्वारणाय **'अर्थे'** इति। इन्द्रियपदं स्वविषयकप्रत्यक्षजनकम्, प्रत्यक्षे विषयस्य कारणत्वात्, न तु स्ववाच्येन्द्रियरूपार्थ-विषयकप्रत्यक्षजनकम्, अतो व्यभिचारपरिहारः। अतः शाब्दापरोक्षवादो न साधीयान् ॥ ४६ ॥

निर्विशेषाद्वैतवादे उपदेशानुपपत्तिः पूर्वमेव (श्लो.14) प्रतिपादिता। परन्तु तत्रैकात्म्यवादे शिष्य-दृष्ट्या सा प्रतिपादिता। इदानीं तु 'तत्त्वमसि' इत्यादिमहावाक्यश्रवणप्रसक्त्या, सर्वप्रकारेणापि=उपदेशक-दृष्ट्यापि उपदेशस्यानुपपत्तिः प्रदर्श्यते—**शिष्य इत्यादिना**। **तव**=ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनः त्वन्मत इति यावत्। अथवा **तव**=ऐकात्म्यवादमुपदेष्टुः गुरोः तव तु **शिष्यः**=उपदेश्यः **जीवः, किमु असिद्धः**=न वर्तते? उत वर्तते? 'किमु' इति 'किम्' इति समानार्थकम्। वर्तत इति पक्षेऽपि, **यदि भ्रान्तिसिद्धो वा, उत मितः**=प्रमाणसिद्धो वा? भारतीयसंस्कृतौ गुरुशिष्यभावः सर्वसंमतः। ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति वादे, एकस्यैव आत्मनः वर्तमानत्वात्, कः? कस्मै उपदिशति? इति वक्तव्यम्। शिष्यः कश्चिन्नास्त्येवेति प्रथमपक्षे, **असिद्धाय**=अविद्यमानाय शिष्याय **उपदेशः न** संभवति। भ्रान्तिसिद्ध इति द्वितीयपक्षे—'भ्रान्तिसिद्धः जीवः, न वास्तविकः' इति ज्ञानम् उपदेष्टुः गुरोः अस्ति, न वा? नास्तीति चेत्, **अस्य**=गुरोः **उपदेशार्हता**=उपदेशकरणायार्हता **न**=न स्यात्, गुरोरज्ञानित्वात्। अस्ति चेत्, **भ्रम-विषयमितौ**=भ्रान्तिविषयस्य प्रमितौ जातायाम्, शिष्यः वस्तुतो नास्त्येवेति यथार्थज्ञाने जाते, **तदाप्यस्य**=गुरोः **उपदेशार्हता न**=न स्यादेव। एवं शिष्यस्य कल्पितत्वरूपद्वितीयपक्षेऽप्युपदेशानुपपत्तिः। तथा चोपदेश्योऽपि नास्ति, अत एवोपदेष्टापि नास्ति। **अन्त्यः**=तृतीयः कल्पः 'मितो वा?' इत्युक्तः किं **भेदेन**

**भेदेनैक्येन वाऽन्त्यः कथमुपदिशतु ज्ञातभेदोऽप्यभेदं**
**तादाम्ये जागरूके सति किमुपदिशेत् स्वात्मने तद्विदे सः ॥ ४७ ॥**

---

मितः? उत **ऐक्येन**=अभेदेन मितः? इति विकल्पः। **'अन्त्ये'** इति पाठे तु, **अन्त्ये** कल्पे, किं **भेदेन** मितः? **उताभेदेन** इति स्वरसोऽन्वयः। अनयोः प्रथमपक्षे=भेदेन मितः इति पक्षे, **ज्ञातभेदोऽपि**=स्वयं भेदमेव सत्यं जानन्नपि गुरुः शिष्याय परम् **अभेदम्**=अप्रामाणिकम् अभेदम् कथम् **उपदिशतु**? एवमुपदिशन् गुरुः द्रोह्येव स्यात्। 'अभेदेन मितः' इति द्वितीयपक्षे—**तादात्म्ये**=स्वस्य शिष्यस्य चैक्ये **जागरूके सति**=तदानीं भासमाने सति **सः**=गुरुः **तद्विदे**=स्वस्यैक्यज्ञाने सति, शिष्यस्य स्वाभिन्नत्वात्, तस्याप्यैक्यज्ञानं जातमेवेति, ऐक्यज्ञानवते **स्वात्मने**=स्वाभिन्नाय शिष्याय किम् **उपदिशेत्**=अज्ञानिने खलूपदेशः, न तु ज्ञानिने। अतश्चैकात्म्यवाद उपदेशानुपपत्तिर्दुष्परिहरैव॥

**अत्रायं सारसंग्रहः**—निर्विशेषाद्वैतवादे सविशेषाद्वैतवादप्रतिकोटिभूते भगवद्भाष्यकारैः बह्व्योऽनुपपत्तयः प्रदर्शिताः। श्रीभाष्ये सप्तविधा वर्णिताः। गीताभाष्ये च उपदेशानुपपत्तिरेका प्रदर्शिता। सात्र समग्राह्याचार्यवर्यैः। इतरास्त्वग्रे तत्र तत्र भविष्यन्ति। निर्विशेषाद्वैतवादिनो हि **ब्रह्मविवर्तवादिनः, ऐकात्म्यवादिनः, अहमर्थानात्मत्ववादिनः, मायावादिनः, जगन्मिथ्यावादिनः** इत्यादिशब्दैः निर्दिश्यन्ते। ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति ते वदन्ति। एतादृशज्ञानवानेव हि गुरुः, शिष्याय स्वेन सम्यग्ज्ञातं ब्रह्मव्यतिरिक्तमिथ्यात्वमुपदिशतीति वक्तव्यम्। अत्रैवं विकल्पाः समुन्मिषन्ति—ऐकात्म्यवादे एक एवात्मा परमार्थभूतः। द्वितीयस्तु आत्मा नास्त्येव। एवञ्च एक आत्मा गुरुः तत्त्वज्ञानी सिद्धः। द्वितीयः आत्मा शिष्यः वर्तते, न वा? इति विकल्पे, वर्तते इति पक्षे अपसिद्धान्तः स्पष्ट एव। नेति पक्षे द्वितीये, शिष्यस्यैवाभावे, कस्मै तत्त्वमुपदिशेद्गुरुः?

ननु यद्यप्यात्मा एक एव वर्तते। अथापि अविद्यारूपोपाधिवशादितर आत्मानः कल्पिताः वर्तन्त एव। तथा हि श्रुतिः—'एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' (ब्र.बि.5-12) इति। एतदवलम्बनेनैव **प्रतिबिम्बजीववादः**(श्लो.15) प्रवृत्तः **विवरणप्रस्थान**मित्युच्यते। एवमेव 'घटसंवृतमाकाशं लीयमाने घटे तथा। घटो लीयेत चाकाशं तद्वज्जीवो नभोपमः ॥' (ब्र.बि.5-13) इत्येतदवलम्ब्य प्रवृत्तः **अवच्छेदवादः भामतीप्रस्थान**मित्युच्यते। एवञ्च पक्षद्वयेऽपि कल्पितस्य जीवस्य सत्त्वात्, संगच्छत उपदेश इति चेत्; कल्पितत्त्वं नाम किम्? भ्रान्तिकल्पितत्वम् वा, 'धाता यथापूर्वमकल्पयत्'(तै.ना.1-13) इत्यादाविव प्रमाणप्रतिपन्नत्वं वा? भ्रान्तिकल्पितत्वपक्षे, उपदेष्टा गुरुः शिष्यं भ्रान्तिकल्पितं जानाति, न वा? न जानाति यदि, अज्ञस्य तस्य कथमुपदेष्टृत्वम्? यदि जानाति, तदा वा कथमुपदेष्टृत्वम्? 'मदन्य आत्मा नास्ति केवलं प्रतिभासः' इति जानन् गुरुः, कथमुपदिशेत् तस्मै? दर्पणे स्वप्रतिबिम्बं पश्यन् 'इदं प्रतिभासमात्रम्' इति जानन् कश्चिद्विवेकी प्रतिबिम्बाय किं तत्त्वमुपदिशेत्? बाधितानुवृत्तिस्तु अग्रे (श्लो.74) विमृश्यते। प्रमाणप्रतिपन्नत्वरूप-

कल्पिततत्वपक्षे, किं स्वभिन्नत्वेन प्रतिपन्नः, उताभिन्नत्वेन? आद्यपक्षे, प्रथममपसिद्धान्तः । जीवभेदस्यानङ्गीकारेण, तस्य प्रमाणप्रतिपन्नत्वानङ्गीकारात् । अस्त्येवास्माकमपि व्यावहारिकप्रमाणप्रमेयादिविभाग इति चेत्; मिथ्यात्वपर्यायस्य व्यावहारिकत्वस्याप्रयोजकत्वात् । यावद्ब्रह्मज्ञानमबाधितत्वाङ्गीकारान्न मिथ्यात्वपर्यायत्वं व्यावहारिकत्वस्येति चेत्, रज्जुसर्पादीनामपि यावद्बाधज्ञानमबाधितत्वात्, सत्यत्वप्रसङ्गः । इष्टमेव तत्; रज्जुसर्पादीनामपि प्रातिभासिकसत्यत्वाङ्गीकारादिति चेत्, तर्हि सत्यत्वम्, मिथ्यात्वं चेति द्वयमपि आपेक्षिकमित्युच्यताम् । तदपीष्टमेवास्माकमिति चेत्, तर्हि जगतः आपेक्षिकमिथ्यात्ववत्, आपेक्षिकसत्यत्वमप्यस्त्येवेति, तदप्युच्यताम् । इष्टमेवैतदपि । अथापि संसारे आसक्तिर्मा भवत्विति, तन्नोच्यत इति चेत्, आगतोऽसि समीचीनं पन्थानम् । सत्यपदार्थः तरतमभावापन्नः इत्यंशः **भगवतो रामानुजस्यापि** संमत एव जन्माद्यधिकरणान्ते सत्यपदेन ब्रह्मणः जगद्वैलक्षण्यमुच्यत इत्यभिदधतः । ब्रह्मणि निरुपाधिकं सत्यत्वम्, जगति तु कालदेशाद्युपाधिकृतम् । ततश्च अबाधितत्वम् सत्यपदप्रवृत्तिनिमित्तम् । तच्च देशकालस्वरूपापेक्षया ब्रह्मव्यतिरिक्तस्यापि वर्तते । अतः सोपाधिकं सत्यत्वं ब्रह्मव्यतिरिक्तस्य । ब्रह्मणस्तु एतादृशसोपाधिकं सत्यत्वं न, किन्तु निरुपाधिकम् । एतद्दृष्ट्या रामानुजसिद्धान्तेऽपि जगत् असत्यम् । एतच्च ब्रह्मविलक्षणत्वरूपम्, न तु मिथ्यात्वरूपम् । एवञ्च भवद्दृष्ट्यापि व्यावहारिकस्य जगतः ब्रह्मज्ञानबाध्यत्वम्, तत्प्रयुक्तमिथ्यात्वं वा केवलं दार्तम्, ब्रह्मप्राप्तौ 'केन कं पश्येत्' इति त्रिपुटीलयाङ्गीकारात्, बाध्यबाधकभावः कस्य? 'आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहंगतास्तत्र कथंचिदन्ये' इति महदसंमतं मार्गं न गच्छेश्चेत्, रक्षितः स्वात्मा कथञ्चित् ॥

ननु भवत्सिद्धान्ते चिदचितोर्ब्रह्मशरीरत्वात्, लोके तादृशज्ञानस्य सामान्यजनानामसंभवेन, लोकव्यवहारस्सर्वोऽपि भ्रममूल एव वाच्यः । अतश्च व्यावहारिकी स्थितिरुभयोरपि समानैवेति को विशेष इति चेत्, न हि वस्तुनि विद्यमानं सर्वमप्येकेन प्रमाणेन क्रोडीकर्तुं शक्यम् । चक्षुरिन्द्रियं हि रूपादिग्रहणमात्रसमर्थम्, न तु स्पर्शादिग्रहणसमर्थम् । तावता चाक्षुषं ज्ञानमप्रमा भवेत्किम्? भवन्मते तु सर्वं भ्रम एवेत्युच्यते । अकृत्स्नग्रहणमन्यत्, अन्यथाग्रहणमन्यत् । अकृत्स्नग्रहणं नाप्रमा, अन्यथाग्रहणं त्वप्रमैवेति न पक्षद्वयसाम्यम् ॥

वस्तुतस्तु— 'आस्थानिवृत्त्यर्थमवादि बौद्धैः' इति बौद्धोक्तक्षणिकत्वविज्ञानव्यतिरिक्तमिथ्यात्वसर्वशून्यवादा अपि राजसप्रकृतीनां जगत्यासक्तिनिवृत्त्यर्थमेवोपदिष्टा इति आरम्भकालिकी बौद्धानां वैज्ञानिकी स्थितिरित्यादिकं समये विमृश्यते विस्तरेण ॥

विज्ञानं तु विवेकाय भवेत्कार्याय नैव हि । धर्मादिनिर्णयार्थं वेत्येतदन्यत्र कथ्यते ॥
बहुग्रन्थैस्तु साध्योऽयं विचारः परमार्थतः । अत्राप्रसक्तस्तस्मात्तु प्रकृतं यत्तदुच्यते ॥

कालक्रमेण हेतुवादरतास्ते, वेदविद्वेषिणो यदाऽभवन् ; तदानीमेव, ते वादबाह्याः परिगणिता वैदिकैः। दशावतारान्तःपरिगणितः बुद्धोऽपि निष्कासनीयः संवृत्तो वैदिकानाम् । एवं अनन्तरकालिका बौद्धा यदा पाषण्डिनो जाताः, तदा **उद्योतकरभट्टकुमारिलमण्डनमिश्रशङ्करोदयनरामानुजप्रभृतिभिः** वेद-

[निवर्तकानुपपत्तिः]

118. **नैवालं भ्रान्तिबाधे परमपि तदिदं तत्त्वमस्यादिवाक्यं**
**भ्रान्तोक्तिर्यद्वदादौ श्रुतिकृतनिखिलभ्रान्तिमूलत्वबोधात् ।**

बाह्यनिरसनपूर्वकं पुनर्वैदिकमार्गः प्रतिष्ठापितः । तदात्वे च शून्यवादादवरोहणक्रमेण क्रमशः विशुद्धः ब्रह्मवादः जगत्सत्यतावादश्च लोकहिताय प्रतिष्ठापितः। अथापि, 'ग्राहं गतास्तत्र कथञ्चिदन्ये' इत्युक्तक्रमेण पूर्ववासनापीडिताः केचन, केवलं हेतुवादमवलम्बमानाः, पुनरारोहणक्रमेण शून्यवादमेव प्रतितिष्ठासवोऽभवन्, परिणामपरम्परामविगणयन्तः। केवलतर्कस्यायं परिणामः 'यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा' इति । ततश्च 'प्रतिष्ठितेऽस्मिन् परिणामवादे, स्वयं समायाति विवर्तवादः'(सं.शा.) इति यदि ससन्तोषं निरीक्ष्यते, तर्हि 'प्रतिष्ठितेऽस्मिंश्च विवर्तवादे, स्वयं समायाति च शून्यवादः' इत्यपि पठनीयं भवेत् । तदेतत्सर्वं क्रमशः, यथायोगम्, यथाबलम्, यथादैवञ्च प्रतिदर्शयिष्यते यथावकाशम् ॥

एवं च दूषणानि तु हैतुकवेदान्तिदृष्ट्या ज्ञेयानि । स्वभिन्नप्रमाणप्रतिपन्नत्वपक्षे अपसिद्धान्तेन साकं गुरोः द्रोहित्वदोषोऽपि दुर्वारः स्यात् । स्वयं भिन्नतयैव जानन्नपि, शिष्याय परमभेदमुपदिशन् स गुरुः कथं विश्वसनीयस्स्यात् । अभिन्नत्वेन प्रतिपन्नत्वरूपद्वितीयपक्षे, स्वाभिन्नं शिष्यं जानन्, कथं तमज्ञं जानीयात्? स्वाभिन्नत्वात् ज्ञानिनं तं प्रति पुनरभेदं कथमुपदिशेत्? अतो ऐकात्म्यवादगर्भे ब्रह्मव्यतिरिक्तमिथ्यात्वपक्षे उपदेशानुपपत्तिर्दुष्परिहरा ॥

एतद्दोषपरिजिहीर्षयैव मण्डनमिश्रादिभिर्जीवाज्ञानवादो मण्डितः । 'इन्द्रो मायाभिः' (बृ.4-5-19) इति बहुवचनश्रवणात्, जीवनानात्वसिद्ध्या सर्व आक्षेपाः परिह्रियन्त इति । परन्त्वन्योन्याश्रयादिभिः जीवाज्ञानवादो विस्तरेण परिशीलितस्तत्रैव द्रष्टव्यः ॥

ननु किमेवमुच्यते? 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः' इति वदन्नाचार्यः किमज्ञानी? मोद्विजस्व वृथा ब्रह्मन्! महतामाचार्याणां वचनानि तावत्सुगमार्थानि मन्यते भवान्? एकैकमपि तत्रस्थं पदं कियद्गम्भीरमिति प्रायः बहवो न जानन्त्येव । विशेषतः मिथ्यापदस्य निष्कृष्टोऽर्थः दुरवगमस्सर्वथा । तथ्यमिथ्यानृतसत्यानृतासत्यादिपदानामसङ्कीर्णोऽर्थः, तस्य व्याप्तिरित्यादिकं प्रायोऽर्वाचीनानां दुरवगमं संवृत्तम्। एतन्मूलका एवं बहवो वादास्समुदजृम्भन्त । आचार्याणामाशयविरुद्धा अपि पक्षाः कालान्तरे शुष्कपण्डितैः पूर्ववासनया परस्परविरुद्धाः अवर्णिषत । तदेतत्समनन्तरसरे विशदीभविष्यति ॥

कदा कस्मिन् प्रकरणे कस्मै प्रोक्तं कुतः क्ववा । इत्याद्यमखिलं ज्ञात्वा भावो ज्ञेयो विवेकिभिः ॥
तात्पर्यमेव प्राणःस्याद्वाक्यानामिति संमतम् । एतत्सर्वं विस्तरशः प्रदर्श्येताग्रिमे सरे ॥ ४७ ॥

ऐकात्म्यवादापरपर्याये निर्विशेषाद्वैतवादे, उपदेशानुपपत्तिवत्, अन्यामप्यनुपपत्तिमाह—**नैवाल-मित्यादि**। **तदिदं**=अपरोक्षज्ञानहेतुतया भवता प्रतिपादितं **तत्त्वमस्यादिवाक्यम्**=तत्त्वमसि इत्यादिवाक्यम् **परमपि**=पश्चाज्जातमपि **भ्रान्तिबाधे**=भेदभ्रमबाधे **अलम् नैव**=सर्वथा न समर्थम् । तत्र हेतुः—**भ्रान्तोक्ति-**

**रज्जौ सर्पभ्रमे किं जनयति विदितभ्रान्तवाक् सर्पबाधं**
**स्वप्नेऽहिः स्वप्नबुद्ध्या किमु गलति, यदा तत्र च स्वाप्नताधीः॥ ४८ ॥**

**रित्यादि। श्रुतिकृतनिखिलभ्रान्तिमूलत्वबोधात्=श्रुत्या**=आत्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वप्रतिपादक-श्रुत्या **कृतः**=उत्पादितो यद् **निखिलभ्रान्तिमूलत्वबोधः**=सर्वं भ्रममूलमेवेति निश्चयः, तस्मात् **आदौ यद्वत्**=उपदेशात् पूर्वं यथा, **तथैव भ्रान्तोक्तिः**=भ्रान्तपुरुषवचनरूपा यतः, भ्रान्तवचनरूपत्वाविशेषात् **अलम् नैव** इत्यन्वयः ॥

कुतः? इत्यत्र—**रज्जौ सर्पभ्रमे** जाते सति, यदा कश्चित् ब्रवीति - 'नायं सर्पः किन्तु रज्जुः' इति, तदा सर्पाभावो ज्ञायते । परन्तु 'नायं सर्पः, किन्तु रज्जुः' इति वाक् भ्रान्तस्य पुरुषस्येति यदि जानाति, तदा **विदितभ्रान्तवाक्**—'अयं भ्रान्तः' इति विदितस्य पुरुषस्य वचनम्**, सर्पबाधम्**—पूर्वगृहीतस्य सर्पस्य निवृत्तिम् **जनयति किम्?** न जनयत्येव । तद्वत् प्रकृते तत्त्वमसिवाक्यमपि ब्रह्म-भिन्नत्वान्मिथ्यैवेति ज्ञाने जाते, कथं तद्वाक्यं प्रपञ्चभ्रमनिवर्तकं स्यात्? अतो निवर्तकज्ञानानुपपत्तिः दुष्परिहरा ॥

नन्वस्तु तर्हि स्वप्न एव दृष्टान्तः । स्वप्ने कदाचित् रज्जौ सर्पभ्रमे जाते, तत्रैव नायं सर्पः, किन्तु रज्जुः इति बाधकज्ञाने जाते, सर्पभ्रमनिवृत्तिरनुभवसिद्धा । सर्वस्यापि स्वप्नस्यापि मिथ्यात्वात्, सर्पभ्रमस्य, तन्निवर्तकज्ञानस्य च मिथ्यात्वेऽपि बाध्यबाधकभावो वर्तत एव । जगतोऽपि स्वप्नवदेवाविचारितरमणीयत्वेन, तद्दृष्टान्तेन सर्वं सङ्गच्छत इति चेत्, अवगतः हार्दो भावः। भवदाचार्ये 'जाग्रत्प्रत्ययः न हि स्वाप्नप्रत्यय-वन्मिथ्याभवितुमर्हति'(ब्र.सू.भा.2-2-29) इति वदति, बौद्धोपदेशेन नष्टप्रज्ञान् जनान् पुनरास्तिक्यमार्गे क्रमशो नेतुं यतमाने सति, भवांस्तु तद्विपरीततया बौद्धमार्गमेवानुसरन्, बाह्यार्थप्रत्यक्षत्वबाह्यार्थानुमेयत्व-बाह्यार्थमिथ्यात्ववादानां क्रमशः शून्यवादे पर्यवसानमनुमन्वानो दृश्यते । उक्तमेवातः— 'यथायथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथातथा' इति । अतः सर्वमिथ्यात्ववादिनः केवलहैतुकस्य 'अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः' इति कथायामनधिकार एव घोषितो वैदिकाग्रसरैः । अथापीतरे बोधनीया इत्युच्यते—**स्वप्नेऽहिरित्यादि । स्वप्ने**=स्वप्नसमये दृष्टः **अहिः**=सर्पः, **स्वप्नबुद्ध्या**=स्वप्न एव जातया नायं सर्पः इति बाधबुद्ध्या **गलति किमु**=अपगच्छेत् किम्? कुतो नापगच्छेदित्यत्र—**यदा च**=यदैव **तत्र**=प्रतिबन्धकज्ञाने **स्वाप्नताधीः**=स्वप्नकल्पितत्वबुद्धिः=मिथ्यात्वबुद्धिरिति यावत्, **भवेत्**=तदा तद्-ज्ञानम् सर्पभ्रमनिवर्तकं भवेत् किम्? नैव भवेत् । यस्यां कस्याञ्चिदवस्थायां बाधकज्ञानेऽप्रामाण्यधीर्भवेच्चेत्, तद्ज्ञानं कस्यापि बाधकं नैव भवेत् । अत एव किल तार्किकैरपि अप्रामाण्यज्ञानानास्कन्दिततदभावत्तानिश्चय एव प्रतिबन्धकः इति निरणायि । बाध्यबाधकभास्थले बाधकज्ञानं भ्रमो वा भवतु, प्रमा वा भवतु बाधकज्ञाने भ्रमत्वानिश्चयोऽपेक्षितः । एवञ्च ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वज्ञानवतः 'तत्त्वमसि' इति वाक्यजन्यज्ञानेऽपि मिथ्यात्वनिश्चयावश्यंभावात् तद्ज्ञानं संसारबन्धकनिवर्तकं न भवितुमर्हतीति निवर्तकानुपपत्तिः दुष्परिहरा ।

यद्यपि सिद्धान्ते स्वप्नस्य सत्यत्वमङ्गीक्रियते, अथापि, जगतस्सत्यत्वाङ्गीकारेऽपि यथा रज्जुसर्पभ्रमः प्रमाण-सिद्धः, तद्वदेव स्वप्नेऽप्यस्ति विभाग इति दृष्ट्या, आपाततो लोकानुभवानुरोधेन वा दूषणमुक्तमिति ज्ञेयम्।

'ब्रह्मव्यतिरिक्तं सर्वं मिथ्या' इति वादे वेदानामपि ब्रह्मव्यतिरिक्तत्वात् मिथ्यात्वे सिद्धे, 'तत्त्वमसि' इत्यादिवाक्यानामपि मिथ्यात्वात् तज्जन्यं ज्ञानं प्रपञ्चभ्रमनिवर्तकं कथं भवेत्? इति शङ्कायाम्—ते इत्थं समादधिरे—सत्यम्, सर्वं मिथ्यैव। एवमपि वेदस्य सर्वस्यापि मिथ्यात्वेऽपि सगुणवाक्यापेक्षया निर्गुणवाक्यानि प्रबलानि; भेदप्रतिपादकवाक्यापेक्षया अभेदप्रतिपादकानि=भेदनिषेधपराणि 'तत्त्वमसि' इत्यादिवाक्यानि प्रबलानि। विधिरूपवाक्यापेक्षया निषेधरूपाणां वाक्यानां प्रबलत्वात्। विधिवाक्यानां प्रतियोगिसमर्पणेनापि सावकाशत्वात् निषेधवाक्यानां परत्वात् निरवकाशत्वेन प्रबलत्वात् प्रपञ्चभ्रमबाधःसङ्गच्छते। एवञ्चैक्योपदेशेन ब्रह्मव्यतिरिक्त-मिथ्यात्वसिद्धिरिति। 'भूतले घटो नास्ति' इति वाक्ये भूतले घटः अस्ति इत्येतावान् भागः भूतले घटस्य सत्तां प्रतिपादयति। तत्रैव 'न' इत्येकस्य संयोजनेन, इतरभागस्सर्वोऽपि 'न' इत्यस्य शेषभूतमर्थमेव वदेत्, न तु स्वतन्त्रं कञ्चनार्थम्। निषेधस्तावान् बलवान्। एवञ्च वेदेऽपि तथैव ऐक्यस्य भेदनिषेधरूपत्वात्, भेदप्रतिपादकस्सर्वोऽपि भागः निषेधशेषभूत एवेति, तेषां वाक्यानां स्वार्थे तात्पर्यं नास्त्येव। अतः तत्त्वमसि इत्यादिवाक्यानि प्रबलानि, महावाक्यानीत्युच्यन्ते। एवं पूर्वपक्षे सिद्धान्त उच्यते॥

**सिद्धान्तस्तु**—बाध्यबाधकभावस्थले सर्वत्र सावकाशं बाध्यम्, निरवकाशं बाधकमित्येव रहस्यम्। एकस्मिन् देशे, एकस्मिन् काले,एकेन रूपेण ज्ञातस्य; देशान्तरे, कालान्तरे, रूपान्तरेण ज्ञातत्व-भ्रमे जाते, तस्य प्रमात्मकेन ज्ञानेन निरासः क्रियते। यथा पूर्वकालावच्छेदेन रक्ते सति घटे, कालान्तरवच्छेदेन पाकवशात् नीले सति 'रक्तो घटोऽस्ति' इति व्यवहारे कृते 'अस्ति' इति वर्तमानत्वाभिधानात् 'इदानीं रक्तो घटो नास्ति' इति ज्ञानस्य प्रमात्वात् पूर्वं ज्ञानं बाध्यम्, कालान्तरविषयतया नेतुं शक्यम् सावकाशं भ्रमरूपं भवति। परं प्रमारूपम् अन्यथा नेतुमशक्यम् निरवकाशं बाधकम् भवति। 'ब्रह्मव्यतिरिक्तं सर्वं मिथ्या' इति पक्षे, पूर्वस्य भेदज्ञानस्य यथा भ्रमत्वम्, तथैव परस्याभेदज्ञानस्यापि ब्रह्मव्यतिरिक्तत्वेन मिथ्यात्वात् भ्रमरूपत्वे सिद्धे, उभयोरपि ज्ञानयोः भ्रमत्वाविशेषे कथं पूर्वस्य परेण बाधः?

ननु परस्य भ्रमरूपत्वेऽपि बाधकत्वं वर्तत एव। यथा रज्जौ सर्पभ्रमे जाते 'नायं सर्पः, किन्तु रज्जुः' इति ज्ञानं तस्य बाधकम्, तथैव 'नायं सर्पः, किन्तु अम्बुधारा' इति ज्ञानस्य भ्रमरूपस्यापि सर्पभ्रमबाधकत्वं दृश्यते। अतः परत्वमेव बाधकत्वे प्रयोजकम्, न तु प्रमात्वं भ्रमत्वं वेति चेत्, एवं तर्हि 'तत्त्वमसि' इतिवाक्यजन्यज्ञानस्यापि भ्रमत्वे बाधकाभावात्, भ्रमात्मकेन तेन ज्ञानेन जीवब्रह्मैक्यस्याप्य-सिद्धिप्रसङ्गः। परत्वमात्रस्य बाधकत्वप्रयोजकत्वे 'सर्वं शून्यम्' इति सर्वनिषेधस्य तत्त्वमस्यपेक्षयापि परत्वात् शून्यवादावतारश्च। निरधिष्ठानभ्रमस्यासंभवात् शून्यवादो न साधीयानिति चेत्, निर्विशेषवादस्य दुरुपपादत्वत् त्वद्वादोऽपि न साधीयान्। सामान्याकारेणावगतस्य विशेषाकारेणानवगतस्यैव वस्तुनो भ्रमा-धिष्ठानत्वसंभवः। भास्वरशुक्लरूपेणावगतस्य शुक्तित्वेनानवगतस्यैव रजतभ्रमाधिष्ठानत्वात्। विशेषाकारावगमे सत्येव रजतभ्रमनिवृत्तेर्दशनात्। अतः ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वे, ब्रह्मणो निर्विशेषत्वे च प्रपञ्चभ्रमस्य,

[असत्यात्सत्यसिद्धिनिरासः]

119. छायादिर्न त्वसत्यः सदवगतिकरः तत्र हेतुर्हि तद्धीः
साध्यज्ञप्त्यादिवत् सा स्वयमिह न मृषा, नास्ति धीरित्यबाधात्।

तन्निवृत्तेश्च कथञ्चिदपि न संभवः। किञ्च सर्पभ्रमनिवर्तके अम्बुधाराज्ञाने भ्रान्तिरूपेऽपि, तत्र भ्रान्तित्वाज्ञानादेव बाधकत्वं संभवति, निरवकाशत्वात्। अगृहीताप्रमाण्यकत्वमात्रं प्रतिबन्धकज्ञानविशेषणम्; न तु गृहीतप्रामाण्यकत्वमपि, प्रथमं तत्र प्रामाण्यग्रहणस्यासंभवात्। यद्यपि वेदान्तिनः स्वतःप्रामाण्यवादिनः, अथाप्यौत्सर्गिकं तत् स्वतः प्रामाण्यम् विद्यमानमप्यविद्यमानमिव, संशयादिक्षमत्वात्। स्वतःप्रामाण्यपक्षेऽपि अगृहीताप्रामाण्यकत्वस्यानपायात्! एवञ्च अम्बुधाराज्ञाने अप्रामाण्यग्रहे जाते तु, तस्य प्रतिबन्धकत्वं न स्यादेव। ननु रज्जुसर्पभ्रमं प्रति अम्बुधाराभ्रमस्य बाधकत्वे परत्वापेक्षयान्यत्कारणं किं पश्यति भवान्? उक्तमत्र वक्तव्यम्। अप्रमात्वज्ञानाभाव एव बाधकत्वप्रयोजकोऽम्बुधाराभ्रमस्येति। अम्बुधाराज्ञाने वर्तमानोऽप्रमात्वज्ञानाभावः अस्य द्वितीयज्ञानस्यानवकाशत्वं प्रदर्शयन्, अत एव प्राथमिकज्ञानस्य सावकाशतामापादयति। अतः सर्वत्रापि सावकाशत्वनिरवकाशत्वे एव **बाध्यबाधकभाव**प्रयोजके। प्रकृते तु तत्त्वमसिवाक्यजन्यज्ञाने ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानेन मिथ्याविषयकत्वनिश्चयेन सावकाशत्वात् प्रपञ्चभ्रमनिवर्तकत्वं सर्वथा न संभवति॥

नन्वप्रामाण्यज्ञानानास्कन्दितत्वं प्रथमज्ञानेऽपि समानम्। एवं सति द्वितीयमम्बुधाराज्ञानमेव प्रतिबन्धकमित्यत्र परत्वमेव प्रयोजकं वक्तव्यमिति चेत्, द्वितीयज्ञानेन प्राथमिकज्ञानस्य अप्रामाण्यज्ञानास्कन्दितत्वेन, तस्य सावकाशत्वं स्वत एव जातमिति, तस्य द्वितीयं ज्ञानं प्रतिबन्धकं भवेत्। नो चेत् प्राथमिकज्ञानेन द्वितीयज्ञानस्यैव बाधः। यथा शङ्खःश्वेत एवेति निश्चयवतः, पित्तदोषवशात्'पीतः शङ्खः' इति चक्षुषा ज्ञानेऽपि नानेन प्राथमिकं ज्ञानं बाध्यते। प्रत्युत द्वितीयमेव बाध्यते। द्वितीयस्य दोषजन्यत्वज्ञाने सावकाशत्वात् निरवकाशेन प्राथमिकज्ञानेन द्वितीयं ज्ञानमेव बाध्यते। दोषजन्यत्वज्ञानाभावे तु प्राथमिकं सावकाशं भवतीति तदेव बाध्यते इत्यादिकं सर्वं शास्त्रान्तरकथारूपम्। एवं वेदान्तशास्त्रमेव तर्कमयं कृतं पण्डितंमन्यैः। आहत्य सावकाशत्वनिरवकाशत्व एव बाध्यबाधकभावप्रयोजके इत्येव परमो निष्कर्ष इत्यलमनया शास्त्रान्तरकथया। परत्वमात्रस्य बाधकत्वे वक्ष्यत्युत्तरम्'प्राबल्यं चेन्निषेधः पर इति मुखरं तुर्यबुद्धस्य तूर्यम्' (नायक.56) इति॥ ४८॥

एवं ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वात्, 'तत्त्वमसि' इत्यादीनामपि मिथ्यात्वं सिद्धमिति, तेन बन्धनिवृत्तिर्न भवेदिति दूषणे कृते, पुनस्तदुपर्यपि तैर्विजृंभितम्। अस्तु नाम शास्त्रमप्यसत्यम्। तथापि न कापि हानिः। असत्यादपि सत्यस्य सिद्धिर्भवेदेव। दृश्यते किल रज्जुसर्पभ्रमेणापि सत्यभूतं भयकंपादिकम् इति पुनस्तर्कं वर्धयामासुः परे। तदपि दूषयति—**छायादिरित्यादिना**। **असत्यः छायादिः**=दर्पणगतप्रतिबिंबादिः **सदवगतिकरः**=सतः=सत्यस्य मुखादेः अवगतिकरः=ज्ञानोत्पादकः। किन्तु **तत्र तद्धीर्हि**= सत्यं मुखादेः प्रतिबिम्बज्ञानं हि **हेतुः**=कारणम्। **हि** इति लोकप्रसिद्धौ। दर्पणे प्रतिबिंबं दृष्ट्वा बिम्बं जानन्ति जनाः। बिम्बं तु सत्यम्। प्रतिबिम्बं तु मिथ्या। मिथ्याभूतस्य प्रतिबिम्बस्य ज्ञानेन सत्यभूतं बिम्बज्ञानं

**सत्येनैव प्रसूता घट इव विमता शेमुषी कार्यभावात्**
**हेतुत्वालीकभावौ कथमिव विहतावेकमेवाश्रयेताम् ॥ ४९ ॥**

भवति । एवञ्च सत्येनासत्यस्य सिद्धिर्भवति । एवमेव ब्रह्मव्यतिरिक्तत्वेन मिथ्याभूतात् शास्त्रात् सत्यभूतं ब्रह्मज्ञानमपि भवतीति न कापि हानिः । आदिपदेन रेखाचित्रादयो ग्राह्याः । रेखारूपेण गजादिचित्रेण सत्यस्य गजस्य स्वरूपं जानन्ति जनाः । रेखागजः असत्यः । तस्मात् सत्यगजज्ञानं भवति । अतोऽसत्यात् सत्यस्य सिद्धौ किं प्रतिबन्धकम् इति पूर्वपक्षिणो मन्यन्ते । तस्योत्तरमुच्यते—**'तस्य हेतुस्तु तद्धीः'** इति । प्रतिबिम्बेन बिम्बज्ञानं न भवति, किन्तु प्रतिबिम्बज्ञानेन । प्रतिबिम्बज्ञानं तु सत्यमेव । अतश्च सत्यादेव सत्यस्य सिद्धिः, न त्वसत्यात् । एवं रेखागजेन गजज्ञानं न भवति, किन्तु गजाकाररेखाज्ञानेन । अत्रापि ज्ञानं सत्यमेवेति नासत्यात्सत्यस्य सिद्धिः ॥

ननु प्रतिबिम्बस्य बिम्बाद्भिन्नत्वेन यदि मिथ्यात्वम्, तर्हि तद्ज्ञानं कथं सत्यं भवेत् । यदि भवेत्, तर्हि असत्येन प्रतिबिम्बेन सत्यं प्रतिबिम्बज्ञानं जातमिति, सिद्धा तत्रैवासत्यात्सत्यसिद्धिरित्यत्राह—**साध्यज्ञाप्त्यादीति**। **साध्यस्य**=कार्यस्य घटादेः **ज्ञप्तिः**=ज्ञानम् । तद्वदेव **सा**=प्रतिबिम्बादिधीः **स्वयं**=स्वस्वरूपेण **न मृषा**=न मिथ्या । कुतो न मिथ्यात्वमिति चेत्, **इह**=एतद्विषये **धीः नास्ति**=मम ज्ञानं न जातं इति **अबाधात्**=बाधस्याभावात्=बाधज्ञानादर्शनात् । घटस्य स्वरूपमीदृशमिति जानन् हि कुलालः घटादिकं करोति । यदि घटज्ञानमेव तस्य न स्यात्, तर्हि कथं घटं कुर्यात्? तत्र घटकरणात् पूर्वं घटो नास्त्येव, अथापि तस्य घटज्ञानं तु वर्तते । अतश्च घटस्याभावेऽपि यथा घटस्य ज्ञानं कुलालस्य वर्तते, तद्वदेव प्रतिबिम्बस्यासत्यत्वेऽपि प्रतिबिम्बज्ञानं सत्यं भवत्येव ॥

ननु असतो घटस्य ज्ञानम् कथं सत्यं स्यात्? तर्हि शुक्तौ रजतज्ञानमपि सत्यं स्यात् इति चेत्, प्रत्यक्षस्यैव वस्तुजन्यत्वनियमः । कुलालस्य घटज्ञानमेव यदि न स्यात्, कथं घटं कुर्यात्? अतो घटज्ञानं वर्तत एव, न तु तदा घटः । यदि तदा घटः स्यात्, तर्हि विद्यमानं घटं पुनः स कथं कुर्यात्? अतः घटमन्तरापि घटज्ञानं भवेदेव ॥

ननु घटाभावेऽपि घटज्ञानं कथं भवेत्, भवद्वा कथं सत्यं स्यात्? तर्हि शुक्तौ रजतज्ञानं वा कथं मिथ्या स्यात्? इति चेत्, किं कुर्मः? 'मम घटज्ञानमेव नास्ति' इति कुलालः कथं वदेत्? अतः अनुभव एव सर्वत्र प्रमाणम् । प्रत्यक्षस्थल एव विषयस्य विद्यमानत्वनियमः । नेतरत्रेति प्रसिद्धमेव । एकत्राविद्यमानविषयकत्वेऽपि मिथ्या इति व्यवहारो न भवति, अन्यत्र तु भवतीति कथमिति जिज्ञासया पृच्छाम इति चेत्;—सत्यादेव सत्यसिद्धिरित्यत्रानुमानमपि प्रमाणमाह—**सत्येनेत्यादि**। **विमता शेमुषी**=मतिः **सत्येनैव प्रसूता**=उत्पन्ना, **कार्यभावात्**=कार्यत्वात् **घट इव**=घटवत् इति । तथा च **विमता**=विवादग्रस्ता 'प्रतिबिम्बात् बिम्बबुद्धिः, सत्यकारणजन्या, कार्यत्वात्, घटवत्' इत्यनुमानात् बिम्बज्ञाने सत्यभूतज्ञानजन्यत्वस्य सिद्धिः। अतो नासत्यात्सत्यसिद्धिः, किन्तु सत्यादेव सत्यसिद्धिः । ननु अप्रयोजकमिदमनुमानम् । कार्यत्वे सत्यपि

सत्यकारणजन्यत्वं स्यादिति कोऽयं निर्बन्धः? इत्यत्राह—**हेतुत्वेत्यादि** । **विहतौ**=परस्परविरुद्धौ **हेतुत्वालीकभावौ**=कारणत्वं मिथ्यात्वं चेति द्वयमपि **कथमिव**=कथं वा **एकमेवाश्रयेताम्**=एकत्र मिलताम्। सर्वथाऽसंभव एव। मिथ्याभूतेन दण्डेन, मृत्पिण्डेन वा सत्यो घटः कथं वा भवेत्। विद्यमानस्यैव हि वस्तुनः कारणत्वम्। मिथ्याभूतस्य विद्यमानत्वं कथं भवेत्? 'असत्यात्' इति हेतौ खलु पञ्चमी। ततश्च असत्यात् सत्यसिद्धिः इति वचनमेव वन्ध्यापुत्रजननशब्दवत् अत्यन्तं परस्परं व्याहतम्। शङ्काविषमरणादावन्यत्र वा, सर्वत्र तद्ज्ञानमेव मरणहेतुः। ज्ञानं प्रति विषयसत्यत्वं नापेक्षितमित्यपि बहुधा निरूपितमेवेति नासत्यात्सत्यत्वसिद्धिः॥

**अत्रेदमवधेयम्**—निराकारज्ञानवादिनो बौद्धा इति प्रसिद्धम्। 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति तेषां वचनम्। निराकारवादिनः इत्यत्र 'ज्ञानम्' विज्ञानरूपं ज्ञेयम्। विज्ञानपदवाच्यं स्वप्रकाशं तत्त्वम् जगन्मूलधातुभूतं वर्तते। तत् रूपवेदनासंज्ञासंस्कारविशिष्टम् आत्मेत्युच्यते। अधिपतिसहकार्यालम्बन-सहकृतम् 'ज्ञा'धात्वर्थभूतबुद्धिरित्युच्यते। **प्रवृत्तिविज्ञान**पदवाच्यमिदमेव सविषयकं व्यवहाराङ्गम्। एतत् द्विविधम् विज्ञानमेव 'अहं जानामि' इति व्यवहारहेतुः। रूपविज्ञानवेदनासंज्ञासंस्काररूपपञ्चस्कन्धात्मको जीवः 'अहम्' इत्युच्यते। **इदमेवालयविज्ञानमुच्यते**। तत्र विज्ञानं मूलधातुः। रूपं मानवादिशरीरहेतुभूतो वासनाविशेषः मानवाद्याकारहेतुः। संज्ञा मानवादिसंज्ञाहेतुः। नाम, रूपम् इति वेदान्तिभिरुच्यमानमेव संज्ञा, रूपम् च। वेदना सुखदुःखादिसंवेदनहेतुः। इदं धर्मिणः अहमर्थस्य स्वरूपम्। एवं 'जानामि' इति व्यवहारहेतवः—अधिपतिसहकार्याम्बनसमनन्तररूपाश्चत्वारः प्रत्ययाः। प्रत्ययाः=हेतवः। चक्षुरादिकं अधिपतिप्रत्ययः। आलोकादिकं सहकारिप्रत्ययः। घटादिविषयाः आलम्बनप्रत्ययाः। उत्तरक्षणं प्रति पूर्वक्षणस्य कारणत्वात् विज्ञानस्य पूर्वक्षणः समनन्तरप्रत्ययः। एतादृशकारणचतुष्टयवशात् स एव विज्ञानधातुः प्रवृत्तिविज्ञानमुच्यते। अतश्च एक एव विज्ञानधातुः उपाधिवशात् कारणवशाच्च अहमर्थोऽपि भवति, धर्मभूतं ज्ञानमपिभवति। एतदजानन्तः अनन्तरकालिका बौद्धाः, विज्ञानं आत्मा इति जानन्तः, तर्हि ज्ञानं नाम धर्मो नास्ति किलेति मन्वानाः आलयविज्ञानम्, प्रवृत्तिविज्ञानं चेति द्वयं कल्पयामासुः। वस्तुतस्तु बौद्धास्सर्वेऽपि नैरात्म्यवादिनः। विज्ञानञ्च नात्मा, किन्तु धातुविशेषः। एकविज्ञानमुपाधिवशादालयविज्ञानं प्रवृत्तिविज्ञानमिति द्वेधा व्यवह्रियते॥

सिद्धान्ते तु ज्ञाधात्वर्थभूतं ज्ञानपदवाच्यं स्वप्रकाशं आत्मधर्मभूतं ज्ञानं नियमेन सविषयकम्। धर्मिभूतं आत्मस्वरूपं तु स्वप्रकाशत्वात् ज्ञानपदवाच्यम्, न तु 'ज्ञा'धात्वर्थभूतम्। अत एव तत् निर्विषयकम्। अथवा स्वमात्रविषयकम्। एतञ्च धर्मभूतं ज्ञानं प्रत्यक्षनुमितिशाब्दस्मृतिभेदेन चतुर्विधम्। एतेषु प्रत्यक्षमेकमेव वर्तमानमात्रग्राहि। अत एव विषयजन्यं च। इतरं च त्रयं त्रैकालिकवस्तुविषयकम्। अतीतानामागामिनां च विषयाणां तदानीमभावेऽपि एतत् त्रिविधज्ञानेषु विषयतया भानात्। एतेषां सविषयत्वेऽपि विषयजन्यत्वं न भवति। तदानीं तेषामभावात्। वर्तमानस्यैव कारणत्वात्। एवञ्च शुक्तिरजतस्थले 'रजतं मया दृष्टम्' इत्यनुभवात् तद्भ्रमस्य प्रत्यक्षरूपत्वात्, तत्र विषयस्य कारणत्वमस्ति। रजतं तु विषयस्तत्र

नास्ति । अथापि तद्विषयं ज्ञानं कथं जातं? अत एव तत्र अलौकिकेन ज्ञानलक्षणसन्निकर्षेणैव विषयस्य भानमुक्तं **नैयायिकैः** । अन्यथाख्यात्यङ्गीकारे तु नास्ति गत्यन्तरम् । अख्यातिवादे तु 'रजतं पश्यामि' इत्युल्लेखनिर्वहणे क्लेशः । एतद्विचारः बुद्धिसरे ख्यातिवादे विस्तरेण भविष्यति ॥

ननु तर्हि प्रत्यक्षव्यतिरिक्तानां ज्ञानानां कथम् नियतविषयकत्वम्? असन्निकृष्टविषयकत्वादिति चेत्, तत्तत्करणैरेव तेषां विषयसमर्पणम् । अनुमितौ तद्धेतुभूतपरामर्शेन, शब्दे शक्तिज्ञानेन, स्मृतौ पूर्वानुभवेन च विषयसमर्पणम् । अतस्सर्वत्र सविषयकत्वोपपत्तिः । एवं च प्रत्यक्षे विषयस्य कारणत्वात्, शुक्तिरजतादिभ्रमाणां प्रत्यक्षत्वात् पुरतो विषयमन्तरापि भ्रमजननात्, भ्रमात्मकं ज्ञानं असद्विषयकमप्रमाणं जातम् । अत एव साक्षाद्भ्रमः प्रत्यक्षस्थल एव । इतरेषां तु ज्ञानानां विषयजन्यत्वाभावेन, विषयमन्तरापि जननेनासद्विषयकत्व-प्रयुक्तं भ्रमत्वं नास्त्येव । भ्रमत्वाभावेन प्रमात्वमवर्जनीयम् । स्मृतेस्तु प्रमात्वं वा, भ्रमत्वं वा स्वतो न निश्चेतुं शक्यम् । तद्धेतुभूतानुभवानुरोधेनैव तन्निर्णयम् । एवं नियमेन परमुखनिरीक्षणात्, स्मृतौ प्रमाभ्रमविभागो नास्तीति केचन । बाधकाभावादस्तीति सिद्धान्तः । एतत्तत्त्वमप्यग्रे भविष्यति । कुलालस्य तु करिष्यमाण-घटविषयकं ज्ञानं तस्य वर्तते । करिष्यमाणस्य घटस्य तदानीमभावात् तद् ज्ञानमपि न विषयजन्यम् । अथापि न भ्रमरूपं तत् इति '**स्वयमिह न मृषा**' इत्युक्तम् ॥

**अत्रेदं परीक्ष्यते**—कुलालस्य हृदि घूर्णमानं ज्ञानं किंरूपम्, न तावत् प्रत्यक्षम्, विषयस्याभावात्। नाप्यनुमानम्, लिङ्गाभावात् । नापि शाब्दम्, शब्दस्याभावात् । नापि स्मृतिः, करिष्यमाणस्य घटस्य पूर्वमनुभवाप्रसक्त्या स्मृतेरप्यसंभवात् । अर्थात् तत् भ्रमरूपमेवास्तु, का हानिः? अत एवाचार्यैरपि ज्ञानांशो न मृषा, 'नासीत् धीः' इति बाधादर्शनात् इत्युक्तमिति चेत्—तस्य ज्ञानस्य भ्रमरूपत्वस्याप्यननुभवात् । घटत्ववति घटत्वप्रकारकत्वस्य तत्र सत्त्वेन प्रमात्वस्यैव दर्शनात् । अतस्तस्य भ्रमत्वमपि न युक्तम् । तर्हि का गतिरिति चेत्;—

**अत्रेदं तत्त्वम्**—कुलालस्य विद्यमानं घटज्ञानं न निर्दिष्टघटव्यक्तिविषयकम्, किन्तु करिष्य-माणघटकरणमात्रोपयोगि सामान्यद्वारकं ज्ञानमेव । सर्वमपि वस्तु सामान्यविशेषात्मकमेव । प्रत्यक्षेण गवि गृह्यमाणे हि अश्वादिविलक्षणम्, इतरगवादिसलक्षणमेव गृह्यते । तत्र व्यावृत्तिस्तु तदानीमेव गृह्यते । अन्यथा हि गवाश्वग्रहणयोस्साङ्कर्यप्रसङ्गः । अत एव हि प्रत्यक्षं स्वलक्षणमात्रविषयकमिति वादः प्रसृतः । स चैकदेशवाद इति पूर्वमेव प्रदर्शितम् । इतरगोव्यक्त्युपस्थितौ तु अनुवृत्ताकारः प्रत्यभिज्ञायते । घटकर्तुः कुलालस्य बुद्धौ तु निर्दिष्टघटविषयकत्वं नास्त्येव । अत एव साक्षाद्भ्रमः प्रत्यक्षस्थल एव । तदाहि व्यक्तिविशेषस्मरणरूपं तत् स्यात् । वस्तुतस्तु तदा कुलालस्य बुद्धौ सामान्यरूपेण घटानामाकाराः परि-वर्तन्ते । स्वेन करिष्यमाणानां घटानामाकारविषयकं ज्ञानं तत् । अत एव सामान्यं नातिरिक्ता जातिः, किन्त्वाकृतिरेवेति पूर्वोत्तरमीमांसकाः। अवयवसन्निवेशविशेषरूपाया आकृतेर्नित्यत्वासंभवात् आकारातिरिक्ता, आकारव्यङ्ग्या जातिरेव सामान्यमिति **वैशेषिकाः** । एतत्तत्त्वमप्यग्रे (अद्रव्यसरे) भविष्यति । स्वेन क्रियमाणानां वस्तूनामाकारपरिमाणादिकं जानन्नेव कुलालो घटान्करोतीति तु वस्तुतत्त्वम् । अतश्च तद्ज्ञानं,

[निवृत्त्यनुपपत्तिः]

120. **ज्ञानस्याशेषभेदोदयविहतिकृतो न स्वनाश्यत्वयुक्तिः**
**वाताद्यैरेव सद्यश्शममधिकुरुते दग्धदाह्योऽपि वह्निः ।**
**तस्मात् तस्यान्यदेव प्रशमकमपरं तस्य चेत्यव्यवस्था**
**तच्चेच्छान्तिं न गच्छेत् कथमिव भविता सर्वभेदोपमर्दः ।। ५० ।।**

पूर्वदृष्टानां पूर्वकृतानां वा घटानां विमर्शनात्मकं ज्ञानम्, व्यक्तिविशेषासंस्पर्शे **उपनीतभानात्मकं** मानसं ज्ञानम्, व्यक्तिविशेषस्पर्शे तु भावनारूपम् । सर्वथा तु तद्ज्ञानं न विषयजन्यम् । अथापि न भ्रमरूपम् । भ्रमस्थलेऽपि भ्रमत्वं विषयांश एव, न तु विषय्यंशे । 'मम ज्ञानमेव न जातम्' इति बाधः कदापि न हि दृश्यते । 'ज्ञानम् तु जातम्, विषयस्तु नासीत्' इत्येवानुभवः । अयमंशः श्रीशंकराचार्याणामपि संमतः 'यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतम् ; तथापि तदवगतिः सत्यमेव फलम्, प्रतिबुद्धस्याप्यबाध्यमानत्वात् । न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानः तदवगतिमपि मिथ्येति मन्यते कश्चित्' (ब्र.सू.2-1-14शं.) इति । अतःसर्वत्र ज्ञानस्यैव कारणत्वात्, तस्य च सत्यत्वात् सत्यादेव सत्यसिद्धिः, नासत्यादिति सर्वं चतुरश्रम् ।। ४९ ।।

निर्विशेषवादेऽन्यामप्यनुपपत्तिं प्रदर्शयति—**ज्ञानस्ये**त्यादिना । प्रपञ्चभ्रमनिवर्तकं हि 'ब्रह्मैकमेव सत्यम्' इत्यादिरूपं ज्ञानं तदभिमतम् । इदञ्च ज्ञानं ब्रह्मभिन्नत्वात् मिथ्याभूतमेव । अनेन ज्ञानेन, प्रपञ्चभ्रमनिवृत्तौ जातायामपि, इदं ज्ञानं केन निवर्तते? यद्यन्येन ज्ञानेन, तर्हि तस्यापि निवर्तकं ज्ञानान्तरं वक्तव्यम् । एतस्यापि ब्रह्मभिन्नत्वेन मिथ्यात्वात् निवर्तकं ज्ञानान्तरमन्वेषणीयमित्यनवस्थाप्रसङ्गः । ततश्च लेशतो मिथ्याया अनुवर्तमानत्वाच्च न सम्पूर्णमुक्तिः कदापि संभवित्रीत्याक्षेपे, पुनस्तर्कं वर्धयामासुः—तस्य निवर्तकान्तरं नापेक्षते । प्रपञ्चभ्रमं सर्वं निवर्त्य, स्वयमेव तदपि शाम्यति । तत्र दृष्टान्ततया दावानलविषादीन् वदन्ति । वन्यो दावाग्निः स्ववशप्राप्तं सर्वं नाशयित्वा, अन्ते स्वयमपि स्वत एव शाम्यति, न तु तच्छामकान्तरापेक्षा । एवं शरीरे विषे प्रविष्टे, तन्नाशार्थं विषान्तरमेव प्रयुज्यते चिकित्सकैः । इदं च द्वितीयं विषं प्राथमिकं विषं नाशयित्वा स्वयमपि स्वत एव नश्यति, न तु पुनर्विषान्तरमपेक्षते । एवमेव निवर्तकज्ञानस्य निवर्तकान्तरापेक्षा नास्तीति । एतदपि न साधीयः । कुतः? **अशेषभेदोदयविहतिकृतः**=अशेषाः ये भेदाः, तेषामुदयः यस्मात् मायाविद्यादिपदवाच्यात् भवति,तादृशाविद्यायाः, विलयकृत्=नाशहेतुः निवर्तकं ज्ञानम्, तस्य=ज्ञानस्य **स्वनाश्यत्वयुक्तिः**=अविद्यां नाशयित्वा, स्वयमेव नश्यति इत्यत्र या युक्तिः प्रदर्शिता, सा **न**=न घटते । संपूर्णाविद्यानिवर्तनक्षमस्य ज्ञानस्य केन वा निवृत्तिः भवेत्? स्वयमेव भवेदिति तु न साधीयः । कुत इत्यत्राह—**वाताद्यैरित्यादि** । **दग्धदाह्यः**=दग्धसर्वेन्धनः **वह्निरपि वाताद्यैरेव सद्यः शमम्**=शान्तिम् **अधिकुरुते प्राप्नोति**। 'आद्य'पदेन, दग्धदाह्यविशेषणेन सूचितः कारणाभावो गृह्यते । कारणजन्यत्वकथनेन च सत्यवस्तुस्थल एवेदं सर्वं युज्येतेत्यपि सूचितम् । वन्हिःकिल निराश्रयो न तिष्ठेत् । अथापि स 'आश्रयाशः' । **तस्मात्**=मिथ्याभूतस्य स्वयं निवृत्त्यसंभवात् **तस्य**=निवर्तकज्ञानस्य

**प्रशमकम्**=निवर्तकम् अन्यदेव वाच्यम्। एवं तस्य निवर्तकज्ञाननिवर्तकस्य च **अपरम्**=अन्यदेव निवर्तकं वाच्यम्। इत्यव्यवस्था=अनवस्था दुष्परिहरा। एवमनङ्गीकारे—**तत्**=निवर्तकं ज्ञानम्, **शान्तिं न गच्छेद्यदि, सर्वभेदोपमर्दः**=सकलभेदभ्रमनिवृत्तिः **कथमिव**=कथं वा **भविता**, न कदापि, लेशतो भेदस्य परिशेषात्। अतश्चानिर्मोक्षप्रसङ्गः॥

सत्यस्य कारणजन्यस्य दावानलादेः कारणनिवृत्त्या स्वयं निवृत्तिः युज्यते। अङ्गुल्यवष्टम्भादिना सत्येन कारणेन जन्यस्य द्विचन्द्रज्ञानादेः अङ्गुल्यवष्टम्भरूपकारणनिवृत्त्या निवृत्तिश्च युज्यते। मिथ्याभूतस्य तत्त्वज्ञानेन निवृत्तिरपि युज्यते। मिथ्याभूतस्य मिथ्याज्ञानेन निवृत्तौ तु निर्वर्तकस्य मिथ्याज्ञानस्य निवृत्तिः स्वयं कथं भवेत्? ननु मार्गमध्ये जातस्य शुक्तिरजतभ्रमादेः, उत्तरकाले बाधकज्ञानाभावेऽपि निवृत्तिर्दृश्यते। इति चेत्, तद्ज्ञानकारणचक्षुस्संयोगादेः सत्यस्य निवृत्त्या तत्र शुक्तिरजतज्ञानस्य सत्यत्वात् नाशः; न तु निवृत्तिः। तत्र ज्ञानं खलु मिथ्या, कथं सत्यमित्युच्यते? इति चेत्, विषय एव मिथ्या, न तु ज्ञानम्। बाधकज्ञानं हि अधिष्ठानविषयकम् अध्यस्तं रजतादि निवर्तयति, न तु रजतज्ञानम्। 'तादृशं ज्ञानमेव न जातम्' इति न हि कोऽप्यनुसन्धत्ते। शुक्तिरजतज्ञानम्, शुक्तित्वज्ञानं द्वयमपि सत्यम्। एवं रजतत्वज्ञानमपि सत्यम्। शुक्तौ रजतत्वं मिथ्या। अत एव तदेव बाध्यते, निवर्तते च, न तु विषयी। संवित् खलु भगवती सर्वत्र सर्वकालेऽपि परमसत्या। विषयस्याभावात् ज्ञानं विषयं च पृथक्कर्तुमशक्ताः तामपि मिथ्येति केचन भ्रमन्ते। विषयस्य पृथक्करणं कथम्? इति चेत्; विचारयामस्तद्ज्ञानार्थयोरभेदनिराकरणप्रकरणे। विषनाशक-विषस्थलेऽपि 'सुन्दोपसुन्द' न्यायेनोभयमेव परस्परनिवर्तकम्। अत एव निवर्तकविषाधिक्ये प्राणानामपायः, न्यूनतायां पूर्वविषानिवृत्तिश्च प्रत्यक्षसिद्धा। प्रकृते प्रपञ्चभ्रमनिवर्तकस्य ज्ञानस्यापि ब्रह्मभिन्नत्वेन मिथ्यात्वात्, बाधकज्ञानान्तरमन्तरा निवृत्तिस्तु न युज्यते। न च भेदज्ञानहेतुभूतायाः अविद्यायाः कारणभूताया निवृत्तत्वात् तस्यापि निवृत्तिरावश्यकीति भ्रमितव्यम्, कं वञ्चयसि महात्मन्! निवर्तकज्ञानहेतुभूताया अविद्याया अंशतोऽनुवृत्तिर्ह्यभ्युपगम्यते। 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.1-10) इति अन्तकाल एव सर्वमाया-निवृत्तिरिति खलु भवन्मतम्। अन्यथा कथं जीवन्मुक्त्युपपादनम्?

अस्तु तर्हि तथैव। शरीरपातकाले, शरीरनाशात् अविद्यालेशस्यापि स्वयं निवृत्तिः इति चेत्, कथं स्वयंनिवृत्तिरित्येव पृच्छामः। शरीरनाशादित्युक्तं किलेति चेत्; शरीरं कथं स्वयं नश्येत्? तद्धेतुकर्मनाशात् इति चेत्, कर्मापि मिथ्यैव किल भवतः। कर्मणः सत्यत्वे शरीरस्यापि सत्यत्वं स्यात्। सत्यस्य ज्ञानेन निवृत्तिः न स्यात्। अविद्यालेशानुवृत्त्या शरीरप्रतिभास एव जीवन्मुक्तिरिति खलूच्यते। अविद्यानिवृत्तिमन्तरा शरीरप्रतिभासनिवृत्तिर्न भवेत्। तर्हि 'चक्रभ्रमिवद्धृतशरीरः (सां.का.67) इति कथमिति चेत्; अयि भोः! तत् सांख्यस्य संमतम्। न ते शरीरमिथ्यात्ववादिनः। मिथ्यावादवासनया सर्वं विस्मृतं भवता। आः! स्मृतम्, अविद्या नानुवर्तते, अविद्यावासनैवानुवर्तते। सा तु स्वयं नश्येत् इति चेत् आः! बृहस्पतिरेव त्वम्। 'अविद्या' 'अविद्यावासना' इत्यादि अविद्यासत्यत्ववादे, सविशेषवाद एव च संगच्छेत; न तु ब्रह्मभिन्नसर्व-मिथ्यात्ववादे। निर्विशेषवादे च उक्तश्वेताश्वतरश्रुतावपि मायानिवृत्तिरेवोच्यते, न तु वासनायाः। वासनाया अपि

[निवर्तकज्ञानविषयानुपपत्तिः]

121. **बोधस्यान्त्यस्य वेद्यं किमु तव विशदं ब्रह्म मायान्वितं वा**
**किं वा भेदप्रपञ्चः किमु तदनृतता किन्तु वेद्यं न किञ्चित्।**
**आद्ये स्यात् ब्रह्म दृश्यं, तदुपरि युगले मोहसत्ताऽथ तुर्ये**
**सूते द्वैतं सती सा स्वविहतिमनृता, पञ्चमे स्यान्न धीत्वम्॥ ५१ ॥**

ब्रह्मभिन्नत्वात् मायात्वं वर्तत इत्यादयस्त्वतिवादाः। तदा हि वासनापदं आदावेव वर्जनीयमासीत्। वर्जने तु पूर्वोक्तानिर्मोक्षप्रसङ्गोऽप्यायादेव। 'य ईशेऽस्य जगतो **नित्यमेव नान्यो हेतुर्विद्यत ईशनाय**' (श्वे.6-76) 'परास्य शक्तिर्विविधैवश्रूयते **स्वाभाविकी** ज्ञानबलक्रिया च (श्वे.6-8)' इति परमात्मन ईशितृत्वं नित्यम्, निरुपाधिकं च, ज्ञानशक्त्यादिकमपि स्वाभाविकमेव, न तु मायाद्यौपाधिकमिति च कण्ठत एव घोषयन्त्यां भगवत्यां श्रुतौ, एतत्सर्वमपलपन्तं वृथाब्रह्माहंमानिनं स एव रक्षतादव्याजकरुणासागर इति विरमामो सत्यापचारतः। स्मरामश्च 'ये त्वीश्वरं निरपवाददृढप्रमाणसिद्धस्वरूपमपि नाभ्युपयन्ति मूढाः। पापाय तैस्सह कथापि वितन्यमाना कल्पेत नूनमिति युक्तमतो विरन्तुम्॥' (न्या.मं. 1) इति वेदान्तिनंमन्यमानभवदपेक्षयापि वरिष्ठस्य नैयायिकस्य वचनम्॥

अयि भोः! मा पूरय शेषं निन्दावचनैः। विषनाशकविषे किमुत्तरम्? भो ब्रह्मन्! न निन्दावचनं तत्, किन्तु निर्वेदवचनम्। उक्तमेवोत्तरं सुन्दोपसुन्दन्यायेनेति। सर्वं तत् सत्यत्वे सत्येव सङ्गच्छेत। मिथ्याभूतस्य स्वतो निवृत्तिर्यदि, आदावेव तथासंभवात्, तत्त्वज्ञानसंपादनक्लेशो व्यर्थ एव। सर्वमविचारितरमणीयं चेत्, तर्हि तूष्णीं वा तिष्ठ, तादृशस्य विचारेऽनधिकारात्। अपि च केवलदृष्टान्तप्रदर्शनेन संभवमात्रं सिद्ध्येत्, न तु निर्णयः। प्रत्युतात्यन्तालौकिके विषये दृष्टान्तः किं कुर्यात्? प्रत्युत दृष्टान्तपरंपराप्रदर्शनं **जात्यन्धपुत्रमृतिन्याय**मनुसरेदित्यलं शब्दजालविवर्धनेन॥ ५०॥

निवर्तकज्ञानस्य विषयानुपपत्तिं प्रदर्शयति—**बोधस्येत्यादिना**। **अन्त्यस्य**=अन्तिमस्य संसारभ्रमनिवर्तकस्य **बोधस्य**=ज्ञानस्य **वेद्यम्**=**विषयः तव विशुद्धम्**=मायारूपोपाधिरहितं नित्यशुद्धबुद्धमुक्तस्वरूपं **ब्रह्म किमु?**=ब्रह्म किम्? **वा**=अथवा **मायान्वितं ब्रह्म?**=मायाविशिष्टं ब्रह्म? **वा**=अथवा **किं भेदप्रपञ्चः?**=नानाभेदरूपं जगत्? **किमु तदनृतता**=अथवा तादृशजगन्मिथ्यात्वं वा? **किन्तु वेद्यं न किञ्चित्**=विषय एव किञ्चिन्नास्ति वा? क्रमश उत्तरमाह—**आद्ये**=विशुद्धं ब्रह्मैव विषय इति पक्षे **ब्रह्म**=विशुद्धं ब्रह्म **दृश्यं स्यात्**=दृग्विषयः स्यात् ब्रह्म, न तु दृशिः। दृश्यत्वे च घटादिवत् मिथ्यात्वमप्यनिवार्यम्। जगतः दृश्यत्वात् खलु मिथ्यात्वमुच्यते। **तदुपरि युगले**=तदनन्तरयोः कल्पयोः द्वयोः **मोहसत्ता**=तथैवाविद्या तिष्ठेत्, न तु निवर्तेत। यथावस्थितब्रह्मस्वरूपज्ञानात् किल प्रपञ्चभ्रमनिवृत्तिः। मायाविशिष्टं ज्ञानं तु प्रपञ्चभ्रमपोषकम्, न वारकम्। एवं भेदप्रपञ्चज्ञानमपि भ्रमवारकं न भवति। अधिष्ठानज्ञानेन किलाध्यस्तप्रतिभासनिवृत्तिः। अध्यस्तविषयकज्ञानेन कथं निवृत्तिः? **अथ तुर्ये**=चतुर्थे

[निवृत्त्यनुपपत्तिः]

122. **साध्या वस्सर्वमायाविरतिरपि परं ब्रह्म तस्मात् परा वा**
**पूर्वत्र प्रागपि स्यात्, परमपि न भवेत् उत्तरत्राम्युपेते।**
**साऽपि स्याच्चेन्निवर्त्या पुनरपि विलगेत् पूर्व एव प्रपञ्चो**
**नो चेत्सत्यैव सा स्यात् प्रसजति च ततो ब्रह्म तत् सद्वितीयम्॥ ५२॥**

प्रपञ्चमिथ्यात्वरूपकल्पे **सा**=तदनृतता=प्रपञ्चमिथ्यात्वम् **सती**=सत्या चेत् **द्वैतम्**=ब्रह्मव्यतिरिक्तसत्यम् **सूते**=जनयति। प्रपञ्चमिथ्यात्वं सत्यमित्यङ्गीकारात्। **अनृता**=प्रपञ्चमिथ्यात्वम् अनृतम् यदि **स्वविहतिम्**= प्रपञ्चमिथ्यात्वाभावमेव **सूते**=बोधयति, मिथ्यात्वम् अनृतं चेत् प्रपञ्चः सत्यः खलु भवेत्। तथा च भवदनिष्टसिद्धिः। **पञ्चमे**=न किञ्चिदपि विषय इति अन्तिमे पञ्चमविकल्पे **धीत्वम्**=ज्ञानत्वमेव न **स्यात्**। निर्विषयस्य ज्ञानत्वासंभवात्। अतश्च मोक्षहेतुभूतं ज्ञानं दुर्निरूपम्। अतश्चानिर्मोक्षप्रसङ्गः॥

ननु ज्ञानं द्विविधम्—मुख्यं गौणञ्च। मुख्यं ज्ञानं आत्मस्वरूपमेव। गौणं ज्ञानं तु अन्तःकरणवृत्तिरूपम्। मोक्षहेतुभूतं च ज्ञानं गौणमेव, न तु मुख्यम्, तस्य स्वप्रकाशत्वात्; आत्मस्वरूपज्ञानं फलरूपम्, न तु करणरूपम्। वृत्तिरूपं ज्ञानमेव करणरूपम्। एतादृशगौणज्ञानविषयत्वं न दोषावहम्। अत एवोक्तम्— 'फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्। ब्रह्मण्यध्याससिद्ध्यर्थं वृत्तिव्याप्यत्वमिष्यते।' इति॥ एतादृशवृत्तिविषयत्वं ब्रह्मणो न दृश्यत्वमावहेदिति चेत्,—अहो!

अबद्धं बहुधा प्रोच्य पुनस्तत्साधनाय च। कियत् क्लिश्यन्त्यमी शाठ्यात् इष्टसिद्धिस्तथापि न॥

स्वरूपज्ञानं हि कदापि न सविषयकम्। गौणं ज्ञानमेव तादृशम्। एतादृशज्ञानविषयत्वमेव जगतो दृश्यत्वापादकम्। परन्तु तदेव ब्रह्मणो दृश्यत्वं नापादयतीति विचित्रमिदम्॥

उपर्यपि परिष्कुर्मः इति चेद्वर्धतां पुनः। शब्दराशिः, परं त्वेतत् विचार्येताग्रिमे सरे॥
अथवा सावधानस्त्वं पश्य गूढार्थसंग्रहम्। **श्रीरङ्गनाथायोगीन्द्रैः** रहस्यज्ञैः प्रकाशितम्॥ ५१॥

निर्विशेषाद्वैतवादे अविद्यानिवृत्तिरपि दुर्निरूपेति प्रदर्शयति— **साध्या व** इत्यादिना। **वः**=निर्विशेषाद्वैतवादिनस्तव **साध्या**=ब्रह्मज्ञानेन साध्या **सर्वमायाविरतिरपि**=निश्शेषाविद्यानिवृत्तिरूपो मोक्षोऽपि, **परं ब्रह्म**=किं परब्रह्मस्वरूपा? **उत, तस्मात्**=परब्रह्मणः **परा वा**=भिन्ना वा? **पूर्वत्र**=प्रथमकल्पे=परब्रह्मरूपत्वे **प्रागपि**=ब्रह्मज्ञानात् पूर्वमपि **स्यात्**=अविद्यानिवृत्तिः स्यात्; ब्रह्मस्वरूपस्य सर्वदा सत्त्वात्। तथा चानुभवविरोधः, ब्रह्मविद्यानुष्ठानादिवैफल्यं च। **उत्तरत्र**=द्वितीयकल्पे **अभ्युपेते**=अङ्गीकृते सति **परमपि**=ब्रह्मज्ञानानन्तरमपि **न भवेत्**=निश्शेषाविद्यानिवृत्तिः न स्यात्। अविद्यानिवृत्तेः ब्रह्मभिन्नत्वेन मिथ्यात्वात्, तस्या एव मुक्तिरूपत्वेन तत्सत्त्वावश्यकत्वात्, अविद्यानिवृत्तिभिन्नानामेव ब्रह्मज्ञानेन निवृत्त्या निखिलाविद्यानिवृत्तेरभावात्। ननु मिथ्यात्वात् सापि निवर्तत इति चेत्, तत्राह— **सापि**=अविद्यानिवृत्तिरपि **निवर्त्या स्यात्**=ब्रह्मज्ञानबाध्यैव, मिथ्यात्वाविशेषात् **चेत्**=इति यदि, **तदा पूर्वः**=ब्रह्मज्ञानोत्पत्तेः प्राक्तनः

**प्रपञ्च एव**=संसारपदवाच्यं जगदेव **पुनरपि विलगेत्**=पुनरप्युत्तिष्ठेत्=अविद्यानिवृत्तेरपि निवृत्तौ, पुनः अविद्यैव उन्मज्जतीत्युक्तं भवति। घटाभावस्याभावः घटरूप एव खलु स्यात्, न त्वतिरिक्तः, अनवस्था-प्रसङ्गात्। घटाभावस्यैवातिरिक्तत्वे विवादग्रस्ते सति, तस्याप्यभावः कथंतरामतिरिक्तः स्यात्? अतः अविद्यानिवृत्तेः निवृत्तिर्न वक्तुं शक्येति, तस्याः परिशेषात् तस्याश्च ब्रह्मभिन्नत्वात् पूर्णमुक्तिर्न स्यात्। ननु पूर्णमुक्तिस्वरूपमेव तादृशम्, अन्यस्याभावात्। अतः परिशिष्यतामविद्यनिवृत्तिरेका, न कापि हानिरित्य-त्रोच्यत—**नो चेत्**=अविद्यानिवृत्तिः न निवर्तते चेत्, **सा**=अविद्यानिवृत्तिः **सत्यैव स्यात्**। मिथ्याभूतस्य किल निवृत्तिरनिवार्या। यदि न निवृत्तिः, तदा सा अविद्यानिवृत्तिः ब्रह्मवदेव सत्यैव स्यात्। अस्तु तथैव। मुक्तिः खलु नित्या सर्वसंमता। अन्यथा सा कथं परमपुरुषार्थः स्यादिति चेत्—**ततश्च**=ब्रह्मवदेवाविद्या-निवृत्तेरपि नित्यसत्यत्वाच्च **तत् ब्रह्म**=भवदभिमतं निर्विशेषं ब्रह्म **सद्वितीयं प्रसजति**=स्वसदृशद्वितीय-वस्तुविशिष्टं भवति। तथा चापसिद्धान्तः, ब्रह्मव्यतिरिक्तसत्यवस्त्वङ्गीकारात्॥

नन्विदं सर्वम् '**एकबाधकबाध्यत्व**'न्यायापरिज्ञानमूलम्। 'ब्रह्मभिन्नं सर्वं मिथ्या' इति वाक्यं हि ब्रह्मव्यतिरिक्तं सर्वं निवर्त्य, तद्वाक्यजन्यज्ञानस्यापि ब्रह्मभिन्नत्वेन मिथ्यात्वात्, स्वात्मानमपि अन्ते स्वयमेव निवर्तयति। यथा विषनाशकं विषं स्वभिन्नं विषान्तरं नाशयित्वा, अन्ते स्वात्मानमपि स्वयमेव नाशयति। अतः कामनुपत्तिमत्र पश्यसि त्वम्? पश्याम्यहमिदं भवत इन्द्रजालम्। विषनाशादिदृष्टान्तास्समाहिता एव। तावन्मात्रमपि न। **इष्टसिद्धेररभ्याद्वैतसिद्धिचन्द्रिकादिक**मपि पश्यामि। वक्तव्यञ्चोक्तमनुपदमेव। इतोऽपि यद्यपेक्षितं, पश्य त्वमपि **श्रीभाष्यगूढार्थसंग्रहं श्रीमद्रङ्गनाथपरकालयतीन्द्रग्रथितम्**॥

आहत्य, पण्डितंमन्यैः त्वादृशैः कल्पनापरैः। वेदान्तशास्त्रमखिलं तर्कशास्त्रीकृतं बत!॥
सर्वत्राप्यस्ति दृष्टान्तः गतिर्दार्ष्टान्तिकस्य का? न हि दृष्टान्तमात्रेण साध्यसिद्धिर्भविष्यति॥
अनुष्णोऽग्निः पदार्थत्वाद्द्रव्यत्वाद्वा यथा जलम्। इत्यत्र दोषं कं पश्येः ऋते प्रत्यक्षबाधनम्॥
ब्रह्मापि दुर्निरूपत्वात्तुच्छं स्याच्छशशृङ्गवत्। ब्रह्मतुच्छमवेद्यत्वात् तथैव शशशृङ्गवत्॥
दोषोऽत्र वा ऋते कः स्याद्धर्मिग्राहकमानतः। ब्रह्मौपनिषदं ब्रूषे, दुस्तर्कान् वर्धयस्यहो!॥
भिक्षितं यद्बौद्धगृहात्सर्वं दर्शयसे बहिः। भयं विना स्वीयमिव को न जानाति बुद्धिमान्॥
इतोऽपि यदि जिज्ञासा स्याच्चेदीदृशमर्मसु। यदि वा सहनापि स्यादधीष्व **शतदूषणीम्**॥
इदमत्रोच्यते सर्वहितं त्रैकालिकं च यत्। 'आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति॥
न तस्माद्विन्दते क्षेमम् जारम् नार्यसती यथा॥' इत्याह भगवान् कृष्णः श्रीमद्भागवते हितम्॥
न कदापि च केनाप्युल्लङ्घनीयं हितेप्सुना। यस्तु तिष्ठति कक्ष्यायां यस्यां तामवधारयेत्॥
तस्यानुरूपं वर्तेत वदेत् कुर्याच्च सर्वशः। पिबन् भुञ्जन् व्यवायंश्चाप्यर्थकामपरायणः॥
सर्वं मिथ्येति च ब्रूयाद्यदि, स्यात् तस्य का गतिः। मायायां मग्न एवायमन्यानुपदिशेद्यदि॥
वक्तुः श्रोतुर्गतिः का स्यात्? तान् रक्षतु दयानिधिः। वेदान्तस्साधनायैव जल्पार्थं नैव वर्तते॥
विचारोऽप्यर्थदार्ढ्याय न तु ख्यात्यादिहेतवे। यदा यद्येन वक्तव्यम् यथा यावद्धवेत्तथा॥

[निवर्तकज्ञानाश्रयानुपपत्तिः]

**123. अन्त्यज्ञानस्य जीवः स्थितिपदमथवा केवलं ब्रह्म ते स्यात्**
**आद्ये तेनैव बाध्यो न तदुपजनयेत् धीस्थितौ किं ततोऽस्य ।**
**अन्त्ये सत्याऽनृता वा तदधिकरणता नाद्य इष्टः परस्मिन्**
**तत्क ऌप्त्यादेरयोगस्तदिह विमृशतां किं न दुष्टं त्वदिष्टम् ॥ ५३ ॥**

तावदेव भवेत्सर्वं जातुचिन्नाधिकं भवेत् । स्वस्वरूपविरुद्धं तु न वदेज्जातुचिद्बुधः ॥
सर्वमन्यत्परित्यज्य चिन्तयात्महितं द्रुतम् । त्यज कामक्रोधमोहान् वृथा कालं न यापय ॥
शरणं गच्छ तं शीघ्रं भक्तवत्सलमच्युतम् । अनन्यभावमनसा स तु श्रेयो विधास्यति ॥ ५२ ॥

निर्विशेषात्माद्वैतवादेऽनुपपत्त्यन्तरं प्रदर्शयति—**अन्त्यज्ञानस्येत्यादिना** । **ते**=आत्मा एक एव वर्तते, भेदस्तु अविद्याकृतः । सोऽपि निर्विशेषः इति वदतस्तव, **अन्त्यज्ञानस्य**=संसारभ्रमनिवर्तकस्य 'ब्रह्मव्यतिरिक्तं सर्वं मिथ्या' इति ज्ञानस्य **स्थितिपदम्**=आश्रयः **जीवः**=किं मायाकल्पितो जीवः स्यात्? **अथवा केवलं ब्रह्म**=अविद्यासंबन्धरहितं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म **स्यात्? आद्ये**=जीवः तदाश्रय इति प्रथमपक्षे **तेनैव**='ब्रह्मव्यतिरिक्तं मिथ्या' इत्यनेनैव ज्ञानेन **बाध्यः** अहमर्थो जीवः **तत्**=तादृशमात्मनाशकरं ज्ञानम् **न उपजनयेत्**=संपादयितुं न प्रयतेत । भवन्मते हि अविद्याकल्पितः जीव एवाहमर्थः, विशुद्धं ब्रह्म आत्मपदवाच्यः नाहमर्थः । लोके हि प्रयत्नस्य सर्वस्यापि 'अहम्' इतिभावनाविषय एव मूलमिति सर्वसंमतम् । समर्थितं चैतद्विस्तरेण (श्लो.10) । ननु न वयं सर्वनाशं वदामः । अहमर्थस्तु चिदचिन्मिश्रः । तत्र चिदंशः अनुवर्तत एव । अचिदंशः प्रकृतिपरिणामभूतः अहङ्कारः । तस्य 'अहम्' इति व्यवहारहेतुत्वादेव तस्य 'अहङ्कारः' इति संज्ञा । एतदुपाधिकम्, एतदवच्छिन्नम्, एतत्प्रतिबिम्बितं वा चैतन्यमेव जीवः । 'अहम्' इत्यभिमानहेतोरहङ्कारस्य नाशेऽपि चैतन्यांशस्त्वनुवर्तत एवेति चेत्, तत्राह—**धीस्थितौ**= अहमर्थान्तर्गताहङ्कारस्य नाशेऽपि, तदन्यचैतन्यपरिशेषेऽपि **अस्य**=नश्यतः अहमर्थस्य जीवस्य **ततः**= चैतन्यपरिशेषेण **किम्**=किं भविष्यति=को लाभः? तदेतत्सर्वमुक्तम्—

'अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेऽपि मत्तोऽन्या काचिद्ज्ञप्तिरवस्थिता । इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥'
(श्रीभा.1-1-1) इति । अत्र वक्तव्यं सर्वं पूर्वमेव (श्लो. 10) विस्तरेणोक्तम् ॥

**अन्त्ये**=केवलं ब्रह्मैवाश्रय इति द्वितीयपक्षे **तदधिकरणता**=तादृशज्ञानाश्रयत्वम् **सत्या, अनृता**= सत्या असत्या **वा? । आद्यः** पक्षः=आश्रयत्वं सत्यमिति पक्षः **नेष्टः**=तव न संमतः । तदा हि ब्रह्म सविशेषं स्यात् । **परस्मिन्**=द्वितीये तु पक्षे, आश्रयत्वस्य मिथ्यात्वे, **तत्क ऌप्त्यादेः अयोगः**=तत्कल्पनस्यासंभवः । मिथ्याभूतस्य हि कल्पनम् अविद्यामन्तरा नोपपद्यते । अतश्च अविद्यापरिशेषस्य, अविद्यान्तरस्य वा प्रसङ्गः । आदिपदेन तत्प्रतिभासतत्कार्यादेः ग्रहणम् । **तत्**=तस्मात् **इह**=एतद्विषये **त्वदिष्टम्**=त्वत्समतं **किं**=किं वा न **दुष्टम्?** सर्वं दुष्टमेव । **विमृशताम्**=आत्मसाक्षिकं चिन्त्यताम् ॥ ५३ ॥

[ब्रह्मविद्यायास्सर्वप्रायश्चित्तरूपत्वम्]

**124. नाभुक्तं कल्पकोट्याऽप्युपशमनमियात् कर्म निष्कृत्यभावे**
**विद्यातस्तद्विनाशश्रुतिरिह तदसौ तत्प्रशंसेति चेन्न ।**

एवं परपक्षेऽनुपपत्तीः प्रदर्श्य, स्वपक्षे संभाविता अनुपपत्तीराशङ्क्य परिहरति—**नाभुक्तमित्यादि**। **अभुक्तम्**=अननुभूतफलम् । कर्मणोऽनुभवो नाम तत्फलानुभव एव । **कर्म**=पुण्यपापरूपं कर्म **कल्पकोट्यापि**=अनन्तेनापि कालेन **उपशमनम्**=विनाशम् **न इयात्**=न प्राप्नुयात् । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मृतेरर्थानुवादोऽयम् । यदि पुण्यपापं रूपं कर्म स्वफलमदत्त्वैव विनश्येत्, तर्हि कृतहानाकृताभ्यागमादिप्रसङ्गात् समस्तशास्त्रवैयाकुली स्यात् । अतः तत्तत्कर्मफलानुभवार्थं यदा जन्म स्वीकरोति कश्चित्, तस्मिन् जन्मनि अनेकजन्मारंभकं पुनरपि नूतनतया कर्म कुर्यादेव सर्वोऽपि । संभवन्त्येव पापारंभकानि पापानि । श्रूयन्ते किल वचनान्यपि तादृशानि 'पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः । नष्टप्रज्ञः पापमेव पुनरारभतेऽवशात् ।।' इत्यादीनि । ततश्च शान्तासूर्मिषु समुद्रस्नानवत् मोक्षस्य न कदापि संभवः । एवञ्च मायावादिमते आरोपितो दोषः भवतोऽपि प्रकारान्तरेण समानः इत्याशयः । ननु 'नाभुक्तं क्षीयते कर्म' इति वचनं कर्मफलस्यानुल्लङ्घनीयत्वतात्पर्यकमुत्सर्गभूतम् । अन्यथा हि प्रायश्चित्तशास्त्रं सर्वमप्रमाणं स्यात् । प्रसिद्धं किल वचनम् 'ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा । निष्कृतिर्विहिता सद्भिः' इत्यादीत्यत्राह—**निष्कृत्यभावे इति** । फलप्रदानात् यथा कर्म नश्यति, तथा प्रायश्चित्तेनापीति धर्मशास्त्रवचनसिद्धम् । तथा च ब्रह्मविद्यया कथं कर्मणां नाशः? अतोऽनिर्मोक्षप्रसङ्गस्सिद्धान्तेऽपि समानः ।।

ननु यथा प्रायश्चित्तस्य नाशकत्वं शास्त्रसिद्धम्, तथा ब्रह्मविद्याया अपि कर्मनाशकत्वं शास्त्रसिद्धमेव । 'एवमेवंविदि पापं कर्म न शिष्यते'(छां.4-14-3) 'विद्वान् पुण्यपापे विधूय'(मु.3-1-3) 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा' (गी.8-36) इत्यादिवचनानि किल ब्रह्मविद्यायाः कर्मनाशकत्वं स्पष्टं वदन्तीत्यत्राह=**विद्यात इति** । **तत्**=तस्मात् **इह**=शास्त्रेषु **असौ**=श्रूयमाणा **विद्यातः तद्विनाशश्रुतिः**=ब्रह्मविद्यया सर्वकर्मनाशबोधिका श्रुतिः, श्रुतिः स्मृतेरप्युपलक्षणार्था । **तत्प्रशंसा**=विद्याप्रशंसार्था, न तु स्वार्थे तात्पर्यवती । अन्यथा चतुर्दशानामपि विद्यानां पापनाशकत्वं स्यादिति महती वैयाकुली दुष्परिहरा । न च 'अध्यात्मविद्या विद्यानाम्' (गी.10-) इति भगवतैव अध्यात्मविद्याया इतरविद्यापेक्षया उत्कृष्टत्ववचनात्, इतरविद्यापेक्षया वेदान्तविद्यायाः पार्थक्यात्, न तौल्यमिति वाच्यम्, चतुर्दशविद्यास्थानेषु वेदान्तशास्त्रस्य 'मीमांसा' पदेनैव ग्रहणेन, इतरविद्यापेक्षा श्रैष्ठ्यवचनमपि पूर्ववत् प्रशंसैव ।।

ब्रह्मविद्या हि ज्ञानरूपा । ज्ञानं तु अज्ञानस्य नाशकम्, न तु वस्तुनो नाशकम् । अत एव 'तत्त्वज्ञानान्निःश्रेयसाधिगमः' (न्या.सू.1-1-1)इत्युक्तं ज्ञानस्य निःश्रेयससाधनत्वप्रकारं प्रदर्शयत् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' (न्या.सू.1-1-2) इति पारमर्षं सूत्रं तत्त्वज्ञानस्य

**तादृग्विद्यैव तन्निष्कृतिरिति हि विदांचक्रुराम्नायवृद्धाः**
**नान्यद्ब्रह्मानुभूतिप्रतिभटदुरितध्वंसतः साध्यमत्र ॥ ५४ ॥**

मिथ्याज्ञाननाशनद्वारैवापवर्गसाधनत्वं वक्ति, न तु साक्षात्। अतः ब्रह्मविद्यायाः पापनाशकत्वं न साक्षात्सङ्गच्छत इति, तद्वचनं स्तुत्यर्थमेव **इति चेत्, न**। कुत इत्यत्राह—**तादृगित्यादि**। **आम्नायवृद्धाः**= वेदवृद्धाः=ज्ञानवृद्धाः, प्रकृते, उपनिषत्तत्त्वज्ञा ब्रह्मज्ञानिनः स्मृतिकर्तारः, महर्षयश्च **तादृग्विद्यैव**=महाप्रभावयुक्ता ब्रह्मविद्यैव **तन्निष्कृतिः इति**=सञ्चितकर्मणामसंख्यातानां प्रायश्चित्तरूपेति **विदुः**=तद्रहस्यं ज्ञात्वा प्रकटितवन्तः—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे'(मु.2-2-9) 'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानिवै। यानि, तेषामशेषाणां कृष्णानुस्मरणं परम् ॥' इत्यादौ। 'यथाग्निरुद्धतशिखः कक्षं दहति सानिलः। तथा चित्तस्थितो विष्णुः योगिनां सर्वकिल्बिषम् ॥' (वि.पु.6-7-32) 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते' (गी.4-37) इति विष्णुध्यानस्य सर्वपापनाशकत्वं कण्ठत एवोक्तम्। ननु ब्रह्मप्राप्तिकामनावते विहितायाः काम्यतुल्यायाः ब्रह्मविद्यायाः कथं प्रायश्चित्तरूपतेत्यत्राह—**नान्यदित्यादि**। **ब्रह्मानुभूतिप्रतिभटदुरितध्वंसतः**— **ब्रह्मानुभूतेः**=ब्रह्मानुभवस्य ब्रह्मप्राप्तिरूपस्य **प्रतिभटानि**=प्रतिबन्धकानि यानि **दुरितानि**=पुण्यपापानि **तेषां ध्वंसतः**=नाशनात् **अन्यत्**=अतिरिक्तं **साध्यम्**=ब्रह्मविद्यया साधनीयम् **अत्र**=ब्रह्मानुभवरूपमुक्तौ **न**= नास्ति। ब्रह्मविद्यायाः ब्रह्मप्राप्तिसाधनत्वं नाम नापूर्वफलोत्पादकत्वरूपम्, तदा हि मुक्तेः स्वर्गादिवदनित्यत्वप्रसङ्गः। अतः ब्रह्मप्राप्तिप्रतिबन्धकपापनाशमात्रं ब्रह्मविद्यासाध्यम्। ब्रह्मानुभवस्तु जीवस्वरूपान्तर्भूतः। तथा हि वक्ति पराशरः—'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणात्, न ज्ञानमात्मनः क्रियते तथा ॥ सदेव नीयते व्यक्तिम् असतः संभवः कुतः' इति। जीवात्मा हि परमात्मनः शरीरभूतः। शरीरं च शरीरिणोऽविनाभूतम्। न हि घटजलयोरिव शरीरशरीरिणोः केवलसंयोगस्संबन्धः, तदा तयोः कदाचित् पृथक्स्थितिप्रतिपत्तिप्रसङ्गात्। न च दृश्यत एव जीववियुक्तं शरीरं लोके कस्यचिन्मरणानन्तरमिति शङ्क्यम्, तादृशव्यवहारस्यौपचारिकत्वात्। 'शवम्' इत्येव मुख्यव्यवहारात्। अधिकमग्रे (बुद्धि.82-83) भविष्यति। एवञ्च जीवब्रह्मणोः विद्यमानोऽविनाभावः संसारदशायां कर्मणा तिरोहितो नानुभूयते। ब्रह्मविद्यया निखिलकर्मनाशे च ब्रह्माविनाभावानुभवः सहजतया भवति, न तु स्वर्गादिवत् केवलभोगरूपो मोक्षः इति न तस्यानित्यत्वप्रसङ्गः ॥

अथवा, ननु ब्रह्मप्राप्तिसाधनतया विहितानां ब्रह्मविद्यानां पापपरिहारार्थत्वरूपप्रायश्चित्तरूपत्वं कथं स्यात्? एवं हि काम्यनैमित्तिकत्वविभागस्संकीर्णः स्यादित्यत्राह—**नान्यदित्यादि**। अत्र=ब्रह्मविद्याविषये **ब्रह्मानुभूतिप्रतिभटदुरितध्वंसतः**=ब्रह्मानुभवप्रतिबन्धकपापनाशकत्वापेक्षया **अन्यत्**=अतिरिक्तं **ब्रह्मविद्यासाध्यम्**=ब्रह्मविद्यया साधनीयं फलम् **न**=नास्त्येव। स्वस्वरूपाविर्भावस्यैव मुक्तिरूपत्वमनुपदम् (श्लो.64) निरूप्यते। न चैतावता कर्मणां विभागे साङ्कर्यम्, लक्षणकरणस्य बुद्धिकौशलप्रदर्शनमात्रविश्रान्तत्वेन, तद्भिन्नत्वादिविशेषणैः साङ्कर्यपरिहारात्। अन्यथा 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्' इत्यादिवचनैः

[मुमुक्षोः पुण्यमपि पापरूपम्]

125. **प्रायश्चित्तं न पुण्ये, न च सुकृतमनुश्रूयते धर्मबाध्यं**
**नाधर्मत्वं विधानात्, न यदि सुचरितं त्वङ्गमस्याश्च न स्यात्।**

नित्यानां पापपरिहारार्थत्वं न स्यात्। अतः ब्रह्मविद्यानां सर्वपापप्रायश्चित्तरूपत्वात् 'नाभुक्तम्' इत्यादिवचनम् अकृतप्रायश्चित्तकर्मविषयवत्, अब्रह्मज्ञानिपापविषयमपि मन्तव्यमिति न काप्यतिप्रसक्तिः। तथा च, अकृते प्रायश्चित्ते असंपादिते च ब्रह्मज्ञाने कर्मणामविनाशः 'नाभुक्तम्' इत्यादिनोच्यत इति मन्तव्यम्॥ ५४॥

ननु किमिदं विचित्रमुच्यते? प्रायश्चित्तं हि पापानां क्षयार्थमेव विधीयते। ब्रह्मविद्या तु पुण्यस्यापि विनाशयित्रीत्युच्यते। पुण्यस्य नाशस्तु 'कर्मनाशाजलस्पर्शात् करतोयातिलङ्घनात्। गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात्' इति कीर्तनाद्यैरेव, न तु ब्रह्मविद्यया। कर्मनाशा नाम नदी, तस्या जलस्य स्पर्शेन, 'करतोया सदानीरा' (अमरः) इत्युक्ताया नद्या लङ्घनात्, गण्डकीनद्याः बाहुभ्यां तरणात्, कीर्तनात्=प्रकटनाच्च धर्मः क्षरति=क्षिणोति इति श्लोकार्थः। एवं महापातकादिनैव पुण्यनाशः। एवञ्च ब्रह्मविद्यापि महापातकरूपा स्यादित्याक्षिप्य समाधत्ते—**प्रायश्चित्तमित्यादि**। **पुण्ये**=सुकृतविषये **प्रायश्चित्तं न**=प्रायश्चित्तरूपं कर्म न विधीयते, किन्तु पापस्यैव प्रायश्चित्तविधिः। विशेषतस्तथा विधानेऽपि, सामान्यरूपेणापि **सुकृतम्**=पुण्यम् **धर्मबाध्यम्**=धर्मेण नाश्यम् **न च अनुश्रूयते**=नैव कुत्रापि श्रूयते सामान्यरूपेणापि। अनुश्रवः=वेदः। यथा 'न हिंस्यात्सर्वा भूतानि' इति सामान्यनिषेधः। 'ब्राह्मणो न हन्तव्यः' इति विशेषतो निषेधः। एतादृशनिषेधाभावात् कथं पुण्यस्य धर्मबाध्यत्वम्? तर्हि ब्रह्मविद्या अधर्मरूपा वा भवतु दृष्टिभेदात्, का हानिः? गृहस्थस्य विहितम् ऋतुगमनादिकं ब्रह्मचारिणोऽधर्म एव। गृहस्थस्यापि तत् दिवाकृतमधर्म एव। अतश्च धर्माधर्मत्वयोरधिकार्यादिभेदेनैव स्थितत्वात्, अमुमुक्षुदृष्ट्या ब्रह्मविद्याप्यधर्म एव स्यादित्यत्राह—**अधर्मत्वं न**=एतादृशमापेक्षिकम् अधर्मत्वमपि न युज्यत एव। कुतः? **विधानात्**='उपासीत' 'ध्यायथ' इति ह्युपासनं मोक्षसाधनतया विधीयते। धर्मस्य यथा विधिः 'यजेत' इत्यादिवत्। अधर्मस्य तु निषेधः 'न हिंस्यात्' इत्यादिवत्। अतः ब्रह्मविद्याया नाधर्मत्वम्॥

ननु निषिद्धानामपि श्येनादीनाम् 'यजेत' इति दृश्यते विधिः। धर्मस्यैव विधिरिति न नियम इत्यत्र—**न यदीत्यादि**। **न यदि**=ब्रह्मविद्या यदि न धर्मः, **अस्याश्च**=ब्रह्मविद्यायाश्च **सुचरितम्**=सुचरितादिकम् **अङ्गम् न तु स्यात्**=नैव स्यात्। विधीयते चाङ्गतया **सुचरितम्**— 'नाविरतो दुश्चरितात्' (कठ.1-2-28) 'यान्यस्माकं सुचरितानि। तानि त्वयोपास्यानि। नो इतराणि' (तै.शि.20) इति दुश्चरितान्निवृत्तेः, सुचरिताचरणस्य च स्पष्टं ब्रह्मविदो विधानात्। यस्याङ्गतया सुचरितविधानम्, सोऽङ्गी अधर्मः कथं स्यात्? अतो धर्मत्वमावश्यकम्। धर्मत्वाच्च पुण्यनाशकत्वं न युक्तम्। ततश्च तस्याः सर्वकर्मप्रायश्चित्तरूपत्वमपि न समर्थयितुं शक्यम्। पापानां तया नाशे पुण्यानामनुभवेनैव क्षयो वाच्यः। दृश्यते किल सौभर्यादौ पुण्यस्य स्वमुक्तिप्रतिबन्धकपुण्यस्य क्षयार्थं युगपदेनकशरीरपरिग्रहणेन भोगानुभवः। तथा च 'तत्सुकृतदुष्कृते धूनुते' इत्यादिकं प्रशंसामात्रम्—

**मैवं धर्मोऽप्यधर्मो भवति हि बहुधाऽधिक्रियादेर्विशेषात्**
**धर्मं त्रैवर्गिकं तु स्वयमिह निगमः पाप्मकोटौ पपाठ ॥ ५५ ॥**

**[ब्रह्मविदि पापसंश्लेषपदार्थः]**

**126. अश्लेषः पाप्मभिश्चेत्, प्रसजति वितथा दुश्चरित्रान्निवृत्तिः**
**तेषु प्रामादिकेष्वप्यमतिकनिपतद्बीजवत् स्यात् प्ररोहः ।**

इति चेत्—**मैवम्**। कुतः? **हि**=यस्मात् **बहुधाऽधिक्रियादेः विशेषात्**=नानाविधाधिकारादिभेदात्, अधिकारि-विशेषे ब्रह्मविद्यानिष्ठे**धर्मोऽपि**=इतरदृष्ट्या पुण्यमपि**अधर्मो भवति**। अतस्तन्नाशकत्वं ब्रह्मविद्याया युज्यत एव। निषिद्धस्य श्येनादेः कथं विधिरितिचेत्, श्येनादेर्विहितत्त्वात् धर्मत्वमेव। तत्फलस्य शत्रुहिंसादेः 'न हिंस्यात्' इति निषेधविषयत्वात्, तत्प्रयुक्तं पापमनिवार्यम्। पापहेतोः कथं विधिविषयत्वमिति चेत्, अधिकारि-भेदेन तत्संभवान्न दोषः। 'त्रैगुण्यविषया वेदाः' (गी.2-45) इति तामसाधिकारिकत्वस्याप्यंशतः सत्त्वात्। इतरोपायापेक्षया, वैदिकोपाये पापस्य न्यूनत्वाद्गत्यन्तराभावात्तद्विधिः। अत एव—**निगमः**=वेदोऽपि **इह**=ब्रह्मवित्पुण्यविषये**त्रैवर्गिकं तु धर्मं**=त्रिवर्गसाधनभूतान् धर्मान्**स्वयम्**= कण्ठत एव**पाप्मकोटौ**=पापवर्गे **पपाठ**=अक्षरश एव प्रकटयामास। 'न सुकृतं न दृष्कृतम्' इति पुण्यापुण्येऽनूद्य 'सर्वे पाप्मानोऽतो निवर्तन्ते'(छां.8-4-1) इति 'पाप्म' पदेनोभयोर्ग्रहणं दृश्यते। अतः मुमुक्षुदृष्ट्या पुण्यमपि पापरूपमेव॥

**अयं भावः**—सुखहेतुत्वं पुण्यस्य, दुःखहेतुत्वं पापस्य च हि लक्षणम्। सुखदुःखे जीवानां रुच्यादिभेदेनाव्यवस्थिते। 'नरकस्वर्गसंज्ञे वै पुण्यपापे द्विजोत्तम। वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च॥ कोपाय च यतस्तस्मात् वस्तु वस्त्वात्मकं कुतः। तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते॥ तदेव कोपाय यतः प्रसादाय च जायते। तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्॥' (वि.पु.2-6-46-49) 'वासुदेवे मनो यस्य जपहोमार्चनादिषु। तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं पदम्॥ एते वै निरयास्तात स्थानस्य परमात्मनः॥' इत्यादि च प्रसिद्धम्। परमात्मप्राप्तिरूपमोक्षं प्रति तद्भिन्नफलहेतूनां पुण्यानामपि प्रतिबन्धकत्वेन दुःखहेतुत्वात् पापरूपत्वमेवेति 'सर्वे पाप्मानः' इति निर्देशस्सङ्गच्छते। **सौभरि**कथा संभवाभिप्राया, योगप्रशंसापरा वा स्यात्। पुण्यानामपि मुमुक्षुदृष्ट्या मोक्षप्रतिबन्धकत्वेन पापत्वात्, तन्निवर्तकत्वाद्ब्रह्मविद्यायाः प्रायश्चित्तरूपत्वाङ्गीकारेऽपि न हानिः॥ ५५॥

ननु ब्रह्मविद्यायाः सर्वकर्मप्रायश्चित्तरूपत्वेऽपि, कृतानां कर्मणामेव प्रायश्चित्तसंभवात्, ब्रह्मविद्यानिष्पत्त्य-नन्तरं संभवतां कर्मणां ब्रह्मविद्यया नाशासंभवात् तेषां फलानुभवेनैव क्षयो वक्तव्यः। अतः सर्वकर्मप्रायश्चित्त-रूपत्वं ब्रह्मविद्याया न घटते। एवमाक्षेपे, 'तद्यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' (छां.4-14-3) इति श्रुतेः, ब्रह्मविदा कृतं पापं तस्मिन् न किञ्चिदपि परिणामं करोतीत्युक्तम्। एतदाक्षिप्य समाधत्ते—**अश्लेष** इत्यादिना। **पाप्मभिः**=पापैः **अश्लेषश्चेत्**='तद्यथा' इत्यादिश्रुत्या ब्रह्मविदः पापसंश्लेष एव यदि न भवति, तदा **दुश्चरित्रात्**=दुष्टाचरणात्=पापकरणात् **निवृत्तिः**=विरतिः **वितथा**

**मैवं शास्त्रैकवेद्ये फलफलिविषये युक्तयो ह्यस्वतन्त्राः**
**शास्त्रात् बाधस्तु तिष्ठेन्मतिकृतविषये शब्दशक्त्यादिभिर्नः ।। ५६ ।।**

**हि**=व्यर्था हि भवति । 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्।।' (कठ.1-2-24) इति दुराचारादिभ्यः निवृत्त्यभावे, केवलबुद्धिकौशलमात्रेण ब्रह्मप्राप्तिर्न भवतीति स्पष्टं श्रुतिर्वदति । यदि ब्रह्मविदः पापाचरणमनुमन्यते, तर्हि उक्तकठश्रुतिविरोधः । अतः 'पापं कर्म न श्लिष्यते' इत्यादिकं केवलप्रशंसैवेति वक्तव्यम् । ननु श्रुतेरर्थशून्यत्वकल्पनापेक्षया कथंचिदर्थवत्त्वकल्पनं न्याय्यम् । अतः सा श्रुतिः अबुद्धिपूर्वकपापाचरणविषया स्यात् । अब्रह्मविदां तु अबुद्धिपूर्वककर्मणामप्यर्धप्रायश्चित्तं विधीयते । ब्रह्मविदां तु तन्नास्तीति प्रतिपाद्यत इति कुतो न स्यादित्यत्राह **तेष्वित्यादि । प्रामादिकेष्वपि तेषु**=प्रमादः=अनवधानम्=अबुद्धिपूर्वकत्वम्; अबुद्धिपूर्वकेष्वपि ब्रह्मवित्कृतपापेषु **अमतिकनिपतद्बीजवत्**= अबुद्धिपूर्वकं भूमौ पतितबीजवत् **प्ररोह**ः=अङ्कुरोत्पादनम्=फलजननम् **स्यात्**=स्यादेव । यत्किञ्चिदपि बीजं बुद्धिपूर्वकमबुद्धिपूर्वकं वा भूमौ पतितं चेत्, तस्मादङ्कुरं भवेदेव, न केनापि तत् वारयितुं शक्यम् । तद्वदेव पुण्यं वा पापं वा बुद्धिपूर्वकमबुद्धिपूर्वकं वा कृतं चेत्, तस्य फलमप्यनिवार्यमेव। अतः कर्माश्लेषवचनं केवलप्रशंसात्वमन्तरा कथं घटेत? इत्याक्षेपः ।।

तदेतन्निराकरोति—**मैवमिति** । तत्र हेतुमाह—**शास्त्रैकवेद्य इत्यादि । फलफलिविषये**=कार्यकारणरूपे विषये **शास्त्रैकवेद्ये सति**=शास्त्रैकसमधिगम्ये सति **युक्तयः**=बुद्ध्या कल्प्यमानाः युक्तयः **अस्वतन्त्रा हि**=स्वतः न किञ्चिद्बाधितुं प्रभवेयुर्हि । '**हि**' इति सर्वसंमतिं सूचयति । युक्तिर्हि तर्कः । तर्कः न स्वतन्त्रं प्रमाणम्; किन्तु प्रमाणानुग्राहकः । 'नरशिरःकपालं शुचि, प्राण्यङ्गत्वात्, शङ्खवत्' इति प्रयोगे 'स्पृष्ट्वा नरास्थिप्रभृति सवासा जलमाविशेत्' इति धर्मशास्त्रविरोधमन्तरान्यद्दूषणं न हि वक्तुं शक्यम् । एवं 'इदं पुण्यम्' 'इदं पापम्' इत्यादिनिर्णयः न हि मनुष्यबुद्ध्या निर्णेतुं शक्यम् । अतः ब्रह्मविदां पापाश्लेषः शास्त्रसिद्धः न निराकर्तुं शक्यते । ननु 'दुश्चरितान्निवृत्तिर्वितथा स्यात्' इत्यस्य किमुत्तरमित्यत्राह—**शास्त्रादित्यादि । शास्त्रात्**='नाविरतो दुश्चरितात्'इत्यादिशास्त्रात् **बाधस्तु नः**=अस्माकम् **शब्दशक्त्यादिभिः**=शब्दस्य विद्यमानबोधकशक्त्यादिकारणैः, **मतिकृतविषये तिष्ठेत्**=मत्या=बुद्ध्या कृतस्य पापस्य विषये पर्यवस्येत्=बुद्धिपूर्वकपापविषये विश्रमेत । तथाच 'नाविरतो दुश्चरितात्' इत्यादिकं बुद्धिपूर्वकपापान्निवृत्तिं वदति । 'एवंविदि पापं कर्म न श्लिष्यते' इत्यादिकमबुद्धिपूर्वकपापाश्लेषविषयमिति न परस्परं विरोधावकाश इति भावः । परस्परविरुद्धयोरुभयोरपि वाक्ययोस्समप्रमाणत्वेऽन्यतरबाधो न संभवत्येव । वाक्ययोः क्रियाशेषत्वे तु विकल्पे पर्यवसानम् । तत्त्वविषयत्वे तु परस्परविविक्तविषयत्वे पर्यवसानमित्यादिकं शब्दस्वभावसिद्धमिति 'शब्दशक्त्यादिभिः' इत्युक्तम् ।।

ननु 'यान्यस्माकं सुचरितानि । तानि त्वयोपास्यानि । नो इतराणि ।' (तै.शिक्षा.11.2) इति स्वीयसुचरितान्येव सेव्यानि, न दुश्चरितानीत्यभिधानात्, ज्ञानिनामपि दुश्चरितसद्भावः प्रतिपाद्यते । अतो दुश्चरितान्निवृत्तिकथनं संभवस्थलाभिप्रायं स्यात् । न चेदं वचनमविदुषः कस्य चित्स्यादिति शङ्क्यम्;

'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति' इत्युपक्रमे गुरुकुलपतेराचार्यस्योपदेशरूपत्वावगमात्तद्वाक्यस्य । 'आचार्यवान् पुरुषो वेद' (छां.6-14-2) 'आचार्यकुलाद्वेदमधीत्य' (छां.8-15-1) इत्यादौ ज्ञानिन एवाचार्यपदेनाभिधानादिति चेत्, न, उक्तरीत्या प्रामादिकदुश्चरितविषयकत्वसंभवात्तद्वचनस्य ॥

**वस्तुतस्तु**—'सुचरितानि' 'इतराणि' इत्युभयोः समानतया निर्देशात्, प्रामादिकत्वे तथानिर्देशस्यानुचितत्वात् 'इतराणि'इत्यस्य दुश्चरितपरत्वापेक्षया 'चरित'मात्रपरत्वमेव युक्तम् । दृश्यते किल लोके द्वन्द्वस्थले तृतीयोऽपि राशिः, शत्रुः-मित्रम्-उदासीनः; रागः-द्वेषः-उदासीनता इत्यादि । तद्वदत्रापि शास्त्रे 'विहितकर्मजन्यः धर्मः' इति लक्षणात् विहितं कर्म सुचरितम् । 'निषिद्धकर्मजन्योऽधर्मः' इति लक्षणात् निषिद्धं कर्म दुश्चरितम् । यस्य तु भोजनादेः विधिरपि नास्ति, स्वयमेव रागात् प्रवृत्तेः, निषेधोऽपि नास्ति, असंभवात्; तादृशं कर्म धर्मोऽपि न भवति, अधर्मोऽपि न भवति । अत एव 'स्नात्वा भुञ्जीत' इत्यादौ भोजनस्य न विधिः, किन्तु स्नानस्यैवेत्यङ्गीकृतम् । 'न कलञ्जं भक्षयेत्' इत्यादौ भक्षणं न निषिध्यते, किन्तु कलञ्जभक्षणमेव निषिध्यते इत्युच्यते । रागादेव प्राप्तं भोजनं कलञ्जव्यतिरिक्तविषयकं व्यवस्थाप्यते । एवं ऋतुगमनं धर्मः, विहितत्वात् । परदारागमनमधर्मः, निषिद्धत्वात् । ऋत्वतिरिक्तकालस्वपत्नीगमनं न धर्मः, न वाधर्मः । अतः शयनभोजनादि न सुचरितम्, नापि दुश्चरितम्; किन्तु चरितम्; तादृशं नादर्शत्वेनानुवर्तनीयम् । एवं आपत्कालकृतं उषस्त्यस्य कुल्माषभक्षणादिकं नादर्शत्वेन ग्राह्यम् । इयं कथा छान्दोग्योपनिषदि (1-10) दृश्यते । सूत्रभाष्यादौ (3-4-0) विचारिता च । अतः 'नो इतराणि' इत्येतत् न दुश्चरितविषयकम्, किन्तु चरितविषयकमित्येव युक्तम् । कथं तर्ह्याचार्यैरन्यथा व्याख्यातमिति चेत् ; को वा जानाति? आचार्यैरिव तथोक्तमिति । संभाव्यते हि लेखकप्रमादादि । अथवा शिष्यावधानपरीक्षणार्थं स्यात् । अत एव किलाध्ययनं गुरुमुखादेव कर्तव्यमुच्यते, लिखितपाठादिकं निषिध्यते भारतीयानाम्, लेखने प्रमादसंभवात् । अतश्च सुचरितानि, दुश्चरितानि, चरितानि इति राशित्रयदर्शनात् 'इतराणि'इत्यस्य चरितविषयत्वं युक्तम् । सुचरितानि श्रेयस्सहकारीणि शास्त्रविहितकर्माचरणानि । दुश्चरितानि श्रेयोविरोधीनि अगम्यागमनादीनि । अन्यानि यानि सामान्यरूपाणि भोजनभ्रमणपरिस्पन्दादिरूपाणि, तानि आदर्शत्वेन न ग्राह्याणीत्यर्थः। यथा वा 'अश्रद्धया देयम्' इत्यत्रापि 'अदेयम्' पदच्छेदः । तद्वदिदमपि ज्ञेयम् । न चाश्रद्धया दानं निन्द्यमेव किल । अतस्तथा पदच्छेद इति शङ्क्यम्, अश्रद्धापदस्य श्रद्धाभावार्थकत्वाभावात् । 'कामः सङ्कल्पः' (बृ.3-5-3) इत्यारभ्य 'श्रद्धा अश्रद्धा' इति अश्रद्धाया मनोवृत्तिविशेषत्वाभिधानात् । पारलौकिकी आस्तिक्यबुद्धिः श्रद्धा । प्रायो जनाः पारलौकिकफलोद्देशेनैव दानमाचरन्ति । एवमभावेऽपि अनुकम्पादिना वा दानं प्रशस्तमेवेति भावनया 'अश्रद्धया देयम्' इति दानमेव विवक्षितमित्येव युक्तम् । अन्यथा 'भिया देयम्' इत्यादावपि 'अदेयम्' इति स्यात् । तत्रार्थान्तरकरणेऽत्रापि तच्छक्यम्, न्याय्यं च ॥

अथवा अस्माकमिति संबन्धसामान्ये षष्ठी । अस्मत्संमतानि सुचरितान्येव सेव्यानि । अस्मदसंमतानि न सेव्यानीत्यर्थः । 'धर्मज्ञसमयः प्रमाणम्' (आप.ध.सू.1-1-2) 'धर्मशास्त्ररथारूढाः वेदखड्गधरा द्विजाः। क्रीडार्थमपि यद्ब्रूयुस्स धर्मः परमः स्मृतः ॥' इति खलु ऋषीणां स्वरूपं वर्ण्यते । अतः 'इतराणि'

[पुण्याश्लेषशब्दार्थविचारः]

127. श्लिष्टं विद्याङ्गपुण्यं स्वफलवितणात्, नेतरार्थं विरागे
रागादारभ्यमाणं फलवदमतिकं संभवेन्नैव पुण्यम्।

इत्यस्य दुश्चरितानि सर्वथा नार्थः इति युक्ततरम्। न च पापारंभकपापस्य संभावितत्त्वात्, तादृशपूर्वपापफलतया दुश्चरितं संभवेदिति शङ्क्यम्; आधिकारिकाणां ब्रह्मर्षीणां पापारंभकपापस्याप्यप्रसक्तेः। ननु विश्वामित्रेण श्वमांसभक्षणकथायाः श्रवणात्कथमेवमुच्यत इति चेत्— 'प्राणसंशयमापन्नः योऽन्नमत्ति यतः क्वचित्। लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥' इति तस्यापत्कालिकत्वश्रवणात्, उषस्तिकृतकुल्माषभक्षणवत् (छां.1-10) 'एवंविदि पापं कर्म न श्लिष्यते' इत्यस्य दृष्टान्तरूपत्वात्। आपत्काले वा कृतं पापं कथं पापं न भवेत्? कथं तस्याश्लेषो वा भवेत्? इति चेत् सम्यक् पृष्टमायुष्मता। परन्तु 'यस्य नाहं कृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥'(गी.18-17) इति भगवद्वचनमवधारय। तद्वा कथमुक्तम्? इतिचेत्, कामः क्रोधश्चेति द्वयमेव पापमूलम्। उभयाभावे पापप्रवृत्तिरेव न भवेत्। इतरत्तु निद्रायां पादताडनतुल्यम्। इतोऽप्यधिकं ज्ञातव्यं यदि—

तद्विद्धि प्रणिपाताद्यैः महतां ब्रह्मवादिनाम्। रागद्वेषविदूराणां, धर्मसूक्ष्मं सुदुर्ग्रहम् ॥

इत्यलमधिकया चर्चया ॥ ५६ ॥

ननु यदि पापस्याश्लेषविनाशौ, तर्हि ब्रह्मविद्दृष्ट्या पुण्यस्यापि पापरूपत्वोक्त्या पुण्यस्याप्यश्लेषविनाशौ आवश्यकौ। तत्र पूर्वस्य पापस्य नाशः, उत्तरस्याबुद्धिपूर्वकस्याश्लेष इति विभागः उक्तः। पापस्याबुद्धिपूर्वकस्य संभवात्, तदश्लेषस्सङ्गच्छते। पुण्ये प्रवृत्तिस्तु फलापेक्षयैव किल स्यात्। अतः पुण्ये प्रवृत्तिः कथं अबुद्धिपूर्विका स्यात्? पापात् खलु निवृत्तिर्विहिता। सा तु प्रमादात्, विस्मरणाद्वा कदाचिन्निवृत्त्यभावसंभवात्, पापसंभवः। नैवं पुण्ये। अतः पुण्याश्लेषवादः अर्थशून्य इत्याशङ्क्य समाधत्ते—**श्लिष्टमित्यादिना**। पुण्यं कियत्प्रकारकमिति प्रथमं ज्ञातव्यम्। विद्योत्पत्तेः पूर्वं भगवदर्पणबुद्ध्या कृतानि पुण्यानि विद्योत्पत्तिप्रयोजकत्वात् चित्तशुद्ध्यर्थानि परंपरया विद्याङ्गभूतानि विद्यानिष्पत्त्या चरितार्थानि। अतः तस्याश्लेषप्रसक्तिरेव नास्ति। तदेतदुच्यते—**विद्याङ्गपुण्यम्**=विद्योत्पत्तिप्रयोजकं पुण्यम् **स्वफलवितरणात्**=स्वस्य फलभूता या ब्रह्मविद्या, तस्याः **वितरणात्**=दानात्=उत्पादनात् **श्लिष्टम्**=तस्मिन् संबद्धमेव फलद्वारा। तथा च फलदानात् क्षीणानि। **विरागे**=इतरफलेषु वैराग्यवति मुमुक्षौ **इतरार्थम्**=ऐहिकामुष्मिकफलार्थं किञ्चिदपि पुण्यम् **न**=न प्रसज्यते, विरक्तत्वात्। मुमुक्षुणापि **रागात्**=साधनप्रतिबन्धकरोगादिपरिहारार्थं **आरभ्यमाणम्**=अनुष्ठीयमानं तु **फलवत्**=फलदाय्येव। विद्यासाधनोपयोगितया आरोग्याद्यर्थं यदि किञ्चित् मुमुक्षुरपि कुर्यात्, तर्हि फलार्थमेव तस्य कृतत्वात्, तस्य फलमारोग्यादि भवेदेव तस्य। अतस्तस्याप्यश्लेषः न संभवति। अबुद्धिपूर्वकपापवत् **अमतिकम्**=अबुद्धिपूर्वकम् **पुण्यम् नैव संभवेत्**। पापवत् पुण्यस्याबुद्धिपूर्वकस्यासंभव उक्त एवानुपदम्। **ततः**=तस्मात् **अस्मिन्**=ब्रह्मविदि **पुण्याश्लेषः**=पुण्यफलस्यासंबन्धः **न घटते**। इति

**पुण्याश्लेषस्ततोऽस्मिन् न घटत इति चेत्, नोपयुक्तातिरिक्तैः**
**विद्याङ्गैस्तस्य योगादमतिकृतमपि ह्यामनन्त्येव पुण्यम् ॥ ५७ ॥**

**चेत्, न**=नैतद्युक्तम्। कुत इत्यत्र—**उपयुक्तातिरिक्तैः**=विद्यानिष्पत्त्या दत्तफलानि यानि पुण्यानि, तदतिरिक्तैः **विद्याङ्गैः**=विद्याङ्गतयानुष्ठितैः पुण्यैः **तस्य**=तादृशाश्लेषस्य **योगात्**=संबन्धात्, नार्थशून्यत्वं श्रुतेः ॥

**अयं भावः**—कष्टपरिहारार्थं शान्त्यादिकर्मानुष्ठानेऽपि, कष्टानिवृत्तौ शान्तिकर्मणो वैफल्यापादने, 'यक्षानुरूपो बलिः' इति न्यायेन पापानुगुणं न शान्तिकर्म कृतमिति सर्वे वदन्ति। शान्तिकर्मणः दुर्बलत्वेन पापस्यातिबलिष्ठत्वेन समीहितं फलं नासीदिति हि तदर्थः। एवं तुल्यन्यायेन पापस्याल्पत्वे, शान्तिकर्मणः तदपेक्षया बलिष्ठत्वे, शान्तिकर्मजन्यपुण्ये एकदेशत एव पापपरिहारात्, शिष्टं पुण्यं समयविशेषे स्वफलं दद्यादेवेत्यपि वक्तव्यम्। एतादृशं पुण्यमेवाबुद्धिपूर्वकं पुण्यमुच्यते। एवञ्च प्रकृतेऽपि विद्योत्पत्तेः पूर्वमनुष्ठितानां पुण्यकर्मणां बाहुल्यसंभवात्, विद्योत्पत्त्यर्थमुपयुक्तपुण्यापेक्षया, शिष्टानां पुण्यानां अश्लेषः प्रतिपाद्यते तेन वचनेनेति न निर्विषयत्वं श्रुतेरिति ॥

वस्तुतस्तु अबुद्धिपूर्वकं पुण्यमप्यस्त्येवेत्याह—**अमतिकृतम्**=बुद्धिपूर्वकमकृतम् **पुण्यमपि**=पापवत् पुण्यमपि **आमनन्त्येव हि**=बहुधा वदन्त्येव हि। देवायतनदीपोपाख्यानादाविदं प्रसिद्धमेव। मैत्र्या क्रियमाणानि सत्कर्माणि, भूतदयया क्रियमाणानीष्टापूर्तादीनि च पुण्यकर्माणि दृश्यन्त एव। अतोऽबुद्धिपूर्वकपुण्याश्लेष-विषयं वचनं मन्तव्यम् ॥ ननु किं तद्वचनम्, यत् पुण्यस्याश्लेषं वदति? 'एवमेवंविदि पापं कर्म न श्लिष्यते' (छां.4-14-3) इति वचनं तु पापस्याश्लेषपरम्, न पुण्यस्य। न च 'न सुकृतं न दुष्कृतम् सर्वे पाप्मनोऽतो निवर्तन्ते' (छा.8-4-1) इत्यत्र सुकृतदुष्कृतयोः पाप्मशब्देनाभिधानात् 'पापं कर्म' इत्यत्र पापशब्देन पापपुण्योभयमपि विवक्षितमिति वाच्यम्; 'न सुकृतम्' इत्यतःपूर्वं 'न जरा न मृत्युर्न शोकः' इति जरामृत्युशोकानामपि पाठात्, तेषामपि पापशब्दार्थत्वप्रसङ्गात्। न चैतदपीष्टमेवेति वाच्यम्, पापपुण्यशब्दयोः शक्तिग्रहणस्यैवासंभवप्रसङ्गादिति चेत्; ततः पूर्वं 'नैतं सेतुमहोरात्रे तरतः' इत्यहोरात्रयोरपि पाठात्तयोरपि पापशब्दार्थत्वप्रसङ्गः। न च तयोरपि एतत्कर्मलोकमात्रनियतत्वात्तदपीष्टमेवेति वाच्यम्, तर्हि भवद्वैकुण्ठव्य-तिरिक्तस्य सर्वस्यापि पापशब्दार्थत्वप्रसङ्गात्। न चैतदपीष्टमेवेति वाच्यम्, 'क्षीणे पुण्ये' इति स्वर्गादेः पुण्यलोकत्वोक्तिविरोधप्रसङ्गात्। न च तदप्यापेक्षिकमेवेति वाच्यम्, बौद्धमतप्रवेशापत्तेः इति चेत्, सत्यम्; 'एवमेवंविदि पापं कर्म न श्लिष्यते' इत्यत्र 'पाप'पदस्य पुण्यावाचकत्वेऽपि, अर्थादेव पुण्यस्यापि तुल्य-न्यायत्वसिद्धिः। अत एव 'इतरस्याप्येवमसंश्लेषः' (ब्र.सू.4-1-14) इति अतिदेशप्रदर्शनं संङ्गच्छते। अन्यथा तदधिगमाधिकरणैव उक्तरीत्या सर्वेषामपि पापानां ग्रहणप्रसङ्गेन, पृथगतिदेशानपेक्षणादित्यवधेयम्। न च बौद्धमततौल्यम् ; तैर्जगत्यापेक्षिकसुखस्याप्यनङ्गीकारात्। जगत्सर्वं दुःखरूपम्। लोके सुखमिति कथ्यमानमपि सुखाभास एवेति किल ते वदन्ति। 'तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्या ब्रह्मांशभूतस्य जीवस्य खद्योतकल्पस्यानुगुणानन्दस्य सद्भावात्। अत एव सुखहेतुत्वं पुण्यस्य दुःखहेतुत्वं पापस्येतिलक्षणमप्यव्यभिचरितमेव, सुखदुःखयोरेवापेक्षिकत्वादिति न कश्चिद्दोषः ॥ ५७ ॥

[पुण्यपापयोरन्यत्र संक्रमणप्रकारः]

128. **कर्माश्लेषप्रणाशौ तदुपधिभगवन्निग्रहादेर्निवृत्तिः**
**नष्टाश्लिष्टातिरिक्तं न च किनपि ततः संक्रमः कस्य? मैवम्।**
**तत्तत्कर्मप्रसूतौ स्वभजनशमितौ निग्रहानुग्रहौ यौ**
**तत्तुल्यावेव देवः प्रयति विदुषि तच्छत्रुमित्रेषु धत्ते ।। ५८ ।।**

[ब्रह्मज्ञानिवैलक्षण्यम्]

129. **अन्यश्चेदन्यकर्मप्रजनितफलभुक् शास्त्रवैयाकुली स्यात्**
**ब्रह्मज्ञैरुज्झितानां क्वचिदपि न ततः कर्मणां संक्रमः स्यात्।**

एवं कर्मणामश्लेषविनाशविचारं परिसमाप्य, अन्यं कर्मविषयकविचारमुपक्रमते—**कर्माश्लेषे-त्यादि**। कौषीतकीब्राह्मणे 'तत्सुकृतदुष्कृते धूनुते, तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (कौ.1-4) इति श्रूयते। ब्रह्मज्ञानिना पूर्वकृतानां कर्मणां विनाशः, अनन्तरं प्रसक्तानामबुद्धिपूर्वककर्मणामश्लेषश्च अनुपदं प्रतिपादितः। अत्र कर्मपदं पुण्यपापपरम्, अथवा धर्माधर्मपरम्। पूर्वमेवोत्पन्नानां धर्माधर्माणां विनाशो नाम फलजननशक्तिप्रतिबन्धः, अनन्तरकृतानामश्लेषो नाम फलजननशक्त्यनुत्पत्तिरिति च स्थापितम् (ब्र.सू.4-1-13)। एतदुपर्येवमाक्षेपः—कर्माश्लेषप्रणाशौ नाम **तदुपधिभगवन्निग्रहादेः निवृत्तिः**=एतच्चेतनकृत-कर्मजन्यभगवन्निग्रहानुग्रहयोर्निवृत्तिरूपत्वे पर्यवसानम्। **नष्टाश्लिष्टातिरिक्तम्**=उक्तरीत्या नष्टम्, अश्लिष्टं च यत्, तदतिरिक्तम् **किमपि**=यत्किञ्चिदपि **कर्म न च**=नैवास्ति। **ततः**=तस्मात्कारणात् **कस्य** पुण्यस्य पापस्य वा **संक्रमः**=मित्रेषु, शत्रुषु वा ब्रह्मविदां शरीरत्यागकाले प्रतिपादितं संक्रमणम्?

तर्हि उक्तकौषीतकीब्राह्मणोक्तं कथं वर्णनीयम्? यदि निर्विषया श्रुतिः, तर्ह्यप्रामाण्यं स्यात्—इत्यापेक्षं निराकरोति—**मैवमिति**। तर्हि कोऽर्थः उक्तश्रुतेः? इत्यत्राह—**तत्तदित्यादि**। पुण्यपापद्वयापेक्षया तच्छब्दवीप्सा। चेतनकृताभ्यां **तत्तत्कर्मभ्यां प्रसूतिः**=उत्पत्तिः ययोः, तादृशौ यौ **स्वभजनशमितौ**= **भजनम्**=भक्तियोगः, स्वपदं वाक्ये प्रधानकर्तृदेवपरम्। स्वविषयभक्तियोगेन चेतनानुष्ठितेन **शमितौ**=शमनं प्रापितौ **निग्रहानुग्रहौ**=प्रतिकूलानुकूलसङ्कल्पौ भवतः, **तत्तुल्यावेव**=तत्सदृशावेवान्यौ प्रतिकूलानुकूलसङ्कल्पौ **विदुषि**=ब्रह्मविदि **प्रयति**=शरीरं विसृज्य गच्छति सति, **देवः**=क्रीडारसिको भगवान् **तच्छत्रुमित्रेषु**= तादृशब्रह्मविदः शत्रुषु प्रतिकूलसंङ्कल्पम्, मित्रेष्वनुकूलसङ्कल्पं च **धत्ते**=वहते, करोतीति यावत्। तीव्रभक्ति-योगानुष्ठानेन प्रसन्नो भगवान्, तावत्कालम् एतच्चेतनविषयकौ निग्रहानुग्रहौ, शत्रुमित्रविषयकौ करोतीत्यर्थः। एवत्सर्वमपि तत्त्वं तत्तादृशभगवदनुग्रहवता चेतनेनैव लेशतो वा ऊहितुम् शक्यम्। इतरैस्तु केवलं शब्दचिन्तनेनैव सन्तोष्टव्यमित्यलमत्राधिकवर्धनेन, यतोऽग्रे(अद्र.) विस्तरोऽस्य भविष्यति ।। ५८ ।।

पुनः प्रकारान्तरेण शास्त्रवैयाकुलीमाशङ्क्य परिहरति—**अन्यश्चेदित्यादिना**। **अन्यः**=कर्मकर्तुः भिन्नः कश्चित्, प्रकृते ब्रह्मविदः शत्रुः मित्रं च, **अन्यकर्मप्रजनितफलभुक्**=**अन्यस्य**=स्वभिन्नस्य ब्रह्मविदः

**उद्वेलस्स्याच्च धातेत्यसदविषमताद्यन्वितेनैव धात्रा**
**विद्यानिष्ठोपकाराद्युचितफलमिदं दीयते वर्गयुग्मे ॥ ५९ ॥**

**[अर्चिरादिगतिः]**

130. **अर्चिर्घस्रोऽथ पक्षस्सित उदगयनं वत्सरो मातरिश्वा**
**मार्तण्डस्तारकेशस्तडिदपि वरुणामर्त्यनाथप्रजेशैः ।**

---

यत् **कर्म**=पुण्यं पापं च, तेन **प्रजनितम्**=उत्पादितम् यत् **फलम्**=सुखं दुःखं वा, **तद्भुक् चेत्**=तदनुभविता यदि=कर्ता अन्यः, फलभोक्ता तदन्यः इति यदि भवेत्, तदा **शास्त्रवैयाकुली स्यात्**='शास्त्रफलं प्रयोक्तरि' इति न्यायस्य अव्यवस्थैव स्यात् । **ततः**=तस्मात् कारणात् **ब्रह्मज्ञैः**- ब्रह्मविद्भिः **उज्झितानाम्**= शरीरत्यागकाले त्यक्तानाम् **कर्मणाम्**=पुण्यपापानाम् **क्वचिदपि**=अन्यत्र कुत्रापि शत्रुमित्रेषु **संक्रमः**=संक्रमणम् **न स्यात्**=न संभवेत्; कृतहानाकृताभ्यागमप्रसङ्गात् । न तावन्मात्रम्, **च**=अपि च **धाता**=जगत्स्रष्टा परमात्मा **उद्वेलः**=उच्छृङ्खलः **स्यात्** । 'व्यवस्थितः प्रशान्तात्मा कुपितोऽप्यभयङ्करः । अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ॥' इति न्यायात् । तादृशपरमात्मनः साम्राज्यम् 'वेन'राज्यमेव स्यात् । को वैतस्मिन् सुखी भवेत्? **इति**=एवं कथनम् **असत्**=न समीचीनम् । कुतः इत्यत्रोत्तरमाह—**अविषमताद्यन्वितेनैव**= पक्षपातादिरहितेनैव **धात्रा**=परमात्मना **इदम्**=पूर्वोक्तम् **विद्यानिष्ठोपकाराद्युचितम्**=ब्रह्मविद्यानिष्ठस्य कृते उपकारापकरानुगुणमेव फलम् **वर्गयुग्मे**=तच्छत्रुमित्रयोः **दीयते**=दण्डरूपतया दीयते ॥

**अयमाशयः**—परमात्मा हि सर्वेषां सम एव, य आह—'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः' (गी.9-29) इति । अथापि, यथा राजानः स्वशासनानुवर्तिनोऽनुगृह्णन्ति, अतिवर्तिनश्च दण्डयन्ति, राज्यव्यवस्थारक्षणाय; अन्यथा खलु स राजा उन्मत्त एव स्यात्, तथैव भगवानपि लोकमर्यादापालनायापराधिनो दण्डयति, अनुसारिणः पालयति । अत एव 'समोऽहम्' इत्यादि वदन्नेव भगवान् 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' इति, 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥'(गी.16-19) इत्यपि वदत्येव । दण्डोऽपि नैकरूपः सर्वत्र । लोकेऽपि हि एक एव अपराधः प्रौढापेक्षया बालैः कृतः, नातितीव्रः परिगण्यते । इदं कर्तृदृष्ट्या । एवं कर्मदृष्ट्याप्यस्ति न्यूनाधिकभावः। प्रौढहत्यापेक्षया बालहत्या अधिकपापावहा । बालहत्यापेक्षया शिशुहत्या पापतरा, शिशुहत्यापेक्षया भ्रूणहत्या पापतमा च । एवं ब्रह्मविदां सर्वभूतसुहृत्वात्, तद्विषये कृतोऽपराधस्तीव्रः परिगण्यते । 'शप्यमानस्य यत्पापं शपन्तमधिगच्छति' इतिन्यायेन, ब्रह्मवित्सु यद्यपराध्यति, तर्हि तेषां पापं अपराधकर्तृषु अत्यधिक-पापावहमिति परमात्मा न पक्षपाती ॥ ५९ ॥

एवं विचारं परिसमाप्य, ब्रह्मविदः मोक्षप्राप्तिप्रकारं वर्णयति—**अर्चिरित्यादि** । **अर्चिः**= सूर्यरश्मिः। **घस्रः**=दिवा **अथ सितः पक्षः**=अनन्तरं शुक्लपक्षः । **उदगयनम्**=उत्तरायणम् । **वत्सरः**= संवत्सरः । **मातरिश्वा**=वायुः । **मार्तण्डः**=सूर्यः । **तारकेशः**=चन्द्रः । **अपि च तटित्**=विद्युत् । एते

**आदिष्टोविश्वनेत्रा स्वयमतिवहने देवायानाध्वगानां**
**यः प्रोक्तोऽमानवाख्यः स तटिदधिपतिर्विश्रुतो मानसोऽपि ॥ ६० ॥**

अर्चिरादितटित्पर्यन्ताः शब्दाः न भौतिकार्थवाचकाः किन्तु तत्तदधिदेवतात्मान इति 'आतिवाहिकाः' (ब्र.सू.3-4-0) इत्यत्र स्थापितम् । **वरुणामर्त्यनाथप्रजेशैः**=वरुणः, इन्द्रः, प्रजापतिश्च, एतैस्सहिता **तटित्**=विद्युदधिदेवः, अमानवाख्यः यः विश्वनेत्रा आदिष्ट इत्यन्वयः । **विश्वनेत्रा**=जगत्पतिना परमात्मना **देवयानाध्वगानाम्**=अर्चिरादिमार्गस्य **देवयान**मिति नामान्तरम्, देवयानमार्गेण=अर्चिरादिमार्गेण गच्छतां ब्रह्मविदाम् **अतिवहने**=स्वप्रापणकर्मणि **स्वयम्**=भगवतैव **आदिष्टः**=आज्ञप्तः **यः अमानवाख्यः** पुरुषः **सः तटिदधिपतिः**=तटिदधिपतित्वादेव तटिच्छब्दवाच्यः, **मानसोऽपि विश्रुतः**=मानसनाम्नापि विश्रुतः ॥

**अयमर्थः**—एतल्लोकं परित्यज्य लोकान्तरं गच्छतां जीवानां त्रिविधा गतिः श्रूयते—१. सुकृतिनां पुण्यलोकं स्वर्गादिभोगभूमिं गच्छतामेको मार्गः । २. दुष्कृतिनां पापलोकं नरकादिकं यातनालोकं गच्छतामपरो मार्गः । ३. ब्रह्मविदां ब्रह्म प्राप्नुवतामन्यो मार्गः । तत्र प्रथमः **'धूममार्गः'** **'पितृयानम्'** **'दक्षिणमार्गः'** इत्यादिपदैः व्यवह्रियते । द्वितीयमार्गः **'निरयमार्गः'**, इति तृतीयः **'अर्चिर्मार्गः'** **'देवयानम्'** **'उत्तरमार्गः'** **'ब्रह्ममार्गः'** इत्यादिपदैः व्यवह्रियते । तृतीयमार्गेण गताः मुक्ता भवन्ति, अतोऽयम**पुनरावृत्तिमार्गः**। इतरमार्गद्वयेन गताः पुनरागच्छन्ति, अतोऽयं **पुनरावृत्तिमार्गः** । शरीरा**दुत्क्रान्तिः** ब्रह्मविदामितरेषां च समाना । अनन्तरं **गतिः** । तत्रैव देवयानपितृयानभेदः । तत्र पितृयाणमार्गः 'अथ य इमे ग्राम इष्टपूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासान्, मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्' (छां.5-10,3-4) इत्यादिनोक्तः । देवयानमार्गश्च 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमत्येष देवपथो ब्रह्मपथ एतेन प्रतिपाद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छां.4-15-5,6) इत्युक्तः । एष एवात्रोक्तः—**'अर्चिर्ग्रस्तः'** इत्यादिना । अत्र तटित्पर्यन्तं न विवादः । परन्तु कोषीतकीब्राह्मणोपनिषदि 'स एतं देवयानपन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स आदित्यलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' (कौषी.1-3) इत्युच्यते । अर्चिरादेर्ज्योतीरूपत्वेनाग्निपदेन ग्रहणात् कथंचिदविरोधः समर्थ्यते । अधिकस्य वायोः औचित्यानुसारेणादित्यात्पूर्वंनिवेशः कृतः वेदान्तशास्त्रे(ब्र.सू. 4-3-2)। अतोऽत्राचार्यैरपि 'मातरिश्वा मार्तण्डः' इति क्रमोऽभ्यधायि । 'चन्द्रमसो विद्युतम्' इत्युक्त्वा 'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति' इति कथनात् तत्पुरुषशब्दवाच्यस्य विद्युत्पुरुषस्यैव ब्रह्मप्रापकत्वं स्पष्टं ज्ञायते । एवं सति वरुणेन्द्रप्रजापतीनां कुत्र निवेशः इति संशये, वरुणस्य जलाधिदेवतात्वात्, विद्युदनन्तरं निवेशः उचितः । इन्द्रप्रजापत्योस्तु सर्वदेवतोपरि वर्तमानत्वात् वरुणानन्तरं निवेश उचितः । परन्तु वैद्युतपुरुषस्यामानवसंज्ञकस्य ब्रह्मप्रापकत्वश्रवणात्, मध्ये त्रयाणां निवेशः कथं घटेत? इत्याक्षेपे; ब्रह्मप्रापकस्यामानवस्य एते त्रयः

सहायभूताः, ब्रह्मविदि प्रीतिगौरवाद्यतिशयेनागता इति अमानवस्य प्राधान्यात् अस्य ब्रह्मगमयितृत्वे न विरोध इति समर्थितम् (ब्र.सू. 4-3-3)। तदेतत्सूचयितुं श्लोके आचार्यैः 'वरुणामर्त्यनाथप्रजेशैः' इति तृतीयान्तेनाभिधानम्। अतश्च एते त्रयः अमानवस्य सहायभूताः, न स्वतन्त्रातिवाहिकाः इत्याशयः। वैद्युतपुरुषम् अमानवम् केचन 'मानस'नाम्नापि व्यवहरन्ति ॥

ननु प्रथमम् उत्क्रान्तिक्रममुक्त्वैव गतिविचारो वक्तव्यः। एवं सति उत्क्रान्तिः कुतो न निरूपिता इति चेत्, तस्मिन् अधिकचर्चाया अभावान्न निरूपितेति मन्तव्यम्। उत्क्रान्तिर्नाम जीवस्य शरीरान्निष्क्रमणप्रकारः। 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्।' (छां.6-8-6) इति उत्क्रान्तिरभिहिता। प्रयतः=शरीरं परित्यज्य गच्छतः, म्रियमाणस्येत्यर्थः। अस्य पुरुषस्य प्रथमं वागिन्द्रयोपरमः। वाचः मनसि संपत्तिः, वागिति सर्वेन्द्रियोपलक्षकम्। अत्र संपत्तिः न लयः। स्वोपादानकारणे हि कार्यस्य लयो भवेत्। वागादीन्द्रियाणामहङ्कारतत्त्वोपादानकत्वेन मनसि संपत्तिः निबिडसंश्लेषमात्रम्। वाग्व्यवहारोपरम एव संपत्तिः। एवमुत्तरत्रापि। मनसः प्राणे संपत्तिः। प्राणस्य तेजसि=भूतसूक्ष्मसंसृष्टे जीवे, तस्य च परमात्मनि। परमात्मना साकमेव शरीरादुत्क्रामति। शरीरप्रवेशेऽपि तथैव; जीवब्रह्मणोरुभयोरपि शरीरशरीरिभावेनाविनाभावात्। एवं परमात्मना संपन्नः तत्तत्कर्मानुगुणं लोकान् गच्छति। न च 'न तस्य प्राणा उत्क्रामन्ति' (बृ.6-4-6) इति 'अत्रैव समवलीयन्ते' (बृ.5-3-11) इति च प्राणानामुत्क्रान्तिर्नास्तीत्युच्यते। अत्र तु 'प्राणस्तेजसि' इति जीवे संपत्तिरभिधीयते इति विरोधशशङ्कनीयः; तस्मिन् वाक्ये सर्वनामपदानां भूयस्त्वेन, तेषां च बुद्धिस्थपरामर्शकत्वेन न केवलं शब्दमादाय निर्णयः शक्यः। सगुणनिर्गुणभेदस्य, तदनुगुणविद्याभेदस्य वाऽसंभवस्य पूर्वं विस्तरशो निरूपितत्वात्, तदुपर्यपि विचारः वाचो विग्लापनमेव। ज्ञानिनामज्ञानिनां वा शरीरसंबन्धः, तदात्यन्तिकवियोगो वा कीदृश इति प्रायो बहवो न चिन्तयन्ति। कर्म, तन्मूलकशरीररचना, जीवस्य शरीरप्रवेशः, शरीरान्निष्क्रमणमित्यादिकं सर्वं वैज्ञानिकं, न ग्रन्थपङ्क्तिव्याख्यानाद्यधीनम्। घटान्तर्जलं यथा, न तथा शरीरान्तर्जीवो वर्तते। ओतप्रोततया आनखशिखं प्रत्यणु व्याप्य वर्तते, भूतात्मानमारभ्य परमात्मपर्यन्तम्। घटाकाश इव जीवः, घटनाशे घटाकाशस्य महाकाशेनैक्यं यथा, तथैव शरीरनाशे, जीवस्य ब्रह्मणैक्यम्, घटाकाशस्य महाकाशेनेवेत्यादिकमतीव बालिशभाषितम्। प्रतिबिम्बसदृशो जीवः। दर्पणनाशे प्रतिबिम्बस्य नाशात् बिम्बपरिशेषादिदृष्टान्तोऽपि तथैव। सर्वमिदं दृष्टान्तमात्रम्। दार्ष्टान्तिकस्य गतिः का? 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥' (कठ.2-3-17) इत्युक्तरीत्या जीवस्य शरीरात्पृथक्करणम् घटाज्जलस्य पृथक्करणवन्न सुलभम् ॥

ननु 'अङ्गुष्ठमात्रः' इत्यादिकं परमात्मपरं वर्णितम्, कथं भवता जीवपरं वर्ण्यते, सत्यम्। पूर्वार्धे अन्तरात्मपददर्शनात्तथा। अन्तरात्मशब्दोऽप्युभयसाधारण एव। परन्तूत्तरार्धं जीवपरमित्यत्र न विवादः, अन्यथा हि 'स्वाच्छरीरात्' इत्याद्यस्वारस्यम्। पूर्वार्धस्यापि परमात्मपरत्वे स्वारस्याधिक्यम्। 'अन्तरात्म'पदस्य का गतिरिति चेत्, सद्गतिरेव, न भेतव्यम्। 'परमात्मेति चाप्युक्तः' (गी.13-22) इत्यादौ भाष्यम्,

[मुक्तौ ज्ञानविकासः शाश्वतः]

131. **बुद्धेर्योऽसौ विकासः कबलितनिखिलोपस्कृतब्रह्मतत्त्वः**
**स प्राक् चेन्नित्यमुक्तिः न यदि कथमसौ नश्वरत्वं न गच्छेत्।**
**मैवं प्रध्वंसवत् ते स खलु मम तथा शौनकाद्युक्तनीत्या**
**शान्ताशेषापराधे न च भवति पुनस्तत्र सङ्कोचहेतुः ॥ ६१ ॥**

'जीवसंज्ञोऽन्तरात्मान्यः' (म.स्मृ.12-13) इत्यादि च पश्यतामत्रान्तरात्मा जीव एव युक्त इति स्पष्टं भायात्। जीवस्याप्यङ्गुष्ठमात्रत्वम् 'अङ्गुष्ठमात्रो रवितुल्यरूपः' (श्वे. 5-8) इत्यत्र श्रुतम्। इषीकायाः मुञ्जेन संबन्धः कीदृशस्सूक्ष्मो गहन इति सस्यजीवविज्ञानिन एव जानीयुः। अतः उत्क्रान्तिः ब्रह्मविदोऽप्यनिवार्या। अब्रह्मविदः क्लिश्येयुर्भृशम्; ब्रह्मविदस्तु न क्लिश्येयुरित्येव विशेषः। उक्तवाक्ये 'धैर्येण' इति पदमिदं सूचयति। अत एव 'समाना चासृत्युपक्रमात्' (ब्र.सू.4-2-7) इति शरीरं त्यजतामुत्तरगतिषु वैषम्यसत्त्वेऽपि शरीरादुत्क्रन्तिस्समानेत्याह सूत्रकारः। गतिविषये तु **पिण्डाण्डब्रह्माण्ड**विज्ञानेनैव निर्णयः। अतः केवलैर्वचनैः, चकारतुकारादिभिर्वा न कोऽप्यर्थस्साधीयानित्यवधेयम् ॥ ६० ॥

गत्यनन्तरं प्राप्तिर्विचार्यते—**बुद्धेरित्यादिना**। प्राप्तिर्नाम ब्रह्मप्राप्तिः। सैव मुक्तिः। सा च निश्शेषाविद्यानिवृत्त्या संपूर्णज्ञानविकासरूपा। तस्या असंभवमाशङ्कते=**कबलितनिखिलोपस्कृतब्रह्मतत्त्वः बुद्धेः योऽसौ विकासः, सः प्राक् चेत्**=प्रागप्यासीत्, न नूतन इति चेत्, **तर्हि नित्यमुक्तिः**=मुक्तिः नित्या स्यात्=संसारावस्थायामपि स्यात्। **न यदि, असौ नश्वरत्वम्**=नाशम् **कथं न गच्छेत्?** इत्यन्वयः। मुक्तिशब्दार्थः कः? सकलदुरितनिवृत्तिः। अनया च किं भविष्यति? संपूर्णधर्मभूतज्ञानविकासः। अनेन च को लाभः? कथं पुरुषार्थत्वमस्य? इति प्रश्ने—परिपूर्णतया ब्रह्मानुभवरूपः सः। ब्रह्मणश्चानन्तान्दमयत्वात्= निरतिशयानन्दानुभवरूपत्वान्मुक्तेः परमपुरषार्थत्वमुच्यते ॥

ब्रह्मणि परिपूर्णत्वं नाम सकलगुणविभूतिविग्रहविशिष्टत्वम्। धर्मभूतज्ञानस्य सङ्कोचनिवृत्तौ, तस्य सर्वविषयकत्वं सहजम्। तथाच—**कबलितम्**=विषयीकृतम्, **निखिलैः** विशेषणैः **उपस्कृतम्**=विशिष्टम् **ब्रह्मतत्त्वम्**=येन, तादृशः **योऽसौ विकासः**, अयं पूर्वमेवासीत्, उत नूतनतया आगतः। आद्ये, तस्यैव मुक्तिपदार्थत्वेन, तस्य पूर्वमेव सत्त्वात् **मुक्तिर्नित्या स्यात्**=कस्यापि बन्ध एव न स्यात्। स तु अनुभवविरुद्धः। द्वितीये पक्षे नूतनतया उत्पन्नत्वे, अनित्यत्वमनिवार्यम्, 'जातस्य हि ध्रुवो मृत्युः' इति न्यायात्। इत्याक्षेपं निराकरोति—**मैवमिति**। कथं तर्हि परिहारः? इत्यत्र—**ते**=तव मते **प्रध्वंसवत्**= प्रध्वंसाभाववत्, **स खलु**=विकासः, **मम शौनकाद्युक्तनीत्या तथा**=नित्यः इत्यर्थः। 'यथा न क्रियते ज्योत्स्ना मलप्रक्षाळनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ यथोदपानकरणात् क्रियते न जलाम्बरम्। सदेव नीयते व्यक्तिमसतःसम्भवःकुतः ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः। प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥ (विष्णुधर्म.104-55,56,57) इति शौनकोक्ता नीतिः। प्रध्वंसाभावस्य

उत्पत्त्यङ्गीकारेऽपि नाशः यथा नाङ्गीक्रियते, तथैव विकासस्य जन्यत्वेऽपि संकोचनिवृत्तिरूपत्वात्, सहजत्वाच्च नित्यत्वमविरुद्धमेव। उत्पन्नमपि न नश्यतीत्यभावस्यैव नियमः, न तु भावस्येति चेत्, अभावस्य भावान्तर-रूपत्वं वदतामस्माकं विकासस्याप्य भावरूपत्वात्, उत्पत्तिमत्त्वेऽपि नित्यत्वं तस्यावशादेव सिद्ध्यति। सङ्कोचस्य निवृत्तिः=नाशः विकासरूपः, नातिरिक्तः। अतस्तस्य जन्यत्वेऽपि सङ्कोचनिवृत्तिरूपत्वात्, नाशाभावस्सङ्गच्छते। प्रसरणस्वभावस्य वस्तुनः दीपप्रभादेः प्रसरणं खलु स्वभावः, अप्रसरणम्=सङ्कोचस्तु कुड्याद्यावरणौपाधिकः। तद्वत् प्रकृते धर्मभूतं ज्ञानं प्रसरणशीलम्। संकोचस्तु कर्मकृतः। कर्मणां नाशे स्वयमेव प्रसरति ज्ञानम्। प्रसरणाप्रसरणे एव विकाससङ्कोचौ। अतश्च विकासस्यागन्तुकत्वेऽपि, तस्यैव स्वाभाविकत्वात्, स्वाभाविकस्य च निवृत्त्ययोगात् विकासो नापगच्छति॥

उक्तार्थे महतां संवादं प्रदर्शयति— **शौनकाद्युक्तनीत्येति**। प्रदर्शित एवायं न्यायः पूर्वमेव (श्लो.54) 'यथा न क्रियते ज्योत्स्ना' इत्यादिना। नन्वेवं यद्यागन्तुकधर्माङ्गीकारमात्रेण धर्मिणो नित्यत्वे न कापि हानिः,तर्हि एतादृशविकासस्यानित्यत्वेऽपि धर्मभूतज्ञानस्य नित्यत्वसंरक्षणात् विकासोऽनित्योऽप्यस्त्वित्याक्षेपे, समाधानमाह—**शान्तेत्यादि**। **शान्ताः**=निवृत्ताः **अशेषाः**=समस्ताः **अपराधाः**=कर्माणि यस्य। तादृशे मुक्ते, **तत्र**=धर्मभूतज्ञाने **पुनःसङ्कोचहेतुः न च**=नैव भवति। अतो विकासः शाश्वतोऽवतिष्ठते। धर्मभूतज्ञानस्य कथञ्चिन्नित्यत्वसाधनमेव न पुरुषार्थोऽस्माकम्, तस्य संसारदशायामपि समानत्वात्। आत्म-स्वरूपवत् प्रत्यक्त्वाभावेन अस्य स्वतःपुरुषार्थरूपत्वाभावात्। आत्मस्वरूपस्य निरतिशयानन्दरूपत्वाद्धि तादृशस्वरूपाविर्भावस्यैव पुरुषार्थत्वं वर्णनीयम्। परं त्विदमपि कैवल्ये पर्यवसितं भवेत्। अत एव धर्मभूतज्ञानविकासमात्रस्यापि न परमपुरुषार्थत्वम्। किन्तु अनवधिकातिशयानन्दस्वरूपस्य परमात्मनः संपूर्णविषयीकरणादेव तस्य परमपुरुषार्थरूपमुक्तिपदवाच्यत्वं ह्युपक्रम एव 'कबलितनिखिलोपस्कृतब्रह्म-तत्त्वः' इत्यनेन प्रादर्शि। अत एव भगवद्रामानुजैः नानाविधवादिसंमतमोक्षस्वरूपमनूद्य— 'त्रय्यन्तनिष्णातास्तु' इत्युपक्रम्य 'अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते' (श्री.भा.1-2-12) इत्यन्वग्राहि। आत्मनोऽणुत्वेऽपि तदीयं ज्ञानम् 'स चानन्त्याय कल्पते' इत्युक्त्या मुक्तिकाले संपूर्णं प्रसृतं परमात्मज्ञानवदेव सर्वविषयकम्। एवं स्वरूपतोऽणुत्वस्याङ्गीकारात् 'अङ्गुष्ठमात्रो रवितुल्यरूपस्सङ्कल्पाहङ्कारसमन्वितो यः। बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः॥' (श्वे.5-8) 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयः' (श्वे.5-10) इत्यादिश्रुतीनां स्वार्थबोधकत्वनिर्वाहः। आराग्रमात्रः=आरः= रथावयवचक्रस्यैकदेशः। तस्याप्यग्रम्=तदेकदेशः। वालस्याग्रम्=अवयविन एकदेशः। तस्यापि शतधा-कल्पितो यो भागः=अत्यन्ताल्पपरिमाणकः=अणुरित्यर्थः। 'वालाग्रम्' इति 'गुञ्जा'दिवत् अतिसूक्ष्म-परिमाणविशेषस्य संज्ञेति केचित्। इदं चाणुत्वं न भौतिकवस्तुपरिमाणसदृशमित्यादि च पूर्वमेवोक्तम् (श्लो.22)। अणोरपि जीवस्य मुक्तौ 'सर्वं ह पश्यः पश्यति' (छां.7-26-2) इति सर्वज्ञत्ववर्णनमपि सङ्गच्छते। एभिस्सह— 'धीर्नित्या' (श्लो.4) इत्यस्याप्यनुसन्धानेन बह्व्यः समस्याः परिह्रियेरन्॥

अथैतावतापि उत्पन्नस्य भावस्यानित्यत्वनियमात्, विकासस्यानित्यत्वापत्तिः कथं वार्यते? इति चेत्; ध्वंसस्य नित्यत्वसंरक्षणार्थं यथा वा भावत्वे सतीति विशेषणं दीयते, तथैवात्रापि एतद्भिन्नत्वमपि

विशेषणीक्रियताम्। 'एवं परिष्करणं दोषाच्छादनरूपं किल' इति यदि मनःसंकुचति, तर्हि 'तद्भिन्नत्वम्' मास्तु, द्रव्यत्वे सतीति विशेषणं दीयताम्। विकासस्याद्रव्यत्वात्, तस्य व्यावृत्तिः। न च विकासस्यानित्यत्वे तद्विशिष्टस्य धर्मभूतज्ञानस्यानित्यत्वं स्यादिति शंक्यम्; इष्टापत्तेः। अत एव किल जीवस्य सृज्यत्ववादः क्वचित्। 'स्वर्गी नष्टः' इत्यादिवत् सर्वेषामपि मते एतादृशानित्यत्वस्यादोषत्वात्। आकाशस्य स्वरूपतो नित्यत्वेऽपि, घटाकाशसंयोगस्यानित्यत्वात्, तद्विशिष्टत्वेन रूपेणाकाशस्यानित्यत्वेऽपि आकाशस्यानित्यत्व-प्रसक्तिर्न हि भवति। अतो धर्मभूतज्ञानस्य स्वरूपतो नित्यत्वे, विकासस्यागन्तुकत्वेऽपि न क्वापि हानिरिति। सांख्यसंमतसत्कार्यवादस्य सिद्धान्तसम्मतसत्कार्यवादस्य च तारतम्यपरिशीलनं द्रष्टव्यम् (जड.24)। अतो विकासस्यावस्थारूपत्वमावश्यकम्। अस्य सदा सत्त्ववादः, घटत्वावस्थापि पूर्वमेव सती कारक-व्यापारैरभिव्यज्यत इति वादतुल्यस्स्यात्। एवञ्च विकासोऽपि द्रव्यं स्यात्। न चेष्टापत्तिः; तस्य ज्ञानधर्मत्वानपायात्। अधिकमग्रे। 'स चानन्त्याय कल्पते' (श्वे.5-10) इति श्रुतिरपि विकासस्यागन्तुकत्वे स्वरसा। किं बहुना? ब्रह्मणोऽपि विशिष्टरूपेण कार्यत्वस्य कारणत्वस्य च पूर्वमेवोपपादितत्वात् (जड.16) 'शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः'(नाय.26) इति न्यायोऽत्रापि स्मरणीयः। अन्ततः 'धीर्नित्या यस्य पक्षे' इत्यत्रोक्तमवधेयम्॥

एवञ्चैतादृशस्य परमपुरुषार्थभूतस्य विकासस्यानित्यत्वं कथं संभवि? प्रकाशात्मकस्य ज्ञानस्य प्रसरणं हि स्वभावः। तस्य संसारदशायां कर्मणा प्रतिबन्धात् तत् संकुचितमासीत्। पुनस्तादृशकर्मसंबन्धस्या-भावात् कदापि स्वाभाविकस्य प्रसरणस्य न भङ्गप्रसंगः। अत्र सर्वत्रापि 'वचन'अन्वेषणापेक्षया विज्ञाना-न्वेषणमेव वरम्। 'वेदान्तविज्ञानसुनिश्चितार्थाः' (महाना.10-6) इति हि वक्ति श्रुतिः। ज्ञानावस्थान्या, विज्ञानावस्था चान्या। ज्ञानावस्थापि सुषुप्तिवदेकरीत्या निस्संबोधरूपा—'न बाह्यं किञ्चन वेद नान्तरम्' (बृ.6-3-21) 'केन कं पश्येत्केन कं विजानीयात्' (बृ.4-4-1) 'येनदं सर्वं विजानाति तं केन विजानी-यात्' (ब्र.4-4-14) इति हि वदति श्रुतिः। अतः ज्ञानावस्थायाःपरिशीलनं विज्ञानेन कृतं चेत् 'वेदान्त-विज्ञानसुनिश्चितार्थाः' इत्यर्थस्य सिद्धिः। वचनानि 'परोक्षप्रिया इव हि देवाः' इति न्यायेन कदाचिद्विरुद्धमर्थं प्रदर्शयेयुरपि। विज्ञानं तु कदापि न तथा। इदानीन्तनसिद्धान्तभेदादीनां व्याख्यानभेद एव प्रायो मूलकारणम्। अतश्च विज्ञानदृष्ट्यैवापुनरावृत्तिस्सिद्ध्यति। किं तद्विज्ञानमिति चेत्, प्रयते कथञ्चिदुत्तरदानाय समये॥

केचित्तु, धर्मभूतज्ञानं स्वतः सदा सर्वगतमेव, विभुत्वात्। कर्मणः प्रतिबन्धकत्वात्, संसारदशायां नानुभूयते। मुक्तौ प्रतिबन्धकनिवृत्त्याऽनुभूयत इत्याहुः—तन्न युक्तम्—धर्मभूतज्ञानस्य विभुत्वे प्रमाणाभावात्। धर्मभूतज्ञानस्य द्रव्यत्वात्, तद्धर्मभूतौ सङ्कोचविकासौ तदवस्थारूपावेव। आगन्तुकापृथक्सिद्धधर्मत्वं हि अवस्थायाः लक्षणम्। अतः सङ्कोचविकासयोरागन्तुकत्वमनिवार्यमिति विकासस्य नित्यत्वं न युज्यते। आगन्तुकत्वेऽपि नित्यत्वं पूर्वोक्तयुक्त्यैव वर्णनीयमिति। न च मास्तु विकासः अवस्था, सः स्वरूप एव। अथवा विभुत्वमेव तस्य स्वरूपम्। तस्य च परिमाणरूपत्वान्न दोष इति वाच्यम्, विकासस्य धर्मत्वेनैव लोके दर्शनात्, तस्य स्वरूपत्वासंभवात्। न च कुसुमादौ विकासस्यावस्थारूपत्वेऽपि, धर्मभूतज्ञानस्य विकासः

विभुत्वमेव, एतच्च नित्यमेवेति वाच्यम्, एवं सति आत्माधिकरणभाष्यविरोधप्रसङ्गात्। ननु वस्तुतत्त्वानुगुणं हि वचनं नेयमिति चेत्। सत्यम्। परं तु संसारावस्थायामपि व्यक्तिभेदेन, एकस्यापि वयोभेदेन च ज्ञानस्वरूपस्य निरूपणीयत्वे संकोचविकासमन्तरा निरूपयितुमशक्यत्वात् संकोचविकासावावश्यकौ। अधिकमग्रे (बुद्धि.7) वक्ष्यामः। ननु विकासः यदि द्रव्यधर्मः, तर्हि सः अद्रव्ये कुत्रान्तर्भूत इति चेत्; वक्ष्याम इदमप्यद्रव्यसरे। अन्ततः 'धीर्नित्या' इत्यादिश्लोक (4) व्याख्या द्रष्टव्या॥

अस्तु सर्वमिदम्। इयं समस्या प्रथमं परिह्रियताम्—परमपुरुषार्थभूतो ब्रह्मानुभवो नाम कः? 1) ब्रह्मविषयकानुभवः? 2) उत ब्रह्मानन्दानुभवः? 3) उत ब्रह्मानन्दसदृशानन्दानुभवः? 4) ब्रह्मभाव एव वा पुरुषार्थः? सन्त्येवंविधानि वचनानि, इतोऽन्यविधानि च बहूनि॥

1) आद्ये पक्षे सोऽपि कीदृशः? ब्रह्मविषयकं दर्शनमात्रं ब्रह्मानुभवः? उत 'राज्यानुभवः' इत्यादिवत् तदधीननानाविधभोगातिशयः? प्रथमस्य कथं परमपुरुषार्थत्वम्? यथा वा संजयो वक्ति— 'तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः। विस्मयो मे महान् राजन् हृष्यामि च पुनःपुनः'॥ (गी.18-77) इति। अत्यद्भुतविश्वरूपसंदर्शनवत्, ब्रह्मदर्शनेन विस्मयः, हर्षो वा यद्यपि भवेत्। परन्तु, तस्य परमपुरुषार्थत्वं कथम्? चन्द्रादिदर्शनेन जायमानाह्लादतुल्यः, ततोऽप्यतिशयितो वा सः। चन्द्रादिदर्शन इव ब्रह्मणोऽस्माकं च न कश्चन संबन्धः। द्वितीयवस्तुदर्शनं हि तत्। 'योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति, न स वेद अकृत्स्नो ह्येषः।' (बृ.3-4-10) इति तादृशब्रह्मदर्शनस्यापुरुषार्थरूपत्वं कथ्यते। प्रत्युत—'यथा पशुरेवं स देवानाम्' (बृ.3-4-10) इति अयमन्यत्वदर्शी गवाश्वादिवत् अन्येषां भोगसाधनं भवतीत्युच्यते। तस्य कथं परमपुरुषार्थत्वम्? न च भगवद्भोगसाधनत्वान्मुक्तस्य न दोषत्वम्, अन्यदेवाधीनत्वस्यैव दोषत्वादिति वाच्यम्, 'यथा पशुः' 'न स वेद' इति च तत्स्थितेर्निन्दितत्वात्॥

अस्तु तर्हि नानाविधभोगातिशयभाक्त्वरूपः कल्पः। राजकुमारन्यायोऽपीदानीमनुकूलः। राज्ञो राज्यभारादिप्रयुक्तो भारोऽनिवार्यः, राजकुमारस्य तु केवलभोगमात्रमिति ब्रह्मप्राप्त्यधीननिरतिशयभोगरूपत्वात् सैव हि परमपुरुषार्थः श्रीवैष्णवानाम्। सेवाया अपुरुषार्थत्वादिकमग्रे (श्लोक.64) समाधीयते। भक्तिसिद्धान्ते हि सन्ति भक्तौ पर्वभेदाः—दासभक्तिरारंभपर्वणि, राजभृत्यवत् सर्वजगत्प्रभुः किल सः। पितृपुत्रभावतुल्या आत्मीयप्रीतिरूपा द्वितीयपर्वणि। सर्वेषामपि जनकः किल परमात्मा। 'पिता नः' (ऋ.सं.10-81-0) (तै.सं.4-6-0) इति श्रुतिरपि। 'आत्मा वै पुत्रनामासि' इति खलु पितृपुत्रयोरात्मीयभावः। अस्ति हि जीवपरमात्मनोरंशांशिभावः। नैवं राजभृत्ययोः। तयोस्तु स्वस्वामिभावः स तु सर्वेश्वरस्य सर्वत्र समानः। पितृपुत्रयोस्तु स्वस्वामिभावेन सहातिरिक्तोऽपि निकटसम्बन्धः। प्रेमभक्तिः सतीपतिभावप्रयुक्ता तृतीयपर्वणि। इयमेव मधुरभक्तिरित्युच्यते। पितृपुत्रभावापेक्षया सतीपतिभावः खलु गाढः—'अर्धो वा एष आत्मनो यः पत्नी' इति हि श्रुतिः। 'एकाकी न रमते स द्वितीयमैच्छत् ...पतिश्च पत्नी चाभवत्' (बृ.1-4-3) इति च। अत एव पत्न्याः 'द्वितीया' इत्येव नाम। 'तद्यथा प्रियया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्,

एवमेव प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ.6-3-21) इति परमात्मना संपरिष्वक्तस्य=आविष्टस्य=परमात्मनि लीनस्या बाह्यप्रज्ञाभाव उच्यते। एतदवस्थायाः कथं परमपुरुषार्थत्वमिति तु न शङ्क्यम्, उदाहृतं हि वाक्यं सुषुप्तिविषयम्। सौषुप्तिकलयस्यैव तादृशसुखरूपत्वे मुक्तिकालिकलयस्य स्वरूपं किमु वक्तव्यम्। अस्य चाविभागाधिकरणसिद्धत्वात् परमपुरुषार्थत्वम्। एतादृशमात्मविस्मरणकार्यविभाग एवान्तिमसोपानम्। इदमेव भक्तेः अन्तिमकाष्ठारूपम्। अत एव भक्तिसिद्धान्तिनां भक्तिः पञ्चमपुरुषार्थ उच्यते। पितृपुत्रभावे जीवपरमात्मनोरंशांशिभावेऽपि, कियानंशो जीवः? इत्यस्पष्टत्वात्, महासागरस्य बिन्दुवत्स्यात् जीवः। अत एवात्र प्रीत्यैकतानुभव एव, नास्त्यविभागानुभवः। 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः'(मुं.2-1-1) इति महतोऽग्नेः विस्फुलिङ्गतुल्योऽऽयं जीव इति वक्ति श्रुतिः। पतिपत्नी भावे तु 'अर्धांशरूपा पत्नी' इति खलु वेदविज्ञानिनः। यथा सती पतिप्रीत्यर्थमेव सर्वं करोति, तथा मुक्तोऽपि जीवः निःस्वार्थपरमात्मकैङ्कर्यासक्तः, तेन सन्तुष्यन्तं परमात्मानं पश्यन् आनन्दं अनुभवतीति मुक्तेः परमपुरुषार्थत्वं युज्यते। एवं कदाचित्सशरीरत्वम्, कदाचित्तु 'न बाह्यं किञ्चन वेद नान्तरम्' इत्येतादृशानुभवोऽपि। उभयत्र मुक्तस्येच्छैव नियामिका॥

न च क्रीडासक्तानां बालानामयं पुरुषार्थस्स्यात्, न तु प्रौढमतीनामिति मन्तव्यम्; यतो भगवान् बादरायण एव मुक्तौ जीवानां शरीरमस्ति, न वा? इति विचार्य, 'उभयविधं बादरायणः' (ब्र.सू.4-4-12) इति पक्षद्वयमपि संमतमित्याह। शरीरसद्भावपक्षे किमर्थं तच्छरीरम्? इति प्रश्ने, परमात्मनः सन्तोषहेतुभूतविहारार्थमिति 'जक्षन् क्रीडन् रममाणः' इत्यादिश्रुतिभिरुच्यते। अतो नानाविधसेवारुचिरेव मुक्तिरिति भवतु शरीरसद्भावकल्प इति चेत्—अस्त्वेतत्। इतः परावरमुक्तिभेदकल्पनमेव वरमिति चेत्॥

हन्त! त्वं वञ्चितो वत्स! निर्विशेषात्मवादिभिः। सविशेषं ब्रह्म नूनं न मुक्तौ भेदसंभवः॥
किञ्चिन्निरीक्ष्यतां सर्वं स्पष्टमग्रे भविष्यति। क्रमशश्च विलीयेरन् समस्याः स्वयमेव हि॥

अस्त्विदं सर्वम्! इदं पुनः पृच्छ्यते—शरीररहितामवस्थामप्याह हि भगवान् बादरायणः। साऽवस्था कीदृशी? तदा कीदृशी सेवा? कथं वा तिष्ठति मुक्तः? इति वक्तव्यम्। केवलं स्वस्वरूपेणावतिष्ठते इति चेत्, कैवल्यतुल्यायाः तत्स्थितेः निरतिशयपुरुषार्थत्वं कथमित्युच्यताम्। 'परब्रह्मानुभवैकस्वभावस्य' इति श्रीभाष्यवचनात्, ब्रह्मानुभवः जीवस्वरूपान्तर्गत इति, अस्ति तदानीमपि ब्रह्मानुभव इति चेत्, तर्हि कैवल्यमपुरुषार्थः कथम्? जीवस्वरूपस्यैव परब्रह्मानुभवस्वरूपत्वात्। कैवल्यस्य च स्वरूपानुभवरूपत्वात्। तर्ह्ययं प्रथमः कल्प एवेति दोषोऽपि स एव भविष्यति। अतः प्रथमः पक्षः न विचारसहः॥

2) ब्रह्मानुभवः=ब्रह्मानन्दानुभवः इत्यस्तु द्वितीयपक्षाभिप्राय इति चेत्; अत्रापि विवरणं देयम्। ब्रह्मणः योऽयं निरतिशय आनन्दः, स कथमन्येनात्मनानुभवितुं शक्येत? धर्मभूतज्ञानस्य संपूर्णतया विकसितत्त्वात्, तेन विषयीक्रियते ब्रह्मानन्दोऽपीति चेत्, तथापि स आनन्दः आत्मीयः कथं स्यात्। तादृशानन्दपरिचयमात्रं स्यात्। ब्रह्मसूत्रकारोऽपि 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र.सू.4-4-21) इति मुक्तानन्दस्य ब्रह्मानन्दसाम्यमेवाह, न तु ब्रह्मानन्दस्यानेनानुभवम्, अन्यस्यानन्दः अन्येन कथमनुभूयेत?॥

3) अस्तु तर्हि तृतीयः पक्षः—ब्रह्मानन्दसदृशानन्दानुभव एव पुरुषार्थ इति चेत्, तर्हि कैवल्यस्यास्य च को विशेषः? कैवल्यं हि विशुद्धस्वस्वरूपानुभव एव। यद्यपि योगमतसंमतकैवल्यापेक्षया स्याद्विशेषः। तैः मुक्तौ ब्रह्मानन्दानुभवानङ्गीकारात्। सिद्धान्ते जीवस्य परमात्मशरीरत्वाङ्गीकारात्, जीवस्वरूपानुभवे परमात्मनोऽपि भानमनिवार्यम्। परं त्विदं भानं जीवस्वरूपभानन्यग्भूतम्। अतः कैवल्यं न केवलजीवस्य स्वरूपानुभवरूपम्। अथापि भोगसाम्यस्यैवाङ्गीकारात् जीवस्वरूपान्तर्गतत्वेनैव परमात्मानुभवस्य वक्तव्यत्वेन कैवल्यतौल्यमनिवार्यमेव। तथा च ब्रह्मानुभवोऽपि नास्ति, ब्रह्मानन्दानुभवोऽपि नास्ति, किन्तु ब्रह्मानन्दतुल्यानन्दानुभव एव मोक्ष इत्यायातम्। नेदानीमपि निर्वृतिः। अयं चोक्तो ब्रह्मानन्दः ब्रह्मणो धर्मभूतः। धर्मिस्वरूपमप्यान्दस्वरूपमेव खलु। तादृशस्वरूपानन्दो मुक्तस्य नास्तीति आयातं तारतम्यं मुक्तौ। न च भोगसाम्यमेव सूत्रोक्तम्। किं कुर्म इति वाच्यम्, ब्रह्मणो भोगे तदीयस्वरूपानन्दोऽपि खलु मिलितः। ततश्च तदंशाननुभवात् ब्रह्मानन्दतुल्यानन्दानुभवोऽपि न स्यादेव। तथा च 'गजः पिपीलिकायितः' इतिवत् 'ब्रह्मानुभवो मोक्षः' इति वाग्विलासमात्रम्। अतोऽस्यापि परमपुरुषार्थरूपत्वं न भवत्येव, ब्रह्मणोऽप्राधान्यात्॥

ननु तर्हि भूतावेशन्यायेन स्वरूपमाविश्य तत्स्वरूपानन्दमपि मुक्तात्मानुभवतीति **नवीनवेदान्तिनां** पक्ष एव श्रेयानिति चेत्, तत्रापि विचारयामः . 'भूतावेशः' इत्यस्यार्थः कः? लोके हि भूताविष्टा जनाः बहु भुञ्जते, बह्वसाध्यमपि कुर्वन्तीत्यादि दृष्टम्। तद्वदिति चेत्, तदानीं जीवो मृतप्राय एव जायते। ऐक्यमेवानुभवन्ति जनाः। तादृशो लय इति चेत्, तर्हि जीवनाशोऽपवर्गः स्यात्। न नाशः, तिष्ठत्येव सोऽपीति चेत्, एतादृशमैक्यमेव परस्यापि संमतमिति अपसिद्धान्ते पर्यवसानं स्यादस्माकम्॥

4) अस्तु ब्रह्मभावापत्तिरूपश्चतुर्थः पक्ष इति चेत्, 'ब्रह्मभाव'पदस्यार्थः कः? ब्रह्मगतासाधारणधर्मो यद्यर्थः, तदा ब्रह्मानन्दसदृशानन्दानुभव एव विश्रान्त्या, पूर्वोक्तपक्षादविशेष एव। ब्रह्मभावो यदि ब्रह्मत्वम्, तर्ह्यपसिद्धान्तः। अतः 'कबलितनिखिलोपस्कृतब्रह्मतत्त्वः' इत्येतदाडम्बरमात्रमिति चेत्—अत्रोच्यते—

महांस्तु विषयोऽयं हि ज्ञानिनामप्यगोचरः। कथं वा बोधयेऽहं त्वां साहाय्ये ह्यस्ति स प्रभुः॥
पूर्वग्रहादिकं त्यक्त्वाहंकारं चैव दूरतः। गुरून् सर्वांश्च संस्मृत्य त्वर्थं चिन्तय केवलम्॥

'यतो वा इमानि भूतानि जायन्ते' इत्यादिना हि जगज्जन्मादिकारणत्वम् ब्रह्मणोऽभिधीयते। तत्र 'यत्प्रयन्त्यभिसंविशन्ति' इति कारणावस्थाप्राप्तिरूपो लयः चेतनानां सुषुप्तेरारभ्य मोक्षपर्यन्त एव विवक्षितः। 'अभि' 'सं' इत्युपसर्गाभ्यां 'विशन्ति' इत्युक्तः प्रवेशः लय एव। 'तत्त्वेन प्रवेष्टुम्' (गा.11-4) 'विशते तदनन्तरम्' (गी.18-55) इत्यादौ प्रवेशस्य मोक्षरूपतयैव प्रसिद्धेः। सुषुप्तेरपि लयरूपत्वम् 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' इत्यादौ स्पष्टम्। एवं मूर्च्छा मरणं च परमात्मनि लयरूपमेवेति लयेऽपि तारतम्यं वर्तते। सुषुप्तिः कश्चन लयश्चेत्, मूर्च्छामरणयोः ततोऽपि गाढतरत्वम्, मोक्षस्य गाढतमत्वं च द्रष्टव्यम्। अत एव 'आत्मेति तूपगच्छन्ति' (ब्र.सू.4-1-3) 'अविभागेन दृष्टत्वात्' (ब्र.सू.4-4-4) इति सूत्राभ्याम् अन्यत्वेनोपासनं फलं(मोक्षं) च निरस्यानन्यत्वेनैवोपासनफलयोः

[मुक्तस्य देहसदसद्भावविचारः]

**132. मुक्तौ देहाद्यभावे मुकुलितविषयो जक्षदादिप्रवादः**
**तत्सत्त्वे चाशरीरश्रुतिविहतिरतः का चिकित्सेति चेन्न।**

स्वरूपं विचार्य निरधारि। एवञ्चानन्यत्वे सति ब्रह्मानुभवे, ब्रह्मानन्दानुभवस्याप्यत एव स्वयं प्राप्तत्वेन, न ब्रह्मानन्दानुभवदर्शनम् मुक्तस्य, किन्तु ब्रह्मानुभवो ब्रह्मानन्दानुभवश्चेति मुक्तेर्निरतिशयपुरुषार्थरूपत्वम्॥

ननु तर्हि संकल्पाद्यधिकरणानां का गतिः? परमात्मनाऽविभागेनावस्थितस्य पृथक्त्वानुभवस्यासंभवात् प्रत्येकं सङ्कल्पादीनामप्यप्रसक्तेरिति चेत्; यावत्पर्यन्तं मुक्तात्मविषये, 'मुक्तः किं कुर्यात्?' 'कथं तिष्ठेत्?' इत्यादिप्रश्नास्समुद्भवन्ति, उत्तरं च कृपालुभिर्गुरुभिरवश्यं वक्तव्यं भवति, तावत्पर्यन्तं त्रिपुट्या अवर्जनीयत्वेन, तादृशप्रश्नानामुत्तराणाञ्चावश्यकत्वात्। ब्रह्मसूत्ररचनैव त्रिपुटीरूपा—कर्ता, करणम्, कर्मेति त्रिपुटीमन्तरा कस्यापि व्यवहारस्यासंभवात्। 'श्रुतोपनिषत्कगत्यभिधानाच्च' (ब्र.सू.1-2-17) 'मुक्तोपसृप्यव्यपदेशाच्च' (ब्र.सू.1-3-2) 'संपद्याविर्भावः' (ब्र.सू.4-4-1) इत्यादिसूत्राणामावश्यकत्वे, तदुपरि प्रश्नप्रतिवचनयोरप्यनिवार्यत्वात्तादृशसूत्राणां प्रवृत्तिः। अयि भोः! मा स्तां प्रश्नप्रतिवचने। 'स्वमपीतः' 'स्वेन रूपेण' इत्यादौ 'स्व'शब्दः किं आत्मपरः, उत आत्मीयपरः। पदार्थः प्रोच्यताम्।

कं वा बिबन्धयिषसि जागरुकस्सदा त्वहम्। यदीच्छेत्प्रभुरस्माकमुत्तरं दास्यति स्वयम्॥
भूतात्मादिप्रभेदेन ह्यात्मनः पञ्चधा स्थितिः। तथैव 'पुरुषे त्वाविस्तरामात्मे'ति च श्रुतिः॥
द्वयमेतत्तु पर्याप्तं समस्यानां निवारणे। आभ्यां च प्रत्यगर्थस्य परमात्मान्तिमो मतः॥
इति श्रीभाष्यवाक्यं च योज्यतां यदि वेष्यते। सर्वमेतत्समायोज्य गाढं तीव्रं च चिन्त्यताम्॥
चिन्तनायाः प्रकारश्च स्पष्टमेव प्रदर्श्यते। अर्थप्रत्ययशब्दानां ज्ञेयो वैज्ञानिकः क्रमः॥
अर्थानुगुणा बुद्धिः शब्दो बुद्ध्यनुगस्तथा। एषां दृष्टः पृथग्भावः सर्वेषामात्मसाक्षिकः॥
सांकर्यादेव चैतेषां विचारा बहुधाऽभवन्। एवं वैज्ञानिकीं चिन्तां कुर्याच्चेदात्मसाक्षिकम्॥
बहवो मतिभेदा हि विलीयेरन् क्रमात्स्वयम्। अत्रैकं वचनं ज्ञेयमाचार्यस्यास्य सारवत्॥
'परश्शतपरिक्षोदात्परस्तादपि वादिभिः। उपलंभबले स्थेयं तदादावेव गृह्यताम्॥'
इतोऽपि यदि बोद्धव्यम्, यद्यार्तिस्सहजा तव। सङ्केतं सर्वमुत्सृज्य साधवोऽन्विष्यतां द्रुतम्॥
'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः'॥
यावत् बुद्धिः प्रसरति यावच्छब्दः प्रवर्तते। तावदेव विचारःस्यात्तत ऊर्ध्वं तपो भवेत्॥
चिन्तनीयोऽध्यात्मवादस्त्वधिदैवाद्विलक्षणः। क्रमशः स्पष्टमेवैतत् भविष्यति निरीक्ष्यताम्॥ ६१॥

मुक्तौ ज्ञानविकासश्चिन्तितः। मुक्तस्य देहोऽस्ति, न वा? श्रुतिद्वैविध्यात् संशये, तदनूद्य समाधत्ते-**मुक्तावित्यादि**। **मुक्तौ**=मुक्तिकाले **देहाद्यभावे**=देहादीनाम् असत्त्वे, आदिपदेनेन्द्रियादिसंग्रहः। **जक्षदादिप्रवादः**='जक्षन् क्रीडन्' (छां.8-12-3) इत्यादिव्यवहारः **मुकुलितविषयः**=उपसंहतविषयः=

**इच्छातःस्यादवस्थाद्वयमुभयविधश्रुत्यबाधाद्विमुक्तौ**
**कर्मायत्तैर्वियोगः परमिह कथितस्तस्य देवोपमस्य ॥ ६२ ॥**

विषयशून्यः स्यात्। केवलस्यात्मनः कस्यापि क्रीडादिव्यवहारस्यासंभवात्। **तत्सत्त्वे च**=शरीरसद्भावे तु **अशरीरश्रुतिविहतिः**='अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' (छा.8-12-1) इति शरीररहितस्यैव प्रियाप्रियादिद्वंद्वैः अपघातो न भवतीति श्रुत्याऽशरीरित्वाभिधानात् तच्छ्रुतिविरोधः। **अतः**=एवं परस्परविरोधे, सप्तम्यास्तसिल्, श्रुत्योर्विरोधस्य भानमात्रत्वात्, वास्तविकत्वासंभवेन, हेतुपञ्चम्यसंभवः। सप्तम्यर्थत्वे तु, तस्या विषयत्वविषयित्वान्यतरार्थकत्वेन, भाने पर्यवसानम्। **चिकित्सा**=परिहारः, **का?**=कीदृशः? उभयोरपि श्रुतित्वात्, अन्यतरपरित्यागासंभवात्। कालभेदात्परिहारस्त्वस्मिन् लोके संगच्छेत, न तु मुक्तौ। 'कालं स पचते तत्र न कालस्तत्र वै प्रभुः' इति वचनेन, कालाधीनत्वाभावात्तल्लोकस्येत्याशयः। **प्रभुः**=समर्थः। **इति चेत्, न**। तर्हि का चिकित्सा? इत्यत्र—**विमुक्तौ**=मुंक्तिकाले, **उभयविध-श्रुत्यबाधात्**=शरीरसद्भावासद्भावरूपोभयविधश्रुत्योरपि बाधाभवाद्धेतोः **अवस्थाद्वयम्**=सशरीरत्वा-शरीरत्वरूपावस्थाद्वयमपि **इच्छातः**=मुक्तस्येच्छानुरोधेन स्यात्। 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.7-15-2) इति इच्छाया अविघातस्य श्रवणात्, यथा वा परमात्मा इच्छया उभयविधोऽपि भवति, तद्वदेव मुक्तस्यापि सशरीरत्वमशरीरत्वं चेच्छानुरोधेन भवेत्। ननु इच्छा हि कस्यचिद्वस्तुनोऽभावे तत्प्राप्तये भवति। एवं सति मुक्तोऽपरिपूर्णः स्यादिति चेत्, उक्तमुत्तरम्—'यथा वा परमात्मा' इति। अवाप्त-समस्तकामस्यापि स्वार्थेच्छाभावेऽपि परार्थमिच्छायास्सत्वे, तस्यादोषत्वात्, प्रत्युत गुणत्वात्। एवमेव मुक्तात्मानोऽपि लोकहिताद्यर्थं ईश्वरस्य लीलायै वा समयविशेषे शरीरं स्वीकुर्युः। अतः उभयमपि सङ्गच्छत इति न श्रुतिद्वयविरोधः॥

ननु अशरीरश्रुतेः का गतिरित्यत्र—**परम्**=किन्तु **इह**=अस्यां मुक्त्यवस्थायाम् **देवोपमस्य**=परमात्मना सदृशस्य **तस्य**=मुक्तस्य **कर्मायत्तैः**=कर्मकृतशरीरादिभिः **वियोगः कथितः**=श्रुतिष्वभिहितः। अशरीरश्रुतेः पूर्वम् 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' (छां.8-12-1) इति सुखदुःखादिमत्त्वस्य सशरीरत्वनिबन्धनत्वाभिधानात्, तादृशस्य शरीरस्य मुक्तस्यानङ्गीकारात् न दोषः। तथा च 'मुक्तः दुःखी, सशरीरत्वात्' इति प्रयोगे, कर्मसंबन्धः उपाधिः ज्ञेयः। 'यत्र यत्र दुःखम्, तत्र सर्वत्र कर्मसंबन्धः' इति साध्यव्यापकत्वम्। 'यत्र यत्र सशरीरत्वम्,तत्र सर्वत्र कर्मसंबन्धो नास्ति', मुक्तात्मनि, परमात्मनि वा सशरीरत्वे सत्यपि, कर्मसंबन्धाभावात्। 'अजायमानो बहुधा विजायते' (तै.आ.3) 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामवष्टभ्य संभवाम्यात्ममायया॥' (गी.4-6) इत्यादिश्रुतिस्मृत्यादिभिः परमात्मनोऽपि जन्मनः प्रतिपादनात्। ननु 'आत्ममायया' इति तज्जन्मनो मायिकत्वाभिधानादवताराणां मिथ्यात्वसिद्ध्या तस्य कथं दृष्टान्तत्वमिति चेत्—

स्याद्वा मिथ्या भवन्माया सत्या वा, नाग्रहो हि नः। परात्मनस्तु तां मिथ्यां वक्तुं धाष्ट्यं कियत्तव॥

[मुक्तानां जगत्स्रष्टृत्वाद्यभावः]

133. **स्यान्मुक्तो विश्वदेही यदि भवति जगद्व्यापृतौ तस्य शक्तिः**
**स्वातन्त्र्यं क्वाप्यशक्तौ विगलति स च नः स स्वराडित्यधीतः।**
**धत्तेऽनुच्छेद्यसारा तदियमुभयतस्पाशतां तर्करज्जुः**
**मैवं देवस्तदिच्छां क्वचिदपि न विहन्त्येवमस्तु स्वराट् सः ॥ ६३ ॥**

'जन्म कर्म च मे दिव्यम्' इति तज्जन्म दिव्यमित्युच्यते । श्रीशङ्कराचार्यैरपि 'दिव्यम्= अप्राकृतम्' इत्येव विवरणात्, 'स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' (ब्र.सू.1-1-20) इति चाभिधानात्, 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (गी.4-11) इति भगवद्वचनात्, 'रूपं वातीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्' इति वाक्यकारवचनात्, 'अञ्जसैव विश्वसृजो रूपम्' 'न ह्यरूपाया देवताया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम्' इति वेदान्तसम्प्रदायमूर्धन्यद्रमिडाचार्यव्याख्यानाच्च परमात्मनो दिव्यं रूपं शास्त्रवित्संमतम् । यद्यपि सन्त्येवमेव रूपनिषेधपराण्यपि वचनानि बहूनि, अथाप्युक्तान्येव समाधानान्यपि 'न ह्यरूपाया रूपम्' इत्यादिना । मानवबुद्ध्या विरुद्धतया भासमानानि परमात्मनि समन्वयन्तीति महतामाशयः । अतो रूपम्, रूपाभावश्चोभयमपि न विरुद्धम् सर्वात्मके परमात्मनीति मन्तव्यम् । अत एवाहुः 'सत्त्वानीह विरुद्धजातिजनुषा सिद्धानि सिद्धाश्रमे वैरं यत्र मिथस्त्यजन्ति विधयस्सर्वैर्निषधैस्सह ।' (श.दू.52) इत्यादि वेदान्तगुरवः । 'दिव्यमप्राकृतम्' इति श्रीशङ्कराचार्ये वदति—

प्राहुः शिष्याः प्रशिष्याश्च सर्वं मिथ्येति धृष्णवः । अप्राकृतपदं मिथ्यावाचकं तु कथं भवेत्? ॥
अवतारादिकं सर्वं मिथ्येति वदतां बत! अवशिष्येत किं वात्र चिन्त्यतामाग्रहं विना ॥

अतः परमात्मनो गुणविग्रहविभूतयो नापह्नवमर्हन्त्यास्तिकानाम् । अधिकं समनन्तरसरे ॥ ६२ ॥

मुक्तात्मनां परमात्मवदेव यदि सशरीरत्वादिकं स्यात्, तर्हि तेषां तद्वदेव जगत्कारणत्वमपि स्यात् । ततश्च जगत्कारणत्वं ब्रह्मलक्षणं न स्यात् । अपि च जगत्कारणानि बहवो भवेयुरिति शङ्कायां, सूत्रकारैरेव 'जगद्व्यापारवर्जम्' (ब्र.सू.4-4-17) इति परमात्मसाम्यमानन्दप्रयुक्तम्, न तु जगत्कारणत्वं मुक्तात्मनामिति समाहितमनूद्य दर्शयति—**स्यादित्यादि**। **जगद्व्यापृतौ**=जगत्सृष्ट्यादिकार्ये **तस्य**=मुक्तात्मनः **शक्तिः**—सामर्थ्यम् **यदि भवति**, तदा **मुक्तः विश्वदेही**=परमात्मवदेव जगच्छरीरी सर्वान्तर्यामी स्यात् । सर्वान्तर्यामित्वं हि एकस्यैव भवेत्, बहूनां कथं सर्वान्तर्यामित्वसंभवः? । यदि जगच्छरीरित्वम्, तत्प्रयुक्तं जगत्कारणत्वम् च नास्ति चेत्, **क्वापि**=कुत्रचिद्विषये **अशक्तौ**=शक्त्यभावे **स्वातन्त्र्यम्**=**विगलति**=अपगच्छति । शक्तिस्तु वर्तते, अथापि न कदापि तथा करोतीति तु न युज्यते, कदापि किञ्चिदकुर्वतः तच्छक्तिसद्भावे प्रमाणाभावात् । अस्त्वेकस्मिन् विषये अशक्तिरिति चेत्; तदपि न युज्यते, **यतः—स च**=मुक्तश्च **नः**=वैदिकानामस्माकम् **'स स्वराट्' इति अधीतः**='स स्वराड्भवति' (छा.7-25-2) इति वेदेनैवाभिहितः । वैदिकानामस्माकं वेदोक्तं कथं त्यक्तुं शक्यम्? **तत्**=तस्मात्=परस्परविरोधात् **इयम्**= उक्तरूपा **अनुच्छेद्यसारा**=अत्यन्तं प्रबला **तर्करज्जुः**=तर्करूपा रज्जुः, **उभयतः पाशताम्**=कण्ठयोःपार्श्व-

द्वयेऽपि आकृष्यमाणा प्राणापायताम् **धत्ते**। उच्छेत्तुमप्यशक्या, अतिप्रबलत्वात्। अतः का गतिरिति चेत्, **मैवम्**=एवं न युज्यते। कुतः? देवः परमात्मा **क्वचिदपि**=कस्मिन्नपि **विषये तदिच्छाम्**=तस्य मुक्तस्य इच्छाम् **न विहन्ति**=न रुणद्धि। **एवम्**=इच्छाया अपघाताभावादेव **सः**=मुक्तः **स्वराट्**=उक्तश्रुत्या स्वतन्त्रः **अस्तु**। 'स स्वराट् भवति' (छां.7-2-2) इति मुक्तात्मनः निरङ्कुशं स्वातन्त्र्यं श्रूयते। अतः तस्य जगत्कारणत्वमप्यङ्गीकार्यमेव। नो चेत्, एतदपेक्षया जगत्कर्ता परमात्मैव सर्वशक्तः स्यात्, अस्य च तदधीनता स्यात्। तथा च कथं स्वराट्त्वमिति चेत्, मुक्तात्मापि सर्वशक्त एव। परं तु सर्वज्ञत्वस्यापि तस्य सत्त्वेन, स्पर्धासूयादिदुर्गुणानां लेशतोऽप्यभावाच्च, परमात्मन इच्छादिकं जानन् सः, स्वस्य जगत्स्रष्टृत्वं कदापि नेच्छति। अत इच्छाया विघातप्रसक्तिरेव नास्तीति कदापि न स्वातन्त्र्यच्युतिः॥

केचिद्विमर्शकम्मन्याः मन्यन्तो न्यूनतामिमाम्। दृढां सगुणवादेऽस्मिन्, निर्गुणं परमं विदुः॥
सगुणे निर्गुणे वापि वादेऽतिकलहो वृथा। पक्षद्वयेऽपि नात्यन्तवैषम्यं फलतो भवेत्॥

सगुणवादे हि मुक्तौ तारतम्यमनिवार्यम्। निर्गुणवादे महति वैषम्ये सत्यपि, कथमुभयोः फलत ऐक्यमिति चेत्; अस्तु तत्। इदं पृच्छामः—मुक्तौ तारतम्ये सति का हानिः? स्वर्गे तारतम्यसत्त्वात् निरतिशयपुरुषार्थता स्वर्गस्य यथा नास्ति, तथा मोक्षे तारतम्ये सति तस्य निरतिशयपुरुषार्थत्वाभावे वा का हानिः? सातिशयत्वे हि, उत्कृष्टस्वर्गिणं दृष्ट्वा; निकृष्टस्वर्गिणः दुःखमनिवार्यम्। ततः स्पर्धासूयादिकम्। ततः निरतिशयसुखलाभार्थं पुनर्जन्मस्वीकारादिकमवर्जनीयमिति, सांसारिकसुखतुल्यमेव स्यात् मोक्षसुखमपीति चेत्, निर्गुणवादिभिर्वा कथं सगुणमोक्षस्य मोक्षत्वमङ्गीक्रियते; तस्य स्वर्गतौल्यं कुतो नोच्यते। कथं चैषामपुनरावृत्तिः? अनावृत्तिसूत्रमपि सगुणविषयकमेव, निर्गुणमुक्तौ पुनरावृत्तिशङ्कैव नोदेतीत्युच्यते। तथा च को दोष इति चेत्—सत्यम्, शङ्काः सर्वा अपि, समाधानानि सर्वाण्यपि, यावत्पर्यन्तं त्रिपुटीप्रसक्तिः, तावत्पर्यन्तमेव। निर्गुणे त्रिपुट्याः अनङ्गीकारात् न शङ्का न समाधानञ्च। तर्हि विचारशास्त्रस्य कथं प्रवृत्तिः? कः संशयः? सगुणमधिकृत्यैव प्रवृत्तं वेदान्तविचारशास्त्रम्। ब्रह्मशब्दः सगुण एव मुख्यवृत्तः, प्रवृत्तिनिमित्तपूर्तेः, निर्गुणे तु औपचारिकः इति खलु तव मतम्। निर्गुणं तु ब्रह्म अवाच्यम्, अवेद्यं चेत्युच्यते। तदधिकृत्य विचारः कथं प्रवर्तते? इदमेवावेदयति निर्गुणसगुणभेदः केवलं कल्पित इति॥

सगुणं निर्गुणं चेति द्वयमेकं सतां मतम्। अवस्थाभेदमात्रं स्यादहिकुण्डलिनोरिव॥
देवदत्तस्स्वपन् गच्छन् एक एव मतस्सताम्। अनन्तरसरे त्वेतत् विस्तरेण विचार्यते॥

सारतस्तु श्रवणं वा, विचारो वा, साधनं वा सर्वं सविशेषविषयकमेव। प्राप्तिस्त्वत्यन्तविपुलेति तत्क्रतुविचारप्रकरणे न्यरूपि। अतः विचारशास्त्रदृष्ट्या मुक्तस्यैश्वर्यं जगद्व्यापारवर्जमेव। विचारस्य परमावधिरयमेव अन्यथा हि—

जगद्व्यापारमुख्यानां सूत्राणां गतिरुच्यताम्। सगुणब्रह्मविषयाण्येतानीति यदीष्यते॥
मिथ्यावस्त्वधिकृत्यैव सर्वं शास्त्रं समर्थितम्। यदि, ते को विशेषः स्यात्सर्वापह्नववादिनः॥
वर्जयामः पौनरुक्त्यं, यतस्सर्वं भविष्यति। अनन्तरसरे क्षोदक्षमं तावत्तु सह्यताम्॥ ६३॥

[भगवत्सेवा न दुःखहेतुः]

134. आविर्भूतस्वरूपा निरवधिकसुखब्रह्मभुक्तिस्तु मुक्तिः
सेवात्वात् दुःखकृत् सा भवति यदि, न तत् धर्मिमानेन बाधात्।
पाप्मा चास्मिन्नुपाधिः, स च न खलु तदा पुण्यपापव्यपायात्
आत्मानो विष्णुशेषा इति च सुखमयी सा स्वरूपानुरूप्यात्॥ ६४॥

एतत्सिद्धान्तसंमतमुक्तावन्यामनुपपत्तिमाशंक्य परिहरति—**आविर्भूतेत्यादि**। **आविर्भूतस्वरूपा**= स्वस्वरूपाविर्भावपूर्विका **निरवधिकसुखब्रह्मभुक्तिस्तु** निरतिशयानन्दब्रह्मानुभवः किल **मुक्तिः**=भवत्संमता मुक्तिः। **सा**=मुक्तिः **सेवात्वात्**=सेवारूपत्वात् **दुःखकृत्**=दुःखकारिणी, दुःखहेतुरिति यावत्, इत्यनुवादः दूषणाय कृतः। तथा च 'सेवारूपा मुक्तिः दुःखहेतुः, सेवात्वात्, लोके दृश्यमानसेवावत्' इत्यनुमानाकारोऽवगन्तव्यः। इति **यदि, तत् न**=नैतद्युक्तम्। कुतः? **धर्मिमानेन बाधात्**=धर्मिग्राहकप्रमाणविरोधात्। 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति' इति मुक्तेरानन्दस्वरूपब्रह्मप्राप्तिरूपताभिहिता। रस्यत इति रसः=**आनन्दः**=आनन्दस्वरूप इत्यर्थः। तादृशब्रह्मप्राप्तिः कथं दुःखकृद्भवेत्। तथा च मुक्तिस्वरूपप्रतिपादकं प्रमाणं यत् उक्तं श्रुतिरूपम्, तेन बाधात्, उक्तो हेतुः 'वह्निः अनुष्णः पदार्थत्वात्, जलवत्' इत्यनुमाने प्रयुक्ते, धर्मिणः वह्नेः ग्राहकं यत् प्रमाणम्=प्रत्यक्षरूपम्, तत् प्रमाणं वह्निं उष्णमेव गृह्णाति—इति यथा वह्निग्राहकप्रमाणबाधात् तदनुमानं प्रत्यक्षबाधितमुच्यते, तथा मुक्तिग्राहकप्रमाणेन मुक्तेरानन्दरूपत्वावगमात् धर्मिग्राहकश्रुतिविरोधः॥

यद्यपि तस्यां श्रुतौ मुक्तेस्सेवारूपत्वं नोच्यते, किन्तु स्वस्वरूपाविर्भाव एव; तथापि प्राप्यप्राप्तृभावस्य तत्राभिधानात्, प्राप्तुः जीवस्य प्राप्यात् ब्रह्मणो भिन्नत्वेन निर्देशात्, तयोश्शेषशेषिभावस्य सहजत्वात्, तयोर्भेदसिद्धौ, तादृशभेदस्य दुःखाहेतुत्वस्थापनाय सिद्धान्ते सहजसेवारूपत्वस्थापनात् 'सेवात्वात्' इति हेतुः प्रयुक्तः। श्रुत्यर्थस्य बहुभिर्बहुधा वर्णनादनिर्णयेन मुह्यन्तं प्रति कथ्यते—**अस्मिन्**=उक्ते प्रयोगे **पाप्मा**=पापसंबन्धः **उपाधिश्च भवति**। यत्र दुःखहेतुत्वम्, तत्र पापसंबन्ध इति साध्यव्यापकता। यत्र सेवात्वम्, तत्र सर्वत्र न पापसंबन्धः, यथा पक्षे इति पक्षान्तर्भावेण साधनाव्यापकता इति सोपाधिकोऽयं हेतुः। प्रकृते च—**स च**=पाप्मा च **तदा**=मुक्तौ **पुण्यपापव्यपायात्**=पुण्यपापयोर्नाशात् **न खलु**=नैव वर्तते। उपाध्यभावेन साध्याभावः=दुःखहेतुत्वाभावस्साध्यत इति सेवा न दुःखहेतुरिति भावः॥

ननु सेवायाः दुःखहेतुत्वं सर्वानुभवसिद्धम्। प्रत्यक्षविरुद्धमर्थं शास्त्रमपि न बोधयेत्, यूपादित्यश्रुतिवत्, इत्यत्राह—**आत्मान** इत्यादि। **आत्मानः**=जीवात्मानस्सर्वे **विष्णुशेषाः**=विष्णोःपरमात्मनः नित्यं शेषभूताः **इति च**='दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः' इत्यादिप्रमाणाच्च **सा**=सेवा **स्वरूपानुरूप्यात्**=जीवात्मस्वरूपानुगुणत्वात् **सुखमयी**=आनन्दमय्येव भवति। अतश्च सेवास्सर्वा अपि, न दुःखहेतवः, किन्तु स्वरूपविरुद्धा सेवैव। अन्यथा पतिव्रतायाः पतिसेवाऽपि दुःखहेतुर्भवेत्। ततश्च सेवात्वरूपो हेतुः

स्वसाध्यसाधनेऽप्रयोजकश्च। 'सेवात्वमस्तु, दुःखहेतुत्वं मास्तु' इत्यप्रयोजकशङ्कायाम्, तत्परिहाराय 'यदि दुःखहेतुर्न स्यात्, तर्हि सा सेवैव न स्यात्' इत्यनुकूलस्तर्को वक्तव्यः। स न वक्तुं शक्यते; पतिसेवायां सेवात्वस्य संमतत्वेन, दुःखहेतुत्वाभावस्य च संमतत्वात्। तथा चोक्ते तर्के आपाद्यस्य सेवात्वाभावस्य, आपादकस्य दुःखहेतुत्वाभावस्य च व्याप्तिर्नास्ति। सतीसेवादौ दुःखहेतुत्वाभावस्यैव सत्त्वेन, तत्र सेवात्वस्यैव सत्त्वात्। ततश्च तर्कस्याङ्गभूतेषु पञ्चसु (बु.60) आपाद्यापादकयोः व्याप्तिरूपस्यैकस्याङ्गस्याभावात्, अप्रयोजकशङ्कावारकतर्काभावात्, उक्तानुमानम् अप्रयोजकम्॥

**अयं भावः**—स्वातंत्र्यं वा पारतंत्र्यं वा स्वतः न सुखहेतुः, नापि दुःखहेतुः। अविवेकिनो हि स्वातंत्र्यमेव दुःखहेतुः। विवेकिनस्तु पारतन्त्र्यमपि सुखहेतुः—'तव दास्यसुखैकसङ्गिनाम्' इति खल्वनुसन्दधते महान्तः। एवं स्वातन्त्र्याभिमानिनः पारतन्त्र्यं दुःखहेतुः। पत्न्याः पतिपारतंत्र्यम्, शिष्यस्य गुरुपारतंत्र्यम् च गुणः, स्वातंत्र्यमेव तत्र दोषः। अतः तत्तद्वस्तुस्वरूपानुगुणमेव गुणदोषनिर्णयः कार्यः। जीवपरमात्मनोस्संबन्धस्य मधुरभक्तौ पर्यवसानस्यापि निरूपितत्वात् जीवात्मानस्सर्वे परमात्मनश्शेषभूताः। अत एव रुद्रकृतमन्त्रराजस्तोत्रे 'दासभूताः स्वतस्सर्वे ह्यात्मानः परमात्मनः। अतोऽहमपि ते दासः इति मत्वा नमाम्यहम्॥' इति दासत्वस्य 'स्वतः' इत्यनेन सहजत्वाभिधानात्, स्वरूपाविर्भावस्यैव मुक्तित्वाददोषत्वम्। 'तव दास्यसुखैकसङ्गिनाम्' (स्तो.2) इत्यादौ हि तादृशं दास्यं सुखेनैव व्याप्तमित्यादिकमपि द्रष्टव्यम्।

ननु भोः! क्विमिदं सर्वं पौराणिकमभूत्तव। रोचते तत्तु बालेभ्यः न प्रौढेभ्यः कदाचन॥
वेदान्ता न हि कुत्रापि दासभावं वदन्ति च। स्वाराज्यमेव मुक्तिं ते शतशो घोषयन्त्यहो॥
'न ऋते श्रान्तस्य सख्याय देवाः' इत्याद्यधीतं न हि वैदिकैस्तैः।
वदन्तु कामं बहुधा हिरण्यकशीपुवंशप्रभवा अमी जनाः॥
'देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयःपरमवाप्स्यथ॥'
इत्याह भगवानेव सृष्टिविज्ञानमद्भुतम्। देवताद्वारिका सृष्टिः श्रुत्यैव समुदीरिता॥
व्याकरवाणि जीवेनानेनेति किल कण्ठतः। मानवानां न चास्त्यन्या गतिः स्वक्षेमलब्धये॥
ईश्वरांशेन संभूता ये तेषां सृतिरन्यथा। अपवादस्वरूपा तत् नैव स्मर्तुं क्षमाः परे॥
ब्रह्मांशभूतो जीव इत्युक्तं चेत्, गर्दभा अपि। ब्रह्मांशाः स्मर्यतां नार्धजरती युज्यते तव॥
स्वस्वरूपज्ञानशून्याः मानयेयुर्न चेदिदम्। स्वयं नष्टाः तामसास्ते नाशयेयुः परानपि॥
स्वतन्त्रपरतन्त्रादिशब्दान् यावत्प्रयुञ्जते। तावद्धि तत्त्वमेतावदेव वक्तुं क्षमं सताम्॥
तदूर्ध्वं नैव शब्दः स्याद्विचारो वा कथं भवेत्? वृथा जल्पनमात्रं स्यात्पुरुषार्थस्तदा तव॥
'कलकण्ठगणास्वाद्ये कामस्यास्त्रे निजाङ्कुरे। निम्बवृत्तिभिरुद्गीर्णे न चूतः परितप्यते॥'
इत्युक्तन्याय एवात्र स्मर्तव्यः साधुभिस्सदा। अलाभात्तादृशगुरोर्न जानन्ति हितं बत!॥
तेऽनुकम्प्यास्तु साधूनां मूढा उज्झितसत्पथाः। अलमेतादृशैस्साकमालापैःपापहेतुभिः॥

अतश्च स्वरूपविरुद्धसेवैव दुःखहेतुः, न स्वरूपानुरूपेति सुष्ठूक्तम्॥

[मुक्तस्य सर्वमनुकूलम्]

135. सर्वस्याप्यानुकूल्यं स्वत इह जगतो वासुदेवात्मकस्य
व्यक्तिं तन्मुक्तिकाले भजति भवकृतज्ञानसङ्कोचहानेः ।

अयि भोः दास्यसुखरसिकः! इदमत्र समाधीयताम् । स्वरूपाविर्भावो मोक्ष इत्युच्यते । सहैव निरवधिकानन्दब्रह्मानुभवो मुक्तिरित्यप्युच्यते । सहैव च सेवारूपेति चोच्यते । एभिस्सह 'स स्वराड्भवति' इति स्वातन्त्र्यमप्यङ्गीक्रियते । किमियं विलक्षणसर्वमिश्रणरूपा मुक्तिर्भवताम्? इति चेत्; सत्यम् । किं कुर्मो वयम्? ये तु स्वबुद्धिकौशलेन तर्कबलात्परमपुरुषार्थं कल्पयित्वा सन्तुष्यन्ति, न तथा वैदिका वयं कल्पयितुं प्रभवामः । श्रुतिर्यथा वक्ति, तथाऽङ्गीकुर्मः । स्वरूपाविर्भावो हि मोक्षः । स च 'संपद्यते' इति परमात्मसंपत्त्या भवति । स्वरूपं च जीवस्य परमात्मशेषतैकरूपम् । त्वं तु 'यद्यपि भेदापगमे साम्ब! तावकीनोऽहम् । न मामकीनस्त्वम्' इति भवद्गुरुवचनरहस्यमपि न जानीषे । वयं तु जानीमः । अत एवं सर्वार्थगर्भं पुरुषार्थं वदामः । अत एव 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्रमपि विवृतम् । राजकुमारन्यायेनैव ब्रह्मप्राप्तेः प्रतिपादनात्, सर्वं तेन व्याख्यातम् । शिष्टमनुपदं भविष्यति ॥ ६४ ॥

एतत्सिद्धान्ते मुक्तिविषयेऽन्यामप्याशङ्कां परिहरति— **सर्वस्येत्यादिना**। मुक्तौ खलु ज्ञानं सर्वविषयमित्युक्तम् । तर्हि अस्मिन् जगति यद्यदस्ति, तत्सर्वमपि ते जानीयुरेव । इदं हि जगत् सुखदुःखमोहात्मकम्, त्रिगुणकार्यत्वात् । तदेतत्पश्यन्तो मुक्ताः स्वयमपि सुखदुःखमोहग्रस्ता भवेयुः । जानन्तोऽपि यद्युदासीनाः, तर्हि नृशंसा भवेयुः, अथवा सार्वात्म्यज्ञानशून्या भवेयुः । अतः आनन्दमयब्रह्मज्ञानेन यथानन्दी भवतीत्युच्यते, तथा दुःखादिदर्शनेन दुःखिनोऽपि भवेयुः । दुःखं यदि न जानीयुः, तर्हि सर्वज्ञत्वहानिः। दुःखमपि यदि सुखं जानीयुः, तर्हि अन्यथाज्ञानान्न ते मुक्ता भवेयुरिति 'उभयतः पाशा रज्जुः' इति चेत्— **वासुदेवात्मकस्य** सर्वस्यापि जगतः **इहापि**=संसारेऽपि आनुकूल्यमेव **स्वतः**=सहजः । तदेतदानुकुल्यम् सहजम् **मुक्तिकाले भवकृतज्ञानसङ्कोचहानेः**=कर्मकृतज्ञानसङ्कोचस्य संपूर्णतया निवृत्तेः **व्यक्तिम्**=अभिव्यक्तिं **भजति**= प्राप्नोति । वस्तुषु प्रतिकूलत्वज्ञानात् दुःखम्, अनुकूलत्वज्ञानाच्च सुखं भवतीति सर्वसंमतम्, अनुभवसिद्धञ्च । जगदिदं सर्वं ब्रह्मात्मकमिति 'सर्वं खल्विदं ब्रह्म' (छा.3-14-1) 'इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥' (म.भा.अनु.सहस्रनामाध्यायः) इत्यादिप्रमाणसिद्धम् । संसारदशायां कर्मणा ज्ञानस्य सङ्कुचितत्वात् जगदिदं ब्रह्मात्मकं न पश्यति, अत एव दुःखमनुभवति । मुक्तौ तु कर्मणां निश्शेषनिवृत्त्या जगत्सर्वं ब्रह्मात्मकं पश्यतः प्रातिकुल्यज्ञानस्यैवाभावात् न दुःखप्रसक्तिः । प्रत्युतानुकूल्यज्ञानस्यैव सहजत्वात्सुखमेव भवति । अतो न दुःखलेशप्रसक्तिः ॥

ननु जगतःस्सुखदुःखमोहात्मकत्वं सर्वसंमतम् । प्रकृतिपरिणामस्वरूपं किलेदं जगत् । यदि सुखरूपतैव सहजा, दुःखस्वरूपत्वमौपाधिकमिति, तर्हि 'सर्वं दुःखम्' इति वदतो बौद्धस्य विप्रतिरूपं रूपान्तरमिति जगतस्सुखदुःखमोहात्मता त्यक्ता स्यादिति चेत्; अनुकूलत्वप्रतिकूलत्वे ह्यापेक्षिके इति संप्रतिपन्नम् । मुक्तो हि त्रिगुणातीतः, अलौकिकश्च । अत एव मुमुक्षुरपि लोकातीत इव । अत एव

**प्राचीनप्रातिकूल्यक्रमविषयधिया नैष दुःख्येत् तदानीं**
**प्रागप्येतत् स्वकर्मोपधिकृतभगवन्निग्रहैकप्रयुक्तम् ।। ६५ ।।**

'सर्वमेव दुःखं विवेकिनः' (यो.सू.2-15) इति सूत्रेऽपि एवकारोऽयोगव्यवच्छेदे, न त्वन्ययोगव्यवच्छेदे । अतश्च जगतस्सुखदुःखमोहात्मकत्वं नापलपामः। परन्तु सर्वान्प्रति सर्वं नैकरूपम् । एवं सति मुक्तः यदि जगत्सर्वमनुकूलतया पश्यति, तर्हि मुक्तस्यापि भ्रान्तिरवर्जनीयेत्यापततीति चेत्, न । जगतस्सुखदुःखमोहात्मकत्वमपि संसारिजीवदृष्ट्यैव, न तु मुक्तदृष्ट्या । अन्यथा हि उक्तरीत्या सर्वज्ञस्य परमात्मनोऽपि दुःखमनिवार्यं स्यात् । सुखदुःखादीनां हि कर्ममूलकत्वमेव सर्वसंमतम् । अतो न मुक्तानां दुःखप्रसक्तिः ।।

नन्वेवमपि मुक्ता अपीदानीम्, पूर्वं बद्धाः किलाभूवन्नेते । तदा तैर्नरकादि दुःखमप्यनुभूतं स्यात्किल । तदिदं ते मुक्त्यवस्थायां जानीयुर्न वा । यदि न जानीयुः, तर्हि सर्वज्ञत्वं न स्यात् । यदि जानीयुः, पूर्वानुभूतदुःखज्ञानात् दुःखमवर्जनीयम् । यदि तदप्यनुकूलं जानीयुः, तर्ह्यन्यथाज्ञानमवर्जनीयम् । अतः कस्समाधिरिति चेत्, तत्राह—**प्राचीनेत्यादि**। **प्राचीनः** यः **प्रातिकूल्यस्य क्रमः**=रीतिः **तद्विषयया धिया**=ज्ञानेन=पूर्वं यादृशरीत्या इदं जगत् दुःखहेतुरभूत्, सा रीतिः नेदानीं परिवर्तयितुं शक्या, गतत्वादेव । तादृशज्ञानमिदानीमपि स्मर्येत किल मुक्तौ, तादृशेन ज्ञानेन **एषः**=मुक्तः **तदानीम्**=मुक्तिकाले **न दुःख्येत्**=न दुःखी भवेत् । कुतो न दुःख्येदित्यत्र—**प्रागपि**=पूर्वमपि **एतत्**=यादृशरीत्या दुःखहेतुत्वम्, तद्रीत्यादिकमपि; **स्वकर्मोपधिकृतभगवन्निग्रहैकप्रयुक्तम्**=स्वस्य यत् कर्म=पापमभूत्, तादृशोपाधिना कृतः यो भगवन्निग्रहः, तेनैवैकेन प्रयुक्तम् । **'एतत्'** इति विशेष्यम् । मुक्ताः खलु सर्वज्ञाः । अतस्ते इदमपि जानन्त्येव, यत् दुःखहेतुरभूत्, तस्य दुःखहेतुत्वं न तद्वस्तुस्वरूपप्रयुक्तम्, किन्तु स्वकृतपापमूलकभगवन्निग्रहप्रयुक्तमित्येतदपि जानन्त्येव । मुक्तौ तु तादृशनिग्रहादीनामभावात्, तद्ज्ञाने सत्यपि तेन दुःखं न भवति । पित्तदोषवशात् पूर्वमनुभूतं क्षीरे तिक्तरसम्, पित्तनिवृत्त्यनन्तरं जानन्तो हि विवेकिनः—'आः! पूर्वमेतत् एतादृशदोषमूलम्' इति स्मरन्तः पुनस्तिक्तरसमनुभवेयुः किम्? अतस्तेषां सर्वज्ञत्वमेव सर्वविधदुःखनिवृत्त्यौषधं भवतीति मुक्तानां न कदापि दुःखप्रसक्तिः । वस्तुतस्त्विदं सर्वं मुक्तिस्वरूपस्येदानीं परिचयाभावात्, केवलबुद्धिकृतकल्पनाजालमात्रम्, 'न बुद्धिभेदं जनयेत्' इति न्यायेन मुग्धानां कृत इति मन्तव्यम् ।।

जानीयुर्वास्तवं तत्त्वं तेऽमी कुशलबुद्धयः । ये तु भाग्यवशप्राप्तगुरुसेवादिवैभवाः ।।

अतो स्वहितेप्सुभिरेतादृशकाकदन्तपरीक्षादिभ्यो दूरे वर्तितव्यम्, मृदुमतिभिस्तु सुतराम् । धीरैस्तु केवलमङ्गलस्मरणेन साधनपरायणैर्भवितव्यम् ।।

य एते हैतुकैर्वादैः पूर्वमेव प्रतारिताः । तेषां कृते तु सत्तर्काः, न तु भक्तजनान् प्रति ।।
यथा भक्तपराधीनो भगवान् सहतेऽखिलम् । तथैव मुग्धशिष्येषु वत्सला गुरवोऽप्यमी ।।

**इदमत्राहत्य विचारयामः — स्वस्वरूपाविर्भाव** एव मुक्तिरिति 'संपद्याविर्भावः' (ब्र.सू.4-1-1) इत्यत्राभिहितः इति सर्वसंमतम्। परं त्वत्र संपत्तिशब्दार्थः कीदृश इति किं जानासि? सुषुप्तिमूर्च्छामरणादयोऽपि ब्रह्मसंपत्तिरूपा एव, सर्वत्र संपद्य, संपद्यते इत्यादिपदमेव श्रूयते। यद्यपि ब्रह्मसंपत्तिस्तास्वप्यस्ति, किन्तु लये तारतम्यं वर्तत एव। अतस्तासां मुक्तिरूपत्वं नास्ति। तदपेक्षया विलक्षणो देशविशेषावच्छेदेन जायमानो लय एव पूर्णमुक्तिः इति जानीमः। परं तु देशविशेषपदस्यापि सूक्ष्मोऽर्थो वर्तत एवेति कति जना जानन्ति? अत्रैव वर्तते महान् सूक्ष्मोऽर्थः। मरणस्यापि संपत्तिरूपत्वेऽपि, कर्मणां संपूर्णक्षयाभावान्न तेषां मुक्तित्वमितिवत्, पौराणिकप्रक्रियया विरजानदीतरण एव सर्वबन्धक्षयेऽपि न पूर्णा मुक्तिः, किन्तु पर्यङ्कारोहणानन्तरमेवेति 'तदापीतेस्संसारव्यपदेशात्' (ब्र.सू.4-2-8) इत्यत्र **श्रीभाष्ये** देशविशेषपदेन सूच्यत इति किं जानासि? एतदवस्थायामन्योऽपि कश्चन क्लेशः। शरीरत्यागकाल एव सर्वकर्मक्षयेऽपि विरजानदीतरणानन्तरमेव प्रकृतिसंबन्धलयः, यतस्तदानीमेवाप्राकृतमानवकरस्पर्शात् तन्निवृत्तिरिति वदन्ति। एवं सर्वबन्धक्षयेऽपि पर्यङ्कारोहणात्पूर्वकाले संपूर्णमुक्तिर्नास्ति चेत्, तदानीन्तनावस्थानां नाम किम्? मुक्तिरित्येवेति चेत्, तर्हि पर्यङ्कारोहणापेक्षा किमर्था? मुक्तिरेव, परं तु पर्यङ्कारोहणादेव संपूर्णा इति चेत्, तर्हि मुक्तावपि किम् अवस्थाभेदास्सन्ति?

वेदार्थसंग्रहे हि परमपदशब्दः देशविशेषस्य, दिव्यात्मस्वरूपस्य, परमात्मनश्च साधारण इत्यभिहितम्। वैकुण्ठपदमपि तादृशमेव। सहस्रनामसु तत्पदं दृश्यते। यस्य गतिर्न कुण्ठिता स वैकुण्ठः॥

शब्दश्रवणमात्रेण सन्तोष्टव्यं कदापि न। अन्नश्रवणमात्रेण बुभुक्षा किं निवर्तते॥

मोक्षोऽपि लयपदार्थेऽन्तर्भवतीति सर्वसंमतम्। लयपदं हि सुषुप्तेरारभ्य मोक्षपर्यन्तं प्रयुज्यते। अतश्च लयो बहुविधः। एतेषां परस्परतारतम्यमतिदुर्ग्रहम्। शरीरत्यागरूपमरणमपि गाढलय एव। मुक्तिकालिकस्थितिरपि लयविशेषरूपैव। तत्रापि स्वरूपाविर्भावः कीदृशः स्यात्? शरीरादुत्क्रान्तिवेलायामेव सर्वकर्मणां क्षयः, अथापि न स्वरूपाविर्भावस्तदैव। किन्तु विरजानद्यतिक्रमणम्, पर्यङ्कारोहणम् इति क्रमो वर्ण्यते, शरीरादुत्क्रान्तेरारभ्य विरजानदीतरणपर्यन्ता एका स्थितिः। ततः पर्यङ्कारोहणपर्यन्तमन्यादृशी स्थितिः। एवञ्च लयपदार्थः कियान् दुर्ग्रहो जातः? तर्हि मुक्तावपि किं पर्वभेदास्सन्ति?

किं कुर्मः श्रीभाष्यकारा एवान्वगृह्णंस्तथेति चेत्, अहमल्पप्रज्ञः किं कुर्याम्? सर्वेऽपि वयमल्पप्रज्ञा एव। अथापि समये सर्वज्ञा इव कियद्वदामः। अथापि किञ्चिद्वदामि तदनुग्रहात्। प्रथममिदमवधीयताम्— पर्यङ्कविद्या श्रुतिसिद्धा श्रीशङ्कराचार्यसंमता च। सत्यम्। अपरविद्याफलं तदिति चेत्॥

ज्ञायतां प्रथमं स्वात्मस्वरूपमितरत्ततः। किमभाषन्त ते स्वैरम्? ब्रूयाः स्पष्टं विना भयम्॥
अत्रैव पतिता यूयमहङ्काराद्भ्रमान्धसि। सुलभा सापि मुक्तिः किं त्वद्दृष्ट्यैव विचिन्त्यताम्॥

न स्वैरमुच्यते। 'तदापीतेः' इति सूत्रणात्तथोक्तमिति चेत्, अपीतिः लयः। आ अपीतिः=आपीतिरिति खलु समासः। आ इत्यभिव्याप्तिः=अभितो व्याप्तिः। ततश्च संपूर्णलय इति लयेऽपि तारतम्यमस्त्येव।

तारतम्यमिति नार्थः । यतो अन्येन मुक्तेन साकमेव तारतम्यं चिन्तनीयम् । तत्तु नास्त्येवेति चेत्, तर्हि सोपानभेदाः, दशाभेदा वा स्युरेव । अतश्च लयोऽपि न सकृदित्यवगम्यताम् । देशविशेषापेक्षा किमर्थेति तर्हि 'तमसः परस्तात्' इत्यादौ दिग्देशकालेष्वस्तादेर्दर्शनात् देशविशेषकालविशेषापेक्षाऽनिवार्या चेत्, कीदृशो देशः? कीदृशः कालः? इत्यप्युच्यताम् । तदेवोच्यते पर्यङ्कारोहणकाल इतीति चेत्—

पुराणप्रक्रियां त्यक्त्वा तथा सङ्केतभीरूताम् । सत्यैकनिष्ठस्सन् ब्रूहि गूढमन्तर्गतं रहः ॥
संकेतभीतिरहितं मुमुक्षुं वर्णयत्ययम् (स.त्र.सा) । आचार्यसिंहः कियता धैर्येणेदं स उक्तवान् ॥
किं ब्रूयास्त्वं वत्स! साधो! संकेतात् बिभ्यसे कथम् । कष्टं जानामि ते वत्स! नैव त्वां पीडयाम्यहम्॥
पश्यन्त्वमत्सराः सर्वेऽप्यध्यात्मं कियदद्भुतम् । कियद्वा सुन्दरं सूक्ष्मं कियद्वा गहनं तथा ॥
आ अपीतिरापीतिः इति चेद्विग्रहो मतः । कति आ योजनीयं स्यात्, किं ज्ञातुं शक्यते वद ॥
शत'आ'योजनेप्येतत् आपीतिरिति तत्पदम् । तथैव स्यादेकरूपं कथं वाऽर्थस्य निर्णयः ॥
परापरब्रह्मभेदो विद्याभेदोऽथवा ततः । बौद्धोपच्छन्दनायैव केषाञ्चिदिति गृह्यताम् ॥
भयादशक्त्या संकेतादात्मवञ्चनयापि वा । नोदासितव्यः स्वात्मा हि सर्वेषां स्वहितेप्सुनाम् ॥
स एव खलु जानीयात् सर्वज्ञः पुरुषोत्तमः । तमृतेऽन्यो न कोऽप्यस्ति धीरःकश्चित्पुमानिह ॥
कथं चिदूहितुं शक्यमतिसूक्ष्ममनीषिभिः । दृष्टान्तद्वारतः किञ्चित्पश्यामस्तमिहाद्भुतम् ॥

तथाहि— 'यथा नद्यःस्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥' (मुं.3-2-8) इति हि भगवती श्रुतिः । नदी यत्र समुद्रेण मिलति, तत् नदीमुखमुच्यते । 'जीवन्मुक्ति'पदानङ्गीकारेऽपि विषयदृष्ट्या साऽवस्थाङ्गीक्रियत एव । 'मुक्ता इवात्र मुनयः' (श.दू.31) इति वेदान्तसिंहस्य वचनमत्र द्रष्टव्यम् । नद्याः लवणसमुद्रे लये लवणरसव्याप्तिर्नद्यां किञ्चिद्दूरपर्यन्तवत्, मुक्तस्यामृतसागरे लयेऽप्यमृतत्वव्याप्तिरपि जीवे पूर्वमेव तथैव भवेत् । अत एव 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' इत्यमृतत्वमत्रापि वक्ति । अत्रापि प्रतिपदं सूक्ष्मं तारतम्यं वर्तत एवेत्यवगन्तव्यम् । एवमेव सागरं प्रविष्टाया अपि महानद्याः न सकृत्संपूर्णलयो भवेत्, क्रमेणैव संपूर्णलावण्य-प्राप्तिः । अत एव 'योऽकामो निष्काम आप्तकाम आत्मकामः' (बृ.6-4-6) इति बहूनि पदानि योज्यन्ते॥

अत एव घटाकाशदृष्टान्तः, घटानाशो तदाकाशलय इत्यादिकं कल्पनामात्रम् ॥
इतोऽपि बहु वक्तव्यं न लभ्येरन् पदानि हि । मूकेन भवितव्यं स्यादतोऽलमियदेव हि ॥
ततश्च कति वाऽऽपीतेराकारान् योजयिष्यसि । भवानेव प्रमाणं स्यात् नाहं शक्नोमि कीर्तितुम् ॥
एतेन सर्वे व्याख्याताः शेषमप्यूह्यतां स्वतः । घटाकाशादिदृष्टान्तोऽतिस्थूलो नात्र युज्यते ॥
सबन्धोऽत्यन्तगाढो हि स्याच्छरीरशरीरिणोः । ओतप्रोतौ हि तौ प्रक्तावविनाभावरूपतः ॥
अन्यदप्यत्र वक्ष्यामि शक्यं चेद्वत्स! चिन्तय । मनुष्याणां सहस्रेष्वित्याद्यं हि भगवद्वचः ॥
व्याख्यानं तस्य भगवद्रामानुजमुनीरितम् । वाक्यत्रयात्मकं तच्च कुत इत्यपि चिन्त्यताम् ॥
वाक्यं तृतीयं गहनं कियद्वेत्यपि चिन्त्यताम् । को वा ज्ञातुं हि प्रभवत्येतत्तत्त्वं समग्रतः ॥

[नित्यसूरिसद्भावः]

136. अन्ये चानादिशुद्धाः श्रुतिसमधिगताः सूरयः सन्त्यसङ्ख्याः
कर्माभावादनादेर्न तु भवति कदाऽप्येषु संसारबन्धः ।

वृथा पङ्क्तीः पठित्वा च चर्चाः कृत्वार्थवञ्चिताः । को लाभो लब्ध एतावत्कालेनेति विचिन्त्यताम् ॥
कियद्गहनता पश्य, 'तत्त्वतः' पदकीर्तने । तथैव चा'पीति'पदे गांभीर्यं पश्य भीकरम् ॥
प्रपत्तिः स्यादेक एवोपायः सर्वशरीरिणाम् । सापि वा स्यात्कथं न्वेषामहङ्कारार्दितात्मनाम् ॥
असिधाराव्रतं ह्येषा ब्रह्मास्त्रं वा भयावहम् । ततोऽपि वाऽतिगहनमध्यात्मं नैव संशयः ॥
पण्डितान् प्रार्थये सर्वान् द्रष्टुं पण्डितलक्षणम् । 'यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः ॥
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥' इत्याह भगवान् व्यक्तं सर्वेषां हितचिन्तया ॥
यावद्द्रुतं जाग्रति ते तावत् क्षेमो भविष्यति । तेषां चापीतरेषां च नूनं नैवात्र सशयः ॥
लक्ष्मणार्यस्य हृदयं ज्ञायतां तत्कृपाबलात् । तस्याचार्यस्य हृदयं दभ्रमेवात्र दर्शितम् ॥
समये विस्तरेणैतद्दर्शयिष्ये यथामति । यदीच्छति स आचार्यः समयोऽथ निरीक्ष्यताम् ॥
किन्तु भारो महानस्ति पण्डितानां विशेषतः । तेऽप्यात्मवञ्चकाः स्युश्चेत् का गतिर्हा! दयानिधे! ॥
उद्धरास्मान्, स्वशक्त्यैव वात्सल्यात् भक्तवत्सल! न जानीमो गतिं चान्यां त्वामृते करुणानिधे! ॥

**अत्यन्तमवधेयोऽयं** विषयः— 'संपद्याविर्भावः' इति परमात्मसंपत्त्या स्वस्वरूपाविर्भावोऽभिहितः । स च किंरूप इति प्रश्ने अविभागेन दृष्टत्वाधिकरणे 'अहं ब्रह्मास्मि' इत्यनुभवरूपः इति च निर्णीतम् । इयमेवान्तिमावस्था परिपूर्णविकासरूपा । ब्रह्मसंपत्तेः सुषुप्तिमरणादौ सत्त्वेऽपि सा संपत्तिरसंबोधत्वरूपा; अत एव कर्मशेषस्य सत्त्वात्, पुनरावृत्तिरनिवार्या । मुक्तौ त्वनावृत्तिः प्रतिपाद्यते । एवं सति संकल्पाद्यधिकरणानां प्रसक्तिः का? 'अनावृत्तिश्शब्दात्' इति सूत्रेणैव शास्त्रं समापनीयमासीत् । प्रलये जीवानामचिदविशेषस्थित्या एतद्दशाया अपुरुषार्थत्वात्, पुरुषार्थसाधकशरीरदानाय सृष्ट्यादिकमावश्यकम् । मुक्तेस्तु निरतिशयानन्दरूपत्वात्, अवाप्तसमस्तकामस्य, तस्याप्तव्यं किमस्ति? एवं सति 'स यदि पितृलोककामो भवति..... स्त्रीलोककामो भवति' इत्यादीनां प्रसक्तिः का? लीलारूपमेव सर्वमिति चेत्, जगत्सृष्टेरेव लीलारूपत्वं वर्ण्यते, न तु मुक्तेः । किञ्च तत्रोपरि स्त्र्यन्नपानादिकामा अपि प्रतिपाद्यन्ते । कथं निर्वाहः? मुण्डकेऽपि 'यं यं लोकं मनसा संविभाति' । (मुं.3-1-10) इत्यादिवैभवमात्मज्ञानां श्रूयते । कथमेषां निर्वाहः?

कियद्वा कष्टमध्यात्मं गाढं पश्यन्त्वमत्सराः । कियत्यो वा समस्याः स्युः किमेषां स्यात्सदुत्तरम् ॥
सविशेषब्रह्मवादे सर्वं संगच्छते त्विदम् । नान्यस्मिन्निति सत्सङ्गात् ज्ञायतां सत्यमद्भुतम् ॥
शब्दं तु दूरतस्त्यक्त्वा शक्नुमो यदि चिन्तितुम् । तं सर्वसाक्षिणं साक्षीकृत्य त्वन्विष्यतां रहः॥ ६५ ॥

बद्धमुक्तनित्यरूपवर्गत्रयविभक्तेषु जीवेषु 'कर्माविद्यादिचक्रे' (श्लो.25) इत्यादिना बद्धान्, 'बुद्धेर्योऽसौ विकासः' इत्यादिना मुक्तांश्च निरूप्य, नित्यान् निरूपयति—**अन्ये चेत्यादिना। अन्ये**=उक्तेभ्यो

**शेषाणां शेषिणश्च स्फुरति सुखतया सर्वदा सर्वतत्त्वे**
**नित्यानां मुक्तिभाजामपि भुवनकृता भोगमात्रं समानम् ॥ ६६ ॥**

बद्धमुक्तेभ्यो विलक्षणाः केचित् **अनादिशुद्धाः**=अनादिकालादेव संसारबन्धरहिताः **असंख्याः सूरयः च**=सूरिपदवाच्याश्च जीवाः **श्रुतिसमधिगताः**—'तद्विष्णोःपरमं पदं सदा पश्यन्ति सूरयः' (ऋक्सं.1-22-20), (यजुस्सं.1-1-11) इत्यादिश्रुतिषु 'सदा पश्यन्ति' इत्यनेन सर्वेष्वपि कालेषु भगवदनुभवकथनात् **सन्ति**। ते **सूरयः**=नित्यसूरयः इत्युच्यन्ते। सदैव भगवत्सेवायां निरतत्वात् ते अनन्तगरुडविष्वक्सेनादयः कदापि संसारबन्धरहिताः, अनादिकालादेव शुद्धा आत्मानः। तेऽपि जीवान्तर्भूताः किल। कथं संसारबन्धः कदापि न स्यादित्यत्र—**अनादेरेव** कालात् **कर्माभावात्**=कर्मसंबन्धाभावादेव **एषु**=नित्यसूरिषु **कदापि संसारबन्धः न तु भवति**=नैव भवति। जीवत्वं न बन्धहेतुः। तदा हि मुक्तानामपि जीवत्वात् बन्धप्रसङ्गः। किन्तु कर्मैव बन्धहेतुः। तच्च मुक्तेषु पूर्वमासीत्, नित्येषु तु कदापि नासीत् इति विशेषः ॥ **पाशुपतास्तु** अनादिमुक्तः शिव एक एव। इतरे तु सादिमुक्ता एव। अथापि मुक्तात्मनां जीवत्वनिवृत्तिपूर्वक शिवत्वप्राप्त्या तेषां कर्मसंबन्धो न भवति। तथोक्तं भोजराजेन—'मुक्तात्मानोऽपि शिवाः किन्त्वेते तत्प्रसादतो मुक्ताः। सोऽनादिमुक्त एकः' (त.प्र.6) इति। अतः परमात्मा एक एवानादिमुक्तः नेतरे। एवं मुक्तानां शिवत्वप्राप्त्या परमसाम्यापत्तिरिति चेत्; तन्निराकरोति—**शेषाणामित्यादिना**। **शेषाणाम्**=परमात्मनश्शेषभूतानां जीवानाम् **शेषिणः**=परमात्मनश्च **सर्वतत्त्वे**=सर्ववस्तूनां यथावस्थितरूपे **सर्वदा**=सर्वस्मिन्नपि काले **सुखतया**=अनुकूलतयैव **स्फुरति**=प्रतीयमाने सति **नित्यानाम्**=नित्यसूरीणाम् **मुक्तिभाजामपि**=मुक्तात्मनामपि **भुवनकृता**=जगत्स्रष्ट्रा परमात्मना **भोगमात्रम्**=आनन्दमात्रम् **समानम्** न तु ब्रह्मत्वेनापि साम्यम्। यदि 'परमं साम्यमुपैति' (मु.3-1-3) इति श्रुत्या ब्रह्मत्वेनापि साम्यं वक्तव्यम्, तर्हि जगत्कारणत्वमप्यावश्यकम्। तथा च 'जगद्व्यापारवर्जम्' (ब्र.सू.4-4-17) इति व्यासाशयविरोधः। अतः 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र.सू.4-4-2) इति आनन्दसाम्यमात्रस्यैव व्याससंमततया, शिवत्वप्राप्तिर्वा, ब्रह्मत्वप्राप्तिर्वा मुक्तात्मनां न संभवति। एवमेषामनेकत्वमपि 'पश्यन्ति' इति बहुवचनेन सिद्धम् ॥

ननु शैवानां कस्समाधिः? 'किन्त्वेते तत्प्रसादतो मुक्ताः' इति तद्वचनेनैव स्वयं समाहितास्ते। शिवप्रसादाधीनत्वे तेषां शिवत्वमौपचारिकं केवलं स्यात्। न च 'जीव' पदस्य प्राणाधीनस्थितिकवाचित्वात् मुक्तौ सिद्धान्तेऽपि मुक्तानां नित्यानां च प्राणाधीनस्थितिकत्वाभावात् कथं जीवपदप्रयोगस्तेषामिति शंक्यम्, धातुमूलकत्वकथनमात्रेण जीवपदस्य यौगिकत्वस्य योगरूढत्वस्य वानङ्गीकारात्। अन्यथा गवादिपदान्यपि रूढानि न स्युः। अतो जीवपदं रूढमेवेति, यावद्ब्रह्मभेद ईषद्वा सिद्धस्तदा ब्रह्मत्वमपि तेषां न संभवत्येवेति न काप्यनुपपत्तिः। अत एवात्र 'शेषाणां शेषिणश्चे'त्याद्युक्तिः ॥

**वस्तुतस्तु**—परमात्मनो बन्धप्रसक्तेरेवाभावेन तस्य मुक्तत्वव्यवहार औपचारिक एव। नित्यसूरीणां तु जीवत्वानपायात् बन्धस्वरूपयोग्यता मुक्तैस्सह समाना। स्वरूपयोग्यतायास्सत्वेऽपि सहकारियोग्यतायाः

[सालोक्यादयो न पूर्णमुक्तयः]

**137. सालोक्याद्याः प्रभेदा ननु परिपठिताः क्वापि मोक्षस्य; मैवं**
**सायुज्यस्यैव तत्त्वात्; तदितरविषये मुक्तिशब्दस्तु भाक्तः ।**

कर्मरूपाया अभावेन न नित्यानां कर्मबन्धः । मुक्तानां सहकारियोग्यतायाः कर्मणः मुक्तेः पूर्वं स्थितत्वात्, बन्धोऽपि पूर्वमासीत्, मुक्तौ तु न । बद्धजीवानां तु योग्यताद्वयस्यापि सत्त्वात्, इतरवर्गद्वयवैलक्षण्यम् ॥

यावद्बुद्धिःप्रवर्तेत मनो वा, तावदेव हि । वक्तुं शक्यं नाधिकं तु, वाग्जालं वर्ज्यतां वृथा ॥ ६६ ॥

मुक्तौ तारतम्यवादिनः केचन । तारतम्यमपि विविधं वदन्ति । जीवस्वरूपाणामेव तरतमभावयुक्तत्वात्, स्वरूपाविर्भावस्य च मोक्षत्वात्, आनन्दतारतम्यमवर्जनीयमिति **नव्यवेदान्तिनः** । सगुणनिर्गुणभेदेन ब्रह्मभेदम्, तदनुरोधेन मुक्तावपि क्रमसकृद्भेदेन द्वैविध्यम्, सगुण(क्रम)मुक्तौ च साधनतारतम्यात् फलतारतम्यं चावर्जनीयमिति च **ब्रह्माहम्मन्याः** प्राहुः । पाञ्चरात्रिकास्तु सालोक्यसामीप्यसारूप्यसायुज्यभेदेन मुक्तौ चातुर्विध्यं वदन्ति । तत्र विशुद्धजीवात्मनः स्वरूपे तारतम्याभावसमर्थनेनैवाद्यः पक्षस्समाहितः। सगुणनिर्गुणादिभेदस्य निराकरणेन द्वितीयःपक्षोऽपि निरस्तः । तृतीयोऽपि पक्षः मुक्तौ तारतम्यनिराकरणेनैव यद्यपि निरस्तप्राय एव । परन्त्वस्य पाञ्चरात्रोक्तत्वात्, पाञ्चरात्रस्य च सिद्धान्ते प्रमाणत्वेन निराकर्तुमशक्यत्वात्, तत्पक्षमनूद्य विमृशति— **सालोक्याद्या** इत्यादि । **सालोक्याद्याः मोक्षस्य प्रभेदाः क्वापि**=कुत्रचित्पाञ्चरात्रे **परिपठिता ननु**=स्पष्टं कथिताः किल । अतो मोक्षे तारतम्यमावश्यकम् । 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणःस्वयम्' इति इत्युक्त्या, श्रुतिवदेव तेषां प्रामाण्यमावश्यकम् । अतः कथं त्यक्तुम् शक्यमिति चेत्— **मैवम्**=नैतदेवम् । कुतः? **सायुज्यस्यैव** चतुर्थस्य **तत्त्वात्**=मुक्तित्वात् । **तदितरविषये**=सालोक्यसामीप्यसारूप्यविषये **मुक्तिशब्दस्तु**=मुक्तिशब्दप्रयोगस्तु **भाक्तः**=औपचारिकः । अतो मुक्तौ नास्ति तारतम्यम् । तत्तद्देवतोपसकानां सर्वेषामपि फलसिद्धिः नैकरूपा भवति । उपासनातारतम्यमेव तत्र कारणम् । उपासनातारतम्यस्य मनस ऐकाग्र्यादितारतम्यम्, तत्र च शरीररचनाभेदाः, तत्र चान्ततः पूर्वकर्मैव कारणम् । अत एव एकदेवतोपासकानामपि सिद्धौ तारतम्यमनिवार्यमेव दृश्यते । एवं आत्मोपासनैवोपासनेषु परमा काष्ठा । आत्मा नाम कः? स एव ब्रह्म । ब्रह्म किम्? विष्णुरेव । विष्णोरेव ब्रह्मत्वादिकमग्रिमसरे निरूप्यते । अतो **विष्णूपासना, ब्रह्मोपासना, आत्मोपासना** चेति पर्यायाश्शब्दा वैष्णवानाम् । यद्यप्यस्ति एषामुपासनानां तारतम्यम्, अथापि पर्यवसानत ऐक्यं वर्तत इत्युच्यते । परन्तु विष्णूपासनास्सर्वा अपि न समानाः । विष्णोर्नामानि गुणाश्चानन्ताः । नाम्नामानन्त्ये गुणा अप्यनन्ताः, रूपाण्यप्यनन्तानि । अत एव 'चतुश्चक्रं नमस्यामि केशवं कनकप्रभम् । नारायणं घनश्यामं चतुश्शङ्खं नमाम्यहम् ॥' इत्यादिरूपभेदाः केशवादीनां वर्ण्यन्ते । एतद्विस्तरस्तु तत्तन्मन्त्रशास्त्रेषु द्रष्टव्यः। एवं तारतम्येऽपि सर्वासामपि विष्णूपासनात्वेनैक्यं यथा, तथैवात्मोपासनाब्रह्मोपासनाविष्णूपासनानामपि सामान्यत ऐक्यम्, विशेषतस्सूक्ष्मो भेदश्च वर्तते ॥

तत्त्वं त्वतीव गहनं दुर्ज्ञेयं गीष्पतेरपि । अथापि मनुजाःक्लिश्यन्त्यहङ्कारेण पीडिताः ॥

**तस्मिस्ते च त्रयः स्युः; तदपि च सयुजोर्भाव इत्यैकरस्यम्**
**युक्साम्यं लोकसाम्यादिवदपटुधियां तावतैवैक्यमोहः ॥ ६७ ॥**

सालोक्यादिषु पुनरावृत्तेस्सत्त्वात्, तेषां संपूर्णमुक्तिरूपता न संभवतीत्यादिकं पूर्वमेव (श्लो.67) निरूपितम् । ननु सायुज्यस्य वा कथं पूर्णमुक्तिरूपता? समानगुणयोगमात्रं हि सायुज्यम् । तर्हि तत्र सालोक्यमुक्तेरभावात्, तदानन्दालाभात् न्यूनतावर्जनीया किलेत्यत्राह—**तस्मिन्**=सायुज्यमोक्षे **ते च त्रयः**= सालोक्यादिमोक्षाः त्रयोऽपि **स्युः**=अन्तर्गता भवन्ति । सामीप्ये सालोक्यं यथान्तर्भवति, सारूप्ये सालोक्यसामीप्ये यथा वान्तर्भवतः, एवं सायुज्ये इतरत्रयमपि अन्तर्भवति, नो चेदुपर्यपर्युत्कृष्टतैव न स्यात् ॥

ननु सायुज्यम् ऐक्यरूपमितरे वदन्ति किलेत्यत्र—**तदपि च**=सायुज्यमपि च, सयुजोर्भावः इति **ऐकरस्यम्**=ऐकरस्यरूपमेव, न तु वस्त्वैक्यम् । ऐकरस्यं नाम आनन्दसाम्यमेव, रसशब्दस्यानन्दवाचित्वात्। 'देवतासायुज्यमाप्नोति' इत्यादावैक्यार्थकत्वं वर्ण्यते किलेत्यत्र—**युक्साम्यं लोकसाम्यादिवत्** अवगन्तव्यम् । 'सालोक्यम्' इत्यत्र समानलोकत्वार्थकत्वेन, तत्र 'समान'पदस्य एकरूपार्थस्य दर्शनात् लोकैक्यमर्थः । न तु तत्सदृशलोकान्तरप्राप्तिः । 'सामानाधिकरण्यम्' इत्यादावपि समानपदस्य 'एक'रूपार्थवाचकत्वं प्रसिद्धम् । अथापि सारूप्यमित्यादौ सादृश्यार्थकमेव, न त्वैक्यार्थकम् । एवं कुत्रचिद्दृष्ट्वा **अपटुधियाम्**=मन्दबुद्धीनाम् **तावतैव**=तावन्मात्रेण **ऐक्यमोहः** । अतो मुक्तिर्भेदगर्भैव व्याससंमता । किं बहुना! ऐक्यमस्ति बहुविधम् । सुषुप्तेरारभ्य मरणमोक्षपर्यन्तं जीवात्मनः परमात्मनि लयः बहुविधः । तत्र—

सुषुप्तिमपि न ज्ञातुं शक्यतो मनुजैर्बत! । क्रमशो ज्ञायते सर्वं स्पष्टं स्यात् स्वयमेव हि ॥

एवं सिद्धिषु तारतम्येऽपि सामान्यतश्चतुर्धा विभक्ताः सिद्धयः । उपास्यस्य देवस्य लोकप्राप्तिः प्रथमा सालोक्यरूपा । तत उत्कृष्टा तादृशदेवसान्निध्यप्राप्तिः सामीप्यरूपा । ततोप्युत्कृष्टा तादृशदेवतासारूप्यप्राप्तिः=सकलप्रकारेणापि साम्यप्राप्तिः सारूप्यरूपा । दृश्यते किल 'शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्' इत्यादि विष्णुपार्षदानाम् । न च सारूप्यं रूपसाम्यमात्रम्, न तु गुणादिसाम्यमपीति शङ्क्यम् ; नामरूपयोर्यथा निकटसंबन्धः, तथा रूपगुणानामपि संबन्धोऽत्यन्तं निकट एव । यदि रूपमात्रसाम्यम्, तर्हि तादृशवेषधारिण इव ते भवेयुः । अतस्तादृशरूपानुबन्धिगुणानामप्याविर्भावः स्यादेव । एतेभ्योऽप्युत्कृष्टास्तादृशदेवतया सह ऐक्यतुल्यावस्थाप्राप्तिः सायुज्यरूपा, न त्वैक्यम् । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इतिसमानयोर्योगे पृथक्प्रतिपत्तुमनर्हावस्थैव सायुज्यम्, न तु सामान्यगुणयोगमात्रम् ; तस्यैव सारूप्यरूपत्वेनोभयोरविशेषप्रसङ्गात् । न वा संपूर्णैक्यम् । 'तदेव' इत्यकथनात् । सिद्धान्ते सारूप्यं कतिपयांशैरपि साम्यम्, न सर्वांशसाम्यं सायुज्यमिति केचन । 'सायुज्यं समानगुणयोगः' इत्याचार्याणामुक्तयः किं न दृष्टाः? त्वत्तोऽपि सम्यगवधृताः साधो! विचारयामः सर्वम् । किञ्चित्सहस्व ॥

एतावदेव गहनम् ऐक्यं तु स्मर्तुमप्यहो! न क्षमा मनुजा हन्त! काममोहादिपीडिताः ॥
वस्तुतस्त्वत्र वक्तव्यं बह्वेवास्ति महद्रहः । सर्वं जीवस्वरूपस्य निर्णयानुगुणं भवेत् ॥

[मुक्तानां जगत्कारणत्वाभावः]

138. विश्वाधारस्य लक्ष्मेत्यभिहितमखिलं संभवेन्नापवृक्ते
तन्निष्ठत्वादि सर्वं न हि विलयमियात् तच्छरीरस्य तस्य ।

दुर्ज्ञेयं तपस्याप्येतदात्मानुग्रहमन्तरा । यमेष वृणुयात्तेन स प्राप्य इति हि श्रुतम् ॥
इतोऽप्यतीव गन्तव्यं बहु दूरं न संशयः । वाचामगोचरं नूनमात्मतत्त्वं महाद्भुतम् ॥
तपोवृद्धा ज्ञानवृद्धाः संसेव्याः सर्वदा नरैः । आत्मा तु क्रियतां पात्रम्, अलमत्र विरम्यताम् ॥

यद्यपि **भास्करभाष्ये** 'उत्क्रमिष्यत एवं भावादित्यौडुलोमिः' (ब्र.सू.भा.9-8-67) इति सूत्रे औडुलोमिमतं पाञ्चरात्रिकाणामिति 'आमुक्तेरेव भेदस्स्यान्मुक्तस्य च परस्य च । मुक्तस्य न तु भेदोऽस्ति भेदहेतोरभावतः ॥' इति श्लोकोद्धरणेनाभ्यधायि । शाङ्करोपनिषद्भाष्यव्याख्याने **आनन्दगिरीयेऽपि** 'तदाहुः पाञ्चरात्रिकाः' इत्युद्धारपूर्वकमुक्तः श्लोक उद्धृतः । शारीरकमीमांसायां तर्कपादेऽन्तिममधिकरणं पाञ्चरात्रनिराकरणपरमेव भगवद्रामानुजेभ्यः पूर्वतनैरपि व्याख्यातमित्यपि सर्वेऽपि जानन्ति । 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्' (ब्र.सू.2-1-14) इत्यत्र फेनबुद्बुदतरङ्गदृष्टान्तप्रदर्शनादिना—प्राचीनं ब्रह्मसूत्राणां व्याख्यानं **भर्तृप्रपञ्चेन** विरचितम्, श्रीवैष्णवैः **श्रीवत्साङ्कैरपि** तथैव भाषितमिति **चागमप्रामाण्याद**वगम्यते । पाञ्चरात्रं च ब्रह्मपरिणामवादपरमेवेत्यपि निश्चप्रचम् । ब्रह्मसूत्राण्यपि परिणामवादपराण्येवेत्यपि तटस्थविद्वत्संमतम् । 'आत्मकृतेः' 'परिणामात्' (ब्र.सू.1-4-26,27) इत्यादिसूत्राणि, तद्विषयभूतानि 'बहु स्याम्' 'तदात्मानं स्वयमकुरुत' (तै.आ.6) इत्यादिश्रुतिवाक्यानि उक्तार्थे साक्षिभूतानि ॥

एवञ्च भास्करभाष्यदृष्ट्या पाञ्चरात्रिकसिद्धान्तः श्रौतसिद्धान्तानुगुण एव । **श्रीशङ्कराचार्या** अपि पाञ्चरात्रं ब्रह्मोपादानवाद्येवेति स्पष्टं प्रतिपादयन्ति पाञ्चरात्राधिकरणपीठिकायाम् । भगवद्रामानुजाचार्यस्याप्येतदेव संमतमिति च प्रसिद्धम् । एवं सत्याचार्यैरत्र सालोक्यादिमुक्तिभेदः पाञ्चरात्रसंमत इति कथनं कथमित्यस्ति संशयस्यावकाशः । परं तु 'लोकेषु विष्णोर्निवसन्ति केचित् समीपमिच्छन्ति च केचिदन्ये अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥' इत्यादिश्लोकदर्शनेन कैश्चिदागमिकैस्तथा व्याख्यातमिति भाव्यम्। परं तु 'स तु मोक्ष उक्तः' इति सायुज्यस्यैव मोक्षत्वकथनात् इतरेषां तत्त्वमौपचारिकमित्याशयः ॥

**वस्तुतस्तु**—ननु सायुज्यस्य समानगुणयोगमात्ररूपत्वेऽपि 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।' (भाग.3-29-13) इति प्रत्येकमैक्यस्यापि गणनात्तदेव परा काष्ठेति चेत्, अस्य जीवब्रह्मस्वरूपनिर्णयाधीनत्वेनास्य विचारस्य च बहुधा कृतत्वात् पुनर्न विस्तरमपेक्षते ॥

यावत् बुद्धिः प्रवर्तेतेत्याद्युक्तं स्मर्यतां पुनः । अलं कुशाग्रबुद्धीनां तावदेवेति चिन्त्यताम् ॥ ६७ ॥

किमेवं मुधाग्रहः? यावत्पर्यन्तं पारतन्त्र्यम्, तावत्पर्यन्तं निरवधिकं सुखं कथं स्यात्? इत्याशङ्कायाम्, वयं किं कुर्मः? पृच्छ वेदान्तशास्त्रशिल्पिनं बादरायणमित्यभिप्रायेणोत्तरयति—**विश्वाधारस्येत्यादि** । **विश्वाधारस्य**=जगन्निमित्तोपादानभूतस्य परब्रह्मणः **लक्ष्मेति**=लक्षणमिति **अभिहितम् अखिलमपि**=

**तन्निघ्नत्वेऽपि मुक्तो न भवति पुनरावृत्तिशङ्काकलङ्की**
**तादृक्सौहार्ददृष्टेः वयमपि तदनावृत्तिशास्त्रेण विद्मः ॥ ६८ ॥**

समस्तमपि **अपवृत्ते**=मुक्ते **न संभवेत्** । यदि संभवेत्, तर्हि कथं तत् ब्रह्मलक्षणं स्यात्? 'अथातो ब्रह्मजिज्ञासा' (ब्र.सू.1-1-1) इति वेदान्तशास्त्रारंभे प्रतिजानानः बादरायणः, समनन्तरं ब्रह्मणो लक्षणं विवक्षुः, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनभिधाय 'जन्माद्यस्य यतः' (ब्र.सू.1-1-2) इति सूत्रेण जगज्जन्मादि-कारणत्वं ब्रह्मणो लक्षणमभ्यधात्। यदीदं जगत्कारणत्वं मुक्तस्यापि स्यात्, तर्हि कथमिदं ब्रह्मलक्षणं भवेदिति 'जगद्व्यापारवर्जम्' (ब्र.सू.4-4-16) इति मुक्तानां ब्रह्मसाम्यं जगद्व्यापारवर्जम्=जगत्कारणत्वव्यतिरेकेणैवेति च स एव सूत्रकारः प्रतिपादयामास। 'संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छां.8-2-1) 'संकल्पादेव तच्छ्रुतेः' (ब्र.सू.4-4-8) इति मुक्तस्यापि स्रष्टृत्वश्रवणात् कथं तन्निषेधः? इति चेत् भगवल्लीलोपयोगितया कतिपयलोकस्रष्टृत्वमेव तस्य, न तु स्वतन्त्रतया निखिलजगत्स्रष्टृत्वं तस्येति व्याससिद्धान्तसूचनायैवात्र '**अखिल**'पदम्। एवं प्रतिपादने कारणम्—**तच्छरीरस्य**=परमात्मशरीरभूतस्य **तस्य**=जीवस्य **तन्निष्ठत्वादि सर्वम्**=तदधीनत्वादिकं सर्वमपि शरीरलक्षणम् **विलयम्**=नाशम् **न हि इयात्**=न हि प्राप्नुयात् । कदाचिदेव जीवः ब्रह्मणश्शरीरम्, कदाचिच्च नेति न हि भवेत्। अतः मुक्तावपि ब्रह्मशरीरत्वानपायात्, ब्रह्मलक्षणं मुक्तस्य न स्यादेव। ननु यदि मुक्तावपि ब्रह्माधीनत्वम् तस्य, तर्हि अपुनरावृत्तिनैर्भयं न स्यात् इत्यत्र—**तन्निघ्नत्वेऽपि**=परमात्माधीनत्वेऽपि, स्वस्य स्वातन्त्र्याभावेऽपि मुक्तः पुनरावृत्तिशङ्काकलङ्की= 'निरङ्कुशः परमात्मा मां संसारं प्रति पुनरावर्तयेदपि' इति पुनरावृत्तिशङ्कया **कलङ्की**=कलुषितः, 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः' इतिवत् भयग्रस्त एव स्यात् इति **न भवति** । कुतो न भवति— **तादृक्सौहार्ददृष्टेः**=तत्तादृशस्य सौहार्दस्य=मुक्तविषये परमात्मनः प्रीत्यतिशयस्य दर्शनात्। कथमिदं ज्ञायते? न हि त्वं मुक्तः । यदि मुक्तः, तर्हि तवेदानीं पुनरावृत्तिर्दृश्यते किलेत्यत्र—**तत्**=एतादृशं प्रीत्यतिशयम् **वयम्**=शास्त्रविश्वासवन्तः **अनावृत्तिशास्त्रेण**='न च पुनरावर्तते' इति श्रुत्यैव 'अनावृत्तिशब्दादनावृत्तिशब्दात्' (ब्र.सू.4-4-22) इति सूत्रेण च **इह**=इदानीमेव अत्रैव **विद्मः**= जानीमः । तस्य मुक्तस्य अनावृत्तिप्रतिपादकशास्त्रेण इत्येकं पदं वा । इदानीं तु कर्मवाचकपद-मध्याहार्यम्। 'वेदाच्छास्त्रं परं नास्ति' इति आस्तिकानामस्माकं वेद एव परमं शास्त्रम्। एवं श्रुत्यनुसारिणी स्मृतिरपि। भगवानपि 'तस्माच्छास्त्रं प्रमाणं ते' (गी.16-24) इति जगौ ॥

ननु 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥' (श्लो.वा.) इति वैदिकमूर्धन्यैः शास्त्रस्य लक्षणमभ्यधायि । अनावृत्तिशास्त्रं तु न प्रवृत्तिशास्त्रम्, न निवृत्तिशास्त्रम्, किन्त्वनुवादरूपम्। अतस्तस्योक्तलक्षणशास्त्रत्वाभावात् 'अनावृत्तिशास्त्रेण' इति कथमाचार्यै-रुक्तम्? समीचीनः प्रश्नः । अवधीयताम्! तिष्ठतु कामं तल्लक्षणम्! शास्त्रपदस्यार्थः कः? 'शासु अनुशिष्टौ' इतिधातोर्निष्पन्नं पदम् 'शास्त्रम्' इति 'शासनम्' इत्यर्थकम्। 'अनुल्लङ्घनीयम्' इत्यनुगतार्थः।

वेदोक्तं सर्वं प्रवृत्तिरूपम्, निवृत्तिरूपं वा, सिद्धं कार्यानन्वितं वा वस्तु, तत् 'नाङ्गीक्रीयते मया' इति उदासितुम्=उल्लङ्घयितुमशक्यम्। अतो वेदाख्यं परं शास्त्रम् प्रवृत्तिनिवृत्तिविषये यथा प्रमाणम्, तथैव ब्रह्मण्यमपि प्रमाणम्। अतो भट्टोक्तं शास्त्रलक्षणम्, कर्मप्रधानपूर्वमीमांसाशास्त्रमात्रपर्यवसितम्। अत एवोत्तरमीमांसायां—'शास्त्रदृष्ट्या तु' (ब्र.सू.1-1-31) इत्यत्र जगद्ब्रह्मणोः शरीरशरीरिभावप्रतिपादकम्, ब्रह्मणस्सर्वान्तिर्यामित्वप्रतिपादकं वेदान्तशास्त्रं 'शास्त्र'पदेनाभिहितम्। ब्रह्मणःसर्वान्तर्यामित्वं हि केनाप्युल्लङ्घितुं न शक्यम्। 'अन्यो ह्यन्यच्चिन्तयति स्वच्छन्दं विदधाम्यहम्' इति खलु वक्ति भगवान्। एवमनुल्लङ्घनीयत्वादेव 'ऋतं सत्यं परं ब्रह्म' (म.ना.) इत्यादौ 'ऋतम्'इति ब्रह्म विशेषणमुच्यते। 'ऋतं नात्येति किञ्चन'(तै.ब्रा.1-5-21) इति श्रुतिरेव ऋतपदस्यार्थं 'अनतिक्रमणीयम्' आह। 'ऋतं पिबन्तौ' (कठ.1-3-1) इत्यादावपि कर्मफलस्यानतिक्रमणीयत्वादेव ऋतम्=कर्मफलमिति व्याख्यातम्। अत एव 'श्रुतिस्स्मृतिर्ममैवाज्ञा' (पाञ्चरात्रम्) इति श्रुतिस्मृत्योरनुल्लङ्घनीयभगवदाज्ञारूपत्वमुच्यते। 'वेदाच्छास्त्रं परं नास्ति' इति व्यासवचनमपि स्मर्तव्यम्॥

ननु सांख्यपूर्वमीमांसयोरपि वेदप्रामाण्यमविशिष्टम्। तौ त्वीश्वरं नाभ्युपेतः। अतः ईश्वराज्ञारूपत्वं वेदस्य कथम्? न चैतल्लक्षणं वेदान्तिनामेवेति वाच्यम्; पूर्वमीमांसकानामेकं लक्षणम्। उत्तरमीमांसकानामन्यल्लक्षणम् इति यदि, अद्भुतं वो बुद्धिकौशलम्। न च तावपीश्वरमभ्युपेत एव। श्रीमति भागवतादौ सांख्यप्रक्रियायां तथा दर्शनात्। आचार्यैरेव सेश्वरमीमांसाया रचनाच्चेति वाच्यम्। ईश्वरपददर्शनमात्रेणेयं जाता मतिः। एवं चेत्तर्हि चार्वाका अपि सेश्वरवादिनः स्युः, न हि ते ईश्वरपदमेव नाङ्गीकुर्वन्ति, किन्तु लोकप्रसिद्धो राजैवेति किल ते वदन्ति। लोकव्यवहारो न केनापि निरोद्धुं शक्यः। विषयभेदप्रदर्शनेन केवलं सर्वे व्यवहारान् निर्वहन्ति। अतः सांख्या निरीश्वरवादिन इत्येव प्रामाणिकः पन्थाः। तेषां साधनादिदृष्ट्या वेदान्तिसंमतेश्वरापेक्षापि नास्त्येव। प्रकृतिपुरुषाख्यतत्त्वद्वयवादिनः खलु ते। सेश्वरसांख्यपदं योगसिद्धान्तवाचि। एवं पूर्वमीमांसकानामपि ईश्वरो नाभिमतः। कर्मशेषतयैव सर्वमर्थवद्भवतीति वदतामीश्वरस्य कर्मशेषत्वाभावादेव नास्ति स्थानमीश्वरस्य तत्र। आचार्यैस्तु—वैदिकाग्रेसराणां मास्तु निरीश्वरत्वापवाद इति दयया प्रौढिवादेन सेश्वरमीमांसाग्रन्थरचनम्। एवं विवाद एव **कूश्माण्डचौर्यकथान्यायेन** तयोर्निरीश्वरवादित्वं द्रढयति। अतो वेदानामीश्वराज्ञारूपत्वं कथं सङ्गच्छते?

**अत्रोच्यते**—वेदविषये सन्त्यसंख्याः पक्षभेदाः, वादविवादाश्च। वेदाः पौरुषेया वा अपौरुषेया वा? नित्याः, कृतका वा? इत्यादि। तेषां प्रामाण्यविषये स्वतः परतो वेति। एवं पक्षभेदसत्त्वेऽपि प्रामाण्ये एतेषां सर्वेषामैकरस्यमेव। अतः सर्वसंमततया प्रामाण्यं वक्तव्यं यदि, तर्ह्युपक्रमोक्त 'शासन'रूपत्वं वेदानां सर्वसंमतम्। कस्य शासनम्? इत्यत्र तु स्युः पक्षभेदाः! सृष्टिनियम एव शासनशब्देनोच्यते। नियमबद्धरीत्यैव सृष्टिचक्रं परिवर्तते। न हि कदाचिदपि आम्रबीजात् निम्बवृक्षो भवेत्। न वा मानवेभ्यो मृगा भवन्ति। बीजात् वृक्षस्याविर्भावोऽपि, बीजादङ्कुरम्, अङ्कुरात् नालम्, नालात्काण्डः, काण्डात् शाखाः, शाखेभ्यः पत्राणि, ततः पुष्पम्, ततश्शलाटुः, ततः फलम्, ततो बीजम्—इत्ययं क्रमः तत्तद्बीजानुगुणः

व्यवस्थितरीत्यैव भवति। एवं बीजादारभ्य बीजपर्यन्तं यच्चक्रम्, तत् तत्तद्बीजानुरूपं व्यवस्थितेनैव क्रमेण परिवर्तते। इदमेवातिव्यापकदृष्ट्या 'अन्नाद्भवन्ति भूतानि' इत्यारभ्य 'एवं प्रवर्तितं चक्रम्' (गी.3-14,15) इत्यनेनाभिधीयते। एतादृशसृष्टिचक्रेणानुल्लङ्घनीयेन मानवानां संयोजनप्रक्रियैव यज्ञविज्ञानमुच्यत इत्यपि 'सह यज्ञैः प्रजास्सृष्ट्वा'(गी.3-10) इत्यादिनोच्यते। अतः 'अनुल्लङ्घनीयसृष्टिनियम एव शासनम्' इत्युच्यते। तदेतत् ईश्वरवादिभिः 'ईश्वराज्ञा' इत्युच्यते। ईश्वरानङ्गीकर्तृभिस्तु 'प्रकृतिनियमः' 'नियतिः' (*Nature*) इत्यादिशब्दैरुच्यते। एतद्विषयकज्ञानमेव 'विज्ञानम्'शब्देनोच्यते। अत एव शास्त्रम्='विज्ञानम्' इति कोशकारादिभिरुच्यते। अतो यत्र यत्र विवादः तत्र सर्वत्र विज्ञानदृष्ट्याऽन्वेषणं भवेच्चेत्, पक्षभेदा अपि न स्युः। यदि वा स्युः, तदा पक्षभेदकारणज्ञानेन तेषां कक्ष्यापि सुनिश्चिता स्यात्। शास्त्राणां मर्यादापि रक्षिता स्यात्। सर्वसंशयानां परिहारस्सुलभो भवेत्। इदमेव ब्राह्मणस्य प्रथमकर्तव्यमित्याह भगवान्—'ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्' (गी.18-42) इति। इयं दृष्टिस्संपादनीया चेत्, तत्र मूलभूतामर्हतामपि स एव आह—'शमो दमस्तपश्शौचं क्षान्तिरार्जवमेव च' (गी.18-42) इति। एतस्यापि मूलं 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति'॥ (गी.5-29) इत्युक्तम्। प्रकृतमनुस्मरामः॥

'अनावृत्तिशास्त्रेण विद्मः' इत्यत्र स्थूलदृष्ट्या अनावृत्तिप्रतिपादकशास्त्रेण 'न च पुनरावर्तते' इति वेदवचनेन विद्मः जानीमः=इत्यर्थः। यद्यपि शब्दैकसमधिगम्ये विषये शब्द एव प्रमाणमित्यंशः सर्ववेदान्तिसंमतः। परन्तु उपनिषद्वाक्यानामर्थविवरणे असंख्यातपक्षभेदानामवतीर्णत्वेन कथं शब्दैकसमधिगम्यं ब्रह्म? यदि स्वस्वपक्षश्रद्धावश्यकीत्युच्यते, तर्हि 'श्रद्धैकसमधिगम्ये वस्तुनि' इति कथनमेव वरम्, अन्ततः तदेव प्रामाणिकं च। एवञ्च शब्दैकसमभिगम्यत्वं गतमेव। तर्हि शास्त्रयोनित्वाधिकरणस्य ब्रह्मणश्शब्दैकसमभिगम्यत्वप्रतिपादकस्य का गति इति चेत्—

न जानीमः कुतस्त्यक्तं प्राचीनं वर्णकं त्वृजु। **शास्त्रयोनित्वसूत्रस्य** सूत्रकारहृदि स्थितम्॥
प्राचीनार्थस्य दुर्गम्यत्वादाचार्यैरखिलैरपि। व्याख्यातं त्वन्यथा सूत्रं शिष्यशक्त्यनुरोधतः॥

तथा हि—शास्त्रं योनिः=प्रमाणम् यस्य तत् शास्त्रयोनि, शास्त्रप्रमाणकम्। 'सर्वं वाक्यं सावधारणम्' इति न्यायेन शास्त्रैकप्रमाणकमित्यर्थः। तस्य भावः—शास्त्रयोनित्वम्, तस्मादिति विग्रहः॥

तटस्थान् परिपृच्छामो हृदि हस्तं निधाय ते। वदन्तु योनिशब्दोऽयं कमर्थं बोधयेत्स्वतः?॥
एवमेव वदन्त्यन्ये स्याद्दोषोऽस्माकमेव किम्? इत्यादि शोभते जल्पे, वादे नैव तु शोभते॥

सर्वत्र तत्पुरुषापेक्षया बहुव्रीहेर्जघन्यत्वेऽपि, योनिपदस्य कारकहेतावेव स्वरसत्वेऽपि, पूर्वसूत्रे सर्वजगत्कारणत्वस्य ब्रह्मलक्षणत्वकथनात्, शास्त्रकारणत्वस्यापि तेनैव लाभात्, पौनरुक्त्यापत्त्या सोऽर्थस्त्यक्त इति वदन्ति। परन्त्वत्र शास्त्रकारणत्वं न विवक्षितं। शास्त्रं नाम विज्ञानम्। विज्ञानस्य ब्रह्मैव मूलम् 'योगो ज्ञानं तथा सांख्यं विद्याश्शिल्पादिकर्म च। वेदाश्शास्त्राणि **विज्ञान**मेतत्सर्वं जनार्दनात्॥'

[वैशेषिकसंमतमुक्तिस्वरूपपरीक्षा]

**139. विश्वैर्वैशेषिकैस्तैर्भवति विरहितो नाशितादृग्गुणत्वात्**
**जीवात्मा जन्मकाले घटवदिति यदि, स्यादिहाम्नायबाधः।**

(म.भा. अनु. सहस्र.) इति विज्ञानमूलत्वं ब्रह्मण उक्तम्। तदेतत् 'विज्ञानेनात्मानं वेदयते', 'विज्ञानादानन्दो ब्रह्म योनिः' (तै.म.ना.3-2-23-1) इत्याद्युक्तिभिश्च दृढीक्रियते। शब्दैकसमधिगम्यत्वरूपापेक्षया विज्ञान-मूलत्वात् ब्रह्मणो विज्ञानगम्यत्वरूपोऽर्थः स्वरसः गंभीरश्च। परन्तु—

नष्टमध्यात्मविज्ञानं क्रमशः कालवैभवात्। तपोहान्या च विप्राणां विज्ञानं गलितं क्रमात्॥
जानन्तोऽप्यखिलं तत्त्वमाचार्या मूकतां गताः। शेकुर्बोधयितुं नैव जनान् दौर्बल्यपीडितान्॥
ज्ञानं कथञ्चित्सुलभं भगवत्कृपया नृणाम्। माययाच्छादितत्त्वात्तु विज्ञानं दुर्लभं सदा॥
एवं विज्ञानहान्यैव व्याख्यानं बहुधा ह्यभूत्। समुद्धरेत्स विज्ञानं काले लोकहिते रतः॥
ततोऽनावृत्तिविज्ञानादनावृत्तिः स्वभावतः। सुलभेन क्रमेणाहुः सूत्रकारादयस्तु तत्॥

तथा ह्युक्तं 'अनावृत्तिः शब्दात्' इति। भाषितं च कस्यापराधातुनरावृत्तिसंभवः किं मुक्तस्य, उत ब्रह्मणः? 'न चोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षातदर्थारम्भाद्यसंभवातुनरावृत्तिशङ्का। न च परमपुरुषस्सत्यसंकल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति' (श्री.भा.4-4-22)इति। सामान्यजनानां तु शास्त्रं शब्दरूपम्। वस्तुतस्तु **शास्त्रं** विज्ञानमेवेत्यधिकारिभेदेनार्थद्वयमपीह विवक्षितम्, यथोपनिषत्पदम्। उपनिषत्पदम् हि, ब्रह्मविद्यायाः, तत्प्रतिपादकशब्दस्य च वाचकं सर्वसंमतम्। ननु किमेतावतोक्तम्? शास्त्रगम्यत्वं वा, विज्ञानगम्यत्वं वार्थो भवतु सूत्रस्य। 'योनि'पदस्यार्थे को भेद उक्तो भवतीति चेत्, नवीनव्याख्याने योनिपदं लाक्षणिकम्, समासश्च बहुव्रीहिः। प्राचीनव्याख्याने योनिपदं मूलकारणवाचि, समासश्च तत्पुरुष एव। विज्ञानमूलत्वाद्ब्रह्मणः, विज्ञानगम्यत्वमर्थात्सिद्धमिति न पौनरुक्त्यम्। एतद्विस्तरोऽग्रिमसरे॥ ६८॥

एवं स्वपक्षमभिधायैतद्दार्ढ्याय परपक्षान् विमिमृक्षुःप्रथमं वैशेषिकपक्षं विमृशति—**विश्वैरित्या-दिना**। **जीवात्मा विश्वैः**=समस्तैः **वैशेषिकैः तैः**=ज्ञानादिभिर्विशेषगुणैः **विरहितः**=शून्यः भवति मुक्तिकाले। तत्र हेतुः—**नाशितादृग्गुणत्वात्**=अनित्यविशेषगुणवत्त्वात्। तत्र दृष्टान्तः=**जन्मकाले घट-वदिति**। आद्यक्षणावच्छिन्नो हि गुणशून्य इति तैरुच्यते इति प्रसिद्धम्। 'उत्पन्नं द्रव्यं क्षणमगुणमक्रियं च तिष्ठति' इति तेषां नियमः। तत्र कारणं घटगतगुणानामनित्यत्वमेव। तद्दृष्टान्तेन मुक्तिकालिक आत्मा सकलविशेषगुणशून्यो भवति, तदीयविशेषगुणानां ज्ञानादीनामनित्यत्वात्। संख्यादिसामान्यगुणव्यावृत्यर्थं 'विशेष'पदम्। **इति यदि**=चेत्, **इह**=अस्मिन्नर्थे, अस्मिन्ननुमाने **प्रथमम् आम्नायबाधः**='अयमात्मानु-च्छित्तिधर्मा' (बृ.6-5-14) इति श्रुतिविरोधः। न विद्यते उच्छित्तिः=नाशः यस्य, सः अनुच्छित्तिः= नाशरहितं ज्ञानमर्थः। अनुच्छित्तिः धर्मः यस्य, सः अनुच्छित्तिधर्मा। ननु न उच्छित्तिः=अनुच्छित्तिः

**दृष्टान्तः साध्यहीनः क इव निगमविल्लिप्सते मुक्तिमेतां**
**धीर्नित्येच्छादयस्तत्परिणतय इति स्यान्न हेतोरसिद्धिः ॥ ६९ ॥**

नाशाभावः । सः धर्मः यस्येति आत्मनो नित्यत्वमेवानेनोच्यते, न त्वात्मधर्मस्य । बहुव्रीहिद्वयकल्पने गौरवादिति चेत्— तत्रैवैतद्वाक्योपक्रमे 'अविनाशी' (बृ.6-5-18) इत्यनेनैवात्मनोऽविनाशित्वकथनात्पौनरुक्त्यापत्तेः । अतो गत्यन्तरविरहात्तद्धर्मस्य ज्ञानस्य नित्यत्वमुच्यते ॥

न च विनाशस्य 'अस्ति, जायते, वर्धति, विपरिणमते, अपक्षीयते, नश्यति' इति षड्विकारान्तर्गतत्वात् 'अविनाशी' इत्यनेन विकाराभावोऽभिप्रेतः । 'अनुच्छित्तिधर्मा' इत्यनेन तु नित्यत्वमुच्यत इति न पौनरुक्त्यमिति वाच्यम् ; उच्छित्तिविनाशपदयोः समानार्थकत्वेनैकेनैव तादृस्यार्थस्यापि लाभात् पौनरुक्त्यस्य दुर्वारत्वात् । न च 'उच्छित्तिः धर्म यस्य सः उच्छित्तिधर्मा । न उच्छित्तिधर्मा=अनुच्छित्तिधर्मा इति विग्रहः। उच्छेदशब्दस्यानुवृत्त्यभाववाचित्वेन 'उच्छित्तिधर्मा' इत्यनेन निरन्वयविनाशवानुच्यते । अस्य निषेधः 'अनुच्छित्तिधर्मा' इत्यनेनोच्यते । 'अविनाशी' इत्यनेन तु सान्वयविनाशो निषिध्यते; नाशपदस्यादर्शनार्थकस्य षड्भावविकारवाचिनः सान्वयविनाशवाचकत्वात् । तथा च द्विविधविनाशराहित्यस्य प्रतिपादनान्न पौनरुक्त्यमिति वाच्यम्, निरन्वयविनाशस्य वेदान्तिभिरनङ्गीकारात् । 'प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिः' (ब्र.सू.2-2-21) इति सूत्रकारैरेव तन्निरासात् । 'अविनाशी' इत्यत्र विनाशपदस्य सामान्यपदत्वेन, तेनैवोभयविधविनाशराहित्यस्य लाभात्, निरन्वयविनाशस्यावैज्ञानिकत्वाच्च । अतः पौनरुक्त्यमनिवार्यमिति धर्मनित्यत्वमेव 'अनुच्छित्तिधर्मा' पदेनोच्यत इत्येव स्वरसम् । अधिकमन्यत्र गतमेव (श्लो.4) ॥

एवं विवादग्रस्तत्वादेवदूषणान्तरमाह— **दृष्टान्तः** इत्यादि । **साध्यहीनः**, तथा च दृष्टान्तासिद्धिः। 'उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठती'त्यादेरप्रामाणिकत्वात् । परिणामवादे तादृशापत्तेरसंभवात् । आरंभवादस्य पूर्वमेव (जड.18) निरस्तत्वात् । अन्ततः दृष्टान्तस्योभयवादिसंमतत्वावश्यकत्वेन, वेदान्त्यसंमतत्वात् दृष्टान्तासिद्धिर्दुर्वारा । किञ्च तादृशमुक्तेः पुरुषार्थत्वमपि न स्यादित्याह— **निगमवित्**=वैदिकः **क इव**=को वा **एतां मुक्तिम्**=पाषाणकल्पापत्तिरूपां मुक्तिम् **लिप्सते**=लिप्सेत=लब्धुमिच्छेत्? वेदो हि मुक्तेर्निरतिशयानन्दरूपतां वक्ति । इदं जानन् पाषाणकल्पां मुक्तिं कथं लिप्सेतेति सूचनाय 'निगमवित्' इत्युक्तम् । न च दुःखनिवृत्तेरपि पुरुषार्थत्वं दृश्यते, यथा रोगनिवृत्तेरिति वाच्यम्, रोगनिवृत्याऽऽरोग्यप्राप्तेरवर्जनीयतयेष्टप्राप्तेर्नान्तरीयकत्वेन, अनिष्टनिवृत्तिमात्रस्य पुरुषार्थत्वाभावात् । आनन्दस्य नित्यत्वानित्यत्वादिविकल्पाश्च पूर्वमेव निरस्ताः । किञ्च हेतोरप्यसिद्धिमाह— सिद्धान्ते **धीः**=धर्मभूतं ज्ञानम् **नित्या इच्छादयश्च**=इच्छादय आत्मगुणाः **तत्परिणतयः**=धर्मभूतज्ञानपरिणामविशेषा एव । **इति हेतोः**=अनित्यगुणत्वादिति हेतोः **असिद्धिश्च** स्यात् । हेतोरुभयवादिसंमतत्वस्यावश्यकत्वात्, अस्मन्मते आत्मगुणानामनित्यत्वानङ्गीकारात् हेतुरप्यसिद्धः । ज्ञानस्य च नित्यत्वं स्थापयिष्यते (बु.4) ॥

आत्मनो धर्मतया नित्यं सुखं वर्तते । संसारदशायां कर्मणा प्रतिबन्धात् नानुभूयते । मुक्तौ कर्मणां निवृत्त्या अभिव्यज्यत इति नैयायिकैकदेशी **भूषणकारः**, मीमांसकैकदेशी **कुमारिलश्च** प्राहतुः । इदमपि

[सांख्यपक्षनिरूपणम्]

**140. आत्मा चिन्मात्ररूपो विकृतिमति जडे बिम्बितो बुद्धितत्त्वे**
**तच्चास्मिन् तद्विवेकाग्रहणविरचितः पुंसि संसारमोहः ।**
**अन्त्या विज्ञानवृत्तिः प्रकृतिपुरुषयोरन्यतां गाहमाना**
**तादृक्संसारभेत्री; पुरुष इह सदा मुक्त एवेति साङ्ख्याः ॥ ७० ॥**

**वात्स्यायनमहर्षिणा** निराकृतम् (न्या.भा.1-1-9) । मुक्तौ नित्यं सुखमभिव्यज्यत इत्यस्य कोऽर्थः? किं स्वयमेव भासत इत्यर्थः? उतानुभूयत इत्यर्थः? नाद्यः; मतद्वयेऽपि स्वयंप्रकाशवस्तुनोऽनङ्गीकारात् । न द्वितीयः, मुक्तौ ज्ञानस्यानङ्गीकारात् । आत्मस्वरूपं तु न स्वतस्सुखरूपम् । तथा सति धर्मतया नित्यसुखाङ्गीकारस्यानावश्यकत्वापातात् । इष्टापत्तौ चापसिद्धान्तः । मतद्वयेऽपि आत्मनोऽस्वयंप्रकाशत्वात् । ननु तर्हि सिद्धान्ते आत्मस्वरूपस्यैवानन्दस्वरूपत्वात्, स्वप्रकाशत्वाच्च अतिरिक्तधर्मभूतज्ञानस्यावश्यकता कीदृशीति चेत्—एतत्तु हैरण्यगर्भानां (योगानां) मतम्, ब्रह्मानुभवरहितस्यात्मनश्चैतन्यमात्रस्वरूपेणावस्थानस्यैव कैवल्यरूपत्वात् । सिद्धान्ते एतादृशशङ्कायाः पूर्वमेव (श्लो.4) परिहृतत्वात् । ब्रह्मानुभवस्यैव मोक्षत्वेन, आत्मस्वरूपस्येतरविषयकत्वासंभवेन तदर्थं धर्मभूतज्ञानस्यावश्यकत्वाच्च । अन्ततः, स्वरूपवत् धर्मस्यापि नित्यत्वस्य श्रुतिसिद्धत्वात्, मुक्तौ तस्य नाशासंभवात् । अतो यथोक्त एवार्थः ॥ ६९ ॥

सांख्यसंमतमोक्षस्वरूपं निराकरिष्यन्, प्रथमं तत्संमतं बन्धस्वरूपं वर्णयति—**आत्मेत्यादि** । **चिन्मात्ररूपः आत्मा**=चैतन्यमात्रस्वरूपः, न तु चैतन्यगुणकः, एतादृशः आत्मा **विकृतिमति**=महदादिरूपेण विकारभाजि **जडे**=चेतनभिन्ने **बुद्धितत्त्वे**=प्रकृतिपरिणामभूते महत्तत्त्वाख्ये बुद्धितत्त्वे **बिम्बितः**=प्रतिबिम्बितो भवति । **तच्च**=बुद्धितत्त्वं च **अस्मिन्**=पुरुषतत्त्वे बिम्बितं भवति । **तत्**=तस्मात् **विवेकाग्रहणविरचितः**=बुद्धितत्त्वपुरुषतत्त्वयोः विविक्तत्वाग्रहणेन कल्पितः **पुंसि**=चेतने **संसारमोहः** भवति ॥

**अन्त्या**=अन्तिमा **विज्ञानवृत्तिः**=बुद्धिवृत्तिः **प्रकृतिपुरुषयोः अन्यताम्**=भेदम् **गाहमाना**=विषयीकुर्वन्ती **तादृक्संसारभेत्री**=विवेकाग्रहणनिबन्धनस्य संसारस्य नाशिका भवति । एभिरपि जीवन्मुक्तेरङ्गीकारात् '**अन्त्या**' इति बुद्धिवृत्तेर्विशेषणम् । ननु प्रकृतिपुरुषयोरुभयोरपि नित्यत्वात् विभुत्वाच्च तयोस्संसर्गस्य सार्वदिकत्वात् कथं संसारस्य निवृत्तिरित्यत्र—**इह**=एतद्दर्शने **पुरुषः सदा मुक्त एव,** संसारस्तु दर्पणे मुखस्येव केवलं भानमात्रम् । प्रकृतिपुरुषविवेकेन तादृशभानस्य निवृत्त्या केवलं स्वस्वरूपेण पुरुषो वर्तते । इदमेव कैवल्यं मुक्तिरित्युच्यते—**इति सांख्याः** ॥

'अहं सदा सुखी स्याम् । कदापि दुःखी न स्याम्' इत्येव सर्वोऽपि मन्यते । तदर्थं सदा प्रयतते च । अथापीष्टसिद्धिः कस्यापि न भवति । भोजनसुखं पाकदुःखाविनाभूतम् । अथवा धनव्ययाविनाभूतम् । अथवोदरव्याध्याद्यविनाभूतम् । 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते' (गी.5-22) इत्युक्तम् । संस्पर्शः=इन्द्रियसम्बन्धः । तज्जन्याः भोगाः दुःखयोनयः=दुःखस्य योनयः, दुःखं योनिः=कारणं येषां

भोगानाम्, दुःखस्य कारणानि, दुःखजन्याश्चेत्यर्थः। पूर्वमपि दुःखम्, अनन्तरमपि दुःखम्। भाविसुखदृष्ट्या पूर्वदुःखं सह्यते। भाविदुःखस्य तदानीं ज्ञातुमशक्तयोदास्यते। 'मधु पश्यसि दुर्बुद्धे! प्रपातं नैव पश्यसि' इति खलु न्यायः। एतादृशचिन्तनानां फलान्येव नानाविधानि दर्शनानि, मतानि च। एकैकेनैकैकरीत्या दृष्टत्वात्तानि दर्शनानीत्युच्यन्ते। एवं मतिभेदस्यानिवार्यतया मतानीत्यप्युच्यन्ते॥

तत्र मूलभूतसमस्या त्वियमेव—आत्मनः दुःखित्वं स्वभावः, उत न? यदि दुःखित्वं स्वभावः, तर्हि स्वभावस्य दुरपह्नवत्वात्, कदापि निर्दुःखत्वं न भवेदेव। अतस्तच्चिन्तैव त्याज्या। द्वितीये कल्पे तु तर्हि 'अहं दुःखी' इत्यनुभवः कथं भवति? स न स्वाभाविकः, किन्त्वौपाधिकः, यतः कदाचिदेव दुःखीति यदि, तर्हि। कः उपाधिः? एतदारभ्यैव वादानां नानाविधारंभः। उपाधिः—अविद्याशब्देन, मायाशब्देन, मलशब्देन, संवृतिशब्देन, कर्मशब्देन, मिथ्याज्ञानादिशब्देन, प्रकृतिशब्देन वाभिधीयते। चेतनस्य ज्ञानानन्दस्वरूपत्वात् 'विद्यामयः' इत्युच्यते। तस्य दुःखप्रसक्तिरेव स्वतो नास्ति। तत्स्वरूपमाच्छाद्य दुःखानुभवहेतुत्वात्, विद्याविरोधित्वात् उपाधिः अविद्येत्युच्यते—'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' (कठ.1-2-4) इति श्रुतिः। विषूची=विरुद्धमार्गसूचके एव विद्याविद्ये। 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः। दंद्रम्यमाणाः परियन्ति मूढाः' (कठ.1-2-5) दंद्रम्यमाणाः=परिभ्रमन्तः। 'अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्॥' (श्वे.4-10) 'दैवी ह्येषा गुणमयी मम माया' (गीता.7-14) गुणमयी=त्रिगुणरूपा। 'यथा भवति बालानां गगनं मलिनं मलैः। तथा भवत्यबुद्धानामात्मापि मलिनो मलैः॥' (मां.का.3-8) इति। पाशुपतानामयं मलशब्दः। संवृत्तिशब्दो बौद्धानाम्= 'संवृत्तिः परमार्थश्च' (बो.च.पं) 'संवृत्या जायते सर्वम्' (मां.का.4-57) इत्यादयो द्रष्टव्याः। सन्तु वचनानि विज्ञानं प्रदर्श्यताम्—सुखमेव सहजम्, दुःखं त्वौपाधिकमित्यत्र। किमयं संरंभः—सौषुप्तिकानुभव एव तत्र प्रमाणम्। आपामरम् आ च महाराजम्, आ महापण्डितं च सुप्तोत्थितो जानाति, व्यवहरति च 'सुखमहमस्वाप्सम्' इति। इन्द्रियादीनां सर्वेषां विरतावपि ज्ञायमानमिदं सुखं न हि वैषयिकं भवितुमर्हति। निद्राभङ्गे च महान्तं कोपमनुभवति, कश्मलमनुभवति। कुत इदम्? इत एव तत्; आत्मा तदानीं इन्द्रियमनोबुध्यादिभिरकलुषितः केवलं स्वस्वरूपमात्रेण विराजते। अत आत्मा सुखस्वरूपः। श्रुतिरपि 'तीर्णो हि तदा सर्वान् शोकान्' (बृ.6-3-22) इति। न ह्यात्मापि तदानीं, नासीत् नष्टो वा। 'योऽहं पूर्वमासम्, सुप्तश्च, स एवाहमिदानीं प्रबुद्धश्च' इति हि सर्वोऽपि जानाति। सुषुप्तिविज्ञानं च पूर्वमेव प्रदर्शितम्। ननु 'सता सौम्य तदा संपन्नो भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते, स्वं ह्यपीतो भवति' (छां.6-8-1) इति श्रुत्या, 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' (ब्र.सू.3-2-7) इति सूत्रेण च परमात्मन्येव जीवस्य लयप्रतिपादनात्, सांख्यैश्चेश्वरानङ्गीकारेण सुषुप्तौ तत्र लयासंभवात्, कथं सौषुप्तिकानुभवेन जीवात्मनः आनन्दमयत्वनिर्णयसंभवः? इति चेत्—

अहो कियान् बालिशस्त्वं निद्रान्ति पशवोऽपि हि। पठित्वा पुस्तकं किं ते निद्रान्ति पशवो बत॥

यत्र कुत्र लयस्स्यात्तु सुषुप्त्यनुभवस्समः । नन्वात्मनि लयः स्याच्चेदानन्दानुभवो भवेत् ॥
यत्र कुत्र लयस्स्याच्चेत् आनन्दस्स्यात् कथं वद? कक्ष्याभेदस्त्वात्मनःस्यात् 'स्व'शब्दश्रवणात्तदा ॥

ईश्वरानङ्गीकारेऽपि किमात्मा नाङ्गीकृतस्तैः । 'स्वमपीतो भवति' इति खलु श्रुतिः । स्वात्मन्येव लयः सुषुप्तिः, न त्वीश्वरे लयः । कथं स्वस्मिन्नेव स्वस्य लयो भवेदिति चेत् ;

अस्त्यात्मनो विशुद्धं हि रूपं सुखमयं सदा । तस्मिन्, कलुषितस्त्वात्मा जीवस्तु लयमेष्यति ॥
'पुरुषे त्वेवाविस्तरामात्मा' इति वचनं पुनः पुनः पठ्यताम् ॥

ननु तर्हि सुषुप्तिरेव परमःपुरुषार्थःस्यात् । कथं स्यात्? पशवोऽपि स्वपन्ति । ततोऽयं पश्वर्थ एव स्यात्, न पुरुषार्थः । तर्हि किमुत्तरम्? इदमत्रोत्तरम्—कलुषितात्मनः शुद्धात्मनि लयो हि नानाविधः । मूर्च्छायां मरणेऽप्येवं लयो भवति । अत्राप्यावान्तरसूक्षतारतम्यादिकमनुभवसिद्धम् । पुनर्जन्मप्रसक्तिरहितः संपूर्णलय एव हि परमः पुरुषार्थः । सुषुप्तौ तु संपूर्णतया न लयः, पूर्णलयस्यैव मुक्तित्वात् । उत्थानानन्तरं पुनः सांसारिककष्टाद्यनुभवात्, मुक्तेरपुनरावृत्तिरूपाया सर्वविधदुःख निवृत्तिरूपत्वात् । नानाविधैस्सांसारिकक्लेशैः पराहतस्यात्मनो विश्रान्त्यर्थं किञ्चित्कालं सर्वेभ्यो व्यापारेभ्यो विमुच्य पुनर्नवीकर्तुं परमा(विशुद्धा)त्मैव, प्रकृतिरेव (*Nature*) वा तस्य सुषुप्तिं ददाति । अतस्सुप्तोत्थितः पुनर्नवीकृतो महतोत्साहेन स्वकार्येषु प्रवर्तते । एवमविद्याद्यावृतं सौषुप्तिकं रूपमेव तत्तादृशसुखमयं भासेत चेत्, सर्वकर्मभ्योऽपि विमुक्तं स्वच्छमात्मस्वरूपं कियदानन्दमयं स्यादित्यादि स्वयमभ्यूहनीयम् ॥

सर्वेषां प्राणिनामेव स्वात्मा प्रियतमो भवेत् । इति प्रादर्शि मैत्रेयीब्राह्मणे सोपपत्तिकम् ॥
पर्यायरूपं संदृष्टमानुकुल्यं प्रियं सुखम् । अतस्सिद्धैव सर्वेषां स्वात्मनस्सुखरूपता ॥

अतः मायाविद्याप्रकृत्यादिपदवाच्येनावृतस्य तस्य माययावरणं यदि स्वभावः, तर्हि कथं वा तन्निवर्तनं शक्यम्, स्वभावस्य दुरतिक्रमत्वादिति जीवस्वरूपस्य पुनः स्वच्छत्वसंपादनं कथं भवेदिति चिन्तनीयम् । अस्योत्तरविषयेऽपि सन्त्यभिप्रायभेदाः ॥

**तत्र सांख्याः**—सत्यम्, आत्मा स्वतःस्वच्छः अविद्यादिसंबन्धानर्हश्च । अथापि, दर्पणस्य मुखस्य च संबन्धाभावेऽपि केवलाभिमुख्यमात्रेण, दर्पणे मुखस्य, मुखे च दर्पणमालिन्यादेश्चारोपात्, दर्पणं मुखवदिव, मुखं च मलिनमिव यथा भासते; तथैव प्रकृतिपुरुषयोः समवधानमात्रात्, प्रकृतिगतकर्तृत्वस्य पुरुषे, पुरुषगतचैतन्यस्य च प्रकृतौ प्रतिफलनवशात् 'चेतनोऽहं करोमि' इति व्यवहारः प्रवर्तते । तत्र करोमीति प्रकृतिसान्निध्यनिबन्धनः, चेतनोऽहमिति पुरुषसान्निध्यनिबन्धनः । परस्परारोपात् परस्परविवेकाग्रहप्रयुक्तः विशिष्टारोपमूलकः विशिष्टव्यवहारः । विवेकग्रहणे च 'नाहं करोमि' इति चेतनो जानाति । प्रकृतिरपि तद्विषये उदास्ते । प्रकृतेरौदासीन्यात् पुरुषोऽपि जातविवेकः केवलं साक्षीवासङ्गोदासीनस्वभाव आस्ते । इयमवस्थैव यावच्छरीरपातं जीवन्मुक्तावस्थेत्युच्यते । शरीरे पतिते च, संपूर्णतो विमुक्तः केवलो भवति । ननु शरीरे पतितेऽपि प्रकृतिपुरुषयोरुभयोरपि विभुत्वात्, संबन्धोऽवर्जनीयः । तर्हि मुक्तोऽपि कुतो न संसरेदिति

[सांख्यमतपरीक्षा]

141. नीरूपे बिम्बितत्वं क्व नु भवति; कथं रूपशून्यस्य तत् स्यात्
निर्लेपे संसृतिः का; कथमतिविशदो निष्क्रियश्चैष मुह्येत्।

चेत्, संबन्धमात्रं न संसारहेतुः, किन्तु कर्मवासना। सा निवृत्ता। अतः कथं संसरेत्? तर्हि किं सांख्यमतं समीचीनं मन्यसे त्वम्? सोऽन्यो विषयः। सर्वमुपरि स्पष्टं भविष्यति ॥

प्रकृतमनुस्मरामः। यद्यात्मा संसारार्हः, तर्हि तस्य तस्मान्मोचनं वा कथं संभवति? अतः सः सदैव स्वच्छः। निर्धर्मकः खलु सः। धर्माः सर्वे प्रकृतेरेव। यद्यपि प्रकृतिरपि त्रिगुणात्मिका, न त्रिगुणाश्रया। अथापि प्रकृतिपुरुषयोस्संयोगविशेषकृत एव धर्मधर्मिभावकल्पनादिः, तन्मूलकव्यवहारादिश्च। धर्माणामागन्तुकापायित्वस्य प्रत्यक्षमेव दर्शनात्, ते यदि सहजा आत्मनः, आत्मापि तर्हि तत्तद्धर्मित्वेन, तच्छून्यत्वेन च विकारी स्यादेव, 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति न्यायात्। अतः स सदा मुक्त एव। तस्मात् सूष्टूक्तम् 'तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥' (सां.का.62) इति। परन्तु विवर्तवाद इव व्यवहारः सर्वोऽपि न मिथ्या, किन्त्वौपाधिक इति विशेष इति न विस्मर्तव्यम्॥ ७० ॥

एवं वर्णिते सांख्यमतेऽनुपपत्तीः प्रदर्शयति—**नीरूप इत्यादिना**। दर्पणमुखदृष्टान्तेन पुरुषबुद्धितत्त्वयोः बिम्बप्रतिबिम्बभावः किलोक्तः? **नीरूपे**=रूपरहिते वस्तुनि दर्पणादौ **बिम्बितत्त्वम्**=प्रतिफलितत्वं **क्व नु भवति**=**कुत्र वा** संभवति? ननु सर्वांशे दृष्टान्तदार्ष्टान्तिकयोः साम्यं कुत्रापि न संभवति। अन्यथा चन्द्रमुखयोरपि सादृश्यं न वक्तुं शक्यम्, न हि चन्द्रवदेव मुखं वर्तुलाकारं दृश्यते। अतस्सर्वांशे साम्यापादनं दृष्टान्तवृत्तान्तानभिज्ञताकृतमिति चेत्, सत्यं जानीमः। उच्यतां भवतैव किमंशेऽयं दृष्टान्त इति। दर्पणेऽविद्यमानोऽपि तत्र विद्यमान इव दृश्यते इत्यंशेऽयं दृष्टान्त इति चेत्, दृष्टान्तदार्ष्टान्तिकयोर्मर्यादाव्यवस्था चन्द्रमुखवत् उभयसंप्रतिपन्नतयैव कर्तव्या। तत् कर्तु न शक्यते चेत्, दूषणमनिवार्यमेव। भवदुक्तः बिम्बप्रतिबिम्बभावस्तु लोकदृष्ट्या रूपवतोरेव। अत उच्यते **'नीरूपे बिम्बितत्वं कथम्'** इति। एवं नीरूपस्य बिम्बप्रदर्शकत्वं यथा न भवति, तथैव **रूपशून्यस्य तत्**=बिम्बितत्वम् **कथं स्यात्**? मुखं किल रूपवत्। एवं दर्पणोऽपि रूपवान्। अतः रूपवतो मुखादेः रूपवति दर्पणादौ प्रतिबिम्बं दृश्यते। प्रकृते आत्मनः, बुद्धितत्त्वस्य च नीरूपत्वात् कथं बिम्बप्रतिबिम्बभावः? 'अविद्यमानोऽपि' इति कथनमात्रात् प्रकृतिपुरुषयोस्संबन्धः कथमविद्यमानो भवेत्? शरीरे किल आपादमस्तकं चैतन्यमोतप्रोतमनुभूयते। अतः कथं बिम्बप्रतिबिम्बभावः? एवं—**निर्लेपे**=लेपशून्ये=अत्यन्तोदासीने भवन्मते स्वत एव मुक्ते चैतन्यरूपे आत्मनि **संसृतिः**=संसारबन्धो वा **का**=कीदृशी भवेत्? । किञ्च **अतिविशदः**=अत्यन्तस्वच्छः **निष्क्रियश्च**=लेशतोऽपि चलनशून्यः निर्गुणचैतन्यमात्ररूपः **एषः**=चेतनः **कथम् मुह्येत्**=मोहवशो भवेत्?

**नित्यं वा किं न मुह्येत् उपधिभिरितरैः; वेत्तु भेदं कथं वा**
**को वा मोक्षोऽद्य पुंसः; प्रथममपि न खल्वस्य दुःखादिगन्धः ॥ ७१ ॥**

संसारमोहः खलु कलुषितस्वभावस्य भवेत्; न तु स्वच्छस्यासङ्गोदासीनस्वभावस्य। यदि तत्तादृशस्यापि मोहः, तर्हि **नित्यम्**=सदा **किं वा न मुह्येत्**। तादृशस्वच्छस्वभावस्यापि यदि मोहो भवेत्, तर्हि, मुक्त्यवस्थायामपि तस्य तादृशस्वच्छस्वभावत्वात् मोहः कुतो न भवेत्? ननु प्रकृत्या मोहितः संसारी, प्रकृतेः स्वस्य च भेदाज्ञानात् दुःखमनुभवति। यदा च प्रकृतेर्भिन्नमात्मानं साक्षात्करोति, तदा पुनस्तादृशमोहः न भवेदेवेति, मुक्तो भवतीति चेत्—**इतरैः**=स्वस्माद्भिन्नैः **उपधिभिः**=शरीराद्युपाधिभिः **भेदं वा कथं वेत्तु**=जानीयात्? अथवा **इतरैः उपधिभिः किं वा न मुह्येत्** इति पूर्वेणान्वयः। चैतन्यमात्रस्वरूपः सः **भेदं वा**=शरीरेन्द्रियादिभ्यः स्वस्य भेदं वा **कथं जानीयात्**? न हि ज्ञानं तस्य धर्मो भवन्मते। सदैव निर्लिप्तश्चेत्, **अद्य**=तादृशविवेकानन्तरकाले **अस्य पुंसः**=जीवात्मनः **को वा मोक्षः**? यतः—**अस्य**=नित्यस्वच्छस्य पुरुषस्य **प्रथममपि**=एतादृशप्रकृतिपुरुषविवेकात् पूर्वमपि **दुःखादिगन्धः**=दुःखसंबन्धलेशोऽपि **न खलु** वर्तते; पूर्वमपि निर्लिप्तः, इदानीमपि निर्लिप्तः। एवं सति पूर्वं बद्धः, इदानीं तु मुक्तः इति कथं वक्तुं शक्यम्? अतः सांख्यप्रक्रियात्यन्तमसमञ्जसैव ॥

**सांख्याः खल्वेवं वदन्ति**—प्रकृतिः, पुरुषश्चेति तत्त्वं द्वयमेव। प्रकृतिः सत्त्वरजस्तमोगुणात्मिका, सततपरिणामशालिनी, अचेतना, एका, विभ्वी च। पुरुषः चैतन्यमात्रस्वरूपः, निर्विकारः, अत्रिगुणः, विभुः, नाना च। पुरुषः निर्विकारत्वेन सततैकरूपः, असङ्गोदासीनस्वभावः, अत एव सदैव मुक्तः। प्रकृतेस्तु सततपरिणामित्वेऽपि, जडत्वात् दर्शनशक्त्यादिरहितत्वाच्च न कर्तृत्वादिकं स्वतो वर्तते। प्रलयवेलायां सा समपरिणामवती. सृष्टौ तु विषमपरिणामवती। निर्विकारस्य पुरुषस्य, सततविकारिण्याः प्रकृतेश्च परस्परसान्निध्यप्रयुक्तपरस्परधर्माणामारोपात्, पुरुषः कर्तेव भोक्तेव भवति। प्रकृतिरपि चेतनेव कर्त्रीव च भवति। पुरुषः निष्क्रियः पङ्गुरिव, प्रकृतिस्तु सक्रियापि अन्धवच्च वर्तते। परस्परधर्मारोपात् पुरुषोऽपि गन्तेव, प्रकृतिरपि द्रष्ट्रीव स्वस्वलक्ष्ये प्रवर्तेते। पुरुषस्य लक्ष्यं तु अनादिकालात् प्रवृत्तस्य भोगादेः दूरीकरणेन केवलतयाऽवस्थानमेव। प्रकृतेर्लक्ष्यं तु पुरुषस्य तादृशकैवल्यप्रदानमेव। यद्यपि प्रकृतेः कर्तृत्वम्, पुरुषस्य च भोक्तृत्वं स्वभाव इति क्वचिद्वर्ण्यते; परन्त्विदमपि न केवलायाः प्रकृतेः, न वा केवलस्य पुरुषस्य, सृष्टिप्रलयव्यवस्थाया बन्धमोक्षव्यवस्थाया वा दुर्निरूपत्वप्रसङ्गात्। किन्तु परस्परं मिलितयोरेव। अथापि कर्तृत्वे क्रियांशस्य प्राधान्यात्, क्रियायाः प्रकृतिधर्मत्वाच्च 'कर्तृत्वं प्रकृतेः' इत्युच्यते। यद्यपि प्रकृतेरपि निर्धर्मकत्वात् कर्तृत्वधर्मोऽपि न प्रकृतेस्संभवति। अथापि कल्पितभेदमादाय तथा व्यवहारः। अत इदं शब्दविकल्पमात्रम्। एवमेव भोगे चैतन्यांशस्य प्राधान्यात् 'भोक्तृत्वं पुरुषस्य' इत्युच्यते। भोगः=सुखदुःखानुभवः। सुखदुःखयोः स्वसंवेद्यत्वात् तत्र चैतन्यांशप्राधान्यं स्पष्टम्। एवञ्च संसारः प्रकृतिपुरुषसंसर्गाधीनः। संसर्गश्च न संयोगरूपः, प्रकृतिपुरुषयोर्विभुत्वेन संयोगस्य मुक्तिकालेऽपि

सत्त्वात्। किन्तु परस्परमौत्सुक्यरूपः। प्रकृतिपुरुषविवेकात् परस्परमौत्सुक्यनिवृत्त्या मुक्तौ न संसारसाङ्कर्यप्रसङ्गः इति संक्षेपः ॥

परन्तु, अत्यन्तमसङ्गोदासीनस्वभावस्य निर्विकारस्य चैतन्यमात्रस्वरूपस्य पुरुषस्य कथं बन्धप्रसङ्गः? इत्येव प्रथमं निरूपणीयम्। सर्वेऽपि तीर्थकाराः संसारस्यानादित्वमङ्गीकृत्य, बन्धः कथमासीत्, कदासीदिति न केनापि वक्तुं शक्यमिति वदन्ति। इयमेव समस्या पूर्वस्मिन्नपि श्लोके विचारिता। अस्यास्समस्यायाः दुस्समाधेयत्वादेवानन्तरकाले ईश्वरवाद उद्भूत इति केचन मन्यन्त इत्यप्युक्तमेवानुपदम्। सांख्यानामनीश्वरवादित्वात् कथमुपपादनीयमिति तु वर्तत एव समस्या। ईश्वराङ्गीकारमात्रान्न समाहिता भवतीयं समस्येति सांख्या मन्यन्ते। ईश्वरवादे हि 'संसारमोक्षस्थितिबन्धहेतुः' (श्वे.6-16) इति श्रुतेः, 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' (ब्र.सू.3-2-4) इति सूत्राच्चायमर्थः निरूपित इत्यपि न युज्यते; ईश्वरवादेऽपि जीवकर्मानुगुणमेव ईश्वरः सर्वं करोतीत्येवाङ्गीकारात्, अन्यथा ईश्वरस्य वैषम्यनैर्घृण्यप्रसङ्गात् 'सापेक्षत्वात्' (ब्र.सू.2-1-34) इति सूत्रणाच्चास्त्येवेयं समस्या। 'ईश्वरः प्रश्नातीतः' इति चेत्, प्रकृतिरपि तथैव। को विशेषः? अत एव सांख्यसिद्धान्ते, कथम्? इत्यादिकमप्रायमेव। परंतु सांख्यानां निगुर्णवादित्वादेव दुरुत्तरेयं समस्येत्याचार्यैरुच्यते ॥

ननु 'तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥' (सां.का.62) इति समाहितेयं समस्येति चेत्; जडायाः प्रकृतेः कथं वा बन्धमोक्षादिकमिति न समस्या समाहिता, किन्तु दृढीकृता प्रकारान्तरेण, 'उदरवेदना तु गता, किन्तु शिरोवेदना जाता' इतिवत्। एवमेव जडायाः प्रकृतेः पुरुषविमोक्षनिमित्तं प्रवृत्तिरिति वा कथम्? ननूक्तमेव। अर्धप्रज्ञेन भवता तु नावधृतम्— 'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥' (सां.का.57) इति पूर्णं पठ्यताम्। क्षीरं बालेन पीतं तं पोषयति, न त्वचेतनम्। केवलं क्षीरं कथं पोषयेत्? 'चेतनसान्निध्यादि'त्यस्त्येवेति चेत्, तर्हि 'प्रवृत्तिरज्ञस्य' इति त्यज्यताम्। ननु जडया अयस्कान्तशिलया अयसश्चालनं दृश्यते। तद्वत् अज्ञायाः=जडायाः प्रकृतेः प्रवृत्तिर्युज्यत इति चेत्, तर्हि पुरुषे तद्योग्यतावश्यकी। न हि अयस्कान्तशिला दारु चालयति, किन्तु अय एव। तत् कुतः? तदनुगुणस्वरूपयोग्यतायाः अयसि सत्त्वात्, दारुण्यभावादेवेदं तारतम्यमिति हि वक्तव्यम्। तद्वदेव पुरुषेऽपि तदनुगुणयोग्यतावश्यकी। तदा च पुरुषः सधर्मकः स्यात्। न च दारुणि पुरुषे वा स्वरूपस्यैव तादृशत्वात्तदनुगुणं कार्यमिति न सधर्मकत्वसिद्धिरिति वाच्यम्; एवं तर्हि चैतन्यमात्रस्वरूपस्य मुक्तावप्यनुवर्तमानत्वात्, प्रकृतिः मुक्तमपि पुरुषं न त्यजेदित्यनिर्मोक्षप्रसङ्गः। सर्वं तत्तद्वस्तुस्वभावादुपपद्यत इति चेत्, तर्हि वर्तत एव जागरूकः स्वभाववादः। अथवा सविशेषत्वमेव स्वभाव इत्युच्यताम्। अतः निर्गुणात्मवादे बन्धमोक्षव्यवस्थाया अनुपपत्तिर्दुर्वारा। सविशेषदे तस्या उपपत्तिश्चानुपदमेव प्रदर्शितेति सिद्धान्तसंक्षेपः ॥ ७१ ॥

एवं जडायाःप्रकृतेः जगत्कारणत्वानुपपत्त्यादिकं उपपाद्य, 'विप्रतिषेधाच्चासमञ्जसम्' (ब्र.सू.2-2-9) इतिसूत्रेण सांख्यमते प्रदर्शितां विप्रतिषिद्धामेकां मोक्षानुपपत्तिं च प्रदर्श्य, अन्यमपि विप्रतिषेधं

[सांख्यमतेऽनुपपत्तिप्रदर्शनम्]

142. **व्यापिन्येकाऽपि सांख्यैः प्रकृतिरभिहिता; सर्वसाधारणी सा**
**व्याप्ता जीवाश्च सर्वे; प्रकृतिपरिणतिर्भोग एषामभीष्टः।**
**सर्वे सर्वस्य भोगाः स्युरिह तत इमे सन्निधानादिसाम्यात्**
**बुद्धीच्छाद्यं च सर्वं प्रकृतिगतमतो न व्यवस्था ततोऽपि ॥ ७२ ॥**

प्रदर्शयति—व्यापिन्येकापीत्यादिना। **सांख्यैः**=सांख्यसिद्धान्तिभिः **प्रकृतिः व्यापिनी, एकापि**=विभुपरिमाणवती एकैवेति च **अभिहिता। एवं सा**=एतादृशी प्रकृतिः **सर्वसाधारणी च अभिहिता। सर्वे च जीवाः व्याप्ताः**=विभुपरिमाणवन्तः **अभिहिताः। एषाम्**=जीवानाम् **भोगः**=सुखदुःखाद्यनुभवः **प्रकृतिपरिणतिः**=प्रकृतेः परिणामविशेषरूपः **इष्टः**=तेषां संमतः। एवं तन्मतानुवादः कृतः॥

'त्रिगुणमविवेकि विषयस्सामान्यम्' (सां.का.11) इति साधर्म्यवर्णनप्रकरणे 'सामान्यम्' एकं साधर्म्यमभिहितम्। सामान्यम्=सर्वसाधारणम् इत्यर्थः। सा च प्रकृतिः विभ्वीत्यपि 'भेदानां परिमाणात्' (सां.का.15) इत्यत्रोक्ता। भेदाः=महदादयः। तेषां परिमाणात्=परिमितत्वात् इत्यर्थः। 'परिमितं महदादिकं अपरिमितोपादानकम्' इति महदाद्युपादानभूतायाः प्रकृतेः अपरिमितत्वम्=विभुत्वमुक्तम्। एवं जीवानां अणुत्वे युगपत् 'पादे मे वेदना, शिरसि च वेदना' इत्यनुभवो न स्यात्, अणोर्जीवस्य युगपत् स्थानद्वयावस्थानासंभवात्। निर्धर्मकत्वात्पुरुषस्य धर्मभूतज्ञानव्याप्त्या निर्वाहोऽपि न संभवति। शरीरानुगुणपरिमाणत्वेऽनित्यत्वप्रसङ्गः। अतः जीवास्सर्वेऽपि नैयायिकमत इव विभुपरिमाणा इत्युच्यन्ते। एवम् 'पुरुषोऽस्ति भोक्तृभावात्' (सां.का.17) इति पुरुषस्य भोक्तृत्वमुक्तम्। तत्र भोगः स्वतः न पुरुषधर्मः, पुरुषस्य निर्धर्मकत्वात्। किन्तु भोगादयोऽपि प्रकृतेरेव धर्माः अभिधीयन्त इति पूर्वं वर्णितम्। ननु 'पुरुषोऽस्ति भोक्तृभावात्'इत्यनेन भोक्तृत्वं पुरषधर्म उक्तः, स कथं प्रकृतिधर्मः? इति चेत्, अत्रापि वक्तव्यं पूर्व(श्लो.71) मुक्तमेव। भोक्तृत्वमपि न केवलपुरुषधर्मः, पुरुषस्य निर्धर्मकत्वात्। एवं कर्तृत्वमपि न केवलायाः प्रकृतेः, तस्या अपि निर्धर्मकत्वात्। किन्तु सुखदुःखस्वरूपभोगस्य स्वसंवेद्यत्वेन, भोगे चैतन्यस्य प्राधान्यात्तस्य पुरुषधर्मत्वोक्तिः। कर्तृत्वे क्रियायाः प्राधान्यात्, प्रकृतिधर्मत्वोक्तिः। वस्तुतस्तु कर्तृत्वभोक्तृत्वादिकं प्रकृतेरेव। तथा च प्रकृतिः एका विभ्वी च। पुरुषास्तु विभवः अनेके। पुरुषाणां भोगस्तु न स्वतः, किन्तु प्रकृतिसंबन्धादेव। प्रकृतेः कर्तृत्वमपि न स्वतः, किन्तु पुरुषसंबन्धादेवेति सारसंग्रहः॥

**अस्त्वेवम्**। तेन का हानिरित्यत्र—**ततः**=एवं प्रकृतेरेकत्वात्, विभुत्वाच्च, पुरुषाणामनेकत्वात् विभुत्वाच्च **इह**=एतन्मते **त इमे भोगाः प्रकृतिगताः सन्निधानादिसाम्यात्**=सन्निधानस्य, तत्प्रयुक्तस्य पुंसि स्वधर्मारोपस्य च समानत्वात्, **सर्वे भोगाः सर्वस्य**=जात्येकवचनम्, सर्वेषामपि पुरुषाणाम्, **स्युः**=भवेयुरेव। ननु प्रकृतेरेकत्वेन सर्वसाधारणत्वेऽपि, बुद्धितत्त्वस्यानेकत्वात्, पुरुषाणां बुद्धिभेदात्, तन्मूलकेच्छादिभेदाच्च व्यवस्थोपपत्तिरिति चेत्—**बुद्धीच्छाद्यं सर्वम्**=बुद्धीच्छासुखदुःखादिकं सर्वम् **प्रकृतिगतम्**=

[जीवन्मुक्तिपरीक्षणम्]

143. **मुक्तिः प्राणाक्षदेहादिभिरुपधिभिरत्यन्तविश्लेषरूपा**
**जीवद्भावोऽपि तैस्सङ्गम इति विहतेर्जीवतस्सा कथं स्यात् ।**

प्रकृतिपरिमाणरूपत्वात् प्रकृतिधर्मा एव, प्रकृतिस्तु साधारणी एका । **अतः**=एतस्मात्कारणात् **ततोऽपि**= बुद्धीच्छादिभिरपि **व्यवस्था**=सुखदुःखादिव्यवस्था **न**=न सिद्ध्यति ॥

सांख्याः पुरुषनानात्वं वदन्ति । तत्र च कारणम्—'नानात्मानो व्यवस्थातः' (वै.सू.) इति सूत्रोक्तव्यवस्थाम्—'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुष बहुत्वं सिद्धम्' (सां.का.18) इत्यङ्गीकुर्वन्ति । पुरुषस्य साधनप्रकारमपि 'पुरुषोस्ति भोक्तृभावात्' (सां.का.17) इति भोक्तृत्वाश्रयतया प्रतिपादयन्ति । इदं द्वयमपि परस्परविप्रतिषिद्धम् । भोक्तृत्वं हि वस्तुतः पुरुषस्य नास्ति, तस्यासङ्गोदासीनत्वात्, किन्तु प्रकृतेरेव । प्रकृतिस्तु एका, अत एव सर्वसाधारणी च । एवञ्च बिम्बप्रतिबिम्बभावेन प्रकृतिधर्मः यदा पुरुषे भासते, तदाऽविशेषेण सर्वेष्वपि पुरुषेषु भासेत, प्रकृतेरेकत्वाद्विभुत्वाच्च । तथा च भोगव्यवस्थाया दुर्निरूपत्वात् तन्मूलकपुरुषभेदोऽपि दुर्निरूपः । अतः परस्परविरुद्धमुच्यते प्रकृतेर्धर्मः भोगः, पुरुषाश्चानेक इति । न च प्रकृतेरेकत्वेऽपि बुद्धीच्छादेः प्रतिपुरुषं भिन्नतया दर्शनात्, तद्भेदेन भोक्तृत्वभेदात् पुरुषभेदोपपत्तिरिति वाच्यम्; बुद्धीच्छादेरपि प्रकृतिपरिणामरूपत्वेन, प्रकृतिधर्मत्वेन, तस्याश्चैकत्वात्, बुद्धीच्छादीनामपि पुरुषभेदेन भेदासंभवात् व्यवस्था दुर्निरूपैवेत्यसामञ्जस्यं दुष्परिहरमेव । एवञ्च सांख्यमते असंकीर्णसंसारव्यवस्था, मोक्षश्च दुर्निरूपौ ॥

**वस्तुतस्तु**—तन्मते प्रकृतिः 'अव्यक्त'पदेनोच्यते, महदादयस्तु 'व्यक्त'पदेनेति 'व्यक्ताव्यक्तज्ञविज्ञानात्' इत्यादिनिर्देशात् स्पष्टम् । 'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव' (गी.11-28) इत्यादौ जीवानां गतागतादिविषये अयं न्यायः प्रदर्शितः । एवञ्च प्रकृतेः अव्यक्तत्वात्, आत्मभेदेन सा भिद्यते न वा? इत्यादिकं वागाद्यतीतमित्यभिप्रायेण 'सामान्यम्' इत्युच्यते । यथा वा सिद्धान्ते 'वाङ्मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायां' (6-8-6) इति परमात्मनि सर्वेषां जीवानामुत्क्रान्तिकाले लयेऽपि न साङ्कर्यम्, तथोपपद्यत इति तेषामाशयः । परन्तु—परमात्मनः सर्वज्ञत्वात्सर्वशक्तत्वात्सर्वव्यवस्थापकत्वाच्च सर्वमुपपद्येत । प्रकृतेस्तु जडत्वात्तथा नोपपद्यत इत्याचार्याणामाशयः॥७२॥

एवं सांख्यमते मोक्षप्रक्रियां निराकृत्य, निर्विशेषवादिनामिवैतत्संमतां जीवन्मुक्तिप्रक्रियामपि निराकरोति—**मुक्तिरित्यादि** । मुक्तिर्नाम सकलबन्धनिवृत्तिः । सा च ब्रह्मज्ञानात्, अथवात्मतत्त्वज्ञानात् । आत्मतत्त्वज्ञानं ब्रह्मज्ञानं वैतच्छरीरावच्छेदेनैव वक्तव्यम्, न तु शरीरपातानन्तरम्, शरीरपातानन्तरं ज्ञानसाधनानामभावात् । एवञ्च यदैतच्छरीरावच्छेदेन ज्ञानं जायते, तदैव सर्वकर्मणां क्षय आवश्यकः—'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' (छां.4-14-3) 'तद्यथेहेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छां.5-24-3) 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते'

**आपस्तम्बादयश्च श्रुतिगतिभिरिमां युक्तिभिश्च व्युदासुः**
**जीवन्मुक्तादिशब्दः क्वचिदुपचरितस्तत्समावस्थयैव ॥ ७३ ॥**

(गीता.4-37) इत्यादिदर्शनात् । एवं ज्ञानोत्पत्तिसमनन्तरमेव सर्वकर्मक्षयस्यावश्यकतया, शरीरत्यागात् पूर्वमेव मुक्तिसिद्ध्या, जीवनकाल एव मुक्तिरिति जीवन्मुक्तिरिति निर्विशेषाद्वैतिनो वदन्ति । एवं सांख्या अपि 'चक्रभ्रमिवद् धृतशरीरः' (सां.का.67) इति जीवन्मुक्तिं वदन्ति । तदेतद्दूषयति—**मुक्तिः प्राणाक्षदेहादिभिरुपधिभिः अत्यन्तविश्लेषरूपा=प्राणाः**=पञ्चप्राणाः, मुख्यः प्राणश्च, **अक्षाणि**=इन्द्रियाणि, **देहादिभिः**=देहमनःप्रभृतिभिः, आदिपदेन कर्मवासना ग्राह्या; **उपधिभिः**=उपाधिभिः **अत्यन्तम्**=संपूर्णतया **विश्लेषरूपा**=दुःखानाम्, दुःखहेतूनां च प्राणादीनाम् संपूर्णनिवृत्तिरूपा मुक्तिः, न तु कतिपयानां विश्लेषरूपा । कतिपयानां विश्लेषस्तु चेतनानां तदा तदा भवत्येव । न हि ते तदानीं मुक्ता इति कश्चिदभ्युपैति । अतः समस्तबन्धनिवृत्तिरेव मुक्तिः । **जीवद्भावोऽपि**=जीवनमपि **तैः**=उक्तैः प्राणादिभिस्सर्वैरपि **सङ्गमः**=संबन्ध एव । 'जीव प्राणधारणे' इति हि धातुः । **इति**=इत्येवं **विहतेः**=परस्परं विरोधात् **जीवतः**=शरीरादिमतः **सा**=शरीरादिवियोगरूपा मुक्तिः **कथं स्यात्?** । 'वन्ध्यापुत्र'शब्दादिवत् 'जीवन्मुक्ति'पदमेव व्याहतार्थकम् । अत एव—**आपस्तम्बबादयश्च**=आपस्तम्बादिमहर्षयोऽपि **इमाम्**=जीवन्मुक्तिम् **श्रुतिगतिभिः**=श्रुतिक्रमैः **युक्तिभिश्च व्युदासुः**=निराचक्रुः । 'वन्ध्या'शब्दः 'पुत्र'शब्दश्च यथा परस्परं न मिलतः, परस्परविरोधादेव, एवमेव 'जीवन्'शब्दः 'मुक्ति'शब्दश्च न मिलतः । अत एव आपस्तम्बप्रभृतयः महर्षयः 'बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्, बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत' (आ.ध.सू.2-24-18) इत्यादिना जीवन्मुक्तिं निराचक्रुः । बुद्धे=बुद्धः=प्रबुद्धः, आत्मज्ञानजननमात्रेण क्षेमप्रापणम्=मुक्तेः प्राप्तिः इति यत्, तत् शास्त्रैः=श्रुत्यादिभिः विप्रतिषिद्धम्=निराकृतम् । आत्मज्ञानजननमात्रेण जीवः न मुक्तो भवतीति तात्पर्यम् । कुतः? बुद्धे क्षेमप्रापणं चेत्=ज्ञानजननमात्रेण तदैव यदि मुक्तिः, तर्हि इह=अस्मिन्नेव लोके दुःखम् लेशतोऽपि नोपलभेत=नानुभूयेत । आत्मज्ञाने जातेऽपि, शरीरं यावत्पर्यन्तमनुवर्तेत प्रारब्धकर्मवशात्, तावत्पर्यन्तं दुःखानुभवोऽवर्जनीय एव । दुःखानुभवे विद्यमाने, स कथं मुक्तो भवेत् । अतः लेशतः कर्मसद्भावेऽपि मुक्तिशब्दार्थो न भवेदेव । अतो जीवन्मुक्तिः न प्रामाणिकी ॥

ननु 'तमेवं विद्वानमृत इह भवति' (पु.सू.) इत्यादौ इह=अत्रैव अमृतः=अमृतत्ववान् भवति इति अत्रैवामृतत्वं श्रूयते । एवं 'अत्र ब्रह्म समश्नुते' (कठ.2-6-18)(बृ.6-4-7) इत्यादौ अत्र=अस्मिन्नेव लोके ब्रह्म समश्नुते=अनुभवति इति कथनात् 'ब्रह्मानुभवमेव मुक्तिमाचक्षते' (ब्र.सू.भा. 1-2-12) इत्यभिधानाच्च शरीरसद्भावदशायामेव मोक्षः अङ्गीकर्तव्यः । 'जीवन्मुक्ता भवन्त्येते' इत्यादौ कुत्रचित् जीवन्मुक्तिपदप्रयोगस्यैव दर्शनाच्च कथं निराकरणमिति चेत्, तत्राह—**जीवन्मुक्तेत्यादि । क्वचित्**=कुत्रचित् प्रामाणिकैः प्रयुक्तः **जीवन्मुक्तादिशब्दः**=आदिपदेन इहामृतोभवतीत्यादि ग्राह्यम् । **तत्समावस्थया**=मुक्तितुल्यावस्थया **उपचरित एव**=औपचारिकप्रयोगरूप एव । 'वर्तमानसामीप्ये वर्तमानवद्वा'

इत्यादि प्रसिद्धमेव किल । गङ्गासामीप्याभिप्रायेण 'गङ्गायां घोषः' इत्यादिप्रयोगा अपि प्रसिद्धाः किल । तद्वदत्र मुक्तेरतिसन्निहितत्वाद्वा, लेशत एव कर्मणो विद्यमानत्वेन मुक्ततौल्याद्वा औपचारिकः 'मुक्त' शब्दः अवगन्तव्यः ॥

ननु 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.1-10) इति अन्ते=शरीरपातकाले भूयः=पुनरपि विश्वमायाया निवृत्तेरभिधानात्, पूर्वं कतिपयकर्मणां निवृत्तिः, भूयश्च=पुनश्च अन्ते=शरीरत्यागवेलायाम् विश्वमाया-निवृत्तिः—इति श्रवणात्, कर्मणां निवृत्तिः कालद्वये वर्तत इति ज्ञायते । तेन शरीरारंभकप्रारब्धकर्मणामन्तकाले निवृत्तिः, इतरेषां सर्वेषां ज्ञानोत्पत्तिसमनन्तरमेव निवृत्तिः इति जीवन्मुक्तावस्था श्रुतिसिद्धेति चेत्,

अहो! बलवती ह्याशा जीविते सहजो नृणाम् । कुशकाशावलम्बेन जिजीविषसि किम्? बत! ॥

परं तु, श्वेताश्वतरश्रुतिरियं निर्विशेषवादस्याशनिप्रायैव, यत्र भगवतो गुणानामनन्तत्वं स्वाभाविकत्वं च कण्ठत एवोच्यते 'परास्य शक्तिर्विविधैव श्रूयते **स्वाभाविकी** ज्ञान बलक्रिया च' (श्वे.6-8) इति । अतः पूर्वोक्तवाक्ये 'भूयः'इत्यस्य पूर्वेणैवान्वयः । 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्याभिधानाद्योजनात्तत्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः ॥'(श्वे.1-10) इति पूर्णो मन्त्रः । पूर्वार्धं तु निर्विशेषवादविरुद्धं स्पष्टम् । 'आवृत्तिरसकृदुपदेशात्' (ब्र.सू.4-1-1) इति आवृतिः सूत्रसिद्धा । सा अभिध्यानादावभिधीयते 'भूयः' इत्यनेन । ननु किमयं मुधाग्रहः? किं कर्माणि सर्वाण्यपि युगपदेव नश्येरन्। सञ्चितानि तथा नश्येरन्, प्रारब्धानि तु क्रमशः खलु नश्येरन् । अतः प्रारब्धकर्मव्यतिरिक्तानां ज्ञानेन युगपन्नाशो भवति । प्रारब्धकर्मणस्तु शरीरावसाने खलु नाश इति चेत्, सत्यम्—

विस्मृत्य स्वमतं साधो! ब्रवीषि किल, कर्मणाम् । कथं वा क्रमशो नाशःसर्वमिथ्यात्ववादिनाम् ॥

ननु 'भूयः'पदस्योक्तरीत्यान्वयो भवतु कामम् । 'अन्ते विश्वमायानिवृतिः' इति कथनादेव, पूर्वं कतिपयमायानिवृत्तेर्लाभादस्मदिष्टार्थलाभ इति चेत्; अयि भोः! कतिवारं वक्तव्यम् । युगपदेव सर्वमायानिवृत्तिर्न भवेदेव । अतः अन्ते=शरीरावसान एव सर्वमायानिवृत्तिः इति जगन्मिथ्यात्ववादिनां न सङ्गच्छते, किन्तु जगत्सत्यत्ववादिनामेवेत्युक्तमेव । रज्जुसर्पभ्रमः सर्पज्ञानेन किञ्चिदेव निवर्तते किम्? अतो जगत्सत्यत्ववादिनामेवेदं सर्वं सङ्गच्छेतेत्यसकृदुक्तम् । तर्हि जगत्सत्यतावादिभिः कथं जीवन्मुक्तिर्निराक्रियत इति चेत्, उक्तमेवोत्तरम् 'जीवन्मुक्त' पदमौपचारिकमिति । वस्तुतस्तत्रैव तेषामप्यन्ते पर्यवस्यति ॥

न ह्यन्धकारो दीपेन क्रमशो विनिवर्तते । तद्वदेवेदमज्ञानं नश्येत् ज्ञानेन कृत्स्नशः ॥

ननु अज्ञानं सर्वं नष्टमेव । बहुकालादनुवृत्ता तु वासना कथं सकृन्नश्येत्? इति चेत्—तर्हि स्याद्वासना सत्या, ज्ञानेनानिवृत्तत्वात्; ज्ञाननिवर्त्यत्वान्मिथ्यात्वस्य । श्रुतावपि 'विश्वमाया'पदमेव वर्तते, न मायावासनेति । वासनाया अपि मायाकार्यत्वात् मायाशब्देनाभिधानमिति चेत्तर्हि मायया सहैव निवृत्ति-रवर्जनीया । अतो जगन्मिथ्यात्ववादे जीवन्मुक्तिर्न समर्थयितुं शक्या ॥

[बाधितानुवृत्तिनिरासः]

144. चन्द्रैकत्वादिबुद्ध्या न हि विलयमियाच्चक्षुरर्थादिदोषः
स्याद्बोधेऽपि द्विचन्द्रप्रभृतिषु हि ततो भ्रान्तिमात्रानुवृत्तिः ।
विस्रम्भाभावतः स्यात् फलमपि; न तु ते जाघटीति द्वयं तत्
ब्रह्मान्याशेषबाधादनतिबलतया बाध्यतो बाधकस्य ।। ७४ ।।

ननु जगन्मिथ्यात्ववादे एवं दोषेऽपि, सांख्यैर्जगत्सत्यत्वाङ्गीकारात् नेयमनुपपत्तिरिति चेत्, वासनानुवृत्तेरङ्गीकारात्संपूर्णमुक्तिर्न भवेदेव । मतद्वयस्यापि निर्विशेषवादित्वात् भ्रमासंभवस्तुल्य एव । अतश्चैतन्मतेऽपि जीवन्मुक्तिपदमौपचारिकमेवेति स्पष्टम् ।। ७३ ।।

**अन्धस्य जात्यन्धेन यष्टिप्रदानवत्** अप्रामाणिकाया जीवन्मुक्तेस्समर्थनायाप्रामाणिकतमां बाधितानुवृत्तिं तदुक्तां निराकरोति— **चन्द्रैकत्वेत्यादिना। चन्द्रैकत्वादिबुद्ध्या**= 'एकश्चन्द्रः' इत्यादिप्रमात्मकज्ञानेन प्रथममेव विद्यमानेन **चक्षुरर्थादिदोषः**= 'द्वौ चन्द्रौ' इति भ्रमहेतुभूतः अङ्गुल्यवष्टंभादिः चक्षुरिन्द्रियगतदोषो वा, अर्थगतदूरत्वादिरूपो वा दोषः । चक्षुश्च अर्थश्चेति द्वंद्वः । 'चन्द्रैकत्वादि' इत्यादिपदेन चन्द्राल्पत्वादिभ्रमाणां ग्राह्यतया, तत्र दूरत्वादिदोषाणाम् 'अर्थादि' इत्यादिपदेन ग्रहणम् । **विलयम्**=नाशम् **न हि इयात्**=न हि प्राप्नुयात् । आद्येऽपि द्विचन्द्रादिभ्रमस्थलेषु **ततो हि**=अर्थगतदोषस्य बाधकज्ञानानिवर्त्यत्वादेव हि **भ्रान्तिमात्रानुवृत्तिः**= 'द्वौ चन्द्रौ' इत्याद्यन्यथादर्शनस्य केवलम् अनुवृत्तिः, न तु भयादीनाम् **स्यात्** । **विस्रंभाभावतः**= 'चन्द्रः एकः' इति निश्चयस्य दृढस्य पूर्वं सत्त्वात् 'द्वौ चन्द्रौ' इति दर्शने विश्वासस्याभावात्, प्रत्युत 'अङ्गुल्यमवष्टम्भमूलमिदं द्विचन्द्रदर्शनम्' इति निर्णयस्य च सत्वात् **फलमपि**=उत्पन्ने ज्ञाने 'इदं ज्ञानं भ्रमः' इति निश्चये यत्फलम् भयाद्यभावः, तदपि स्यात् । प्रकृते इदं सर्वं न घटते । यतः— **ते तु**=सर्वमिथ्यात्ववादिनस्तव तु **तद्द्वयम्**=भ्रान्त्यनुवृत्तिः, भयाद्यभावश्च **न जाघटीति**=सर्वथा न घटते । कुतः? इति प्रश्ने 'तु'पदेन सूचितमर्थं प्रकटयति— **ब्रह्मान्याशेषबाधात्**=ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वेन, ब्रह्मज्ञानेन मिथ्यादर्शनस्य, तद्धेतोश्च सर्वस्यापि बाधस्यावश्यकत्वेन भ्रमस्य, तद्धेतोरविद्यायाश्चानुवृत्तिः न घटते । ननु मिथ्यादर्शनहेतुभूता भेदवासना सृष्टेरारभ्यानुवर्तमाना दृष्टा, संसारस्यानादित्वात् । तन्निवर्तकं ब्रह्मज्ञानं नूतनमिदानीमेवोत्पन्नम् । अत इदानीमुत्पन्नं ज्ञानं दुर्बलम् । अतो झटिति तदैव भेदभ्रमनिवर्तनसमर्थं न भवति । अतः एकदैव सर्वोऽपि भ्रमो न निवर्तत इत्यत्र— **अनतिबलतयेत्यादि। बाध्यतः**=बाध्यजगद्भ्रमापेक्षया **बाधकस्य**= ब्रह्मज्ञानस्य **अनतिबलतया**=अधिकबलवत्त्वस्य कदाप्यसंभवात् इदमपि **ते न जाघटीति** इत्यन्वयः ।।

अत्रेदं संपिण्डितं तात्पर्यम्— वस्तुतः 'जीवन्मुक्ति'पदे 'मुक्ति'पदं किञ्चिदुपचरितार्थकमेव तेषामपि संमतम् । न हि पूर्णमुक्तितुल्या जीवन्मुक्तिः । तन्मते 'विदेहमुक्ति'पदेन हि पूर्णमुक्तिः व्यपदिश्यते । विदेहा=देहवियोगवती देहरहिता मुक्तिरित्यर्थः ।। जीवन्मुक्तिः=सदेहमुक्तिः। एवञ्च परस्परविरुद्धे सदेहत्वविदेहत्वे एकस्या एव मुक्तेर्विशेषणे न भवितुमर्हतः । अतः सदेहमुक्तिपर्यायं जीवन्मुक्तिपदं यदि मुख्यार्थकम्,

तदा 'विदेहमुक्ति'रित्यत्र विदेहपदं मुक्तिपदं वा गौणार्थकं वक्तव्यम् 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छां.6-14-2) इति श्रुतिः शरीरवियोगसमनन्तरकालिकीं मुक्तिं वदति । तस्येत्यत्र तच्छब्दः पूर्ववाक्योक्तं आचार्यादधिगतोपदेशेन ब्रह्मविद्यायां सिद्धं पुरुषं वक्ति । एवमाचार्यादधिगतब्रह्मविद्यासिद्धस्य पुरुषस्य चिरम्=विलम्बः तावदेव=तावानेव । यावान् विलम्बः? इत्यत्र 'यावत् न विमोक्ष्ये' इति । शरीरात् यावत् न विमुक्तो भविष्यामि, तावानेव विलम्बः=संसारसंबन्धः । अथ=शरीरविमोक्षसमनन्तरमेव संपत्स्ये=परमात्मना संपत्तिं प्राप्स्यामि?=मुक्तो भविष्यामीत्यर्थः। एवञ्च शरीरसंबन्ध एव बन्धः, शरीरविरह एव मोक्ष इत्यर्थः सिद्धः । एवं सति 'जीवन्मुक्तिः' इत्यत्र जीवनम्=शरीरसंबन्धः, मुक्तिः=शरीरसंबन्ध-विरहः । द्वयं च स्पष्टं परस्परविरुद्धम् । अतः मुक्तिशब्दार्थः त्याज्यः, अथवा जीवन्शब्दार्थः त्याज्यः। द्वयमपि यदि न त्यज्यते, तदा मुक्तावेव शरीरसंबन्धोऽवर्जनीय इत्यायाति । एवं सति 'विदेहमुक्ति' पदे विदेहपदं गौणार्थकं वक्तव्यम् । अथवा मुक्तिपदं वा गौणार्थकं वक्तव्यम् । एवं सति सदेहमुक्तिः, विदेहमुक्तिश्चैकैव स्यात् । तत्र विदेहमुक्तेरेव परमलक्ष्यत्वात्, तत्पदे लक्षणा न युक्तेति सदेहमुक्तिपद एव लक्षणाङ्गीकृता । ततश्च जीवन्मुक्तिर्न मुख्येति तादृशगौणमुक्तेरितरैरप्यङ्गीकारात् न कश्चन विशेषः ॥

एवं वस्तुतत्त्वे सत्यपि **जात्यन्धकुमारमृति**न्यायेन केचन जीवन्मुक्तिसमर्थनाय बाधितानुवृत्तिं समर्थयन्ति । 'चन्द्रः एक एव' इति सुदृढे निश्चये सत्यपि, अङ्गुल्यवष्टंभादिना द्वौ चन्द्रौ दृश्येते इति सर्वानुभवसिद्धम् । अत्र बाधकज्ञानसत्वात् द्विचन्द्रज्ञानं भ्रम इति स जानाति । एवमेव तत्त्वमस्युपदेशेन विश्वस्य सर्वस्य मिथ्यात्वज्ञाने जातेऽपि, लेशतो वासनाया अनुवृत्त्या जगद्दर्शनेऽनुवर्तमानेऽपि, जगन्मिथ्यात्व-ज्ञानस्य सुदृढत्वात् तस्य बन्धो न भवति । स एवायं जीवन्मुक्त इति । तदेतन्न सङ्गच्छते, दृष्टान्तस्य विपरीतत्वात् ; यतस्तत्र 'एकश्चन्द्रः'इति ज्ञानेन चन्द्रद्वित्वभ्रमो न निवर्तेत । ज्ञानेनाज्ञानं बाध्यते, न तु अङ्गुल्यवष्टंभदोषोऽपगच्छति । अतश्च द्विचन्द्रभ्रमोऽप्यनुवर्तते । प्रकृते तु ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वात्, ब्रह्मज्ञानेन दोषस्य सर्वस्यापि निवृत्तेरावश्यकत्वात्, भ्रमस्यानुवृत्तिर्दुरुपपादा । यद्यनुवृत्तिः स्यात्कदापि न निवर्तेति जीवन्मुक्तिरेवात्यन्तिकी मुक्तिःस्यात् ॥

ननु संसारहेतुभूताया अविद्यायास्समग्रतो निवृत्तत्वात् नास्त्येव तस्य संसारबन्धः । अथापि सृष्टेरारभ्यैतावत्कालं बहुजन्मस्वभ्यस्तत्वात् भेददर्शनाभ्यासजन्या भेदवासनानुवर्तेतैव । अतश्च तादृशभेद-वासनानिवृत्तयेऽभेदभावनादाढर्ध्याय किञ्चिदिव विलम्बोऽनिवार्यः । यथा वा निवृत्तेऽपि सर्पभ्रमे भयादिलेशः, तन्मूलककम्पादिकञ्चानुवर्तते, अथापि पूर्वस्थित्यपेक्षया सर्पाभावज्ञानसत्वान्न भ्रमानुवृत्तिः, तद्वदेव मध्यस्था-वस्था संसारमोक्षयोः जीवन्मुक्तावस्थेत्युच्यते । यथा वा घटनिर्माता कुलालो दण्डेन चक्रं भ्रामयित्वा दण्डं निरस्य घटं करोति । चक्रमपि दण्डमन्तरापि भ्रमदेव वर्तते वेगवशात् किञ्चित्कालम् । तद्वदत्रापि संसारदर्शनसत्त्वेऽपि बन्धाभावात्स जीवन्मुक्त उच्यते इति चेत्, इदमपि न क्षोदक्षमम् । दृष्टान्ते सर्वत्र रज्जुसर्पादेः प्रातिभासिकत्वम्, तद्धेतुभूतदोषादेः भ्रमकार्यभयकम्पादेः व्यावहारिकसत्यत्वमिति, भ्रमनिवृत्तावपि तत्कार्यानुवृत्तिर्युक्ता । चक्रभ्रमणस्थले तु वेगस्य, भ्रमणस्य चेत्युभयोस्सत्यत्वाद्युज्यते सर्वम् । भवन्मते तु

[मुक्तिवादोपसंहारः]

145. **स्वातन्त्र्यं ब्रह्मणैक्यं पशुपतिसमतां वासनोच्छेदमात्रं**
**धीसन्तानप्रणाशं निजमतिसुखयोर्नित्ययोः सन्निकर्षम्।**

ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वात्, ब्रह्मज्ञानेन निवृत्तिरनिवार्या। अत इदं सर्वं केवलमात्मवञ्चनामात्रम्। भेदवासनापेक्षयाऽभेददर्शनस्याल्पकालत्वादित्यादिकं तु दुरवस्थम्, अभेददर्शनाभ्यासकालं यावत्भेदवासनाया अपि सहैवानुवर्तमानत्वात्, कदाप्यभेदर्शनस्य भेदवासनापेक्षयाधिकबलवत्त्वस्य न संभव इति, अनिर्मोक्षप्रसङ्ग एव। तदिदमुक्तम्, 'अनतिबलतया बाध्यतो बाधकस्ये'ति। अतस्तन्मते जीवन्मुक्तिर्दुस्साधा॥

ननु भवन्मतेऽपि जगतस्सत्यत्वेऽपि सांसारिकसुखादेः भ्रमत्वेन मिथ्यात्वावश्यंभावात्, क्रमेणैव निवृत्तिरावश्यकीति दोषस्समान इति शङ्क्यम्; सांसारिकसुखस्य बौद्धमत इव भ्रमत्वाभावात्। परं तु तस्यात्यल्पत्वात् तत्त्यागः। तर्हि अल्पे महत्त्वबुद्धिः भ्रम एव किल। सोऽपि क्रमश एव निवर्तेतेति दोषस्तदवस्थ एवेति चेत्, पित्तोपहतस्य क्षीरे तिक्तत्वभ्रमवत्कर्मौपाधिकं तत्। भ्रमकारणानां सत्यत्वेऽपि व्याधिनिवृत्तौ क्रमेण तिक्तत्वबुद्धिनिवृत्तिवदेव बन्धनिवृत्तिरपि क्रमेणैवेति सर्वमुपपद्यते॥

ननु सिद्धान्तेऽपि 'अत्र ब्रह्म समश्नुते' (कठ.2-6-14) इत्यादिकमुपासनाकालिकब्रह्मानुभवाभिप्रायमित्यङ्गीकारात् किमिति 'जीवन्मुक्ति'पदे प्रद्वेष इति चेत्;

अहो! कथं बोधनीयो बालिशस्त्वं न बुध्यसे। स्मृतावायान्ति वाल्मीकिवचनान्यत्र पश्यत॥

'यदन्तरं सिंहसृगालयोर्वने यदन्तरं स्यन्दनिकासमुद्रयोः। सुराग्र्यसौवीरकयोर्यदन्तरं तदन्तरं वै तव राघवस्य च॥ यदन्तरं काञ्चनसीसलोहयोः यदन्तरं चन्दनवारिपङ्कयोः। यदन्तरं हस्तिबिडालयोर्वने तदन्तरं दाशरथेस्तवैव च॥ यदन्तरं वायसवैनतेययोः' (अरण्य.47-47) इत्यादिवाक्यानि मनोहराणि॥

परन्तु मानवब्रह्मानन्दयोस्तुलनं बुधः। को वा विवेकी जानीयात्, ततोऽप्येतत्तु दुर्वचम्॥

को वा मनीषी ऊहितुमपि शक्नुयात्, सदेहविदेहमुक्त्यानन्दयोस्तारतम्यं वाचामगोचरमित्यस्त्यानन्दतारतम्यवादस्यावसरः। अत एव—

इयमेव स्थितिर्जीवन्मुक्तिर्या शास्त्रसंमता। **नव्यवेदान्तशास्त्रस्य** सीमेति परिगृह्यताम्॥

समये त्वखिलं स्पष्टं भविष्यति यदीच्छति। भगवान् सर्वभूतात्मा समयस्स निरीक्ष्यताम्॥

एवञ्च—उक्तरीत्या सदेहविदेहमुक्त्योर्वैलक्षण्यविषये वा, प्रमेयस्वरूपविषये वा नास्ति पक्षभेदः। 'जीवन्मुक्त'पदविषय एव विवादः। तत्रापि तत्पदस्यौपचारिकत्वेऽपि नाभिप्रायभेद इति विज्ञेयम्॥ ७४॥

एवं स्थालीपुलाकन्यायेन मुक्तिविषये प्रबलान् वादान् निरस्य, एवमेवैतरेषामपि वादानां निरासोऽवगन्तव्य इति दिक्प्रदर्शनाय, पक्षभेदान् प्रदर्श्य, तेषामपि निरस्तप्रायतामाह संक्षेपेण—**स्वातन्त्र्यमित्यादि**। स्वातन्त्र्यम्, ब्रह्मणैक्यम्—इत्यादीनि पदानि द्वितीयान्तानि। **स्वातन्त्र्यम्- - - - शून्याद्वैतं च मुक्तौ जल्पतां वः**=युष्माकं **श्रुतिः उपकृतये**=बुद्धिशुद्धौ साहाय्याय **कल्पताम्** इत्यन्वयः॥

**चित्तेन स्वात्मसौख्यानुभवमुपलवद्भावमूर्ध्वप्रयाणं**
**शून्याद्वैतं च मुक्तौ श्रुतिरुपकृतये कल्पतां जल्पतां वः ॥ ७५ ॥**

**इति तत्त्वमुक्ताकलापे**

## जीवसरः

**१—स्वातन्त्र्यम्**—निरङ्कुशं स्वातन्त्र्यं मुक्तस्य भवतीति पाशुपतैकदेशिनः **लकुलीशाः**। सर्वेषामपि मुक्तानां यदि निरङ्कुशं स्वातन्त्र्यम्, सर्वे सर्वत्र युगपत् प्रवर्तेरन्। तथा च परस्परघर्षणादिकमनिवार्यं स्यात्। तत्प्रयुक्ताशान्तिरप्यवर्जनीया स्यात्। अशान्तौ च 'अशान्तस्य कुतस्सुखम्' (गीता.2-66)। अतस्स परमपुरुषार्थः कथं स्यात्? यद्यपि वैदिकानामपि 'स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति' (छां.7-25-2) इति श्रुत्या स्वाराज्यमेव मुक्तिः संमता। परं तु स्वातन्त्र्यं किंरूपमित्यादिकं पूर्वमेव (श्लो.63) निरूपितम्। अतो निरङ्कुशं स्वातन्त्र्यं न मुक्तिः ॥

**२—ब्रह्मणैक्यम्**—ब्रह्मैवोपाध्यवच्छिन्नं जीवः। उपाधिरपि मिथ्या। तादृशोपाधिनिवृत्तौ ब्रह्मणैक्यापत्तिः मुक्तिरिति **ब्रह्मविवर्तवादिनः**। प्रकृतसविशेषाद्वैतप्रतिकोटिभूतनिर्विशेषाद्वैतवादिनां मतमिदं बहुधा परिशीलितं पुरस्तादत्रैव ॥

**३—पशुपतिसमताम्—केवलपाशुपतानाम्** मतमिदम्। तथा ह्युक्तं भोजराजेन 'मुक्तात्मनोऽपि शिवाः'(त.प्र.) इत्यादिना। इदमपि परिशीलितं पुरस्तात् (श्लो.11) ॥

**४—वासनोच्छेदमात्रम्—विज्ञानवादिनो** वदन्ति—विशुद्धविज्ञानक्षणपरंपरापरिशेषो मोक्ष इति। अनादिवासनावशात्संसारः। तादृशवासनाया निवृत्तौ विशुद्धा परिशिष्यते विज्ञानक्षणपरंपरा। सैव स्थितिः मुक्तिरिति । अयं वादः पूर्वमेव (जड.29) निरस्तः। 'धीसन्तानप्रणाशम्' इति समनन्तरवक्ष्यमाणमतवैलक्ष्यण्यायात्र 'मात्र'पदम् ॥

**५—धीसन्तानप्रणाशम्**—अन्ते 'शून्याद्वैतम्' इति प्रत्येकं प्रसिद्धशून्यवादिनां लङ्कावतारसूत्रानुयायिनां कथनात् माध्यमिकैकदेशिनः **प्रज्ञाकरगुप्तस्य** मतमिदम्। धीसन्तानमङ्गीकृत्य तस्योच्छेदोऽस्मिन् पक्षे। अन्तिमपक्षे तु धीसन्तानोऽपि न सत्य इति विशेषः। विज्ञानक्षणपरंपराया अहमर्थस्थानापन्नाया अप्युच्छेद'एव मोक्षः। 'अहमेव न किञ्चिच्चेत् भयं कस्य भविष्यति' इति न्यायादित्यर्थः। अहमर्थविनाशस्य पुरुषार्थत्वं कथं भवेत्? अयं वादोऽपि पूर्वमेव आत्मनो नित्यत्वाहमर्थत्वसमर्थनेनैव निरस्तः ॥

**६—निजमतिसुखयोर्नित्ययोस्सन्निकर्षम्**—नैयायिकैकदेशिनः **भूषणकारस्य मतम्**। नित्यं सुखमात्मधर्मभूतं मुक्तावभिव्यज्यते। तच्च तथैव मुक्तावभिव्यक्तेन नित्येन ज्ञानेन गृह्यते, स्वप्रकाशवस्तुनोऽनङ्गीकारात्। तद्ग्रहणार्थं ज्ञानमावश्यकमिति तदाशयः। इदमपि मतम् पूर्वमेव निरस्तम् ॥

**७—चित्तेन स्वात्मसौख्यानुभवम्**—इति **कुमारिलभट्टस्य मतम्**। स्वात्मैव सर्वेषामपि स्वयं प्रीतिविषयः। स्वीयेष्वपि तत्प्रयुक्त एव प्रीत्यतिशयः। 'आत्मनस्तु कामाय सर्वं प्रियं भवति'(बृ.6-5-6)

इति श्रुतिश्च प्रसिद्धा। यद्यपि तस्याः श्रुतेरन्यादृश एवार्थः सिद्धान्ते वर्ण्यते, अथाप्ययमप्यर्थो वैज्ञानिकः नापनुद्यते। वस्तुतस्तु स्वात्मपरमात्मनस्तत्त्वमतिगहनम्। 'श्रुत्वाप्येनं वेद न चैव कश्चित्' (गी.2-29) इति श्रुतिरेव भगवती स्तब्धा भवति। अतोऽर्थद्वयमपि तत्तदधिकारिभेदेन विवक्षितम्। परन्तु **भट्टकुमारिलेनापि** स्वप्रकाशवस्त्वनभ्युपगमात् अन्तःकरणमूलक एव स्वात्मानुकूलत्वग्रह इत्यतः 'चित्तेन स्वात्मसौख्यानुभवः' इत्युक्तम्। अस्यापि **भूषणकार**मतनिराकरणेनैव निरासः सिद्धः॥

८—**उपलवद्भावम्**—'पाषाणकल्पमुक्तिः' इति परैरुपहास्यमानम्, वैशेषिकोक्तम्। इदमपि पूर्वं (श्लो.69) निरस्तम्। आत्मनः स्वप्रकाशत्वानङ्गीकारात्, मुक्तौ ज्ञानादिगुणानामप्यनङ्गीकारात्, पाषणस्य आत्मनश्च को वा विशेषः? कथं वायं पुरुषार्थः स्यात्?

९—**उर्ध्वप्रयाणम्**—सततोर्ध्वगमनं मुक्तिरिति **जैनाः**। अथवा अलोकाकाशपर्यन्तमूर्ध्वं गत्वा तत्र तिष्ठति जीव इति **जैनैकदेशिनः**। आत्मनः स्वरूपमेव स्वतोऽलौकिकम्, कर्मबन्धवशात्प्रतिरुद्धं तिष्ठति। कर्मणां निश्शेषक्षये प्रतिबन्धकनिवृत्या सर्वं लोकमतीत्योपर्युपरि गच्छति। उपरितनाकाशभागस्यानन्तत्वात्, उपर्युपरि गच्छन्नेव वर्तते इति **केचित्**। अस्त्यवधिः कश्चित्। लौकिकाकाशोपरि तु वैकुण्ठलोकवत् अलौकिकाकाशो वर्तते। तत्पर्यन्तं गच्छतीति **चापरे**। सुखं दुःखनिवृत्तिर्वा पुरुषार्थः स्यात्, न तूर्ध्वगमनम्। अतोऽस्य पुरुषार्थत्वासंभवादेव स्वतो निरासः सिद्धः॥

१०—**शून्याद्वैतम्**—निस्स्वभावत्वरूपं शून्यमेव परमं तत्त्वमिति **माध्यमिकाः**। **परतन्त्रस्वभावं** किञ्चित्, यथा गुणादयः निरन्तरं गुणिपरतन्त्राः, अवयविनः अवयवपरन्त्राः। **परिनिष्पन्नस्वभावं** किञ्चित्; यथा बीजादिकं वृक्षात्मना परिनिष्पद्यते, अथवा परिणमते। **परिकल्पितस्वभावं** किञ्चित्, यथा रज्जुः सर्पात्मना परिकल्प्यते। लोके सर्वमप्येतत्स्वभावान्यतमान्वितम्। तत्त्वं तु एतत्स्वभावानन्वितत्वात् निस्स्वभावमुच्यते। अत एवैतेषां—'**शून्यविवर्तवादिनः**' इति प्रथा। शून्यं तत्त्वम्। तस्य विवर्तरूपम् जगत्=जगति यद्यदुच्यते, तत्तद्विरुद्धतया वर्तनात् तत्त्वं विवर्तरूपम्=दुर्निरूपमित्यर्थः। एवं सत्यैहिकामुष्मिकसकलव्यवहारविलोपप्रसङ्गात् जगदुच्छृङ्खलं स्यादित्यनुवदितुमप्यनर्हः प्रामाणिकानामित्यभिप्रायेणाचार्यैः गत्यन्तराभावात् ग्रन्थान्ते (अद्र.स.132) शिष्यहितार्थं स्थूलरूपेणैवं निराकारि, पूर्वमेव विस्तरेण निरस्तम्॥

एवं **जल्पताम्**=स्वेच्छया वदताम् **वः**=युष्माकम्, **श्रुतिः**=अशेषजगद्धितानुशासनैकपरा भगवती अलौकिकी वाक् **उपकृतये**=स्वहितनिर्णये साहाय्याय **कल्पताम्**—इति जगद्धितप्रवणैकचेतोभिः परमाचार्यैराशंस्यते—'सर्वे जनास्सुखिनो भवन्तु' इति॥ ७५॥

एवमाशासमानानां विज्ञानमूर्त्या स्वयंवृतानामेषामाचार्यप्रवराणामयमाशयः—'न वयं पूर्वग्रहादिपीडिता इमं ग्रन्थं व्यरचयाम। किन्तु—

'वेदे संजातखेदे मुनिजनवचने प्राप्तनित्यावमाने सङ्कीर्णे सर्ववर्णे सति तदनुगुणे निष्प्रमाणे पुराणे।
मायावादे समोदे कलिकलुषवशाच्छून्यवादेऽविवादे वेदत्राणाय सर्वं कृतमिदमनघं वेदमूर्तेर्नियोगात्॥'

'अकंपनीयान्यपनीतिभेदैरलंकृषीरन् हृदयं मदीयम् ।
शङ्काकलङ्कापगमोज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ।।'

एवं प्रार्थयतो हार्दं ज्ञानविज्ञानरूपिणम् । देवम्, तस्य कथं बुद्धिरपमार्गे पदं न्यसेत्? ।।
अथापि कालदेशाधिकार्यौचित्यमुखान् बहून् । आलोच्यैव हि वक्तव्यं लोकस्य हितमिच्छता ।।
इत्थमाचार्यवर्योऽयं वेदप्रामाण्यहेतवे । अग्रन्थयदिमं सर्वं श्रीहयास्यनियोगतः ।।

अतस्सुष्ठूक्तमाचार्यैः— 'श्रुतिरुपकृतये कल्पताम्' इति ।। यद्यपि 'वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' (आप.ध.सू.2-24-18) इति ऐहिकामुष्मिकलोकवत् वेदानामपि परित्यागे महर्षिणा विहिते वेदपरित्राणायावतीर्णा आचार्या इति कथं युज्यत इति शङ्का स्यात् ।। परन्तु—

तर्हि मत्स्यादिरूपेणावतीर्णो भगवान् कथम्? उद्धारायैव वेदानामित्याहुर्वैदिकोत्तमाः।।
बहुना किमिहोक्तेन स एवाहैवमेव हि । 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवे'ति च ।।
वेदैस्सर्वैरहं वेद्य इत्यप्याह स एव हि । सर्वं समाहितं पूर्वं पौनःपुन्येन किं फलम् ।।
'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः।।'
तिष्ठ त्वं वा यथाजातः बुद्ध्यतीतो भवाथवा । अर्धप्रज्ञस्तु मा भूयाः, मा च तर्कपरायणः ।।
जीवनस्य परं लक्ष्यं मा विस्मरत जातुचित् । मार्गः कदापि नैव स्याल्लक्ष्यमित्यवधार्यताम् ।।
वेदाः परादुस्तं योऽन्यं वेदं वेद निजात्मनः । आत्मार्थं निखिलं प्रोक्तमिति निश्चप्रचं किल ।।
प्राप्ते त्वात्मनि किं साध्यं साधनैः सकलैरपि । लक्ष्यं जातु न विस्मर्तव्यमात्मनो हितमिच्छता।।
दुर्दर्शमतिगंभीरं दृष्ट्वाऽऽत्मानं परात्परम् । अर्पयामोऽखिलं तस्मै धन्याः स्याम च मा चिरम् ।।

**इति तत्त्वमुक्ताकलापव्याख्यायां सर्वङ्कषायां**

## जीवसरः



# नायकसरः



**[परमात्मनि श्रुतिरेव प्रमाणम्]**

146. **व्याप्त्याद्यव्याकुलाभिः श्रुतिभिरधिगतो विश्वनेता स विश्वं**
**क्रीडाकारुण्यतन्त्रः सृजति समतया जीवकर्मानुरूपम् ।**
**रोषोऽपि प्रीतये स्यात् सुनिरसविषयस्तस्य निस्सीमशक्तेः**
**स्वेच्छायां सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः ।। १ ।।**

---

क्रमप्राप्तम् ईश्वरतत्त्वं निरूपयिष्यन्, प्रथमं तत्सद्भावे प्रमाणमाह—**व्याप्त्यादीति । व्याप्त्याद्यव्याकुलादिभिः**=व्याप्तिपक्षधर्मताद्यपेक्षारहितत्वात्स्वतः प्रमाणभूताभिः **श्रुतिभिः विश्वनेता**=जगत्प्रभुः परमात्मा **अधिगतः**=निस्संशयं निश्चितः, तत्सद्भावे श्रुतिरेव प्रमाणमित्यर्थः ।।

**'पतिं विश्वस्यात्मेश्वरम्'** (महा.13-3) इत्यादिश्रुतयः विश्वस्य पतिं वर्णयन्ति । तस्य कःपतिरिति प्रश्ने 'आत्मेश्वरम्'=स्वस्य स्वयमेवेश्वर इति वदन्ति । यद्यपि परमास्तिका उदयनादयः कार्यत्वादिहेतुकैरनुमानैरीश्वरं साधयन्ति, अथापि वैदिकानां वेदा एव परमं प्रमाणम् । अत एवाग्रे ईश्वरसाधकानुमानं निरस्यते । न केवलं विश्वपतिः, विश्वस्रष्टा च स इत्याह—**सः**=ईश्वरः **क्रीडाकारुण्यतन्त्रः**=क्रीडायाःकारुण्यस्य च परवशः **समतया**=पक्षपातरहिततया **इदं जगत् जीवकर्मानुरूपम्**=जीवकर्मानुगुणम् नानाविधं **सृजति**।।

ननु यदि जीवकर्मानुरूपं सृजति, तदा जीवानां बहुविधत्वात्, अनुकूलप्रतिकूलविभागः, तत्फलतयानुकूलेष्वनुग्रहः, प्रतिकूलेषु निग्रहश्चानिवार्यः स्यात् । ततश्चानुकूलेषु प्रीतिः, प्रतिकूलेषु कोपश्चानिवार्यः । कोपश्च द्वेषादौ पर्यवस्येत् । तर्हि सोऽपि परमात्मा जीववदेवान्ते दुःख्यपि भवेदित्यत्राह—**रोषोऽपीत्यादि । निस्सीमशक्तेः**=अनन्तशक्तिसंपन्नस्य **तस्य**=परमात्मनः **सुनिरसविषयः** =यस्मिन् विषये तस्य कोपो भवति, स विषयः तेन सुखेन निरसितुं शक्यः, अतस्तादृशः **रोषोऽपि**=कोपोऽपि **प्रीतये**=आनन्दायैव, न तु दुःखाय **स्यात्**=भवेत् । अतः तस्य कोपो मानवानामिव न दुःखहेतुः भवेत् । लोके हि अशक्ता मानवा यस्मै कुप्येयुः, तं किञ्चिदपि दण्डयितुं यदा न समर्थाः, तदैव कोपः, कोपः क्रोधाय, क्रोधो द्वेषाय, द्वेषो मात्सर्याय, मात्सर्यं च दुःखाय भवति । शक्तस्तु यदा कुप्यति, तदा तन्निर्वर्तयति, तेन तस्य मनसि सन्तोष एव भवति । कोपस्याप्रतिरोधात् दुःखं न भवति । परमात्मा तु ''परास्य शक्तिर्विविधैव श्रूयते'' [illegible] स्वव इति विविधानन्तशक्तिसंपन्नः, सत्यसंकल्पश्च । अतः कोपस्य फलं निर्वर्तयत्येव सुलभतया । जीवानां कर्म दुःखाय न भवति, प्रत्युत प्रीतये भवति ।। [illegible]ति, कर्मणामुपभोगेनैव

अस्त्विदम्। जगत्सृष्टिः परमात्मनः स्वार्थं परार्थं चेत्युच्यते। स्वार्थमित्यस्य च लीलाजन्यानन्दार्थमिति विवृतं च। परमात्मा च 'अवाप्तसमस्तकामः' इति भवद्भिर्वर्ण्यते। इदानीं तु जगत्सृष्ट्या तस्यानन्दो भवतीत्युच्यते। कथमिदं सङ्गच्छत इत्यत्राह— **स्वेच्छायामित्यादि**। **भगवतः**=परमात्मनः **अवाप्तकामत्ववादः**=सर्वे कामास्तस्य प्राप्ताः=पूर्णाः इति वादः, **स्वेच्छायां** सत्याम् **सर्वसिद्धिम्**= सर्वस्यापि तदानीमेव सिद्धिं **वदति**। स्वेच्छायामिति सति सप्तमी। इच्छासमकालमेव इच्छाविषयसिद्धिरुच्यते। तेन लेशतोऽपि विलम्बाभाव उक्तः। तथा च 'अवाप्त' इत्यत्रार्हार्थे क्तप्रत्ययो ग्राह्यः। आप्तुमर्हास्सर्वेऽपि कामा इत्यर्थः। यदि सर्वेऽपि कामाः पूर्वमेवाप्ताः, तर्हि 'सोऽकामयत' (तै.आ.6) इति कथमुच्येत? उच्यते— स्वार्थैक मूलाः कामा एव बन्धहेतवः; न तु परार्थाः। परार्थैकप्रवणता तु परमात्मनः सहजसिद्धा। यतस्तस्य प्रत्येकमहमेव नास्ति वस्तुतः। एवञ्चैतादृशकामना न दोषः, प्रत्युत गुण एव॥

जगत्स्रष्टृत्वं ब्रह्मलक्षणमुक्तं भगवता बादरायणेन **'जन्माद्यस्य** यतः' (ब्र.सू.1-1-2) इति। 'ब्रह्म' 'परंब्रह्म' 'ईश्वरः' 'परमेश्वरः' 'भगवान्' 'पुरुषः' 'पुरुषोत्तमः' 'आत्मा' 'परमात्मा' 'नारायणः' 'विष्णुः' 'महाविष्णुः' 'श्रियःपतिः' इत्यादयःशब्दाः यद्यपि पर्याया एतत्सिद्धान्ते। अथापि लेशतः अर्थभेदो वर्तत एव, प्रवृत्तिनिमित्तभेदस्य वर्तमानत्वात्। एतदनन्तरमवतारौपाधिका रामकृष्णादयश्शब्दा अप्यनन्तास्सन्ति। किं बहुना! 'अनन्तरूपः' इत्यस्ति तस्य नाम। रूपभेदे नामभेदोऽप्यावश्यकः। एवं सति किं नाम तस्येति प्रश्नस्योत्तरदाता कः? एवं 'अनन्तम्' इत्युक्ते, पदान्यप्यनन्तान्येव। एतदाधारेण सगुणनिर्गुणविभागोऽपि दुर्वच एव। अतश्च मूलतः परापरभेदेन (निर्गुणसगुणभेदेन) ब्रह्मभेदस्याभावात्, तत्सूचनायैव एते सर्वे शब्दाः परमात्मन्येव प्रयुज्यन्त आचार्यैरितत्सिद्धान्ते। अग्रिमश्लोकेष्वयमंशो विस्तरेण विचार्यते। तत्र प्रथमं ब्रह्मणो जगत्स्रष्टृत्वं वर्ण्यते। ब्रह्म किमर्थं जगत्सृजति? स्वार्थं, परार्थं वा? 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति खलु प्रसिद्धो न्यायः। अवाप्तसमस्तकामत्वात् स्वार्थं तु न। परार्थं चेत्, सुखमयमेव जगत्सृजेत्, न तु दुःखमयम्। दुःखप्रचुरं चेदं जगदिति सर्वानुभवसिद्धम्। अतः द्वेधापि स्रष्टृत्वं परमात्मनो न संभवतीत्याक्षेपे, उत्तरमाह भगवान् बादरायणः— 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.2-1-33) इति। लोकवत्तु=लोके यथा, तथैव परमेश्वरस्यापि सृष्टिकार्यं लीलैव केवलम्। कैवल्यमिति स्वार्थे ष्यञ्। लोके हि राजादयो जनाः क्रीडायां प्रवर्तन्त इति प्रसिद्धम्। 'प्रयोजनमनुद्दिश्य' इत्यादिन्यायेन ते किमर्थं क्रीडन्ति? इति प्रश्ने, किमुत्तरम्? 'स्वार्थमेव क्रीडन्ति' इति कश्चिद्वदेत्। कीदृशस्वार्थाय? इति पुनरपि प्रश्ने, न प्रयोजनान्तराय, किन्तु केवलमानन्दाय इति खलु वक्तव्यम्। तथा च 'क्रीडति' इत्युक्ते, किमर्थम्? इति न प्रष्टव्यम्। अत एव 'स्वयंप्रयोजनव्यापारो लीला' इति लक्षणं वदन्ति। एवञ्च 'किमर्थं जगत्सृजति?' इति प्रश्न एवानुचित इत्यर्थः॥

ननु 'स एकाकी न रमते' (बृ.उ.3-4-3) इति सृष्टेः पूर्वमरतिरासीत्, तत्परिहारायैव सृष्टिरिति श्रूयते। अतोऽस्त्येव स्वार्थः इति चेत्, कोऽयमत्र स्वार्थः? 'रमुक्रीडायाम्' इत्यस्मान्निष्पन्नः रतिशब्दः। एवञ्चारतिः तादृशक्रीडारसाभावः। रसश्चानन्द एव, 'रसं ह्येवायं लब्ध्वानन्दी भवति'

(तै.आ.7) इत्यादौ प्रसिद्धः। परमात्मा ह्यानन्दमय इति 'आनन्दमयोऽभ्यासात्' (ब्र.सू.1-1-13) इत्यत्र स्थापितम्। आनन्दमयस्य परमात्मानः प्रलयकाले एकाकित्वान्न रतिः, अरतिपरिहाराय जगत्सृजतीति कथनेऽपि क्रीडारसानुभव एव सृष्टेःप्रयोजनमित्युक्तं भवति। क्रीडायामेकविध आनन्दः। क्रीडाविरतावन्यादृश आनन्दः। एवञ्च आनन्दमयस्यापि ब्रह्मणः सदा यतनशीलता वर्तत एवेत्युक्तं भवति। ततश्च सृष्टिः तदीयस्वभावप्रयुक्तेति सिद्ध्यति॥

अत एव **नवीनाः** मत्तोन्मत्ता आनन्दविशेषवशात् यथा गायन्ति, नृत्यन्ति, विचित्रान् शब्दांश्च कुर्वन्ति, तथैव परमात्मापि आनन्दमयस्वभावत्वात् जगत् सृजति, न तु लीलारसार्थम्। अत एव श्रुतिः 'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति गौडपादकारिकां प्रमाणं प्रदर्श्य, स्वभावादेव जगत्सृष्टिः, न तु लीलारसार्थमिति वदन्ति। परन्तु 'न प्रयोजनवत्त्वात्' (ब्र.सू.2-1-32) इत्यस्मिन् सूत्रे प्रयोजनप्रश्नस्यैव कृतत्वात् 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.2-1-33) इत्यत्र सूत्रकारदृष्ट्या प्रयोजनाभिधानमेवोचितम्। तत्र स्पष्टं लीलापदप्रयोगे विद्यमाने, लीलापदस्य स्वभावपरत्वास्वारस्याच्च सिद्धान्ते लीलायाः प्रयोजनपरत्वं वर्ण्यते। 'हरे विहरसि क्रीडाकन्दुकैरिव' 'बालः क्रीडनकैरिव' इत्याद्युपबृंहणान्यपि जागरूकाणि सिद्धान्तानुकूल्ये। तात्पर्यतः आनन्दवतामेव लीला, न तु शोकवतामित्यर्थवर्णने नास्माकं प्रद्वेषः। 'प्रकृतिं स्वामवष्टभ्य' (गी.9-8) इति खलु गीयते। सर्वेषामपि कश्चनासाधारणः स्वभावो वर्तत एव। जडाया अपि प्रकृतेः सदा परिवर्तनशीलत्वमङ्गीक्रियते। तद्वत्परमात्मनोऽपि कश्चनासाधारणः स्वभावः स्यात्। परं तु मत्तोन्मत्तप्रलापदृष्टान्तस्तु न स्वरसः, अजितप्रकृतीनामेव तथात्वदर्शनात्। अतश्चैतत्सर्वापेक्षया दृष्टपरावरैस्सर्वैरपि लीलापदप्रयोगात्तदेव वरमित्याशयः॥

एवञ्च स्वानन्दार्थमेव जगत्सृजतीति सत्त्वेऽपि, स्वानन्दाय जगत्सृजन् परमात्मा, कथं दुःखमयं जगत्सृजेत्? स्वानन्दाय परपीडनं न्याय्यं वा? इति प्रश्नस्योत्थानात्, परार्थमपि जगत्सृजतीति सिद्धान्तरहस्यार्थसूचनाय एतत्सिद्धान्तसकलमर्मज्ञैः वेदान्ताचार्यैः **'क्रीडाकारुण्यतन्त्रः'** इत्यभ्यधायि। एवञ्च सृष्टिः स्वार्था, परार्था च। परार्थत्वं चाचार्यैरेव विवृतम्— 'अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा। करणकलेबरयोगं वितरसि वृषशैलनाथकरुणे! त्वम्॥' (दया.17) इति। वृषशैलनाथः=श्रीनिवासः। तस्य करुणां संबुद्ध्य कृतं स्तोत्रम्। तथा च प्रलयकाले शरीराद्यभावात् जडतुल्यान् चेतनान् वीक्ष्य, 'एतेषां शरीरदाने साधनमनुष्ठाय मां प्राप्नुयुःकिल' इति संसारिचेतनानां विमुक्तये स्वयं कृपयैव जगत् सृजतीति, स्वार्थं परार्थं च सृजतीति क्रीडाकारुण्यपदाभ्यामुक्तम्। तर्हि जगत् दुःखमयं कथं सृष्टम्? न हि दुःखदानमपि कृपाकार्यं युक्तम्। 'स्वार्थनिरपेक्षा परदुःखनिराचिकिर्षा **दया**' इति दयालक्षणं ह्याचार्यैरेवोक्तम्। एवं सति परदुःखनिराचिकीर्षया प्रवृत्तः परदुःखायैव जगदसृजतेति **'विनायकं प्रकुर्वाणो** रचयामास वानरम्' इतिवत् कथं युक्तमित्यतः— **'जीवकर्मानुरूपम्'** इति। यद्यपि दययैव सृष्टौ प्रवर्तते भगवान्, अथापि 'साम्यावस्थैव प्रलयः, विषमावस्थैव सृष्टिः' इति सृष्टेः वैषम्यरूपत्वात्, तादृशवैषम्यप्रयोजकतया जीवानां कर्म सहकारितया स्वीकरोति भगवान्। कर्मणां नानाविधत्वाच्च दुःखमिश्रत्वमवर्जनीयं भवति, कर्मणामुपभोगेनैव

क्षयात् । कर्मफलभोगः, अथवा प्रायश्चित्तानुष्ठानम्, ब्रह्मज्ञानसंपादनं वा शरीरेन्द्रियादिसाध्यम् । एवं कर्मफलानुभवकाले विवेकसंपादनमपि शरीरादिसंपाद्यम् । अतः सर्वप्रकारैरपि चेतनानां हितार्थमेव जगत्सृष्टिः । अत एव 'हन्ताहमिमाः' (छां.उ.6-3-2) इत्यादिनामरूपव्याकरणसंकल्पश्रुतौ 'हन्त'पदमेतदर्थकं द्रष्टव्यम् । नामरूपव्याकरणमेव सृष्टिः । 'हंत हर्षेऽनुकंपायाम्' (अम.) इति हन्तपदमनुकंपार्थकं द्रष्टव्यम् । कृपा च द्विविधा, **सहेतुका, निर्हेतुका** चेति । सृष्टिसंकल्पः निर्हेतुककृपयैव । विषमसृष्टिस्तु चेतनकर्ममूलकत्वात्सहेतुकेति विवेकः । जगत्सर्वं दुःखमयमिति तु पापिनां दृष्ट्या । पापकर्मणां तत्फलदुःखानुभवेनैव क्षपितव्यत्वात् । विवेकिनां तु सुखदुःखमिश्रं जगत् । भक्तानां तु दृष्ट्यानन्दमयमेव । 'सर्वमेव दुःखं विवेकिनः' (यो.सू.2-15) इत्यादिकं तु विषयासक्तानां वैराग्यार्थमिति मन्तव्यम् । बौद्धा एव जगतो दुःखरूपत्वं वदन्ति, न वैदिकाः ॥

एवं वैषम्यनैर्घृण्याभावादेव—**समतयेति** । 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।' (गी.9-29) इत्याह हि भगवान् । स यदि सर्वत्र समः तर्हि, भक्तेष्वनुग्रहोऽपि न स्यात्, दुष्टानां शिक्षणमपि न स्यात्, इत्यतः—'ये भजन्ति तु मां भक्त्या मयि ते, तेषु चाप्यहम्' (गी.9-29) इति । 'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । तानहं द्विषतःक्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान्' (गी.16-28) इति चाह । तर्ह्यस्मत्कर्मानुगुणमेव सर्वं विधास्यति चेत्, सर्वोऽपि भारोऽस्मास्वेव पतेत् । तर्हि परमात्मा निष्ठुरराजतुल्यः स्यात् । तर्हि दयादिगुणानां स्थानं किमित्यत्राह—'अपि चेत् सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः । क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं च गच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥' (गी.9-30,31) इति । एवञ्च, यद्यपि भगवान् स्वतस्सर्वेषु सम एव, तस्य निष्पक्षपातित्वात् । अथापि चेतनानां बुद्ध्यनुगुणमनुकूलः प्रतिकूलो वा भवति । अस्माभिः किञ्चिदाभिमुख्यप्रदर्शनेऽपि, सोऽस्मद्धितं दशगुणं साधयत्येव, क्रमशः संपूर्णसिद्धिमपि स दद्यादेवेति तत्त्वम् ॥

नन्वस्तु नामैतत्सर्वं । दया परदुःखदुःखित्वम्, उत परदुःखनिराचिकीर्षा? विवदन्ति किल पण्डिता अपि । निर्मत्सरं निष्कृष्य प्रदर्श्यताम् ।

श्रीमच्छ्रीरङ्गयोगीन्द्रकरुणापालितः किल! हार्दं भावमहं जाने न कुत्रापि स्खलत्ययम् ॥

का वानुपपत्तिः? प्रथममुच्यताम् । 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' (रामा.अयो.2-2-41) इत्याह श्रीरामगुणगणस्मरणपरवशचित्तो महर्षिर्वल्मीकजन्मा । **व्यासार्या**दयोऽपि 'परदुःखदुःखित्वं दया' (श्रु.प्र.) इत्याहुः । परन्तु परमात्मनो दुःखसंबन्धः कथं घटतामिति मन्वानाः आचार्यप्रवरादयस्तु परदुःखनिराचिकीर्षेत्याद्येवं ब्रुवते । यदि परमात्मनो दुःखसंबन्धः न प्रामाणिकः, तर्हि 'न ते वागनृता काव्ये काचिदत्र भविष्यति' (रा.बा.1-2-35) इति पितामहदत्तवरो महर्षिः कथं 'दुःखितः' इति ब्रूयात्? किं तर्हि परमात्मानमप्यस्मदादिवद् दुःखिनं मन्यसे त्वम्? शान्तं पापम्! अस्मदादिवदित्युक्तमायुष्मता । न तथाह महर्षिरपि, किन्तु, स्वप्रजानां दुःखं दृष्ट्वा सोऽप्यतिमात्रं दुःखितो बभूवेत्येव मुनेराशयः ।

स्वकृतपूर्वकर्मवशात् दुःखं जनानां भवति, न त्वेवं परमात्मावतारस्य रामस्य। ननु भोः! किमिदमुच्यते? परमात्मावतारो रामः इति। विष्णोरवतार इत्युच्यताम्। मास्त्विदानीं सा महती चर्चा। भविष्यत्यग्रे विस्तरेण। परन्तु स हि 'सर्वेभ्यःपाप्मभ्य उदितः' (छां.1-6-7) 'स हि सर्वगुणोपेतः' (रा.1-1-17) इत्युक्तः। अयि भोः! किं स्वप्रियस्य वृश्चिकदंशादिके दुःखे जाते, तदेव दुःखं रामस्यापि भवतीत्यर्थः, उत तत्सदृशमन्यद्दुःखं भवतीति वा? विविच्यताम्। तदेव दुःखं तं परित्यज्य नान्यत्रागच्छेदिति नाद्यः। तत्सदृशमपि वृश्चिकदंशजदुःखं भवतीत्यपि नार्थः, अनुभवविरोधात्। किन्तु विलक्षणमन्यदेव तत् इति चेत्, तर्हि तस्य नाम किम्? अत्रैव दृश्यते क्लेशः। सैव दयेति चेत्; किमासीत्? तदेव दुःखमपि न भवति, तत्सदृशमपि दुःखं न भवति। अन्यत् किञ्चिदित्युक्त्वा 'दया' इति नामकरणे, दयापदार्थान्तर्गतं दुःखं जीवदुःखादन्यादृशमेवेति, तस्य दुःखपदप्रयोगापेक्षया दयापदप्रयोगस्समुचित इति खल्वायाति। अन्यादृशं चेत् दुःखपदं न युज्यते यदि, 'दुःखितः' इति पदं महर्षिः कथं प्रयुक्तवान्, उच्यताम्। महात्मन्, पुनःपुनर्मम घर्षणेन को लाभस्तव? दुःखितपदं दृश्यते किल! भवतैवोच्यतामौचित्यम्। श्रूयतां तर्हि— अस्माकं परिचयाय खलु महर्षिस्तथा वक्ति। अतोऽस्मत्परिचितमेव पदं प्रयुङ्क्ते स्म सः॥

वस्तुतस्तु— 'दया'नाम दैवीसंपत् 'दया भूतेषु' (गी.16-2) इत्युक्ता। सा का? मानवदृष्ट्या अन्या सा, भगवद्दृष्ट्या चान्या सा। मानवः खलु बहुविधानि मृगजन्मान्यतीत्यागतः। मृगाः किल शार्दूलमार्जारादयः परस्य कष्टं दुःखं वा ज्ञातुं लेशतोऽपि न प्रभवन्ति। ते किल मृगमूषकादीन् मारयन्ति। तेभ्यः प्राणसंकटं दत्त्वा, दृष्ट्वा विहरन्ति। अयमेव गुणः 'नृशंसता'। 'नृशंसो घातुकः क्रूरः' इत्यमरः। 'शंसु हिंसायाम्' इति धातोर्निष्पन्नःशब्द इति व्याख्या। व्याघ्रादीनामिदं कर्म व्याघ्रहृदयं न पीडयति, यस्य हृदयं पीडयति, स एव नरः=मनुष्यः। परदुःखज्ञानशून्याः व्याघ्रादयः नृशंसाः। मानवस्तु तथा न, किन्तु तद्दृष्ट्वा तस्य मनः द्रवीभवति। अतश्चानृशंस्यमेव **मानवता**। 'आनृशंस्यं परो धर्मः' (रा.सुन्दर. 38-44) इति सत्यवचनो महर्षिः। परस्य कष्टं दृष्ट्वा 'हन्त!' इति द्रवीभवति मानवमनः। किञ्चिदिव कम्पत इव मनः, पीडितस्य कम्पनं दृष्ट्वाऽनुकम्पते मनः। 'हन्त हर्षेऽनुकम्पायाम्' इति कोशः। तथाचानृशंस्यमिति मृगधर्मनिवृत्तिवाचकः, अनुकम्पेति तत्प्रतिक्रियावाचकः। साक्षात्तस्य वाचकः शब्दः कः? नास्त्येव लौकिकश्शब्दस्तस्य। अथवा करुणापदमेव औणादिकत्वेन रूढत्वात् तद्वाचकं स्यात्। दयापदं रक्षणार्थकाद्दयधातोर्निष्पन्नं तु दैवीसंपद्रूपार्थवाचकं केवलमानवानां आनृशंसतायाः अनुकंपाया वा न वाचकं भवितुमर्हति। यत्र समनन्तरक्षणे, विवक्षितस्य जीवस्य विवक्षितात् कष्टात् रक्षणमेव लभ्यते, तादृशस्थल एव दयाया लक्ष्यं द्रष्टव्यम्। भगवतो दया यत्र प्रसृता तत्र तद्रक्षणं नूनं भवेदेव। यत्र कुत्रचित् मानवेनापि रक्षणं यदि दृश्यते, तत्र नूनं तत्कर्म, जन्मान्तरीयऋणरूपं वा, आकस्मिकं वा, अन्ततस्तात्कालिकतया तत्र तदपेक्षितदैवीशक्त्याविर्भावादिना वाभूदिति मन्तव्यम्। 'स्वरक्षणेऽप्यशक्तस्य को हेतुः पररक्षणे' इति न्यायेन जीवोऽन्यस्य जीवस्य कथं रक्षको भवेत्? अत एवाचार्यवचनम् *'ओरुजीवनुक्कु मत्तोरु जीवन् तञ्ञनिल्लै'* (न कदाचिच्छरण्यः स्याज्जीवो जीवस्य कस्यचित्) इति। अतश्च नृशंसता मृगधर्मः, अनृशंसता

मानवधर्मः, दया तु देवानां धर्मः । अत एव 'स्वार्थनिरपेक्षा परदुःखनिराचिकीर्षा' इति विवरणम् । श्रीमद्भाष्यमपि—'दया हि नाम स्वार्थनिरपेक्षा परदुःखासहिष्णुता' (ब्र.सू.1-2-3) इति । मानवानां त्वसहिष्णुतामात्रम्, परदुःखदर्शनजन्यानुकंपायां अनुक्रोशे वा पर्यवसानम्, तत्परिहारशक्तेरभावात् । देवानां तु यथास्वरूपं परदुःखनिराकरणपर्यन्तं वर्धेत स धर्मः ॥

एवं तर्हि 'व्यवसनेषु मनुष्याणां भृशं भवति दुःखितः' इति कथमिति चेत्, उक्तमेवानुपदम्, परदुःखदर्शनेन मानवानां हृदये यत् परिवर्तनं भवति, तत्, दुःखानुभवितुर्यद्दुःखं, तादृशं न भवत्येव । तद्वाचकपदाभावात् अस्मत्परिचयार्थं 'दुःखितः' इत्युक्तमिति । पुत्रस्य तीव्रक्षतादिकं दृष्ट्वा पित्रोरतिदुःखं भवत्येव; अथापि क्षतजन्यपीडा तु पुत्रस्यैव, न तु पित्रोः । वस्तुतस्तु ब्रह्मणोऽत्यन्तमलौकिकत्वात् न तावत्सुलभसाध्यः ब्रह्मणः तद्धर्माणाम्, तद्गुणानां च परिचयो मानवबुद्धेः । तत्त्वतस्त्वेतादृशसूक्ष्मविषये शब्धवर्धनेन न कोऽपि लाभः, प्रत्युतानर्थ एव ॥

ननु 'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिता पुरा । उपायस्सोऽवताराय नास्ति भेदः कथञ्चन ॥' (मां.का.3-15) इति सृष्टिवाक्यानां स्वार्थे तात्पर्याभावस्याभिधानात्, व्यर्थोऽयं विचारस्सर्वोऽपि । अवताराय=बुद्ध्यारोहायेति यावत् । 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छां.6-1-4) इत्यत्र 'मृत्तिकेत्येव सत्यम्' इत्यनेन कारणस्यैव सत्यत्वम्, नामरूपयोर्व्यावहारिकमात्रत्वकथनेन कार्याणां तु असत्यत्वञ्च कण्ठत एवोक्तम् । दार्ष्टान्तिकेऽपि तथैव कारणस्य ब्रह्मण एव सत्यत्वम्, कार्यस्य जगतोऽसत्यत्वं च तात्पर्यसिद्धम् । भवन्मतेऽपि जन्माद्यधिकरणे 'सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह । तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः' (ब्र.सू.1-1-2) इति भाष्ये जगतः सत्यपदेन व्यावृत्त्यभिधानात् जगतोऽसत्यत्वं सिद्धमेवेति कुतः प्रद्वेषोऽस्मास्विति चेत्; कथमेवं प्रामादिकप्रज्ञो भवान्? 'निरुपाधिक'पदं नावधृतं त्वया । जगत्सत्ता हि ब्रह्माधीना, कालदेशाद्युपाधिका च, न निरुपाधिका । एतद्दृष्ट्या जगदसत्यमुच्यताम्, न कापि हानिः । किं तर्हि सत्यं नानाविधम्? कस्संशयः? नानाविधमेव, 'सत्यस्य सत्यम्' (बृ.4-1.20, 4-3-6) इति श्रुतिः न दृष्टचरा वा । अत एव तारतम्यवच्च सत्यत्वम् । सत्यं नामाबाधितसत्त्ववत् । तच्च देशतः कालतः स्वरूपतश्च त्रिविधम् । देशतः, कालतः, सर्वात्मना च सत्यं ब्रह्मैकमेव । अव्यापिनां मूर्तानां हि, 'अत्रास्ति, तत्र नास्ति' इति देशभेदकृतमसत्त्वं दृष्टम् । अनित्यानां हि 'इदानीमस्ति, तदानीं नास्ति' इति कालभेदकृतमसत्त्वं दृष्टम् । एवं तदात्मकनामतदात्मनासत्त्वमपि 'मृदात्मायं घटः, न सुवर्णात्मा' इति स्वरूपतोऽसत्त्वं दृष्टम् । ब्रह्मैकमेव तु सर्वविलक्षणं नित्यं व्यापि सर्वात्मकं च । अत एव किल—'अनन्तपदं देशकालवस्तुपरिच्छेद-रहितं स्वरूपमाह' (श्री.भा.1-1-2) इति भाष्यम् । इदमत्रावधीयताम्—

**ऋतसत्यानृतासत्यतथ्यमिथ्यादयस्तथा । मायातुच्छालीकमुख्याः शब्दा आत्मादयोऽपि च ॥**
सुगमार्था नैव मन्दप्रज्ञानां तपसा विना । अतश्च वर्धते वादः दुर्वारस्य कलेर्बलात् ॥

भाव्यं सदा सावधानैः आत्मनो हितमिच्छुभिः । व्यर्थं वादं परित्यज्य तपोध्यानपरायणैः ॥

अपि चायं विचार उत्तरत्र विस्तरेण भविष्यति । निरीक्ष्यताम् ॥

**इदमत्रावधेयम्**—सृष्टेः फलप्रश्नः केवलमानवबुद्ध्यैव । 'तद्दूरे' (ई.5) इति श्रुतिरस्माकं वदति । यावत्सामीप्यं स्वस्य परमात्मनोः, तावत् प्रश्नास्सर्वेऽपि स्वयमेव विलीयेरन् । अतो बुद्धिकृतस्य प्रश्नस्योत्तरम् 'लीलैव केवलम्' इति । अतः प्रयोजनप्रश्नो न कर्तव्य इत्येव वास्तवमुत्तरम् । अतश्च दुःखपदं यदा आनृशंस्यम्, अनुकंपां च क्रोडीकरोति, तदा 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इति वचनम् । यदा तु मानसपीडादिमात्रवाचकः स शब्दः, तदा दयापदार्थः दैवीसंपद्विशेषः, अत एव दैवधर्मवाची, न लौकिकः । अतो न कश्चिद्विरोधः । इतरत्सर्वं जनानुजिघृक्षयाचार्याणां व्याख्यानमात्रम् ॥

परमात्मस्वरूपादिविषये मानवी तु वाक् । पूर्णभावप्रकटणे ह्यसमर्था स्वभावतः ॥
किञ्चिदुक्त्वा विरमति दिक्प्रदर्शनमात्रतः । अत एव विवर्धन्ते वादाश्शब्दैकमूलकाः ॥
स्वहितप्रवणैः पुंभिः चर्चास्वेतादृशीषु हि । स्वात्मा दूरे रक्षणीयस्तत्कृपाप्रेप्सुभिस्सदा ॥

नन्वस्त्विदं सर्वं समर्थनम् । दयावात्सल्याद्यास्तु कल्याणगुणाः जीवानामुद्धाराय भवेयुः परमात्मनः। कोपतापादिकं तु कर्मवश्यस्य जीवस्य गुणाः । एतेषामपि भवद्बुद्धिकौशल्येन समर्थने जीवपरमात्मनोः नाममात्रेणैव विशेषो भवेत् । 'सोऽकामयत' (तै.आ.6) इति कामस्तु कण्ठत एवोक्तः । **क्रोधोऽप्यद्योक्तो** भवता । भक्तानां विषये **व्यामोहोऽ**पि बहुधा वर्ण्यते द्राविडप्रबन्धव्याख्यानादौ । 'माल्' इति द्राविडपदं व्यामोहवाचि वर्ण्यते । भक्तानां विषये भगवतो महान् व्यामोहोऽस्त्येवेति समर्थ्यते । अत एव 'प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः ।' (गी.7-0) इत्यप्युच्यते । 'अत्यर्थ'पदं 'प्रिय'पदद्वयेऽप्यन्वेति इत्युच्यते । एतेन लोभोऽप्यङ्गीकृतो भवति । स्वप्रियं वस्तु त्यक्तुमशक्यतैव खलु **लोभः** । एवं **वात्सल्यं** नाम 'दोषभोग्यत्व'मिति वर्णयता स्वभक्तदोषाज्ञानमप्यङ्गीक्रियते । 'भक्तानां दोषं परमभोग्यं मन्यते' इति विवृण्वता हेयोपादेयत्वाज्ञानोपपादनादन्यथाज्ञानमप्यङ्गीक्रियते । 'तानहं द्विषतःक्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभान्' (गी.16-28) इति **मदमात्सर्ये**ऽपि प्रकटिते । एवं कामक्रोधादीनां षडरिवर्गाणामपि परमात्मन्युपपादयद्भिः, सम्यक् सुरक्षितम् अपहतपाप्मत्वं भवत्स्वामिनः! तथा चाभ्युपगतो जीवपरमात्मनोर्नाम-मात्रेणैव विशेषः इति चेत्; **शान्तं पापम्!** अतिगहनं दुरधिगमं परमात्मतत्त्वमिति 'को अद्धा वेद' 'क इत्था वेद' इत्युद्घोषन्त्यामपौरुषेयवाण्याम्, भगवति बादरायणे 'अश्मादिवच्च तदनुपपत्तिः' (ब्र.सू.2-1-23) 'अश्मनः परमात्मनश्च यथा साम्यासंभवः, तथैव जीवपरमात्मनोरपि' । अथवा 'पाषाणत्वाकारसाम्येऽपि, काकप्रक्षेपार्हलोष्टादेः, वज्रवैडूर्यादेश्च यथा कथञ्चिदपि तुलनम् न संभवति, एवं चेतनत्वमात्रेण साम्यं जीवपरयोरत्यन्तमप्रयोजकम्' इत्युपहसन्ति सर्वेऽपि व्याख्यातारः । कामादयस्तु गुणा नास्मत्कामादितुल्याः, किन्तु जगन्निर्वहणोपयोगिनः । एवमेव वात्सल्यादयोऽपि नास्मदीयपुत्रवात्सल्यादिरूपाः । ते सर्वेऽपि दिव्याः। तन्निरूपणशक्त्याद्यभावात् कैश्चित्ते स्वेच्छया निरूपिताः । परिष्कृताश्चाचार्यवर्यैरभिरेव तत्र तत्र । सारतस्तु वर्ण्यते अखिलहेयप्रत्यनीकः, कल्याणगुणगणसागर इत्युभयलिङ्गं ब्रह्मेत्युभयलिङ्गाधिकरणसिद्धोऽयं विषयः ॥

ननु 'आत्मा द्विविधः जीवात्मा परमात्मा चेति' इत्येव विभागः प्रदर्श्यते सर्वैरपि । अतश्शब्दैक्यप्रयुक्तं साजात्यं कथमपलपितुं शक्यमिति चेत्, सत्यम् । परं त्वत एव मर्मज्ञाः 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे.1-12) इति श्रुत्युक्तं तत्त्वत्रयविभागमेव गरिष्ठं मन्यन्ते— 'चित्, अचित्, ईश्वरः' इति । जीवपरयोरेकजातीयत्वमेव नास्तीत्येतेषामाशयः । अत्रापि 'तर्हि परमात्मा चेतनो न स्यात्' इत्याक्षेपमुद्घाटयन्ति केचित् । एवं विभागं कृतवत आशय एव न ज्ञातस्तैरित्येव समीचीनमुत्तरं मन्यामहे ॥

यमनन्तमनन्तयोगवैभवम् योगेश्वरेश्वरं 'इदमित्थम्' इति निष्कृष्यावगन्तुमशक्नुवाना ब्रह्मर्षयोऽप्यन्ते विह्वला इव 'न विद्मो न विजानीमो यथैदनुशिष्यात्' (केन.1-3) इति दिग्भ्रान्ता भवन्ति, तमेतं परमात्मानम् घटपटवत् अतिस्थूलम् सुदर्शमिव वदता सह कथमालापः कर्तव्य इति 'न विद्मो न विजानीमः' । आर्ष वाङ्मयं न दृष्टम्, न पठितम्, न श्रुतम्, नावगतम्, नावधृतं च येन, अथवा तत्तादृशेन महात्मना सह संवासस्सहवासस्सङ्गो वा येनेषदपि न कृतः, स कथं वा जानीयात्तत्त्वम्! 'सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' (गी.5-29) इति, 'प्रतिजाने प्रियोऽसि मे' (गी.18-65) इत्यादि च शपथयन्तं तं कथं जानीयुस्सामान्यजनाः । 'न मे पार्थास्ति कर्तव्यम् त्रिषु लोकेषु किञ्चन' (गी.3-22) इति वदन्नेव 'वर्त एव च कर्मणि' इत्यपि वदति किल सः । स्वार्थगन्धलेशरहितस्य तस्य कर्माण्यपि परार्थायैव स्युः । अतः 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा। इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते ॥' (गी.4-14) इति वचनं स्मरन् उत्तरं निरीक्षयतु भवान् । नान्यो मार्ग इति त्यक्त्वेममन्यत्र गच्छामः ॥

भो ब्रह्मन्! अलं रोदनेन! उत्तरं तु नागतमेव ॥ किमुत्तरं वक्तव्यम्!

कामादयः पलायेरन् यस्य स्मरणमात्रतः । कथं तस्य तु कामाद्या भवेरन्नस्मदादिवत् ॥

अस्मत्परिचयार्थमस्मत्परिचितया भाषया किञ्चिदुच्यते महर्षिभिः । वस्तुतस्तु—

शब्दसाजात्यमात्रेण भ्रमितव्यं न जातुचित् । नार्थसाजात्यमत्र स्यादिति मत्वा विरम्यताम् ॥

ननु यदि पूर्वं केचन कामा नाप्ताः, तर्हि तस्य मानवापेक्षया को विशेष इति चेत्, मानवानां कामाः आप्तुं नार्हाः, सत्यसंकल्पत्वाभावात्, परमात्मनस्तु न तथेत्यस्ति महान् विशेषः । यद्यपि जीवानामपि सर्वेषां सत्यकामत्वादिकं श्रुतिसिद्धम्, 'सत्यकामः सत्यसंकल्पः' (छां.उ.8-7-1) इति दर्शनात् ; अथापि ते धर्माः संसारदशायां कर्मणा तिरोहिताः न कार्यकारिणः । मुक्त्यवस्थायां सर्वकर्मनिवृत्त्याविर्भवन्ति । तथोक्तम् 'पराभिध्यानात्तु तिरोहितम्, ततो ह्यस्य बन्धविपर्ययौ' (ब्र.सू.2-3-0) इति । पराभिध्यानम्=परस्य परमात्मनः संकल्पः, जीवपापानुगुणपरमात्मसंकल्पात् तिरोहितम्, ततो हि=तत्संकल्पादेव हि अस्य जीवस्य बन्धः, तद्विपर्ययः=मोक्षश्च । 'संसारमोक्षस्थितिबन्धहेतुः' (श्वे.6-16) इति श्रुतेरित्यर्थः ॥

ननु 'अवाप्तसमस्तकामः' इत्यसकृदुच्यते । किं तत्र प्रमाणम्? 'अस्मिन् कामास्समाहिताः' (छां.8-1-5) 'सर्वं तदस्मिन् समाहितम्' (छां.8-1-3) इत्यादय एव । किं बहुना! 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥' (ब्र. 7-1-1) इति मन्त्रस्यैवावाप्तसमस्तकामत्व-

ज्ञापकत्वात्, सर्वावस्थास्वपि पूर्णत्वमेवावाप्तसमस्तकामत्वमिति पृथङ् न वक्तव्यम्। एतादृशं पूर्णत्वं परमात्मव्यतिरिक्तस्य कस्यापि न संभवति॥

ननु पूर्णस्य चलनमेव न संभवतीति, 'सोऽकामयत' इति कामः कथमभूदिति चेत्;

अत्रैव वर्ततेऽध्यात्मरहस्यं महदद्भुतम्। एतां समस्यामहरत् श्रीमान् रामानुजो मुनिः॥

सविशेषब्रह्मवादं स्थापयामास यः पुरा। न शून्यरूपं ब्रह्म स्यात्किन्तु सर्वात्मकं हि तत्॥

पूर्णार्थकं शून्यपदं श्रीरामानुजसंमतम्। विज्ञानिनोऽप्येवमेव मन्यन्ते सप्रमाणकम्॥

किं बहुना! 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' (छा.8-1-3) इति ह्याह भगवती श्रुतिः। लोकातीतं लोकविस्मयकरं तदधिकृत्य किमधिकं वक्तवम्! अत्यल्पमानवबुद्ध्याऽऽलोचनीयं यदि, एवमालोच्य समाधीयतां मनः। स्वार्थप्रवृत्तेरसंभवेऽपि, परार्थप्रवृत्तेर्न विरोधः। प्रत्युत पूर्णकामानामेव परार्थप्रवृत्तेः संभवः। अपूर्णकामः स्वार्थे सदा परिभ्रमन् कश्चिदन्यार्थं किं कर्तुं शक्नुयात्? ननु कारणावस्थाया एकत्वेन पूर्णत्वसंभवेऽपि कार्यावस्थायामनेकधा प्रविभक्तस्य कथं तत्संभव इति चेत्, अयमेव कृत्स्नप्रसक्त्यधिकरणस्य विषयः। 'श्रुतेस्तु शब्दमूलत्वात्' (ब्र.सू.2-1-27) इति सिद्धान्तं वदता आक्षेपस्य निर्दिष्टमुत्तरं किमुक्तं भवतीति चेत्; किं वा नोक्तम्? ब्रह्मणो जगदुपादानत्वे, अनेकत्वावस्थायां ब्रह्म अनेकधा विभक्तं भवेदिति सावयवत्वप्रसङ्गः। यद्यखण्डमेव ब्रह्म, तर्हि तत् कार्ये एकस्मिन्नेव परिसमाप्तं भवेत्, ब्रह्म न शिष्येत। किञ्च तथा सत्यन्यकार्याणां वा का गतिरिति हि तत्र पूर्वपक्षः। 'श्रुतेस्तु' इत्यनेन परस्परविरुद्धमपि द्वयमप्यङ्गीकर्तव्यमिति सिद्धान्तः॥

कथमिदं घटेतेति चेत्, एतदर्थमेव ह्यनन्तरसूत्रम् 'सर्वोपेता च तद्दर्शनात्' (ब्र.सू.2-1-30) इति प्रवृत्तम्। अत्यन्तालौकिकं ब्रह्म तदनुगुणशक्तिविशिष्टमेव स्यात्। अतस्तद्रक्षणार्थं मूर्खैर्नास्माभिः क्लेशितव्यम्। यदि कथञ्चित्समाधातव्यं मनः, तत्रापि वत्सलतरा श्रुतिर्जाग्रत्येव। 'एकं बीजं बहुधा यः करोति' (श्वे.6-12) इतीमं रहस्यं भिन्दन्ती। एकस्मात् बीजात् एको वृक्षो जायते। तत्र च क्रमशो बहूनि बीजानि भवन्ति। तेषु सर्वेष्वपि बीजेषु अङ्कुरजननशक्तिस्समाना दृश्यते। सा कस्मादागता? तद्वृक्षस्य हेतुभूताद्बीजादेवेति वक्तव्यम्। एकस्मिन् बीजे स्थिता सा शक्तिरेव, तावत्सु बीजेषु प्रविभज्य स्थितायाः शक्तेः कारणम्। प्रथमबीजगता शक्तिः, तत्परिणामभूतेषु तावत्सु बीजेषु प्रविभक्ता एकदेशतो वर्तते? उत समग्रतो वर्तते? यद्येकदेशतः, तर्हि तस्मादङ्कुरमेव न स्यात्, शक्तेः सामस्त्येनाभावात्। यदि समग्रतः तर्हि एकैव बीजशक्तिः तावत्सु तद्वृक्षबीजेषु प्रविभक्तापि प्रत्येकं समग्रतया कथं विभक्ता स्यात्?

किञ्च तद्वृक्षहेतुभूतशक्तिविशिष्टबीजपरिणामभूतः खलु स वृक्षः। यदि सा शक्तिः, तद्वृक्षजन्यबीजे सामस्त्येन मिलेत्, तदा मूलभूतस्य तद्वृक्षस्यैव खलु नाशो वाच्यः, तादृशबीजपरिणामभूतत्वात् तद्वृक्षस्य। यदि तद्वृक्षहेतुभूतबीजशक्तिः, तद्वृक्षजन्यबीजेषु एकदेशत एव मिलिता, तदा तद्बीजे पूर्णशक्तेरभावात्, तद्बीजादङ्कुरं न स्यात्; शक्तेस्सावयवत्वं च स्यात्। स्थूले बीज एवैतावदद्भुतं स्याच्चेत्, अणोरप्यणीयसि

[परमात्मा निराकर्तुमशक्यः]

**147. अप्रत्यक्षः परात्मा; तदिह न घटते धातुरध्यक्षबाधः**
**योग्यादृष्टेरभावात्; न खलु न भवता स्वीकृतः स्वेतरात्मा।**
**तस्मिन् देहानपेक्षे श्रुतिभिरधिगते देहबाधात् न बाधः**
**वेदेभ्यो नानुमानं न च पुरुषवचस्तिष्ठते बद्धवैरम् ॥ २ ॥**

---

परमात्मनि किं किं न संभाव्यते! तदेतदभिप्रेत्योक्तम्—'एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति'(वे.सं) इति। एवं सदा सर्वत्रापि पूर्णमेव वर्तते। पूर्णत्वादेव साधनीयांशाभावात् सदा पूर्णकाममेव ब्रह्म वर्तते इत्यर्थः। लोकेऽपि हि 'कार्यं पूर्णमभूत्' 'वृक्षः पूर्णमुपचितः' इत्यादौ वस्तुनः समग्रत्वमेव प्रतीयते। 'समग्रं सकलं पूर्णमखण्डं स्यादनूनके' (अम.विशेष्य) इति कोशः। वस्तुनि न्यूनता नास्तीत्यर्थः। अवाप्तसमस्तकामत्वाभाव एवापूर्णता, अवाप्तसमस्तकामत्वमेव पूर्णता। 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यम्' (गी.3-22) इत्यत्रेदं स्पष्टम्। लोके ह्येकं वस्तु यदा नाना भवति, तदा प्रत्येकमेकैकमपि लेशरूपमेव स्यात्, न तु पूर्ववत्पूर्णरूपम्। अतः पूर्णं वस्तु ब्रह्मव्यतिरिक्तं न किञ्चिद्वर्तते। अतस्सैव श्रुतिः अवाप्तसमस्तकामत्वे प्रमाणम्। एवं हि श्रूयते—'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥' (बृ.7-1-1) इति। यद्यप्ययं मन्त्रः प्रणवपरतया व्याख्यायते; परन्तु ब्रह्मपर एव वाच्यवाच्यकाभेदतात्पर्येण तथा व्याख्यातम्। वाच्यस्य पूर्णत्वाभावे वाचकस्य कथं पूर्णत्वम्? वाच्यगतं पूर्णत्वमेव मुख्यम्, अर्थानुगामित्वाच्छब्दस्य। शिष्टमग्रे(श्लो.3)। ननु न सा उपनिषत्, किन्तु शान्तिमन्त्रः। अतः प्रार्थनातात्पर्यकोऽयं उक्तार्थे कथं प्रमाणमिति चेत्, असमग्रदर्शी त्वम्। बृहदारण्यकोपनिषदन्तर्गतो मन्त्रोऽयम् (बृ.7-1-1)। शान्तिमन्त्ररूपत्वमपि तस्य न निवार्यते। अथवा अन्य एव शान्तिमन्त्रःस्यादित्यलं विस्तरेण ॥ १ ॥

'श्रुतिसमधिगतः' इत्युक्तांशदार्ढ्याय तस्य प्रत्यक्षादिबाधं परिहरति—**अप्रत्यक्षः इत्यादि**। **परात्मा**=स्वव्यतिरिक्तः आत्मा सर्वोऽपि **अप्रत्यक्षः**=सर्वेषामप्यप्रत्यक्ष एव हि। **तत्**=तस्मात्कारणात् **धातुः**=जगत्स्रष्टुः परमात्मनः **अध्यक्षबाधः**=प्रत्यक्षेण बाधः **न घटते**। तत्र हेतुं स्पष्टयति—**योग्यादृष्टेः**=योग्यानुपलब्धेः **अभावात्** इति। कुतस्तदभाव इति चेत्—**भवता**=अप्रत्यक्षत्वात् ईश्वरनिराकर्त्रा भवतापि **स्वेतरात्मा**=स्वभिन्नशरीरान्तरवर्ती जीवात्मा **न खलु न स्वीकृतः**=न स्वीकृत इति न खलु= स्वेतरात्मा स्वीक्रियत एव किल। स च न प्रत्यक्षः, अथापि स्वीकृत एव ॥

परमात्मनोऽशरीरत्वात् जगत्स्रष्टृत्वमाशङ्क्य समाधत्ते—**तस्मिन्नित्यादि**। **तस्मिन्**=परमात्मनि **देहानपेक्षे**=स्वकृत्येषु देहसापेक्षत्वाभाववति, इदं विधेयविशेषणं वा देहापेक्षारहितत्वेन **श्रुतिभिः**=वेदवाक्यैः **अधिगते**=निश्चिते सति, **देहबाधात्**=कर्तृत्वप्रयोजकस्य शरीरस्याभावात् **बाधः**=कर्तृत्वाभावः **न**, किन्त्वस्त्येव कर्तृत्वम्। बाधे सति कथं कर्तृत्वमिति चेत्, **वेदेभ्यः बद्धवैरम् अनुमानम्**='परमात्मा न कर्ता,

अशीरत्वात्' इत्यनुमानम् **न तिष्ठते**=न प्रतिष्ठितं भवेत् । **पुरुषवचश्च**=पौरुषेयं भवद्वाक्यं च **न तिष्ठते**=न प्रतिष्ठितं भवेत् । अतश्च परमात्मनोऽप्रत्यक्षत्वेन योग्यानुपलब्धेरभावात् अतीन्द्रियेऽर्थे वेदस्यैव प्रमाणत्वाच्च परमात्मनः सर्वकार्यहेतुत्वमपि श्रुत्यैव सिद्ध्यति ॥

परमात्मनः स्रष्टृत्वे, सृष्टिकर्तृत्वस्यैव स्रष्टृत्वरूपत्वात्, लोके शरीररहितस्य कुत्रापि कर्तृत्वादर्शनात् शरीरेन्द्रियादिकमपीश्वरस्याङ्गीकर्तव्यम् । न च शंक्यम् अङ्गीक्रियत एव परमात्मनश्शरीरं सिद्धान्त इति; न तत् स्रष्टृत्वार्थं शरीरम्, शुभाश्रयरूपं दिव्यं भक्तानां परमभोग्यमित्यादिकमग्रे (श्लो.65) निरूप्यते । जगत्स्रष्टृत्वं त्वशरीरस्यैवाङ्गीकृतम् । एतत् कथमित्याक्षेपः । समाधानं तु, देहाभावात् कर्तृत्वाभावः केन प्रमाणेनाक्षिप्यते? 'ईश्वरः स्रष्टा न भवति, अशरीरत्वात्' इत्यनुमानेनेति चेत्, न हि वयं ईश्वरस्य जगत्कारणत्वमनुमानगम्यं वदामः, किन्तु 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिगम्यं वदामः । श्रुतिविरुद्धमनुमानमप्रमाणमेवेत्याद्यग्रे (श्लो.23) निरूप्यते । वस्तुतः नैयायिका अपि, स्वशरीरप्रेरणं जीवात्मनां स्वरूपत एव, न शरीरान्तरेण, अनवस्थाप्रसङ्गादिति कर्तृत्वं न शरीरायत्तमित्येव वदन्ति । अतः अशरीरस्य कर्तृत्वे न कश्चन विरोधः । एवं श्रुतिविरुद्धं लौकिकं नास्तिकवाक्यमपि सर्वथा न प्रमाणमिति परमात्मनो जगत्स्रष्टृत्वं निर्बाधमिति संक्षेपः ॥

**अयमाशयः**—परमात्मा न केवलं जगत्सृष्टिमात्रकारणम्, अपि तु कार्यसामान्यकारणमुच्यते(जड.16)। परं तु प्रतिदिनं निर्वर्त्यमानेषु घटपटादिषु न हि कुलालकुविन्दातिरिक्तः कश्चन चेतनः कारणतया कुत्रापि केनापि दृष्टः । न च घटादौ तथाऽदर्शनेऽपि अङ्कुरादौ कुलालादिसदृशचेतनस्यादर्शनात्, तत्र परमात्मन एव कर्तृत्वं वाच्यमिति युक्तम्, तत्रापि मृत्सलिलातिरिक्तस्य कस्यचित्कारणस्य चेतनरूपस्य केनापि कुत्राप्यदर्शनात् । न च सलिलादिसंयोजकश्चेतनस्तत्र कृषीवलादिर्दृश्यत एवेति वाच्यम्, अरण्यादावपि बीजादङ्कुरोत्पत्तेर्दर्शनात् । जलादीनां स्रवणादिवत् बीजादेः स्वभावादेवाङ्कुरादेस्संभवात् । अत ईश्वरस्य कारणतया कुत्राप्यदर्शनात् कथं कारणत्वसिद्धिरिति चेत्, न । अस्माभिरदर्शनमात्रेण कस्यचिदसिद्धौ अन्धकारे वर्तमानस्य घटस्याप्यभावप्रसङ्गः । न चान्धकारे घटस्य ग्रहणयोग्यताया अभावात् नाभावसिद्धिरिति शङ्क्यम्, तर्हि ईश्वरस्याप्यस्मद्ग्रहणयोग्यताया अभावान्नाभावसिद्धिः । सद्भावे प्रमाणं तु श्रुतिरेवेत्युक्तमेव । स्वभाववादस्तु पूर्वमेव (जड.स.33) निरस्तः । कार्यसामान्यकारणत्वमपि पूर्वमेव (जड.स.66) निरूपितम् । आत्मनः स्वप्रकाशत्वात्स्वतस्सिद्धत्वं तु स्वस्वदृष्ट्यैव, न तु परात्मनः । परात्मनां तु स्वदृष्टान्तेनानुमेयत्वं सुलभम् । एवं वेदप्रामाण्यमनङ्गीकुर्वतामपि ईश्वरनिराकरणं न शक्यमित्येतावन्मात्रमत्र विवक्षितम् ॥

अथवा कल्पितश्चार्वाक एवात्र पूर्वपक्षी । अथवा अनादिसर्वज्ञनिराकर्तार एव पूर्वपक्षिणः । ते हि अनुपलब्ध्या ईश्वरमेव निराकुर्वन्ति—किमीश्वरः प्रत्यक्षसिद्धः? उतानुमानेन सिद्धः? उतोपमानेन सिद्धः? उत शब्देन? नाद्यः, प्रत्यक्षं बाह्यम्, आन्तरं वा? न बाह्यम्, रूपाद्यभावात् । नाप्यान्तरम्, सुखादीनामेव मनसा ग्रहणसंभवात् । स्वात्मनः मनसा ग्रहणेऽपि परात्मनः स्वमनसा ग्रहणासंभवात् । अतः परमात्मा न प्रत्यक्षसिद्धः । नाप्यनुमानम्, व्याप्तिग्रहणस्य प्रत्यक्षमूलकत्वेन, प्रत्यक्षाप्रवृत्त्यानुमानस्याप्यप्रवृत्तेः । नाप्यु-

पमानम्, तस्य केवलं शक्तिग्राहकप्रमाणत्वेन वस्तुग्राहकत्वाभावात्। नापि शब्दः। स किं वैदिकः, उत लौकिकः? वेदस्येश्वरप्रणीतत्वेनैव प्रामाण्यात्, ईश्वरस्येदानीं साधनावस्थायामेव स्थितत्वेन, तेनेश्वरसिद्धिश्चे-दन्योन्याश्रः। न च वेदस्यास्माभिरपौरुषेयत्वाङ्गीकारेणेश्वरप्रणीतत्वाभावात्, वेदानां स्वतःप्रामाण्याङ्गीकाराच्च वेदैरीश्वरःसिद्ध्येदेवेति वाच्यम्, भवद्दृष्टस्यापि वेदस्य परोक्षप्रमाणरूपत्वेन, प्रत्यक्षविरुद्धार्थस्य वेदेनापि प्रतिपादनासंभवात्। अत एव किल 'आदित्यो यूपः' इत्यादिवाक्यैः प्रत्यक्षविरुद्धतया यूपादित्यैक्यादि-बोधनासंभवात्, आदित्यसदृशे लक्षणाङ्गीकृता। एवञ्च शब्दापेक्षया प्रत्यक्षस्यातिबलवत्त्वेन शब्देन प्रत्यक्षविरुद्धतयेश्वरबोधनासंभवान्नेश्वरसिद्धिरिति वादं निराकरोति—**अप्रत्यक्ष इत्यादिना**। केवलानुपलब्धेः अभावाग्राहकत्वेन, योग्यानुपलब्धेरेवाभावग्राहकत्वेन, परात्मनः स्वस्यायोग्यत्वेन द्वितीयस्य आत्मन एवासिद्धि-प्रसङ्गात् नानुपलब्ध्या ईश्वरासिद्धिः॥

यदपि चोक्तम्—प्रत्यक्षादीनां तत्र प्रमाणत्वासंभवादिति, तत् प्रत्यक्षानुमानविषयेऽङ्गीक्रियते। लौकिक-शब्दस्य तत्राप्रमाणत्वमपि तथैव। वेदविषये तु, वेदस्यापौरुषेयत्वस्य, स्वतःप्रामाण्यस्य च सिद्धान्ते समर्थयिष्यमाणत्वात् (बुद्धि.101) वेद एव परमात्मनि प्रमाणमिति ईश्वरसिद्धिर्निष्प्रत्यूहा॥

ननु चार्वाकमते शरीरातिरिक्तस्यात्मनोऽनङ्गीकारात् कथमापादनप्रसङ्गः? न च तैः शरीरस्यैवात्मत्वात्, आत्मैव नाङ्गीकृत इति न युज्यत इति वाच्यम्, तर्हि स्वशरीरस्येव परशरीरस्यापि प्रत्यक्षमीक्ष्यमाणत्वेन 'अप्रत्यक्षः परमात्मा' इत्येव न घटेतेति कथमाक्षेपस्य सङ्गतिः? इति चेन्न ; केवलस्य शरीरस्यात्मत्वस्य तैरप्यनङ्गीकारात् ; तथासति शवस्यात्मत्वप्रसङ्गात्। आत्मा हि चेतनः=चैतन्याश्रयः। चैतन्यं च शरीरस्य धर्मः। किण्वादिभ्यो मदशक्तिवत्, शरीररूपेण भूतचतुष्टयमेलनवशाच्चैतन्योत्पत्तेरङ्गीकारात्, तादृशचैतन्य-विशिष्टस्य शरीरस्यैवात्मत्वेन, स्वात्मनः स्वानुभवसिद्धत्वेन, तादृशचैतन्यविशिष्टपरात्मनः परशरीरस्य प्रत्यक्षेण केनाप्यग्रहणात्। ननु तर्हि परात्मनः केन प्रमाणेन सिद्धिरिति चेत्, किमधिकोक्त्या? परस्पर-संभाषणादिनैव। परगतज्ञानाज्ञानादिकं कथमन्येन प्रमाणेन ज्ञायेत? अतश्चार्वाकस्यापि परात्माऽनुमेय एव। ननु तैरनुमानप्रमाणस्यानङ्गीकारात्कथमिदमिति चेत्—

सर्वेषां व्यवहारस्तु समानः खलु दृश्यते। आत्माऽस्तु, मा वा, लोकोऽयं सत्यो मिथ्याऽथवा भवेत्॥
क्षणिकं वाऽथ शून्यं वा जगदस्तु यथातथा। अविमर्शात्तु मूलस्य, तत्त्वस्यानवधारणात्॥
प्रायो नष्टाः स्वयं, चान्यान् पण्डिता नाशयन्त्यहो!। विमर्शमार्गः पाश्चात्यः, नास्माकमिति केचन॥
वदन्ति पण्ड़ितास्त्वद्य, शब्दमात्रपरायणाः। किं न स्मरन्ति 'ब्राह्मणाः संमर्शिन' इति श्रुतिम्॥
विचारशास्त्रमप्येतैः किल हन्ताद्य विस्मृतम्। गतानुगतिको लोक इति वाक्यं यथार्थितम्॥
महामेधाविभिरपि हृत् स्पृष्ट्वैव परीक्ष्यताम्। विना तत्सृष्टिविज्ञानं वाक्यानामर्थनिर्णयः॥
कथं भवेत् यतः शब्दः स्त्वर्थमेवानुधावति। सांख्यं योगस्तथा लोकायतमित्येव कीर्तिता॥
आन्विक्षकीति प्राचीनैः न चार्वाकमतं पृथक्। आन्विक्षक्येव प्राचीनलोकायतमतं मितम्॥

[ब्रह्मणो वाच्यत्ववेद्यत्वसमर्थनम्]

148. **वाच्यत्वं वेद्यतां च स्वयमभिदधति ब्रह्मणोऽनुश्रवान्ताः**
**वाङ्चित्तागोचरत्वश्रुतिरपि हि परिच्छित्त्यभावप्रयुक्ता।**
**नो चेत्, पूर्वापरोक्तिस्ववचनकलहः; सर्ववेदान्तबाधः**
**तत्सिद्धिर्हेतुभिश्चेत्, प्रसजति विहतिर्धर्मिसाध्यादिशब्दैः ॥ ३ ॥**

प्रतीतिशरणा लोके प्रयोगशरणास्तथा। तार्किकाः शाब्दिकाश्चैव विद्वद्भिरखिलैर्मताः ॥

'किण्वादिभ्यो मदशक्तिवत्' इति वदन्नेव कश्चित् कथं ब्रूयात्—'प्रत्यक्षमेव प्रमाणम्' इति? मदशक्तिः केनेन्द्रियेण गृह्यते? मनसेति चेत्, किं मनःप्रत्यक्षसिद्धम्, येन तदङ्गीक्रियेत? प्रसिद्धश्चार्वाकः अतीन्द्रियं मनः कथमङ्गीकुर्यात्? अत इदं सर्वं पण्डितानां कल्पनैव। अत्र वक्तव्यं सर्वं पूर्वमेव (जी.) विस्तरेणोक्तम्। शिष्टं समये विवेचयिष्यते। अतश्चात्र पूर्वपक्षी तटस्थ एव कश्चिद्भवतु, का हानिः॥ २ ॥

ननु ब्रह्मणः श्रुतिवेद्यत्वं न भवत्येव, तस्यावाच्यत्वादवेद्यत्वाच्चेति वदतां शून्यवादगन्धिनां मतमादौ निराकरोति वेदान्तस्यात्यन्तोपयुक्तत्वात्—**वाच्यत्वमित्यादिना**। **अनुश्रवान्ताः**=वेदान्ताः **ब्रह्मणः वाच्यत्वम्**=शब्दबोध्यत्वम् **वेद्यतां च**=ज्ञानविषयत्वं च **स्वयं अभिदधति**। या श्रुतिः परब्रह्मणः सर्वप्रमाणाद्यतीतत्वं वदति, सैव 'तं त्वौपनिषदम्' (बृ.5-9-23) इति तस्योपनिषद्गम्यत्वमपि वदति। किं बहुना? 'ब्रह्म अवाच्यम्, अवेद्यम्' इति शब्द एव किल तस्य वाच्यत्वं वदति, 'अवाच्यम्' इति शब्देन वाच्यत्वे सति कथमवाच्यत्वम्? अबोध्यमित्यनेन बोध्यमाने वा कथमबोध्यत्वम्? अतः **वाङ्चित्तागोचरत्वश्रुतिरपि**—वागगोचरत्वम्, मनोऽगोचरत्वञ्च प्रतिपादयित्री 'यतो वाचो निर्वर्तन्ते, अप्राप्य मनसा सह' (तै.आ.9) इत्यादिश्रुतिरपि **परिच्छित्त्यभावप्रयुक्ता हि**=**परिच्छेदः**='इदमियदेव' इतीयत्तानिष्कर्षः। **तदभावप्रयुक्ता हि**। **नोचेत्**=एवमनङ्गीकारे **पूर्वापरोक्तिस्ववचनकलहः**=पूर्वोत्तरवाक्यैः विरोधः, स्ववचनविरोधश्च दुर्निवारः। न तावन्मात्रम्, **सर्ववेदान्तबाधः**=सकलोपनिषद्विरोधः, सर्वोपनिषदामनुत्थितिरेव वा। अवाच्यत्वात् शब्दरूपाणामुपनिषदामनुत्थितिः। अवेद्यत्वात् उपनिषदाम्—ब्रह्मविद्यारूपाणामप्रसक्तिश्च। उपनिषच्छब्द-मुख्यार्थस्तु ब्रह्मविद्यैव। ब्रह्मणोऽवेद्यत्वे तद्विषयिणी ब्रह्मविद्या कथं स्यात्। एतादृशविद्याप्रतिपादकत्वेन खलूपनिषदोऽर्थवन्त्यो भवन्ति। ब्रह्मणोऽ**वाच्यत्वे कथमिदं** स्यात्?

ब्रह्मणोऽवेद्यत्वमवाच्यतां चानुमानेनापि साधयामः—इति वदन्तं प्रत्याह—**तत्सिद्धिरित्यादि**। **तत्सिद्धिः**=अवेद्यत्वावाच्यत्वयोः सिद्धिः **हेतुभिश्चेत्, धर्मिसाध्यादिशब्दैः**=पक्षसाध्यादिशब्दैः **विहतिः**=व्याघातः **प्रसजति**। आदिपदेन हेतुशब्दः ग्राह्यः। विमतम् अवाच्यम्, ब्रह्मत्वात्, स्वयंप्रकाशत्वाद्वा, यत् वाच्यम्, न तत् ब्रह्म, यथा घटादिः; विमतं अवेद्यम्, स्वयंप्रकाशत्वात्, यत् वेद्यम्, न तत् स्वयंप्रकाशम्, यथा घटादिः—इत्यादयः प्रयोगा द्रष्टव्याः। ब्रह्मत्वस्वयंप्रकाशत्वादिशब्दैः हेतोः कथने 'त्व'प्रत्ययप्रकृति-भूतेन ब्रह्मादिशब्देन ब्रह्माभिधीयते, न वा? नेति पक्षे कथं तस्य हेतुत्वम्। हेतोः पक्षवृत्तित्वावश्यकत्वात्।

न चेत् स्वरूपासिद्धिः । पक्षवाचकपदेन ब्रह्मणोऽभिधाने, तच्छब्देन वेद्ये च ब्रह्मणि, 'मम माता वन्ध्या' इतिवद्भवतीति सुतरां विरोधः ॥

**पूर्वपक्षिणामयमाशयः**—ज्ञानं नाम ज्ञेयपरिच्छेदः, ज्ञेयस्य वस्तुनः इदमित्थंतया निष्कृष्यस्वरूपप्रदर्शनम् । परमात्मा हि अनन्तःसर्वप्रकारेणापि, अप्रमेयः स्वप्रकाशश्च । स कथमिदंतया प्रदर्श्येतान्येन साधनेन । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केन.1-4) इति 'यदिदमित्युपासते जनाः, न तद्ब्रह्मे'ति जनैर्ज्ञायमानं न ब्रह्मेत्युक्तम् । 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' (तै.आ.9) इति वाङ्मनसापरिच्छेद्यम्=उभयोरविषयं ब्रह्मेत्युच्यते । वाक्=शब्दः । मनः ज्ञानकरणम् । एतदेवावाच्यत्वमवेद्यत्वञ्च । न च 'यतो वाचः' इति ब्रह्मानन्दस्यैवापरिच्छिन्नत्वं वक्ति, न तु ब्रह्मण इति वाच्यम् ; 'यतो वाङ्निवर्तते, तस्य ब्रह्मणः' इत्यन्वयस्यैव स्वरसत्वात् । स्वरूपं परिमितम्, धर्मस्त्वपरिमित इति विपरीतवचनम् । वस्तुतो धर्मधर्मिणोरभेदात्, स्वरूपस्यानन्तत्वसिद्धिः । ततश्च ज्ञानस्य ज्ञेयपरिच्छेदरूपत्वेनापरिच्छिन्नं ब्रह्म न ज्ञानविषय इत्यवेद्यत्वसिद्धिः । एवञ्च शब्दस्य ज्ञानजनकत्वेनैव प्रमाणत्वात्, ज्ञेयत्वे निरस्ते वाच्यत्वमपि निरस्तमेवेत्यवाच्यत्वसिद्धिः । अपि च स्वयंप्रकाशस्वरूपं ब्रह्मं यदि वेद्यं वाच्यं च भवेत्, तर्हि तत् स्वयंप्रकाशस्वरूपं न स्यात् । किञ्च सृष्टिर्नाम नामरूपव्याकरणमेवेति 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' (बृ.3-4-7) 'संज्ञामूर्तिक ॢप्तिस्तु' (ब्र.सू.2-4-17) इति श्रुतिसूत्रादिसिद्धम् । एवञ्च ब्रह्मणः स्रष्टुः सृज्यत्वाभावादेव न नामरूपसंबन्धप्रसक्तिः । ततश्च नामाभावादवाच्यत्वं, रूपाभावादवेद्यत्वमिति द्वयं न निराकर्तुं शक्यम् ॥

**सिद्धान्तिनस्तु**—सत्यमिदं सर्वं यदुक्तमेतावता । निरुपाधिकमवेद्यत्वम्, निरुपाधिकमवाच्यत्वं च यदि, तर्हि उपनिषदामितरेषामध्यात्मशास्त्राणां वा का गतिः? को वा विषयस्तेषाम्? 'ब्रह्मापरिच्छिन्नम्' 'ब्रह्मावेद्यम्' इति शब्दैः किल तद्द्वयं प्रतिपाद्यम् । तादृशशब्दैरबोध्यमेव यदि स्याद्ब्रह्म, तर्हि कथमवेद्यत्वावाच्यत्वयोस्सिद्धिः? ननु कस्य को वा लाभोऽनेन सङ्गीतकेन? ब्रह्म तु अपरिच्छिन्नमिति संप्रतिपन्नम् । ज्ञानं च ज्ञेयपरिच्छेद इत्यपि सर्वविदितम् । एतद्विरोधः परिह्रियताम् । तर्ह्युपनिषदां का गतिरिति चेत्, 'शाखाग्रे चन्द्रः' इतिवत् परिचायकाः केवलं ताः, न प्रतिपादका इति चेत्, इदमत्र पश्यन्तु निर्मत्सराः—महान् सागरस्समग्रः न केनापि कदापि द्रष्टुं शक्यः । अथ तर्हि 'समुद्र एव न दृष्टः' इति वक्तव्यं वा? 'दृष्टस्समुद्रो मया' इति वचनं मिथ्या वा? समुद्रस्य सावयवत्वात्, एकदेशदर्शनं घटेतापि । परमात्मनस्त्वखण्डत्वात् एकदेशग्रहणं कथं घटेत? अयि भो बृहस्पते! 'प्रत्यक्षमनुमानमेकदेशग्रहणात्' इति बौद्धवाद एव न श्रुतस्त्वया? ब्रह्मणः किम्? लौकिकानां घटादीनां प्रत्यक्षत्वं सर्वानुभवसिद्धमङ्गीक्रियते, न वा? अत्रैवं पृच्छति सर्वापलापवादी—घटादयो हि चाक्षुषाः प्रत्यक्षदृष्टा इत्युच्यन्ते । चक्षुरिन्द्रियजन्यं प्रत्यक्षं नाम चक्षुरिन्द्रियघटसंयोगेन जातं प्रत्यक्षम् । घटस्य पुरोदेशावच्छेदेनैव चक्षुस्संयोगो जायते, न तु यावद्घटदेशावच्छेदेन । एकपार्श्वदर्शने, तदितरपार्श्वावच्छेदेन चक्षुस्संयोगो न वर्तत एव । सर्वदेशावच्छेदेन चक्षुस्संयोगस्तु कदापि कस्यापि न संभवी । अतश्च

घटचक्षुस्संयोगस्याभावात् 'घटश्चक्षुषा दृष्टः' इति व्यवहारः कथम्? न च चक्षुरिन्द्रियस्य प्राप्यकारित्वाभावात्, नैवमापत्तिरिति वाच्यम् ; अप्राप्यकारित्वपक्षेऽपि दोषस्य समानत्वात् । चक्षुरिन्द्रियस्याप्राप्यकारित्वेऽपि न हि कुड्यादिना व्यवहितं घटादिकं चक्षुर्गृह्णीयात् । अतोऽप्राप्यकारित्वपक्षेऽपि विषयस्य चक्षुरिन्द्रियाभिमुख्यमावश्यकमेव । घटादेरर्धभाग एव चक्षुषोऽभिमुखः । अपरार्धस्तु चक्षुषो नाभिमुखः । अतश्च अर्धघट एव चाक्षुषः, न तु पूर्णः । एवं तर्हि लोकव्यवहारस्य का गतिः? अस्तु तर्हि प्रत्यक्षमप्यनुमानविशेष एवेति चेत्; लोके प्रत्यक्षात्मकज्ञानमेव यदि नास्ति, व्याप्तिग्रहणं वा, पर्वतादौ धूमादिदर्शनं वा कथमुपपादनीयम्? सर्वमिदं शून्यवादस्य पूर्वावतारः । अथवा वैतण्डिकस्य खण्डनकारस्य वा शिष्या भवन्तः । 'सर्वं खल्विदं ब्रह्म' (छां.3-14-1) इत्यङ्गीकुर्वता 'वीरहा विषमः शून्यः' (वि.स.ना.) इति शून्यपदस्य ब्रह्मपर्यायत्वाच्छून्यवादे नास्माकं प्रद्वेष इति चेत्; किमिदं कापट्यम्, उत नास्तिक्यम्? इति न जानीमः । भवदाचार्योऽपि शून्यपदं निरूपाधिकशून्यपरं न व्याचख्यौ ॥

यदि जीर्णयितुं शक्यं तत्पदं निरुपाधिकम् । न हि प्रच्छन्नबौद्धत्वं नूनं तव तदा भवेत् ॥

**श्रीशङ्कराचार्यैरपि** 'गुणशून्यः' इति व्याख्यातत्वे, कथं निरुपाधिकं शून्यत्वं भवतोच्येत? निष्कर्षतस्तु बुद्धिदृष्ट्या शून्यम्, ज्ञानदृष्ट्या तु पूर्णमिति 'शून्य' 'पूर्ण' पदद्वयमपि परतत्त्ववाचकम् । एवञ्चैकदेशचक्षुस्संयोगेनैव घटप्रत्यक्षे समर्थनीये सति, कः प्रद्वेषो वेद्यत्ववाच्यत्वयोर्ब्रह्मण्यङ्गीकारे ॥

कथं समर्थनीयं तत्प्रत्यक्षमिति चेदिदम् । शास्त्रान्तरकथारूपं समये कथ्यतेऽखिलम् ॥

न च घटादेस्सावयवत्त्वेनैकदेशचक्षुस्संयोगे संभवत्यपि, निरवयवे ब्रह्मणि कथं तत्संभव इति वाच्यम्; ब्रह्मणश्चक्षुर्गम्यत्वकथने त्वेवमाक्षेपः, को वा मतिमान् तथा वदेत् । किञ्च प्रत्यक्षं प्रति सावयवत्वं कथं प्रयोजकम्? रूपादयो हि निरवयवा अपि चाक्षुषा एव । किञ्च ब्रह्मणः प्रत्यक्षं घटादिप्रत्यक्षतुल्यं को वा वदति । अतोऽनुक्तदूषणमिदम् ॥

किं बहूक्त्या? घटादिकमपि किञ्चिदिवानिर्वचनीयमेव । को नाम घटः? कम्बुग्रीवादिमान् । को नाम कम्बुः? का वा ग्रीवा? इत्यादिप्रश्ने कस्यांचित्कक्ष्यायां इक्षुक्षीरादिमाधुर्यवत् सर्वमनिर्वचनीयमेव । 'गङ्गास्नानसदृशं पावनमन्यन्नास्ति' इत्युक्ते का नाम गङ्गा? महानदी । कियन्महती? द्विसहस्रक्रोशदीर्घा । तर्हि सर्वा संपूर्णतया दृष्टा वा? यत्र कुत्रचित्कोणे स्नात्वा, 'गङ्गायां स्नात'मिति कथमुच्यते? अत्यन्तलौकिके अतिस्थूलेऽपि विषये समस्या एवं भवन्ति चेत्, अत्यन्तालौकिकेऽत्यन्तसूक्ष्मे विषये अनिर्वचनीयत्वमुच्यते चेत्, किमाश्चर्यम्? तावता शब्दः, ज्ञानं वा लेशतोऽपि न प्रवर्तत इति चेत्, मौनी भव! मोपदिश शिष्यान् । 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ.5-9-26) इति ब्रह्म औपनिषदमित्युच्यते । उपनिषच्छब्दस्य ब्रह्मविद्यापरत्वे, तत्प्रतिपादकशब्दपरत्वे वा नेष्टसिद्धिः । विद्यापरत्वे वेद्यत्वम्, शब्दपरत्वे वाच्यत्वम्, तत्प्रयुक्तं शब्दवेद्यत्वं चेति द्वयमपि सिध्यति । एकविज्ञानेन सर्वविज्ञानादिकं वा कथं समर्थनीयम्? किं बहुना! अध्यात्मशास्त्रं सर्वमेव निर्विषयीकृतं परमवैदिकेन त्वया ॥

गुरुत्वमपि संरक्ष्यम् संग्राह्यं दक्षिणादि च। उपदेश्याश्च शिष्यास्तेऽवेद्योऽवाच्यस्तथापि सः! ॥

ज्ञानस्य ज्ञेयपरिच्छेदरूपत्वात् प्रमेयविरोधः कथं परिहरणीय इति चेत्, श्रूयताम्। श्रुतिर्हि 'निवर्तन्ते' इति वदन्ती, निवृत्तेः प्रवृत्तिपूर्वकत्वात् शब्दप्रवृत्तिं वदत्येव। वदन्ति च महर्षयोऽपि— 'इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात्। मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥' (वि.पु.) इति। आकाशे क्षिप्तः बाणः पुनरागच्छत्येव भूमिम्। बाणस्य शक्तिक्षयादेव प्रत्यागमनम्, न त्वाकाशाभावात्। एवमेव शब्दः मनश्च अनन्तं ब्रह्म प्रतिपादयितुमशक्त्या निवर्तेते इति कथने कथमवाच्यमवेद्यं च ब्रह्म भवेत्? अतस्सुष्ठूक्तम्— पूर्वापरोक्तिविरोधादिर्दुर्वार इति ॥

ननु किमेवमुच्यते? 'अशब्दमस्पर्शमरूपम्'. (कठ.1-3-15) 'तदरूपमनामयम्' (श्वे.3-10) इत्यरूपस्य ब्रह्मणः कथं वा वेद्यत्वम्? अनामयम्=अनामधेयम्। अनामधेयस्य कथं वा वाच्यत्वम्? इति चेत्, अरूपं सुखदुःखादिकं कथं वेद्यते? किञ्च किमेतावदेवाधीतम्? 'अथ नामधेयम् सत्यस्य सत्यम्' (बृ.4-1-20) 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छां.1-6-6) इत्यप्यधीयते किल। न चात्र 'इत्यधिदैवतम्' (छां.1-6-8) इत्युक्त्या देवताविषयकमिदम्, न परमात्मविषयकमिति वाच्यम्, 'अथाध्यात्मम्, य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छां.1-7-5) इत्यपि परमात्मनो रूपं श्रूयत एव। उक्तमेवाचार्यैः 'स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' (ब्र.सू.भा.1-1-20शं.) इति। रूपस्य मिथ्याकल्पितत्वमिति चेत्; मायापदस्य मिथ्यार्थकत्वं केन वैदिकेनोक्तम्? परमवैदिको यास्कस्तु मायापदं ज्ञानपर्यायं (नि.22) पठति। भवद्गुरुः माया=प्रज्ञा इति वदति। परमात्मनो विचित्रशक्तिः मायाशब्दार्थः प्रकृतिर्वा, विचित्रकार्यकारित्वात्। अन्यथा 'इच्छावशात्' इत्याचार्योक्तिरर्थशून्या स्यात्। 'साधकानुग्रहार्थम्' इत्याचार्योक्तिः रूपस्यौपाधिकत्वमुक्तं किलेति चेत्, साधकानुग्रहार्थमिति हि कारणकथनम्, फलकथनं वा। 'स्वभावादेव कण्टकस्तीक्ष्णः' इति कथने, 'कण्टकतैक्ष्ण्यं स्वभावौपाधिकम्' इत्यर्थो वा। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (गी.4-11) इति भक्तानामुद्दिधीर्षैवात्र मूलमिति स्वयमेव ह्याह। भगवतो रूपविषये वक्तव्यं सर्वम्, आचार्यब्रह्मनन्दिद्रविडभाष्यकारादीनां प्राचीनसांप्रदायिकानां वचनैरेवाभिहितम् भगवद्रामानुजैर्वेदार्थसंग्रहे ॥

अयि भोः! किमिदमन्याय्यमुच्यते, घटादयोऽपि वेद्याः, वाच्याश्च। भवत्परमात्मापि वेद्यो वाच्यश्च। किमन्तरं तर्ह्युभयोः पश्यसि? भो ब्रह्मन्! मा कुरु वृथार्भटकापट्यम्। किं घटादिवैलक्षण्यार्थमुच्यते ब्रह्मणोऽवेद्यत्वमवाच्यत्वं च। तर्हीदमपि श्रूयताम्— 'शशशृङ्गमप्यनिवर्चनीयम्, भवद्ब्रह्माप्यनिर्वचनीयम्' इत्यत्रानानुरूप्यं न लेशतोऽपि भाति किल तव मनसि! पृच्छामो भवन्तम् आचार्यसार्वभौमस्य धीरया वाण्या 'शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः?' (श्लो.27) इति। ब्रह्म वक्तुमशक्त्या शब्दो निवर्तत इति कथनेनैव वैलक्षण्ये स्पष्टे सति घटगतवाच्यत्ववेद्यत्वयोः; ब्रह्मगतवाच्यत्ववेद्यत्वयोस्तारतम्यमपि ज्ञातुं यस्त्वं नार्हसि, कथं वा बोधयेम त्वामृजुमतयो वयम्! तटस्था एव जानीयुर्वस्तुतत्त्वमित्युपरमामः। 'साधनं मिथ्या, साध्यमपि मिथ्या, साधकोऽपि मिथ्या' इति वादिनः पुरतः किमधिकं वदेम वयम् ॥ ३ ॥

[ब्रह्मपदस्य परमात्मनि लक्षणानिरासः]

149. **नित्यं ब्रह्मादिशब्दा निरुपधिकसतो लक्षका इत्ययुक्तम्**
**मुख्यस्यान्यस्य हानेर्न च निपुणधियो मुख्यमिच्छन्ति लक्ष्यम् ।**
**मुख्यत्वे बाधकं च क्वचिदपि न वयं किञ्चिदालोकयामः**
**मुख्यं लक्ष्यं च वाचः पदमिति न च तद्गोचरत्वातिपातः ॥ ४ ॥**

एवं ब्रह्मणोऽवेद्यत्वावाच्यत्ववादेऽनुपपत्तौ वर्णितायाम्, **जात्यन्धपुत्रमृतिकथान्यायेनोपर्युपरि** शब्दं वर्धयित्वा, ब्रह्मपदं न ब्रह्मवाचकमिति स्वाचार्यविरुद्धमार्गे गच्छतां विचित्रवादसरणिमनूद्य निरस्यति—**नित्यमित्यादि**।। **ब्रह्मादिशब्दाः**= ब्रह्मात्मसदादीनि परमात्मवाचकानि पदानि **निरुपधिकसतः**=निरुपाधिकसद्रूपस्य ब्रह्मणः **लक्षकाः**=लक्षणया बोधकानि, न तु मुख्यवृत्त्या । अतश्चोपनिषदां न वैय्यर्थ्यम्, अतो नानुपपत्तिः । तदेतन्निराकरोति—**इत्ययुक्तमिति**। तत्र हेतुः—**मुख्यस्येत्यादि**। **अन्यस्य**=बृहत्त्वादिविशिष्टादन्यस्य **मुख्यस्य**=मुख्यार्थस्य **हानेः**=अभावात् । लक्षणा हि मुख्यार्थबाधे प्रवर्तते । यथा 'राजवीथ्यां गृहं वर्तते' इत्युक्ते सञ्चारमार्गस्य वीथीपदार्थत्वात् सञ्चारमार्गे गृहसत्त्वमनुपपन्नमिति, तत्पार्श्वभागः वीथीपदेन लक्षणयोच्यते । एवं 'गङ्गायां घोषः' इत्यादावपि । एवमत्र ब्रह्मादिपदानां परब्रह्मण्येव मुख्यतया सर्वैः प्रयोगात्, तदेवात्र लक्ष्यं यदि वक्तव्यम्, मुख्यार्थबाधादीनामुपपादनीयतया, मुख्यार्थस्यैवाभावात्, लक्ष्यार्थोऽपि न वक्तुं शक्य इति तत्पदानां बोधकत्वमेव न स्यात् । नन्वस्त्येवात्रापि मुख्यार्थः । यत्र प्रवृत्तिनिमित्तपौष्कल्यम्, स मुख्योऽर्थः, तदन्यः तत्संबन्धी च लक्ष्यार्थः इति खलु व्यवस्था । प्रकृते ब्रह्मपदे बृहत्त्वं प्रवृत्तिनिमित्तम् । तच्च सगुणे ब्रह्मणि वर्तते, तस्य सधर्मकत्वेन बृहत्त्वधर्मान्वयात् । परं ब्रह्म तु निर्धर्मकत्वात् न बृहत्त्वधर्मवत् । अतश्च सगुणं ब्रह्मैव ब्रह्मपदमुख्यार्थः । निर्गुणं तु ब्रह्म तत्सन्निहितं लक्षणया बोध्यत इति नानुपपत्तिरित्यत्र—**न चेत्यादि** । **निपुणधियः**=शिक्षितबुद्धयः=सूक्ष्ममतयः **मुख्यम्**=पदलभ्यमर्थम् **लक्ष्यार्थम्**=लक्षणाजन्यबोधविषयम् **न च इच्छन्ति**=नैवाङ्गीकुर्वन्ति । पदानामर्थस्य च संबन्धो वृत्तिरित्युच्यते । वृत्तिः—शक्तिः, लक्षणा च । तत्र शक्तिः अनादिसङ्केतरूपा । यथा गवादिपदानां सास्नादिमान् प्राणी शक्त्या बोध्यते । अतः गोपदस्य सास्नादिमानेव शक्यार्थः । स एव मुख्यार्थ इत्युच्यते । 'गौर्वाही(हि)कः' इत्यत्र तु गोपदस्य गोसदृशोऽर्थः। वाहिकः भारवाही, सः गौरित्युक्ते बाधात् गोपदस्य गोसदृशे लक्षणा । सः लक्ष्यार्थः, अमुख्यार्थ इत्युच्यते । शक्यार्थलक्ष्यार्थयोर्मध्ये शक्यार्थस्यैव प्राधान्यम्। शक्तिः मुख्यवृत्तिः, लक्षणा तु जघन्यवृत्तिरित्युच्यते । प्रकृते तद्वत् ब्रह्मशब्दस्य बृहत्वादिगुणविशिष्टमेव शक्यार्थः, मुख्यार्थश्च । अतस्सविशेषं ब्रह्मैव ब्रह्मशब्दस्य मुख्यार्थः, इतरस्तु अमुख्यार्थः । भवद्दृष्ट्या तु परंब्रह्म लक्ष्यार्थ इत्युच्यते, अपरं ब्रह्मैव मुख्यार्थ इति विपरीतं संवृत्तम् ।।

अपि च **मुख्यत्वे**=ब्रह्मादिपदार्थानां मुख्यार्थत्वे **बाधकं च**=बाधकमपि **क्वचिदपि**=क्वापि प्रकरणे **किञ्चिदपि**=लेशतोऽपि **वयम् नालोकयामः** । अनन्वयप्रयुक्तं तात्पर्यकृतं वा बाधकं यत्र वर्तते,

तत्रैव लक्ष्यार्थस्य ग्रहणमित्येव सर्वशास्त्रकारसमयः । 'अग्निर्माणवकः' इत्युक्ते, अग्न्यभेदान्वयस्य माणवकेऽन्वयतस्तात्पर्यतश्च बाधात्, अग्निसदृशे लक्षणा स्वीकर्तव्या । न तु 'अग्निर्दहति' इत्यादावपि । न चेह ब्रह्मादिपदानां तादृशं बाधकं वर्तते शक्यार्थबोधने । अतोऽत्र लक्षणायाः प्रसक्तिरेव नास्तीति तादृशपदानि 'परं जैमिनिर्मुख्यत्वात्'(ब्र.सू.4-3-11) श्रीव्याससम्मतशक्यार्थबोधकान्येव ॥

अभ्युपगमवादेनाप्याह— **मुख्यम्**=मुख्यवृत्त्या=शक्त्या बोध्यम् **लक्ष्यम्**=लक्षणावृत्त्या बोध्यं च वस्तु **वाचः पदम्**=शब्दस्य विषय एव **इति**=इति हेतोः **तद्गोचरत्वातिपातः**=शब्दवेद्यत्वाभावः **न च**=नैव भवति । अतः वेद्यत्वं वाच्यत्वं च ब्रह्मणः नैव वारयितुं शक्यम् । शक्तेः लक्षणायाश्च शब्दवृत्तिरूपत्वात्, शक्त्या बोधनेऽर्थस्य शब्दजन्यबोधविषयत्ववत्, लक्षणया बोध्यस्याप्यर्थस्य शब्दजन्यबोध-विषयत्वं अस्त्येव । शक्त्या बोध्योऽर्थः अनुगतरूपेण बोध्येत, लक्षणया बोध्यस्त्वर्थोऽननुगतो बोध्येत । एतावानेव तयोर्भेदः । 'गौरस्ति' इत्यादौ गोपदात् शक्त्या गोत्वावच्छिन्नसकलगोबोधात् शाब्दबोधोऽपि अनुगतरूप एव भवेत् । 'गौर्वाहिकः' इत्यत्र तु प्रथमं शक्त्या गोत्वविशिष्टगोव्यक्तेः स्मरणम्, अनन्तरम् वाहिकस्य गोश्चाभेदासंभवज्ञानं योग्यत्वाभावज्ञानरूपं मानसम्, ततः गोपदेन लक्षणया गोसदृशोपस्थितिः, ततः गोसदृशाभेद इति बोधयोः क्रमः । तत्र प्रथमबोधे गोत्वावच्छिन्नबोधः, द्वितीये तु एकस्यां वाहिकव्यक्तौ गोसदृशाभेदः, न तु सर्वव्यक्तिविषयकः तादृशबोधः । अतो लक्षणास्थले अवच्छेदकावच्छेदेन बोधो न भवति । अत एव लक्ष्यतावच्छेदके न लक्षणेति न्यायविदः । एवञ्च अर्थो लक्ष्यो भवतु, शक्यो वा भवतु, बोधस्तु शाब्द एवेति द्विविधोऽप्यर्थः शब्दबोध्य एव । एवञ्च लक्षणया ब्रह्मादिपदैः परब्रह्मबोधनेऽपि वाच्यत्वम्, अत एव वेद्यत्वं च ब्रह्मणो दुर्निवारम् । यद्यपि 'वाच्यत्वम्' शक्यत्वरूपमेव । अतः लक्ष्यस्य वाच्यत्वं नास्त्येवेति केचिदाहुः ; तथापि वाच्यत्वं बोध्यत्वपर्यायं मत्वा तथोक्तमाचार्यैः । अत एव 'वाचः पदम्' इति वाच्यपदार्थ उक्तः । वाच्यं नाम वाग्विषय इत्येतावानेवार्थः । अतः शब्दजन्यबोधविषयत्वमस्त्येवे-त्यर्थः । लक्ष्यस्यापि शब्दजन्यबोधविषयत्वं सर्वसंमतम्, लक्षणाया वृत्तिरूपत्वात् । एवं सतीतरत्सर्वं सङ्केतमात्रमित्याशयः । गङ्गायां घोष इत्यादौ गङ्गापदस्य लक्षकत्वेऽपि घोषपदस्य शक्यत्वात् आहत्य तद्वाक्यजन्यं ज्ञानं शाब्दानुभवरूपमित्येव न्यायविदः ॥

**अत्रैवमाहुः**—ब्रह्म द्विविधम्—सोपाधिकं निरुपाधिकं च । अविद्योपहितं जगत्कारणत्वविशिष्टं ब्रह्म सोपाधिकमुच्यते । विशुद्धं कारणत्वोपलक्षितं निरुपाधिकमुच्यते । निरुपाधिकं ब्रह्मैव सन्मात्रम्, न तु सत्ताविशिष्टं ब्रह्मेत्युच्यते । तदेव निर्गुणम् परं ब्रह्म । सोपाधिकं सगुणं अपरं ब्रह्मेत्युच्यते । ब्रह्मादिशब्दाः अपरं ब्रह्म शक्त्या बोधयन्ति, परं ब्रह्म तु लक्षणया बोधयन्तीति 'निरुपाधिकसतो लक्षकाः' इत्युक्तम् । अतो भवदुक्तदोषाणां परिहारः ॥ तथाहि—ब्रह्मणश्शब्दावाच्यत्वे उपनिषदामर्थशून्यत्वं स्यादिति किलोक्तम्, नायं दोषः । ब्रह्मादिपदानि परमात्मावाचकान्यपि तद्बोधकानि भवेयुः । तावतैव तेषां पदानामर्थवत्त्वं सञ्जातमित्युपनिषदामर्थवत्त्वान्नार्थशून्यत्वम्, न वा तावता वाच्यत्वसिद्धिर्ब्रह्मणः । एवं वेद्यत्वमपि मुख्यं न विवक्षितम् । ज्ञानं हि द्विविधम्—मुख्यं गौणं च । मुख्यं ज्ञानम् ब्रह्मस्वरूपमेव, अन्तःकरणवृत्तिरूपं तु ज्ञानं

गौणम्। अन्तःकरणं नाम बुद्धिर्वा, मनो वा, यथासंभवं ग्राह्यम्। तस्यान्तःकरणस्य व्यापारो यः, सः अन्तःकरणवृत्तिरुच्यते। अत्र सांख्योक्तप्रक्रियैव ग्राह्या॥

ते ह्यूचुः—पुरुषश्चैतन्यमात्रस्वरूपः, न तु चैतन्यगुणकः, गुणगुणिनोरभेदात्। गुणगुणिनोर्भेदे हि संबन्धानुपपत्तिः, अनवस्थादयश्च दोषाः। गुणगुणिनोः कः संबन्धः? न तावत् स्वरूपम्; तर्हि स्वरूपस्य सदावर्तमानत्वेन, हिमवद्विन्ध्यपर्वतयोरपि विशिष्टबुद्धिप्रसङ्गः। न च संयोगः, समवायो वा? तयोः संबन्धान्तराङ्गीकारेऽनवस्था। अनङ्गीकारे, संबन्धान्तराभावेऽपि तत्र यथा वा विशिष्टबुद्धिनिर्वाहः, तथैव केवलं बुद्धिकल्पनयैवान्यत्रापि विशिष्टबुद्धिनिर्वाहः। कथं कल्पना? इति चेत्; ज्ञानमन्यत् बुद्धिश्चान्या। ज्ञानं त्वात्मस्वरूपमेव, तत्तु स्वप्रकाशं निर्विषयं च। बुद्धिस्तु प्रकृतिपरिणामरूपा। बुद्धिपुरुषयोः बिम्बप्रतिबिम्बभावेन परस्परविशिष्टबुद्ध्या सर्वे व्यवहाराः प्रवर्तन्ते। बुद्धेः बाह्यार्थेषु यः प्रसरः सः वृत्तिशब्देनोच्यते। इयं वृत्तिरेव गौणं ज्ञानमित्युच्यते। तत्पूर्वका एव 'जानामि' इत्यादिव्यवहारा इतीत्यादिकं पूर्वं (जीव.) न्यरूपि। तादृशवृत्तिविषयत्वमादाय वेद्यत्वनिर्वाहः। एवञ्च मुख्यं वाच्यत्वम्, वेद्यत्वञ्च ब्रह्मणो नास्तीति अवाच्यत्वावेद्यत्वयोरुपपत्तिः, लक्षणया तयोरुपपत्तिरित्युपनिषदां सार्थक्यम्॥

**तदेतन्न संगच्छते**। भवन्मते हि परं ब्रह्मैव सत्यम्, अपरं ब्रह्म तु मिथ्या। सत्यमिथ्ययोर्मध्ये सत्यभूतमेव पदस्य मुख्योऽर्थः। मिथ्याभूतं तु गौणोऽर्थः। 'गृहान्तस्सर्पो वर्तते' इत्युक्ते, सत्यस्सर्प एव सर्पपदस्यार्थो भवेत्। रज्जुसर्पो नार्थो भवेत्। न चास्मन्मते सत्यस्सर्प एव नास्ति, सर्वस्यापि मिथ्यात्वादिति वाच्यम्, लोकदृष्ट्या व्यावहारिकपारमार्थिकभेदाङ्गीकारात्। मुख्यवेदान्ती अमुख्यवेदान्तीत्यादिकल्पनाया अप्रमाणिकत्वस्य पूर्वमेव निरूपितत्वात्। अन्यथा सर्वेषां व्यवहाराणामुन्मत्तव्यवहारतौल्यप्रसङ्गः। अतः सत्यमेव मुख्यार्थः। एवञ्च ब्रह्मपदस्यापि सत्यभूतं निर्गुणं ब्रह्मैव मुख्यार्थः स्यात्, न तु मिथ्याभूतमपरं ब्रह्म मुख्यार्थः स्यात्। भवता तु विपरीतमुच्यते। अत एव श्रीशङ्कराचार्यैः 'परं जैमिनिर्मुख्यत्वात्' (ब्र.सू.4-3-11) इत्यत्र 'परं ब्रह्मैव ब्रह्मशब्दमुख्यार्थः, न त्वपरं ब्रह्म' इत्येव व्याख्यातम्। न च सूत्रभाष्यादीनां व्यावहारिकप्रपञ्चान्तर्गतत्वात्, व्यावहारिकदृष्ट्या परंब्रह्मैव मुख्यार्थः, अपरं ब्रह्म तु लक्ष्यार्थ इति तथोक्तमिति वाच्यम्, एवंसति वेदान्तशास्त्रं सर्वमपि व्यावहारिकवस्तुविषयकमिति, परब्रह्मणः पारमार्थिकत्वमपि व्यावहारिकमेव स्यात्, न तु पारमार्थिकम्। न चैतदपीदानीमिष्टमेव, तस्य पारमार्थिकत्वं तु ज्ञानिनां शरीरपातानन्तरमेवेति वाच्यम्; अनन्तरं वा तस्य पारमार्थिकत्वे किं प्रमाणमिति वक्तव्यम्। सन्त्येव किलोपनिषद इति न च वाच्यम्, उपनिषदामपि केवलव्यावहारिकत्वेन, तासां तत्र प्रमाणत्वासंभवात्। न च ब्रह्मणस्स्वतस्सिद्धत्वात्, न तत्र प्रमाणापेक्षेति वाच्यम्, ब्रह्मणः स्वतस्सिद्धत्वं केन प्रमाणेन सिद्धम्? ब्रह्मभिन्नस्य जीवस्य स्वतस्सिद्धत्वात्, ब्रह्मणोऽपि तत्त्वं सिद्ध्यतीति चेत्, जीवस्य स्वतस्सिद्धत्वं कथं सिद्धम्? 'अहम्' इति भासमानत्वादिति चेत्, आत्मनोऽहमर्थत्वस्य भवद्भिरनङ्गीकारात् कथं तत्सिद्धिः? किञ्च जीवस्य ब्रह्माभेदः कथं सिद्धः? 'अयमात्मा ब्रह्म' इति श्रुत्येति चेत्, तर्हि गतं स्वतस्सिद्धत्वम्। 'अहं ब्रह्मास्मि' इति ज्ञानिनामनुभवेन स्वतस्सिद्धत्वं सिद्ध्यतीति चेत्, ज्ञानिनामनुभवः भवता कथं ज्ञात इति वक्तव्यम्। तेषां वचनेनेति चेत्,

सर्वमिदं व्यावहारिकमेवेति कथं तस्मिन्नाश्वासः? ननु न तेषां वचनेन, किन्तु प्रभावादेव । अत एव 'मौनव्याख्याप्रकटितपरब्रह्मतत्त्वम्' इत्याद्युच्यत इति चेत्, तर्हि तूष्णीं तिष्ठतु भवानपि दक्षिणामूर्तिवदेव। तेन तत्परिचयो मम भवेद्देति, पश्यामि । अयि भोः! मास्तु नर्मवचनम् । नाहं तादृशप्रभाववान् । केवलं ज्ञापयामि तथ्यम् । सत्यमुक्तमायुष्मता!

जानाम्यहं सर्वमिदं तथैव यथैव तत्त्वं त्विह मन्यसे त्वम् ।
यद्वक्तुमर्हं व्यवहारकाले तदेव वक्तव्यमतोऽधिकं न ॥

ननु भोः! न दृष्टमिव भाति भवता **'अनिर्वचनीयतासर्वस्वम्'**, यत एवं विकत्थसे । भो ब्रह्मन्! न केवलं तत् दृष्टम् । सम्यगवधृतं च । परन्तु त्वयैव **'शतदूषणी'** नावधृता, यत एवं ब्रवीषि । निर्वक्तुं शक्यमिति यत् त्वं मन्यसे, तत् न तथेति बोधनमात्रमेवास्मत्कर्तव्यम्, न ततोऽधिकं किञ्चिदपीति चेत्; भो वैतण्डिक! उक्तं खलु 'जगति सर्वमपि तर्ह्यनिवर्चनीयमेव' इति । तदपीष्टमेवेति चेत्, घटादिव्यवहारोऽप्य-संबद्ध एव स्यात् । जगन्मिथ्यात्ववादिनामस्माकं तदपीष्टमेवेति चेत्, तर्हि 'मौनव्याख्याप्रकटितपरब्रह्मतत्त्वम्' इति न पठितव्यम् ; किन्तु 'मौनव्याख्याप्रकटितघटाद्यर्थजातम्' इत्येव पठितव्यं स्यात् । तत्रापीष्टापत्तौ 'अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः' (श्लो.वा.) इति कथानधिकार एवोद्घोषयितव्यः स्यात् । सर्वमनिर्वचनीयमिति जल्पन्नेवैतावद्बृहच्छब्दराशिं ग्रथितवन्तमधिकृत्यान्यत्किं वक्तव्यम् । अतोऽत्यल्पमेवेद-मुक्तम् 'चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलास्सिद्धान्ताः'(य.स.61) इति ॥

ननु भोः! 'यस्साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवम्' इति यो वदति, तादृशब्रह्मविन्निन्दायामेवं किं न बिभेषि लेशतोऽपि? किमङ्ग! प्रथमं पादं विस्मृतम्— 'ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्' इति, 'तच्चिन्तामणिमन्त्रचिन्तनफले' इत्येतदपि कुतो विस्मृतम्? चिन्तामणिमन्त्रस्य स्वरूपफलादिकं वा किं जानासि त्वम्? अस्त्विदं सर्वम् । भवदीयं **शङ्करविजयं** वा किं न जानासि? यद्वर्णयति भवदीयं वैतण्डिकं श्रीशङ्कराचार्यपराजितम्, न तु भवदनुकूलम् । अधिकमन्यत्र ॥

ननु ब्रह्मणो निर्विशेषत्वात् तत्र ब्रह्मादिपदप्रवृत्तिनिमित्तभूतबृहत्वादिधर्माणामनन्वयात् लक्षणावश्यकीति चेत्, निर्विशेषवादस्य निरस्तत्वात्, विशिष्य च शब्दस्य निर्विशेषबोधनसामर्थ्याभावस्य च बहुधा स्थापि-तत्वात् लक्षणाप्रसक्तिरेव नास्ति । 'निर्विशेषम्' इति पदं वर्तते किलेति चेत्, तदपि भवदभिमतार्थं चेत् 'शशशृङ्ग'पदतुल्यमेव । वस्तुतस्तु कतिपयविशेषविशिष्टस्यैव वस्तुनो विवक्षितधर्मविशेषाभावबुबोधयिषया 'निर्विशेष'पदं प्रयुञ्जते जनाः इत्यादिकं **श्रीभाष्ये** विवृतम् । यथा दूरात्स्थलविशेषे जनसंमर्दं पश्यन् कश्चित्, तद्देशत आगच्छन्तं कंचित् पृच्छति 'तत्र जनाः मिलिताः किल! को विशेषः?' इति 'नास्ति कश्चिद्विशेषः' इत्युत्तरत्यन्यः । 'नास्ति कश्चिद्विशेषः' इति कथनमात्रेण, न हि तत्र वस्तुनो निर्विशेषत्वं बोध्यते, बुबोधयिषितं वा । किन्तु प्रष्टुर्जिज्ञासितविशेषस्याभाव एव बुबोधयिषितः । 'निर्विशेषो विशेषः' इतिवदतां मतेऽपि प्रमेयत्वादिधर्मास्तत्रेष्टा एवेति शब्दस्य कुत्रापि न निर्विशेषबोधकत्वसंभवः । किं बहुना!

[नारायणस्य परब्रह्मत्वम्]

**150. निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे**
**सद्ब्रह्माद्यास्समानप्रकरणपठिताः शङ्कितान्यार्थशब्दाः।**

'ब्रह्मविदाप्नोति परम्' इति श्रुतिः आदौ ब्रह्मपदं, ततः परपदं च प्रयुज्य परापरब्रह्मभेदं निराकरोतीति सुस्पष्टमवगम्यते । अधिकं **श्रीभाष्यशतदूषण्यादौ** ॥ ४ ॥

एवं ब्रह्मपदार्थविचारं परिसमाप्य, साधनभूतोपासनोपयोगितया ब्रह्मपदस्य साकारब्रह्मणि पर्यवसानं प्रदर्शयति—**निस्साधारण्येत्यादि** । **'समानप्रकरणपठिताः सद्ब्रह्माद्याः शङ्कितान्यार्थशब्दाः अबाधे निस्साधारण्यनारायणपदविषये निश्चयं यान्ति'**—इत्यन्वयः । विचारस्यावश्यकताप्रदर्शनाय 'शङ्कितान्यार्थाः' इति शब्दविशेषणम् । समानप्रकरणं नाम प्रकृते जगत्कारणत्वप्रतिपादकवेदान्तशास्त्रप्रकरणं सर्वं 'सदेव सौम्येदमग्र आसीदेकमेव' (छां.6-2-1) 'ब्रह्म वा इदमग्र आसीदेकमेव' (बृ.3-4-11) इत्यादिकं विवक्षितम् । आद्यपदेन 'आत्मा वा इदमग्र आसीदेकमेव' (बृ.3-4-17) 'एको ह वै नारायण आसीत्' (अथर्व.) 'एको हि रुद्रो न द्वितीयाय तस्थे' (अथर्व. 4) 'न सन्न चासच्छिव एव केवलः' (श्वे. 4-1) 'हिरण्यगर्भस्समवर्तताग्रे' (ऋ.सं. 10-121-1) इत्यादिप्रकरणगताः आत्मरुद्रशिवहिरण्यगर्भनारायणादिशब्दा विवक्षिताः। न च सृष्टिवाक्यानामैककण्ठं मास्तु । कल्पादिभेदेनास्तु भिन्नोपादानकत्वं जगत इति वाच्यम्; अत्यन्तालौकिकस्य परब्रह्मणः प्रतिपत्तेरसंभवमाशङ्क्य, सूत्रकारैः 'जन्माद्यस्य यतः' (ब्र.सू.1-1-2) इति जगज्जन्मस्थितिलयकारणत्वरूपलक्षणद्वारा ब्रह्मप्रतिपत्तेस्संभवाभिधानात् । असाधारणधर्मो हि लक्षणम् । परस्परमतिव्याप्त्या जगतोऽनेककारणकत्वे जगत्कारणत्वस्य कथं लक्षणत्वं स्यात्? न च कालभेदेनैव भिन्नकारणकत्वस्याभिधानात्, तत्तत्कालेऽन्यस्य कारणत्वाभावान्नातिप्रसक्तिरिति वाच्यम्, ब्रह्मशब्दवाच्यस्य हि जगत्कारणत्वं लक्षणमुच्यते । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' (तै.भृगु.1) इति ह्युपनिषत् । यदि ब्रह्मशब्दार्थ एव कल्पभेदेन भिद्येत, तदा कथमेकत्र शक्तिग्रहणसंभवः? किञ्च 'धाता यथापूर्वमकल्पयत्' (तै.2-1) इति सष्टेरेकरूपता सर्वसंमता । अतः कारणवाक्यानामैककण्ठ्यमत्यन्तमावश्यकम् ॥

यत्र तु चतुर्मुखादयश्शब्दाः श्रुताः, तत्रावान्तरस्रष्टृत्वविवक्षया तेषां योजनेन, सर्वजगत्कारणत्वव्यावर्तनात्, 'शास्त्रदृष्ट्या तु' (ब्र.सू.1-1-31) इत्याद्युक्तक्रमेण वान्तर्यामिविवक्षया वा समन्वयः । तथाचैवमर्थः—**समानप्रकरणपठिताः**=जगत्कारणत्वरूपार्थप्रतिपादकेषु प्रकरणेषु, एकशाखायां भिन्नशाखासु वा पठिताः **शङ्कितः अन्यार्थो येषामिति** रुद्रचतुर्मुखादिशङ्काविषयभूताः **सद्ब्रह्माद्याः शब्दाः** सद्ब्रह्माद्या इत्यस्य शब्दपदार्थेन मुख्यविशेष्येण साकमन्वये विरोधाभावादेकदेशान्वयदोषप्रसक्तेर्नावकाशः । 'पुष्टा एते राजमातङ्गाः' इति प्रयोगस्य साधुत्वात् । पुष्टपदं हि मातङ्गान्वयि, अथवा राजमातङ्गान्वयि, न तु राजान्वयि । अथापि नात्रैकदेशान्वयदोषः कस्यापि संमतः । तथाच शङ्कितान्यार्थाः सद्ब्रह्माद्याःशब्दाः

**अन्तर्यन्ता च नारायण इति कथितः कारणं चान्तरात्मे-**
**त्यस्मादप्यैककण्ठ्यं भवति निरुपधिस्तत्र शम्भ्वादिशब्दः ॥ ५ ॥**

**निस्साधारण्यस्य**=असाधारणस्यान्यथा नेतुमशक्यत्वात् **अबाधे**=बाधकलेशरहिते **नारायणपदविषये**= नारायणपदवाच्ये **निश्चयम्**=निर्णयम् **यान्ति**=प्राप्नुवन्ति इत्यर्थः ॥

एवं साक्षाज्जगत्कारणत्वद्वारा व्यक्तिविशेषनिर्णयमभिधाय जगत्कारणत्वव्याप्तलिङ्गेनापि तन्निर्णयं प्रतिपादयति—**अन्तर्यन्ता** चेति । **च**=अपि च **अन्तर्यन्ता**=अन्तर्यामी **नारायण इति कथितः** । 'एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः' (सु.7) इति । सुबालोपनिषदः सर्वसंप्रतिपन्नत्वाभावात्कथं तदनुसारेणार्थनिर्णय इति चेत् ; अन्तर्यामिब्राह्मणस्य नारायणपरतायाः श्रीशङ्कराचार्यैरेवाभिधानात् सुबालोपनिषदो भवतानङ्गीकारेऽपि भवदिष्टसिद्धेरसंभवः । जगत्कारणत्वविचारे नारायणस्यान्तर्यामित्वप्रतिपादनं 'आम्रान् पृष्टः कोविदारानाचष्टे' इतिवदुपहास्यमित्यत्राह—**कारणं चेत्यादि** । **कारणं च**=कारणभूतं वस्तु च **अन्तरात्मा**=अन्तर्याम्येव । 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै.आन.6) इति स्रष्टुरेव तत्तद्वस्त्वन्तःप्रवेशस्य श्रवणात् अन्तर्यामित्वं कारणत्वव्याप्यं लिङ्गम् । **तस्मादपि**=जगत्कारणान्तर्यामिणोरेकत्वादपि **ऐककण्ठ्यम्**= एकाभिप्रायकत्वम् **भवति** । **श्रीशङ्कराचार्यैरपि** अन्तर्यामिब्राह्मणे (बृ.5-7-3) 'य ईदृगीश्वरो नारायणाख्यः' इत्येव व्याख्यानादन्तर्यामी नारायण एव स्रष्टा, अनुप्रविष्टश्च ॥

ननु अथर्वशिखायाम् 'कारणं तु ध्येयः' इत्युपक्रम्य, 'शंभुराकाशमध्ये ध्येयः' इति शंभुपदवाच्यस्यैव कारणत्वम्, तत्प्रयुक्तदहराकाशमध्यध्येयत्वञ्च कण्ठत एवोच्यत इति, एतदनुरोधेनैवैतरेषां नयनमस्त्वित्यत्राह—**भवतीत्यादि** । भवतीत्येतत्काकाक्षिन्यायेनोभयत्रापि संबध्यते । **तत्र**=नारायणपदवाच्ये **शंभ्वादिशब्दः**=शंभुप्रभृतिशब्दः **निरुपधिः**=सहजः **भवति** । नारायणपदस्य संज्ञात्वादन्यत्र सर्वथा न प्रयोगार्हता । शंभ्वादिशब्दास्तु न तथा संज्ञारूपाः । प्रवृत्तिनिमित्तं तु सुखहेतुत्वम् । निरुपाधिकं सुखं तु मोक्ष एव । मोक्षश्च नारायणाधीन इति 'मोक्षमिच्छेज्जनार्दनात्' इत्यादिवचनैः **घण्टाकर्णो**पाख्यानादिभिश्च सर्ववैदिकसंप्रतिपन्नम् । 'स्वयंभूः शंभुः' इति च सहस्रनामसु शंभुशब्दः पठ्यते । अन्ततस्तु—

'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥' इत्यादिभगवद्वाक्यं स्मर्तव्यं हितमिच्छुभिः ॥
'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥'
इत्यादिवचनैरार्षैर्नामभाष्यादिकेऽपि च । व्यक्तं श्रीशङ्कराचार्यैरुक्तमप्यवधीयताम् ॥

अतो नारायणपारम्यमेव सर्वविप्रकुलसंमतमवधेयम् ॥

यद्यपि श्रीभाष्ये मङ्गलपद्य एव ब्रह्मशब्दः भगवच्छब्दवत् श्रियःपतिपर्यायः प्रयुक्तः; अथापि ब्रह्मशब्दः अन्यत्रापि बहुलं प्रयुज्यत एव । अन्यथा हि 'स्याच्चैकस्य ब्रह्मशब्दवत्' (ब्र.सू.1-3-4) इति सूत्रं निर्विषयं स्यात् । ब्रह्मशब्दस्यानेकेष्वर्थेषु प्रयोगादेव हि तस्य दृष्टान्तीकरणम् । अधिकं तत्रैव ॥

अतो नारायणपदव्यतिरिक्तानि सदादिपदानि सावकाशान्येव। लौकिकस्य प्रयोगस्यास्माभिर्वारयितु-मशक्यत्वात्। नारायणपदं तु संज्ञायामेव णत्वविधानात्, असाधारणम्। अतश्च नारायणपदमन्यत्र प्रयोक्तुमप्य-शक्यम्, दृष्टप्रयोगं वा। अत एव **'अबाधे'** इति विशेषणम्। ननु रुद्रादिपदानां देवतान्तर एव रूढत्वात् कथं नारायणपरत्वसंभव इति चेत्; 'रुद्रो बहुशिराः' 'सर्वः शर्वश्शिवःस्थाणुः' 'हिरण्यगर्भो भूगर्भः' 'शंभुरादित्यः' इत्यादिपदानां विष्णुसहस्रनामसु पाठेन देवतान्तरासाधारणत्वाभावत्तेषां पदानाम्॥

ननु प्रसिद्धे वेदभागे प्रसिद्धासूपनिषत्सु च नारायणपदस्यादर्शनात्, तदनुरोधेन कथं ब्रह्मादिपदानां नारायणपरत्वनिर्णयो युज्यते? न च तैत्तिरीयोपनिषदः द्वितीयप्रश्ने सहस्रशीर्षानुवाके नारायणपारम्यस्य स्पष्टं दर्शनात्, कथमेवमिति वाच्यम्; तत्प्रश्नस्य तैत्तरीयद्वितीयप्रश्नत्वेन परिगणनस्य श्रीवैष्णवसंप्रदायमात्र-संमतत्वेन, **श्रीशङ्कराचार्या**दिभिरव्याख्यानेनेतरैः खिलत्वेनैवाङ्गीकारात्। न च खिलत्वेऽपि **सायणमाधवादि**-भिर्व्याख्यातत्वेन प्रामाण्यानपायात् नारायणपारम्यसिद्धिर्निष्प्रत्यूहैवेति वाच्यम्: भो वैदिकंमन्य! मूलभूतप्रश्न एव नावधृतस्त्वया। न वयं सहस्रशीर्षानुवाक्यस्य प्रामाण्यं पर्यनुयुञ्ज्महे। विप्रतिपन्नार्वाचीनोपनिषदनुरोधेन संप्रतिपन्नचिरन्तनवेदगिरामर्थनिर्णयो युक्तो वा? इत्येव प्रश्नः॥

ननु ब्रह्मविष्णुनारायणपदानां पर्यायत्वेन ब्रह्मणः पारम्ये नारायणस्यापि पारम्यं सिद्धमेवेति कं दोषं पश्यति भवानिति चेत्—

कथं प्रबोधयेयं त्वां श्रद्धाजाड्येन पीडितम्? प्राचीने वेदभागे तु नारायणपदं न हि॥
दृश्यते कुत एवैतत् चिन्त्यतां सप्रमाणकम्। कथं वाऽपौरुषेयेऽस्मिन् प्राच्यन्नव्यादिकल्पना?॥
अज्ञानमेव परममैश्वर्यं ये हि मन्वते। न तैस्साकं विचारादि युक्तं नूनं विवेकिनाम्॥
ब्राह्मणान् विदुषो ब्रूमः संमर्शकुशलांस्तथा। नित्यत्वेऽपौरुषेयत्वेऽप्यागमानां हि संमतौ॥
आविर्भावतिरोभावौ न वार्यौ गीष्पतेरपि। अतः पूर्वापरीभावोऽप्यनिवार्यस्त्रयीगिराम्॥
पाठक्रमादिन्यायानामन्यथा का गतिर्भवेत्। संहिताब्राह्मणादीनां क्रमोऽप्यावश्यकस्तथा॥
नित्यत्वेऽपौरुषेयत्वेऽप्यतः प्राच्यादि युज्यते। आविर्भावदृशा, तस्मादाक्षेपो युज्यतेऽञ्जसा॥
न दोषो विष्णुपर्यायपदानामविशेषतः। इत्यादिवादोऽविदुषामज्ञानं ज्ञापयेद्ध्रुवम्॥
तदा हि नाम्नां साहस्रमेकमेव भवेन्ननु। भेदोऽवर्ज्यः प्रवृत्तेस्तु निमित्तानां प्रभेदतः॥
एतत्प्रकरणं सर्वमधीत्यान्ते यथामति। पृच्छ्यतामुत्तरं ब्रूमः तावान् कालस्तु सह्यताम्॥
सद्वस्तु स्मर्यतां स्पष्टःशङ्कराचार्यनिर्णयः। नारायणोऽन्तर्यामीति बृहदारण्यके दृढः॥

अपि च विष्णुपारम्यप्रतिपादनायैव प्रोक्ते विष्णुपुराणेऽपि—सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवा-त्मिकाम्। स संज्ञां याति भगवान् एक एव जनार्दनः॥ (वि.पु.1-2-67) इति एकसैव नामरूपभेदस्वीकारेण सृष्टिस्थितिप्रलयनिर्वाहो वर्ण्यते। पाञ्चरात्रप्रक्रियायामपि एक एव वासुदेवः संकर्षणानिरुद्धप्रद्युम्नरूपैः लयसृष्टिस्थितीः करोतीति वर्ण्यते। अतश्च सदात्मब्रह्मविष्णुपुरुषवासुदेवनारायणशब्दाः पर्यायाः॥ ५॥

**[ब्रह्मरुद्रयोः परब्रह्मत्वाभावः]**

151. **विष्णोरप्यस्त्यभिख्या शिव इति शुभतारूढिरत्रानुपाधिः**
**तस्मात् ध्येयः श्रुतोऽसौ शिव इति शिव एवेति वाक्यं त्वनूक्तिः।**
**उक्तं नारायणाधिष्ठितमिति च तमोऽनेकबाधोऽन्यथा स्यात्**
**ब्रह्मेशादेर्महत्यामुपनिषदि लयाद्युक्तमेवं तु नात्र ॥ ६ ॥**

'निरुपधिस्तत्र शंभ्वादिशब्दः' इति कथनमाग्रहमात्रम्; प्रयोगस्यैव शब्दशक्तिनियामकत्वेन, शिव एव तेषां प्रयोगदर्शनात्। **विष्णोरित्यादि**। **शिव इति अभिख्या**=नाम **विष्णोरप्यस्ति**। 'विष्णोरपि' इति कथनेनैव भवत्पक्षे दौर्बल्यमङ्गीकृतमेवेत्यत्र—**अनुपाधिः**=निरुपाधिका **शिवतारूढिः**= **शिवतायाः**= मङ्गलरूपतायाः **रूढिः**=सहजशक्तिः **अत्र**=विष्णावेव। तथा च 'विष्णोरपि' इत्युक्तिः प्रयोगसाधारण्यप्रदर्शनार्था। नारायणशब्दवत् शिवशब्दः नासाधरण इति भावः। 'सर्वश्शर्वश्शिवःस्थाणुः' इति विष्णुसहस्रनामसु आर्षप्रयोगोऽत्र विवक्षितः ॥ 'शिवास्ते पन्थानस्सन्तु' 'तव वर्त्मनि वर्ततां शिवम्' इत्यादिलौकिकप्रयोगेषु हि शिवशब्दः मङ्गलार्थः सहजतया दृश्यते। 'शिवं भद्रं कल्याणं मङ्गलं शुभम्' इति कोशश्च। एवञ्च शिवशब्दस्य मङ्गलरूपतायां रूढत्वेन, 'मङ्गलानां च मङ्गलम्' (म.भा.सह.) इति विष्णोः परममङ्गलत्वेन शिवशब्दः विष्णावेव पूर्णार्थकः। अत एवान्यत्रौपचारिकः, भगवच्छब्दवत्। 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने ॥' 'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥' (वि.पु.6-5-76,77) इति हि पराशरः ॥

नन्वेवं तर्हि 'यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः' इत्यथर्वशिरसि प्रलयकाले शिव एक एवासीदिति कथं श्रूयतेति चेत्—**शिव एव इति वाक्यं तु अनूक्तिः**= अनुवादरूपः, 'यदा' इत्युपक्रमात्। अनुवादवाक्यानि पुरोवादानुरोधेनैव नेयानीत्यर्थः। तर्हि पुरोवादः कः? इत्यत्र—**उक्त**मित्यादि। **तमः**=तमस्तत्त्वम् **नारायणाधिष्ठितम्**='यस्य तमश्शरीरम्' इति तमसोऽन्तर्यामित्वात् नारायणाधिष्ठितम् इति **उक्तम्**। अन्तर्यामी च 'एष सर्वभूतान्तरात्मा दिव्यो देव एको नारायणः' इति प्रसिद्धम्। अतः 'शिव एव' इत्यत्रापि शिवशब्दः विष्णुपर एव। **अन्यथा**=एवमनङ्गीकारे **बाधः स्यात्**=अनेकप्रमाणविरोधः। किञ्च नारायणपारम्यपरायाम् **महत्याम् उपनिषदि**=महोपनिषदि 'न ब्रह्मा नेशानः' इति ब्रह्मरुद्रादीनां **लयादि**=लयादिकम् **उक्तम्**। **अत्र**=विष्णौ तु तथा **न**=नोक्तम्। अतो नारायणस्य पारम्यं न केनापि निषेद्धुं शक्यम्। नारायणपदस्य संज्ञारूपत्वेनान्यथा नेतुमशक्यत्वात् ॥

एवं तर्हि लोके शिवशब्दो देवतान्तर एव बहुलं वैष्णवैरपि कथं प्रयुज्यत इति चेत्; सत्यम्—

सर्वेऽपि ब्राह्मणा ह्यासन् ब्रह्मोपासनतत्पराः। कालक्रमेण तेऽशक्ताः संस्कारादिक्षयात् कलौ ॥
सृष्टिस्थितिलयादीनां कारणं ब्रह्म कथ्यते। तावत्तद्व्यापकं तत्त्वं यदोपास्तुं न शेकिरे ॥
एकैककारणं देवमाश्रित्य तदनुग्रहात्। आरोढुमुत्तमां कक्ष्यां यतितव्यमभूत्तदा ॥

[विष्णोस्सर्वोत्तमत्वम्]

**152. यः प्रोक्तः सर्वकर्तुः परमखिलतनोर्नापरं किञ्चिदस्ती-**
**त्यस्यैव स्यादनूक्त्योत्तरतरकथनं न त्वितोऽन्यस्य बाधात् ।**

देवतात्रयवादस्य प्रवृत्तिस्समभूत्तदा । तत्र विष्णोस्तु वैशिष्ट्येऽनुपदं हेतुरीरितः ॥
वैषम्यपरिहारार्थं शैवमार्गोऽपि दर्शितः । रुद्रस्तूग्रो मतो वेदे त्वतस्साक्षान्न पूज्यते ॥
संहारेऽधिकृतो रुद्रः तत उग्रस्स गण्यते । मुमुक्षुभिर्नपूज्यस्सः सौम्यीकरणमन्तरा ॥
उग्रोऽपि स वशी क्रोधे ह्यतस्सोऽद्य शिवो मतः । तस्मात्पाशुपतं शैवं, न रौद्रमिति गण्यते ॥
सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् । संज्ञां याति परं ब्रह्मेत्याहुः पौराणिका बुधाः ॥
शैववैष्णवतन्त्राद्यमेवं शक्तिक्षयात् क्रमात् । प्रावर्तत यथाकालं संकल्पात्परमात्मनः ॥
जगतः स्थितिकालेऽस्मिन् विष्णुस्त्वधिकृतो मतः । तस्यैवाश्रयणात् श्रेयस्साक्षात्प्राप्येत देहिभिः ॥
अत्रापि विफला हन्त! जाता विप्रा न संशयः । बाह्यवेषादिमात्रेण ज्ञेयाश्शैवाश्च वैष्णवाः ॥
अतस्त्यक्त्वा विवादादि साधनैकपरायणैः । ब्राह्मण्यं जन्मसाफल्यहेतुः प्राप्यं द्विजन्मभिः ॥
ब्राह्मण्यं हि परा काष्ठा प्रोक्ता ह्यध्यात्मवर्त्मनि । कथञ्चित्प्राप्यतां, सर्वं तदर्थमिति संग्रहः ॥
अध्यात्मशास्त्रं कालेनाधिदैवीकृतं बुधैः । एतस्यैव प्रभावोऽयं शैववैष्णवविग्रहः ॥
अध्यात्मं विस्मृतं प्रायो ब्राह्मणैः क्रमशो बत! अद्य वा जागृयुः शीघ्रं किं ते ब्रह्ममुखोद्भवाः ॥
त्यक्त्वार्थकामपरतां ख्यातिलाभादिकं तथा । अन्योन्यकलहं वापि जागृयुः स्वहिताय वा ॥
मार्गोऽयमौपनिषदः दूरादेतादृशात्कलेः । रक्षितव्यो ब्रह्मविद्भिः स्वपरश्रेयसे दृढम् ॥ ६ ॥

ननु 'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.3-9) इति पुरुषशब्दवाच्यस्य विष्णोः सर्वव्यापकत्वमुक्त्वा, 'ततो यदुत्तरतरं तदरूपमनामयम्' (10) इति पुरुषशब्दवाच्याद्विष्णोः उत्कृष्टं प्रस्तुत्य 'एतद्विदुरमृतास्ते भवन्ति' (11) इति तद्ज्ञानस्यामृतत्वहेतुत्वकथनात्, विष्णोस्सर्वोत्तमत्वं कथमित्याक्षेपं पराधिकरणार्थ(ब्र.सू.3-2-20) प्रदर्शनेन परिहरति—**यः प्रोक्त** इत्यादिना । 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥' (श्वे.3-9, म.ना.10-23) इति वाक्यं महानारायणीयेऽपि श्रूयते । तत्तु नारायणपारम्यपरमिति सर्वविदितम् ॥

कथ्यतां तव गोष्ठ्यां, भोः! ननु जागर्ति दीक्षितः । जानामि, किन्तु **श्रीकण्ठसमालोचन**मीक्ष्यताम् ॥
न दृष्टमत एवैवं क्रन्दसे कूपभेकवत् । गूढार्थसंग्रहाद्यं वा वीक्ष्यतां सावधानतः ॥

**प्रकृतमनुसरामः**— 'यस्मादपरं परं नास्ति' इत्येवार्थोऽत्र विवक्षितः । 'यस्मादपरमपि, परमपि नास्ति' इत्यर्थवर्णनं तु चकाराद्यभावान्न घटते । अतोऽपरनिषेधाज्जगन्मिथ्यात्वादेर्नावकाशः । 'न तत्समश्चा-भ्यधिकश्च दृश्यते' (श्वे.6-8) इति समाधिकनिषेधस्यैव कर्तव्यत्वात् । परसंमतजगन्मिथ्यात्ववादस्या-वैज्ञानिकत्वेनापरवस्तुनिषेधासंभवाच्च । अतः 'अपरम्' इत्यनेन सदृशवस्त्वन्तरनिषेध एव स्वरसः । किञ्च

'अपरम्' इत्यस्य नञ्तत्पुरुषत्वात्, तत्सदृशचेतनान्तरप्रतीतिरेव प्रामाणिकी। किञ्च पुरुषपदस्य वैदिकैः विष्णुपरताया एवाङ्गीकारादपि इदं विष्णुपारम्यपरमेव। श्वेताश्वतरेऽपि 'यो ब्रह्माणं विदधाति पूर्वम्' (श्वे.6-18) इति चतुर्मुखस्रष्टृत्वाभिधानात् विष्णुपरमेव तदित्यादिकं तत्रैव द्रष्टव्यम्॥

परं त्वत्रैव दुर्बुद्धे! प्रपातं नैव पश्यसि। अन्यस्य पुरुषाद्विष्णोः परमस्तीति हि श्रुतम्॥

'तेनेदं पूर्णं **पुरुषेण**' इत्युक्त्वा 'ततो यदुत्तरतरं तदरूपमनामयम्। एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति' (श्वे.3-10) इति श्रूयते। ततः=पुरुषपदवाच्यात् विष्णोः उत्तरतरम्=उत्तमं यत्, तत् अरूपम्, अनामयम्=नामरूपरहितम्। 'यत् नामरूपवत्, तत् दोषवत्' इति हि व्याप्तिः। अत एव ये एतद्विदुः, त एव अमृता भवन्ति। अथ=अथ च इतरे दुःखमेव यन्त्यपि=प्राप्नुवन्ति च इत्यर्थः। तथा च पुरुषादन्यस्य ज्ञानमेवामृतत्वसाधनम्, नेतरज्ज्ञानमिति स्पष्टं विष्णोः अवरत्वश्रवणात्, कथं तस्य परमात्मत्वमुच्यते? तदेतन्निराकरोति—**य इत्यादि**। **सर्वकर्तुः**='यस्मात्' इत्यनुवादसिद्धस्य जगत्कारणस्य अत एव **अखिलतनोः**=सर्वशरीरिणः, पुरुषपदस्य तदर्थवत्त्वात्; **अपरम्**—अन्यत् **परम्**=उत्कृष्टम् **किञ्चित् नास्ति इति यः प्रोक्तः**, पुरुषपददृष्ट्या पुल्लिङ्गनिर्देशः। **तस्यैव**=समाधिकरहितस्य तस्यैव पुरुषस्य **अनूक्त्या ततः** इति **उत्तरकथनम्**=सर्वोत्तरत्वकथनम् **स्यात्**। **इतः**=पूर्वोक्तात् पुरुषात् **अन्यस्य तु न**=नोत्तरत्वकथनम्। कुतः? **बाधात्**=पूर्वापरविरोधात्। यस्मादन्यत् परं नास्तीत्युक्त्वा, ततः यत् उत्तरतरम् इति कथनं हि उन्मत्तप्रलापायेत। अतः **'ततः'** इति नावधौ पञ्चमी, किन्तु हेतौ। तस्मात् कारणादित्यर्थः। यस्मात् पुरुषपदवाच्यादन्यत् उत्कृष्टं नास्ति, तस्मादेव यत् उत्तरतरम्=सर्वोत्तमं पुरुषतत्त्वमेव ये विदुः, त एव अमृता भवन्ति, नेतरे 'तमेव विदित्वातिमृत्युमेति'(श्वे.3-8) 'य एतद्विदुरमृतास्ते भवन्ति'(श्वे.3-10) इतिमन्त्रद्वयमध्ये वर्तमानस्यास्यान्यथाव्याख्यानं कथं घटेतेत्यर्थः॥

परमात्मा हि सर्वत्र वर्तमानोऽपि, तत्तद्गतदोषैर्न लिप्यत इति 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू.1-2-8) 'न स्थानतोऽपि परस्य' (ब्र.सू.3-2-11) इति सूत्राभ्यां स्थापितम्। 'सं' इत्येकीकारे। जीवेन सह परमात्मनोऽपि समानभोगप्राप्तिः=सुखदुःखानुभवापत्तिः जीववदन्तर्वर्तमानत्वात्, इति चेत्, न। कुतः? वैशेष्यात्='विशेष एव वैशेष्यम्' स्वार्थिकः ष्यञ्, विशेषादित्यर्थः। उभयोरप्येकशरीरान्तर्वर्तित्वेऽपि अस्ति ह्युभयोर्विशेषः, कर्मवश्यत्वावश्यत्वरूपः। जीवात्मनश्शरीरान्तर्वर्तित्वं कर्मकृतं भोगार्थमेव। परमात्मनस्तु न कर्मकृतम्, किन्तु सर्वान्तर्यामित्वकृतम्। अतो न परमात्मनस्सुखदुःखोपभोगप्रसक्तिः। तथा हि श्रुतिः—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति॥' (मुं.3-1-1, श्वे.4-6) इति। पिप्पलम्=अश्वत्थवृक्षफलम्। संसारस्यास्य 'एषोऽश्वत्थस्सनातनः' इत्यादावश्ववृक्षत्वेन निरूपणात् सांसारिकं कर्मफलं पिप्पलमित्युच्यते॥

एवं विशेषसत्त्वेन कर्मकृतभोगाभावेऽपि, जीवदेहस्य स्वतोऽपुरुषार्थत्वात्, तत्संबन्धेन परमात्मनो हेयसंबन्धोऽवर्जनीय एव हि। पूयरक्तादिसंसर्गः हेय इति हि धर्मशास्त्रविदः इत्यत्रोक्तम्—न स्थानतोऽ

**विश्वव्याप्तस्य तस्योचितमुपधिपरिच्छेदनादुन्मितत्वम्**
**स्वस्यैव प्रापकत्वादशिथिलचिदचिद्धारणाच्चैष सेतुः ॥ ७ ॥**

पीति। तत्रतत्रावस्थानप्रयुक्तोऽपि दोषः परमात्मनो न भवत्येव। तदप्युक्तम्—अन्तर्यामिब्राह्मणे प्रतिपर्यायम्—'अन्तर्याम्यमृतः' इति। अन्यत्रापि 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' (कठ.2-3-11) इति। बाह्यः=लोकबाह्यः=लोकविलक्षण इत्यर्थः। अचिन्त्यस्याप्रमेयस्य परमात्मनः केवललौकिकबुद्ध्या दोषारोपणम् आरोपयितुरज्ञानं प्रकटयेत् अतः परमात्मनो न दोषस्पर्श इति भावः॥

एवं नारायणपदवाच्यात् जगत्कारणाद्विष्णोः परं तत्त्वं नास्तीति प्रतिपाद्य तत्प्रसङ्गात् पराधिकरणे (ब्र.सू.3-2-6) प्रोक्तानन्यानपि विचारान् प्रकृतार्थपोषणाय सङ्गृह्णाति—**विश्वव्याप्तस्येत्यादिना**। 'नित्यं विभुं सर्वगतम्' (मुं.1-1-6) इति विभुत्वेन सर्वगतत्वेन च श्रुतस्य परमात्मनः 'पादोऽस्य विश्वा भूतानि' (पु.सू.) 'चतुष्पाद्ब्रह्म' (छां.3-18-2) इत्यादिना सावयवत्वादिधर्माणां विरुद्धत्वात् जगत्कारणभूतात् परिमितात् ब्रह्मणोऽन्यत् अपरिमितं तत्त्वमस्ति इति चेत्, **विश्वव्याप्तस्य**=विभोरपि **उपधिपरिच्छेदनात्**=पादाद्युपाधिभिः परिमितत्वसंभवात् **उन्मितत्वम् उचितम्**=अत्यन्तपरिमितत्वमप्यविरुद्धम्। सर्वत्र वर्तमानस्याप्याकाशस्य 'घटाकाशः' 'मठाकाशः' इत्याद्युपाधिसंबन्धवशात्परिमितत्वव्यवहारो हि दृश्यते। तद्वत् परब्रह्मणोऽपि स्वतोऽपरिच्छिन्नस्य औपाधिकपरिच्छेदवर्णनमप्यविरुद्धम्॥

एवं 'एतं सेतुं तीर्त्वान्धिस्सन्ननन्धो भवति' (छां.8-4-2 ) इति 'य आत्मा' इति पूर्वप्रकृतं परमात्मानम् 'एतम्' इति निर्दिश्य, 'तीर्त्वा' इति तस्य तरितव्यत्वेन कथनात् पूर्वप्रकृतात् परमात्मनो भिन्नं उत्तमं वस्त्वस्तीति चेत्; अत्रापि 'तीर्त्वा' इति तरितव्यत्वं नोच्यते। किन्तु 'तीर्णवेदान्तः' 'वेदान्तं तरति' इत्यादाविव प्राप्यत्वमेव तरतिधातोरर्थः। अतः एतं सेतुम्=परमात्मानम् तीर्त्वा=प्राप्य इत्येवार्थो विवक्षित इति न विरोधः॥

ननु 'अमृतस्यैष सेतुः' (मुं.2-2-5) इति, एषः परमात्मा अमृतस्य=अमृतत्वप्राप्तेः=मोक्षप्राप्तेः सेतुः=साधनभूत इत्युच्यते। लोकेऽपि हि पारगमनसाधनमेव सेतुशब्दार्थः प्रसिद्धः। अतः प्रापकात् सेतुभूतात् जगत्कारणात् प्राप्यम् अमृतरूपं वस्त्वन्यदेवेति, जगत्कारणव्यतिरिक्तं तत्त्वान्तरमस्तीति चेत्, **स्वस्यैव प्रापकत्वात्**=स्वप्राप्तेः स्वयमेव साधनरूपत्वात् न दोषः। 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः' (कठ.1-2-23, मुं.3-2-3) इति प्रवचनादीनां परमात्मप्राप्तिसाधनत्वं निषिध्य, सः यं वृणुते, तेनैव स लभ्य इति परमात्मेच्छाधीनत्वं तत्प्राप्तेः स्पष्टमभिधीयते। एषः उपासकः यं परमात्मानं वृणुते, तेनैवोपासकेन स लभ्य इति व्याख्यानं तु (शं)तत्कालानुगुणम्। यत्तच्छब्दयोरेकत्र प्रयुक्तयोः एकार्थबोधनस्वारस्यविरुद्धं च। अधिकमन्यत्र॥

ननु कथमेकस्यैव साधनत्वं साध्यत्वं च सङ्गच्छेयाताम्। सिद्धस्य खलु साधनत्वम्, असिद्धस्य च साध्यत्वम्। सदैव सिद्धं हि ब्रह्म; तत्कथं साधनं भवेत्? इति चेत्, नित्यसिद्धं ब्रह्म वा कथं फलं भवेत्, फलं हि साध्यम्। 'सिद्धं साध्यायोपदिश्यते' इति हि न्यायः। स्वरूपतस्सिद्धं ब्रह्म न फलम्, किन्तु ब्रह्मप्राप्तिरेव फलमिति चेत्, नित्यविभोर्ब्रह्मणस्सदाप्राप्तत्वेन तत्प्राप्तिर्वा कथं फलं भवेत्। प्राप्तिर्न केवलं संबन्धः, तस्य सदातनत्वात्। किन्तु विशिष्टरूपेण=ज्ञातत्वरूपेण पूर्वं तस्याप्राप्तत्वात् **कण्ठचामीकरन्यायेन** यदि फलत्वम्, तर्हि तथैव विशिष्टेन रूपेण साधनत्वमपि युज्येतैव। किं तद्विशिष्टं रूपमिति चेत्, 'यमेवैष वृणुते' इत्युक्तवरणपदवाच्यसंकल्पविशेषविशिष्टमेव साधनं रूपमिति पश्यतु भवान्। 'हार्दानुगृहीतः' (ब्र.सू.4-2-16) इति सूत्रं च स्मरतु भवान्। प्राप्यं विशिष्टं रूपं कीदृशमिति चेत्, देशविशेषो वा ज्ञानविशेषो वा तत्राप्यस्ति विशेष इति तत्प्रकरणे द्रष्टव्यम्। अतश्च प्राप्यस्यैव प्रापकत्वमप्यविरुद्धमेवेति न जगत्कारणादन्यत्परमस्ति। 'एषः' इति 'जानथ' इत्युक्तं ज्ञानमेव गृह्यत(शं) इति कुतो न भवेत्? भविष्यति तदा, यदि 'तम्' 'एकम्' इति पुंल्लिङ्गान्तपदद्वयेन प्रधानविशेष्यं न निरदैक्षत्। आख्यातेनावरुद्धस्य कथं वा एष इति पुल्लिङ्गान्तपदेन ग्रहणम्। अतस्तथा व्याख्यानं तत्कालानुगुणं 'यमेवैष वृणुते तेन लभ्यः' इति वा यदि नाभविष्यद्दैवी वाक्। अत एष इति ब्रह्मैव। 'अमृतस्य परं सेतुम्' (श्वे.6-19) इति श्रुतिर्वा कथं पीड्येत। 'श्वेताश्वतरः' (श्वे.6-21) इति ऋषेर्नाम वा कथं भवेत्। श्वेताश्वेन तरतीति श्वेताश्वतरः इति हि व्युत्पत्तिः। श्वेताश्वः हयवदनो भगवान्। 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.6-18) इति भगवतो हयग्रीवस्य स्पष्टं प्रत्यभिज्ञानम्। अन्ततः 'फलमत उपपत्तेः' (ब्र.सू.3-2-37) इति बादरायणसूत्रस्य वा का गतिः? अस्यान्यथा व्याख्यानादिकं तु पूर्वमेव (जीव.25) परिशीलितम्। 'ईश्वरप्रसादात् संसिद्धस्य' (ब्र.सू.3-2-5 शं.) इति भवदाचार्यभाष्यं वा विलोक्यताम्। सगुणविद्याविषयमिदमित्यादिकं तु बौद्धोपच्छन्दनार्थमेवेति समये स्पष्टीभविष्यति॥

सेतुत्वव्यपदेशस्य हेत्वन्तरमपि प्रदर्शयति—**अशिथिलेत्यादि**। अशिथिलं यथा तथा चिदचिदादीनां धारणाच्च=व्यवस्थापनाच्चेत्यर्थः। 'एष सेतुर्विधारण एषां लोकानामसंभेदाय' (छां.8-4-1) इति सकललोकानामसंकीर्णतया व्यवस्थापनाच्च। 'षिञ् बन्धने' इत्यस्मादौणादिकश्शब्दः सेतुरिति। संभेदः=साङ्कर्यम्। असंभेदाय=असाङ्कर्याय। यथा च वटादिबीजं विकसत्, स्वान्तर्निगूढं निहितं पत्रपुष्पफलादिजातमसङ्कीर्णमेव विकासयति, तथा प्रलयकाले हि स्वस्मिन्नेकीभूतम्, चेतनाचेतनात्मकं सर्वं जगत्, पुनस्सृष्टिकालेऽसङ्कीर्णतया तथैव व्यवस्थापयतीति **एषः सेतु**रित्युच्यते। लोके हि सेतुर्जलबन्धनार्थं निर्मीयते, अव्यवस्थितप्रवाहेण सर्वमेकं माभूदिति। तत्र मार्गव्यवस्थापनं त्वानुषङ्गिकम्। अतः जगत्कारणादन्यत् उत्कृष्टं तत्त्वान्तरं नास्त्येव। एतेन सगुणमेव जगत्कारणम्, अपरं च ब्रह्म। तदतिरिक्तं निर्गुणमेव परं ब्रह्मेत्यादिकं सूत्रकाराशयविरुद्धमिति स्पष्टम्। अतः जगत्कारणादन्यन्निर्गुणं ब्रह्म नास्तीत्येवार्थः॥ ७॥

[पुरुषसूक्तस्य वैशिष्ट्यम्]

153. पुंसूक्तं सर्ववेदप्रपठनमहितं यत्परत्वैकतानं
तस्यैव श्रीपतित्वं विशदमभिदधे ह्युत्तरत्रानुवाके।
आम्नातश्चैष नारायण इति निखिलब्रह्मविद्यासु वेद्यः
तत्तद्विद्याप्रदेशश्रुतविविधपदप्रत्यभिज्ञप्तिपूर्वम्॥ ८॥

नारायणपदवत् लक्ष्मीपतित्वमपि सदादिपदानां देवताविशेषपरत्वनिर्णये पर्याप्तं लिङ्गमित्याह—**पुंसूक्तमित्यादि। सर्ववेदप्रपठनमहितम्**=चतुर्ष्वपि वेदेषु पठितत्वेन महत्त्वपूर्णम् **पुंसूक्तम्**=पुरुषसूक्तम् **यत्परत्वैकतानम्**=यस्य देवस्य विष्णोः परत्वप्रतिपादनैकतात्पर्यकम् **तस्यैव हि**=तादृशपुरुषसूक्तप्रतिपाद्यस्यैव हि **श्रीपतित्वम्**=लक्ष्मीपतित्वम् **उत्तरत्र**=पुरुषसूक्तानन्तरपठिते **अनुवाके,**='अद्भ्यस्संभूतः' इत्याद्यनुवाके **विशदम्**=स्पष्टम् **अभिदधे**=अभ्यधात्। 'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते' इति हि महाभारतम्। 'वेदेषु पौरुषं सूक्तम् पुराणेषु च वैष्णवम्। भारते भगवद्गीता धर्मशास्त्रेषु मानवम्॥' इति तत्तद्ग्रन्थेषु प्रधानभागप्रतिपादकमार्षवचनम्। ब्रह्मयज्ञादिषु अवकाशाद्यभावे पुरुषसूक्तस्यैकस्यैवाध्ययनेन कृतकृत्यत्वं सर्ववैदिकसंप्रदायप्रसिद्धम्। पुरुषपदं हि विष्णुपरमिति सर्वसंमतम्। 'तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते।' इति तादृशपुरुषज्ञानादन्यज्ञानस्य अमृतत्वप्राप्तिसाधनत्वाभावः तत्रैव प्रत्यपादि। अयनम्=मार्गः=प्राप्त्युपाय इति यावत्। 'काश्या अयं मार्गः' इत्यादौ हि मार्गस्य तत्प्राप्त्युपायत्वं दृष्टम्। न च पुरुषपदस्य नारायणपदवत् संज्ञात्वाभावात् कथं विष्णुपरत्वनिर्णय इति शङ्क्यम्, 'स वा अयं सर्वासु पूर्षु शेते' इति सर्वान्तर्यामित्वस्यैव पुरुषपदप्रवृत्तिनिमित्त्वात्, नारायणस्यैव सर्वान्तर्यामिताया अनुपदमेव (5 श्लोके) प्रतिपादनात्। न तावन्मात्रम्; यजुर्वेदे पुरुषसूक्तानुवाकसमनन्तरानुवाकः 'अद्भ्यस्संभूतः' इत्युपक्रमकः 'सर्वं मनिषाण' इत्यन्तः 'उत्तरनारायणानुवाकः' इति वैदिकसंमतः। तत्रापि 'वेदाहमेतं पुरुषं महान्तम्' इत्यादिपुरुषसूक्तप्रत्यभिज्ञापि वर्तते। अत उभयोरैकरस्यं प्रामाणिकम्। तत्र 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति पुरुषपदवाच्यस्य लक्ष्मीपतित्वं कण्ठत एवोक्तम्। अतः देवताविशेषस्य नरायणपदवाच्यस्य विष्णोरेव परब्रह्मत्वं निर्णीयते॥

उक्तार्थस्य सूत्रकारसंमतिमप्याह—**आम्नात इत्यादिना। एषः नारायणः निखिलब्रह्मविद्यासु**=सद्विद्यादिषु सर्वास्वपि ब्रह्मविद्यासु **वेद्यः**=उपास्यः इति **तत्तद्विद्याप्रदेशश्रुतविविधपदप्रत्यभिज्ञप्तिपूर्वम्**=तत्तद्विद्यानां प्रदेशः प्रकरणम्। तत्र **श्रुतानां विविधानां पदानां प्रत्यभिज्ञप्तिः**=प्रत्यभिज्ञानम्, **तत्पूर्वम्**=तत्पूर्वकं यथा **आम्नातः**=श्रुतः इत्यन्वयः। निखिलास्वपि ब्रह्मविद्यासु उपास्यं तत्त्वं नारायण एवेति 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' (ब्र.सू.3-3-43) इत्यत्र श्रीभाष्ये स्थापितम्॥

ननु लक्ष्मीशब्दस्य विष्णुपत्नीवाचकत्वस्य प्रसिद्धावपि 'ह्री' शब्दार्थः कः? न च लज्जाया दैवीसंपद्रूपत्वात् विशेषतः स्त्रीणां भूषणत्वात् तद्विशिष्टत्वं लक्ष्म्यास्तेनोच्यत इति लक्ष्म्या विशेषणं तदिति

वाच्यम्; चकारयोः द्विवचनस्य च विरोधापत्तेः । वाजसनेये समानप्रकरणे 'श्रीश्च ते' इत्येव पाठात् ह्रीशब्दस्य भूदेवीपरतापि न संभवतीति; चेत्; अस्त्रभूषणदेवीप्रभृतीनां शक्तिरूपतायाः विष्णुपुराणादिषु वर्णनात् लक्ष्म्या अपि विष्णुशक्तिरूपत्वेन तदीयनानाविधरूपान्तराणामपि तद्रूपत्वात्तच्छब्देनैव निर्देशसंभवेन श्रीशब्देन भूदेव्या अभिधाने विरोधाभावात् । 'दयालक्ष्मी' 'धैर्यलक्ष्मी' 'राज्यलक्ष्मी' 'धनलक्ष्मी' 'धान्यलक्ष्मीः' 'वीरलक्ष्मीः' इत्यादिप्रयोगस्य दर्शनात् । 'परास्य शक्तिर्विविधैव श्रूयते' (श्वे.6-8) इति विष्णुशक्तीनामनन्ततायाः श्रवणात् । अतः श्रेयस्साधनम्, एतदङ्गतया प्रेयस्साधनं सर्वमपि लक्ष्मीपद-वाच्यम् । न च शक्तेस्सिद्धान्ते अद्रव्यत्वात् लक्ष्म्याः कथं शक्तिरूपत्वमिति शङ्क्यम्; कार्योपयोग्यपृथ-क्सिद्धविशेषणं शक्तिरिति शक्तिलक्षणाक्रान्तत्वात् तथाभिधानाम् । एतद्विचारोऽद्रव्यसरे विस्तरेण भविष्यति ॥

प्रसङ्गादत्रेदमुच्यते—साम्यावस्था प्रलयः, विषमावस्था सृष्टिरिति प्रसिद्धम् । एकमेव परं तत्त्वं सर्वजगत्कारणं सर्वलोकयोगक्षेमावहं सत्, तत्तत्काले जनानामुन्नत्यवनत्योरनिवार्यतां पश्यत्स्वयमपि तदनु-गुणमवरुह्यावरुह्य सर्वसुलभं भवति वात्सल्यातिशयात् । तदिदमुक्तम्—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (गी. 4-11) इति । एवं चेतनानां परस्परमतिवैषम्यस्यापरिहार्यत्वादेव परमात्मनोऽप्यनन्त-रूपत्वमपरिहार्यम् । अत्यन्तं दुरवगमं परमात्मतत्त्वमित्यसकृत्स्मर्तव्यम् । एवं दुरवगमत्वादेव लक्ष्म्याः स्वरूपस्वभावादिविषये चर्चापि वृथैवेत्यवगन्तव्यम् ॥

**अत्रैवं विचारः**—तैत्तिरीये महानारायणीये 'दह्रं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्य-संस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् ॥' (तै.2-12) इति दहरविद्या प्रति-पादिता । एतत्समनन्तरम्—'सहस्रशीर्षं देवम्' इत्यारभ्य 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमःस्वराट्' (तै.2-13) इत्यन्तः सहस्रशीर्षानुवाकः श्रुतः । अत्र 'सहस्रशीर्षम्' इत्यादिना पुरुषसूक्तप्रत्यभिज्ञापूर्वम् 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥' इति नारायणस्य पुरुषपदवाच्यत्वमभिधाय 'स ब्रह्मा स शिवः सेन्द्रः' इति तस्यैव ब्रह्मरुद्रादिशरीरित्वप्रयुक्त-तत्तत्पदवाच्यत्वमभिधाय 'सोऽक्षरः परमस्स्वराट्' इति तस्य परब्रह्मत्वकथनेनोपसंहारः कृतः । किमयमनुवाकः पूर्वप्रसक्तदहरविद्योपास्यतत्त्वनिर्णयाय प्रवृत्तः उत सर्वब्रह्मविद्योपास्यविषयनिर्णयाय प्रवृत्तः? इति संशयः । पूर्वानुवाके 'तस्मिन् यदन्तस्तदुपासितव्यम्' इति कस्यचित् दहरान्तर्वर्तिन उपास्यत्वमात्रमभिहितम्, न तु स्वरूपादिकमुक्तम् । अस्यानुवाकस्य तत्समनन्तरप्रवृत्तत्वात्, दहरविद्याप्रकरणपठितत्वेन दहरविद्याशेषत्व-प्रतीत्या, दहरविद्योपास्यतत्त्वविशेषनिर्णयार्थत्वमेव स्वरसम् । परन्तु 'सहस्रशीर्षम्' इत्याद्युपक्रमे पुरुषसूक्त-प्रत्यभिज्ञानात्, पुरुषसूक्ते 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यते' इति ब्रह्मविद्यासामान्योपास्य-प्रतिपादनोपक्रमेण सर्वब्रह्मविद्योपास्यतत्त्वनिर्णयार्थत्वप्रतीत्या संशये पर्यवसानमनिवार्यम् । एवं संशये—अत्र पुरुषसूक्तप्रत्यभिज्ञानदर्शनेऽपि समनुपूर्वानुवाके दहरविद्याप्रसङ्गात् तत्प्रकरणस्थमिदमपि तच्छेष-भूतमिति दहरविद्याशेषत्वमेव युक्तमस्यानुवाकस्येति न सर्वविद्योपास्यशेषत्वमिति नारायणस्य न सर्वब्रह्मविद्यो-पास्यत्वमिति पूर्वपक्षः ॥

**अत्रैवं सिद्धान्तः**—लिङ्गभूयस्त्वादित्यादिनोच्यते । **लिङ्गम्**=चिह्नम् । तत्तत्परविद्याचिह्नभूत शिवाक्षरादिपदघटितवाक्यानि लिङ्गशब्देनोच्यन्ते । तादृशवाक्यानां **भूयस्त्वात्**=बहुलतया सर्वब्रह्मविद्योपास्य विशेषनिर्णय एवानेनानुवाकेन क्रियते । **तद्धि**=वाक्यं हि **बलीयः**=प्रकरणापेक्षया बलवत् । **तदपि**=प्रकरणाद्वाक्यस्य बलीयस्त्वमपि **हि**=प्रसिद्धमेव पूर्वकाण्डे । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै.सू.3-3-14) इत्यत्रेति सूत्रार्थः । यद्यपीदं दहरविद्याप्रकरणम्; तथापि प्रकरणापेक्षया वाक्यस्याधिकबलत्वेन वाक्यादयमनुवाकस्सर्वब्रह्मविद्याङ्गभूत इति सर्वविद्योपास्यतत्त्वनिर्णयपर एवेति नारायण एव परंब्रह्म सर्वविद्योपास्यश्च । 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः ॥' इति सर्वान्तर्यामित्वम् ; 'सोऽक्षरः परमः स्वराट्' इत्यक्षरपदवाच्यत्वम्; स ब्रह्मा स शिवः' इति सर्वात्मकत्वम् इत्यादिकं हि परब्रह्मासाधारणं लिङ्गम् । तद्घटितवाक्यानामस्मिन्ननुवाके बाहुल्यात्, अयमनुवाकः न केवलं दहरविद्योपास्यवस्तुविशेषनिर्णयपरः, किन्तु सर्वब्रह्मविद्योपास्यवस्तुविशेषनिर्णयपरः । न च प्रसिद्धं सामर्थ्यरूपमर्थं विहाय लक्षणया लिङ्गपदस्य वाक्यपरत्वाश्रयणक्लेशः कुत इति शङ्क्यम्, अक्षरादिपदानां यौगिकत्वेन, देवतान्तरसाधारणत्वाभिमानस्य प्रसिद्धेनार्थेन वारणासंभवात् । न च नारायणपदबाहुल्यस्य सत्त्वात् तत्पदस्य संज्ञात्वेन देवताविशेषपरत्वनिर्णयसंभवात् नानिष्टापत्तिरिति वाच्यम् ; एवं निर्वाहसंभवेऽपि 'लिङ्गभूयस्त्वात्' इति सौत्रभूयस्त्वपदास्वारस्यप्रसङ्गात् । न चास्त्येव तदपि, नारायणपदस्य बहुवारं पठनादिति शङ्क्यम् ; अस्यार्थस्य 'भूयः'शब्देन ग्रहणासंभवात्, पुनःपुनरावृत्तेरभ्यासरूपतात्पर्यलिङ्गरूपत्वेन मीमांसकसंमतसामर्थ्यरूपलिङ्गत्वासंभवेनागत्या वाक्यपरत्वाश्रयणस्यानिवार्यत्वात् । अस्तु तथैव का हानिरिति चेत्, प्रकरणबलादुत्थितपूर्वपक्षस्य प्रकरणाद्बलेन वाक्येनैव समाधेयत्वात् । अभ्यासरूपतात्पर्यलिङ्गस्य 'श्रुतिलिङ्ग'इत्यत्रस्थलिङ्गत्वेन पूर्वमीमांसकैरनङ्गीकारात् । कुतस्तैस्तात्पर्यलिङ्गं नाङ्गीकृतमिति तु न पर्यनुयोज्यम् ; कर्मकाण्डे तात्पर्यान्वेषणानुधावने ब्रह्मकाण्डवदेवानन्तपक्षप्रसरणप्रसङ्गेनानिर्णये प्राप्ते लिङ्गापेक्षया श्रुतेः प्राबल्योपपादनासंभवेन कर्मानुष्ठानस्यैव विलोपप्रसङ्गभयेन कर्मब्रह्मवादिभिस्तथानङ्गीकारस्य युक्तत्वात् । ब्रह्मवादिभस्तु समन्वयाधिकरणन्यायेनोत्तरकाण्डप्रधानप्रतिपाद्यार्थस्य स्वयंपुरुषार्थरुपत्वाङ्गीकारेण, एतन्निर्णयस्य षड्विधातात्पर्यलिङ्गाधीनत्वेन अस्य 'श्रुतिलिङ्ग'इत्यत्रत्यलिङ्गपदार्थत्वाभावादित्यलं शास्त्रान्तरविचारविस्तरणेन । एवञ्च नारायणस्यैव परब्रह्मत्वेन, तस्यैव सर्वब्रह्मविद्योपास्यत्वसिद्धिरिति ॥

ननु भोः किं भवन्तोऽपि नवीनप्रकियां श्रिताः । त एव हि ब्रह्मकाण्डे वदन्ति प्रक्रियामिमाम् ॥
वेदान्तवेद्यो विष्णुर्वा रुद्रो वेति विकल्प्यते । ऊचुः प्रत्यधिकरणं विष्णुपारम्यसाधनम् ॥
वयमेव ततःस्यामो वैष्णवा न त्वतः परे । रामानुजार्यैः कुत्रापि नैवं हि प्रतिपादितम् ॥
भुजमास्फालयन्त्येवं **नव्यवेदान्तिनो** मुहुः । अत्रोत्तरं किं भवतामुच्यतामाग्रहं विना ॥
अत्र किञ्चित्पूर्वमेव प्रोक्तं तदवधार्यताम् । देवतावादतोऽन्यो हि ब्रह्मवादस्सतां मतः ॥
अध्यात्ममन्यदेव स्यादधिदैवं तथेतरत् । सांकर्यकरणात् प्रायो विप्रा नष्टा न संशयः ॥
अध्यात्ममौपनिषदम् अन्यदागमिकं मतम् । आद्यं तु वैदिकं प्रोक्तं द्वितीयं तान्त्रिकं मतम् ॥

[विष्ण्वतिरिक्तस्य परत्वाभावः]

**154. रुद्रेन्द्रादिश्च यत्र स्फुरति परतयाऽनन्यथासिद्धलिङ्गैः**
**तत्तत्तत्त्वैर्विशिष्टो हरिरखिलतनुस्तासु विद्यासु वेद्यः।**
**पारम्यं त्वान्यपर्यान्न भवति, न किरित्यादिभिः स्तोत्रवाक्यैः**
**अन्याकूतैर्नमस्यादिभिरपि न परः स्यादनैकान्त्यदुःस्थैः ॥ ९ ॥**

---

विष्णुपारम्यवादोऽन्यः ब्रह्मवादस्तथापरः । नारायणपरत्वस्य वादोऽप्यन्योऽवधीयताम् ॥
त्यागोद्देश्या देवता स्यात्पूर्वकाण्डे तु संमता । उपादानं तु जगतो ब्रह्मेत्यत्र तु कीर्त्यते ॥
ब्रह्मोपादानता नव्यैः, तार्किकैरिव नोच्यते । अतस्तेषां प्रक्रियान्या श्रीरामानुजसंमतात् ॥
अतोऽनयोस्तु तुलनं न कार्यं मर्मवित्तमैः । प्रायोऽनेके न जानन्ति वस्तुतत्त्वं रहस्स्थितम् ॥ ८ ॥

ननु नारायणानुवाके (सहस्रशीर्षानुवाके) संज्ञारूपस्य नारायणपदस्य सत्त्वेन तस्य विष्णुपारम्यपरत्वनिर्णयेऽपि, यत्र उमापतित्वनीलकण्ठत्वादिरूपं शिवासाधारणं लिङ्गं दृश्यते, त्वाष्ट्रवधकर्तृत्वादिरूपमिन्द्रासाधारणं वा लिङ्गं दृश्यते तत्प्रकरणानां विष्णुपरत्वासंभवेन कथं विष्णोः सर्वब्रह्मविद्यावेद्यत्वसंभव इत्यत्राह— **रुद्रेन्द्रादीति** । 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' (कै.6) इत्युपक्रम्य 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये' (कै.9) इति दर्शनात् रुद्रस्य पारम्यमनिवार्यम् । एवं 'मामेव विजानीहि' 'एतदेवाहं मनुष्याय हिततमं मन्ये, त्रिशीर्षाणं त्वाष्ट्रमहनम्— तं मामायुरमृतमित्युपास्व' (कौ.3-9) इत्यादौ **यत्र च**=यस्मिन् प्रकरणे **अनन्यथासिद्धैर्लिङ्गैः**=अन्यथा=नारायणपरतया नेतुमशक्यैः उमापतित्वत्वाष्ट्रहन्तृत्वादिरूपैर्लिङ्गैः **रुद्रेन्द्रादिश्च परतया स्फुरति**=रुद्रो वा इन्द्रो वा सर्वोत्कृष्टतया प्रतीयते, **तासु विद्यासु**=तादृशब्रह्मविद्यासु **अखिलतनुः**=सर्वचिदचिच्छरीरी **हरिः**=विष्णुरेव **तत्तत्त्वैः**= तत्तत्प्रकरणप्रतिपाद्यचेतनाचेतनरूपैः तत्त्वैः **विशिष्टः**=शरीरी वेद्यः उपास्यो भवति । अतः रुद्रेन्द्रादिशरीरकः परमात्मा नारायण एव सर्वत्र मुमुक्षूपास्यः । एवम्—**आन्यपर्यात्**=तात्पर्यान्तरसत्त्वात् **न किरित्यादिभिः स्तोत्रवाक्यैः पारम्यं न भवति**=इन्द्रादीनां परदेवतात्वं न संभवति । एवम्—**अन्याकूतैः**=अन्यतात्पर्यकैः अत एव **अनैकान्त्यदुःस्थैः**=व्यभिचारादिदोषग्रस्तैः **नमस्यादिभिरपि**=नमस्कारादिभिरपि, **परः न स्यात्**=रुद्रेन्द्रादिः परतत्त्वं न स्यात् इत्यन्वयार्थः । 'न किरिन्द्रस्त्वदुत्तरः' इति श्रुतिः । हे इन्द्र! त्वदुत्तरः=त्वत्तः श्रेष्ठः किः=कश्चिदपि न=नास्ति इत्यर्थः । 'कः' इत्यर्थे 'किंः' इति वैदिकप्रयोगः । अनेनेन्द्रस्य सर्वश्रेष्ठत्वमुच्यते । एवं नमकानुवाके (तै.सं. 4-5) नमस्कारस्सर्वोऽपि रुद्रविषयः श्रूयते । नैवं विष्णोः स श्रूयते । तेन रुद्रस्यैव नमस्कार्यत्वसिद्ध्या तस्यैव श्रेष्ठत्वसिद्धिरिति पूर्वपक्षसंग्रहः । समाधानं तुस्तोत्रस्य सर्वस्यापि तत्तदुद्देश्यभूतदेवतादेःसन्तोषार्थत्वेन तत्तत्प्रकरणे इन्द्रादेस्तथा स्तोत्रमात्रेण न तस्य सर्वेश्वरत्वसिद्धिः । रुद्रस्योग्रत्वेन हिंसकत्वप्रसिद्ध्या, तत्प्रसादार्थं तथा नमस्कारबाहुल्यं युज्यते । अत एवान्ते 'नमस्तेऽस्तु मा मा हिंसीः' इति श्रूयते । मा=मां प्रति मा हिंसीः=हिंसको माभूरित्यर्थः । लोकेऽपि

[अवतारतत्त्वम्]

155. धर्माणां स्थापनार्थं स्वयमपि भजते शासिता शासनं स्वं
स्वस्यापि प्रत्यवायानभिनयति नृणां पापभीतिं विधित्सुः ।
शुद्धैः स्वेच्छावतारैर्भजति सुलभतां तावतोत्पत्त्यनूक्तिः
प्रोक्तो विष्णुः शिखायामपि हि स पुरुषः प्राप्ततारार्धमात्रः ॥ १० ॥

हिंसकं दृष्ट्वा एवं प्रार्थयन्ति जना इति प्रसिद्धमेव । अत एवमादिभिः नैषां परत्वनिर्णयः । एतादृशस्थलेऽर्थनिर्णयार्थमेव ऐन्द्रीन्यायः प्रवृत्तः । स च पूर्वमेव (जीव. 35) विवृतः ॥ ९ ॥

ननु 'वेदवेद्ये परे पुंसि जाते दशरथात्मजे' इत्यादौ वेदप्रतिपाद्यः परमात्मैव दशरथपुत्रो रामो जात इति रामाद्यवताराणां भगवद्रूपत्वमुच्यते, तथा सर्वसंमतं च । 'अजायमानो बहुधा विजायते' (तै.आ.) इति श्रुतिसिद्धं चैतत् । तत्र च सीतावियोगप्रयुक्तप्रलापादिकं प्रसिद्धम् । अतश्च परमात्मनोऽपि दुःखादिदर्शनात्, तस्यापि कर्मवश्यत्वमनिवार्यमित्याशङ्कां समाधत्ते—**धर्माणामित्यादिना । धर्माणाम्**=वर्णाश्रमादिरूपाणां धर्माणाम् **स्थापनार्थम्**=स्थिरीकरणार्थम् **शासिता**=स्वयं शासनकर्ता सन्नपि भगवान् **स्वम्**=स्वीयम्=स्वेन विरचितम् **शासनम् स्वयमपि भजते**=सेवते=अनुसरति । **नृणाम्**=अल्पप्रज्ञानां नराणाम् **पापभीतिम्**=पापेभ्यो भयम् **विधित्सुः**=विधातुम्=आधातुम् इच्छन् **स्वस्यापि प्रत्यवायान्**=पापानि **अभिनयति** । 'पूर्वं मया नूनमभीप्सितानि पापानि कर्माण्यसकृत्कृतानि' (रा.3-63-4) इत्यादौ हि तथा दृश्यते । ननु यदि रामादिरूपेण जायते, तर्हि 'जातस्य हि ध्रुवो मृत्युः' (गी.2-27) इति मरणमप्यावश्यकमेवेत्यत्राह—**शुद्धैरित्यादि । शुद्धैः**=कर्मसंबन्धरहितैः **स्वेच्छावतारैः**=स्वीयेच्छयैव प्रयुक्तैः अवतारैः=रामकृष्णाद्यवतारैः **सुलभताम्**=सकलमनुजनयनविषयताम् **भजति । तावता**=स्वेच्छाप्रयुक्तत्वेन कर्मकृतत्वाभावात् **उत्पत्त्यनूक्तिः**= 'विजायतेः' इत्यनुवादः । सर्वमिदं केन प्रमाणेनोच्यते? प्रत्युत 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' (अथ.शि.) इति विष्णोरुत्पत्तिः श्रुतः इत्यत्र—**प्रोक्त इत्यादि । सः पुरुषः**=पुरुषोत्तमो भगवान् **शिखायामपि**=नारायणाथर्वशिखायामपि **सः**=प्रसिद्धः **पुरुषः**=पुरुषपदवाच्यः **विष्णुः प्राप्ततारार्धमात्रः**=प्राप्तः=क्रमशोऽधिदेवतात्वेन प्राप्तः **तारस्य**=प्रणवस्य **अर्धमात्रा** येनेति बहुव्रीहिः। अथर्वशिरसि अकारोकारमकारनादात्मकस्य प्रणवस्य सार्धत्रिमात्रात्मकस्यान्तिमोऽर्धमात्रा नादं इत्युच्यते । अथर्वशिरसि 'चतुर्थी विद्युमती सर्ववर्णा पुरुषदैवत्या' (1) इति प्रणवे प्रधानस्य नादस्याधिदेवः पुरुष इत्युच्यते । अतश्च यत्र 'शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य' (2) इति श्रूयते, तत्रैव नादस्याधिदेवता पुरुष इत्युच्यते । पुरुषश्च विष्णुरेवेति स्थापितमेव । अतश्च विष्णोस्सर्वोत्तमत्वसिद्धिः॥

ननु भो ब्रह्मन्! कं वञ्चयस्येवम्? अथर्वशिरसि किल विष्णोः सृज्यत्वं प्रदर्शितम् । प्रणवार्थेषु च 'प्रथमा रक्ता ब्राह्मी ब्रह्मदैवत्या द्वितीया शुभा शुक्ला रौद्री रुद्रदैवत्या तृतीया कृष्णा विष्णुमती विष्णुदैवत्या' इति विष्णुः नादाधिदेवपुरुषापेक्षयावरः प्रत्यपादि । कथं विष्णुपुरुषयोरभेदोऽभिधीयते त्वया! किञ्च 'ब्रह्मविष्णु-

[विष्णुपारम्ये प्रमाणानि]

156. **आद्यं रामायणं तत् स च निगमगणे पञ्चमः पञ्चरात्रं**
**सत्त्वोपज्ञं पुराणं मनुमुखमुनिभिर्निर्मितं धर्मशास्त्रम् ।**

रुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' (2) इति तत्रैव विष्णोस्सृज्यत्वस्य श्रवणात् कथं तस्य परत्वसंभव इति चेत्, रुद्रस्यापि तत्र सृज्यत्वश्रवणात् तव वा कथमिष्टसिद्धिः? अयि भोः! न वयं रुद्रपारम्यवादिनः। वयं हि ब्रह्मवादिनः । अतः शिवस्यापि पारम्यं नास्ति, न वा विष्णोः । ब्रह्म तु त्रिमूर्त्यतीतम् । तदेव च परमं तत्त्वम् । पुरुषपदमपि ब्रह्मपर्यायमेव— 'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ.3-4-1) इति दर्शनात् ; न तथा विष्णुपदमिति चेत्—भो ब्रह्मवादिन्! इदमत्रावधीयताम्—

ब्राह्मणा अभवन् सर्वे कृते ब्रह्मपरायाणाः । तस्मात्तु लेशतो भ्रष्टास्त्रेतायां यज्ञमाश्रिताः ॥
द्विविधावप्यमू मार्गौ निराकारप्रधानकौ । यज्ञाद्धीनाः द्वापरे च कर्मयोगं समाश्रिताः ॥
कलौ ततोऽपि हीनास्ते केवलां भावनां श्रिताः । देवतानुग्रहेणैव श्रेयोऽवाप्तिः कलौ युगे ॥
विष्णोर्देवोत्तमत्वं च पूर्वमुक्तं सुविस्तरात् । भवन्तस्तु वृथा, हन्त! **दीक्षितेन** प्रतारिताः ॥
शैवपारम्यभावेन वैष्णवान् दूषयन्त्यहो! न युष्माकमिदं युक्तं शङ्करार्यानुयायिनाम् ॥
इत्याद्यवादि बहुधा शैववैष्णवकश्मले । सप्रमाणं च **श्रीकण्ठसमालोचन** ईक्ष्यताम् ॥

तथा च प्रकृते प्रणवे प्रधानभूतस्य नादस्य वाच्या देवतैव प्रधानभूता । अत एव 'सर्ववर्णा' इति सर्वात्मकत्वं तस्योच्यत इति नारायणपारम्यसिद्धिर्निष्प्रत्यूहा ॥ १० ॥

एवं प्रमेयं संशोध्य, 'मानाधीना मेयसिद्धिः' इति न्यायात्, तत्र प्रमाणानि संकलय्य प्रदर्शयति— **आद्यमित्यादि । आद्यं तत् रामायणम्**=आदिकाव्यत्वेन प्रसिद्धं रामायणम् **नः**=अस्माकम् **तत्परत्वे, तत्परम्**=तात्पर्यवत् इति वाक्यरचना ज्ञेया । सः=अर्थः परः=वाच्यत्वेनोद्दिष्टः यस्य पदस्य वाक्यस्य ग्रन्थस्य वा, तत् 'तत्परम्' भवति । तत्परस्य भावः=तात्पर्यम्, इति हि तात्पर्यपदव्युत्पत्तिः । **निगमगणे पञ्चमः स च नः तत्परत्वे तत्परम्** इत्येवं वाक्यानि योजनीयानि । **निगमगणः**=वेदसमुदायः, तस्मिन् **पञ्चमः**=ऋग्यजुसामाथर्वाणां चतुर्णामुपरि 'भारतः पञ्चमो वेदः' इति परिगणितम् महाभारतम् । इतिहासपुराणयोर्मध्ये तत्रापि महाभारतं गरीयः । 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्' इति हि तत् प्रशंस्यते । अतस्तस्य पञ्चमवेदत्वम् । एवं—**पञ्चरात्रम्**='पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति हि प्रशंस्यते तत् । एवम् **सत्त्वोपज्ञं पुराणम्**='सत्त्वेन गुणेनादिभूतेनोपज्ञायमानत्वात् सत्त्वोपज्ञं वैष्णवादिपुराणम्' इति सर्वार्थसिद्धिः ॥ यद्यपि 'सत्त्वात् सञ्जायते ज्ञानम्'(गी.18-16) 'सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥' (गी.18-11)इति ज्ञानं सर्वमपि सत्त्वगुणकार्यमेव । तथापि ज्ञानेऽपि सात्त्विकराजसतामसविभागस्य सर्वसंमतत्वात्, सत्त्वगुणाधिष्ठात्रा भगवता स्वयमुपदिष्टत्वाच्च शुद्धसात्त्विकं वैष्णवं पुराणं कथ्यते । पुराणानां सात्त्विकराजसतामसविभागः

**त्यक्तान्यो मूलवेदः कठपरिपठिता वल्लिकास्तापनीयं**
**सौबालब्रह्मविन्दुप्रभृतिकमपि नस्तत्परं तत्परत्वे ॥ ११ ॥**

वेदार्थसंग्रहे मत्स्यपुराणवचनैः प्रतिपादितः— 'अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥' इत्यादौ । तथा च विष्णोः परत्वप्रतिपादकं पुराणं सात्त्विकम् । **मनुमुखमुनिभिः**=मनुप्रभृतिभिः महाज्ञानिभिः **निर्मितं धर्मशास्त्रम्**=मनुस्मृत्यादिकम् । मनुस्मृतावुपक्रम एव हि 'नारायणः परोऽव्यक्तात्' इत्यादि प्रसिद्धम् । श्रीशंकराचार्या अपि गीताभाष्ये 'नारायणः परोऽव्यक्तात्' इत्यादिमनुस्मृतिप्रत्यभिज्ञानेन मङ्गलमाचरन् । **त्यक्तान्यः**=अन्यदेवतापारम्यप्रसक्तिरहितः **मूलवेदः**=एकायनशाखारूपः । परमैकान्तिधर्मप्रतिपादनपरत्वेन पञ्चरात्रमूलत्वात् मूलवेद इत्युक्तिः । **कठपरिपठिता**=कठशाखायां पठिताः **वल्लिकाः**=कठवल्युपनिषत् । तत्र हि 'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' (कठ.2-3-9)इति विष्णुपदं ब्रह्मविद्या-प्राप्यमुक्तम् । **तापनीयम्**=नृसिंहतापनीयम् श्री शंकराचार्यैरपि व्याख्यातम् श्री नृसिंहपारम्यप्रतिपादनपरम् । एवम्— **सौबालब्रह्मबिन्दुप्रभृतिकमपि**=सुबालोपनिषत्, ब्रह्मबिन्दूपनिषत् इत्यादिकमपि **नः**=अस्माकम् **तत्परत्वे**=तस्य नारायणस्य परत्वे **तत्परम्**=तात्पर्यवत् ॥ 'स एष सर्वभूतान्तरात्मा दिव्यो देव एको नारायणः'(सु. 7) इति सुबालोपनिषत् । 'सर्वभूताधिवासं च यद्भूतेषु वसत्यपि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः ॥' (ब्र.बि.2) इति ब्रह्मबिन्दुः ॥

नन्वस्त्विदं सर्वं भवदीयं पुराणम् । परन्तु पुराणेषु सात्त्विकराजसतामसविभागप्रदर्शनेन तेषां परस्परविरोधशमनार्थः प्रयासस्ते विफल एव; यतस्तेषु परस्परं तीव्रनिन्दाद्यपि दृश्यते । 'न हि निन्दा'न्यायेन कथञ्चित्सामरस्यसंपादनेऽपि परस्परमतिविरुद्धार्थप्रतिपादनदर्शनात्प्रयासो विफल एव । यथा—विष्णोर्जीवभाव-वर्णनम्, वराहनरसिंहादिरूपिणः विष्णोः शरभादिरूपिणा शिवेन संहारः, विष्णोरवताराणां शापमूलकत्वकथनम्, विष्णोः कर्मवश्यत्वमित्यादि बहुलं दृश्यते शैवपुराणेषु । एषामप्रमाणिकत्वे, तैः शैवैः वैपरीत्यापादने किमुत्तरम्? वैष्णवेषु सूरित्वेन प्रसिद्धानां श्रीशठकोपादीनां गाथास्विव, शैवेषु सूरित्वेन प्रसिद्धानां ज्ञानसंबन्धा-दीनां गाथासु तत्तदनुभवपूर्वासु शैवपुराणोक्तशरभाद्यवताराणामुल्लेखोऽपि स्पष्टं दृश्यते । तेषां भ्रान्तत्व-कथने, वैपरीत्यं कुतो न स्यात्? श्रद्धैव चेदुत्तरम्, विचारस्य स्थानं किम्? इति चेत्; सत्यम्—

देशकालादिभेदेनाधिकार्यादिभेदतः । समष्टिव्यष्टिभेदेनानुभवो भिद्यते ध्रुवम् ॥
गहनो देवतावादोऽध्यात्मवादादिति श्रुतम् । त्रयस्त्रिंशत्तु कोट्यस्ते सर्वं को वेत्तुमर्हति ॥
अध्यात्मं स्यात्स्वविषयमतस्सुज्ञं भवेदिदम् । अधिदैवं तु संप्रोक्तं सृष्टिविज्ञानगर्भितम् ॥
अतस्त्वध्यात्मवादस्तु सुज्ञः स्वविषयत्वतः । गंभीरो देवतावादः विपुलः सर्वगर्भितः ॥
इतोऽपि यदि जिज्ञासा दुर्वारा भवतो भवेत् । सृष्टिविज्ञानवेत्तारं विद्वांसं शरणं व्रज ॥ ११ ॥

**[विष्णुपारम्यविरुद्धवचनसमन्वयः]**

**157. मध्यस्थोक्तिर्विरुद्धे परमहिमपरे तत्रतत्रैतदुक्तिः**
**वृत्तान्तास्ते विचित्राः स्वमतमभिहितं देवतातत्त्वविद्भिः।**
**वैषम्यं शिल्पशास्त्रप्रभृतिषु विविधं वैदिकस्वीकृतत्वं**
**प्रज्ञासंस्कारभाजां भवति भगवति स्वप्रधाने प्रमाणम् ॥ १२ ॥**

शैववैष्णववादस्यैवमतिगहनत्वेऽपि, इतोऽपि जिज्ञासूनां कृते किञ्चिदिव मार्गं दिदर्शयिषुर्वक्ति– **मध्यस्थोक्तिरि**त्यादि । परस्परं विरुद्धे विषये अपक्षपातिनः **मध्यस्थस्य उक्तिः**=वचनम् **प्रमाणं भवति** इत्यन्वयः । अधिकारिभेदादिकं मत्वा अष्टादशपुराणानि कृतवान् किल व्यासः । अथापि सः 'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥' इति खलु स्वनिर्णयं प्रकटयति । इदं हि वचनं श्रीशंकराचार्यैः सहस्रनामभाष्यपीठिकायामुदाहारि । अतो मध्यस्थस्य शैववैष्णवपुराणकर्तुः व्यासस्य ब्रह्मर्षेः वचनेन नारायणस्यैव सदा ध्येयत्वमङ्गीकर्तव्यम् । एवम्– **परमहिमपरे**=परस्य शिवस्य महिम्नः प्रतिपादनायैव रचितेषु स्कान्दादिपुराणेषु तत्र तत्र मध्ये तत्तत्प्रकरणविशेषे **एतदुक्तिः**= विष्णुपारम्यप्रतिपादकवचनं दृश्यते । 'श्रीराम राम रामेति रमे रामे मनोरमे ।' इति ईश्वरेणैवोक्तं रामनाममाहात्म्यवचनं शैवे स्कान्दपुराणे श्रूयते । **ते**=तत्तादृशाः विष्णुपारम्यपराः **विचित्राः** अद्भुताः **वृत्तान्ताः** विष्णुपारम्ये प्रमाणं भवन्ति ॥

**देवतातत्त्वविद्भिः**=पराशरादिभिः **स्वमतम्**=स्वीयमतम् **अभिहितम्**=स्पष्टमेवाभिहितम् । 'आलोड्य सर्वशास्त्राणि' इत्यादि वचनमनुपदमुक्तम् । एवम् 'सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते । वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परम् ॥' इति पाराशर्यवचनम् । एवं **शिल्पशास्त्रप्रभृतिषु, वैषम्यं प्रमाणं भवति** । तत्र हि देवालयविमानान्यधिकृत्य सात्त्विकराजसतामसभेदेनोत्तममध्यमाधमविभागं प्रदर्श्य 'हरिर्विधाता हर आदिदेवाः' इति विष्णोर्विमानस्योत्तमत्वमुक्तम् । **प्रभृति**शब्देन 'हरिं हरीतकीं चैव न कदापि च विस्मरेत्' इत्यायुर्वेदः, 'तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं योगबलं तदेव विष्णो यदा तेऽङ्घ्रियुगं स्मरामि ॥' इति ज्योतिश्शास्त्रं च ग्राह्यम् । एवम्– **विविधं वैदिकस्वीकृतत्वम्**= बोधायनादिभिर्वैदिकैः सालग्रामपूजायाः प्राशस्त्यकथनेनोत्तमत्वेन स्वीकृतत्वमपि प्रमाणं भवति । एवमिदं सर्वं **प्रज्ञासंस्कारभाजां** नराणां **स्वप्रधाने**=अन्यस्य तदीश्वरस्याभावात्, 'आत्मेश्वरम्' इति प्रतिपादिते भगवति षड्गुणपरिपूर्णे विष्णौ **प्रमाणं भवति**। परत्वनिर्णये इति शेषः ॥

**यथा महाभारते**–पाशुपतास्त्रप्राप्तये श्रीकृष्णेन प्रेरितोऽर्जुनः पाशुपतव्रतमन्वतिष्ठत् । कस्मिंश्चिद्दिने कृष्णार्जुनौ सायं पर्यन्तं वने विहरन्तावास्ताम् । सूर्यास्तसमयो सन्निहितोऽभूत् । तदानीमर्जुनेन स्मृतं तद्दिने कर्तव्यं शिवपूजनम् । गृहं प्रत्यागत्य पूजनायावकाशो नासीत् । व्रतभङ्गाद्भीतोऽर्जुनः 'कृष्ण! किं कर्तव्यमद्य? व्रतभङ्गः खलु भवेत्' इति व्याकुलोऽपृच्छत् । तदा श्रीकृष्णः 'न भेतव्यम् । शिवाय समर्पणीयं

अत्रैव लभ्यं पत्रपुष्पादिकं संपाद्य मामेवाद्य पूजय। ते व्रतभङ्गो न भविष्यति' इत्यवदत्। अर्जुनोऽपि श्रीकृष्णवचनप्रामाण्यात्तथैव कर्तुमारेभे। परन्तु 'कृष्णपूजनं शिवपूजनं कथं भवेत्' इति मनसि चिन्तयन्नासीत्। तन्मनस्समाधानाय श्रीकृष्णस्तस्मै दिव्यं किञ्चिद्रूपं दर्शयामास। श्रीकृष्णस्य पादयोरर्प्यमाणपत्रपुष्पादिकं शिवस्य शिरसि पतमानं साक्षादपश्यदर्जुनः। तेन च स निश्चिन्तो बभूव। अयं वृत्तान्तः शठकोपसूरिभिः 'तीर्थनुलगळन्द' इत्यस्यां गाथायाम् (2-8-6) अवर्णि। एतादृशविचित्रवृत्तान्ताः अत्र प्रमाणानि भवन्ति॥

ननु भोः किमेवं प्रतारयसि? एतत्तुल्या वृत्तान्ताः शैवपुराणेष्वपि शिवपारम्यपराः बहुधा दृश्यन्ते। कदाचिद्विष्णुः शिवं भगवन्तं सहस्रकमलैः पूजयितुं कृतसंकल्पः, तावन्ति कमलानि संपाद्यार्च-यन्नासीत्। तदीयां भक्तिं परीक्षिपुः शिवः तेषु कमलेषु एकं स्वमाययापाहरत्। अन्ते एकस्य कमलस्य न्यूनतायां जातायां विष्णुः स्वचक्षुरेवोत्पाट्य शिवस्य पादयोरर्पयामास। तेन प्रसन्नश्शिवः तस्मै सुन्दरं नयनं दत्त्वा 'अद्य प्रभृति त्वम् 'पुण्डरीकाक्ष'नाम्ना सर्वैर्मानयितव्यो भविष्यसि' इति वरं ददाविति कथा वर्ण्यते। एवं— 'सत्यं सत्यं पुनःसत्यमुद्धृत्य भुजमुच्यते। वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परम्॥' इत्येवं भुजमुद्धृत्योद्घोषितवतो व्यासस्य भुजस्तथैव स्तम्भितोऽभूदिति, स भुजः वीरभद्रेणाच्छेदीत्यपि काशीखण्डेऽ-वर्णीति न जानाति भवान्? जानामि भोः! परन्तु—प्रदर्शितमेव समाधानम् 'मध्यस्थोक्तिर्विरुद्धे' इत्यादि। अत इयं कथा 'न हि निन्दा'न्यायेन तत्तदुपासकानां श्रद्धातिशयार्थमिति योजनीया। किञ्च गजेन्द्रोपाख्यानबाणा सुरवृत्तान्तादयः स्मर्यन्ताम्। अत्र यद्वक्तव्यम्, तत् पूर्वमेव (श्लो.5) सुविशदमुक्तं न विस्मर्तव्यमायुष्मता॥

किमत्र बहुनोक्तेन शैववैष्णवनिर्णये। नूनं वैज्ञानिकी दृष्टिरेकैवात्र सदुत्तरम्॥
अथवा वीक्ष्यतामार्षं श्रीमद्भागवतं महत्। शुकस्य वचनं व्यक्तं सृष्टिविज्ञानमूलकम्॥

परीक्षिदुवाच—(7-1-1)

समःप्रियःसुहृद्ब्रह्मन् भूतानां भगवान् स्वयम्। इन्द्रस्यार्थे कथं दैत्यानवधीत् विषमो यथा॥
न ह्यस्यार्थस्सुरगणैः साक्षान्निःश्रेयसात्मनः। नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि॥
इति नस्सुमहाभाग नारायणगुणान् प्रति। संशयस्सुमहान् जातस्तद्भवांश्छेत्तुमर्हसि॥

श्रीशुक उवाच—

साधु पृष्टं महाराज हरेश्चरितमद्भुतम्। यद्भागवतमाहात्म्यं भगवद्भक्तिवर्धनम्॥
गीयते परमं पुण्यं ऋषिभिर्नारदादिभिः। नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम्॥
निर्गुणोऽपि ह्यजोऽव्यक्तः भगवान् प्रकृतेः परः। स्वमायागुणमाविश्य बाध्यबाधकतां गतः॥
सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः। न तेषां युगपद्राजन् ह्रास उल्लास एव वा॥
जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान्। तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत्॥
ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते। विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः॥

यदा सिसृक्षुःपुर आत्मनः परो रजस्सृजत्येष पृथक् स्वमायया।
सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ॥

**[महेश्वरादिपदानां विष्णौ समन्वयः]**

**158. इन्द्रेशानाद्यभिख्या स्वयमिह महदाद्युक्तिभिर्वा विशिष्टा**
**तत्तत्पारम्यमानं न भवति बलवद्धर्मिमानोपरोधात्।**
**नो चेत्स्यान्नैक ईशो न भवति यदि वा कश्चिदन्योन्यबाधा-**
**ल्लोकेऽप्यन्वर्थभावं न हि दधति महावृक्षमुख्याः समाख्याः ॥ १३ ॥**

---

य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यतः।
तत्प्रत्यनीकानसुरान् सुरप्रियः रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥

इत्यलमनया पामरजनप्रियया गतानुगतिकक्रमेणागतयाऽवैज्ञानिकया चर्चया ॥

ननु भोः! सर्वं पौराणिकं जातम्? वत्स! भागवतं न पुराणम्। **हयग्रीवब्रह्मविद्या** सा। हयग्रीवो हि ज्ञानविज्ञानमूर्तिः। **पारमहंसी संहितेत्य**प्यस्य नामान्तरमित्यादि पर्याप्तं तन्महत्वे। सकलशास्त्रार्थगर्भम्, वैदिकमार्गे विद्यमानानां सर्वसमस्यानां परिहारायैवावतीर्णमिदमित्यादि तदध्ययनेनैव ज्ञायेत ॥

अस्ति भागवतग्रन्थविषये त्वद्भुतं रहः। समये सप्रमाणं तत्प्रकटीक्रियतेऽखिलम् ॥ १२ ॥

ननु ईश्वरपरमेश्वरादिशब्दाः पार्वतीपतावेव प्रसिद्धाः। 'इदि परमैश्वर्ये' इति धातोर्निष्पन्नाः इन्द्र-महेन्द्रादिशब्दा अपि त्रिलोकाधिपतावेव प्रसिद्धाः। एवं सति विष्णुरेव सर्वेश्वर इति कथमुच्यत इत्यत्राह— **इन्द्रेशानादीति। इन्द्रेशानाद्यभिख्या**=इन्द्रः, ईशानः; **आदिपदेन** ईश्वरादिशब्दा ग्राह्याः, एवमाद्यभिख्या=संज्ञा **स्वयम्, महदाद्युक्तिभिर्वा विशिष्टा,** 'स्वयम्' इति निर्विशेषणका केवला इन्द्रसंज्ञा, महदादिभिः विशिष्टा=महेशः, महेश्वरः, महेन्द्रः इत्यादिमहच्छब्दविशिष्टाः। **आदिपदेन** 'परम' शब्दो ग्राह्यः; परमेश्वरशब्दस्य दर्शनात्। एतादृशः शब्दः, **बलवद्धर्मिमानोपरोधात्=बलवता**=प्रबलेन**धर्मिग्राहकमानेन**=धर्मिग्राहकप्रमाणेन सह **उपरोधात्**=विरोधात् **तत्तत्पारम्यमानं न भवति**=तत्तद्देवतायाः पारम्ये, पारम्यस्य वा, प्रमाणं न भवति। इन्द्रशब्दो हि 'इदि परमैश्वर्ये' इति धातोर्निष्पन्नः स्वयमेव परमेश्वरपर्यायः; धातोरेव तावदर्थत्वात्। महच्छब्दविशेषितस्तु सुतरां परमेश्वरवाचकः। अथापि परमेश्वरशब्दो यथा रुद्रे प्रयुज्यते, न तथा इन्द्रमहेन्द्र-शब्दौ। एवमेव ईश्वरमहेश्वरपरमेश्वरादिशब्दाः रुद्रे प्रयोगमात्रात् तन्मात्रवाचका इत्यप्ययुक्तम्। अर्थपूर्तिदृष्ट्या तु ते सर्वे शब्दाः परमात्मभूतविष्णोरेव वाचकाः। अत एव विष्णुसहस्रनामसु महादेवमहेन्द्रादिशब्दाः पठ्यन्ते। अतश्च निरुपाधिका एते शब्दा विष्णुवाचकाः, अन्यत्र तु सोपाधिका एव। एवमनङ्गीकारे धर्मिग्राहक-प्रमाणविरोधो दुर्वारः। धर्मिण इन्द्रादेः सद्भावबोधकानि प्रमाणानि तं परिमितैश्वर्यमेव वदन्ति, विष्णुं त्वनन्ते-श्वर्यम्। अतस्तेन विरोधस्स्यात्। एवमैककण्ठ्यानङ्गीकारफलं विवृणोति—**नो चेदित्यादिना। नो चेत्**=एव-मनङ्गीकारे **ईशः एकः न स्यात्, यदि वा**=अथवा **अन्योन्यबाधात्**=परस्परविरोधात् **कश्चित् एकोऽपि ईशो न भवति**=भवेत्। इन्द्र एव सर्वेश्वरस्स्यात्। एवं रुद्रश्चतुर्मुखो वा स्यात्। तथा च बहव ईश्वरा भवेयुः। अथवा परस्परविरोधात् एकोऽपि ईश्वरो न स्यात्। अतो यथाश्रुतमर्थं त्यक्त्वाऽऽशयान्वेषणमेव कर्तव्यम् ॥

ननु मास्तु कोऽपीश्वरः, का हानिः? सन्त्येव किल निरीश्वरवादिनस्सांख्या मीमांसकाश्च। इति चेत्; सन्त्येव ततोऽपि ज्येष्ठाः चार्वाकमाध्यमिकादयोऽपि एवं हि तर्हि जगति कुत्रापि व्यवस्थैव न स्यात्। अत एव 'भयादस्याग्निस्तपति' 'एषसेतुर्विधरणः' इत्यादि श्रूयते। अस्तु तर्हि अनेकेश्वरवाद इति चेत्; 'वैद्यद्वयं रोगिविनाशहेतुः राजद्वयं राज्यविनाशहेतुः। गुरुद्वयं शिष्यनिपातहेतुः भार्याद्वयं भर्तृविनाशहेतुः॥' इति न्यायावतारप्रसङ्गः। न च कल्पादिभेदेन विरोधः परिह्रियतामिति वाच्यम्, तदा हीश्वरत्वस्य कालोपाधिकत्वापातात् निरुपाधिकेश्वरो न कोऽपि स्यात्। मास्तु का हानिः? इति चेत्, शब्दवृत्तानभिज्ञस्त्वम्। लोके ईश्वरादिपदानां नियमेन सापेक्षत्वदर्शनात्, निरुपाधिकम् 'ईश्वर'पदमेव न स्यात्। अस्तु तथैव का हानिरिति चेत्; उक्तमेव शब्दवृत्तानभिज्ञस्त्वमिति। सोपाधिकत्वस्य निरुपाधिकत्वसापेक्षत्वात्। यच्च निरुपाधिकं ईश्वरपदम्, तदेव परमात्मवाचीति मन्यताम्। यथा परिमाणस्य कुत्रचिद्विश्रान्तेरावश्यकत्वात् परममहत्परिमाणसिद्धिः, तथैवेश्वरत्वस्यापि कुत्रचिद्विश्रान्तिरावश्यकी। अतः कालदेशाद्युपाध्यनपेक्षः कश्चिदीश्वरः स्यादेव। अन्तत आप्रातरासायं संभवतां घटनानामध्ययनेनैवाद्भुतदिव्यशक्तिविशिष्टं किञ्चित्स्यादेवेति सुसूक्ष्मधियां न तिरोहितं भवेदित्यलमनया नास्तिक्यवार्तया निरयहेतुभूतया। ननु तर्हि ईश्वरपदमेव निरुपाधिकं परमात्मवाचि यदि, तर्हि महेश्वरपरमेश्वरादिपदानां का गतिरिति शङ्कां परिहरति—**लोक** इत्यादिना। **लोकेऽपि**=स्थूले जगत्यपि **महावृक्षमुख्याः समाख्याः**='महावृक्षः' 'महौषधम्' इत्यादिनि नामधेयानि **अन्वर्थभावम्**=अन्वर्थताम् **न हि भजते** 'शुण्ठी महौषधम्' इत्यमरः। लशुनमिति केचन। 'महावृक्षः=अर्कगुल्ममि'त्यानन्ददायिनी। आपेक्षिकं किञ्चिन्महत्त्वमादायापि तच्छब्दं लोके प्रयुञ्जते। अनवधिकं महत्त्वं तु ब्रह्मण एकस्यैव, बृहतेर्धातोः महत्त्वार्थकत्वात्। तत्तु 'ज्यायान्पृथिव्याः ज्यायानन्तरिक्षाज्ज्यायेनेभ्यो लोकेभ्यः' (छां.3-14-3)'महतो महीयान्' (कठ.1-2-20, श्वे.3-20, म.ना.12-1) इत्यादिप्रमाणात् परमात्मनि पर्यवस्यति। एतदप्यन्ते 'महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः।' (श्वे. 3-12) इति सत्त्वगुणाधिष्ठातरि पुरुषपदवाच्ये विष्णौ विश्राम्यतीति भावः॥

पुनः पुनः पेषणेऽपि ह्येतदेवात्र निश्चितम्। तथ्यमध्यात्मवादस्य देवतावादतस्तथा॥
स्वस्वोपास्यातिवादित्वं ह्युपासितुरवारितम्। भूमविद्यागतन्यायात्सिद्धं न्याय्यञ्च तन्मतम्॥
दुर्वारा सहजा, यस्मात् बुद्धितत्त्वं हि तादृशम्। यावत्तु देवतावादस्तिष्ठेदेवं विचारणा॥
श्रीमद्भागवतप्रोक्तन्याय एवात्र युज्यते। स च प्रदर्शितः पूर्वं व्यर्थः कालक्षयस्त्वितः॥

अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेऽप्यघम्।
इति हि नीतिविदां मतम्, अन्यथा न हि भवेत्सुदृढा तदुपासना॥

सर्वमध्यात्मविद्याङ्गमिति यावन्न बुध्यते। वर्धेत तावच्चर्चेयं वर्ज्यतां शब्दवर्धनम्॥
'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥'
अतस्सर्वं परित्यज्याध्यात्मविद्यामुपार्जय। नान्योऽस्त्युपायस्सर्वेषां क्लेशानां तु निवृत्तये॥ १३॥

[त्रिमूर्तिवादभेदाः]

**159. एकं त्रेधा विभक्तं त्रितयसमधिकं तत्त्वमीशास्त्रयस्ते**
**विष्णवन्या मूर्तिरीष्टे प्रभवननियमः कल्पभेदात् त्रयाणाम् ।**

एवं प्रसक्तं देवतावादमुपसंहरन्, परदेवताविषये विद्यमानविप्रतिपत्तीःसंग्रहेण प्रदर्श्य समाधत्ते—**एकमित्यादि**। एकमेव तत्त्वं **त्रेधा**=ब्रह्मविष्णुरुद्ररूपत्रिरूपेण **विभक्तमिति** । कृष्णाद्यवतारा यथा एकस्यैव विष्णोस्तथा तत्तत्कालानुगुणाः सृष्टिस्थितिप्रलयरूपकार्यानुरोधेन रूपभेदा इति **प्रथमःपक्षः** । अस्मिन्पक्षे रूपभेदमात्रम्, न त्वात्मभेदः । 'एकैव मूर्तिर्बिभेदे त्रिधा सा' 'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्। स संज्ञां याति भगवान् एक एव जनार्दनः ॥' (वि.पु.) इत्यादीनि वचनान्येतत्पक्षानुकूलानीव । प्रपञ्चसत्यतावादिनां तार्किकादीनामप्ययं पक्षः । न हि ते शैवाः, नापि वैष्णवाः, अथापि वैदिकाः । आत्मैक्यवादिनां शाङ्करादीनामप्ययमेव वादः । किन्तु ब्रह्मव्यतिरिक्तस्य मिथ्यात्वात्, त्रिमूर्त्यादयः, रामकृष्णादयश्च केवलं मायाकल्पिताः मिथ्या एव । व्यवहारश्च [1]'गजोऽपि मिथ्या पलायनमपि मिथ्या' इति न्यायेन निर्वाह्यः॥

एतन्मते ब्रह्म सगुणनिर्गुणभेदेन द्विविधम् । मायोपहितं चैतन्यं सगुणमुच्यते, मायातीतं मायासाक्षिभूतं तत् निर्गुणमुच्यते । 'जन्माद्यस्य यतः' (ब्र.सू.1-1-2) इति च सगुणस्य स्वरूपलक्षणम्, निर्गुणस्य तु तटस्थलक्षणम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.आ.1) इति निर्गुणस्य स्वरूपलक्षणम् । निर्गुणं परं ब्रह्मेत्युच्यते, सगुणमपरं ब्रह्म । सगुणं ब्रह्मैव ब्रह्मविष्णुरुद्रभेदेन त्रिविधम्, मायाकल्पितम्, ईश्वरपदवाच्यं च । मायाकल्पितत्वादेवेदमपरं ब्रह्मेत्यादिकमग्रे (श्लो.25-27) विस्तरेण परीक्ष्यते ॥

**त्रितयसमधिकं तत्त्वमिति द्वितीयः पक्षः** व्योमातीतवादिनाम्, प्रपञ्चसत्यतावादिनाम् भर्तृप्रपञ्चादीनाम् परिणामाद्वैतिनाम्, उपाधिसत्यतावादिनाम् भास्करादीनां वा । **व्योमातीतवादश्च** भगवता भाष्यकारेण वेदार्थसंग्रहे निराकारि 'यत्पुनरिदमाशङ्कितमिम्' इत्यादिना । इदं व्योमातीतवादनिराकरणपरमिति तद्व्याख्यायां तात्पर्यदीपिकायां **सुदर्शनसूरिणाभ्यधायि** । व्योमातीतवादोऽयं भगवतो भाष्यकारात्प्राचीनेन [2]**हरदत्ताचार्येण चतुर्वेदतात्पर्यसंग्रहा**परनामधेयायां **श्रुतिसूक्तिमालायां** स्थापितः । महानारायणीये हि दहरविद्याप्रकरणे

---

[1]कदाचित् श्रीशङ्कराचार्याः वीथ्यां गच्छन्त आसन् । तदानीं तद्वीथ्यां कश्चन गजः प्रमत्तः प्रधावन्नागच्छन्नासीत् । हस्तिपकः 'गजो मत्तः । सर्वेऽप्यात्मानं रक्षन्तु' इति घोषयन्नासीत् । जनाश्च कान्दिशीकाः अष्टसु दिक्षु पलायिताः । आचार्योऽपि तथैवाकरोत् । तद्दृष्ट्वा कश्चित् 'किं भोः! जगत्सर्वं मिथ्येति सिद्धान्तयसि ? तर्हि कथं मिथ्याभूताद्गजाद्भीतिः, पलायनमित्यादिकं तव' इत्याचार्यं प्रपच्छ । 'हन्त मूर्खस्त्वं । सर्वं मिथ्येति वदतो मम पलायनादिकमपि मिथ्येति कुतो न जानासि ?' इत्युत्तत्तारेति काचन कथा । अत्र स्थितं मिथ्यात्ववादस्य स्वरूपं गहनं चिन्तनीयम् ।

---

[2]अयं हरदत्ताचार्यः यजुर्वेदभाष्यकर्तृषु आद्य इति प्रथा । अन्योऽयमित्यपि केचन । चतुर्वेदतात्पर्यसंग्रहाख्यस्य श्रुतिसूक्तिमालासंज्ञकस्य ग्रन्थस्य दर्शने, उभयोरप्यैक्यमेव युक्तं प्रतिभाति । समुपलभ्यमानशैववैष्णववादग्रन्थेषु

'सहस्रशीर्षम्' इत्यनुवाको दहरविद्योपास्यस्वरूपनिर्णयाय प्रवृत्त इत्यङ्गीक्रियते वैष्णवैः। एवमङ्गीकारेऽपि शिवपारम्यस्य न कापि हानिः। दहरविद्यायां हि दहराकाशपदवाच्यादन्यस्य 'तस्मिन्यदन्तस्तदुपासितव्यम्' इतिदहरविद्योपास्यनारायणान्तर्वर्तिनश्शिवस्यैवोपास्यत्वमभिधीयते। एवञ्च जगदुपादानभूतान्नारायणादन्यः शिव एव परमात्मपदवाच्य इति नारायणपारम्यं न सिध्यति। उपादानभूतं वस्तु विकारित्वान्न परमात्मा। परमात्मा तु शिवो निमित्तमात्रम्। 'उपादानं तु भगवान् निमित्तं तु महेश्वरः।' इति **पाशुपतमतं** हि प्रसिद्धम्। यद्यपि 'पत्युरसामञ्जस्यात्' (ब्र.सू.2-2-35) इत्यादिना इदं मतम् प्रतिक्षिप्तम्। श्रीशङ्कराचार्यादीनामपीदं संमतं च; तथापि निमित्तोपादानभेदवादो **वैदिकानां शैवानाम्**। पाशुपतागमास्तु साक्षाच्छिवप्रोक्ताः वेदादपि प्रमाणतमाः। वेदाः किलेश्वरनिःश्वासरूपाः अबुद्धिपूर्वकाः, आगमास्तु बुद्धिपूर्वकाः। अबुद्धिपूर्वकानि किल सुप्तोन्मत्तवाक्यानि बुद्धिपूर्वककुशलपुरुषवाक्यापेक्षया कथमुत्कृष्टानि भवेयुः। अतो वेदापेक्षया आगमा एव प्रमाणणतमाः। सूत्रकारेणेदं निराकृतं किलेति चेत्, अस्तु का हानिः? सूत्रकारः किल व्यासः विष्णुः त्रिमूर्त्यन्तर्गतः, पाशुपतागमोपदेष्टा तु साक्षात्परमेश्वरः शिवः त्रिमूर्त्यतीतः॥

अपि च—वेदादयो हि नैकदेवतानिष्ठाः तत्तत्समयानुरोधेन सर्वानपि प्रशंसन्ति। 'अग्निस्सर्वा देवताः' 'न किरिन्द्र त्वदुत्तरः' 'वायुस्सर्वा देवताः' इत्यादीनि द्रष्टव्यानि। कदाचित् 'अग्निर्वै देवानमवमः विष्णुः परमः' इति परस्परविरुद्धमुच्यते। अतस्सुप्तोन्मत्तवाक्यतुल्या वेदा इत्युक्तम्। आगमास्तु शिवैकनिष्ठां वदन्ति। अत एवोच्यते— 'वेदशास्त्रपुराणाद्याः ज्ञेया वेश्या वधूरिव। अगमास्तु शिवप्रोक्ताः ज्ञेयाः कुलवधूरिव॥' इति। अतस्त्रिमूर्त्यन्तर्गतविष्णुरूपिणा व्यासेन पाशुपतागमनिराकरणेऽपि 'कलकण्ठगणास्वाद्ये कामस्यास्त्रे निजाङ्कुरे। निम्बवृत्तिभिरुद्दीर्णे न चूतः परितप्यते॥' इति न्यायेन न कापि हानिः। अधिकमप्रसक्तमत्र॥

**तृतीयःपक्षः—ते त्रयः ईशाः**=ब्रह्मविष्णुरुद्रपदवाच्याः त्रयोऽपि समाना ईश्वरपदवाच्याः। एषामज्ञानाभावान्न कलहादिप्रसक्तिः। इति पौराणिकैकदेशिनः॥

**चतुर्थः पक्षः—विष्ण्वन्या**=विष्णोरतिरिक्ता **मूर्तिः**=देवताविशेष एव **ईष्टे**=जगन्नियन्ता ईश्वरपदवाच्यो भवतीत्ययं पक्षः कापालिकानामित्यानन्ददायिनी। त्रिमूर्त्यन्तर्गतस्यैव विष्णोः पारम्यं यथा **सिद्धान्ते,** तथैव तदन्तर्गतस्यैव रुद्रस्य शिवपदवाच्यस्य पारम्यमिति पूर्वोक्तव्योमातीतवादाद्वैलक्षण्यमिति, विष्ण्वन्यमूर्तिपदाभ्यां प्रतीयते॥

**पञ्चमः पक्षः—त्रयाणाम्**=ब्रह्मविष्णुरुद्राणां **कल्पभेदात् प्रभवननियमः**=प्रभवनस्य= प्रभुत्वस्यृ-ईश्वरत्वस्य **नियमः**=व्यवस्था। अतो न परस्परं विरोध इति भावः॥

---

अयममेव प्राचीनतमः शिवपारम्यपरो ग्रन्थः। भगवद्यामुनमुनिना कृतः संप्रत्यनुपलभ्यमानः 'पुरुषनिर्णयः' हरदत्तखण्डनरूपो न वेति न ज्ञायते। भगवद्भाष्यकारस्यान्तरङ्गभूतेन श्रीकूरेशेनास्य वाक्यार्थस्समजनीति कूरेशविजयनाम्नि ग्रन्थे दृश्यते। स वादः संगृहीतः वेदान्तकौस्तुभादौ॥

**इन्द्रादीनामिव स्यान्निजसुकृतवशादीश्वराणां प्रवाहः**
**स्यादेकस्येश्वरत्वं प्रतिफलनवदित्यादि चैवं परास्तम् ॥ १४ ॥**

**षष्ठः पक्षः — इन्द्रादीनामिव**=मन्वन्तरभेदेन इन्द्रादिदेवतानां यथा भेदेऽपि इन्द्रस्यानुवर्तमानत्वं प्रवाहतः, तथा **निजसुकृतवशात् ईश्वराणां प्रवाह** इति मीमांसकाः। युगपत् ब्रह्मविष्णुरुद्राणामवस्थानाभावान्न विरोध इति भावः ॥

**सप्तमः पक्षः — एकस्यैव यस्य कस्यचित् प्रतिफलनवत्**=प्रतिबिम्बवत् **ईश्वरत्वं स्यात्**, स तु विष्णुर्वा, शिवो वा भवतु, नाम्नि किमर्थं कलह इत्ययं पक्षः 'योगराद्धान्तः' इति **सर्वार्थसिद्धिः**। निरीश्वरसांख्यं पूर्वं (जीव.60) परीक्षितम्। पातञ्जलयोगशास्त्रं हि सेश्वरसांख्यमुच्यते। आत्मनां स्वतो निर्धर्मकत्वात् स्रष्टृत्वादिकमपि बुद्धिपुरुषतत्त्वयोः मुखदर्पणयोरिव बिम्बप्रतिबिम्बभावमूलकं द्रष्टृत्वकर्तृत्वादिकमिति तेषां मतम्। तद्दृष्ट्या 'ईश्वरत्वं प्रतिफलनवत्' इत्युक्तम्। निरीश्वरसांख्यं हि ज्ञानमार्ग इति, सेश्वरसांख्यमुपासनामार्ग इति च कथ्यते। 'ईश्वरप्रणिधानाद्वा' (यो.सू.1-23) इति **पातञ्जलं सूत्रम्**। 'प्रणिधानात्=भक्तिविशेषात् आवर्जित ईश्वरस्तमनुगृह्णाति' इति **व्यासभाष्यम्**। 'समाधिसिद्धिरीश्वरप्रणिधानात्' (यो.सू.2-45) इत्यपि। प्रथमसूत्रं समाधिसिद्धौ ईश्वरप्रणिधानस्य शैघ्र्यहेतुत्वपरम्। द्वितीयं तु समाधिहेतुत्वपरमिति विशेषः। **इत्यादि च**=इत्यादिवादाश्च **एवं परास्तम्**। चकारस्योक्तसमुच्चयार्थत्वात् पूर्वश्लोकेषूक्तन्यायैरेव एतेऽपि पक्षाः परास्ता इत्यर्थः। अत्र **'आदि'**पदेन परमात्मा ज्ञानेच्छाप्रयत्नमात्रविशेषगुणवान्, आनन्दादयः, दयावात्सल्यादयश्च न तस्य गुणाः, आनन्दादीनां जगत्कारणत्वेऽनुपयोगात्। अत एव ज्ञानेच्छाप्रयत्ना एव तस्य विशेषगुणाः इति केचित्। इच्छापि लोकोत्तरस्य तस्य किमर्थेति ज्ञानयत्नमात्रमिति **केचित्**। **इत्यष्टमस्तार्किकाणां** पक्षाः विवक्षिताः ॥

आत्मा एक एव, मूर्तिभेदमात्रमिति **प्रथमः पक्षः** अनन्यथासिद्धप्रमाणाभावान्न साधीयः। 'एकैव मूर्तिर्बिभेदे त्रिधा सा' इति त्वत्यन्तविरुद्धम्, मूर्तेः भेदत्रयासंभवात्। मूर्तिपदस्यात्मपरत्वं तु अतिक्लिष्टम्। एवं 'सृष्टिस्थित्यन्तकरणीम्' इत्यादिकमपि विष्णोस्सर्वात्मत्वप्रतिपादनमात्रतात्पर्यकम्। ब्रह्मरुद्रयोस्सृज्यत्वादेः प्रतिपादनात्, विष्णोः परमात्मत्वप्रतिपादनाच्च न यथाश्रुतार्थविवक्षासंभवः। अतः 'सर्वं खल्विदं ब्रह्म' इतिवन्नेयम्। 'सर्वं खलु' इत्यादौ हि ब्रह्मपदार्थविशेष्यभूते तत्त्वे, साक्षात्तदात्मत्वम्, विशेषणयोश्चिदचितोर्हि तच्छरीरत्वेन तदन्तर्यामित्वप्रयुक्तं सामानाधिकरण्यं वर्णितम्। तद्वत् ब्रह्मरुद्रयोस्तच्छरीरत्वात्तदात्मत्वम्, विष्णोस्तु साक्षात्तादात्म्यम् च विवक्षितम्। अन्यथा 'विष्णोस्सकाशादुद्भूतं जगत्' इत्यादीनां विरोधप्रसङ्गः। 'एकैव मूर्तिः' इत्याद्यप्येवमेव निर्वाह्यम् ॥

ननु त्रिमूर्त्यन्तर्गतस्य विष्णोः कथं ब्रह्माभेदः? तस्य स्थितिहेतुत्वमात्रकथनात्, सृष्टिलयहेतुत्वस्य ब्रह्मरुद्रयोरेव कथनात्—इति चेत्; स्थितिहेतुत्वस्य साक्षात्तन्निष्ठत्वेन, सृष्टिलयहेतुत्वयोः ब्रह्मरुद्रद्वारा तन्निष्ठत्वेन च विष्णौ सर्वकारणत्वसिद्धेरनपायात्। नन्वेवमपि पाञ्चरात्रादौ वासुदेवस्य ब्रह्मत्वमुक्त्वा

तद्व्यूहावताररूपाणां सङ्कर्षणप्रद्युम्नानिरुद्धानां त्रयाणां लयस्थित्युत्पत्तिवर्णनात्, त्रयमपि विष्णोरेव साक्षाद्वर्ण्यत इति कथं सृष्टिलययोस्सद्वारकत्वमुच्यत इति चेत्, पाञ्चरात्रेऽपि सङ्कर्षणानिरुद्धयोः रुद्रचतुर्मुखाधिष्ठातृत्वात् लयसृष्ट्योः सद्वारकत्वस्यैव विवक्षितत्वान्न विरोधः ॥

एतेनैव **द्वितीयः** त्रिमूर्त्युत्तीर्णवादोऽपि निरस्तः, त्रिमूर्त्यन्तर्गतस्य विष्णोरेव परब्रह्मत्वात्। अत्र वक्तव्यं सर्वं पूर्वमेवाभिहितम्। 'तस्मिन् यदन्तः' इति परमात्मगुणा उपास्यत्वेनोपदिश्यन्त इति श्रीभाष्ये दहराधिकरणे स्थापनान्नात्र व्योमातीतवादस्य प्रसक्तिः। अधिकं वेदार्थसंग्रहे द्रष्टव्यम् ॥

त्रयाणामपीश्वरत्वमिति **तृतीयपक्षोऽपि** परमात्मन एकत्वप्रतिपादकैः 'एकमेवाद्वितीयम्' इत्यादिश्रुतिभिर्विराधादुपेक्ष्यः ॥ विष्णोः परत्वस्थापनादेव **चतुर्थपक्षोऽपि** निरस्तः ॥ अत एव **पञ्चमपक्षोऽपि** निरस्तः॥ ब्रह्मणः शाश्वतत्वादेव **षष्ठः** प्रवाहेश्वरवादोऽपि न समीचीनः ॥ 'परास्य शक्तिर्विधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.6-8) इति परमात्मगुणानां स्वाभाविकत्वश्रवणात्, निर्गुणवादनिराकरणाच्च **सप्तमपक्षोऽपि** न साधीयान्। परमात्मनोऽनन्तकल्याणगुणसागरत्वस्य 'परास्य शक्तिर्विविधैव' 'समस्तकल्याणगुणात्मकोऽसौ' (वि.पु.6-5-84) इत्यादिश्रुतिस्मृतिभिः प्रतिपादनात् **अष्टमः** तार्किकपक्षोऽपि निरस्त एव ॥

**सिद्धान्तस्तु**—विष्णुशब्दो ब्रह्मपर्यायः। अत एव सर्वात्मकोऽपि सः भागवतोक्तरीत्या देवतापि भवति। सद्विद्यायां हि 'सेयं देवता' इत्येवोक्तम्। सहस्रनामसु 'भूतात्मा' इत्यपि पठितम्। अतो विष्णुः आधिभौतिकाधिदैविकाध्यात्मिकरूपसर्वक्षेत्रेष्वपि व्यापकः ॥

यस्तु वेदेभ्योऽप्यागमाः प्रमाणतरा इत्यादिवादः, स त्वतीव बालिशभावफलम्। यच्च—वेदेष्वेकदेवतानिष्ठा नास्तीति—तत्रेदं रहस्यमवधेयम्, आत्मवादस्य देवतावादस्य च—

अव्यक्तमात्मतत्त्वं तु तपोगम्यं कथञ्चन। व्यक्तं च देवतातत्त्वं सुग्रहं तदनुग्रहात् ॥
अनन्ता देवताःप्रोक्ता अधिकारानुरूपतः। अतस्तत्रैकनिष्ठा स्यादधिकारानुरूपतः ॥
आत्मोपासनमैकात्म्ये पर्यवस्येत्स्वतःस्वयम्। देवतोपासनं नैवम्, आत्मवादविलक्षणम् ॥
आत्मनोऽङ्गानि कीर्त्यन्ते देवतास्सकला अपि। देवतानां तु कृपया स्यादध्यात्मं क्रमान्नृणाम् ॥
अतस्तु देवतावादे ह्यतिवादाः खलूचिताः। ऋते विज्ञानतोऽन्यस्मात् न भवेत्तत्त्वनिर्णयः ॥

किं बहुना! ज्ञानप्रधाना वेदाः। भक्तिप्रधानास्त्वागमाः। 'स आत्मा। 'अङ्गान्यन्या देवताः' इति किल श्रुतिः। अतश्च—

वेदानां गणिकातौल्यमिति यद्वेदनिन्दनम्। अनाहतस्य नादस्य महत्त्वाज्ञानमूलकम् ॥
वेत्सि प्रवृत्तेर्निमित्तं किं वेदागमशब्दयोः। वेदो ज्ञानमयः प्रोक्तो विज्ञानं त्वागमो मतः ॥
तस्मात् खल्वान्तरं वेदस्त्वागमो बाह्य उच्यते। अनपेक्षस्ततो वेदस्सापेक्षस्त्वागमो मतः ॥

किं बहुना! आगमानां वेदाविरोधेनैव स्थानमागमेष्वेव स्पष्टं वर्ण्यत इति, तत्र नास्मद्विचारापेक्षा ॥ १४ ॥

[ईश्वरानुमानपरीक्षा]

160. सर्गादीनामसिद्धौ न हि निहमगिरां भज्यते संप्रदायः
तत्सिद्धौ नानुमानं प्रभवति यदिदं बाधशून्यं विपक्षे ।

एवं ब्रह्मणः श्रुत्येकसमधिगम्यत्वं प्रतिष्ठापयितुं ब्रह्मणो वाच्यत्वं वेद्यत्वं च प्रसाध्य, देवताविशेषविचारं प्रसङ्गादागतं परिसमाप्य, ब्रह्मणः श्रुत्येकसमधिगम्यत्वस्थापनायैव तस्यानुमानगम्यत्वं निराकरोति विस्तरेण— **सर्गादीनामित्यादिना**। ईश्वरानुमानञ्च प्राधान्येन त्रिविधम्—वेदप्रामाण्यरक्षणविधया, प्रथमगुरुतया, जगत्कर्तृतया च । तदुक्तम्**उदयनाचार्यैः**— 'प्रमायाः परतन्त्रत्वात् सर्गप्रलयसंभवात् । तदन्यस्मिन्ननाश्वासात् न विधातुरसंभवः ॥' (न्या.कु.2-1) इति । प्रमायाः प्रमात्मकज्ञानस्य परतन्त्रत्वात् स्वोत्पत्तौ, स्वगतप्रामाण्ये च परतन्त्रत्वात् विधातुः=ईश्वरस्य असम्भवः=न अभावो ईश्वरे वर्तते । अयं विचारो बुद्धिसरे विव्रियते। सर्गप्रलयसंभवात् । तत्राद्यं प्रामाण्यस्य स्वतस्त्वस्थापनाद्बुद्धिसरे निरसिष्यते । **द्वितीयमत्र** दूषयति । 'सर्गाद्यकालीनो वेदोपदेशः तदभिज्ञपुरिषकर्तृकः, उपदेशत्वात्, भारताद्युपदेशवत्' इत्यनुमानेनेश्वरसिद्धिः । वैदिकपरंपरा तु गुरुशिष्यपरंपराऽद्यपर्यन्तमागता दृश्यते । अद्यतनस्तूपदेशः गुरुपूर्वकः । गुरोरपि तद्गुरुपूर्वकः । एवं परंपरयाऽऽगतो वेदोपदेशः । परन्तु प्रलयानन्तरसृष्टौ प्रथमोपदेशः केन कृतः ? इति प्रश्ने, पुरुषान्तराभावात्, तदभिज्ञः कश्चित्पुरुष आवश्यकः । स एवेश्वरः; सर्वज्ञत्वे सति चेतनत्वं हीश्वरलक्षणम् । महाभारताद्युपदेशो दृष्टान्तः । प्रथमो हि भारतोपदेशः तदभिज्ञव्यासमूलकः सर्वसम्मतः । एवमेव तत्तादृशवेदोपदेष्टृत्वं सर्वज्ञपुरुषमन्तरा न संभवतीति वेदोपदेष्टृतया सर्वज्ञपुरुषसिद्धिः । तदेतद्दूषयति— **सर्गादीनाम्**=सृष्टिप्रलयादीनाम् **असिद्धौ**=तत्साधकप्रमाणाभावेनासिद्धौ सत्याम् **निगमगिरां संप्रदायः**= वेदोपदेशानां परंपरा **न हि भज्यते**=न हि भग्ना भवति । सर्गाद्यकालीनवेदोपदेशः किलोक्तानुमाने पक्षः। प्रलये सिद्धे, अनन्तरं सृष्टेरप्यावश्यकतया, तदा वेदोपदेशोऽपि कर्तव्यः । प्रलयस्यैवासिद्धौ सर्गाद्यकालस्य, आद्यवेदोपदेशस्य च कथं सिद्धिः? न हि प्रलयः कस्यचिदनुभवसिद्धः । अत एवाद्यवेदोपदेशोऽप्यसिद्धः। ततश्चाश्रयासिद्धिः । न च 'धाता यथापूर्वमकल्पयत्' (तै.2-1-38) इत्यत्र 'यथापूर्वम्' इत्यनेन सृष्टिप्रलयौ सिद्धौ । एवं 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै' (श्वे.6-18) इति परमात्मनो चतुर्मुखं प्रति वेदोपदेष्टृत्वं हि श्रुतिसिद्धमिति वाच्यम् ; एवञ्चान्योन्याश्रयप्रसङ्गः । ईश्वरोपदिष्टत्वात् खलु वेदाःप्रमाणम् । ततश्च ईश्वरसिद्धौ वेदप्रामाण्यम्, वेदप्रामाण्यसिद्धावीश्वरसिद्धिरिति ॥

ननु सर्गप्रलयौ अनुमानेनैव साधयामः 'विश्वसन्ततिः कदा चिदुच्छिद्यते, सन्ततित्वात्, प्रदीपसन्ततिवत्' इत्यनेन प्रलयस्सिद्ध्यति । एवं प्रलयकालिकाः परमाणवः पुनः ब्रह्माण्डारंभकाः, परमाणुत्वात्, इदानिन्तनब्रह्माण्डारंभकपरमाणुवत् इत्यनेन पुनःसृष्टिरपि सिद्ध्यतीति नाश्रयासिद्धिरित्यत्र आह— **तत्सिद्धावित्यादि**। **तत्सिद्धौ**=सृष्टिप्रलयसाधने **अनुमानम् न प्रभवति**=न समर्थं भवति । कुत इत्यत्र— **यत्**=यस्मात् **इदम्**=उक्तानुमानम् **विपक्षे** विरोधापादने 'हेतुरस्तु साध्यं मास्तु' इत्यप्रयोजकशंकायाम् **बाधशून्यम्**= अप्रयोजकशंकावारकबाधकतर्कशून्यम्, अतो न प्रभवति । 'पर्वतो वह्निमान्, धूमात्' इति प्रयोगे कृते धूमस्य

**शास्त्रेभ्यस्तत्प्रसिद्धौ सहपरिपठनात् विश्वकर्ताऽपि सिध्येत्**
**धर्मानुष्ठापनार्थं तदनुमितिरतो नैव शक्या कदाचित्॥ १५ ॥**

सत्त्वमात्रात् वह्निनापि भवितव्यमिति नियमो नास्ति इत्यभिप्रायेण 'धूमोऽस्तु, वह्निर्मास्तु' इत्याक्षेपस्याप्रयोजकशङ्कायां कृता, 'यदि वह्निर्नस्यात् तर्हि धूमोऽपि न स्यात्; धूमस्य वह्निजन्यत्वात्' इत्यप्रयोजकशङ्कापरिहारकानुकूलस्तर्को वक्तव्यः। यदि नोच्यते, तदनुमानं प्रमाणं न स्यात्। एतद्विस्तरो बुद्धिसरे (६०) भविष्यति। प्रकृते, सन्ततित्वस्योच्छित्तिं प्रत्यप्रयोजकत्वात्, 'सन्ततित्वमस्तु, उच्छित्तिर्मास्तु' इत्यप्रयोजकशङ्कायां तद्वारकानुकुलस्तर्को दुर्वचः। दीपादावपि सन्ततित्वं नोच्छेदकारणम्; किन्तु तैलादिकारणनाश एव। अत इदमनुमानमप्रयोजकम्। यदात्रोच्छेदो न भवति, तदा पुनस्सृष्टेरपि नावकाश इति द्वितीयमप्यप्रयोजकम्॥

ननु वेदास्सर्वथाऽप्रमाणमिति न वदामः। किन्तु वेदस्य शब्दरूपत्वात्, आप्तोक्तत्वज्ञानमन्तरा शब्दे प्रामाण्यनिश्चयासंभवात्, वेदानामपि प्रामाण्यमाप्तोक्तत्वनिश्चयादेव भवेत्। यदि वेदेनैवेश्वरसिद्धिस्तदा पूर्वोक्तरीत्यान्योन्याश्रयापातेन, जगत्कर्तृत्वानुमानेश्वरसिद्धौ, वेदप्रामाण्यसिद्ध्या, वेदेन सृष्टिप्रलयसिद्धिर्निष्प्रत्यूहैव। एवञ्च सर्गाद्यकाले वेदोपदेष्टृत्वेनापीश्वरसिद्धिरभ्युच्चयाय भवति। तत्राह— **शास्त्रेभ्य**इत्यादि। **शास्त्रेभ्यः**= वेदेभ्यः, 'वेदाच्छास्त्रं परं नास्ति' इत्युक्त्या वेदा एव प्रथमं शास्त्रम्; **तत्प्रसिद्धौ**=सृष्टिप्रलयसिद्धौ सत्याम्, **सहपरिपठनात्**=सृष्टिप्रलयाभ्यां सह जगत्कर्तृत्वस्यापि तत्रैव पाठात्, **विश्वकर्ताऽपि**=ईश्वरोऽपि तेनैव**सिद्ध्येदिति** ईश्वरानुमानं व्यर्थम्। 'धाता यथापूर्वमकल्पयत्' (तै.2-1-38) इत्येतस्मिन्नेव वाक्ये सृष्टिप्रलयवत् 'धाता' 'अकल्पयत्' इति जत्स्रष्टृत्वमपि प्रतिपाद्यत इति तदर्थं अनुमानापेक्षा व्यर्थेति भावः॥

ननु भोः! पूर्वपक्षिण आशय एव नावधृतस्त्वया। शब्दस्य प्रामाण्यं हि वक्तुराप्तत्वज्ञानाधीनम्। वेदोपदेष्टा आप्त इति ज्ञानमन्तरा कथं तदर्थे आश्वासो भवेत्? अतः प्रथमं जगत्कर्तृतयेश्वरसिद्धौ, तत्प्रोक्ततया वेदप्रामाण्ये च सिद्धे, वेदेन सृष्टिप्रलयसिद्ध्या, सर्गाद्यकालिकवेदोपदेष्टृतयेश्वरसिद्धिरिति कथं वेदेनैव जगत्कर्तृसिद्धिः? अन्योन्याश्रयप्रसङ्गात्। न च जगत्कर्तृतयेश्वरसिद्धौ, जगदन्तर्गतवेदकर्तृत्वमपि तेनैव सिद्धमिति, वेदोक्तसृष्टिकालान्वेषणादिकं **दण्डापूपन्यायायि**तमिति वाच्यम्; कर्तृत्वोपदेष्टृत्वयोः भिन्नत्वात्। कर्तृत्वेनैवेश्वरसिद्ध्या पुनरुपदेष्टृत्वेन तत्साधनप्रयासः कुतः इति तु न शङ्कनीयम्; अनुमानस्यानुमानान्तरादूषकत्वात् इत्यत्राह—**धर्मेत्यादि**। **अतः**=ईश्वरोपदिष्टत्वमात्रेण वेदप्रामाण्यासिद्ध्या, वेदानां स्वतः प्रामाण्यादेव **धर्मानुष्ठापनार्थम्**=धर्मसंप्रदायप्रवर्तनार्थम् **तदनुमितिः**=ईश्वरानुमानम् **कदाचित्**= बहुकालपरिश्रमेणापि **नैव शक्या**=सर्वथा न साधीयः॥

**अयमाशयः**—वेदानां शब्दरूपत्वेन, शब्दप्रमाणयस्याप्तप्रणीतत्वनिश्चयाधीनत्वेन, परमाप्तेश्वरोपदिष्टत्वाद्वेदानां प्रमाण्यसिद्धिः। तथोक्तम् 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' (न्या.सू.2-1-69) इति हि ते मतम्। वेदोपदेष्टृतयेश्वरसिद्धावपि, ईश्वरस्य परमाप्तत्वं कथं सिद्धम्? न च जगत्कर्तृतयेश्वरस्सिद्ध्यन् नित्यसर्वज्ञतयैव सिद्ध्यति सः। तादृशसर्वज्ञत्वमेवाप्तत्वमिति वाच्यम्, कपिलसुगतादीनामपि तत्तन्मतस्थैः सर्वज्ञत्वाङ्गीकारात्, तेषामप्याप्तत्वसिद्धौ तदुपदिष्टानां कापिलसौगतागमानामपि

[कार्यत्वहेतुकेश्वरानुमाननिरासः]

**161. साध्यं यादृक् सपक्षे नियतमवगतं स्याद्धि पक्षेऽपि तादृक्**
**तस्मात् कर्मादियुक्तः प्रसजति विमते कार्यताद्यैस्तु कर्ता ।**

प्रामाण्यप्रसङ्गे, एतादृशप्रामाण्यस्याप्रयोजकत्वात् । न च 'सर्वज्ञस्सुगतो बुद्धः' (ना.लिं.स्व.13) इति कोशात्सुगतस्यैव सर्वज्ञत्वं संप्रतिपन्नम्, नेतरेषामिति वाच्यम्, आपेक्षिकज्ञानाधिक्येनापि तथा व्यपदेश-संभवात् । अन्यथा 'कृशानुरेतास्सर्वज्ञः' (ना.लिं. स्व.33) इति रुद्रस्यापि सर्वज्ञत्वं स्यात् । अस्तूभयो-स्सर्वज्ञत्वम्, का हानिः ? इति चेत्; अतीव वालिशस्त्वम् । किं न श्रुतमायुष्मता— 'कपिलो यदि सर्वज्ञस्सुगतो नेति का प्रमा । तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः? ॥' इति । अतस्सर्वज्ञत्वमात्रा-न्नाप्तत्वनिश्चयः । अत उपदेष्ट्रपक्षया प्रतिपाद्यविषयानुगुणमेव प्रामाण्यं वक्तव्यम् । निरुपाधिकधर्मप्रति-पादकत्वमेव वेदानामितरागमापेक्षया श्रैष्ठ्यम् । अत एव 'वेदोऽखिलो धर्ममूलम्' (गौ.ध.सू.1-1-1) 'यतोऽभ्युदयनिःश्रेयससिद्धिस्स धर्मः' 'तद्वचनादाम्नायस्य प्रामाण्यम्' (वै.सू.1-1-2,3) इत्यादीनि प्रवृत्तानि । जैनत्वेन प्रसिद्धः **अमरसिंहो**ऽपि हि 'श्रुतिस्त्री वेद आम्नायस्त्रयी, धर्मस्तु तद्विधिः' (ना.लिं.शा. शब्द.) इति वेदविहितत्वमेव धर्मलक्षणमाह । अतो निरुपाधिधर्मप्रतिपादकत्वादेव वेदानामितरातिशयितं प्रामाण्यम् । अतश्च वेदानां स्वतः प्रामाण्यात्, वेदानां प्रामाण्याङ्गतयेश्वरसिद्धिर्न साधीयसी । एतत्सूचनार्थ-मेवाचार्यैः 'धर्मानुष्ठापनार्थम्' इति पदं प्रयुक्तम् ॥ एवमेवेतरेऽपि यदि स्वतःप्रामाण्यं ब्रूयुस्तदा का गतिरिति चेत्, सत्यम् । एतत्त्वग्रे (बुद्धि.101-102) विचार्यते । अतो वेदानामपौरुषेयत्वेन स्वतःप्रामाण्या-त्तेनेश्वरसिद्धिर्निष्प्रत्यूहा । अत एव सर्वैरप्याचार्यैः 'शास्त्रयोनित्वात्' (ब्र.सू.1-1-3) इति सूत्रे परमात्मनश्शास्त्रैकप्रमाणकत्वं साधितम् । अतो वेदोपदेष्टृतया नेश्वरसिद्धिः ॥ १५ ॥

एवं कार्यत्वहेतुकमीश्वरानुमानमपि न प्रतितिष्ठतीति प्रदर्शयति विस्तरेण— **साध्यमित्यादिना** । **सपक्षे**=दृष्टान्ते **यादृक्**=यादृशरूपविशिष्टम् साध्यम् **नियतम्**=हेतुव्यापकम् **अवगतम्**=पूर्वं गृहीतम्, **तादृक् हि**=तादृशरूपविशिष्टमेव हि साध्यम् **पक्षेऽपि स्यात्**=सिद्ध्येत् । **तस्मात्**=एवं सपक्षे दृष्टतुल्यस्य साद्ध्यस्यैव पक्षेऽपि सिद्धेः **कार्यताद्यैस्तु**=कार्यत्वादिभिस्तु हेतुभिः **विमते**=पक्षे **कर्ता**=सिद्ध्यन् कर्ता **कर्मादियुक्तः**=कर्मतत्कृतशरीरादियुक्त एव **प्रसजति**=निश्चितो भवति । ईश्वरस्तु अकर्मवश्यः कथमनेनानुमानेन सिद्ध्येत्? 'क्षित्यङ्कुरादिकं सकर्तृकम्, कार्यत्वात्' इत्यनुमानेन हि जगत्स्रष्टृतया ईश्वर-स्साध्यते तार्किकैः । 'यत्र यत्र कार्यत्वम्, तत्र सकर्तृकत्वम्, यथा घटादौ' इति किल व्याप्तिः प्रदर्श्यते । एवं व्याप्तिग्रहणवेलायां यादृशं सकर्तृकत्वं सपक्षे घटादौ दृष्टम्, अनया व्याप्त्या पक्षे क्षित्यङ्कुरादौ सिद्ध्यन् कर्ता, घटादौ दृष्टकुलादितुल्य एव सिद्ध्येत् । ततश्चानेनानुमानेन सिद्ध्यन्नीश्वरः कुलालतुल्य एव कश्चिच्चेतनः कर्मपरवशः सिद्ध्येत्, न तु तद्विलक्षणः ईश्वरः सिद्ध्येत् ॥

ननु 'ईश्वरः कर्मपरवश एव सिद्ध्येत्' इत्यापादनं न घटते । किं ईश्वरं सिद्धं कृत्वैवमापाद्यते, उतेश्वरमसिद्धं कृत्वा? न द्वितीयः, ईश्वरस्यैवासिद्धत्वे, तस्य कर्मवश्यत्वापादानम् अजातपुत्रस्य नामकरणवन्न

**एतत् तत्सिद्ध्यसिध्योर्न घटत इति न क्ष्मादिपक्षे सपक्ष-
व्याप्ताकारप्रसङ्गात् तदनुपगमने न क्वचित् स्यात् प्रसङ्गः ॥ १६ ॥**

घटेत। न प्रथमः, ईश्वरस्य सिद्धत्वादेव। सिद्धस्य निराकरणायोगात् इति शङ्कते—**एतदित्यादि**। **एतत्**= एवमापादनम् **सिद्ध्यसिद्ध्योः**=ईश्वरस्य सिद्धौ, असिद्धौ वा, **न घटते**=उक्तक्रमेण न युज्यते। एतन्निराकरोति—**इति नेति**। कुत इत्यत्र—**क्ष्मादीति**। **क्ष्मादिपक्षे**=क्षित्यादिरूपे पक्षे **सपक्षव्याप्ताकारप्रसङ्गात्**= सपक्षे **व्याप्तः**=निरूपकतया आश्रयतया च व्याप्तिविशिष्टो य **आकारः**, तस्य **प्रसङ्गात्**=आपादनात्। निरूपकतया व्याप्तिविशिष्टः साध्यः, आश्रयतया व्याप्तिविशिष्टः हेतुः। हेतुसाध्ययोः यादृशरूपविशिष्टयोर्व्याप्तिः सपक्षे पूर्वं गृहीता, तादृशाकारस्यापादनात् न सिद्ध्यसिद्धिभ्यां व्याघातः। ईश्वरं प्रत्येकीकृत्यापादाने तथा दोषः स्यात्, न तु विशिष्टस्यापादाने। घटादौ हि सपक्षे शरीरिकर्तृकत्वं दृष्टमिति, क्षित्यादावपि तदेवापाद्यते—'क्षित्यादिकं यदि सकर्तृकं स्यात्, तदा घटादिवच्छरीरिकर्तृकं स्यात्' इत्यापादने न पूर्वोक्तदोषः॥

ननु 'क्षित्यङ्कुरादिकं सकर्तृकम्, कार्यत्वात्' इति प्रयोक्तुः सकर्तृकत्वं न शरीरिकर्तृकत्वं संमतम्, कृतिजन्यत्वमात्रमेव। अतः 'क्षित्यादिकं यदि यत्नजन्यं स्यात्, तदा घटादिवत् स्यात्' इत्येवापादनं कर्तव्यम्। तच्च पूर्वपक्षिण इष्टमेव। तर्के आपाद्यस्य परानिष्टत्वमावश्यकम्। प्रकृते च तदभावात् इदमापादनमयुक्तमित्यत्राह—**तदनुपगमन** इत्यादि। तदनुपगमने=तस्य उक्तस्यापादनस्य अनुपगमने=अनङ्गीकारे **क्वचित्**=कुत्रापि **प्रसङ्गः**=तर्कः **न स्यात्**=न भवेत्। परसंमतसाध्यस्वरूपमादायैव तर्कः प्रसञ्जनीय इति यदि, तदा कुत्रापि तर्कप्रयोगः न केनापि कर्तुं शक्यः। साध्यं हि विवादग्रस्तम्। तत् प्रतिवादिना नाङ्गीकर्तुं शक्यम्। यद्यङ्गीक्रियते, तर्हि विवाद एव न स्यात्। ततश्च तर्कप्रयोगस्य क्वावकाशः? अतः 'क्षित्यङ्कुरादिकं यदि सकर्तृकं स्यात्, तर्हि शरीरजन्यं स्यात्' इति प्रसञ्जनं युज्यत एव। यत्र सकर्तकत्वं घटादौ दृष्टान्ते, तत्र शरीरजन्यत्वमेव दृश्यते। अतः तेनैव दृष्टान्तेन क्षित्यङ्कुरादेः शरीरजन्यत्वं सिद्ध्येत्। ततश्च कर्मवश्यत्वमपि ईश्वरस्य सिद्ध्येदिति नोक्तानुमानेनेश्वरसिद्धिः॥

यद्यपि 'पर्वतो वह्निमान्, धूमात्' इति प्रयोगे, धूमस्य प्रत्यक्षसिद्धत्वान्न तत्र विवादः। वह्निविषय एव संशयः। अत्र 'धूमोऽस्तु वह्निर्मास्तु' इत्यापेक्षस्याप्रयोजकशङ्केति व्यवहारः। तस्योत्तरम् 'यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यात्' इति। अयमेव 'तर्कः' इत्युच्यते। अस्य विस्तरोऽनुमानप्रकरणे भविष्यति। प्रकृते 'क्षित्यङ्कुरादिकं कर्तृजन्यम्, कार्यत्वात्, घटवत्' इति प्रयोगे, 'कार्यत्वमस्तु कर्तृजन्यत्वं मास्तु' इत्यप्रयोजकशङ्कायां, 'यदि कर्तृजन्यत्वं न स्यात्, तर्हि शरीरजन्यत्वमपि न स्यात्' इत्येव तर्कः वक्तव्यः। अत्र तु 'यदि कर्तृजन्यत्वं स्यात्, तर्हि शरीरजन्यत्वं स्यात्' इति तर्कप्रदर्शनं कथं घटत इत्याक्षेपः स्यात्; तथापि, साध्यस्य परेष्टत्वात्, तदङ्गीकारे परानिष्टापादनस्यैव तर्करूपत्वात् 'यदि साध्यं न स्यात् तर्हि हेतुरपि न स्यात्' इति यथाऽनुकुलस्तर्कः तैरुच्यते, तद्वदेव 'यदि साध्यं स्यात्, तर्हि एवं स्यात्' इति प्रतितर्कः प्रयोक्तुं शक्यते, परानिष्टापादनस्यैव तर्करूपत्वात्। ततश्च 'यदि कर्तृजन्यत्वं न

[अनुमानसिद्ध ईश्वरो जीवविलक्षणो न स्यात्]

**162. यत् कार्यस्योपयुक्तं तदिह भवतु नः किं परेणेति चेन्न
ज्ञानादेरुद्भवे तद्विषयनियमनेऽप्यर्थनादिन्द्रियादेः।**

स्यात्, तर्हि कार्यत्वमपि न स्यात्' इतिवत्, 'यदि कर्तृजन्यत्वं स्यात्, तर्हि शरीरजन्यत्वमेव स्यात्' इत्यापादनमपि तर्को भवति, अस्यापि परानिष्टत्वात्। सपक्षे=दृष्टान्ते घटादौ हि कर्तृजन्यत्वात्, शरीरजन्यत्वस्यापि सत्त्वेन, घटादिदृष्टान्तेन कर्तृजन्यत्वसाधने, तेनैव दृष्टान्तेन परानिष्टस्य शरीरजन्यत्वापादनस्य प्रतितर्करूपत्वं भवति। न चैवं सति दृष्टान्ते घटादौ विद्यमानं धर्मं शरीरजन्यत्वमप्यापाद्यते यदि, तर्हि जात्युत्तरं स्यात्—यथा, 'पर्वतो वह्निमान्, धूमात्, यथा महानसम्' इति प्रयोगे, 'तर्हि महानसवदेव पर्वतोऽपि घटादिमान् स्यात्' इत्यापादनवदिति चेत्, सत्यम्। अन्ते विचारयाम इदं सर्वम्॥ १६॥

ननु 'अयं पटः कर्तृजम्यः, कार्यत्वात्, घटवत्' इत्यनुमानेनाजातकर्तृकस्य पटस्य घटदृष्टान्तेन कर्तृजन्यत्वसाधनं सर्वसंमतम्। अत्र घटदृष्टान्तकथनमात्रेण किं कुलालो घटकर्ता सिद्ध्येत्? यदि हठादिष्टापत्तिरुच्यते, तर्हि—'एतद्घटः कर्तृजन्यः, कार्यत्वात्, तद्घटवत्' इत्यज्ञातकर्तृके घटे सकर्तृकत्वानुमानं सर्वानुभवसिद्धम्। अत्र 'कर्तृजन्यत्वम्' कृतिजन्यत्वमात्रमेवानुमानेन सिद्ध्येत्, न तु तद्घटहेतुभूतकुलालगतं वस्त्रभूषणादिकमपि, एषां घटकारणवर्गेऽननुप्रवेशात्। तद्वत् प्रकृतेऽपि कार्यसामान्यं प्रति कृतित्वेनैव कारणत्वात्, कृतिजन्यत्वमात्रमनुमानेन सिद्ध्येत्, न तु शरीरादिकमपीति शङ्कते—**यदित्यादि**। **कार्यस्य यत् उपयुक्तम्**=अत्यन्तमावश्यकम्, **तत्**=तावन्मात्रम् **इह**=प्रकृतेऽपि **भवतु**=सिद्ध्यतु; **परेण**=इतरेण कार्यानुपयोगिना धर्मेण **नः**=अस्माकम् **किम्**=किं फलम्। एवञ्च घटादिदृष्टान्तेन कर्तृजन्यत्वमात्रमनुमानेन सिद्ध्येत्, न तु शरीरजन्यत्वादिकम् **इति चेत्**—**न**=नैतद्युक्तम्। कुतः? **ज्ञानादेः**=ज्ञानेच्छाप्रयत्नानाम् **उद्भवे**=उत्पत्तौ **तद्विषयनियमने तस्य**=ज्ञानस्य **विषयनियमने**=विषयव्यवस्थापने **इन्द्रियादेरपि**=इन्द्रियाणाम्, तदाश्रयतया शरीरादेरपि **अर्थनात्**=अपेक्षणात्। अतः जगत्कर्तुः शरीरेन्द्रियादिकमप्यनेनानुमानेन सिद्ध्येदेव। ईश्वरानुमानेन जगत्कर्तुः कस्यचित्सिद्धावपि, तावता वेदप्रामाण्यं कथं सिद्ध्येत्? इत्याक्षेपे, त एवं वदन्ति—अनुमानेन सिद्ध्यन्नीश्वरः तदनुगुणसामर्थ्यवानेव सिद्ध्येत्। जगत्कर्ता नाम, तदनुगुणप्रयत्नवान्। प्रयत्नश्च इच्छाधीनः, इच्छा च ज्ञानाधीना। जानाति, इच्छति, यतत इत्येव सर्वत्र क्रमः। न च कृञ् धातोः प्रयत्नमात्रार्थकत्वेन कर्तृत्वमपि कृतिमत्त्वमात्रमेवेति ज्ञनेच्छयोः कथं सिद्धिः इति वाच्यम्, धातोस्तावन्मात्रार्थकत्वेऽपि, लोके 'बुद्धिपूर्वककारी' 'अबिद्धिपूर्वककारी' इति कर्तृत्वे द्वैविध्यदर्शनात्, धर्मशास्त्रेष्वपि तयोस्तारतम्यस्य, तत्प्रयुक्तप्रायश्चित्तभेदस्य दर्शनात्, ज्ञानेच्छायत्नवानेव कर्ता लोके, शास्त्रे च विवक्षितः। अत एव घटादिकर्तृत्वं तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमेव कर्तृत्वमुच्यते। एवञ्च जगत्कर्तृत्वमपि जगद्विषयकोपादानादिगोचरज्ञनेच्छाकृतिमत्त्वमेव। जगद्विषयकसर्वज्ञानवानेव जगत्कर्तेतीश्वरस्य सर्वज्ञत्वसिद्धिः। ततश्चेश्वरसाधकानुमानेनैव सर्वज्ञः, सत्यसङ्कल्पः, जगत्स्रष्टा सिद्ध्यति। धर्मिण ईश्वरस्य ग्राहकम्=साधकम् यत् प्रमाणम्=ईश्वरानुमानम्, तेनैवानुमानेन तदनुगुणज्ञनादिधर्मवानेव धर्मी=ईश्वरस्सिद्ध्यतीति

**नित्यं ज्ञानं विभोस्तन्न नियतविषयं तेन नान्यार्थनं चेत्**
**नानित्यस्यैव दृष्टेस्तव कथमजसंयोगभङ्गोऽन्यथा स्यात् ।। १७ ।।**

सर्वज्ञत्वादिकं धर्मिग्राहकानुमानेनैव सिद्ध्यतीति वदन्ति । यथा वह्नेः धर्मिणो ग्राहकं त्वगिन्द्रियमेव, वह्निगतम् उष्णस्पर्शादिधर्ममपि गृह्णाति । एवञ्चेश्वरानुमानेन जगत्स्रष्टुस्सिद्धौ, सर्वज्ञत्वस्यापि तेनैव सिद्ध्या, सर्वज्ञेनेश्वरेण प्रणीतत्वाद्वेदस्य प्रामाण्यसिद्धिः । न च बुद्धकपिलयोरपि सर्वज्ञत्वप्रसिद्ध्या तदीयागमानामपि प्रामाण्यप्रसङ्गः इति शङ्क्यम्; तयोर्जगत्स्रष्टृत्वस्य तैरप्यनङ्गीकारेण तयोः सर्वज्ञत्वस्यापेक्षिकत्वेन निरुपाधिकसर्वज्ञत्वाभावात् । अत्रैवमाचार्यैर्दूषणमुच्यते—यदि जगत्कर्तृत्वोपयोगितया सर्वज्ञत्वसिद्धिः, तर्हि ज्ञानं प्रति कारणतया शरीरेन्द्रियादिकमपि तस्यावश्यकम् । यदि शरीरं विनापि ज्ञानं स्यात्, तर्हि ज्ञानमन्तरा इच्छापि स्यात्, इच्छामन्तरापि प्रयत्नः स्यादिति तेनानुमानेन न सर्वज्ञत्वसिद्धिः । न च लोके यद्विषयकः प्रयत्नः, तद्विषयिणीच्छा आवश्यकी । एवं यद्विषयिणीच्छा तद्विषयकं ज्ञानं च भवति । अतः प्रयत्ने विषयसिद्ध्यर्थं ज्ञानेच्छे अनिवार्ये इति वाच्यम्, एवं सति ज्ञानं प्रति शरीरेन्द्रियादीनामपि आवश्यकत्वमपि लोके दृश्यत इति तेषामपि सिद्धिरावश्यकी । एवं शरीरार्थं कर्माप्यावश्यकमिति ईश्वरः कर्मपरवश एवानुमानेन सिद्ध्येदिति।।

ननु लोके ज्ञानं सर्वं क्षणद्वयमात्रावस्थायि, ईश्वरीयं ज्ञानं तु न तथा । सृष्टिस्थितिसंहारादिकार्याणां सार्वदिकत्वेन तस्य ज्ञानमपि सार्वदिकमिति ईश्वरस्य ज्ञानं नित्यमावश्यकम् । अत एव तदर्थं शरीरेन्द्रियाद्यपेक्षापि नास्तीति नेश्वरस्य शरीरादिसिद्धिरिति शङ्कते—**नित्यमित्यादि**। **विभोः**=जगत्स्रष्टुरीश्वरस्य **ज्ञानं नित्यम्,** अतश्शरीराद्यपेक्षा नास्ति । ज्ञानस्य नित्यत्वेऽपि, तत्र विषयभानार्थं कारणापेक्षा स्यादित्यत्र—**तत्**=तच्च ज्ञानम् **न नियतविषयम्**=व्यवस्थितविषयकं न, किन्तु सर्वविषयकम्, स्वतस्सर्वज्ञत्वादीश्वस्य । **तेन**=एवं सदा सर्वविषयकत्वेन नित्यत्वेन च **अन्यार्थनम्**=अन्यापेक्षा **न** इति चेत्; एतन्निराकरोति—**नेत्**। कुत इति चेत्- **अनित्यस्यैव दृष्टेः**=ज्ञानस्य सर्वस्याप्यनित्यस्यैव दर्शनात् । घटादिदृष्टान्तेन हीश्वरानुमानप्रयोगः । लोके कुत्रापि नित्यज्ञानस्याभावात्, लोकदृष्टान्तेन सिद्ध्यत् ज्ञानं कथं वा नित्यं स्यात्? लोके दृष्टान्ते दृष्टं सर्वं तथैवाङ्गीकर्तव्यमिति नियमो नास्ति । न हि 'चन्द्र इव मुखम्' इत्यादौ चन्द्रगताह्लादकरत्वातिरिक्तं किञ्चिदपि मुखे आपाद्यते इत्यत्राह—**तवेत्यादि**। **अन्यथा**=लोकदृष्टव्यतिक्रमे **तव अजसंयोगभङ्गः**=नित्यसंयोगनिराकरणं **कथं स्यात्?** संयोगसामान्यस्य लोकेऽनित्यत्वेनैव दर्शनात्, विभुद्वयसंयोगाङ्गीकारे तस्य नित्यत्वप्रसङ्गात् विभुद्वयसंयोगो नाङ्गीक्रियत इति हि तव मतम् । लोके सर्वस्यापि ज्ञानस्यानित्यतयैव दर्शनेऽपि, ईश्वरीयं ज्ञानं नित्यमिति यथाङ्गीक्रियते; तथैव लोके संयोगसामान्यस्यानित्यतया दर्शनेऽपि विभुद्वयसंयोगो नित्य इत्यङ्गीकारे को विरोधः? यद्यङ्गीक्रियते, तर्ह्युभयमप्यङ्गीक्रियताम्, लोकानुसारात् । अथवोभयमपि निराक्रियताम् । ईश्वरज्ञामं नित्यमङ्गीकृत्य, संयोगः परं कुत्रचित् नित्यो नाङ्गीक्रियत इति न सर्वथा युक्तिसहम् ।।

ननु लोकदृष्टिमात्रान्नानित्यं ज्ञानमीश्वरस्य, जगत्कारणत्वस्य सार्वदिकत्वात्तद्धेतुभूतं ज्ञानं सार्वदिकमन्तरा कारणत्वानुपपत्तेरिति धर्मिग्राहकमानेनैव नित्यज्ञानसिद्धिः । एवं विभुद्वयसंयोगानङ्गीकरणमपि न

**[ईश्वरानुमानेन न सर्वज्ञस्सिद्ध्येत्]**

**163. किं वा धीच्छे गृहीते? विषयनियतये ते हि यत्नोऽत्र नेच्छेत्**
**निर्हेतुस्तत्प्रमेष्टा भवतु विषयवानेष तद्वत् स्वतस्ते ।**

पारिभाषिकम्, किन्तु क्रियाजन्य एव संयोग सर्वत्र । यत्र कुत्रचिच्छाखादौ यदा चलनात्मिका क्रिया भवति, तदा पूर्वदेशाद्विभागः, देशान्तरप्राप्तिश्च सर्वामुभवसिद्धा । प्राप्तिरेव संयोगपदार्थः । परिमितेष्वेव चलनसंभवात्, विभुषु चलनासंभवाच्च क्रियाया अप्रसक्त्या संयोगः क्व भवेत् ? अयि भोः! नैयायिकानाम् आकाशः, कालः, दिक्, आत्मानस्सर्वे इत्येते विभवः पदार्था अनन्ताः । एते सर्वेऽपि एकस्मिन्प्रदेशे व्याप्यैव तिष्ठेरन् । अन्यथा हि विभुत्वभङ्गः । एवमेकत्रैव वर्तमानानामेषां परस्परं संबन्ध एव नास्तीति कथं घटताम्? संबन्धस्यावश्यंकत्वे; न समवायः, तेषां परस्परमयुतसिद्धत्वाभावात् । अयुतसिद्धयोः खलु समवायः । द्रव्ययोस्तु संयोग एव । अतश्च विभुद्वयसंयोगोऽनिवार्य एवेति चेत्, अयि भो ब्रह्मन्! ब्रह्मवादिना त्वया लौकिकघटपटादिविषयकचर्चायां नावतर्तव्यमासीत् । एवं मर्यादामतीत्य विवदन्तं त्वां पृच्छामः—भवन्मते एकस्मिन्नेव घटादौ रूपरसगन्धस्पर्शादयो बहवो गुणा वर्तन्त एव किल । एकदेशावच्छेदेन वर्तमानानामेषां परस्परं सम्बन्ध आवश्यकः किल । धर्मिणा घटेन साकं तु समवायो वा, अपृथक्सिद्धिर्वा भवतु कामम् । धर्माणामेषां परस्परं कस्संबन्ध उच्यताम्! किं कुर्मः! परस्परसंबन्धे परस्परं साङ्कर्यं स्यादिति न कश्चनेति चेत्, एकत्रैव वर्तन्ते, अथापि परस्परमसंबद्धा इति चेत्, तर्हि विभवोऽपि पदार्थास्तथैव तिष्ठन्तु । आः! स्मृतम्! स्वरूपं संबन्धस्तेषां स्यात्; तर्हि विभुष्वपि स एव स्मर्यतां कामम्! का हानिः? तर्ह्याचार्यैः कथमुक्तम्? भवादृशानां श्रद्धाजडानां पीडात आत्मानं रिरक्षयिषवस्ते समयविशेषे यत्किञ्चिद्ब्रूयुः । तत्तथैव गृह्यते चेत्, आकाशस्य चाक्षुषत्वसमर्थनमपि तथैव स्यात् । किं न तर्ह्याकाशश्चाक्षुषः? कोऽयं संभ्रमः? न किञ्चिदपहीनं तावता, संमाश्वसिहि! तत्प्रकरणे परीक्षतं सर्वम् । उच्यते किल **'गुरोस्तु शापः शिष्यः स्यात्'** इत्यादि । पुनःपुनः पठ्यताम् ॥ १७ ॥

ननु प्रयत्नं प्रति यथा ज्ञानेच्छयोर्नियतत्त्वं, न तथा शरीरेन्द्रियादेः,स्वशरीरप्रेरणादौ व्यभिचारात् । स्वहस्तचालने न हि हस्तान्तरापेक्षा, किन्तु केवलप्रयत्नेनैव । तथा जानाति, इच्छति, प्रेरयति । अतोऽन्वयव्यतिरेकवशात् ज्ञानेच्छयोरेवापेक्षेति चेत्, तत्राह **किं वा इत्यादि**। **धीच्छे**=ज्ञानेच्छे **किम्** किमर्थम् **गृहीते**=अङ्गीकृते? ईश्वरीयः यत्नः खलु नित्यः, न कारणजन्यः । अतो ज्ञानेच्छे न कारणमिति ते वा किमर्थमङ्गीकरोषि? अयि भोः! आशयानभिज्ञो भवान् । ज्ञानेच्छे प्रयत्नोत्पत्तिं प्रति न कारणम्, येनोक्तदोषः स्यात् । किन्तु प्रयत्नस्य स्वतस्सविषयकत्वं न संभवति, यद्विषयकम् ज्ञानम्, तद्विषयिणीच्छा, तद्विषयकश्च प्रयत्नः, त्रयाणां समानविषयकत्वनियमदर्शनादिति चेत्—न । **हि**=यतः **अत्र**=ईश्वरे **यत्नः**=प्रयत्नः **ते**=ज्ञानेच्छे **विषयनियतये**=स्वस्मिन् विषयव्यवस्थायै **नेच्छेत्**=नापेक्षेत । ज्ञानेच्छाप्रयत्नादयो हि स्वतस्सविषयकाः पदार्थाः । अतः विषयसमर्पणार्थं ज्ञानेच्छे नापेक्षणीये । अतश्चानुमानेन ज्ञानेच्छयोस्सिद्धिः कथं

**प्रोक्ते यत्ने स्वभावाद्विषयवति स धीः स्यादितीदं क्व दृष्टम्?**
**यद्वा धीस्तं हि नित्यं न तु जनयति ते सा कथं तन्नियन्त्री ॥ १८ ॥**

भवेत्? ननु भोः! पुनरप्याशयानभिज्ञो भवान्। पदार्थस्वरूपं स्वतस्सविषयकमेव। परं तु, स्मृतेस्सविषयकत्वेऽपि, स्मृतौ विषयभानं कथमित्यत्र 'अनुभवो यद्विषयः पूर्वं वृत्तः, स्मृतिरपि तद्विषयिणी भवति' इति खलूत्तरम्। तद्वत् प्रयत्ने, इच्छायां वा विषयोपस्थापकसामग्री का? इति प्रश्ने, ज्ञानेच्छे एव नियामिके वक्तव्ये। ज्ञाने तु इन्द्रियसन्निकर्षादिकं विषयोपस्थापकम्। अत एव जानाति, इच्छति, यतते इति क्रमोऽनिवार्यः। एवञ्च स्वतस्सविषये प्रयत्ने विषयविशेषोपस्थापकतया ज्ञानेच्छे अपेक्षणीये इति चेत्—यथा **तत्प्रमा**=ईश्वरीयं प्रमात्मकं ज्ञानम् **निर्हेतुः**=हेत्वधीना न, किन्तु नित्या **इष्टा**=संमता, **तद्वत्**=तथैव **एषः**=यत्नः=**विषयवान्** नियतविषयवान् **स्वत** एव **ते भवतु**। परमात्मनो ज्ञानं हि नेन्द्रियजन्यम्। बद्धानां जीवानामेव धर्मभूतज्ञानप्रसारणमिद्रियद्वारकम्। अतस्तस्य विषयसमर्पणं नेन्द्रियैः क्रियते, स्वतः तदीयं ज्ञानं विषयसंबद्धं भवतीत्यङ्गीक्रियते। एवमेव प्रयत्नस्यापि विषयसंबन्धः स्वयमेव भवतु, किमर्था ज्ञानेच्छापेक्षा। पुनश्शङ्कते—**यत्ने**=प्रयत्ने **स्वभावात्**=इतरापेक्षामन्तरेण स्वत एव **विषयवति प्रोक्ते**=सविषयको भवतीति कथने, **सः**=प्रयत्नः **धीः**=ज्ञानं **स्यात्**। सुखदुःखेच्छाद्वेषप्रयत्नाः खलु ज्ञानानन्तरभाविनः। अनुकूलत्वप्रकारज्ञानाधीनं सुखम्। प्रतिकूलत्वप्रकारकज्ञानाधीनं दुःखम्। सुखे इच्छा, दुःखे द्वेषः। उपादेयत्वज्ञाने प्रयत्नः प्रवृत्तिरूपः। हेयत्वज्ञाने निवृत्तिरूपः प्रयत्नः। आहत्य सर्वं ज्ञानाधीनम् न तु स्वतन्त्रम्। स्वतस्सविषयकं तु ज्ञानमेव। अतश्च प्रयत्नः स्वतस्सविषयकश्चेत्,स ज्ञानपदवाच्यो **भवेदिति चेत्**, समाधत्ते—**इदम्** स्वतस्सविषयकं ज्ञानमेवेति **क्व**=कुत्र लोके **दृष्टम्**=अनुभवसिद्धम्? ॥

ननु किमयं हार्दः प्रश्नः? कस्संशयः? वयं इच्छाप्रयत्नादिकं सर्वं धर्मभूतज्ञानस्यावस्थाविशेषं ब्रूमः। अतः धर्मभूतज्ञानवदेवेदं सर्वमपि स्वतस्सविषयकं भवितुमर्हति। स्मृतिरपि धर्मभूतज्ञानस्यावस्थाविशेष एव। तर्हि सापि किं स्वतस्सविषया? अङ्ग भोः! ईश्वरस्य सर्वं सदा स्वयं साक्षात्कुर्वतः स्मृतिः कथम्? 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इति मूलपुरुषस्य वचनं न श्रुतपूर्वम्? महायोगिनस्तस्य वचनस्यार्थं न वयं जानीमः; अतः पृच्छामः। किं भगवतः भूतभविष्यदादिकालभेदज्ञानमेव नास्ति? अद्य नष्टं गतकालिकं वस्त्वपि अद्य वर्तमानतया पश्येत् किम्? तादृशं नष्टं वस्तु अद्य नष्टतया पश्यति। तद्वस्तुनः कालदृष्ट्या तु वर्तमानतया पश्यतीति चेत्, तद्वस्तुनःकालस्याद्य नष्टत्वात्,कथं तथा तत् पश्येत्? गतागतादिप्रभेदस्तस्य नास्त्येव, कालस्याखण्डस्यैकत्वात्, भेदस्यौपाधिकत्वात् सर्वं तस्य प्रत्यक्षमेवेति चेत् ; नष्टमिदानीमविद्यमानं वस्तु विद्यमानमेव पश्येच्चेत्, स कथं भ्रान्तो न स्यात्? नष्टमेव पश्येच्चेत्, कथं नष्टं पश्येत्? अयि भोः! भवादृशं मूर्खं बोधयितुं न वयं पारयामः। योगिनोऽपि त्रैकालिकं वस्तु साक्षात्कुर्वन्ति चेत्, परमात्मा कुतो न साक्षात्कुर्यात्? महात्मन्! अज्ञानादेव पृच्छामः। 'शेषं न कोपेन पूरणीयम्'। उपदेशादिकं किं ज्ञानिनं प्रति, उताज्ञानिनं प्रति?

न कोपेन पूरयामः। किन्तु भवादृशा अज्ञानितमाः कथं बोधनीया इति न वयं जानीमः। अस्तु तत्। योगिनोऽपि स्वयं सर्वं पश्यन्ति इति किलोक्तम्। ते वा कथं गतमद्यावर्तमानं पश्यन्ति इति पृच्छामः? योगिनो दृष्टान्ततया मयोक्ताः। दृष्टान्तज्ञानमेव यस्य नास्ति, स कथं बोधनीयः? अस्माकमपरिचितोऽर्थः कथं भवता दृष्टान्तीक्रियते। दृष्टान्तस्योभयसंमतत्वमावश्यकं किल! एतावदपि किं न ज्ञातमायुष्मता? दृष्टान्तपरिचयमप्याधातुमसमर्थस्त्वम् कथं दार्ष्टान्तिकपरिचयमाधातुं शक्नोषि? भोः! अतीव कष्टं जातमस्माकम्। भवादृशेन साकं व्यवहारेण। जानामि भोः! भवतःकष्टम्। अत एव 'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः'(न्या.सू.1-1-25) इति लौकिकपदयोजनया सूत्रयामासुः। अज्ञाते तत्त्वे दृष्टान्तप्रदर्शनमनिवार्यम्। अत एव न्यायशास्त्रं 'लोकायतम्' इत्युक्तं प्राचीनैः। अत एव च न्यायसूत्रमत्यन्तालौकिकमीश्वरादितत्त्वमधिकृत्याधिकं न विस्तरयति शब्दजालम्। अधिकमेतद्विचारान्ते प्रदर्शयामः॥

परं तु लोके प्रयत्नस्य स्वतस्सविषयकत्वं न कुत्रापि दृष्टचरमिति चेत्, तत्राह—**यद्वेत्यादि**। **यद्वा**=अथवा **नित्यं हि तम्**=प्रयत्नम् **धीः**=ज्ञानम् **न तु जनयति**=नैवोत्पादयितुं शक्नोति, नित्यत्वादेव। एवं सति **सा**=धीः **ते**=तव **कथम् तन्नियन्त्री**=यत्ने विषयं व्यवस्थापयित्री भवेत्। जीवानां ज्ञानादिकं त्वागमापायि। ज्ञानानन्तरं इच्छाया जननेन ज्ञानेनेच्छाया विषयसमर्पणं भवेत्। एवं इच्छाया अनन्तरं प्रयत्नस्य जननेन, इच्छया प्रयत्नस्य विषयसमर्पणं भवेत्। ईश्वरज्ञानेच्छादीनां नित्यत्वेनैवं व्यवस्थापनासंभवादनुमानेन प्रयत्नसिद्धावपि, तस्य नित्यत्वेन कारणापेक्षाया अभावेन, तद्धेतुतया कथं ज्ञानेच्छे भवेताम्। अतश्च ईश्वरस्य सर्वज्ञत्वमपि न सिद्ध्येत्, वेदानां प्रामाण्यमपि न सिद्ध्येदितीश्वरानुमानक्लेशो विफलः॥

**अत्रेदमवधेयम्**—ईश्वरीयं ज्ञानं यद्यपि नित्यम्। अथापि सर्वदा सर्वविषयकमेकरूपमेव कथं तिष्ठेत्? स्वतस्तस्योत्पत्त्यभावेऽपि विषयाणामागन्तुकत्वात् औपाधिकोत्पत्तिविनाशावनिवार्यौ। अन्यथा 'सोऽकामयत। बहु स्याम् प्रजायेय' (तै.आ.) इत्यादिसंकल्पानामपि नित्यत्वं यदि भवेत्, तर्हि प्रलयादिकं जगतः कथं भवेत्? पूर्वं पापवशान्निग्रहसंकल्पविषयीभूतस्यानन्तरमनुकूलाचरणेन पूर्वतननिग्रहनिवृत्तिर्वा कथं भवेत्? अतः ईश्वरस्य ज्ञानेच्छादयो नित्या अपि तत्तत्कालानुगुणविषयसंबन्धात् औपाधिकोत्पत्तिविनाशवन्त इत्यावश्यकम्। अत एवोपनिषदि 'यस्सर्वज्ञस्स सर्ववित्' (मु. 1-1-9) इत्युच्यते। 'सामान्यतो विशेषतश्च सर्व वेत्ति' इति विवरणमप्युच्यते। 'सर्वज्ञः' इति सामान्यतस्सर्वविषयकं ज्ञानमुच्यते। 'सर्ववित्'इति विशेषतस्तत्तत्कालानुगुणसंकल्पानुगुणं ज्ञानमुच्यत इतीश्वरप्रयत्नस्य सामान्यतो नित्यत्वेऽपि, औपाधिकमनित्यत्वमप्यस्त्येवेति प्रयत्ने विषयनियमार्थं ज्ञानेच्छयोरावश्यकत्वेऽपि न कापि हानिः। तर्ह्याचार्यैः कथमेवमुक्तमिति चेत्, 'असकृदुक्तमेव' मृदुमतीनां स्वमतश्रद्धार्थमित्यादि स्मर्तव्यम्। किञ्चेश्वरतत्त्वम्, तदीयं सर्वज्ञत्वादिकं सर्वमतिगहनं दुर्ज्ञेयमेव च। स नास्मदादितुल्यः, न वा तदीयं ज्ञानमस्मदादिज्ञानतुल्यमित्यवबोधनार्थमिदं सर्वमित्यवगन्तव्यम्॥

**यच्च पृष्टम्**—भगवतः भूतभवद्भविष्यमाणविभागज्ञानमस्ति, उत नास्ति? इत्यादिकम्, स तु बालानां प्रश्नः। भूतभवद्भविष्यविभागतत्त्वं तु पूर्वमेव (जड.26) विशदीकृतम्। परमात्मनस्तु स्वदृष्ट्या

[ईश्वरो जीवेनान्यथासिद्धः]

164. **निश्वासादिप्रयत्नक्रम इह भवतां जीव एवास्त्वदृष्टैः**
**यद्वा तैरेव सर्वं घटत इति भवेत् तत्कृता सिद्धसाध्यम्।**
**क्लृप्तावन्यस्य कर्तृद्वयमुपनमति त्वत्सपक्षे, तथा स्यात्**
**पक्षेऽपीत्यव्यवस्था यदि विफलतया त्यक्तिराद्येऽपि सा स्यात् ॥ १९ ॥**

सर्वोऽपि कालो वर्तमान एव। इतरदृष्ट्या भूतं भवत् भविष्यत् सर्वं तथैव जानन् सः सर्वं स्वदृष्ट्या वर्तमानमेव जानाति। अतस्तस्य स्मृतिप्रश्न एव नोदेति। ईश्वरज्ञानस्य नित्यत्वेऽपि परिणामित्वात् अस्मद्दृष्ट्या वर्तमानमेव जानाति। ईश्वरज्ञानस्य नित्यत्वेऽपि परिणामित्वात् अस्मद्दृष्ट्या गतं गतत्वेनैव जानाति, वर्तमानं वर्तमानतयैवेत्येवं, न तस्य भ्रान्त्यादीनां प्रसक्तिलेशोऽपीत्यादि सुसूक्ष्ममतिभिरवगन्तव्यम्। शिष्टमत्रैवाग्रे (श्लो.76) भविष्यति ॥ १८ ॥

नन्वस्त्वनुमानेनेश्वरस्य प्रयत्नमात्रसिद्धिः। तावतैव तस्य वेदकर्तृत्वस्य सिद्ध्या, तदुक्तवेदेनैव ज्ञानेच्छादिकं सिद्ध्येदिति चेत्, तत्राप्याह—**निःश्वासादीति**। **इह**=अस्मिन्नीश्वरानुमाने **भवताम् निःश्वासादिप्रयत्नक्रम एव अदृष्टैः**=धर्माधर्मैः **जीव एवास्तु,** न तु अतिरिक्तेश्वरे। नैयायिकैः जीवनयोनियत्नः बुद्धिपूर्वकयत्नश्चेति यत्नो द्विविध अङ्गीक्रियते। आद्यः उच्छ्वासनिःश्वासहेतुभूतः। अयं न बुद्धिपूर्वकः, निद्राद्यवस्थास्वप्यनुवर्तमानत्वात्। न हि तदा श्वासोच्छ्वासादिः पुरुषप्रयत्नाधीनः, किन्तु जीवस्य जीवनादृष्टाधीनः। अतः स 'जीवनयोनिः' इत्युच्यते। जगत्सृष्टेरपि जीवानामदृष्टाधीनेत्यङ्गीकारात् ईश्वरानुमानेन सिद्ध्यत्प्रयत्नः जीवानामदृष्टाधीन इत्यङ्गीकारेण तादृशादृष्टाश्रयतया जीवः कश्चित्, जीवा एव वा सिद्ध्येरन्, न तु जीवविलक्षणः कश्चिदीश्वरः। ननु! तर्हि तादृशादृष्टप्रेरकतयैवेश्वरसिद्धिर्भवतु। अदृष्टानां जडत्वेन स्वतः कार्यकारित्वासंभवादित्यत्राह—**यद्वेत्यादि**। **यद्वा**=अथवा **तैरेव**=अदृष्टैरेव **सर्वम्**=जगत्सृष्ट्यादिकं सर्वमपि **घटते**=युज्यते। अदृष्टस्य खलु प्रभावोऽदृष्टत्वादेव पर्यनुयोगानर्हः। ततश्च **इति**=इति हेतोः **तत्कृता**=तादृशादृष्टपदवाच्यपुण्यापुण्यकर्त्रा जीवेन **सिद्धसाध्यम्**=तदनुमानम् सिद्धं साध्यं यस्य तत्, सिद्धसाधनदोषग्रस्तं **भवेत्**। ननु जीवनयोनियत्नः खलु अदृष्टाधीनः। कण्टकतैक्ष्ण्यादिकं यथादृष्टकारणाधीनम्, तद्वदेव सर्वं भवतु, कृतमीश्वरेण! अदृष्टस्याश्रयाऽपेक्षाऽनिवार्येति चेत्, तर्हि तदाश्रयतया सिद्धो जीव एव स्वादृष्टद्वारा जगत्कारणं भवतु। ननु आश्रयतया जीवस्य सत्त्वेऽपि तददृष्टप्रेरकत्वं न हि जीवस्य भवेत्। तदा हि अधर्मप्रेरकत्वमपि तस्य वाच्यम्, स्वानिष्टं कथं स कुर्यात्। अतोऽदृष्टप्रेरकतया ईश्वरस्सिद्ध्यतीत्यपि न। अदृष्टानां स्वतन्त्रतयैव साधारणकारणत्वात्। किञ्च यदि जीवातिरिक्तः कश्चित् कल्प्यते, तदाऽनवस्थेत्याह—**क्लृप्तावित्यादिना**। **अन्यस्य**=जीवातिरिक्तस्येश्वरस्य **क्लृप्तौ**=उक्तानुमानेन साधने **त्वत्सपक्षे**=भवदभिमते घटादौ दृष्टान्ते **कर्तृद्वयम्**=कुलालः, ईश्वरश्चेति कर्तृद्वयम् **उपनमति**=स्वयं सिद्ध्यति। ईश्वरस्य सर्वजगत्कारणत्वात्, घटादेः जगदन्तर्गतत्वाच्च। इष्टमेव तदस्माकमिति का

हानिरित्यत्र—**तथा पक्षेऽपि**=क्षित्यङ्कुरादावपि **स्यात्**=कर्तृद्वयं स्यात्। अस्तु का हानिरित्यत्र—**इति**= एवं क्रमेण **अव्यवस्था**=अनवस्था दुर्वारा। घटादौ कर्तृद्वयस्याङ्गीकारात्, तस्य चेश्वरानुमाने दृष्टान्तत्वात्, तदनुगुणतया पक्षेऽपि दृष्टान्तगतकर्तृद्वयम्, एतदनुमानसिद्धः कर्ता चेति क्षित्यादौ कर्तृत्रयमापतति। एवं दृष्टान्ते कर्तृत्रयसिद्धौ तादृशघटदृष्टान्तेन क्षित्यादावपि घटगतकर्तृत्रयम्, एतदनुमानसिद्धेश्वरकर्तृकत्वं चेति कर्तृचतुष्टयसिद्धिरित्येवं क्रमेणानन्तकर्तृपरंपरायाः वक्तव्यत्वेन कुत्रापि न प्रत्यवतिष्ठेतेति ईश्वरानुमानेन न किञ्चिदपि सिद्ध्येत्। ननु एवमनन्तकर्तृककल्पनाया विफलत्वात्, प्रथमकक्ष्यायामेवैकमेव कर्तारं घटे अङ्गीकुर्मः इत्याशङ्क्याह—**यदीत्यादि**। **विफलतया**=एकेनैव कार्यसिद्धौ कर्तृद्वयाङ्गीकारस्य विफलत्वात् **यदि त्यक्तिः**=कर्तृत्वपरंपरा न कल्प्यते यदि, तर्हि एकेनैव कुलालेन घटोत्पत्त्या द्वितीयस्य चेतनस्येश्वरस्याप्यनपेक्षणात् **आद्येऽपि**=घटादावपि **सा**=एकमात्रकर्तृकता **स्यादिति** अदृष्टद्वारा जीवानामेव जगत्कर्तृत्वसिद्धिरिति नेश्वरसिद्धिः। अतोऽनुमानेनेश्वरसिद्धिर्न संभवति॥

ननु भो महात्मन्! कमेवं पामरं भीषयसि बिभीषिकाप्रदर्शनेन? न वयं वञ्चयामः। स्वयमेव स्वेन वञ्चितस्त्वम्। पश्य, जगत्स्रष्टृतया खल्वनेनानुमानेनेश्वरस्सिषाधयिषितः। सपक्षो घटोऽपि जगदन्तर्गतः। अतो घटेऽपि ईश्वरः कर्ता सिद्ध्यति, लोकसिद्धः कुलालश्च कर्ता वर्तत एव। तथा च घटे कर्तृद्वयमापतितमेव। तस्य दृष्टान्तत्वात् तद्गतद्विकर्तृत्वेन साकमनुमानसिद्धं कर्त्रन्तरं चेति कर्तृत्रयमावश्यकमित्यव्यवस्था दुर्वारैव किलेति चेत्; किमिदं घटे कर्तृद्वयमेतदनुमानात् पूर्वमेव सिद्धम्, उतैदनुमानानन्तरं सेत्स्यति? आद्ये, एतदनुमानवैयर्थ्यम्, ईश्वरस्य सिद्धत्वात्। द्वितीये घटोऽपि पक्षो भवेत्, न तु सपक्षः। न च क्षितिशब्देन जगत्सर्वस्यापि विवक्षितत्वात्, घटस्य तदन्तर्गतत्वात् पक्षत्वमस्त्येति वाच्यम्, जगतस्सर्वस्यापि पक्षत्वे,सपक्षविपक्षयोरभावेन व्याप्तिग्रहणासंभवात् अनुपसंहार्याख्यहेत्वाभासापत्तेः। अतः क्षितिशब्दः विवादग्रस्तकार्यवर्गपरः। अथवा प्रतिदिनं बीजादङ्कुरोत्पत्तेः प्रत्यक्षतो दर्शनात्, अङ्कुरकर्तृतयेश्वरस्साध्यते। यत्र यत्र कार्यत्वं दृश्यते, कर्ता तु न दृश्यते, तादृशं सर्वमत्र पक्षत्वेनाभिमतम्। घटादौ कुलालरूपकर्तुर्लोकानुभवसिद्धत्वात् एतदनुमानेनेश्वरसिद्ध्यनन्तरं घटादावपि तत्कर्तृकुलालादिजीवप्रेरकतया ईश्वरोऽपि कर्ता भवति। अथवा कार्यसामान्यं प्रति साधारणकारणतया ईश्वरः स्वतन्त्रसाधारणकारणतया सिद्ध्यति। अतो द्विकर्तृकत्वादिदूषणं प्रतारणमात्रमिति चेत्, अस्त्वेवम्। अथापि अदृष्टद्वारा जीवानामेव जगद्धेतुत्वसंभवात् 'यदि विफलतया त्यक्तिराद्येऽपि सा स्यात्' इति दूषणं जागरूकमेव॥ अतोऽनुमानेन नेश्वरसिद्धिः॥ १९॥

ननु सकलकार्यं प्रति अदृष्टस्य कारणत्वं सर्वास्तिकजनसंमतम्। जीवस्तु स्वादृष्टमेव ज्ञातुं न शक्तः। जगन्निर्माणोपयोगिनानाविधादृष्टज्ञानं तेषां कथं भवेत्? यदि भवेत्, स्वसुखहेतूनेव प्रेरयेत्, न दुःखहेतून्। अदृष्टानि तु जडानि न स्वतः प्रवर्तेरन्। न चादृष्टानां स्वभावादेव फलप्रदत्ववादः साधीयान्, तदा हि स्वभाववादस्य प्रससणसंभवात् कार्यकारणभवस्यैवासिद्धिप्रसङ्गेनेश्वरस्य जगत्कारणत्वमपि दुर्वचं भवेत्। तथा च जन्माद्यधिकरणमेव निर्विषयं भवेत्। अतोऽदृष्टप्रेरकतयैवेश्वरसिद्धिरनिवार्यमित्यतो

[अनुमानेन न सर्वज्ञस्सिद्ध्येत्]

165. **साध्यो हेत्वादिवेदी मत इह कलया सर्वथा वा तवासौ**
**पूर्वत्रेशो न सिध्येतत्र कथमपि भवेत् व्याप्तिसिद्धिः परत्र।**
**पक्षस्पर्शाद्विशेषान्न खलु समधिकं पक्षधर्मत्वलभ्यं**
**कल्प्योऽन्यस्ते विशेषः सुकृतविषमिता जीवशक्तिस्तु सिद्धा ।। २० ।।**

वेत्यतोदूषणान्तरमाह— **साध्य इत्यादि**। **इह**=अस्मिन्नीश्वरानुमाने **साध्यः** यः **हेत्वादिवेदी** ईश्वरः, **असौ कलया**=एकदेशतः **हेत्वादिवेदी, उत सर्वथा**=सर्वप्रकारेण हेत्वादिवेदी **तव मतः**=संमतः? **पूर्वत्र**=प्रथमकल्पे **ईशः=सर्वज्ञ ईश्वरः** कश्चित् **न सिद्ध्येत्;** एकदेशत एव हेत्वादिज्ञानस्याङ्गीकारात्। **परत्र**=द्वितीयकल्पे **कथमपि**=कथञ्चिदपि **व्याप्तिसिद्धिः न भवेत्**। लोके सर्वज्ञस्य कस्याप्यदर्शनात्। तथा च उभयथा च दोषात् नेदमनुमानमीश्वरसाधकम्। 'क्षित्यङ्कुरादिकं कर्तृजन्यम्' इत्यत्र 'कर्तृत्वं नाम तदुपादानादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्' इत्युच्यते तैः। अपरोक्षज्ञानम्=स्वानुभवपर्यन्तज्ञानम्। तत्तत्कार्यस्योपादनकारणं किम्? कानि निमित्तानि कारणानि? कथं कर्तव्यम्? इत्यादिसर्वविषयकानुभवपर्यन्तज्ञानवानित्यर्थः। ज्ञाने सत्यपि इच्छाया अभावे प्रवृत्तेरसंभवात्तदनुगुणेच्छावान्, इच्छायां सत्यामपि बाह्यप्रवृत्तिं प्रत्यान्तरप्रयत्नस्य कारणत्वात्तदनुगुणप्रयत्नवांश्च तत्तत्कार्यकर्ता भवति। एतादृशकर्तृजन्यत्वमेवात्र साध्यम्। एवञ्च ज्ञानस्य कर्तृपदार्थेऽन्तर्भावात्, प्रकृते क्षित्यङ्कुरादिकर्तुः तदुपादानगोचरं ज्ञानं कीदृशं विवक्षितम्? किं कतिपयविषयकम्? अथवा तत्संबन्धिसर्वविषयकम्? आद्ये, सर्वज्ञ ईश्वरो न सिद्ध्येत्। कतिपयविषयज्ञानवान् कथं सर्वज्ञः स्यात्? असर्वज्ञः कथमीश्वरस्स्यात्? द्वितीये, दृष्टान्तासिद्धिः, तेन च व्याप्त्यसिद्धिः। न हि दृष्टान्ते घटादौ सर्वज्ञकर्तृकत्वं दृष्टम्। न हि कुलालोऽपि उपादानादिविषयकं सर्वं जानाति, किन्तु घटनिर्माणापेक्षितं यावत्, तावज्जानाति। ननु अतिविचित्रबृहत्प्रासादरथगोपुरादिकं पश्यतां घटादिदृष्टान्तेन तत्कारणमनुमिमत्सतां किं घटकर्तृकुलालसदृश एव कर्ता तत्र सिद्ध्येत्? किन्तु तत्तत्कार्योपयोगिसामर्थ्यचातुर्यादिविशिष्ट एव सिद्ध्येत्। एवं प्रकृते क्षित्यङ्कुरादिकर्ता न सामान्यः कश्चिद्भवितुमर्हति। किन्तु अनुमाने पक्षतया विवक्षितपदार्थनिर्माणानुगुणसामर्थ्यादिविशिष्टस्यैवानुमानेन सिद्धेस्सर्वत्र दर्शनात्, प्रकृतेऽपि तदनुगुणज्ञानसामर्थ्यादिपूर्ण एव कर्तानुमानेन सिद्ध्येदिति चेत्, तत्राह— **पक्षस्पर्शादित्यादि**। **पक्षस्पर्शात्**=पक्षसंबन्धरूपात् विशेषात् **समधिकम्**=अतिरिक्तम् **पक्षधर्मत्वलभ्यम्**=पक्षधर्मताज्ञानेन प्राप्यम् **न खलु**=नैवास्ति किल। अतः पक्षधर्मताज्ञानबलादपि क्षित्यङ्कुरादिकर्तुर्न सर्वज्ञत्वसिद्धिः॥

ननु लोके प्रतिक्षणमुत्पद्यमानानामङ्कुरादीनां कर्तुः कस्यचिदनुपलब्धिपराहतत्वात्, कर्तुरावश्यकत्वाच्चास्मदादिजीवविलक्षणः कश्चित् पक्षधर्मताज्ञानबलादेव कल्प्यत इत्यत्राह— **कल्प्य** इत्यादि। **अन्यः**=पक्षधर्मताज्ञानबललभ्यात् विशेषादन्यः **विशेषः**=सर्वज्ञत्वादिः **ते**=तव **कल्प्यः**=अधिकतयाकल्पनीयः। तत्र प्रमाणाभावात् न सर्वज्ञत्वसिद्धिः। नन्वस्तु तथैव, का हानिः? अणुतारतम्यं कुत्रचिद्विश्रान्त-

मिति परमाणुपरिमाणस्य यथा सिद्धिः, महत्तारतम्यं कुत्रचिद्विश्रान्तमिति परममहत्परिमाणस्य यथा वा सिद्धिः, तथैव लोके दृश्यमानज्ञानतारतम्यस्यापि कुत्रचिद्विश्रान्तिरावश्यकी। यत्र विश्रान्तिः स एवेश्वरः सर्वज्ञ उच्यत इति चेत्तत्राह—**सुकृतेत्यादि**। **सुकृतविषमिता**=पुण्यविशेषनिबन्धनं वैषम्यं प्राप्ता **जीवशक्तिस्तु**=जीवानां शक्त्यादिः **सिद्धा**=योगशास्त्रादिप्रसिद्धैव। एवञ्चेश्वरोऽपि कश्चित्सिद्धपुरुषः स्यात्; न तु जीवेभ्यो विलक्षणः। अणिमाद्यष्टसिद्धिषु ईशित्ववशित्वादयः पठ्यन्ते। 'सर्वस्य वशी सर्वस्येशानः' (बृ.6-8-22) इत्युपनिषदपि। परन्तु 'परास्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रिया च' (श्वे. 6-8) इतीश्वरस्य ज्ञानशक्त्यादिकमनन्तं स्वभाविकं च, न तु सुकृतविशेषजन्यमिति स्पष्टं श्रुतिराह। एतादृशस्त्वतिशयो नानुमानेन सिद्ध्येत्॥

**अयमाशयः**—चार्वाकादिभिरनुमानप्रमाण्यनिराकरणाय नानाविधा युक्तयः प्रतिपाद्यन्ते। तेष्वन्यतमः—व्याप्तिग्रहणासंभवः। 'यत्र धूमस्तत्राग्निः' इति खलु व्याप्तिरुच्यते। जगति सर्वेषामपि त्रैकालिकानां धूमानां वह्नीनां च केनापि ग्रहीतुमशक्यत्वात् कथं व्याप्तिः ग्रहीतुं शक्यते 'यत्र धूमस्तत्र वह्निः' इति। न च धूमव्यक्तीनां वह्निव्यक्तीनामनन्तत्वेऽपि धूमत्वरूपसामान्यस्य वह्नित्वरूपसामान्यस्य सर्ववह्निधूमसाधारणत्वात्, धूमत्वेन निखिलधूमानां वह्नित्वेन निखिलवह्नीनां च क्रोडीकारसंभवात् 'यत्र धूमत्वावच्छिन्नम् तत्र वह्नित्वावच्छिन्नं वर्तत एव' इति ग्रहीतुं शक्यत्वात्, धूमवह्न्योस्सामान्यपुरस्कारेण व्याप्तिग्रहणं भवत्येवेति वाच्यम्, एवं सामान्यरूपेण व्याप्तिसंभवेऽपि वस्तुसिद्धेः विशेष एव पर्यवसानात्तत्सिद्धेरसंभव एव। 'निर्विशेषं न सामान्यम्' इति खलु न्यायः। न हि यस्यकस्यचिद्धूमस्य यस्यकस्यचिद्वह्नेश्च सामानाधिकरण्यसंभवः, किन्तु महानसीयधूममहानसीयवह्नेरेव। अतः पर्वतीयधूमेन पर्वतीयवह्नेरेव सामानाधिकरण्यमेव व्याप्तिः। पर्वतीयवह्निस्तु न सिद्धः। पर्वतीयधूमेन यस्य कस्यचिद्वह्नेर्न हि व्याप्तिः। अतश्च सामान्यव्याप्त्या को लाभः? तथोक्तम् 'विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्। अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः॥' इति। **आचार्या अप्याहुः**—'सामान्यं प्राक्प्रसिद्धं न पुनरनुगमः सिद्धपूर्वो विशेषे व्याप्तिसर्वापि भग्ना' (बुद्धि.41) इति। सामान्यरूपेण ज्ञानं पूर्वमेव वर्तत एवेति न पुनस्साधनापेक्षा। विशेषस्त्वसिद्ध एव। अतः केन किं साधनीयमिति चेत् **अत्रोच्यते**—यद्यपि व्याप्तिः सामान्यरूपेणैव पूर्वं गृहीता, अथापि सिद्धिस्तु विशेषरूपेणैव। 'वह्निव्याप्यधूमवानयं पर्वतः' इति परामर्शेन पुरोवर्तिपर्वत एव ज्ञानस्योपसंहारात्, एतादृशपक्षधर्मताज्ञानबलादेव पर्वतीयधूमज्ञानात् सिद्ध्यतो वह्नेः पर्वतीयत्वरूपविशेषसिद्धिः। एवं प्रकृतेऽपि अनुमानेन सिद्ध्यन् जगत्कर्ता, तदनुगुणज्ञानशक्त्यादिमानेव सिद्ध्येत्। एवञ्च निखिलजगद्विषयकज्ञानमीश्वरस्य पक्षस्वरूपानुगुणतया सिद्ध्यतीति यद्युच्यते, तदपि न—पक्षधर्मताज्ञानेन खलु साध्यस्य पक्षवृत्तित्वमात्रं सिद्ध्येत्, न तु तदतिरिक्ताकारः सिद्ध्येत्। पक्षे क्षित्यङ्कुरादौ कश्चन कर्ता सिद्ध्येत्, तेन तस्य क्षित्यङ्कुरादिज्ञानमेव सिद्ध्येत् न तु तस्य सर्वज्ञत्वमपि। न च पक्ष एव सर्वं जगन्निर्दिशामः। तदा सिद्ध्यन्नीश्वरः सर्वज्ञः स्यादिति वाच्यम्। तदा हि सर्वस्यापि पक्षत्वेन, सपक्षविपक्षयोरभावात् व्याप्तिग्रहणाभावात् अनुपसंहारित्वदोषः स्यात्। अतोऽनुमानेन सिद्ध्यन्नीश्वरः कश्चन जीवविशेष एव स्यात्, न तु तद्विलक्षणः॥

ननु आकाशप्रदेशस्यानन्तत्वात् नक्षत्रतारादीनामप्यनन्तत्वेन तावन्निर्माणोपयोगि ज्ञानं तावत्सर्वविषयकमेव भवेत्। अनुमानेन सिद्ध्यन्नीश्वरस्तावत्सर्वविषयकज्ञानवानेव सिद्ध्येदिति न काप्यनुपपत्तिरिति चेत्, तादृशं सर्वज्ञत्वं लोके तपस्सिद्धिविशेषरूपमेव दृष्टमिति जीवविलक्षणत्वमनुमानेन न सिद्ध्येदेव। 'पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि' (छा.3-12-6) 'नान्तोऽस्ति मम दिव्यानां विभूतीनाम्' (गी.10-40) इति जगतोऽनन्तत्वज्ञानात्, तन्निर्मातुरीश्वरस्यापि ज्ञानशक्त्यादिकमनन्तमेवानुमानेन सिद्ध्येदिति कानुपपत्तिरिति न च शङ्क्यम्, तत्र 'दिवि' 'दिव्यनाम्' इति दिव्यानामपि विभूतेरभिधानात् लोके तत्परिचयासंभवात्, तदनुगुणं सर्वज्ञत्वपि न लोकतस्सिद्ध्येत्। किञ्चानन्तत्वं सान्तया बुद्ध्या न सर्वथा गृहीतुं शक्यम्। तीव्रप्रयत्नकरणे बुद्धेरुन्मत्ततायामेव पर्यवसानं भवेदिति न लौकिकप्रमाणेन तादृशसर्वज्ञसिद्धिः, किन्तु श्रुत्यैवेति ॥

नन्वस्तु तादृश एव कश्चिदीश्वरः। सन्त्येव खलु परमवैदिकाः कुमारिलादयोऽनादिसर्वज्ञनिराकर्तारः। वेदान्ता अपि तत्तादृशोपचितपुण्यविशेषं कञ्चनात्मानं स्तुवन्तोऽर्थवादरूपा एवेति भवदभिमतानादिसर्वज्ञस्येश्वरस्यानङ्गीकारे का हानिः? इति चेत्; अहो बत! महानशनिपात एवास्तिकानामस्माकम्। परंतु सन्ति महान्तो **बादरायणादयः**, ये ब्रह्मास्त्रमपि विफलीकुर्युः। यद्यपि जैमिनीयस्तु पूर्वकाण्डोऽवकाशं न ददातीश्वराभ्युपगमाय। 'त्रैपुण्यविषया वेदाः' (गी.2-45) इति खलु वदति भगवान् विश्ववाङ्मयरूपः। ईश्वरः किल त्रिगुणातीतः कुत्रापि कर्मसु शेषतां न भजत्येव। तावन्मात्रेणेश्वरनिराकरणं जनानां वैदिककर्मसु श्रद्धातिशयाधानाय। कथमन्यथा पूर्वकाण्डप्रणेता जैमिनिः 'बादरायणस्य' (जै.सू. 1-1-5) इत्यादौ बादरायणं बहुषु सूत्रेषु स्मरेत्! तथैव बादरायणो वा जैमिनिमनेकधा 'परं जैमिनिः' (ब्र.सू. 4-3-11) इत्यादौ। सर्वातीतमात्मतत्त्वं हि अवाङ्मनसगोचरमल्पप्रज्ञानां स्पर्शलेशस्याप्यगोचरम्, यदधिकृत्योत्सूचनेऽप्यशक्ता दैव्यो वाचः 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' (तै.उ.आ.) इति दिक्प्रदर्श्य मूका भवन्ति। यदिदं गहनं तत्त्वमधिकृत्यैव संक्षेपेण— 'अस्तीत्युक्तेऽपि स एवास्ति, नास्तीत्युक्तेऽप्यस्त्येव सः' (1-1-9) इत्यादि वदन् दृष्टपरावरः **श्रीशठकोपसूरिर्विस्मापयति सर्वान्** ॥

तदेतत्परमं तत्त्वमल्पप्रज्ञेष्वस्मासु वात्सल्यातिशयेन कृपयानुकम्पितमिव किञ्चिदधोऽवतीर्यात्मानं विचारे गोचरीकर्तुं ब्रह्मभावमापन्नं सर्वानात्मनोंऽशाननुजिगृहीषुः सुलभं सदपि ज्ञातुं न प्रभवन्ति महात्मनोऽपि। अन्यथा हि जैमिनिना सादरं स्मर्यमाणो भगवान् बादरायणो मूर्खो भवेत्। एवं सत्यपि तत्तादृशाः **कुमारिलादयो**ऽनादिसर्वज्ञं कथं निराकुर्वन्तीति प्रश्नो न्याय्यः। परन्तु सन्त्येव किल वेदान्तिनोऽपि ब्रह्मणि सगुणनिर्गुणभेदं कल्पयन्तः मायाकल्पितं सगुणमेव सादि सर्वज्ञमभ्युपगच्छन्तोऽनादिसर्वज्ञनिराकरणवादस्यावकाशं ददतीत्यादिकं पूर्वमेव (श्लो.3) विस्तरशः प्रादर्शि। स्मरणमात्रेण गात्रं पुलकयन्ति ये सूरयः **शठकोपादय**स्तेऽपि भ्रान्ता वञ्चका वा भवेयुः! तदिदं वाचा स्प्रष्टुमपि भीता दूरतो विद्रुता न किञ्चिदधिकं वक्तुं प्रभवामो वयम्। परन्त्वेवमनादिसर्वज्ञनिराकरणे वेदान्तशास्त्रं अनवकाशं प्रसज्येतेति स्मर्यताम्। 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.6-8) इति श्रुतिर्ज्ञानादिकं स्वाभाविकं

**[कार्यहेतुकानुमानमप्रयोजकम्]**

**166. कार्यं स्यात् कर्त्रभावेऽप्यवधिभिरितरैः कालवत् स ह्यसिद्धः**
**ते चादृष्टप्रयुक्तास्तदपि यतनवत् स्यात्तु यत्नानपेक्षम्।**

वदति। इतोऽधिकं 'वाचो विग्लापनं हि तत्'। एवं सत्यनादिसर्वज्ञानङ्गीकारे का हानिरितिप्रश्ने हानिर्न तस्य परमात्मनः, किन्त्वस्माकमेव ॥ २० ॥

ननु सिद्धस्येश्वरस्य सर्वज्ञत्वेऽपि न जीववैलक्षण्यसिद्धिरिति बालिशं वचः। 'सर्वज्ञत्वे सति चेतनत्वम्' इत्येव किल तस्य लक्षणम्। अथवा सिद्धे कस्मिंश्चिच्चेतने सर्वज्ञे तदुक्तत्वेन वेदप्रामाण्यसिद्ध्या, 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे.6-8) इत्यादिश्रुत्यैवेतरसमस्तांशानां सिद्धिरिति चेत्, एवमपि तदनुमानमेवाप्रयोजकमित्याह—**कार्यमित्यादि**। **कर्त्रभावेऽपि**=कर्तुः असत्त्वेऽपि **कार्यं स्यात्**। कारणाभावात् कार्याभावः आवश्यकः किलेति चेत्—**इतरैः**=कर्तृव्यतिरिक्तैः **अवधिभिः**=कारणैः, 'कादाचित्कस्य कालावधिनियतिकरं पूर्वसत् कारणं स्यात्' (जड. 33) इति कार्यस्य पूर्वावधिरेव कारणमित्युक्तं पूर्वम्। कार्यं स्यादेव। ननु तर्हि कर्ता कारणमेव न स्यात्। 'यत्सत्त्वे यत्सत्त्वम्, यदभावे यदभावः' इत्यन्वयव्यतिरेकसहचारौ हि कारणताग्राहकप्रमाणम्। यदभावेऽपि यद्भवति, तत्कारणमेव न स्यात्। एवञ्च जगत्कारणत्वं ब्रह्मलक्षणमेव न स्यादिति चेत्; न वयमीश्वरस्य जगत्कारणत्वमेव निषेधामः। परंतु तत्र किं प्रमाणमिति पृच्छामः। मानाधीना हि मेयसिद्धिः। मानानि त्रीणि प्रत्यक्षमनुमानं शब्दश्चेति। 'नैवेह किञ्चनाग्र आसीत्' इति श्रुत्या सृष्टेः पूर्वं ब्रह्मव्यतिरिक्तस्य कस्याप्यभावात् कस्यापि प्रत्यक्षेण न जगत्कारणवस्तुनिर्णयसंभवः। अतः प्रत्यक्षेण जगत्कारणज्ञानं कस्यापि न संभवि। अनुमानमपि न समर्थं तत्रेति प्रदर्श्यतेऽत्र। एवञ्चोभयोरप्यभावे श्रुत्यैव तत्सिद्धिं वदामो वयम्। उक्तं किलानुमानम्। अप्रयोजकं तत्। यद्यपि कार्यं स्यात्, तथापि कर्तृ न स्यादिति। तर्हि कुलालं विनापि घटः स्यादिति चेत्, यत्रावश्यकता दृश्यते तत्रास्तु तथा। यत्र कर्ता न दृश्यते, तत्र तदन्तरापि कार्यं स्यात्। न हि सर्वत्र सर्वकारकापेक्षा, अकर्मकधातूनां कर्मानपेक्षादर्शनात्। कर्मकारकमन्तरापि यथा क्रिया, तथा कर्तृकारकमन्तरापि काचन क्रिया भवतु—इत्यापाद्यते। दृश्यन्ते किलाकस्मिक्यो घटनाः। तत्रापि स्यात्कर्ता इति चेत्, तर्हि तदपि पक्षकोटिप्रविष्टम्। एवञ्च कर्माभावेऽपि कार्यं यथा भवति, तथा 'कर्त्रभावेऽपि कार्यं भवतु' इत्यप्रयोजकशङ्कायाम् 'यदि कर्ता न स्यात्, तर्हि कार्यमपि न स्यात्' इत्येव तर्को वक्तव्यः। कर्त्रभावेऽपीतरैः कारकैरेव कार्यं यदि भवति, तदैवं निर्बन्धस्य कर्तुमशक्यत्वात् अप्रयोजकमेवेदमनुमानम् ॥

ननु कार्यसामान्यं प्रतीश्वरवत् अदृष्टवच्च कालोऽपि साधारणं कारणं तवापि संमतम्। यदीश्वरमन्तरापि अदृष्टविशेषैरेव सर्वनिर्वाहः, तर्हि मास्तु कालोऽपि, न्यायस्य समानत्वादित्यत्राह—**कालवदित्यादि**। **स हि**=ईश्वरो हि **कालवत्** इति व्यतिरेकदृष्टान्तोऽयम् **असिद्धः**=कालः यथा सिद्धः=उभयसंमतः, न तथा सिद्धः। अथवा **'अ'** इति प्रत्येकं पदम् निषेधार्थकम्—'अभावे न ह्यनोनापि' इति कोशः। तथा च

**एकत्यागेऽन्यहेतुत्यजनमिति च न ध्वंसवत् सावधित्वात्**
**तस्मात् हेतोरभावे न फलमिति गतिस्तद्विशेषे विशेषः ॥ २१ ॥**

कालवत् **सः** ईश्वरः **न हि सिद्ध** इत्यर्थः । कालव्यवहारः किलापामरपण्डितं वर्तते । 'अद्य' 'तदा'इत्यादयो हि प्रतिक्षणं दृश्यन्ते, न ह्येवमीश्वरः । अतो न समानन्यायः । ननु कर्तृव्यतिरिक्तानि कारकाणि कर्तृतन्त्राणि। कर्ता तु स्वतन्त्रः । 'स्वतन्त्रः कर्ता' (पा.सू.1-4-54) इति किल भगवान् पाणिनिः । अतश्च कर्तारमन्तरा कारकान्तराणि कारकाण्येव न भवेयुः । अतः 'कर्ता यदि न स्यात्, तर्हि कार्यं न स्यादेव' इत्यस्त्यनुकूलस्तर्क इत्यत्राह– **ते चेत्यादि**। **ते च**=इतराणि कारणानि च, अवधिपदापेक्षया पुंस्त्वम्, **अदृष्टप्रयुक्ताः**=अदृष्टेन प्रेरिताः **कार्यं निर्वर्तयेरन्**। **तदपि तु**=अदृष्टमपि च **यत्नवत्**=प्रयत्नवत् **यत्नानपेक्षं स्यात्**=यत्नान्तरानपेक्षमेव स्वकार्ये समर्थं स्यात् । लोके सर्वं क्रियासाध्यम् । जडेषु चलनादि पुरुषयत्नाधीना । यत्नस्तु न यत्नान्तराधीनः । तद्वदेवादृष्टमपि स्वयमेव स्वकार्यं करोतु । वस्तुतस्तु तन्नाम्नैव ज्ञायते कार्यानुमेयान्येवादृष्टानि न पर्यनुयोगार्हाणीति । यद्यपि 'स्वतन्त्रः कर्ता' इति पाणिनिः, तथापि तत् स्वातन्त्र्यमितरकारकापेक्षया, न तु स निरङ्कुशः । 'परात्तु तच्छ्रुतेः' (ब्र.सू.2-3-40) इति हि दृष्टपरावरो भगवान् **बादरायणः** । अतः साधनाद्यपेक्षया स्वतन्त्रोऽपि कर्ताऽदृष्टपराधीन एव । दृश्यते हि लोके कर्त्राद्यैन्द्रियकसामग्रीसमवधानेऽपि कार्याभावः । नन्वेवं कारणानामेकैकशस्त्यागे उपादानमन्तरापि कार्यं स्यात् । इष्टापत्तौ भिक्षुपादप्रसरणन्यायेन क्रमशस्सर्वकारकापलापे लब्धावकाशो जागर्ति **शून्यवाद** इति चेत्– **एकत्यागे**=एकस्य कारकस्य त्यागे सति **अन्यहेतुत्यजनम्**=अन्येषामपि कारकाणां त्याग आवश्यकः **इति च न**=इत्याक्षेपोऽपि न युज्यते । कुतः–**ध्वंसवत्**=प्रध्वंसाभाववत् **सावधित्वात्**=कारणजन्यत्वात् । नैयायिकैरपि ध्वंसं प्रति समवाय्यसमवायिकारणे नाङ्गीक्रियेते, केवलं निमित्तकारणमात्रजन्यः प्रध्वंसाभाव इत्युच्यते । अतो न शून्यवादावतारः, कार्यकारणभावस्यानपलापात् । **तस्मात्**=एवं कार्यकारणस्वरूपाणां विचित्रत्वेनादृष्टस्य चेतनसंबन्धमन्तरापि कार्यकारित्वसंभवात्, 'कर्तारमन्तरापि कार्यं भवतु' इत्यापादने निरुत्तरत्वादप्रयोजकमनुमानं यतः, **तस्मात् हेतोरभावे**=कारणस्याभावे **न फलम्**=कार्यस्याप्यभावः । **एवं तद्विशेषे**=कारणविशेषे सति **विशेषः**=**कार्यविशेषः इति गतिः**=इत्येव न्यायस्य मार्गः । स च कारणविशेषः तत्तत्कार्यविशेषस्वरूपाधीन इति सर्वत्र कार्यकारणभावः नैकरूप इति कर्तारमन्तरापि कार्यसंभवात् जगत्कर्तृतयानुमानान्नेश्वरसिद्धिः ॥

कार्यकारणभावविषये सामान्यतो वक्तव्यं पूवमेवोक्तम् (जड.33) । विशेषत इदानीमत्र 'तद्विशेषे विशेषः' इत्युपक्षेपात् परीक्षयामः । सामान्यतः कार्यकारणभावमात्रान्न निर्वाहः, विशेषतोऽपि स वक्तव्यः । न हि तन्त्वात्मककारणसत्त्वात् घटात्मककार्यापादानसंभवः, विशेषतोऽपि कार्यकारणभावसत्त्वात् । तावतापि न निर्वाहः– 'तत्पटत्वावच्छिन्नं प्रत्येव तत्तन्तवः कारणम्' इत्यपि पर्यवसानमावश्यकम् । अन्यथा तत्पटहेतुभूततन्तुभ्यः तत्पटभिन्नपटोत्पत्तेरापादनं स्यात् । न च तत्पटं प्रति तत्तन्तूनामन्वयव्यतिरेकग्रहसंभवः कथमिति शङ्क्यम्; कार्यकारणभावनिश्चयस्य सामान्यपुरस्कारेणैव संभवः, तस्य त्रैकालिकत्वात्, सार्वदेशिकत्वाच्च, 'धूमं प्रति वह्निः कारणम्' इति हि कदापि कुत्रापि न व्यभिचरति । एवं निश्चयस्य

सामान्यद्वारकत्वेऽपि वस्तुस्वरूपावाप्तेः वैयक्तिकत्वात्, कार्यकारणभावश्चान्यः, कार्यकारणभावग्रहश्चान्यः। कार्यकारणभावः विशेषयोरेव, कार्यकारणभावग्रहस्तु सामान्यमूलक एव। न च कालेश्वरादृष्टविशेषादेव यस्मात्कस्माच्चित् यस्य कस्यचिदापादनपरिहारश्शक्य इति शङ्क्यम्; तेषामतीन्द्रियत्वेन कार्यानुमेयत्वात्। लोके व्यक्तिविशेषयोरेव कार्यकारणभावस्य प्रत्यक्षसिद्धत्वात्। अतस्सामान्यद्वारा कार्यकारणभावनिर्णयेन सह विशेषकार्यकारणभावोऽप्यावश्यकः। कार्यकारणभावग्रहस्तु सामान्यमूलकान्वयव्यतिरेकवशादेव॥

एवं विशेषकार्यकारणभावे आवश्यके, तादृशविशेषाः विलक्षणा अपि भवितुमर्हन्ति। यथा दण्डचक्रादीनां घटकारणत्वे सामान्यतो निश्चितेऽपि, यत्र कुत्रचित् यन्त्रादिनैव यदा चक्रभ्रमणम्, तत्र दण्डस्य कारणत्वकल्पना न भवत्येव। एवमितरकारणानामपि तत्र तत्रापवादस्सुलभः। अकर्मकधातुस्थले कर्मकारकं विनापि यथा कार्यम्, तथा कुत्रचित् 'कर्तारमन्तरापि कार्यं स्यात्' इत्यापादने किमुत्तरम्? अतोऽनुमानाज्जगत्स्रष्टुस्साधनं न निष्प्रत्यूहमित्याशयः आचार्यस्य। अनुमानादीश्वरसाधनविषये वस्तुस्थितिमन्ते (श्लो.22) वक्ष्यामः। उपादानमन्तरापि ध्वंसरूपं कार्यं भवतीत्येतदपि तत्प्रकरणे (अद्र.130) परीक्षयामः। 'कर्मकारकमन्तरापि क्रियाया दर्शनात्, कर्तारमन्तरापि क्रिया काचिद्भवतु' इत्येतत्तु तर्ककौशल्यप्रदर्शनमात्रमीश्वरानुमाननिराकरणौत्सुक्यातिशयप्रयुक्तमिति मन्तव्यम्; तादृशक्रियायाः कुत्राप्यदर्शनात्। विशिष्य प्रकृता सृजिक्रिया तु अकर्तृका यदि भवेत्तर्ह्याकस्मिकतावादस्येदं प्राग्रूपम्। कर्माख्यातस्थलेऽपि शाब्दं कर्मणः प्राधान्यम्; न कर्त्रभावः। कुत्राप्यदर्शनेऽप्यापादनं न भवति, तस्य पक्षकोटिप्रवेशापत्तेः। यत्र कर्ता न दृश्यते, तस्यापि पक्षकोटिप्रविष्टत्वात्, कर्तारमन्तरा कार्यं न भवेदिति यदि, तर्हि तत् कार्यमेव न भवेदित्युक्तापादनं आचार्यसार्वभौमस्य तर्ककौशलप्रदर्शनमात्रम्, शिष्याणां प्रत्ययातिशयो भवत्विति॥

स्वपक्षस्थापनाहीनपरपक्षदूषणमात्ररूपाया **वितण्डायाः** प्रदर्शनं महर्षे**र्गौतमस्य** कथं घटतामित्याक्षेपे, साऽपि प्रकारान्तरेण स्वपक्षस्थापने पर्यवस्यतीति न दोष इति प्रदर्शयति **भट्टजयन्तः न्यायसूत्रवृत्तौ**— 'यदि हि क्वचिदाश्रमे सुखमासीनमनेकशिष्यगणोपास्यमानं रहस्यतत्त्वमुपदिशन्तं शान्तमानसमाचार्यमनार्यः कश्चिद्विपश्चिदागत्य दुरधिगतकतिपयाक्षरचयजनितगुरुतरगर्वगद्गदया गिरा 'भोस्तपस्विन्! किं व्याख्यायते? हुम्, **आन्वीक्षिकी!** सरलमतिप्रियेयं विद्या। क्व वेदाः, क्व वेदप्रामाण्यम्, क्वात्मज्ञानम्, क्वापवर्गः', इत्यादि मन्दं मन्दं विहस्य सहसा दुष्टमेघ इव अकाण्डदण्डकाशडम्बरवित्रासिताश्रममृगवर्गमुद्ग्राहयन् आकुलयति, तदा जगज्जालमिन्द्रजालपण्डितविलसितमिति जानन्नप्याचार्यः यदि तमुपेक्षते, तिरस्करोति, सद्यः सम्यत्समाधानाप्रतिभासेऽपि यदि छलादिभिरेनं न शामयति, तदा तस्मिन् गते तत उत्थाय शिष्यगणा ब्रूयुः— 'कष्टमस्थाने क्लिष्टाः स्मः। योऽसावस्माकमाचार्यः प्रख्यातो न्यायवित्तमः। अद्य त्वागत्य सोऽन्येन पण्डितेन पराजितः। 'तच्छ्रुत्वा जन इतरोऽपि सत्पथास्थाशैथिल्यात्सपदि तमेव माऽनुयासीत्। तन्नूनं परिभवभूमिकामसभ्यो नेतव्यस्सदसि स वावदूकपाशः॥ तद्विधानघटने निरर्गलं जल्पमस्त्रमुपदिष्टवान् मुनिः। आनुषङ्गिकमपि प्रयोजनं, तस्य रागिजनतासु वर्णितम्॥'(न्या.म.11.आह्निकम्)। जल्पेति वितण्डाया उपलक्षणम्। अतश्चैतादृशस्थलेष्वाचार्याणामाश्रितवात्सल्यातिशय एव ग्राह्यः। अधिकमुपरिष्टात्॥ २१॥

[कार्यत्वहेतुकानुमानम् सोपाधिकम्]

**167. धर्मो यावत्सपक्षानुगत उपधिरित्यभ्युपेतस्त्वयाऽपि**
**त्यागे तस्यात्र तद्वत् शिथिलितनियमाः क्वापि नोपाधयः स्युः।**

उक्तेश्वरानुमाने शरीरजन्यत्वमुपाधिं प्रदर्शयति—**धर्म इत्यादि**। **यावत्सपक्षानुगतः=यावत्सु=**सकलेषु **सपक्षेषु**=निश्चितसाध्यवत्सु **अनुगतः**=अनुवर्तमानः=व्याप्तः धर्मः **उपधिः**=उपाधिः **इति त्वयापि**=नैय्यायिकेनापि **अभ्युपेतः**=अङ्गीकृतः। सकलसपक्षेषु=साध्यवत्सु वर्तमान इत्यनेन यत्र यत्र साध्यम्, तत्र सर्वत्र वर्तमानः=साध्यव्यापक इति यावत्। इतरविशेषणान्यर्थसिद्धानि। साध्यव्यापकत्वस्य प्रधानत्वात्तस्य कण्ठत उक्तिः॥

साध्यव्यापकत्वे सति साधनाव्यापकत्वं हि उपाधेर्लक्षणम्। तत्र साध्यव्यापकत्वस्यैव दूषकतोपयोगित्वात्प्राधान्यम्। हेतुः साध्यव्यभिचारी, साध्यव्यापकोपाधिव्यभिचरितत्वात्; यत् यद्व्यापकव्यभिचारि, तत् तद्व्यभिचारि, यथा घटत्वव्यापकपृथिवीत्वव्यभिचारि जलत्वम्, घटत्वव्यभिचारि—इति व्यभिचारोन्नायकत्वरूपदूषकत्वे साध्यव्यापकत्वस्यैव प्रयोजकत्वम्। एवं सत्प्रतिपक्षोन्नायकत्वेऽपि—पक्षः साध्याभाववान्, साध्यव्यापकोपाध्यभावात्, यत् यद्व्यापकाभाववत्, तत् तदभाववत्—यथा घटत्वव्यापकपृथिवीत्वाभाववत् जलम्, घटत्वाभाववदिति साध्यव्यापकत्वस्यैव दूषकताप्रयोजकत्वम्। अतस्तावन्मात्रोपादानं मूले। परन्तु साध्यव्यापकत्वमात्रस्योपाधिलक्षणत्वे, 'शब्दः अनित्यः, कृतकत्वात्' इत्यत्राश्रावणत्वमुपाधिः स्यात्। कृतकत्वं यत्र—इति चेत्; पक्षे शब्देऽपि वर्तते; तत्र श्रावणत्वस्यैव सत्त्वेनाश्रावणत्वं नास्तीति साधनाव्यापकत्वम् आगतम्। यत्रानित्यत्वम् घटादौ, तत्राश्रावणत्वमस्तीति साध्यव्यापकत्वम्। एवञ्च साध्यव्यापकत्वे सति साधनाव्यापकत्वम् अश्रावणत्वे वर्तते इति अश्रावणत्वमुपाधिः स्यात्। अतः साध्यव्याप्यत्वमावश्यकम्। एवं सति, यत्र अश्रावणत्वम्, तत्रानित्यत्वमिति नास्ति, गोत्वादिजातौ अश्रावणत्वसत्वेऽपि अनित्यत्वस्याभावात्, जातेर्नित्यत्वात्। अतः साध्यव्यापकत्वमात्रं न पर्याप्तमिति साध्यव्याप्यत्वमप्यावश्यकम्। तथा च साध्यव्यापकत्वे सति, साध्यव्याप्यत्वे सति साधनाव्यापकत्वमुपाधिरित्युपाधेर्लक्षणमिति केचित्। एतत्तत्त्वं त्वग्रे (बुद्धि.43) भविष्यति। एवञ्च प्रकृते 'क्षित्यङ्कुरादिकं सकर्तृकम्, कार्यत्वात्' इत्यनुमाने शरीरजन्यत्वमुपाधिः। यत्र सकर्तृकत्वम्, घटादौ, तत्र शरीरजन्यत्वम्; यत्र शरीरजन्यत्वम्, तत्र सकर्तृकत्वम् इति साध्यसमव्याप्यत्वं शरीरजन्यत्वे वर्तते। कार्यत्वं यत्राङ्कुरादौ पक्षे, तत्र शरीरजन्यत्वं नास्ति इति साधनाव्यापकत्वमित्युक्तानुमाने शरीरजन्यत्वमुपाधिरिति सोपाधिकत्वाद्धेतोर्व्याप्यत्वासिद्धिर्दोष इति दुष्टहेतुरयम्॥

ननु शरीरजन्यत्वस्योपाधित्वे तस्य दूषकत्वं सत्प्रतिपक्षोन्नायकत्वेन, व्यभिचारोन्नायकत्वेन वा वक्तव्यम्। क्षित्यङ्कुरादिकम् सकर्तृकत्वाभाववत्, सकर्तृकत्वव्यापकशरीरजन्यत्वाभावात्—'यत् यद्व्यापकाभाववत्, तत् तदभाववत्, यथा घटत्वव्यापकपृथिवीत्वाभाववत् जलं घटत्वाभाववत्' इति। अथवा 'कार्यत्वं सकर्तृकत्वव्यभिचारि, सकर्तृकत्वव्यापकशरीरजन्यत्वव्यभिचारित्वात्। यत् यद्व्यापकव्यभिचारि,

तत् तद्व्यभिचारि, यथा घटत्वव्यापकपृथिवीत्वव्यभिचारि जलत्वम्, घटत्वव्यभिचारि' इति। अत्र हेतौ जन्यत्वे शरीरविशेषणं प्रविष्टम्, तस्य प्रयोजनं किम्? इत्याक्षेपे—तादृशविशेषणाभावे हेतोः स्वरूपासिद्धि-दोषापत्तिः; क्षित्यङ्कुरादिरूपपक्षे जन्यत्वस्य सत्त्वेन, जन्यत्वाभावरूपहेतोरभावेन 'हेत्वभाववत्पक्षः स्वरूपा-सिद्धिः' इतिलक्षणस्वरूपासिद्धेः संभवः। शरीरपदविशेषणे तु, क्षित्यङ्कुरादौ पक्षे शरीरजन्यत्वस्याभावात्, हेतोः पक्षवृत्तित्वात् हेत्वभाववान् पक्षो न भवतीति स्वरूपासिद्धेः परिहारः। परन्तु **'हेतुघटकदलानां व्यभिचारवारकतयैव सार्थक्यम्'** इति नियमात्, स्वरूपासिद्धिवारणार्थं विशेषणदानं न सङ्गच्छते। उक्तनियमानङ्गीकारे, महानसादावपि वह्न्यभावसाधनप्रसङ्गेन, 'पर्वतो वह्निमान्, धूमात्, यथा महानसम्' इति प्रयोगो न स्यात्, महानसरूपदृष्टान्तासिद्धेः। तथा हि—'महानसम् वह्न्यभाववत्, जलात्,' इत्यनुमानेन महानसे वह्न्यभाव एव सिद्ध्येत्। न च जलं ह्रदादावेव स्यात्, न तु महानसे इति स्वरूपासिद्धिरिति वाच्यम्, केवलजलस्यासंभवेऽपि, घटादिवृत्तित्वविशिष्टजलस्य सत्त्वान्महानसे। पाकोपयोगितया महानसे घटादौ जलस्यावश्यंभावात्। एवञ्च 'महानसं वह्न्यभाववत्, घटवृत्तित्वविशिष्टजलात्' इत्यनुमानस्य निर्दुष्टत्वात्, 'पर्वतो वह्निमान्, धूमात्,यथा महानसम्' इत्यादौ दृष्टान्तासिद्धिप्रसङ्गः। अतः 'हेतुघटकदलानां व्यभिचारवारकतयैव सार्थक्यम्, न त्वसिद्धिवारकतया' इति नियम आवश्यकः। 'महानसं वह्न्यभाववत्, जलात्' इत्यत्र व्यभिचारदोषाभावेन, 'घटवृत्तित्व'रूपविशेषणदानासंभवेन, स्वरूपासिद्धेर्दुर्वारत्वेन, न दृष्टान्तासिद्धिः। एवञ्च 'क्षित्यङ्कुरादिकं न सकर्तृकम्, शरीरजन्यत्वाभावात्' इति सत्प्रतिपक्षानुमाने शरीरपदस्य व्यभिचारवारकत्वाभावेन व्यर्थं विशेषणम्। न च क्षित्यङ्कुरादौ शरीरजन्यत्वस्य कुत्राप्यदर्शनेन शरीरजन्यत्वाभावस्य प्रत्यक्षसिद्धत्वेन तन्निवेशे का हानिः? इति शङ्क्यम्; 'पर्वतो वह्निमान्, नीलधूमात्,' इत्यादाविव हेतोः व्यर्थविशेषणघटितत्वापत्तेः। तावता का हानिः? इति चेत्; लघुधर्मसमनियतगुरुधर्मस्या-भावप्रतियोगितानवच्छेदकत्वेन, अन्वयव्यतिरेकव्याप्त्योर्ग्रहणासंभवः। यत्र हेतुस्तत्र साध्यम् इत्यन्वयः, यत्र साध्याभावः तत्र हेत्वाभावः इति व्यतिरेकः। द्वयमपि व्याप्तिग्रहणं प्रत्यावश्यकम्। एवञ्च व्यतिरेकग्रहणसमये 'यत्र व्यह्निर्नास्ति, तत्र नीलधूमोऽपि नास्ति' इति वक्तव्यम्। धूमत्वापेक्षया नीलधूमत्वस्य गुरुधर्मतया तदवच्छेदेनाभावबुद्धेरसंभवेन व्याप्तिग्रहणासंभवात् 'पर्वतो वह्निमान्, नीलधूमात्,' इत्यत्र व्याप्यत्वासिद्धिः॥

एवञ्च प्रकृते जन्यत्वापेक्षया शरीरजन्यत्वस्य गुरुधर्मत्वेनावच्छेदकत्वासंभवेन तद्धर्मरूपेण व्याप्ति-ग्रहणस्यैवासंभवात् शरीरजन्यत्वं नोपाधिर्भवेदित्यत्राह—**त्याग इत्यादि**। **अत्र अस्य त्यागे**=क्षित्यङ्कुरादौ शरीराजन्यत्वस्य प्रत्यक्षसिद्धत्वेन, शरीरजन्यत्वस्योपाधित्वं प्रत्यक्षसिद्धमिति हेतोस्सोपाधिकत्वेऽपि, येन केन प्रकारेण तर्कबलात्तस्य दोषत्वत्यागे, **तद्वत्**=एवमेव **शिथिलितनयाः**=येन केन प्रकारेण तर्कदूषितास्सन्तः **उपाधयः**=उपाधिदोषाः **क्वापि**=कुत्रापि **न स्युः**=दोषा न भवेयुः। 'नरशिरःकपालं शुचि प्राण्यङ्गत्वात्, शङ्खवत्' इति शङ्खदृष्टान्तेन मनुष्यकपालास्थिनश्शुचित्वे आपादिते, 'स्पृष्ट्वा नरशिरोऽस्थ्यादि सवासा जलमाविशेत्' इति धर्मशास्त्रवचनात् 'विहितत्वम्' उपाधिरित्युच्यते। यत्र शुचित्वम्, तत्र विहितत्वमिति साध्यव्यापकत्वम्; यत्र प्राण्यङ्गत्वम्, तत्र पक्षे विहितत्वं नास्तीति साधनाव्यापकत्वमिति विहितत्त्वमुपाधिर्वैदिकै-

**तादृग्धर्मात्ययाच्च प्रकरणसमता स्यान्न चातिप्रसङ्गः**
**पक्षादिस्थित्यबाधान्निरुपधिकतया स्यात् परात्मानुमा तु ॥ २२ ॥**

रुच्यते। धर्मस्यातिसूक्ष्मत्वेन शास्त्रैकगम्यत्वादेवमुच्यते। 'तादृशशास्त्रे किं प्रमाणम्' इत्याक्षेपेण शास्त्रस्यैव त्यागे उक्तानुमाने विहितत्वमुपाधिरेव न स्यात्। एवं क्षित्यङ्कुरादौ शरीराजन्यत्वस्य प्रत्यक्षसिद्धत्वात्, तस्योपाधित्वासिद्धौ, व्यर्थविशेषणत्वं नास्तीत्येव वक्तव्यमित्युक्तानुमानं सोपाधिकमेवेति व्यर्थविशेषणत्वाद्यापादनमपि व्यर्थमेव। अतश्च प्रकृतेऽपि **तादृग्धर्मात्ययात्**=**तादृशस्य** शरीरजन्यत्वरूपस्य **धर्मस्य अत्ययात्**=अभावात् **प्रकरणसमता च स्यात्**=हेतोस्सप्रतिपक्षत्वदोषोऽपि स्यात्॥

नन्वेवं सति, पक्षेतरत्वमपि सर्वत्रोपाधिः स्यात्। तथा च 'पर्वतो वह्निमान्, धूमात्' इत्यादावपि पर्वतेतरत्वमुपाधिः स्यात्। यत्र वह्निः महानसादौ, तत्र पर्वतेतरत्वं वर्तते इति साध्यव्यापकत्वम्। यत्र धूमः पर्वते, तत्र पर्वतेतरत्वं नास्तीति साधनाव्यापकत्वमपि पक्षभूतपर्वतान्तर्भावेण वर्तत इति पर्वतेतरत्वमुपाधिः स्यादिति लोके कुत्राप्यनुमानप्रयोग एव न स्यादित्यत्राह— **न चेत्यादि**। तावता लोके कुत्रापि **अतिप्रसङ्गः**=अनुमानाप्रवृत्त्यापादनम् **न च**=नैव भवति। कुतः? इति चेत्— **पक्षादिस्थित्यबाधात्**=पक्षसपक्षविपक्षाणामसङ्कीर्णलक्षणस्य सत्त्वेन, उपाधिसामान्यलक्षणे 'पक्षेतरभिन्नत्व'विशेषणेन च न काप्यव्यवस्था। तथा चोक्तेश्वरानुमाने शरीरजन्यत्वस्योपाधित्वात्, न तेनेश्वरसिद्धिः॥

नन्वेवं सति लोके परशरीरे जीवात्मानुमानमपि दुश्शकम्। अस्तु! का हानिः? श्रुत्यैव जीवात्मनोऽपि सिद्धेरिति चेत्, प्रवृत्तिनिवृत्त्यादिभिः परात्मानुमानस्य लोकसिद्धत्वात्। स्वात्मदृष्टान्तेन मुखप्रसादमुखमालिन्यादिर्भिर्हि लोके सर्वेऽपि परशरीरे वर्तमानमात्मानं तस्य सुखदुःखादिकं च जानन्तस्तदनुगुणं व्यवहरन्तीति सर्वानुभवसिद्धम्। अत एव महर्षिर्गौतमोऽपि— 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्' (न्या.1-1-10) इत्यसूत्रयत्। स्वात्मनः 'अहम्' इति प्रतीतिविषयत्वेऽपि परात्मनस्तथाऽप्रतीतेरनुमानमुपन्यस्तमित्याह भाष्यकारोऽपि। परात्मानुमानानङ्गीकारे लोकव्यवहारास्सर्वे, गुरुशिष्यभावादिश्च सर्वं शून्यं भवेत्। अतः अतीन्द्रियाणां श्रुत्यैव सिद्धिरित्यादिकमाग्रहमात्रमिति चेत्, तत्राह— **परात्मानुमा तु**=परशरीरगतजीवात्मानुमानं तु **निरुपधिकतया**=उपाध्यभावात् **स्यात्**=भवेत्, ईश्वरानुमानं तु न तथा, ईश्वरस्यालौकिकत्वेन तथानुमानासंभवात्॥

**अयमाशयः**— स्वशरीरदृष्टान्तेन परशरीरात्मानुमानम्, स्वात्मदृष्टान्तेन परात्मसुखदुःखाद्यनुमानं वा सर्वसाक्षिकं न केनाप्यपलपितुं शक्यते। परं त्वेवमनुमानेन सिद्ध्यन्नीश्वरोऽस्मत्तुल्य एव कश्चन चेतनस्स्यात्, न त्वस्मद्विलक्षणः। ननु अस्मद्विलक्षण इत्यस्य कोऽर्थः? किं स चेतन एव न भवति? तर्हि स जडः स्यात्। तथा चाद्भुतमेव साधितमीश्वरानुमाननिराकर्त्रा वेदान्तिना त्वया। अतो जीववैलक्षण्यशब्दस्यार्थः क इति चेत्; न। जीवपरमात्मनोरेकजातीयत्वस्यैव वस्तुतोऽभावात्। चिदचिदीश्वररूपेणैव तत्त्वविभागात्। चित्त्वस्येश्वरत्वस्य चात्यन्तविलक्षणत्वात्। तर्हीश्वरस्य चित्त्वमेव नास्ति वा? इति प्रश्ने, 'ओम्' इत्येवो-

त्तरम्। परिमितप्रज्ञमात्रवृत्ति तत्पदं ईश्वरे कथं स्यात्? अन्यथा तत्त्वत्रयविभागस्यैवासंबद्धत्वापत्तिः। तर्हि किमीश्वरोऽचित्स्यात्? केनोक्तं तथा? परं तु तत्त्वत्रयविभागःखल्वसंकीर्णो वक्तव्यः। अतस्सोपाधिकचित्त्वमेव 'चित्'तत्त्वम्। तत्तु ईश्वरस्य नास्त्येवेति न कश्चन दोषः। इतरत्सर्वं तार्किकवासनामूलकम्। आत्मपदमुभय-साधारणमित्यादिकमपि नौपनिषदम्, उपनिषत्सु तत्पदस्य परमात्मासाधारणत्वात्। आत्मत्वं तु न जातिः, किन्तु प्रत्यक्त्वमेव। तच्च स्वस्मै भासमानत्वरूपं सखण्डोपाधिरेव। प्रमेयत्वादिकमपि तथैव। 'मम साधर्म्य-मागताः' (गी.14-2) इत्यादिकमपि स्थूलपरिचयार्थमेव। अतो येन केनापि रूपेणोभयलिङ्गत्वं जीवस्य नास्ती दुभयोरेकजातियोगो नास्तीत्येव परमं तत्त्वम्। एवञ्च परात्मानुमानं स्यादेव, न परमात्मानुमानम्॥

ननु भोः! कथं तर्हि 'भूतात्मा चेन्द्रियात्मा च बुद्ध्यात्मा च तथा भवान्। जीवात्मा परमात्मा च त्वमेवं पञ्चधा स्थितः' इति वचनमिति चेत्—

किं नु जीर्णयितुं शक्तस्त्वमीदृशविचारणाम्। अत्रैव वर्तते सूक्ष्मम् **श्रीरामानुजहृद्गतम्**॥
**योऽवदद्भेदवादादित्रितयाद्दूरगं** मतम्। न त्यक्तुं सकलान् पूर्वग्रहादीनल्पदृक् क्षमः॥
पुनःपुनश्च वक्तव्यं मन्तव्यं च पुनःपुनः। पण्डितैरपि दुर्ज्ञेयं प्रायोऽन्यो वेत्तु तत् कथम्॥
एकमेवात्मतत्त्वं तत् भूतात्मावधिविस्तृतम्। चित्रं सर्वात्मकं भाति सांकर्यं न च तावता॥
चतुष्कोटिविनिर्मुक्तं तत्त्वं शून्यं यथा विदुः। वैदिकास्तु तथा ब्रह्मतत्त्वं सर्वात्मकं विदुः॥
किं न श्रुतं तस्य नामसहस्रेष्वजितात्मनः। शून्यं पदं गुणं वक्ति कीदृशं त्वृषिसंमतम्॥
किं नु जीर्णयितुं शक्यं तत्पदं निरुपाधिकम्। विना विशेषणपदं कथञ्चिद्यततां भवान्॥
'एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति॥'
कथं वादत्रयमपि तैराचार्यैः समर्थितम्। परस्परविरोधं तं किं न जानन्ति, हन्त! ते॥
वर्णयामश्च समये त्वेतत्तत्त्वं सुविस्तम्। विज्ञानमन्यदन्यच्च ज्ञानं तस्मान्न संकरः॥
विज्ञानं तु विवेकाय ज्ञानमात्मार्थमेव च। जडद्रव्यसरे प्रोक्तमेतत् स्पष्टं सुविस्तरम्॥

अत एव चिदचिदीश्वरविभागं कुर्वतामाचार्याणामाशय एव जीवेश्वरयोः परस्परमत्यन्तवैलक्षण्य-सूचकः। येन केनापि साजात्यमपि दुर्वचमेव। अत एव 'न तत्समश्चाभ्यधिकश्च दृश्यते'(श्वे. 6-8) इत्यादिश्रुतिः। 'अधिकं तु भेदनिर्देशात्' (ब्र.सू.2-1-22) इति भगवान् बादरायणः। 'भेदनिर्देश'स्यैव प्रकृते पर्याप्तत्वे, 'अधिकन्तु' इत्याधिक्यकीर्तनं कुतः? तावतैवातृप्यन्नाचार्यः पुनस्सूत्रयति 'अश्मादिवच्च तदनुपपत्तिः' (ब्र.सू.2-1-23) इति। एतत्सूत्रे जीवब्रह्माभेदवादिनि **श्रीशङ्कराचार्ये** 'पृथिवीत्वाविशेषेऽपि लोष्टाश्मवज्रवैडूर्ययोरिव जीवब्रह्मणोरस्ति वैलक्षण्यम्' इति उभयोरेकजातीयत्वमङ्गीकृत्य भाषयितरि, **भगवद्रामानुजाचार्यास्तु** 'लोष्टाश्मादीनामचेतनानां यथा ब्रह्मसाजात्यलेशोऽपि न वक्तुं शक्यः; एवमेव जीवब्रह्मणोरपि' इति बभाषिरे इत्यवधेयमेतत्। 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'(केन.1-4) इत्यस्यापीदमेव तात्पर्यम्। 'इदम्' इति निर्देश्यम् वस्तु कथं वोपासितुं शक्यम्। एतादृशं विलक्षणमद्भुतं वस्तु 'अनन्यप्रोक्ते गतिरत्र नास्ति' (कठ.1-2-8) इत्युक्तरीत्योपदेशैकगम्यमित्यभिप्रायेणैव 'श्रुतेस्तु शब्द-

मूलत्वात्' (ब्र.सू.2-1-27) इति शब्दमूलत्वं ब्रह्मण उच्यते। न चोपनिषदां पठनेन, केवलविचारणेन वा ब्रह्मावगन्तुं शक्यमित्याशयः। एतद्दृष्ट्यैवेश्वरानुमाननिराकरणम्, न तु वादकथादृष्ट्या॥

**परमार्थतस्तु**— गौतमीयं न्यायशास्त्रमीश्वरसाधने न व्यग्रं कुत्रचित्। वेदप्रामाण्यशेषतया 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्'(न्या.सू.2-1-69) इत्येतावन्मात्रं वक्ति। अत एव 'इन्द्रियार्थसन्निकर्षजन्यं... प्रत्यक्षम्'(न्या.सू.1-1-4) इत्यस्मदीयप्रत्यक्षमेव लक्षयति। ईश्वरप्रत्यक्षस्येन्द्रियजन्यत्वाभावादव्याप्तिरित्यादिकमर्वाचीनानामेव। अस्य 'लोकायतम्' इति नामासीदित्यप्यसकृदुक्तम्। मध्यकालिकबौद्धैर्जैनैश्चेश्वरनिराकरणे, वेदान्तिषु मौनमाश्रितेषु युक्तिकुशलैः कैश्चित् तेभ्य उत्तरदानायेश्वरानुमानं प्रादर्शि। न हि बौद्धादीनां मुखं पिधातुं शक्यं वेदवाक्योपन्यासेन, वेदप्रामाण्यस्यापि तैर्निरासात्। अत ईश्वरानुमानदूषणादिकं स्वगोष्ठीसमयमात्रम्। 'न्यायचर्चेयमीशस्य मननव्यपदेशभाक्। उपासना तु क्रियते श्रवणानन्तरागता॥' (न्या.कु.1) इति ईश्वरानुमानादेर्मननरूपतां वदन्तो न्यायचार्याः परमवेदान्तिन एव। 'गुरुमुपास्ते' इत्यादौ उपासनापदस्य विपुलार्थकत्वदर्शनात् श्रवणमननादिकमप्युपासनाविशेष एवेत्यभिप्रायेणात्र 'उपासना'पदं मनने प्रायोज्याचार्येण। महातार्किकः कुमारिलोऽपि 'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या। दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन॥' (श्लो.वा.आत्म) इतीश्वरविषये वेदान्त्येव। परन्तु वेदान्तिनः कियद्वा केशाकेशिरता इतीदं किं तेन निरीक्षितम्! शास्त्राणां मर्यादातिलङ्घनादिकमर्वाचीनानामेवेत्यप्यसकृदभ्यधायि। 'इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दम्' (अद्र.134) इतिन्यायाचार्यमनुगच्छन्त एत आचार्यसार्वभौमाः, केवलं शिष्यशिक्षणायैवेश्वरानुमानं विस्तरशो व्यामृशन्। एतदपि शास्त्रयोनित्वाधिकरणस्यार्वाचीनव्याख्यानानुरोधेन। तदधिकरणस्य प्राचीनानां व्याख्यापि प्रदर्शयिष्यते समनन्तरमेव॥

'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः॥'
अन्तःशान्तिं न विन्दन्ति यतोऽन्तर्नास्तिकाः क्रमात्। इत्युक्तन्यायतःप्रायोऽन्तरिता बहवो जनाः॥
येन केन प्रकारेण बुद्धिरीशे प्रतिष्ठिता। कथञ्चित्राप्नुयाद्यस्याध्यवसायस्वरूपताम्॥
स एव धन्यो धर्मात्मा तादृक् लोके सुदुर्लभः। न बुद्धिभेदं जनयेद्वासनाग्रस्तचेतसाम्॥
बुद्धिरेव महामाया बुद्धिरेव रिपुर्महान्। इति मत्वार्पयेत्तां तु परमात्मपदाब्जयोः॥
एतावदेव कर्तव्यमिच्छतां स्वात्मनो हितम्। इत्येव सर्वशास्त्राणामाचार्याणां च घोषणा॥
सन्तोष्टव्यं न तर्केषु, लक्ष्यं विस्मृत्य जन्मनः। वेदान्तशास्त्रे चर्चाया नाधिकं स्थानमिष्यते॥ २२॥

ननु नैयायिकैः 'क्षित्यङ्कुरादिकम् अस्मदादिविलक्षणपुरुषकर्तृकम्, अस्मदाद्यकर्तृकत्वे सति सकर्तृकत्वात्' इत्यनुमानेनेश्वरस्साध्यते। तत्र हेतौ विशेष्यस्य सकर्तृकत्वस्यासिद्धावापादितायाम् 'क्षित्यङ्कुरादिकं सकर्तृकम्, कार्यत्वात्, घटवत्' इत्यनुमानेन हेतौ विशेष्या सिद्धिः परिहृता। अङ्कुरादौ अस्मदादीनां कर्तृत्वं नास्तीति लोकानुभवसिद्धम्। क्षित्यादावपि अस्मदादीनां कर्तृत्वं सर्वथा न संभवति, भूसृष्टेः पूर्वमस्माकमेवाभावात्। तथा च प्रथमोक्ते परिशेषानुमाने हेतोस्सिद्ध्या, तेनास्मदादिविलक्षणकर्तृकत्वस्यैव साधनेन, स्रष्टुः

[परिशेषानुमानपरीक्षणम्]

168. **सर्वस्यावीतहेतोरपि च निरसनं द्रक्ष्यसि स्वप्रसङ्गे**
**श्रुत्याऽत्र व्याप्तिसिद्धावलमनुमितिभिः निष्फलः संप्लवोऽपि ।**
**तस्मादुल्लोकभूमा स कथमनुमया विश्वकर्ता प्रसिध्येत्**
**शास्त्रानूक्तत्वबाधद्वयपरिहतये शास्त्रयोनित्वसूत्रम् ॥ २३ ॥**

जीवविलक्षणत्वमपि तेनैव सिद्ध्यतीति सर्वं चतुरस्रमिति काऽनुपपत्तिरिति चेत्तत्राह— **सर्वस्येत्यादि** । **अवीतः**=व्यतिरेकी । वि+इतः=वीतः=अन्वयी । न वीतः= अवीतः व्यतिरेकी । प्रकृते अवीतः=केवल-व्यतिरेकी । विशेष्यनिघ्नशब्दः । **अपि च**=किञ्च **सर्वस्य अवीतहेतोः**=सकलस्यापि केवलव्यतिरेकिणो हेतोः **निरसनम्**=निराकरणम् **प्रसङ्गे**=केवलव्यतिरेकिपरीक्षाप्रकरणे (बुद्धि.52,53 त्वमेव) **द्रक्ष्यसि** ॥

ननु केवलव्यतिरेकिणोऽसंभवेऽपि पूर्वोक्तपरिशेषानुमानमन्वयव्यतिरेक्येव भवतु! कुतः प्रद्वेष ईश्वरा-नुमाने । न च 'अस्मदाद्यकर्तृकत्वे सति सकर्तृकत्वं यत्र, तत्रास्मद्विलक्षणकर्तृकत्वम्' इत्यन्वयव्याप्ति-र्वक्तव्या । सा कथं संभवति? अस्मदादिविलक्षणस्य चेतनस्य लोकेऽसिद्ध्या तत्कर्तृकत्वस्याप्यसिद्ध्या-न्वयदृष्टान्तस्याभावादिति चेत्, नैयायिकानामीश्वरासिद्ध्या वेदप्रामाण्यनिरूपणासंभवेऽपि, वेदान्तिनां भवतां वेदानां स्वतः प्रामाण्यात् जगति अस्मदादिविलक्षणकर्तृकत्वस्य वेदेनैव सिद्धाद्यान्वयव्याप्तेः संभवादित्याशङ्क्य निराकरोति— **श्रुत्येत्यादिना** । **श्रुत्या**='इदं सर्वमसृजत' (तै.आ.) इत्यादिश्रुत्या **अत्र**=उक्तेश्वरानुमाने **व्याप्तिसिद्धौ**=अन्वयव्याप्तेः सिद्धौ 'यत्रास्मदाद्यकर्तृकत्वे सति सकर्तृकत्वम्, तत्रास्मादादिविलक्षणकर्तृकत्वम्, यथेदं जगत्' इत्यन्वयव्याप्तेरपि सिद्ध्या **अनुमितिभिः**=उक्तेश्वरानुमानैः— 'कार्यायोजनधृत्यादेः' इत्यादिना नानाविधेश्वरानुमानस्य तैर्वर्णनात् 'अनुमितिभिः' इति बहुवचनम्, **अलम्**=साधनीयं नास्तीति यावत् । असंभावितदोषैः स्वतःप्रमाणभूतैर्वेदैरेवेश्वरसिद्धौ, संभावितदोषानुमानानुधावनं व्यर्थम् । नन्वेकस्मिन्नेव विषयेऽ नेकप्रमाणानां प्रवृत्तौ विरोधाभावादस्त्वनुमानमपि प्रमाणमीश्वर इत्यत्र— **निष्फलस्संप्लवोऽपीति** । **संप्लवोऽपि**= एकस्मिन् विषयेऽनेकप्रमाणसमुच्चयोऽपि **निष्फलः**=विफलः। एकेनैव वस्तुनिर्णयात् द्वितीयप्रमाणापेक्षाया असंभवात्तदन्वेषणं व्यर्थमेव । प्रमाणान्तरेण सिद्धस्य साधने सिद्धसाधनदोषोऽपि स्यात् । **तस्मात्**= एवमीश्वरानुमानस्यानेकदोषग्रस्तत्वात् **उल्लोकभूमा**=लोकातीतमहत्त्ववान् **सः विश्वकर्ता**=जगत्स्रष्टा ईश्वरः **अनुमया**=अनुमित्या **कथं प्रसिद्ध्येत्?** दृष्टान्तावलम्बनेनैव प्रवर्तमानम् अनुमानं लोकदृष्टविषयेष्वेव प्रतिष्ठां लभेत, न त्वत्यन्तालौकिके सर्वाद्भुतमये परस्मिन् ब्रह्मणि । ब्रह्मणः शब्दैकसमधिगम्यत्वपक्षेऽपि, शब्दशक्तिग्रहस्य लौकिकत्वादेतद्दोषातिवर्तनमतिकष्टसाध्यमित्यप्यवगन्तव्यम् ॥

ननु नित्यनिर्दुष्टस्य स्वतःप्रमाणभूतस्य वेदस्यानेनानुमानेन का वा क्षतिः स्यात्? एवं सतीयान् क्लेशस्तन्निराकरणाय किमर्थ इत्यत्र— **शास्त्रेत्यादि** । **शास्त्रस्य**=परमशास्त्रस्य वेदस्य**अनूक्तत्वस्य**=अनुवादरूप-तायाः, **बाधस्य च**='विमतश्चेतनः न जगत्स्रष्टा, चेतनत्वात्, अस्मदादिवत्' इति प्रतिप्रयोगप्रसङ्गस्य च

**परिहृतये**=परिहाराय **शास्त्रयोनित्वसूत्रम्**= 'शास्त्रयोनित्वात्' इति सूत्रं प्रवृत्तम्। अत्यन्तालौकिकेऽर्थे शास्त्रमेव प्रमाणं वैदिकानाम्। यदि तादृशेऽनुमानमेव प्रमाणम्, तर्हि वेदस्सर्वोऽपि अनुवादरूपत्वादप्रमाणमेवेति प्रकारान्तरेणाङ्गीकृतं स्यात्। लौकिके विषये वेदाः न प्रमाणमिति निर्विवादम्। अलौकिकेऽपि तथात्वे सर्वेषां वेदानां तिलाञ्जलिरेव दत्तस्स्यात्। ततश्च वैदिकानां सर्वोऽपि क्लेशस्तदर्थ एवेति विस्मृतमिति सर्वं हास्यास्पदं स्यात्॥

**अयमत्र विमर्शः**—क्षित्यङ्कुरादिकम् अस्मदादिविलक्षणकर्तृकम्, अस्मदाद्यकर्तृकत्वे सति सकर्तृकत्वात् इत्यत्र, अस्मदाद्यकर्तृकत्वे सति सकर्तृकत्वं यत्र, तत्र अस्मदादिविलक्षणकर्तृकत्वं इत्यन्वयव्याप्तिर्नास्ति। लोके अस्मदादिविलक्षणकर्तृकत्वस्येदानीमसिध्या नान्वयसंभवः। किन्तु—यत्र अस्मदादिविलक्षणकर्तृकत्वं नास्ति, तत्र अस्मादिविलक्षणकर्तृकत्वे सति सकर्तृकत्वं नास्ति, यथा घटादौ इति व्यतिरेकव्याप्तिस्संभवति। न च घटादौ सकर्तृकत्वसत्त्वेन, तदभावः कथमिति वाच्यम्। अस्मदाद्यकर्तृकत्वविशिष्टसर्तृकत्वस्यैव हेतुत्वेन, अकर्तृकत्वमात्रस्याहेतुत्वात्। एवं विशिष्टस्यैव हेतुत्वेन, विशेषणीभूतस्यास्मदाद्यकर्तृकत्वस्य घटादावभावात् विशेषणाभावप्रयुक्तविशिष्टाभावो भवति। विशिष्टाभावः खलु, विशेषणाभावप्रयुक्तः, विशेष्याभावप्रयुक्तः, उभयाभावप्रयुक्तश्चेति त्रिप्रकारो भवति। 'पीतघटो नास्ति' इति प्रतीतिर्हि नीलघटवति भूतले पीतत्वरूपविशेषणाभावाद्भवति; पीतपटवति पीतत्वरूपविशेषणसत्वेऽपि घटरूपविशेष्याभावाद्भवति; एवं नीलपटवति पीतत्वरूपविशेषणस्य, घटरूपविशेष्यस्य चाभावादुभयाभावप्रयुक्तश्च भवति। विशिष्टाभाववदेवोभयाभावोऽपि। 'घटपटोभयं नास्ति' इति प्रतीतिर्हि, केवलघटवति, केवलपटवति, घटपटोभयरहिते च भवति। एवञ्च प्रकृते, घटादौ विशेष्यस्य सकर्तृकत्वस्य सत्त्वेऽपि, अस्मदाद्यकर्तृकत्वरूपविशेषणं नास्ति, अस्मत्सदृशकुलालकर्तृकत्वस्यैव घटादौ सत्त्वात्, अस्मदाद्यकर्तृकत्वविशिष्टसकर्तृकत्वरूपस्य हेतोरभावात् व्यतिरेकव्याप्तिमात्रसंभवात् अयं हेतुः केवलव्यतिरेकी। परिशेषानुमानं सर्वमप्येवमेव। 'वह्निमान् धूमात्' इत्यादावपि 'यत्र धूमः, तत्र वह्निः' इत्यन्वयव्याप्तेः दृढीकरणमेव 'यत्र वह्निर्नास्ति, तत्र धूमोऽपि नास्ति' इति व्यतिरेकव्याप्त्या क्रियत इति केवलव्यतिरेकिणः सिद्धान्तेऽनङ्गीकारादुक्तपरिशेषानुमानेन नेश्वरसिद्धिः। ततश्च तर्कशास्त्रस्य वेदान्तापेक्षया बलवत्त्वे, तर्कस्याप्रतिष्ठितत्वादीश्वरसिद्धेरेव कस्यचिद्दुर्बलमतेः बाधः स्यात्। एवं ब्रह्मण उभयलिङ्गत्वादीनामपि बाधः स्यादिति ब्रह्मणश्शास्त्रैकगम्यत्वसाधनाय 'शास्त्रयोनित्व' सूत्रं श्रद्धालूनां वेदान्तिनामावश्यकम्॥

**परं तु**—बौद्धस्य वादस्य बुद्धिजीविनो मानवैर्दुस्त्यजत्वात्, तादृशबुद्धेस्समाधानायेश्वरानुमानमप्यावश्यकमधिकारिभेदेन॥ स्यात्कामं तथा। वयं तु वेदान्तिनः। अस्माकं दण्डेन सर्पमारं मारयितव्या वेदान्तिनां तर्कसरणिः॥ अहो ब्रह्मविद्वरिष्ठ! वेदन्तवाक्यमपि न जानासि, वेदान्तमपि न तरां, न तमां तद्रहस्यम्। अत एव एवं विकत्थसे। प्रक्षिप्यतां तर्हि सागरे 'श्रोतव्यो मन्तव्यः' इत्याद्युपदेशः। अतो वेदान्तस्य तर्कानुग्रहमात्रेण न कापि हानिः॥

**परमार्थतस्तु**—'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः' (कठ.1-2-23) 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते'॥ (गीता.10-10) 'तेषामेवानुकम्पार्थमहमज्ञानजं

[ईश्वरानुमानम् न सूत्राशयानुगुणम्]

169. प्राज्ञाधिष्ठानशून्यं न तु परिणमितुं शक्तमव्यक्ततत्त्वं
वास्यादौ व्याप्तिसिद्धेरिति यदभिहितं सांख्यसिद्धान्तभङ्गे।
सोऽपि प्राज्ञव्युदासेऽप्यनुमितिशरणान् प्रत्युपात्तः प्रसङ्गः
नेष्टे तत्सिद्ध्यसिद्ध्योरनुमितिरिति खल्वाशयः सूत्रकर्तुः ॥ २४ ॥

तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥' (गीता.10-11) इत्यादिश्रुतिस्मृतिभिः परमात्मानुग्रहैकलभ्येन ज्ञानेनैव सर्वबन्धनिवृत्तिरित्येव निष्कर्षः। इतरद्यद्यद् क्रियते, तत्सर्वं विचारादिकम् तत्साधनं यथा स्यात्तथा संरक्षणीव्यमित्येव सारम्। इदं तु कदापि न विस्मर्तव्यम्—'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः॥' इति। शिष्टं समनन्तरश्लोके ॥

अन्ततः क्रियतां सद्भिः सङ्गः त्यक्तैषणत्रयैः। नश्येयुस्संशयास्सर्वे तमस्सूर्योदये यथा ॥ २३ ॥

ननु! ईश्वरानुमाननिरसनं ब्रह्मसूत्रकाराशयविरुद्धम्। सांख्यमतनिराकरणाधिकरणे हि 'रचनानुपपत्तेश्च नानुमानम्, प्रवृत्तेश्च' (ब्र.सू.2-2-1) इति प्रथमं सूत्रम्। सांख्यास्तु जडाया अपि प्रकृतेः स्वतः प्रवृत्तिशीलत्वं वर्णयन्ति। अनुमीयत इत्यनुमानम्=अनुमानप्रमाणकम्। 'प्रधानम् न प्रवृत्तिमत्, अचेनत्वे सति चेतनानधिष्ठितत्वात्, सारथिरहितरथवत्'। एवं 'प्रवृत्तेश्च'='प्रधानम् चेतनाधिष्ठितम्, अचेतनत्वे सति प्रवृत्तिमत्वात्, सारथ्यधिष्ठितरथवत्' इत्यनुमानम्। एवञ्च प्रकृत्यधिष्ठातृतयान्वयतो व्यतिरेकतश्च चेतनसाधनं प्रदर्शितम्। एवं सति कः प्रद्वेष ईश्वरानुमान इत्यत्राह—**प्राज्ञेत्यादि**। **अव्यक्ततत्त्वम्**=प्रकृत्याख्यं तत्त्वम् **प्राज्ञाधिष्ठानशून्यम्**=समर्थविलक्षणचेतनाधिष्ठानरहितम् **परिणमितुम्**=नानाविधपरिणामान् प्राप्तुं **न तु शक्यम्**=न हि समर्थम्; 'अचेतनत्वात्'इति हेतुरूह्यः। **वास्यादौ**=तक्षणसाधनायुधविशेषादौ सपक्षे **व्याप्तिसिद्धेः**। **आदिपदेन** रथादिपरिग्रहः। **इति यत् सांख्यसिद्धान्तभङ्गे**=सांख्यमतनिराकरणप्रकरणे **अभिहितम्** सूत्रकारेण, एतत् अनुमानेनेश्वरसाधनार्थं नोक्तम्, शास्त्रप्रमुख एव 'शास्त्रयोनित्वात्' (ब्र.सू.1-1-3) इतीश्वरस्योपनिषदेकगम्यत्वस्य प्रतिष्ठापनात्। किन्तु—**सोऽपि**=उक्तप्रक्रियाविशेषोऽपि **प्राज्ञव्युदासेऽपि**=सर्वज्ञेश्वरनिराकरणेऽपि **अनुमितिशरणान् प्रति**=तर्कावलम्बिनः सांख्यान् प्रति **उपात्तः**=**प्रदर्शितः प्रसङ्गः**=प्रतितर्कः प्रत्यनुमानं वा, न तु अनुमानेनेश्वरसाधनप्रक्रिया सा, शास्त्रयोनित्वसूत्रविरोधात्। तथा चाधिकरणद्वयसिद्धं निष्कृष्टं सूत्रकारतात्पर्यमाह—**नेष्ट इत्यादि**। **तत्सिद्ध्यसिद्ध्योः**=**तस्य**=ईश्वरस्य **सिद्धौ असिद्धौ वा**=ईश्वरसाधने निराकरणे वा **अनुमितिः**=अनुमित्याख्यं प्रमाणम् **न ईष्टे**=न समर्थं भवति **इति खलु सूत्रकर्तुः आशयः**=अभिप्रायः। अत ईश्वरानुमानं सूत्रकारानुमतमिति न भ्रमितव्यम्। 'खलु' इति उक्तार्थस्य प्रसिद्ध्यर्थकः ॥ एतत्तुल्यः श्लोकोऽ**धिकरणसारावल्यामपि** (2-1-1) द्रष्टव्यः—'नन्वत्राचेतनानां स्वसमुचितविधौ कर्त्रधीनत्वमुक्तम् शास्त्रारंभे विधातुर्व्यनुददनुमितिं किम्परस्सूत्रकारः। **पृच्छेयं नातितुच्छा** शृणु तदवहितः सर्वकृन्नानुमातुं नापह्नोतुं च शक्तस्तदुभयनियमादर्शनादित्यमंस्त ॥' इति ॥

**इदमत्र चिन्तनीयम्—प्रमाणव्यवस्थावादः प्रमाणसंप्लववादः** इति वादद्वयं विभक्तं दर्शनेषु। आद्यं बौद्धानाम्, द्वितीयं वैदिकानाम्। आद्यपक्षे प्रत्यक्षत्वं परोक्षत्वं वा विषयधर्मः, द्वितीयपक्षे ते प्रमाणाधीने। एतद्विस्तरः पूर्वमेव (जीव.स.86) गतः। वैदिकानां प्रमाणसंप्लववादे एकस्मिन् वस्तुनि बहूनां प्रमाणानां प्रवृत्तौ न विरोधः। 'पर्वते वह्निरस्ति' इति परमाप्तवाक्याज्जानाति। दूरात्पर्वते धूमं पश्यन् 'पर्वतो वह्निमान्' इत्यनुमिनोति। समीपमुपसर्पन् 'पर्वतो वह्निमान्' इति प्रत्यक्षमेव पश्यति। अग्निहोत्रादीनां स्वरूपम्, स्वर्गसाधनत्वं च वेदैकगम्यमेव वैदिकानां सर्वेषामपि। परात्मविषयकं ज्ञानं शास्त्रात्, प्रवृत्त्यादिलिङ्गकादनुमानाच्च भवतीत्यादि यथायथमिदमवगन्तव्यम्। 'अनधिगतार्थगन्तृत्वं प्रमात्वम्' इति पूर्वमीमांसकमतम्। वेदस्यापूर्वार्थबोधकत्वस्थापनार्थमिदमुक्तम्, न तु लौकिकव्यवहारोपयोगीदं लक्षणम्। प्राथमिकं स्वलक्षणज्ञानमेव प्रमा, द्वितीयादिकं न प्रमेत्यादिकं हि बौद्धानां मन्त्रः। यथावस्थितवस्तुप्रदर्शनमात्रं हि प्रमाणानां कृत्यम्। अत एव अनधिगतार्थगन्तृत्वं प्रमालक्षणं न क्षोदक्षमम्। पुरोवादादिशब्दाः खलु केवलं शब्दप्रमाणानुबन्धिनः विशिष्य वेदानुबन्धिनः, न तु प्रत्यक्षादिस्थले। प्रत्यक्षेण दृष्टेऽपि विषये दार्ढ्यार्थमनुमानप्रवृत्तेर्लोकसिद्धत्वात्, उभयोरपि प्रामाण्यस्य तुल्यतयैव व्यवहाराच्च 'तद्वति तत्प्रकारकानुभवः प्रमा' इत्येव प्रमालक्षणं लौकिकं युक्ततरम्। सिद्धान्तेऽपि प्रकारान्तरेण 'यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा' इत्येव लक्षणकथनात् द्वितीयादिज्ञानानामपि प्रमात्वमव्याहतम्॥

अतश्च ईश्वरानुमाननिरासोऽपि तदंशे वेदस्यानुवादकता मा भूदित्यर्थमेव, न तु वेदप्रामाण्य संरक्षणाय। सिद्धान्तेऽनुवादकानां वाक्यानामपि प्रामाण्यं नैयायिकानामिवाव्याहतम्। अन्यथा 'श्रोतव्यो मन्तव्यः' इति श्रवणानन्तरमननोपदेशो विरुद्ध्येत। श्रवणं नाम तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम्। एवं श्रुतस्यार्थस्य दार्ढ्याय हेतुतः प्रतिष्ठापनं मननम्। एवञ्च श्रुत्या समधिगते ब्रह्मणि अनुमानप्रवृत्तौ न कश्चन दोषः। 'वस्तुसद्भावे प्रमाणं किम्?' इति प्रश्न एवान्यः, वस्तुनो ज्ञानविषयत्वविचारश्चान्यः। 'तर्काप्रतिष्ठानादपि' (ब्र.सू.2-1-11) इति सूत्रमपि बौद्धसंमतं तर्कस्य स्वतन्त्रप्रामाण्यं निराकरोति, न तु प्रमाणानां तर्कानुग्रहं निषेधति। 'न्यायचर्चेयमीशस्य मननव्यमदेशभाक्। उपासना तु क्रियते श्रवणानन्तरागता॥' इत्याहुः किलाभियुक्ताः। 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।' 'आगमेनानुमानेन ज्ञानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्॥' इत्याद्यार्षवचनमप्यत्रानुसन्धेयम्। वक्ष्यति किलायमाचार्यसार्वभौमोऽपि 'इत्थं श्रीवेंकटेशः श्रुतममत जगत्मूलकन्दं मुकुन्दम्' (अद्र.134) इति। तद्दृष्ट्यापि ब्रह्मणि शब्दानुमानयोः प्रवृत्तावविरोधः॥

किं बहुना! वेदान्ताचार्यसंज्ञामन्वर्थयन्त एतद्ग्रन्थकारा एव 'मन्दसंदेहशान्त्यै' (अ.सा.2-2-1) इति, 'पृच्छेयं नातितुच्छा' (अ.सा.2-2-1) इति च वदन्तः मानवबुद्धेः स्वभावं जानन्तः तर्कस्य दुस्त्यजतां सूचयामासुः। अन्यथा 'मन्दसंदेहशान्त्यै तुल्यत्वभ्रन्तिसिद्धा प्रकरणसमता तर्कपादे हि वार्या' (अ.सा.2-2-1) इति कथं ब्रूयुः? परं तु तर्कः प्रमाणानुग्राहक एव, न हैतुकवत् स्वतन्त्रं प्रमाणम्। तर्कः खलु प्रायस्संभावनात्मकः कथं प्रमाणं भवेत्॥

ननु भोः! निर्णीते विषये न्याययोजनमन्यत्, न्यायेन वस्तुनिर्णयोऽन्यदेव। अत एव दृष्टे विषय एव प्रमाणसंप्लववादसंभवः, न तु सर्वथातीन्द्रिये विषये। परमात्मतत्त्वं हि तपस्साध्यज्ञानैकगम्यम्। मननमपि बुद्ध्युपशमाय न्याययोजनमात्रम्। किं बहुना! श्रुतावेव 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' इत्युपदिशन्त्यां का कथाऽनुमानस्य! इति चेत्; एवं चेद्भवतु श्रद्धादाढर्यायास्त्वनुमा क्वचित्। अधिकारि-प्रभेदेन ह्यारंभे बुद्धिजीविनः॥

तर्हि शास्त्रयोनित्वाधिकरणस्य का गतिः? उक्तैव गतिः। प्रमाणाद्विषयस्य सिद्धिरेवान्या, प्रमाणस्य प्रवृत्तिरेवान्येति, अनुमानादीश्वरसिद्धिरेव निराक्रियते। तत्रापि सामान्यतोदृष्टानुमानस्य वेदान्तिभिरनङ्गीकारात्, विशेषतोदृष्टानुमानेन जगत्कर्तृसिद्धावपि तस्य जीववैलक्षण्यासिद्धावेव पर्यवसानं द्रष्टव्यम्। नैय्यायिकानां दृष्ट्या तु जगत्कर्तुः नित्यसर्वज्ञस्य सिद्धौ तदुपदिष्टतयैव वेदप्रामाण्यम्, जीववैलक्षण्यञ्च सिद्ध्यति। जगत्सृष्ट्युपयोगिसर्वज्ञत्वं न कस्यापि जीवस्येति तेषां मतम्। आत्मत्वजातीयत्वं तु परमात्मनोऽपि संमतं तेषाम्। 'परमात्मा' 'जीवात्मा' इत्येव खलूभयोरात्मत्वेन निर्देशस्तत्संमतः। तावतैव जीवसजातीयत्वं ब्रह्मणः स्यादित्यादिकं तु, प्रमेयत्वेन तयोस्साजात्यस्यावर्जनीयतयोपहास्यम्। अप्रमेयस्य ब्रह्मणः कथं प्रमेयत्वमित्यादिकमपि बालिशभीतिमात्रमित्यादिकमप्यनुपदमेव (ना.3) प्रादर्शि। वस्तुतस्तु सामान्यतो-दृष्टानुमानमपि दुस्त्यजमिति तदवसरे प्रदर्श्यते। 'परमात्मा अनुमानातीतः श्रुत्येकगोचरः' इत्यादिकमपि परमात्मसाधकप्रमाणेषु श्रुतेरभ्यर्हितत्वाभिप्रायेण। अन्यथा गुरुशिष्यपरंपराप्यर्थशून्या कपटमात्रा स्यात्। प्रमाणात्सिद्धिरन्या, प्रमाणविषयत्वं चान्यदित्यादिकमपि आदरान्मुहुः प्रदर्शितं तत्र तत्र॥

ईश्वरानुमानं नैयायिकानामित्यपि भ्रान्तिमात्रम्। न हि न्यायसूत्रे, भाष्ये वा प्रदर्शितं तदनुमानम्। किमुतेश्वरनिरूपणमेव सूत्रे भाष्ये वा न कुत्रापि दृश्यते। न्यायशास्त्रं हि प्राक् 'लोकायत'पदवाच्यम्, लोकव्यवहारसिद्धपदार्थन्यायप्रदर्शनपरम्। अग्रे ब्रह्मविवर्तवादनिराकरणपरसूत्राण्यपि न तदर्थानि, व्याख्यातृणां कल्पनामात्रमिति विश्वनाथन्यायपञ्चाननेनैवोक्तं द्रष्टव्यम् (न्या.सू.वृ.4-1-19)। मध्यकालिकबौद्धैर्हैतुकै-रीश्वरनिराकरणे कृते, तैर्वेदप्रामाण्यस्यापि निरासात्, तेषामुत्तरं युक्त्यैव देयं मन्वानैः परमवैदिकैः व्याख्यातृभिः ईश्वरानुमानेन तेषां मुखपिधानं कर्तव्यमभूत्। 'हन्त ब्रह्मोपदेशोऽयं श्रद्दधानेषु शोभते। वयमश्रद्दधानाः स्मो ये युक्तिं प्रार्थयामहे॥' इति वदतां पुरतः श्रुत्येकसमधिगम्यत्वकथनं केभ्यो रोचेत!॥

**वस्तुतस्तु**—शास्त्रयोनित्वसूत्रस्य प्राचीनं व्याख्यानमन्यादृशमेवासीदिति श्रीशङ्करभाष्यादवगम्यते। तत्र एतदधिकरणस्य वर्णक(व्याख्यान)द्वयं प्रादर्शि। प्रथमवर्णके—शास्त्रस्य योनिः=शास्त्रयोनिः; तस्य भावः=शास्त्रयोनित्वम्। तस्मात्=शास्त्रयोनित्वात्=इत्येव व्याख्यानम्। 'अथवा' इति द्वितीयवर्णकमुपक्रम्य, शास्त्रं योनिः=प्रमाणं यस्येत्यादिभिरद्यतनं प्रसिद्धं व्याख्यनमुपावर्णि। अत्र व्याख्यातृभिः 'शास्त्रस्य योनिः' इति व्याख्याने, शास्त्रकारणत्वं ब्रह्मण उक्तं भवति। पूर्वस्मिन् जन्मादिसूत्रे ब्रह्मणो सर्वजगत्कारणत्वस्य सिद्ध्या, शास्त्रकारणत्वमपि सिद्धमेव। पुनरत्र शास्त्रकारणत्वकथने पौनरुक्त्यदोषादाह—अथवेति इति वर्ण्यते। परन्तु—प्रथमव्याख्याने ततपुरुषः, द्वितीये तु बहुव्रीहिः। उभयोर्मध्ये ततपुरुष एव श्रेष्ठः,

समासघटकपदार्थप्राधान्यात्। बहुव्रीहिः किलान्यपदार्थप्रधानः। अपि च 'योनि'पदं कारणवाचकमेव स्वरसम्। 'भूतयोनिं परिपश्यन्ति धीराः' 'योनिश्च हि गीयते' 'योनेश्शरीरम्' इत्यादिश्रुतिसूत्रादिषु योनिपदं कारणपरमेव सर्वसंमतम्। अत्र परं ज्ञापकवाचीति न तावत् स्वरसम्। किं कुर्मः? पूर्वसूत्रेण पौनरुक्त्यं भवति किलेति चेत् 'शास्त्र'पदस्यार्थः प्रथमं परिशीलनीयः। व्याकरणादिकं किल शास्त्रम्। अथवा 'वेदाच्छास्त्रं परं नास्ति' इत्यादिवचनात् वेद एव वा। 'योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च। वेदाश्शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात्॥' (म.भा.अनु.) इति सर्वाण्यपि शास्त्राणि परमात्मन एवोत्पन्नानीति कथनात् जन्माद्यधिकरणगतोऽयमर्थ इति पौनरुक्त्यमिति चेत्, अयि भोः! शब्दजालं वर्धयसि। 'शास्त्रम्' इति पदस्यार्थः कः? 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥' इति कथितमेव किल! पुनश्शब्दो वर्धितः। पदस्यार्थः कः? किं भोः! एतावदपि न ज्ञायते भवता। 'शासु'अनुशिष्टौ इति वर्तते धातुः। 'गण्डस्योपरि पिटकस्संवृत्तः'। अनुशिष्टिः का? अनुशासनम्। पुनश्शासनमेवागतमनुपूर्वकम्। नार्थ उक्तो भवति॥

**अत एवमत्र वक्तव्यम्**—शास्त्रं नाम शासनम्। तदनु—अनुशासनम्। शासनं नामानुल्लङ्घनीयं तत्त्वम्। एतदेव ऋतमुच्यते। राजशासनं नाम इतरैरनुल्लङ्घनीयः राज्ञः आशयः। सृष्टेः, सृष्टिकर्तुर्वानुल्लङ्घनीय आशयः प्रकृते शास्त्रम्। तत्प्रतिपादकः ग्रन्थोऽपि शास्त्रम्, शब्दार्थयोरभेदोपचारात्। वेदस्यापि परमशास्त्रत्वमेतस्मादेव। जन्माद्यधिकरणेन लक्षणेऽभिहिते, तत्र प्रमाणमुच्यतेऽनन्तराधिकरणेन। किं तत् प्रमाणम्? शास्त्रमेव। कथं तत् तत्र प्रमाणम्? ब्रह्मणो विज्ञानमूलत्वादेव जगद्विज्ञानेन तन्मूलं ज्ञानस्वरूपं ब्रह्मावगम्यते। 'विज्ञानेनात्मानं वेदयते' (तै.2-78) 'वेदान्तविज्ञानसुनिश्चितार्थाः' (तै.2-24) इति श्रुतयोऽपि। ज्ञानविज्ञानपदे कुत्रचित्समानार्थकि दृश्येते। परन्तु 'ज्ञानं विज्ञानमास्तिक्यम्' (गी.18-42) इत्यादौ सहपाठात् न तथा संभवः। अतः ऋतसत्यपदवदेवेमे ज्ञेये। **ज्ञानं** ह्यात्मनः स्वरूपम्। तस्य वृद्धिर्विकासो वा **विज्ञानमुच्यते**। ज्ञानमान्तरम्, विज्ञानं तु तदपेक्षया बाह्यम्। एवञ्च विज्ञानं ज्ञानस्वरूपस्य ब्रह्मण आशयरूपः। अतो **विज्ञानान्वेषणे,** मूलभूतं **ज्ञानं** लभ्येतैव। अतश्च शास्त्रम्—विज्ञानरूपम्। छान्दोग्यस्य षष्ठे 'अशनायापिपासे सौम्य विजानीहि' (छां.6.8.3.) इत्युपक्रम्य 'नेदममूलं भविष्यतीति॥ तस्य क्व मूलं स्यादन्यत्राद्भ्यः, अद्भिस्सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सौम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलास्सोम्येमाः प्रजास्सदायतनास्सत्प्रतिष्ठाः' इत्यादिना ब्रह्मान्वेषणक्रमः प्रदर्श्यते। **'शास्त्रस्य'**=सृष्टिविज्ञानस्य **योनित्वात्**=मूलत्वात् शास्त्रगम्यं ब्रह्म इति षष्ठीतत्पुरुष एव विवक्षितस्सूत्रकर्तुः। एतादृशार्थस्यातिगहनत्वादनन्तरकालिकैस्सुलभं व्याख्यानमारभ्यत इत्यवगन्तव्यम्। अर्थस्यातिगहनत्वमात्रं न, ज्ञानापेक्षया विज्ञानं दुष्प्रापमपि। ज्ञानं हि परमात्मानुग्रहाधीनम् 'मत्तः स्मृतिर्ज्ञानमपोहनं च' (गी.15-15) इति खल्वाह भगवान्। विज्ञानं तु न केवलं **भगवतः,** अपि तु **प्रकृतेर**प्यनुग्रहादेव लभ्यम्। प्रकृतिर्हि **माया**। सा स्वरहस्यं भेत्तुं तावत्सुलभतयावकाशं न ददाति। 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह'(ईश.11) इति श्रुतिरपीममर्थमाह। विद्या हि पुरुषस्य संपत्, अविद्या च प्रकृतेः। 'अविद्या' इति विद्येतरद्विज्ञानं हि

[ब्रह्मैव निमित्तमुपादानं च]

170. अस्यैवाचिन्त्यशक्तेरखिलजनयितुः स्यादुपादानभावः
सूक्ष्माव्यक्तादिदेहः परिणमति यतोऽनेकधा स्थूलवृत्त्या।
निष्कृष्टेऽस्मिन् शरीरिण्यमलगुणगणालङ्कृतानन्दरूपे
संपद्यन्ते समस्ताः समुचितगतयो निर्विकारादिवादाः ॥ २५ ॥

विवक्षितम्, न तु विद्याभिन्नं विद्याविरोधि। 'नञ्'तत्पुरुषस्थले सर्वत्र प्रायो मुह्यन्ति बहवः। 'अविद्या कर्मसंज्ञा' इति भगवद्भाष्यकारवचनमपि अविद्याया विद्याविरुद्धत्वं वारयति। कर्म हि प्रकृतेरैश्वर्यम्, अत एव विज्ञानविशेषरूपम्। एवञ्च ज्ञानविज्ञानाभ्यामेव मोक्षः, न केवलं ज्ञानात्। अत एव 'विद्यां चाविद्यां च' इति 'च'कार द्वयम्, 'उभयं सह' इति पदद्वयं च सार्थकम्। तेनोभयोर्मिलतयोरेव साधनत्वं विवक्षितमित्यादिकमपि पूर्वमेव (जी.33) प्रपञ्चितम्। अतश्च 'मन्तव्यः' इति श्रुतिः ऋजुमतीनां अनुमानमप्यनुमनुते, अनुमानैकगम्यत्वं च वारयति। अनुमानैकगम्यत्वे हि परमात्मनो निमित्तत्वमात्रं सिद्ध्येत्, न तूपादानत्वं। प्रत्युत तर्क उपादानत्वविरोधी च। अत एव द्वितीयस्य प्रथमे पादे 'न विलक्षणत्वाधिकरणा'दारभ्य 'सर्वधर्मोपपत्तेश्च' (ब्र.सू.2-1-36) इत्यन्तो विस्तृतो भागः एतदर्थमेव न्ययोजि सूत्रकारेण। अयमेव विषयो विस्तरेण विचार्यते समनन्तर श्लोके। एतादृशविलक्षणाभिन्ननिमित्तोपादानत्वदृष्ट्यैवेश्वरानुमाननिराकरणव्यग्रता वेदान्तिनाम्। शास्त्रैकगम्यत्वमित्यादिकमप्येतदर्थकमेवेत्यलमतिविस्तरेण ॥ २४ ॥

प्रसक्तं परिसमाप्य प्रकृते विचारेऽवतरति—**अस्यैवेत्यादि**। **अचिन्त्यशक्तेः**=ऊहितुमप्यशक्याद्भुतदिव्यशक्तिपरिपूर्णस्य **अखिलजनयितुः**=सकलजगत्स्रष्टुः=जगन्निमित्तकारणभूतस्य **अस्यैव**=परमात्मनः **उपादानभावः**=जगदुपादानत्वमपि **स्यात्**=स्यादेव। 'एव'कारो भिन्नक्रमो वा। ननु 'प्रजापतिरकामयत प्रजास्सृजेयेति' (तै.सं.3-1-1), सोऽकामयत(तै.आ.) इति सृष्ट्यनुगुणसंकल्पवत्त्वान्निमित्तत्वं प्रसिद्धम्। उपादानत्वं कथम्? जगद्धि जडाजडमिश्रम्। जडं प्रत्युपादानत्वे उपादानोपादेययोरभेदस्यावश्यकत्वादित्यत्र—**सूक्ष्मेत्यादि**। **यतः सूक्ष्माव्यक्तादिदेहः**=सूक्ष्मचिदचिच्छरीरकः परमात्मा **स्थूलवृत्त्या**=स्थूलावस्थया **अनेकधा**=बहुप्रकारेण **परिणमति**। 'प्रजापतिरकामयत' इत्यादिवत् 'सोऽकामयत बहुस्यां प्रजायेयेति' (तै.आ.) 'असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानं स्वमकुरुत' (तै.आ.) 'आत्मकृतेः' 'परिणामात्' (ब्र.सू.1-4-26,27) इत्यादिश्रुतिसूत्रैः ब्रह्मण एव जगद्रूपेण परिणामप्रतिपादनात् निमित्तत्ववत्, उपादानत्वमपि श्रौतमवगन्तव्यम्। नन्वेवं सति 'अवस्थाश्रयः उपादानम्' इत्येवोपादनलक्षणकरणात् ब्रह्मणो विकारवत्त्वं स्यात्। तेन च घटादिवदनित्यत्वमपि स्यादित्यत्राह—**निष्कृष्ट** इत्यादि। **अस्मिन्**=चिदचिच्छरीरके परमात्मनि, **अमलगुणगणालङ्कृतानन्दरूपे निष्कृष्टे शरीरिणि**=अखिलहेयप्रत्यनीकानन्तकल्याणगुणगणसागरे आनन्दरूपे ब्रह्मणि शरीरभूतचिदचिद्वस्तुनः पृथक् विभज्य ज्ञाते शरीरप्रतिसंबन्धिनि विशेष्ये परमात्मस्वरूपे **समस्ताः निर्विकारादिवादाः**=सर्वेऽपि 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'(श्वे.6-19)इत्यादयो निरवयवत्वनिरवद्यत्वनिर्विकारत्वादिवादाः **समुचितगतयः**=तदनुगुणाविरुद्धार्थप्रतिपादनपराः

**संपद्यन्ते**=सम्यक्समन्विता भवन्ति । अतो न कश्चन विरोधः । उपक्रमे 'अचिन्त्यशक्तेः' इत्यभिधानेन 'अचिन्त्याः खलु ये भावा नैतांस्तर्केण योजयेत्' इति न्यायेन समाधीयतामित्याशयः ॥ अधिकमग्रे ॥

वेदान्तशास्त्रस्य प्राणप्रायः अभिन्ननिमित्तोपादानवादः समर्थ्यतेऽत्र । कृत एव प्रश्नः पूर्वमेव पूर्वजैः 'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठा । अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्' (श्वे.1-1-1) इति । क्रियते च स एव पुनः पुनः, करिष्यते च । उत्तरं किं? दुर्लभमेव तदव्यवसायिनाम् । 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे.1-1-3) इति बहुकालतपोध्यानादिगम्ये विषये बुद्धिबलेन, कामक्रोधादिना, वादविवादादिना, पूर्वग्रहाग्रहादिना वा निर्णेतुं प्रवृत्ताः कथं पारं गच्छेयुः । 'अनन्यप्रोक्ते गतिरत्र नास्ति' (कठ.1-2-8) इति तदभिज्ञपुरुषोपदेश-मात्रगम्योऽयमर्थोऽत्राचार्यैः कथञ्चित्समगृह्यत । कार्यसामान्यं प्रति उपादानकारणं, निमित्तकारणं चेति द्वय-मावश्यकम् । यच्च कारणं किञ्चित्, तदुपादानमात्रं वा, निमित्तमात्रं वा यदि स्यात्, तदा उपादानस्य निमित्तापेक्षा, निमित्तस्योपादानपेक्षा इति तयोः परस्परापेक्षाऽऽवश्यकी । मृदमन्तरा कुलालः किं कुर्यात्? कुलालमन्तरा मृद्वा किं कुर्यात् । एवं परस्परापेक्षायां उभयोरपि स्वातन्त्र्यहान्या कार्यहानिः स्यात् । यद्यपि 'स्वतन्त्रः कर्ता' (पा.सू.1-4-54) इति पाणिनिः, अथापि कर्ता करणाद्यधीन एव । तक्षा वास्याद्यधीन एव तक्षणं कुर्यात् । द्रष्टा चक्षुराद्यधीन एव किञ्चित् पश्येत् । तथाच स्वातन्त्र्यम् इतरकारणानामुपर्यधिष्ठानरूपम्, न तु निरङ्कुशम् । एवञ्च प्रकृते जगद्व्यापारे परमात्मा यदि निमित्तमात्रं स्यात्तदा तस्योपादानापेक्षा स्यात् । सापेक्षत्वाच्चास्वतन्त्रः स्यात् । अस्वतन्त्रः जीवसदृशः कश्चित्स्यात्, न तु परमात्मा । अतः परमात्मा एक एव जगतः निमित्तमुपादानं चेति वक्तव्यम् । ब्रह्मणो निमित्तत्वं कार्यानुकूलसंकल्पाश्रयत्वम् । उपादानत्वं कार्यरूपावस्थाश्रयत्वम् । 'बहु स्याम्' इत्युत्तमपुरुषेण स्वस्यैव बहुधाभावस्य कथनात्, 'तदात्मानं स्वयमकुरुत' इति स्वात्मानमेव तथा स्वयं परिवर्तितवानिति श्रवणाच्च परमात्मन एवावस्थाश्रयत्वमुक्तम् । एवं सति ब्रह्मण एव स्वरूपतोऽन्यथाभावे विकारित्वप्रसङ्गः । ब्रह्म तु निर्विकारम्—'कूटस्थमचलम्' (गी.12-3) इत्यादिभगवद्वचनात् । विकारिणां घटादीनां नाशदर्शनात् ब्रह्मणोऽपि कदाचिन्नाशप्रसङ्गः इति ब्रह्मणः उपादानत्वे महान् दोषः प्रदर्श्यते ॥

**अत्र केचित् प्राहुः**—ब्रह्म साक्षान्न परिणामाश्रयः, किन्तु तच्छरीरभूतचेतनाचेतनद्वारा । 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, स त आत्मान्तर्याम्यमृतः' (बृ.5-7-3) इत्यारभ्य पृथिव्यादिवस्तुजातं एकैकशो निर्दिश्य 'यो विज्ञाने तिष्ठन्' इति जीवं च निर्दिश्य तेषां शरीरत्वमपि कण्ठतो वदतीयं श्रुतिः । अन्तर्यामिब्राह्मणे समानप्रकरणे माध्यंदिनशाखायां 'यो विज्ञाने तिष्ठत्' इत्येतत्स्थाने 'य आत्मनि तिष्ठन्' इति आत्मपदस्यैव श्रवणादत्रापि विज्ञानपदं जीववाचि । 'व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः' (ब्र.सू.2-3-35) इति सूत्रभाष्ये श्रीशङ्कराचार्यैरपि विज्ञानपदं जीवपरमभिहितम् । एवञ्च निखिलचिदचिच्छरीरकं ब्रह्म जगत्कारणम् । एवञ्च निखिलचेतनाचेतनशरीरित्वं परमात्मानस्सिद्धम् । शरीरलक्षणं च भाष्यादिषु बहुधा परीक्षितम् ॥

तदुपर्यपि यः कश्चिद्दोषं ब्रूयाद्धिया यदि । क्रियतां तत्परिष्कार इत्येवोत्तरमुच्यते ॥
श्रुतावसकृदुक्तार्थः कथं त्याज्यस्तु वैदिकैः । जगत्सर्वं शरीरं त इत्याह स्मृतिशेखरः ॥

एवञ्चान्यथाभावः परमात्मनः तच्छरीरभूतचेतनाचेतनद्वारकः । 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' (बृ.3-4-7) इति प्रलयकाले नामरूपरहितमव्याकृतमासीत्, अनन्तरं नामरूपाभ्यां व्याक्रियत चेतनाचेतनरूपमित्युच्यते । नामरूपरहितावस्था सूक्ष्मेति, तद्विशिष्टावस्था स्थूलेति च सिद्ध्यति । एवञ्च प्रलये सूक्ष्मचिदचिच्छरीरकं ब्रह्म, सृष्टौ स्थूलचिदचिच्छरीरकं भवति । सूक्ष्मत्वस्थूलत्वरूपेऽवस्थे चेतनाचेतनगते तद्विशिष्टपरमात्मन्यपि व्यवह्रियेते । यथा बालत्वयुवत्वादयः शरीरगता अपि तद्विशिष्टे जीवेऽपि व्यवह्रियन्ते । न तावतैते व्यवहारा औपचारिका इत्युदास्तुं शक्यते । अन्यस्य मुख्यव्यवहारस्य प्रदर्शयितुमशक्यत्वात् । न च 'मम शरीरम्' इति मुख्यो व्यवहारः 'अहं बालः' इत्यौपचारिक इत्यस्ति व्यवहारभेद इति वाच्यम्; 'ममात्मा' इत्यपि व्यवहारात् । यदाह **जयन्तभट्टः**—'ममेदं शरीरम्' इति भेदप्रतिभासात् कथमहंप्रत्ययः शरीरालम्बनः स्यात्? भोः! साधो! नैवंविधेषु विश्वसितुमर्हसि । 'ममात्मा' इत्यपि भेदप्रत्ययदर्शनात्' (न्या.म.7) इति । अत एतादृशव्यवहारेषु को मुख्यः? कः औपचारिकः? इति विवेक्तुं न केवललौकिकाः पारयेयुः । यतो व्यवहारस्सर्वोऽपि शरीरेन्द्रियादिशबलस्यैव । एतत्तत्त्वापरिज्ञानमूलक एव प्रपञ्चमिथ्यात्वसाधनसंरंभोऽपि केषाञ्चित् । प्रपञ्चस्य व्यावहारिकत्वं वदन्तोऽमी पारमार्थिको व्यवहारो नास्त्येवेति विस्मरन्ति किल । 'केन कं पश्येत्, केन कं विजानीयात्' इति किल पारमार्थिकी स्थितिः । नन्वस्ति वैकुण्ठे लोके पारमार्थिको व्यवहार इति चेत्; वैकुण्ठादिकमपि तेषां मिथ्यैव । अथवा,

विचार्यताम् तत्र गत्वा स्थित्वात्रैव कथा कथम् । न हि जाग्रत्कथादीनां सन्ध्ये भवति निर्णयः॥
न वा सान्ध्यविचारस्य भवेज्जाग्रति निर्णयः । न तुरीयाद्यवस्थानां निर्णयो ह्यत्र शोभते ॥

अयि भो ब्रह्मन्! किमिदमुच्यतेऽपूर्वम्?

तर्हि स्वप्नसुषुप्त्यादिविचाराः शास्त्रगाः, कथम्? । युज्येरन्नद्य सर्वेषां साधूनां ज्ञानिनां तथा ॥
अन्यो हि व्यवहारःस्याद्विचारस्तद्विलक्षणः । विचारोऽपि च वेदान्तेऽत्यन्तं परिमितो मतः ॥
वादेषु युज्यते सर्वं जल्पे च न तु जातुचित् । जिज्ञासोस्तु कथा वादो जिगीषोर्जल्प उच्यते ॥
निर्धारितेऽर्थे विज्ञानविचारो वाद इष्यते । न निर्धारस्तु जल्पेऽस्मिन् केवलं निग्रहः फलम् ॥
जगतो ब्रह्मदेहत्वं श्रुतिस्मृत्यादिसंमतम् । तत्र विज्ञानमन्वेष्यं ज्ञानमूलं न चान्यथा ॥
संबन्धो ह्यतिगाढोऽयं स्याच्छरीरशरीरिणोः । घटे जलमिवात्मायं शरीरे न हि वर्तते ॥
नापृथक्सिद्धिसामान्यं संबन्धो भवितुं क्षमः । अत्यन्तगहनं तत्त्वं स्याच्छरीरशरीरिणोः ॥
यतोऽहंप्रत्ययो देहे स्वरसो ज्ञानिनामपि । ज्ञानं तु ज्ञानिनां तथ्यं विशिष्टविषयं भवेत् ॥
अज्ञानिनां देहमात्रे तादृशप्रत्ययो भवेत् । स्वरूपतो धर्मतो वाप्योतप्रोतो हि चेतनः ॥
यथा सस्यादिकं बीजादेधते क्रमशस्तथा । सहैव देही देहश्चाप्येधते क्षीयते तथा ॥
स्थावराः किल संप्रोक्ताः जङ्गमाश्च तथेतरे । 'यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा' ॥

इत्यादि वर्णितं तत्र स्पष्टं वाजसनेयके। शारीरश्च च शरीरं च जायेते नश्यतस्सह ॥
वटबीजस्य वृत्तान्तः छान्दोग्येऽवर्णि विस्तरात्। सर्वत्र शब्दान्सन्त्यज्य विषयश्चिन्त्यतां बुधैः ॥
शरीरे वर्तते स्पष्टमामोक्षं सर्वसाक्षिकम्। एवमेव हि संबन्धश्चिदचिद्ब्रह्मणामपि ॥
एतत्त्रयुक्त्यैवेयं स्यादहं ब्रह्मास्मिधीरपि। एवञ्च चिदचिद्द्वारोपादानं ब्रह्म कथ्यते ॥
स्वरूपतो निर्विकारं विशिष्टं तु विकारवत्। न विरोधस्ततः क्वापीत्याहुस्ते स्थूलदृष्टयः ॥
**विचक्षणास्त्वत्र केचिदा**त्माधिकरणादितः। साक्षादेवान्यथाभावं ब्रह्मणस्त्वाचचक्षिरे ॥

तथा ह्या**त्माधिकरण**भाष्यम्— 'कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः' (ब्र.सू.2-3-18) इति। अचेतने स्वरूपान्यथाभावः, चेतने स्वभावान्यथाभावः, परमात्मनि पूर्वरूपानुपमर्देनान्तर्यामित्वरूपान्यथाभव इति ब्रह्मणस्साक्षादेवान्यथाभावादुपादानत्वमप्यद्वारकं साक्षादेव भवतीति मुख्यमेवोपादानत्वं ब्रह्मणस्सङ्गच्छते। अन्यथाभावमात्रं न विकारः, पूर्वरूपोपमर्दपूर्वकान्यथाभाव एव सः। यथा मृदः पिण्डत्वनिवृत्तिपूर्वकघटत्वप्राप्तिः। ब्रह्मणि पूर्वरूपोपमर्दस्य कदाप्यभावान्न नाशाद्यापादनसंभवः ॥

ननु भोः! मृत्पिण्डस्य घटं प्रत्युपादानत्वं नाम पिण्डत्वनिवृत्तिपूर्वकघटत्वप्राप्तिरेव। एवञ्च तत्तदन्तर्यामिण एवोपादानत्वात् पूर्वान्तर्यामित्वं परित्यज्योत्तरान्तर्यामित्वप्राप्त्या ब्रह्मणः पूर्वरूपोपमर्दात्, स्वरूपान्यथाभावो मृदादेरिव स्यादेवेति, कथं निर्विकारत्वं ब्रह्मण इति चेत्, समाहितमेतत्पूर्वमेव (जड.16)॥

अत्रापि केचिदिच्छन्ति प्रक्रिया**मर्धतार्किकाः**। धर्मान्यथाभावमात्रं ब्रह्मण्यपि यथोचितम् ॥
अखण्डस्सर्वगो नित्यः परमात्मा सदाऽमलः। अन्तर्यामित्वरूपेण सखण्डः स्यात् कथं न्विति ॥
**कृत्स्नप्रसक्त्यधिकरण**सङ्गतिस्त्वियमेव हि। अङ्गीकृत्यैव सिद्धान्तोऽप्यवर्णि श्रुतिमानतः ॥
स्वपक्षदोषसूत्रार्थो वर्णनीयः कथं? कुतः?। अचिन्त्याः खलु ये भावा नैतांस्तर्केण योजयेत् ॥
किञ्चान्तर्यामितत्त्वं हि न तावत्सुगमं, नृणाम्। एकैकमपि तत्रत्यं कियत् क्लिष्टार्थकं पदम् ॥
अन्तर्व्याप्तिबहिर्व्याप्तियुद्धं दृष्टं न हि त्वया। अन्तर्यामिस्वरूपं चेत् ज्ञातं, किं वावशिष्यते ॥
क्षीरे सर्पिरिव ब्रह्म वक्ति श्रुतिवचः कथम्? सर्पिर्न स्याद्यदि क्षीरे तर्हि तत् कुत्र वर्तते? ॥
अथवाऽऽलोक्यतां बीजे वैचित्र्यं सर्वसंमतम्। भवन्ति शतशो बीजान्येकस्मादेव तादृशात् ॥
बीजस्यैकस्य शक्तिर्हि शतेषु प्रविभज्यते। अथापि सदृश्यान्येव, शक्तिस्तेषां किमन्यथा ॥
को वा बीजपदस्यार्थः प्रथमं तद्विचिन्त्यताम्। मूषकाघ्रातबीजाद्धि नाङ्कुरं जायते कुतः? ॥
यद्दृश्यते स्थूलरूपं न तद्बीजं तु वस्तुतः। आधारं यद्वृक्षशक्तेः तल्लोके बीजमुच्यते ॥
किं सा सावयवा शक्तिः उतानवयवा वद। कियद्विचित्रमत्रैव दृश्यते महदद्भुतम् ॥
वृथाचर्चाः परित्यज्य कालो नेयस्तु सार्थकः। गतः कालो न चागच्छेत् मौल्यं कालस्य चिन्त्यताम्॥
बुद्धिरेव महामाया जीवं बध्नात्यनेकशः। बुद्ध्यतीतं परं तत्त्वं बुद्ध्याऽमी मान्त्यहो कथम्! ॥
दृष्टेष्वपि पदार्थेषु वैचित्र्यं दृश्यतेऽद्भुतम्। एकस्मिन्नेव कर्ता च कर्म च स्यात्तु मैथुने ॥
कश्चिज्जन्तुर्जलचरः भवत्येतद् विचिन्त्यताम्। महादर्शकयन्त्रेणाप्यदृश्यः अणवस्तथा ॥

ब्रह्माण्डमेव स्वान्तस्ते धरन्तीत्यपि चिन्त्यताम् । दृष्टेष्वर्थेषु चैवं चेददृष्टेऽलौकिके किमु ॥
आत्मानमेते मन्यन्ते रक्षकं परमात्मनः । गुणदोषौ स्वबुद्ध्यैव निश्चित्य परमात्मनः ॥
तदभावं साधयित्वा रक्षितं भावयन्ति तम् । अचिन्त्यस्याप्रमेयस्य रक्षकेभ्यो नमो नमः ॥
यया यया भावनया भक्तस्तृप्यति सर्वथा । तथा तथा भावनैव भक्तानां शान्तिदायिनी ॥
'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।' इत्येवं हि समाश्वासं भक्तानां प्रददाति सः ॥
स्वतोऽनन्तानन्दमयः स्वाश्रितान्नन्दयंस्तथा । लेशतोऽवापि दुःखस्य कथं वाप्याश्रयो भवेत् ॥
आलोच्य सर्वपक्षांश्च विचार्य च पुनः पुनः । इदमेकं हितं सर्वकालिकं त्ववधीयताम् ॥
नैव मोहान्न वा गर्वान्नापि ज्ञानित्वमानितः । सत्यं त्रैकालिकं किन्तु स्मार्यते न तु शिक्ष्यते ॥
यावत्तु वर्तते दूरे तावत्प्रश्नादि वर्धते । यावत्सन्निहितं वस्तु तावत्प्रश्नो विलीयते ॥
लौकिके विषयेऽप्येवं दृश्यते कि न्वलौकिके । तत्रापि ब्रह्मविषये सर्ववस्तुविलक्षणे ॥
सर्वे तृप्यन्ति शब्दैस्तु नान्विष्यन्त्यर्थमान्तरम् । श्रुतेन मधुशब्देन किं न्वाऽऽस्वाद्येत तद्रसः ॥
अलौकिकं तु वेदान्तशास्त्रम् लौकिकबुद्धिभिः । अतीव नीतं कालुष्यमुपर्युपरि वर्धते ॥
सर्वात्मकस्य देवस्य दोषः को वा गुणोऽथवा । भवेद्विचिन्त्यतां सम्यक् वृथा शब्दं न वर्धयेत् ॥
ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा इति । श्रुतिः किं श्रुतपूर्वा ते, कथमेतद्विचिन्तय ॥
अन्तर्यामिपरं नीतं सर्वं, न ज्ञायते किमु? **अन्तर्यामिपदार्थो** वा किं सुज्ञो मन्यते भवान्? ॥
त्यक्त्वा पुस्तकपाण्डित्यमाश्रित्यालौकिकं गुरुम् । क्रियतां च तपस्तीव्रं प्रसीदेद्येन वाऽच्युतः ॥
संप्रोक्तं न्यासतिलके लक्षणं गुरुशिष्ययोः । आचार्यतल्लजैस्सम्यग्दृष्टिस्सूक्ष्मात्र दीयताम् ॥
अणीयांश्चाप्यतर्क्यश्च न ज्ञायेत स्वबुद्धितः । अनन्यप्रोक्त एतस्मिन् गतिरन्या न विद्यते ॥
किञ्चान्यथाभावमात्रं न दोष इति चिन्त्यताम् । कुट्मलं चम्पकादीनां यदा विकसति स्वयम् ॥
प्रसारयन् सौरभं स्वं दिक्षु सर्वांश्च रञ्जयन् । विकासोऽयं गुणः प्रोक्तः, न दोष इति गण्यते ॥
विकासस्य विकारस्याप्यन्तरं ध्वान्ततेजयोः । को न जानाति मतिमान् विवेकी पुरुषः स्वतः ॥
सृष्टिविज्ञानदृष्ट्या तु गुणदोषादिकल्पना । मानवानां हि मनसि सन्त्यनेकास्तु कल्पनाः ॥
एतेषामपि हि स्थानं बाह्ये जगति सीमितम् । न वस्तुस्पर्शि सर्वं तत् तीर्त्वा बुद्धिं तु चिन्त्यताम् ॥
पूर्णो विकासो ज्ञानस्य मुक्तिरित्युच्यते गुणः । प्रादुर्भावश्च जगतो विकास इति गण्यताम् ॥
सृष्टितत्त्वदृशा नास्ति भेदस्तु गुणदोषयोः । गुणदोषौ स्वबुद्ध्या हि निश्चिन्वन्ति जनास्सदा ॥
इतोऽपि बहुगाढोऽयं विषयो बुद्धिजीवीनाम् । सुगमो बुद्ध्यतीतानाम्, न श्रुता किं शुकस्य वाक् ॥
'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥'

श्रुतिरपि गरीयसी बहुधाभावं ब्रह्मणो वर्णयन्ती 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ.4-5-19) इति मायापदं प्रयुज्यात्मानं मूढेभ्यो रिरक्षिषति । 'एकं बीजं बहुधा यः करोति' (श्वे.6-12) इति बीजमेव दृष्टान्ततया वर्णयति । अतस्साक्षादेवोपादानत्वे ब्रह्मणो न कोपि विरोधः स्वबुद्धिदौर्बल्यं विना ॥

**इदमप्यत्र तत्त्वमवधीयताम्**—सूक्ष्मचिदचिच्छरीरकं ब्रह्म कारणावस्थमुच्यते। तत्र किं नाम सूक्ष्मत्वम्? नामरूपविभागानर्हत्वं तदित्युच्यते। नाम्नो रूपस्य चापगमे सूक्ष्मपदचिदचित्पदानां सहप्रयोगः कथम्? आः पापिन्! भगवद्भाष्यकारमप्याक्षिपसि! भोः ब्रह्मवादिन्! अस्माकमुत्तरं दत्त्वाऽसंभाष्यैस्संभाष्य ध्यायस्व पुण्यकृतो मनसा बहुवारम्॥

एतादृशश्च संरंभो जडानां सहजो गुणः। शुकस्य वचनं पूर्वमुक्तं तत् पठ्यतां मुहुः॥

अस्त्वेतत्—भगवतो भाष्यकारस्य पङ्क्तीर्वा किं दृष्टचराऽऽयुष्मता भाष्यकारभक्ताग्रेसरेण? तथा हि—'अत्रेदं तत्त्वम्। चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दाभिधेयम्। तत्कदाचित् **स्वस्मात्स्वशरीरतयापि पृथग्व्यपदेशानर्ह**सूक्ष्मदशापन्नचिदचिद्वस्तुशरीरम्, तत् कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तुशरीरम्। तच्च कार्यावस्थम्' (श्रीभा.2-1-15) इति। अत्र 'स्वशरीरतया' इत्यत्र स्वशब्दो हि ब्रह्मपरः, तस्यैव वाक्ये प्रधानत्वात्। 'तेनापि स्वशरीरत्वेन पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नत्वम्' चिदचितोर्विशेषणम्। अत्र 'स्वस्मिन्नेकतामापन्ने सति' इत्यादिप्रकृत्यधिकरणपङ्क्त्योऽपि द्रष्टव्याः। स्वेनापि पृथग्व्यपदेशानर्हत्वमुच्यते, चिदचिच्छब्दौ च प्रयुज्येते इति कथमिदमित्युच्यताम्?

अस्योत्तरं लब्धव्यं चेत्, प्रकरणमिदं परीक्ष्यताम् —'न्यग्रोधफलमाहरेति। इदं भगव इति। भिन्धीति। भिन्ना भगव इति। किमत्र पश्यसीति। अण्व्य इवेमे धाना भगव इति। आसामङ्गैकां भिन्धीति। भिन्ना भगव इति। किमत्र पश्यसीति। न किञ्चन भगव इति॥ १॥ तं होवाच। यं वै सोम्यैतमणिमानं न निभालयसे, एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति॥ श्रद्धत्स्व सौम्य' इति।(छां.6-12—1,2)। एतदपेक्षयापि किं विवरणं देयम्॥

**अयमाशयः**—बीजत्वेन प्रसिद्धं यल्लोके द्रव्यम्, वस्तुतो न तद्बीजम्, मूषिकाघ्रातबीजादिभ्योऽङ्कुरोत्पत्तेरदर्शनात्। अतस्सूक्ष्ममतीन्द्रियमेव किञ्चिद्बीजशब्दार्थः। दृश्यमानं तु तस्याधिष्ठानमात्रम्। एवं सत्यपि एकस्माद्बीजात् वृक्षो यदा भवति, तदा स वृक्षो बीजे पूर्वं सन्, उतासन्?। असत्त्वे कथम् तस्माद्व्यवस्थिततया कश्चन एव वृक्षो भवेत्? असत्त्वाविशेषात् सर्वं सर्वस्माद्भवेत्। तथाऽऽदर्शनात् सत्त्वपक्ष एव स्वीकार्यः। वृक्षो बीजेऽस्तीत्यस्य कोऽर्थः? यादृशस्थूलरूपेण वृक्षो दृश्यतेऽनन्तरम्, तादृशस्थूलरूपेण सत्त्वं प्रत्यक्षविरुद्धम्। सर्वोऽपि वृक्षः काण्डशाखापत्रपुष्पफलादिरूपस्तथैव बीजे न स्यादेव, अथापि केनचिद्रूपेण स्यादेव; अन्यथा तस्मात्तादृशस्यैव वृक्षस्य विकास इति व्यवस्था न स्यात्। अतः पत्रपुष्पाद्यात्मकः महान् वृक्षः येन केनचिदनिर्वचनीयेन सूक्ष्मरूपेण बीजे वर्तत इत्येतावन्मात्रं वक्तव्यम्। अथापि 'पत्रपुष्पादिकं बीजे वर्तते' इत्यस्य, असङ्कीर्णं तादृग्रूपेण विकासार्हसूक्ष्मरूपेण वर्तते इत्यभिप्रायेण, भाविदृष्ट्या यथा पत्रपुष्पादिशब्दप्रयोगः, तथैव प्रकृतेऽपि चिदचिदीश्वररूपेण परिणामार्हसूक्ष्मावस्थारूपेण सर्वं ब्रह्मणि वर्तत इति भाविदृष्ट्या चिदचिच्छब्दप्रयोगः, न तु प्रलयकालिकस्थितिदृष्ट्या। अतश्च सूक्षावस्थस्य

[एकस्यैव निमित्तोपादानत्वे]

**171. कर्तोपादानमेव स्वसुखमुखगुणे स्वप्रयत्नप्रसूते**
**संयोगं स्वस्य मूर्तैः स्वयमुपजनयन्नीश्वरोऽप्येवमिष्टः।**

ब्रह्मणः स्थूलावस्थाप्राप्तौ विशेषणयोर्विशेष्यस्य च तत्तत्स्वरूपानुगुणोऽन्यथाभावोऽनिवार्य इत्युपादानम्, कार्यानुकूलसङ्कल्पवत्त्वान्निमित्तं चेत्यभिन्ननिमित्तोपादानम् ब्रह्मेति न किञ्चिदपहीनम् ॥

नन्वस्त्विदं सर्वम् । **'अभिन्ननिमित्तोपादान'** पदस्य विग्रहोऽभिधीयताम्! कोऽयं बालिशः प्रश्नः! शब्दस्तु संप्रतिपन्नः । उच्यतां यथासंभवं विग्रहः । श्रूयताम्— 'नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे । शब्दासाधुत्वमाहुर्ये शाब्दिकांस्तान्न मन्महे ॥' (त.टी.) इति सिंहगर्जनम् ॥ २५ ॥

नन्वेकमेव वस्तूपादानं निमित्तं च कथं भवेत्? तयोर्विरोधात् । दृश्यते किल दण्डादिर्घटं प्रति निमित्तमपि, स्वगतरूपादिकं प्रत्युपादानमपीति चेत्, भोस्तार्किक! आशयानभिज्ञस्त्वम् । एकवस्तुनिरूपितमुपादानम्, निमित्तं चैकमेव कथं भवेदित्येव प्रश्न इत्यत्रोत्तरमाह— **कर्तेत्यादि**। चेतनः कश्चित् **स्वप्रयत्नप्रसूते**= स्वीयप्रयत्नेनैव साधिते **स्वसुखमुखगुणे**=स्वीयसुखादिरूपगुणे **उपादानमेव**=उपादानकारणं भवत्येव । यद्यपि शास्त्रं वक्ति 'अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये, दैन्यमत्रातिरिच्यते।।' इति, अथाप्यत्यन्ततः भोजनादिजन्ये सुखे भोजनादेः प्रयत्नाधीनत्वात् चेतनस्य तत्र निमित्तत्वमस्ति । एतदर्थमेव 'स्वप्रयत्नप्रसूते' इति सुखादेर्विशेषणम् । तथा च सुखादिकं प्रत्यात्मन एवोपादानत्वं निमित्तत्वं चैकस्यैव भवतीति न विरोधः । ननु इदं तु जीवस्य । परमात्मनःस्रष्टृत्वस्य संकल्पमात्राधीनत्वेन प्रयत्नाधीनत्वाभावादीश्वरस्य कथमुभयसंभव इत्यत्राह— **संयोगमित्यादि**। **ईश्वरोऽपि**=परमात्मापि **मूर्तैः**=मूर्तपदार्थैस्साकम्; नैय्यायिकैर्विभुद्वयसंयोगानङ्गीकारात् 'मूर्तैः' इत्युक्तम् । **संयोगम् स्वयमुपजनयन्**=स्वयमेव स्वसंकल्पेनोत्पादयन् **एवम्**=एकस्मिन्नेव कार्ये उपादानं निमित्तं च **इष्टः**= तेषामपि संमतः । घटादिकार्यं यदा नूतनतयोत्पद्यते, तदा तेन घटेन सहेश्वरस्य संयोगोऽनिवार्यः, ईश्वरस्य विभुत्वात्, सर्वमूर्तद्रव्यसंयोगस्यैव विभुत्वात् । तत्रेश्वरस्य संयोगं प्रति उपादानत्वमस्ति । एवं कार्यसामान्यं प्रतीश्वरस्य निमित्तकारणत्वमप्यस्तीति न विरोधः । परमात्मन आनन्दादेर्नित्यत्वेन जन्यत्वाभावात्, तत्परित्यज्य संयोगग्रहणम् ॥

ननु जीवस्य सुखादिकं तदीयधर्मभूतज्ञानस्यावस्थाविशेषः । धर्मभूतज्ञानं तु नित्यमेव । एवञ्च— 'स्वप्रयत्नप्रसूते' इति सुखादेः कथं विशेषणम्? न चावस्थाविशेषावेव जीवधर्मभूतज्ञानस्योत्पत्तिविनाशाविति वाच्यम्; एवमपि तद्धर्मभूतस्य स्वरूपतो नित्यत्वाङ्गीकारेणोत्पत्तिविनाशव्यवहारस्य गौणत्वावश्यंभावात् । यदि च कालदेशविषयादिभेदविशिष्टरूपेणोत्पत्तिविनाशौ समर्थ्येताम्, तर्हि ईश्वरज्ञानादेरपि तादृशव्यवहार आवश्यकः । स्वभक्तस्य दुःखं दृष्ट्वा भगवानप्यनुतपति । 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इत्यादिवचनात् । न च तद्वचनमन्यथा व्याख्यातं पूर्वं भवतैवेति वाच्यम्; भावानभिज्ञो भवान् । जीवदुःखजातीयं दुःखं परमात्मनो नास्तीत्येतावन्मात्रं तत्र न्यरूपि, न तु दयाख्यगुण एव निराकारि । एवञ्चैतादृशदयाया

**सर्वोपादानभावःस्वत इह घटते सर्वकर्तर्यमुष्मिन्**
**सर्वश्रुत्यैकरस्यप्रणयिभिरुचितं द्वारमत्राभ्युपेतम् ॥ २६ ॥**

नूतनतयैवोत्पत्त्या विशिष्टवेषेणोत्पत्त्यादिकं परमात्मगुणानामप्यावश्यकम्। एवमेव 'उत्सवेषु च सर्वेषु पितेव परितुष्यति' इत्यादिना सन्तोषादेरप्युत्पत्तिरावश्यकीति को विशेषः? अयि भोः! पुराणप्रक्रियेयम्। वयं तु शास्त्रचर्चामत्र कुर्म इति चेत्; भोः शास्त्रज्ञवर्य! कमेवं वञ्चयसि? परब्रह्मणोऽपि हि निग्रहानुग्रह-सङ्कल्पानामुत्पत्तिविनाशावावश्यकौ। अतो विशिष्टरूपेणोत्पत्तिविनाशौ परमात्मधर्मभूतज्ञानस्यापि वर्तेते इति को विशेषः? एवं सति संयोगपर्यन्तानुधावनक्लेशः कुत इति चेत्; **सत्यम्**। अथापि जीवधर्मभूतज्ञानस्य सुषुप्तिमरणादिष्वसत्कल्पत्वाङ्गीकारात्, अनन्तरं नूतनतया विषयिणो ज्ञानस्यैव विकासाच्च, जीवधर्मभूतज्ञान-नित्यत्वस्य शास्त्रैकगम्यत्वात्तस्योत्पत्तिविनाशौ लोकतस्सिद्धौ। परमात्मनस्तु सर्वं शास्त्रैकगम्यमिति अत्यन्तवैलक्षण्यसत्त्वात्, कस्याञ्चिदप्यवस्थायां तद्धर्मभूतज्ञानस्यासत्कल्पत्वाभावात्, सदा तदीयं ज्ञानं संकोचविकासरहितमेव। विषयसंबन्धस्तु तस्य तदा तदाऽऽगन्तुकः। अतः तत्परित्यज्य लौकिकयुक्तिसिद्धं तार्किकसंमतं संयोगमादायोपपादनं कृतमित्यवगन्तव्यम्॥

नन्वेवं संयोगादिरूपकार्ये परमात्मनो निमित्तोपादानत्वेऽपि संयोगस्याद्रव्यत्वेन तत्संभवेऽपि, द्रव्यरूपजगन्निरूपितं तत् कथमित्यत्राह—**सर्वेत्यादि**। **इह**=एतद्विचारे **सर्वकर्तरि**=सर्वजगत्कारणे **अमुष्मिन्**=परमात्मनि **सर्वोपादानभावः**=सर्वजगन्निरूपितमुपादानत्वमपि **ततः**=सर्वजगत्कारणत्वादेव **घटते**=युज्यते। 'यतो वा इमानि भूतानि जायन्ते .... यत्प्रयन्त्यभिसंविशन्ति' इति जगत्सृष्टिस्थितिलया-धारत्वश्रुत्या निमित्तत्वेन सहोपादानत्वमपि सिद्ध्यति; उपादानत्वमन्तरा लयाधारत्वस्यासंभवात्। अत एव 'आत्मकृतेः' 'परिणामात्' (ब्र.सू.1-2-26,27) इति सूत्रे अपि संगच्छेते। आत्मन एव जगद्रूपेण करणस्य चाभिधानात्। नन्वेवं तर्हि अचिद्वदेव स्वरूपपरिणामे ततश्चाचिद्वदेव सावद्यत्वापत्तिरित्यत्राह—**सर्वेत्यादि**। एवं ब्रह्मण उपादानत्वेऽपि **सर्वश्रुत्यैकरस्यप्रणयिभिः**=सर्वविधश्रुतीनामैककण्ठ्यप्रतिपादन-परैरस्माभिः **अत्र**=अस्मिन्नुपादानत्वे **द्वारम्**=मध्यवर्ति किञ्चिद्वस्तु चेतनाचेतनरूपम् **अभ्युपेतम्**=अङ्गी-कृतम्। अन्यथा ब्रह्मणस्साक्षाज्जगद्रूपत्वे जडत्वादिप्रसङ्गः। अत एते स्थूलपरिणामाः परमात्मशरीरभूत-चेतनाचेतनद्वारकाः। परमात्मनस्तु अन्तर्यामित्वेन परिणाम इति 'परिणामात्' इत्यादिसूत्रसङ्गतिः। अत्रैव विवर्तवादस्यावसर इति पूर्वमेव प्रदर्शितम्॥

**अत्रेयं समस्या वैदिकानाम्** पूर्वं (जीव.4) विस्तरेण प्रतिपादितापि विषयस्य गहनत्वात् पुनरपि प्रतिपाद्यते—एतज्जगत्स्वरूपम्, तन्मूलकारणम्, तत्रास्माकं स्थानसंबन्धादिकं च ज्ञातुं प्रवृत्ता ऋषयः तपः-प्रभावात् जगन्मूलमपश्यन्, यद्दर्शनेन सर्वमपि ज्ञातमभूत्। तदिदमुच्यते 'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठा। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्॥' (श्वे.1-1) 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे.1-3) 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मुं.1-1-1) 'तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्' (श्वे.6-21) एवमेभि-

ब्रह्मर्षिभिराविष्कृता वेदा एवैतेषां तत्त्वं जिज्ञासमानानामितरेषाञ्च दिव्यं चक्षुरुच्यते । एवमेभिराविर्भाविता वेदा नैकविधा अभूवन्, तेषां प्रकृतिवैचित्र्यात् तपश्शक्त्यादिवैचित्र्याच्च। तेषु 'अहं ब्रह्मास्मि' (बृ.3-4-10) 'अयमात्मा ब्रह्म'(बृ.6-4-5) 'तत्त्वमसि' (छां.6-8-7) 'सर्वंखल्विदं ब्रह्म'(1-14-1) इत्यादीनि कानिचिद्वाक्यानि जगद्ब्रह्मणोरभेदं वदन्ति। कानिचन वाक्यानि 'द्वासुपर्णौ सयुजौ सखायौ' (मु.3-1-1, श्वे.4-6) 'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वे.1-9) 'छायातपौ ब्रह्मविदो वदन्ति' (क.1-3-1) 'यतो वा इमानि भूतानि जायन्ते' (तै.भृ.1)इत्यादीनि भेदं प्रतिपादयन्ति। एवं सर्वेषां वेदत्वे समानेऽपि, परस्परविरुद्धार्थकत्वात् कस्य ग्रहणम्? कस्य त्यागः? उभयोरपि वेदत्वेऽन्यतरत्यागो वा कथम्? इत्येवात्र वैदिकानां समस्या ।।

अन्यतरत्यागो नास्त्येव, वैदिकानां वेदवाक्यत्यागस्यायुक्तत्वात्। किन्तु जीवब्रह्मणोर्भेदस्य प्रसिद्धत्वात्, 'परमं साम्यमुपैति' इति श्रुतेश्च राजपुरोहितस्यैश्वर्यादिवैभवं दृष्ट्वा जनाः 'अयमेव राजा संवृत्तः' इति यथा व्यपदिशेयुः, एवमेव 'अयमात्मा ब्रह्म' इत्याद्यभेदव्यपदेशो वैभवाधिक्यसादृश्यादिमूलक इति **तार्किकाः**, तदनुयायिनो **नव्यवेदान्तिनश्च** । न च भेदस्य लोकत एव सिद्धत्वात्तदर्थं शास्त्रापेक्षा व्यर्थेति वाच्यम्; लोकसिद्धभेद औपधिकः स्यात्, अज्ञानकृतः स्याद्वा । तदपेक्षया विलक्षणस्य स्वरूपप्रयुक्तस्य भेदस्य ज्ञानं न हि लोकतो भवेत्। ज्ञानावस्थायामपि भेदो वर्तत एवेत्यतोऽस्त्येवावश्यकता शास्त्रस्येति केवलभेदवादिनो **नव्यवेदान्तिनः** । एवञ्चाभेदवाक्यान्यर्थवादतुल्यानीत्येषामाशयः ।।

एतत्पक्षेऽभेदवाक्यानामर्थवादतुल्यत्वेन स्वार्थे प्रामाण्याभावः स्पष्टः । अलौकिकस्य स्वरूपतो भेदस्य प्रतिपादनपराणि भेदवाक्यानीत्यपि न युक्तम्, 'यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति.....यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' (बृ.4-4-1) इति खल्वन्तिमस्थितिरुक्ता । इतरत्सर्वमवरमुक्तिविषयम्। भेदोऽप्यवरमुक्तौ स्यात्कामम्। तद्दृष्ट्या भेदवाक्यानि प्रवृत्तानि सन्तु कामम्! श्रुतीनां पर्यवसानभूमिस्त्वभेद एव । भेदस्तु तावत्पर्यन्तं केवलं व्यावहारिकः । अत एव भेदवाक्यानि सर्वाणि व्यावहारिकार्थप्रतिपादनपराणि, अत एवाभेदवाक्यशेषभूतानि, न स्वतन्त्राणि। तस्मादभेद एव मुख्यः, भेदस्तु मायाकल्पितः। यद्यभेदस्तर्हि जीवगतेभ्यो दोषेभ्यो ब्रह्मणस्संरक्षणं कथमिति चेत्, अरे मुग्ध! अत्यल्पोऽयं विषयः। दोषाणां मिथ्यात्वात् न किञ्चिद्भयमित्यभेदवादिनो **ब्रह्मविवर्तवादिनश्शाङ्करा** मन्वते ।।

परं त्वस्मिन्नपि पक्षे भेदवाक्यानां स्वार्थे प्रामाण्यानङ्गीकारादस्वारस्यं दुर्वारमेव । अतो भेदाभेदयोरविरोधादुभयमपि समं प्रमाणमिति **भेदाभेदवादिनः**। किञ्च यदि भेदमात्रम्, तर्ह्यभेदश्रुतयो व्याकुप्येयुः। यद्यभेदमात्रम्, तर्हि जीवब्रह्मणोरभेदात् जीवगताः दोषास्तदभिन्ने ब्रह्मण्यपि प्रसज्येरन्। तेषां मिथ्यात्ववादस्त्वनुभवविरुद्धः। भेदाभेदवादे तु भेदसत्त्वाद्दोषेभ्यो ब्रह्मणो रक्षणं सुलभम्। सर्वश्रुतिसमन्वयश्च। सन्ति किल बहवो गुणगुणिनोर्भेदाभेदवादिनः। अत एव भेदाभेदवादिनां समूह एव महान् दार्शनिकेषु ।।

एवं किंकर्तव्यतामूढानां मुमुक्षूणामुपकारायैवैषां समन्वयप्रदर्शनाय विविधन्यायगर्भं वेदान्तशास्त्रं प्रणिनाय परमकारुणिको भगवान् बादरायणः—'अथातो ब्रह्मजिज्ञासा' (ब्र.सू.1-1-1) इत्यादिना । तत्र

'अहं ब्रह्मास्मि' (बृ.3-4-10) इत्यादिव्यपदेशकारणानि विचार्यन्ते। तत्रेन्द्रप्राणाधिकरणे इन्द्रः स्वदासे प्रतर्दने प्रसन्नः, 'वरं वृणु, दास्यामि' इत्यपृच्छत्। प्रतर्दनस्तु 'नाहं मम हितं जानामि। मह्यं सर्वोत्तमं हितं यद्भवेत्, तत् त्वमेव ज्ञात्वा देहि' इत्यवदत्। तेन तुष्ट इन्द्रः ब्रह्मोपासनाया एव हिततमत्वात् 'ब्रह्मोपास्स्व' इति वक्तव्ये 'मामुपास्स्व' इत्यवदत्। कथं एवं वक्ति सः? इति प्रश्नस्योत्तरमुच्यते 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र.सू.1-1-31) इति। अत्र शास्त्रदृष्टिर्नामात्मनो ब्रह्माभेददृष्टिः। आत्मनो ब्रह्मणश्चाभेदं पश्यन्तो महर्षयो वामदेवादय एवमेवावदन् 'अहं ब्रह्मास्मि' (बृ.3-4-10) इति। अत इन्द्रोऽपि तादृशदृष्ट्यैव 'मामुपास्स्व' इत्यवददित्याहुः। एषु त्रिष्वेव पक्षेषु सर्वेऽपि वादा अन्तर्भवन्ति। लेशलेशतः दृश्यमानं वैलक्षण्यमन्ततश्शब्दमात्रे पर्यवस्यतीत्यवगन्तव्यम्॥

भेदवादः, अभेदवादः, भेदाभेदवाद इति वादत्रयापेक्षयान्यः को वा वादो भवितुमर्हति— 'आवापोद्वापतःस्युः' (जड.5) इत्युक्तन्यायेन? **सर्वश्रुतिसमन्वयवादिनः भगवद्रामानुजाचार्यास्तु** त्रिष्वप्येषु पक्षेषु न्यूनतामेवं पर्यशीलयत्। भेदवादेऽभेदवाक्यानाम्, अभेदवादे भेदवाक्यानाञ्च स्वार्थे तात्पर्याभावस्तैस्तैरेवाङ्गीकृतः। भेदाभेदौ तु परस्परविरुद्धौ तेजस्तिमिरे इव। केवलाभेदवादे भेदवाक्यानां न स्वार्थत्यागः, किन्तु अभेदस्य भेदपूर्वकत्वावश्यकत्वात्तस्याप्यभेद एव पर्यवसानमित्यादिकं वाङ्मातुर्यमात्रम्, भेदस्याप्यभेदपूर्वकत्वावश्यकत्वात्। उभयोः परस्परनिषेधात्मकत्वात्। 'अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते' (मां.का.3-18) इति तत्कूटस्थवचनम्। किञ्च इन्द्रस्य 'मामुपास्स्व' इत्युक्तिः कथमिति प्रश्ने, 'वेदान्ते जीवस्यैव ब्रह्मत्वाभिधानात्तथोक्ति'रित्युक्तिः, **अन्धस्य जात्यन्धेन मार्गदर्शनायते**। किञ्च जीवब्रह्मणोरभेदेऽपि जीवस्योपास्यत्वं को वा विवेकी ब्रूयात्? प्रत्युतास्मिन्नेव वेदान्तशास्त्रे पूर्वम् 'भेदव्यपदेशात्' (ब्र.सू.1-1-18) 'भेदव्यपदेशाच्चान्यः' (ब्र.सू.1-1-22) इति सूत्राभ्यां भेदस्यैव प्रतिपादने सत्यप्यभेदेन 'मामुपास्स्व' इति व्यपदेशः कथमिति प्रश्ने, अभेदं निश्चयीकृत्य तथा व्यपदेशः कथं वा संगच्छेत? वेदान्तशास्त्रं नामोपनिषदः, न तु ब्रह्मसूत्राणीत्यादिकमाग्रहमात्रम्; उपनिषदामर्थनिर्णयार्थं खलु प्रवृत्तं ब्रह्ममीमांसाशास्त्रम्। ननु 'वेदशास्त्राविरोधिना' इत्यादौ वेदानामपि शास्त्रत्वात्, उपनिषदां वेदत्वानपायात्, ता एव शास्त्रपदवाच्या इति चेत्; उपनिषत्स्वेवमभेदव्यवहारः कथमिति प्रश्ने, शास्त्रपदस्योपनिषत्परत्ववर्णनेऽन्योन्याश्रयस्स्यात्। न च 'तदनन्यत्वम्' (ब्र.सू.2-1-15) इत्यादिना जीवब्रह्मणोरभेदसमर्थनं दृश्यत एव वेदान्तशास्त्र इति वाच्यम्, समनन्तरस्मिन्नेवाधिकरणे 'अधिकं तु भेदनिर्देशात्' (ब्र.सू.2-1-22) 'अश्मादिवच्च तदनुपपत्तिः' (ब्र.सू. 2-1-23)इति सूत्राभ्यां तद्विपरीतमभिधानात्, एतदधिकरणस्योत्तरत्वेन प्रबलत्वात्, तदनुगुणतयैव पूर्वाधिकरणस्य निर्णेयत्वाच्च। अधिकमन्यत्र भविष्यति। अतश्शास्त्रं नाम प्रकृते विज्ञानम् (पु.74)। तद्दृष्ट्या विज्ञानदृष्ट्या जीववाचिशब्देन ब्रह्माभिधीयते। अतः 'माम्' इति इन्द्रवाचिशब्दः **विज्ञानदृष्ट्या** परमात्मवाचक इति 'ब्रह्मोपास्स्व' इति वक्तव्ये 'मामुपास्स्व' इत्यवददिन्द्रः॥

का सा विज्ञानदृष्टिः? इति चेत्? सूत्रकार एव वक्ष्यत्यग्रे **वाक्यान्वयाधिकरणे** (ब्र.सू.1-4-19)। तत्र हि 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' इत्युपक्रम्य

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.4-4- 5) इत्यन्तेनात्मनोऽमृतत्वप्राप्तिहेतुभूतोपासनाविषयत्वमुच्यते। तेनेदं प्रकरणं परमात्मपरं वक्तव्यम्। परन्तु 'विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति, न प्रेत्य संज्ञास्ति' (बृ.4-4-12) इति जीववाक्यस्य का गतिः? उत्पत्तिविनाशयोः स्पष्टं वर्णनात्। शरीरसंबन्धकृतं हि जीवस्य ज्ञानसंकोचविकासादिकं दृष्टम्, शास्त्रसंमतञ्च। उत्पत्तिविनाशावपि ज्ञानकृताविति ज्ञाधिकरणसिद्धम्। अतो जीवस्य शरीरद्वारकमुत्पत्तिविनाशवचनं कथञ्चिन्नेतुं शक्यमौपचारिकतया। नैतत्संभवति, परमात्मनो नित्यासंकुचितज्ञानस्येति शङ्कायां मतभेदेनोत्तरं वदत्याचार्यः— **'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः'** (ब्र.सू.1-4-20)'उत्क्रमिष्यत एवं भावादित्यौडुलोमिः'(1-4-21) 'अवस्थितेरिति **काशकृत्स्नः**'(1-4-22)इति। एवं महर्षीणामप्यभिप्रायभेदवर्णनेनास्य विषयस्य गहनता प्रदर्शिता। प्रतिज्ञायाः='आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृ.4-4-5) इत्युक्ताया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सिद्धेः इदं जीववाचिशब्देन परमात्माभिधानरूपं लिङ्गमित्याश्मरथ्याचार्यो मन्यते। एकविज्ञानेन सर्वविज्ञानं ह्युपादानोपादेयत्वकृतमिति प्रकरणान्तरे 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' (छां.6-1-4) इति दृष्टान्तेन, ज्ञायते। एवञ्च जीवस्यापि ब्रह्मोपादेयत्वात्, उपादानोपादेययोरभेदस्य 'मृदयं घटः' इत्यादौ दर्शनात् विज्ञानघनो जीवोऽपि ब्रह्मैवेत्येतत्सूचयतीदं प्रकरणमिति स्वरूपपरिणामवाद्याश्मरथ्याचार्यस्य मतम्॥

द्वितीय**मौडुलोमिमतम्**—उत्क्रमिष्यतः=ब्रह्मविद्यासिद्ध्या शरीरादुत्क्रमिष्यतो विज्ञानात्मनस्संसारिणः एवंभावात्=सर्वात्मकब्रह्मभावात्। तथा च आत्मनः पूर्वावस्थापेक्षया 'विज्ञानघन एव' इत्यादिनिर्देशः, भाविमुक्त्यवस्थादृष्ट्या त्वभेद इत्यवस्थाभेदेन न विरोध इति। 'तदाहुः— 'आमुक्तेरेव भेदः स्यान्मुक्तस्य च परस्य च। मुक्तस्य न तु भेदोऽस्ति भेदहेतोरभावतः॥ इति पाञ्चरात्रिकाः' इति अत्र भाष्करीयं भाष्यम्। अतश्च भूतपूर्वगत्याश्रयणवत्, विज्ञानात्मन एव भाविगतिदृष्ट्या 'इदं सर्वं यदयमात्मा' (बृ. 6-5-7) इत्यादिना परमात्मत्वव्यपदेश इत्यौडुलोमिमतम्॥

तृतीयं तु **काशकृत्स्नमतम्**— 'अवस्थितेः' इति। जीवात्मन आत्मतया परमात्मनोऽवस्थितेः= जीवात्मनः शरीरितया परमात्मनः आवस्थितेः, शरीरगतधर्मैः शरीरिणोऽपि व्यपदेश इति सूत्रार्थः। 'अयं बालः' 'अयं युवा' 'अयं वृद्धः' 'अयं रुग्णः' इत्यादिव्यपदेशा हि बहुलं दृश्यन्ते विदुषामपि जीवशरीरभेदं जानताम्। न हि केवलस्य शरीरस्य, केवलस्य शरीरिणो वा बालत्वयुवत्ववृद्धत्वरुग्णत्वादीनां संभवः। अत एते व्यवहाराः सर्वदा विशिष्टविषयाः। एवमेव 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति' इत्यादिव्यवहारा अपि परमात्मपर्यन्ता उपपद्यन्त इति काशकृत्स्नाचार्यस्य मतम्॥

परमात्मन एव जीवरूपेणावस्थितेः=जीवब्रह्मणोरभेदाज्जीववाचिशब्दैरपि परमात्मैवाभिधीयत इति काशकृत्स्नः मन्यत इति अभेदवादिनां व्याख्या। ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यत इति वादस्य जिज्ञासाधिकरण एव बहुधा निराकृतत्वात् नेयं व्याख्या स्वरसा। ननु चैतदनन्तरं प्रत्येकं बादरायणमतस्यानुपन्यासात् काशकृत्स्नमतमेव सूत्रकारसंमतमिति ज्ञायत इति वक्तव्यम्। तत् कथं तस्यापि निरास इति चेत्—

सत्यम्। एवं व्याख्या न युक्तेत्येवाभिहितम्। अतः अवस्थितेः=जीवात्मनि परमात्मन आत्मतयाऽवस्थितेः, जीवात्मनः परमात्मशरीरत्वात् शरीरवाचिशब्दानां शरीरिपर्यन्तबोधनन्यायात्, 'विज्ञानघन एव' इत्यादिना तदन्तर्यामी तच्छरीरकपरमात्मा व्यपदिश्यते। यथा वा लोके 'चैत्रो युवा' 'मैत्रो बालः' 'चैत्रो जातः' 'मैत्रो मृतः' इत्यादिव्यवहारेषु युवत्वादीनां शरीरगतत्वेऽपि, तद्विशिष्टे जीवे तानि व्यवह्रियन्ते, एवं जीवात्मनोऽपि परमात्मशरीरत्वात्, जीवरूपशरीरगतधर्मैः तच्छरीरी परमात्माभिधीयत इति न कश्चन विरोधः। न च 'अवस्थितेः' इत्यस्य परमात्मशरीरतयाऽवस्थितेरित्यर्थः कथं लभ्येताध्याहारमन्तरेति वाच्यम्; 'जीवरूपेणावस्थितेः' इत्यत्रापि अध्याहारमन्तरा कथं व्याख्या? न च 'यश्चोभयोस्समो दोषः' इति न्यायावतारात् विनिगमनाविरह इति वाच्यम्; अभेदेनावस्थाने जीवगतदोषाणां परमात्मनि प्रसङ्गेन, परमात्मनो हेयसंबन्धापत्तेः। न च दोषाणामविद्याकृतत्वेन मिथ्यात्वान्न दोष इति वाच्यम्, दोषाणां मिथ्यात्वस्यासिद्धेः। अपि च, मिथ्यात्वेऽपि दोषत्वानपायात्, ब्रह्मव्यतिरिक्तसर्वमिथ्यात्ववादे सत्यदोषस्यैवाप्रसक्तेः, ब्रह्माज्ञानवादस्य बहुधा दूषितत्वात्, पुनर्दूषयिष्यमाणत्वाच्च स वादो न साधीयान्। सिद्धान्ते तु शरीरगतदोषैश्शरीरिणो दोषाप्रसक्तेर्नैयमापादना संभवति॥

अपि च सूत्रशैलीदृष्ट्या अवस्थितिपदस्य शरीरशरीरिभावेनावस्थानपरत्वमेव स्वरसम्। तथा हि—प्रथमाध्यायः खलु समन्वयाध्याय इत्युच्यते। उपनिषद्वाक्यानां चिदचिद्विलक्षणे ब्रह्मणि समन्वयः प्रतिपाद्यतेऽत्र। अस्मिन्नेवाध्याये पूर्वम् 'अनवस्थितेरसंभवाच्च नेतरः' (ब्र.सू.1-2-18) इत्यन्तर्याम्यधिकरणाव्यवहितपूर्वान्तराधिकरणसूत्रम्। अन्तराधिकरणे 'यश्चक्षुषि तिष्ठन्' इत्यादिवाक्यस्य प्रस्तुतत्वात्, तदर्थस्थापनायैव हि प्रवृत्तमन्तर्याम्यधिकरणम्। अन्तराधिकरणविषयवाक्यं च 'य एषोऽक्षिणि पुरुषो दृश्यते' (छां.4-15-1) इत्याद्येव मतद्वयेऽपि। अत्र 'स्थानादिव्यपदेशाच्च' इति द्वितीयं सूत्रम्। अस्य विषयवाक्यमपि 'यश्चक्षुषि तिष्ठन्' (बृ.5-7-18) इत्याद्यन्तर्यामिब्राह्मणवाक्यमेव मतद्वयेऽपि समानम्। 'अनवस्थितेरसंभवाच्च नेतरः' इत्यन्तिमं सूत्रम्। एतेषां व्याख्यानान्यपि मतद्वयेऽपि समानानि॥

प्रायः पक्षद्वयेऽप्यैक्यं व्याख्यानादिषु दृश्यते। ऋते निर्गुणसंस्तावम्, अत्यल्पं मन्महे त्विदम्॥<br>
यतो निर्गुणशब्देऽस्मिन् सविशेषैक्यवादिनाम्। न विद्वेषः श्रुतिगते; व्याख्यानं भिद्यते परम्॥<br>
तत्रापि कारणं स्पष्टं तत्कालचरितादिकम्। गाढं चिन्तयतां भायात् विदुषां सरलात्मनाम्॥<br>
शङ्करार्याल्लक्ष्मणार्यो नातिदूरेऽवतिष्ठते। **मार्गोऽन्यश्शङ्करार्यस्य शाङ्करेभ्यो** विलक्षणः॥<br>
कालानुगं शङ्करोक्तं लक्ष्मणार्यैः परिष्कृतम्। आविष्कुर्मोऽखिलं तत्त्वं समये सप्रमाणकम्॥

प्रकृते, अवस्थितिपदप्रतिकोटिभूतमनवस्थितिपदम्। द्वितीयसूत्रोक्तस्यान्तर्यामितयावस्थितेः व्यतिरेकनिर्देशरूपमिदमनवस्थितिपदम्। यद्यपि द्वितीयसूत्रेऽपि अवस्थितिपदम्, अवस्थानपदं वा युक्तम्; अथापि विषयवाक्ये 'तिष्ठन्' इति सत्त्वात् स्थानपदयोगः। स्थितिमात्रं न पर्याप्तम्, किन्तु स्थितिपूर्वकं नियमनमित्यभिप्रायेण द्वितीयसूत्रे 'आदि'पदम्। एवञ्चान्तर्यामिब्राह्मणे वर्तमानं 'तिष्ठन्' इति पदं न स्थितिमात्रपरम्, किन्तु तत्रैव श्रुतौ 'शरीर'पदसत्त्वात् शरीरितयावस्थानपरमिति मत्वा स्थानादीत्यादिपदस्यार्थमपि

क्रोडीकृत्य व्यतिरेकनिर्देशे 'अनवस्थान'पदं प्रयुक्तं सूत्रकारेण । एवञ्च स्थानादीत्यस्यापि मिलितार्थः 'अवस्थितिः' । अतश्चात्र वाक्यान्वयाधिकरणे 'अवस्थिति'पदम् 'अनवस्थिति'पदस्यान्तराधिकरणस्थस्य प्रतिकोटिभूतमिति अन्तर्यामितयावस्थितिरेव सूत्रकाराशयानुगुणा । तर्हि सूत्रकारैः बादरायणपदघटितम्, स्पष्टार्थकमेव सूत्रं कुतो न कृतम्? अयमाक्षेपो यद्यप्युभयोस्समानः, तथापि—

शब्दस्तु वक्त्रधीनः स्यान्न कोऽपि प्रष्टुमर्हति । बहुधा साधितो भेदो नाभेदः क्वापि साधितः ॥
तत्त्वतस्तु ब्रह्मभेदो मुक्तिभेदोऽथवा क्वचित् । निरूपितो नैव सूत्रकृता हि न्यायपूर्वकम् ॥
**कार्यब्रह्मपरब्रह्मशब्दौ** न ब्रह्मभेदकौ । इत्याद्यं विस्तरेणोक्तं **भाष्यगूढार्थसंग्रहे** ॥
तथा भेदाभिधानं चाप्याचार्याणां सुविस्तरम् । बौद्धानां सान्त्वनायैवेत्यादि पश्चात्प्रदर्श्यते ॥
प्रस्थानत्रयभेदादिकल्पनाचातुरी च या । दौर्बल्यसूचिका यस्मात्, त्रयमेकार्थकं मतम् ॥
अतश्चोपनिषद्गीता सूत्रं चेति त्रयं त्विदम् । एकप्रस्थानमेवेति, न प्रस्थानत्रयं भवेत् ॥
न्यायात्मकं मतं सूत्रं विषयौ च श्रुतिस्मृती । यत्र स्यात् स्वरसं सूत्रं तत्र स्थेयं मुमुक्षुभिः ॥
यथा सुप्तस्य वाग्जल्पः वन्ध्यापुत्रस्य वर्णना । अवेद्यावाच्यतावादो विरोधास्फूर्तिमूलकः ॥
वस्तुतस्त्वत्र गांभीर्यं ब्रह्मसूत्रेषु दृश्यते । उचिते समये तच्च प्रकटीक्रियते रहः ॥

**वस्तुतस्तु**—आश्मरथ्योक्तं एकविज्ञानेन सर्वविज्ञानसिद्धमुपादानत्वं सर्वसंमतम् । औडुलोमिसंमतः संसारदशायां भेदः, मुक्तावभेदश्च 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥' इति वदतामपि संमतः । 'एवञ्च सत्यभेदो वा भेदो वा द्व्यात्मकता वा वेदान्तवेद्यः कोऽयमर्थः समर्थितो भवति? सर्वस्य वेदवेद्यत्वात्सर्वं समर्थितम् । सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्य-भेदस्समर्थितः' (वे.सं.) इत्यत्र शरीरशरीरिभावेनाभेदवाक्यं समर्थितमिति न भगवद्रामानुजैरुच्यते, किन्त्वभेदः समर्थित इत्युच्यते । अतः शरीरशरीरिभावविषये महद्रहस्यं वर्तते । अतश्च त्रयं मिलित्वैव स्वमतमित्यत एव स्वमतं पृथङ् नोक्तं वेत्यप्यालोचनीयमेव । 'अहं ब्रह्मास्मि' इत्यनुभवःखलु शरीरशरीरिभावकृतोऽपि भवेत्, उपादानोपादेयभावकृतः कालभेदकृतो वा भवेदधिकारिभेदेन । ब्रह्मव्यतिरिक्तमिथ्यात्ववादे तु क्लेश एव । तद्वादेऽहमर्थस्यैव वस्तुतोऽभावात् कस्य केनैक्यस्यायं वर्तमानकालिको निर्देशः? एतत्सिद्धान्ते तु शरीर्यनुभवे शरीरं यथा बहिर्भवेत्, तद्वत् विशुद्धब्रह्मानुभवे जीवोऽपि तथा भवेत् । एवमेव 'अहं ब्रह्मास्मि' इत्यपि वामदेवस्यानुभवः । अतो वाक्यान्वयाधिकरणं गहनं चिन्तनीयं निर्मत्सरैः । अस्य विस्तरस्समयान्तरे ॥

अत्रैवं मन्यन्ते **निर्विशेषवादिनः**—सूत्रगीतोपनिषत्सु उपनिषद एव प्रधानभूताः, वेदत्वात् । अत एव सूत्राणां निर्विशेषवादविरुद्धत्वेऽपि, उपनिषदनुरोधेनैव सूत्राणि नेयानि । अत एवानन्दमयाधिकरणेऽन्ते सूत्राणि यथाकथञ्चिन्निर्विशेषपराणि नेयानीत्युक्तम् । भामत्यामपि 'गुणे त्वन्याय्यकल्पना' इति न्यायेन श्रुतिसूत्रयोर्विरोधे सूत्राण्येवान्यथा नेयानीति समर्थितम् । गीताविषये तु नाधिकं वक्तव्यम् । गीता हि भक्तिप्रधानेति सर्वप्रसिद्धम् । सापि यथाकथञ्चित् उपनिषदनुरोधेन नेया । एवञ्च उपनिषदः, ब्रह्मसूत्राणि, भगवद्गीता चेति भिन्नप्रस्थानानि । अथाप्युपनिषदामेव सर्वश्रेष्ठत्वेन इतरद्वयं तदनुगुणं नेयमिति ॥

**अत्रेदं चिन्तनीयम्**—उपनिषदो ह्यत्यन्तं गंभीराः, न तावत्सुगमार्थाः। अत एव 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥' (म.भा.आ.1-273) इति महर्षिवचनरूपोपबृंहण-सापेक्षत्वं वेदार्थावगमस्योक्तम्। 'नैको ऋषिर्यस्य मतं प्रमाणम्' (म.भा) इति न्यायेनात्राप्यवधारणासंभवं मन्वानैः 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' (म.स्मृ.12-105) इति तर्कानुग्रहमप्याचख्युर्गम्भीरार्थनिर्णये। अयमर्थो निर्विशेषवादिनामपि संमतः (शं.भा.2-1-11)। एवञ्चोपनिषदामर्थावधारणस्य ब्रह्मसूत्राधीनत्वे, उपनिषत्प्रस्थानमन्यत्, ब्रह्मसूत्रप्रस्थानमन्यदिति कथं घटताम्?

ननु 'निर्गुण'पदस्य गुणातीतपरत्वं वदद्भिर्भवद्भिरपि 'सत्यं ज्ञानम्' इत्यादिकं जगदुपादानत्व-प्रयुक्तविकारादिशंकापरिहारार्थं विशुद्धस्य ब्रह्मणो रूपमुच्यत इत्यङ्गीकृतम्। जगत्कारणत्वादिकं उपलक्षण-तयापि लक्षणमित्यप्यङ्गीकृतम्। एवञ्च गुणातीतस्य विशुद्धस्य ब्रह्मणो वेदान्तैकवेद्यस्य विचाराविषयत्वमपि सहजमेवेति, ब्रह्मसूत्राणाममुख्यत्वमेवेति निर्णये, 'गुणे त्वन्याय्यकल्पना' इति न्यायावतारे कं दोषं पश्यसि त्वम्? एवमेव साधनामार्गोऽपि अव्यक्तमार्गः, व्यक्तमार्गश्चेति द्विविधः। तयोरव्यक्तमार्गः गुणातीतविशुद्धात्म-विषयकः कष्टसाध्य इति, तदपेक्षया व्यक्तमार्गः साकारभगवद्विषयकस्सुलभ इत्यपि पक्षद्वयेऽपि समानम्। तत्राद्यो मार्ग एव निराकारमार्गः, ज्ञानमार्ग इत्युच्यते। द्वितीय एव साकारमार्गः, भक्तिमार्ग इति प्रोच्यते। गीता च भक्तिमार्गानुगामिनी, उपनिषदश्च ज्ञानमार्गानुगामिन्यः। लक्ष्यं तूभयोः ब्रह्मप्राप्तिरेव। निराकारमार्गः साक्षात्परब्रह्मप्रापकः, साकारमार्गस्तु सगुणब्रह्मप्राप्तिद्वारा निर्गुणब्रह्मप्रापकः। सगुणं ब्रह्म सृष्ट्यन्तर्गतत्वात् अपरं ब्रह्मेति, निर्गुणं तु ब्रह्म सर्वातीतत्वात्परं ब्रह्मेति च कथ्यते। आद्यमुपास्यं ब्रह्मेति, द्वितीयं ज्ञेयं ब्रह्मेति चाभिधीयते। उपासनं हि मानसी क्रिया। क्रियासाध्यं फलं ह्यनित्यमिति संप्रतिपन्नम्। अतश्च ब्रह्म त्रिगुणान्तर्गतम्, त्रिगुणातीतं चेति द्विविधं यतः, तत एवेतरत्सर्वं तदनुबन्ध्यनिवार्यमिति प्रस्थानत्रयकल्पना प्रामाणिक्येवेति ॥

**अत्र ब्रूमः**— 'द्विरूपं ब्रह्मावगतम्' (ब्र.सू.1-1-12.शं) 'किं द्वे ब्रह्मणी? बाढम्' (ब्र.सू.4-3-14.शं) 'कथं पुनरेकस्मिन् शरीरे द्वौ द्रष्टारौ'(ब्र.सू.1-2-20.शं) इत्यादिकं बहुधा विचारितम्। ब्रह्मणि परापरभेदादिकमप्रमाणिकमित्यादि जीवसर एव (श्लो.31) गतम् ॥

पुनः पुनः किं वक्तव्यं को लाभः पिष्टपेषणे। गहनत्वाच्च तत्त्वस्य क्रियतां मननं सदा ॥
एकमेव परं तत्त्वं स्वमायावैभवात् स्वतः। स्वीकृत्य बहुरूपाणि क्रीडतीति विदुर्बुधाः ॥
'एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति ॥'
न द्विरूपं न त्रिरूपं नानारूपमनन्तकम्। इन्द्रो मायाभिरित्याद्यैः स्पष्टमेवाभ्यधायि तत् ॥
नान्तोऽस्ति विस्तरस्येति भगवान् स्वयमाह हि। नान्तं न मध्यमित्यादि तद्भक्तोऽप्याह विस्मितः ॥
संक्षेपतस्तु कथने पञ्चरूपं तदन्ततः। भूतात्मा चेत्यादिरूपं पूर्वमेवाभ्यधायि तत् ॥

'पुरुषे त्वेवाविस्तरामात्मा' इति संग्रहः। 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः....सर्वमयः' (बृ.6-4-5) इति किञ्चिद्विस्तरः। तथैव तैत्तिरीयपञ्चकोशोऽपि। 'अयमात्मेद-

ममृतमिदं ब्रह्मेदं सर्वम्' (बृ.4-5-1) इति वाक्यगर्भं मधुब्राह्मणं सर्वमस्य विस्तरः। अत्रैवान्ते 'इन्द्रो मायाभिः पुरुरूप ईयते' 'अयमात्मा ब्रह्म सर्वानुभूः' (बृ.4-5-19) इति च पठ्यते। इदं सर्वं कथम्? कथं विश्वसनीयम्? इत्यस्योत्तरम्—'मायाभिः' इति॥

मायापदस्यार्थः 'मायां तु प्रकृतिं विद्यात्'(श्वे.4-10) 'दैवी ह्येषा गुणमयी मम माया' (गी.7-14) इति स्पष्टमवर्णि। विवादानां मूलकारणभूतान्येतादृशानि पदान्यधिकृत्य वक्तव्यं पूर्वमेवो(श्लो.५)क्तम्। विस्तरस्तु **श्रीभाष्यगूढार्थसंग्रहादौ** द्रष्टव्यः। 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र.सू.2-1- 24) 'विकरणत्वान्नेति चेत्तदुक्तम्' इत्यादौ ब्रह्मणो जगदुपादानत्वे बाह्यसाधननिरपेक्षत्वमुक्तम्। क्षीरं यथा स्वयं घनीभवति, एवं ब्रह्मापि इतरनिरपेक्षो जगत्सृजति। 'यथोर्णनाभिस्सृजते गृह्णते च'(मुं.1-1-7) इति ऊर्णनाभिर्दृष्टान्तीक्रियते। अतिक्षुद्रः ऊर्णनाभिनामा क्रिमिः स्वाश्रयं गृहं स्वशरीरान्निस्सारितरसद्रव्यविशेष-परिणामभूतैः तन्तुभिः निर्माति, एवं ब्रह्मापि स्वान्तर्भूतवस्तुनैव स्वावासभूतं जगत्सृजति। न स्वातिरिक्तवस्तु-सापेक्षम्। ब्रह्मणः स्वरूपं यथा ज्ञानमयम्, तथैव ज्ञानविलक्षणवस्तुमयमपि। तदेव वस्तु 'माया' इत्युच्यते। सैव कक्ष्याभेदेनाविद्यादिपदैरप्युच्यते। 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' (छा. 8-1-3) इत्यादाविदं स्पष्टम्। अत एव सदा तत्सविशेषमेव। अत एवाविद्यापदं न विद्याविरो-ध्यर्थकम्। कुलालो घटादिकं यथा सृजति, न तथा ब्रह्म जगत्सृजति। कुलालो हि निमित्तमात्रम्। ब्रह्म तु निमित्तमुपादानं च। अतो ब्रह्म स्वमायया स्वयम् आत्मानं बहुधा करोति। एकस्याखण्डस्य कथं बहुभावः? 'तदीयविचित्रशक्तियोगात्'-'मायाप्रभावात्' इत्येवोत्तरम्। 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ.4-5-19) इति हि श्रुतिः। या मा=लक्ष्मीः=विष्णोस्सहजशक्तिः सैव मायेत्यपि कैश्चिन्निरुच्यते। 'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः। न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥' (गी.9-4,5) इत्युपबृंहणं द्रष्टव्यम्। एतावता विरोधात्सर्वं मिथ्येति नार्थः। किन्तु बुद्ध्यतीतं तत्त्वं बुद्ध्या निश्चेतुं सर्वथा न शक्यत इत्येवार्थः। अतस्सदैव सर्वविशेषयुक्तमेव ब्रह्म। तत्कदाचिद्विवेक्तुं शक्यते, सैव सृष्टिः। कदाचिन्न शक्यते स एव प्रलयः। **वटबीजन्यायः छान्दोग्योक्तः**(6-12) **पुनः पुनः गाढं चिन्तनीयः। अतो माया न मिथ्यार्थकः॥**

अग्रे—प्रलये एकमेवाद्वितीयमखण्डमात्मतत्त्वम् मायापदवाच्यात् स्वीयाद्भुतदिव्यशक्तियोगात् 'तदैक्षत बहुस्याम्' इति संकल्प्य 'असत्' 'सत्' इति पदवाच्यावस्थाविशिष्टक्रमेण परिणममानं 'ब्रह्म' पदवाच्यावस्थामाप्नोतीति प्रथमो घट्टः। ब्रह्मपदं हि तदा सूक्ष्मावस्थापन्नचिदचिद्विशिष्टं उच्छूनबीजवद्वर्त-मानं वक्ति। ततस्तदनुगुणनानानामरूपस्वीकारानुगुणपुरुषपदवाच्यं भवति। ततः विराट्हिरण्यगर्भपदवाच्याव-स्थापन्नं सत्ततः 'ब्रह्मा' इति पदवाच्यावस्थापन्नं भवति। तदेव 'जीवघन' पदवाच्यम्, यस्मादनन्ता जीवाः, 'सुदीप्तात्पावकाद्विस्फुलिङ्गा' इव निस्सरन्ति। एतदेव चतुर्मुखप्रजापत्यादिवाच्यं क्रमेण भवति। एतदारभ्य व्यष्टिसृष्टेः प्रारंभः। एकस्माद्बीजाद्यथानन्तानि बीजानि प्रादुर्भवन्ति, तद्दृष्ट्या कारणावस्थायामेकत्वम्, कार्यावस्थायाञ्चानेकत्वम्, एवमेव समष्टिसृष्टावात्मैक्यम्, व्यष्टौ चानेकत्वमिति, ऐकात्म्यवादनानात्म-

वादयोरविरोधः । अत एव समष्टौ नानात्मवादवत्, व्यष्टावैकात्म्यवादोऽपि विरुद्ध्येत । एवं जीवघन-पदवाच्याद्ब्रह्मणः विस्फुलिङ्गवत्, अङ्कोलबीजवच्च कोटिकोटिशो विशीर्णा जीवाणवः क्रमेण एकेन्द्रियद्वीन्द्रिया-दिक्रमेण, अन्ते पुरुषपदवाच्या मानवरूपा परिणमन्ते । तदात्वेऽभिधीयते— 'पुरुषे त्वेवाविस्तरामात्मा' (ऐ.अ.2-3-2) इति । तत्र 'भूतात्म'पदवाच्यावस्थैव 'शरीरम्' इत्युच्यते । अतो मुख्यश्शारीर आत्मा परमात्मैव, तत्परिणामरूपत्वादस्य । अथापि विवर्तवाददृष्ट्या जीवस्यैव शारीरत्वं ब्रह्मसूत्रेषु निर्दिश्यते । एवं भेदस्य, अभेदस्य चानिवार्यत्वात्, तयोः कालभेदेनाविरोधात्, भेदाभेदवादस्यापि कालभेदेनावश्यकत्वात् आत्मतत्त्वमत्यन्तविचित्रं सर्वविधव्यवहारस्याप्यवकाशं ददातीति मत्वा 'भेदो वाभेदो वा द्व्यात्मकता वा' इति प्रश्नस्य 'सर्वस्यापि वेदवेद्यत्वात्, सर्वं समर्थितम्' इत्यनुग्राह्यमभूत् भगवद्भाष्यकारैः। तावता 'क्षपणकपक्षनिक्षिप्त'मित्यस्यापि नास्त्यवसरः । अस्मद्बुद्ध्या जीर्णयितुमशक्यत्वमात्रात्सर्वमिथ्यात्वं न युक्तमित्येवाशयः । अत एव जिज्ञासाधिकरणे केवलभेदवादम्, निर्विशेषाभेदवादम्, भेदाभेदवादं च दूषयित्वा सविशेषाभेदवादः स्वसंमत इति स्पष्टमुक्तम् । भेदाभेदयोरुभयोरपि मुख्यत्वे भेदाभेदवाद्येव श्रीरामानुजोऽपि इति तु न भ्रमितव्यम्, यतो भास्करसंमतः, जैनसंमतो वा निरुपाधिकभेदाभेदवादः नाङ्गीकृत एव तैः । भेदाभेदवादस्य औपाधिकभेदाभेदयोरविरोधवादस्य चान्तरमजानता नेदं ज्ञातुं शक्यम् । परसंमत-भेदाभेदवादः खलु समन्वयाधिकरणे विस्तरेण दूषितः । केनचित्प्रकारेण भेदाभेदौ तु सर्वैरप्यङ्गीकृतावेव । जीवब्रह्मणोराविद्यकभेदस्य स्वरूपतोऽ भेदस्य चाभिधानात् । नवीनवेदान्तिनोऽपि भेदस्य स्वाभाविकताम-भेदस्यौपचारिकतां वदन्ति । अतः प्रमाणानाम्, व्यवहाराणां च समन्वयस्सर्वैरपि कर्तव्य एव । परन्तु कस्मिन् पक्षे वेदस्य युक्तेश्चानुकूल्यमित्येवात्र विचार्यम् । अत एव हि 'साविद्यं केऽपि(श्लो.27) इत्यादि वक्ष्यत्यनु-पदम् । एतदुपर्यपि यदि संशयः, तर्हि समन्वयाधिकरणे तत्प्रकरणं सावधानमधीयताम् ॥

ननु 'मायामात्रं तु' इति स्वाप्नपदार्थानामेव मायामयत्वाभिधानात्, तेषां मिथ्यात्वस्यानुभवसिद्ध-त्वाच्च, जगतोऽपि मायया यदि सृष्टिः, तर्हि मिथ्यात्वमनिवार्यमिति चेत्, सूत्रे 'मात्र'पदं नावहितं किल त्वया । को वा विवेकी स्वप्नजाग्रतोस्सर्वसमतां ब्रूयात् त्वदन्यः, यो हि 'जाग्रत्प्रत्ययो मिथ्या प्रत्ययत्वात्, स्वाप्नप्रत्ययवत्' इति पूर्ववासनया प्रयुङ्क्ते स्वगुरुविरुद्धतया (ब्र.सू.2-2-29) । अधिकमन्यत्र ॥

अतो रामानुजप्रोक्तमिहामुत्र शुभावहम् । करणत्रयसारूप्यावहं संपूर्णदर्शनम् ॥
द्वैतं वाप्यथवाद्वैतमुत तत्त्वं द्वयात्मकम् । इत्यापृच्छ्य न किञ्चित्त उचुरत्र, विचिन्त्यताम् ॥
प्रथमं चिन्तयन्त्वेते रामानुजमतानुगाः । एकदेशमतं न स्याद्यथेदं चिन्त्यताम् तथा ॥

ननु भोः! प्रशंसामहेऽत्र तवाचार्यनिष्ठाम् । पररन्त्विदमत्रास्ति तव कण्ठे गडुः । 'इदं सर्वं यदयमात्मा' (बृ.6-5-7) इत्यस्य का गतिः? का वाऽनुपपत्तिः? 'सर्वं खल्विदं ब्रह्मः' (छां.3-4-11) इतिवद्भविष्यति । अये मुग्ध! स्वीये जाले पतितमपि स्वं न जानासि किल! 'सर्वं खल्विदम्' इति हि प्रत्यक्षप्रतिपन्नवाचि । तद्वदत्रापि 'इदं सर्वं यत्' इति प्रत्यक्षप्रतिपन्नं जगदुच्यते, इदमः प्रत्यक्षप्रतिपन्न-

वाचित्वात्। एवं समनन्तरं छान्दोग्ये 'ब्रह्म' इति वर्तते। अत्र तु तत्स्थाने—'अयमात्मा' इति वर्तते। अत्रापि प्रत्यक्षप्रतिपन्नः आत्मा 'अयमात्मा' इत्यनेन वाच्यः। प्रत्यक्षप्रतिपन्नश्चात्मा जीवः। स एव छान्दोग्ये ब्रह्मपदेनोच्यत इति स्पष्टो वर्तते जीवब्रह्मणोरभेदः। किं बहुना! 'अयमात्मा ब्रह्म' (बृ.6-4-5) इति हि स्पष्टमस्यैवात्मनो ब्रह्मत्वं कण्ठत एवाभिहितमनुपदम्। अतः 'अवस्थितेः' इत्यस्यापि ब्रह्मण एव जीवरूपेणावस्थितेरित्यर्थ एव स्वरस इति चेत्, हन्त! कियत्कष्टमनुभवस्यपहतपाप्मानं निरवद्यं निरस्तसमस्तदोषगन्धमशेषकल्यागुणगणपूर्णं परमात्मानं दूषयितुम्? हन्तैतदर्थं कियच्छिद्रान्वेषणपरता तव?

अत एव हि पश्यन्ति नव्यवेदान्तिनस्तु ये। निन्दन्त्यपि च दैत्यं त्वां ब्रह्मसर्वस्वहारिणम्॥
अलंकृत्य शिरश्छेदं कृत्वैते ब्रह्मणो बत! कथं तृप्यन्ति वैरूप्यमुक्त्वापि स्वात्मसाक्षिकम्॥

अयि भोः! उत्तरमुच्यताम्। मा पूरय शेषं कोपेन, निन्दया वा। अयि महात्मन्! तव वा कथमिदं संगच्छताम्—अयमिति प्रत्यक्षप्रतिपन्नःखल्वयं अशनायादिपीडितो जीवः। स कथं ब्रह्माभिन्नःस्यात्? सर्वत्रैवं स्वाधिकाराधिकं वृथा जल्पतः कियद्वोत्तरदानेन को लाभः? एतन्मैत्रेयीब्राह्मणसमनन्तरमधुब्राह्मणे 'तद्यथा रथनाभौ च रथनेमावरास्सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवास्सर्वे लोकास्सर्वे प्राणास्सर्व एत आत्मानस्समर्पिताः' (बृ.4-5-15) इत्यत्र 'अस्मिन्नात्मनि' इत्यत्र किं जीवो विवक्षितस्तव? उत्तरत्र 'सर्व एत आत्मान' इति दर्शनात्, यदि परमात्मा, तस्य 'अस्मिन्' इति प्रत्यक्षवन्निर्देशः कथम्? तद्वदेव 'अयमात्मा' इत्यत्रापि परमात्मविवक्षणे किं वा बाधकं पश्यसि त्वम्? 'दृश्यत इति वचनं शास्त्राद्यपेक्षं विद्वद्विषयम्' (ब्र.सू.1-2-17.शं) इति हि भवदीयं भाष्यम्। तदस्माकं किं काकभक्षितम्! अपि च 'सर्व एत आत्मानस्समर्पिताः' इति तस्मिन्नेव वाक्ये बहुवचनान्तेनात्मपदेन क उच्यन्ते?

अस्त्येव सर्वपक्षेष्वप्यन्तर्गडुरिहेदृशः। नीयतां तत् कथंचिच्चेत् कोऽपराधः परोक्तिषु॥
तस्मादैक्यानुभवोऽपि भवेत्प्रामाणिको यथा। भेदानुभवोऽपि तथा प्रमारूपो यथा भवेत्॥
भेदाभेदौ यथा न स्तः परस्परविरोधतः। तथा तत्त्वं वर्णनीयम्, तदैव स्यात्समन्वयः॥
श्रुतीनामपि सर्वासाम्, सिद्धान्तेऽस्मिन्नेव वर्ण्यते। **श्रीमद्रामानुजैरेव** तथावर्णि समन्वयः॥
**श्रीमच्छठारिसूक्तीनां** गाढाध्ययनवैभवात्। संपन्नस्सुलभस्सोऽयं सर्वश्रुतिसमन्वयः॥

आः! स्मृतं भोः! महर्षीणां वचनानि शूद्रगाथानुरोधेन नयसि त्वम्? अत एव सम्यगुक्तं **कृष्णानन्देन** 'शूद्रशिष्योऽयं रामानुजः' इत्यादि। भवन्मतरहस्यं भवतैवान्ते प्रकटितम्॥

शोभते शूद्रशिष्याणां भवतामेव तन्मतम्। ग्राह्यम् कदापि नास्माकं विप्राणां श्रेष्ठजन्मनाम्॥

आः! शान्तं पापम्! शान्तं पापम्! 'ब्रह्मवित्पापवर्गाणामनन्तानां महीयसाम्। विद्वेषिसंक्रमं जानन् त्रस्येत्तदपराधतः॥' इति बोधनेऽपि मौर्ख्यमेवावहन् त्वं सतामनुकम्पार्हः। यतः—'आत्मद्रोहममर्यादं मूढमुज्झितसत्पथम्। सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम्॥' इत्युपदिशति धर्मशास्त्रम्। वेदान्तशास्त्रस्य परा काष्ठा 'अहं ब्रह्मास्मि' इत्यनुभव एव। ब्रह्मर्षिषु **वामदेवः**, पौराणिकेषु **प्रह्लादः**, ऐतिहासिकेषु अयं

[ब्रह्मणस्सविशेषत्वं सर्वसम्मतम्]

**172. साविद्यं केऽपि सोपाधिकमथ कतिचित्, शक्तिभिर्जुष्टमन्ये**
**स्वीकृत्यैकाद्वितीयश्रुतिमपि जगदुस्तद्विशिष्टैक्यनिष्ठाम्।**

**श्रीशठकोपसूरि**स्तादृशीं परां काष्ठामारूढा इति प्रथितमिदं तत्तदीयैर्वचनैः। 'न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः। सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने॥' इत्यार्षं वचः। अतः—

त्यक्त्वा त्वां दूरतो दुष्टमसंभाष्यतमं सताम्। आह्वये शङ्कराचार्यभक्तानेवात्र निर्णये॥

अस्तु नाम परमं हितं वचो ब्रह्मर्षिवर्यस्य, 'प्राप्यं ज्ञानं ब्राह्मणात् क्षत्रियाद्वा' (आप.) इत्यादि। श्रीमन्महाभारतस्थं **कौशिकोपाख्यान**मपि विप्रवर्येण तेन नावलोकितम्। अन्ततः, किं स्मरन्ति भवन्तो भवदाचार्यचरितम्, वचनं वा— 'चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम' इत्यादिकम्? ननु भोः! नैतादृशान् विश्वसन्ति विमर्शकाः। आसन् किलानेके शङ्कराचार्येति नामानः। जानाम्यहं सर्वम्। अत एव **शङ्करविजय**चरितमपि मया साक्षीकृतम्। तत्कर्ता हि भवतां पूज्यतमः। पठ्यतां सावधानं तत्। अन्ते रक्षात्मानं महापातकात्। यच्चोक्तमुपासनं क्रिया। क्रियासाध्यं फलमनित्यमित्यादि, तत्र वक्तव्यं पूर्वसर एव विस्तरश उक्तम्॥

अन्तत अस्यैकस्य वोत्तरं दीयताम्। उपासनं मानसी क्रिया। अतः तत्फलं सगुणप्राप्तिरूपं क्रियासाध्यत्वादनित्यमित्युच्यते भवता। एवं तर्ह्यनावृत्तिसूत्रस्य का गतिः? सा तु क्रममुक्तिपरेत्युक्तमेवेति चेत्, क्रियासाध्यं फलमनित्यमुच्यते, क्रममुक्तिरप्युच्यते। किं विरोध एव न ज्ञायते? पुनर्जन्मनापि तद्भवितुमर्हतीति चेत्, भवतु भवदनुग्रहेण। अपुनरावृत्तिः कथम्? तत्तु एवं भवेत्—भोः! मास्तु तव सङ्कटम्॥

जानामि भवतां तर्कपरतां सम्यगेव हि। प्रतिष्ठितो न भवति तर्को नूनं श्रुतेः पुरः॥
कथञ्चित्किल बौद्धानां भङ्गायाचार्यदर्शिताम्। पुनर्मा गच्छ सरणिं शून्यवादो भवेद्ध्रुवम्॥
बहुधा प्रोक्तमेतद्धि पुनर्मा पिष्टपेषणम्। बौद्धमार्गं परित्यज्याऽऽगच्छ मार्गं तु वैदिकम्॥ २६॥

ननु यदि ब्रह्मण उपादानत्वं तच्छरीरभूतचिदचिद्द्वारकम्, तर्हि कारणभूतस्य वस्तुनः 'एकमेवाद्वितीयम्' इत्येकत्वं न मुख्यं स्यात्, किन्तु विशिष्टैक्यविवक्षयेत्येकत्वममुख्यमेव स्यादिति शङ्कां परिहरति— **साविद्यमित्यादि**। **केऽपि**=निर्विशेषवादिनः **साविद्यं ब्रह्म**=अविद्याविशिष्टं ब्रह्मोपादानम् **स्वीकृत्य, एकाद्वितीयश्रुतिमपि**=प्रलयकालिकीम् 'एकमेवाद्वितीयम्' इति श्रुतिमपि **तद्विशिष्टैक्यनिष्ठां जगदुः**= अवदन्—**अथ कतिचेत् सोपाधिकं ब्रह्म स्वीकृत्य, तद्विशिष्टैक्यनिष्ठाम् एकाद्वितीयश्रुतिं जगदुः** इति, **अन्ये शक्तिभिः जुष्टं ब्रह्म स्वीकृत्य, एकाद्वितीयश्रुतिमपि तद्विशिष्टैक्यनिष्ठां जगदुः** इति च भिन्नं भिन्नं वाक्यम्। आद्यं **निर्विशेषवादिनाम्**, द्वितीयं **भास्करस्य**, तृतीयं **यादवप्रकाशस्य**। नित्यशुद्धबुद्धमुक्तस्वरूपस्य ब्रह्मण उपादानत्वं यदि स्वरूपकृतम्, तर्हि तस्य स्वरूपस्य नित्यत्वादेवानिर्मोक्षप्रसङ्ग इति जगद्ब्रह्मणोर्मध्ये अनिर्वचनीयमविद्याख्यं किञ्चिदङ्गीकृत्य साविद्यं ब्रह्मोपादानम्, निरवद्यं तदेव परमप्राप्यं नित्यशुद्धेत्यादिरूपमङ्गीचक्रुः। 'उपाधिनिमित्तो भेदः, न पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदान्तिभिरभ्युपगन्तव्यः' (ब्र.सू.भा.1-4-

22 शं.) इति खलु भाष्यम्। यदि साविद्यमुपादानम्, तर्हि 'एकमेवाद्वितीयम्' इति श्रुतिः कथं घटतामिति चेत्; अविद्याया अनिर्वचनीयतामभ्युपगच्छन्त एव, तस्या मिथ्यात्वात्, सत्यभूतवस्त्वन्तराभावार्थकम् 'एकमेवाद्वितीयम्' इति वाक्यमिति खलु वदन्ति ॥

इदं कथं घटताम्? सजातीयविजातीयस्वगतभेदत्रयरहितं खल्वद्वितीयादिपदस्यार्थोऽवर्णि। अविद्या ब्रह्मसजातीया? उत विजातीया? आद्यस्तु न भवति, ब्रह्माद्वैतभङ्गात्। विजातीया चेत्, विजातीयाविद्याविशिष्टमेवोपादानं सिद्धम्, संमतं चैतदेव। एवं सति विजातीययाऽविद्यया विशिष्टत्वात्कथमद्वितीयम् ब्रह्म? पारमार्थिकद्वितीयरहितमित्येवार्थ इति चेत्, तत् सजातीयद्वितीयराहित्यमेव, न तु विजातीयद्वितीयराहित्यरूपम्। तदापि अविद्याया ब्रह्मविजातीयत्वाद्विजातीयद्वितीयराहित्यं विरुद्धचेत, विजातीयद्वितीयाङ्गीकारात्। अविद्याया अनिर्वचनीयत्वात्, निर्वचनीयद्वितीयराहित्यं यदि विवक्षितम्; तर्हि ब्रह्म निर्वचनीयं स्यात्। तथा चावाच्यत्वावेद्यत्वादिभङ्गः। ब्रह्मणोऽनिर्वचनीयत्वमन्यादृशम्, अविद्याया अनिर्वचनीयत्वं चान्यादृशमिति न दोष इति यदि,

हन्तानिर्वचनीयत्वमधिकृत्यैव वर्ण्यते। एतावदिति चेत्, हन्त! कियद्वर्ण्येत चेतरत् ॥
मुखमस्ति बलं चास्ति वैयात्यं चास्त्यनन्तकम्। अनिर्वाच्यमभूत्सर्वम्, उच्यताम् स्वेच्छयैव भोः ॥

एतद्दोषपरिहारायैव **भास्कराचार्यः** उपाधिसत्यतावादी प्रत्यवतिष्ठते—**अथ कतिचित् सोपाधिकमिति**। अथ कतिचित् सोपाधिकं ब्रह्म स्वीकृत्य एकाद्वितीयश्रुतिमपि तद्विशिष्टैक्यनिष्ठां जगदुरित्यन्वयः। अयमाशयस्तेषां—अविद्याया मिथ्यात्वे तस्याः कल्पकः क इति वक्तव्यम्। केनचित् भ्रान्त्या कल्पितमेव हि मिथ्येत्युच्यते। कस्य भ्रान्त्या कल्पितेयमविद्या? ब्रह्मण एवेति चेत्, किमेतद्भ्रान्तिदर्शनं ब्रह्मणः स्वाभाविकम्, उतौपाधिकम्? स्वाभाविकत्वेऽनिर्मोक्षप्रसङ्गः। औपाधिकत्वे, स उपाधिः सत्यः, उत मिथ्या? मिथ्यात्वे, पुनः कल्पकान्तरापेक्षत्वादनवस्था। सत्यत्वे, भक्षितेऽपि लशुने न शान्तो व्याधिः, इत्यापत्त्या अविद्याकल्पकोपाधेः सत्यत्वाङ्गीकारापेक्षया, अविद्याया एव सत्यत्वमङ्गीक्रियताम्। ननु विद्यामयः खलु परमात्मा। स एव च सत्यः। तद्भिन्नाविद्या कथं सत्या स्यात्? वस्तुतस्तु—

सर्वे भगना नञ्समासे विपरीतार्थभावनात्। तत्तुल्यमेवान्यत्किञ्चिदुच्यते नञ्समासतः ॥
तुल्यं द्वितीयं सिद्ध्येच्चेत् भवेत् ब्रह्मद्वयं तदा। इति भीतिः किमर्था ते, ब्रह्मणोऽन्यदितीर्यताम् ॥
भिन्नान्यशब्दयोर्भेदो महानस्तीति चिन्त्यताम्। सर्वात्मना न पर्यायौ तौ शब्दाविति तु ध्रुवम् ॥
दित्यदित्यादिशब्दादौ ऋतानृतपदेषु च। रीतिस्सर्वत्र चैवेयम् समाश्वसिहि मास्तु भीः ॥
यदि नाङ्गीकरोषि त्वमुपाधेः सत्यतां बत। नैव च स्यात्समाश्वासस्सत्यं सत्यं वदाम्यहम् ॥

तर्ह्यद्वितीयश्रुतेः का गतिरिति चेत्, का भीतिः? सद्गतिरेव। तवैव स्याद्दुर्गतिः धनकनकादिव्यतिरिक्तमिथ्यात्वकल्पकस्य! अस्माकं तु ब्रह्मतुल्यसत्यत्वाभावाज्जडत्वाच्च सजातीयद्वितीयराहित्यं सिद्धमेवेति नानुपपत्तिः। सत्यत्वे तस्या उच्छेदः कथम्? त्याज्यता वा कथम्? इति चेत्, सत्यत्वेऽपि न ब्रह्मतुल्यं

सत्यत्वम्। अतस्त्याज्यतोच्छेद्यता च युज्यते। कि तर्हि सत्येऽप्यस्ति तारतम्यम्? किं विस्मृता 'सत्यस्य सत्यम्' (बृ.4-3-6, 4-1-20) इत्यपौरुषेयी वाक्। 'सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह। तेन विकारास्पदमचेतनम्, तत्संसृष्टश्चेतनश्च व्यावृत्तः'(श्री.भा.1-1-2) इति श्रीभाष्यमपि। एतद्दृष्ट्या जगतः, संसारिचेतनस्य च सत्यत्वं नास्त्येव। तथाचास्त्येव सत्यत्वेऽपि तारतम्यम्। तस्मात् ब्रह्मविशेषणं सत्यपदमन्यदेव। लोकविशेषणभूतसत्यपदमन्यदेवेति चेत्, अस्तु। यथा कथञ्चिदात्मा समाधीयताम्। प्रकृते निरुपाधिकं सत्यं तु ब्रह्मैव, तत् सदा सर्वेषामुपादेयम्, सोपाधिकसत्यं तु हेयमेव। तर्हि जीवोऽपि हेयः स्यात्, तदीयसत्तायास्सोपाधिकत्वादिति चेत्, ओम्। जीवात्मस्वरूपमपि परमात्मानुभवरहितं हेयमेव। किं न जानासि त्वमेतत्सिद्धान्ते कैवल्यस्य हेयत्वम्। अत उपाधेस्सत्यत्वेऽपि न कापि हानिः। सत्ये तारतम्यं नास्तीत्याद्युक्तिस्तु अबाधितत्वे तारतम्यं नास्तीत्येतत्परा, व्यावहारिकपारमार्थिकसत्यत्वकल्पनानिषेधपरा वा। व्यावहारिकपारमार्थिकसत्यभेदकल्पनाप्येतदभिप्रायैव। श्रीशङ्कराचार्याणामप्येतावदेवाभिमतम्, पारमार्थिक्यामवस्थायां सर्वस्यापि व्यवहारस्य लोपादित्यवधेयम्। न हि पारमार्थिक्यामवस्थायां बाधाबाधादिवार्ता, सत्यमिथ्यात्वविभागो वा, हानोपादानादिर्वा वर्तते। अधिकं तु पूर्वमेवोक्तम्॥

परन्त्वेतस्मिन्नपि पक्षे जीवब्रह्मणोर्भेदमौपाधिकं स्वीकृत्याभेदस्यैव स्वाभाविकत्वाङ्गीकारात् ब्रह्मणि जीवगतदुःखादिसंबन्धप्रसक्तेर्वारयितुमशक्यत्वात्, ब्रह्मणो निरवद्यश्रुतिविरोधो दुष्परिहर इत्यालोचयन् **यादवप्रकाशाचार्य** आह—**अन्ये इत्यादि**। अन्ये जीवब्रह्मणोः अचिद्ब्रह्मणोश्च भेदाभेदयोरुभयोरपि स्वाभाविकत्वं स्वीकरोति यादवप्रकाशाचार्यः। **शक्तिभिः**=चिदचिदीश्वरात्मना परिणामोपयोगिशक्तिभिः तिसृभिः **जुष्टम्**=युक्तम् स्वीकृत्य एकाद्वितीयश्रुतिमपि तद्विशिष्टैकनिष्ठाम् जगदुः। निरवयवमखण्डमपि परं ब्रह्म स्वसंकल्पानुरोधेन तत्तच्छक्तिविशिष्टं स्वीयं रूपं त्रेधा परिकल्प्य चिदचिदीश्वररूपेण=भोक्तृभोग्यप्रेरितृरूपेणावतिष्ठते। कुत्रचित् तन्मतनिरूपणे शक्तिपदस्थाने अंशपदमपि दृश्यते। तत्तच्छक्तिविशिष्टत्वेन रूपेण विशेष्यमपि त्रेधा विभक्तमिव यतो भवति ततस्तत्रांशपदप्रयोगः। अंशपदेनानारंभकांशा वा विवक्षिताः। तद्दृष्ट्याखण्डं ब्रह्मेत्युच्यते। एतादृशशक्तित्रयविशिष्टस्य ब्रह्मण एकत्वात् विशिष्टैक्यविवक्षयाऽद्वितीयश्रुत्युपपत्तिः॥

अस्मिंस्तु भेदाभेदवादे सारतो दूषणमुक्तं भगवता **वेदार्थसंग्रहे**— 'ब्रह्माज्ञानपक्षादपि पापीयानयं भेदाभेदपक्षः' इति। ब्रह्माज्ञानवादे हि दोषाणां मिथ्यात्वात् ब्रह्म सुरक्षितं भवति। अस्मिंस्तु भेदाभेदवादे दोषाणां सत्यत्वात्, जीवब्रह्मणोर्भेदवदभेदस्यापि स्वाभाविकत्वात्, जीवगता दोषा ब्रह्मणि प्रसज्येरन्। न च भेदस्यापि स्वाभाविकत्वात्, दोषाणां ब्रह्मणि प्रसक्तिर्वार्यत इति वाच्यम्;

स्यादिच्छा भवतस्त्वेवं त्वदाज्ञां पालयेत्तु कः। विपरीतं कुतो न स्यात्? विषमालंकृतिं स्मर॥

एवं प्राधान्येन तत्कालप्रसिद्धं पक्षत्रयं प्रादर्शि। किन्तु;

पुनः पुनश्च वक्तव्यं श्रोतव्यं च पुनःपुनः। पुनः पुनश्च मन्तव्यं ध्यातव्यं च पुनः पुनः॥<br>
त्यक्त्वा सर्वं, तपः कार्यं यावता स्यात् प्रभोः कृपा। श्रूयतां पुनरप्यत्र प्रभुं स्मृत्वाभिधीयते॥

**नित्यत्वं विग्रहत्वं प्रकृतिपुरुषयोर्हेतुतां विश्वकर्तु-**
**स्तद्वैशिष्ट्यं च शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः ॥ २७ ॥**

वेदान्तशास्त्रपठनान्नैव किञ्चिद्भविष्यति । यतस्तत्तपसा गम्यं तथा देवप्रसादतः ॥
'तपः प्रभावाद्देवस्य प्रसादाच्चे'ति हि श्रुतिः । सूत्रं चापि तथा हार्दानुग्रहादिति दृश्यते ॥
वेदान्तशास्त्रं ब्रह्मर्षिश्चकारात्यद्भुतं कलौ । कृते प्रियविचाराणां बुद्धेः कालुष्यनाशकम् ॥
तस्य व्याख्या पुरैवासीत्परिणामपराऽऽत्मनः । दूषिता बहुधा सा तु बौद्धैः केवलहैतुकैः ॥
तस्योत्तरप्रदानाय तत्तत्कालानुसारतः । प्रयेतिरे महात्मानः स्वस्वबुद्ध्यनुसारतः ॥
तत्तात्पर्यापरिज्ञानाच्छङ्खान् दध्मुः पृथक्पृथक् । कलेः प्रभावात्तत्सर्वमासीद्ज्ञानविडम्बनम् ॥
तस्मै **रामानुजार्याय** नमः परमयोगिने । **शठारातिमुने**र्भावदर्शिने मार्गदर्शिने ॥
हन्तासीत्तत्कलेर्दोषादेकदेशिमतं यथा । द्वैतं किं स्यादथाद्वैतं द्वैताद्वैतमथापि वा ॥
विकल्प्यैवं स योगीन्द्रो न स्पष्टं प्राह चोत्तरम् । अतो ज्ञेयं तु तत्त्वस्य दुर्गमत्वं मुमुक्षुभिः ॥
अथापि वर्धयामासुर्विचारं तन्मतानुगाः । परस्परं दूषयन्तः तथावर्धत हा! कलिः ॥
'सारासारविवेकज्ञाः गरीयांसो **विमत्सराः** । प्रमाणतन्त्राः सन्तीति कृतो वेदार्थसंग्रहः ॥'
एवं स प्रार्थयामास **वेङ्कटेश्वर**सन्निधौ । स योगी, जगतां क्षेमो भूयात्तस्य कृपाबलात् ॥

प्रकृतमनुसरामः । एवं कञ्चनोपाधिं मध्ये कृत्वैव ब्रह्मोपादानत्वे सर्वैनिरूपणीये— **शास्त्रप्रथितम्**= वेदाख्यशास्त्रे सुस्पष्टम् प्रतीयमानम् **प्रकृतिपुरुषयोः नित्यत्वम्, विग्रहत्वम्**=परमात्मशरीरत्वम् **विश्वकर्तुः**= जगत्स्रष्टुः **हेतुताम्**=अभिन्ननिमित्तोपादानताम्, तदुपपादकतया **तद्वैशिष्ट्यं च**=सदा चेतनाचेतनशरीरकत्वं च **अजहताम्**=अत्यजताम् **अतिरिक्तः अपराधः कः?** श्रुत्युक्तमार्गेणैव सर्वश्रुतिसमन्वयप्रतिपादनातिरिक्तो दोषः कोऽस्मास्विति नर्मोक्तिः, निर्वेदोक्तिर्वा । शिष्टमग्रे (श्लो.41) भविष्यति ॥

अत्रैवं श्रीभाष्यस्य पङ्क्तयोऽवधार्याः— 'निर्विशेषवस्त्वैक्यवादिनः, भेदाभेदवादिनः, केवलभेद-वादिनश्च वैय्यधिकरण्येन, सामानाधिकरण्येन च ब्रह्मात्मोपदेशास्सर्वे परित्यक्ताः स्युः' (श्री.1-1-1) इत्यादयः । विस्तरस्तु तत्रैव द्रष्टव्यः । उक्तवादत्रयप्रतिकोटिभूतं **सविशेषाद्वैत**मेवैतत्सिद्धान्त इति हृदयम् । इतरत् पूर्वश्लोक एव द्रष्टव्यम् ॥

केयमारभटी ब्रह्मन्! वृथैव च पुनःपुनः । तत्रैवोत्तरवाक्यं तु नैव दृष्टं कुतस्त्वया ॥

समनन्तरमेव शरीरशरीरिभावकृतोऽभेद इति स्पष्टमुक्तमेव किलेति चेत्, सावधानमुच्यताम् शरीरशरीरिभावकृतः अभेदो वा, अभेदनिर्देशो वा । किमन्तरं नैव जानास्युभयोः? जनास्तु मन्यन्ते 'अभेदनिर्देशः शरीरशरीरिभावकृतः' इति अत्रोच्यते 'अभेदःशरीरशरीरिभावकृतः' इति ॥

अत्रैव वर्तते सूक्ष्मं रहस्यं महदद्भुतम् । शरीरिणश्शरीरस्य संबन्धश्चिन्त्यताम् मुहुः ॥
तथैव चिन्त्यतां गाढं स आत्मा पञ्चधा स्थितः । बहुधा दर्शितं चैतत् रहस्यं चिन्त्यताम् मुहुः ॥

[यादवप्रकाशमतपरीक्षा]

173. **ब्रह्मोपात्तान् विकारान् कतिचिदभिदधुश्चेतनाचेतनेशान्**
**नैतद्युक्तं यदीशादनधिकमनघं निर्विकारं श्रुतं तत्।**
**भिन्नाया ब्रह्मशक्तेर्विकृतय इति चेत् , ब्रह्मजन्यत्वभङ्गः;**
**भेदाभेदोपपाद्यं सकलमिति मते सप्तभङ्गी न दूष्या॥ २८॥**

अध्यात्मशास्त्रसरस्वमेतस्यान्तस्तु वर्तते। शब्दं त्यक्त्वा चिन्तयार्थं मननं क्रियतां मुहुः॥
बुद्ध्यधीशं गुरूंश्चैव साक्षीकृत्य विचिन्तय। तयोरनुग्रहाच्चैव सर्वं सुविदितं भवेत्॥ २७॥

एवं सामान्यतः स्वपक्षस्यैव साधीयस्त्वं प्रतिपाद्य, स्वपक्षप्रतिष्ठायै परमतानि विमिमृक्षुः प्रथमं **यादवप्रकाशमतं** विमृशति—**ब्रह्मोपात्तानित्यादिना**। एते हि स्वाभाविकभेदाभेदवादिन इति प्रसिद्धाः। सर्वश्रुतिसमन्वयप्रदर्शनोत्साहेनैते यादवप्रकाशाः जगद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकावेव प्रतिपादयन्ति। यथा समुद्र एक एव फेनबुद्बुदतरङ्गाद्याकारैः परिणतो नानानामरूपभाक् भवति, अथापि व्यवस्थितासंकीर्ण-व्यवहारविषयश्च भवति, तथैव परं ब्रह्मापि शक्तित्रयविशिष्टं सत्तत्तदंशेन त्रेधा परिणमत इत्याहुः। **कतिचित्**=केचित् यादवप्रकाशादयः **चेतनाचेतनेशान्**=चिदचिदीश्वरान् **ब्रह्मोपात्तान्**=ब्रह्मणैव विचित्रशक्ति-त्रययुक्तेन स्वेच्छयैव स्वीकृतान् **विकारान्**=स्वरूपविकाररूपान् **अभिदधुः**=वर्णयामासुः॥

एतन्निराकरोति—**नैतदुक्तमिति**। **यत्**=यस्मात् **तत्**=परंब्रह्म **ईशात्**=तद्दृष्ट्या ब्रह्मैकांशरूपात् ईश्वरात् **अनधिकम्**=अनतिरिक्तम् **अनघम्**=सकलदोषविदूरम्; अत एव **निर्विकारम्**=स्वरूपतो विकारशून्यम् **श्रुतम्**='निरवद्यं निरंजनम्' (श्वे.6-19) इत्यादिश्रुतिप्रतिपन्नम्। परंब्रह्म सकलदोषविदूरमिति अनेक-श्रुतिनिश्चितम्, सर्वसंमतं च। एवं सति ईश्वरस्यापि विकारिकोटौ गणना कथम्? निश्चलसमुद्रस्थानापन्नं ब्रह्म। तेन ब्रह्मणो न निर्विकारत्वनिर्गुणत्वादिश्रुतिविरोधः। अत्र फेनबुद्बुदतरङ्गस्थानापन्नाः चिदचिदीश्वरा इति चेत्; ब्रह्मान्यत्, ईश्वरोऽन्यो भवति। इदं 'ईशावास्यम्' (ई.1) 'एष सर्वेश्वरः' (बृ.6-4-22) 'तमीश्वराणां परमं महेश्वरम्' (श्वे.6-7)इत्यादिश्रुतिविरुद्धम्। 'ज्ञाज्ञौ द्वावजौ' 'प्रकृतिं पुरुषं चैव विद्ध्यनादी' (गी.13) इत्यादिश्रुतिस्मृतिविरुद्धा त्रयाणामुत्पत्तिः। ब्रह्मणस्सकाशादेव त्रयाणामुत्पत्त्या ब्रह्मणो विकारित्वात् कथं ब्रह्मणो निर्विकारत्वं रक्षितम्? परिहारं शङ्कते—**भिन्नायाः**=ब्रह्मणो व्यतिरिक्तायाः **ब्रह्मशक्तेः**=ब्रह्मगतशक्तेः **विकृतयः**=विकाररूपा एते त्रयः। अतश्च ब्रह्मणो निर्विकारत्वमागतम् **इति चेत्**, तर्हि **ब्रह्मजन्यत्वभङ्गः**= ब्रह्मभिन्नाया ब्रह्मशक्तेरेव जगदुपादानत्वात् ब्रह्मजन्यत्वस्य भङ्गः। ततश्च 'यतो वा इमानि भूतानि जायन्ते' 'जन्माद्यस्य यतः' इत्यादि श्रुतिसूत्रविरोधः। पुनः परिहारं शङ्कते—**सकलम्**=ब्रह्मोपादानत्वादिकं सर्वम् **भेदाभेदोपपाद्यम्**=ब्रह्मणः ब्रह्मशक्तेश्च नात्यन्तं भेदः, किन्तु भेदाभेदौ। तथा च ब्रह्माभिन्नाया ब्रह्मशक्ते-रुपादानत्वात् ब्रह्मोपादानत्वमुपपादनीयम्, **इति मते**=इति यदि संमतम्, तर्हि **सप्तभङ्गी**=जैनसंमता सप्तभङ्गी **न दूष्या**=न दूषयितुं शक्या। जगति विरोधः कुत्रापि नास्तीति प्रतिपादनाय जैनैरुक्ता नीतिः

[स्वरूपपरिणामवादविमर्शः]

174. **विश्वं चित् तद्गुणानुद्भव इह घटते रत्नगन्धादिनीत्या**
**सर्वं ब्रह्मेत्यधीतं त्रिविधमिति च तद्वाशताद्यस्य चोक्तम्।**

'सप्तभङ्गी' इत्युच्यते (अद्रव्य.12)। सा सर्वैरपीतरैः निराक्रियते। भेदाभेदयोः परस्परविरुद्धयोरेकत्र भवताप्यङ्गीकारात् जैनमतं कथं खण्डयितुं शक्यम्? अतो भेदाभेदवादो न समीचीनः॥

ननु 'ईश्वराव्याकृतप्राणैर्विराट सिन्धुरिवोर्मिभिः। यत् प्रनृत्यदिवाभाति तस्मै सद्ब्रह्मणे नमः॥' इति **कात्यायन**महर्षिवाक्यं कथमुदास्तुं शक्यम्? विराट्=परं ब्रह्म, सिन्धुः=समुद्रः ऊर्मिभिरिव नानाविधैस्तरङ्गैर्यथा, तथा ईश्वराव्याकृतप्राणैः=ईश्वरः अव्याकृतम्=प्रकृतिः प्राणः प्राणोपाधिर्जीवः, 'प्राणो ह पिता, प्राणो माता' (छां.7-15-1) इत्यादौ जीववाची प्राणशब्दः, तथा च चिदचिदीश्वररूपैः प्रनृत्यदिव आभातीत्यर्थः। एवञ्च समुद्रतरङ्गन्यायेन ब्रह्मैव त्रेधा भवतीत्यर्थः। तथा च यादवप्रकाशमतं महर्षिसंमतं कथं निराकर्तुं शक्यमिति चेत्, अस्मिन् वाक्ये द्वारनिषेधादर्शनेन, सद्वारकपरिणामस्य 'द्वारमत्राभ्युपेतम्' इत्यनुपदमेवाभिधानात् (श्लो.26) न दोषः। समुद्रतरङ्गदृष्टान्तप्रदर्शनात्, स्वरूपपरिणाम एवाङ्गीकार्य इति चेत्, दृष्टान्ते विद्यमानं सर्वं दार्ष्टान्तिकेऽङ्गीकार्यमिति नियमाभावात्। 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' (छ.6-1-4) इति श्रौतमृद्दृष्टान्तानुरोधेनैव नेयत्वात्। अन्यथा समुद्रवत् मृद्वच्च ब्रह्मणो जडत्वस्यापि प्रसक्तेः। एकस्यानेकधा भावे, उपादानस्योपादेयेऽनुवृत्तिमात्रे मृद्दृष्टान्तः। समुद्रदृष्टान्तोऽप्युक्ते वचने 'प्रनृत्यदिव' इति कथनात्, तावन्मात्रे॥

स्थित्वा तीरे समुद्रस्य पश्यतामार्भटं तथा। विविधांश्च तरङ्गादीन् आनन्दः स्वैकगोचरः॥

अतस्साक्षात्परिणामो न कात्यायनकारिकाविषय इत्यवधेयम्। 'तदात्मानं स्वयमकुरुत' इत्यत्राप्यात्मानं चेतनाचेतनशरीरकं बहुधाऽकुरुतेति विशिष्टपरिणाम एव विवक्षितः। न च 'आत्म'शब्दो निष्कर्षकः। अतो विशेष्यमात्रवाचक इति कथं विशिष्टपरिणामः सिद्ध्येदिति वाच्यम्, 'आत्म' शब्दस्यानेकार्थत्वात्, आत्मानम्=स्वम् इत्यर्थात् स्वपर्यायस्य तस्य विशिष्टपरत्वे बाधकाभावात्। अथवा सद्वारकपरिणामेऽपि तथा निर्देशसंभवात्। अन्ततोऽन्तर्यामित्वपरिणामस्य पूर्वमुपपादितत्वेन तथाऽभिधानान्न स्वरूपपरिणामसिद्धिः॥ २८॥

यादवप्रकाशमते, चिदीश्वरयोरिवाचितोऽपि ब्रह्मविकाररूपत्वमुच्यते। तर्हि घटादौ चैतन्यं कुतो नोपलभ्यते? इति शङ्कायास्तदुक्तं परिहारमनूद्य दूषयति—**विश्वमित्यादिना**। **विश्वम्**=जगदिदम् **चित्**=चैतन्यस्वरूपमेव। चैतन्यस्वरूपब्रह्मविकारत्वात्। तर्हि घटादौ चैतन्यं कुतो नोपलभ्यत इति चेत्— **इह**=जगति घटादौ **तद्गुणानुद्भवः**=तस्य ब्रह्मणो यो गुणः=चैतन्यस्वरूपत्वम्, तस्य **अनुद्भवः**=अनुत्कटता **रत्नगन्धादिनीत्या घटते**। रत्नः किल पार्थिवः। गन्धः पृथिव्या गुणः। अथापि सः रत्ने नोपलभ्यते। कुत इति प्रश्ने—अत्यन्तानुत्कटत्वादिति सर्वैर्वक्तव्यम्। तद्वदेव सच्चिदानन्दस्वरूपब्रह्मकार्ये जगति,

**तस्मात् सर्वानुवृत्तं सदनवधिदशाचित्रमित्यप्ययुक्तं**
**प्रत्यक्षागोचरत्वप्रभृतिबहुभिदावादिसर्वोक्तिबाधात् ॥ २९ ॥**

घटादौ जडे सत्तामात्रस्य प्रकटता, चिति सच्चित्त्वयोः प्रकटता, ईश्वरे सच्चिदानन्दानां प्रकटता घटते । अतो न विरोधः । अत्र प्रमाणमाह—**'सर्वं ब्रह्म' इत्यधीतमिति**='सर्वं खल्विदं ब्रह्म' (छां.3-14-1) इति श्रुत्योक्तम् । **ब्रह्म त्रिविधमिति च अधीतम्**='भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे.1-12) इति चिदचिदीश्वररूपेण ब्रह्म त्रिविधमित्युक्तम् । अयमर्थक्वदः स्यादित्यत्र—**अस्य**=ब्रह्मणः **दाशतादि च उक्तम्**='ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत' इति **दाशाः**=धीवराः, **दासाः**=नीचजातीयाः गर्भदासाः **कितवाः**=धूर्ताः पापिनः 'एतेऽपि ब्रह्मे'ति च उक्तम् । न हि तत्तादृशस्योभयलिङ्गस्य ब्रह्मणः नीचवस्तुवाचिपदैः सामानाधिकरण्येन निर्देशः स्तुतये कल्पेत । मन्त्रिणि राजदृष्टिर्भवेदभ्युदयाय, राजनि मन्त्रिदृष्टिस्त्वभ्याघातायैव । अत इदं वचनं यथार्थं ग्राह्यम् । **तस्मात्**=एवं पापिवाचिशब्देन ब्रह्मणः सामाधिकरण्यनिर्देशात् **सत्**=सद्रूपं ब्रह्म **सर्वानुवृत्तम्**=उपादानत्वादुपादेयजगत्यनुवृत्तम्, अत एव **अनवधिदशाचित्रम्**=असंख्येयाभिरवस्थाभिः विचित्रनानारूपं वर्तते इति श्रुत्युक्तत्वादङ्गीकार्यम् ॥

तमेतं स्वरूपपरिणामवादं निराकरोति—**इत्यप्ययुक्तमिति** । कुतः? इत्यत्र—**प्रत्यक्षेत्यादि** । **प्रत्यक्षागोचरत्वम्**=चक्षुरादीन्द्रियाग्राह्यत्वम् । **तत्प्रभृतयः बहुभिदाः**=बहुविधाः भेदाः=वैलक्षण्यानि; **तदादिसर्वोक्तिबाधात्**=तादृशसर्वविधश्रुतिवाक्यविरोधात् **अयुक्तम्**। जगद्ब्रह्मणोः परस्परमत्यन्तवैलक्षण्यं तु सर्ववेदान्तिसंमतम् । जगत्तु 'इदम्' इति स्पष्टनिर्देशार्हम् । ब्रह्म तु 'अद्रेश्यमग्राह्यम्' (मुं.1-1-6) इत्यादौ तद्विपरीतमुपदिष्टम् । उभयोरभेदः कथं वा संभवेत्? न च 'सर्वं खल्विदं ब्रह्म' इत्यपि श्रुतिरुपदिशति 'इदम्' इति प्रत्यक्षप्रतिपन्नं सर्वं जगत् 'ब्रह्म' इति ब्रह्माभेदम् । तत् कथं त्याज्यम्? सत्यम्, इदं वाक्यं प्रकारान्तरेण नेतुं शक्यत्वात् सावकाशम् । न चादृश्यत्वादिश्रुतय एवान्यथा नीयन्तामिति वाच्यम्, घटपटादिदर्शनस्यापि ब्रह्मदर्शनतापत्तेः ॥ 'इन्द्रियैरुपलब्धं यत्तत्तत्त्वेन प्रदर्श्यते । जातास्तत्त्वविदो बालाः, तत्त्वज्ञानेन किं फलम् ॥' इति न्यायावतारप्रसङ्गात् । अधिकं तु समनन्तरश्लोके ॥

सामानाधिकरण्यं हि धर्मभेदेऽपि धर्म्यैक्यपरमिति 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्' इति शाब्दिकसामानाधिकरण्यलक्षणेन, लोकतश्च ज्ञायते । अस्य संपूर्णविचारस्त्वग्रे (बुद्धि.92-100) भविष्यति । एतच्च सामानाधिकरण्यं मुख्यम्, औपचारिकम् चेति द्विविधम् । औपचारिकमेव गौणमित्युच्यते । मुख्यं सामानाधिकरण्यं वस्तुस्वरूपकृतम्, गौणं तु गुणसादृश्यप्रयुक्तम् । आद्यम् 'नीलमुत्पलम्' इत्यादौ, द्वितीयम् ऐश्वर्याधिके पुरोहिते 'अयं राजा' इत्यादौ । औपाधिकमप्यस्ति सामानाधिकरण्यम् 'लोहितस्स्फटिकः' इत्यादौ । इदं त्वर्थगतं सामानाधिकरण्यम् एकार्थपर्यवसानरूपम् । एतद्विस्तरोऽप्यग्रे (बुद्धि.92-100) । शब्दगतं सामानाधिकरण्यं समानविभक्तिकत्वरूपम्, विरुद्धविभक्तिराहित्यरूपं वेत्यादि यथाप्रमाणं व्यवस्थापनीयम् । जगद्ब्रह्मणोसामानाधिकरण्यमपि किंरूपमिति परीक्षणीयमेव । अत्र

[स्वरूपपरिणामवादासंभवः]

175. **अव्यक्तं त्वन्मतेऽपि ह्यनवयवमथाप्येतदंशा विकाराः**
**ते चान्योन्यं विचित्राः पुनरपि विलयं तत्र तत्त्वेन यान्ति ।**

'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' (ब्र.सू.2-3-42) इति सूत्रयन् बादरायण एव वादी भवति । अत्र जीवब्रह्मणोरंशांशिभावः कीदृशस्सूत्रकारसंमत इति परीक्ष्यामः । अचिद्ब्रह्मणोस्समानाधिकरण्यं तु 'उभयव्यपदेशात्त्वहिकुण्डलवत्' (ब्र.सू.3-2-26) इत्यादौ निरूप्यते ॥

न वयं दुर्वलाश्शक्ताः केशाकेश्यादिके रणे । त्यक्त्वा पूर्वग्रहाद्यं तु वक्ष्यामस्त्वात्मसाक्षिकम् ॥
शब्दार्थप्रत्ययानां तु साङ्कर्यं वक्ति दुस्त्यजम् । **पतञ्जलिर्योगिवर्यः**, तस्मादस्त्येव सङ्करः ॥
यश्चिन्तयितुं शक्तस्त्यक्त्वा शब्दं तु केवलम् । अर्थम्, तथा प्रत्ययं च पृथक् धीरस्स वेत्ति तत् ॥

ननु भोः! किमिदं तत्त्वमविज्ञायैव वक्षि यत्किञ्चित् । शब्दार्थौ तु शक्यविभागौ; अतस्त्यक्त्वा शब्दमर्थश्चिन्तयितुं कथञ्चित् शक्यः । ज्ञानार्थौ तु कथं शक्यविभागौ? ज्ञानमन्तरार्थप्रतीतेरेवासंभवात् । अर्थस्य प्रतीतिरेव किल ज्ञानम् । एवमर्थमन्तरा प्रतीतिः कथं, प्रतीतिमन्तरार्थसिद्धिर्वा कथम्? यश्चायं निराकारज्ञानवादः, स धर्मिविषयकः, न धर्मविषयकः, धर्माः किल कल्पिताः । अतो ज्ञानार्थयोर्विभागः कथम् शक्य इति चेत्, जानामि भोः! 'सहोपलंभनियमादभेदो नीलतद्धियोः' इति वादम् । अथापि—

ज्ञानं तु व्यापकम्, तस्मादर्थो व्याप्यः प्रतीयते । अतश्च सूक्ष्ममतिभिः विवेक्तुं शक्यते ध्रुवम् ॥
एवमत्यन्तसूक्ष्मत्वात् साङ्कर्यं स्वरसं तयोः । भविष्यति विचारोऽस्य विस्तरादग्रिमे सरे ॥
अभ्यस्यतां तु प्रथमं शब्दार्थानां विवेचने । प्रापिता सूक्ष्मतां बुद्धिरन्यत्रापि क्षमा भवेत् ॥
यत्र यत्राविनाभावस्तत्र सर्वत्र वर्तते । अभेदवादः, स्यात् कामम्, मानं भेदे तदेव नः ॥
यथा कूष्माण्डचोरस्य स्वांशसंमार्जनं भवेत् । चौर्ये साक्षि, तथैवात्र ज्ञायतां भेदसाधने ॥
सहोपलंभ एवायं पर्याप्तो भेदसाधने । सहत्वं भेदगर्भं हि, वक्ष्यते तच्च विस्तरात् ॥
प्रकृतेऽशाधिकरणमप्येवं हि विचिन्त्यताम् । विद्यते किल वैचित्र्यं वस्तूनां दुरपह्नवम् ॥
अथापि बुद्धेश्चित्रायास्समाधानस्य सिद्धये । शमार्थं किल शास्त्राणि रचितानि मनीषिभिः ॥
तच्छास्त्रं न यथा शस्त्रं स्यात्तथा चिन्त्यतां बुधैः । शास्त्रं विज्ञानपर्यायमित्युक्तं स्मर्यतां सदा ॥ २९ ॥

स्वरूपपरिणामवादमेव प्राचीनं परिष्कर्तुं प्रयतमानस्य पक्षमनूद्य निराकरोति—**अव्यक्तमित्यादिना**। **त्वन्मतेऽपि**=विशिष्टपरिणामवादिनस्तव मतेऽपि **अव्यक्तम्**=प्रकृतितत्त्वम् **अनवयवं हि**=निरवयवमित्यत्र न हि विवादः । सांख्यानां प्रकृतिः त्रिगुणात्मिका, स्वतन्त्रा च । सिद्धान्ते तु त्रिगुणाश्रया ब्रह्माधीना च । इतरत्सर्वं नित्यत्वनिरवयवत्वादिकं हि समानम् । सांख्यमते प्रकृतेर्गुणत्रयात्मकत्वात्सा सावयवेति केचन मन्येरन् । न तत्समीचीनम् । यतः प्रकृतिः तदेकदेशेन केवलसत्त्वेन वा, रजसा वा, तमसा वा न परिणमते, किन्तु—तावत्संघातरूपा प्रकृतिरेव महदादिरूपेण परिणमते । अतो त्रिगुणात्मकमेव द्रव्यमेकम्, गुणगुणि-

इत्थं ब्रह्मापि जीवः परिणमति विहृत्यर्थमित्यप्यसारं
स्वानर्थैकप्रवृत्तेः; प्रसजति च तदा सर्वशास्त्रोपघातः ॥ ३० ॥

**[भास्करमतपरीक्षा]**

176. ब्रह्मैवोपाधिभिन्नं भजति बहुविधां संसृतिं, सोऽप्यनादिः
तस्मान्नात्यन्तभिन्नो जड इति तु मते दुःखमद्वारकं स्यात्।

भेदानङ्गीकारात्तथोच्यते । **अथापि**=एवं सत्यपि; अनेन वक्ष्यमाणार्थस्याविरोधः सूच्यते । **विकाराः**=महदादयस्तत्परिणामभूताः **तदंशाः**=प्रकृत्येकदेशरूपा एव । न हि प्रकृतिस्संपूर्णा महद्रूपेण परिणमते; तथा सति प्रकृतिरेव न शिष्येत । न चेष्टापत्तिश्शङ्क्या, अन्तिमतत्त्वस्यैकस्यैव परिशेषप्रसङ्गात् । एवञ्च प्रकृतितत्त्वस्य निरंशत्वेऽपि, अंशत एव परिणामो वाच्यः । **च**=अपि च **ते**=प्रकृतिविकारभूताः जगति वर्तमानाः सर्वे पदार्थाः **अन्योन्यम्**=परस्परं **विचित्राः**=विलक्षणाः । **पुनरपि ते तत्र**=प्रलयकाले ते पदार्थाः प्रकृतावेव **तत्त्वेन**=वस्तुत एव, न तु कल्पिततया **विलयम्**=अन्ते लयम् **यान्ति**=प्राप्नुवन्ति । **इत्थं**=एवमेव **ब्रह्मापि**=परब्रह्मापि **विहृत्यर्थम्**=विहारार्थम्=लीलारसानुभवाय **जीवः**=जीवरूपः **परिणमति**=परिणामं प्राप्नोति **इत्यपि**=एवं वर्णनमपि **असारम्**=प्रतिष्ठितं न भवेत् । कुतः? **स्वानर्थैकप्रवृत्तेः**=स्वसङ्कटार्थमेव जगत्सृष्टौ ब्रह्मणः प्रवृत्तेरापत्तेः । तत्सहनशक्तिस्तस्य वर्तत इति नायं दोष इत्यत्र—**तदा** स्वदुःखार्थमेव बुद्धिपूर्वकप्रवृत्त्या **सर्वशास्त्रोपघातश्च प्रसजति**=सकलशास्त्रविरोधापत्तिः॥

**अयमाशयः**—युक्तिस्तु समीचीनैव । परन्तु 'त्वन्मतेऽपि' इत्युक्तं तु न युक्तम्, यतस्सिद्धान्ते जडायाः प्रकृतेः स्वतःपरिणामो नाङ्गीक्रियते, किन्तु ब्रह्मशरीरभूतायास्तस्याः शरीरिणःपरमात्मनः संकल्पादेव परिणामः । अतो हेयप्रत्यनीककल्याणैकतानस्वरूपस्य निर्विकारस्य परमपुरुषार्थरूपस्य ब्रह्मणः स्वरूपपरिणामिन्याः जडायाः-प्रकृतेस्तुलनं सर्वथानुचितमित्याशयः ॥

यथैव वृक्षरूपेण बीजं विकसति स्वयम् । पत्रपुष्पफलाद्यंशैरसंकीर्णं स्वतो भवेत् ॥
तथैव बीजं जगतो ब्रह्माप्यद्भुतशक्तिकम् । नानारूपमसंकीर्णं चित्रं विकसति स्वयम् ॥
सैषैवाद्भुतशक्तिस्तु मायेति परिकीर्तिता । स मायी सृजते विश्वमिति वक्ति श्रुतिःस्वयम् ॥

एवञ्च ब्रह्मापि लीलार्थं चिदचिदीश्वररूपेण परिणमत इत्यङ्गीकारे कानुपपत्तिः? यदि 'परिणमते' इति पदे न समाधानम्, तर्हि 'विकसति' इति कथ्यताम् । अथवा विवर्तत इत्युच्यताम् ॥

सर्वे शब्देन तृप्यन्ति, शब्देनैव द्विषन्ति च । अर्थतत्त्वं न जानन्ति पण्डितप्रवरा अपि ॥
गुणदोषादिकं सर्वं पश्यन्ति स्वस्वभावतः । सृष्टिविज्ञानरीत्या तु द्रष्टव्यं तद्विवेकिभिः ॥ ३० ॥

ब्रह्मव्यतिरिक्तस्योपाधेस्सत्यतावादिनो **भास्करस्य** मतं विमृशति—**ब्रह्मैवेत्यादि** । **ब्रह्मैव**=नित्यशुद्धबुद्धमुक्तस्वरूपं परं ब्रह्मैव **उपाधिभिन्नम्** अविद्याख्योपाधिना नानात्वमापन्नम् **बहुविधां संसृतिम्**=

**सौभर्यादौ व्यवस्था न कथमुपधिभिः स्वावतारेषु चैषा**
**सर्वज्ञः स्वैक्यवेदी कथमनवधिभिर्जीवदुःखैर्न दुःख्येत् ॥ ३१ ॥**

नानाविधसांसारिकसुखदुःखादिकम् **भजति**=अनुभवति । अत्र शङ्करमत इवाविद्याश्रयादिविकल्पानां नावकाश इति भावः । यतः— **सोऽपि**उपाधिरपि **अनादिः**=नित्यः, अत एव सत्यश्च, मिथ्याभूतस्यानादित्वादि निरूपणासंभवात् । उपाधेर्मिथ्यात्वे, तत्कल्पकोपाध्यन्तरकल्पनाया आवश्यकत्वादनवस्थाप्रसङ्गः ॥

ननु उपाधीनां ब्रह्मभिन्नत्वे सत्यत्वे च प्रलयकाले नाशासंभवात्, 'एकमेवाद्वितीयम्' इति प्रलयकालिकमैक्यं विरुध्येतेत्यत्राह— **तस्मात्**=ब्रह्मणः **नात्यन्तभिन्नः**=जडः उपाधिः अत्यन्तं भिन्नो न । जडत्वादेव अत्यन्तमभिन्नोऽपि न, किन्तु भिन्नाभिन्नः । उपाधिब्रह्मणोस्तु भेदवत्, अभेदस्यापि स्वाभाविकत्वात् प्रलयकाले ब्रह्मव्यतिरिक्तासद्भाववचनानामप्युपपत्तिरिति सर्वश्रुतिनिर्वाह इत्याशयः। एवं च यद्यपि जीवब्रह्मणोरभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः। उपाधिश्च मायाविद्यादिपदवाच्या जडा प्रकृतिरेव । सा चानादिः । अतश्चाश्रयविकल्पः, अनवस्था वा न भवतीति एषामभिप्रायः। अस्मिन्नपि मते दूषणमाह— **इति त्वित्यादि**। **इति मते तु**=इत्यस्मिन्मते तु **दुःखम्**=सांसारिकं दुःखम् **अद्वारकम्**=साक्षादेव ब्रह्मनिष्ठम् स्यात् । जीवब्रह्मणोरभेदस्यैव स्वाभाविकत्वादिति हेतुः । ननूपाधीनां ब्रह्मणश्च भेदात् दुःखादिकमौपाधिकमेव, न तु स्वाभाविकमिति न दोष इति चेत्, तत्राह— **सौभर्यादावित्यादि** । योगिनः सौभर्यदिः योगप्रभाववशादनेकशरीरपरिग्रहे **उपधिभिः**=उपाधिभिः **व्यवस्था**=सुखादिव्यवस्था सौभर्यात्मनि **कथं न**= कुतो न भवति? तत्र हि उपाधिभेदेऽपि सुखानुभवः एकस्यैव सौभरेर्भवतीति शरीररूपोपाधिभेदेऽपि सुखादिकं तत्तच्छरीरावच्छिन्नस्येति व्यवस्था नास्ति किल! तादृशी व्यवस्था प्रकृते कथं नाभवदित्यर्थः । अतः जीवेश्वरभेदस्यौपधिकत्वेऽपि जीवगतानां दुःखानां ब्रह्मणि प्रसङ्गोऽनिवार्य एव । ननु सौभरेः भोगार्थमेव युगपदनेकशरीरस्वीकारात्, तादृशयोगप्रभाववशादेव सुखदुःखादि तत्तच्छरीरावच्छिन्नस्यात्मनस्तावच्छरीरप्रतिसंबन्धिनस्सङ्गच्छत इत्यत्राह— **स्वावतारेष्वित्यादि**। **एषा**=व्यवस्था **स्वावतारेषु**=**स्वस्य**=ब्रह्मणः **अवतारेषु**= रामकृष्णाद्यवतारेषु **उपाधिभिः**=शरीराद्युपाधिभिः **कथं न?** शरीरभेदे सत्यात्मा एक एव किल ॥

नन्ववताराणां कालभेदस्य सत्त्वात्, जन्मान्तरविस्मरणवत् स्यादित्यत्राह— **सर्वज्ञ इत्यादि**। जीवानां कर्मवश्यत्वाज्जन्मान्तरास्मरणं घटेत । परमात्मनस्तु नित्यसर्वज्ञत्वात् कथं विस्मरणसंभवः । अतः— **सर्वज्ञः**=सहजनित्यसर्वज्ञः **परमात्मा स्वैक्यवेदी**=जीवानां स्वस्य चैक्यं जानन् **अनवधिभिः**=असंख्यैः **जीवदुःखैः**=स्वाभिन्नजीवात्मगतदुःखैः कथं न दुःख्येत्? अत औपाधिकजीवब्रह्मभेदवादोऽपि न साधीयान् । ननु तर्हि अभेदवत् भेदस्यापि स्वाभाविकत्वाङ्गीकारे निर्वाहः सुलभः स्यादिति चेत्, भास्करमते तथानङ्गीकारात्, यादवप्रकाशैरेव तथाङ्गीकारात् । एतन्मतस्य अनुपदमेव (श्लो.28), पूर्वसरे च (श्लो.11) विस्तरेण निरासात् । भास्करेणापि तथाङ्गीकारे तद्दोषाणामत्राप्यतिदेशस्य दुर्वारत्वात् । अतो जीवब्रह्मभेदः स्वाभाविक एव ॥

[भास्करमते बन्धमोक्षव्यवस्थानुपपत्तिः]

177. बन्धो ब्रह्मण्यशेषे प्रसजति; स यदोपाधिसंयोगमात्रात्
सादेश्याच्चेदुपाधौ व्यभिचरति भवेत् बन्धमोक्षाव्यवस्था ।

ननु जगति 'अहम्' इत्यभिमानस्य प्रतिशरीरं भिन्नत्वात्, अहंकाररूपोपाधिभेदाद्भेदव्यवहारः। यदा चैतादृशोपाधिलयः तदैव 'अहमेवेदं सर्वम्', 'अहं ब्रह्मास्मि', इत्याद्यनुभवस्संगच्छत इति चेत्; तर्हि भेददर्शनवेलायां तस्याज्ञानं वा, भ्रान्तिर्वा वाच्या । उभयमपि न संगच्छते, यतः 'ब्रह्म नित्यसर्वज्ञमि'ति श्रुतिसिद्धम् । अतस्तस्य साक्षाद्दोषाश्रयत्वे 'निरवद्यम् निरञ्जनम्' इत्यादिश्रुतिविरोधः । कुत्रचिदैकात्म्योपदेशोऽपि सर्वव्यवहारातीततत्त्वदृष्ट्या, न तु व्यक्तिदृष्ट्या । अतो यावद्विचारो बुद्धिभेदश्च, तावदैकात्म्यवादो न कर्तव्य एव । किञ्च अन्तःकरणभेदसिद्धौ जीवभेदसिद्धिः, जीवभेदे सिद्धेऽन्तःकरणभेदसिद्धिरित्यन्योन्याश्रयः। संसारस्यानादित्वान्नायं दोष इति चेत्, तर्हि 'जीवः, ईशः, विशुद्धा चित्, तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादयः' इत्युक्तविवर्तपक्ष एवाङ्गीक्रियताम्, को लाभ उपाधिसत्यताङ्गीकारेण? अतः पक्षद्वयस्यापि समानत्वात् औपाधिकजीववादोऽपि न साधीयान् । विवर्तवादस्त्वनुपदमेव विमृश्यते ॥ ३१ ॥

'ब्रह्मैवोपाधिभिन्नम्' इति पूर्वश्लोके सामान्यतो दूषणमुक्त्वा 'उपाधिभिन्नम्' इत्यंशं विशिष्य विकल्प्य दूषयति—**बन्ध** इत्यादिना । अत्रैवं विकल्पाः ज्ञेयाः—१. किम् उपाधिसंयुक्तं ब्रह्मैव जीवः? २. उत घटाकाशवत् उपाध्यवच्छिन्नं ब्रह्म जीवः? ३. उत घटजलवत् उपाधिना छिन्नं ब्रह्म जीवः? ४. उत विदारिताग्रवेणुवत् किञ्चिदंशेन पृथक्कृतं ब्रह्म जीवः? ५. अथवा, उपाधिसंबन्ध एव कश्चन विभागं कल्पयित्वा विभक्तो ब्रह्मभागो जीवः? ६. अथवा प्राप्ताप्राप्तविवेकन्यायेनोपाधिरेव जीवः? इति ॥

तत्र प्रथमकल्पे दोषमाह—**यदा उपाधिसंयोगमात्रात् ब्रह्मैव जीवः**, तदा **सः बन्धः अशेषे ब्रह्मणि प्रसजति**=अखण्डे परिपूर्णे ब्रह्मण्येव बन्धः साक्षात्प्रसज्येत । बन्धशून्यं शुद्धं ब्रह्म नावशिष्येत । ततश्च 'अपहतपाप्मा, निरवद्यम्' इत्यादिश्रुतिविरोधः । द्वितीयमनूद्य दूषयति—**सादेश्यादित्यादि। सादेश्यम्**= समानदेशता । यथाऽऽकाशे यत्र घटसंयोगः, तत्रैव घटावच्छिन्न आकाशः 'घटाकाशः' इति व्यवह्रियते, न तु घटसंयोगशून्ये बाह्य आकाशे । एवमत्रापि यद्देशावच्छेदेन ब्रह्मणि उपाधिसंयोगः, तद्देशावच्छेदेनैव, ब्रह्म जीव इत्युच्यते, न त्वन्यदेशावच्छेदेन । एतेन बन्धोऽपि तद्देशावच्छेदेनैव । इतरदेशावच्छेदेन तु विशुद्धमेव ब्रह्मावतिष्ठते । स्वत एव ब्रह्मणो नित्यशुद्धबुद्धमुक्तस्वरूपत्वात् । अपहतपाप्मत्वादिवचनानां एतदेव विशुद्धं ब्रह्म विषय इति न काचिदनुपपत्तिरिति चेत्, तर्हि **उपाधौ व्यभिचरति**=यदा एकं देशं परित्यज्यान्यदेश-संबद्धो भवत्युपाधिः, तदा **बन्धमोक्षाव्यवस्था**=बद्धमुक्तव्यवस्थाभावः स्यात् ॥

**अयमर्थः**—उपाधिसंयोगदेशावच्छेदेन जीवभावः, बन्धश्च । उपाधिविगम एव चास्मिन् पक्षे मुक्तिपदार्थः । एवञ्च शरीराद्युपाधौ गच्छति, पूर्वदेशावच्छेदेनोपाधिसंयोगनाशेन मुक्तिः; उत्तरदेशावच्छेदेनो-पाधिसंयोगोत्पत्त्या बन्धः इति प्रतिक्षणं बन्धः, मोक्षश्च भवेताम् । बन्धानन्तरं मोक्षस्य न्याय्यत्वेऽपि मोक्षानन्तरं बन्धसंभवे मोक्षोऽर्थशून्यः स्यात् । अतो द्वितीयः पक्षोऽपि न युक्तः ॥

**अच्छेद्ये छेदनादिर्विहत उपधिभिः न स्वतोंऽशस्तवास्मिन्**
**नोपाधिर्जीवतामप्यनुभवितुमलं ब्रह्मरुपोऽप्यचित्त्वात् ॥ ३२ ॥**

**[ब्रह्मविवर्तवादपरीक्षा]**

178. **नापि ब्रह्मण्यविद्यास्थगितनिजतनौ विश्वमेतत् विवृत्तं**
**तस्मिन् सा स्वप्रकाशे कथमिव विलगेत् तत्प्रकाशैकबाध्या ।**

तृतीयचतुर्थपक्षयोर्दोषमाह—**अच्छेद्य इत्यादि** । **अच्छेद्ये**=छेदनाद्यनर्हे, ब्रह्मणि **उपधिभिः**= उपाधिभिः **छेदनादिः**=छेदनकर्मत्वं वा, तन्मूलकः ब्रह्मणस्सखण्डत्वादिर्वा **विहतः**=निष्कलम्(श्वे.6-19) इत्यादिश्रुतिबाधितः । एकपार्श्वे विदारितवेणुवत् अखण्डभागोऽन्यः, उपाधिना खण्डितभागोऽन्य इति चतुर्थपक्षेऽपि एकभागे खण्डितत्वात् उक्तश्रुतिविरोधः समानः ॥

पञ्चमकल्पे दोषमाह—**नेत्यादि**। स्वत एव ब्रह्मणि सूक्ष्मा अंशा वर्तन्ते । उपाधिसंयोगेन व्यज्यन्ते, उपाध्यपगमे तु निरंशमिव वर्तते ब्रह्म इति पञ्चमकल्पस्याशयः। **तव अस्मिन्**=ब्रह्मणि **स्वतः**=स्वभावादेव **अंशः न**=नाङ्गीक्रियते किल, ब्रह्मणोऽखण्डत्वाङ्गीकारात्। तथा चापसिद्धान्तः ॥

षष्ठं कल्पं दूषयति—**नोपाधिरित्यादि**। ब्रह्मणि परिच्छेदादिर्नास्ति, तस्याखण्डत्वात् । प्राप्ता-प्राप्तविवेकन्यायेन उपाधेरेव जीवपदवाच्यत्वमस्त्वित्याशयः। जडस्य कथं जीवत्वमिति चेत्। उपाधेर्ब्रह्मणश्च भेदवदभेदस्याप्यङ्गीकारात्, चिद्रूपब्रह्माभिन्न उपाधिरेव जीवपदवाच्यः इति षष्ठकल्पार्थः । एवं सति— **उपाधिः**=अविद्यादिः **ब्रह्मरूपोऽपि**=ब्रह्माभिन्नोऽपि **अचित्त्वात्**=जडत्वात् **जीवताम्**=जीवभावम् **अनुभवितुं नाप्यलम्**=नैव समर्थम्, जडत्वादेव । जीवो हि चेतनः । उपाधिस्तु जडः । स कथं जीवो भवेत्?

ननु जड उपाधिः कथं ब्रह्माभिन्नः स्यात् । यदि चेतनस्स्यात्, तर्ह्ययं ब्रह्मैव स्यादिति चेत्, भेदस्याप्यङ्गीकारात् न चेतनत्वप्रसक्तिः । तर्ह्यभेदः कथमिति चेत्, किं कुर्मः? 'सर्वं खल्विदं ब्रह्म' इतीदमिति प्रत्यक्षप्रतिपन्नं जगन्निर्दिश्य ब्रह्मेत्यभिधानात्, केवलभेदे तथाभिधानासंभवात्, अत्यन्ताभेदे च ब्रह्मत्वापत्त्या भेदोऽप्यावश्यकः । अत उपाधिब्रह्मणोर्भेदाभेदौ आवश्काविति भावः । भेदाभेदावङ्गीक्रियतामिति चेत्, तर्हि यादवप्रकाशादविशेषः स्यात्, उभयोश्चेतनत्वाविशेषादैक्यस्या परं तु 'सर्वं खल्विदं ब्रह्म' इत्यस्य प्रकारान्तरेणापि निर्वाहात्तदर्थमौपाधिकभेदवादाश्रयणमनपेक्षितमेवेति ज्ञेयम् ॥ ३२ ॥

एवं भेदाभेदवादावलम्बनेन सर्वश्रुतिसमन्वयासंभवमुपदर्श्य, विवर्तवादावलम्बनेन सर्वदोषपरिहारं मन्वानानां मतेऽप्यनुपपत्तिं प्रदर्शयति—**नापीत्यादि**। **अविद्यास्थगितनिजतनौ ब्रह्मणि एतत् विश्वम् नापि विवृत्तम्** इत्यन्वयः। **अविद्यया**=मायया **स्थगिता**=आवृता **निजा**=स्वीया या **तनुः**=स्वरूपम्, तद्विशिष्टे ब्रह्मणि **एतत्**=प्रतीयमानम् **विश्वम्**=जगत् **नापि विवृत्तम्**=अध्यस्तं नैव । 'विवर्तः' इत्यस्य धर्मिवाचकं पदं विवृत्तमिति । **विवर्तः**=अध्यासः, **विवृत्तम्**=अध्यस्तम् । नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म अविद्यावशात् तिरोहितनिजस्वरूपं लेशतः **अहम्** इति भासते । तस्मिन् तयैवाविद्यया इदं जगत् सर्वमारोपितं सत् भासते,

**न ह्येतस्मिन्नविद्याविलयकृदधिको वृत्तिवेद्यो विशेषः**
**बाधो वृत्तिस्वरूपाद्यदि, भवति तदा ज्ञानबाध्यत्वभङ्गः ॥ ३३ ॥**

रज्जौ सर्प इवेति ब्रह्मविवर्तवादिनः। एवञ्च जगतो मिथ्यात्वाद्दोषाणामपि मिथ्यात्वमिति ब्रह्मणि दोषा न प्रसज्यन्त इत्याहुः। एतदपि न समीचीनमित्याह—**नापीति**॥

तत्र हेतुः—**तस्मिन्नित्यादि**। **सा**=अविद्या **स्वप्रकाशे तस्मिन्**=ब्रह्मणि **तत्प्रकाशैकबाध्या**=**तस्य**=ब्रह्मणः प्रकाशेन एकेनैव **बाध्या**=निवर्त्या **कथमिव**=कथं वा **विलगेत्**=संबध्येत? रज्जुसर्पाद्यध्यासस्थले सर्वत्र अध्यासाधारभूतायाः रज्जोः सामान्याकारेण भाने सति, दूरत्वादिदोषवशात् सर्पो भासते, रज्जुज्ञानेन च निवर्तत इति क्रमः। प्रकृते ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वेन ब्रह्मज्ञानेनैव बाध उच्यते। अविद्यापि ब्रह्मव्यतिरिक्तत्वात् मिथ्यैव। अतोऽस्याः ब्रह्मज्ञानेनैव निवृत्तिर्वक्तव्या। अविद्याख्यस्य दोषस्याश्रयः ब्रह्मैवेत्युच्यते। ब्रह्म च सदा स्वप्रकाशस्वभावमुच्यते। ब्रह्मणः सदा स्वप्रकाशत्वेन, तेन बाध्या अविद्या तस्मिन्नेव कथं तिष्ठेत्। रज्जुसर्पादिभ्रमस्थले तु दूरत्वादिर्दोषः न मिथ्या, दोषनिवृत्तौ रज्जुत्वज्ञानात् बाध्यते। अतः प्रकृतेऽध्यासो दुरुपपादः॥

ननु, यद्यपि ब्रह्म स्वप्रकाशस्वभावम्। अथापि संसारावस्थायां अन्तःकरणवृत्तिरूपव्यावहारिकज्ञानविषयोऽपि भवति। अतश्च ब्रह्मणः स्वप्रकाशत्वम्, वृत्तिविषयत्वं चेति द्वयमपि संसारावस्थायां वर्तते। वृत्तिविषयत्वाकारेणैवाविद्यानिवर्तकत्वम्, न तु स्वरूपत एव, शुद्धस्वरूपप्रकाशस्यैव मुक्तित्वात्। वृत्तिविषयत्वसमानाधिकरणं स्वप्रकाशत्वं तु नाध्यासविरोधि। अतः प्रपञ्चभ्रमोपपत्तिरिति चेत्, तत्राह—**न हीत्यादि**। **एतस्मिन्**=निर्विशेषे ब्रह्मणि **अविद्याविलयकृत्**=अविद्यायाः ब्रह्मनिष्ठायाः **विलयकृत्**=निवृत्तिहेतुभूतः **वृत्तिवेद्यः**=अन्तःकरणवृत्त्या वेद्यः **अधिकः**=स्वरूपादधिकः विशेषः न हि, ब्रह्मणो निर्विशेषत्वादेव। तदङ्गीकारे चापसिद्धान्तः। वृत्तिविषयत्वे वा, स्वप्रकाशत्वे वा न हि ब्रह्मस्वरूपं भिद्येत। स्वरूपं तु निर्विशेषम्। अतश्च ब्रह्मणोऽविद्याश्रयत्वम्, तत्प्रयुक्ताध्यासादिकं च सर्वथा दुरुपपादमेवेति ब्रह्मविवर्तवादः न साधीयान्॥

ननु वृत्तिप्रतिफलितं चैतन्यमेव वृत्त्यवच्छिन्नं चैतन्यम्—अन्तःकरणमुच्यते। तत्र विशेष्यस्य ब्रह्मस्वरूपाविशेषत्वेन, तस्य स्वप्रकाशत्वात् वृत्तिविषयत्वासंभवेऽपि वृत्तिरेव केवलाऽविद्यानिवर्तका भवत्वित्यत्राह—**बाध इत्यादि**। **बाधः**=प्रपञ्चभ्रमस्य **बाधः**=निवृत्तिः वृत्तिस्वरूपात्, न तु वृत्तिविषयब्रह्मप्रकाशात् यदि भवति, तदा **ज्ञानबाध्यत्वभङ्गः**=विश्वभ्रमस्य ज्ञानेन बाध्यत्वस्य भङ्गः। ज्ञानस्य बाधकत्वं नाम, न स्वरूपतः, किन्तु अधिष्ठानविषयकत्वादेव। यदि वृत्तिज्ञानं स्वरूपतो बाधकम्, तर्हि बाध्यस्य जगतः ज्ञानबाध्यत्वं न स्यात्, ततश्च मिथ्यात्वमपि न स्यात्। ज्ञानबाध्यत्वमेव हि मिथ्यात्वम्। अतश्च निर्विशेषब्रह्मवादे भ्रमनिवृत्तिरपि न साधीयासी॥

ब्रह्मविवर्तवादे हि **जीवाज्ञानवादः**, **ब्रह्माज्ञानवादश्चे**ति प्रस्थानद्वयं वर्तते। आद्यं **भामती**कारस्य **वाचस्पतिमिश्रस्य**। द्वितीयं तु **विवरण**कारस्य **प्रकाशात्मयतेः**। एतावुभावपि श्रीशङ्कराचार्यस्य परमभक्तौ,

**[विवर्तवादे तिरोधानानुपपत्तिः]**

**179. छन्नत्वे स्वप्रकाशादनधिकवपुषो ब्रह्मणः स्यादभावः**
**भावानां छादनं हि स्फुरणविलयनं तस्य वोत्पत्तिरोधः।**
**मिथ्यादोषात् भ्रमोक्तौ कथमधिकरणं सत्यमित्येव वाच्यं**
**नाधिष्ठानानवस्था भवतु, तव यथा नास्त्यविद्याऽनवस्था ॥ ३४ ॥**

तदीयं वचनमेव स्वस्वपक्षे प्रमाणयतः। प्रपञ्चभ्रमहेतुभूताया अविद्याया आश्रयः कः? इति प्रश्नस्योत्तरदानेऽभिप्रायभेदात् प्रवृत्ताविमौ पक्षौ। नित्यशुद्धबुद्धमुक्तस्याविद्याश्रयत्वानुपपत्तिं मानयन् भामतीकारः, जीव एव तदाश्रय इत्यातस्थौ। अविद्यायाः प्रश्नातीतत्वात् सर्वं संगच्छेतेत्ययं मन्यते। ब्रह्माज्ञानवादी विवरणकारस्तु अविद्यासाक्षित्वमेवाविद्याश्रयत्वम्, न तु मुख्यमाश्रयत्वं ब्रह्मणः, अविद्याया एवापदार्थत्वात्। नित्यनिर्विशेषस्याविद्यासाक्षित्वं वा कथं घटतामिति प्रश्ने, अनादित्वात्तस्य साक्षित्वस्य प्रश्नोऽसमञ्जस इति वदति। एवमनादित्वाङ्गीकारे प्रपञ्चसत्यतायामपि दोषाभावात्, किमर्थः प्रपञ्चमिथ्यात्वसाधनप्रयासः? अविचारितरमणीयमेव सर्वमिति यदि तृप्तिः, त्यज्यतां तर्हि विचारः, नीयतां कालः साधनपारायण्येन। परं तु विवर्तवादमन्तरापि जगत्सृष्ट्यादेर्निर्वाहात् विवर्तवादोऽन्यथासिद्ध एव ॥ ३३ ॥

निर्विशेषवादे ब्रह्मण आवरणम्=तिरोधानमपि वस्तुतो न संभवतीत्याह—**छन्नत्व इत्यादि**। **स्वप्रकाशात् अनधिकवपुषः**=‘असङ्गो ह्ययम्’ इत्यादिश्रुतिभिः नित्यशुद्धमुक्तस्वप्रकाशस्वरूपादधिकनिखिलविशेषशून्यस्य ब्रह्मणः **छन्नत्वे**=अविद्ययाच्छादने **अभावः स्यात्**=विलय एव स्यात्। नित्यस्य कथं विलयः? इति प्रश्ने—**भावानामित्यादि**। **भावानाम्**=सत्तावताम् **छादनं हि**=आवरणम्=तिरोधानं नाम **स्फुरणविलयनम्**=स्फुरताम्, स्फुरणनाशः **वा**=अथवा। **तस्य**=स्फुरणस्य **उत्पत्तिरोधः**=स्फुरणानारंभः स्फुरणोत्पत्तिप्रतिबन्धकत्वं वक्तव्यम्। एकस्य वस्तुनः तिरोधानं नाम प्रकाशाभावः। स च द्वेधा, प्रकाशस्यानुत्पत्तिः, प्रकाशनाशो वा। ब्रह्मणः नित्यत्वात् स्वप्रकाशत्वाच्च द्वयमपि न संभवति। संभवे वा स्वरूपनाश एव पर्यवसानम्। अत्र अभावस्थले, अभावस्य प्रतियोग्यनुपलंभरूपत्वात् स्फुरणाभावो वर्तत एवेति दोषाप्रसक्त्या **भावानाम्** इत्यभिहितम्। न चाभावातिरिक्तत्वपक्षेऽभावस्य स्फुरणमङ्गीक्रियत एवेति तन्मते नैवं दोष इति शङ्क्यम्; तत्पक्षेऽपि अभावग्राहकप्रमाणतया, प्रमाणसहकारितया वानुपलंभस्यावश्यकत्वाङ्गीकारात्। एवं तिरोधानासंभवमुपपाद्य, तिरोधानकार्यस्य भ्रमस्यासंभवमप्युपपादयति—**मिथ्येत्यादिना**। **मिथ्यादोषात्**=मिथ्याभूतात् अविद्याख्यदोषात् **भ्रमोक्तौ**=भ्रमस्य समर्थने **अधिकरणम्**=भ्रमाधिष्ठानभूतं वस्तु **सत्यमेव इति कथं वाच्यम्**=वक्तुं शक्यम्। भ्रमहेतुभूताया अविद्याया मिथ्यात्वेऽपि, यथा भ्रमो भवति, तथैवाविद्यावत् ब्रह्मणोऽपि मिथ्यात्वेऽपि विश्वभ्रमो भवतु कामम्। अत्रासत्यत्वे अपि भ्रमसंभवात्, सत्यत्वनिर्बन्धो नास्तीति सूचनाय **सत्यमेव** इति **एवकारः**। तथा च ब्रह्मसत्यत्वनिर्बन्धाभावात्, ब्रह्मैव मिथ्या भवेत्। अधिष्ठानस्य भ्रमसिद्धत्वे, तद्भ्रमस्याधिष्ठानान्तरं वक्तव्यम्, पुनस्तस्याप्यधिष्ठानान्तरमित्यनवस्था स्यात्। अतोऽधिष्ठानसत्यत्वमावश्यकमिति न ब्रह्मणो मिथ्यात्वसंभव इत्यत्राह—**नेत्यादि**।

[अविद्याकल्पनानुपपत्तिः]

**180. दोषाभावेऽप्यविद्या स्फुरति यदि ततः किं न विश्वं तथा स्यात्**
**सा चान्यां कल्पिकां चेदभिलषति, तथा साऽपि चेत्यव्यवस्था।**
**नापेक्षा चेदनादेः अकलुषधिषणागोचरत्वात् सती स्यात्**
**ब्रह्मैवास्यास्तु दोषो यदि, न तु विरमेत् ब्रह्मणो नित्यभावात्॥ ३५॥**

तव अधिष्ठानानवस्था न भवतु। इतरेषां मत एव स दोषः स्यात्, न तु तव मते। कुत इत्यत्र—**यथे-त्यादि। यथा तव अविद्यानवस्था नास्ति,** तथैवाधिष्ठानानवस्थापि तव न दोषः स्यात्। तथा च लोके भ्रमहेतोर्दोषस्य सत्यत्वदर्शनेऽपि मिथ्याभूताविद्यया जगद्भ्रमो यथा, तथा मिथ्याभूताधिष्ठानेनापि भ्रमो भवितु-मर्हतीति अधिष्ठानस्य ब्रह्मणस्सत्यत्वं न सिद्ध्यतीति निरधिष्ठानभ्रमवादप्रसक्त्या **शून्यवादतौल्यम्**। अतश्च माध्यमिकमतप्रवेशोऽनिवार्यः॥

लोके हि रज्जुसर्पभ्रमादौ अधिष्ठानतया रज्जुर्यथावश्यकी, तथैव प्रकाशन्यूनतादिरूपो दोषोऽप्या-वश्यकः। तत्राधिष्ठानस्य यथा सत्यत्वम्, तथा दोषस्यापि सत्यत्वं संप्रतिपन्नम्। त्वया तु अधिष्ठानस्य परं सत्यत्वमुच्यते, न तु दोषभूताया अविद्यायाः। अविद्याया मिथ्यात्वे, तत्कल्पनार्थं दोषान्तरमावश्यकमित्यनवस्था स्यादिति भिया यथाविद्यान्तरं नाङ्गीक्रियते, तथैवाधिष्ठानस्य मिथ्यात्वेऽपि अनवस्था नास्तीत्युच्यताम्। वेदान्तशास्त्रं लोकविलक्षणमिति मत्वा दोषमिथ्यात्वेऽपि भ्रमोपपत्तिवत्, अधिष्ठानमिथ्यात्वेऽपि लोकविलक्षण-तया विश्वभ्रमो भवितुमर्हतीति अधिष्ठानस्य ब्रह्मणस्सत्यत्वं न स्यादिति निरधिष्ठानभ्रमवादावतारः॥ ३४॥

अविद्यायाः कल्पनानुपपत्तिं प्रदर्शयति—**दोषेत्यादि। दोषाभावेऽपि**=अतिरिक्तस्य दोषस्याभावेऽपि, **अविद्या**=मिथ्याभूता अविद्या यदि **स्फुरति**=भासते, **ततः**=तर्हि **विश्वम्**=जगत् **तथा किं न स्यात्**=कुतो न भासेत? तथा चाविद्यासाक्षिभूतं ब्रह्म अविद्यां कल्पयित्वा अविद्यमानं जगत् पश्यति यदि; तर्हि, अविद्याकल्पनं विनैव जगद्भ्रम एव ब्रह्मणः कुतो न भवेत्; 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायात्। **तद्धेतोः**=अविद्याकल्पनहेतोः साक्षित्वस्यैव, **तद्धेतुत्वे**=जगद्दर्शनहेतुत्वे, **मध्ये**=जगद्ब्रह्मणोर्मध्ये **तेन**=अविद्यया **किम्**=प्रयोजनम् किम्? साक्षादेव जगद्भ्रमसंभवात्॥

यदि ब्रह्मव्यतिरिक्तो दोषः आवश्यकः, तर्हि—**सा च**=अविद्या च **अन्याम्**=अविद्याम् **कल्पिताम् अभिलषति चेत्**=अपेक्षते चेत्, **सापि च**=एवं कल्पिता अविद्यापि **तथा**=अन्याम् अविद्याम् अपेक्षेत। **इति**=इंति हेतोः **अनवस्था**=अविद्यापरंपरानवस्था स्यात्। अनादेः अविद्यायाः **अपेक्षा**=अविद्यान्तरापेक्षा न चेत्, तदा **अकलुषितधिषणागोचरत्वात्**=दोषाजन्यज्ञानविषयत्वात् **सा** अविद्या **सती**=सत्या स्यात्। तथा चाद्वैतभङ्गः, सत्यद्वयाङ्गीकारात्। अस्तु ब्रह्मण एवाविद्याकल्पकत्वात् दोषपदवाच्यत्वमिति शङ्कते—**अस्याः**=अविद्यायाः **ब्रह्मैव दोषः**=कल्पकः अस्तु इति **यदि**, तदा **ब्रह्मणः नित्यभावात्**=नित्यत्वात् अविद्यासाक्षित्वमपि नित्यं स्यादिति **न तु विरमेत्**=कदाप्यविद्या न निवर्तेत। तथा चानिर्मोक्षप्रसङ्गः॥

[प्रत्यक्षेण भावरूपाज्ञानासिद्धिः]

181. ज्ञातेऽज्ञातेऽप्यभावः खलु दुरवगमस्संविदस्तेन भावः
स्यादज्ञानं, यदीहाप्यपरिहृतमिदं तद्विरोधादिसाम्यात्।

'ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया च मुच्यते' इति ब्रह्मविवर्तवादसारसंग्रहः। अतोऽविद्यया ब्रह्मण एव भ्रान्त्या जगद्दर्शनम्, वस्तुतः जगतः अभावात्। अविद्यमानस्य दर्शनं हि दोषवशात्। प्रकृते दोषः कः? इति चेत्, अविद्यैव दोषः। अविद्या सत्या वा, मिथ्या वा? इति प्रश्ने सत्यत्वेऽद्वैतभङ्गात् मिथ्यैवेति ते वदन्ति। तर्ह्यविद्यासाक्षित्वं प्रति दोषान्तरं कारणं वक्तव्यम्। ततश्चानवस्था। यदि कारणमन्तरापि भानम्, तर्हि अविद्यामन्तरापि प्रपञ्चदर्शनं भवतु। अतश्चानिर्मोक्षप्रसङ्गोऽनिवार्यः। तस्मान्मिथ्याभूताविद्याकल्पनानुपपत्तिर्दुष्परिहरा। सर्वं प्रश्नातीताया अविद्याया माहत्म्यादिति चेत्—

विचारशास्त्रकर्ता स्याद् व्यास उन्मत्त एव ते। गीतोपदेष्टा कृष्णोऽपि भवेदुन्मत्त एव ते॥
नराणां बुद्धिजीवित्वं शास्त्रे लोकेऽपि संमतम्। विज्ञानात्मा हि जीवःस्यात् ततस्तर्कमपेक्षते॥
तदर्थं रचितं शास्त्रं ऋषिभिः करुणालुभिः। बुद्धिकश्मलनाशाय निष्ठायै शान्तयेऽपि च॥
अतोऽनिवार्यमेवैतत् तर्कशाणे परीक्षणम्। प्रमाणानां च सर्वेषां सर्वशङ्कापनुत्तये॥ ३५॥

अज्ञानापरपर्याया अविद्या ज्ञानस्वरूपे ब्रह्मणि कथं तिष्ठेत्? विरोधादित्याक्षेपे, अज्ञानं भावरूपम्, न तु ज्ञानाभावरूपम्, अतो न विरोधः। इदं च भावरूपमज्ञानं प्रत्यक्षानुमानागमैः सिद्ध्यतीति वदन्ति। तत्र प्रथमं प्रत्यक्षतस्तत्सिद्धिं निराकरोति—**ज्ञात इत्यादि**। सुषुप्त्यनन्तरं प्रबुद्धः 'सुखमहमस्वाप्सम्' इति प्रतिसन्धत्त इति आत्मनः सुखरूपत्वसिद्धिवत् 'न किञ्चिदहमज्ञासिषम्' इत्यपि प्रतिसन्धानात् सुषुप्तिकालिकाज्ञानानुभवादज्ञानं प्रत्यक्षसिद्धम्। तत्र **संविदः अभावः** सुषुप्तिकालिकः **ज्ञाते, अज्ञातेऽपि** वा **दुरधिगमः खलु**=नावगन्तुं शक्यः खलु। तेन **अज्ञानम्**=सुषुप्तिकालिकम् **भावः**=भावरूप एव **स्यात्**, न त्वभाव इति पूर्वपक्षानुवादः॥

**अयं भावः**—सुषुप्तिकालिकमज्ञानं ज्ञानाभावरूपं चेत्, प्रतियोगिज्ञानं तदानीमावश्यकम्। प्रतियोगिज्ञाने सति 'न किञ्चिदहमज्ञासिषम्' इति ज्ञानसामान्याभावप्रतिसन्धानं न स्यात्। प्रतियोगिज्ञानेऽसति तु सुतरां नाभावसामान्यानुभवः। अतस्तदानीं भासमानमज्ञानं नाभावरूपम्, किन्तु भावरूपमिति भावरूपमज्ञानं प्रत्यक्षसिद्धम्=सौषुप्तिकानुभवसिद्धम्॥

प्रतिवक्ति—**यदीत्यादि**। **यदि**=एवं यद्युच्यते, **इहापि**=एतत्पक्षेऽपि **इदम्**=दोषापादनम्=ब्रह्मणि तादृशाज्ञानाश्रयत्वासंभवरूपम् **तद्विरोधादिसाम्यात्**=ब्रह्मणि तादृशज्ञानविरोधित्वादीनाम् **साम्यात्**=समानत्वात् अपरिहृतम्। नञुपश्लेषे तदनुपश्लेषे वा तमःप्रकाशादिवत् ज्ञानेन साकमस्यापि विरोधित्वादीनां समानत्वाद्दोषस्तदवस्थ एव। अदिपदेन सविषयकत्वसापेक्षत्वादि ग्राह्यम्॥

ननु 'न किञ्चिदहमज्ञासिषम्' इत्येव प्रतिसन्धानात् सामान्यरूपेण सर्ववस्तुविषयम् अज्ञानं न ज्ञानविरोधि। विशिष्य वृत्तिविषयं विशुद्धब्रह्मस्वरूपं तु अज्ञानविरोधि—इत्याकारभेदादज्ञानाश्रयत्वम्,

तुल्यैवाऽऽकारभेदात् परिहृतिरुभयोः; क्लृप्तिरत्राधिका ते
मुग्धोऽस्मीत्यादिसाक्षात्कृतिरपि नियतं तत्प्रतिद्वन्द्विगर्भा ॥ ३६ ॥

[अनुमानेन भावरूपाज्ञानासिद्धिः]

182. स्वाजन्मान्यस्वदेश्यस्वविषयवृतिकृत्स्वव्यपोह्यार्थपूर्वा
ध्वान्तोत्थाद्यप्रभावत् विमतमितिरिहापूर्वनिर्भासनाच्चेत्।

अज्ञाननिवर्तकत्वञ्चेत्युभयं सङ्गच्छत इत्यत्राह—**तुल्येत्यादि**। **आकारभेदात्**=सामान्यविशेषरूपाकारभेदात् **परिहृतिः**=विरोधपरिहारः **उभयोः**=अज्ञानस्य भावरूपत्वे, अभावरूपत्वे वा **तुल्यैव**=समानैव । अज्ञानस्याभावरूपत्वेऽपि सामान्यविशेषाकारभेदमादाय विरोधपरिहारस्समान एव। तर्ह्यस्तु अन्यतरः पक्षः इत्यत्र—**अत्र**=भावरूपत्वपक्षे **ते**=तव **क्लृप्तिः**=भावरूपत्वकल्पनाक्लेशः **अधिका**=गौरवावहैव। निर्विशेषे ब्रह्मण्याकारद्वयकल्पनमपि न संभवतीत्यपि ज्ञेयम्। ननु 'मूढोऽस्मि' इत्यनुभवस्य सर्वसाक्षिकत्वात् तत्र नञभावात् आत्मनो भावरूपाज्ञानसाक्षित्वं दुर्निवारमित्यत्राह—**मुग्ध इत्यादि**। 'मुग्धोऽस्मि' इत्याद्यनुभवोऽपि **नियतम्**=नियमेन **तत्प्रतिद्वन्द्विगर्भा**= ज्ञानविरोधिविषयिण्येव। 'नञ्'प्रयोगाभावेऽपि 'तमः'पदजन्यप्रतीतिविषयवत् वस्तुविरोधोऽस्त्येव। तथा च तदर्थं भावरूपत्वसाधनप्रयासः निष्फल एव॥

ननु सिद्धान्ते वा 'न किञ्चिदहमज्ञासिषम्' इत्यनुभवः धर्मभूतज्ञानसामान्याभावविषयः कथं साधीयान्? प्रतियोगिज्ञानासंभवस्यारंभे उक्तत्वादिति चेत्—सिद्धान्ते भावातिरिक्ताभावानङ्गीकारात्, धर्मभूतज्ञानाभावस्याधिकरणीभूतात्मस्वरूपरूपत्वात्, आत्मस्वरूपभानस्य सुषुप्तावङ्गीकारात्, 'सुखमहमस्वाप्सम्' 'न किञ्चिदहमज्ञासिषम्' इत्युल्लेखद्वयस्य साम्यम्। ननु नञुल्लेख्यनुल्लेखिप्रतीत्योः कथं समानविषयकत्वसंभव इति चेत्, धर्मभूतज्ञानं हि विषयप्रकाशरूपम्। सुषुप्तौ आत्मव्यतिरिक्तविषयभानाभावात्, तद्दृष्ट्या 'न किञ्चिदहमज्ञासिषम्' इति, सुखस्वरूपस्यात्मनः प्रकाशाच्च 'सुखमहमस्वाप्सम्' इति चोल्लेखभेदः। विचारयामो विस्तरेणेदमभावप्रकरणे (अद्रव्य.129-132)। ननु 'मामप्यहं न ज्ञातवान्' इत्युल्लेखात् आत्मस्वरूपस्यापि भानाभावसिद्ध्या कथं स्वरूपसुखविषयकत्वं 'सुखमहम्' इत्यादिप्रतीतेस्संभवेदिति चेत्, तर्हि आत्मस्वरूपं जडं मन्यसे किं त्वम्? यद्यपि स्वप्रकाश आत्मा स्वतः। अथापि तामसान्तःकरणवृत्त्यावृतत्वान्न प्रकाशत इति चेत्, तर्ह्यात्मा जडः स्यात्। अस्माकं तु धर्मभूतज्ञानस्य सुषुप्तौ लयात्, आत्मनस्तदा तद्विषयत्वाभावादेव कुतो न सङ्गच्छेत? धर्मभूतेन ज्ञानेनाविषयीकरणेऽपि स्वप्रकाशस्वभावस्य तस्य प्रकाशं को वा निरुन्ध्यात्। वस्तुतस्तु धर्मभूतज्ञानमात्मस्वरूपमात्रविषयकमवतिष्ठते। अत एवासत्कल्पमित्युच्यते आत्मातिरिक्तस्य विषयस्याभानात्। एवञ्चात्मनो ज्ञानविषयत्वादेव सुप्तोत्थितस्यानुसन्धानं संगच्छते। सन्धानं विनानुसन्धानासंभवात्। अतोऽविद्या न प्रत्यक्षेण सिद्ध्यति॥ ३६ ॥

तदिदं भावरूपमज्ञानमनुमानेनापि सिद्ध्यतीति वदतो विवरणकारस्यानुमानमनूद्य दूषयति—**स्वाजन्मेत्यादि**। **विमता मितिः** इति विशेष्यम्=पक्षः। सैव स्वपदग्राह्या। **अजन्म**=प्रागभावः। तथा च स्वप्रागभावव्यतिरिक्तेति अर्थविशेषणम्। एवं **स्वदेश्यः**= स्वदेशगतः **स्वविषयवृतिकृत्**=स्वेन=प्रमाणज्ञानेन

**अज्ञानाज्ञानभेत्री किमियमनुमितिः, स्वेष्टभङ्गोऽन्यथा तु व्यर्थाऽसाविन्द्रियादिष्वतिचरणमसिद्ध्यादि च स्याद्विकल्पे ॥ ३७ ॥**

प्रकाश्यः यो विषयः, सः स्वविषयः। तस्य **वृतिः**=आवरणम्, तत्कृत्। स्वविषयावरणकारीत्यर्थः। **स्वव्यपोह्यः**=**स्वेन**=प्रमाणज्ञानेन **व्यपोह्यः**=निवर्त्यः। एतादृशार्थपूर्वकत्वम् प्रमाणज्ञाने वर्तते ॥

**अपूर्वनिर्भासनात्**=अपूर्वस्यार्थस्य प्रकाशनात्; **अपूर्वः**=एतावता अप्रकाशितो योऽर्थः, तस्य प्रकाशकरणात्, इति हेतुः। साध्यकोटौ स्वप्रागभावव्यतिरिक्तस्वदेश्य इत्याद्यर्थविशेषणम्। तथा च 'विवादाध्यासितं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वदेशगतस्वविषयावरणहेतुस्वनिवर्त्यवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्' इति संपूर्णोऽनुमानाकारः। यत्र यत्र अप्रकाशितार्थप्रकाशकत्वं वर्तते, तत्र सर्वत्र स्वप्रागभावव्यतिरिक्तादिविशेषणककिञ्चिद्वस्तुपूर्वकत्वं वर्तते। यथा घटादिज्ञानेऽन्धकारादिपूर्वकत्वं दृष्टमिति व्याप्तिर्ग्राह्या। **चेत्** इति पूर्वपक्षानुवादसमाप्तिद्योतकः ॥

प्रमातुः आत्मनोऽपि ज्ञानस्वरूपत्वात्, तस्य च कदाप्यप्रकाशासंभवात् तद्व्यावृत्त्यर्थं प्रमाणपदविशेषणम्। प्रमाणम्, प्रमेयम्, प्रमाता इति त्रिपुट्यां प्रमेयप्रकाशस्यैव प्रमाणापेक्षा, न तु प्रमातुः। तस्य घटादिकं यदा प्रकाशते, तत्र तावत्कालं घटादेः अप्रकाश एवासीत्। यदा च तद्विषयकं ज्ञानमुत्पन्नम्, तदानीमेव प्रकाशते। पूर्वमप्रकाशस्य च कारणम्, तदावारकान्धकारादिः। अन्धकारादिना अप्रकाशमानोऽर्थः, दीपादिना प्रकाशं नीयते। एवं बाह्ये सूर्यादिप्रकाशे सत्यपि, अनवधानादिवशादपि घटादिर्न प्रकाशते। अतश्चान्तर्वर्तमानं घटादिविषयकमज्ञानं ज्ञानेनैव व्यपोह्यते। एवञ्च बाह्येन घटाद्यावरणहेतुनान्धकारादिना तावत्कालमप्रकाशितोऽर्थः दीपादिना यदा प्रकाशं नीतः, तदा तेन दीपादिनान्धकारो निरस्यते। एवमान्तरेण घटविषयकेण ज्ञानेन, तावत्कालं घटाद्यप्रकाशहेतुः यदज्ञानमान्तरमासीत्, तत् तेन घटज्ञानेन निरस्यत इति ज्ञानस्य बाह्यान्धकारपूर्वकत्ववत्, आन्तराज्ञानपूर्वकत्वमप्यावश्यकमिति, आन्तरमज्ञानमन्धकारवदेव भावरूपमेव स्यादित्यनुमीयतेऽज्ञानस्य भावरूपत्वम्। उक्तानुमाने, प्रमातुरपि ज्ञानरूपत्वात् तस्य सदा स्वप्रकाशत्वादज्ञानपूर्वकत्वाभावात् बाधवारणाय **प्रमाणज्ञानम्** इत्यत्र पक्षे **प्रमाण**पदविशेषणम्। पक्षस्य सिद्ध्यसिद्धिभ्यां व्याघातदोषपरिहाराय जल्पकथादृष्ट्या **विमतम्** इति पक्षनिर्देशः। **मिति**पदं तद्विवरणरूपम्। वादकथायां हेत्वाभासादिनिग्रहस्थानोत्थापनाभावात्, पुरोऽवस्थितब्रह्मचार्यादेर्विवक्षितबोधदृष्ट्या शब्दानामाधिक्येऽपि न कोपि दोष इति दृष्ट्या **विमतमितिः** इति पदद्वयप्रयोगः। जल्पदृष्ट्या तु विमतमित्येव पक्षनिर्देशः। वादजल्पादीनां स्वरूपं तु तत्प्रकरणे भविष्यति ॥

उक्तानुमाने दूषणान्याह—**अज्ञानेत्यादि**। इयम् अनुमितिः, किम् अज्ञानाज्ञानभेत्री, उत न? प्रथमपक्षे—**स्वेष्टभङ्गः**। **अन्यथा तु**=द्वितीयपक्षे तु, असौ अनुमितिः व्यर्था, भवदिष्टासाधनात्। **अयमर्थः**—प्रमाणज्ञानम् इति किल पक्षः। इदमनुमानं भावरूपाज्ञानसाधकत्वात्, भावरूपाज्ञाने प्रमाणज्ञानरूपम्। अत इदमप्यनुमानं पक्षकोटावन्तर्भवति, उत न? यद्यन्तर्भवति, तदानेन साध्यमानस्य भावरूपाज्ञानस्याज्ञानान्तर-

[चित्सुखोक्तानुमानपरीक्षा]

183. **यच्चोक्तं दैवदत्ती मितिरितरमितिन्यायतो हन्त्यनादिं**
**मात्वात् तन्मित्यभावाधिकमिति, तदपि स्यादबाधं विपक्षे ।**
**नाभावो भावतोऽन्यो न च पुरुषभिदाऽस्त्येकजीवत्ववादे**
**दृष्टान्ते ध्वंसकत्वं न च विदितमिदं ध्वंसतामात्रसिद्धेः ।। ३८ ।।**

पूर्वकत्वसिद्ध्या भावरूपाज्ञानद्वयं सिद्ध्येत् । तथाचापसिद्धान्तः । यदि नान्तर्भवति, तदास्यानुमानस्य प्रमाणज्ञानरूपत्वमेव न स्यात् । ततश्चेदं भावरूपाज्ञाने प्रमाणमेव न स्यादित्यनेनानुमानेन भावरूपाज्ञानमेव न सिद्ध्येदितीदमनुमानं व्यर्थम् ।।

दूषणान्तराण्यप्याह—**इन्द्रियेत्यादि**। **विकल्पे**=अप्रकाशितार्थप्रकाशकत्वरूपहेतोः विकल्पे कृते, **इन्द्रियादिषु**=चक्षुरादौ **अतिचरणम्**=व्यभिचारः, **असिद्ध्यादि च स्यात्**। **अयमर्थः**— 'अप्रकाशितार्थप्रकाशकत्वात्' इत्यत्र हेतौ प्रकाशकत्वं कीदृशं विवक्षितम्? प्रकाशकत्वं हि प्रकाशहेतुत्वम् । तच्च प्रकाशकारणत्वरूपम्, उत प्रकाशकरणत्वरूपम्? आद्ये आलोकादौ घटादिप्रकाशसहकारिहेतौ अज्ञानपूर्वकत्वाभाववति हेतोस्सत्वाद्व्यभिचारः। द्वितीयकल्पे, आलोकादीनां घटादिप्रकाशकरणत्वाभावात् व्यभिचारपरिहारेऽपि, तादृशप्रकाशकरणेषु इन्द्रियादिषु अज्ञानपूर्वकत्वाभावात् व्यभिचारः। दृष्टान्ते प्रदीपप्रभादौ प्रकाशकरणत्वाभावात् दृष्टान्तासिद्धिश्च । अतो नानेनानुमानेन भावरूपाज्ञानसिद्धिः ।। ३७ ।।

सामान्याकारेण पक्षनिर्देशे पूर्वोक्तरीत्या स्वेष्टभङ्गादिदोषाप्रसक्तिं मन्वानेन **चित्सुखाचार्येणोक्तं** विशेषरूपेण भावरूपाज्ञानसाधकानुमानमप्यनूद्य दूषयति—**यच्चेत्यादि**। **दैवदत्ती**=देवदत्तीया **मितिः**=प्रमाणज्ञानम्, **मात्वात्**=प्रमाणज्ञानत्वात् **इतरमितिन्यायतः**=यज्ञदत्तीयप्रमाणज्ञानन्यायेन **तन्मित्यभावाधिकम्**=देवदत्तीयप्रमाणज्ञानप्रागभावातिरिक्तम्, **अनादिम् किञ्चित् हन्ति**=नाशयति **मात्वात्**=प्रमाणज्ञानत्वात् इति च **यत् उक्तम्, तदपीत्यन्वयः**। 'देवदत्तीयं प्रमाणज्ञानम् स्वप्रागभावातिरिक्तानादिकिञ्चिदर्थनिवर्तकम्, प्रमाणज्ञानत्वात्, यज्ञदत्तीयप्रमाणज्ञानवत्' इत्यनुमानाकारः । घटादिकार्याणामपि तत्तत्प्रागभावनिवर्तकत्वात्सिद्धसाधनवारणाय स्वप्रागभावव्यतिरिक्तेति विशेषणम् । युगपत् ज्ञानद्वयावस्थानासंभवात्, उत्पन्नं सर्वमपि ज्ञानं स्वपूर्वतनं ज्ञानं निवर्तयत्येवेति पुनस्सिद्धसाधनवारणाय अनादीति । ज्ञानानामनादित्वाभावान्न दोषः । यदा च किञ्चित् घटज्ञानादिकं जायते, तावत्पर्यन्तं घटादिविषयकमज्ञानमेवासीदिति अज्ञानस्यानादित्वम् । पूर्वदृष्टविषयके ज्ञाने पुनर्जातेऽपि, विषयस्य पूर्वं सत्त्वेऽपि तदज्ञानं न, तदानीमेवोत्पन्नमिति, तदज्ञानमनाद्येव ।।

दूषयति—**तदपीत्यादि**। तदप्यनुमानम् **विपक्षे**=विरोधे='हेतुरस्तु साध्यं मास्तु' इत्यप्रयोजकशङ्कायाम् **बाधशून्यम्**=बाधकतर्करहितत्वात् अप्रयोजकम् स्यात् । कुतः? **अभावः भावतः अन्यः न**। अतः भावः खलूत्पन्नः स्वाभावं निवर्तयेन्नियमेन । अतोऽप्रयोजकमिदमनुमानम् । एतत्सिद्धान्तदृष्ट्या दूषणम् । **एकजीवत्ववादे पुरुषभिदा**=देवदत्तयज्ञदत्तादिपुरुषभेदः **न चास्ति**=नैवास्ति ।। तथा च दृष्टान्तासिद्धिः । चेतनचैतन्यपदयोस्तन्मते पर्यायत्वसूचनाय 'एकजीवत्ववादे' इत्युक्तिः ।।

[भावरूपाज्ञाने श्रुतिः न प्रमाणम्]

184. **अस्पृष्टावद्यतोक्तेर्न खलु विषयतामभ्युपेयादविद्या**
**न क्षेत्रज्ञोऽपि, तापत्रयपरितपनात्; नापि तत् ब्रह्म मौग्ध्यात्।**
**मिथ्यात्वात् दोषभावो न भवति यदि, किं तन्निरासप्रयासैः**
**उच्छेत्तव्यापुमर्थान्वयत इह परः कोऽभिलप्येत दोषः ॥ ३९ ॥**

दूषणान्तरमाह—**दृष्टान्त इत्यादि** । **दृष्टान्ते**=यज्ञदत्तीयप्रमाणज्ञाने इदम् **ध्वंसकत्वम्**= किञ्चिदर्थनिवर्तकत्वं प्रकृते विवक्षितम् **न च विदितम्**=न हि संप्रतिपन्नम्। कुत इत्यत्र—**ध्वंसतामात्र-सिद्धेरिति**। कार्यस्थं ध्वंसरूपत्वमात्रं सिद्ध्येत्, न तु ध्वंसं प्रति हेतुत्वमित्यर्थः। कार्ये निष्पन्ने तत्प्रागभावो नश्येदिति नियमः, न तूभयोर्नाश्यनाशकभावः, एकक्षणावच्छेदेनोभयोर्मेलनाभावात्। अन्यथा सामग्र्या कार्यसिद्धौ, सामग्र्या निवृत्तेरावश्यकत्वेन, कार्यस्य सामग्रीनाशकत्वं स्यात्। एवञ्च कार्यं प्रागभावध्वंसरूपं स्यात्, अभावस्य भावान्तररूपत्वे, न तु कार्यस्य ध्वंसकारणत्वमिति प्रमाणज्ञानस्यानादिभावरूपाज्ञाननाशकत्वमपि न संभवेत्। तथा च हेतोरेवासिद्ध्या, तेन भावरूपाज्ञानसिद्धिर्न भवेदेव ॥ ३८ ॥

अनुमानं न भावरूपाज्ञाने प्रमाणमिति दर्शयित्वा, आगमोऽपि तत्र न प्रमाणमिति दर्शयति—**अस्पृष्टेत्यादि** । 'निरवद्यम्'. (श्वे.6-19) इति श्रुतिः अविद्यायां प्रमाणमिति ते वदन्ति । किमस्याः श्रुतेरविद्यैव विषयः, उताविद्याकल्पितो जीवः, उताविद्याशबलितं ब्रह्म? उताविद्यासाक्षिभूतं विशुद्धं ब्रह्म? तत्राद्यः पक्षो निरस्यते—**अस्पृष्टावद्यतोक्तेः**='निरवद्यम्' इति श्रुतेः **विषयताम्**=प्रतिपाद्यमानताम् **अविद्या न खलु अभ्युपेयात्**=नैव प्राप्नुयात्। अवद्यमिति हि दोषसामान्यवाचि। वस्तुतो ब्रह्मैवास्याः श्रुतेर्विषयः, न त्वविद्या । अविद्याकार्यत्वात् जीवस्य, स एवास्तु विषय इति द्वितीयकल्पे—**क्षेत्रज्ञः**=जीवोऽपि **न विषयः** । हेतुः **तापत्रयपरितपनात्**=तापत्रयैः सदा परितपन् जीवः कथं निरवद्यो भवेत्। तृतीयकल्पं निरस्यति—**नापि तत्**=अविद्याशबलितं गौणं ब्रह्म। कुतः? **मौग्ध्यात्**=अविद्यातिरोहितत्वेन निरवद्यत्वा-भावात्। चतुर्थः कल्पस्समनन्तरश्लोके निरस्यते ॥

ननु ब्रह्मैव जगदुपादानमिति वेदान्ताः मृत्तत्कार्यादिदृष्टान्तेन घोषयन्ति । एवमेव 'निरवद्यं निरञ्जनम्' इत्यपि सकलदोषदूरमित्यपि। परस्परविरुद्धं द्वयमपि संगमनीयञ्चेत्, अन्यतरस्यौपाधिकत्व-मावश्यकम्। सैवोपाधिरविद्येत्युच्यते। विद्यामयस्य ब्रह्मणोऽविद्यासंबन्धोऽपि दोषावहः। 'असङ्गो ह्ययम्' इति श्रुतिश्च। अतोऽविद्याया मिथ्यात्वमन्तरा सर्वसमन्वयो न भवत्येव। ततश्चाविद्याविशिष्टं ब्रह्मोपादानम्, तद्रहितं च शुद्धमिति विरोधपरिहार इति शङ्कते—**मिथ्यात्वादिति**। अविद्याया **मिथ्यात्वात् दोषभावः**= दोषत्वं **नास्ति**=न भवति। अतश्च विशुद्धं निर्गुणं ब्रह्म न जगदुपादानम्, विकारित्वप्रसङ्गात्। अथापि अविद्योपहितम्, अत एवाविद्यासाक्षिभूतं नोपादानम्, किन्तु अविद्याविशिष्टम्। एतच्च मिथ्येति न दोषः इति यदि तर्हि—**तन्निरासप्रयासैः**=मिथ्याभूतत्वाद्दोषत्वाभावे तन्निरासार्थैः क्लेशैः **किम्**=किं साधनीयम्? किमर्थं तन्निरासार्थाः **प्रयासाः**=साधनचतुष्टयसंपत्तिप्रभृतयः श्रुतिषूपदिश्यन्ते ॥

[भावरूपाज्ञानेऽर्थापत्तिरपि न प्रमाणम्]

**185. शुद्धे ब्रह्मण्यविद्या न यदि, न घटते तस्य जीवैक्यवादः**
**तस्मान्निर्दोषतोक्तिर्निरुपधिदशया निर्वहेदित्ययुक्तम् ।**

ननु वस्तुदृष्ट्या मिथ्यात्वेऽपि, तथाज्ञानाभावात्, तादृशज्ञानसंपादनार्थमेव सर्वोऽपि प्रयासस्सार्थक इति चेत्, तत्राह— **उच्छेत्तव्येत्यादि**। **उच्छेत्तव्यः**=नानाविधप्रयासैर्निरसनीयः यः **अपुमर्थः**=अपुरुषार्थभूतः **तदन्वयतः**=तत्संबन्धापेक्षया **परः**=अतिरिक्तः **दोषः**=जगन्मिथ्यात्वज्ञानाभावरूपो दोषः **इह**=परस्मिन् ब्रह्मणि **कः अभिलप्येत**=अभिधीयेत? प्रयासेन निरसनीयः सत्यो वा मिथ्या वा कश्चनापुरुषार्थसंबन्धः जगद्भ्रमदर्शननिबन्धनदुःखदर्शनादिरूपोऽनिवार्यश्चेत् सावद्यत्वमेव ब्रह्मण इति निरवद्यश्रुतिः कथं संरक्षिता? किं कुर्मो गत्यभावादिति चेत्, उक्तमेव समाधानं पूर्वमेव (श्लो.27) ॥

ननु भवतामपि मते परमात्मनोऽविद्यासंबन्धोऽवर्जनीयः। 'अस्मान् मायी सृजते' (श्वे.4-9) इति हि स्त्रष्टुर्मायासंबन्ध उच्यते। 'दैवी ह्येषा गुणमयी मम माया' (गी.7-4) इति हि श्रीकृष्णोऽपि वक्ति। मूर्खानां पतिः कश्चित्स्याच्चेत्. सोऽपि मूर्ख एव स्यादिति लोकनीतिरपि तथा। अतश्च मायिनः तस्य कथं निरवद्यत्वं भवन्मतेऽपि। अतः 'यश्चोभयोस्समो दोषः' इति मत्वा तूष्णीमातिष्ठेति चेत्; न जानीमो वयमेतादृशं मूर्खं त्वां कथं बोधयेमेति। अनुपदमुक्तां श्रुतिं पुनः पठ— 'अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' (श्वे.4-9) इति। तदीयया माययास्माकमेव बन्धः। न तु तत्प्रभोः। वयमेव खलु ब्रह्मेति चेत्, हन्त भोः! 'ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया च मुच्यते' इति खलु भवन्तो वदन्ति, न वयम्॥

वाक्यानां योजना त्वन्या, तथान्या विषयस्थितिः। विषयानुगुणःशब्दः, नार्थश्शब्दानुगो भवेत्॥
यत्कक्ष्यायां च यावत्तु वक्तव्यं तावदेव हि। वयमेव किल ब्रह्म त्वित्युक्तिः रोचते कथम्॥ ३९ ॥

गत्यन्तराभावमेवाशङ्क्य चतुर्थं कल्पं समाधत्ते— **शुद्ध इत्यादि**। **शुद्धे ब्रह्मणि**=सर्वोत्तीर्णेऽसङ्गोदासीनस्वभावे नित्यशुद्धबुद्धमुक्तस्वरूपे परे ब्रह्मणि **अविद्या**=अविद्याख्योपाधिः **यदि न**=यदि नाङ्गीक्रियते, तर्हि **तस्य**=परब्रह्मणः **जीवैक्यवादः**='अयमात्मा ब्रह्म' (बृ.6-4-5) 'तत्त्वमसि' (छां.6-8-7) 'अहं ब्रह्मास्मि' (बृ.3-) इत्यादिभिः **जीवेन**=अनन्तदुःखास्पदेन जीवेन सहैक्याभिधानम् **न घटते**=न युज्यते। **तस्मात्**=जीवब्रह्मणोरैक्योपदेशान्यथानुपपत्तेः **निर्दोषतोक्तिः**='निरवद्यम्' 'अपहतपाप्मा' इत्यादिभिः सकलदोषरहितत्वोक्तिः **निरुपधिदशया**=अविद्याद्युपाध्युत्तीर्णावस्थया **निर्वहेत्**=संगच्छेत **इति अयुक्तम्**। यदि ब्रह्म जीवादत्यन्तभिन्नं स्यात्, तर्हि तस्य सावद्यत्वे, निरवद्यत्वे वाऽऽस्माकं का हानिः? इति वयमपि तूष्णीं तिष्ठेम। जीवब्रह्मणोरभेदस्य स्पष्टमभिधानात्, तस्य चौपचारिकत्वासंभवादौपाधिकत्वमेषितव्यम्। न च को विशेष इति शङ्क्यम्, औपचारिकत्वे हि श्रुतार्थस्य बाध एव। औपाधिकत्वे तु अवस्थाभेदादुभयोर्मुख्यत्वमिति विशेषसत्त्वात्। उपाधेस्सत्यत्वे अद्वैतश्रुतिविरोधः। दुःखित्वावस्थायास्सत्यत्वं च स्यादित्युपाधेर्मिथ्यात्वमित्यपि न क्षोदक्षमम्॥

**प्रत्यक्षादिप्रमाणानुगुणबहुविधश्रुत्यबाधेन नेतुं**
**शक्येऽप्यैक्यादिवाक्ये बहुगुणनिधये ब्रह्मणेऽसूयसि त्वम् ॥ ४० ॥**

**[मायादिपदानामविद्यार्थकत्वाभावः]**

**186. मायाविद्यादिशब्दैः प्रकृतिरभिहिता ज्ञानकर्मादयो वे-**
**त्येतत् तत्तत्प्रदेशे स्फुटविदितमतो न त्वदिष्टाऽस्त्यविद्या ।**

कुतः? इत्यत्र—**प्रत्यक्षेत्यादि। प्रत्यक्षादीनि प्रमाणानि**=भेदविषयाणि, **तदनुगुणाश्च बहुविधाः श्रुतयः**, ताभिः **अबाधेन**=बाधितार्थकत्वमन्तरा **ऐक्यादिवाक्ये**=नेतुं **शक्येऽपि**=ऐक्यपराणां श्रुतीनां अविरोधेन नेतुं शक्यत्वेऽपि, आदिपदेन एकविज्ञानेन सर्वविज्ञानश्रुत्यादि ग्राह्यम्, **बहुगुणनिधये**=अनन्तकल्याणगुणगणसागराय **ब्रह्मणे**=परब्रह्मणे त्वम् **असूयसि**=असूयां वहसि—इत्यापादनम्, काकुर्वा। **असूया**=परगुणासहना । अत एवापलपसि गुणान् । सिद्धान्ते तु सगुणनिर्गुणभेदाभावात्, ऐक्योपदेशस्य शरीरशरीरिभावप्रयुक्तत्वाच्च सर्वोपपत्तिरिति भावः ॥

ननु ब्रह्मणे असूयसि इति कथम्? असूया हि समानस्कन्धयोरन्यतरस्यान्यतरस्मिन्नेव दृश्येतेति चेत्; तर्हि 'प्रवक्ष्याम्यनसूयवे' (गी.9-1) इति कथम्? न ह्यर्जुनः श्रीकृष्णेन भगवता समः । अयि भोः! इदानीमस्मद्दृष्ट्या वदति भवान् । तत्कालदृष्ट्या हि तावुभौ पितृष्वस्रीयमातृष्वस्रीयौ । केवलं कतिपय-मासैरवरोऽर्जुनः । श्रीकृष्णस्य वैभवं पश्यतस्सहजासूया । तदभावात् तं प्रशंसति श्रीकृष्ण इति चेत्, बहुषु स्थलेषु 'न च मां योऽभ्यसूयति' (गी.18-67) इत्यादावपि दृश्यत इदम् । कथमिदं सर्वं संगच्छते, सत्यम्, परं तु परगुणासहिष्णुता असूया इति लक्षणम् । सा च समानस्कन्धेषु यद्यपि सुलभप्रसरा स्पष्टा च । अथापि सा असमानस्कन्धेष्वपि न दुर्लभा । महापण्डितं कंचन दृष्ट्वा कश्चिन्मूर्खो वदेत् 'किं पाण्डित्यसंपादनमात्रेण स महान् भवेत्? न जानाति लोकं लेशतोऽपि' इति । इदमप्यसूयाकार्यम् । परमात्मनोऽनवधिकातिशया-संख्येयकल्याणगुणगणसागरत्वं स्वीकर्तुं यन्न प्रभवन्ति, एतदपि प्रकारान्तरेणासूयाया एव फलम् । अतिमानरूपासुरीसंपत्तादृश्येव । अत एव निर्गुणवादिनं असुरं दैत्यं च निन्दन्ति **नवीनाः** । अतस्सुष्ठूक्तम्—'बहुगुणनिधये ब्रह्मणेऽसूयसि त्वम्' इति ॥ ४० ॥

मास्तु ब्रह्मपरवाक्यैः 'निरवद्यम्' इत्यादिभिरविद्यासिद्धिः । स्वप्रधानैरेव 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ.4-5-19) 'मायया सन्निरुद्धः' (श्वे.4-9) इत्यादिश्रुतिभिरेव अविद्या सिद्ध्यतीति शङ्कां समाधत्ते—**मायेत्यादि। मायाविद्यादिशब्दैः**=माया अविद्या इत्यादिपदैः **प्रकृतिः**=त्रिगुणात्मिका प्रकृतिरेव **अभिहिता**=उपनिषदादिभिः प्रोक्ता । आदिपदेन 'अनृतेन प्रत्यूढाः' (छां. 8-3-12) इत्याद्युक्तानृतादिपद-ग्रहणम् । **वा**=अथवा **ज्ञानकर्मादयः**=ज्ञानम्, कर्म=पुण्यपापादिकम् **अभिहिताः** । तत्तत्स्थलानुरोधेन नेयत्वात् 'वा' इत्युक्तम् । 'इन्द्रो मायाभिः' इत्यत्र सङ्कल्पात्मकं ज्ञानम् अभिमतम् । 'माया वयुनं ज्ञानं' इति यास्कः । विचित्रकार्यकारित्वात् माया इति परमात्मसङ्कल्प उच्यते । 'मायाभिः=प्रज्ञाभिः' इति भवदाचार्योऽपि । अथवा 'मायां तु प्रकृतिं विद्यात्' ( श्वे. 4-10) इति श्रुतिरेव विवृणोति मायापदम् । 'दैवी

**किंचाविद्यादिशून्यः पर इति विविधाम्नायकण्ठोक्तमर्थं**
**क्षेप्तुं मायादिशब्दः क्षम इति वदतः स्यादविद्या तवैव ॥ ४१ ॥**

**[मायाविद्याविभागवादपरीक्षा]**

**187. निर्दोषश्रुत्यबाधप्रणयिभिरुदितो ब्रह्मजीवानुबन्धी**
**मायाविद्याविभागोऽप्यफल इह; परोन्मोहनार्था हि माया।**

ह्येषा गुणमयी मम माया' (गी. 7-14) इति भगवद्वचनं च । प्रकृतिरपि विचित्रकार्यकारित्वात् माया-पदेनोच्यते । ऋतपदं परब्रह्मवाचि—'ऋतं सत्यं परं ब्रह्म' (म.ना.) इति श्रुतेः । तद्विलक्षणं तदन्यत् अनृतम्=माया । अविद्यया मृत्युं तीर्त्वा (ई) इत्यादावविद्या कर्म । 'अविद्या कर्मसंज्ञान्या' (वि.पु.6-7-61) इति विष्णुपुराणम् । **इत्येतत् तत्तत्प्रदेशे**=तत्तत्प्रकरणे **स्फुटविदितम्**=स्पष्टं ज्ञायत एव । अतः **त्वदिष्टा**=भवत्समता ब्रह्मणो बन्धहेतुः **अविद्या न**=न विवक्षिता ॥

'ऋतं सत्यं परं ब्रह्म' इति श्रुतस्य ब्रह्मणः जगद्रूपेण परिणामे कारणतयाभिहितं स्वप्रकाशरूपस्यापीतरेभ्य आवरणहेतुभूतं च वस्तु मायातमःप्रकृत्यनृतादिशब्दैरभिधीयते। 'अनृतेन प्रत्यूढाः', 'इन्द्रो मायाभिः पुरुरूप ईयते', 'अस्मान्मायी सृजते', 'अन्धेन तमसावृताः' इति। इतरेषां शरीरेन्द्रियापेक्षा, न तु ब्रह्मणः। एतत्सर्वस्थानेऽद्भुता दिव्या शक्तिरेव मायेत्युच्यते । अत एवास्याः योगमायेति 'नाहं प्रकाशस्सर्वस्य योगमायासमावृतः' इत्यादावुच्यते। 'दैवी ह्येषा गुणमयी मम माया' इत्यादिनानाविधैश्शब्दैरभिधीयते। यद्यपि परमात्मनो जगत्स्रष्टृत्वे इतरापेक्षाराहित्यमुच्यते 'न तस्य कार्यं करणं च विद्यते' (श्वे.6-8) इति । कार्यं शरीरम्। करणं इन्द्रियाणि। एवञ्च ब्रह्मापि स्वस्मिन्नन्तर्गतमेव जगद्विकासयति, ऊर्णनाभिवत्। अत एवानृताविद्यादिशब्दैस्तदभिधीयते। केवलस्वस्वरूपत एव ब्रह्म यदि जगत्सृजेत्, तर्हि स्वरूपस्य नित्यत्वात् सदैव जगत्सृजेत्। ततश्च स्थितिप्रलययोः प्रसक्तिरेव न स्यात्, ब्रह्मापि तन्न तदा भवेत्, त्रितयकारणत्वस्यैव ब्रह्मलक्षणत्वात्। न चेच्छावशादेकस्यैव कालभेदेन त्रितयकारणत्वोपपत्तिरिति चेत्, इच्छायाः ब्रह्मणश्चाभेदे पूर्वोक्तदोषापरिहारात्। भेदे, ब्रह्मभिन्नस्य कारणत्वापत्त्या, ब्रह्मणस्तदधीनत्वापत्तिः। भेदाभेदौ तु परस्परविरोधादेवैकत्र न सङ्गच्छतः। अतो ब्रह्मणस्त्रितयकारणत्वोपपत्त्यर्थमेव विलक्षणाया मायाया अङ्गीकारः। माया तु विचित्रकार्यकारिणी काचिद्भावरूपा प्रश्नातीता ब्रह्मण्येव वर्तमाना सर्वं निर्वहति। मायायाः प्रश्नातीतत्वादेव भेदाभेदादिविचारोऽपि न सङ्गच्छते। ऊर्णनाभिदृष्टान्तोऽत्रावधेयः। अत्र वक्तव्यमनन्तरश्लोकटिप्पण्यां वक्ष्यते ॥

अविद्याया आश्रयो ब्रह्मेत्येतदपि निराकरेति—**किञ्चेति**। **अविद्यादिशून्यः परः**=परमात्मा **इति विविधाम्नायकण्ठोक्तम्**=अनेकवेदवाक्यैः स्पष्टमभिहितम् अर्थम् **क्षेप्तुम्**=निरसितुम् **मायादिशब्दः**= मायाविद्यादिशब्दः **क्षमः**=समर्थः इति वदतः **तवैव अविद्या**=अज्ञानम् स्यात्, इति हास्योक्तिः। एवञ्च मायाया अज्ञानरूपत्वं वा ब्रह्माश्रितत्वं वा सर्वथाऽऽसंबद्धमित्यर्थः ॥ ४१ ॥

ब्रह्मणोऽविद्याश्रयत्वानुपपत्तिं परिजिहीर्षुः कश्चित् मायाविद्याविभागमाश्रयत्। तदनूद्य दूषयति—**निर्दोषेत्यादि** । **निर्दोषश्रुत्यबाधप्रणयिभिः**=ब्रह्मणो निर्दोषत्वप्रतिपादकानाम् 'निरवद्यम्' इत्यादिश्रुतीनाम्

**मिथ्यार्थान् दर्शयित्वा विहरणमपि तैस्तादृशं भावयन्ती**
**मायैव स्यादविद्या न कथमितरथा स्यादनुच्छेदनीया ॥ ४२ ॥**

---

**अबाधे**=यथाश्रुतार्थस्य बाधाभावे **प्रणयिभिः**=विश्वासवद्भिः=तादृशश्रुतेर्यथा बाधो न स्यात्तथा निर्वाह्य-मिच्छद्भिः कैश्चित् **उदितः**=कथितः **ब्रह्मजीवानुबन्धी=ब्रह्मानुबन्धी माया, जीवानुबन्धी अविद्या** इति **मायाविद्याविभागोऽपि अफलः**=व्यर्थः । कुत इत्यत्र— **हि**=यतः **माया परोन्मोहनार्था**=इतरेषांव्यामोह-जननी **इह**=अस्मिन् शास्त्रे कथ्यत इत्यध्याहार्यम् ॥

अस्तु परेषां मोहजननी माया । ब्रह्मगता माया जीवान् मोहयति । जीवास्तु मुग्धाः अविद्याया आश्रया इति ब्रह्मणो निरवद्यत्वं जातमेवेत्यत्र स्वतात्पर्यं विवृणोति— **मिथ्यार्थानित्यादिना**। **मिथ्यार्थान्**=मिथ्याभूतानर्थान् **दर्शयित्वा**=जीवेभ्यः प्रदर्श्य, **तैः**=तादृशैर्मिथ्यार्थदर्शिभिः जीवैस्सह **तादृशम्**=मिथ्या-भूतम् **विहरणमपि**=लीलामपि **भावयन्ती**=ब्रह्मणः संपादयन्ती सा **अविद्या मायैव स्यात्**=अविद्यारूपैव **कथं न** स्यात्? मायया मोहितैः जीवैस्सह विहरणं हि सृष्टेरुद्देश इति 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.2-1) इत्युक्तम् । एवं यदि लीला कर्तव्या, तर्हि ब्रह्मणोऽपि मिथ्याभूतार्थदर्शनमावश्यकम् । लोके तु मायाविनः पुरुषा मिथ्यार्थान् इतरेभ्य एव प्रदर्शयन्ति, न तु स्वयं तत्पश्येयुः । ब्रह्म यदि स्वयमपि मिथ्याभूतानर्थान् पश्येत्, तर्हि भ्रान्तिदर्शनात् मायाविद्याविभागो निरर्थक इत्यत एव प्रथममेव 'अफलः' इत्युक्तम् । ननु जीवास्तु भ्रान्ताः । ब्रह्म तु न भ्रान्तम् । यथा वा 'एकश्चन्द्रः' इति ज्ञानवतामपि अङ्गुल्यवष्टम्भादिना द्विचन्द्रदर्शनं भवति, अथापि द्रष्टुः भीत्यादिकं न भवति, तद्वत् मिथ्यात्वेनैव जगद्दर्शनं ब्रह्मणः । जीवस्य तु सत्यत्वेन जगद्दर्शनमित्यस्ति महान् विशेष इति, ब्रह्मणो नाविद्या, किन्तु मायैवेति चेत्तत्राह— **इतरथा**=यद्येतादृशदर्शनं न दोषः, तर्हि सा माया **अनुच्छेदनीया स्यात्**=निवर्तनीया न स्यात् । 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.1-10) इति सकलविधमायाया अपि निवृत्तिरेवाभिधीयते । द्विचन्द्रदर्शनादावपि अङ्गुल्यवष्टम्भो दोष एव, अविद्यमानवस्तुदर्शनहेतुत्वात् । तद्वत् मायापि अविद्यमानजगद्दर्शनहेतुत्वाद्दोष एव । अतश्च स्वव्यतिरिक्तसर्वनिवृत्तिरेव परमपुरुषार्थ इति ब्रह्मणो मायासंबन्धोऽपि दोष एव । अतश्च **घट्टकुट्यां प्रभातम्** । अतो मायाविद्याविभागोऽपि नेष्टसाधकः ॥

अयमाशयः परेषाम्— 'ब्रह्मैव स्वाविद्यया संसरति, स्वविद्यया मुच्यते' इत्यत्र, स्वाविद्ययेत्यस्य स्वविषयिणी अविद्येत्यर्थः । एवं स्वविद्ययेत्यत्रापि । ब्रह्मविषयिण्या अविद्याया आश्रयः ब्रह्मैव । अयमेव **ब्रह्माज्ञानवादः** । एभिः ब्रह्मणोऽज्ञानाश्रयत्वमसहमानैः **जरदद्वैतिभिः** प्रायः परिणामाद्वैतिभिः **भर्तृप्रपञ्चादिभिः** मायाविद्ययोर्भेद उक्तः । तत्र **माया** ब्रह्मनिष्ठा, **अविद्या** तु जीवनिष्ठा इति ब्रह्मणोऽविद्याश्रयत्वं परिहृतम् । परन्तु लोके मायावी परानेव मोहयति, नत्वात्मानम् । 'मायामोहितः' इत्यादावपि ऐन्द्रजालिकादिमायया पर एव मोहितः । प्रकृते ब्रह्मव्यतिरिक्तस्य कस्यापि तदानीमभावात्, अनेनैव कल्पनेऽन्योन्याश्रयादिदोषाच्च नेष्टसिद्धिः । अत्र तु 'ब्रह्मैव संसरति स्वमायया' इति पक्षो दूष्यते ॥

[ब्रह्मणो जगदुपादानत्वनिर्वाहः]

**188. मिथ्याभूतस्य सत्यं निरुपधि भजते न ह्युपादानभावं**
**तस्योपाधिश्च मिथ्यात्मक इति निरधिष्ठानता नास्य युक्ता ।**

**वस्तुतस्तु**—अविद्या इति विद्येतरत् किञ्चिद्वस्त्वेव विवक्षितम्, अदित्यसुरादिपदवत् । दितिरिति कश्यपप्रजापतेर्ज्येष्ठपत्नी । तदन्या तत्पत्नी अदितिरिति । एवमसुरपदमपि । इयं प्राचां प्रक्रिया । एवं अविद्यापदमपि तत्तत्प्रकरणानुरोधेन कर्म वा अन्यद्वा किञ्चिदभिधत्ते भावात्मकमेव स्वतः । अत एव भावरूपाज्ञानसाधनक्लेशोऽपि वृथा, तन्निरासप्रयासोऽपि ॥

काकदन्तपरीक्षावदेतादृशपरीक्षणम् । यद्यप्यध्यात्मशास्त्रेषु नाधिकं शोभतेऽञ्जसा ॥
तथाप्याचार्यवर्यास्तु तत्कालादिसमीक्षया । यक्षानुरूपन्यायेन किञ्चिदूचुस्तु वैभवात् ॥
गतः कालस्तादृशोऽद्येत्यवधेयं मनीषिभिः । शब्दस्य वर्धनं त्यक्त्वा वस्तुतत्त्वं विचिन्त्यताम् ॥
अदितिश्च दितिश्चास्तां पत्न्यौ कश्यपसंमते । विद्याविद्ये मिलित्वैव साधनं नस्समीरिते ॥
'अविद्या कर्मसंज्ञान्ये'त्यार्षं वाक्यमपीक्ष्यताम् । अतो मायाश्रयत्वं तद्ब्रह्मणः कल्पितं धिया ॥
यतो मायेति नास्त्येव पृथक्क्वाचित् स्वरूपतः । धर्मभूतज्ञानवत्सा कामादिपदबोधिता ॥
लीलोपकरणं सा तु ब्रह्मणो जगदीशितुः । प्रश्नातीतेति तात्पर्यादाह लीलापदं मुनिः ॥

ननु नेत्रदोषमूलकं द्विचन्द्रदर्शनं द्रष्टुः भयादिजनकं भवति । 'एकश्चन्द्रः' इति जानन्नेव कश्चित् बुद्धिपूर्वकमङ्गुल्यवष्टंभादिहेतुना चन्द्रद्वयं यदि पश्यति, तस्य भयादिकं न भवत्येव । एवमेवैन्द्रजालिक इतरान् व्यामोहयन् क्रीडति । स्वयं तु स्वसामर्थ्यं पश्यन्नन्दतीत्यदोष इति चेत्—

तर्हि स्वीक्रियतां लीलावादः प्राज्ञैस्समीरितः । त्यज मिथ्यात्ववादं च ब्रह्मवैभवहारकम् ॥
तूष्णीं वा तिष्ठ दुर्ज्ञेयं तत्त्वं मत्वा सतामपि । गच्छ श्रेयस्करे मार्गे न मायावशगो भव ॥ ४२ ॥

ब्रह्मणोऽविद्याश्रयत्वमनिवार्यमित्याशङ्क्य समाधत्ते—**मिथ्याभूतस्येत्यादि**। मिथ्याभूतस्य जगतः **निरुपधि सत्यम्**=निरुपाधिकसत्यस्वरूपं ब्रह्म **उपादानभावम्**=उपादानकारणताम् **न हि भजते**=नैव प्राप्नोति । मिथ्यात्वं नाम बाधितत्वम्, सत्यत्वं त्वबाधितत्वम् । कथमनयोरुपादानोपादेयभावः? ब्रह्मण उपादानत्वस्य वेदान्तोक्तत्वात्तन्निषेधासंभवेन 'निरुपधि'विशेषणम् । नित्यशुद्धबुद्धमुक्तस्वरूपं हि ब्रह्म स्वस्वरूपेण न ह्युपादानं भवेत्, तस्यासङ्गोदासीनस्वभावत्वात् । अतः कश्चनोपाधिर्वक्तव्यः । स एवाविद्यामायादिपदैरुच्यते । तथा चाविद्योपहितं ब्रह्मैवोपादानम्, शुद्धं तु ब्रह्म अविद्यासाक्षि । अविद्याया अपि सत्यत्वे का हानिः? इत्यत्र—**तस्य**=ब्रह्मणः **उपाधिश्च**=उपाधिभूताविद्यादिरपि **मिथ्यात्मकः**=सत्यत्वेऽद्वैतहान्या, उक्तरीत्योपादानत्वासंभवाच्च मिथ्यारूप एव भवेत् । तर्हि ब्रह्मणः कुत आवश्यकता? अविद्ययैव निर्वाहादित्यत्र—**इति**=अविद्याया मिथ्यात्मकत्वादेव हेतोः **अस्य**=उपाधेः **निरधिष्ठानता न युक्ता**= अधिष्ठानमन्तरा मिथ्याकल्पनाया एवासंभवात्, निरधिष्ठानभ्रमस्य कुत्राप्यसंभवात् । अतः ब्रह्माधिष्ठिताविद्यैव अविद्योपहितं

**तस्मात् सत्यानृते द्वे मिथुनमिति न सत्; विश्वसत्ता ह्यबाध्या**
**सद्विद्यायां च, कार्यं ननु कथमसतस्सद्भवेदित्युपात्तम् ॥ ४३ ॥**

**[उपादानोपादेययोस्सालक्षण्यनिरासः]**

**189. कार्याणां यत् सरूपं किमपि गुणमयं कारणं कापिलोक्तं**
**तत् क्षिप्तं माक्षिकादेः क्रिमिमुखजननात् सूत्रकारैर्द्वितीये ।**
**तस्मान्मिथ्यात्मकस्य स्वयमनुपधिकं सत्यमेवास्तु सूतिः**
**सत्योपादानवादे जगदपि न मृषा स्यादितीष्टं त्विदं नः ॥ ४४ ॥**

---

ब्रह्म वा साक्षाज्जगदुपादानम्, विशुद्धं तु ब्रह्म साक्षिमात्रमित्यविद्या आवश्यकी । **तस्मात्**=एवं विशिष्टस्यैवोपादानत्वात् **सत्यानृते द्वे मिथुनम्**=सत्यस्वरूपं ब्रह्म मिथ्याभूताविद्या च मिळित्वा जगदुपादानम्, न प्रत्येकम् । एवं मिलितस्यैवोपादानत्वात्, अविद्याऽवर्जनीया, तस्या मिथ्यात्वमप्यवर्जनीयम् ॥

एतन्निराकरोति— **इति न सत्**=समीचीनम् । कुतः? **हि**=यतः **विश्वसत्ता**=जगतस्सत्यत्वम् **अबाध्या**=न बाधितुं शक्या । जगतो मिथ्यात्वं निश्चित्य खलूच्यते— 'मिथ्याभूतस्य सत्यं नोपादानम्' इति । जगतः कदापि कस्यापि बाधादर्शनात् कथं तस्य मिथ्यात्वम्? भाषितं च भवदाचार्यैरेवमेव (ब्र.सू.2-2-29) । ब्रह्मतुल्यं सत्यत्वं नास्ति जगत इति तु संमतमेवास्माकमपि, जन्माद्यधिकरणे सत्यपदेन जगतो व्यावृत्तिमभिदधतः श्रीभाष्यकारस्य वचनात् । 'एकमेव' इति श्रुत्या सृष्टेः पूर्वं ब्रह्मव्यतिरिक्तासद्भावसिद्ध्या जगतो मिथ्यात्वं सिद्धमित्यत्राह— **सद्विद्यायामित्यादि** । छान्दोग्ये षष्ठप्रपाठकोक्तायां **सद्विद्यायाम् च कार्यम्**=जगद्रूपं कार्यम् **सत्**=सद्रूपं **असतः**=असद्रूपात् कारणात् **कथं भवेत्?** इति **उपात्तं ननु**=प्रतिपादितं किल । 'तद्धैक आहुरसदेवेदमग्र आसीत्' (छां.6-2-1) इति परपक्षमनूद्य, 'कुतस्तु खलु सौम्येवं स्यात् । कथमसतस्सज्जायेत (2) इति कार्यस्य जगतः सत्त्वात् कारणस्यापि सद्रूपत्वमुच्यते स्पष्टम् । एवं सति जगतो मिथ्यात्वं कुतस्सिद्धम्? अतो मिथ्याभूतस्येत्यादिकमसंबद्धम् ॥ ४३ ॥

जगतो मिथ्यात्वाभ्युपगमेऽपि न तवेष्टसिद्धिरिति वैभवेन प्रदर्शयति— **कार्याणामित्यादि** । **कार्याणाम्**=जगति दृश्यमानानां बहुविधानां घटपटादीनाम्, गृहारामादीनाम्, भोग्यभोगोपकरणभोगस्थानादीनाम् **सद्रूपम्**=समानस्वरूपवत् **गुणमयम्**=सत्त्वरजस्तमोगुणात्मकम् **किमपि कारणम्**=त्रिगुणात्मकमेव यत्किञ्चित्कारणम् **यत्**=प्रकृत्यात्मकं वस्तु **कापिलोक्तम्**=कपिलोपज्ञसाङ्ख्यतन्त्रप्रोक्तम् ; तत्, **सूत्रकारैः**= शारीरकमीमांसासूत्रकारैः बादरायणमुनिभिः **द्वितीये**=द्वितीयाध्याये, विशिष्य प्रथमपादे तृतीयाधिकरणे **माक्षिकादेः**=मधुमक्षिकादेः **कृमिमुखजनिना**=कृमिप्रभृतिभ्य उत्पत्तिप्रदर्शनेन **क्षिप्तम्**=निरस्तम् ॥

अस्तु तत् । प्रकृते किमायातं तेनेति चेत्— **तस्मात्**=उपादानोपादेययोस्सारूप्यस्य निराकरणात् **अनुपधिकम्**= अविद्याख्योपाधिरहितं **सत्यमेव**=सत्यस्वरूपं ब्रह्मैव **स्वयम्**=इतरापेक्षामन्तरापि स्वस्वरूपेणैव **सूतिः**=उपादानकारणम् **अस्तु**=भवतु । अतश्च मध्ये अविद्याकल्पनं व्यर्थमेव । **तस्य**=सत्यस्य ब्रह्मणः **उपादानवादे**=स्वरूपत एवोपादानत्वकथने **जगदपि**=उपादेयं जगदपि **मृषा**=मिथ्या **न स्यात्** इति

चेत्, **इदं तु नः**=अस्माकम् **इष्टम्**=संमतमेव, सिद्धान्ते जगतस्सत्यत्वाङ्गीकारात् । आपाद्यस्य परानिष्टत्वाभावादापादनं व्यर्थमेव । ततश्चाविद्याकल्पनमनुपपन्नम् ॥

शारीरकमीमांसापरपर्यायां ब्रह्ममीमांसायाम् आद्येऽध्याये निखिलचेतनाचेतनविलक्षणं ब्रह्मैव जगदुपादानम्, न तु साङ्ख्यप्रोक्तं त्रिगुणात्मकं जडद्रव्यमिति विस्तरेण प्रत्यपादि । तदनन्तरमुक्तार्थदार्ढ्यायोक्तेऽर्थे स्मृत्यादिविरोधपरिहाराय द्वितीयाध्यायः प्रारब्धः। तत्र प्रथमं सांख्यस्मृतिविरोधपरिहाराय प्रथमपादः प्रावर्तत । तत्प्रसङ्गादेव, कापिलतन्त्रस्य तर्कानुगुणत्वात्, व्यासतन्त्रस्य तर्काननुगुणत्वाच्चाक्षिप्यते—'न विलक्षणत्वादस्य तथात्वं च शब्दात्' (ब्र.सू.2-1-4) इत्यादिना तृतीयाधिकरणे । मृदो जातं मृदेव भवति, सुवर्णाज्जातं सुवर्णमेव भवति । एवमुपादानोपादेययोस्साजात्यं दृष्टम् । अतस्त्रिगुणात्मकस्य जगत उपादानमपि त्रिगुणात्मकमेव स्यात् । इदं हि प्रत्यक्षतः प्रतिपन्नं जगत् सुखदुःखमोहात्मकं दृष्टम् । सर्वं हि वस्तुजातं कस्यचिच्चेतनस्य सुखाय, दुःखाय, मोहाय वा भवतीति सर्वानुभवसिद्धम् । तत्र सुखहेतुः सत्त्वमिति, दुःखहेतुः रज इति, मोहहेतुः तम इति च सांख्यसिद्धान्ते प्रोच्यते, अस्मत्सिद्धान्तसंमतञ्चैतत् । 'सत्त्वं सुखे सञ्जयति' (गी.13-9) इत्यारभ्य 'रजसस्तु फलं दुःखमज्ञानं तमसः फलं' (गी.13-16) इत्यादिनाभिहितञ्च । एवं सुखदुःखमोहात्मकस्य जगतः उपादानभूतमपि वस्तु तादृशमेव स्यात् । ब्रह्म तु निर्गुणम्=गुणातीतम्=त्रिगुणरहितम् । अतः त्रिगुणात्मिका प्रकृतिरेव मायाविद्यादिपदवाच्या जगदुपादानम्, न ब्रह्मेति पूर्वपक्षे—

**सिद्धान्तस्तु**—दृश्यते तु (ब्र.सू.2-1- 6) । दृश्यते हि लोके विलक्षणयोरप्युपादानोपादेयभावः। बहुलम्—क्रिमिभ्यो माक्षिकादिः, गोमयाद्वृश्चिकादिश्च । श्रुतिरपि 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयस्संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्' । (मुं.1-1-7) इति । नन्वत्राचेतनांशस्याचेतनांश एवोपादानम्, न त्वचेतनस्य चेतनम्, चेतनस्य वाऽचेतनमिति चेत्, वृश्चिकात् वृश्चिकोत्पत्तिः खलु न्याय्या । गोमयाद्वृश्चिकोत्पत्तिः, क्रिमिभ्यो मधुमक्षिकोत्पत्तिश्च उपादानोपादेययोः समानजातीयत्वस्यापवाद एव । तावन्मात्रं प्रकृते पर्याप्तम् । सारतो वक्तव्यं यदि—वेदान्तिनां तु सर्वमपि जगच्चेतनाचेतनात्मकमेव । यावन्मुक्ति तयोः पृथक्करणं न संभवत्येव । विशिष्य चैतत्सिद्धान्ते चेतनाचेतने द्वे अपि भगवच्छरीरभूते, अपृथक्सिद्धविशेषणभूते । विशिष्टमेवोपादानम्, उपादेयं च । येन केनचिद्रूपेण सालक्षण्यं तु, अन्ततः सत्त्वेन रूपेण सर्वत्र समानम् । सर्वांशे सालक्षण्यं तु कुत्रापि न संभवि । अपि च तर्कातीते वस्तुनि, लौकिकस्तर्कः न स्पर्धेत । उष्णस्पर्शवतस्तेजसः शीतस्पर्शवदपः प्रत्युपादानत्वमङ्गीकुर्वतां सांख्यानामुपादानोपादेययोस्सालक्षण्यनिर्बन्धो हास्यास्पद एव । तद्वदेव मिथ्याभूतस्य जगत उपादानप्रश्न एव हास्यास्पदः । भ्रान्त्या दृश्यमानस्य सर्पस्योपादानापेक्षा का? तत्रापि ब्रह्मण उपादानत्वसमर्थनं तु विवर्तवादिनामत्यन्तहास्यास्पदम् । अधिकमन्यत्र ॥

**अत्रेयं समस्या वेदान्तिनाम्**—'सदेव सौम्येदमग्र आसीदेकमेवाद्वीतीयम्' (छां.6-2-1) इति श्रुतिः प्रलयकाले सच्छब्दवाच्यं ब्रह्मैकमेवासीदिति वदति । एकम्, एव, अद्वितीयम् इत्यादिपदैः किलेतरनिषेधकैः तदा ब्रह्म सकलभेदरहितमत एव निर्विशेषमासीदिति गम्यते । तादृशाद्ब्रह्मणः विचित्रमिदं

बहुविधं जगत् कथं भवेत्? इति। यद्यप्युत्तरश्रुतिः 'तदैक्षत बहुस्याम्' इति संकल्पमात्रेण जगत्सृष्टिं वदति। वेदान्तसूत्रमपि 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (2-1-24)'विकरणत्वान्नेति चेतदुक्तम्' (2-1-31) इति सामग्र्यन्तरं सर्वं निषेधति। परं त्विदं कथमित्येव हैतुकानां बौद्धानामाक्षेपः। 'हन्त ब्रह्मोपदेशोऽयं श्रद्दधानेषु शोभते। वयमश्रद्दधानाः स्मः ये युक्तिं प्रार्थयामाहे ॥' इत्युपहसन्ति स्म ते वैदिकान्। अतः जगत्सर्वं केवलं कल्पितम्, अत एव भ्रमरूपमिति वक्तव्यम्। यद्यपि परिणामवादमाश्रित्य बीजवृक्षन्यायेन एकस्य बहुभावस्समर्थयितुं शक्यते; परं तु तदा ब्रह्मणो विकारित्वापत्तिः। अतो जगन्मिथ्यात्वमन्तरा ब्रह्मण उपादानत्वं न निर्वोढुं शक्यमिति **विवर्तवादिनः** ॥

**सिद्धान्तिनस्तु**—तदेतत्, शिरश्शूलपरिहाराय शिरश्छेदायत इति मन्यन्ते। तर्हि कथं निर्वाह इति चेत्, इदमत्र विचारयामो विस्तरात्। 'सदेव' इत्यादिश्रुतेः 'सदेवेदमग्रे एकमेवासीत्' इति, 'इदमग्रे सदेव एकमासीत्' इति द्वेधार्थोऽवर्णि(श्रीभा.—वे.सं)। प्रथमेऽर्थे जगतस्सत्यत्वं स्पष्टमुक्तं भवति। द्वितीये तु कारणरूपेण सत्यत्वमुक्तं भवति। एवं जगद्ब्रह्मणोरुपादानोपादेयभावं नानाविधैरुपायैः वक्तुं प्रवृत्तेषु खण्डेषु कुत्रापि रज्जुसर्पो वा शुक्तिरजतं वा कुतो न दृष्टान्तीकृतमिति विना पूर्वग्रहं चिन्तनीयम्। न्यग्रोधबीजदृष्टान्तस्तु गाढमालोचनीयः। प्राचीनसंप्रदायोऽपि परिणामवादस्यैवानुकूलः। छान्दोग्यवाक्यकारः अत्रेयब्रह्मनन्दिसंज्ञकः मतद्वयाचार्याणामप्यादरविषयः। तदीयं वाक्यम् 'परिणामस्तु स्याद्दध्यादिवत्' इति मतद्वयेऽपि प्रमाणीक्रीयते। यद्यपि परिणामवादोऽपि विवर्तवादस्यानुकूल एवेति वदति सर्वज्ञात्ममुनिः 'व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः' (सं.शा.2-61) इति। परं तु इदं स्वसिद्धान्ताभिमानादेवेति अग्रे व्यक्तीभवति। सूत्रप्रोक्ते क्षीरदृष्टान्ते विशेषश्च प्रादर्शि श्वेताश्वतरे 'सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्' (1-16) इति। दध्नि कथञ्चित्प्रत्यभिज्ञायेत क्षीरम्, सर्पिषि तु तादृशी प्रत्यभिज्ञापि न स्वरसतो वर्तते। परं तु दध्यादिवत् स्वरूपपरिणामे विकारित्वापत्तेः कथं वारणम्?

**इदमत्र द्रष्टव्यम्**। तत्रैव 'एकं बीजं बहुधा यः करोति' (श्वे.6-12) इति एकस्य बहुधाभावे बीजदृष्टान्तो दत्तः। इदञ्च वचनं श्रीशङ्कराचार्यैरपि तदनन्यत्वाधिकरण एवोदाहारि। परिदृश्यमानं स्थूलं द्रव्यं न बीजपदस्यार्थः, यतो मूषिकाघ्रातात्, भ्रष्टाद्वा तस्मान्नाङ्कुरमुद्भवति। किन्तु परिदृश्यमानस्थूलद्रव्याधिष्ठानकम् अतीन्द्रियं सूक्ष्मचैतन्यमेव बीजपदार्थः। तस्मादेकस्मादेव शतशः सहस्रशश्च बीजानि कालान्तर आविर्भवन्ति। बीजपदार्थभूतचैतन्यविशेषः सावयवः, उत निरवयवः? सावयवत्वे किं तदेकदेशावयवादेव बीजान्तरं प्रादुर्भवति, उत सर्वेभ्योऽप्यवयवेभ्यः? आद्ये एकदेशाज्जातात् बीजाज्जातो वृक्षः कथं पूर्णरूपो भवेत्? निरवयवत्वे तस्माज्जातेषु बहुषु बीजेषु तद्गतं चैतन्यं कथमेकैकस्मिन्नपि पूर्णं विभक्तं भवेत्। अपूर्णत्वे च तस्मात्पुनः समानं वृक्षान्तरं कथं भवेत्? कृत्स्नप्रसक्त्यधिकरणपूर्वपक्षस्यायमेव विषयः ॥

**सिद्धान्तस्तु** 'श्रुतेस्तु शब्दमूलत्वात्' (ब्र.सू.2-1-27) इति। धर्मिग्राहकप्रमाणसिद्धत्वादित्यर्थः। एवं तर्हि 'आत्मनि चैवं विचित्राश्च हि'' (2-1-28) इत्यात्मैव दृष्टान्त उक्तः, न तु बीज-

दृष्टान्तः । कुतः? इति शङ्का स्यात् । परं तु बीजमप्यतीन्द्रियमित्यनुपदमुक्तम् । एतदपेक्षया आत्मन एव दृष्टान्तत्वं स्वरसमिति तदेवोक्तम् । स्वात्मा हि सर्वेषां स्वप्रकाशप्रत्यक्षसिद्धः । आत्मा चात्यन्तं विचित्रः । 'आश्चर्यवत्पश्यति कश्चिदेनम् आश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ।' (गी.2-29) इति खलु वर्ण्यते सः । आत्मपदेन सस्यवृक्षाद्यात्मनामपि ग्रहणे निरोद्धा कः? अतस्स दृष्टान्त एव युक्ततरः ॥

न केवलं युक्ततरः, युक्ततम इत्यपि वक्तव्यम् । यतो ब्रह्मण उपादानत्वे प्राप्ता आक्षेपा अनेन दृष्टान्तेनात्यन्तं सुपरिहराः । ब्रह्मण उपादानत्वे ब्रह्मणो विकारित्वप्रसङ्गः । पूर्वरूपोपमर्दपूर्वकोत्तरावस्थाया अभावान्न दोष इति कथञ्चित्तत्परिहारेऽपि, ब्रह्मणोऽपुरुषार्थसंबन्धोऽनिवार्यः । हेयप्रत्यनीकत्वकल्याण-गुणाकरत्वरूपोभयलिङ्गत्वाद्ब्रह्मणः स दोषो न भवतीति प्रतिपादनेऽपि, कुतो न भवतीति प्रश्नः हृदयान्तराले स्यादेव, यावत् आत्मस्वरूपपरिचयो न भवति लेशतो वा । तदर्थमेवैतद्विषये आत्मैव दृष्टान्तीकृत-स्सूत्रकारेण । आत्मनि कीदृशं वैचित्र्यमिति पश्यामः ॥

'आत्मकृतेः' 'परिणामात्' (ब्र.सू.1-4-26,27) इति सूत्राभ्यां हि परिणामवाद एव सूत्रकारस्य संमत इति स्पष्टम् । एवं सति तदनन्यत्वाधिकरणे स्वोक्तमेव स्वयं खण्डयतीति कथं विश्वसनीयम्? एतदधिकरणानन्तरमपि उपरितनाधिकरणानि सर्वाण्यपि परिणामवादानुगुणान्येव । किं बहुना? तदनन्यत्वाधि-करण एवोत्तरसूत्राण्यपि परिणामवादानुबन्धीन्येव । यदि प्रथमसूत्रे विवर्तवादस्सूत्रकारसंमतः, उत्तरग्रन्थस्सर्वोऽपि विफल एव । सूत्रकारो यद्यपि सविशेषवादपक्षपाती, परन्तु उपनिषदो विवर्तवादपरा इति कथनमप्युप-हास्यम् । उपनिषदर्थविचारायैव हि प्रवृत्तमिदं शास्त्रम् । एवं सत्युपनिषदामर्थः कश्चित्तद्विरुद्धः कथं स्यात्? एवमेव सगुणनिर्गुणवादेऽपि बहु वैपरीत्यं तटस्थानां संमतमेव । अत इदमत्र तत्त्वम् ॥

परिणामवादे ब्रह्मणोऽपुरुषार्थसंबन्धदोष आपादिते, तस्य निर्दिष्टमुत्तरम् 'असङ्गो ह्ययं पुरुषः' (बृ.6-3-18) इत्येव । कथमिदमङ्गीकर्तुं शक्यमित्यस्योत्तरम् 'आत्मनि चैवं विचित्राश्च हि' (ब्र.सू.2-1-28) इत्येव । किं तत्तादृशं वैचित्र्यमिति चेत्, इदमत्र गाढं चिन्तनीयम्—परिणामवादो हि सत्कार्यवादः उपादानोपादेययोरभेदवादः । अस्मिन् वादेऽसत्कार्यवादिभिः=उपादानोपादेययोरत्यन्तं भेदवादिभिः **व्यासतीर्थादिभिः** महानेको दोष आरोप्यते । यद्युपादानोपादेययोरभेदः, तर्हि ग्रामसारैस्संवर्धितकलमसस्यफलभूतस्य तण्डुलस्य ग्रामसारस्य चाभेदावश्यंभावात्, तादृशतण्डुलनिर्मितान्नभक्षणे पुरीषभक्षणदोषप्रसङ्ग इति । किमत्र प्रामाणिकं समाधानम्? अत्र तान् पृच्छामः—एतद्रीत्या यदि त्यज्यते परिणामवादसंज्ञा, तावतापि कथं दोषः परिहृतो भवेत्? उभयोर्भेद इति कथनमात्रेण पदार्थानां वस्तुस्थितिः किं परिवर्तिता भवेत्?

अहो किलामी विद्वांसः कथं तृप्यन्ति शब्दतः । केवलम्, ह्यर्थदृष्टिर्हि कुतस्तेषां न विद्यते ॥
पूर्वग्रहः स्यात् किं कुर्मः, प्रकृतं स्मर्यतामिह । परिणामो हि विज्ञानसिद्धस्त्यक्तुं न शक्यते ॥
को वा स्यात्परिहारोऽत्र, कथ्यंतां सर्वसंमतम् । अत्र वत्स! न भेतव्यम्, त्वमप्येतद्विचिन्तय ॥

एक एव ग्रामसारो नानाविधेभ्यो वृक्षेभ्यः, सस्येभ्यः, लताभ्यश्च दीयते । फलं तु नैकरूपम् । आम्राय दत्तस्सः मधुरफलरूपेण परिणमते । तिक्तनारङ्गाय दत्तस्तु तिक्तफलरूपेण । जम्बीराय दत्तस्तु आम्लफलरूपेण । मल्लिकालतायै दत्तस्तु सुगन्धकुसुमरूपेण । एवमन्यदन्यदपि विचित्रम् । कथमेकमेवैवं बहुधा परिणमते? प्रत्यभिज्ञा तु कुत्रापि न लेशतोऽपि । परिणामस्तु प्रत्यक्षविज्ञानादिसिद्धिः । इदमेवात्र प्रामाणिकमुत्तरम्—मृदो घटादिरूपेण यथा, न तथात्र ग्रामसारस्य परिणामः ऊहितुमपि शक्यः, तदेवेदमिति लेशतोऽपि प्रत्यभिज्ञायाः कस्याप्यदर्शनात् । अन्वयव्यतिरेकादिसिद्धः परिणामस्तु नापह्नोतुं शक्यः । इदमेवात्र रहस्यम्—एषूपादानोपादेययोर्मध्येऽन्तः विलक्षणाश्चेतना वर्तन्ते । मृद्धटादौ तु चेतनः कुलालः बहिर्वर्तते । अतस्स निमित्तमात्रम् । बीजवृक्षादौ तु स आन्तरः । स्थावरा अपि चेतनविशेषा एवेति वैदिकानां संमतमेव । तेषां चेतनानामेवायं महिमा, यत् स्वस्वस्वभावानुगुणमिन्द्रजालमेव ते कुर्वन्ति । अत एवायं न सामान्यः परिणामः, विलक्षणो विविधः विचित्रश्च परिणामः । अयमेव **विवर्त** इत्युच्यते वस्तुतः । विरुद्धः, विविधः, विलक्षणः, विचित्रो वा वर्तः=विवर्तः । **विवर्तवादे** हि कारणगता दोषाः गुणा वा कार्ये न संक्रामन्ति, कार्येषु दृश्यमाना विशेषा अपि कारणे न संबध्यन्ते; अथापि उपादानोपादेयभावो न त्यक्तः । एवञ्च यत्र कार्ये न कारणप्रत्यभिज्ञानं तत्र **विवर्तः**, यत्र च प्रत्यभिज्ञानं स **परिणामः** । 'समसत्ताकोऽन्यथाभावः परिणामः, विषमसत्ताकोऽन्यथाभावस्तु विवर्तः' इति लक्षणमप्येतदर्थकम्, किन्त्वचतुरश्रम् ॥

विवर्तवादस्यात्रैवावकाशो वस्तुतो भवेत् । परिणामो ज्ञानिदृष्ट्या विवर्तो लोकदृष्टितः ॥
सर्वं गतं पूर्वमेव विस्तरेण सयुक्तिकम् । मननं क्रियतां तत्त्वस्थितिं ज्ञात्वा मुहुर्मुहुः ॥
प्रायस्तु पण्डिता एतत् नाङ्गीकुर्युः, यतस्तु ते । बहुदूरं भिन्नमार्गे गताः शब्दपरायणाः ॥
अथापि सत्यमेतत्तु नापह्नोतुं तु शक्यते । प्रदर्शयामोऽत्र दृढं प्रमाणं दुरपह्नवम् ॥

श्रीशङ्कराचार्याः **सांख्यसिद्धान्ता**नुवादावसरे 'त्रिगुणं प्रधानं स्वभावेनैव विचित्रेण विकारात्मना **विवर्तते**' (ब्र.सू.2-2-1-शं) इति परिणामपदस्थाने विवर्तपदं प्रयुञ्जते । **वाचस्पतिमिश्रो**ऽप्येतदनुमनुते । एतत्पूर्वतनः **भर्तृहरिः**—'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् । विवर्ततेऽर्थभावेन' (वा.प.1-1) इति, 'शब्दस्य परिणामोऽयमिति न्यायविदो विदुः' (वा.प.ब्र.121) इति च विवर्तपरिणामशब्दौ समानार्थौ बहुधा प्रयुक्तवान् । **भवभूतिः** 'एको रसः करुण एव निमित्तभेदात् भिन्नः पृथक्पृथगिवाश्रयते विवर्तान् । आवर्तबुद्बुदतरङ्गमयान् विकारान्' (उ.रा.च.3-47) इति एकस्मिन्नेव श्लोके एकस्मिन्नेव दृष्टान्ते विकारविवर्तपदे प्रयुङ्क्ते । एवं संप्रतिपन्नाः प्राचीना महाविद्वांसः कथं विवर्तपरिणामपदे पर्यायवत्प्रयुञ्जत इति दिङ्मूढा इव पृच्छन्ति विद्वांसः । 'प्राचीनानां तत्पदयोर्विभिन्नार्थकत्वज्ञानं नासीदिति भाति' इत्यपि कश्चित्साहसिको वदेत्॥

परिणामवादे हि उपादानस्यान्यथाभाव आवश्यकः । अस्तु नामान्यथाभावः का हानिः? इति धैर्येण स्वीकरोति **कुमारिल** एव (श्लो.वा.आत्म.) । **श्रीमद्रामानुजाचार्या** अपि अन्यथाभावे भेदोऽस्तीति प्रदर्श्य ब्रह्मणि दोषप्रसङ्गं वारयन्ति (ब्र.सू.2-3-18) । विवर्तवादोऽध्यासवादः, मिथ्यात्व वाद इति नवीनानामेव भ्रमः, न तु प्राचीनानाम् । प्राचीनानां तु स परिणामवाद एव । अत एव श्रुतिसूत्रादिषु कुत्रापि अध्यासवादो

लेशतोऽपि न दृश्यते। श्रीशङ्करानन्तरकालिकस्तु सर्वज्ञात्ममुनिः 'विवर्तवादस्य तु पूर्वभूमिः वेदान्तवादे परिणामवादः। (सं.शा.2-61) इत्युभयोरर्थभेदमाह। एतत्सर्वपरिशीलने पदद्वयमिदं अनुपदमस्मदुक्त एवार्थे आसीत्। श्रीशङ्कराचार्यैः तत्कालदृष्ट्या बौद्धोपच्छन्दनायोक्तस्याशयानभिज्ञैरितरैः विरुद्धार्थकं गृहीतं पूर्ववासनयेति प्रतीयते॥

युक्तं चैतत्। 'अग्नेरापः' इत्युक्तमपां अग्न्युपादानकत्वं विस्मृतैतद्वाक्यः को वा विश्वसेत्? कारणस्याग्नेः कार्येष्वप्सु न हि लेशतोऽपि प्रत्यभिज्ञा संभवति। अत एतादृशस्थले परिणामविशेषवाची विवर्तशब्दः प्रयुज्यते। यत्र प्रत्यभिज्ञा दृश्यते तत्र परिणाम इति कथनात्, ये एकमेव तत्त्वमेतावद्रूपेण परिणमत इति जानन्ति, तेषां दृष्ट्या परिणामः। अत एव सर्वज्ञः बादरायणोऽपि 'परिणामात्' (ब्र.सू.1-4-27) इत्येवासूत्रयत्। तावन्मात्रमपर्याप्तं मन्यमानः 'आत्मकृतेः' (ब्र.सू.1-4-26) इति सूत्रं योजन् उक्तमर्थं पोषयति॥

अतश्च ज्ञानिनां दृष्ट्या परिणामः, अज्ञानिनां दृष्ट्या तु विवर्तः। अत एव वाक्यपदीये एतत्पदयोः पर्यायतया प्रयोगः। एवं विवर्तपरिणामयोरतिसन्निहितत्वादेव 'विवर्तवादस्य हि पूर्वभूमिः वेदान्तवादे परिणामवादः। व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः' (सं.शा.2-61) इति वक्तुं प्रारेभिरे। ब्रह्मपरिणामवादे सिद्धे, ब्रह्मणः निर्दोषत्वरक्षणार्थं जगन्मिथ्यावाद आश्रयणीय एवेत्येतेषामनन्तरकालिकानामाशयः। अतश्चोत्तमाधिकारिदृष्ट्या 'सर्वं खल्विदं ब्रह्म' (छां.3-14-1) इति सामानाधिकरण्यम् 'मृदयं घटः' इतिवदुपादानोपादेयभावप्रयुक्तमवगन्तव्यम्। बाधायां सामानाधिकरण्यादिकं त्वनन्तरकालिकं पूर्वग्रहमूलकमित्यादि अग्रे (बुद्धि.94-100) विस्तरेण भविष्यति॥

एवमङ्गीकार एव ग्रामसारफलभूततण्डुलनिर्मितान्ने, ग्रामसारस्य रूपरसगन्धादीनामत्यन्त विलक्षणत्वात्, प्रत्यभिज्ञातुमप्यशक्यत्वाच्च दोषाभाव इत्युत्तरं वक्तुं शक्यम्। एतादृशमद्भुतमिन्द्रजालं तत्रस्थजीवात्मनः प्रभावादेवेति आत्मशक्तेर्वैचित्र्यं मनसि कृत्वैव 'आत्मनि चैवं विचित्राश्च हि' इत्युक्तम्। एतादृशो विवर्तवाद एव 'विचित्राश्च हि' इत्यनेनोच्यते। सांख्यमतस्य वेदान्तिमतस्य च ह्ययमेव विशेषः। आद्यमानुमानिककारणतावादि। द्वितीयं तु श्रौतकारणतावादि। जगत्कारणस्यानुमानिकत्वे मानवबुद्धेः प्राधान्यमागच्छति। तस्य श्रौतत्वे तु बुद्ध्यतीतदिव्यप्रज्ञामूलकत्वं जगतः सिद्ध्यति। बौद्धानां वैदिकानाञ्च मध्ये इयमेव मर्यादा। मानवबुद्धेस्सान्त्वनं बुद्ध्यैव साध्यं मन्यन्ते बौद्धाः। सर्वथा तन्न संभवीति वैदिकाः। एतदपि मध्यकालिकबौद्धानां वैफल्यसूचकमवगन्तव्यम्। बुद्धस्य नेदमभिमतमित्यादिकमन्यत्र संप्रदर्शयामः। वैदिका अपि सांख्याः आनुमानिकजगत्कारणवादिनः। अत एवोत्तरमीमांसाशास्त्रस्य प्रधानपूर्वपक्षिण इति आमूलाग्रं ब्रह्मसूत्रपरिशीलने स्पष्टं ज्ञायेत॥

**वस्तुतस्तु**— 'दृश्यते तु' (ब्र.सू.2-1-6) इत्यत्रैव विलक्षणयोरप्युपादानोपादेयभावं प्रदर्शयता सूत्रकारेण विवर्तवादोऽवतारितः। तर्हि प्रकारान्तरेणासत्कार्यवाद एवायमित्याक्षेपपरिहाराय 'असदिति चेन्न' इति समनन्तरसूत्रम्। 'कथमसतस्सज्जायेत' इतिवत् 'सतो वा कथमसज्जायेत', कारणं कार्यं द्वयमपि सदेवेत्युत्तरम्। तर्हि कार्ये दृश्यमानविकारादिकं कारणं ब्रह्म स्पृशेदेवेत्याक्षेपः 'अपीतौ तद्वत्प्रसङ्गात्'

इतिसूत्रेण कृतः न स्थूलपरिणामः, किन्तु शरीरशरीरिभावमूलको विलक्षणः परिणामः । अतः कारणं विकारा न स्पृशेयुरिति 'न तु दृष्टान्तभावात्' इतिसूत्रेण प्रादर्शि । कार्यकारणयोर्वैलक्षण्यस्य 'दृश्यते तु' इति दृष्टान्तेनैव समाहितत्वात्, पुनः 'दृष्टान्तभावात्' इति किं विवक्षितमिति शङ्का स्यात् । अतोऽत्र शरीरशरीरिभावदृष्टान्तात्, कार्यगतदोषाणां कारणास्पर्शित्वान्न दोष इति प्रादर्शि भगवद्रामानुजैः । अत एवोच्यतेऽसकृत्—शरीरशरीरिभावे महद्रहस्यं वर्तत इति ॥

इतरत् स्वयमेवात्र ज्ञेयं सूक्ष्मदृशा बुधैः । नो चेच्छारीरकस्येदं व्याख्यानं स्यादलं ततः ॥
अथवा समये सर्वं स्पष्टं विवृणुमोऽखिलम् । यदि वाञ्छेदन्तरात्मा, तं विना किं भविष्यति ॥
पुनरुक्तिरिवैतत्स्याज्जानीमः, विषयस्तथा । मुहुर्मुहुश्च वक्तव्यं मन्तव्यं च मुहुर्मुहुः ॥

किमधिकोक्त्या? न विलक्षत्वाधिकरणादारभ्य भोक्त्रापत्त्यधिकरणपर्यन्तं प्रकरणं समग्रं परिणामवाद परमेव । 'स्याल्लोकवत्' इति सूत्रखण्डः प्राचीनरीत्यैव फेनबुद्बुदतरङ्गन्यायेन श्रीशङ्कराचार्यैर्व्याख्यातः । पुनः 'भावे चोपलब्धेः' इत्यारभ्य सर्वं सविशेषब्रह्मपरिणामपरमेव । मध्ये तदनन्यत्वसूत्रमेकमेव विवर्तपरं व्याख्यातं चेत्, कथमिदमित्यालोचने सर्वं स्फष्टं स्यात् । अत एव 'सर्वेपिता च' 'सर्वधर्मोपपत्तेश्च' इत्यादिकं परिशीलयतां सर्वं स्पष्टतमं च स्यात् । किं बहुना! 'यथा च कारणं ब्रह्म त्रिषु कालेषु न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति' (ब्र.सू.2-1-16शं.) इत्यप्यत्र द्रष्टव्यम् । एवं गाढचिन्तनेन निर्विशेषाद्वैतवादस्य सविशेषाद्वैतवादस्य चान्तरं सुस्पष्टं ज्ञायेत । एवं वादद्वयनिष्ठैस्सर्वैरपि परिशीलने सर्वमपि रहस्यं करबदरायेत ॥

पूर्वग्रहस्तु सर्वेषां सहजोऽतीव दुस्त्यजः । परं तु सत्यदृष्ट्यर्थं सर्वं त्याज्यं विवेकिभिः ॥

श्रीशङ्कराचार्या अपि वस्तुतस्सविशेषाद्वैतिन एव । 'सर्वेपिता च तद्दर्शनात्' (2-1-31) 'सर्वधर्मोपपत्तेश्च' (2-1-36) इति सूत्रद्वयशाङ्करभाष्यं परिशीलनीयम् । विज्ञानविवर्तवादम्, शून्यविवर्तवादं च निरस्य ब्रह्मविवर्तवादं स्थापितवतां हि तेषां बौद्धप्रक्रिया कथं संमता स्यात् । 'वयं न प्रच्छन्नबौद्धाः, बौद्धा एव प्रच्छन्नवैदिकाः' इतिप्रकटणमात्रेण, प्रसक्तो दोषः कथं परिहृतो भवेत् । तेन ह्युभयोस्समानाशयत्वं किल दृढीकृतं भवति । एवं सति तद्वा, तादृग्वेति को विशेषः? वस्तुतस्तु, श्रीशङ्कराचार्याः—परिणामपदस्थाने विवर्तपदं प्रयोज्य स्वाद्भुततपश्शक्त्या परिणामवादं दूषितवतां बौद्धानां बुद्धिं विमोह्य वैदिकमतं स्थापयामासुरित्येव तथ्यं वचः । परं तु बौद्धानामतिप्राबल्यात् स्पष्टं तत्त्वं प्रकटयितुं नाचीकशन्नित्येव परमं सत्यम् । अतश्च—

आरब्धं **श्रीशङ्कराचार्यैः** तत्कालानुगुणं हि यत् । तत्पूरितं तु **भगवद्रामानुजयतीश्वरैः** ॥
इत्येव निर्णयस्साधुर्धीराणां सहजो हितः । अधीराणां तु विषये न किञ्चिद्वक्तुमिश्महे ॥

बौद्धाः किल जीवतत्त्वमङ्गीकृत्य ब्रह्मतत्त्वं निराचख्युः । श्रीशङ्कराचार्यास्तु ब्रह्मतत्त्वमङ्गीकृत्य जीवमतिरिक्तं निराचख्युस्तत्कालानुगुणं बौद्धानां कथञ्चित्सान्त्वनाय, ब्रह्मतत्त्वसंरक्षणाय च । एतदर्थमेव वेदे कर्मकाण्डज्ञानकाण्डविभागादिकमपि कृतम् । एवं भर्तृप्रपञ्चादिभिः प्रतिपादिते ब्रह्मपरिणामवादे बौद्धैर्दूषिते सति वितर्तवादप्रदर्शनेन माध्यस्थ्यमिव प्रादर्शयन्नाचार्याः । विवर्तवादे ह्यात्मतत्त्वस्य प्राधान्यमनिवार्यम् ।

एवम् 'सर्वेपिता च' इत्यनेन सर्वशक्तियुक्तत्वाङ्गीकारेण 'आत्मनि चैवम्' इत्युक्तमद्भुतरूपत्वमात्मनः प्रदर्शितं भवति । तदेव 'विचित्राश्च हि' इति सूत्रखण्डेन विवृतम् । एतच्च वैचित्र्यं सर्वेषां स्वविषयेऽपि सामान्यतोऽनुभवसिद्धम् । आत्मा किल प्रत्यगर्थः शरीरमप्यभिव्याप्याहंप्रत्ययहेतुर्भवतीत्यादिकं पूर्वं(गी.3) प्रदर्शितम् । एतदेकं पर्याप्तमात्मनो विचित्रतमस्वरूपत्वे । स्थावरजीवात्मनां विषये तु विचित्रपरिणामकारित्वम्, एकरूपस्यैव ग्रामसारस्य विरुद्धविविधविचित्रपरिणामकारित्वात्सर्वैरप्यङ्गीकर्तव्यम् । अतो विवर्तवादस्य लौकिको दृष्टान्तः आत्मैव ॥

यद्यप्यत्र ग्रामसारस्यैव हि परिणामः, नात्मनः इत्याशंक्येत, परं त्वियमाशङ्का सर्वत्र समाना । मानवकृतान्यथाभावस्थले स्थूलः **परिणामः** । सृष्टिसहजपरिणामस्थले तु मध्ये चेतनान्तरस्य सत्त्वात् **विवर्त** एव । एवं सत्यपि सर्वत्र सर्वशरीरिण एव कार्यत्वं कारणत्वं चेति 'अनेन जीवेनात्मनानुप्रविश्य' इत्युक्तः परिणामः=विवर्तः परमात्मपर्यवसाय्येवेति पूर्वमेव (जड.16) समर्थितम् । ज्ञानिदृष्ट्या विवर्तः परिणाम एवेति 'परिणामात्' इति सूत्रितम् ॥

अतश्च प्रकृत्यधिकरणस्थापितः परिणामो विवर्तरूप एव । अत एव भोक्त्रापत्त्यधिकरणे 'लोकवत्' इति सूत्रखण्डेन श्रीशङ्कराचार्याः प्राचीनक्रमेण समुद्रस्य फेनबुद्बुदतरङ्गपरिणामं प्रदर्श्य सामान्यपरिणाम-वादं प्रदर्श्य, तदनन्यत्वाधिकरणे परिणामविशेषं **विवर्तं** स्थापयामासुः । भगवद्रामानुजाशयस्त्वनुपद-मेवोक्तः । यतः साक्षात्परिणामवादः ब्रह्मणो विकारित्वापत्त्यादिभिर्बौद्धैर्दूषितः, तेषां सान्त्वनाय परिणाम-वादमाच्छाद्य विवर्तवादप्रदर्शनेन न केवलं तान् सान्त्वयामासुः, दैवबलेन प्रलोभयामासुरपि वैदिकब्रह्मो-पादानतासिद्धान्तसंरक्षणदृष्ट्या ॥

एवं विलक्षणपरिणामरूपविवर्तवादप्रदर्शनेन प्राचीनानां वाक्यकाराणां वाक्यस्य 'परिणामस्तु स्याद्द-ध्यादिवत्' इत्यस्य समन्वयाय क्लेशोऽपि न भवति । अयञ्च वाक्यकारः मतद्वयेऽप्यादरपात्रभूतः । तेन परिणामवाद एवाङ्गीकृतः इति उक्तेन वाक्यखण्डेन ज्ञायते । तत्र च 'क्षीरवद्धि' इति स्थाने 'दध्यादिवत्' इति दधिदृष्टान्तः प्रादर्शि । एतेन प्राचीना अपि महान्तः परिणामवादिन एवेत्यादिकं**श्रीभाष्यगूढार्थसंग्रहे** साधितं **श्रीमत्परकालमहादेशिकैः** । एवं परिणामविशेष एव विवर्त इत्यङ्गीकारे बह्व्यः समस्याः परिहृता भवेयुः । प्राचीनविदुषामाशयमजानद्भिः श्रीशङ्कराचार्यानन्तरकालिकैर्व्याख्यातृभिस्तु पूर्ववासनयैव जगतो मिथ्यात्वसाधन-सौकर्याय विवर्तवादः जगन्मिथ्यात्वसाधक इति भ्रान्त्याऽवार्णि । प्राचीनानां भर्तृहरिभवभूतिप्रभृतीनां श्रीशङ्करा-चार्याणां च विवर्तवादः न जगन्मिथ्यात्वसाधकोऽभिप्रेतः । अथवा मिथ्यापदं ब्रह्मविलक्षणमिश्रितसत्यपरं वा स्यात्; यतो मिथ्यापदं गंभीरार्थकं प्रदर्शितं पूर्वमेव (जीव. ) । भगवद्रामानुजाचार्याणामपि 'प्राणा वै सत्यं तेषा-मेष सत्यम्' (बृ.4-1-20 &4-3-3) इति सत्ये तारतम्यस्य श्रुत्यैव प्रतिपादनात् ब्रह्मतुल्यं सत्यत्वं जगतो न संमतमित्यपि प्रदर्शितं पूर्वमेव । अतश्च ब्रह्मोपादनतावादे बौद्धैर्दूषिते, तेषां मुखपिधानार्थमेव विवर्तवादोऽदर्शि श्रीशङ्कराचार्यैः । तथैव निर्गुणसगुणभेदसमर्थनादिकमपि । अयमपि विचारः पूर्वसर एव मुक्तौ तारतम्याभावसाधनेन प्रदर्शितः । आहत्य ब्रह्म जगतो विवर्तोपादानमपां वह्निरिवेत्येव युक्ततमः पन्थाः ॥

ब्रह्मण उपादानत्वे एवं विवर्तवादप्रतिपादनेनैका समस्या पर्यहारि। एवमन्यापि काचित्समस्याप्यनेन परिहृता भवति। ब्रह्मणो विकाराभावेऽपि निर्विशेषस्य तस्य जगत्सृष्टौ वा तस्य प्रेरकं किम्? इति प्रश्ने नास्त्येव ब्रह्म साक्षादुपादानम्, किन्तु साक्षिमात्रं तदिति नव्यविवर्तवादिनः। नैतावता समाधानमुक्तं भवति। निर्विशेषस्य तस्य तदपि न सङ्गच्छत एव। असङ्गोदासीनस्वभावं ब्रह्म साक्षित्वं वा कथं स्वीकुर्यात्? सान्निध्यमात्रेणैव सर्वं स्वयं प्रचलतीत्यादिसांख्यप्रक्रिया तु सांख्यनिराकरणाधिकरणे बहुधा निरस्तैव। बहुदूर-गमनेऽप्यत्र निर्विशेषवादोऽन्ततो निरुत्तर एव॥

सविशेषवादे तु 'हन्ताहमिमाः' इत्यत्रत्यं हन्तेति पदमेवोत्तरं ददाति। 'हन्त हर्षेऽनुकंपायाम्' इति कोशः। मत्तोन्मत्तादीनां नर्तनादिवत् हर्षविशेषात् सृष्टौ प्रवर्तते ब्रह्मेति नवीनाः। अनुकंपयेति **श्रीमद्रा-मानुजाचार्याः**। अनुकंपामूलकसंकल्पेनेत्यर्थः। अविद्ययेति **जगन्मिथ्यात्ववादिनः**। न प्रश्नः, नोत्तरमिति भावः। अत एव स्वाप्नपदार्थसृष्टिवत् माययैव जगत्सृष्टिरित्येते वदन्ति। 'ऐक्षत' 'अकामयत' 'ईक्षांचक्रे' इति संकल्पविशेषवाचिपदस्य श्रुतिषु बहुलं सत्त्वेऽपि अविद्यापर्यायमायैव प्रवृत्तिकारणमिति एते वदन्ति। 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ.4-5-19) इत्यत्राचार्यैरपि 'मायाभिः=प्रज्ञाभिः' इत्येव व्याख्यातम्, न त्वविद्ययेति। अथापि मायापदस्य मिथ्यार्थकत्वमङ्गीकृत्य तस्य ब्रह्मभिन्नत्वम्, अत एव मिथ्यात्वमित्यादि वर्ण्यते व्याख्यातृभिः। इदमपि बौद्धसंमतसंवृतिपदपरिचयजन्यवासनामूलकमेवेति **कुमारिलादयः**। वैदिकानां तु जगत् 'आराममस्य पश्यति न तं पश्यति कश्चन' (बृ.6-3-14) इति श्रुत्या भगवदारामरूपम्। **आरामः**=उद्यानम्, अद्भुतकलाकृतिः, भगवद्विभूतिरूपं जगदिति भावः। एतादृशज्ञानं च भक्तिवर्धकमिति 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः। सोऽविकम्प्येन योगेन युज्यते नात्र संशयः॥' (गी.10-7) इति स्पष्टमुक्तम्। (विभूतिः=वैभवम्) निर्विशेषवादमाश्रित्य एतत्सर्वस्याप्यपलापे प्रकारान्तरेण शून्यवाद एव स्थापितो भवति। अत एव भास्करभाष्योपक्रमे— 'सूत्राभिप्रायसंवृत्त्या स्वाभिप्राय-निवेदनात्। व्याख्यातं यैरिदं सूत्रं व्याख्येयं तन्निवृत्तये॥' इत्युद्घोषितम्। अनन्तरमपि तत्र तत्र 'स एष माहायानिकः पक्षः' इति बहुषु स्थलेषु निर्दिशति सः॥

एवं जगत् भगवदाराममरूपमिति ज्ञानमन्तरा साधकानां द्वंद्वातीतता कथं भवेत्? हानोपादानादिविभागः वैराग्याभ्यासाय। जगन्मिथ्यात्वज्ञानमप्यत्रोपयुज्येत। पक्वे मनसि अयं विभागः स्वयमेव विगलेत्। अन्यथा हि द्वंद्वातीतता न स्यात्। अत एवानिर्मोक्षप्रसङ्गश्च। अत एव गीतायाम् 'तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥'(गी.6-46) इति योगी=भक्तियोगी प्रशस्यते। अत एवाचार्यैरपि 'मुक्तिसाधनसामग्र्यां भक्तिरेव गरीयसी' (वि.चू.6 ) इत्युक्तम्। ज्ञानमार्गस्तु ब्रह्मभावना-वताम् आधिकारिकाणामेव, इतरेषां तु ज्ञानमार्गः कैवल्यपर्यवसायी, न ब्रह्मभावपर्यवसायी। अतो भक्तिरेव पूर्णमोक्षहेतुरित्यर्थः। अतश्चैतन्मत एव सर्वश्रुतीनां समन्वयः, सर्वजनानां हितसाधनं च॥

ज्ञानमार्गादपि श्रेयान् भक्तिमार्ग इतीत्यपि। समये सप्रमाणं च सविज्ञानं निरूप्यते॥

अतश्च **शङ्कराचार्यै**रारब्धो विषयस्तु यः। **श्रीमद्रामानुजाचार्यै**स्समापित इति स्थितम्॥

[दृश्यत्वहेतुकानुमाननिरासः]

**190. दृश्यत्वात् विश्वमिथ्यावचसि विहतयोऽसिद्ध्यश्चात्र बह्व्यः**
**पक्षादेः सिद्ध्यसिद्ध्योर्न हि गतिरितरा, नापि वादाङ्गमीदृक् ।**
**मर्यादां लोकसिद्धां विजहत इह ते नापरा सा प्रसिद्ध्येत्**
**निर्मर्यादोक्तिमात्रात् जगदपलपतः किं न सत्यं ततस्तत् ॥ ४५ ॥**

इतरत्सर्वमेवात्र व्याख्यातॄणां विजृंभणम् । शब्दानां वर्धनं नूनमिति सारस्तु गृह्यताम् ॥
भाषाशास्त्रस्य दृष्ट्या च लोके चानुभवादपि । मिथ्यापदं भवेन्नूनं मिश्रितार्थस्य वाचकम् ॥
भ्रान्तिस्सर्वापि सर्वस्य धर्मिण्यभ्रान्तिरेव हि । सत्येऽस्ति तारतम्यं च तद्दृष्ट्या कथ्यतां तथा ॥
सर्वेषामपि मर्त्यानां दुस्त्याज्या पूर्ववासना । तस्या एव परित्यागात् मर्त्योऽमर्त्यो भवेद्दृढम् ॥
माया न सुलभा जेतुं ऋते विष्णोः समाश्रयात् । यतस्सा वैष्णवीत्येव स्वशब्देनैव गीयते ॥ ४४ ॥

एवं सत्यपि नास्ति वैभववादस्यावश्यकता । साधयामो जगन्मिथ्यात्वम् 'विमतं मिथ्या, दृश्यत्वात्' इत्यनुमानेनेत्याग्रहिणं प्रत्याह— **दृश्यत्वादित्यादि** । **दृश्यत्वात्**=दृश्यत्वहेतोः **विश्वमिथ्यावचसि**=विश्वं मिथ्या इति प्रयोगे, अथवा मिथ्यापदं मिथ्यात्वपरम्, मिथ्यात्वसाधकप्रतिज्ञायामित्यर्थः । विमतम् इति पक्षोऽध्याहार्यः । तथा च 'विमतं मिथ्या, दृश्यत्वात्, यत् दृश्यम्, तत् मिथ्या, यथा शुक्तिरजतम्' इति प्रयोगे इत्यर्थः । **अत्र**=अस्मिन् प्रयोगे **पक्षादेः**=पक्षसाध्यहेतुदृष्टान्तानाम् **सिद्ध्यसिद्ध्योः**=सिद्धौ, असिद्धौ वा—पक्षः, साध्यः, हेतुः दृष्टान्तश्चेत्येतेऽपि मिथ्या, सत्या वा । यदि मिथ्या, पक्षादेरसिद्धिः । यदि सत्याः तदाप्यसिद्धिः । अतः तैः मिथ्यात्वस्य **विहतयः असिद्धयश्च बह्व्यः**=अनन्ताः दोषाः इति शेषः । अत्र विगीतम् इत्यनेन विवादविषयः जगत् सर्वोऽपि विवक्षितः, उत कतिपयमात्रम्? । द्वितीयपक्षे कतिपयमिथ्यात्वस्य=रज्जुसर्पादौ संमतत्वात्सिद्धसाधनम्, अत एव **विहतिः**=व्याघातः । प्रथमपक्षे, सर्वस्यापि पक्षीकारे साध्यस्य, हेतोः, दृष्टान्तस्य चासिद्धिः, सर्वस्यापि पक्षान्तर्गतत्वात् । तथाचानुपसंहार्याख्यो दोषः । सम्यगालोच्य प्रकारान्तरमनुसराम इत्यत्र— **न हि गतिरितरेति** । लोकानुभवविरुद्धं वदतां कथं वा शब्दप्रयोगः, अनुमानं वा कथं प्रतिष्ठितं भवेत्, सर्वप्रमाणस्याप्यनुभवमूलकत्वात् । अतः **इतरा गतिः**=मार्गः **न हि**=नैव संभवेत् । लोकः सर्वोऽपि भ्रान्तः । वयं किं कुर्म इति चेत्— **ईदृक्**=सर्वानुभवविरुद्धं स्वपक्षमात्रसिद्धं प्रयोगादिकं **वादाङ्गं नापि**=कथाङ्गं कदापि न भवति ॥

एकोऽहमेव तत्त्वज्ञः परे सर्वेऽपि बालिशाः । इति यो मन्यते, तेन वस्तव्यं विजने वने ॥
परश्शतपरिक्षोदात्परस्तादपि वादिभिः । उपलम्भबले स्थेयम् नो चेत्किञ्चिन्न सिद्ध्यति ॥
'सर्वथा सदुपायानां वादमार्गः प्रवर्तते । अधिकारोऽनुपायत्वात् न वादे शून्यवादिनः ॥'

इत्याद्यभियुक्तोक्तमभिप्रेत्याह— **मर्यादामित्यादि** । **लोकसिद्धाम् मर्यादाम्**=लोके सभ्यजनसंमतां सर्वामपि व्यवस्थाम् **विजहतः**=त्यजतः **इह**=वादकथायाम्, जल्पे वा **अपरा**=अन्या **सा**=मर्यादा **न**

**प्रसिद्ध्येत्**=न किञ्चित्सिद्ध्येत्। ननु लोकोऽन्यः, शास्त्रं चान्यदित्यत्र—**निर्मार्यादोक्तिमात्रात्**= मर्यादातीत-धाष्टर्यमूलकवचनैरेव **जगत्**=परिदृश्यमानं सर्वम्, परिदृश्यमानां सर्वव्यवस्थाञ्च **अपलपतः**=अपह्नुवानस्य **ततः**=तावन्मात्रेण **जगत् सत्यम्**=भवदुक्तिविपरीततया **सत्यम् किम् न**=किं न भवेत्। मत्तः उन्मत्तो वा अस्वाधीनबुद्धिरबद्धं किञ्चिद्वदेत्। तावन्मात्रेण वस्त्वन्यथा भवेत् किम्। अथवा, **ततः**=तादृशेनैव भवदुक्तिविरुद्धतया जगत्सत्यत्ववचनेन **तत्**=जगत् **सत्यं किं न** भवेत्? अतस्त्वदनुमानबाधस्सिद्ध एव॥

ननु लोकोऽन्यः, शास्त्रञ्चान्यदित्युक्तं हि; अत एव किलोच्यते 'इन्द्रियैरुपलब्धं यत्तत्त्वेन तु गृह्यते। जातास्तत्त्वविदो बालाः, तत्त्वज्ञानेन किं फलम्॥' इति। किमुत्तरं तस्य?

अर्थभेदं न जानासि लोकप्राकृतशब्दयोः। अत एवं ब्रवीषि त्वम् कियांस्त्वं बालिशो बत॥
एवं जानन्ति बहवः शब्दमात्रपरायणाः। लोकातीतं भवेच्छास्त्रमिति मत्वा तथैव च॥
भीषयन्ति परान् मुग्धान् ख्यातिलाभपरायणाः। यावद्व्यक्त्यर्थशून्यानि पदानि स्वेच्छया त्वभीः॥
तावत्तु मुग्धा मन्यन्ते महाज्ञान्ययमित्यहो!। तथा जानन्ति सारल्यादुत्तानप्रज्ञया जनाः॥
लोकोऽयमेव विज्ञानमयः प्राज्ञैस्समीरितः। ज्ञानमात्माश्रितं यद्वत् विज्ञानं लोकमाश्रितम्॥
गुणशब्दो यथा वक्ति सद्गुणं न तु दुर्गुणम्। तथैव लोकशब्दोऽपि प्रामाणिकजनं वदेत्॥
उत्सर्गन्यायतः सिद्धमिदं जानन्ति पण्डिताः। गुणीत्येव श्रुतिर्वक्ति परं ब्रह्म, न सद्गुणी॥
लोके यच्छक्यते नैव ज्ञातुं, कि शक्यतेऽन्यतः। दृष्टान्तमूलं सर्वं हि वक्तव्यं, स तु लौकिकः॥
यदेवेह भवेन्नूनं परत्रापि तदेव हि। अतश्च पण्डितैस्सर्वैस्त्याज्यं शब्दविवर्धनम्॥
शक्नोतीहैव यस्सोढुं प्राक्शरीरविमोक्षणात्। कामक्रोधोद्भवं वेगं स युक्तस्स सुखी नरः॥
इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः। ततस्सर्गेषु लोकेषु सोमृतत्वाय कल्पते॥(कठ.2-3-4)
इत्येवं सर्वशास्त्राणि घोषयन्तीह पूर्णताम्। त्वं तु वक्षीह किं न्वस्तीत्येवं चेत् कोहि विश्वसेत्॥
यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति॥

'अत्र ब्रह्म समश्नुते' (कठ.3-2-14) 'अमृत इह भवति' (पु.सू.) इत्येवं घोषयत्सु शतशः श्रुतिस्मृतिप्रमाणेषु, त्वं तु वक्षि!

भ्रान्तिस्सर्वापि मिथ्या च नात्र किञ्चिच्च वर्तते। अहं मिथ्या त्वं च मिथ्या, मिथ्या वेदादयोऽपि च॥
एवं चेत्साधयन्त्येते किं कथं वेति चिन्त्यताम्। तर्कं तु वर्धयन्त्येते, न कदापि च साधनम्॥

अत एवोक्तं पुरैवाभियुक्ततरैः—

'वेदोऽनृतो बुद्धकृदागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम्।
बोद्धानृतो बोद्धफले तथानृते यूयं च बौद्धाश्च समानसंपदः॥' इति॥

शास्त्रं मा कुरु शस्त्रं त्वं वृथा तर्कस्य वर्धनात्। तेन त्वं वरणीयेन वरणीयो भवाञ्जसा।
कृत्स्नप्रसक्त्यधिकृतिः साधयत्येतदेव हि। श्रुतेस्तु शब्दमूलत्वादिति तर्कं निषेधति॥

[मिथ्यात्वस्वरूपविमर्शः]

191. **साध्ये सत्येतरत्वे कथित इह भवेत् स्वस्य हि स्वान्यभावः**
**नान्यत् सत्यं तु दृष्टं तदवधिकभिदासाधने चेष्टसिद्धिः ।**

तर्क एव परा माया केवलं तर्कजीविनः । तत्राप्यध्यात्मविद्यायां सा माया परमा मता ॥
तर्कप्राणा नराः नूनं न वेदान्ताधिकारिणः। त्रिकालसत्यं वाक्यं च शुकस्य श्रूयतां पुनः ॥
'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः' ॥
अचिन्त्याः खलु ये भावा नैतांस्तर्केण योजयेत् । वेदार्थानुगुणस्तर्कस्सत्तर्कस्समुदीरितः ॥
वेदार्थस्तपसा ज्ञेयः न तर्केण कदाचन । बुद्ध्यतीतं परं तत्वं बुद्धिग्राह्यं कथं भवेत् ॥
जगत्सत्यं यदि भवेत् कथं तत् त्याज्यमुच्यते? त्याज्योपादेयता यावत्तावत् द्वन्द्वं तु दुस्त्यजम् ॥
कथं द्वंद्ववतो मुक्तिरित्यप्यालोच्यतां भृशम् । सत्यात्सत्यतरं प्राप्य ततस्सत्यतमं त्वियात् ॥
प्राणा वै सत्यमित्यादि वाक्यञ्चापि विचार्यताम् । दुराग्रहादिकं त्यक्त्वा सत्यमात्रपरायणैः ॥
भवितव्यं नरैः सर्वैः सदा सद्भावभावितैः । विरमामो वृथा शब्दवर्धनात् कालयापनात् ॥
यद्यस्त्यास्था तु जल्पे वा वितण्डायां महामते । अधीयतां तु सर्वार्थसिद्धिश्च शतदूषणी ॥
केवलात्तर्कपाण्डित्यात् वरं मौढ्यं हितं च तत् । आत्मज्ञानविहीनानां महामायैव धीर्भवेत् ॥ ४५ ॥

एवं सामान्यतो जगन्मिथ्यात्वानुमानं निरस्य 'मर्यादां लोकसिद्धां विजहतः' इत्यंशं स्पष्टीकर्तुं विशिष्य साध्यं विकल्प्य दूषयति—**साध्य इत्यादि**। 'विमतं मिथ्या दृश्यत्वात्' इत्यत्र साध्यं मिथ्यात्वं किंरूपम्? किं सत्येतरत्वम्? उत तदभाववति तत्प्रकारकत्वरूपं स्वात्यन्ताभाववति प्रतीयमानत्वम्? उत तुच्छत्वम्? उतान्यद्वा किञ्चित्? इति प्रथमं विकल्प्य, प्रत्येकमवान्तरविकल्पानां सत्त्वात् विस्तरेण दुदूषयिषुः एकैकं विकल्पं एकैकश्लोकेन विकल्प्य दूषयितुं सत्येतरत्वरूपं प्रथमं पक्षं विकल्प्य दूषयति । सत्येतरत्वमित्यत्र, यत्किञ्चित्सत्यप्रतियोगिकभेदो विवक्षितः? उत सत्यत्वावच्छिन्नप्रतियोगिकभेदः? प्रथमकल्पे अस्मन्मते सिद्धसाधनम्, एतद्घटभेदस्य तद्घटे सत्त्वात्, इति सुज्ञत्वात् द्वितीयकल्पे दूषणमाह—**इह**=अस्मिन् प्रयोगे **सत्येतरतत्वे**=सत्यसामान्यभेदे=सत्यत्वावच्छिन्नप्रतियोगिताकभेदे **साध्ये**=साध्यत्वेन **कथिते**=विवक्षिते सति **स्वस्य हि स्वान्यभावो भवेत्**=घटादेस्सत्यत्वेन, सत्यसामान्यान्तर्गतत्वेन सत्यत्वावच्छिन्नप्रतियोगितायाः स्वस्मिन्नपि सत्त्वेन स्वप्रतियोगिकभेदस्य स्वस्मिन्नपि सत्त्वप्रसङ्ग इति व्याघातः ॥

**सत्यं** हि त्रिविधम्—**प्रातिभासिकम्, व्यावहारिकम्, पारमार्थिकं** चेति । रज्जौ सर्पादिकं प्रतिभासमात्रसिद्धं **प्रातिभासिकम्** । वल्मीकसर्पादिकं **यावज्जगद्व्यवहारं** प्रतीयमानं **व्यावहारिकम्** । ब्रह्मैकमेव परमपुरुषार्थभूतं **पारमार्थिकं** सत्यमिति तैरुच्यते । जगति च रज्जुसर्पवैलक्षण्यम्, ब्रह्मवैलक्षण्यम् चास्माकमपीष्टमेवेति तत्साधने सिद्धसाधनम् । व्यावहारिकसत्यत्वनिषेधे चापसिद्धान्तः स्पष्टमेव । तथा चानुभूयमानं वह्नेरुष्णत्वमपि मिथ्या स्यात् । ननु तन्मते वह्न्यादेर्व्यवहारसत्यत्वाङ्गीकारात् अत्राप्यपसिद्धान्ते

**सत्यत्वं चेन्निषेध्यं, प्रसजति दहनेऽप्युष्णताया निषेधः**
**साध्यं त्वक्षाद्यबाध्यं यदि किमपि परं, तेन न व्याप्तिसिद्धिः ।। ४६ ।।**

वक्तव्ये 'वह्नेरुष्णत्वं मिथ्या स्यात्' इति दूषणं किमर्थमिति चेत्—निर्विशेषाद्वैतिनो बौद्धवत् धर्मधर्मिभावं नाङ्गीकुर्वन्ति । परं त्वत्र कश्चन विशेषः—बौद्धाः धर्ममङ्गीकृत्य धर्मिणमपह्नुवन्ति । एते तु धर्मिणमङ्गीकृत्य धर्ममपह्नुवन्ति । अतो 'वह्नौ उष्णताया निषेधःस्यात्' इति वक्तव्यमभूत् ।।

ननु जगति सत्यत्वं केवलं व्यावहारिकम् । परमार्थतस्तु परं ब्रह्मैकमेव सत्यम् । अतस्सत्यत्वावच्छिन्नप्रतियोगिताकभेदः अन्यस्मिन् सत्ये न कदापि प्रसज्यत इति, जगतो मिथ्यात्वसिद्ध्या स्वस्य स्वान्यभावप्रसक्तिरेव नास्तीति चेत्, तत्राह—**नान्यदिति** । **अन्यत्**=भवदभिमतम् सत्यं तु न **दृष्टम्**= लोके कुत्रापि नानुभवसिद्धम् । लोकदृष्टसत्यस्य व्यवहारमात्ररूपत्वेन, तस्यापि व्यावहारिकत्वात् । तदतिरिक्तस्य निर्विशेषब्रह्मणः कुत्राप्यसिद्धत्वात् । प्रमाणस्य सर्वस्यापि सविशेषविषयत्वात् ।।

ननु परब्रह्मण उभयमतसिद्धत्वात्, तत्प्रतियोगिकभेद एव प्रकृतानुमाने मिथ्यापदेन विवक्षित इति चेत्—**तदवधिकभिदासाधने च**=तादृशौपनिषदपरब्रह्मभेदस्यैव जगति साधने तु **इष्टसिद्धिः**=अस्मदिष्टस्यैव सिद्धिः; सत्यत्वेऽपि जगतो ब्रह्मभिन्नत्वात् । तथा च सिद्धसाधनम् ।।

ननु मिथ्यात्वपदस्य सत्यत्वात्यन्ताभाव एवार्थः, न तु सत्यभेदः । जगति **सत्यत्वं** नास्तीति निषिध्यत इति चेत्—दहनेऽप्युष्णतायाः निषेधःप्रसजति । सत्यत्वं जगति, वह्नावुष्णत्वं च लोऽकानुभवसिद्धम् । अतो वह्नावुष्णत्वनिषेधतुल्योऽयं जगति सत्यत्वनिषेधः । अतश्च बाधः । लोके विद्यमानं सत्यत्वं व्यावहारिकम्, पारमार्थिकसत्यत्वाभावस्साध्यत इति चेत्, तादृशसत्यत्वस्य लोके कुत्राप्यननुभवात्, प्रतियोग्यप्रसिद्ध्या निषेधो न सङ्गच्छते । ननु ब्रह्मणः पारमार्थिकसत्यत्वं श्रुतिसिद्धम्; लोके तदभावस्साध्यत इति चेत्, श्रुतेरपि व्यवहारसिद्धत्वेन, तदुक्तस्य पारमार्थिकत्वस्यापि इदानीं व्यावहारिकत्वेन प्रतियोग्यप्रसिद्धेर्दुर्वारत्वात् ।।

ननु पारमार्थिकं सत्यत्वं न लोकानुभवसिद्धम्, तस्य ब्रह्ममात्रनिष्ठत्वात् । किन्तु विलक्षणं तदिति न ब्रह्मणो व्यावहारिकसत्यत्वप्रसङ्ग इति शङ्कते—**साध्यमित्यादि** । **अक्षाद्यबाध्यम्**=इन्द्रियादिभिः लौकिकप्रमाणैर्बाधितुमशक्यं तु **सत्येतरत्वम्**=ब्रह्मविलक्षणत्वम् **किमपि परम्**=लोकविलक्षणमेव यत्किञ्चिदन्यत् **साध्यम्**=साध्यत्वेन विवक्षितं यदि, तदा **तेन**=तादृशलोकविलक्षणात् सत्यात् अन्येन सत्येन न **व्याप्तिसिद्धिः**=हेतोः साध्यनिरूपितव्याप्तेः असिद्धिः, लोकविलक्षणसत्येतरत्वस्य व्याप्तेः लोके ग्रहीतुमसक्यत्वात् । तथा च व्याप्यत्वासिद्धिर्दोषः । अतो नोक्तानुमानेन जगन्मिथ्यत्वसिद्धिः ।।

ननु परब्रह्मणोऽत्यन्ताप्रसिद्धत्वं नास्ति ; 'अहम्' इति प्रतीतौ भासमानत्वात्, 'अयमात्मा ब्रह्म' इति श्रुतेरिति चेत्, तर्हि अहमिति प्रतीतेः बहूनां जायमानत्वात्, भेदस्याप्यनुभवात् चालिनीन्यायेन सर्वेषामप्यात्मनां मिथ्यात्वं स्यात् । अतो ब्रह्मविलक्षणत्वरूपं मिथ्यात्वं न साधयितुं शक्यम् ।। ४६ ।।

[मिथ्यात्वान्तरदूषणम्]

192. **स्वात्यन्ताभावदेशे विदितमिति यदि स्थाप्यमिष्टं क्वचित् तत्**
**तत्रैवेति त्वशक्यम्; क्वचिदपि न तथा ह्यस्ति सिद्धान्तसिद्धिः ।**
**बाधश्चास्मिन्नुपाधिः समधिगतदशादेशकालाद्युपाधौ**
**नासौ साध्योऽत्र मानं निखिलमपि यतस्तद्विधानैकतानम् ॥ ४७ ॥**

द्वितीयं मिथ्यापदार्थं (श्लो.46) दूषयितुमनुवदति— **स्वेत्यादि**। **स्वात्यन्ताभावदेशे विदितम्**= तदभाववति वस्तुनि प्रतीयमानं मिथ्यापदार्थः । यथा रजतत्वाभाववत्यां शुक्तौ रजतत्वं प्रतीयमानं मिथ्येत्युच्यते । तद्वत् जगदिदं तदभाववति ब्रह्मणि **विदितम्**=प्रतीतम् इति **यदि स्थाप्यम्**=उक्तानुमानसाध्यं यदि, तदा **क्वचित्**=कुत्रचित् **तत्**=तादृशं मिथ्यात्वम् **इष्टम्**=अस्माकमपि संमतम्। शुक्तौ रजतादिभानस्य सिद्धान्तेऽपि मिथ्यात्वाङ्गीकारात् । अतश्च सिद्धसाधनम् । ननु क्वचित् इति न संमतम्, किन्तु सर्वत्रैव । तेनापणस्थरजतादेरपि मिथ्यात्वं सिषाधयिषितमिति न सिद्धसाधनमित्यत्राह— **तत्रैवेत्यादि** । **तत्रैव**= स्वात्यन्ताभाववत्येव, न तु स्ववान् कश्चन देश आपणस्थरजतादेरप्यस्ति, तस्यापि मिथ्यात्वात् । तथा च रजतं लोके कुत्रचित् सत्यम्, कुत्रचिदसत्यमिति न, किन्तु कुत्रापि नास्तीत्येवार्थः । ततश्च रजतादेः यो देशः, कालश्च; तत्रैव देशे काले च तदभाव एव साध्य इति न सिद्धसाधनमिति भावः । अत्र दोषमाह— **इति तु अशक्यमिति**। कुत इत्यत्र— **क्वचिदित्यादि**। **क्वचिदपि**=कुत्रापि भ्रमे तथा **सिद्धान्तसिद्धिः**=उक्तरीत्या सिद्धान्तनिश्चयः **न ह्यस्ति**। परत्र पूर्वदृष्टावभासो भ्रमः इति खलु भवतां गुरुरपि । यत्र कुत्रचिद्देशे काले वा पूर्वं दृष्टस्य, तदभाववति देशे काले वाऽवभास एव हि भ्रमः, न तु तदभाववत्येव । कुत्राप्यदृष्टस्याध्यासादर्शनात् । पूर्वं कदाचिदपि सर्पं रजतं वाऽपश्यतः, न हि रज्जौ, शुक्तौ वा तदध्याससंभवः । जगति सर्वमेव मिथ्येति चेत्, कथमध्याससंभवः?

स्वात्यन्ताभाववत्येव सत्त्वं, प्रतीयमानत्वं वा अव्याप्यवृत्तिसंयोगादिरूपपदार्थानामेव संभवेत्, न तु व्याप्यवृत्तीनां घटपटादीनाम् । न चात एव मिथ्यात्वं वदाम इति वाच्यम्, अत्र किं प्रमाणमित्येव विचारकरणात् । उक्तं किलानुमानमिति चेत्, शुक्तिरजतरज्जुसर्पादिदृष्टान्ताः न स्वाभाववत्येव भासन्ते, स्ववत्यपि वल्मीकादौ भानात् । तर्ह्यस्तु स्वाप्नाः पदार्था दृष्टान्ताः । ते हि तदा यत्र भासन्ते, तत्र न सन्त्येवेति चेत्, स्वाप्नपदार्थानामपि सत्यत्वस्य विस्तरेण स्थापनात् । अतः शशशृङ्गादय एव दृष्टान्ता वाच्याः । अस्तु तथैवेति चेत्, तेषां तुच्छत्वस्यैव सर्वसंमतत्वात् । तत्पक्षस्य च समनन्तरश्लोक एव परीक्षणात् ॥

अस्तु तर्हि स्वप्नपदार्थ एव दृष्टान्त इत्यत्राभ्युपगमवादेन, दूषणान्तरमाह— **बाध इत्यादि** । **अस्मिन्**=उक्ते प्रयोगे **समधिगतदेशकालाद्युपाधौ**=**समधिगतः**=आधारत्वेन निश्चितः यः देशः कालश्च, तत्र बाधः उपाधिश्च भवति । मिथ्यात्वं यत्र, तत्र सर्वत्र बाधितत्वम् ; यत्र बाधितत्वं, तत्र सर्वत्र मिथ्यात्वमिति

[तुच्छत्वरूपमिथ्यात्वदूषणम्]

193. **तुच्छत्वं ते न हीष्टं, सदसदितरता व्याहतत्वादिदुःस्थाऽ-**
**सिद्धा चासौ परेषां, भवदनभिमतोऽनात्मना वेद्यतादिः ।**

साध्यव्यापकत्वे सति, साध्यव्याप्यत्वम् । पक्षान्तर्भवेण दृश्यत्वरूपसाधनाव्यापकत्वम् । अतो बाधितत्व-मुपाधिः । ततश्च सोपाधिको हेतुर्व्याप्यत्वासिद्धः । आदिपदेन धर्मस्य ग्रहणम् । सर्वमपि हि वस्तु स्वधर्मेणैव सत्, परधर्मेण त्वसदेव । यथा घटः कम्बुग्रीवादिमत्वेनैव सन्, न तु पटधर्मेणाऽऽयतत्वादिना ॥

ननु तर्हि बाधित्वमेवात्र साध्यं विवक्षितमस्त्वित्यत्राह—**अत्रेत्यादि** । **अत्र**=उक्तानुमाने **असौ**= बाधितत्वमेव **साध्यम् न**=न भवितुमर्हति । कुतः? यतः **निखिलमपि मानम्**=प्रमाणं सर्वमपि **तद्विधानैकतानम्**=तस्य जगतः **विधानम्**=विधिरूपता, न तु निषेधरूपता, **तदेकतानम्**=तन्मात्रपरम् । प्रत्यक्षम्, अनुमानम्, शब्द इति त्रिविधमपि प्रमाणं जगतो विधिमात्रपरमेव सर्वैर्दृष्टम् इत्यर्थः । यथा रज्जौ सर्पभ्रमानन्तरम् 'नायं सर्पः किन्तु रज्जुः' इति सर्पाभावपरं रज्जुविषयकं प्रमाणं दृश्यते, तथा जगतोऽभाव-बोधकं प्रमाणं न हि कस्यापि कदापि दृष्टम् । अतो बाधितत्वमेव यदि साध्यम्, तर्हि वह्नावनुष्णत्वसाधकानुमान इव बाध एव दोषः । अतश्च तेनानुमानेन जगतो न मिथ्यात्वसिद्धिः ॥

ननु 'यदि सत्यं भवेद्विश्वं सुषुप्तौ किं न भासते' (वि.चू.236) इत्याचार्याः । तथा च सुषुप्तिरेव विश्वमिथ्यात्वे प्रमाणमिति चेत्, न—योग्यानुपब्धेरेवाभावग्राहकत्वेन सुषुप्तौ तदभावात् । यत्तु दृष्टिरेव सृष्टिरिति पक्षः, सोऽपि परीक्षितपूर्वः । आचार्यवचनं च ब्रह्मतुल्यसत्यत्वाभिप्रायम् । एतच्चास्माकमपि संमतमेवेत्यसकृदुक्तम् । वस्तुतस्तु—

ऋतसत्यानृतासत्यपदानां शक्तिधीर्यतः । मितंपचानां दुर्ग्राह्या तन्मूलो मतिविभ्रमः ॥
उक्तं चाप्यसकृत्त्याज्यं वृथा शब्दविवर्धनम् । माया सदा जागरूका स्वात्मा संरक्ष्यतां सदा ॥ ४७ ॥

तृतीयं मिथ्यापदार्थं (श्लो.46) दूषयति—**तुच्छत्वमित्यादि** । **ते**=तव **तुच्छत्वम्**=शून्यवादि-माध्यमिकसंमतम् **न हीष्टम्**=न हि संमतम् । गगनारविन्दादावेव तादृशतुच्छत्वस्याङ्गीकारात् । निरधिष्ठान-भ्रमवादिभिस्तैरेव जगतस्तुच्छत्वाङ्गीकारात् । भवद्भिः निरधिष्ठानभ्रमानङ्गीकारात् । 'नैतद्बुद्धेन भाषितम्' इति हि बौद्धवैलक्षण्यमङ्गीकृतम् । ब्रह्माधिष्ठानको हि जगद्भ्रम उच्यते भवता । ततश्च तत्साधनेऽपसिद्धान्तः । ननु तुच्छत्वं नामानिर्वचनीयत्वम्, सदसद्विलक्षणत्वरूपं तत् । जगतः प्रतीयमानत्वात् असद्विलक्षणत्वम् । बाध्यमानत्वाच्च सद्विलक्षणत्वमितीदृशमेव मिथ्यात्वमस्मत्संमतमित्यत्राह—**सदसदितरतेति** । **सदसदितरता**= सदसद्विलक्षणत्वम् **व्याहतत्वादिदुःस्था**=व्याघातादिदोषग्रस्ता । जगति यत्किञ्चिद्वस्तु सद्रूपं वा भवेत्, असद्रूपं वा=अस्तीति वा, नास्तीति वा वक्तव्यम् । अतः सदसद्रूपत्वं परस्परविरोधाद्यथा न संभवति, तथैव सदसद्विलक्षणत्वमपि विरुद्धमेव । अत एव भेदाभेदवादः सिद्धान्ते कुत्रापि न स्वीक्रियते । कुत्राप्यप्रसिद्धस्य साधनमपि न संभवतीत्याह—**असिद्धा चेत्यादि** । **असौ**=सदसद्विलक्षणता **परेषाम्**=एतत्सिद्धान्तिनाम्

विश्वं हीदं मृषा नस्तदितरपुषा त्वन्मतारोपितैश्च
स्यादेवं दूरतस्ते ध्रुवमपसरतोऽप्युक्तदोषानुषङ्गः ॥ ४८ ॥

[प्रपञ्चसत्यत्वमनिवार्यम्]

194. साध्यं मिथ्या न वा ते, द्वितयमनुचितं निष्फलत्वादिदोषात्
आद्यं हीष्टं ममापि; प्रसजति भवतः सत्यभेदः परस्मिन्।

**असिद्धा च**=अप्रसिद्धा च। न च साध्यस्य परसंमतत्त्वे साधनप्रयोगः किमर्थः? परासंमतत्वादेव किल साध्यते। अतः कथमस्य दोषत्वमिति शङ्क्यम्—पक्षेऽसंमतत्वादेव साध्यते। न तु कुत्राप्यसंमतत्वात्। सर्वाथाऽप्रसिद्धस्य साधने तु, सपक्षस्याप्यसंभवेन व्यप्तिग्रहणस्थलासंभवात्। ननु शुक्तिरजतादेर्मिथ्यात्वस्य सिद्धान्तेऽपि संमतत्वात्तादृशं मिथ्यात्वमेव साध्यते चेत्, को दोष इत्यत्राह—**भवदित्यादि**। **अनात्मना**=भिन्नेन स्वरूपेण **वेद्यतादिः**=वेद्यत्वादिकम् **भवदनभितः**—तवासंमतं किल। स्वस्वरूपेणावेद्यत्वं 'आदि'पदार्थः। शुक्तेः शुक्तित्वेनावेद्यत्वम्, रजतत्वेन वेद्यत्वं वा मिथ्यात्वमस्मत्संमतम्। आद्यमख्यातिः, द्वितीयमन्यथाख्यातिः। अनिर्वचनीयख्यातिवादिनस्ते उभयमप्यसंमतत्वान्न साध्यं भवितुमर्हति। साध्यत्वे चापसिद्धान्तः स्पष्टः॥

ननु अन्यथाख्यातिः अख्यातिर्वा भवतु। मिथ्यात्वं कुत्रचित्तवापि सिद्धं किल। तदेव साधयाम इति चेत्तत्राह—**विश्वं इत्यादि**। येन स्वरूपेण यत् वर्तते, तद्भिन्नस्वरूपेण वेद्यत्वं मिथ्यात्वमिति खलूक्तम्। यद्येतदङ्गीक्रियते तर्हि सिद्धसाधनम्। कुतः—**इदं हि विश्वम्, तदितरवपुषा**=येन रूपेण वर्तते, तद्भिन्नेन रूपेण **नः मृषा**=मिथ्यैव। घटादिकमपि पटत्वादिरूपेण मिथ्यैव। जडरूपमिदं जगत् स्वप्रकाशत्वेनाकारेण मिथ्यैव। शुक्तिरूप्यादावपि शुक्तित्वविरुद्धत्वाद्धि रजतत्वेन रूपेण शुक्तिर्मिथ्यैव। एवमेवेदं **जगत् त्वन्मतारोपितैश्च**=बाध्यत्वानिर्वचनीयत्वादिधर्मैरस्माकं मिथ्यैव। किं बहुना! ब्रह्मापि जडत्वेन, मिथ्यात्वादिरूपेण वा मिथ्यैव। अतश्चैतादृशमिथ्यात्वसाधनेऽपसिद्धान्तः, अप्रयोजकत्वं वा। ततश्च एवं **दूरम् अपसरतोऽपि**=बहुदूरं गच्छतोऽपि **उक्तदोषानुषङ्गः**=उक्तानां दोषाणाम्=व्याहतत्वापसिद्धान्तादिदोषाणाम् **अनुषङ्गः**=पृष्ठत एवागमनम् **स्यात्**=भवेदेव। **ध्रुवम्**=निश्चितम्। लोकविरुद्धं वदता न किञ्चित्साधयितुं शक्यमिति भावः। 'अतः विमतं मिथ्या, दृश्यत्वात्' इत्यनुमानेन नेष्टसिद्धिः॥ ४८ ॥

एवं साध्यस्य मिथ्यात्वस्य स्वरूपं विकल्प्य दूषयित्वा, वैतण्डिकस्य वैतण्डिकभाषयैवोत्तरयितुं तद्गतधर्मानपि विकल्प्य दूषयति—**साध्यमित्यादि**। **साध्यम्**=उक्तानुमाने साध्यत्वेनोक्तं मिथ्यात्वम् **ते**=ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनस्तव **मिथ्या, न वा?**=मिथ्यात्वं मिथ्या वा, सत्यं वा? इत्यर्थः। **द्वितयमपि**=पक्षद्वयमपि **निष्फलत्वादिसाम्यात्**=आदिपदेनापसिद्धान्तग्रहणम्, निष्फलत्वम्=सिद्धसाधनात्। ब्रह्मैकमेव सत्यमिति वदतस्ते, द्वितीयसत्यस्याङ्गीकारात् अपसिद्धान्तः। तदेतदाह—**आद्यमित्यादि**। **आद्यम्**=मिथ्यात्वस्य मिथ्यात्वम् **ममापि** जगत्सत्यतावादिनः **इष्टं हि**। जगतः सत्यत्वसिद्ध्यास्मदिष्टस्य साधनात् सिद्धसाधनम्। अभावाभावस्य भावरूपत्ववत्, मिथ्यात्वं यदि मिथ्या, तर्हि सत्यत्वे पर्यवसानात्।

**पक्षीकारेऽस्य बाधादिकमतिचरणं तद्बहिष्कारपक्षे**
**तच्चेत् ब्रह्मस्वरूपं, भुवनमभिहितं हन्त सब्रह्मकं स्यात् ।। ४९ ।।**

**[दृश्यत्वं न मिथ्यात्वप्रयोजकम्]**

**195. इष्टं ब्रह्मापि दृश्यं तव च कथयतः तस्य जिज्ञास्यतादीन्**
**मिथ्या चेत् दृश्यताऽस्मिन्, ननु विमतिपदेऽप्येवमेषा त्वयेष्टा ।**

**परस्मिन्**=मिथ्यात्वं सत्यमिति द्वितीय पक्षे **भवतः**=ब्रह्मैकसत्यतावादिनः ते **सत्यभेदः**=द्वितीयं सत्यं वस्तु प्रसजति । ततश्च अपसिद्धान्तः ।।

पुनः प्रकारान्तरेण साध्यं विकल्प्य दूषयति—**पक्षीकार इत्यादि**। **अस्य**=मिथ्यात्वरूपसाध्यस्य **पक्षीकारे**='विमतम्' इत्यस्मिन् पक्षेऽन्तर्भावे **बाधादिकम्**=बाधादिदोषप्रसक्तिः । **तद्बहिष्कारपक्षे**=पक्षानन्तर्भावपक्षे **अतिचरणम्**=व्यभिचारः ।।

**अयमर्थः**—'विमतम्' इति पक्षेण विवादविषयः ब्रह्मव्यतिरिक्तं सर्वमपि खलु विवक्षितम् । मिथ्यात्वरूपसाध्यस्यापि ब्रह्मव्यतिरिक्तत्वात् पक्षान्तर्गतमिति अङ्गीक्रियते, न वा? अङ्गीकारे, तच्च मिथ्यात्वं सत्यम्, उत मिथ्या? सत्यभूतस्य मिथ्यात्वस्य पक्षान्तर्भावे, तत्र मिथ्यात्वरूपसाध्यस्याभावात् बाधः । बाधपरिहाराय पक्षानन्तर्भावे, सत्यभूते मिथ्यात्वे यदि मिथ्यात्वं न साध्यते, तदा तस्य सत्यत्वसिद्ध्या ब्रह्मव्यतिरिक्तसत्याङ्गीकारादपसिद्धान्तः । मिथ्याभूतस्य मिथ्यात्वस्य पक्षान्तर्भावे, ब्रह्मव्यतिरिक्ते जगति मिथ्यात्वस्यास्माभिरनङ्गीकारेण, तत्र मिथ्यात्वे मिथ्यात्वसाधनात्सिद्धसाधनम् । मिथ्यात्वं यदि न साध्यते, तर्हि पूर्ववत् व्याघातः । पक्षान्तर्भावानङ्गीकारे, पक्षानन्तर्भूतं मिथ्यात्वं सत्यम्, उत मिथ्या? आद्ये साध्याभाववति तत्र दृश्यत्वस्य=दृग्भिन्नत्वस्य सत्त्वात् व्यभिचारः । द्वितीये, तत्र मिथ्यात्वासिद्ध्या ब्रह्म सद्वितीयं स्यात् ।।

ननु जगतो मिथ्यात्वं न मिथ्या, यतो जगतस्सत्यत्वं भवेत् । किन्तु सत्यमेवेति चेत्, एवं तर्हि ब्रह्म सद्वितीयं स्यात् । तस्य ब्रह्मस्वरूपरूपत्वाङ्गीकारात्, न ब्रह्मव्यतिरिक्तसत्यसिद्धिरित्याशङ्क्य निराकरोति—**तत्**=साध्यभूतं मिथ्यात्वम्**ब्रह्मस्वरूपं चेत्**, तथा च नाद्वैतहानिरिति चेत्, **भुवनम्**=जगत्सर्वम्**सब्रह्मकम्**=ब्रह्मविशिष्टम्=ब्रह्मान्तर्यामिकम् स्यात् । मिथ्यात्वस्य जगन्निष्ठस्य=जगतो धर्मभूतस्य ब्रह्मरूपत्वात्, जगदेव ब्रह्मविशिष्टं स्यात् । हन्त! इति हर्षे, अस्मदिष्टसिद्धेः । अनुकम्पायां वा, 'भक्ष्याशया हि मञ्जूषां दष्ट्वाखुस्तेन भक्षितः' इति न्यायेन जगदपलापाय प्रवृत्तस्य ते तद्विरुद्धार्थलाभात् । किञ्च दृश्यत्वहेतुः विरुद्धो वा स्यात् ।।

यद्यस्त्यास्था तु जल्पे वा वितण्डायां महामते! । अधीष्व सर्वार्थसिद्धिमथवा शतदूषणीम् ।।
यक्षानुरूपो बलिरिति न्यायेनाचार्यतल्लजैः । शातितश्शतदूषण्यां वैतण्डिकशिरोमणिः ।।
माधवाद्यैर्निरस्तं तं वैतण्डिकशिरोमणिम् । स्वरक्षकं मन्यमानाश्शाङ्करा हन्त वञ्चिताः ।।
गतः कालो वृथा शब्दविस्तरस्येति बुद्ध्यताम् । तपःस्वध्यायनिरता जयन्तु भुवि पण्डिताः ।। ४९ ।।

उक्तानुमाने साध्यमेवं दूषयित्वा, हेतुमपि विकल्प्य दूषयति—**इष्टमित्यादि । ब्रह्मापि, तस्य जिज्ञास्यतादींश्च कथयतः तव दृश्यम् इष्टम्** । 'अथातो ब्रह्मजिज्ञासा' इत्यादौ ब्रह्मणः जिज्ञासा-

लिङ्गं जाड्यादिकं चेत्, तदपि मम मते ह्यंशतः स्यादसिद्धं
मिथ्यालिङ्गैश्च सिध्येत् किमपि यदि, भवेद्बाष्पधूमोऽग्निलिङ्गम् ॥ ५० ॥

[व्यावृत्तत्वहेतुकानुमाननिरासः]

196. व्यावृत्तं शुक्तिरूप्यं विदितमिह मृषा; विश्वमेवं न किं स्यात् ?
मैवं हेतोरयुक्तेः स खलु भिदुरता बाध्यता नाशिता वा ।

विषयत्वमुच्यते । 'आत्मा वाऽरे द्रष्टव्यः' इति ब्रह्मणो द्रष्टव्यत्वादिकञ्चोच्यते । एवं कथयतस्तव **ब्रह्मापि दृश्यम् इष्टम्**=संमतम् । अन्यथा विचारशास्त्रम्, ब्रह्मापरोक्ष्यमित्यादि सर्वं विरुद्ध्येत । एवञ्च ब्रह्मणोऽपि मिथ्यात्वं स्यात् । श्रुत्या च ब्रह्मणस्सत्यत्वसिद्धिश्चेत्, मिथ्यात्वाभाववति ब्रह्मणि दृश्यत्वसत्त्वात् व्यभिचारः । व्यभिचारपरिहारं शङ्कते—**मिथ्येत्यादि**। **अस्मिन्**=ब्रह्मणि **दृश्यता**=हेतुभूतं दृश्यत्वम् मिथ्या चेत्, **विमतिपदे**=विमतम् इति निर्दिष्टे पक्षेऽपि **एषा**=दृश्यता **एवम्**=मिथ्यारूपा **त्वया इष्टा ननु**=मिथ्यैव तव संमता किल । तथा च जगत्यपि दृश्यत्वं मिथ्यैव । तथा च जगद्वा सत्यं स्यात्, ब्रह्म वा मिथ्या स्यात्, दृश्यत्वस्योभयत्राङ्गीकारात् ॥

पुनरपि प्रकारान्तरेणाशङ्क्य समाधत्ते—**लिङ्गमित्यादि** । **लिङ्गम्**=मिथ्यात्वसाधको दृश्यत्वरूपो हेतुः **जाड्यादिकं चेत्**=जडत्वरूपम् यदि । दृश्यत्वं हि दृग्विषयत्वं दृग्भिन्नत्वपर्यवसायि । तच्च जडत्वे पर्यवस्यतीत्यर्थः । आदिपदेन दृग्भिन्नत्वग्रहणम् । एवञ्च मिथ्यात्वाभाववति ब्रह्मणि जडत्वस्य, ब्रह्मभिन्नत्वस्य वाऽभावात् न व्यभिचार इति भावः । समाधत्ते—**तदपि**=जडत्वमपि **मम मते अंशतः असिद्धं स्यात् हि**=पक्षत्वेनाभिमते जगति जीवस्यान्तर्भावात्, तत्र च हेतोः=जडत्वस्य एतत्सिद्धान्तेऽनङ्गीकारात् अंशतः **असिद्धम्**=स्वरूपासिद्धिः । हेतुर्हि वादिद्वयसंमत आवश्यकः । अतश्च भागासिद्धिः । एवं ब्रह्मभिन्नत्व-विवक्षायामपि, एतत् सत्यम्, उत मिथ्या? आद्येऽपसिद्धान्तः। द्वितीये जगदन्तर्गते जडे ब्रह्माभेदः स्यात् । तथा च ब्रह्म जडम्=अस्वप्रकाशं च स्यात् । किञ्च—**मिथ्यालिङ्गैश्च**=मिथ्याभूतहेतुभिरपि **किमपि**=यत्किञ्चि-दपि **यदि**=सत्यं यदि सिद्ध्येत्, **बाष्पधूमः**—धूमत्वेन भ्रान्तं बाष्पमपि **अग्निलिङ्गम्**=अग्न्यनुमापकम् भवेत् । बाष्पम्=हेमन्तादौ जलोपरि दृश्यमानः हिमसदृशः जलपरिणामविशेषः । अतश्च मिथ्याभूतेन दृश्यत्वादिलिङ्गेन सिद्ध्यत् मिथ्यात्वं मिथ्या स्यादिति जगत् सत्यं स्यात् । अतो दृश्यत्वहेतुना न जगन्मिथ्यात्वसिद्धिः ॥ ५० ॥

एवं जगन्मिथ्यात्वसाधकमनुमानान्तरमपि अनूद्य दूषयति—**व्यावृत्तमित्यादि** । **व्यावृत्तम्**=व्यावृत्तिविषयः=व्यावर्तमानम् **शुक्तिरूप्यम्**=शुक्तिरजतम् **इह**=अस्मिन् लोके **मृषा**=मिथ्या **विदितम्**=निश्चितम् । **विश्वम्**=जगदपि **एवम्**=व्यावर्तमानत्वात् मिथ्या **किम् न स्यात्**=कुतो न स्यात्, स्यादेव । 'विमतं मिथ्या, व्यावर्तमानत्वात्' इत्यनुमानाकारः । सर्पादिकं रज्जुतो व्यावर्तते=निवर्तते । न हि रज्जुर्निवर्तते । तत्र रज्जुः, सत्या, सर्पादिस्तु मिथ्या । एवं सुषुप्तौ किलात्मा प्रकाशते, न जगत् । अतोऽनुवर्तमान आत्मा सत्यः । व्यावर्तमानं जगत्तु मिथ्या इति पूर्वपक्षः ॥

**आद्येऽनैकान्त्यमन्त्ये स्वसमयविहतिर्मध्यमे स्यादसिद्धिः**
**धीविच्छेदादिकल्पान्तरमपि कथितैश्चूर्णितं दोषबृन्दैः ॥ ५१ ॥**

भ्रमस्थले सर्वत्राधिष्ठानमनुवर्तते, अध्यस्तं व्यावर्तते । यथा रज्जौ 'अयं सर्पः' इति भ्रमे, 'इयं रज्जुः, न सर्पः' इति बाधकज्ञाने जाते, इदंत्वांशोऽनुवर्तते, सर्पो व्यावर्तते । अनुवर्तमानं सत्यम्, व्यावर्तमानं च मिथ्या । एवं 'घटोऽस्ति' 'पटोऽस्ति' इत्यादावनुवर्तमानमस्तित्वं सत्यम्, व्यावर्तमानं तु घटपटादिकं मिथ्या । एवं सर्वत्र ज्ञानमनुवर्तते, विषयास्तु निवर्तन्ते । अतश्च सर्वत्र संविदेकैव सत्या, इतरत्सर्वं मिथ्येति सिद्ध्यति । अत्र वक्तव्यं उपरिष्टात् (श्लो.58) सन्मात्रप्रत्यक्ष-वादे भविष्यति ॥

एतद्दूषयति—**मैवमिति** । कुतः? इत्यत्र—**हेतोः**=व्यावर्तमानत्वरूपहेतोः, **अयुक्तेः**= असंभवात् । कुतः? इत्यत्र—**स खलु** व्यावर्तमानत्वं हि **भिदुरता**=भिन्नत्वमात्रं वा, **बाध्यता**=शुक्तिरजता-दाविव बाधकप्रत्ययेन बाध्यमानत्वं वा, **नाशिता वा**=विनाशित्वं वा । यद्यप्यत्र शुक्तिरजतदृष्टान्तेन बाध्यत्वमेव हेतुर्विवक्षितः । अथापि संभवदृष्ट्यैवं विकल्पाः कृताः ॥

'घटः पटात् व्यावर्तते' इत्यादौ व्यावृत्तिः अन्योन्याभावरूपः । एवं पदार्थानां परस्परं व्यावृत्तेस्सत्त्वादेव शुक्तिरजतयोः परस्परं विरोधात् एकेनान्यो व्यावर्त्यते=एकः अत्र वर्तते चेत्, अन्यो नास्तीति स्वतः निवर्त्यते । अतश्च परस्परं भेद एव व्यावृत्तिः । व्यावर्तमानत्वात्=विलक्षणतया भासमानत्वादेव घटः पटात् व्यावर्त्यते=विलक्षणबुद्धिविषयीक्रियते इति कर्मणि प्रयोगः । एवं 'प्रथमं पृथक्त्वम्, पृथक्त्वादेव अन्योन्या-भावः, अन्योन्याभावात् बाधः, बाधात् निवृत्तिः' इति बुद्धेः क्रमः । निवृत्तिश्च द्वेधा—बुद्धिक्षेत्रात् निवृत्तिः, वस्तुस्वरूपस्यैव निवृत्तिश्च । आद्या बुद्धिविषयत्वाभावरूपा, द्वितीया नाशरूपा । अतश्च विनाशित्वरूपः तृतीयः कल्पोऽपि बुद्धिसोपानारूढो भवतीति त्रेधा विकल्पः कृतः ॥

क्रमशो दूषणान्याह—**आद्ये**=भिन्नत्वमात्रं यदि सामान्यतो हेतुः, तर्हि **अनैकान्त्यम्**=व्यभिचारः । ब्रह्मभिन्नत्वात् यथा जगत् मिथ्या, तथैव जगद्भिन्नत्वात् ब्रह्मापि मिथ्या स्यात् । तथा च मिथ्यात्वाभाववति सत्यस्वरूपे ब्रह्मणि भिन्नत्वहेतोः सत्त्वात् व्यभिचारः । **अन्त्ये**=नश्वरत्वपक्षे **स्वसमयविहतिः**=स्वसिद्धान्त विरोधः=अपसिद्धान्तः । जगति नश्वरत्वाङ्गीकारे, नाशात्पूर्वं तस्य सत्त्वसिद्ध्या जगत्सत्यत्वाङ्गीकार-प्रसङ्गात् । नश्वरत्वं ह्यनित्यत्वं साधयेत्, न तु मिथ्यात्वम् । मिथ्यात्वं नश्वरत्वं च पर्याय इति वक्तुं न शक्यम् । पर्यायत्वे असिद्धिः स्पष्टा । असिद्धं किल साध्यम्, हेतोस्तद्रूपत्वेऽसिद्धिः । **मध्यमे**=बाध्यत्वपक्षे **असिद्धिः**=स्वरूपासिद्धिः स्यात् । न हि शुक्तिरजतादाविवापणस्थरजतादौ कस्यापि पुरुषस्य बाधो दृष्टः । तथा हि भवदीयं भाष्यम् 'नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं **कस्यांचिदप्यवस्थायां** बाध्यते' (ब्र.सू.2-2-29) इति । ब्रह्मज्ञानेन बाध्यत इति चेत्, तदानीम् 'केन कं पश्येत् केन कं विजानीयात्' (बृ.4-4-14) इति व्यवहारसामान्यस्यैवाभावकथनात् 'नेदं रजतम्, किन्तु शुक्तिः' इतिवत् बाधासंभवात्

**[मिथ्यात्वं नानित्यत्वरूपम्]**

**197. यत् स्यात्, तत् सर्वदा स्यात्; यदपि च न भवेत्, तन्न न स्यात् कदाऽपि क्वापि व्योमारविन्दादिवदिति यदि, न, व्याहतेः साध्यहेत्वोः।**

बाध्यत्वमसिद्धम्। यद्यप्यत्र प्रथमविकल्पानन्तरम् नश्वरत्वकल्पस्यैव दूषणं वक्तव्यम्, अथापि अपसिद्धान्तस्य महादोषत्वात्, दूषणे क्रमव्यत्यासः कृतः ॥

नन वस्तुनः सत्त्वे तद्ज्ञानमेव प्रमाणम्। यदा च तद्ज्ञानं नास्ति, तदा तत्सद्भावे प्रमाणाभावात्, तदभावः सिद्ध्यति। तथा च बाध्यत्वं तद्विषयकज्ञानाभावः। वर्तते च सुषुप्तौ प्रत्यगर्थभानेऽपि, जगतो भानाभावः। अतो जगतः सुषुप्तिकाले बाध्यत्वात् मिथ्या भवति। तथोक्तम् 'यदि सत्यं भवेद्विश्वं सुषुतौ किं न भासते।' (वि.चू.236) इतीति शङ्कते—**धीविच्छेदादिकल्पान्तरमपि=धियः**=तद्विषयकज्ञानस्य **विच्छेदः**=अभावः, एतदादिविकल्पान्तरमपि **कथितैः**=पूर्वमुक्तैः **दोषबृन्दैः**=दोषजालैरेव **चूर्णितम्**= ध्वस्तम्=निरस्तम्। किमत्र ज्ञानाभावः सुषुप्तपुरुषदृष्ट्या, उतेतरदृष्ट्या? आद्ये इन्द्रियसंयोगादिरूपसामग्र्यभावात् ज्ञानाभावः, न तु वस्तुनोऽभावात्, तदानीमेवान्यैर्ज्ञायमानत्वात्। तथाचाप्रयोजकमनुमानम्। न द्वितीयः, असिद्धेः। न हि सुषुप्तेतरपुरुषदृष्ट्या ज्ञानाभावो दृश्यते। तथा च स्वरूपासिद्धिः, हेतोरेवासिद्धिर्वा। तथा च व्यावर्तमानत्वहेतुनापि न जगन्मिथ्यात्वसिद्धिः। न चेतरस्यापि सुषुप्तौ जगतोऽभानात्, तदानीं बाध्यत एवेति चेत्, इदनीं कस्यापि ब्रह्मणोऽभानात् ब्रह्मणोऽपि बाधः स्यात्। अहमिति सर्वेषां भासते किलेति चेत्, तस्य ब्रह्मत्वे किं प्रमाणम्? श्रुतिरिति चेत्, ब्रह्मभिन्नत्वेन तस्याप्रमाणत्वात्। बाह्यैस्तत्प्रामाण्यानङ्गीकाराच्च। 'शून्यम् शून्यम्' इत्युपदेशेन सर्वस्यापि बाधस्यानिवार्यत्वाच्च ॥

न कश्चिदपि श्रेयान्नः पक्षःस्याद्वैदिकेतरः। वद मा वेदमिथ्यात्वं कस्याञ्चिदपि हि स्थितौ ॥

ननु 'नेदं रजतम्' इतिवत् बाधादर्शनेऽपि ब्रह्मज्ञानवेलायां जगन्न भासत एवेति बाध्यत्वं सिद्धमेवेति चेत्, भवदीयभाष्यविरुद्धमिदम्—'यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति' (ब्र.सू.2-1-15) इति। न च 'ब्रह्म सत्यं जगन्मिथ्या' इति प्रसिद्धं खल्विति चेत्, उत्तरवाक्यमपि पश्य 'एकं च पुनस्सत्त्वम्' इति तत्रैव। वस्तुतस्तु—

आचार्यवचनं ह्येवं दृश्यते वत्स, नैकधा। तेषां कालस्तथासीद्धि धर्मसंकटकारकः ॥
परं तु वासनाहेतोस्तच्छिष्यास्तन्मतं पुनः। बौद्धमार्गं नीतवन्त इत्याद्यपि च दर्शितम् ॥
**'गुरोःशापस्तु शिष्यःस्यात्'** गाथा सत्या कृता हि तैः। तस्मै नमोऽस्तु कालाय बाह्यब्रह्मस्वरूपिणे ॥

ननु तर्हि कथं तदाचार्यवचनम् 'यदि सत्यम्' इत्यादीति चेत्, ब्रह्मतुल्यसत्यत्वविवक्षयेति गृह्यताम्। समर्थितं च सत्यत्वे तारतम्यम् (श्लो.44) ॥ ५१ ॥

ननु नश्वरत्वरूपहेतावपसिद्धान्त इत्युक्तं न सङ्गच्छते। नश्वरस्य नाशात्पूर्वं सत्त्वस्यासिद्धेः। **'आदावन्ते च यन्नास्ति** मध्यकालेऽपि नास्ति तत्' इति न्यायादित्याशङ्क्य समाधत्ते—**यदित्यादि**। 'विमतं

**मध्ये सत्त्वं गृहित्वा खलु तदुभयतोऽसत्त्वलिङ्गं गृहीतम्**
**सामग्र्या चावधी द्वौ स्फुटतरविदितौ साऽपि तत्तत्प्रवाहात् ॥ ५२ ॥**

मध्यकालेऽप्यसत्, पूर्वापरकालयोरसत्त्वात्'; 'यत् पूर्वापरकालयोरसत्, तत् मध्यकालेऽप्यसत्, यथा व्योमारविन्दादि' इत्यन्वयः। 'यत् मध्यकाले सत्, तत् पूर्वापरकालयोरपि सत्, यथा ब्रह्म' इति व्यतिरेकः। **यत् स्यात्, तत् सर्वदैव स्यात्; यदपि च न भवेत्**=कुत्रचित् कदाचिद्वा न स्यात्, **तच्च कदापि क्वापि**=कुत्रापि न स्यात्। **व्योमारविन्दादिवत्** इति दृष्टान्तः। 'व्योमवत् व्योमारविन्दवदि'त्यर्थः। व्योम सर्वदा सत्, व्योमारविन्दं सर्वदाऽसत्। इदं व्याप्तिप्रदर्शनम्, तर्को वा। एवं घटादिकं कदाचिद्वर्तते, कदाचिन्नास्तीति चेत्, सर्वदा नास्त्येव। मध्यकाले दृश्यते किलेति चेत् ; तत् प्रतिभासमात्रम्, न तु वस्तुतस्सन्। अतश्च त्रिकालासत्त्वसिद्ध्या मिथ्यात्वसिद्धिः—**इति यदि** तदेतत् **न**=न युक्तम्। कुतः? **साध्यहेत्वोः**=साध्यस्य हेतोश्च **व्याहतेः**=परस्परं व्यघातात् ॥

व्याघातमुपपादयति— **मध्य इत्यादि** । **मध्ये**=मध्यकाले **सत्त्वम्**=प्रमाणसिद्धत्वम् **गृहीत्वा खलु**=निश्चित्य किंल **तदुभयतोऽसत्त्वलिङ्गम्**=तस्य वस्तुनः पूर्वापरकालयोः असत्त्वम् लिङ्गम् उच्यते। तथा च मध्यकाले सत्त्वस्य निश्चितत्वात्, तदसत्त्वसाधने बाधः सिद्धः। ननु सत्त्वस्यासत्त्वस्य च परस्परं व्यघातात्कथमेकत्र संभवेतामित्येतत्समाधते— **सामग्र्येत्यादि**। **सामग्र्या च**=ततत्कार्यसामग्र्या, नाशसामग्र्या च **द्वौ अवधी**=पूर्वावधिः उत्तरावधिश्च **स्फुटतरविदितौ**=सुसपष्टमेव निश्चितौ। वेदनस्य बाधादिराहित्यरूपं दार्ढ्यं विवक्षितं 'तरप्'प्रत्ययेन। 'सामग्री कार्यशून्या क्षणः' (जड.30) 'सत्त्वेऽसत्त्वेऽपि पूर्वम्' (जड.32) 'कादाचित्कस्य कालावधिनियतिकरं पूर्वसत् कारणम् स्यात्' (जड.33) इत्यादावयमर्थो विस्तरेण निरूपितः। तथा च सत्त्वासत्त्वे कालभेदेनैकस्मिन्न विरुद्धे। अन्यथा असत्त्वेन विरोधात् यदि सत्त्वं निराक्रियते, तर्हि सत्त्वेन विरोधादसत्त्वमेव निराक्रियताम्। पूर्वापरकालयोरसत्त्वस्य प्रत्यक्षसिद्धत्वात् कथं सत्त्वमिति चेत्, मध्यकाले सत्त्वमपि तथैवेति सत्त्वं कथं न स्यात्? अतो विनिगमनाविरह एव पर्यवसानम्। तेन चानित्यत्वं सिद्ध्येत्, न तु मिथ्यात्वम्। मिथ्यात्वम् अनित्यत्वरूपमेव विवक्षितमिति चेत्, तर्हि नास्माकं कश्चन विरोधः ॥

ननु तादृशकारणवर्गस्यापि अनित्यत्वात्पूर्वापरावधी वक्तव्यौ। पुनस्तस्यापीत्यनवस्था स्यादित्यत्राह— **सापि**=सामग्र्यपि **तत्तत्प्रवाहात्**=तत्तत्प्रवाहोऽनादिकालात्सर्वानुभवसिद्धः बीजाङ्कुरन्यायेनेति नानवस्था दोषः। तथा च नश्वरत्वहेतुना मिथ्यात्वं न सिद्ध्यति किन्त्वनित्यत्वमात्रम्। किञ्च व्योमारविन्दादेस्तुच्छत्वं सर्वसंमतम् ; नैवं जगतस्तुच्चत्वं तव संमतम्, व्यावहारिकसत्यत्वाङ्गीकारात्। अन्यथा शून्यवादो दुष्परिहरः अत्रेष्टापत्तौ, उत्तरत्र (बुद्धि.18) समाधीयते ॥

वत्स! माऽऽश्रय तां छायां हैतुकानां विनाशिनीम्। वेदवृक्षस्य तां छायां श्रय सर्वहितावहाम् ॥
नूनं कल्पतरुर्वेदः सर्वाभीष्टप्रदो नृणाम्। वैदिकैस्सहवासेन वेदे भक्तिं विवर्धय॥ ५२ ॥

[श्रुत्या प्रपञ्चमिथ्यात्वासिद्धिः]

198. **आम्नायस्यापि शक्तिर्न खलु गमयितुं स्वोपजीव्यप्रतीपम्**
**यूपादित्यैक्यवाक्यप्रभृतिरितरथा नोपचारं भजेत।**
**अक्षाम्नायस्वपूर्वापरविहतिभयात् नेतिनेत्यादिवाक्यं**
**वैलक्षण्यादिमात्रं प्रथयति भुवनात् ब्रह्मणो विश्वमूर्तेः ॥ ५३ ॥**

ननु अनुमानाज्जगन्मिथ्यात्वासिद्धावपि, श्रुत्यैव तत्सिद्धिरित्याशङ्कां समाधत्ते—**आम्नायस्यापीत्यादि**। तदेतन्निराकरोति—**आम्नायस्यापि**=श्रुतेरपि **स्वोपजीव्यप्रतीपम्=स्वेन**=शास्त्रेण शब्दरूपेण **उपजीव्यम्**=शक्तिग्रहणाद्युपयोगि यत् प्रत्यक्षम्, **तद्विरुद्धम्**=तादृशप्रत्यक्षस्यैवाप्रामाण्यापादकम् जगन्मिथ्यात्वरूपमर्थम् **गमयितुम्**=बोधयितुम् **शक्तिः न खलु भवेत्**। अतः श्रुत्या जगन्मिथ्यात्वं न सिद्ध्यति ॥

'द्वे वा व ब्रह्मणो रूपे' (बृ. 4-3-1) इत्युपक्रम्य मूर्तामूर्तब्राह्मणे हि वाय्वाकाशावमूर्तौ, पृथिव्यप्तेजांसि मूर्तानि चेति पञ्चभूतानि ब्रह्मणो रूपाणीत्युपदिश्य, 'अथात आदशो नेति नेति' (बृ.4-3-6) इति मूर्तामूर्तशब्दनिर्दिष्टयोरुभयोरपि निषेधात्, पञ्चभूतात्मकं जगत्सर्वं श्रुत्यैव 'नेति नेति' इति निषिध्यत इति जगतो मिथ्यात्वसिद्धिरिति ते कल्पयन्ति। श्रुतेश्शाब्दरूपत्वात्, शब्दस्य शक्तिग्रहणमन्तरा बोधकत्वासंभवात्, व्यवहारादेव लोके शक्तिग्रहात्, लोकव्यवहारस्यासद्विषयकत्वे तदधीनशक्तिग्रहस्यापि भ्रमत्वावश्यंभावात्, श्रुतिवाक्यात् प्रमारूपशाब्दबोध एव न स्यात्। अतः श्रुत्या न जगन्मिथ्यात्वसिद्धिः। न हि शक्तिग्रहमन्तरा वैदिकोऽपि शब्दः बोधं जनयेदिति। ननु श्रुतेस्सर्वप्रमाणमूर्धन्यस्य परापेक्षायाम् 'विरोधे त्वनपेक्षं स्यात्' इत्युक्तानपेक्षत्वं कथं युज्येतेति चेत्, न। स्वप्रामाण्ये तस्या इतरानपेक्षत्वमुच्यते, न तु शक्तिग्रहांशे। अयमेवांशः 'आम्नायस्यापि' इत्यपिनोच्यते। स्वतः प्रमाणस्यापि वेदस्य शक्तिग्रहणांशे प्रत्यक्षाद्यपेक्षा वर्तत इत्यर्थः। अयमर्थ उत्तरार्धे स्पष्टीभविष्यति ॥

एवमनङ्गीकारे बाधकमाह—**यूपादित्येत्यादि**। **इतरथा**=प्रत्यक्षविरुद्धमप्यर्थं श्रुतिर्यदि बोधयेत् **यूपादित्यवाक्यप्रभृतिः**='अदित्यो यूपः' इत्यादिश्रुतिः **उपचारम्**=उपचारितार्थताम् **न भजेत**=न स्वीकुर्यात्। यूपादित्ययोरभेदस्य प्रत्यक्षविरोधाद्धि 'आदित्यो यूपः' इत्यस्य आदित्यसदृशः=आदित्यवत्प्रकाशमानः इत्यर्थः स्वीकृतः। अतः प्रत्यक्षविरुद्धमर्थं श्रुतिरपि न बोधयेत्। अयं विचार उत्तरश्लोकेऽप्यनुवर्तते ॥

तर्हि 'नेति नेति' इति वाक्यं किं वक्ति? इत्यत्राह—**अक्षाम्नायेत्यादि**। **नेति नेत्यादिवाक्यम्**='अथात आदेशो नेति नेति' इत्यादिवाक्यम् **अक्षाम्नायस्वपूर्वपरविहतिभयात्=अक्षाणि**=इन्द्रियाणि **आम्नायाः**=इतरश्रुतयः **स्वपूर्वापराणि**=मूर्तामूर्तब्राह्मणस्य पूर्वापरवचनानि। एतेषां **विहतयः**=विरोधाः, तेभ्यो भयात् **विश्वमूर्तेः**=सर्वरूपिणः=अनन्तमूर्तेः ब्रह्मणः **भुवनात्**=चिदचिदात्मकजगतः **वैलक्षण्यमात्रम्**

**प्रथयति**=प्रकटयति । अक्षम् इति अनुमानस्याप्युपलक्षकम् । तथा च प्रत्यक्षादिसकलप्रमाणविरोधात् स्वप्रकरणविरोधाच्च 'नेति नेति' वाक्यम् ब्रह्मण इयत्तां निषेधति, न तु जगन्निषेधतीत्यर्थः ॥

**प्रत्यक्षविरोधस्तु** स्पष्ट एव । जगतो मिथ्यात्वे हि, तन्मूलकव्याप्तिग्रहादेरपि भ्रमत्वेन धूमाद्वह्न्यनुमानमपि धूलीपटलाद्वह्न्यनुमानवद्भ्रमस्स्यात् । अथवा प्रमाणसम्प्लववादस्य वैदिकसम्मतत्वात् अनुमानगम्यवस्तूनामपि जगति सत्त्वादनुमानविरोधः । प्रत्यक्षानुमानमूलकत्वाच्छब्दशक्तिग्रहणस्य तयोर्भ्रमत्वे तन्मूलकशक्तिग्रहस्य, एतन्मूलकस्य शाब्दबोधस्य च भ्रमत्वापत्त्या आगमोऽपि प्रमाणं न स्यात् । तथा च सकललौकिकवैदिकव्यवहारा उच्छृङ्खला भवेयुः । अतो नेतिनेतिवाक्यं न जगन्निषेधकम्, किन्तु मूर्तामूर्तात्मकं ब्रह्म इति कथनेन या ब्रह्मणः देशतः, कालतः, गुणतः, स्वरूपतश्च परिच्छिन्नता प्राप्ता, सा निषिध्यते । देशतः, कालतः गुणतः स्वरूपतश्चापरिच्छिन्नत्वाद्ब्रह्मणः । ज्ञानं हि ज्ञेयपरिच्छेदः । अतो ब्रह्मविषयकमपि ज्ञानं तादृशं परिच्छिन्नवस्तुविषयकं स्यादिति भ्रान्तिपरिहाराय ब्रह्मणः स्वव्यतिरिक्तेभ्योऽत्यन्तविलक्षणत्वम् 'यतो वाचो निवर्तन्ते' इत्यादिना प्रतिपन्नमत्राभिधीयते । अयमंशः पूर्वमेव (नायक.3) विस्तरेण निरूपितः॥

**आम्नायविरोधः**—'पुरुष एवेदं सर्वम्' 'पादोऽस्य विश्वा भूतानि' 'नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप' इत्यादिश्रुतिस्मृतिविरोधः । 'नेति नेति' इत्यतः पूर्वम् 'अथाध्यात्मम्' इत्युपक्रम्य 'तस्य हैतस्य पुरुषस्य महारजनं वासः' इति परमात्मनो दिव्यरूपादिकं वर्णितम् । अनन्तरमपि 'अथ नामधेयं सत्यस्य सत्यम्' इति जगतः सत्यत्वम्, परमात्मनस्ततोऽपि सत्यत्वम् इति च वर्णितम् ॥

**स्वपूर्वापरवचनविरोधः**—बृहदारण्यके (4-3) 'द्वे वा ब्रह्मणो रूपे' इत्युपक्रम्य पृथिव्यप्तेजांसि मूर्तानि, वायुरन्तरिक्षे अमूर्ते इति विभज्य पञ्चभूतानां तन्मूर्तित्वं प्रदर्श्य, तानि परमात्मनो रूपाणीति प्रदर्श्य 'अथात आदेश' इत्युपक्रम्य 'नेति नेति' इति तदुभयमपि निषिध्यत इति तयोर्मिथ्यात्वं सिद्ध्यतीति परे । परन्त्वेतेषां रूपाणां सत्यत्वमभिधाय, परमात्मनः ततोऽपि सत्यत्वस्य 'सत्यस्य सत्यम्' इत्यभिधीयते । ततश्च रूपाणामपि सत्यत्वम्, रूपिणस्ततोऽपि सत्यत्वकथनात्, सत्यत्वे तारतम्यं लभ्यते, न तु अन्यतरस्य मिथ्यात्वम् । श्रीशङ्कराचार्यैरप्येवमेव व्याख्यातम्—'निरवशेषं सत्यं तु ब्रह्म, इतराणि तु सावशेषसत्यानि' इति । अतो न जगन्मिथ्यात्वसिद्धिरित्यसकृदुक्तं पुरस्तात् ॥

**वस्तुतस्तु**—मूर्तामूर्तयोः परमात्मरूपत्वं हि न लोकतः प्रतिपन्नम्, अपूर्वत्वात् । अतस्तत्र श्रुतेः स्वार्थे तात्पर्यमवर्जनीयम् । अत उत्तरत्र यत्किञ्चिन्निषिध्यते चेत्, तत् पूर्वाविरोधेनैव निषेध्यं भवेत् । अतस्तावन्मात्ररूपं न ब्रह्म, 'अनन्तरूपः' इति सहस्रनामसु पठनात् अनन्तरूपत्वात्तस्येत्युपदेश एव प्रकृते विवक्षितः । अन्यथा श्रुतिर्वृषळोद्वाहमन्त्रवद्भवेदित्यादिकमप्यसकृदुक्तम् । नैतावन्मात्रमपि 'अथ नामधेयं सत्यस्य सत्यम्' इत्युत्तरत्राभिधानात् परमात्मनोऽनन्तदिव्यमूर्तयोऽपि हिरण्मयः पूरुषः इत्यादिश्रुत्या सिद्ध्यन्ति । एतदुपर्यपि कुशकाशावलम्बनवत्, जर्तिलाधिकरणन्यायप्रदर्शनादिना शब्दवर्धनं प्रकृतानुपयोगीत्यादिकं **श्रीमत्परकालयतिभिः श्रीभाष्यगूढार्थसंग्रहे** विस्तरेण प्रतिपादितं द्रष्टव्यम् ॥

[बाध्यबाधकभावनिर्णयः]

**199. प्रत्यक्षेणैव पुंसां भवति दृढतरो देह एवाऽऽत्ममोहो**
**ज्वालैक्यप्रत्यभिज्ञाद्युभयमपि च तत् बाध्यते ह्यागमाद्यैः ।**
**तस्मादक्षादिसिद्धं श्रुतिभिरपि जगत् बाध्यतामित्ययुक्तम्**
**सन्देहार्हेषु शक्तं यदिह, न खलु तत् दोषदूरेष्वपि स्यात् ॥ ५४ ॥**

पुनःपुनस्तर्कपरैः ब्रह्मवैभवतस्करैः । तपस्साध्यप्रमेयेषु विशिष्य ब्रह्मनिर्णये ॥
तर्को नैव प्रमाणं स्यात्, कदापीत्यवधीयताम् । मुषितुं नैव शक्यं तद्वैभवं परमात्मनः ॥ ५३ ॥

प्रत्यक्षस्यापि परोक्षेण बाधो युज्यत एवेत्याशङ्क्य, बाध्यबाधकभावं शिक्षयन् समाधत्ते—**प्रत्यक्षेणे-त्यादि**। **पुंसाम्**=सर्वेषामपि जनानाम् **देह एव**=अतिस्थूलेऽनात्मन्येव देहे **दृढतरः**=आमोक्षमपलपितुमशक्यः **मोहः**=अहमित्यात्मभ्रमः प्रत्यक्षेणैव भवति । एवम् **ज्वालैक्यप्रत्यभिज्ञाद्यपि**=भिन्नासु दीपज्वालासु 'सैवेयं दीपज्वाला' इति ऐक्यभ्रमरूपा प्रत्यभिज्ञा **दृढतरा**=ऐक्यं भ्रम इति जानतामपि सर्वेषामपि पुंसां भवति । आदिपदेन दर्पणस्थतया मुखभ्रमादि गृह्यते ॥

'अहं स्थूलः' 'अहं कृशः' इत्यादिभ्रमः शरीरातिरिक्तात्मज्ञानवतामपि दुस्त्यज इति सूचनाय एवकारद्वयम् दृढतरपदं च । ज्ञानिनां त्वौपाधिकः, इतरेषां तु भ्रमः । अत्र च ज्ञानमन्यत्, बुद्धिरन्येत्येतदेव कारणमित्यादिकं जीवसर एव गतम् । एवमेव सुसूक्ष्ममतीनामपि ज्वालैक्यज्ञानं स्वरसम् । एवं स्वमुखस्य दर्पणस्थत्वेनैव दुरपह्नवं दर्शनं च । **उभयमपि च तत्**=द्विविधमपि अपरोक्षरूपं ज्ञानम्, श्लोके कण्ठत उक्तत्वात् 'उभयम्' इत्युक्तिः । वस्तुतस्तु नौयानादौ वृक्षादिचलनभ्रमाः, महति चन्द्रे अल्पत्वभ्रमादयो बहुलं दृश्यन्त एव । एते सर्वेऽप्यपरोक्षरूपा एव भ्रमाः **आगमाद्यैः**=परोक्षैः आप्तवाक्यरूपशब्दानुमानैः **बाध्यते हि**=बाध्यत इति सर्वसंमतमेव ॥

**तस्मात्**=एवं सर्वप्रतिपन्नानुभवदर्शनात् **अक्षादिसिद्धम्**=प्रत्यक्षादिसिद्धमपि **जगत्**=ब्रह्मभिन्नमिदं जगत् **बाध्यताम् श्रुतिभिरपि**=परोक्षैः श्रुतिरूपशब्दैरपि, का हानिः? **इति** कथनम् **अयुक्तम्**=न क्षोदक्षमम् । कुतः? **सन्देहार्हेषु**=सूक्ष्ममतीनां संशययोग्येषु विषयेषु **यत् शक्तम्**=अपरोक्षस्यापि बाधसंभव-सहितं यत् प्रत्यक्षम्, **तत् इह**=प्रकृते जगत्प्रत्यक्षे **दोषदूरेष्वपि**= भ्रमहेतुभूतकारणदोषबाधकप्रत्ययगन्ध-रहितेष्वपि प्रत्यक्षेषु **न खलु स्यात्**=नैव संभवप्रसरं स्यात् । श्रुतिभिः इत्यनुमानोपलक्षकम् ॥

एकस्य ज्ञानस्य भ्रमत्वनिर्णयः खलु तादृशज्ञानकारणगतदोषनिर्णयेन, अनन्तरकालिकेन 'नेदं तथा' इति बाधकानुभवदर्शनेन वा भवेत्, न तु निरुपाधिकतया प्रत्यक्षं सर्वं परोक्षेण बाध्यत एवेत्युत्सर्गः, उपजीव्यविरोधासंभवस्यानुपदमेव प्रदर्शितत्वात् । प्रकृते जगद्दर्शने उक्तकारणद्वयस्याभावान्न बाध्यत्वम् । अन्यथा श्रुतेरपि ब्रह्मभिन्नत्वेन मिथ्यात्वादप्रमाण्यप्रसङ्गः । बाधितानुवृत्तिस्तु निरस्तैव, बाधितत्वस्यैव विचार्य-माणत्वात् । अतो जगन्मिथ्यात्वं दुस्साधम् ॥

**प्रथयति**=प्रकटयति । अक्षम् इति अनुमानस्याप्युपलक्षकम् । तथा च प्रत्यक्षादिसकलप्रमाणविरोधात् स्वप्रकरणविरोधाच्च 'नेति नेति' वाक्यम् ब्रह्मण इयत्तां निषेधति, न तु जगन्निषेधतीत्यर्थः ॥

**प्रत्यक्षविरोधस्तु** स्पष्ट एव । जगतो मिथ्यात्वे हि, तन्मूलकव्याप्तिग्रहादेरपि भ्रमत्वेन धूमाद्वह्न्यनुमानमपि धूलीपटलाद्वह्न्यनुमानवद्भ्रमस्स्यात् । अथवा प्रमाणसम्प्लववादस्य वैदिकसम्मतत्वात् अनुमानगम्यवस्तूनामपि जगति सत्त्वादनुमानविरोधः । प्रत्यक्षानुमानमूलकत्वाच्छब्दशक्तिग्रहणस्य तयोर्भ्रमत्वे तन्मूलकशक्तिग्रहस्य, एतन्मूलकस्य शाब्दबोधस्य च भ्रमत्वापत्त्या आगमोऽपि प्रमाणं न स्यात् । तथा च सकललौकिकवैदिकव्यवहारा उच्छृङ्खला भवेयुः । अतो नेतिनेतिवाक्यं न जगन्निषेधकम्, किन्तु मूर्तामूर्तात्मकं ब्रह्म इति कथनेन या ब्रह्मणः देशतः, कालतः, गुणतः, स्वरूपतश्च परिच्छिन्नता प्राप्ता, सा निषिध्यते । देशतः, कालतः गुणतः स्वरूपतश्चापरिच्छिन्नत्वाद्ब्रह्मणः । ज्ञानं हि ज्ञेयपरिच्छेदः । अतो ब्रह्मविषयकमपि ज्ञानं तादृशं परिच्छिन्नवस्तुविषयकं स्यादिति भ्रान्तिपरिहाराय ब्रह्मणः स्वव्यतिरिक्तेभ्योऽत्यन्तविलक्षणत्वम् 'यतो वाचो निवर्तन्ते' इत्यादिना प्रतिपन्नमत्राभिधीयते । अयमंशः पूर्वमेव (नायक.3) विस्तरेण निरूपितः॥

**आम्नायविरोधः**— 'पुरुष एवेदं सर्वम्' 'पादोऽस्य विश्वा भूतानि' 'नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप' इत्यादिश्रुतिस्मृतिविरोधः । 'नेति नेति' इत्यतः पूर्वम् 'अथाध्यात्मम्' इत्युपक्रम्य 'तस्य हैतस्य पुरुषस्य महारजनं वासः' इति परमात्मनो दिव्यरूपादिकं वर्णितम् । अनन्तरमपि 'अथ नामधेयं सत्यस्य सत्यम्' इति जगतः सत्यत्वम्, परमात्मनस्ततोऽपि सत्यत्वम् इति च वर्णितम् ॥

**स्वपूर्वापरवचनविरोधः**—बृहदारण्यके (4-3) 'द्वे वा ब्रह्मणो रूपे' इत्युपक्रम्य पृथिव्यप्तेजांसि मूर्तानि, वायुरन्तरिक्षे अमूर्ते इति विभज्य पञ्चभूतानां तन्मूर्तित्वं प्रदर्श्य, तानि परमात्मनो रूपाणीति प्रदर्श्य 'अथात आदेश' इत्युपक्रम्य 'नेति नेति' इति तदुभयमपि निषिध्यत इति तयोर्मिथ्यात्वं सिद्ध्यतीति परे । परन्त्वेतेषां रूपाणां सत्यत्वमभिधाय, परमात्मनः ततोऽपि सत्यत्वस्य 'सत्यस्य सत्यम्' इत्यभिधीयते । ततश्च रूपाणामपि सत्यत्वम्, रूपिणस्ततोऽपि सत्यत्वकथनात्, सत्यत्वे तारतम्यं लभ्यते, न तु अन्यतरस्य मिथ्यात्वम् । श्रीशङ्कराचार्यैरप्येवमेव व्याख्यातम्— 'निरवशेषं सत्यं तु ब्रह्म, इतराणि तु सावशेषसत्यानि' इति । अतो न जगन्मिथ्यात्वसिद्धिरित्यसकृदुक्तं पुरस्तात् ॥

**वस्तुतस्तु**—मूर्तामूर्तयोः परमात्मरूपत्वं हि न लोकतः प्रतिपन्नम्, अपूर्वत्वात् । अतस्तत्र श्रुतेः स्वार्थे तात्पर्यमवर्जनीयम् । अत उत्तरत्र यत्किञ्चिन्निषिध्यते चेत्, तत् पूर्वाविरोधेनैव निषेध्यं भवेत् । अतस्तावन्मात्ररूपं न ब्रह्म, 'अनन्तरूपः' इति सहस्रनामसु पठनात् अनन्तरूपत्वात्तस्येत्युपदेश एव प्रकृते विवक्षितः । अन्यथा श्रुतिर्वृषळोद्वाहमन्त्रवद्भवेदित्यादिकमप्यसकृदुक्तम् । नैतावन्मात्रमपि 'अथ नामधेयं सत्यस्य सत्यम्' इत्युत्तरत्राभिधानात् परमात्मनोऽनन्तदिव्यमूर्तयोऽपि हिरण्मयः पूरुषः इत्यादिश्रुत्या सिद्ध्यन्ति । एतदुपर्यपि कुशकाशावलम्बनवत्, जर्तिलाधिकरणन्यायप्रदर्शनादिना शब्दवर्धनं प्रकृतानुपयोगीत्यादिकं **श्रीमत्परकालयतिभिः श्रीभाष्यगूढार्थसंग्रहे** विस्तरेण प्रतिपादितं द्रष्टव्यम् ॥

**[बाध्यबाधकभावनिर्णयः]**

**199.** **प्रत्यक्षेणैव पुंसां भवति दृढतरो देह एवाऽऽत्ममोहो**
**ज्वालैक्यप्रत्यभिज्ञाद्युभयमपि च तत् बाध्यते ह्यागमाद्यैः ।**
**तस्मादक्षादिसिद्धं श्रुतिभिरपि जगत् बाध्यतामित्ययुक्तम्**
**सन्देहार्हेषु शक्तं यदिह, न खलु तत् दोषदूरेष्वपि स्यात् ॥ ५४ ॥**

पुनःपुनस्तर्कपरैः ब्रह्मवैभवतस्करैः । तपस्साध्यप्रमेयेषु विशिष्य ब्रह्मनिर्णये ॥
तर्को नैव प्रमाणं स्यात्, कदापीत्यवधीयताम् । मुषितुं नैव शक्यं तद्वैभवं परमात्मनः ॥ ५३ ॥

प्रत्यक्षस्यापि परोक्षेण बाधो युज्यत एवेत्याशङ्क्य, बाध्यबाधकभावं शिक्षयन् समाधत्ते—**प्रत्यक्षेणेत्यादि**। **पुंसाम्**=सर्वेषामपि जनानाम् **देह एव**=अतिस्थूलेऽनात्मन्येव देहे **दृढतरः**=आमोक्षमपलपितुमशक्यः **मोहः**=अहमित्यात्मभ्रमः प्रत्यक्षेणैव भवति । एवम् **ज्वालैक्यप्रत्यभिज्ञाद्यपि**=भिन्नासु दीपज्वालासु 'सैवेयं दीपज्वाला' इति ऐक्यभ्रमरूपा प्रत्यभिज्ञा **दृढतरा**=ऐक्यं भ्रम इति जानतामपि सर्वेषामपि पुंसां भवति । आदिपदेन दर्पणस्थतया मुखभ्रमादि गृह्यते ॥

'अहं स्थूलः' 'अहं कृशः' इत्यादिभ्रमः शरीरातिरिक्तात्मज्ञानवतामपि दुस्त्यज इति सूचनाय एवकारद्वयम् दृढतरपदं च । ज्ञानिनां त्वौपाधिकः, इतरेषां तु भ्रमः । अत्र च ज्ञानमन्यत्, बुद्धिरन्येत्येतदेव कारणमित्यादिकं जीवसर एव गतम् । एवमेव सुसूक्ष्ममतीनामपि ज्वालैक्यज्ञानं स्वरसम् । एवं स्वमुखस्य दर्पणस्थत्वेनैव दुरपह्नवं दर्शनं च । **उभयमपि च तत्**=द्विविधमपि अपरोक्षरूपं ज्ञानम्, श्लोके कण्ठत उक्तत्वात् 'उभयम्' इत्युक्तिः । वस्तुतस्तु नौयानादौ वृक्षादिचलनभ्रमाः, महति चन्द्रे अल्पत्वभ्रमादयो बहुलं दृश्यन्त एव । एते सर्वेऽप्यपरोक्षरूपा एव भ्रमाः **आगमाद्यैः**=परोक्षैः आप्तवाक्यरूपशब्दानुमानैः **बाध्यते हि**=बाध्यत इति सर्वसंमतमेव ॥

**तस्मात्**=एवं सर्वप्रतिपन्नानुभवदर्शनात् **अक्षादिसिद्धम्**=प्रत्यक्षादिसिद्धमपि **जगत्**=ब्रह्मभिन्नमिदं जगत् **बाध्यताम् श्रुतिभिरपि**=परोक्षैः श्रुतिरूपशब्दैरपि, का हानिः? **इति** कथनम् **अयुक्तम्**=न क्षोदक्षमम् । कुतः? **सन्देहार्हेषु**=सूक्ष्ममतीनां संशययोग्येषु विषयेषु **यत् शक्तम्**=अपरोक्षस्यापि बाधसंभवसहितं यत् प्रत्यक्षम्, **तत् इह**=प्रकृते जगत्प्रत्यक्षे **दोषदूरेष्वपि**= भ्रमहेतुभूतकारणदोषबाधकप्रत्ययगन्धरहितेष्वपि प्रत्यक्षेषु **न खलु स्यात्**=नैव संभवप्रसरं स्यात् । श्रुतिभिः इत्यनुमानोपलक्षकम् ॥

एकस्य ज्ञानस्य भ्रमत्वनिर्णयः खलु तादृशज्ञानकारणगतदोषनिर्णयेन, अनन्तरकालिकेन 'नेदं तथा' इति बाधकानुभवदर्शनेन वा भवेत्, न तु निरुपाधिकतया प्रत्यक्षं सर्वं परोक्षेण बाध्यत एवेत्युत्सर्गः, उपजीव्यविरोधासंभवस्यानुपदमेव प्रदर्शितत्वात् । प्रकृते जगद्दर्शने उक्तकारणद्वयस्याभावान्न बाध्यत्वम् । अन्यथा श्रुतेरपि ब्रह्मभिन्नत्वेन मिथ्यात्वादप्रमाण्यप्रसङ्गः । बाधितानुवृत्तिस्तु निरस्तैव, बाधितत्वस्यैव विचार्यमाणत्वात् । अतो जगन्मिथ्यात्वं दुस्साधम् ॥

[शास्त्रप्रत्यक्षयोर्विरोधपरिहारः]

200. **प्रत्यक्षं दोषमूलं, श्रुतिरिह न तथाऽपौरुषेयत्वहानेः**
**तस्मात् सा बाधिकाऽस्येत्यसदखिलधियामन्ततो दोषसाम्यात्।**

वस्तुतः प्रत्यक्षत्वं वा परोक्षत्वं वा बाध्यत्वे बाधकत्वे वा न प्रयोजकम्, द्वेधाप्यनुभवदर्शनात्। किन्तु विरुद्धयोः प्रमाणयोर्मध्ये यत्सावकाशम्, तत् बाध्यम्, यत् निरवकाशम्, तदेव बाधकम्। सावकाशत्वं नाम अन्यथासिद्धत्वम्=प्रकारान्तरेण नेतुं शक्यत्वम्। निरवकाशत्वं नामानन्यथासिद्धत्वम्=प्रकारान्तरेण नेतुमशक्यत्वम्। 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इति शतशश्शपथकरणेऽपि 'ममोत्पन्नं ज्ञानं प्रमा,न वा'? इति संशयः समयविशेषे सर्वेषां सहजः। अत्र च कारणं ज्ञानबुद्ध्योर्भेद एव। अतस्तत्परिहाराय विचारोऽप्यावश्यकः। विचारणे च यत् अन्यथासिद्धम्, तद्बाध्यते ; अनन्यथासिद्धं प्रमाणं शिष्यते। जगद्विषयकप्रत्यक्षस्यान्यथासिद्धेरदर्शनात्, अद्वितीयश्रुत्यादेरन्यथानयनस्य बहुधाप्रदर्शितत्वात् श्रुत्या जगतो न मिथ्यात्वसिद्धिः। 'आदित्यो यूपः' इत्यादौ श्रुतेरन्यथा नयनस्य सर्वसंमतत्वात्, श्रुतेरन्यथानयनमेवापचार इत्यादिभावना कापट्यमूला। अतश्च द्वयोः ज्ञानयोर्विरोधेऽन्यतरस्यैव प्रामाण्यात्, पुनःपुनर्विचारवर्धनं न श्रेयसे। अतीन्द्रियविषयेषु शतशो विचारेऽपि ये संशयग्रहग्राहान्न विमुच्यन्ते, त एव 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति'(गी.4-40) इति वचनविषयाः। एतदुपर्यपि यद्वक्तव्यम् तत् 60 श्लोके वक्ष्यामः ॥ ५४ ॥

जगद्विषयकप्रत्यक्षस्य अन्यथासिद्धेरदर्शनादित्युक्तं न समीचीनम्, तस्य दोषमूलत्वेनान्यथासिद्धेरित्याशङ्क्य परिहरति—**प्रत्यक्षमित्यादि**। **प्रत्यक्षम् दोषमूलम्**=लोके सर्वप्रमाणमूर्धन्यमपि प्रत्यक्षात्मकं ज्ञानं दोषमूलं भवितुमर्हति, लोके ज्वालैक्यस्थले तादृशप्रत्यक्षस्य दर्शनात्। **इह**=प्रकृते तु **श्रुतिः न तथा**=न दोषमूला, कस्यापि वैदिकस्यासंमतेः। तत्र कारणम्—**अपौरुषेयत्वहानेः**=श्रुतेरपौरुषेयत्वस्य हानिप्रसङ्गात्। वेदस्यापौरुषेयत्वं हि तस्य दोषदूरत्वरक्षणार्थं सर्ववैदिकैरङ्गीकृतम्। यदि श्रुतिरपि दोषमूला, तर्हि अपौरुषेयत्वसमर्थनक्लेशो व्यर्थः। **पौरुषेयत्वहानेः** इति पदच्छेदे, पौरुषेयत्वहानेः=पौरुषेयत्वस्याप्रामाण्यशङ्काहेतोरभावात् **न तथा**=दोषमूला न, इत्यर्थः। **तस्मात्**=नित्यनिर्दोषत्वात् **सा**=श्रुतिः **अस्य**=प्रत्यक्षस्य बाधिका स्यात्। लोक एव प्रत्यक्षस्य प्रामाण्यं सापवादमिति प्रदर्शितम्। वैदिकानां तु वेद एव प्रमाणमूर्धन्यः। अतः श्रुत्यनुसारेणैव प्रत्यक्षं नेयम्। तर्हि 'आदित्यो यूपः' इत्यादावपि लक्षणा न स्यादिति चेत्, तद्वाक्यस्य लौकिकवस्तुविषयकत्वात्तत्र लोकानुरोधेनैव निर्णयः। परमात्मनस्त्वतीन्द्रियत्वात् न तत्रैन्द्रियिकं प्रत्यक्षं प्रमाणं भवितुमर्हति। अत एव किल शास्त्रैकसमधिगम्यत्वं परब्रह्मणस्सर्वैरपि वेदान्तिभिरुच्यते। शास्त्रं च जगद्ब्रह्मणोरभेदं वक्ति 'सर्वं खल्विदं ब्रह्म' इति। स चाभेद उपादानोपादेयभावकृतः। स च विवर्तोपादानत्व एव युज्येत, परिणाम्युपादानत्वे ब्रह्मणो विकारापत्तेः। अतश्च सिद्धं जगतो मिथ्यात्वमनिवार्यम्।

तदेतन्निराकरोति—इत्यसदिति। कुत इत्यत्र—**अखिलधियामित्यादि**। **अखिलानामपि धियाम्**=ज्ञानानाम् **अन्ततः**=पर्यवसानतः **दोषसाम्यात्**=भेदवासनादिरूपाणां दोषाणां समानत्वात्। अविद्या,

**शास्त्रस्यापि ह्यविद्याप्रभृतिभिरुदयः संमतस्त्वन्मतस्थैः**
**तस्यानाविद्यभावे न हि निखिलभिदापह्नवः शक्यशङ्कः ॥ ५५ ॥**

**[परत्वमात्रं न बाधकत्वप्रयोजकम्]**

**201. दोषोत्थत्वाविशेषे न हि भवति परं पूर्वबाधप्रगल्भं**
**दोषज्ञानं तु मा भूदविदुषि पुरुषे; वस्तुतस्त्वन्यथा तत् ।**

भेदवासना इत्यादिरूपाणां देषाणाम् प्रत्यक्षे वेदेऽपि तन्मते समानत्वादित्यर्थः। एतदेवोपपादयति—**शास्त्रस्यापि**=श्रुतेरपि **अविद्याप्रभृतिभिः**=अनुपदमुक्तैः अविद्याभिः दोषैः **उदयः**=आविर्भावः **त्वन्मतस्थैः**=ब्रह्मव्यतिरिक्तमिथ्यात्ववादिभिः **संमतो हि**=अङ्गीकृतः किल । एवं वेदस्याप्यविद्यामूलकत्वं समानमेव, ब्रह्मव्यतिरिक्तं सर्वमविद्याविलास इत्यङ्गीकारात् ॥

ननु अपौरुषेयत्वाद्वेदस्य उदयो वा लयो वा कथं युज्यते इति चेत्तत्राह—**तस्य**=वेदस्य **अनाविद्यभावे**=अविद्यया कल्पितत्वाभावे **निखिलभिदापह्नवः**=ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मिथ्यात्वं **न हि शक्यशङ्कः**=शङ्कितुमपि न हि शक्यः । ब्रह्मव्यतिरिक्तस्य वेदस्याविद्याकल्पितत्वाभावे तस्य ब्रह्मवदेव सत्यत्वावश्यंभावेनाद्वैतहानिरित्यर्थः । तथा च सर्वेषामपि प्रमाणानां प्रामाण्यस्य समानत्वे, शास्त्रेण प्रत्यक्षस्य बाधोपपादनमभिमानमात्रमिति भावः ॥

अस्तु नाम वेदः प्रमाणमूर्धन्यः, प्रामाण्यं च तस्य प्रश्नानर्हमित्यादि । प्रत्यक्षं सर्वमपि दोषमूलत्वादप्रमाणं चेत्, वेदस्य शब्दरूपत्वात्, प्रथमं तस्य श्रोत्रेण ग्रहणमावश्यकम् । अनन्तरं शक्तिग्रहणाय प्रत्यक्षाद्यपेक्षा चानिवार्या । यदि प्रत्यक्षं सर्वमपि अप्रमाणम्, तर्हि वैदिकशब्दविषयकं श्रोत्रेन्द्रियजन्यं प्रत्यक्षमपि तादृशमेवेति तस्मिन्नेवानाश्वासः स्यात् । अनन्तरं शब्दशक्तिग्रहणादिकमपि तादृशमेवेति न कुत्रापि विश्वासः स्यात् । अतः प्रत्यक्षं सर्वमप्यप्रमाणमिति वक्तुं न शक्यते । ननु न वयं प्रत्यक्षं सर्वथाऽप्रमाणमिति वदामः । व्यावहारिकं प्रामाण्यं तस्यास्त्येवेति चेत्, तर्हि तादृशप्रत्यक्षविषयस्य भेदस्यापि अस्तु सत्यत्वम् । अस्तु तदपि व्यावहारिकम्, का हानिरिति चेत्, आदेहपातं सर्वमपि व्यावहारिकमेवेति तूष्णीं स्थीयतां तर्हि । देहपातानन्तरं किं भविष्यतीति जिज्ञासा सहजैव किल सर्वेषाम् । अतः पारमार्थिकमन्यदस्तीति बोधनीयमेवेति चेत्, तावन्मात्रेण मोक्षानङ्गीकारात् तदधिकृत्यापि विवादस्य सत्वाच्च तूष्णीमवस्थानमेव वरं मिथ्यावादापेक्षया ॥ ५५ ॥

यद्यपि दोषमूलत्वं सर्वेषामपि प्रमाणानां समम्, अथापि श्रुत्या भेदस्य मिथ्यात्वं सिद्ध्यत्येव । यथा 'भूतले घटो नास्ति' इत्यत्र 'भूतले घटोऽस्ति' इत्येतावानंशः नञः शेषभूतः, न स्वार्थे तात्पर्यवान् । विधिनिषेधयोर्मध्ये निषेधस्य प्रतियोगिसमर्पणरूपत्वं विधेः सर्वसंमतम् । तथैव भेदवाक्यानामभेदशेषभूतत्वेन स्वार्थे न तात्पर्यमित्यभेदसिद्ध्या भेदप्रपञ्चस्य निवृत्तिः सिद्धैवेति शङ्कां निराकरोति—**दोषोत्थत्वेत्यादिना**। **दोषोत्थत्वाविशेषे**=प्रत्यक्षानुमानागमानां त्रयाणामपि आविद्यत्वेन दोषमूलत्वस्य साम्येऽपि **परम्**=निषेधबोधकं परं शास्त्रम् **पूर्वबाधप्रगल्भम्**=पूर्वस्य भेदसमर्पकस्य प्रत्यक्षादेः बाधे समर्थम् **भवत्येव**, परत्वादेवेति **न हि**

**निर्दोषत्वाभिमन्तृस्वसमयिमतिभिः किं न मिथ्या कृतान्ताः?**
**प्राबल्यं चेन्निषेधः पर इति, मुखरं तुर्यबौद्धस्य तूर्यम् ।। ५६ ।।**

**भवति**। कुतः? न हि परत्वमात्रं प्रतिबन्धकत्वप्रयोजकम्। अप्रामाण्यज्ञानानास्कन्दितस्यैव ज्ञानस्य प्रतिबन्धकत्वात् । अनन्तरकालिके निषेधकप्रमाणे दोषजन्यत्वनिश्चये सति प्रतिबन्धकत्वासंभवादिति भावः । प्रसिद्धोऽयमंशस्सर्वतीर्थकाराणामिति सूचनाय 'हि'शब्दः। तथा च भेदवाक्यानामभेदवाक्यानाञ्च दोषमूलकत्वज्ञाने समाने सति परत्वमात्रादभेदवाक्यानां प्रतिबन्धकत्वं न संभवतीति भावः ।।

ननु सत्यपि सर्वेषां दोषमूलत्वे समाने, उत्तरज्ञाने दोषमूलत्वस्याज्ञाने प्रतिबन्धकत्वं स्यादेव; अप्रामाण्यज्ञानानास्कन्दितस्यैव प्रतिबन्धकत्वादिति चेत्तत्राह—**दोषज्ञानमित्यादि**। **अविदुषि तु**=अज्ञानिनि **पुरुषे**=सांसारिकजीवे तु **दोषज्ञानम्**=परस्मिन् ज्ञाने दोषमूलत्वज्ञानम् **मा भूत्**, ज्ञानिनि तु तदवश्यंभावि किल। जगतो मिथ्यात्वं हि ज्ञानिदृष्ट्यैव वक्तव्यम्। स तु सर्वं मिथ्येति जानात्येव। एवं सति तस्य परस्मिन् ज्ञानेऽपि दोषोत्पत्त्वनिश्चयात्, तेन ज्ञानेन प्रपञ्चबाधः कथं भवेत्?

ननु उत्तरस्मिन् ज्ञाने भ्रमत्वनिर्णयो ब्रह्मापरोक्ष्यानन्तरमेव संभवी। ततः पूर्वं भ्रमत्वनिर्णयाभावादप्रामाण्यज्ञानानास्कन्दितत्वस्य सत्त्वेन प्रपञ्चभ्रमनिर्वतनक्षमत्वं भ्रमात्मकस्याप्युत्तरज्ञानस्य भवत्येवेति चेत्, तत्राह—**वस्तुत** इत्यादि। **वस्तुतस्तु**= वस्तुस्वरूपदृष्ट्या तु **तत्**=उत्तरज्ञानमपि **अन्यथा**=मिथ्यैव किल! वस्तुतः गुरूपदेशात् ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं पूर्वमपि वर्तत एव। गुरूपदिष्टत्वादेव नाप्यप्रामाण्यसंशयः। अतश्च ज्ञान्यपेक्षयाऽज्ञानिन एव वरम्। यतस्ते स्वकक्ष्यायां प्रामाणिकाः। ज्ञानिनां तु प्रत्यक्षवत् शास्त्रमपि मिथ्येति ज्ञानवत्त्वात् उभयभ्रष्टा एव भवेयुः ।।

नन्वथापि वैदिकानां वेदवाक्येष्वभिमानातिशयादेव वेदवाक्यजन्यज्ञाने प्रामाण्यातिशयाज्जगद्भ्रमबाधोपपत्तिरित्याशङ्क्य समाधत्ते—**निर्दोषत्वेत्यादि** । **निर्दोषत्वाभिमन्तारः**='ममैव मतं निर्दुष्टम्' इति **अभिमन्तारः**—अभिमानवन्तः, अभिमानपदेन तस्यावास्तविकत्वमुच्यते, **ये स्वसमयिनः** तत्तत्सिद्धान्तिनः, **तेषां मतिभिः**=ज्ञानैः मिथ्याभूतैः **कृतान्ताः**=तेषां तेषां सिद्धान्ताः मिथ्याः **न किं भवेयुः?** भवेयुरेव। तत्तदभिमानमात्रेण विषयो मिथ्या न भवेत् किम्? यदि न भवेत्, तर्हि लोके न किञ्चिदपि प्रतितिष्ठेत्। अतश्च उत्तरज्ञानेऽप्रमात्वज्ञानाभावे तस्य पूर्वज्ञानप्रतिबन्धकत्वं भवेत् कामम्। तत्तु केवलं वैयक्तिकम्। तावता वस्तुतः स्वरूपमेवान्यथा भवेत् किम्। यदि भवेत्, तर्हि लुब्धस्य काकणिकायां सुवर्णत्वभ्रान्त्या काकणिका सुवर्णं भवेत्। अतो भवत्संमतशास्त्रेण प्रत्यक्षबाधनं दुस्साधम् ।।

नन्वेवमपि विध्यपेक्षया निषेधस्योत्तरत्वेन प्राबल्यात्, उत्तरेण शास्त्रजन्यज्ञानेन पूर्वतनं प्रत्यक्षं बाध्यत एवेत्याशङ्क्य समाधत्ते—**प्राबल्यमित्यादि** । **निषेधः**=अभावः **परः**=भावापेक्षया अनन्तरकालिकः, भावनिषेधरूपत्वादभावस्य **इति**=इति हेतोः **प्राबल्यं चेत्**='प्रत्यक्षं विधिरूपम्, शास्त्रं अप्रामाण्यज्ञानानास्कन्दितत्वमात्रेण तु निषेधरूपम्' इत्येतावन्मात्रात् शास्त्रं प्रबलम्, प्रत्यक्षं तु दुर्बलमिति यदि, तर्हि

[अपच्छेदाधिकरणविमर्शः]

**202. निर्दोषं यच्च शास्त्रं तदपि बहुविधं बोधयत्येव भेदं**
**वाक्ये तत्त्वोपदेशप्रकरणपठिते नान्यपर्यं प्रतीमः ।**

**तुर्यबौद्धस्य**=माध्यमिकस्यैव **तूर्यम्**=तूर्यवाद्यम्=जयकाहळः **मुखरम्**=शब्दायमानं भवेत् । उभयोरपि भ्रमत्वेऽपि, उत्तरत्वमात्रात् द्वितीयं यदि बाधकं भवेत्, तदा सर्वापलापवादिनो माध्यमिकस्य वचनमेव वेदापेक्षयाऽपि प्रबलं भवेत्सर्वनिषेधरूपत्वादिति शास्त्रेण ब्रह्मणः सिद्धिरपि न स्यात् । अतः परत्वमात्रं न बाधकत्वप्रयोजकमिति शास्त्रेण प्रत्यक्षबाधोऽपि दुस्साधः ॥

वस्तुतस्तु अभेदः यथा भेदनिषेधरूपः, तथा भेदोऽपि अभेदनिषेधरूपः । विरुद्धयोः रूपयोः परस्परनिषेधरूपतायाः अनिवार्यत्वात् । यथा तमःप्रकाशयोः । तमः प्रकाशाभावरूपः । प्रकाशश्च तमोऽभावरूपः । यद्यपि पदद्वयेऽपि नञ् नास्ति, अथापि तदर्थयोः परस्परनिषेधरूपत्वमनिवार्यम् । तद्वदेव भेदपदे नञः अभावेऽपि, भेदः अभेदनिषेधरूपः । अभेदश्च भेदनिषेधरूपः । 'अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते' (मां.का.3-18) इति हि तेषां मूलशासनम् । ततश्च भेदवाक्यान्येव निषेधवाक्यानि, अभेदवाक्यान्येव प्रतियोगिसमर्पकाणि कुतो न स्युः । सृष्टिप्रलयौ हि चक्रवत् परिवर्तेते । 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इत्यादिना एकस्य बहुभावः सृष्टिः। बहूनां एकीभाव एव प्रलयः । 'एकमेव' 'बहु स्याम्' इति पदाभ्यामयमर्थः स्पष्टः । तथा च एकत्वबहुत्वयोः चक्रवत् परिभ्रमतोः इदमेवाद्यं इदमेवानन्तरमिति निर्णयाभावात्, कस्य सत्यत्वं, कस्य वा मिथ्यात्वं इति विनिगमकासंभवात्, अस्तु उभयोरपि सत्यत्वम् । मास्तु वोभयोरपि सत्यत्वम् । अनयोर्मध्ये उभयोस्सत्यत्वमेव वरम्, अन्यथा शून्यवादापत्तेः ॥ ५६ ॥

ननु भोः! त्वमेव वैतण्डिकोऽसि, योऽस्मान् वैतण्डिकान् निन्दसि । सर्वं व्यावहारिकमिति वदतामस्माकं बौद्धागमापेक्षया व्यावहारिकः प्रमाण्यातिशयो वेदानां संमतः । त्वमपि वैदिकोऽसि । अतः व्यावहारिकं वा प्रामाण्यातिशयं वेदानां कथं निराकरोषीत्यत्रोत्तरमाह—**निर्दोषमित्यादि** । **यच्च शास्त्रम्**=वेदाख्यं परमं शास्त्रम् **निर्दोषम्**=प्रमादादिव्यावहारिकदोषरहितं मन्यसे, **तदपि बहुविधम्**=स्वरूपतः, धर्मतः, गुणतश्च जगद्ब्रह्मणोः नानाविधं **भेदम् बोधयत्येव**=उपदिशत्येव, न तु केवलं वक्ति । केवलं वचनं कदाचिदन्यतात्पर्यकमपि स्यात् ; न तूपदेशः, चेतनहितार्थत्वादुपदेशस्य । ननु कथं ज्ञायते भेदस्योपदेश्यत्वमेवेत्यत्राह—**वाक्य इत्यादि** । **तत्त्वोपदेशप्रकणपठिते वाक्ये**=भेदवाक्ये **आन्यपर्यम्**=अन्यपरताम्=अन्यतात्पर्यकताम् **न प्रतीमः**=न जानीमः, वयमिति शेषः । लोके कुत्राप्यस्माभिस्तथाऽदर्शनात् । 'भोक्ता भाग्यं प्रेरितारं च मत्त्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे.1-12) 'य ईशेऽस्य जगतो नित्यमेव'(श्वे.6-17) इत्यादौ चिदचिदीश्वरभेदस्य, तदनन्तरं तन्निषेधाभावस्य च दर्शनात् ॥

ननु भोः! न वयं प्रमाणानां पौर्वापर्यमादाय पूर्वस्योत्तरेण बाध इति वदामः, येनोच्येत भवता केवलं भेदोऽप्युपदिश्यते; अनन्तरं निषेधोऽपि न दृश्यते कुत्रचिदित्यादि । किन्तु प्रमेययोः विधिनिषेधयोः पौर्वा-

**नात्रापच्छेदनीतिर्नियतिमति सदोपक्रमन्यायसिद्धेः**
**स्वप्रख्याप्यापलापे श्रुतिरपि वृषलोद्वाहमन्त्रायते वः ॥ ५७ ॥**

पर्यमादाय। विधिनिषेधयोर्मध्ये विधिः पूर्वः, निषेधस्तु पर इति न्यायतत्त्वविदः। अतश्च भेदाभेदयोर्मध्ये भेदो दुर्बलः, अभेद एव प्रबलस्सिध्येतेति भेदस्य मिथ्यात्वसिद्धिरित्याशङ्क्य समाधत्ते—**नात्रेत्यादि**। **अत्र**=प्रकृते बाध्यबाधकभावे **अपच्छेदनीतिः**=अपच्छेदाधिकरणन्यायः **न**=न प्रवर्तते ॥

ज्योतिष्टोमे अग्निहोत्रे बहिष्पवमानस्तोत्रार्थं पञ्चर्त्विजो यजमानश्चोत्थाय यदा गच्छन्ति, तदा क्रमेण परस्परं संबन्धं कल्पयित्वाग्नेः प्रदक्षिणेन गन्तव्यमिति विहितम्—'अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं यजमानः' इति। एवं गमनसमये तेषां मध्ये विच्छेदे प्राप्ते प्रायश्चित्तं विधीयते। परस्परं संबन्धविच्छेद एवापच्छेद इत्युच्यते। तत्रैकैकापच्छेदे तत्तत्प्रायश्चित्तमपि भवतीत्यत्र न चर्चा। द्वयोस्त्रयाणां वा क्रमेणापच्छेदे प्रायश्चित्तमपि क्रमेण भवेदविरोधात्। युगपदपच्छेदे युगपत्प्रायश्चित्तद्वयानुष्ठानासंभवात् किं कर्तव्यमिति प्रश्ने, यथेच्छं यत्किञ्चिदिति पूर्वपक्षे, उद्गातुः तत्समूहे प्रधानत्वात्तत्प्रायश्चित्तमेव कर्तव्यमिति निश्चयः। क्रमेण उद्गातृप्रतिहर्त्रोरपच्छेदे तु क्लेशो भवति। उद्गात्रपच्छेदे यज्ञः तत्रैव संस्थाप्यः, पुनर्यज्ञं कृत्वान्ते दक्षिणा देया। प्रतिहर्त्रपच्छेदे तु सर्वस्वदक्षिणा प्रायश्चित्तत्वेनोक्ता। द्वयमपि विरुद्धत्वात्कर्तुमशक्यम्। अत उद्गातुः वर्गप्रधानत्वात् तत्प्रायश्चित्तमेव कर्तव्यमिति पूर्वपक्षे, यस्यापच्छेदः अनन्तरं जातः, तस्यैव प्रायश्चित्तं कर्तव्यम्, पूर्वापेक्षयोत्तरस्य प्रबलत्वादिति सिद्धान्तः। 'पौर्वापर्ये पूर्वदौर्बल्यम्' (जै.सू.6-5-54) इत्यत्रोक्तः अयमपच्छेदन्यायः ॥

एवमेव प्रकृतेऽपि विधेः पूर्वत्वात्, निषेधस्य चोत्तरत्वान्निषेध एव प्रबल इति पूर्वपक्षिणामाशयः। परं त्वत्रापच्छेदे एवमेवापच्छेदो भवेदिति नियमो नास्ति। विधिनिषेधयोस्तु क्रमो नियतः। अतः **नियतिमति**=नियतपूर्वापरस्थले **सदा**=सर्वत्र **उपक्रमन्यायसिद्धेः**=उपक्रमाधिकरणन्यायस्यैव **सिद्धेः**= प्रसक्तेः। नियतपूर्वापरभावस्थले तु उपक्तमाधिकरणन्याय एव प्रवर्तेत। अयं न्यायः 'वेदो वा प्रायदर्शनात्' (जै.सू. 3-3-2) इत्यत्रोक्तः। अतो भेदस्यैवोपक्रमात् तत्रैव तात्पर्यम्, अभेदस्यान्यपर्यं वर्ण्यताम् ॥

ननु सर्वत्र निषेधो विधिपूर्वकः। शुक्तौ 'इदं रजतम्' इति विधिं विना 'नेदं रजतम्' इति निषेधस्यैवाप्रसक्तेः। यदि पूर्वमेव प्रबलम्, तर्हि शुक्तिरजतं सत्यं स्यादित्यत्राह—**स्वप्रख्याप्येत्यादि**। स्वेन **प्रख्याप्यस्य**=उपस्थापितस्य स्वेनैव **अपलापे**=निराकरणे **श्रुतिरपि**=वेदोऽपि **वः**=श्रुतेः स्वतः प्रामाण्यवादिनां भवताम् **वृषलोद्वाहमन्त्रायते**=परस्परविरोधमजानतां मूढजनानां वचनतुल्यं भवेत्। प्रतियोगिसमर्पकमेव निषेधमपि न समर्पयेत्। 'भूतले घटो नास्ति' इत्यादावपि, यदा नञर्थस्याभावः प्रत्यक्षसिद्धः, तदा प्रतियोगिसमर्पकं स्मरणमेव, न प्रत्यक्षं सर्वथा भवेत्, भावाभावयोर्विरोधात् ॥

वृषलः=शूद्रः। शूद्रविवाहे धनलुब्धः पुरोहितः 'पादेनेममस्मानं प्रहर' इति वरं अश्मप्रहारं पादेन कारयति प्रथमम्। अनन्तरम् 'न प्रहृतम्' इति तं वादयति। ततः 'एवमनृतवदनप्रायश्चित्तं करिष्ये'

[शास्त्रस्य भेदप्रतिपादकत्वम्]

203. **भेदः प्रत्यक्षसिद्धो न निगमविषयः स्यादिति त्वर्भकोक्तिः**
**प्रख्यातादन्यमेनं प्रथयति यदसौ त्वन्मताद्वैतवन्नः ।**
**सन्मात्रग्राहि चाक्षं नियमयसि; ततो ब्रह्म दृश्यं मृषा स्यात्**
**किं ते श्रुत्या तदानीं; फलमपि लभतां क्वापशूद्राधिकारः ॥ ५८ ॥**

इति वादयित्वा प्रायश्चित्तदानं स्वीकरोतीति ग्रामीणानां कथा। संस्कृतभाषानभिज्ञः शूद्रो वरः स्ववचनविरोधं न जानाति यथा, तथा श्रुतिरपि स्ववचनविरोधं न जानातीति स्यादित्ययं न्यायः **'वृषलोद्वाहमन्त्रन्यायः'** ॥

**अयं भावः**—'भूतले घटो नास्ति' इति ह्येकं वाक्यम्। तत्र नञ्व्यतिरिक्तम् सर्वं नञर्थस्यैव शेषभूतम्। प्रसक्तस्यैव निषेधसंभवात् नञः प्रत्येकं प्रयोगाभावात्। अतस्तत्र तावन्मात्रस्य प्रत्येकवाक्यत्वं नास्त्येव। एवमेव 'नेदं रजतम्' इत्यत्रापि। परं त्विदं सर्वमपि नञ्समभिव्यवहारस्थल एव। अन्यथा आपणे 'इदं रजतम्' इति वाक्यमपि प्रतियोगिसमर्पकत्वात् भ्रान्तिप्रयुक्तं स्यात्। 'ज्ञानिनां दृष्ट्या द्वयं तुल्यम्' इत्यादिकं त्वज्ञानिनामेवेत्युक्तं सहस्रशः। तत्फलभूतमुपदेशानुपपत्त्यादिकमप्युक्तं तथैव। प्रकृते भेदाभेदयोर्मध्ये पूर्वापरीभावो दुर्निरूप इत्यप्युक्तमनुपदमेव। अधिकं समनन्तरश्लोके द्रष्टव्यम् ॥ ५७ ॥

ननु भोः! 'स्वप्रख्याप्यापलापे' इति कं वञ्चयसि? न हि भेदः शास्त्रगम्यः, लोकसिद्धत्वात्। अतो लोकसिद्धं भेदमनूद्य निषिध्यते शास्त्रेणेत्याशङ्कां निराकरेति—**भेद इत्यादिना**। **भेदः**=भेदप्रपञ्चः **प्रत्यक्षसिद्धः**=लौकिकप्रत्यक्षेण सिद्धः, नापूर्वः। अत एव **न निगमविषयः स्यात्**=वेदप्रतिपाद्यः न स्यात्, वेदस्यापूर्वार्थबोधकत्वात्। अतः भेदश्रुतिस्सर्वाप्यनुवादरूपा, अत एव स्वार्थे न प्रामाण्यवती। अभेदस्य तु शास्त्रैकगम्यत्वात्, तत्रैव श्रुतेस्तात्पर्यमिति पूर्वोक्तं सर्वथानुपपन्नम्। **इति**=इत्येतत् **अर्भकोक्तिः**=बालानाम्=अप्रबुद्धानां वचनम्। कुतः? **यत्**=यस्मात् **असौ**=श्रुतिः **त्वन्मताद्वैतवत्**=त्वन्मतसिद्धाद्वैतवदेव **प्रख्यातात्**=लोकसिद्धात् **अन्यम्**=विलक्षणमेव **एनम्**=भेदम् **नः**=अस्माकं **प्रथयति**=प्रकटयति। 'अहमेव सर्वेश्वरः' इति यदि कश्चिद्धिरण्यकशिपुगोत्रजो वदेत्, तर्हि ब्रह्मात्मैक्यमपि लोकसिद्धमेव। अतोऽभेदं कथं श्रुतिर्बोधयेत्? ननु चायमभेदो भ्रमसिद्धः, न श्रुतिवेद्यः, किन्तु 'ईश्वरोऽहम्' (गी.16-14) इतिवदासुरीसंपद्रूपः। शास्त्रवेद्यस्तु विलक्षणोऽन्य इति चेत्, तर्हि तद्वदेवाज्ञानावस्थायां प्रतीयमानभेदाद्विलक्षणमेव भेदं श्रुतिः प्रतिपादयतीति समानम् ॥

यथाकथञ्चित्पूर्वमवगतत्वमात्राद्भेदो यदि न शास्त्रगम्यः, तदा भेदापेक्षयाऽभेद एव शास्त्रगम्यो न स्यादिति दर्शयति—**सन्मात्रेत्यादि**। **च**=किञ्च **अक्षम्**=प्रत्यक्षरूपं प्रमाणम् **सन्मात्रग्राहि**=सन्मात्र-रूपब्रह्मविषयकम्, न तु घटादिभेदविषयकम् **नियमयसि**=त्वं व्यवस्थापयसि। एवञ्च तत् कथं शास्त्रगम्यं स्यात्। प्रत्युत—**ततः**=प्रत्यक्षग्राह्यत्वाद्ब्रह्मणः **ब्रह्म दृश्यम् स्यात्**। तेन च **दृश्यत्वात् मृषा**=मिथ्या स्यात्, प्रत्युत प्रत्यक्षागम्यो भेद एव शास्त्रगम्यः स्यात् किञ्च **तदानीम्**=ब्रह्मणः प्रत्यक्षेणैव सिद्धौ **ते श्रुत्या किम्**=साधनीयं किमस्ति? **अपि**=अपि च **अपशूद्राधिकरणं फलम्**=सार्थकताम् **क्व**=कस्मिन् विषये

[परमते वेदाप्रामाण्यं दुर्वारम्]

**204. वेदा बुद्धागमाश्च स्वयमपि हि मृषा; मानता चैवमेषाम्**
**बोद्धा बुद्धिः फलं च; स्थिरतदितरताद्यन्तरालं च बुद्धेः ।**

**लभताम्**=अश्नुयात्? ब्रह्मणश्शास्त्रैकसमधिगम्यत्वे हि शास्त्रे शूद्राणामनधिकारात् अपशूद्राधिकरणं सार्थकं स्यात् । ब्रह्मणः प्रत्यक्षवेद्यत्वे तदधिकरणं निर्विषयं स्यात् । अतः भेदाभेदवादयोरपि शास्त्रैकवेद्यत्वमावश्यकम् । तावता न भेदाभेदावतार इति समये व्यक्तीभविष्यति ॥

भेदस्य भ्रमत्वस्थापनार्थं प्रत्यक्षं सन्मात्रब्रह्मविषयकम्, न भेदविषयकमिति ते ह्येवं स्थापयन्ति । प्रतियोगिसापेक्षः खलु भेदः । इन्द्रियं तु पुरोवर्तिवस्तुमात्रविषयकं तत्रासन्तं प्रतियोगिनं नोपस्थापयेत् । अन्येन प्रतियोग्युपस्थापने, तेनेन्द्रियव्यवधानात् अनन्तरं जायमानं न प्रत्यक्षं स्यात्, किन्तु स्मरणात्मकं स्यात् । अत इन्द्रियं पुरोवर्तिमात्रविषयकं भेदं न गृह्णीयात् । किन्तु 'घटोऽस्ति, पटोऽस्ति' इत्यादौ हि प्रत्यक्षे सर्वत्रास्तित्वरूपसत्ता नियमेन भासते । सत्ता च ब्रह्मणः स्वरूपम् । अतोऽनुवृत्तम् सन्मात्रमेव प्रत्यक्षे भासते, न व्यावृत्तमिति **मण्डनमिश्रादयो** वदन्ति । संमतं चैतदितरेषामपि । ततश्च शास्त्रवेद्यत्वं सद्रूपब्रह्मणो गतमेव । अभ्युगम्योक्तमिदं दूषणं ज्ञेयम् ॥ वस्तुतस्तु घटपटादेस्सर्वपदार्थस्यापि सामान्यविशेषात्मत्वात् घटादिकं सामान्यविशेषात्मकमेव प्रत्यक्षेण गृह्यते । परं तु तथा न प्रथमं विविच्यते । सामान्यं हि सदृशाकाराणामनुवृत्तरूपम्, विसदृशाकारेभ्यो व्यावृत्तरूपमपि । गोग्रहणे महिषादिव्यावृत्तमेव किल गौर्गृह्यते । प्रत्यक्षं हि इन्द्रियसन्निकर्षजन्यम् । सन्निकर्षश्च पुरोवर्तिवस्तुनैव । अतः इन्द्रियं गोवस्तुमात्रं गृह्णीयात् । तद्गतं गोत्वादिकं नानागवानुगतम् । नानागावश्च तदानीं न प्रत्यक्षाः, इन्द्रियसन्निकर्षाभावात् । अतः प्रथमं गोत्वादिग्रहणेऽपि तद्विवेचनं तु द्वितीयगोदर्शनादावेव ॥ ५८ ॥

एवं प्रमाणाभाससिद्धानद्वैतवादान् विमृश्य, उच्छृङ्खलाद्वैतिनं **खण्डनकारं** स्मरन्, आह—**वेदा इत्यादि**। **वेदाः बौद्धागमाश्च स्वयमपि मिथ्या**=स्वरूपतोऽपि अर्थतोऽपि मिथ्या हि; न हि तत्र विप्रतिपत्तिः । ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति वदतां हि विप्रतिपन्नाः बौद्धागमाः मिथ्यैव, ब्रह्मभिन्नत्वात् । तथैव ब्रह्मभिन्नत्वाविशेषात् संप्रतिपन्नाः अपौरुषेया वेदा अपि मिथ्यैव । **एवम् एषाम्**=प्रमाणानाम् **मानता च**=प्रामाण्यमपि **मृषा हि** । एवं **बोद्धा बुद्धिः फलम्**=बोध्यं च मिथ्या । 'त्रिपुटी' इति प्रसिद्धः प्रमाणम्, प्रमेयम्, प्रमाता इति विभागः मिथ्या । 'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥' (प्र.वा.) इत्येतदुभयोः समानम् । चकारेण तन्मूलकव्यवहारादिकं ग्राह्यम् । ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनाम्, सौगतानां च सर्वमिदं समानम् ॥

ननु सौगतास्तु क्षणिकविज्ञानवादिनः । एते तु नित्यविज्ञानवादिन इत्यस्ति वैषम्यमिति चेत्, तत्राह—**बुद्धेः**=ज्ञानस्य **स्थिरतदितरताद्यन्तरालं च**=स्थिरत्वास्थिरत्वादिरूपवैलक्षण्यमपि मिथ्या । उभावपि निर्धर्मकवादिनौ । अतः स्थिरत्वक्षणिकत्वादिकमपि मिथ्यैव । क्षणिकत्वम्=न विनाशित्वम्, यतः क्षणिक-

**आतस्त्रैविद्यडिम्भान् ग्रसितुमुपनिषद्वारवाणोपगूढैः**
**प्रायः प्रच्छादिता स्वा पटुभिरसुरता पौण्ड्रकाद्वैतनिष्ठैः ॥ ५९ ॥**

परंपराया अनुवृत्तिः स्वीक्रियते । स्वरूपतः प्रतिक्षणं विनाशित्वेऽपि प्रवाहतो नित्यत्वमेव क्षणिकत्वम् । स्वरूपतो नित्यत्वं निर्विशेषवादिनाम् । अथापि सर्वं मिथ्येति वदतां नास्ति कश्चन विशेषः ॥

बौद्धः **शान्तरक्षितः** 'नित्यज्ञानविवर्तोऽयं क्षितितेजोऽनिलात्मकः । आत्मा तदात्मकश्चेति संगिरन्ते परे पुनः ॥' (त.सं. 328) इति ब्रह्मविवर्तवादमनूद्य 'तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः । क्षमामहे' इति विज्ञानविवर्तवादब्रह्मविवर्तयोस्तुलनं चकार । स्वरूपतो नित्यत्वस्य प्रवाहतो नित्यत्वस्य च न महद्वैलक्षण्यमित्यभिप्रायः। **विश्वनाथपञ्चाननेनापि** 'अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा' इत्ययं पक्षोऽनूदितः । 'एतद्दृष्ट्यात्रापि स्थिरतदितरताद्यन्तरालं च बुद्धेः' इत्युक्तमाचार्यैः । अथवा माध्यमिकानामपि व्यवहारदशायामिदं संमतमिति तथोक्तम् । **वस्तुतस्तु** विज्ञानात्मवादोऽन्यः, अन्यश्च ज्ञानात्मवादः । विज्ञानवादिनः नैरात्म्यवादिनः । अत एव 'विज्ञानात्मवादः' इति पदमेवात्मवादिवासनयोच्यते । जीवात्मानमङ्गीकृत्य परमात्मानं नाङ्गीकुर्वन्त्येते । तादृशजीवात्मानश्च नाना । वेदान्तिनस्तु तद्विपरीताः—ज्ञानात्मवादिनः, ऐकात्म्यवादिनश्च । वेदान्तिनां दृष्ट्या तु जीव एव विज्ञानात्मा । 'विज्ञानात्मा पुरुषः' (प्र.4-9) 'विज्ञानात्मा सह देवैश्च सर्वैः ' (प्र.4-11) इत्यादाविदं स्पष्टम् । अत एव 'विज्ञानं यज्ञं तनुते' (तै.आ.5) इति विज्ञानपदेन जीवनिर्देशः। 'व्यपदेशाच्च क्रियायाम्' (ब्र.सू.2-3-35) इति सूत्रभाष्ये श्रीशङ्कराचार्यैरपि विज्ञानपदं जीवपरमेव व्यख्यातम् । अतो विज्ञानात्मवादः न ब्रह्मविवर्तवादसन्निहितः, किन्तु शून्यविवर्तवादसन्निहितः । शून्यपदं सहस्रनामसु 'वीरहा विषमः शून्यः' इति पठ्यते । शून्यम्=सर्वविधविशेषणशून्यं चेत्, तत् शब्दानभिलप्यम्; शब्दो नियमेन सविशेषमेव वस्तु वदेत्, न निर्विशेषम् । अतः शब्देन तद्वक्तव्यञ्चेत् 'शून्यम्' इत्येव वक्तव्यम् । तथा च बौद्धानां सिद्धान्तः आरंभे वेदानुगुण एवासीत्, आगच्छता कालेनैव सः वेदबाह्योऽभूदित्येव वस्तुस्थितिः । अधिकं पश्चात् । शून्यपदस्य गुणशून्यः, दोषशून्य इत्यादिव्याख्यानं बालोपच्छन्दनमात्रम् ॥

एवं मतद्वयपरिशीलने, एतावदेव वक्तव्यमित्याह—**आत इत्यादि**। **आतः**=एवमुभयोरपि सर्वांशे समानत्वात् **त्रैविद्यडिम्भान्**=बालवत् सुलभतया वशीकर्तुं शक्यान् वैदिकान् बकासुरादिवत् **ग्रसितुम् उपनिषद्वारवाणोपगूढैः**=उपनिषद्रूपः वारवाणः=कञ्चुकः, तेन उपगूढैः=आत्मानं सम्यगाच्छादितवद्भिः **पटुभिः**=अतिचतुरैः **पौण्ड्रकाद्वैतानिष्ठैः**=कपटाद्वैतनिष्ठैः एभिः **स्वा**=स्वीया **असुरता प्रायः**=बहुभागम् **प्रच्छादिता**=प्रकर्षेण आच्छादिता । ये त्वत्यन्तमुग्धाः तेभ्यः परमाच्छादितुं शक्यम्, न सर्वेभ्यः । चोरा हि मुग्धजनान् वञ्चयेयुः । न तु ये रक्षिणो राजभटाः, न तान् वञ्चयेयुः । वयं तु वैदिकास्सन्तोऽपि दैवादेशधराः अस्मदार्षदिव्यपरंपरारक्षकाः, अतो नास्मभ्यमाच्छादनं शक्यक्रियमिति भावः ॥

लोके हि 'तमीश्वराणां परमं महेश्वरम् तं दैवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम् ॥' (श्वे.6-7) इत्येवं बहुधा स्तूयमानस्य अनवधिकातिशयानन्तवैभवालङ्कृतस्य

**[खण्डनग्रन्थस्योत्तरम्]**

**205. त्वन्निष्ठासिद्ध्यसिद्ध्योः परमतनियतिः सिद्धिमेवाधिरूढा**
**वेदस्यामानतायां त्वदभिमतहतिर्मानतायां च तद्वत् ।**

परमेश्वरेश्वरस्य भगवतो महोत्सवादिषु यदा लक्षशो जनास्संमिलन्ति, तदा तत्र राजभटाः मुग्धान् जनान् बोधयन्ति— 'अस्मिन् महति जनस्तोमे भगवद्भक्तवेषधराः चोरा अपि वहवो मिलिता भवेयुः । भवतो वञ्चयित्वा धनकनकपुत्राद्यपहरेयुः । अतो भवद्भिः जागरूकैर्भवितव्यम् । रक्षणीयं भवदीयं धनकनकादिकम्' इति सकलजनविदितम् । एवमेवायमाचार्यवर्यः दैवादेशाद्वेदान्ताचार्यस्थाने नियुक्तः, तद्वत्त'सर्वतन्त्रस्वतन्त्र'-बिरुदः, स्वकर्तव्यदृष्ट्या मुग्धजनानामास्तिक्यनिधिसंरक्षणाय, भगवद्वैभवापहर्तृभ्यः शून्यवादिभ्यः वैदिक-वेषधरेभ्यो मुग्धजनान् तान् बोधयतीत्यवगन्तव्यम् ॥

**'पौण्ड्रकाद्वैतम्'** इति निर्विशेषाद्वैतमुपहसत्याचार्यः । **पौण्ड्रको** नाम कश्चित् करूषदेशाधिपतिः, 'अहमेव वासुदेवः, न तु द्वारकाधीशः कृष्णः' इति श्रीकृष्णेन स्पर्धमानः श्रीकृष्णेन हत इति श्रीमद्भागवते (स्क.10-66) वर्णितम् । वैदिकैः सः **पौण्ड्रकवासुदेव**पदेन कथ्यते । कपटवासुदेव इत्यर्थः । प्रकृते निर्विशेषाद्वैतमप्रामाणिकमिति तस्य **पौण्ड्रकाद्वैत**संज्ञा । सिद्धान्तसंमतं सविशेषाद्वैतं विशिष्टाद्वैतमेव शुद्धं वेदसंमतमिति भावः । तेन 'शान्तं शिवमद्वैतम्' (माण्डूक्य.2-5) इत्यादौ इदमेव विवक्षित-मित्याशयः । अत्र 'एवमिह यादवप्रकाशीयसंग्रहः—'वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् । बोद्धानृतो बुद्धिफले तथानृते यूयं च बौद्धाश्च समानसंपदः ॥' इति सर्वार्थसिद्धा-वुदाहृतः श्लोकोप्यवधेयः ॥ ५९ ॥

केवलवैतण्डिकाय खण्डनकारायान्तिमं ब्रह्मास्त्रं प्रयुङ्क्ते— त्वन्निष्ठेत्यादि । **त्वदीया** या **निष्ठा**= सिद्धान्तः, **तस्याः सिद्ध्यसिद्ध्योः**=सिद्धौ वा, असिद्धौ वा **परमतनियतिरेव**=परसंमता नियतिः, व्यवस्थैव **सिद्धिम् अधिरूढा** भवेत् ॥

**अयमर्थः**—सर्वमनिर्वचनीयम् । अतो न किञ्चिद्वक्तव्यम्, इति किल भवतां सिद्धान्तः । तत्र पृच्छामः—भवात्सिद्धान्तः सिद्धः, उतासिद्धः? असिद्धत्वे, अनिर्वचनीयत्वस्यासिद्ध्या, इतरेषामेव सिद्धान्तः सिद्धो भवेत् । सिद्धत्वे, किं प्रमाणतः, उताप्रमाणतः? अप्रमाणतस्सिद्धत्वे, त्वद्दृष्ट्यैव त्वन्मतमप्रामाणिकं भवेत्? प्रमाणतस्सिद्धत्वे, जगति सर्वं व्यावहारिकमात्रम्, इति वदतस्तव परमतान्यपि तथैव सिद्धान्येव, तेषामपि व्यावहारिकत्वात् । अतः परमतनिराकरणं न भवत्येव ॥

एवम् वेदाः प्रमाणम्, न वा? **वेदस्य अमानतायाम्**=अप्रमाणत्वे, **त्वदभिमतहतिः**=तथा च ब्रह्मण औपनिषदत्वं कथम्? **मानतायाम् च**=प्रमाणत्वे च, **तद्वत्**=किं तत् सत्यम्, उत मिथ्या । मिथ्यात्वे, न तेन वस्तुसिद्धिः । सत्यत्वे, तत् ब्रह्मभिन्नम्, उताभिन्नम्? आद्येऽद्वैतहानिः । द्वितीये, ब्रह्मणश्शब्दधर्मत्वं स्यात्, सत्यभूतप्रमाणत्वस्य वेदमतत्वात् । द्वेधापि न भवदिष्टसिद्धिः ॥

**साध्याऽसाध्याऽपि मुक्तिस्त्वदुपगमहता; तत्समं चान्यदित्थं**
**रक्षोभ्यः प्रेषितोऽयं रघुपतिविशिखो राहुमीमांसकेभ्यः ॥ ६० ॥**

एवम्— परमपुरुषार्थरूपा **मुक्तिरपि साध्या, उत असाध्या?** आद्ये किं भावरूपा, उताभावरूपा? भावरूपा चेत्, सा किं ब्रह्मस्वरूपा, तदन्या? द्वितीये— **त्वदुपगमहता**=भवदभ्युपगमविरोधः=अपसिद्धान्तः, मुक्तेः ब्रह्मरूपत्वं हि भवत्संमतम् । प्रथमपक्षे, तस्य नित्यसिद्धत्वात् साध्यत्वं कथम्? अभावरूपत्वे, अभावः सत्यप्रतियोगिकः, उत मिथ्याप्रतियोगिकः? आद्येऽपसिद्धान्तः, ब्रह्मप्रतियोगिकत्वापत्तेः । द्वितीयेऽपुरुषार्थत्वापत्तिः । **अन्यदपि तदुक्तं** सर्वम् च **तत्समम्**=उक्तरीत्या समानम् । स्वपक्षस्य कस्यचिदप्यनङ्गीकारात्, प्रमाणप्रमेयादिव्यवस्थानां सर्वासामपि मिथ्यात्वात् शून्यवादावतारः ॥

एवम् अयं **रघुपतिविशिखः**=रामबाणः, तत्तुल्यः दुष्प्रतिविधेयो वादः **रक्षोभ्यः**=भगवद्वैभवापहर्तृभ्यः **राहुमीमांसकेभ्यः प्रेषितः**, दुस्समाधेयः । **सैंहिकेय**नामा कश्चिदसुरः देवरूपधरः क्षीरसागरमथनप्राप्तामृतं यावन्मुखे निक्षिप्तवान्, तावदेव तस्य शिरः विष्णुः स्वचक्रेणाकृन्तदिति कथा पुराणप्रसिद्धा । तदा तच्छिरो राहुरभूत्, कबन्धस्तु केतुरभूत् । एवं मीमांसाशास्त्रं पूर्वोत्तरभागात्मकमेकं समप्रामाण्यवदिति सिद्धान्तः। पूर्वभागमात्रप्रामाण्यवादिनः **कबन्धमीमांसकाः पूर्वमीमांसकाः** । परैस्तु पूर्वभागोऽप्रमाणम्, उत्तरभागमात्रं प्रमाणमिति स्वीकृतम् । अतस्ते **'राहुमीमांसक'**पदेनोपहास्यन्ते । उपनिषदः खलु वेदस्य शिरांसि ॥

**शतदूषण्याम्**— 'अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः' (श्लो.वा.) इति **कुमारिलभट्टो**क्तन्यायेन, शून्यवादिनो जगन्मिथ्यात्ववादिनश्च स्वपक्षस्य, तत्साधकप्रमाणादेरनङ्गीकारात् **वैतण्डिकस्य खण्डनकर्तुः** कथायामनधिकार उदघोष्याचार्यैः । परन्तु शतदूषण्या वादग्रन्थत्वात्तथा निर्णयेऽपि, प्रकृतस्य तत्त्वमुक्ताकलापस्य प्रकरणग्रन्थत्वात्, शिष्याणां बोधनार्थं तद्दूषणं प्रदर्शितं स्थालीपुलाकन्यायेन ॥

**खण्डनकारः श्रीहर्षः** भगवद्रामानुजसमनन्तरकालिकः बौद्धतन्त्रोपज्ञचिन्तामणिमन्त्रसिद्धः शून्यवादपर्यायमनिर्वचनीयतावादं प्रतिष्ठापयन् वैदिकसिद्धान्तं सर्वमपि खण्डयन् वेदानां बौद्धाद्यागमानां च समं प्रामाण्यं मन्वानः केवलहैतुकः स्वपक्षं किञ्चिदप्यप्रदर्शयन् वैतण्डिकत्वप्रथामवाप । श्रीमन्निगमान्तमहागुरुभिः शतदूषण्यां शतधा खण्डितः 'अलं वैदिकत्वकञ्चुकवहनवृथाप्रयासेन' इत्युपहसितश्च । **सायणमाधवादिभिरयं** परपक्षीयतया संमतः श्रीशङ्कराचार्यपराजितत्वेनैवावर्णि । अथाप्यनन्तरकालिकैरद्वैतित्वेनायं पर्यग्राहि हेतुवादकुतूहलिभिः । इदमप्यत्रावधीयताम्—

बौद्धा विश्लेषयामासुर्नामरूपात्मकं जगत् । विज्ञानमार्गमाश्रित्य वैराग्यस्य प्रसिद्धये ॥
अहमर्थो हि दुःखस्य मूलं सर्वस्य दृश्यते । 'अहमेव न किञ्चिच्चेत् भयं कस्य भविष्यति ॥
आत्ममोहो महामोहः नैरात्म्यं परमं सुखम् । वासनाकल्पितं सर्वं वस्तुतो नास्ति किञ्चन ॥
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा । आत्मापि तादृशो दृष्टः तत्त्वं शून्यं परं मतम् ॥'
इत्यादि बोधयामासुः सांवृतं सर्वमब्रुवन् । वैराग्यसिद्धये नृणां कल्पेतैतत्परीक्षणम् ॥

[नित्यविभूतिसाधनम्]

**206. शुद्धस्याशुद्धसृष्टिक्रम इति कथितः; शुद्धसत्त्वे तु तत्त्वे**
**स्थानं नित्यं श्रुतं तत् स्मृतमपि कलया तत्र देहाद्यवस्थाः ।**

व्यवहारे न चैतत्स्यात्सांकर्यादिप्रसङ्गतः । माया बुद्धिश्च पर्यायावित्यजानन्त एव ते ॥
मायायां पतिता बौद्धाः भस्मासुरकथानयात् । हास्यास्पदमभूत्सर्वं सर्वतत्त्वापलापतः ॥
ज्ञानं तु सुलभं जातु, विज्ञानमतिदुर्लभम् । आत्मतत्त्वं हि गहनं बुद्ध्यतीतं मतं नृणाम् ॥
अतो मायाबलात् बौद्धाः दैवानुग्रहवञ्चिताः । वेदबाह्या बभूवुस्ते नास्तिका गणिताः क्रमात् ॥
आचार्यः पुनरेवैतान् हैतुकैर्वञ्चितान् बहून् । शून्यवादादवारोप्य कर्तुमैच्छत्तु वैदिकान् ॥
शापरूपो भवेच्छिष्यो गुरोरिति मनीषिभिः । हास्येनोक्तं तु तैस्सत्यं कृतं हन्त कलेर्बलात् ॥
ते गच्छन्तो हेतुवादमार्गे तद्वासनाबलात् । हेतुभिः पुनरेवैतान् अकुर्वन् शून्यवादिनः ॥
एतत्तत्त्वं विस्तरशस्समये सप्रमाणकम् । सरहस्यं दर्शयामः केवलं हितकाम्यया ॥ ६० ॥

एवं 'न हि निन्दा'न्यायेन प्रसक्तानुप्रसक्तं विचारं परिसमाप्य, स्वसिद्धान्तेऽवश्यवक्तव्यं नित्यविभूत्यादिस्वरूपम्, अस्यात्यन्तं परमात्मशेषत्वात् ईश्वरनिरूपणशेषतया निरूपयितुमुपक्रमते— **शुद्धस्ये-त्यादि**। **शुद्धस्य**=त्रिगुणातीतस्य, अत एवाखिलहेयप्रत्यनीकानन्तकल्याणगुणगणमहासागरस्य परमात्मनः **अशुद्धिसृष्टिक्रमः**=त्रिगुणावष्टम्भेन निर्वर्त्यमानायाः सृष्टेः क्रमः **इति**=इत्येवंप्रकारेण **कथितः** एतावता । अनन्तरम् **शुद्धसत्त्वे तु तत्त्वे**=शुद्धसत्त्वमये नित्यविभूत्याख्ये तत्त्वे निरूपणीये सति, तत्र वक्तव्यमुच्यत इति शेषः । ग्रन्थादौ तत्त्वविभागे प्रदर्शिते अजडस्यावान्तरविभागे प्रत्यक्पराग्रूपे, ते अपि निरूपिते । अनन्तरं पराक्तत्त्वनिरूपणं प्रसक्तम् । तत्रापि 'नित्या भूतिर्मतिश्च इति' इति विभागेऽत्र प्रथममुक्ता नित्यविभूतिर्निरूप्यत इति सङ्गतिकथनम् ॥

**तत्**=नित्यविभूत्याख्यं **स्थानम्**=देशविशेषः **नित्यम्**=उत्पत्तिनाशरहितम् **श्रुतम्**=श्रुत्यैवावगतम्, **तत् स्मृतमपि**=स्मृतिसिद्धं च, 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (तै.सं. 1-3-61 सु.6) इति । अत्र 'विष्णोः' इति षष्ठ्या तत्स्वरूपातिरिक्तं स्थानं 'परमं पदम्' इत्यनेनोच्यत इति स्पष्टम् । 'सूरयः सदा पश्यन्ति' इत्यनेन सूरिभिः सदानुभाव्यत्वकथनेन तत्स्थानस्य नित्यत्वम्, नित्यसूरीणां सद्भावश्च कथितः । 'लोकेषु विष्णोर्निवसन्ति केचित्' इत्याद्यागमः । 'दिव्यं स्थानमजरं चाप्रमेयम्' इति महाभारतम् ॥

ननु प्रकृतेरपि स्वरूपतो नित्यत्वेन, दिव्यलोकादेः परं 'नित्यविभूतिः' इति कथं विभागः? न च स्वरूपतो नित्यत्वेऽपि परिणामतस्तदभावात् तथा विभागस्सङ्गच्छते, नित्यविभूतिद्रव्यस्यापि शुद्धसत्त्वमयस्य भगवल्लीलार्थं परिणामाङ्गीकारात् । आत्मनां चोभयत्रापि नित्यत्वस्य समानत्वात् । अतः 'कर्मविभूतिः, अकर्मविभूतिः' इत्यादिरीत्यैव विभागो वक्तव्यः, न तु 'नित्यविभूतिः', 'लीलाविभूतिः' इति । किञ्च लीलाप्युभयत्र वर्तते । एवं सति प्राकृतलोकस्यैव लीलात्वोक्तिः कथम्? न चाच्छादनपूर्वकलीलायामेव लीलात्वं मुख्यं, स्वरसं च । आच्छादनम्, तत्कृतं परैरज्ञातत्वादिकमत्रैव संभवेत् । 'नाहं प्रकाशस्सर्वस्य

**सृष्टेः प्रागेकमेवेत्यपि निगमवचः स्रक्ष्यमाणव्यपेक्षम्**
**नो चेत् स्वाभीष्टमायोपधिमुखविलये स्वस्ति विश्वप्रसूत्यै ॥ ६१ ॥**

योगमायासमावृतः' (गी.7-25) इति परमात्मन आच्छादनमप्यत्रैव संभवि। अत्र केषाञ्चित्परमात्मसंदर्शनेऽपि तदतीव विरलम्, न परिपूर्णं च। परमपदे तु सर्वेषां सदा सर्वज्ञत्वात् परमात्मानुभवः परिपूर्णः। अत एव आच्छादनम्, तन्मूलकाज्ञानं च सर्वथा न तत्र संभवतीति अस्या लीलाविभूतित्वोक्तिरिति वाच्यम्, तर्हि 'लीलाविभूतिः, अलीलाविभूतिः' इति विभज्यताम्। न चास्त्येव लीलारसोऽत्रापीति अलीलाविभूतित्वं तस्य न युज्यत इति वाच्यम्; तर्हि 'कर्मविभूतिः, अकर्मविभूतिः' इति विभज्यताम्, न तु 'नित्यविभूतिः, लीलाविभूतिः' इति। चेत्—सत्यम्—लीलाविभूतिहेतुभूतायाः प्रकृतेः स्वरूपतो नित्यत्वेऽपि लीलाविभूतेः सृष्टिप्रलयसद्भावात् प्रलयावस्थायां प्रकृतेरपि परमात्मन्येकीभावस्य 'तमः परे देवे एकीभवति' इति श्रुतिसिद्धत्वादनित्यत्वमेवेष्टम्। अत एव प्रकृतेरव्यक्तसंज्ञा, पृथक् ज्ञातुमशक्यत्वात्प्रलये। नैवं नित्यविभूतेर्लयोऽङ्गीक्रियते। अन्ततः सूत्रकारैः 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू.2-1-1) इति सृष्टेर्लीलात्वकथनात् सृज्यस्यास्य जगतो लीलाविभूतित्वोक्तिः॥

ननु लीलाविभूतेरपि त्रिगुणपरिणामरूपत्वात् स्वरूपतो नित्यत्वात्, वैकुण्ठादेरेव नित्यत्वं कथमुच्यते? इत्यत्राह—**कलयेत्यादि**। **तत्र**=नित्यविभूतौ **कलया**=अंशतः=अत्यल्पतः **देहाद्यवस्थाः**= देहसरोवराद्यवस्थाः भवन्ति। लीलाविभूतौ तु प्रकृतेः स्वरूपतो नित्यत्वेऽपि तस्याः सततपरिणामित्वम्, नित्यविभूतौ न तथेत्यभिप्रायेण नित्यत्वोक्तिरिति भावः॥

ननु 'सदेव सौम्येदमग्र आसीदेकमेव' इत्यादिना सृष्टेः पूर्वमेकमेव ब्रह्मासीदिति कथनात् प्रलयकाले सर्वस्यापि ब्रह्मणि लयात्, नित्यविभूतिः कथं पृथक् तिष्ठेदित्यत्र—**सृष्टेः प्राक्**=प्रलयकाले **एकमेव**=ब्रह्मैकमेवासीत् इति **निगमवचोऽपि**=इति प्रतिपादकश्रुतिवाक्यमपि **स्रक्ष्यमाणव्यपेक्षम्**= स्रक्ष्यमाणप्राकृतजगदपेक्षया इति मन्तव्यम्। अन्यथा 'सदा पश्यन्ति सूरयः' इत्यादिश्रुतिविरोधःस्पष्टः। एवमनङ्गीकारे परेषामनिष्टमाह—**नो चेत्**=एवमनङ्गीकारे, ब्रह्मव्यतिरिक्तस्य सर्वस्यापि लयाङ्गीकारे **स्वाभीष्टमायोपधिमुखविलये**=तत्तत्संमतानां सृष्ट्युपपादकानां मायोपाधिप्रभृतीनामपि लये सति, **विश्वप्रसूत्यै**=पुनः जगत्सृष्ट्यै **स्वस्ति**=मङ्गलमेव=समाप्तिरेव स्यादित्युपहासोक्तिः। 'माया' इति शाङ्करसंमतस्य, 'उपाधिः' इति भास्करसंमतस्य, मुखपदेन यादवप्रकाशसंमतस्य शक्तित्रयस्य च लये पुनः जगत्सृष्टिरेव न स्यात्। अतः सृज्यमानानां कार्यवर्गाणामेव प्रलये लयः। परमपदस्य सृज्यत्वाभावान्न लयः एतादृशविषयाणां प्रश्नातीतत्वात् नाधिको विचारः कृतः॥

**इदमत्रावधेयम्**—नित्यभूतिवर्णनादिकं सर्वं केवलं पौराणिकं वेति बहवो मन्यन्ते। 'त्रिपादस्यामृतं दिवि' इत्यादिश्रुतिसिद्धमिदम्। दिवि, अमृतमिति पदाभ्यां त्रिपाद्विभूतिः मोक्षेऽन्तर्गतेति स्पष्टम्। कौषीतक्युपनिदादिषु प्रतिपादितपर्यङ्कविद्यादिकं ब्रह्मविद्येत्येव **श्रीशङ्कराचार्यस्यापि** संमतम्। सगुणनिर्गुणब्रह्मभेदस्य निरस्तत्वान्मुक्तौ तारतम्यनिराकरणान्न काप्यनुपपत्तिः। अधिकमन्यत्र॥ ६१॥

**[नित्यविभूतेःस्वयंप्रकाशत्वम्]**

**207. ज्ञानत्वं चेद्रहस्यागमविदितमिति स्वीकृतं नित्यभूतेः**
**षाड्गुण्यात्मत्वमेवं प्रसजति सह तत्पाठतोऽतो जडा सा।**
**तत्संबन्धात् कुतश्चित् तदुपचरणमित्याहुरेके परे तु**
**ज्ञानत्वाजाड्यकण्ठोक्त्यनुगुणमवदन् मुख्यतामात्मनीव ॥ ६२ ॥**

---

ग्रन्थारंभे नित्यविभूतेः अजडवर्गे गणना कृता । तदाशङ्क्य समाधत्ते—**ज्ञानत्वमित्यादि** । **रहस्यागमविदितमिति=रहस्याम्नाये**=एकायनशाखायां **विदितमिति**=प्रतिपादितमिति हेतोः **नित्यविभूतेः ज्ञानत्वं स्वीकृतं चेत्**=ज्ञानरूपत्वम्=अजडत्वम्=स्वयंप्रकाशत्वम् यदि स्वीक्रियते, तर्हि **एवम्**=एवमेव **सह तत्पाठतः**=तस्मिन्नेवागमे स्वयंप्रकाशत्वेन सह षाड्गुण्यस्यापि पाठात् **षाड्गुण्यात्मत्वम्**=ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपषड्गुणवत्त्वमपि नित्यविभूतेः **प्रसजति** । **अतः**=षाड्गुण्यासंभववत्, तत्सहपठितभगवद्वत् स्वप्रकाशत्वस्याप्यसंभवात् **सा**=नित्यविभूतिः **जडा**=नाजडा । ननु 'किमात्मिकैषा भगवतो व्यक्तिः' इति प्रश्नस्य, 'यदात्मकोऽसौ भगवान्' इत्यादिना उत्तरदानात् भगवद्दिव्यमङ्गलविग्रहस्यापि ज्ञानरूपत्वाभिधानात्, तदुपादानभूताया नित्यविभूतेरपि ज्ञानरूपत्वावगमात् जडत्वं कथमित्यत्र—**तत्संबन्धादित्यादि** । कुतश्चित् **तत्संबन्धात्**=हेयप्रत्यनीकत्वाद्यन्यतमात् तस्य परमात्मनस्संबन्धात्, प्रवाहसंबन्धात् तीरस्येव **उपचरणम्**=उपचारात्तथाभिधानम् इति **एके**=केचन आहुः । **परे तु ज्ञानत्वाजाड्यकण्ठोक्त्यनुगुणम्**=ज्ञानस्वरूपत्वस्य जडत्वाभावस्य च कण्ठतः स्पष्टतयैव उक्तेरनुसारेण **आत्मनि इव**=परमात्मनि यथा, तथैव **मुख्यताम्**=ज्ञानस्वरूपतामेव भगवद्दिव्यमूर्तेः **अवदन्**॥

रहस्याम्नाये 'किमात्मिकैवैषा भगवतो व्यक्तिः' इत्यादिप्रश्नस्य 'यदात्मको भगवान्' इत्युत्तरदानात्, परमपदे भगवतश्शरीरमपि परमात्मवदेव ज्ञानात्मकमिति वक्तव्यं भवति । परं तु आत्मा खलु ज्ञानस्वरूपः । तस्य शरीरमपि ज्ञानस्वरूपं कथं भवेत्? उभयोरपि ज्ञानरूपत्वे शरीरशरीरिभावः कथम्? अतः भगवतः शरीरम् न ज्ञानस्वरूपम्, किन्तु जडमेव इति केचिदाहुः । न च 'यदात्मको भगवान्' इति कथमिति वाच्यम्, औपचारिकत्वात्तस्य । अन्यथा परमात्मवत् तच्छरीरमपि षाड्गुण्यवदिति वक्तव्यं स्यादिति । इष्टापत्तौ षाड्गुण्यस्य चेतनत्वनियतत्वात् चेतनत्वमपि शरीरस्य वक्तव्यम् । न हि शरीरस्य चेतनपदवाच्यत्वं कस्यापीष्टम् । न च भगवच्छरीरस्य जीवस्य चेतनत्वं दृश्यत इति वाच्यम्, जीवस्य ब्रह्मांशत्वात्तथात्वम् । अधिकं शरीरलक्षणे(बुद्धि.83) वक्ष्यते ॥

परं तु धर्मभूतज्ञानस्य ज्ञानरूपत्वेऽपि आत्मवत् चेतनत्वं नाङ्गीक्रयते, परमात्मशरीरत्वमपि नाङ्गीक्रियते । स्वप्रकाशत्वात् जडत्वमपि नाङ्गीक्रियते । तद्वत् नित्यविभूतेः स्वप्रकाशत्वाङ्गीकारमात्रेण, न तस्याश्चेतनत्वम्, नापि ज्ञानादिषाड्गुण्ययोगः । सिद्धान्ते पराक्त्वम्, जडत्वं च भिन्नम्, प्रत्यक्त्वं पराक्त्वं च भिन्नमित्यादिकं निरूपितं पुरस्तात् (जीव.7) । अतो नित्यविभूतेरजडत्वे न कश्चन विरोधः । **नवीना** अपि परमात्मनो देहस्य ज्ञानरूपत्वमङ्गीकुर्वन्ति । परं तु स्वरूपात्मकमित्यपि वदन्ति ॥ ६२ ॥

[नित्यविभूतेः स्वप्राकाशत्वेऽनुपपत्तिपरिहारः]

208. **निस्संकोचा समस्तं चुलकयति मतिर्नित्यमुक्तेश्वराणाम्;**
**बद्धानां नित्यभूतिर्न विलसति ततः कस्य सा स्वप्रकाशा।**
**मैवं नित्येश्वरादेः सति मतिविभवे साऽस्तु तेनानपेक्षा**
**वेद्यानुद्भासकाले मतिरिव न तु सा बन्धकाले विभाति॥ ६३ ॥**

नित्यविभूतेः स्वप्रकाशत्वमाक्षिप्य समाधत्ते—**निस्संकोचेत्यादि**। **नित्यमुक्तेश्वराणां मतिः**= नित्यानामनन्तगरुडविष्वक्सेनादीनां नित्यमुक्तानां नित्यसूरीणाम्, सादिमुक्तानाम्, परमेश्वरस्य च धर्मभूतं ज्ञानं समस्तं पदार्थजातम् **चुलकयति**= विषयीकरोति। जगत्सृष्ट्यादिव्यतिरिक्तं सर्वमुपर्युक्तानां त्रयाणामपि समानम्। **बद्धानाम्**=लीलाविभूतिगतानां संसार्यात्मनां तु धर्मभूतज्ञानस्य कर्मणा संकुचितत्वात् **नित्यविभूतिः न विलसति**=न प्रकाशते; अत्र विद्यमाना एव बहवः पदार्था संसारिभिर्न ज्ञायन्ते चेत् किं वक्तव्यं नित्यविभूतिविषये। **ततः**=एवं वस्तुस्थितेस्सत्त्वात् **सा**=नित्यविभूतिः **कस्य**=कस्य वा आत्मनः **स्वप्रकाशा**=स्वयंभासेत? प्रकाशःकिल कस्मैचित्स्यात्। अतो नित्यविभूतेः स्वयंप्रकाशत्वानङ्गीकारे का हानिरित्याक्षेपः॥

प्रमाणानुगुणा वस्तूनां स्थितिः, न प्रयोजनानुगुणा। पथि गच्छतां मनुजानां बहवः पदार्थाश्चक्षुषा गृह्यन्ते, बहवः शब्दादयः श्रोत्रादिभिर्गृह्यन्ते। तेन को लाभः? प्रयोजनाभावेऽपि कुतस्ते चक्षुरादिभिर्गृह्यन्ते? इति प्रश्ने, तत्तदिन्द्रियाणामयं स्वभाव इत्येवोत्तरम्। अतो नित्यविभूतेः स्वप्रकाशत्वाङ्गीकारेण को लाभः? अनङ्गीकारे वा का हानिरिति प्रश्न एव निरर्थकः। यथाप्रमाणं वस्तुस्वरूपं निर्णेयमित्यभिप्रायेण समाधत्ते—**मैवमित्यादि**। **नित्येश्वरादेः**=नित्यानाम्, मुक्तानाम्, ईश्वस्य च **मतिविभवे**=बुद्धेः प्रभावे **सति**=तादृशे सति, **सर्वविषयीकरणसमर्थे सति, सा**=तेषां मतिः **तेन**=नित्यविभूतेस्स्वप्रकाशत्वेन **अनपेक्षा**=ग्रहणे स्वप्रकाशत्वापेक्षारहिता स्वयमेव विषयीकरणसमर्था **अस्तु**=भवतु, तावता न स्वप्रकाशत्वहानिरिति भावः॥

ननु यदि नित्यविभूतिः स्वप्रकाशा, तर्हि कुतोऽस्माकं सा न प्रकाशते? प्रकाशस्वरूपो दीपादिर्हि सर्वान् प्रति प्रकाशरूप एवेत्यत्राह—**वेद्येत्यादि**। **वेद्यानुद्भासकाले**=वेद्यस्य=विषयस्य **अनुद्भासकाले**= अप्रकाशसमये **मतिरिव**=धर्मभूतज्ञानमिव **सा तु**=नित्यविभूतिस्तु **बन्धकाले**=जीवस्य बद्धावस्थायाम् **न विभाति**=न प्रकाशते। तस्यैव जीवस्य मुक्तौ सति, तदा सा स्वप्रकाशा गृह्येत। धर्मभूतं ज्ञानं हि स्वप्रकाशमित्यत्र न विवादः। परन्तु सुषुप्त्यवस्थायां कस्यापि न प्रकाशते तत्। न हि तत्तदानीं नास्ति, सिद्धान्ते तस्य नित्यत्वात्। 'यत्तु धर्मभूतज्ञानस्य नित्यत्वमुक्तम्, तत् विषयप्रकाशनवेलायां तथा' इति श्रीभाष्यम्। अत्र वक्तव्यं बुद्धिसरे वक्ष्यते। परं तु स्वप्रकाशत्वस्वरूपमेव गहनम्। परमात्मा हि सर्वेषामपि मते स्वप्रकाशः। अथापि नेदानीमस्माकं प्रकाशते। जीवात्मानोऽपि स्वप्रकाशा एव। अथापि अन्य आत्मा अन्यस्य कस्यापि जीवस्य न गोचरः। 'न तावदयमेकान्तेनाविषयः, अस्मत्प्रतीतिविषयत्वात्' (ब्र.सू.1-1-1.शं) इत्यादिकं तु—

[नित्यविभूतेर्नित्यत्वेऽनुपपत्तिपरिहारः]

**209. तत्त्वान्यप्राकृतानि त्रिगुण इव परीणामतश्चेत् भवेयुः**
**स्थानादि स्यादनित्यम् न यदि न घटते भूततादीति चेन्न।**
**अत्रत्यक्ष्मादितत्त्वक्रमनियतगुणप्रक्रियाद्यैकरूप्यम्**
**नित्येऽपि स्यात् निमित्तानुगतिनियमितस्तत्तदाख्याविशेषः ॥ ६४ ॥**

---

न तावत्सुलभं वक्तुं यथा जानन्ति पण्डिताः। अनुक्त्वाहंपदं कस्मादस्मत्पदमुदीरितम् ॥
अजानद्भिस्तयोर्भेदं विचारश्च कथं भवेत्। सर्वं विचारितं पूर्वं न युक्तं पिष्टपेषणम् ॥
परन्त्वखिलहेयादिशून्यस्य परमात्मनः। दिव्यमङ्गलदेहादिः कथं स्यादस्मदादिवत्? ॥
जडत्वोक्तिस्तत्र च स्यादनात्मत्वपरा ध्रुवम्। अजडत्वविशेषः स्यात्पराक्त्वमिति साधितम् ॥
अतोऽजडत्वं भगवद्विग्रहस्य समीरितम्। न तावतैव षाड्गुण्यप्रसक्तिस्तत्पराक्त्वतः ॥
एतादृशविचारेषु वर्ज्यं शब्दविवर्धनम्। अन्यथा तु भवेन्नूनमपचारो यथास्थितेः ॥
आचार्यैस्तु दयाशीलैस्सर्वज्ञैरपि वस्तुतः। तत्कालानुगुणं किञ्चिदुक्तमित्यवधार्यताम् ॥ ६३ ॥

नित्यविभूतेर्नित्यत्वमाशङ्क्य समाधत्ते—**तत्त्वानीत्यादि**। **अप्राकृतानि**=शुद्धसत्त्वमयानि **तत्त्वानि**= चतुर्विंशतितत्त्वानि **त्रिगुण इव**=त्रिगुणद्रव्ये यथा **परिणामतः**=स्वरूपान्यथाभावतः **भवयुश्चेत्, स्थानादि**= मणिमण्टपादिस्थानानि, भगवद्दिव्यमङ्गलविग्रहादि च **अनित्यम्**=प्राकृतलोक इवोत्पत्तिविनाशवत् स्यात्। **न यदि**=त्रिगुणद्रव्यवत्परिणामानङ्गीकारे **भूततादि**=पृथिव्यादितत्त्वानि गन्धरसरूपस्पर्शशब्दादीनि च तत्त्वानि न घटते इति चेत्—**न**। कथं नेत्यत्र—**अत्रत्येत्यादि**। अत्रत्यः यः क्ष्मादीनां तत्त्वानां क्रमः, तेनैव क्रमेण नियता या गुणानाम् प्रक्रिया, एतदादीनाम् **ऐकरूप्यात्**=एतत्प्राकृतलोके पृथिव्यादितत्त्वानां क्रमेण, तदनुगुण-गन्धादीनां गुणानां यथा व्यवस्था वर्तते, तथैव तत्रापि भूतानां पृथिव्यादीनाम्, तद्गुणानां च व्यवस्थाया-स्सत्त्वात्, संज्ञा अपि अत्र यथा, तथैव तत्रापि भवन्ति। आकाशादौ—एकैकगुणवृद्ध्यादयो भगवल्लीलायै तत्रापि एकरूपा एव भवन्ति। एवमेकरूपत्वात्संज्ञा अपि एकरूपा भवन्ति। परन्तु अत्र क्रमश उत्पत्तिः, लयश्च तद्विपरीततया भवति। तत्र तु न तथा, सदैव तथा भवन्ति। अतः संज्ञादीनां परमेकरूपता, न तु स्वरूप एकरूपता ॥

या भाषास्मत्परिचिता ह्युपदेशस्तयैव हि। अन्यथा ह्यपरिज्ञानादुपदेशो वृथा भवेत् ॥

अतश्चैषां स्वरूपमनित्यम्, उत्पत्तिलयवत्त्वात्, तत्र तु तदभावात् स्वरूपतो नित्याः, तथैव भगवदिच्छासिद्धाः। प्राकृते लोके प्रकृतिरेव सततपरिणामिनी। अप्राकृते तु लोके त्वलौकिकमप्येकरूपं नित्यं वर्तते। अप्राकृते तु प्रासादमण्टपगोपुरदिव्यमङ्गलविग्रहादयस्सावयवा अनित्या इव गृह्यमाणा-स्तथापि नित्या इति विशेषोऽवगन्तव्यः। कथमिदं संभवीति तु न शङ्कनीयम्, तथैव प्रमाणसिद्धत्वात्। तदेतदाह—**नित्येऽपीत्यादि**। **नित्येऽपि**=स्वरूपतो नित्येऽपि वस्तुनि **निमित्तानुगतिनियमितः**=निमित्ता-

[भगवन्मूर्तेर्नित्यत्वेऽनुपपत्तिपरिहारः]

210. **निर्दिष्टं पौष्करादौ स्वयमखिलकृता स्वं वपुर्नित्यसिद्धम्**
**नित्याऽलिङ्गेति चैकायननिगमविदो वाक्यभाष्यादि चैवम्।**
**नित्यत्वं वासुदेवाह्वयवपुषि जगौ मोक्षधर्मे मुनीन्द्रो**
**नित्येच्छातस्तथा तत् तदिह विहतिमान् सांशजन्मादितर्कः॥ ६५ ॥**

---

नामागन्तुकानां कारणविशेषानाम् **अनुगत्या**=अनुसरणेन **नियमितः**=व्यवस्थापितः **तत्तदाख्याविशेषः**= तत्तत्संज्ञाविशेषः स्यात्। अतो न विरोधः॥

मुक्ताद्यात्मनां भगवतः आनन्दविशेषार्थं लीलाविशेषप्रसक्तिः 'जक्षन् क्रीडन् रममाणः' इति प्रमाणसिद्धत्वात्, तदर्थं तात्कालिका अपि कतिचनपदार्थाः आविर्भवेयुस्तिरोभवेयुश्च। एषामत्र कथने प्रसक्ते, अत्र विद्यमानैः व्यवहारहेतुभिश्शब्दैरेव कथनमनिवार्यम्; अन्यथा तदर्थ एवात्रत्यैर्न ज्ञातुं शक्येत। अतोऽत्रत्यसंज्ञा एव तत्रत्यपदार्थानामपि तथैव भवन्तीति संज्ञैक्यमात्रं प्रासादमण्टपादौ। वस्तुस्वरूपं तु अत्यन्तविलक्षणमेव, तथैव भगवदिच्छासिद्धत्वादिति न विरोध इति भावः॥ ६४॥

ननु प्रासादमण्टपादीनाम्, भगवद्दिव्यमङ्गलविग्रहादीनां च साकारत्वान्मध्यमपरिमाणवत्त्वं वक्तव्यम्। मध्यमपरिमाणवतां सांशत्वस्यानिवार्यत्वे तेषां नित्यत्वं कथमुच्यत इत्याक्षेपं समाधत्ते—**निर्दिष्टमित्यादिना**। **पौष्करादौ**=पौष्कराद्यागमे **अखिलकृता**=जगत्स्रष्ट्रा परमात्मना **स्वम्**=स्वीयम् **वपुः**=दिव्यं शरीरम् **नित्यसिद्धम्**=सततैकरूपमेव सिद्धम् **निर्दिष्टम्**=उपदिष्टम्। 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इत्यतः 'परमात्मना' इत्युक्तम्। **एकायननिगमविदः**=रहस्याम्नायशाखाध्येतारः **नित्यालिङ्गा इति च**=नित्या, अलिङ्गा इति च, वदन्तीत्यादिः शेषः। अस्यार्थस्य संप्रदायसिद्धत्वार्थम्—**वाक्यभाष्यादि च**=छान्दोग्यवाक्यम्, द्रमिडभाष्यादिकं च एवम् **वक्तीति** शेषः। **मुनीन्द्रः**=भगवान् व्यासः **मोक्षधर्मे**=माहाभारतस्य शान्तिपर्वान्तर्गते मोक्षधर्माख्ये अवान्तरपर्वाणि **वासुदेवाह्वयवपुषि**=वासुदेवसंज्ञकस्य भगवतः शरीरे **नित्यत्वम् जगौ**=अभिदधे। **तत्**=तस्मात् **नित्येच्छातः**=भगवतो नित्यसंकल्पात् **तथा**=शरीरादयो नित्याः। **तत्**=तस्मात् **इह**=अस्मिन् विषये **सांशजन्मादितर्कः**=सांशत्वोत्पत्तिमत्त्वादिविषयकः तर्कः **विहतिमान्**=व्याहतिमान्=उक्तप्रमाणविरुद्धः भवतीति शेषः॥

**अयमाशयः**—मणिमण्टपादौ भगवद्दिव्यमङ्गलविग्रहादौ च सावयववस्तुसमानाकारत्वेऽपि तेषामवयवजन्यत्वाभावादेतल्लोकदृष्टव्याप्त्यादिकं तत्र सर्वथा न क्रमते, धर्मिग्राहकमानविरुद्धत्वात्। ते सदा तथैव सिद्धा इति न ते सावयवाः। सावयवत्वेऽपि वा तेषामवयवारब्धत्वाभावात्तेऽनारंभकांशा इति नावयविनामनित्यत्वम्, धर्मिग्राहकप्रमाणैर्नित्यतयैव सिद्धत्वात्। तथाहि पौष्करागमः 'नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर। यस्यास्ति सत्ता हृदये तत्रासौ सन्निधिं व्रजेत्॥' इति। श्रीसात्त्वतम्—'नित्यं नित्याकृतिधरम्' इत्यादि। एकायनशाखेत्यपरनाम्नि रहस्याम्नाये 'नित्यालिङ्गा स्वभावसंसिद्धिः' इति।

[भगवतोऽस्त्रभूषणादि]

211. अस्त्रैर्वा भूषणैर्वा किमिह भगवतोऽवाप्तकामस्य? तस्मात्
देवो देहेऽपि वीतावरण इति जगुः केऽपि जैनोपजप्ताः ।
किं वा देहेन विश्वात्मन इति वदतां किं प्रतिब्रूयुरेते?
तच्चेत् तस्याश्रितार्थे तदधिकरणकं सर्वमप्येवमस्तु ॥ ६६ ॥

स्त्रीत्वादीनाम् 'नैव स्त्री न पुमानेषः' (श्वे.5-10) इत्यादिश्रुत्या शरीरमात्रनिष्ठत्वात्, आत्मनि तेषामभावात्, शरीराणामभौतिकत्वेन 'अलिङ्गा' इत्युक्तिः । यद्यप्यत्रापि विशुद्धस्यात्मनो स्त्रीत्वादिकं नास्ति, अथापि विशुद्धस्य सूक्ष्मशरीररहितस्यात्रावस्थानाभावात्, स्थूलदेहस्य सूक्ष्मशरीरविशिष्टात्मन एव परिणामरूपत्वात्, अलिङ्गत्वम् फलतो नास्त्येव । जीवात्मस्वरूपमधिकृत्य वक्तव्यं सर्वं जीवसर एवाभिहितम् । अत एव 'त्वं स्त्री त्वं पुमान्'(श्वे.4-3) इत्यादीनां प्रवृत्तिः । 'रूपं वातीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्' इति ब्रह्मनन्दिनः छान्दोग्यवाक्यम् । द्रमिडाचार्यभाष्यम् एतस्य 'अञ्जसैव विश्वसृजो रूपम् । तत्तु न चक्षुषा गृह्यते नापि वाचा 'मनसा तु विशुद्धेन' इति श्रुतेः । न ह्यरूपाया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रम्' इति । अधिकं वेदार्थसंग्रहादौ द्रष्टव्यम् । मोक्षधर्मे 'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम्' इति । अत्र वासुदेवपदं न विशुद्धात्मस्वरूपपरम्, तत्रानित्यत्वप्रसक्तेरेवाभावेन, तन्निषेधस्यानपेक्षितत्वात्, अतो मूर्तिपरं तत् । किं बहुना— 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (गी.4-11) इति भगवतैवाभिधानात्, भक्तानामनुग्रहाय, तेषां भावानामनुपमर्देनताननुगृह्णाति भगवान् । अत्रापि वक्तव्यं पूर्वमनुपदमेव वक्ष्यते (श्लो.61) । पुनः पुनरिदमुच्यते, न कदापि विस्मर्तव्यमिति—

एतादृशविचारेषु वर्ज्यं शब्दविवर्धनम् । अन्यथा तु भवेन्नूनमपचारो यथास्थितेः ॥ ६५ ॥

भगवन्मूर्त्यादौ पुनरपि विरोधमाशङ्क्य परिहरति—**अस्त्रैर्वेत्यादि**। **अवाप्तकामस्य**=स्वत एव परिपूर्णस्य, अत एव अवाप्तसर्वकामस्य, प्राप्तव्यान्तरकामनारहितत्वादेव **अस्त्रैर्वा**=शङ्खचक्रगदासिशार्ङ्गाद्यायुधैर्वा **भूषणैर्वा**=किरीटमकुटहारमकरकुण्डलग्रैवेयकादिनानाविधैराभरणैर्वा **किमिह**=किं वा साधनीयमस्ति । तस्मात् **देहेऽपि**=स्वरूप इव विग्रहेऽपि **देवः**=भगवान् **वीतावरणः**=पीताम्बराद्यावरणरहित एवेति **जैनोपतप्ताः**=दिगम्बरव्रतपारम्यवादिभिः जैनैः=रहसि बोधिताः उपजापः=भेदोपायः, आपादितभिन्नबुद्धय इत्यर्थः, **केऽपि**=अस्मदीया एव केचित् जगुः । **विश्वात्मनः**=परमात्मनः **देहेन वा किम्**=विग्रहाङ्गीकारेण वा प्राप्तव्यं किं वा वर्तते? **इति वदताम्**=पृच्छताम् **एते**=उक्ताः केचन **किं प्रतिब्रूयुः**=किम् उत्तरं वदेयुः? **तत्**=शरीरम् **तस्य**=भगवतः **आश्रितार्थम्**=आश्रितानां भक्तानां सन्तोषाद्यर्थम् **चेत्, तदधिकरणकम्**=शरीराधिकरणकम्=शरीरसंबन्धि **सर्वमपि**=वस्त्रभूषणायुधादिकं सर्वमपि **एवम्**= आश्रितजनसन्तोषाद्यर्थमेव अस्तु । अतश्शरीरं यदि स्वीक्रियते, तर्हि तदनुबन्धिवस्त्रादिकमपि स्वीकर्तव्यम् । शरीरं स्वीकृत्य वस्त्राद्यस्वीकरणे अर्धजरतीदोषः स्यात् । अतोऽस्त्रभूषणादिकं सर्वं यथाशास्त्रं सिद्धम् ॥

लोके पीताम्बरकिरीटाद्यलंकाराः आडम्बररूपा राजसप्रकृतीनां दृश्यन्ते। यावद्रजोऽधिकं वर्तेत, तावदेतादृशेषु प्रीतिः स्यात्। अस्त्रादयस्तु तु परहिंसाद्यर्थम्, स्वरक्षणार्था वा धार्यन्ते। परहिंसा तु तामसानां गुणः। 'हिंसाविहाराः' इति खलूच्यन्ते तामसाः। एवं राजसतामसप्रकृतिलक्षणान्येतानि गुणातीतस्य भगवतो युज्यन्ते वा? न च स्वरक्षणार्थमावश्यकान्यायुधानीति वाच्यम्, कस्मात्तस्य स्वरक्षणम्? 'भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः' (तै. आ.) 'भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः।' (कठ) 'मृत्योर्मृत्युं नमामि तम्' (मं.रा.स्त) इत्यादिना मृत्योरपि मृत्युरूप इत्युच्यमानस्य अन्येभ्यो रक्षणप्रसक्तेरेवासंभवात्। सर्वमिदमर्थवादश्चेत्, उपनिषदस्सर्वा अपि तादृशा एवेति वदतः **कबन्धमीमांसकस्य** भिक्षुपादप्रसरणम्। ननु अलं कबन्ध-मीमांसकेत्यादिप्रहसनेन! राहुमीमांसका अपि निराकुर्वन्त्येव भगवतो विग्रहभूषणादिकमिति चेत्, तर्हि तानपि स्वीकुर्मोऽस्मत्साहाय्ये। तेन भवतः को लाभः? प्रत्युत हानिरेव। किञ्च भवता श्रुतिकल्पत्वेनाङ्गीकृते जितन्तेस्तोत्रे 'न ते रूपं न चाकारो नायुधानि च चास्पदम्' इति भगवत आयुधाकारादीनां निषेधोऽपि दृश्यते। अयि भोः! तत्रैवोत्तरमर्धं किमित्याच्छाद्यते? तदपि पठ्यताम्। पठामि ब्रह्मन्! तदपि भवत्प्रतिकूलमेव। 'तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे' इति खलूत्तरमर्धम्। तत्र हि भक्तानां कृत आकारः, न तु सहजः इत्युच्यते। 'प्रकाशसे' इति पदमपि आकारादीनां भानमात्रमुच्यते, न तु सत्ता। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इत्युक्तदिशा भक्तांस्तथोपसर्पति भगवानित्यर्थः। अतश्चाकारादिकं न सहजमित्येव सिद्ध्यति। अत एवाचार्यैरपि 'स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' (ब्र.सू.1-1-20 सं) इत्युक्तम्। अतः, परमात्मनः शरीराभरणायुधादीनि मायाकल्पितानि, न वास्तवानीति **पूर्वः पक्षः**॥

अत्र पूर्वपक्षिणः द्वौ। एकः परमात्मनः शरीरं मायामयम्। अत एव वस्त्राभरणादिकं दण्डापूपायितम्—इति पक्षः। अपरस्तु 'शरीरमास्तां कामम्। अस्त्रभूषणादयो राजसतामसप्रियाः न सन्ति अवाप्तसमस्तकामस्य तस्येति पक्षः। अत्र श्लोके द्वितीयः पक्ष एव निराक्रियते। 'किं वा देहेन' इत्युत्तरेणैवेदं स्पष्टं ज्ञायते। शरीरमङ्गीकृत्यास्त्रभूषणादिकं मास्तु चेत्, मास्तु पीताम्बरमपि, तिष्ठतु दिगम्बर एव। 'वीतावरणः' 'जैनोपजप्ता' इति पदद्वयमेतदेव सूचयति। अस्ति किल वटपत्रशायी शिशुर्दिगम्बरो मार्कण्डेयेन दृष्टः। तत्रापीष्टापत्तौ, तादृशेन शरीरेण कस्य को वा लाभ इति वक्तव्यम्। ननु भवानेवाह प्रमाणानुरोधिनी प्रमेयस्थितिः, न तु प्रयोजनानुरोधिनीति—इति चेत्; तर्हि सर्वमप्यभ्युपगम्यताम्॥

प्रथमपक्षस्योत्तरमप्यनेनैव दत्तप्रायम्। न हि मायापदं मिथ्यापर्यायं कस्यापि संमतम्। 'इच्छावशात्' इति वदन् किलाचार्यः ईश्वरेच्छासिद्धत्वं मिथ्यात्वप्रयोजकं कथं वदेत्? प्रत्युत सत्यसंकल्पः किल भगवान्। अनिर्वचनीयं तदिति चेत्, तर्हि तूष्णीं स्थीयताम्, मिथ्येति मोच्यताम्। अन्यथा हि स्तोत्रजालं सर्वमाचार्यस्यार्थशून्यं हि भवेत्। तत्सर्वं मन्दप्रज्ञानां कृत इत्यादिकमपि अज्ञानमूलकमहंकारमूलकं वा स्यात्। **गुरुवायुपुरघटना-विशेषो**ऽप्यत्र स्मर्तव्यस्तादृशैरहंकारिभिः। अतो'ऽधिकारिभेदेन' इतिमात्रमुच्यताम्। एतेनैव 'न ते रूपं न चाकारः' इत्यादिकमपि समाहितम्। 'भक्तानां त्वं प्रकाशसे' इत्येतदपि व्याख्यातप्रायम्॥

[भगवल्लोकादिविषयेऽनुपपत्तिपरिहारः]

**212. रूपस्थानायुधाख्याजनिलयविधृतिव्यापृतीच्छागुणादेः**
**विश्वाधारे निषेधो विधिरपि विषयद्वैतशाम्यद्विरोधौ।**
**इत्थंभूते निषेधः क्वचिदपि न विधिं बाधते सावकाशः**
**कल्याणैरस्य योगस्तदितरविरहोऽप्येकवाक्यश्रुतौ च ॥ ६७ ॥**

वस्तुतो देवतानां तु स्वरूपं गहनं भृशम्। अतोऽत्र विविधा वादाः प्रवर्तन्ते सतामपि ॥
यतः सृष्टिरहस्यं तत्सर्वमत्रैव वर्तते। ततोऽवकाशं मायात्र न ददात्यल्पमेधसाम् ॥
अत एवाह भगवान् मायां नृणां दुरत्ययाम्। अत एवास्माभिरपि पौनःपुन्येन कथ्यते ॥
एतादृशविचारेषु वर्ज्यं शब्दविवर्धनम्। अन्यथावर्जनीयस्स्यात् अपचारो यथास्थितेः ॥
अत एवाह भगवान्, शुकोऽपि ब्रह्मवित्तमः। 'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ॥
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः'। अतो स्वात्मा वृथा नैव क्लेशितव्यो हितेप्सुभिः ॥
इतोऽपि यदि जिज्ञासा, तर्हि मुक्त्वा विचारणाम्। साधवो ह्यभिगन्तव्याः तत्त्वज्ञास्तत्त्वदर्शिनः ॥
बुद्धिस्तु केवला यावत् वर्धते बुद्धिजीविनाम्। तावद्वर्धेत नास्तिक्यमन्तश्शत्रुःस्वयं नृणाम् ॥
बुद्धिरन्या ज्ञानमन्यदभ्यधाय्यसकृत्पुरा। बुद्धिस्स्यात्संशयसहा ज्ञानं संशयनाशकम् ॥
अतस्संपाद्यतां ज्ञानं सर्वसंशयनाशकम्। कृच्छ्रेण तपसा शीघ्रं परात्मा यत्रसीदति ॥ ६६ ॥

परमात्मनः रूपस्थानादिविषये विधितो निषेधस्य प्राबल्यमाशङ्क्य परिहरति—**रूपेत्यादि**। प्रथमः पादः एकः समस्तपदात्मकः। **रूपम्**=आकारः **स्थानम्**=परमपदादिकः स्थानविशेषः। **आयुधानि**=चक्रादीनि, प्राधान्येन पञ्च, विस्तरेण तु षोडश, अनन्तानि वा। **आख्या**=वासुदेवादिसंज्ञा। **जनिः**=जन्म **विलयः**=तिरोधानम् **विधृतिः**=जगद्धरणम् **व्यापृतिः**=विविधाः व्यापाराः लीलारूपाः। **इच्छा**=संकल्पः, **गुणाः**=सत्यकामत्वादयः। आदिना निग्रहानुग्रहादयो ग्राह्याः। एतेषाम्, **विश्वाधारे**=परमात्मनि **विधिः**, **निरोधः**=निषेधोऽपि **विषयद्वैतशाम्यद्विरोधौ**=विषयस्यैव एवं विविधत्वात् शान्तपरस्परविरोधौ भवतः। **इत्थंभूते**=विषये एवमत्यन्तलोकविलक्षणे **सावकाशः**=विषयभेदेन निर्वाहयोग्यः **निषेधः** क्वचिदपि स्थले **विधिं न बाधते,** सावकाशत्वादेव। कथमुभयोस्सावकाशत्वमित्यत्र—**अस्य च**=परमात्मनश्च **कल्याणैः**=शुभैः अकर्ममूलैः विग्रहादिभिः **योगः**=संबन्धः, **तदितरविरहोऽपि**= कर्ममूलैरशुभैः शरीरादिभिः असंबन्धश्च एकवाक्यश्रुतौ 'अपहतपाप्मा विजरो विमृत्युः' इत्युपक्रम्य 'सत्यकामस्सत्यसंकल्पः'(छा.8-1-5) इति एकस्मिन्नेव वाक्ये आम्नातौ। अतस्तात्पर्यं चेत्, उभयत्रापि स्यात्, नो चेदुभयमपि न स्यात्। यद्युभयमपि मास्तु इति कश्चिद्वदेच्चेत्, तदा स्वीयाक्षिद्वयप्रदानेन परस्यैकाक्ष्यपहारन्यायः स्मर्तव्यः ॥

**अयमर्थः**—परमात्मा तु शब्दैकसमधिगम्य इति सर्वैरपि वेदान्तिभिरुद्घुष्यते। श्रुतिरपि 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठा' (कठ.1-2-9) इति वक्ति परमात्मनस्तर्कातीतत्वम्। अत एव तत्तादृशज्ञानिमात्रोपदेश्यत्वं स्पष्टं वदति। अत एव च सः 'औपनिषदः' इत्यपि कथ्यते। उपनिषदस्तु

[देवतानां स्वरूपविमर्शः]

**213. देहादिर्देवतानां हविरनुभवनं सन्निधेर्यौगपद्यं**
**प्रीतिर्दानं फलस्याप्यसदिति कथयन्त्यर्धलोकायतस्थाः ।**

विविधं तं वर्णयन्ति । अरूपम्-सरूपम्, सगणम्-निर्गुणम्, स्रष्टारम्-संहर्तारम्, उद्धर्तारम्-अधःकर्तारम्, जगद्रूपम्-जगद्विरूपम्, वेद्यम्-अवेद्यम्, सुलभम्-दुर्लभम्, अतिसन्निहितम्-अतिदूरस्थम्, रक्षकम्-शिक्षकम्, इत्यादिपरस्परविरुद्धानेकप्रकारं वर्णयन्ति । शब्दैकसमाधिगम्यं परंब्रह्म । शब्देन योऽर्थो यथोच्यते, तत्तथैवाङ्गीकर्तव्यमिति वदन्त एवैते उक्तकोट्योरन्यतरां कोटिं केवलं मानयन्तः, अन्यां कोटिं च दूरीकुर्वन्तः, परस्परं कथं कलहायन्ते इत्येतद्रहस्यं स एव भगवान् मायावी=मायाप्रभुर्जानीयात् । अत एव भगवान् रामानुजः 'एवञ्च सति भेदो वा, अभेदो वा, द्व्यात्मकता वा, वेदान्तवेद्यः कोऽयमर्थस्समर्थितो भवति' इति स्पष्टं प्रश्नं परं कुर्वन् 'सर्वस्य वेदवेद्यत्वात् सर्वं समर्थितम्' इत्यनिर्दिष्टमुत्तरं दत्त्वोपरिगच्छतीत्येतदवधेयं जिज्ञासुभिस्सर्वैरपि । 'कोऽयमर्थः' इत्येव प्रश्नः; न तु 'किं वाक्यम्' इतीत्येतदप्यवधेयमत्र । आत्मानं यतिपतिच्छात्रम् सबहुमानं प्रकाशन्त एत एवाचार्याः भगवद्रामानुजस्येङ्गितं सूचयन्ति— 'सत्त्वानीह विरुद्ध-जातिजनुषा सिद्धानि सिद्धाश्रमे वैरं यत्र मिथस्त्यजन्ति विधयस्सर्वैर्निषेधैस्सह' इति । एवमेवात्र प्रकृते भगवद्दिव्यमूर्तिभूषणायुधादिविचारेऽपि— 'बिभ्राणमात्मनि सदा महतीं विभूतिं देहेन तन्मयनिदर्शितभूषणास्त्रम् आलिङ्गितं कमलया मम चित्तवृत्तेरालम्बनं भवतु दैवतमद्वितीयम् ॥' इति च । (श.दू.17) ॥

किमुक्तं भवत्यनेनेति चेत्, एतदुक्तं भवति—

बुद्धेर्मायाविकारत्वाद्वर्धयेद्भेदमेव सा । कोटिद्वयस्मृतिर्यावत्तावत्सीमा भवेद्धियः ॥
ज्ञानमेव हि सर्वेषां क्लेशानामुत्तरं भवेत् । अहंकारक्षयो यावद्भवेद्ज्ञानं ततः क्रमात् ॥
अहंकारक्षयोपायोऽप्युक्तः पूर्वं(जीव.) सुविस्तरात् । स्थानं तर्हि विचारादेः किमित्यत्र समाहितम् ॥
बुद्धिर्यावन्निवर्तेत विचारात्तावदेव च । ज्ञानस्याङ्कुरचिह्नं तदवधेयं तु साधुभिः ॥
'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥'
'श्रद्धावान् लभते ज्ञानं तत्परस्संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥'
किमत्र बहुनोक्तेन सारमेतत्तु गृह्यताम् । सर्वकालेषु सर्वेषां हितं तद्भगवद्वचः ॥
'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' ॥ ६७ ॥

प्रसङ्गाद्देवतानां विग्रहादिविषयेऽवश्यवक्तव्यं किञ्चिदाह—**देहादिरित्यादि**। **देवतानाम्**=अग्नीन्द्रादीनाम् देवतानाम् **देहादिः**=देहेन्द्रियादिः, **हविरनुभवनम्**=हविषां स्वीकरणम् **सन्निधेः यौगपद्यम्**=तत्तत्कर्मसु नानादेशानुष्ठीयमानेषु युगपत्सन्निधानम् **प्रीतिः**=तादृशहोमादिजन्यः सन्तोषविशेषः **फलस्य दानमपि**=तत्तत्कर्मणां फलप्रदानं च **असत्**=नास्ति इति **अर्धलोकायतस्थाः**=अर्धनास्तिकाः=उत्तरकाण्डाप्रामाण्यवादिनः पूर्वमीमांसकाः कथयन्ति । पूर्वकाण्डाप्रामाण्यमुत्तरकाण्डमात्रप्रामाण्यञ्च वदन्तो राहुमीमांसकाः यथाऽर्धनास्तिकाः,

**तत्राध्यक्षादिदूरस्वमहिमसदृशाशेषवैशिष्ट्यमासां**
**तत्तद्विध्यर्थवादप्रभृतिभिरविदुः तत्परैरेव शिष्टाः ॥ ६८ ॥**

---

तथैवोत्तरकाण्डाप्रामाण्यं पूर्वकाण्डमात्रप्रामाण्यवादिनः कबन्धमीमांसका अपि अर्धनास्तिका इत्याचार्याणामाशयः। अत एव च सर्वस्याप्यविशेषेण प्रामाण्यवादिन एतत्सिद्धान्तिन एव पूर्णास्तिका इत्यपि कैमुतिकसिद्धम् ॥

**पूर्वमीमांसकानामयमाशयः**—अग्नीन्द्रादीनां देवतानां यदि शरीरं स्यात्, तत् किमभौतिकम्, उत भौतिकम्? नाद्यः, आत्मातिरिक्तस्य प्राकृतत्वात् तत्रत्यानां कर्माधीनत्वाङ्गीकाराच्च । द्वितीये तेषां नश्वरत्वावश्यंभावात् ; तेषां नाशे, तदनन्तरं का गतिः? न चान्यः कश्चनागच्छतीति वाच्यम्, तस्य पूर्वमसत्त्वेन, पूर्वमनुष्ठितकर्मणास्य नूतनस्य प्रसन्नत्वासंभवेन फलस्याप्यसंभवप्रसङ्गात् । न च परमात्मनो नियोगात्सर्वं सङ्गच्छेत, राज्ञाधिकारस्थाननियोगवदिति वाच्यम् ; तादृशस्येश्वरस्य पूर्वमीमांसकैरनङ्गीकारात् । न च तावता ते नास्तिकाः, अनुपदमेवास्तिकनास्तिकपदार्थस्य प्रदर्शितत्वात् । अतःकर्मणामेव फलप्रदत्व-मावश्यकम् । किञ्च अग्निहोत्रादीनां स्वर्गस्य चैव हि कार्यकारणभावः श्रुतिसिद्धः । मध्ये देवतानां निवेशे स्वर्गो न यागफलं स्यात् । अतो देवता अपि यज्ञशेषतयैव प्राप्तप्राणाः, न तु स्वतन्त्राः । अत एवाग्न्यादिशब्द एव देवता । तदतिरिक्तत्वेऽन्येनापि नाम्ना होमानुष्ठानाद्यापत्तिरिति सर्वं संकीर्णमयं स्यात् । एवं विग्रहाभावादेव हविर्भुक्त्वं तेषां नास्ति । अत एव वैदिकदृष्ट्या परिदृश्यमानोऽग्निरेव हविर्भुक् । किञ्च देवतानां सशरीरत्वे युगपदनेकदेशेष्वेककालावच्छेदेनानुष्ठीयमानेषु यज्ञेषु एकेन शरीरेण युगपत्सान्निध्या-संभवः । न चानेकशरीरपरिग्रहेण तत्संभवः; सर्वेषां तादृशशक्तिसत्त्वे प्रमाणाभावात् । यज्ञविधिनैव तत्कल्पने आत्माश्रयादिदोषप्रसङ्गः । पूर्वोक्तरीत्यान्यथासिद्धेश्च । ईश्वरस्य सर्वनियामकत्वात् सर्वशक्तत्वाच्च सर्वनिर्वाहे, 'तद्धेतोरेव' इत्यादिन्यायेन देवतान्तराणामनवकाशप्रसङ्गश्च । अत एव देवताप्रीतेः, तन्मूलकफलव्यवस्थायाश्च नावकाशः । एतत्सर्वमभिप्रेत्योक्तम्—'विग्रहो हविरादानं युगपत्कर्मसन्निधिः । प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥' (श्लो.वा.) इति । अतश्च 'वज्रहस्तः पुरन्दरः' इत्यादयः केवलार्थवादरूपाः, न स्वार्थे तात्पर्यवन्तः । न चेश्वरस्यैवाभावे उपनिषदां का गतिरिति चेत्, अनेककल्पकालं कर्मानुष्ठानफलभूतदेव-योनिरूपः, भोगभूमिगतः आत्मविशेष एव सः । स्वर्गादयोऽपि अतिशयितभोगभूमयः एव ॥

नन्वीश्वराभावे जगत्सृष्ट्यादिकर्ता क इति चेत्, न कोऽपि; जगत अनादित्वात्, महाप्रलया भावात् । अवान्तरसृष्टिप्रलयादिकं तु जीवेन चतुर्मुखेनैव निर्वाह्यते । नन्ववान्तरप्रलयपदमेव महाप्रलयसद्भाव-मावेदयतीति चेत्, महत्त्वादीनां सापेक्षत्वेन, भवत्संमतावान्तरप्रलयस्यैव महाप्रलयरूपत्वात्, भवद्दृष्ट्यैव 'अवान्तर'पदप्रयोगात् । अतो देवानां विग्रहादिर्नास्ति ॥

सिद्धान्तमाह—**तत्रेत्यादि**। **तत्र**=एवं प्राप्ते, **शिष्टाः**=वेदनिष्ठाः महात्मानः महर्षयः **आसां**= देवतानाम् **अध्यक्षादिदूराणि**=प्रत्यक्षानुमानातीतानि=अतीन्द्रियाणि यानि **स्वमहिमानि**, तत्सदृशम् **अशेषम्**=समस्तमपि **वैशिष्ट्यम्** **तत्परैः**=तत्तत्स्वार्थे तात्पर्यवद्भिः **तत्तद्विध्यर्थवादप्रभृतिभिरेव**=

[अवतारतत्त्वविवरणम्]

**214. साधुत्राणादिहेतोः तदुचितसमये विग्रहांशैः स्वकीयैः**
**स्वेच्छातः सत्यरूपो विभुरवतरति स्वान् गुणौघाननुज्झन्।**
**व्यूहे संकर्षणादौ गुणनियतिरभिव्यक्तिवैषम्यमात्रात्**
**वृद्धिह्रासाद्यभावात् स हि भवति सदा पूर्णषाड्गुण्यशाली ॥ ६९ ॥**

तत्तद्देवताप्रतिपादकैः 'इन्द्राय राज्ञे', 'अग्नयेऽष्टाकपालम्' 'वायव्यं श्वेतमालभेत' इत्यादिविधिभिः, 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिभिः अर्थवादैः, आदिपदग्राह्यैः 'ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि देवं सवितारम्' इत्यादिभिर्मन्त्रैरेव च **अविदुः**=अन्वगच्छन्। अतीन्द्रियविषये वैदिकानां वेद एव परमं चक्षुः। अतो देवानामतिशयितविलक्षणशक्तिमत्त्वादिकमपि तत एव सिद्धं, तथैवाङ्गीकार्यम्। 'प्रभृति'पदेन गीतादीनामपि ग्रहणम्। 'सह यज्ञैः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥' देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥' (गी.3-1-11) इत्यादिभगवद्वचनैर्देवानां फलप्रदत्वादिकं स्पष्टमुक्तम्। वस्तुतस्तु—

देवतानां रहस्यं तु गहनं परमं मतम्। अध्यात्मज्ञाननिष्ठानामपि वक्तुं न शक्यते ॥
आध्यात्मं स्यात्स्वविषयम्, अधिदेवं तु सृष्टिगम्। विज्ञानं दुर्लभं ज्ञानात्, ज्ञात्वा त्याज्या विचारणा ॥
श्रद्धैव पोषणीया स्यात्स्वात्मनो हितमीप्सता। दुर्लभा सा च सत्सङ्गादन्यत्राहुर्मनीषिणः ॥ ६८ ॥

अस्तु नाम दिव्यमङ्गलविग्रहविचारः। अवतारादौ भगवतो देहस्य स्वरूपं कीदृशमुच्यतामित्यत्राह— **साधुत्राणादिहेतोरित्यादि**। **साधुत्राणादिहेतोः**=साधुपरित्राणादिकारणात्, **आदि**पदेनानुषङ्गिकं दुष्कृद्विनाशादि ग्राह्यम्। 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे॥' (गी.4-8) इत्युक्तं हि भगवता। **तदुचितसमये**=तदनुगुणकाले **स्वकीयैः**=स्वासाधारणैः दिव्यैरेव **विग्रहांशैः**=अप्राकृतदिव्यमङ्गलविग्रहस्यांशैः **स्वेच्छातः**=स्वसंकल्पेनैव, न तु कर्मपरवशतया; **स्वान्**=स्वीयान् **गुणौघान्**=दिव्यकल्याणगुणगणान् **अनुज्झन्**=अत्यजन् **सत्यरूपः**=सच्चिदानन्दस्वरूपः, न तु मिथ्यारूपः **विभुः**=सर्वशक्तः परमात्मा **अवतरति**=इह लोकेऽवतरति॥

तथा चावतारादावप्यस्य देहादिकं दिव्यमेव। 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति, मामेति सोऽर्जुन॥' (गी. 4-9) इति स्वावतरस्य, तत्र कृतानां कर्मणां च दिव्यत्वं स्वयमेवाह। 'दिव्यम्=अप्राकृतम्' इति भाष्यं(शं) द्रष्टव्यम्। 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा। नैव गर्भत्वमापेदे न योन्यामवसत्प्रभुः॥' इत्याद्यार्षवचनं च। अतोऽवतारादावपि भगवन्मूर्त्यादीनां दिव्यत्वमेव। कष्टकार्पण्यादिप्रकटनं त्वभिनयमात्रमिति संप्रदायः। अधिकं त्वन्यत्र॥

अस्त्ववतारविषयोऽपि तथैव। व्यूहावतारेषु संकर्षणादौ गुणद्वयवत्त्वमेव दिव्यशास्त्रसंप्रदायादिसिद्धम्। अतस्तत्र कथं दिव्यत्वं परिपूर्णत्वं वेत्यत्र—**व्यूह इत्यादि**। **संकर्षणादौ व्यूहे**=संकर्षणप्रद्युम्ना-

[अस्त्रभूषणादौ नानाविधत्वोपपत्तिः]

**215. शास्त्रादीनां प्रवृत्तिः प्रतितनु नियता स्याद्धि संकर्षणादौ जीवादौ या विभज्याभिमतिरिह लयोत्पत्तिरक्षाविधिश्च ।**

निरुद्धरूपेषु व्यूहेषु **गुणनियतिः**=गुणद्वयव्यवस्था, **अभिव्यक्तिवैषम्यमात्रात्** गुणद्वयव्यवस्था, न त्वितरगुणानामभावः । कथमिदं ज्ञायत इत्यत्र—**वृद्धिह्रासाद्यभावात्**=आधिक्यन्यूनत्वादीनां परमात्मन्यसंभवात् 'न कर्मणा वर्धते नो कनीयान्' इति हि श्रुतिः । वृद्धिह्रासाद्यभावो वा कथमित्यत्र—**स हि भगवान् सदा पूर्णषाड्गुण्यशाली**=नित्यमेव षड्गुणपूर्णो हि **भवति** । अतो गुणद्वयस्याधिकप्रकाशः, इतराणां चतुर्णां न्यूनप्रकाशमात्रम्, न त्वभावः । अतश्च भगवान् सर्वत्र सर्वदैकरूप एव ॥

वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसंज्ञकाश्चत्वारो व्यूहरूपाः । एतद्विचारः समनन्तरमेव (स्लो.71) भविष्यति । भगवान् वासुदेवः ज्ञानशक्तिबलैश्वर्यवीर्यशक्तिरूपषाड्गुण्यपरिपूर्णः । 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥' (वि.पु.6-5-79) इति पराशरः । भगशब्दः षाड्गुण्यवाचीत्यपि 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसःश्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भगइतीरणा ॥' (वि.पु.6-5-74) इति पराशरः । चातुर्वर्ण्यादित्वात् षाड्गुण्यमिति । वासुदेवस्य षड्गुणपरिपूर्णत्वेऽपि सङ्कर्षणप्रद्युम्नादीनां न तथात्वमित्यापाततः प्रतीयते । सङ्कर्षणादयः खलु सृष्ट्यादिकर्तारः । पौराणिकैर्यथा ब्रह्मविष्णुमहेश्वराः सृष्टिस्थितिलयकर्तार उच्यन्ते, तथा अनिरुद्धः सृष्टेः, प्रद्युम्नः स्थितेः, सङ्कर्षणः संहारस्य च कर्तेत्युच्यते पाञ्चरात्रिकैः । अतस्तदनुगुणतया ज्ञानशक्त्यादिगुणेषु द्वौद्वौ गुणौ तत्तत्कार्यनिर्वाहकौ वर्ण्येते । ज्ञानं बलं च सङ्कर्षणस्य, ऐश्वर्यवीर्यौ प्रद्युम्नस्य, शक्तितेजसी अनिरुद्धस्येति व्यवस्थितौ द्वौ द्वौ गुणौ । तथोक्तम्—'षाड्गुण्याद्वासुदेवः पर इति स भवान् मुक्तभोग्यो बलाढ्यात् बोधात्सङ्कर्षणस्त्वं हरसि, वितनुषे शास्त्रम्, ऐश्वर्यवीर्यात् । प्रद्युम्नः सर्गधर्मौ नयसि स भगवन् शक्तितेजोऽनिरुद्धो बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥' (श्रीरङ्ग.स्तवः-उ.श.39) इति ॥

एवं च वासुदेवे षण्णां गुणानां सत्त्वेऽपि इतरेषु त्रिषु गुणद्वयस्यैव स्थित्या कथं पूर्णत्वं इत्याक्षेपे, गुणद्वयस्य पूर्णाभिव्यक्तिः इतरचतुर्गुणानां न्यूनत्वमात्रं न त्वभावः । यथा त्रिगुणद्रव्येषु सात्त्विकराजसतामसविभागे सत्यपि, एकस्याधिक्यम्, इतरयोरपि सत्त्वं संमतम्, तद्वदित्यभिप्रायः ॥ ६९ ॥

गुणवैषम्यवत् कार्यवैषम्यमपि ज्ञेयमिति प्रतिपादयति—**शास्त्रादीनामित्यादि** । **शास्त्रादीनां प्रवृत्तिः**=शास्त्रप्रवर्तनम्, धर्मनयनम्, तत्त्वगमनं च **संकर्षणादौ हि**=संकर्षणादिषु, संकर्षणेन शास्त्रप्रवर्तनम्, प्रद्युम्ने धर्मनयनम्, अनिरुद्धे तत्त्वगमनमिति **प्रतितनु**=प्रत्येकं प्रत्येकं त्रिषु मूर्तिषु **नियता**=व्यवस्थिता **स्यात्** । एवं **जीवादौ**=जीवमनोहंकाररूपेषु या **विभज्य**=प्रत्येकं विभागेन **अभिमतिः**=अभिमानश्चाभिहिता, जीवाभिमानी संकर्षणः, मनोऽभिमानी प्रद्युम्नः, अहंकाराभिमानी अनिरुद्धश्च अभिहितः । एवम् **इह**=मूर्तित्रये **लयोत्पत्तिरक्षाविधिश्च**=लयस्य=संहारस्य, उत्पत्तेः=सृष्टेः, रक्षायाः=स्थितेश्च

तत्तद्विद्याविशेषप्रतिनियतगुणन्यायतस्तौ तु नेयौ
सर्वस्यैकोऽभिमन्ता स हि सकलजगद्व्यापृतिष्वेककर्ता ॥ ७० ॥

**[व्यूहरूपभेदविमर्शः]**

216. त्रिव्यूहःक्वापि देवः क्वचिदपि हि चतुर्व्यूह उक्तस्तदेवं
व्याघातेऽन्योन्यबाधात् उभयमिदमसत्कल्पनामात्रमस्तु ।
तत्राद्ये व्यूहभेदे त्रियुगगुणतया चिन्तनीये परस्मात्
युक्ता भेदाविवक्षा तदनुपगमने तत्त्वसंख्यादिबाधः ॥ ७१ ॥

---

**विधिः**=विधानञ्च व्यवस्थिततया क्रमशः संकर्षणप्रद्युम्नानिरुद्धानां त्रयाणामभिहितम् । एवमेषां परस्पर-वैषम्याभिधानात् त्रयाणामपि समत्वं कथं स्यादित्यभिप्रायः ॥

'स्यात्' इत्यनेन सूचितम् उपकारभेदे, कार्यभेदे, अभिमानभेदे च विरोधाभावं प्रतिपादयति—**तत्तदित्यादि**। **तत्तद्विद्याविशेषे**=वैश्वानरदहरादिनानाविधब्रह्मविद्यासु प्रतिनियता ये परमात्मगुणाः तेषां यो न्यायः—गुणोपसंहारपादे (ब्र.सू.3-3पादे) प्रदर्शितः, तादृशन्यायतः **तौ तु**=कार्यभेदादिः **नैयौ**=ज्ञेयौ। अनन्तकल्याणगुणगणसागरस्य अनन्तानन्तशक्तिपरिबृढस्य परमात्मनः साकल्येनोपासनं न केनाप्यल्पज्ञेन जीवेन कर्तुमशक्यमित्यवश्यापेक्षिताः कतिपयगुणा एव तत्तद्विद्यास्वनुसन्धातुं शक्या इति गुणोपसंहारपादे सूत्रकारेण व्यवस्थापितम् । एवमुपासनाभेदेऽपि प्राप्यस्य ब्रह्मणस्तु तारतम्यं नास्त्येवेत्यपि न्यरूपि । तेनैव न्यायेन (जीव.31) अत्रापि नयनं कर्तव्यमिति न कश्चन विरोधः ॥

वस्तुतस्तु **सर्वस्य**=जगति विद्यमानसर्वपदार्थजातस्य **एकः**=परमात्मा **स हि अभिमन्ता**, **सकलजगद्व्यापृतिषु**=सर्वेषु जगद्व्यापारेषु सृष्टिस्थितिसंहारेषु, शास्त्रप्रवर्तनधर्मनयनतत्त्वगमनेषु, जीवमनोऽहंकाराभिमानिषु **एककर्ता**=अद्वितीयः कर्ता । परब्रह्मपदवाच्यः वासुदेव एक एव सर्वनिर्वोढा, बुद्ध्यारोहसौकर्याय स एव नानारूपः तत्तज्जीवानां हिताय भिन्न इवात्मानं प्रदर्शयति तत्तद्भावनानुगुणम् । अथापि सर्वत्र सः नित्यपरिपूर्ण एवेति सर्ववस्तुषु पूर्णत्वसमर्थनेनैव समर्थितो ज्ञेय इति भावः ॥ ७० ॥

अन्यमपि विरोधाभासं भगवच्छास्त्रे प्रतीयमानं परिहरति—**त्रिव्यूह इत्यादि**। **क्वापि**=कुत्र चित्प्रकरणे तु **देवः**=भगवान् **त्रिव्यूहः**=संकर्षणप्रद्युम्नानिरुद्धरूपव्यूहत्रयरूपः **उक्तः** । **क्वचिदपि हि**=कुत्रचित्प्रकरणे तु **चतुर्व्यूहः**=उक्तत्रिभिस्सहादौ वासुदेवं योजयित्वा चतुर्व्यूहरूपी **उक्तः** । **तत्**=तस्मात् **एवम्**=उक्तरीत्या परस्परविरोधः दुष्परिहरः । अतस्तत्परिहाराय—**एवं व्याघाते, अन्योऽन्यबाधात्**=परस्परं बाधात्, विनिगमना-विरहात् **इदम् उभयम्**=त्रिव्यूहचतुर्व्यूहपक्षद्वयमपि **असत्**=नास्त्येव । वचनानि दृश्यन्ते किलेति चेत्—**कल्पनामात्रम् अस्तु**=उपासकबुद्ध्यनुगुणं तैस्तैः कल्पितमिदं सर्वमित्येवास्तु । अतो व्यूहादिकं नास्त्येव॥

इदं निराकरेति—**तन्नेति**। विरोधे स्पष्टे सति, कथं तन्नेतीति चेत्, **आद्ये व्यूहभेदे**=वासुदेवाख्ये प्रथमे व्यूहविशेषे **त्रियुगगुणतया**=षाड्गुण्यपरिपूर्णतया **चिन्तनीये**=उपास्ये सति **परस्मात्**=परवासुदेवात्

[भगवद्रूपेषु परस्परविरोधपरिहारः]

217. मूर्तीनां मूलमूलिप्रभृतिषु बहुधा वैपरीत्यप्रतितेः
वर्णादौ बीजतादिव्यवहृतिवदियं वर्णना भावनार्था ।
मैवं कालादिभेदात् प्रशमितविहतौ कल्पितत्वं न कल्प्यम्
नो चेद् ब्रह्माद्युदन्तेष्वपि विषमकथाभेदवैयाकुली स्यात् ॥ ७२ ॥

---

**भेदाविवक्षा युक्ता,** उभयवासुदेवयोरपि समानत्वात् । **तदनुपगमने**=उक्तनिर्वाहानङ्गीकारे **तत्त्वसंख्यादिबाधः**= तत्त्वानां संख्यादावपि विरोधस्स्यादिति सर्वमपि त्याज्यमापद्येत । यथा छान्दोग्ये पृथिव्यप्तेजसां त्रयाणामेव सृष्टिः श्रूयते । तैत्तरीये पृथिव्यप्तेजोवाय्वाकाशानां पञ्चानां सृष्टिः श्रूयते । एवं परस्परविरोधात् उभयमपि त्याज्यमापद्येत । श्रुतेस्त्यागासंभवात् यथाकथञ्चित्समन्वयः आवश्यकश्चेत्, एवमेवात्रापि 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति वेदतुल्यतया संमते पाञ्चरात्रेऽपि विरोधे प्रतीयमाने नान्यतरत्यागो युक्तः, किन्तु यथाकथञ्चित्समन्वय एव ज्ञेयः । परवासुदेवे व्यूहवासुदेवे च षाड्गुण्यपरिपूर्त्या तयोरभेदविवक्षया व्यूहत्रित्व-वादः प्रसृतः । गुणपूर्त्या देहसाम्ये किमर्थः वासुदेवद्वयाङ्गीकारक्लेश इति चेत्, प्रमाणस्य तथात्वाद्वयं किं कुर्मः, यथाप्रमाणं द्वयमप्यङ्गीकर्तव्यमिति केचित् । अन्ये तु—परवासुदेवः व्यूहवासुदेवात् भिन्नः सर्वोत्तीर्ण-स्वरूपः । व्यूहवासुदेवस्तु सृष्टिस्थितिलयव्यापारनिर्वाहार्थं यथासंख्यम् अनिरुद्धप्रद्युम्नसंकर्षणरूपेणावतर्तुं सन्नद्धस्तदनुगुणज्ञानशक्त्यादिसंपन्नस्वरूपः परमात्मेति विशेषमाहुः ॥ ७१ ॥

भगवच्छास्त्रे पुनः प्रकारान्तरेण विरोधमाशंक्य परिहरति—**मूर्तीनामित्यादि । मूर्तीनाम्**=भगव-न्मूर्तीनाम् **मूलमूलिप्रभृतिषु**='वासुदेवात्संकर्षणो नाम जीवो जायते' इत्यादिमूलमूलिभावादिषु **बहुधा**= अनेकप्रकारतः **वैपरीत्यप्रतीतेः**=विपरीतत्वप्रतिपादनात् **वर्णादौ**=सितरक्तादिरूपेषु च वैपरीत्यप्रतीतेश्च, आदिपदेन भुजानां वर्णानां भेदादेर्ग्रहणम् । द्विभुजचतुर्भुजाष्टभुजत्वादिवैषम्यं दृश्यते । अथवा, 'प्रभृति'पदेनैव वर्णस्यापि ग्रहणम्; वर्णादौ इत्यस्योपर्यन्वयः । तथा च मूलमूलिभाववर्णभुजादीनां वैषम्यप्रतीतेः, इदं सर्वं **वर्णादौ** अकाराद्यक्षरेषु **बीजतादिव्यवहृतिवत्**=बीजत्वव्यवहारवत् इयं वर्णना **भावनार्था**=तथा भावनीयमित्येतन्मात्रार्था, न तु वास्तविकी । न हि 'अं बीजम् आं शक्ति'रित्यादौ अकारादीनां तत्तद्बीजत्वं मुख्यं भवितुमर्हति । अतस्सर्वं कल्पनामात्रमिति चेत्—**मैवम्** इति । कथं विरोधपरिहार इत्यत्र—**कालादिभेदात्**=कृतयुगादिकालभेदात् अधिकारिभेदाद्वा **प्रशमितविहतौ**=विरोधपरिहारे संभवति **कल्पितत्वम्**=मिथ्यात्वपर्यायं केवलकल्पितत्वम् **न कल्प्यम्**=न निर्णेयम् । **नो चेत्**=एवमनङ्गीकारे **ब्रह्माद्युदन्तेष्वपि**=चतुर्मुखेन्द्राग्न्यादिनानाकथास्वपि **विषमकथाभेदवैय्याकुली**=विषमानां=विलक्षणानाम् कथाभेदानाम्=कथाविशेषाणामपि व्याकुलत्वं स्यात् । चतुर्मुखस्य कुत्रचित् ललाटजत्वं कुत्रचित् नाभिजत्वमित्या-दिवैरूप्यं दृश्यत इति विरोधः । अत्रापीष्टापत्तौ भिक्षुपादप्रसरणन्यायेन सर्वमेव मिथ्या भवेदिति सर्वमपि परि-त्याज्यं भवेदिति परमनास्तिक्य एव पर्यवसानं भवेत् । अतस्सर्वं यथाकथञ्चिन्नेयम्, न त्याज्यम् ॥ ७२ ॥

[पाञ्चरात्रवचनेषु विरोधपरिहारः]

**218. ईशस्य व्यष्टिभेदान् अभिदधति मनोवाङ्मयादीन् यदन्ये**
**तत्र त्रेधा यदीष्टा विकृतिरविषया निर्विकारागमाः स्युः ।**
**नित्यत्रित्वे तु नैकेश्वरनियमगतिः भ्रान्तिसिद्धे विभागे**
**मायादायादपक्षः श्रुतिरपि नियतैरस्त्वधिष्ठानभेदैः ॥ ७३ ॥**

[परमात्मरूपेषु विरोधपरिहारः]

**219. युक्तिः प्रश्नोत्तरादेः न हि पुरुषभिदां बुद्धिभेदं च मुक्त्वा**
**तस्मात् व्यूहादिभेदे कतिचन पुरुषाः स्युः परेणानुबद्धाः ।**

---

पुनरपि विषयान्तरे पाञ्चरात्रसंहितासु विरोधमाशङ्क्य परिहरति—**ईशस्येत्यादि**। **अन्ये**=केचन **मनोवाङ्मयादीन्**=मनोमयप्राणमयवाङ्मयाख्यान् **ईशस्य**=परमात्मनः **व्यष्टिभेदान्**=परिणामविशेषरूपान् **अभिदधति**=वदन्ति—इति पूर्वपक्षः । संकर्षणो जीवाभिमानी प्राणमयः । प्रद्युम्नो मनोऽभिमानी मनोमयः । अनिरुद्धोऽहंकाराभिमानी वाङ्मयः । फेनबुद्बुदतरङ्गन्यायेन समुद्रो यथा परिणमते, तथैव 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे.1-12) इति परब्रह्मणः परिणामरूपाश्चिदचिदीश्वरा इति प्राचीनाद्वैतिनः स्वरूपपरिणामवादिनो वदन्ति । तथैता अपि त्रिमूर्तयः वासुदेवपरिणामभूता इति वर्णयन्ति ॥

तदेतत्, वासुदेवपरिणामः किमचिद्वत् स्वरूपपरिणामः? उत जीववत् स्वभावपरिणामः? अथवा एकस्य सूर्यस्य जले प्रतिबिम्बवत् प्रतीतिमात्रम्? इति विकल्प्य प्रतिवक्ति—**तत्रेत्यादिना** । **तत्र**=एवं परिणामे **त्रेधा विकृतिः**=त्रिरूपेण स्वरूपान्यथाभाव एव **यदि इष्टा**=संमता, तर्हि **निर्विकारागमाः**= 'निष्कलं निष्क्रियं शान्तं निरवद्यम्' (श्वे.6-19) इत्यादयः ब्रह्मणः सकलदोषरहितत्ववादिन्यः श्रुतयः **अविषयाः**=अर्थशून्याः स्युः । जीववत् स्वभावपरिणामे, **नित्यत्रित्वे तु**=स्वभावान्यथाभाववादे स्वरूपस्य त्रेधावस्थानस्य नित्यत्वे तु **एकेश्वरनियमगतिः न**='एको देवः', 'एकः शास्ता न द्वितीयोऽस्ति कश्चित्' इत्यादीनां परमात्मैकत्वप्रतिपादकश्रुतीनां क्रमः बाधितो भवेत् । बिम्बप्रतिबिम्बवादरूपतृतीयपक्षे—**विभागे**= एवं त्रेधा विभागे **भ्रान्तिसिद्धे**=केवलकल्पितत्वेन ब्रह्मविवर्तवाद इव भ्रमसिद्धे सति **मायादायादपक्षः**= मायावादसहोदरः सर्वमिथ्यात्वपक्षः प्रसजति । अतोऽयं पक्षो न समीचीनः । ननु तर्हि परमात्मन एव विकारप्रतिपादकानां 'मनोमयः' इत्यादिश्रुतीनां कथं निर्वाहः? इत्यत्र—**श्रुतिरपि**=मनोमयत्वादिश्रुतिरपि **नियतैः**=व्यवस्थितैः सत्यैः **अधिष्ठानभेदैः**=तत्तदधिष्ठानविशेषैः **अस्तु**=प्रवृत्ता भवतु । न तु ईश्वरस्वरूप एव समष्टिव्यष्टिकल्पना युज्यते । प्राचीनः स्वरूपपरिणामवादः भर्तृप्रपञ्चसंमतः, अर्वाचीनश्च स्वरूप-परिणामवादः यादवप्रकाशसंमतश्च पूर्वमेव बहुधा निरस्तः ॥ ७३ ॥

परव्यूहविभवादयस्साक्षात्परमात्मन एव रूपभेदा इत्येतदाक्षिप्य समाधत्ते—**युक्तिरित्यादिना** । **प्रश्नोत्तरादेः**=पाञ्चरात्रसंहितासु दृश्यमानस्य, परव्यूहादिरूपेषु परस्परं प्रश्नोत्तरादेः, आदिपदेनोपदे-श्योपदेशकत्वादिकं ग्राह्यम्, **पुरुषभिदाम्**=पुरुषभेदम् बुद्धिभेदम् च **मुक्त्वा**=परित्यज्य **न युक्तिः**=युक्तत्वं

**तत्र स्वच्छन्दलीलः स्वयमभिनयति स्वान्यतां सर्ववेदी**
**तद्वत् शिष्यादिवृत्तिप्रसृतिमिह सतां शिक्षयन् सानुकम्पः ॥ ७४ ॥**

**[अद्भुतवृत्तान्तादीनां प्रश्नातीतत्वम्]**

220. **विश्वान्तर्वर्तिबालोदरगतमखिलं कस्य विश्वासभूमिः ?**
**तस्मात् औपेन्द्रमीदृक् भवतु रसवशादिन्द्रजालं प्रवृत्तम् ।**
**मा भूत् आश्चर्यशक्तेरवितथमिदमित्येव सर्वाप्तसिद्धेः**
**व्याघातस्योपशान्तिः तदनुगुणदशाभेदयोगादिभिः स्यात् ॥ ७५ ॥**

---

न हि वक्तुं शक्यम् । तस्मात् व्यूहादिभेदे सहिताः, मिश्रिता वा **पुरुषाः स्युः**=भवेयुः । अज्ञाने खलु प्रश्नः। साक्षात्परमात्मरूपत्वे तेषां न ह्यज्ञानसंभवः । अतः एतानि रूपाणि अज्ञेन जीवेन मिश्रितानि भवेयुः, न तु परमात्मनः शुद्धरूपाणि—इत्याक्षेपः ॥

तदेतत्प्रत्याह—**तत्रेति** । प्रश्नोत्तरादिकं तर्हि कथमिति चेत्, दुर्बलमतीनां समाधानायाह—**स्वच्छन्दलीलः**=स्वेच्छया स्वयं लीलारसमनुभवन् **सर्ववेदी**=सर्वज्ञः **सानुकम्पः**=अनवधिकदयापरतन्त्रो भगवान् **तद्वत्**=स्ववत्=स्वयं यथा तथैव **शिष्यादिवृत्तिप्रसृतिम्**= गुरुशिष्यादिपरंपराक्रमादिकम् **इह**= एतल्लोके **सताम्**=साधूनां **शिक्षयन्**=परिष्कृत्य बोधयन् **स्वान्यताम्**=रूपभेदेन तिष्ठन् स्वयम् **अभिनयति**=प्रश्नोत्तरादिकम् नाटक इवाभिनयति । लोकानुग्रहार्थमेव खलु पाञ्चरात्राद्यागमोपदेशः । अतो गुरुशिष्यक्रममपि शिक्षयितुम् एवमनेकोपायाननुतिष्ठति स भगवानित्यर्थः ॥

'एकत्वे सति नानात्वं नानात्वे सति चैकता । अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति ॥'
अथापि चापलं नृणाम् सर्वं ज्ञास्याम्यहं स्वतः । इति माया दुस्त्यजैव न गच्छति पिशाचिका ॥
सर्वमन्यत्परित्यज्य सर्व तत्पादपद्मयोः । समर्प्याऽस्ते निर्भरो यः स धन्यः सुकृती सुखी ॥ ७४ ॥

आश्चर्यवृत्तान्तेषु प्रसक्तां शङ्कां परिहरति—**विश्वान्तरित्यादि । अखिलम्**=ब्रह्माण्डादिकं सर्वमपि **विश्वान्तर्वर्तिबालोदरगतम्**=एतज्जगदन्तर्गतस्यैव कस्यचित् बालस्योदरे वर्तमानम् इत्यादिकम् **कस्य**=कस्य वा बुद्धिमतः **विश्वासभूमिः**=विश्वासविषयः स्यात् । तस्मात् **ईदृक्**=एतादृशम् आश्चर्यवृत्तान्तादिकम् **रसवशात्**=लीलारसवसात् प्रवृत्तम् **औपेन्द्रम्**=उपेन्द्ररूपेण भगवता उपदिष्टम् **इन्द्रजालं भवतु**=माया-जालमिति प्रसिद्धं केवलं मिथ्यैव भवतु । रसवसात्=रसशास्त्रेषु वर्णितं पारदस्याद्भुतशक्तिरूपमिति वाऽर्थः । श्रीकृष्णेन यशोदायै स्वमुखे प्रदर्शितं विश्वरूपं वा, मार्कण्डेयाय प्रदर्शितं वटपत्रशाय्युदरे विश्वरूपम्, युद्धरङ्गे अर्जुनाय प्रदर्शितं विश्वरूपं वेत्यादिकमत्र ग्राह्यम् ॥

अद्भुतम् अद्भुतमेव । तत्र विचारकरणं मौर्ख्यमेव स्यादित्यभिप्रायेण एतत्प्रत्याह—**मा भूदित्यादिना । मा भूत्**=उक्तरीत्या सर्वं मिथ्येति मा भूत् । कुतः? **आश्चर्यशक्तेः**=अत्यद्भुतशक्तियुक्तस्य भगवतः **इदम्**=एतादृशं सर्वम् **अवितथम्**=सत्यम् इत्येव **सर्वाप्तसिद्धेः**=सर्वेषामप्याप्तानां पराशरपाराशर्यादीनां

[भगवतस्सर्वज्ञत्वेऽनुपपत्तिपरिहारः]

221. **यद्भावित्वेन बुद्धं भवति तदथ चातीतरूपं तदस्मिन्**
**उल्लेखो भिद्यते चेदकरणजमतेरैकरूप्यं प्रकुप्येत् ।**
**प्राचीनोल्लेख एव स्थितवति तु गते भाविबुद्धिर्भ्रमः स्यात्**
**मैवं पूर्वापरादिक्रमनियतसदोल्लेखसत्यत्वसिद्धेः ॥ ७६ ॥**

निर्णयात् । **व्याघातस्य**=विरोधस्य **उपशान्तिः**=समनं तु **तदनुगुणदशाभेदयोगादिभिः**= तत्तद्घटनानुगुणैः अवस्थाभेदसंबन्धादिभिः स्यात् ॥ ७५ ॥

भगवतस्सर्वज्ञत्वविषये संभवन्तीमाशङ्कामुपवर्ण्य परिहरति—**यदित्यादि** । **यत्**=यद्वस्तु **भावित्वेन**=आगामित्वेन=भविष्यत्त्वेन **बुद्धम्**=ज्ञातम् **भवति अथ तत्**=तदेव वस्तु **भवत्**=वर्तमानं भवति, **अथ च**=अपि च तदेव **अतीतरूपम्**=भूतरूपम् च भवति । **तत्**=तस्मात्=एकस्यैव वस्तुनः कालत्रय संबन्धस्यावर्जनीयत्वात् **अस्मिन्**=नित्यसर्वज्ञस्य परमात्मनः संकोचविकासरहिते ज्ञाने **उल्लेखः**= विषयीकारानुवादः **भिद्यते चेत्**=भिन्नभिन्नरूपो यदि भवेत्, तदा **अकरणजमतेः**=करणाजन्यस्य नित्यस्य ईश्वरज्ञानस्य **ऐकरूप्यम्**=सततैकरूपता=सङ्कोचविकासरहितता **प्रकुप्येत**=विरुद्ध्येत । एतद्दोषपरिहाराय उल्लेखभेदं परित्यज्य, **प्राचीनोल्लेख एव**=प्राचीने=प्राथमिके भावित्वेनैव उल्लेख एव **स्थितवति तु**=एकरूपतयैवानुवर्तमाने सति तु **गते**=अतीते, वर्तमाने च वस्तुनि **भाविबुद्धिः**=भावित्वबुद्धिः **भ्रमः**=भ्रम एव स्यात् । तथा चेश्वरस्यापि भ्रमोऽनिवार्यः स्यात् । अतः परमात्मनस्सर्वज्ञत्वं कल्पनामात्रम्—इत्याशङ्का ॥

**अयं भावः**—'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः ।' इति कूटस्थस्य योगिवर्यस्य वाक्यम् सर्वं सदा युगपदेव प्रत्यक्षेण पश्यति भगवान् । तस्य हि स्मृतेः प्रसक्तिरेव नास्ति, तदीयज्ञानस्य नित्यत्वात् सदा सर्वविषयत्वाच्च । एवं सति भूतम्, भविष्यच्च प्रत्यक्षेणेदानीमपि स पश्यतीति वक्तव्यम् । प्रत्यक्षं तु वर्तमानमात्रग्राहि । भविष्यतः भूतस्य नष्टस्य वा वस्तुनः इदानीं ज्ञायमानसमये, किं तानि भविष्यत्त्वेन अथवा भूतत्वेन गृह्येरन्, उत वर्तमानत्वेन? इति प्रश्ने, पक्षद्वयमपि न संभवति, वर्तमाने काले भविष्यत्त्वेन प्रत्यक्षं कथं भवेत्, भविष्यत्कालस्येदानीमभावात् । मानवानां तु भविष्यत्कालिकवस्तुज्ञानं भूतकालिकवस्तुज्ञानं वानुमानरूपं शाब्दं स्मृतिर्वा भवेत् । परमात्मनस्तु सर्वं प्रत्यक्षं सदेत्युच्यते । अतः कथमिदं संभवि? असतः असत्त्वेन प्रत्यक्षे स भ्रम एव भवेत्? प्रत्यक्षं किल वर्तमानविषयकम् ॥

एवं एतत्काले भविष्यद्वस्तु क्रमशः वर्तमानम्, ततो भूतं च भवति । तद्वदेवात्र भूतमपि वस्तु नारिकेलद्वीपवासिनां वर्तमानं भवति, प्लक्षद्वीपवासिनां सूर्यपरिस्पन्दभेदेन भावि भवति । एतानि वस्तूनि परमात्मना कथं ज्ञायेरन्? एकरूपतयैव ज्ञायेरन्? उत भिन्नतया? एकरूपतयैवेति चेत्, भाविनि भूतत्वाद्युल्लेखो भ्रम एव स्यात् । भिन्नरूपतयेति चेत्, नित्यस्य सदा प्रत्यक्षरूपस्य ज्ञानस्यैकरूपत्वावश्यकत्वाद्विरुद्धं स्यात् । अतः सर्वज्ञत्वं कल्पनामात्रमिति पूर्वपक्षः ॥

[भगवतस्सर्वशक्तत्वपरीक्षणम्]

**222. नीलं किंचित् तदानीमरुणमिति न खल्विन्द्रजालादृतेऽद्धा**
**नो चेदेवं विरोधः क्वचिदपि न भवेत् कश्च जैनेऽपराधः ।**
**तस्मादीशो विरुद्धद्वितयमघटयन् सर्वशक्तिः कथं स्यात्**
**मैवं व्याघातशून्येष्वनितरसुशकेष्वस्य तादृक्त्वसिद्धेः ।। ७७ ।।**

---

तदेतन्निराकरोति—**मैवमिति**। तत्र हेतुः—**पूर्वेत्यादिः**। पूर्वापरादिरूपः यः क्रमः, तेन **नियतः**= व्यवस्थितः **सदोल्लेखः**=सार्वकालिकाभिलापः, तस्य **तथैवोल्लेखस्य सत्यत्वस्य सिद्धेः** ।।

**अयमर्थः**—यद्यपि परमात्मनो ज्ञानं नित्यासंकुचितम्, करणानधीनं च। अथापि तत्र भासमानानां विषयाणामागमापायित्वात् तत्तद्विषयसंयोगस्य तदातदैव संभवेन, उल्लेखभेदोऽवर्जनीय एव। अतः तद्ज्ञान-स्यैकरूपत्वाभावेऽपि न कापि हानिः। नित्यास्तु विषयास्सदा भासेरन्नेव, विरोधाभावात्। भूतभविष्यदादिभेदः सूर्यपरिस्पन्दकृतः। अत एव सोऽस्माकमेव भूलोकवासिनाम्, नेतरेषाम्। अत एव खलु पितॄणां अस्मदेको-मासः एकदिनमुच्यते। देवानां च अस्मदेकसंवत्सर एकदिनमुच्यते। अनन्तस्य भगवतस्तु एवं कालभेदा-भावात्सर्वं वर्तमानमेव, अतस्सर्वमपि पश्यति। अथापि देवपितृमानवकालभेदमपि पश्यति। तत्तद्दृष्ट्या कालभेदम्, स्वदृष्ट्या वर्तमानं च तथा तथैवोल्लिखेत्स इति न किञ्चिदपहीनम्। अतः परमात्मनः सदा सर्वज्ञत्वे न कोऽपि विरोधोऽस्मद्बुद्ध्या कर्तुं शक्यः। तद्ज्ञाने तु भिद्येरन् सर्वसंशयाः ।। ७६ ।।

परमात्मनः सर्वशक्तत्वमाशंक्य परिहरति—**नीलमित्यादि**। **किञ्चित् नीलं**=यत्किञ्चिद्वस्तु नीलं यदा वर्तते, **तदानीम्**= तदैव **अरुणमिति**=रक्तरूपं भवतीति चेत्, तत् **इन्द्रजालात् ऋते**=इन्द्रजालविद्यामन्तरा **न अद्धा**=न वास्तवं भवेत्। ऐन्द्रजालिका एव हि विद्यमानमविद्यमानं कुर्वन्ति, अविद्यमानमपि विद्यमानं प्रदर्शयन्ति, तद्वदेव जगदेव स्यात्। भगवांस्तु नैन्द्रजालिकः। अतस्तथा न कुर्यादेव। तथा च स कथं सर्वशक्तः? सत्यं तदेव। भगवान् किल महानैन्द्रजालिकः, मायायाः प्रभुः। मानवा अपि तथा कुर्युश्चेत्, अघटितघटनापटीयसः परमात्मनः कियदेतदिति चेत्, तत्राह—**नो चेत्**=अतः इन्द्रजालमन्तरापि तथा भवेच्चेत्, विरोधः परस्परं क्वचिदपि वस्तुनि न भवेत्। अस्त्वविरोधः, का हानिरिति चेत्, तर्हि—**जैने**=सर्वं सर्वात्मकमिति वादिनि जैने **कश्च**=को वा **अपराधः**? अतस्स एवाङ्गीक्रियताम्, न खण्ड्यताम्। परं तु खण्डनात्—**तस्मात्**=अनेकान्तवादाभावात् **विरुद्धद्वितयम्**=परस्परविरुद्धं द्वयम् **अघटयन्**=अकुर्वन् **सर्वशक्तिः**=बहुव्रीहिः, सर्वशक्तियुक्तः **कथं स्यात्**? तथोक्तिः कुत्रचित् अस्मदपेक्षयाधिकशक्तियुक्तत्वात् स्यात्। सन्ति मानवेष्वपि विचित्रशक्तियुक्ताः केचन भीमादिवत्। को विशेष ईस्वर इति पूर्वपक्षः ।।

निराकरोति—**मैवमिति**। तत्र हेतुः—**व्याघातशून्येषु**=परस्परविरोधरहितेषु विषयेषु **अनितरसुशकेषु**= इतरैः मानवैस्सर्वथा कर्तुमशक्येषु विषयेषु **अस्य**=भगवतः **तादृक्त्वसिद्धेः**= तादृशविचित्रशक्तिमत्त्वस्य **सिद्धेः**=निश्चयात् सर्वशक्तो भगवानित्युच्यत इति। तथा च अघटितघटनाशक्तिर्नाम, देवादिभिरपि घटयितु-

[अवाप्तसमस्तकामत्वस्वरूपम्]

223. संगृह्य ज्ञानशक्ती कतिचन निखिलस्रष्टुरिच्छां तु नैच्छन्
तस्यां द्वेषः क एषामनुमितिशरणानीकनासीरभाजाम्।
श्रुत्या तद्बोधयत्नावभिदधति यदि क्षम्यतामेवमिच्छा
निवार्ह्यं त्वाप्तकामप्रभृतिवचनमप्यान्यपर्योपरुद्धम्॥ ७८॥

मशक्यं घटयतीत्यभिप्रायेणैव। नो चेत्, भगवान् सर्वज्ञश्चेत्, शशशृङ्गं जानाति, न वा? यदि जानाति, तर्हि भ्रान्तस्स्यात्। यदि न जानाति, असर्वज्ञः स्यादित्याक्षेपे, विद्यमानं सर्वं जानातीत्येव वक्तव्यम्। तद्वदेवात्रापि सर्वशक्त इत्यपि ज्ञेयम्॥

**अयमाशयः**—आनन्दमीमांसायां मनुष्यगन्धर्वादारभ्य प्रजापतिपर्यन्तानामानन्दं परिचयार्थं शतगुणितोत्तरक्रमेणाभिधाय, तदुपरि ब्रह्मण आनन्दमुक्त्वा 'यतो वाचो निवर्तन्ते। आप्राप्य मनसा सह' (तै.आ.8) इति ब्रह्मानन्दस्यापरिच्छिन्नतां श्रुतिराह। इदं भगवतो ज्ञानादीनामपि समानम्॥

स्वध्वंसनेऽपि शक्तिः स्यात्? न स्याद्वा परमात्मनः? पक्षद्वयेऽपि दोषो हि स्पष्टः किं क्रियतां वद॥
परा काष्ठाऽविवेकस्य स्यादीदृशविचारणा। स्यादनर्थो महान् नूनं बुद्धिनाशश्च निश्चितः॥
एवमादिविचारैर्हि प्रणष्टा हन्त! हैतुकाः। मा गच्छ तेषां मार्गे त्वं यद्यात्महितमिच्छसि॥
स्वसृज्यविषये शक्तिः संपूर्णा तस्य वर्तते। तावन्मात्रमलं नो हि, मर्यादा तावदेव नः॥
अहंकारः कियानेषां स्वस्वरूपमजानताम्। हन्तैते मान्ति ते शक्तिं क्षमस्वैतान् दयानिधे!॥ ७७॥

एवं प्रसङ्गात् अन्यामपि कांचन विप्रतिपत्तिं निराकरोति—**संगृह्येत्यादिना**। **कतिचन**=केचन तार्किका विद्वांसः **निखिलस्रष्टुः**=सर्वजगत्स्रष्टुः परमात्मनः **ज्ञानयत्नौ**=ज्ञानं प्रयत्नं च **संगृह्य**=अङ्गीकृत्य **इच्छां तु**=इच्छां परम् **न ऐच्छन्**=नाङ्गचकुर्वन्। आवाप्तसमस्तकामः खलु सः। इच्छा हि न्यूनता-सूचिका। सा कथं भवेत् सदा परिपूर्णकामस्य? अतः जगत्सृष्ट्यर्थं प्रयत्नोऽनिवार्यः। प्रयत्ने विषय-सिद्ध्यर्थं ज्ञानमावश्यकम्। अतः ज्ञानयत्नौ पर्याप्तौ सृष्ट्यै इति केचन वैशेषिकाः। **परं तु**—**अनुमितिशरणानीकनासीरभाजाम्=अनुमितिशरणाः**=अनुमित्या एकयैवेश्वरसिद्धिमिच्छन्तः, श्रुतेः स्वतः प्रमाण्यमनङ्गीकृत्येश्वरोक्तत्वादेव प्रामाण्यं वदन्तः, केवलतार्किकाः, तेषाम् **अनीकम्**=सैन्यम्, तस्य **नासीरभाजः**=अग्रेसरप्रतिभटाः तेषाम् **एषाम्**=वैशेषिकाणाम् **तस्याम्**=इच्छायाम् **द्वेषः कः**=कीदृशः? इति नर्मोक्तिः। श्रुत्या 'योऽकामः' (बृ.6-4-6) इति निष्कामत्वश्रुत्या तथा वदामः इति यदि, **ते तद्बोधयत्नौ**=तस्य ज्ञानप्रयत्नौ **यदि अभिदधति**=वदन्ति तर्हि, **एवम्**=श्रुत्यक्तत्वादेव='सोऽकामयत' इति श्रुत्यैव ईश्वरस्य इच्छापि **क्षम्यताम्**=सह्यताम्। ज्ञानयत्नाभ्यामेव निर्वाहे, अधिकतया इच्छाया अङ्गीकारे गौरवम् इति लाघवतर्कवशादिच्छाया न सिद्धिरिति यदि ते ब्रूयुः—इति दृष्ट्या **क्षम्यताम्** इत्युक्तिः। प्रमाणसिद्धे विषये तद्विरुद्धतया न तर्कः प्रसरतीत्यभिप्रायः। तर्हि श्रुतिः कथम्? इत्यत्र—

[भगवतस्सर्वफलप्रदातृत्वादिसमर्थनम्]

**224.** **स्वीकृत्येशानतत्त्वं कतिचन जहतस्तत्प्रसादादिसाध्यं**
**गङ्गाम्भःपञ्चगव्यप्रभृतिवदवदन् पावनत्वादि तस्य।**
**तच्छ्रुत्यादिप्रतीपम् यदपि च फलदं दर्शितं निष्प्रसादं**
**तच्चैतस्य प्रसादादिति हि निजगदुर्धर्ममर्मज्ञचित्ताः ॥ ७९ ॥**

**निर्वाह्यमित्यादि।** **आन्यपर्योपरुद्धम्**=तात्पर्यान्तरेण प्रतिबद्धयथाश्रुतार्थकम् **आप्तकामत्वप्रभृतिवचनमपि**=आप्तकामः इत्यादिश्रुतिवाक्यमपि तदविरोधेनैव निर्वाह्यम्। आप्तपदम् आप्त्यर्हार्थकम् व्यासार्यादिभिः समर्थितम्। 'स्वेच्छायां सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः' इति यद्यपि पूर्वमेवोक्तम्, (श्लो.1), अथापि पूर्वपक्षस्यात्रैव प्रसक्त्या सिद्धवत्कृत्य पूर्वं तथोक्तमिति मन्तव्यम्। 'योऽकामो निष्काम आप्तकामः' इत्यत्रैवोपरि 'आत्मकामः' इति श्रुतेः, स्वार्थकामनैव दोषः, न तु परार्थकामनेत्याशयः। परार्थकामनापि कामनैव खलु। इच्छा हि न्यूनतासूचिकेत्युक्तं त्वयैवानुपदम्। तस्य समाधानं किम्? सा न्यूनता न स्वनिष्ठा। स्वयं तु स सदापूर्ण एव—'पूर्णमदः' (7-1-1) इति श्रुतेः। परार्थमेव यस्सदा चिन्तयति स एव महानुच्यते। अत एव भगवान् 'महतो महीयान्' इत्युच्यते। अत एवायं महान् गुणः॥

नरः स्वार्थपरो लोके गुणदोषौ न वेत्ति सः। त्यज्यतां स्वार्थपरता ततः सर्वं शुभं भवेत्॥ ७८ ॥

अत्यन्तोपयुक्ते परमात्मनः सर्वफलप्रदत्वे प्रसक्तामाशङ्कामनूद्य परिहरति—**स्वीकृत्येत्यादि**। **कतिचन**=निर्गुणवादिनः **ईशानतत्त्वम्**=ईश्वरतत्त्वम् **स्वीकृत्य**=अङ्गीकृत्यापि **तत्प्रसादादिसाध्यम्**=तदीयानुग्रहनिग्रहसाध्यं **फलम् जहतः**=त्यजन्तः **तस्य**=परमात्मनः **पावनत्वादि**=परिसुद्ध्यादिहेतुत्वम् **गङ्गाम्भःपञ्चगव्यप्रभृतिवत्**=गङ्गाजलपञ्चगव्यादिवत् **अवदन्**। निर्गुणवादिनो हि परमात्मनो जगत्स्रष्टृत्वमोक्षप्रदत्वादिकं परमात्मनः स्वरूपप्रयुक्तम्, न तत्संकल्पादिमूलकम्। यथा वा गङ्गाजलस्य परमपावनत्वं सर्वैरुच्यते। न हि तत्र गङ्गा स्वसंकल्पादितरान् पावयति, किन्तु स्वरूपत एव। एवं पञ्चगव्यादेरपि पावनत्वं स्वतः। जडानां हि तेषां नेच्छादिसंभवः। तद्वदेव परमात्मनोऽपि सर्वं सङ्गच्छते इति तेषामाशयः। तदेतत् **श्रुत्यादिप्रतीपम्**=श्रुतिस्मृत्यादिविरुद्धम्। 'धातुः प्रसादात्' (म.न.12) इति कण्ठत एव प्रसादस्याभिधानात्। 'तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' (गी.18-62) 'हार्दानुगृहीतः' (ब्र.सू.4-2-16) इत्याद्यादिपदेन ग्राह्यम्। निर्गुणवादस्य च बहुधा निराकृतत्वात् नानुपपत्तिः। किञ्च—**यदपि च**=क्षीरजलादिकमपि **निष्प्रसादम्**=मध्ये देवताप्रसादादिकमन्तरापि **फलदम्**=वत्सपोषणादिरूपफलप्रदं प्रदर्शितम्, **तच्च**=तदपि **एतस्य**=परमात्मनः प्रसादादेव इति हि **धर्ममर्मज्ञचित्ताः**=महर्षयः **निजगदुः**=अवोचन्। किमधिकोक्त्या! 'पयोम्बुवच्चेत्तत्रापि' (ब्र.सू.2-2-2) इत्यादौ क्षीरस्य वत्सपोषकत्वम्, जलस्य सस्यरक्षकत्वं वा तत्तद्वस्तुस्वभावादेवेति संकल्पापेक्षा कुतः? इत्याशंकायाम्, तेषामपि तथात्वम्

[ईश्वरतत्त्वविचारोपसंहारः]

225. त्रय्यन्तोदन्तचिन्तासहचरणसहैरेभिरस्मिन् परस्मिन्
भक्तिश्रद्धास्तिकत्वप्रभृतिगुणसिरावेधिभिस्तर्कशस्त्रैः ।

परमात्मसंकल्पाधीनमिति हि स्थापयामास भगवान् बादरायणः । एवं सति मोक्षप्रदत्वादौ किमु वक्तव्यम् । अयमेव विशेषः सांख्यपक्षात् बादरायणपक्षस्येत्यवधेयम् । अतस्सर्वं भगवदधीनमेवेत्येव परमास्तिकानां वैदिकानां सिद्धान्तः ॥

**परं त्विदमप्यवधेयमत्र**—यद्यप्युक्तमेतन्न निराक्रियते ; अथापीदमप्यत्र द्रष्टव्यम् । 'पवित्राणां पवित्रं यः' 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' (गी.4-38) । इत्यादीनि वचनान्यपि श्रूयन्त एव । अत एतादृशविषयेषु चर्चैव प्रथमं त्याज्या । स्वानुभव एक एवात्र परमं प्रमाणं भवितुमर्हति । मानवाः प्रायः स्वस्वरूपमेव सम्यङ्न जानन्ति । एवं सत्यप्रमेये वाङ्मनसातीते कथं वृथा विचारं वर्धयन्तीति विचित्रमेव । आगच्छता कालेनानुभविनां क्षाम एव सर्वक्षामहेतुः प्रतिभाति ॥

**परमार्थतस्तु**—आत्मोपासनपरमात्मोपासनयोर्वैलक्षण्यं भगवानेव स्पष्टयति गीतायाम् । विश्वरूपदर्शनानन्तराध्यायारंभे—'अर्जुन उवाच—एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥' (गी.12-1) इति । पूर्वार्धेन साकारोपासना अथवा भक्तिमार्गः पृष्टः । उत्तरार्धेन तु आत्मोपासना, अथवा निराकारमार्गः पृष्टः इति स्पष्टं वर्तते । मार्गद्वयमपीदं उपासनारूपमेव, 'उपासते' इत्युस्योभयत्र समानत्वात् । उभयोरपि फलं यद्यपि समानम् । अथाप्यात्मोपासकाद्भगवदुपासकस्य फले नैर्भर्यम् 'तेषामहं समुद्धर्ता' (गी.12-7) इति कण्ठत एव वदति भगवान् । परमात्मोपासकस्यैव आत्मोपासकापेक्षया युक्ततमत्वमपि स एवाह—'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेताः ते मे युक्ततमा मताः ॥' (गी.12-2) इति । कुत एवमित्यादेर्वैज्ञानिकमुत्तरं त्वन्यत्र । वस्तुतस्तु आत्मोपासनायां न सर्वेप्यधिकृताः । किन्तु अंशपुरुषाणामेव । यतः आत्मा निराकारः । तदुपासनं तु मन्दप्रज्ञानां सर्वथा न संभवितुमर्हति ॥

कैवल्यभगवत्प्राप्त्योः द्वितीयं श्रेष्ठमुच्यते । एतदेव यतःपूर्णं कैवल्यादिति निश्चयः ॥
रहस्यं भक्तियोगे तु महदस्ति विशेषतः । भगवद्भक्तसाधूनां सङ्गात्स्पष्टं भवेदिदम् ॥
अतो विचारं सन्त्यज्य चरेयुस्तप उत्तमम् । एक एव भवेत्पुंसामुपायो ह्ययमेव हि ॥ ७९ ॥

अणीयस्यतर्क्ये परमात्मनि एवं बहुविधविचारसरण्या को वा लाभः स्यादिति शङ्कामन्ते परिहरति—**त्रय्यन्तेत्यादिना** । **त्रय्यन्ताः**=वेदान्ताः, तेषां यः **उदन्तः**=संदेशः=उपदेशः, तस्य **चिन्ता**=विचारः तस्य **सहचरणसहैः**=सहकारीभवनसमर्थैः, **अस्मिन् परस्मिन्**=परब्रह्मणि विषये **भक्तिश्रद्धास्तिकत्वप्रभृतयः ये गुणाः**=उपासकानामत्यन्तोपयुक्ताः, तेषाम् **सिराः**=मर्माणि, तेषां **वेधिभिः**=प्रचोदकैः **तर्कशस्त्रैः**=

**स्वार्थत्वस्वाश्रयत्वस्ववशयतनताद्यूहवर्गोपसर्गः**
**छिद्येताच्छेद्यपूर्वोत्तरसरयुगलस्यूततत्त्वस्थितीनाम् ॥ ८० ॥**

**इति तत्त्वमुक्ताकलापे**

## नायकसरः

तर्करूपैः शस्त्रैः **अच्छेद्यपूर्वोत्तरसरयुगलस्यूततत्त्वस्थितीनाम् अच्छेद्यः**=अप्रकम्प्यः **छिद्येत**—इत्यन्वयः। अच्छेद्याः तत्त्वस्थितयः येषामिति बहुव्रीहिः। **पूर्वसरः**=जडद्रव्यसरः, **उत्तरः**=जीवसरः। एतादृश-सरयुगलप्रतिपादितानां तत्त्वानां याः स्थितयः, तासाम् उपद्रवः कीदृशः? **स्वार्थत्वस्वाश्रयत्वस्ववश-यतनताद्यूहवर्गोपसर्गः** **स्वार्थत्वम्**=स्वशेषत्वम्, न तु परमात्मशेषत्वम् स्वस्य। **स्वाश्रयत्वम्**=स्वतन्त्रत्वम्, न तु परमात्माश्रयत्वम् स्वरूपस्य। **स्ववशयतनता**=स्वाधीनप्रयत्नादिमत्त्वम्। स्वस्य स्वरूपम्, स्वभावश्च स्वहस्त एव वर्तत इत्याकारकविपरीतबुद्धयः, एतत्सबन्धिनः ये **ऊहाः**=तर्काः, तेषां **वर्गः**=समूहः, एतद्रूपः **उपसर्गः**=उपद्रवः **छिद्येत**=नश्येत ॥

'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वे.1-12, 1-6) इत्यादौ हि चिदचिदीश्वरतत्त्वत्रयज्ञानममृतत्वप्राप्तिहेतुर्वर्णितम्। ग्रन्थादावेवेदं 'शिष्टा जीवेशतत्त्वप्रमितियुतपरोपासना मुक्तिहेतुः' (जड.4) इत्युक्तम्। असंकीर्णं तत्त्व-त्रयज्ञानं च श्रवणमनननिदिध्यासनसाध्यमिति 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.4-4-5 & 6-5-6) इत्यादावुक्तम्। अतश्च बुद्धिजीविनो मनुष्यस्य देहात्मभ्रमः, स्वतन्त्रात्मभ्रमश्चेति भ्रमद्वयनिवृत्तिस्तत्त्वत्रय-ज्ञानदेवेति एवं त्रिभिस्सरैः त्रयं कूलंकषं विचारितम्। अतस्सार्थकोऽयं विचार इत्याशयः। 'उपयुक्तेषु वैशद्यं त्रिवर्गनिरपेक्षता। करणत्रयसारूप्यमिति सौख्यरसायनम् ॥' इति ह्युद्घोषयन्त्येत आचार्याः ॥ ८० ॥

निर्विशेषं निराकारं निर्गुणं निरनुग्रहम्। निरीहं च वदन्ति त्वां केन धैर्येण तु प्रभो! ॥
निर्गुणस्य पदस्यैतै गुणातीतपदस्य च। अर्थभेदं न जानन्ति कथमित्येतदद्भुतम् ॥
भौतिकप्रज्ञयैवैते वेत्तुमिच्छन्त्यहो बुधाः। तान् सर्वान् सर्वदेवेश! कृपया स्ववशे कुरु ॥
'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥'
शुक एवं वदत्येव कथं त्वां निर्गुणं विदुः? अधीयताम् द्रुतं भागवतं कल्मषनाशनम् ॥
स्वस्वरूपज्ञानमेव संपाद्यं प्रथमं मतम्। विहायैतत् भवेत्कस्मै फलायेतरसर्वधीः ॥

सर्वाणि शास्त्राणि समागतानि यत्प्राप्तिलक्ष्यानि हिताय पुंसाम्।
तस्मै नमस्सर्वजगद्गुरो! ते शरण्य! सर्वेश्वर! दीनबन्धो! ॥

**इति तत्त्वमुक्ताकलापव्याख्यायां सर्वङ्कषाख्यायाम्**

## नायकसरः



# बुद्धिसरः



[ज्ञानं स्वयं प्रकाशते]

226. धीत्वात् वेद्मीति सिद्धा स्वयमितरमतिब ुद्धिलक्ष्मादिधीवत्
यद्वा सर्वज्ञधीवत्; न स मतियुगवान्; नापि चैकोनवेदी ।
नो चेत्, धारामतौ सा प्रथममपि सती नावबुद्धेति धीः स्यात्
स्वस्यां वृत्तेर्विरोधोऽप्युपशमनमियादुक्तदृष्टान्तनीत्या ॥ १ ॥

---

क्रमप्राप्तं बुद्धितत्त्वं निरूपयितुमुपक्रममाणः, तस्याः स्वयंप्रकाशत्वं प्रथमं प्रदर्शयति । उद्देशो लक्षणम्, परीक्षा चेति निरूपणक्रमोऽभियुक्तैः अभिहितः (न्या.भा.1-1-2) । तत्र नाम्ना पदार्थसंकीर्तनम् 'उद्देशः' । उद्दिष्टस्येतरव्यावर्तकधर्मकथनम् **'लक्षणम्'** । लक्षणमिदं युज्यते नवेत्यादिविचारः **'परीक्षा'**। ग्रन्थारम्भ एव 'द्रव्याद्रव्यप्रभेदात्' (जड.6) इत्यादिनोद्देशोऽभिहितः । अनन्तरम् 'ज्ञातुर्ज्ञेयावभासो मतिः' इति लक्षणमप्यभिहितम् । अथ लक्षितस्य परीक्षामुपचिक्रमिषुः प्रथमं तत्र प्रमाणं प्रदर्शयति—**धीत्वादित्यादिना** । व्यवसायानुव्यवसायभेदवादिनो वैशेषिकादयः ज्ञाने स्वविषयकमनुव्यवसायमेव प्रमाणं वदन्ति । तन्निराकर्तुं तस्य स्वप्रकाशत्वं प्रथमं प्रदर्शयति । अपि च पूर्वम् आत्मनः स्वयंप्रकाशत्वसाधनप्रकरणे (जीव.6) इत्युक्तम् । तत्र च सर्वार्थसिद्धौ 'ज्ञानस्य स्वप्रकाशत्वं साधयिष्यते' इति चानुगृहीतम् । अतो बुद्धेरात्मधर्मत्वसाधनस्यावश्यकत्वेऽपि प्रथमं तत्स्वप्रकाशत्वसाधनेनैव तद्विचारमुपक्रमते—**धीत्वादित्यादि**। **इतरमतिः**=विमतं धर्मभूतं ज्ञानम्, **इतरा**=धर्मिभिन्ना इत्यर्थः । **बुद्धिलक्ष्मादिधीवत्**=बुद्धिलक्षणज्ञानादिवत्, **धीत्वात्**=ज्ञानत्वादेव **'वेद्मि' इति स्वयं सिद्धा**='अहमिदं जानामि' इत्यनुभवात् स्वप्रकाशा । बुद्धिर्नाम धर्मभूतं ज्ञानम् 'अहमिदं जानामि' इति धात्वर्थभूतम् । 'जानामि' इत्यस्य ज्ञानाश्रयः इत्येवार्थः, न तु 'ज्ञानस्वरूपः' इति, क्रियावाचिनो हि धातवः । आख्यातस्याश्रयत्वमर्थः । अन्यथा हि आख्यातमर्थशून्यं स्यात् । संभवत्यर्थवत्त्वे अर्थशून्यत्वाङ्गीकारोऽप्रामाणिकः । यद्यपि भावार्थकधातुप्रयोगे 'चैत्रेण सुप्यते' इत्यादौ आख्यातः साधुत्वार्थ इति सर्वसंप्रतिपन्नम्, 'भावे च' इत्यनुशासनात् । अथापि न तथेतरत्र संभवः, अनुशासनाभावादेव=असंप्रतिपत्तेरेव । किञ्च 'जानाति' इत्यादौ हि न तथासंभवः, भावार्थकत्वे 'भावकर्मणोः' (पा.सू.1-3-13) इत्यात्मनेपदविधानात् । यद्यपि भावार्थकल्युडन्तपदम् 'ज्ञानम्' इत्यस्ति, अथापि तिङन्तं तु न भवत्येव । अतश्च ज्ञानाश्रय आत्मा, ज्ञानं तु तद्धर्मभूतमेव । किञ्च जानाति इत्यस्य ज्ञानवान् ज्ञानाश्रयः इति पदाभ्यां विवरणात् ज्ञानं धर्म एव । अधिकं पूर्वमेव गतम् । शिष्टं च पश्चात् भविष्यति । यद्यपि पचति=पाककर्ता इति विवरणात्, जानाति इत्यस्यापि ज्ञानकर्ता इत्येव विवरणमुचितम् । कैश्चिद्दार्शनिकैस्तथा

प्रयुज्यते च । अथापि तावता ज्ञानस्य धात्वर्थस्य न धर्मत्वमपगच्छति । वस्तुतस्तु ज्ञानस्य करणतंत्रत्वेन पुरुषतंत्रत्वाभावात् कर्तृत्वमाश्रयत्वरूपमेवेत्यपि दार्शनिकसंमतमवगन्तव्यम् । अत एवात्राचार्याणां ज्ञानपदापेक्षया बुद्धिपद आदरातिशयः । अत्रापि वक्तव्यं सर्वं पूर्वमेव (जीव.4) विवृतम् ॥

वेदान्तदर्शनं नैव व्यवहारनियामकम् । व्यवहारे भट्टनय इत्यतः स्वीकृतं परैः ॥
नैतद्युक्तं, यतो भट्टो न ऋषिर्नापरोक्षधीः । मीमांसकोऽयं किन्त्वर्धतार्किकस्तु समीरितः ॥
व्यवहारे न्यायनयः इति युक्तं तु मन्महे । प्रतीतिशरणास्त्वेते गौतमीयास्तु कीर्तिताः ॥
प्रतीतितो व्यवस्थाप्यमर्थजातं प्रकीर्तितम् । अतः प्रतीतिशरणा गौतमीया मता बुधैः ॥
यथा प्रयोगशरणाश्शाब्दिका इति च प्रथा । इदं प्रमाणशास्त्रं स्यादार्ष गौतमदर्शितम् ॥
ज्ञानं बुद्धिरतः प्रोक्तं लोकानुभवमूलकम् । आत्मनो धर्मभूतत्वात् जानामीति प्रतीतितः॥
अतो गौतमतन्त्रं तु **लोकायत**मभूत् पुरा । चार्वाकतन्त्रं नैवासीत्पुरेत्यादि निरूपितम् ॥

विषयस्तु गृह्यते ज्ञानेन । ज्ञानं तु केन गृह्यते? इत्यत्र विवदन्ते तीर्थकाराः, परीक्ष्यन्तेऽग्रे ते । तत्रानुव्यवसायेनैव ज्ञानविषयकमानसप्रत्यक्षेण तत्सिद्धिरिति तार्किकाः । परंतु वेदान्तिनां ज्ञानं स्वयंप्रकाश-स्वरूपम्, अन्यथानवस्थापत्तेः । न्यायमते—पदार्थविषयकं ज्ञानं **व्यवसाय** इत्युच्यते । व्यवसायविषयकं **ज्ञानमनुव्यवसाय** इत्युच्यते । इदं च मानसप्रत्यक्षरूपम् । व्यवसायस्यार्थप्रकाशार्थत्वेन, तत्रैव तद्व्यापारोप-रमात् । धर्मिज्ञानस्य तु प्रकाशः स्वाभिमुखः । धर्मज्ञानस्य प्रकाशस्तु विषयाभिमुखः । अत एव विषय-प्रकाशनवेलायामेव धर्मज्ञानस्य प्रकाशः, अत एव च सुषुप्तावस्य प्रकाशाभावात्, तदायमसत्कल्प इत्युच्यते। अतो धर्मज्ञानं न स्वविषयकम् । तदर्थं च व्यवसायान्तरमपेक्ष्यते । व्यवसायमनु जातत्वात्सोऽनुव्यवसाय उच्यते । अनुव्यवसायः केन गृह्यते इति प्रश्नो न्यायनये नोदेति, यत इदं दर्शनं बाह्य एव विषये नैर्भर्यवत्, नान्तरे । अत एव ईश्वरीयं ज्ञानमपि तेषां न ज्ञानलक्षणलक्ष्यम् । वेदान्तिनस्त्वान्तरे यतो नैर्भर्यवन्तः, अत एव व्यवसायानुव्यवसाययोर्भेदं नाङ्गीकुर्वन्ति । अधिकं समयान्तरे ॥

**वस्तुतस्तु**—विषयस्य सिद्धिर्ज्ञानिन । ज्ञानस्य सिद्धिर्यद्यन्येन तर्ह्यनवस्था । अतश्च विषयप्रकाश एव ज्ञानस्यापि प्रकाशरूपः, प्रकाशपदार्थ एव किल ज्ञानम् । निर्विषयस्तु प्रकाशो नास्त्येवेति ज्ञानस्य प्रकाश-कान्तरापेक्षा नास्त्येव । अथवा अन्ततः अनुव्यवसायस्तादृश एवेति, तस्य स्वप्रकाशत्वसिद्धिः ॥

तत्र दृष्टान्तः—**बुद्धिलक्ष्यादिधीवदिति** । बुद्धेर्यल्लक्षणमुच्यते 'व्यवहारहेतुः बुद्धिः' इति, तदिदं लक्षणम्, घटादिज्ञानस्य, एतल्लक्षणज्ञानस्य चेत्युभयोरपि ज्ञानयोः संग्राहकम् । तद्वत् ज्ञानमपि विषयं घटादिकम्, विषयिणमात्मानं च प्रकाशयति । एतदेव स्वप्रकाशत्वम् ॥

ननु हानोपादानादिव्यवहारहेतुभूतं ज्ञानमन्यत् । लक्षणवाक्यजन्यं ज्ञानं चान्यत् । उभयोः परस्परा-पेक्षानियमोऽपि नास्ति । किञ्च बुद्धिलक्षणज्ञानं सामान्यविषयकम्, हानोपादानादिव्यवहारहेतुज्ञानं तत्तद्वस्तु-विशेषविषयकम् । उभयं भिन्नकालिकं च । अतः तस्य स्वप्रकाशत्वाभावे न कापि क्षतिरिति कथं तस्य

दृष्टान्तत्वमित्यतो दुरपह्नवं दृष्टान्तान्तरम् आह—**यद्वेत्यादि**। **सर्वज्ञधीवत्**=सर्वज्ञस्य=जगत्कारणभूतस्येश्वरस्य धीवत्=बुद्धिवत्। 'यस्सर्वज्ञस्स सर्ववित्' (मुं.1-1-9) इति श्रुत्या समष्टिव्यष्टिरूपं सर्वं स जानातीति सिद्ध्यति। ननु जीवीयज्ञानवदीश्वरीयं ज्ञानमपि ज्ञानान्तरेणैव कुतो न गृह्येतेत्यत्राह—**न स** इत्यादि। **सः**=ईश्वरः **मतियुगवान्न**=ज्ञानद्वयवान्न भवति। अनुमानेन सिद्ध्यन् ईश्वरो लाघवतर्कवशान्नित्यैकज्ञानवानेव सिद्ध्यतीति परैरङ्गीकारात्। श्रुत्येकगम्यमीश्वरमभ्युपगच्छतामौपनिषदानामपि न हि ज्ञानद्वयाङ्गीकारे किञ्चित्प्रमाणमस्ति॥

ननु समष्टिविषयकं ज्ञानमन्यत्, व्यष्टिविषयकं चान्यदिति अस्तु ज्ञानद्वयमीश्वरस्य। समष्टिसृष्टिकाले न व्यष्टिपदार्थास्सन्ति, व्यष्टिपदार्थानां ब्रह्माण्डसृष्ट्यनन्तरकालिकत्वात्। अत एव न विनिगमनाविरहोऽपि, समष्टिव्यष्टिभेदस्य प्रामाणिकत्वात्। एवञ्च ज्ञानद्वयसिद्धौ, परस्परग्रहणेन तयोर्भानसंभवात् सर्वज्ञत्वसिद्धिरिति चेत्-न-ईश्वरीयज्ञानस्य नित्यत्वेन, समष्टिविषयकज्ञानेनैव व्यष्टिपदार्थानामपि विषयीकरणेन, अतिरिक्तव्यष्टिविषयकज्ञानासिद्धेः। समष्टिसृष्टिकाले व्यष्टिपदार्थाभावमात्रेण ज्ञानयोर्भेदे, पदार्थानां क्रमश एव सृष्टेः प्रतिपदार्थमेव ज्ञानभेदापत्तिरिति ईश्वरीयं ज्ञानमनन्तमेव स्यात्। जीवीयं ज्ञानमेव नित्यम् एकञ्चेति वदतां मते ईश्वरीयज्ञानस्यैकत्वं कैमुतिकसिद्धम्। ततश्च नित्यं तदेकं ज्ञानमात्मानमपि विषयीकुर्यदेवेति तत्स्वप्रकाशत्वसिद्धिः। अतश्च तद्ज्ञानस्यैकत्वात् सर्वविषयकत्वाच्च स्वविषयकत्वमप्यावश्यकम्। ननु अङ्गुल्यग्रं न ह्यात्मानं स्प्रष्टुमलम्। अतस्सर्वज्ञत्वं तद्व्यतिरिक्तसर्वज्ञत्वमेवेत्यत्राह—**नापीत्यादि**। न ज्ञानद्वयवान्, **नापि चैकोनवेदी**=नाप्येकोनसर्वज्ञः सः। सर्वपदार्थसंकोचे सर्वेऽपि सर्वज्ञपदवाच्या भवेयुः, विनिगमनाविरहेण, एकोनसर्वज्ञः कश्चित्, द्व्यूनसर्वज्ञः अन्यः, त्र्यूनसर्वज्ञः अपर इत्येवंप्रसङ्गात्। अतः ईश्वरीयं ज्ञानं सर्वविषयकम्, स्वविषयकं च। इदमेव स्वप्रकाशत्वमिति तद्दृष्टान्तेन जीवीयज्ञानस्यापि स्वप्रकाशत्वसिद्धिः॥

जीवीयधर्मभूतज्ञानस्य स्वप्रकाशत्वे दृढतरं प्रमाणं प्रदर्शयति—**नो चेदित्यादि**। **नो चेत्**=ज्ञानस्य स्वयंप्रकाशत्वं यदि नाङ्गीक्रियते, किन्त्वनुव्यवसायविषयतयैव तत्सिद्धिः, तदा—**धारामतौ**=अम्बुधारावत् प्रवहन्त्यां मतौ **प्रथमम्**=आदौ **सती अपि**=वर्तमानापि **न अवबुद्धा**='मया नावगता' **इति धीः**=इत्यनुभवः स्यात्। तथा अननुभवात् धारावाहिज्ञानं स्वयंप्रकाशमिति आवश्यकम्। एकस्य ज्ञानस्य स्वयंप्रकाशत्वे सिद्धे तद्दृष्टान्तेनेतरेषामपि ज्ञानानां स्वयंप्रकाशत्वसिद्धिर्निष्प्रत्यूहैवेति ज्ञानानां स्वयंप्रकाशत्वसिद्धिः॥

ननु! **'न ह्यङ्गुल्यग्रमात्मानं स्पृशति'** इति न्यायेन एकस्यैव कर्तृत्वं कर्मत्वं च विरुद्धमित्युक्तं हीत्यत्राह—**स्वस्यामित्यादि**। **स्वस्यां वृत्तौ**=स्वस्यैव स्वविषयत्वे **विरोधोऽपि**=व्याघातोऽपि **उक्तदृष्टान्तनीत्या** ईश्वरीयज्ञानन्यायेन **उपशमनम्**=शान्तिम् **इयात्**=प्राप्नुयात्। दीपादिदृष्टान्तेन चाविरोधः। एकत्रैकस्यैव कर्तृत्वकर्मत्वयोरविरोधे सिद्धे, तेनैव न्यायेनेतरत्रापि तयोरविरोधोऽप्यनुभवानुरोधादङ्गीकर्तव्यः। सर्वत्राबाधितप्रतीतेरेव प्रमाणत्वात्। अतो आत्मवत्, तद्धर्मभूतं ज्ञानमपि स्वयंप्रकाशमेव॥

**इदमत्रावधेयम्**—सांख्याः निर्विशेषाद्वैतिनश्च एवमाहुः। आत्मा चैतन्यमात्रस्वरूपः। चैतन्यपदं हि स्वरूपज्ञानवाचि, न तु आत्मधर्मभूतज्ञानवाचि। ज्ञानपदन्तु मुख्यवृत्त्या स्वरूपचैतन्यवाचि, लक्षणया धर्मभूतज्ञानबोधकं च। बुद्धिपदमेव धर्मभूतज्ञानवाचकम्। त्रिगुणद्रव्यस्याद्यः परिणामः महत्तत्त्वमित्युच्यते। अस्य सत्त्वगुणप्रधानावस्था बुद्धिरित्युच्यते। सत्त्वगुणं हि प्रकाशकम्। धर्मभूतं ज्ञानमपि प्रकाशकमुच्यते। अतः इयमेव बुद्धिः गौणं ज्ञानम्, **वृत्तिरूपं ज्ञान**मिति चोच्यते। बुद्धेः चैतन्यस्य च परस्परच्छायापत्त्या 'अहं जानामि' इति व्यवहारो भवति। अत्र ज्ञाधात्वर्थ एव बुद्धिः। एतादृश'चिच्छायापत्त्या' चैतन्यरूपस्यात्मनः य उपकारः, सः उपलब्धिरित्युच्यते। एवञ्च बुद्धिः, ज्ञानम्, उपलब्धिरिति न समानार्थकाः। **ज्ञानम्**=आत्मस्वरूपम्। **बुद्धिः**=वृत्तिरूपः प्रकृतेरवस्थाविशेषः। **उपलब्धिः**=पुरुषे जायमानः चिच्छायापत्तिफलभूतः प्रकाशः। प्रकृतिपरिणामभूतात् महत्तत्त्वात् 'अहम्' इत्यभिमानहेतुः अहंकाराख्यं तत्त्वं जायते। तस्मान्मनो जायते। बुद्धिः अध्यवसायहेतुः। अहंकारः अभिमानहेतुः। मनः संकल्पहेतुः। एतत्त्रयमपि **अन्तःकरण**मित्युच्यते। पातञ्जलास्तु एभिः त्रिभिरन्तःकरणैस्सह चतुर्थं **'चित्तम्'** इत्यप्यन्तःकरणमतिरिक्तमङ्गी कुर्वन्ति। एते हि ईश्वरवादिनः। अत एवैषाम् 'सेश्वरसांख्याः' इत्यपि व्यवहारः। 'समाधिसिद्धिरीश्वरप्रणिधानात्' (यो.सू.2-45) इति सूत्रम्। परमात्मनो ध्यानं प्रति करणं 'चित्तम्' इत्युच्यते। 'ध्यै चिन्तायाम्' इति हि धातुः। तथा चैषामन्तःकरणानि चत्वारि। सविशेषवादिनो नैयायिकास्तु 'अहं जानामि' इत्यादिव्यवहाराणां कदाचिदपि, कस्यचिदपि बाधाद्यदर्शनात् ज्ञानाश्रयत्वमात्मनो वास्तविकमिच्छन्तः 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' (न्या.सू.1-1-15) इत्यवदन्। तथा मन एकमेवान्तःकरणमन्तरिन्द्रियमित्यवदन्। सिद्धान्तिनामपि सविशेषवादित्वात्, व्यवहारक्षेत्रेऽनेकेषु विषयेषु नैयायिकप्रक्रियामनुसरन्तः एते बुद्धिज्ञानपदयोः पर्यायत्वम्, मनस एकस्यैवान्तःकरणत्वम्, इन्द्रियत्वं चाभ्युपागमन्। वैशेषिकशैलीमनुश्रृत्य पदार्थनिरूपणं सिद्धान्ते क्रियते इत्याचार्यैः स्पष्टमुक्तम् (न्या.सि.)। अत्र वैशेषिकपदं नैय्यायिकस्याप्युपलक्षकम्। अयमंशो यथावसरं विशदीक्रियते। सांख्या अपि मनस एकस्यैव अन्तरिन्द्रियतां वदन्ति, न तु बुद्ध्यहङ्कारयोरिन्द्रियत्वम्। परन्तु 'बुद्धिमान्' 'ज्ञानी' इति पदयोर्लोके पर्यायत्वं न दृश्यते। 'बुद्धिमान्' इति पदं बाह्यवस्तुविषयकज्ञानवन्तम्, 'ज्ञानी' इति पदमात्मादितत्त्वविषयकज्ञानवन्तञ्च वक्तीति सर्वसंमतम्। 'आत्मा ज्ञानस्वरूपः' इत्युच्यते, न तु 'आत्मा बुद्धिस्वरूपः' इति, तार्किकास्तु जडात्मवादिनः। बुद्धिरात्मधर्मः। यद्यपि 'जानामि' इति 'ज्ञा'धात्वर्थभूतं ज्ञानमात्मधर्म एव। आत्मस्वरूपस्य ज्ञानत्वं तु स्वप्रकाशत्वप्रयुक्तमिति 'अनुगतकथने ज्ञानमर्थप्रकाशः' इत्यभिहितम्। एवं च बुद्धेरात्मधर्मत्वमेव, न त्वन्तःकरणधर्मत्वं, अत एवात्मा सधर्मक एवेति सिद्धान्तेऽङ्गीकारात्, तद्दृष्ट्यैव 'बुद्धिरूपलब्धिर्ज्ञानमित्यनर्थान्तरम्' इति सूत्रावतारात्, तच्छाययैव सिद्धान्ते बुद्धेरात्मधर्मत्वोक्तिः। अतः तत्त्वविवेचनदृष्ट्या ज्ञानपदमन्यत्, तत्पर्यायं बुद्धिपदं चान्यदितिवत्, अध्यवसायादिकार्यभेदेनान्तःकरणचातुर्विध्यं चावश्यकम्। तेषामिन्द्रियत्वमस्ति न वेत्येतदन्यत्। अतश्चाचार्यपादानामाशयः लोकव्यवहारदृष्ट्या, वैभववादरूपतया, वैशेषिकप्रक्रियादृष्ट्या वा निर्वाह्य इति युक्तम्। अत एवात्रापि बुद्धेर्मनोवृत्तिरूपत्वमुक्तमवधेयम्॥ १॥

[ज्ञानस्य ज्ञानान्तरविषयत्वे न विरोधः]

227. **स्मृत्या शब्दानुमानप्रभृतिभिरपि धीर्वेद्यते स्वप्रकाशा**
**धीत्वादेस्तामवेद्यामनुपधि वदतः स्वोक्तिबाधादयः स्युः ।**
**वेद्यत्वे सा जडा स्यादिति च विहतिमत्; व्याप्तिभङ्गश्च; नो चेत्**
**शिष्याचार्यादिसर्वव्यवहृतिविरहात् जातमौनञ्जगत् स्यात् ।। २ ।।**

आत्मस्वरूप इव (जीव.6) तद्धर्मभूतज्ञानेऽपि स्वप्रकाशत्ववेद्यत्वयोर्न विरोध इति प्रदर्शयति—स्मृत्येत्यादिना । **स्मृत्या**=पूर्वानुभवविषयकस्मरणेन **शब्दानुमानप्रभृतिभिः**=बुद्धिवाचकपदैः, अनुमानादिभिश्च स्वप्रकाशापि **धीः**=ज्ञानम् **वेद्यते**=ज्ञानान्तरविषयो भवति । अपिरविरोधसूचकः । प्रभृतिपदेन प्रत्यक्षग्रहणम् । प्रमाणस्यास्य कण्ठतोऽनुक्तिस्तु व्यवसायानुव्यवसाययोर्भेदो नास्तीति संप्रदायसूचनाय । **धीत्वादेः**=ज्ञानत्वादिहेतोः, आदिपदेन स्वप्रकाशत्वपरिग्रहः । **ताम्**=बुद्धिम् **अवेद्याम्**=ज्ञानान्तराविषयाम् **अनुपधि वदतः**, अनुपधीति क्रियाविशेषणम्, **स्वोक्तिबाधादयः स्युः**=स्ववचनविरोधादिदोषाः भवेयुः । आदिपदेन स्वानुभवविरोधग्रहणम् । अनुपधिपदेन देशकालव्यक्तिविषयविशेषनिषेधो विवक्षितः । तेन च स्वप्रकाशत्वस्य सहजत्वम्, सार्वदिकत्वम्, वेद्यत्वस्य कादाचित्कत्वं च विवक्षितम् ।।

सामान्यतोऽवेद्यत्वं हि वेद्यत्ववत्केवलान्वयि । घटादयो हि पटत्वादिनाऽवेद्या एव । नीलः पीतत्वादिना, अद्यतनः ह्यस्तनत्वेन, काञ्च्यां वर्तमानः काश्यां वर्तमानत्वेन चावेद्य एव । अतोऽप्रयोजकमेतादृशमवेद्यत्वम् । सर्वांशेनाप्यवेद्यत्वं हि स्ववचनविरुद्धम् । कादाचित्कं वाऽवेद्यत्वं कथं स्यात् । तस्य जडत्वपर्यायत्वेनास्वप्रकाशत्वापत्तेरित्याशङ्क्य समाधत्ते—**वेद्यत्व** इत्यादि । वेद्यत्वे **सा** धीः **जडा स्यात्, इति च** वचनम् **विहतिमत्**=व्याहतं भवति । तादृशनिषेधवाक्येनैव तस्या अभिधानात् । अनभिधाने च वेद्यत्वसिध्य्चापत्तेः । अत एव 'यदि वेद्यत्वं स्यात्, तर्हि जडत्वं स्यात्' इति तर्कोऽप्यप्रामाणिकः, आपाद्यापादकयोर्व्याप्त्यभावेन तर्काङ्गपञ्चकान्यतमाभावादित्याह—**व्याप्तीत्यादि** । **व्याप्तिभङ्गश्च** आपाद्यापादकयोः व्याप्तेः भङ्गश्च । अनुभूतिः अवेद्या, स्वप्रकाशत्वात्=अजडत्वात् इति प्रयोगे, '**अजडत्वमस्तु**, अवेद्यत्वं मास्तु=वेद्यत्वमेवास्तु' इत्यप्रयोजकत्वे आपादिते, 'यदि वेद्यत्वं स्यात्, तर्हि जडत्वं स्यात्' इति तर्को वक्तव्यः । पूर्वोक्तसाधकानुमाने पक्षवाचकपदेन वेद्यत्वसिद्ध्या, तत्र जडत्वाभावात् आपाद्यापादकयोः व्याप्त्यभावात् नायं तर्कः प्रयोक्तुं शक्यत इति अप्रयोजकमेवानुमानम् ।।

वैतण्डिकस्य प्रतिबन्द्येवोत्तरमित्यभिप्रायेणाह—**नो चेदित्यादि** । **नो चेत्**=संविदः निरुपाधिकावेद्यत्वे **शिष्याचार्यादिसर्वव्यवहृतिविरहात्**=शिष्याचार्यव्यवहारस्य, वादिप्रतिवादिव्यवहारस्य वा विरहात् **जगत्**=सर्वोऽपि लोकः **जातमौनं स्यात्**=गुरोः ज्ञानं ज्ञात्वा शिष्यस्तमुपसीदति । गुरुरपि शिष्यस्य ज्ञानाभावं ज्ञात्वा तस्मै तत्त्वमुपदिशति । ज्ञानाभावज्ञानमपि प्रतियोगिभूतज्ञानविषयकज्ञानसापेक्षम् । अतो ज्ञानस्यावेद्यत्वे सर्वमिदं दुरुपपादं स्यात् । अतो ज्ञानस्य वेद्यत्वमावश्यकम् ।।

[प्राकट्यानुमाननिरासः]

**228. बुद्धेरर्थप्रकाशादनुमितिरिति चेत्, तन्न साध्याविशेषात्**
**साध्याद्भेदेऽपि बुद्धिर्यत उदयति ते, स्यात् ततोऽर्थप्रकाशः ।**

अथवा, प्रतिबन्द्या अनुत्तरत्वात् प्रतितर्कप्रदर्शनपरम्—**नो चेदित्यादि**। 'यदि ज्ञानमवेद्यं स्यात्, तर्हि शिष्याचार्यपद्धतिर्न स्यात्' इति प्रतितर्को विवक्षितः । प्रतितर्कपराहतिरप्येकमङ्गं तर्कस्य । तर्काङ्गपञ्चकादिकमग्रे (श्लो.56) प्रदर्श्यते । 'आदि'पदेनेतरत्सर्वमपि ग्राह्यम् । तदेतदुक्तम्—**सर्वव्यवहृतिविरहादिति**। लोके हि परस्परालापेन सर्वोऽपि हानोपादानादिः प्रचलति । अन्यस्मै कश्चिदर्थं कश्चिद्बोधयति । तस्यान्यस्य कार्ये प्रवृत्त्यान्यस्य स्वोक्तार्थज्ञानं जानाति शब्दप्रयोक्ता । अप्रवृत्तौ तस्याज्ञानं मत्वा पुनर्बोधयति । एवं वादिप्रतिवादिनोः कथादिषु ज्ञानाज्ञानादिकं सर्वमपि जानाति । 'अज्ञानम्' इति निग्रहस्थानं प्रयुङ्क्ते। स्वोक्तार्थे ज्ञातेऽप्युत्तरदानासामर्थ्ये 'अप्रतिभाम्' प्रयुङ्क्ते। अतो लोकव्यवहारः, शास्त्रव्यवहारो वा सर्वोऽपि परस्परज्ञानाज्ञानाभ्यामेवेति ज्ञानस्यावेद्यत्वे सर्वैरपि मौनमेवाश्रयणीयं स्यात् ॥

ननु लोके व्यवह्रियमाणं ज्ञानं न मुख्यम्, किन्तु अन्तःकरणवृत्तिरूपं गौणं ज्ञानमेव । मुख्यं तु ज्ञानमात्मस्वरूपमेव । तदेव च स्वयंप्रकाशम्, कदापि न वेद्यञ्च । न चान्तःकरणवृत्तेर्जडत्वात्कथं तद्गौणं वा ज्ञानं भवेदिति वाच्यम्, तादृशवृत्त्यवच्छिन्नचैतन्यस्य तथात्वात् । अन्तःकरणावच्छिन्नं चैतन्यं जीवः, वृत्त्यवच्छिन्नं चैतन्यं ज्ञानम्, घटाद्यवच्छिन्नं चैतन्यं च विषयः । अतस्सर्वं चैतन्यात्मकमेव इति चेन्न, सर्वस्य चैतन्यात्मकत्वे घटादीनामपि स्वप्रकाशत्वापत्तेः । न चैतदिष्टमेव 'सर्वं खल्विदं ब्रह्म' इति हि श्रुतिरिति वाच्यम्, ज्ञानिनामेव तथा व्यवहारात् । 'अहमेवेदं सर्वम्' इति हि तेषामनुभवः । किञ्च जीवस्वरूपादीनां विस्तरेण (जीवसरे) परीक्षितत्वात् तस्य च ज्ञातृत्वादीनां च समर्थितत्वात् 'ज्ञोऽत एवं' (ब्र.सू.2-2-3) इत्येव सूत्रणाच्च वेदान्तशास्त्रमिदं सांख्यसिद्धान्तप्रतिकोटिभूतमित्यग्रेऽधिकाभिधानं पिष्टपेषणायेत । अतः स्वप्रकाशमपि तत्, वेद्यमपीति स्वप्रकाशत्ववेद्यत्वयोर्न विरोधः ॥ २ ॥

एवं नैयायिकमतं परीक्ष्य, इतोऽपि दुर्बलं कौमारिलपक्षं परीक्षयति—**बुद्धेरित्यादि**। **बुद्धेः**=आत्मधर्मभूतज्ञानस्य **अर्थप्रकाशात्**=अर्थगत**प्राकट्य**रूपात् हेतोः **अनुमितिः** भवति, न तु ज्ञानं कस्यापि कदापि प्रत्यक्षमित्यर्थः । मीमांसकौ **कुमारिलभट्टः, प्रभाकरश्चेति** द्वौ । प्रभाकरः सिद्धान्तवदेव स्वप्रकाशज्ञानवादी। अतस्तत्र परीक्षणीयाभावात्, भाट्टमतं विचार्यते । पुरोवर्तिघटादिविषयके ज्ञाने जाते, ततः 'ज्ञातो घटः' इति व्यवहारात् तेन ज्ञानेन घटादिपदार्थे ज्ञातताख्यः कश्चन अतिरिक्तो धर्मो जायते । स एव तैः **प्राकट्यम्** इत्युच्यते । नवीनैस्तु **ज्ञातता** इत्युच्यते । तेन हेतुना तद्धेतुभूतं ज्ञानमनुमीयते इति पूर्वपक्षानुवादः॥

तन्निराकरोति—इति चेत्, **तन्नेति**। तत्र हेतुः **साध्याविशेषादिति**। सिद्धेन हेतुना असिद्धं साध्यं साध्यते इति क्रमः । हेतोरेव सन्दिग्धत्वे तेन कथं साध्यसाधनम्=साध्यनिश्चयः? साध्याविशेषात्=हेतोः साध्येनाविशेषात्=सन्दिग्धत्वात् । तथा च हेत्वसिद्धिर्दोषः । ननु आत्मधर्मः ज्ञानं साध्यम् । हेतुस्तु

**मध्ये बुद्धिः किमर्था? ननु सममुभयोरप्यसाधारणत्वम्**
**तत्सा नित्यानुमेया यदि, फलति तदा बुद्धितत्त्वापलापः ॥ ३ ॥**

ज्ञानविषयत्वरूपः वस्तुधर्मः । 'ज्ञातो घटः' इत्यत्र हि ज्ञानं घटे विशेषणम् । आत्मधर्मभूतस्य ज्ञानस्य घटादिविशेषणस्य ज्ञाततायाश्च समत्वं कथम् । घटादिवस्तुगतेन ज्ञातताख्यधर्मेण तद्धेतुभूतं ज्ञानमनुमीयते इति का अनुपपत्तिः? इत्यत्राङ्गीकृत्योत्तरमाह— **साध्यात्**=ज्ञानात् **भेदेऽपि**=हेतोः कथञ्चिद्भेदाङ्गीकारेपि, **ते**= मीमांसकस्य **बुद्धिः**=विषयप्रकाशकं ज्ञानम् **यतः**=यादृशसामग्रीतः **उदयति**=उत्पद्यते, **ततः**=तादृश-सामग्रीत एव **अर्थप्रकाशः**=घटादेरर्थस्य प्रकाशनम् स्यात् । ततश्च— **मध्ये**=अर्थप्रकाशस्य तत्सामग्र्याश्च मध्ये **बुद्धिः**=अर्थप्रकाशेनानुमीयमानम् ज्ञानम् किमर्था? 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायात्। तद्धेतोरेव=ज्ञानहेतुतया वादिद्वयसंमतसामग्र्या एव तद्धेतुत्वे=अर्थगतप्राकट्यं प्रति हेतुत्वे संभवति मध्ये=प्राकट्यज्ञानसामग्र्योर्मध्ये तेन=ज्ञानेन किम्=किं कर्तव्यम्? ज्ञानसामग्र्यैवार्थप्राकट्योत्पत्तेर्निर्वाहात् । तथा च ज्ञानाख्यः पदार्थ एव न सिद्ध्येत्, मानवबुद्धेः लाघवपक्षपातित्वात् । ज्ञानस्य नित्यानुमेयत्वे, ज्ञानाख्यः पदार्थ एव न सिद्ध्येत् । अनुव्यवसायस्य मानसप्रत्यक्षरूपत्वात्, न ज्ञानापलापप्रसङ्गः इति वैशेषिकपक्षादप्ययं पक्षो हेय इति भावः ॥

ननु बाह्यानां विषयाणां सर्वान् प्रति समानत्वेऽपि व्यवहारस्य तत्तत्पुरुषनियतत्वदर्शनात् तदनुगुणो विषयधर्मः कश्चिदेषितव्यः । येन यथा यद्ज्ञायते, व्यवहारस्तदनुगुण एव स्यात् । अतस्तत्तद्ज्ञाततैव सर्वव्यवहारमूलम् । अत एव ज्ञातता वस्तुधर्मः, न वस्तुस्वरूपमात्रम्, स्वरूपस्य सर्वान् प्रत्यविशेषात् । अत एवोच्यते 'परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥' इति। अतो विषयधर्मेण ज्ञाततया न ज्ञानस्यान्यथासिद्धिर्भवेदित्यात्राह— **नन्वित्यादि** । **उभयोरपि**=ज्ञाततायाः, ज्ञानसामग्र्याश्च **असाधारणत्वम्**=तत्तत्पुरुषासाधारणत्वम् **समं ननु**=सममेव हि । तथा च ज्ञानसामग्रीणाम् इन्द्रियमनस्संयोगादीनां तत्तंपुरुषमात्रनियतत्वात् विषयधर्मस्य ज्ञातताया अपि तत्तत्पुरुषभेदेन भेदात् प्रति-नियतव्यवहारभेदःसङ्गच्छेतेति 'मध्ये बुद्धिः किमर्था?' । न च ज्ञानस्यैवाभावे ज्ञातताख्यो धर्मः कथं भवेदिति वाच्यम्, ज्ञाततायाः ज्ञानविषयत्वरूपत्वानङ्गीकारात्, अतिरिक्तविषयधर्मरूपत्वाङ्गीकारात् । प्राकट्यम् इत्यादिसंज्ञाकरणाच्च । अन्ते पर्यवसितमाह-- **तदित्यादि** । **तत्**=तस्मात्=ज्ञानरूपस्य पदार्थस्यैवासिद्ध्यापत्त्या **सा**=बुद्धिः **नित्यानुमेया यदि**=सदा सर्वस्यापि अनुमानमात्रसिद्धा चेत्, तदा **बुद्धितत्वापलापः**= बुद्ध्याख्यस्य कस्यचिद्वस्तुनः अपलाप एव **फलति**=फलतस्सिद्ध्यति । अतो ज्ञानं न नित्यानुमेयम्, किन्तु परकीयं ज्ञानमनुमेयम्, स्वीयं तु स्वप्रकाशप्रत्यक्षसिद्धम् । अत्र कुमारिलस्याशयः अग्रे (श्लो.20) भविष्यति । शिष्टं वक्तव्यं पुनरग्रव्यसरे (श्लो.65-67) विस्तरेण भविष्यति ॥

ननु ज्ञातताया ज्ञानजन्यत्वात् ज्ञानस्यैवाभावे ज्ञातता कथमुत्पद्येतेति चेत्; ज्ञातताया ज्ञानविषय-त्वातिरिक्तायाः विषयधर्मत्वं हि तत्संमतम् । प्राकट्यमित्येव तस्य प्राचीना संज्ञा, 'प्रकटो घटः' 'घटः

[ज्ञानस्य नित्यत्वम्]

**229. ज्ञातुर्ज्ञप्तेरलोपं कथयति निगमः स्मर्यते चैवमेषा**
**तस्मादेकत्वसिद्धौ प्रसरणभिदया तद्भिदैकत्र पुंसि ।**
**योग्यादृष्टेरभावात् न च भवति सुषुप्त्याद्यवस्थासु बाधः**
**तत्तद्वस्तुप्रकाशक्षणविरहवती न प्रकाशेत बुद्धिः ।। ४ ।।**

प्रकाशते' इत्यादिव्यवहारात् । प्राकट्यम् प्रकाशरूपं विषयधर्मश्चेत्, प्रकाश एव हि ज्ञानम् । एवञ्च ज्ञानसामग्री विषय एव प्रकाशरूपं धर्ममुत्पादयतु, मध्ये ज्ञानं किमर्थम्? नातीन्द्रियज्ञानसत्त्वे किञ्चित् प्रमाणम् । तथा च ज्ञानाख्यं स्वप्रकाशतत्त्वमेव न सिद्ध्येत् ।। ३ ।।

एवं ज्ञानस्य स्वयंप्रकाशत्वम्, तद्विरुद्धपक्षांश्च परीक्ष्य तस्य नित्यत्वमाह—ज्ञातुरित्यादिना । अत्र साध्यमानं नित्यत्वमनूद्य पूर्वं (जीव.4) विचारः कृतः । **निगमः**=श्रुतिः **ज्ञातुः**=धर्मिण आत्मनः **ज्ञप्तेः**= ज्ञानस्य धर्मस्य अलोपम्=नाशाभावम् **कथयति**=कण्ठत एव वक्ति । **एषा**=बुद्धिः **एवम्**=नित्यतयैव **स्मर्यते च**=पुराणादिषु कथ्यते च । 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्'(बृ.6-4-37) इति श्रुतिः । 'यथा न क्रियते ज्योत्स्ना मलप्रक्षाळणान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ।। यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्संभवः कुतः ।। तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ।।' (वि.धर्मो.104-55,56,57) इति स्मृतिः । श्रुतिव्यतिरिक्तमार्षवचनं सर्वं स्मृतिरित्युच्यते वैदिकैः । एतद्दृष्ट्यैव श्रुतिः प्रत्यक्षपदेनोच्यते कुत्रचित् । एवं ज्ञानस्य नित्यत्वादेवैकत्वमप्यर्थात्सिद्ध्यति । एकैनैव निर्वहि नित्यज्ञानद्वयाङ्गीकारस्य व्यर्थत्वात्, अननुभवाच्च । तर्हि प्रत्यक्षादिप्रभेद एकस्य कथमित्यत्र—**तस्मादि**त्यादि । **तस्मात्**=नित्यत्वात् **एकत्वसिद्धौ**=ज्ञानस्यैकत्वसिद्धौ च **एकत्र पुंसि**=एकस्मिन्नेव पुरुषे=चेतने **प्रसरणभिदया**=प्रसरणप्रक्रियाभेदात् **तद्भिदा**=ज्ञानभेदः प्रत्यक्षस्मृत्यादिरूपेण । आत्मनो धर्मभूतं हि ज्ञानं प्रदीपप्रभावत् स्वतः प्रसरणस्वभावमपि संसारदशायां करणद्वारैव प्रसरति । तत्रेन्द्रियद्वारा प्रसरणे प्रत्यक्षमिति, व्याप्त्यादिद्वारा प्रसरणे स्मृतिरिति च भेदव्यवहारः। युगपद्ज्ञानद्वयानुत्पत्त्या सांकर्यादीनां नावसरः । अधिकमुपरि भविष्यति।।

ननु 'सुषुप्तिसमये न किञ्चिदहमज्ञासिषम्' इति सुप्तोत्थितस्यानुभवात् सुषुप्तौ ज्ञाननाशात् कथं तस्य नित्यत्वम्? तदानीमपि ज्ञानसत्त्वे सुषुप्तेरेवाप्रसङ्गादित्यत्राह—**योग्ये**त्यादि । **सुषुप्त्याद्यवस्थासु**= सुषुप्तिमूर्छाद्यवस्थासु **योग्यादृष्टेः**=अदृष्टिः=अनुपलब्धिः । अभावप्रत्यक्षसहकारिभूतायाः योग्यानुपलब्धेः **अभावात्**=विरहात् **बाधः**=ज्ञानाभावः **न च भवति**=न हि सिद्ध्यति अथवा नैव भवति । अभावप्रत्यक्षं प्रति अनुपलब्धिः स्वतन्त्रं करणमिति **कुमारिलः** । इन्द्रियमेव करणम्, अनुपलब्धिः सहकारिकारणमिति **नैय्यायिकाः** । सिद्धान्ते तु अतिरिक्ताभावस्यानङ्गीकारादेव करणप्रश्नोऽपि यद्यपि नोदेति । अथापि लोके 'नास्ति' इति व्यवहारदर्शनात्, तत्र तत्तदनुपलब्धेरेव कारणत्वात्, **अनुपलब्धिर्न** निराक्रियते । अन्धकारे 'धटो नास्ति' इति व्यवहाराभावात् योग्यवस्तुप्रतियोगिकानुपलब्धिसहकृतमिन्द्रियमेवाभावव्यवहारकारणं

[ज्ञानस्य नानात्वम्]

230. **उत्पत्त्यादेरभावान्न यदि दृशि भिदा, नो, दशाभेददृष्टेः**
**दृष्टादृष्टव्यवस्था क्वचिदिह पुरुषे बुद्ध्यवस्थाभिरेव ।**

वाच्यम् । प्रतियोगिनो योग्यत्वं च 'यदि स्यादुपलभ्येत' इत्यापादनार्हत्वम् । अन्धकारे 'यदि स्यात्, तर्ह्युपलभ्येत' इत्यापादनस्य कर्तुमशक्यत्वात्, न घटाभावप्रत्यक्षस्य संभवः । आलोके तथा कर्तुं शक्यत्वात् घटाभावप्रतीतिं प्रति घटानुपलब्धिरेव कारणम् । एवञ्च सुषुप्तौ तथाऽऽपादनप्रसक्तेरभावात्, न ज्ञानाभावस्सिद्ध्यति । अनन्तरकाले तु अस्मरणात् ज्ञानाभावमनुमाय 'न किञ्चिदहमज्ञासिषम्' इति व्यवहरति । विषयप्रकाशं प्रति हि इन्द्रियार्थसंयोगादिः कारणम् । सर्वेषामपीन्द्रियाणां सुषुप्तावुपरमात्, नापादयितुं शक्येत । अतः सुषुप्तिकालिकज्ञानाभावानुमानमपि, सुषुप्त्यनन्तरकालिकमेव । तर्हि तदा ज्ञानसत्त्वे वा किं प्रमाणम्? इति चेत्, ज्ञाननित्यत्वप्रतिपादकश्रुतिरेव । अधिकं समनन्तरमेव स्पष्टीभविष्यति ॥

सर्वेन्द्रियाणामपि सुषुप्तावुपरमात्, तदा ज्ञानप्रसक्तेरेवाभावात् ज्ञानाभावानुभवोऽपि न भवति । अभावज्ञानं प्रति हि प्रतियोगिज्ञानमावश्यकम् । प्रतियोगिज्ञाने जाते, सुषुप्तिः कथम्? असंबोधावस्थाया एव सुषुप्तिरूपत्वात् । ज्ञानस्य नित्यत्वस्य श्रुतिसिद्धत्वात् ज्ञानाभावस्तु न वक्तुं शक्यते । ननु श्रुतिरप्यनुभवविरुद्धं न ब्रूयात् । अन्यथा 'आदित्यो यूपः' इति वाक्यमपि यथाश्रुतार्थकं स्यात् । अतः श्रुतिरेवान्यथा नेया । अतश्च ज्ञानस्वप्रकाशत्वं वा त्याज्यम्, तन्नित्यत्वम् वा त्याज्यम् इत्युभयतःपाशा रज्जुरित्यत्राह—**तत्तदित्यादि** । **तत्तद्वस्तुप्रकाशक्षणविरहवती**=क्षण इति कालपर्यायः । तथा च धर्मभूतज्ञानेन प्रकाश्यानां वस्तूनां प्रकाशकालव्यतिरिक्तकालवर्तिनी **बुद्धिः**=धर्मभूतं ज्ञानम् **न प्रकाशेत**=स्वतोऽपि न प्रकाशेत; सुषुप्तिकालस्य विषयप्रकाशाभावकालत्वात् । विषयप्रकाशनवेलायामेव तस्य स्वप्रकाशत्वम् । एवञ्च श्रुत्या तन्नित्यत्वोक्त्या, विषयप्रकाशकाल एव तस्य स्वप्रकाशत्वात्, सुषुप्तावप्रकाशमात्रान्न तदभावस्सिद्ध्यति । विद्यमानत्वाप्रकाशत्वयोरन्धकारे घटादावनुभवसिद्धत्वात्, धर्मभूतज्ञानेऽपि विद्यमानत्वाप्रकाशत्वयोर्न विरोध इति भावः ॥

ननु घटादेर्जडत्वात्, ज्ञानेनैव तेषां प्रकाशः, ज्ञानाभावे च अप्रकाशश्चोपपद्यते । ज्ञानस्य तु स्वयंप्रकाशत्वात्कथं विद्यमानत्वेऽप्यप्रकाशो युज्येत? न च 'यत्त्वनुभूतेः स्वयंप्रकाशत्वमुक्तम्, तत्तु विषयप्रकाशनवेलायामेव' इति श्रीमद्भाष्येऽभिहितत्वात् कथं प्रश्न इति वाच्यम्, कथं तन्निर्वाह्यमित्येव विचारात् । 'न च निर्विषया काचित्संविदस्ति, अनुपलब्धेः' इत्यपि तत्रैवाभिधानात्, सुषुप्तौ सा केन रूपेणावतिष्ठते इति जिज्ञासाया अवश्यं समाधेयत्वादिति चेत्; **अत्रानन्ददायिन्यां श्रीनरसिंहराजाचार्याः**—'सत्यम् । बाह्यवस्त्वविषयकत्वादसत्कल्पं तदा । आत्मा त्वस्त्येव तस्य विषयः । अन्यथा सुप्तोत्थितस्य 'सुखमहमस्वाप्सम्' इति प्रतिसन्धानं कथम्? सन्धानापेक्षत्वात् प्रतिसन्धानस्य । आत्मनो ज्ञानविषयत्वं तु सिद्धान्तसंमतमेव । अतो न काप्यनुपपत्तिः ॥ ४ ॥

ननु धर्मभूतज्ञानं नित्यमेकञ्च यदि, तर्हि पुरुषभेदेनापि तद्भेदो न स्यात्, भेदव्यवहारस्यान्यथापि निर्वाहादित्याशङ्क्य परिहरति—**उत्पत्त्यादेरित्यादि** । **आदिपदेन** नाशपरिग्रहः । **उत्पत्त्यादेः**=उत्पत्तेः नाशस्य

**अज्ञानाद्यैरनैकान्तिकमपि; न च धीरात्मभेदेऽप्यभिन्ना**
**ज्ञत्वाज्ञत्वादिभेदः कथमिव घटते सर्वथैका मतिश्चेत् ॥ ५ ॥**

च अभावात् **दृशि**=ज्ञाने **भिदा**=भेदः **न**=न युज्यते । यदुत्पद्यते नश्यति च तदेवानेकं भवेत् । यदि धर्मभूतं ज्ञानमुत्पत्तिनाशरहितम्, तर्हि तदपि भिन्नं न स्यात् । तथा ह्यनुमानम्—संवित् न नाना, उत्पत्तिरहितत्वात्, नाशरहितत्वाद्वा । यत् नाना भवति, तत् उत्पत्तिमत् नाशवच्च भवति, यथा घटादिरिति ॥

अनित्यानां हि घटादीनां कुत्रचित् नाशेऽपि, देशान्तरे कालान्तरे वा तद्व्यवहारनिर्वाहाय ते नाना भवन्ति । येषां तु नाशो नास्ति, तेषां सदातनत्वेन सर्वत्र तद्व्यवहारनिर्वाहात् न नानात्वस्यावश्यकता । अतो ज्ञानभेदो न स्यात् । न च नित्यत्वे कालभेदकृतसर्वव्यवहारनिर्वाहेऽपि, देशभेदकृतसर्वव्यवहारनिर्वाहायानेकत्वमावश्यकम्, यथा परमाण्वादेः । अतः कथमेकत्वसिद्धिरिति वाच्यम्, ज्ञानभेदनिराकर्तृमते, परमाण्वादीनां मिथ्यात्वात्, ब्रह्मैकमेव सत्यम् । तस्य विभुत्वाङ्गीकारात्, न्यायनय आकाशवत्, देशभेदकृतव्यवहारनिर्वाहात् न नानात्वसिद्धिः ॥

यद्यपि परमते ज्ञानं नाम स्वरूपज्ञानम्, न तु धर्मभूतं तत् । अत्र तु धर्मभूतज्ञाने नानात्वं साध्यत इत्यस्ति महद्वैरूप्यम् । परं तु तन्मते धर्मधर्मिभावानङ्गीकारात्, आत्मनस्तन्मतेऽहमर्थत्वाभावात्, अनुभूत्यादिशब्दैरुच्यमानं वस्त्वधिकृत्य परीक्षणात्, तस्य च धात्वर्थत्वेन विषयस्यैक्यादेवं दूषणमुच्यते **श्रीभाष्ये** । तदेवात्रापि विचार्यत इति न काचिदनुपपत्तिः ॥

तदेतन्निराकरोति—**न** इति । तत्र हेतुः—**दशाभेददृष्टेरिति** । दशाभेदः=उत्पत्तिनाशाद्यवस्थाभेदः। तस्यानुभवसिद्धत्वात् । ज्ञानमेकमेव चेत्—एकस्य ज्ञानमुत्पन्नं चेत्, सर्वेषामपि ज्ञानमुत्पन्नं स्यात् । एकस्य ज्ञाने नष्टे, सर्वेषामपि ज्ञानं नष्टं स्यात् । तथा च न नाना इति साध्यं वह्न्यनुष्णत्वानुमानवद्बाधितमिति बाधो हेत्वाभासः । एवं स्वरूपासिद्धिमपि प्रदर्शयति—**दृष्टेत्यादि** । **क्वचिदिह पुरुषे**=एकस्मिन्नेव चेतने **दृष्टादृष्टव्यवस्था**=इदं ज्ञातम्, इदं न ज्ञातम् इति परिदृश्यमाना व्यवस्था **बुद्ध्यवस्थाभिरेव**=बुद्धेः=धर्मभूतज्ञानस्य अवस्थाभिरेव=उत्पत्तिनाशादिभिरेव निर्वाह्या । तथा च उत्पत्तिरहितत्वात्, अथवा नाशरहितत्वादिति हेतुः पक्षे नास्तीति स्वरूपासिद्धिः ॥

यद्यपि सिद्धान्ते बुद्धेर्नित्यत्वमनुपदमेवोक्तम् । तथापि तत् श्रुत्यनुसारात्, न त्वनुभवात् । तदा हि सुषुप्तिरेव न स्यात् । किञ्च बुद्धेर्नित्यत्वेऽपि उत्पत्तिनाशादिव्यवहाराः सर्वलोकसिद्धा नापह्नोतुं शक्या इत्यपि पूर्वस्मिन्नेव श्लोकेऽभिहितम् । पुरुषभेदेन बुद्धिभेदस्यात्र तृतीयपादे वक्ष्यमाणस्य स्वरूपासिद्ध्यप्रयोजकत्वात् **क्वचिदिह** इति पुरुषविशेषणम् । यद्यपि पूर्वोत्तरपादौ व्यत्यस्यापि व्याख्यातुं शक्यौ । अथापि बाधस्य प्रबलदोषत्वात् तस्य प्रथमवर्णनौचित्यात्सर्वार्थसिद्ध्यनुसारेणैवं व्याख्यानम् ॥

व्यभिचारदोषमपि प्रदर्शयति—**अज्ञानाद्यैरित्यादि** । **अज्ञानम्**=अविद्या । **अनैकान्त्यम्**=व्यभिचारः। आदिना ईश्वरस्यापि परिग्रहः । 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः

**[ज्ञानस्य सधर्मकत्वम्]**

**231. भेदादिर्दृश्यभावान्न दृशि, दृशितया दृश्यधर्मा न दृक् चेत्**
**पूर्वस्मिन्नित्यताद्यैरनियतिविहती; वाग्विरोधादि शेषे।**

षडस्माकमनादयः' ॥ इति किल गायन्ति ते। अतश्च नानात्वाभाववत्यां मूलाविद्यायाम् अनुत्पन्नत्वहेतोः सत्त्वात् व्यभिचारः। ननु ज्ञानस्य नित्यत्वे एकेनैव व्यवहारनिर्वाहात् नानात्वं न स्यादित्युक्तमेवेत्यत्राह—**न चे**त्यादि। अन्ततः, **धीः आत्मभेदेऽपि अभिन्ना न च** भवति। आत्मनानात्वस्य पूर्वमेव (जीव.10) विस्तरेणोक्तत्वात् जीवभेदेन ज्ञानभेदोऽप्यनिवार्य एव। नन्वस्त्वात्मभेदः। तावता ज्ञानभेदः कुतः? इत्यत्राह—**ज्ञत्वे**त्यादि। **मतिः सर्वथा**=सर्वप्रकारेणाऽपि **एका चेत्**=यदि एका, तदा **ज्ञत्वाज्ञत्वादिभेदः**= कश्चित् किञ्चित् जानाति, कश्चित् तन्न जानाति इत्यादिरूपः ज्ञानित्वतदभावरूपभेदः **कथमिव घटते**=कथं वा युज्येत? अन्ततः कश्चित् निद्राति, कश्चिच्च जागर्ति। निद्रा नाम सर्वविधज्ञानादिलोपः। एवं च ज्ञानभेदः पुरुषभेदेन यदि न स्यात्, तदा सर्वेषामपि निद्राजागरणे युगपदेव स्याताम्। जागरणकालेऽपि कश्चित् किञ्चिद्जानाति, तदैव तदन्यस्तन्न जानातीत्यादिरनुभवो विरुद्ध्येत। अतो ज्ञानभेदः आवश्यकः। एकात्मवादेऽपि अन्तःकरणभेदेन जीवभेदस्याङ्गीकारात्, तथैव ज्ञानभेदोऽपि स्वीकार्य एवेति सूचनाय **सर्वथा** इत्युक्तम्। औपाधिकात्मभेदवत् औपाधिकतया वा ज्ञानभेदोऽप्यवर्जनीय इति भावः॥

ननु मास्तु तर्हि ज्ञानभेदः, आत्मभेदो वा। मायावशादेव सर्वमुपपद्यताम्। अघटितघटनापटीयस्या मायायाः प्रश्नातीतत्वात्। अतः पारमार्थिकी निर्विशेषा संविदेकैव ज्ञातृज्ञेयज्ञानभेदेनात्मानं प्रदर्शयन्ती सर्वव्यवहारहेतुर्भवतीत्येव परमं सत्यम्। इतरत्सर्वं व्यवहारमात्रमिति चेत्, जानेऽहं जगन्मिथ्यात्ववादिनां मतम्॥

असकृत्परीक्षितमिदं बहुधा च समाहितम्। सर्वपलापवादे तु विश्राम्येतेति दर्शितम्॥
मेधावी **भट्टपादस्तु** वेदान्ते भारमार्पयत्। सर्वं मिथ्येति वेदान्तो यदि मार्गं प्रदर्शयेत्॥
का वा गतिस्स्याल्लोकस्य मुग्धानां तु विशेषतः। प्रतारिताश्च कति वा पण्डितैश्शून्यवादिभिः॥
अभि भोः विमर्शकंमन्य! ब्रह्मवादिनो वयम्, न **शून्यवादिनः**॥
येषां ब्रह्मपदं शून्यपदान्नैव विशिष्यते। तेभ्यस्साकं विमर्शेन को वाऽर्थः कस्य वा भवेत्?॥
एतादृशात्तु पाण्डित्याद्वरं मौढ्यं शरीरिणाम्। यतस्ते हि यथाजाताः तेषां दैवबलं स्वतः॥
यद्यपीदं शून्यपदं विष्णुनामसु पठ्यते। तस्यार्थमन्यथा चक्रुराचार्याः, चिन्त्यतां कुतः?॥
ब्रह्मवादमुपक्रम्य शून्यवादोऽवतारितः। नूनं श्रीशङ्कराचार्यसंमतं स्यादिदं मतम्॥
हेतुवादपरा व्याख्याकारा आसन् कलेर्बलात्। आचार्यस्तु ब्रह्मवादी शिष्या मायापरायणाः॥ ५॥

ननु भेदस्य धर्मरूपत्वेन निर्धर्मके संविदि कदाचिदपि न स भवतीत्याशङ्क्य निराकरोति—**भेदादि**रित्यादिना। आदिपदेनोत्पत्तिनाशादयः, स्मृतित्वानुभवत्वादयश्च गृह्यन्ते। **भेदादिः**=भेदादयो धर्माः **दृशि**= दृग्रूपे वस्तुनि **न**=न स्युः, हेतुः—**दृश्यभावात्**=दृश्यत्वात्=दृग्भिन्नत्वात्=जडत्वात्। दृगाख्यं

**बाधश्चात्र द्वयोः स्यात्, स्वमत इह च यैस्साध्यते ये च साध्याः**
**नैते मिथ्या विरोधान्न दृशिरविमतेस्स्यादभावोऽपि धर्मः ॥ ६ ॥**

वस्तु स्वयंप्रकाशस्वरूपम् । तत्र कश्चन धर्मो यदि स्यात्, स धर्मः, स्वयंप्रकाशः, उत जडः? आद्ये दृगपेक्षया स विलक्षणो न स्यात्, स्वयंप्रकाशत्वादेव । द्वितीये अस्वयंप्रकाशत्वात् दृशेर्धर्मो न स्यात् । स्वयंप्रकाशे वस्तुनि जडधर्माङ्गीकारे धर्मिणोऽपि जडत्वापत्तेः । तथा चानुमानम्—भेदादिः न दृशिधर्मः दृश्यत्वात्, रूपादिवत् इति । एवमनुमानान्तरम्—**दृक्** न दृश्यधर्मवती, दृक्त्वात्, यो दृश्यधर्मवान् स न दृक्, यथा घटः इति व्यतिरेक्यनुमानम् ॥

**चेत्**=एवं यदि, तदा—**पूर्वस्मिन्**=प्रथमानुमाने **नित्यताद्यैः**=नित्यत्वैकत्वादिभिः दृग्धर्मैः **अनियतिविहती**=अनियतिः=अनैकान्त्यम्=व्यभिचारः । **विहतिः**=व्याघातः=स्वाभ्युपगमविरोधः=अपसिद्धान्तः । नित्यत्वादयोऽपि हि धर्मा एव । तेऽपि यदि पक्षीभूताः, तेषां दृग्भिन्नत्वेऽपि दृशिधर्मत्वाङ्गीकारात्, विहतिः=व्याघातः, अत एवापसिद्धान्तः । तेषां पक्षीकाराभावे दृशिधर्मत्वाभावाभाववति नित्यत्वादौ दृश्यत्वहेतोः सत्त्वाद्व्यभिचारः । **शेषे**=द्वितीयानुमाने **वाग्वि**रोधादि दृशेः नित्यत्वाङ्गीकारात्, तस्य दृशिधर्मत्वाभावसाधने स्ववचनविरोधः, ततश्चापसिद्धान्तः । **अदि**पदेन स्वरूपासिद्धिबाधापसिद्धान्ताः ज्ञेयाः। पक्षे दृशि दृक्त्वरूपहेतोरङ्गीकारे दृशस्सधर्मकत्वमायातम्, अनङ्गीकारे स्वरूपासिद्धिः । एवं साध्यस्य पक्षेऽसत्त्वात् बाधः । सत्त्वेऽपसिद्धान्तः ॥

एवं विशिष्य दूषणमुक्त्वा, अनुमानप्रयोगसामान्ये दूषणमाह—**बाध** इत्यादि । **इह च** स्वमते, **यैः** हेतुभिः, **ये च साध्याः** विवक्षिताः, तेषां पक्षधर्मत्वापरित्यागात् **द्वयोः**=उक्तानुमानयोः **द्वयोश्च**—चकारोऽनुक्तसमुच्चयार्थः, **बाधश्च** स्यात्=साध्यस्य पक्षेऽभावे बाधः, सत्त्वेऽपि तेन पक्षस्य सविशेषत्वाद्बाधः, **हेतोः** पक्षावृत्तित्वे स्वरूपासिद्धिः ॥

ननु तेषां धर्माणां मिथ्यात्वात्, तैर्न सविशेषत्वप्रसक्तिरित्यत्राह—**एते**=साध्यहेत्वादयः **न मिथ्या**=न मिथ्या भवन्ति । कुतः—**विरोधात्** । नित्यत्वादीनां मिथ्यात्वेऽनित्यत्वापत्त्याऽपसिद्धान्तः । ननु तेषां दृग्रूपत्वात्, अतिरिक्तधर्मानङ्गीकारान्न दोष इति चेत्, तत्राह—**न दृशि**रिति । नित्यत्वादयो हि न दृग्रूपाः । कुतः—**अविमतेः**=धर्मिणि वैमत्याभावात् । ज्ञानं क्षणिकमिति, अथवा नित्यमिति च वादिनोर्द्वयोः धर्मिज्ञानं संमतमेव । तत्र क्षणिकत्वनित्यत्वयोरेव विवादः । ततश्च धर्मस्यातिरिक्तत्वमवर्जनीयमेवेति न दृग्रूपं नित्यत्वं वक्तुं शक्यम् । धर्मधर्मिभावविषये वक्तव्यं सर्वं प्रथमसर (श्लो.8) एवोक्तम् । ननु नित्यत्वस्यानित्यत्वाभावरूपत्वात्, भावरूपधर्मराहित्यस्य साधनान्न दोष इत्यत्राह—**स्यादि**त्यादि । **अभावोऽपि** धर्मः स्यात् । अभावस्यातिरिक्तत्वस्य त्वन्मतेऽङ्गीकारात् तेनाऽपि सधर्मकत्वमनिवार्यमेव । **'व्यवहारे भट्टनयः'** इति किल वदन्ति भवन्तः । अतो न कथञ्चिदपि संविदो निर्विशेषत्वसिद्धिः ॥

बुद्धिर्यावत्प्रसरति यावच्छब्दः प्रवर्तते । सर्वं तु तावत्स्यादेवेत्यभ्यधायि मुहुर्मुहुः ॥ ६ ॥

[ज्ञानस्य द्रव्यत्वम्]

232. **बुद्धिर्द्रव्यं विकारान्वयत इतरवत्, बोद्धृवच्चाजडत्वात्**
**संकोचादिप्रयोगा बहव इह तथा न ह्यमुख्या भवेयुः ।**
**एवं नास्या गुणत्वं गलति, न खलु तत् तन्त्रसङ्केतसिद्धम्**
**लोके धर्मस्वभावो गुण इति विदितं, साऽपि सिद्धा प्रभावत् ।। ७ ।।**

बुद्धेः स्वरूपं संशोध्य, तस्या द्रव्यत्वं साधयति— **बुद्धिरित्यादि** । **बुद्धिः द्रव्यम्** इति प्रतिज्ञा । **विकारान्वयतः** इति हेतुः । संकोचविकासादिविकारवत्त्वात् बुद्धिः द्रव्यम्, न तु नैयायिकवत् गुणः । **इतरवत्** इति दृष्टान्तः । संप्रतिपन्नमृदादिवदित्यर्थः । ननु उपादानं द्रव्यम्, अवस्थाश्रय उपादानम् इति द्रव्यलक्षणमुक्तम् । मृदादौ दृष्टान्ते च पिण्डत्वघटत्वाद्यवस्थानां सत्त्वात् द्रव्यत्वं युज्यते । तादृशीनामवस्थानां बुद्धावदर्शनात् अनुमानान्तरमाह— **बोद्धृवदित्यादि** । बुद्धिः द्रव्यम् इति प्रतिज्ञायास्समानत्वात्प्रत्येकमनुक्तिः। **अजडत्वात्** इति हेतुः । बोद्धृवत् इति दृष्टांतः । तथा च बुद्धिः द्रव्यम्, अजडत्वात्, आत्मवत् इति प्रयोगः । ग्रन्थारम्भ एव हि 'द्रव्यं द्वेधा विभक्तम्' इत्यादिना विभागः प्रदर्शितः । अतश्च यत्राजडत्वम्, तत्र द्रव्यत्वम् इति व्याप्तिः ।।

ननु कुट्मलकुसुमादौ सङ्कोचविकासौ प्रत्यक्षदृष्टौ । न तथा ज्ञाने तौ दृश्येते इति तदादाय बुद्धेः द्रव्यत्वं कथं साध्यत इत्यत्राह— **संकोचादीत्यादि** । **बहवः संकोचादिप्रयोगाः**=संकोचविकासप्रसरणादि-शब्दप्रयोगाः **इह**=बुद्धौ दृश्यमानाः **अनेके शब्दाः** तथा='संकुचितं मनः' इतिवत् 'संकुचिता बुद्धिः' इत्यपि व्यवहारात्, ते **अमुख्याः**=मुख्यार्थवर्जिताः **न हि भवेयुः**=नैव भवेयुः । अमुख्यत्वाभावे हेतुः— **बहवः** इति 'सङ्कुचितं मनः' इत्यादौ तु मनसोऽणुत्वात् संकोचविकासासंभवात् अमुख्यत्वेऽपि, बुद्धेरणुत्वा-भावात् संप्रतिपन्नतया प्रयुज्यमानस्य मुख्यत्वे संभवति अमुख्यत्वायोगादित्यर्थः ।।

ननु बुद्ध्यादय आत्मगुणा इति सर्वसंमतम् । बुद्धेर्द्रव्यत्वे कथं गुणत्वमित्यत्राह— **एवमित्यादि** । **एवम्**=एवमपि **अस्याः**=बुद्धेः **गुणत्वम्**=आत्मगुणत्वम् **न गलति**=नापैति । द्रव्यत्वगुणत्वयोर्विरोधस्य स्पष्टत्वात् कथमिदमित्यत्र— **न खल्वित्यादि** । **तत्**=गुणत्वम् **तन्त्रसङ्केतसिद्धं न खलु**=वैशेषिकतन्त्र-सङ्केतमात्रसिद्धं न हि भवति । पूर्वमीमांसायामङ्गानां गुणत्वस्य प्रसिद्धत्वात् । 'दध्ना जुहोति' इति खलु दधिरूपगुणविधिरित्युच्यते । अतो गुणपदं न सर्वत्र द्रव्यपदविरुद्धार्थकम् । अथवा गुणपदं नानार्थकम् । अतो न विरोधः । ननु द्रव्यगुणपदयोरेवमर्थसाङ्कर्ये लोके असंकीर्णव्यवहारः कथमित्यत्र— **लोक** इत्यादि । **लोके**=लोकव्यवहारे **धर्मस्वभावः**=यस्य वस्तुनो धर्मत्वमेव स्वभाव शः **गुण इति विदितम्**= गुणपदव्यवहारार्हमित्येतावन्मात्रं प्रसिद्धम् । **सापि**=बुद्धिरपि **प्रभावत्**=दीपधर्मप्रभावत् धर्मतयैव सिद्धा । प्रभाया दीपधर्मत्वस्य पूर्वमेव (जड.56) स्थापनात्, तद्दृष्टान्तेन बुद्धेरपि प्रभावदात्मधर्मत्वे न कोऽपि विरोधः । एतद्विषये वक्तव्यं सर्वं पूर्वमेव (जीव.4) विवृतम् ।। ७ ।।

[ज्ञानस्याद्रव्यत्वेऽनुपपत्तिः]

**233. नित्या धीर्हेतुतोऽस्या भवति विषयितेत्येवमिच्छन्त एव**
**द्रव्यत्वं नास्ति बुद्धेरिति गुणगणने तामपि स्थापयन्ति।**
**अद्रव्यत्वं कथं स्यात् विकृतिमति? विकृत्युज्झने पूर्ववत् स्यात्**
**इत्थंभूतात् विकारान्न भवति यदि, नातिप्रसङ्गप्रसङ्गात् ॥ ८ ॥**

बुद्धेर्द्रव्यत्वे तस्या आत्मगुणत्वं न संभवेत्। अतः बुद्धिः वैशेषिकमत इव गुण एव, न द्रव्यमिति सयूथ्यवैमत्यमाशंक्य समाधत्ते—**नित्येत्यादि। धीः**=धर्मभूतं ज्ञानम् **नित्या**। तर्हि सुषुप्तावपि प्रकाशेतेत्यत्र—**अस्याः**=धियः **विषयिता**=सविषयकत्वम् **हेतुतः**=इन्द्रियादिद्वारिका। तथा च सुषुप्ताविन्द्रियाणामुपरमात् विषयसंबन्धाभावात् ज्ञानं न प्रकाशते, किन्तु असत्कल्पं वर्तते। तथा च भाष्यम्—'यत्तु धर्मभूतज्ञानस्य स्वयंप्रकाशत्वमुक्तम्, तत् विषयप्रकाशनवेलायाम्' इत्यादि। ज्ञानं तु नित्यम्, तस्य सविषयकत्वं तु कादाचित्कम् इत्येवम् इच्छन्त एव अङ्गीकुर्वन्त एव **बुद्धेः**=धर्मभूतज्ञानस्य **द्रव्यत्वं नास्ति इति तामपि**=बुद्धिमपि **गुणगणने**=गुणवर्गे **स्थापयन्ति**=अन्तर्भावयन्तीत्यर्थः। अत्र **केचित्** इति कर्तृवाचकपदमध्याहार्यम्। **केचित्**=सयूथ्यैकदेशिनो **वरदनारायणभट्टारकाः** प्रज्ञापरित्राण इति **न्यायसिद्धाञ्जनम्**॥

अत्र एवमिच्छन्त एव इत्यनेन नित्यत्वकादाचित्कसविषयकत्वयोर्विरोधः सूच्यते। निर्विषयं तु ज्ञानमनुभवविरुद्धम्। यद्यपि सिद्धान्तेऽपि नित्यत्वं कादाचित्कसविषयत्वं चाङ्गीकृतम्। परन्तु द्रव्यत्वात् संकोचविकासाभ्यामस्य न विरोधः। अतस्सुषुप्तावसत्कल्पमनन्तरं सविषयकं भवति चेत्, ज्ञानस्यावस्थाभेदस्सिद्धः। अवस्थावत्त्वमेव द्रव्यलक्षणम्। एवञ्चास्य गुणत्वं विरुद्धमिति सूचितम्॥

एवमिच्छन्त एव इत्यनेन सूचितं विरोधं विवृणोति—**अद्रव्यत्वमित्यादि**। **विकृतिमति**= पूर्वमसतो विषयसंबन्धस्य नूतनतयागमनेन विकारवति ज्ञाने अद्रव्यत्वं कथं स्यात्? विकारवत्त्वस्यैव द्रव्यलक्षणत्वेन, अद्रव्यत्वं कथं वा भवेत्? विरोधात्। तदर्थम्, **विकृत्युज्झने**=एतादृशविषयसंबन्धपरित्यागे ज्ञानं **पूर्ववत्**=सुषुप्ताविव असत्कल्पमेव स्यात्। ननु यथा मृदो घटाद्याकारेणान्यथाभावः, न तथात्र ज्ञाने कश्चनान्यथाभावः। अत एतादृशं सविषयकत्वं न द्रव्यत्वापादकमित्याशङ्क्य समाधत्ते—**इत्थंभूतादित्यादि। इत्थंभूतात्**=एतादृशाद्विलक्षणात् **विकारात् यदि द्रव्यत्वं न भवति,** इति चेत्—न। कुतः? **अतिप्रसङ्गप्रसङ्गात्**=अनेकविधातिप्रसङ्गानामापत्तेः। तथा हि—मृदो यादृशो विकारः, स एव द्रव्यत्वप्रयोजकः, नान्यादृश इति यदि, तदा तन्तुभिः पटजनने यादृशो विकारः, तादृशस्य विकारस्य मृदोऽदर्शनात्, घटस्य द्रव्यत्वं न स्यात्। अथवा मृद इवान्यथाभावस्य प्रतिवस्तु विलक्षणत्वात्, परस्परपरिहारेण कुत्रापि द्रव्यत्वमेव न स्यात्। अन्यथाभावः खलु स्वरूपतः, स्वभावतः, संसर्गतश्चेति त्रिविधोऽन्यथाभावः आत्माधिकरणे प्रतिपादितः। अत्राप्यवान्तरभेदाः तत्तद्वस्त्वनुगुणास्सन्त्येव। अतो ज्ञानस्य विषयसंबन्धोऽपि अन्यथाभाव एव। अतः बुद्धेर्द्रव्यत्वमेव युक्तम्॥ ८ ॥

[प्रमाभ्रमविभागः]

234. • **सर्वं ज्ञानं न मानं परमतविजयात्; नाप्रमाणं स्वबाधात्**
**मानामानव्यवस्था तदियमनुमता लौकिकैर्यौक्तिकैश्च।**
**तत्रामाने त्ववर्ज्यं स्वरसमिति वदन्त्यन्यथाभानमेके**
**तत्सामग्र्यैव तादृग्व्यवहृतिमपरे लाघवादाश्रयन्ति ॥ ९ ॥**

एवं बुद्धेः स्वरूपं विचार्य, सर्वव्यवहारनिदानभूतं बुद्धेः प्रमात्वतदभावस्वरूपं विचारयितुमुपक्रमते—**सर्वमित्यादि**। सर्वं **ज्ञानम्**=लोके परिदृश्यमानं सर्वेषामपि सर्वविधमनुभवात्मकं ज्ञानम् **मानं न**=प्रमारूपं न भवति। कुतः—**परमतविजयात्**=परेषामनुभवात्मकं ज्ञानमपि प्रमाणं स्यात्। ततश्च परमतविजयप्रसङ्गः, तेषामपि ज्ञानस्य प्रमाणत्वात्। एवमेव—**नाप्रमाणम्**=नापि सर्वेषां सर्वं ज्ञानम् अप्रमारूपम्। कुतः—**स्वबाधात्**=स्वमतस्यापि बाधप्रसङ्गात्। परमतविजयपरिहाराय सर्वं ज्ञानमप्रमाणमेवेति कथने, स्वमताधारभूतज्ञानस्याप्यप्रमाणत्वात् स्वमतस्याप्यसिद्धिप्रसङ्गः। 'स्वीयमेव प्रमाणम्, न तु परकीयम्' इति प्रतिज्ञा तु न युक्ता, परैरपि तथा प्रतिज्ञाकरणे किमुत्तरम्। **तत्**=तस्मात्कारणात् **इयम्**=लोके दृश्यमाना **मानामानव्यवस्था**=प्रमाभ्रमव्यवस्था **लौकिकैः**=लोकव्यवहारनिष्ठैः जनैः **यौक्तिकैश्च**=युक्त्यन्वेषणपरैः परीक्षकैश्च **अनुमता**=अङ्गीकृतैव। **तत्र**=एवं व्यवस्थाया आवश्यकत्वे प्रमाभ्रमयोर्मध्ये **अमाने तु**=प्रमाविलक्षणे भ्रमे तु **एके**=नैयायिकाः **अन्यथाभानम्**=अन्यथाख्यातिम् **स्वरसम् इति वदन्ति**=लोकानुभवसहजसिद्धमिति वदन्ति। 'मयाऽन्यथागृहीतम्' इति बाधकाले सर्वैरपि व्यवहारात् अन्यथाख्यातिरेव स्वरसेति नैयायिकाः, एतदनुयायिनस्तार्किकमीमांसकाश्च **(भाट्टाः)**। **अपरे=प्राभाकराः**, तदनुयायिनश्च वेदान्तिनः **तत्सामग्र्यैव**=अन्यथाख्यातिसामग्रीभूतया अख्यात्यैव **तादृग्व्यवहृतिम्**=भ्रमव्यवहारम् **लाघवात्**=यौक्तिकलाघवात् **आश्रयन्ति**=अवलम्बन्ते=अङ्गीकुर्वन्ति। अन्यथाख्यातिवादेऽपि, तन्निर्वाहार्थमख्यातेरावश्यकत्वात् उभयसंमताख्यातिरेव 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायात् भ्रमत्वप्रयोजिका, लाघवात्। प्रसिद्धमेव ह्याचार्यवचनम् 'स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम्' (न्या.प) इति ॥

ख्यातिवादस्तु सुधियां शिरश्शूलकरस्सदा। विद्यते पुरतस्त्वन्यत् भासतेऽन्यत्कथं पुरः ॥
येन चेन्द्रियसंबन्धः न तद्भाति कुतः? कथम्?। येन नेन्द्रियसंबन्धः तद्वा भाति कथं कुतः? ॥
इयं समस्या सर्वेषामख्यातिर्दुस्त्यजान्ततः। अन्यथाख्यातिवादो वा भवेत्सर्वमतेष्वपि ॥

तथाहि—पुरुषस्तु शुक्तिशकलं पश्यति। पुरोवर्तिशुक्तौ शुक्तित्वं दोषवशान्न गृह्यते। दोषश्च दूरत्वादिः। तदैव भास्वरशुक्लसादृश्यात् रजतस्मृतिर्भवति। अत्रापि दोषवशात् स्मृतित्वं न गृहीतम्। अत्र दोषश्चापल्यमनवधानं वा। ततः 'इदं रजतम्' इति प्रत्यक्षं भवति। एवञ्चात्र शुक्तित्वस्मृतित्वयोरख्यातिरेव मूलम्। अत इदं ज्ञानद्वयमेव नातिरिक्तं किञ्चिदित्य**ख्यातिवादिनः**। परन्त ज्ञानयोरुभयोर्निरूप्यनिरूपकभावः दुरुपपादः ॥

[यथार्थख्यातिस्वरूपम्]

235. **नाथैरुक्ता यथार्था विमतमतिरपि न्यायतत्त्वे; तदेतत्**
**भाष्येऽनूक्तं; तदत्र व्यवहृतिरुभयी बाधिताबाधिताख्या।**
**शुक्तौ रूप्यं प्रभाम्भः श्रुतिनयवशतः स्वाप्नमप्यस्तु सत्यम्**
**योग्यायोग्यादिभेदाग्रह इह चरमां गाहते संप्रतिष्ठाम्॥ १०॥**

---

भिन्नज्ञानीययोर्विषययोर्निरूप्यनिरूपकभावः कथमिति चेत्, न निरुप्यनिरूपकभावभानम्, किन्त्व-संसर्गाग्रहः=निरूप्यनिरूपकभावाभावस्याज्ञानमेव । अतः एतद्दृष्ट्याऽख्यातिवाद एव साधीयान् । अन्यथाख्यातिवादेऽप्येतावत्सामग्र्या आवश्यकत्वात्। 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायात्। **तद्धेतोरेव=**अन्यथाख्यातिसामग्र्या एव स्मृतित्वाग्रहणादेः **तद्धेतुत्वे=**'इदं रजतम्' इति भ्रमहेतुत्वे संभवति, **मध्ये=**स्मृतित्वाग्रहणादख्यातिसामग्रीरजतप्रत्यक्षयोर्मध्ये, **तेन किम्=**अन्यथाख्यातिसामग्रीरूपरजतभान-कल्पकेन किं साधनीयम्? वृथा गौरवमात्रम्। अतः अख्यातिवाद एव युक्तः। तर्ह्यन्यथाख्यातौ स्वारस्यं कथमिति चेत्, 'रजतं साक्षात्करोमि' 'शुक्तिरेव रजततया गृहीता' इत्याद्यनुभवस्वारस्यमित्यर्थः। परन्त्वनयोरनुभवयोरनन्तकालिकत्वेनान्यथासिद्धत्वात् नार्थसाधकत्वमित्याशयः॥ ९॥

ननु यद्यख्यात्यन्यथाख्यात्यन्यतरपक्षयोरेव भ्रमस्य पर्यवसानं 'तर्हि षष्ठी चेयं यथार्थख्यातिः' इति **श्रीमन्नाथमुनेः न्यायतत्त्व**वचनं कथम्? 'आत्मख्यातिरसत्ख्यातिरवाच्यख्यातिरेव च। अन्यथाख्याति-रख्यातिरित्येवं ख्यातिपञ्चकम्॥' यथार्थख्यातिश्च षष्ठीत्यर्थः। एवं 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्'(श्री.भा.1-1-1) इति भगवद्भाष्यकारवचनं वा कथम्? इत्यत्राह—**नाथैरित्यादि**। **अपि=**यद्यपि **नाथैः=**श्रीमन्नाथमुनिभिः **न्यायतत्त्वे, विमतमतिः=**विसंवादिनी बुद्धिः=अयथार्थं ज्ञानम्, अथवा **अपि** इत्यस्य विमतमतिरपीत्यन्वयः, **यथार्था** उक्ता, अयथार्थं ज्ञानं कथं यथार्थं भवेत्? इति प्रश्नाभिप्रायः। **तदेतत् भाष्येऽपि अनूक्तम्=**'यथार्थं सर्वविज्ञानम्' इति श्रीभाष्येऽनूदितम्। वेदविदः=वैदिकाग्रेसराः **प्राभाकरादयः**। ततश्च अयथार्थं ज्ञानं कथं यथार्थं स्यात्? इति प्रश्नो निगूढः। उत्तरम्—**तदत्रेत्यादि**। **तत्=**तस्मात् **अत्र=**अस्मिन् विषये **व्यवहृतिः=**यथार्थत्वायथार्थत्वव्यवहारः, **उभयी=**उभयविधा **बाधिताबाधिताख्या=**बाधितो व्यवहारः, अबाधितो व्यवहार इति संवादिप्रवृत्तिजनकं ज्ञानमबाधितमिति, विसंवादिप्रवृत्तिजनकं ज्ञानम् बाधितमिति विभागो ज्ञेय इत्यर्थः। प्रवृत्तौ **संवादो** नाम, यद्विषयकं ज्ञानम्, तद्विषयप्राप्तिः। **विसंवादः**, यद्विषयकं ज्ञानम्, तद्विषयाप्राप्तिः। तथा च ज्ञानप्राप्त्योः समानविषयकत्वे ज्ञानं प्रमेत्युच्यते, असमानविषयकत्वे ज्ञानं भ्रम इत्युच्यते इति प्रमाभ्रमविभागः॥

ननु शुक्तौ रजतबुद्धिः कथं यथार्था? पुरतो रजताभावादित्यादिशङ्कां समाधत्ते—**शुक्तावित्यादिना**। **शुक्तौ रूप्यम्=**रजतम् सत्यम् अस्तु इत्यन्वयः। एवम्—**प्रभाम्भः=**प्रभायाम्=सूर्यकिरणे=मरीचिकायाम् अम्भः=जलम् सत्यमस्तु। एवम् **स्वाप्नम्=**स्वप्नदृष्टम् **अपि सत्यमस्तु**। अत्र प्रमाणम्—**श्रुतिनयवशतः**

इति । श्रुतिवशतः, नयवशतश्चेत्यर्थः । अथवा श्रुतिसंमतन्यायवशादित्यर्थः । स्वाप्नपदार्थानां भगवता सृष्टत्वं सन्ध्याधिकरणन्यायसिद्धम् । अयं च विचारः पूर्वमेव विस्तरेण गतः । शुक्तौ रजतमपि पञ्चीकरणप्रक्रियया सर्वत्र सर्ववस्त्ववयवानां सद्भावात्सत्यमेव । पूतीके सोमावयवसद्भावात् सोमालाभे पूतीकग्रहणं मीमांसकैरुक्तम् । 'सोमाभावे च पूतीकग्रहणं विधिचोदितम् । सोमावयवसद्भावादिति न्यायविदो विदुः ॥ (1-1-1) इति श्रीभाष्यम् । न्यायविदः पूर्वमीमांसकाः । एवमेव मरुमरीचिकायामपि सलिलावयवाः स्युः । अतः सर्वं ज्ञानं यथार्थमेवेति न्यायतत्त्वेऽभिहितम् ॥

ननु तर्हि प्रमाभ्रमविभाग एव न स्यादित्यत्र—**योग्येत्यादि** । **योग्यम्**=विवक्षितकार्यसमर्थम् । **अयोग्यम्**=विवक्षितकार्यासमर्थम् । आपणरजतेनाभरणादिकं क्रियते, न तु शुक्तिरजतेन । एतदादाय प्रमाभ्रमविभागस्सुज्ञः । एवञ्च योग्यायोग्ययोः **भेदाग्रह एव इह**=प्रमाभ्रमविभागे **चरमाम्**=अन्तिमाम् **संप्रतिष्ठाम्**=निर्णयभूमिम् **गाहते**=विषयीकरोति । आदिपदेन क्रयविक्रयादिव्यवहारा ग्राह्याः । आपणरजतं क्रेतुं विक्रेतुं वा शक्यते, न तु शुक्तिरजतम् । अतश्च यथाकथञ्चित् भेदाग्रह एवान्तिमो निर्धारक इति अख्यातिवाद एव पर्यवसानमिति भावः ॥

ननु यदि सर्वं ज्ञानं यथार्थम्, तर्हि एकत्र विषयप्राप्तिः, अन्यत्र विषयाप्राप्तिर्वा कथम्? न च ज्ञानं तु सर्वत्र स्वांशे सत्यमेव । आचार्याणां वचनमपि प्रदर्शितमेव । न हि भ्रमस्थलेऽपि 'मम ज्ञानमेव न जातम्' इति कश्चिन्मनुते । ननु च विषयाभावेऽपि जातं ज्ञानं कथं सत्यं स्यादिति चेत्—अभिप्रायानभिज्ञो भवान् । ज्ञानं निर्विषयकं किञ्चिज्जायत इति केनोक्तम् । ज्ञाने विषयो न कारणम्, किन्तु प्रत्यक्ष एव, भूतभविष्यद्विषयेऽपि ज्ञानदर्शनात् । अत्र वा विषयोपस्थापकसामग्री का स्यादिति चेत्, अनुमितौ व्याप्तिज्ञानम्, शाब्दे शब्दः, स्मृतौ तु पूर्वानुभवजन्यः संस्कारः ॥ वृथा शब्दं वर्धयसि । शुक्तिं दृष्ट्वा 'इदं रजतम्' इत्यत्र का विषयोपस्थापकसामग्री? प्रोच्यताम् । एतदेव खलु परीक्ष्यत इदानीम् । इदं प्रत्यक्षमपि ज्ञानविशेषः । ज्ञानांशे तु तदपि प्रमैव । विषयस्य प्रत्यक्षत्वांशे सामग्री का? इत्येव खलु समस्या । प्रत्यक्षं तु इन्द्रियार्थसन्निकर्षजन्यम् । विषयस्याभावे कथमिन्द्रियार्थसन्निकर्षः? अत एव किल विषयतासंबन्धेन प्रत्यक्षं प्रति तादात्म्यसंबन्धेन विषयः कारणमिति नवीनैरुच्यते । अतश्च प्रत्यक्ष एव विषयः कारणम्, न त्वन्यत्र । कारणत्वं च सत्यस्यैव । नन्वसत्यात्सत्यसिद्धिरपि दृश्यते किल । अयि भोः! परीक्षितमेतद्विस्तरतः (जीव.49) । मास्तु पिष्टपेषणम् । प्रकृते प्रत्यक्षे विषयस्य कारणत्वात्, पुरतो रजताभावेऽपि कथं रजतप्रत्यक्षम्? न च तत्प्रत्यक्षं नेति वक्तुं शक्यम्, 'रजतं पश्यामि' इत्युल्लेखस्य स्पष्टं दर्शनात् । न च रजतस्मृतिरूपज्ञानलक्षणाऽलौकिकस्सन्निकर्ष एव कारणमिति वाच्यम्, 'रजतं पश्यामि' इत्येवानुभवात्, न तु स्मरामि इति । अतो दोषविशेषवशात् स्मृतित्वाग्रहणं वाच्यम्, **'अस्यैव अख्यातिवादः' 'स्मृतिप्रमोषवादः'** इति वा व्यवहारः। अत्र स्मृतित्वाग्रहणमात्रं न, प्रत्यक्षत्वग्रहणमपि, तथैवानुभवादिति पक्ष **अन्यथाख्यातिवादः** । प्रत्यक्षत्वग्रहणं कथम्? प्रत्यक्षसामग्र्या अभावात्, किंतु स्मृतित्वाभावमात्रात्तथोल्लेखः । इदमंशस्य प्रत्यक्षत्वात् तत्प्रभावात्प्रत्यक्षत्वं रजतांशेऽपि प्रतिफलितमिव भवति इत्यख्यातिवादिनः । शतधा संघर्षणेऽपि 'स्वारस्यमन्यथा-

[प्रवर्तकज्ञानस्वरूपविमर्शः]

**236. भेदाज्ञानात् प्रवृत्तौ न कथमुपरतिः स्यात् अभेदाप्रतीत्या**
**रूप्यारूप्यभ्रमादाविव यदि, न, यतोऽनिष्टभेदाग्रहात् सा ।**

ख्यातावख्यातौ लाघवं स्थितम्' इत्याचार्यसार्वभौमनिर्णय एव गतिः । न च भांवान्तराभाववादे स्मृतित्वाग्रहणं, स्मृतित्वग्रहणाभावः प्रत्यक्ष एव खलु वाच्य इति शङ्क्यम्, विशेष्यांशे इन्द्रियसन्निकर्षस्य प्रत्यक्षसामग्र्याः प्रबलायास्सत्त्वेन, स्मृतित्वाग्रहणं प्रकृते प्रत्यक्षे पर्यवस्यति । अत एव 'रजतं पश्यामि' इत्यनुव्यवसायः। प्रत्यक्षत्वोल्लेखस्य विशेष्यांशप्रभावप्रयुक्तत्वात्, प्रत्यभिज्ञाप्रत्यक्षत्ववत् । प्रत्यभिज्ञा हि ग्रहणस्मरणात्मिका । नैयायिकानां तु विशिष्टज्ञानवादिनां प्रत्यक्षम्, एकं च ज्ञानम् । अत आचार्यनिर्णय एव गतिः ॥

ननुं तर्हि 'स्वारस्यमन्यथाख्यातौ' इति कथम्? 'शुक्तिरेव मया रजततया गृहिता' इति व्यवहारादिति चेत्, अस्य 'नेदं रजतम्' इति बाधानन्तरकालिकत्वेन मानसरूपतासंभवेनान्यथासिद्धत्वादिति चेत्, एतद्वादान्ते क्षोदक्षमं विचारयामस्तत्त्वम् । भावाभावयोः स्वरूपस्याप्यतिगहनत्वात्, स्मृतिप्रमोषवादस्य दुस्त्यजत्वात्, अख्यातेरभावरूपत्वेन चास्त्येव बुद्धेः साङ्कर्यम् । अत एव च वादानामानन्त्यमित्यप्यसकृदुक्तम् ॥

अर्थ-प्रतीति-शब्दानां साङ्कर्यं स्थूलदृष्टिषु । सहजम्, यत्र मुह्यन्ति नरास्सूक्ष्मधियोऽपि हि ॥
वेत्तुं तत्त्वं शक्नुवन्ति कति वा भुवि मानवाः ? अन्यथा खलु संसारः कथं वर्धेत, चिन्तय ॥
क्रीडारसः कथं वा स्यान्मायिनः प्रभुणो हरेः । वयं क्रीडासहचराः इति सन्तुष्यतां सदा ॥

**अयं भावः**—जानाति, इच्छति, यतते इति दर्शनात्, प्रवृत्तिं प्रति ज्ञानमेव कारणम् । 'अज्ञानात् प्रवर्तते' 'अज्ञानान्मया कृतम्' इत्यादावप्यन्यथाज्ञानमेव वस्तुतः प्रवर्तकम् । अन्यथा, सुषुप्तावपि प्रवृत्तिप्रसङ्गः । न च शुक्तित्वाज्ञानमात्रं प्रवर्तकम्, सत्यरजतस्थले पुरोवर्तिनि रजतत्वज्ञानस्यैव प्रवर्तकत्वस्य सर्वैरपि वक्तव्यत्वात्, शुक्तिरजतभ्रमस्थलेऽप्यनुभवस्य तुल्यतयैव दर्शनात् । न च शुक्तौ 'नेदं रजतम्' इति रजतभेदज्ञाने जाते प्रवृत्तेरदर्शनात्, अज्ञातरजतभेदे प्रवृत्तेर्दर्शनाच्चान्वयव्यतिरेकाभ्यां रजतभेदाग्रह एव प्रवृत्तिं प्रति कारणमिति वाच्यम्, सत्यरजतस्थले 'इदं रजतम्' इति पुरोवर्तिनि 'इदं'पदवाच्ये रजताभेदज्ञानस्यैव प्रवृत्तिहेतुत्वस्य सर्वसंमतत्वात्, शुक्तावपि रजतज्ञानस्य=रजताभेदज्ञानस्यैव प्रवर्तकत्वस्य वक्तव्यत्वात्, अन्यथाख्यातिरवर्जनीयेति चेत्, सत्यरजतस्थले रजतेन्द्रियसन्निकर्षस्य सत्त्वेन तथात्वसंभवेऽपि शुक्तिरजतस्थले तदभावेन रजतप्रत्यक्षासंभवात्, शुक्तौ निवृत्तिकारणीभूतरजतभेदग्रहाभावस्यैव कारणत्वमनिवार्यम् । ननु स्थलद्वयेऽपि प्रवृत्तेरेकरूपताया एव दर्शनात्, एकत्र रजताभेदग्रहः प्रवृत्तिकारणम्, अन्यत्र तु रजतभेदाग्रह इति वैरूप्यमनुभवविरुद्धमिति चेत्, तर्हि सत्यरजतस्थलेऽपि 'नेदं रजतम्' इति भेदज्ञाने जाते निवृत्तेर्दर्शनात्, निवृत्तिकारणभूतभेदग्रहाभाव एव प्रवृत्तिकारणमस्तु, का हानिरिति भेदाग्रह एवोभयत्रापि कारणमिति न वैरूप्यम् । अतोऽख्यातिवाद एव साधीयानिति ॥ १० ॥

अन्यथाख्यातिवादिनश्शङ्कामनूद्य समाधत्ते—**भेदाज्ञानादि**त्यादिना । **भेदाज्ञानात्**=पुरोवर्तिशुक्तौ रजतभेदस्याग्रहणात् **प्रवृत्तौ**=रजतार्थिनः प्रवृत्तावङ्गीकृतायाम् **रूप्यारूप्यभ्रमादौ**=रूप्ये=रजते अरूप्य-

**आधारे भेदवर्जं स्फुरति सदृशवस्त्वन्तरे चोपपन्ना**
**तत्तद्वस्तूचितैव व्यवहृतिनियतिस्त्वन्मते बुद्धिवन्नः ॥ ११ ॥**

भ्रमादौ=शुक्तिभ्रमस्थले **अभेदाप्रतीत्या**=प्रवृत्तिहेतोः रजताभेदप्रतीतेरभावात् **उपरतिः**=निवृत्तिः कथं न स्यात्? इत्याक्षेपः ॥

तर्हि प्रवर्तकस्य 'इदं रजतम्' इति ज्ञानस्याभावात् प्रवृत्तिरपि न स्यात्। अतश्च ज्ञानाभावः प्रवर्तको वा निवर्तको न भवति, किन्तु इष्टत्वज्ञानं प्रवर्तकम्, अनिष्टत्वज्ञानं च निवर्तकं वक्तव्यम्। तथा च शुक्तौ रजतत्वज्ञानमावश्यकमिति अन्यथाख्यातिरनिवार्येति ॥

**इति यदि,** समाधत्ते—**नेति**। कुत इत्यत्र—**यत** इत्यादि। **सा**=निवृत्तिः **अनिष्टभेदाग्रहात्**=प्रवर्तकस्येष्टभेदाग्रहस्याभावात् भवति, न त्वनिष्टत्वज्ञानात्। तथा च भेदाग्रह एव प्रवृत्तौ निवृत्तौ वा कारणम्। इष्टभेदाग्रहः प्रवृत्तौ, अनिष्टभेदाग्रहो निवृत्तौ च कारणम्, न त्विष्टत्वज्ञानं प्रवृत्तौ, अनिष्टत्वज्ञानं निवृत्तौ कारणम् ॥

अनुभवं विश्लिष्य प्रदर्शयति—**आधारे**त्यादि। **आधारे**=अधिष्ठाने **भेदवर्जम्**=तद्गतशुक्तित्वरूपविशेषाकारं विना, भास्वरशुक्लरूपवत्त्वमात्रेण **स्फुरति**=भाति सति, **सदृशवस्त्वन्तरे**=भास्वरशौक्ल्यरूपसादृश्यमूलकतया रजतत्वादिविशेषे तदेव स्फुरति **च उपपन्ना**=प्रवृत्तिरुपपद्यत एव। एवञ्चाधिष्ठानज्ञानम्, विशेषाकाराग्रहः, वस्त्वन्तरस्मरणम्, स्मृतित्वरूपविशेषाग्रहः इत्यख्यातिरेव। यथा शुक्तौ शुक्तित्वाग्रहे भास्वरशुक्लवस्तुप्रत्यक्षम्, तदैव सादृश्यात् रजतस्मरणम्, तत्र स्मृतित्वाग्रहः। द्वयं मिलितमेकमिव ज्ञानं प्रवृत्तिकारणम्। ननु शुक्तिरजतस्थले प्रवृत्तिः कथमिति विचारोऽस्तु यथा तथा वा। सत्यरजतस्थले, अधिष्ठानज्ञानमित्यादिकल्पनामन्तरापि प्रवृत्तिः दृश्यमाना विशिष्टैक्यज्ञानादिति स्वरसम्। एवं सति शुक्तिरजतस्थलानुरोधेन सत्यरजतस्थलेऽपि अनिष्टभेदाग्रह एव प्रवृत्तिकारणमिति कल्पनं क्लिष्टमिव भाति किलेतिशङ्कां परिहरति—**तत्तदि**त्यादि। **व्यवहृतिनियतिः**=प्रवृत्तिनिवृत्तिरूपव्यवहारव्यवस्था **तत्तद्वस्तूचितैव**=तत्तद्वस्त्वनुगुणैवोचिता भवति, न तु स्थूलानुभवानुगुणा, अनुभव एव विसंवाददर्शनात्। तर्हि कल्पना कर्तव्येति गौरवं किलेत्यत्र—**त्वन्मत** इत्यादि। **त्वन्मते**=अन्यथाख्यादिवादे **बुद्धिवत्**=विशिष्टबुद्धिवत् **नः**=अख्यातिवादिनामस्माकम् **व्यवहृतिनियतिः तत्तद्वस्तूचितैव**=तत्र तत्र विद्यमानवस्तुस्थित्यनुरोधेनैव **उपपन्ना** इत्यन्वयः। कल्पनं तु मतद्वयेऽपि समानम्। भ्रमस्थले मतद्वयेऽप्यनिवार्यतयाङ्गीकृतवस्तुस्थित्यनुरोधेन संप्रतिपन्नसामग्र्या एव प्रवृत्तिहेतुत्वमात्रं कल्प्यतेऽस्माभिः। भवन्मते तु एतत्सामग्र्यतिरिक्तं विशिष्टं ज्ञानं कल्प्यत इत्यस्मत्पक्ष एव लाघवम् 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायादित्यर्थः॥

**अयं भावः**—शुक्तिरजतस्थले सत्यरजतस्थले वा प्रवृत्तिस्समाना। सत्यरजतस्थले क्लृप्तसामग्र्यनुरोधेन शुक्तिरजतस्थले सामग्रीकल्पने, शुक्तिरजतस्थलेऽपि विशिष्टैकज्ञानकल्पनेऽ**न्यथाख्यातिः**। परन्तु रजतेन्द्रियसन्निकर्षाभावे रजतभानं कथमित्याक्षेपस्य समाधानं तु अन्यथाख्यातिवादे क्लिष्टम्। अख्यातिवादे तु

[अन्यथाख्यातिनिरासः]

237. **अन्यस्मिन्नन्यबुद्धिर्न यदि, न घटते तत्प्रवृत्तिस्तदिच्छोः**
**इष्टं तत्साधनं वा यदभिमतमतोऽन्यत्र सा नेति चेन्न।**
**रत्नांशौ रत्नबुद्ध्या विदुरनवगते रत्न एव प्रवृत्तिम्**
**ज्ञातस्वेष्टानुषङ्गादविदितमपि खल्वाददीतात्र चैवम् ॥ १२ ॥**

सामग्री मतद्वयक्लृप्ता। तत्र प्रवृत्तिः कथमिति प्रश्ने, तदनुगुणतया क्लृप्तस्यैव वस्तुनोऽनुरोधेनानिष्टभेदाग्रहस्यैव कारणत्वं कल्पनीयम्। एतदनुरोधेन सत्यरजतस्थले प्रवृत्तिं प्रत्यपि अनिष्टभेदाग्रह एव कारणमिति कल्पनं युक्तम्। अतिरिक्तविशिष्टज्ञानकल्पनापेक्षया क्लृप्ते हेतुत्वकल्पनमेव 'धर्मिकल्पनातो वरं धर्मकल्पना' इति न्यायेन युक्तमिति ॥ ११ ॥

पुनरपि अन्यथाख्यातिरवर्जनीयेत्याशङ्क्य समाधत्ते-**अन्यस्मिन्नि**त्यादि। **अन्यस्मिन्**=पदार्थान्तरे शुक्त्यादौ **अन्यबुद्धिः**=पदार्थान्तरस्य रजतादेर्बुद्धिः **न यदि**=यदि न स्यात्, तर्हि, **तदिच्छोः**=रजतार्थिनः **तत्प्रवृत्तिः**=रजतविषयिणी प्रवृत्तिः **न घटते**=न सङ्गच्छते। अतः शुक्तौ रजतबुद्धिरावश्यकी। अतोऽन्यथाख्यातिरवर्जनीया। उक्तं किल भेदाग्रहादेव प्रवृत्तिरितीत्यत्राह—**इष्टमि**त्यादि। **इष्टम्**=साक्षादेवेच्छाविषयीभूतम्, **तत्साधनं वा**=साक्षादिच्छाविषयत्वाभावेऽपि इच्छाविषयीभूतसुखसाधनं वा **यत् अभिमतं** भवति, तत्रैव प्रवृत्तेस्संभवः। **अतः अन्यत्र**=साक्षादिच्छाविषयसुखादिभ्यः, परंपरया इच्छाविषये सुखसाधनादिभ्यो व्यतिरिक्ते विषये **सा**=प्रवृत्तिः **न**=न भवत्येव। अतः भेदाग्रहमात्रान्न प्रवृत्तिस्संभवति—इति पूर्वपक्षः ॥

समाधत्ते—**रत्नांशा**वित्यादि। **रत्नांशौ**=रत्नकिरणे **रत्नबुद्ध्या**='इदं रत्नम्' इति भ्रान्त्या **अनवगते**=ज्ञानाविषये रत्ने प्रवृत्तिं **विदुरेव**। अथवा रत्न एव इति वान्वयः। तथा चोक्तस्थले रत्नत्वज्ञानविषयत्वाभाववति रत्नांशौ रत्नार्थिप्रवृत्तिविषयत्वं वर्तत इति व्यभिचारो दोषः। प्रथमाक्षसन्निपातजन्यं ज्ञानमेव स्वलक्षणपदवाच्यं प्रमाणम्। तदनन्तरभावि च ज्ञानं विकल्पपदवाच्यमप्रमाणमिति बौद्धाः। विकल्पज्ञानानन्तरमेवेच्छा, यत्नश्च भवति। अथापि वस्तुप्राप्तिर्लोके दृश्यते। तथा च संवादप्रवृत्तिजनकत्वेऽपि विकल्पस्य कथमप्रामाण्यमिति शङ्कायाम्, विकल्पमूलभूतस्वलक्षणज्ञानप्रभावात् प्रामाण्यच्छायया प्रामाण्यभ्रमः, न तु वस्तुतः ज्ञानविषयस्य प्राप्तेश्च कश्चन संबन्ध इत्यत्र दृष्टान्ततयेदमुच्यते 'मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः। मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥' (प्र.वा) इति **धर्मकीर्तेः** श्लोकं मनसि कृत्वेदं दृष्टान्ततयोक्तम्। प्रसङ्गात् लोकसिद्धं व्यभिचारस्थलान्तरमाह—**ज्ञाते**त्यादि। **ज्ञातं यत् स्वेष्टम्**=क्षीरादि, **तदनुषङ्गात्**=तदनुबन्धात् **अविदितमपि**=स्वज्ञानाविषयभूतमपि जलादि **आददीत खलु**=गृह्णाति किल। **एवम् अत्र च**=प्रकृतेऽपि ज्ञेयमिति शेषः। तथा च पुरोवर्तिनि रजतत्वप्रकारकज्ञानमेव हेतुरिति न निर्बन्धः, किन्तु अनिष्टायाः शुक्तेः अग्रहादेव प्रवृत्तिरुपपद्यत इति नान्यथाख्यातिः ॥

तथा च अत्रैवं अनुमानं विवक्षितम्—विवादास्पदं शुक्त्यादिकं, रजतत्वप्रकारकज्ञानविषयः, रजतार्थिप्रवृत्तिविषयत्वात्, यथा सत्यरजतम्। ननु रजतत्वप्रकारकज्ञानाविषयेऽपि रजतक्रयसाधने धने

[अन्यथाख्यातिनिरासकानुमानम्]

238. शुक्तित्वारूप्यतादेर्न तु रजततया भाति शुक्तिर्विगीता
यद्वा धीत्वात् यथार्था विमतमतिरतो बुद्धिबाधोक्त्ययोगः ।

प्रवृत्तेर्दर्शनादुक्तानुमाने व्यभिचार इति चेत्, इष्टसाधनान्यत्वस्यापि हेतुविशेषणत्वेन, विशिष्टहेतोर्धनेऽभावान्न व्यभिचारः । लोके हि विवेकिनः 'इदं मदनुकूलम्' इति ज्ञानादेव प्रवर्तन्ते । सिद्धान्ते सुखस्य धर्मभूतज्ञानावस्थाविशेषरूपत्वेऽपि प्रवृत्तिः किल सर्वेषां समाना । अनुकूलत्वं साक्षादेव सुखादौ वर्तते, धनकनकादौ तादृशसुखसाधनत्वं वर्तते । एवञ्चैतादृशज्ञानमन्तरा प्रवृत्तेरसंभव एव । भोजनादौ हि 'इदं मम तृप्तिसाधनम्' इति ज्ञानादेव प्रवर्तते, न तु अतृप्तिसाधनत्वाभावज्ञानात्, बुद्धेर्लाघवपक्षपातित्वेन, **शिरोवेष्टनेन** नासिकास्पर्शवत् तावद्दूरानुधावनासंभवात् । न च भोजने क्षुण्णिवृत्तिसाधनत्वबुद्ध्यैव प्रवर्तते, न तु तृप्तिसाधनत्वबुद्ध्येति वाच्यम्, निवृत्तेरभावरूपत्वेन, क्षुण्णिवृत्तेरेव तृप्तिपदार्थत्वात् । भावान्तराभाववादिनां मते तु निवृत्तिस्तृप्तिरेव । तथा च अत्र शुक्तौ रजतज्ञानकल्पने गौरवम् ॥

अपि च पनसादिफलार्थी, स्वीयज्ञानेच्छयोरविषयं तदीयत्वगाद्युपादत्ते । शाकादिकं गृह्णन्, अनिच्छन्नेव तदीयवृन्तादिकमुपादत्ते । अतश्च ज्ञानेच्छाऽविषयस्यापि प्राप्तेर्बहुलं दर्शनात् जानाति, इच्छति, यतते, प्राप्नोति इत्येषामसमानविषयत्वेऽपि प्रवृत्तिविषयत्वं वर्तत इति विमतम्, रजतज्ञानविषयः रजतार्थिप्रवृत्तिविषयत्वात्' इत्यनुमाने एषु स्थलेषु व्यभिचारो द्रष्टव्यः । वस्तुतस्तु 'तथायुक्तं चानीप्सितम्' (पा.सू.1-4-49) इति सूत्रेणानभिमतस्यापि कर्मत्वविधानात्, तद्विषयिणी प्राप्तिः । अनिवार्यतया सहैव विद्यमानमपि कर्म भवतीत्यर्थः। ग्रामं गच्छन् तृणं स्पृशति, शाकं गृह्णन् वृन्तमूलादिकमपि गृह्णाति, अवर्जनीयत्वात् । इष्टामिश्रितत्वे तु कथं गृह्णीयात् । अतश्च प्रेक्षावतां प्रवृत्तिरेव विचारसहा, अर्थनिर्णयकरी च । अन्यथा 'तृणं स्पृशन् ग्रामं गच्छति', 'वृन्तमूलं गृह्णन् शाकं गृह्णाति' इत्यपि प्रेक्षावतां प्रयोगः स्यात् । अत एवेप्सिततमत्वाभावेऽपि कर्मत्वमुक्तम् । यदा चेप्सिततमत्वं नास्ति, तदैव तद्विषयकज्ञानमपि नास्त्येवेति मुख्यं कर्मत्वं तेषां नास्त्येव । अत इदं सर्वं वैभववादमात्रम् । अत्र वक्तव्यं सर्वमन्ते श्लोके (15) भविष्यति ॥ १२ ॥

अनुमानेनान्यथाख्यातिं निराकरोति— **शुक्तित्वेत्यादिना** । **विगीता शुक्तिः रजततया न तु भाति**= न रजतत्वप्रकारकज्ञानविषयः, **शुक्तित्वारूप्यतादेः**=शुक्तित्वात्, अरजतत्वाद्वा । आदिपदेन रजतक्रियाकारित्वाभावो ग्राह्यः । 'विगीता शुक्तिः रजतत्वप्रकारकज्ञानाविषयः, इष्टसाधनत्वाभावविशिष्टरजतार्थिप्रवृत्तिविषयत्वात्' इत्युक्तानुमाने (श्लो.12) हेतौ विशेषणमावश्यकम् । प्रकृतानुमाने हेतोर्निर्विशेषणकत्वात्प्रबल इति सूचनाय 'तु' शब्दः । अनुमानान्तरमाह— **यद्वेत्यादि** । **विमतमतिः**=विप्रतिपन्नं शुक्तिरजतादिज्ञानम्, **यथार्था, धीत्वात्**=ज्ञानत्वात् 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इति सर्वज्ञानानां यथार्थत्वसाधनात् । अतः— **बुद्धिबाधोक्त्ययोगः**=बुद्धेः=अनुभवस्य बाध इति वचनं न युज्यत एव । ज्ञानानां स्वांशे बाधस्य कुत्रापि दुर्वचत्वात् । न हि 'ज्ञानमेव मम न जातम्' इति कश्चित् अनुसन्धत्ते । अतो विषय्यंशे बाधः कुत्रापि नास्त्येव ॥

**वैशिष्ट्यासिद्धिमात्रप्रथनमिह परं बाधकस्यापि कृत्यम्**
**किञ्चासत्ख्यातिरंशे प्रसजति भवतामन्यथाख्यातिवेद्ये ॥ १३ ॥**

ननु ज्ञानस्य यथार्थत्वं नाम अबाधितविषयकत्वमेव। दृश्यते च 'नेदं रजतम्' इति बाधकज्ञानम्। ज्ञानस्य यथार्थत्वे कथमेवं बाध इत्यत्राह—**वैशिष्ट्येत्यादि**। **परम्**=किन्तु **इह**=भ्रमे **बाधकस्यापि**=बाधकज्ञानस्यापि **वैशिष्ट्यासिद्धिमात्रप्रथनम् वैशिष्ट्यम्**=रजतत्वशुक्त्योः संबन्धः। **तस्यासिद्धिमात्रस्य प्रथनम्**=ख्यापनम् **कृत्यम्**=साध्यम्, नान्यत्। रजते सिद्धं रजतत्ववैशिष्ट्यं पुरोवर्तिन्यां शुक्तौ नास्तीति बोधनमात्रं बाधकज्ञानकार्यम्, न तु शुक्तौ प्रतीतस्य रजतत्ववैशिष्ट्यस्यासिद्धिप्रदर्शनम्, तदन्तरापि भ्रमनिर्वहस्य प्रदर्शितत्वात्। अन्यथाख्यातिवादे दुरुत्तरं दूषणमाह—**किञ्चेत्यादि**। **किञ्च**=अपि च **भवताम्**=असत्ख्यातिं निराकुर्वतां युष्माकं **अन्यथाख्यातिवेद्ये**=अन्यथाख्यातिविषये **अंशे**=यत्र क्वाप्यंशे **असत्ख्यातिः**=शून्यवादिसंमतासत्ख्यातिः **प्रसजति**। पुरतोऽसत एव रजतस्य भानात्। ननु आपणे सत एव भानम्, न तु सर्वथासतः शशशृङ्गादितुल्यस्येति चेत्, आपणे सतोऽपि पुरतोऽसत्त्वात् असत्ख्यातिः स्यादेव। न च पुरतः शुक्तिर्वर्तत एव। तत्र रजतत्वं प्रकारतया भासते इति भानमात्रम्, न रजतत्वस्य सत्ता शुक्तौ प्रतीयते, असंभवादिति वाच्यम्, शुक्तौ रजतत्वस्य सत्ता नास्ति, अथापि भानमात्रमित्यस्य कोऽर्थः? शुक्तिरस्ति, रजतत्वमस्ति, तयोस्संबन्धः परं नास्ति इति चेत्, असतस्संबन्धस्य भानं कथम्? न च शुक्तौ शुक्तित्वस्य सत्त्वात्, शुक्तिशुक्तित्वसंबन्धोऽप्यस्ति। शुक्तित्वस्थाने रजतत्वं भासत इत्येतावन्मात्रमिति चेत्, शुक्त्यनुयोगिकशुक्तित्वप्रतियोगिकसंबन्धे रजतत्वप्रतियोगिकत्वमात्रं भासते इत्यङ्गीकार्यत्वात्, असतो रजतप्रतियोगिकत्वस्य तादृशसंबन्धे भानादसत्ख्यातिरावश्यकी। अत एवाचार्यैः **अंशे** इत्युक्तम्॥

**वस्तुतस्तु**—एतादृशविशिष्टबुद्धिषु सर्वत्र संबन्धः सत्तयैव विशिष्टबुद्धिनियामकः, न तु ज्ञाततया। ज्ञानं सर्वं प्रकारत्वविशेष्यत्वभाननियतम्, न संसर्गप्रतीतिः ज्ञाने। संसर्गताख्यविषयता इत्याद्यभिधानं वस्तुस्वरूपकीर्तनम्, न तु प्रतीतिविषयकम्। अत एव समवायसाधकानुमाने 'विशिष्टबुद्धिः विशेष्यविशेषणसंबन्धविषया, विशिष्टबुद्धित्वात्' इत्यत्र विशिष्टबुद्धौ त्रयाणां विषयत्वमात्रमुक्तम्। विषयताऽन्या प्रतीतिरन्या। भ्रमस्थले हि शुक्तिर्विषयः, न तु प्रतीतिः शुक्तेः। 'घटवद् भूतलम्' इत्यादावपि घटभूतलयोस्संयोगः सत्तयैव विशिष्टबुद्धिहेतुः, न तु ज्ञाततया। संयोगो ज्ञातश्चेत्, 'घटसंयोगि भूतलम्' इत्युल्लेखः स्यात्। इदं समवायसंबन्धस्थले स्पष्टं ज्ञायेत। समवायस्तु एकः, नित्यश्च, अतीन्द्रियश्च। एवञ्च 'नीलो घटः' इत्यादिगुणविशिष्टबुद्धौ हि अतीन्द्रियस्य समवायस्य विशिष्टबुद्धिनियामकत्वं हि सत्तयैव वक्तव्यम्। अतस्सम्बन्धास्सत्तयैव कार्यकारिणः, न तु ज्ञाततया। एवञ्च शुक्तौ 'इदं रजतम्' इत्यत्रापि शुक्त्यनुयोगिकसमवाये रजतत्वप्रतियोगिकत्वमपि दोषवशात्संपन्नमिति, तत्र तद्ज्ञानस्याभावात् असत्ख्यातिर्नापादयितुं शक्या। एतत्सर्वं जानन्तोऽप्याचार्या महातार्किकाः शिष्यबुद्धिवैशद्यार्थमेवैवमवदन्नित्यवगन्तव्यम्। एवञ्च सम्बन्धांशेऽसत्ख्यातिरनिवार्येत्यत्र—

[अख्यातिवादः श्रीभाष्यकारसंमतः]

239. **योऽसौ बोधोऽन्यथाधीजनक इति जगे भ्रान्तिरित्युच्यतेऽसौ**
**नेत्थं बोधापलापः क्वचिदपि वदतां बोधमध्यक्षसिद्धम् ।**
**यत्र प्रत्यक्षसिद्धादधिकमपि परे निष्फलं कल्पयेयुः**
**सिद्धैरेवात्र तत्तद्व्यवहृतिरिति हि स्थापितं भाष्यकारैः ॥ १४ ॥**

विपरीतं वस्तुतत्त्वमसतस्सत्तया धियि । भानात्स्यादन्यथाख्यातिः दुर्वारा शून्यवादिनः ॥
सम्यगुक्तं भाष्यकारैर्महाकुशलबुद्धिभिः । अत्याज्या ह्यन्यथाख्यातिरख्यात्यादिष्वपीति यत् ॥
दृष्टिसृष्टिप्रवादस्तु प्रसज्येतान्यथा तदा । अथवा किमनेनेति भाष्यमत्र विमृश्यताम् ॥

वस्तुतत्त्वं त्वत्राग्रे (श्लोके.15) स्पष्टीभविष्यति ॥ १३ ॥

ननु यदि सर्वं ज्ञानम् यथार्थम्, तर्हि प्रमाभ्रमविभाग एव न स्यात् । अतोऽयं वादः सर्वत्र समदर्शिनां वेदान्तिनामेव शोभेतेत्यत्राह— **योऽसावित्यादि । योऽसौ बोधः**=अधिष्ठानबुद्धिसमकालिकरजतस्मृत्यादि-रूपं ज्ञानम् **अन्यथाधीजनकः**=अन्यथाख्यातिकारणम् **इति जगे**=अभ्यधायि तार्किकैः, **असौ** एव **भ्रान्तिरि-त्युच्यते** अस्माभिः । 'तद्धेतोरेव' इत्यादिन्यायात् । **इत्थम् बोधम् अध्यक्षसिद्धम्**=स्वप्रकाशप्रत्यक्षसिद्धं **वदताम्** अस्माकम् **क्वचिदपि**=कुत्रापि **बोधापलापः**=अनुभवस्यापलापः **न**=नास्त्येव । प्रत्युत— **यत्र**= यस्मिन् स्थले, अन्यथाख्यातिस्थल इत्यर्थः । **प्रत्यक्षसिद्धादपि**=अनुभवसिद्धात्, उभयवादिसिद्धादपि **अधिकम्**=विशिष्टं ज्ञानम् **निष्फलं कल्पयेयुः**=व्यर्थं कल्पयेयुः तार्किकाः, **अत्र सिद्धैरेव**=उभय-वादिसिद्धैः पूर्वोक्तैरेव **तत्तद्व्यवहृतिः**=भ्रमप्रमाव्यवहारव्यवस्था **इति हि भाष्यकारैः स्थापितम्**, 'धर्मि-कल्पनातो वरं धर्मकल्पना' इति न्यायात् । अतो न काप्यव्यवस्थाख्यातिवादे ॥

**अत्रेदमवधेयम्** भावरूपाज्ञानविमर्शनप्रकरणे श्रीभाष्यकाराः— शुक्तिरजतादिभ्रमस्थलेऽनिर्वचनीयमेव रजतं भासते प्रतीतिबाधान्यथानुपपत्त्या इति पक्षे, किमर्थं वृथाग्रहः? न ह्यनिर्वचनीयम् अनिर्वचनीयत्वेन गृह्यते, किंतु 'इदं रजतम्' इति निर्वचनीयतयैव । तथा च अन्यथाख्यातिरेवेयम्, न त्वनिर्वचनीयख्यातिः। किं बहुना! ख्यात्यन्तरवादिभिरपि सर्वैः सुदूरमपि गत्वाऽन्यथाख्यातिरवर्जनीया । असत्ख्यातिपक्षे सत्त्वेन, आत्मख्यातिपक्षेऽर्थात्मना, अख्यातिवादेऽन्यविशेषणमन्यविशेषणत्वेन भानादित्युक्त्वा, किमनया वृथा चर्चया-स्माकं वैदिकानाम् । वैदिका हि **प्राभाकरा** यथार्थख्यातिवादिन इति वयमपि तथैव ब्रूमः, का हानिः? इति वैदिकमतगोष्ठीप्रविष्टत्वरूपसदभिमानेन 'यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये । प्रभाकरगुरोर्भावस्समीचीनः प्रकाश्यते ॥' (प्र.प.) इति **नयवीथी**श्लोकं स्मरन्तः, 'अथवा— यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इत्यन्वगृह्णन् । भाष्योपक्रमशैलिदृष्ट्या, उत्तरत्रोपपादनशैल्या चेदं वैभवरूपं स्पष्टं ज्ञायते । तत्रोक्ते सर्वत्र सर्वसत्तावादे हि देहात्मभ्रमोऽत्यन्तं दुरुपपादः । अत एव तत्रागत्याऽख्यातिवाद एवाश्रीयते । अख्यातिवादे त्वन्यथाख्यातिरवर्जनीयेति उपक्रम एव स्पष्टीकृतम् । एतत्सर्वं विमृशद्भिस्सर्वतन्त्रस्वतन्त्रैः— 'स्वारस्य-

[संशयस्वरूपविमर्शः]

240. एकाधारे विरुद्धाकृतियुगयुगपत्ख्यातिरन्योन्यबाध्या
डोलाविक्षेपकल्पा तदनियतिरियं धीक्रमे साक्षिणी नः ।

मन्यथाख्यातावख्यातौ लाघवं स्थितम्' (न्या.परि.) इति निष्कृष्य प्रदर्शितम् । अत एवानन्तरकालिकैः अख्यातिसंवलितयथार्थख्यातिवादपदं प्रयुञ्जानैः—सर्वत्र सर्वसत्तावादेऽपि अख्यातेरवर्जनीयतां पश्यद्भिः यथार्थख्यातिवादे शिथिलीकृते, भगवद्भाष्यकारैः—ख्यात्यन्तरवादिभिः सुदूरमपि गत्वाऽन्यथाख्यातिरवर्जनीया इत्यभिधानेन, अख्यातिवादेऽपि 'अन्यविशेषणमन्यविशेषणत्वेन, ज्ञानद्वयमेकत्वेन च' इत्यस्वारस्यद्वयमभिधायाख्यातिवादोऽपि शिथिलीकृत इत्येतत् अवधेयम् ॥

उपक्रमोऽथवेत्यादिः प्राचीनानां महाधियाम् । प्रौढवादस्य शैलीयमिति जानन्ति कोविदाः ॥
विप्रतीपमिदं नव्यशैल्यामिति च मन्महे । गंभीरां प्रौढिवादस्य शैलीं जानन्ति किं जनाः? ॥
द्वितीयस्त्वथवेत्यादिरितोऽतिगहनः कृतः । उत्तरोत्तरवादानां सूचयेत्प्रौढिवादताम् ॥

तथा ह्युत्तरोत्तरं गभीरं श्रीमद्भाष्यम् 'अथवा किमनेन बहुनोपपादनप्रकारेण । प्रत्यक्षानुमानागमाख्यं प्रमाणजातम्, आगमगम्यञ्च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति! किं नोपपद्यते' इत्यादि । योज्यतामन्यान्यपि विशेषणानि परमात्मनः—'अनालोचितविशेषाशेषलोकशरण्यम्, आश्रितवात्सल्यैकमहोदधिम्, अघटितघटनापटीयांसम्' इत्यादीन्यनन्तानि । परन्त्विदं स्वगोष्ठ्यां शोभेत, न परमतनिराकरणप्रकरणे, दृष्टिसृष्टिवादप्रसङ्गात् ॥

ननु भोः! अन्ते तत्रैव पतितं भवद्भिरपि 'दुर्घटत्वमविद्याया भूषणं न तु दूषणम्' इत्युद्धतकन्धराणामविद्यावादिनां मुखे । इति चेत्, हन्त!

कियद्दौर्भाग्यमस्माकं त्वादृशैस्सह जल्पनम् । ये न जानन्ति वैषम्यमश्वस्य च खरस्य च ॥
किं न ज्ञातुं प्रभवसि विद्याविद्यापदार्थयोः । वैषम्यं तु ययोरस्ति पूर्वपश्चिमयोरिव ॥
न ते वेदान्तिनो ये तु ह्येवं पृच्छन्ति हैतुकाः । शुष्कतर्कप्रिया ह्येते, न वा वैदिकतार्किकाः ॥
अविद्योपरि भारं स्वं निक्षिप्यैते हि हैतुकाः । आत्मानं रक्षितं सम्यक् भ्रान्त्या जानन्ति बालिशाः ॥
एतस्माद्धि वरं विद्यारूपे ब्रह्मणि भावना । तादृशी क्रियतां सर्वक्लेशजातनिवारणी ॥
किन्नु जानाति मूढोऽयं लोकस्तर्कप्रियो बत? तर्कातीतं त्वप्रमेयं मनोवागतिवर्ति तत् ॥
सहस्रवारं वक्तव्यं महात्मवचनं मुहुः । **गुरो शापस्तु शिष्यः स्याद्भक्तो भगवतस्तथा** ॥
धर्मसंकटहेतुत्वादित्याद्यं सार्वकालिकम् । क्लिश्यन्ति स्वयमेते हि क्लेशयन्ति गुरूनपि ॥
शिष्टं प्रदर्शयामोऽत्र वक्तव्यं समनन्तरम् । एतावता न केनापि दर्शितं परमं रहः ॥ १४ ॥

ननु शुक्तिरजतादिभ्रमेषु कुशकाशावलम्बनेन कथञ्चिदख्यातिसमर्थनेऽपि 'स्थाणुर्वा पुरुषो वा' इत्यादावेकस्मिन् विरुद्धनानाधर्मकसंशयस्थलेऽन्यथाख्यातिरवर्जनीयेत्याशङ्क्यां समाधत्ते—**एकाधार** इत्यादि ।

**तस्मात् तत्तद्विशेषस्मृतिसमसमयं छन्नतत्तद्विरोधः**
**ख्यातः साधारणोऽर्थः परमिह विशये; येन बुद्ध्यन्तरं वः ॥ १५ ॥**

**एकाधारे**=ऊर्ध्वत्वादिविशिष्टे पुरोवर्तिन्येकस्मिन्नेवाधिकरणे **विरुद्धाकृतियुगयुगपत्ख्यातिः**=विरुद्धयोः आकृत्योः=स्थाणुत्वपुरुषत्वयोः युगस्य=द्वयस्य, युगपत् एककाले प्रतीतिः **अन्योन्यबाध्या**=परस्पर-विरुद्धा। अतोऽत्र प्रत्येकमधिकरणज्ञानद्वयं धर्मद्वयविषयकं ज्ञानद्वयं च प्रत्येकं वक्तव्यम्। न त्वेकस्मिन्नधिकरणे विरुद्धधर्मद्वयविषयकमेकं ज्ञानं वक्तुं शक्यम्। ननु तर्हि धर्मयोर्द्वयोः विरोधभानं न स्यादित्यत्र—**डोलाविक्षेपकल्पा** इति ख्यातिविशेषणम्। डोलायाः देशद्वयसंबन्धो न ह्येकक्षणावच्छेदेन भवति। एकदा पूर्वदेशेन, अन्यदा च पश्चिमदेशेन संबन्धः। तद्वदत्रापि स्थाणुत्वपुरुषत्वज्ञानं नैकदा भवति, 'स्थाणुत्व-व्याप्यकोटरादिमानयम्' इतिपरामर्शः स्थाणुत्वभानप्रयोजकः। एवं 'पुरुषत्वव्याप्यकरादिमानयम्' इति परामर्शः पुरुषत्वभानप्रयोजक इति भासकसामग्र्योर्भेदात्। किन्तु कालभेदेन। संशयितं पुरुषम् डोलायमान-मानसम् वदन्ति लोकाः। **इयम्**=परिदृश्यमाना **तदनियतिः**=कोटिद्वयभानस्य एककालिकत्वाभावः **नः**=अस्माकम् **धीक्रमे**=कोटिद्वयप्रतीतेः क्रमिकत्वे **साक्षिणी**=प्रमाणभूता ॥

तथा च प्रकृते किमायातमित्यत्र—**तस्मादित्यादि**। **तस्मात्**=एवं वस्तुस्थितेः वर्तमानत्वात् **तत्तद्विशेषस्मृतिसमसमयम्**=स्थाणुत्वपुरुषत्वरूपकोटिद्वयोपस्थितिसमकालम्। इदं 'ख्यातः' इत्यत्रोक्त-भानक्रियाविशेषणम्, **छन्नतत्तद्विरोधः**=आच्छादितोक्तकोटिद्वयविरोधः कोटिद्वयविरोधाज्ञाने **साधारणोऽर्थः परम्**=ऊर्ध्वत्वादिसाधारणधर्मविशिष्टः पुरोवृत्तिपदार्थः केवलम् **इह विशये**=प्रकृते संशयत्वेनाभिमते ज्ञाने **ख्यातः**=भातः। **येन**=सामग्रीविशेषेण **वः**=भवतां मते **बुद्ध्यन्तरम्**=अतिरिक्तं ज्ञानं संशयः। अस्माकं तु तादृशसामग्रीविशेष एव संशयः, न त्वतिरिक्तमेकं ज्ञानम्। 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायस्य जागरूकत्वादिति भावः ॥

**अयमाशयः पूर्वपक्षिणः**—पुरोवर्तिनि ऊर्ध्वत्वादिविशिष्टे द्रव्ये 'अयं स्थाणुर्वा पुरुषो वा' इति ज्ञानं सर्वानुभवसिद्धम्। इदं न केवलं मानसम्, चक्षुरिन्द्रियान्वयव्यतिरेकानुविधायित्वात्। बाह्ये विषये मनसोऽस्वातन्त्र्यात्। अत्र पुरोवर्तिन्यूर्ध्वत्वादिविशिष्टे द्रव्येऽविद्यमानस्यान्यतरधर्मस्य भानमावश्यकम्,। पुरोवर्तिनि हि स्थाणुत्वं वा स्यात्, पुरुषत्वं वा। परस्परविरोधादुभयमेकत्रासंभवि। यद्यत्राधिष्ठानज्ञानं प्रकारद्वयस्मरणं चेत्येतावन्मात्रम्, तर्हि पुरोवर्तिना साकं धर्मद्वयस्यासंबन्धात् विरोधस्फूर्तिरिव न स्यात्। एकाधिष्ठानेन साकं तादृशधर्मद्वयसंबन्धः खलु विरुद्धः। न हि 'स्थाणुपुरुषौ' इति समुच्चयात्मकज्ञान-मेतत्। स्थाणुत्वपुरुषत्वयोस्तत्रैकस्मिन्नधिकरणे प्रकारतया भानासंभवात्। संशये 'अयं स्थाणुर्वा पुरुषो वा' इत्येवोल्लेखात् एकाधिकरणे धर्मद्वयसत्ताया विरुद्धत्वज्ञानात् खलु 'वा' इति विरोधोल्लेखः। तथा च संशयोऽन्यथाख्यातिरूप एव, नाख्यातिमात्रमिति ॥

**सिद्धान्तिनामयमाशयः**—यथा वा शुक्तौ रजतप्रतीतिरूपान्यथाख्यातिस्थले, 'इदम्' इति पुरोवस्तुविषयकं प्रत्यक्षम्, 'रजतम्' इति रजतस्मरणम् इति द्वयमेव ज्ञानम् अख्यातिवादिनामित्युक्तम्,

एवमेव 'स्थाणुर्वा पुरुषो वा' इति संशयस्थलेऽपि नातिरिक्तमेकं विशिष्टज्ञानम्। किन्तु स्थाणुत्वपुरुषत्वरूप-कोटिद्वयस्य प्रत्येकमेव भिन्नकाले उपस्थितिः। ततः तयोर्विरोधग्रहणम्। ऊर्ध्वत्वादिसाधारणधर्मविशिष्ट-धर्मिप्रत्यक्षमिति ज्ञानत्रयमात्रम्, न तु 'अयं स्थाणुर्वा पुरुषो वा' इति स्थाणुत्वपुरुषत्वरूपविरुद्धधर्मद्वयप्रकारकं पुरोवर्तिवस्तुविशेष्यकम् एकं विशिष्टवैशिष्ट्यावगाहि ज्ञानम्। एवं भ्रमस्थल इव संशयेऽप्यख्यात्यैवोप-पत्तावतिरिक्तविशिष्टैकज्ञानकल्पने गौरवात्॥

ननु 'स्थाणुर्वा पुरुषो वा' इति वाकारोल्लेखेन विरोधभानस्यानुभवसिद्धत्वात्, पुरोवर्तिन्येकस्मिन् वस्तुनि स्थाणुत्वपुरुषत्वयोर्भानमावश्यकम्, प्रत्येकं कोटिद्वयभाने विरोधस्फूर्तेरसंभवात्। तथा चान्यथाख्याति-रावश्यकीति चेत्; न—वाकारस्य विरोधद्योतकत्वाभावात्। एकस्मिन् काले कोटिद्वयभासकसामग्र्यो-र्मेलनासंभवेन डोलावत् कालभेदसूचकत्वात् वाकारस्य। अतश्च विकल्पसूचकोऽयं वाकारः। विकल्पश्चा-न्यतरकोटिप्रापकः, अन्यतरकोटिनिवर्तकश्च सर्वत्र, न तु विरोधसूचकः। अतश्च कोटिद्वयस्यानियतत्वं प्राप्तम्। अतो कोटिद्वयविषयकं नैकं ज्ञानं संशय इति नान्यथाख्यातिसिद्धिः। एवम् उत्कटैककोटिकं ज्ञानं संभावनात्मकम्, ऊहरूपमपि नातिरिक्तं ज्ञानम्। वस्तुतस्तु ऊहस्तर्क एव। एवम् अनवधारणात्मक-मनध्यवसायरूपं ज्ञानमपि नातिरिक्तम्, किन्तु संशयसहं तद्ज्ञानम्। न तावता तदप्यतिरिक्तम्। किन्तु निश्चयरूपमेव। ततश्च अन्यथाख्यातिस्तु कुत्रापि नास्त्येवेति॥

**अत्रेदं विमर्शनीयम्**—'वा'कारो विकल्पसूचकः, न तु विरोधसूचक इत्यस्य कोऽर्थः? कर्मसु दधिपयसोर्विकल्पः, दधित्वपयस्त्वयोस्तु विरोध इत्यस्ति महदन्तरं विरोधविकल्पयोः किं न जानीषे? जानामि त्वर्धमीमांसक! दधिपयसोर्विकल्प इत्यस्य कोऽर्थः? एकस्मिन् प्रयोगे कर्तुमशक्यतैव खलु तत्र मूलम्। विरोधोऽपि स एव। मूर्तं वस्तुद्वयमेकस्थानमेकदा नाक्रमितुं यदा न प्रभवति, तदा विरोधः। विकल्पे कालभेदात्परिहारः। वस्तुनि तथा वक्तुमशक्यत्वात् विरोधः। न हि स्थाणावुभयोः स्थाणुत्वपुरुषत्वयोः कालभेदादपि समावेशः इति वस्तुस्थितिः। अतो विरोधस्फूर्तिमन्तरा विकल्पो न स्यात्। अत एवासामानाधि-करण्यं विरोध इति वदन्ति। एवञ्च पुरोवर्तिनि स्थाणुत्वपुरुषत्वयोर्भानमन्तरा विरोधो वा, विकल्पो वा संशयौ वा न स्यादेव। अतश्च 'स्थाणुर्वा पुरुषो वा' इति एककालिकम्। अन्यथा तत्र विरोधस्फुरणमेव न स्यात्। अत एव डोलादृष्टान्तोऽपि चातुर्यमात्रम्। डोलायाः स्थानद्वयसंबन्धस्तु कालभेदात्। कोट्य-निष्कर्षमात्रे डोलादृष्टान्तः। न हि नानावस्तुविषयकमेकं ज्ञानमेव नास्ति। सत्त्वादेव हि संशयसमुच्चयसमूहा-लम्बनादिभेदा आत्मसाक्षिकाः व्यवहारसिद्धाश्च। 'स्थाणुर्वा पुरुषो वा' इति संशयस्याभिलापकः शब्दः। 'स्थाणुः पुरुषश्च' इति समुच्चयस्य, 'स्थाणुपुरुषौ' इति समूहालम्बनस्य। नात्र सर्वत्र स्थूलः शब्द एव ज्ञानम्, अतिसूक्ष्मान्तरमनुव्यवसायमात्रगम्यं हि ज्ञानम्। ज्ञानस्य स्वप्रकाशत्वेऽपि, अनुव्यवसायविषयत्वमप्य-विरुद्धम्। एतत्तत्त्वमपि पूर्वमेव ज्ञानस्य वेद्यत्वसमर्थनेनैव विवृतम्। अतः—

आदौ यच्छङ्कितम् पापम्, पुण्यमेव भवेत्तु तत्। अनुल्लङ्घ्यान्यथाख्यातिः स्वरसा सा भ्रमस्थले॥
अख्यातिस्साधिताऽऽचार्यैर्वैदिकोक्तत्वभावनात्। ज्ञानविज्ञानयोर्मध्ये स्यान्मानं ज्ञानमेव हि॥

अख्यातिस्स्यात्तु विज्ञानम्, ज्ञानं स्यादन्यथामतिः । कारणान्वेषणं प्रोक्तं विज्ञानम्, तन्न हीयते ॥
परोक्षार्थस्य भाने तु सन्निकर्षः कथं वद । स्मृत्यात्मकं ज्ञानमेव सन्निकर्षो भवेदिह ॥
दृष्टं तत्रत्यभिज्ञायां वस्तुस्थैर्यप्रवादिभिः । अन्यथा हि प्रवक्तव्या भाष्यवाक्यानुसारतः ।
सृष्टिर्विलक्षणार्थस्य स्वप्नन्यायात् भ्रमादिषु । सर्वज्ञं सत्यसङ्कल्पमीश्वरं तूपगच्छताम् ॥
किं वा न सेत्स्यतीत्यादि भाष्यमत्र तु वीक्ष्यताम् । परं तु पण्डितैस्सर्वैश्चिन्तनीयं विमत्सरैः ॥
भवेदयं दृष्टिसृष्टिवादतुल्यः परैः कृतः । तेषामुपरि को द्वेषः? स्वाभिमानादृते वद ॥
परस्योपरि भारं स्वं निक्षेप्तुं यदि मन्यसे । तर्ह्यस्ति भारं सर्वं च वोढुं शक्तस्स ईश्वरः ॥
तस्मिन्निक्षिप्य भारं स्वं निर्वृतस्तिष्ठ तार्किक । अविद्या तर्कपर्याया कथं वोढुं क्षमा भवेत् ॥
स हि मायाप्रभुस्सर्वं योगक्षेमं विधास्यति । इति बोधयितुं प्रोक्तं तथाऽऽचार्यैस्तु वैभवात् ॥
वेदान्तशास्त्रनिष्णातैरवधेयमिदं त्विह । दूरे मात्सर्यमुत्सृज्य जिज्ञास्यं सत्यमेव तैः ॥
एतादृशप्रमेयेषु वृथा वेदान्तिनां श्रमः । एतदर्थं हि तिष्ठन्ति तार्किका धृतकङ्कणाः ॥
लोकप्रतीतिप्रभृतिपरीक्षार्थं हि ते स्थिताः । अत एव हि तत्तन्त्रं लोकायतमितीरितम् ॥
कालप्रभावादाचार्यैः प्रसक्तानुप्रसक्तितः । एतादृशा विचारास्तु कृताश्शिष्यहितेच्छया ॥
जीवात्मपरमात्मादिप्रमेयं गहनं महत् । वेदान्तिनां विचारार्हमसाधारणमस्ति हि ॥
तत्रैव नेयस्सर्वोऽपि कालो वेदान्तिभिस्सदा । जगत्सत्यत्वमिथ्यात्वविचारोऽपि न तर्कतः ॥
वस्तुतः किल जन्मापि न पर्याप्तं भवेदिह । अनेकजन्मसंसिद्धः इति प्राह स एव हि ॥
वस्तुतः, तपसैवेह निर्णेयं तत्त्वमत्र हि । विचारितं च तत्सर्वं विस्तरेणैव सर्वशः ॥
मिथ्यापदेऽस्ति हि महद्रहस्यं दुर्गमं सताम् । भाषाशास्त्रपरिज्ञानमत्र ह्यावश्यकं भवेत् ॥

**इदमत्र गाढं चिन्तनीयं** विमर्शकुतूहलिभिः—मूलभूता समस्या केति प्रथममन्वेष्टव्यम् । वर्तते तु पुरः शुक्तिर्वा रज्जुर्वा । भासते तु रजतं वा सर्पो वा । कथमिदं घटताम्? इति प्रथमा समस्या । अविद्यमानस्य भासकसामग्री का? इति द्वितीया समस्या । 'इदं रजतम्' 'अयं सर्पः' इति हि प्रत्यक्षम् । प्रत्यक्षं चेन्द्रियार्थसन्निकर्षजन्यम् । सन्निकर्षस्तु शुक्त्यैव, रज्ज्वा वा, न तु रजतेन, सर्पेण वा पुरतोऽविद्यमानेन । 'रजतं पश्यामि' इति खल्वनुव्यवसायोल्लेखः । कथमिदं घटताम्? इयं तृतीया समस्या ॥

अहो कथं नु खल्वेते शिरश्शूलेन पीडिताः । क्लिश्यन्ति पण्डितश्रेष्ठा अपि, ब्रूमो वयं नु किम्? ॥
अर्थप्रतीतिशब्दानां शोधनं प्रथमं भवेत् । विश्लेषणञ्च कर्तव्यमेषां सम्यक् च सूक्ष्मतः ॥

'इदम्' इति हि पुरोवर्ति भास्वरशुक्लरूपवदुच्यते । सन्निकर्षोऽपि तेनैव । सता खलु सन्निकर्षसंभवः । संयोगः पुरोवृत्तिद्रव्येण सन्निकर्षः । संयुक्तसमवायः, संयुक्ताविनाभावो वा तद्वृत्तिभास्वरशुक्लरूपेण सन्निकर्षः । रजतम् इति तत् कथं निर्देष्टुमर्हति? इति प्रश्नः । अत्रैव पृच्छामः—दूरत्वादिदोषवशात् आलोकमान्द्याद्वा शुक्तिं रज्जुं वा दृष्ट्वा 'रजतम्' 'सर्पः' इति वा भ्राम्यति पुरुषः । समीपमुपसृप्य यदा

परीक्षते, तदा जानाति 'इयं शुक्तिः' 'इयं रज्जुः' इति। अत्रैकां परीक्षां पुनः कुर्मः? शुक्तिर्वा रज्जुर्वा पूर्वं यावद्दूरे यत्र यथा स्थितम्, तत् तथैव निक्षिप्य, पुनः यद्देशस्थितानामस्माकं रजतभ्रमः, सर्पभ्रमो वा जातः, पुनस्तत्र स्थित्वा परीक्षयाम आत्मानम्—इदानीं किं भाति? कथं भाति? कुतोऽस्माभिः भ्रान्तम्? कस्मिन्नंशे भ्रान्तम्? इत्याद्यात्मानमेव पृच्छामः। यावत्परिमाणं यादृशभास्वररूपवच्च प्रथमं यद्दृष्टम्, तस्य द्वितीयदर्शने चक्षुरिन्द्रियकार्ये किमस्ति वैलक्षण्यम्? नैव। एतदृष्ट्वैव सिद्धान्ते **यथार्थख्याति**रुच्यते। अर्थो यथा वर्तते, तथा ख्याप्यत इन्द्रियेण इत्यर्थः। इतरत् सर्वमस्मन्मनसः, वासनायाश्च कृत्यमिति स्पष्टं ज्ञायेत। पूर्वमदृष्टसर्परजतादिकस्य यदाकदापि सर्परजतभ्रमो भवेद्वा? पूर्वमज्ञातसर्परजतादिसंज्ञकस्य 'रजतं दृष्टम्' 'सर्पो दृष्टः' इत्युल्लेखो भवेद्वा?

'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरः' (यो.सू3-17) इति सूत्रम्। अर्थः, प्रत्ययः शब्द इति क्रमः। अर्थप्रत्ययशब्दानामिति वक्तव्ये समासनियमात् क्रमोल्लङ्घनम्। शब्दार्थयोरविनाभावः'न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते' (वा.प.) इति शब्दार्थयोरविनाभावं वदति शाब्दिकः। 'सहोपलंभनियमादभेदो नीलतद्धियोः' इति ज्ञानार्थयोरविनाभावं वदन्ति बौद्धाः। अर्थः, प्रत्ययः, शब्दश्चेतीदं त्रयमपि भिन्नमिति भिन्नानि पदान्येवावेदयन्ति। अतस्सहोपलंभ एव ज्ञानविषययोर्भेदं गमयति—भेदाभावे सहशब्दप्रयोगस्यैवासंभवात्। यत्र यत्रा विनाभावः, तत्र सर्वत्रापीयं चर्चा समाना। कथं निस्तार एतस्मात्कलेरिति चेत्—

ननु प्रत्यक्षस्थले एवं विवेक्तुं शक्यत्वेऽपि परोक्षभ्रमेषु कथमेवं वक्तुं शक्यमिति चेत्, तत्रापि करणदोष एव मूलम्। करणं चानुमितिस्थले व्याप्तिनिश्चयः। स च व्यभिचारज्ञानाभवसहकृतसहचारदर्शन-मूलः। अतश्च तत्रापि दर्शन एव विश्रान्तिः। एवं शाब्दबोधेऽपि शक्तिभ्रमाद्वा, योग्यत्वादिभ्रमाद्वा शाब्दभ्रमः। अतश्च सर्वत्र भ्रमस्सर्वोऽप्यान्तर एवेति न काप्यनुपपत्तिः॥

नन्वेवं तर्हि कामुकस्य कामिनीदर्शनादिरूपाणां मानसविभ्रमाणामेषां च को विशेष इति चेत्, तेषां विभ्रमाणामधिष्ठानमप्यान्तरं किञ्चित् पूर्वानुभवादिरूपं विज्ञानम्। अत एव ते केवलमानसाः। शुक्तिरजतादि-भ्रमाणां तु बाह्यं शुक्त्यादिकमस्त्याधिष्ठानमित्यस्ति महदन्तरम्। अधिकमन्यत्र॥

स्थूलवस्तुष्वपीत्थं चेत् किमु सूक्ष्मेषु वस्तुषु। गुणक्रियाजातिबुद्धिर्दृश्यते सुविलक्षणा॥
तत्रापि विवदन्ते हि विद्वांसोऽपि बहुश्रुताः। ततोऽपि गहनं तत्त्वं जीवात्मपरमात्मनोः॥
व्यर्थो विवाद एतेषु यतः कक्ष्यैव भिद्यते। मायैव केवलं हेतुरत्र सा तु दुरत्यया॥

किं बहुना! शब्दार्थयोरतिस्थूलयोरप्यभेदं मन्यन्ते केचिच्छाब्दिकाः। विचार्यते चेदमुपरिष्टात् (श्लो.34)॥

एतदपेक्षया यद्यपि किञ्चिदिव सूक्ष्मा गुणक्रियाजातिबुद्धिः। परन्तु तत्रापि कथञ्चित्सुनिरूपो भेदः, वस्तुस्थैर्यवादे पाकादौ द्रव्यस्य सत्त्वेऽपि गुणानामागमापायित्वदर्शनात्। ज्ञानार्थयोः परं भेदोऽत्यन्तसूक्ष्मः, उभयोरविनाभावस्य दुस्त्यजत्वात्। वस्तुसत्तैव ज्ञानगम्या, ज्ञानं च निर्विषयं न किञ्चिद्दृष्टम्। अथापि ज्ञाने विषयाणामागमापायौ पाकात् रूपपरावृत्तिस्थलन्यायेन कथञ्चिद्विवेक्तुं शक्यौ। शब्दार्थप्रत्ययानामितरेतराध्यासं

वदता **पतञ्जलिना**ऽयमर्थो दृढीकृतः । 'सहोपलंभः' इत्यत्र सहत्वस्य भेदगर्भत्वमेवात्रोत्तरम् । अत एवाचार्यैस्सर्वतन्त्रस्वतन्त्रैरुदघोषि— 'परश्शतपरिक्षोदात्परस्तादपि वादिभिः । उपलंभबले स्थेयम्' इति । बाधकप्रत्ययादिरहितं ज्ञानं सर्वत्र प्रमाणमिति निर्णीयैव वादेऽवतारः कर्तव्यः । अथवा 'शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् । उपदेशाद्धरिं बुद्ध्वा विरमेत्सर्वकर्मसु ॥' इति वा स्थातव्यम् ॥

सम्यङ्मार्गविहीनानां दुर्वारा दुर्गतिर्दृढम् । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥
ज्ञानं संपाद्यतां शुद्धं श्रद्धा वा रक्ष्यतां दृढा । ज्ञानं तु कष्टसंपाद्यं श्रद्धा भाग्यवशाद्भवेत् ॥
गत्यन्तरं तु नास्त्येव संशयादात्मरक्षणे । अथवा कुरु सत्सङ्गं सत्सङ्गस्सर्वभेषजम् ॥
सन्तस्तु दुर्लभा लोके निस्स्वार्थाः करुणामयाः । सर्वार्थदा हिता च स्याद्भगवच्छरणागतिः ॥
यो नो गर्भगतस्यापि रक्षां कल्पितवान् प्रभुः । शेषवृत्तिविधाने तु किं सुप्तस्सोऽथवा मृतः ॥

अयि भोः? किं प्रक्रान्तं विस्मृतमेव? न विस्मृतमङ्ग ! उक्तमेवोत्तरम् 'उपलंभबले स्थेयम्'इति । उपलंभो नाम आत्मसाक्षिको दुरभिलपोऽनुभवविशेषः । तत्रापि विप्रतिपद्यन्तं प्रति तु विज्ञानमेवोत्तरम् ॥

हन्त वेदान्तविज्ञानं नष्टप्रायं हि दृश्यते । अत एव विवादोऽपि वर्धते च पुनः पुनः ॥

प्रकृते उपलंभे प्रथममनन्तरञ्च चक्षुरिन्द्रियं स्वकार्यं समानमेव करोति । इतरत्सर्वमान्तरमेव । अतश्च 'इदं रजतम्' इति सत्यरजतस्थलसमानमनुभूयमानं विशिष्टमेकमेव ज्ञानम्, प्रत्यभिज्ञा[illegible] [illegible]न्द्रियसन्निकर्षेण संस्कारसहकृतेन, स्मरणसहकृतेन वा जायमानमन्यथाख्यातिरेवेति सुष्ठूक्तमा[illegible] 'स्वारस्यमन्यथाख्यातौ' इति । 'अख्यातौ लाघवं स्थितम्' इति तु तत्कारणविज्ञानविषयकम्, न तु कार्यभूतान्यथाख्यातिरूपज्ञानविषयकम् ॥

नन्वस्त्विदं सर्वम् । **देहात्मभ्रमे** कथं निर्वाहोऽख्यातिमन्तरा? अयि भो वैदिक! अख्यातिर्वा कथं तत्रेत्युपपाद्यताम् । आत्मा तु स्वप्रकाशः । शरीरं तु जडम् । उभयोरत्यन्तविलक्षणयोः कथं भेदज्ञानाभावः? न ह्येकत्रावस्थानमात्रेण भ्रमो भवेत् । तदा हि घटे जलस्य सत्त्वमात्रेण तयोरप्यभेदभ्रमो भवेत् । अत इदमालोच्यताम् । अन्धकारे स्थितस्य शरीरस्य कथं प्रत्यक्षतया भानम्? तत्रापि हि भवति 'अहं स्थूलः' इति मतिः । किं स्थौल्यमपि स्वप्रकाशम्? इत्यादिकं पूर्वमेव (जीव.2) गतम् । अत औपाधिका एते भ्रमाः 'लोहितः स्फटिकः' इतिवत् । उपाधेर्जपाकुसुमस्य उपहितस्य स्फटिकस्य च भेदाज्ञानमेव तत्र कारणम् । भेदज्ञाने जातेऽपि स्फटिको लोहित एव किल दृश्यते? स्फटिकगतशौक्ल्यं तु जपाकुसुमलौहित्येनाभिभूतम् । अतः प्रत्येकं न गृह्यते स्फटिकः । अतोऽस्त्येवात्रापि द्वयादर्शनरूपाऽख्यातिः कारणम् । एवमेव देहात्मभ्रमेऽपि 'अयो दहति' इतिवत् औपाधिक एव भ्रमः इति पूर्वमेव सर्वं (जीव.2) विस्तरेणोक्तम् अज्ञानं कारणं वर्तत एव । ज्ञानं तु अन्यथाख्यातिरेव । या च दिङ्मोहोपपादनप्रक्रिया श्रीभाष्योक्ता, सापि बालोपच्छन्दनमात्रम् । अत एव च पुनरपि पठ्यताम्— 'एतादृशप्रमेयेषु वृथा वेदान्तिनां श्रमः' इत्यादि ॥

[अनिर्वचनीयख्यातिविमर्शः]

**241. दुस्साधा बाधधीभ्यां सदसदितरता कुत्रचित्, व्याहतत्वात्**
**सत्त्वासत्त्वं च ताभ्यां कथमिव न भवेत्; व्याहतेश्चेत्, समं तत्।**

**इदमप्यत्रावधेयम्**—शुक्तौ 'इदं रजतम्' इत्यादिभ्रमास्सर्वेऽपि विशेष्यांशे न भ्रमाः। 'इदं' इति निर्दिश्यमानं वस्त्वधिष्ठानभूतं सत्यमेव, निरधिष्ठानभ्रमासंभवात्। अतस्संपूर्णभ्रमात्मकज्ञानं नास्त्येव जगति। अत एव खलु नवीनैः 'स्वव्यधिकरणधर्मावच्छिन्ना या या प्रकारता, तत्तदनिरूपकत्वमेव प्रमात्वम्' इति प्रमालक्षणमभिधाय, तद्भिन्नत्वेनैव भ्रमलक्षणं परिष्करणीयमासीत्। एवं शब्दयोजनमात्रेण स्वस्वरूपेण भ्रमः कथं ज्ञेयः? अभावद्वयनिवेशनमात्रेण प्रमा वा कथं स्वस्वरूपेण ज्ञेया? अतो विषयम्, ज्ञानम्, शब्दप्रयोगं च पृथक्कृत्य गाढं चिन्त्यतां किमस्तीति। एवं ज्ञानं सर्वं स्वविषये सर्वत्र प्रमैव। 'ज्ञानमेव न जातम्' इति न हि कश्चित्प्रत्यभिजानाति। अतश्च प्रकारांश एव भ्रमः। अथापि विषमिश्रितक्षीरे विषव्यवहारवत् शुक्तौ 'इदं रजतम्' इति ज्ञानं भ्रमः इति सर्वेषां व्यवहारः। अत एव विशिष्टज्ञानात्मकः भ्रमः। एवं भ्रमस्य 'अज्ञानम्' इति व्यवहारेऽपि अज्ञानं भ्रमहेतुः, न भ्रमः, किन्त्वन्यथाज्ञानमेव भ्रमः। तेन जगतो ब्रह्मशरीरतया ज्ञानाभावमात्रात् जगद्व्यवहारास्सर्वेऽपि न भ्रमरूपाः। न हि चक्षुषा घटग्रहणेऽपि तद्गतगुरुत्वादीनां ग्रहणासंभवेऽपि 'अयं घटः' इति ज्ञानं भ्रमः। अतश्चाज्ञानमन्यत् अन्यथाज्ञानं चान्यदेव। एतेन चान्यथाख्यातिरेव भ्रमः, न त्वख्यातिः। तेन सत्यरजतज्ञानेऽपि तदीयगुरुत्वादीनामग्रहणेऽपि न भ्रमत्वम्। सर्ववस्तुषु सर्वांशानामपि असर्वज्ञदुर्ज्ञेयतयाऽसमग्रज्ञानरूपमज्ञानं दुस्त्यजम्। न तावता जगद्व्यवहारो भ्रममूल इति न कोऽप्यङ्गीकरोति, किन्तु अन्यथा व्यवहार एवेत्यन्यथाख्यातिरेव साधीयसीति मन्तव्यम्। आचार्या अप्यत एव 'स्वारस्यमन्यथाख्यातौ' इत्यसूचयन्नेव तत्त्वम्। शिष्टं कुशलमतिभिर्ज्ञेयमित्याशेरते स्म ते। **'नारिकेलमधिरोहतः कियद्दूरं पृष्ठावलम्बनम्?'**। वस्तुतस्तु—

अभावं केवलं नैव गृह्णीयाज्जातुचिन्मतिः। शब्दं विस्मृत्य विषयं गाढमन्तर्विचिन्तय॥
भावमन्वेषयेद्बुद्धिः नाभावं जातुचित्त्वपि। तदा भवेयुस्सर्वज्ञाः सुषुप्तौ सर्वमानवाः॥
अभावरूपा त्वख्यातिः कथं भायाद्विचिन्तय। भावेन पूरणं नूनमावश्यकमतो धियः॥

अतश्च पठ्यतां पुनरपि 'गुरोश्शापस्तु शिष्यः स्यात्' इत्यादि॥ १५॥

एवं स्वपक्षमभिधाय, परसंमतानिर्वचनीयख्यातिवादं विमृशति—**दुस्साध्येत्यादि**। **व्याहतत्वात्**=विरुद्धत्वात् **कुत्रचित्**=कुत्रापि **बाधधीभ्याम्**=बाधप्रतीतिभ्याम् **सदसदितरता**=सदसद्विलक्षणत्वरूपानिर्वचनीयता **दुस्साधा**=साधयितुमशक्या। एकस्य वस्तुनस्सद्भावे हि ज्ञानमेव नियामकम्। तथाऽसद्भावे तन्निषेधप्रतीतिर्नियामिका। रज्जुसर्पस्तु प्रतीयते, अनन्तरं 'नायं सर्पः' इति निषिध्यते च। असतः प्रतीतेरसंभवात् नासत्वम्। सतो बाधायोगाच्च न सत्त्वमिति सत्त्वमपि न, असत्त्वमपि नेति रज्जुसर्पः=सत्त्वेनापि न निर्वचनीयः, असत्त्वेनापि न निर्वचनीय इति अनिर्वचनीयो रज्जुसर्पः, शुक्तिरजतादिश्चेति। सेयं

**दृष्टत्वाद्वा विशेषः; क्वचिदपि न हि नस्सर्वरूपेण सत्त्वं**
**नासत्ता चानुपाधिः; न च विमतिरिह ब्रह्मतुच्छातिरेके ॥ १६ ॥**

सदसदितरता दुस्साधा, व्याहतत्वात् । बाधबुद्ध्या हि तस्यासत्त्वमेव निर्णीतम् । ततश्च असत्त्वमेव रज्जुसर्पस्य, न सत्त्वमपि, सत्त्वस्य बाधात् । असतः प्रतीतिः कथमिति चेत्, तदेव खलु विचार्यतेऽद्य परीक्षकैस्सर्वैः । प्रतीयमानत्वात्सदेवेति यद्युच्यते, तर्हि बाधज्ञानेन कथं सतो बाधः? तदा हि बाधज्ञानमेव भ्रमरूपं स्यात् । न हीष्टमिदं कस्यापि । प्राथमिकं ज्ञानमेव भ्रम इति संप्रतिपन्नम् ॥

ननु बाधबुद्धेः सत्यरजतं विषयः । स तु पुरतो नास्त्येव । परन्तु पुरतः प्रतीयमानत्वात् सत्त्वं तु वक्तव्यम् । परंतु तत्र सत्त्वमन्यादृशं विलक्षणं स्यादिति न विरोध इति चेत्, विलक्षणं तत् सत्त्वं कीदृशमिति वक्तव्यम् । पूर्वं प्रतीतं सत्त्वं प्रातिभासिकम्, न तु व्यावहारिकम् इति चेत्, प्रातिभासिकपदमेव बोधयति तस्यासत्त्वम् । प्रतिभासो नाम भानम् । भानमात्रसिद्धम्, न तु वस्तुतस्सत्ता इति खल्वर्थः । अतः प्रातिभासिकसत्त्वमिति वचनं वन्ध्यापुत्रवचनवद्व्याहतम् । किं कुर्मः? असतः प्रतीतिर्न भवितुमर्हति किलेति चेत्, सदपि निषेधं नार्हति किल ! किं कुर्मस्तर्हीति चेत्, कथ्यतां सदसद्रूपत्वम् । उभयनिषेधः कथं घटताम्? उभयात्मकत्वमेवोच्यताम् । तदिदमाह— **सत्त्वासत्त्वं** चेत्यादि । **ताभ्याम्**=प्रतीतिबाधाभ्याम् **सत्त्वासत्त्वं च**=सदसद्रूपत्वमेव **कथमिव**=कथं वा न भवेत्? **व्याहतेश्चेत्**=परस्परविरुद्धं किलेदमिति चेत्, **तत्**= व्याहतत्वम् **समम्**=समानं सदसद्विलक्षणत्वपक्षेऽपि । यस्य प्रतीतिरपि नास्ति, निषेधोऽपि नास्ति, तस्य शशशृङ्गादेरुच्यतां सदसद्विलक्षणत्वम्, न तु शुक्तिरूप्यादेः । शशशृङ्गादेस्सर्वथाऽसत्त्वात्, कथं तद्धर्मस्सदसद्विलक्षणत्वं वन्ध्यापुत्रनामकरणवदिति चेत्, 'एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः । मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः' ॥ इत्यादिवदिदमपि भवतु । असम्बद्धं प्रलपन्तीं जिह्वां को वा निरुन्ध्यात्?

अत एव खलु प्रसृत**शशब्दानामर्थासंस्पर्शित्ववादः** उद्वेलः । तर्हि कस्समाधिरिति चेत्, परीक्षयाम उत्तरत्र (बुद्धि.18) सुविस्तरमिदम् । निरुच्यमाने सत्यनिर्वचनीयत्वं त्वनुभवविरुद्धम् । तदिदं वैशिष्ट्यं सिद्धान्त इत्याह— **दृष्टत्वादिति** । **वा**=अथवा । अनेनानुपदमुक्तं समत्वं वैभवेनेति भावः । उभयात्मत्वपक्ष एवानुभवस्वारस्यमित्याह— **दृष्टत्वा**दिति । दृष्टत्वमेव=विशेषः । तथा च— 'समम्' इति पदश्रवणेन न सन्तोष्टव्यमिति भावः । परस्परविरुद्धे सत्त्वासत्त्वे कथमेकत्र मिलतः, येन दृष्टत्वाद्विशेषः इत्युच्यत इत्यत्र— **क्वचिदपीत्यादि** । **नः**=तव, मम, सर्वेषामस्माकम् **सर्वरूपेण सत्त्वम्**=निरुपाधिकं सत्त्वं क्वचिदपि वस्तुनि **न हि** दृष्टम् । तथा **अनुपधिः असत्ता च**=निरुपाधिकम् असत्त्वं वा न हि दृष्टम् । **न**— इत्यनेन सूचितं विवृणोति— **न चेत्यादि** । **इह**=घटपटादौ **ब्रह्मतुच्छातिरेके**=परब्रह्मणः गगनकुसुमादेश्च वैलक्षण्ये **विमतिः**=अभिप्रायभेदः **न च** वर्तते कस्यापि ॥ जगति घटपटादौ ब्रह्मवैलक्षण्यम्, तुच्छवैलक्षण्यं च सर्वसंमतमेव हि । अतस्तेषां सत्ता सोपाधिकी । ब्रह्म तु नित्यं विभु सर्वात्मकं च । अतस्तदीया सत्ता देशकालवस्तुस्वरूपरूपोपाध्यतीता । अतः 'इदानीमस्ति', 'तदानीं नासीत्' इति, 'अत्रास्ति, तत्र नास्ति'

**[अनिर्वचनीयवस्तूत्पत्तिवादविमर्शः]**

**242. रूप्यं जातं तदा चेत्, न रजतमिति धीरप्रमा स्यादमुष्मिन्**
**कार्यासामर्थ्यमात्रात् न तदिति कथनं कल्पतेऽतिप्रसक्त्यै ।**

इति च वक्तुं न हि शक्यम् । एवम् 'इदं ब्रह्म, इदं न' इति वस्तुस्वरूपप्रयुक्तसत्तापि न निषेद्धुं शक्या, 'सर्वं खल्विदं ब्रह्म' इति तस्य सर्वात्मकत्वात् । एवं गगनकुसुमादयः कुत्रापि कदापि येन केनचित्प्रकारेणापि 'अस्ति' इति न व्यवहारार्हाः । अतस्तेषामसत्त्वं निरुपाधिकम् । एतदुभयव्यतिरिक्तं तु सर्वं घटपटादिकम् 'इदानीमस्ति, तदानीं नासीत्' 'अत्रास्ति, तत्र नास्ति' 'घटः पटो न' इत्येव सर्वैर्व्यपदेश्यम् । न तावता तेषामनिर्वचनीयत्वम् । एवमेव सत्यरजतादीनां सत्ता सोपाधिक्येव । आपणस्थं सत्यरजतं हि 'आपणेऽस्ति; वीथ्यां नास्ति' 'इदानीमस्ति, तदानीं नास्ति' इति व्यपदेशार्हम् । एवम् 'अयो रजतं न' इत्यपि तादात्म्यनिषेधो भवेत् । शुक्तिरजतपदं हि शशशृङ्गपदतुल्यमेव ॥

शुक्तिरजतम्=शुक्तौ गृहीतं रजतम्, न तु शुक्त्यभिन्नं रजतम्, अस्याप्रसिद्धेः । शुक्तिरजतयोर्भेदस्य प्रामाणिकत्वात् । ननु गगनकुसुमपदात्को विशेष इति चेत्, शुक्तौ भातं रजतम् शुक्तिरजतम् इत्युच्यते । 'गगनकुसुमम्' इत्यत्र तु गगने भातं कुसुममिति नार्थः किन्तु सरसिजं कमलं यथा, तथा गगनजं कुसुममित्येवार्थः । न हि गगने कुसुमं केनापि दृष्टम् । अतश्च शुक्त्यधिष्ठानकभ्रमविषयो रजतं शुक्तिरजत-मित्युच्यते । गगनाधिकरणकं कुसुमं गगनकुसुममित्युच्यते अत्यन्ताप्रसिद्धेरुदाहरणम् । एतदेव **तुच्छम्** इत्युच्यते । अधिष्ठानाधिकरणपदे न पर्याये । निरधिष्ठानभ्रमासंभवात्, यदवच्छेदेन भ्रमो जायते, तत् **अधिष्ठानम्** इत्युच्यते । यदवच्छेदेन वस्तु वर्तते, तत् **अधिकरणम्** इत्युच्यते । शुक्तिरजतमित्यत्र रजतारोपस्यावच्छेदिका शुक्तिः अधिष्ठानम्, अधिकरणं तु पुरःप्रदेश एव । अतश्शुक्तिरजतगगनकुसुम-शब्दयोरन्तरं महद्वर्तते । शुक्त्यभिन्नं रजतं तु गगनकुसुमतुल्यमेव । एवं च ब्रह्मैकमेव सर्वदेशसर्वकालवर्ति, सर्वात्मकं च । इतरत्सर्वं तु घटपटादिकं नियतदेशकालवर्ति परस्परव्यावृत्तं च । अतश्च ब्रह्मव्यतिरिक्तपदार्थानां सत्ता नानौपधिकी । एवं तुच्छस्य गगनकुसुमादेरसत्ता नौपाधिकी, पदार्थस्यैवाभावात् । एवमेव शुक्तिरजतादेरपि सत्त्वासत्त्वे न विरुद्धे इति सदसद्रूपत्वमेव तस्य, न तु सदसदनिर्वचनीयत्वमिति भावः ॥ १६ ॥

वस्तुतस्तु शुक्तिरजतमिति किञ्चिन्नास्त्येव । शुक्त्यधिष्ठानकभ्रमविषयरजतमित्येवार्थः । भ्रमकारणा-दिकं सर्वमनुपदमेव प्रदर्शितम् । एतत्तत्त्वमजानन्तः केचन शब्दब्रह्ममात्रनिष्ठाः, रजतमेव पुरतो भातमिति भ्रान्ताः, शब्द-प्रत्यय-अर्थानां साङ्कर्यात्, असतः कथं भानमिति पृच्छन्तः, नवीनब्रह्माणः शुक्तिरजतं स्रष्टुमेवेच्छन्तो वृथा शब्दं वर्धयामासुः । तेषां मतं निराकरोति—**रूप्यं जात**मित्यादिना । **तदा**=शुक्तौ रजतभानवेलायां **रजतम्**=अन्यादृशं किञ्चिद्रजतम् **जातम्**=उत्पन्नम् **चेत्**=एवं यदि, **'रजतम्' इति धीः**=‘इदं रजतम्’ इति ज्ञानम् **अमुष्मिन्**=एतद्विषये **अप्रमा**=भ्रमः **न स्यात्**, विद्यमानस्यैव भानात् । ननु तद्रजतम् आपणस्थरजतवत् नाभरणादिप्रयोजनकारि । अतः प्रसिद्धरजततुल्यत्वाभावात् तद्विषयकं ज्ञानमप्रमेत्युच्यते इत्याशङ्कां समाधत्ते—**कार्येत्यादि** । **कार्यासामर्थ्यमात्रात्**=आभरणाद्यर्थक्रियाकारित्वाभाव-

**शुक्तौ चैतत् तदात्वे कथमिव जनयेत् दुर्घटाऽनाद्यविद्या?**
**नाक्षादिस्त्वर्थहेतुः; न च रजतमतिः; सा हि तेनैव जन्या ॥ १७ ॥**

मात्रात् **न तत्**=न प्रमात्वम् । **मात्र**पदेन वस्तुनः असत्त्वं व्यावर्त्यते । तदानीं वस्तुन उत्पन्नत्वाभिधानात् । **इति कथनम्, अतिप्रसक्त्यै कल्प्यते**=अतिप्रसङ्गस्यापादकं भवति । अर्थक्रियाकारित्वतदभावयोः सर्वत्र तदानीमेव निर्णेतुमशक्यत्वात् । तावन्मात्रान्मिथ्यात्वे आपणस्थरजतादीनामपि यावदर्थक्रियाकारित्वनिर्णयं मिथ्यात्वापत्तिः । अपि च **तदात्वे**=मिथ्यारजतभानवेलायाम् **दुर्घटा**=अघटितघटनापटीयस्यपि **अनाद्यविद्या**= माया **शुक्तौ**=पुरोवर्तिद्रव्ये शुक्तौ **एतत्**=अनिर्वचनीयं रजतम् **कथमिव**=कथं वा **जनयेत्?** अघटितघटना-पटीयस्यपि माया बाह्यसामग्रीमन्तरा न हि किञ्चिज्जनयितुं प्रभवेत् । तदा हि पटादिकं तन्तूनन्तरापि भवेत् । **अक्षादिस्तु**=चक्षुरादीन्द्रियं तु **अर्थहेतुः**=पदार्थजनकम् **न**=न भवितुमर्हति । इन्द्रियाणि हि ज्ञानजनकानि, न वस्तुजनकानि । **न च रजतमतिः**=नापि रजतज्ञानं रजतरूपार्थजनकं भवति । कुतः? **सा हि**=रजतमतिर्हि **तेनैव**=रजतेनैव **जन्या**=उत्पन्ना । शुक्तौ रजतज्ञानं हि प्रत्यक्षरूपम् । प्रत्यक्षे च विषयः कारणम् । तथा च रजतभ्रमः रजतरूपविषयजन्यः, रजतरूपविषयस्तु रजतज्ञानजन्य इति यद्युच्यते, तदाऽन्योन्याश्रयः स्पष्टः । अतस्तादात्विकरजतोत्पत्तिवादः न साधीयान् ॥

**वस्तुतस्तु**—अनुपदमेव (पु.27-28) प्रतिपादितं भ्रमस्थलीयविज्ञानमजानतामत एव विह्वलानां पण्डितानामेवेयं प्रातिभासिकरजतसृष्टिकुकल्पनेति सुज्ञं भवेदित्यवधेयम् ॥

ननु स्वाप्नपदार्थानां तादात्विकसृष्टिं वदताम्, प्रातिभासिकरजतोत्पत्तौ कः प्रद्वेषः **सुभगाभिक्षुक**-न्यायादृते—इति चेत्—

अहो कियानाग्रहस्ते वासनापीडितो यतः । सत्यं कथं स्फुरेच्चित्ते वासनादिप्रपीडिते ॥

'सृजते' 'स्रष्टा' इति पदयोः श्रुतावेव दर्शनात्, कोऽत्र स्रष्टा? इति विचारः श्रुत्यैवोपक्षिप्तः, न तु मानवबुद्ध्या । तदर्थमेवैकमधिकरणं रचितम् । इतरत्सर्वं व्याख्याभेदमात्रम् ॥

सन्ध्याधिकरणं पश्य व्याख्याभेदादिकं तथा । जाग्रत्स्वप्नसुषुप्त्याद्या अवस्था वर्णिता नृणाम् ॥
अतस्तासां विचारोऽपि कृतो व्यासमहर्षिणा । प्रातिभासिकवस्तूनां सृष्टिः कुत्र विचारिता? ॥
प्रातिभासिकवस्तूनां स्रष्टा हन्त! भवानभूः । अचतुर्वदनो ब्रह्मा नूतनः स्वेच्छया सृज ॥
केवलं वासनामूला कल्पना नान्यदस्ति हि । इत्यादिकं सर्वमपि पूर्वमेव निरूपितम् ॥
भ्रमस्य विषये हन्त पण्डितानां कियान् भ्रमः । पूर्वग्रहादिकं त्यक्त्वा साङ्कर्यं च विचिन्त्यताम् ॥
एकैकशस्सर्वमेव पृथक्कृत्य विचिन्त्यताम् । अशक्यं चेत्, गच्छ दूरे, मा संकीर्णय शेमुषीम् ॥

किं बहुना! स्वप्नपदार्थनिर्णयार्थं प्रवृत्ते सूत्रे 'मायामात्रं तु' (ब्र.सू.3-4-3) इत्यत्र मात्रपदमव-धेयम् । स्वाप्नवस्तुनः मायामात्ररूपत्वकथनात् जाग्रत्प्रपञ्चस्य तद्वैलक्षण्यमावश्यकम् । एवं सत्यपि 'जाग्रत्प्रत्ययो मिथ्या, प्रत्ययत्वात्, स्वाप्नप्रत्ययवत्' इति साधने, दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्यमेव न स्यात् । अयं दोषो

[माध्यमिकमतविमर्शः]

243. **सत्त्वासत्त्वद्वयाख्यद्वयविरहचतुष्कोटिमुक्तं च तत्त्वम्**
**व्याघाताद्यैर्विधूतं न यदि, तव कथं सप्तभङ्गीनिषेधः ।**
**तुच्छालीकादिशब्दाः क्वचन सति परं क्वाप्यसत्त्वे प्रवृत्ताः**
**वन्ध्यापुत्रादिशब्दैर्भजति च समतां विध्यलीकादिवादः ॥ १८ ॥**

भवतामपि समान इति चेत्, सत्यम्। परं तु मायां मिथ्यां न वदामो वयम्, किन्तु अत्याश्चर्यवाची मायाशब्दः। प्रकृते च सा भगवत्संकल्प एव। स च तत्तत्कार्यानुगुणं विचित्र एवास्मत्प्रश्नातीतः। तर्ह्यविद्यातः को विशेष इति चेत्, असकृदुक्तमिदम्—मा कुरु त्वदभिमताविद्यां भगवन्तं च सममिति। अधिकं मायाविचार एव (नायक.41) गतम्। अतश्च जाग्रत्प्रपञ्चस्य कार्यकारणभावादिनिरूपणसंभवात् **मायाविकाररूपं** तत्, स्वाप्नजगत्तु न तथेति मायामात्रम्। न हि स्वाप्नस्य वस्तुनः कारणादिनिरूपणसंभवः। तर्हि स्वाप्नस्य सत्यत्वं कथमुच्यते? ईश्वरसृष्टत्वादेव। अपि च न हि स्वाप्नवस्तु सर्वं सत्यं वयं वदामः, किन्तु वस्तु-विशेषानेव। यथा वा जाग्रद्वस्तूनाम्। जगतस्सत्यत्ववादिनो न हि रज्जुसर्पादिकमपि सत्यमभ्युपगच्छन्ति। जाग्रत्प्रपञ्च एवान्यः, अन्यश्च स्वाप्नप्रपञ्चः, तुरीयावस्थावत्। न हि स्वर्गीयो न्यायो भूलोकेऽन्वियात्। अतश्च स्वाप्नप्रपञ्चस्येश्वरसृष्टत्वमन्यत्, अनिर्वचनीयरजतस्योत्पत्तिस्त्वन्येति न सांकर्यं कर्तव्यम्। एतत्सर्वस्योपरि भ्रमस्वरूपं प्रदर्शितमनुपदमेवेत्येतादृशानां वादानां नास्त्येवावकाशो वस्तुत इति ॥ १७ ॥

ब्रह्मव्यतिरिक्तस्यानिर्वचनीयत्वरूपमिथ्यात्ववादः प्रतिक्षिप्तः । सर्वमपि तादृशमेवेति वदतां **शून्यवादिनां माध्यमिकानां** पक्षः प्रतिक्षिप्यते—**सत्त्वेत्यादि । सत्त्वासत्त्वद्वयाख्यद्वयविरहचतुष्कोटिमुक्तम्**= सत्त्वाख्या, असत्त्वाख्या, द्वयाख्या=सत्त्वासत्त्वाख्या, द्वयविरहरूपा चेत्येवं चतुष्कोटिभ्यः मुक्तम्=विरहितं च **तत्त्वम् व्याघाताद्यैः**=परस्परविरोधादिदोषैः **विधूतम्**=निरस्तम् ॥

असच्चेन्न प्रतीयेत, सच्चेन्न बाध्येतेत्यतः सदसद्विलक्षणत्वे कथिते, तर्हि सदसद्रूपत्वमेव वक्तव्यम्, न तु उभयविलक्षणत्वमिति दूषणमुक्तं पूर्वम् (श्लो.14) । तद्दोषपरिहार एतन्मते भवतीत्यभिमानः । सदसद्रूपत्वं व्याहतम्, तर्हि सदसद्रूपत्वाभावरूपा चतुर्थी कोटिरेव कथ्यतामिति चेत्, सापि व्याहतैवेत्यभिप्रायेण चतुर्थकोटिरपि नास्तीत्येते वदन्ति—'न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥' इति प्रसिद्धमिदम् ॥

व्याघातः कुतः? वस्तुस्थितिरेव तादृशीति चेत्तत्राह—**न यदीत्यादि । न यदि**=एवमनङ्गीकारे **तव**=शून्यवादिनः **सप्तभङ्गीनिषेधः**=जैनसंमत(अद्रव्य.12)सप्तभङ्गीनिराकरणं **कथम्** भवेत्? जैनवत् सर्वमविरुद्धं चेत्, कथं तन्मतनिराकरणम्? अतस्सर्वापलापवादः स्वपक्षस्याप्यपलापे पर्यवस्येत् ॥

ननु 'तुच्छेनाभ्वपिहितम्', इति भवदीये वेद एव तुच्छपदं प्रयुक्तम्। 'नासदासीन्नोसदासीत्' इति उपक्रम्य प्रलयकाले सर्वनिषेधो हि प्रतिपिपादयिषितः । एवञ्च तुच्छपदं सर्वनिषेधपरं वर्तत एव । एवं सत्यस्मभ्यं कुतः कुप्यसीत्यत्र—**तुच्छेत्यादि । तुच्छालीकादिशब्दाः परम्**=**'तुच्छम्'** इति, तत्पर्यायः

**‘अलीकम्’** इत्यादिशब्दास्तु एकस्मिन् वस्तुनि **क्वचन सति**=कुत्रचित्कालविशेषे सत्येव **क्वापि असत्त्वे**=अन्यत्र कालविशेषे असत्त्वे च **प्रयुक्ताः**, न तु भवत्संमतसर्वापलापे। आदिपदेन **मिथ्यानृतादि**-शब्दा ग्राह्याः ॥

ननु वस्तुनः निराकरणं द्विविधम्—विधिरूपम्, निषेधरूपमिति। प्रथमं तमःपदार्थवत्। द्वितीयम् ‘शशशृङ्गं नास्ति’ इत्यादिकं निषेधमात्रपर्यवसायि। तत्त्वम् तु इतरसर्वनिषेधे भावरूपपर्यवसायि। अतः **‘तुच्छम्’** इत्यपि एकं तादृशविध्यलीकमिति न सर्वनिषेधमात्रे पर्यवसानम् इत्यत्राह—**वन्ध्यापुत्रे**त्यादि। **विध्यलीकादिवादश्च**=विधिरूपः सर्वनिषेधवादश्च **वन्ध्यापुत्रादिशब्दैः समताम्**=साम्यं **भजति**। वन्ध्यापुत्र-शब्दोऽर्थशून्यो यथा, तथैव सर्वनिषेधवादोऽपीति ‘तुच्छम्’ इतिपदं नाभावरूपतत्त्ववाचीति, न भवदिष्टसिद्धिः॥

**अत्रायं सारसंग्रहः—वैभाषिकाः, सौत्रान्तिकाः, योगाचाराः, माध्यमिका** इति चतुर्विधा बौद्धदार्शनिकाः। **‘अभिधर्मविभाषा’**नामकम् **‘त्रिपिटक’** नामकबौद्धागमव्याख्यानमवलम्ब्य प्रवृत्ताः **वैभाषिकाः**। सुत्तपिटकमवलम्ब्य प्रवृत्ताः **सौत्रान्तिकाः**। योगः आचारश्चेत्युभयमङ्गीकृत्य प्रवृत्ताः **योगाचाराः**। मध्यमागममवलम्ब्य प्रवृत्ताः **माध्यमिकाः**। वैभाषिका जगत्सत्यतावादिनः। अथापि सर्वक्षणिकत्ववादिनः। एवं क्षणिकवादे प्रतिष्ठिते, क्षणिकानां कारणत्वासंभवेन तेषां प्रत्यक्षानुपपत्तावापादितायाम्, तह्यर्स्तु सर्वमानु-मानिकमिति सर्वानुमेयतावादः सौत्रान्तिकैस्समर्थितः। अनुमानस्य दृष्टान्तावलम्बित्वात्, सर्वस्याप्यनुमेयत्वाद्दृष्टान्त-संभवे प्रदर्शिते, तर्हि मास्तु सौत्रान्तिकपक्षः। बाह्यार्थस्य सर्वस्यापि कल्पितत्वेन आन्तरं विज्ञानमात्रं सत्य-मस्तु। तदेव मायापरपर्यायया संवृत्त्या बहिर्वदवभासत इति क्षणिकविज्ञानवादोऽवतारितः। क्षणिकवादे क्षणिकानां कारणत्वानुपपत्त्या क्षणिकविज्ञानपरंपरानुवृत्तेरसंभव आपादिते, मास्तु तदपि। शून्यमेव परममन्तिमं तत्त्वं तुच्छपदाभिधेयमिति सर्वापलापवादोऽवतारितः। एवं हेतुवादे प्रवर्तिते **सर्वापलापवाद** एव पर्यवसानं मन्वाना बौद्धाः, माध्यमिकमतमेवान्तिमकाष्ठेत्यातस्थुः। एवं भिक्षुपादप्रसरणन्यायेन सर्वक्षणिकत्ववाद-बाह्यार्थानुमेयत्ववाद-बाह्यार्थशून्यवाद-सर्वशून्यवादान्, ‘व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्त-वादः’ (सं.शा.) ‘प्रतिष्ठितेऽस्मिन् क्षणिकत्ववादे स्वयं समायाति हि शून्यवादः’ इत्यवतारयामासुः॥

एवं सति लोकव्यवहारः कथं घटेत? इत्याक्षेपे, व्यावहारिकसत्यपारमार्थिकसत्यभेदकल्पनावत्, सांवृतसत्यपारमार्थिकसत्यभेदमकल्पयन्। शून्यं तत्त्वं परमार्थसत्यम्, इतरत्सर्वं सांवृतसत्यमिति वर्णयामासुः। तथा च शून्यविवर्तरूपमिदं जगदिति वर्णयन्त एते **‘शून्यविवर्तवादिनः’** इति प्रथामापुः। शून्यस्य विवर्तरूपं चेत् शून्यस्य निषेधरूपत्वात् तत्कार्यभूते जगति ‘घटोऽस्ति’ इत्यादिविधिरूपप्रत्ययाः कथं घटेयुरित्याक्षेपे, शशविषाणशब्दश्रवणेन यथा कश्चन भावरूपोऽर्थः प्रतीयत इव, तथैव घटपटादयश्शब्द-विकल्परूपाः, वस्तुतस्तु शशविषाणतुल्या एव ते। अङ्गीकृत्य च तथैव केचिच्छाब्दिकाः शशविषाणादिशब्दा बुद्धिकल्पितार्थवाचकाः, अन्यथा तेषां प्रातिपदिकत्वासंभवेन सुबादिप्रत्ययानुत्पत्तिप्रसङ्ग इति वर्णयन्ति। अत एव किल **शब्दानामर्थासंस्पर्शित्ववादोऽपि** प्रवर्तितः। किं बहुना ! ‘अपवरके तमोऽस्ति’ इत्युक्ते हि कश्चन भावरूपः पदार्थः प्रतीयत इव, किन्तु अपवरके प्रकाशाभावमात्रं प्रतीयेत। अभावो भावान्तररूप इति

वदतां मते हि 'भूतले घटो नास्ति' इति कथनमात्रेणाभावः कश्चिन्नातिरिक्तः प्रतीयेत। एतत्पक्षे सर्वं विधिरूपम्। एवमेव विधिरूपो वा निषेधरूपो वाऽर्थः सर्वोऽपि अभावरूप एव। आद्यः **विध्यलीक**मिति, द्वितीयः **निषेधालीक**मित्युच्यते। आहत्य सर्वमभावरूपम्। अभावश्च तुच्छ (जड.46) इति तुच्छमेव परमं तत्त्वम्। तथा च—'इदं वस्तुबलायातं यद्वदन्ति विपश्चितः। यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा॥' इति सुसूक्ष्मपरिशीलने अन्ते किञ्चिदपि नावशिष्येतेति शून्यमेव तत्त्वमिति॥

सर्वस्यापि निषेधे प्रमाणानामपि निषेधसिद्ध्या न किञ्चित् वक्तुं निरूपयितुं वा शक्येत। ततश्च स्वपक्षस्थापनम्, परपक्षनिषेधश्च न सिद्ध्येत्। ततश्च शून्यरूपं तत्त्वमपि प्रामाणिकं न स्यात्। तदपीष्टमेवास्माकमिति चेत्, तर्हि तादृशस्य कथास्वनधिकार एवोदघोषि महामेधाविभिः 'अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः' (श्लो.वा.निरा.12) इति। ननु अस्ति किल तमश्शब्दः विधिरूपोऽपि निषेधार्थकः। तद्वत् 'तमो नास्ति' इति शब्दोऽपि तेजोऽस्ति इति भावपर्यवसायी शब्दः। अतो विध्यलीकनिषेधालीकावङ्गीकार्याविति चेत्, जगतो विधिनिषेधात्मकद्वैरूप्यं वदतां यथाप्रमाणं केचन विधिरूपाः पदार्थाः केचन निषेधरूपाः पदार्था इति यथाप्रमाणं व्यवस्था वक्तुं शक्या। न किञ्चिद्वर्तते जगति इति वदतस्तव द्वैरूप्यमेव नास्ति वस्तुत इति विध्यलीकनिषेधालीकविभागो वा कथं संगच्छेत? शशशृङ्गवन्ध्यासुतादिपदानि सन्ति किल केवल कल्पितार्थकानीति चेत्? वस्तुतस्तानि न पदानि, अर्थशून्यत्वात्। 'शक्तं पदम्'इति हि कुशलमतयः। 'सुप्तिङन्तं पदम्' 'ते विभक्त्यन्ताः पदम्'इति महर्षय इति चेत्, रामपदात् सुप्रत्यये कृते इत्यादिव्यवहारे का गतिः? 'राम'इत्यत्र सुपः अभावात् तस्य पदत्वं च कथम्? किमधिकोक्त्या! शब्दशास्त्रे हि संज्ञापदानां वृद्धिगुणादीनां शब्द एवार्थः, न त्वतिरिक्तः कश्चनार्थः। 'रामाभिषेके मदविह्वलायाः हस्तात् च्युतो हेमघटस्तरुण्याः। सोपानमासाद्य करोति शब्दं - ठंठंठंठंठठंठंठठंठम्॥' इत्याद्यनुकरणशब्दस्थले ठंठंठंठं इत्यादिपदं हि द्वितीयान्तम्। तत्र प्रातिपदिकस्य ध्वन्यतिरिक्तोऽर्थः केनापि न वक्तुं शक्यः। 'पूर्वं तुनोक्तम्, अद्यापिनोक्तम्' इत्यादिकथा अपि प्रसिद्धाः। अतश्शशशृङ्गादिपदानामपि आनुपूर्व्येवार्थः। न हि तादृशेन पदेन कश्चनाखण्डोऽर्थः कस्यापि बुद्धौ भासते। 'शशशृङ्गं नास्ति' इत्याद्यपि अस्मद्गृहे शशशृङ्गं नास्ति इत्यर्थे न प्रयुज्यते, किन्तु शशस्य शृङ्गं नास्ति इत्यर्थ एव। ननु वैज्ञानिकः पदार्थोऽस्तीति वदन्ति किल केचिदिति चेत्? यदि वक्ता प्रामाणिकस्तदा कृत्वा चिन्तयेति गृह्यताम्। कथं तर्ह्याचार्यैः 'एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः। मृगतृष्णांभसि स्नातः खपुष्पकृतशेखरः॥' इत्यादिश्लोकोदाहरणमिति चेत्, इदमपि परोक्तानुवादरूपम् (परानुकरणं) इति गृह्यताम्। ननु तादृशश्लोकश्रवणे प्रतीयते कश्चनार्थ इति चेत्, कस्य प्रतीयते? प्रतीयेत मुग्धानां किञ्चित्। किञ्चिदिव बालानां प्रतीयत इव, विवेकिनां तु न कश्चन प्रतीयेत। प्रत्येकपदस्यार्थवत्त्वात् वाक्यार्थः प्रतीयत इव॥

ननु भोः! कथमेवमाग्रहः—विवेकिनां तादृशपदैर्बोध एव न भवतीति। तर्ह्युच्यताम्—'अग्निना सिञ्चति' इति वाक्याद्बोधो भवति, न वेति। कस्य भवेद्बोधः? व्यस्तप्रयोगे स्यादपि कथञ्चित्तथा विभक्तिश्रवणात्। 'शशशृङ्गधनुर्धरः' इति समासे कथम्? शशशृङ्गमेकं ज्ञात्वा, तस्य धनुष्ट्वम्, तस्य धारणमिति

खलु बोधो वक्तव्यः। शशशृङ्गज्ञानमूलमितरत्, तदेव कथम्? सेचने अग्निकरणकत्वाभाववत्, शशसंबन्धाभावः शृङ्गे यदि बोधितः, तर्हि तदुपरि कथमन्वयबोधः? समासे शक्तिवादिनां तु मते, तत्समस्तपदस्य कुत्र शक्तिः? कथं बोधः? शाब्दभ्रमस्यापि काचिद्व्यवस्था आवश्यकी। अत एतादृशपदानां पदत्वसिद्ध्यर्थं आनुपूर्वीपरत्वकथनमेव प्रातिपदिकत्वे वरम्। शिष्टास्तु— 'एतादृशशब्दप्रयोगाद्वरं मौनम्' इत्येव मन्येरन्। यतश्शब्दप्रयोग एवादृष्टविशेषजनकस्तेषां सताम्॥

अतः प्रामाणिकैः पुंभिरधर्मभयकर्शितैः। पदानि ह्यर्थशून्यानि वर्ज्यान्येव न संशयः॥

ननु भोः! किमेवं क्षोभयन्ति भवतो वचांसि जिज्ञासून्! भ्रामयन्ति हि जनान् मृदुमतीन्॥

युक्तयोऽपि च लभ्यन्ते दृष्टान्ता विविधा अपि। रमणीयं भाति सर्वं कथं वा निर्णयो भवेत्॥
श्रद्धैव चेद्गतिः पुंसां, सा श्रद्धा वा कथं भवेत्। मौढ्याच्च भेदः श्रद्धायाः कथ्यतां हृदयंगमम्॥
श्रद्धैव चेद्गतिः पुंसां, विचारो विपुलः कुतः। श्रद्धा न तावत्सुलभा मौढ्यं तु सहजं स्थितम्॥
श्रद्धा यदि तु सिद्धा स्यात् मार्गो लब्धस्तु देहिनाम्। शास्त्राणां वा क उद्देशो निश्चितं किञ्चिदुच्यताम्॥
सत्यं सत्यं पुनस्सत्यं यदुक्तं भवता बत। मातैव चेद्विषं दद्यात् रक्षकः कः शिशोर्वद॥
पण्डिता ब्राह्मणा लोके जनानां मार्गदर्शकाः। केशाकेशिरतास्ते हि किं कुर्युरितरे जनाः॥
मायामात्रमिदं त्यक्त्वा शरणं याहि मायिनम्। नूनं स दर्शयेन्मार्गं सत्यमेतत् ब्रवीमि वः॥
एतदर्थक एवायं यत्नो मम कथञ्चन। सारं वक्ष्ये ऋतं वक्ष्ये हितं वक्ष्ये यथाबलम्॥
ज्ञानं विज्ञानमेतद्धि द्वयमुत्तारकं नृणाम्। ज्ञानमेव परं श्रेष्ठं नृणामुत्तारकं सदा॥
विज्ञानं तु विवेकाय केवलं स्यान्न चान्यथा। विज्ञानस्यापि मूलं हि ज्ञानमेव सदा मतम्॥
प्रमाणमूलो यत्नः स्यात् हानोपादानगोचरः। विचाराद्यपि विज्ञानविशेषः स्यात् सहायकः॥
न हि दृष्टान्तमात्रेण वस्तुसिद्धिः कदाचन। मत्वैतत्सर्वमाचार्यैरुक्तस्सम्यङ्ङिनश्चयः॥
परश्शतपरिक्षोदात्परस्तादपि वादिभिः। उपलंभबले स्थेयम् इति सर्वहितं वचः॥
परश्शतेत्यादिकं हि विज्ञानं कथ्यते बुधैः। उपलंभेत्यादिकं च ज्ञानमत्राभिधीयते॥
धर्माधर्मादिकं सर्वं ज्ञानाधीनं मतं सताम्। ज्ञानस्यैव विकासः स्याद्विज्ञानं क्रमशो मतम्॥
ज्ञानं विशुद्धं विमलं सर्वोत्तीर्णं परात्परम्। नित्यतृप्तं तथा नित्यनिरपेक्षं निरञ्जनम्॥
कदाचित्तल्लीलयैव दयया वा स्वभावतः। अवरुह्यावरुह्यैव धत्ते विज्ञानरूपताम्॥
न विज्ञानमृते किञ्चित् जगत्यामस्ति किञ्चन। किन्तु क्वचित्तु विज्ञानं कयाचित्तु व्यपेक्षया॥
प्रोच्यते ज्ञानशब्देन ऋतसत्यादिशब्दवत्। **जात्यन्धपुत्रमरणकथापि** स्मर्यतां मुहुः॥
अतो मायामिश्रितं स्याद्विज्ञानमवधीयतां। वादा विज्ञानरूपाः स्युः तर्करूपाश्च ते मताः॥
मानानुग्राहकस्तर्कः न मानं स स्वतन्त्रतः। ज्ञानविज्ञानयोर्भेदज्ञानं तूत्तारकं भवेत्॥
ज्ञानविज्ञानयोस्तत्त्वं ज्ञात्वा शान्तस्सुखी भवेत्। क्षणिकत्वादिकं सर्वं स्याद्वा वैज्ञानिकं भुवि॥
व्यवहाराय नैव स्यात् वैराग्याय भवेन्नृणाम्। दुर्बलानां सदा बाह्यसुखैकासक्तचेतसाम्॥

**[शून्यवादेऽनुपपत्तयः]**

**244. व्याघातातिप्रसङ्गौ प्रमितिपरिभवे मानतोऽमानतो वा**
**मानान्मानस्य सिद्धौ स्वतदितरपरित्राणमेकप्रवृत्त्या ।**

---

वैज्ञानिकं भवेद्बौद्धदर्शनं हितकृद्भवेत् । वैदिकं दर्शनं तु स्यात् ज्ञानमूलं हितं नृणाम् ॥
एवमेव भवेन्मिथ्यावादो वैराग्यदो नृणाम् । न तु साधनवेलायामेतद्युज्येत लेशतः ॥
सत्सङ्गस्तु सदा कार्यः किन्तु सन्तस्सुदुर्लभाः । विश्वासः क्रियतां स्वात्मन्यथवा परमात्मनि ॥
बुद्धौ न क्रियतां जातु यत्सा मायाऽबलात्मनाम् । ज्ञानमन्यद्बुद्धिरन्येत्येतच्चाप्यवधीयताम् ॥ १८ ॥

ननु न वयं दुराग्रहाच्छून्यवादं प्रवर्तयामः, वस्तुस्थितिरेव तादृशीति ब्रूमः । **त्रिपुटी** हि सर्वव्यवहारमूला । सा तु सुदुर्निरूपा । तथा हि—प्रमाणम्, प्रमेयम्, प्रमाता इति तत्त्वत्रयं त्रिपुटीपदवाच्यं सर्वव्यवहारमूलम् । अत्र त्रिषु प्रमाणमेवेतरद्वयमूलम् । प्रमाणस्य विषयः प्रमेयम्, प्रमाणस्याश्रयः प्रमाता इति व्युत्पत्तिरेवैतत् प्रदर्शयति । चिदचिदीश्वरतत्त्वज्ञानमिदं द्रढयेत् । इदं मूलभूतं प्रमाणं केन सिद्धम्? किं स्वत एव सिद्धम्? उतान्येन सिद्धम्? नाद्यः कल्पः, सिद्धेर्नियमेन साधनापेक्षणात् । केन कस्य इति प्रश्नस्यानतिक्रमणात् । अन्यथा सर्वमपि स्वतस्सिद्ध्येत् । अस्तु तथैवेति चेत्, न कोऽपि प्रश्नः, न किमप्युत्तरमिति स्यात् । शशविषाणमपि स्वतस्सिद्धं स्यात् । अन्येनेति द्वितीयकल्पे, किं प्रमाणेन प्रमाणसिद्धिः, उताप्रमाणेन? नाद्यः, अनवस्थाप्रसङ्गात् । न द्वितीयः, व्याघातात्, अतिप्रसङ्गाच्च । अप्रमाणेन प्रमाणस्य सिद्धौ, सिद्धं तत् प्रामाणिकं कथं स्यात्, अप्रमाणेन सिद्धं न हि किञ्चित्प्रामाणिकं भवेत् । यदि भवेत्, प्रमाभ्रमविभाग एव दुर्निरूपः । प्रमाणस्य दुर्निरूपत्वे प्रमाता, प्रमेयं च सुदुर्निरूपमिति त्रिपुट्या एव क्षये व्यवहारस्सर्वोऽपि विलीन एव । दृश्यते किल लोक इति चेत्, अविचारितरमणीयोऽयं लोकव्यवहारः स्वाप्नव्यवहारवत् । स्वप्नेऽपि चलन्ति बहवो व्यवहाराः । किं ते प्रमाणं भवेयुः? अतो दुर्निरूपं सर्वम्, अत एव शून्यमेव परमं तत्त्वमिति वदतां माध्यमिकानां मतम्, अस्मिन्नेव मार्गे गतवन्तम् 'वादादिकथासु विजयो मम वा माध्यमिकस्य वा' इति भुजमास्फालयन्तं **खण्डनकारमतं** चाशंक्य समाधत्ते—**व्याघातेत्यादि** । यद्यप्यग्रे (श्लो.61) तादृशानां कथायामनधिकारं वक्ष्यति, परं तु वस्तुस्थितिं जिज्ञासमानस्य शिष्यस्य मनस्समाधानार्थं च तस्य प्रामाणिकमुत्तरमिहाऽऽचार्यः परमवात्सल्येन प्रादर्शयदिति मन्तव्यम् । **मानतः, अमानतो वा प्रमितिपरिभवे व्याघातातिप्रसङ्गौ** दुर्वारौ । प्रमाणमेव किञ्चिन्नास्तीति प्रमाणादुच्यते, उताप्रमाणादुच्यते? आद्ये कल्पे व्याघातः, प्रमाणं किञ्चिनास्तीति वदतैव प्रमाणस्य कस्यचिदङ्गीकारात् । अप्रमाणतस्तथा कथने तु, इतरमतमपि तथैव कुतो न सिद्ध्येत्, अतस्तेन स्वपक्ष एव सिद्ध्यति, न परपक्ष इत्यनियमादनिष्टप्रसङ्गः ॥

ननु प्रतिबन्दीयम् । न हि प्रतिवन्दीकथनमात्रेण भवदिष्टसिद्धिः । स्वपक्षस्य दोषानतिवृत्तेः । अतो निर्दिष्टमुत्तरमुच्यताम् इत्यत्राह—**मानादित्यादि** । प्रमाणं प्रमाणादेव सिद्ध्यति, न त्वप्रमाणात् । एवं **मानात्**

**साधीयानेष पन्थाः समयिभिरखिलैरर्थ्यतां सार्थनीत्या**
**नो चेत् उच्छिन्नलोकव्यवहतिनियमाः कामचाराः कथाः स्युः ॥ १९ ॥**

**मानस्य सिद्धौ** तर्ह्यनवस्था जागरूकेत्यत्र—**एकप्रवृत्त्या**=एकेनैव व्यापारेण **स्वतदितरपरित्राणम्**= स्वपरनिर्वाहकसमाध्या, स्वस्य स्वविषयस्य चेत्युभयोः रक्षणम् भवति। यथा लोके दीपादि प्रकाशकम्, प्रकाश्यञ्च। दीपादिर्हि यथा घटादिकं प्रकाशयति, तथैव स्वात्मानमपि प्रकाशयति। तद्वत्प्रमाणज्ञानमपि आत्मानं विषयं च द्वयमपि प्रकाशयति, अतो नानवस्था॥

ननु घटादिर्हि अप्रकाशात्मकः, अतः प्रकाशकापेक्षा। दीपे तु प्रकाशप्रश्नस्यैवानुदयात्, सदैव प्रकाशात्मा, प्रकाशकं नापेक्षत इति चेत्, प्रकृतेऽपि तथैव। प्रमाणज्ञानस्य स्वतःप्रकाशात्मत्वात् न प्रकाशकान्तरापेक्षा। ननु **'न ह्यङ्गुल्यग्रम् आत्मानं स्पृशति'**। कथमेकमेव प्रकाशकं प्रकाश्यं च स्यात्? इति चेत्, दीपः कथं घटादेः प्रकाशकं स्वमपि प्रकाशयेत्? ननु दीपः स्वं न प्रकाशयति, अपि तु घटादिक- मेव। स्वयं तु प्रकाशात्मा, अप्रकाशप्रसक्तिरहित इति चेत्, समानमेतत् प्रकृतेऽपि। आशयानभिज्ञोऽसि देवानांप्रियः। दीपे प्रकाशप्रश्न एव नोदेति, घटादावेव स उदेति। अतो दीपः प्रकाशक एव घटादेः, न स्वविषये, तत्र प्रश्नस्यैवानुदयात् इति चेत्, कुतो नोदेति प्रश्न इति पृच्छामोऽसुराणांप्रियं त्वाम्। स्वतःप्रकाशमानत्वादिति चेत्, चक्षुर्निमीलनेऽपि किं प्रकाशते दीपः? तदा सामग्र्यभावात् न प्रकाशते दीपः इति चेत्, का सामग्री? चक्षुरेव। कं प्रति? किं घटं प्रति? उतात्मानं प्रति? उभयं प्रत्येवास्तु, का हानिः? न हानिर्भीः कस्यापि। कुतो भीतिः? परन्तु एकैव सामग्री एकदैव द्वयं कथं कुर्यात्? प्रदीपवत् स्यात्। एक एव दीपः घटं प्रकाशयति, वर्तिं विकारयति, तैलं च नाशयति, तद्वत्स्यात्। तर्ह्येक एव दण्डः घटं जनयतु, नाशयतु च युगपत्, शक्तेः सत्त्वात्। अविरुद्धमेव कार्यद्वयं जनयेत्, न तु विरुद्धम्, तादृशसामग्र्यभावादिति चेत्, तर्हि प्रमाणमप्यविरुद्धं द्वयं प्रकाशयतु, का हानिः? इति प्रकृतेऽपि तत्समानम्। न ह्यङ्गुल्यग्रं स्वात्मानं स्पृशति किलेति चेत्;

सङ्गीतकमिदं वो हि बहुधैव मुहुः श्रुतम्। दृष्टान्तमात्रमत्र त्वं वक्षि दार्ष्टान्तिकं स्मर॥
दृष्टान्तमात्रविश्रान्ताः सिद्धान्ता हन्त पश्यत। दार्ष्टान्तिकगतिं कोऽपि न जानाति किमद्भुतम्॥
अङ्गुल्यग्रं च दीपश्च द्वयं तुल्यं कथं भवेत्? जडोऽपि सन् प्रदीपोऽयं घटादीन् दर्शयत्यहो॥
तस्मादपि जडस्त्वं हि कथं जातो विचिन्तय। स्वप्रकाशात्मके दीपे नोदेति प्रश्न एव चेत्॥
प्रमाणेऽपि कुतो न स्यादियं रीतिरिति स्मर। नाङ्गुल्यग्रं न दीपो वा ज्ञानं सर्वप्रकाशकम्॥
धर्मिग्राहकमानाख्यं प्रमाणं सर्वतो बलम्। आत्मानं त्वं न जानीषे तत एवं ब्रवीष्यहो!॥
त्यक्त्वा वाग्विस्तरं भूयः मौनमाश्रियतां सदा। क्रियतां तप अत्युग्रम् द्रक्ष्यस्यन्तरहोऽखिलम्॥

एवं वस्तुस्थितिं प्रतिपाद्य, गत्यन्तराभावमाह—**साधीयानित्यादिना**। **साधीयान्**=अतिशयेन अङ्गीकारार्हः **एष एव पन्थाः**=मार्गः **अखिलैः समयिभिः**=सैद्धान्तिकैः **सार्थनीत्या**=समुदायनीत्या

[योगाचारमतविमर्शः]

245. **ज्ञानाकाराधिकं हि प्रथितमिदमिति श्वेतपीतादि बाह्यं**
**तादात्म्ये तस्य साध्ये सहमतिनियमाद्यन्यथैवात्र सिद्धम्।**

**अर्थ्यताम्**= इष्यताम्। समानजनसमुदायः सार्थ इत्युच्यते। मानवसमाजनीतिः सार्थनीतिः। एकः श्रोता वा भवेत्, वक्ता वा भवेत्। उभयत्रापि परस्परसंमतप्रक्रिया आवश्यकी। अन्यथा 'आम्रान् पृष्टः कोविदारानाचष्टे' इत्यसम्बद्धप्रलापः स्यात्सर्वोऽपि। यदि प्रमाणप्रमेयव्यवस्थैव न स्यात्, तर्हि सर्वैर्मौनिभिर्भवितव्यम्। तदेव प्रकारान्तरेणाह—**नो चेदित्यादि**। **नो चेत्**=एवं व्यवस्थाया अनङ्गीकारे **उच्छिन्नलोकव्यवहृतिनियमाः** उच्छिन्नाः=परित्यक्ताः लोकव्यवहारसंबन्धिनो नियमाः यासु, ताः कथाः वादजल्परूपाः प्रसङ्गाः। तत्त्वबुभुत्सुकथा वादः, विजिगीषुकथा जल्पः। **कामचाराः**=स्वेच्छाचाररूपाः **स्युः**॥

उपदेशो जिगीषा वाऽन्योन्यभावानभिज्ञयोः। ऋते शब्दप्रयोगात्ते केशाकेश्यवसानकाः॥
अत एतादृशा वादा न कस्यापि हितप्रदाः। एतस्मान्मौनमेव स्याद्वरं व्यर्थप्रलापनात्॥
शून्यं तत्त्वमिति प्रोच्य किं करिष्यसि तद्वद। किं न भुङ्क्षे न वा शेषे पत्नीं वा किं न पश्यसि॥
अग्रासनं च ताम्बूलद्वयं गृह्णासि वा न वा? एतावत्येव विश्रान्ता कथा ते ह्यखिला बत॥
हिरण्यनिधिवृत्तान्तं न कदापि स्मरस्यहो। दौर्भाग्यं कीदृशं तेऽभूत् आत्मानं प्रथमं स्मर॥
जानामि सर्वं भो ब्रह्मन् दयया प्रेरितो ह्यहम्। वच्मि सत्यं परं लोकहितायैव तु केवलम्॥
मा क्लिश्यतु वृथा लोक इति मत्वा वदाम्यहम्। वैराग्यसिद्धये तीव्रविषयासक्तचेतसाम्॥
किं दयाऽप्यस्ति ते विद्वन्! तर्हि वच्मि हितं शृणु। त्यक्त्वा त्वग्रासनं पूर्वं ताम्बूलद्वयमेव च॥
यदि वक्षि तदा वाक्यं श्रद्धेयं ते भवेन्मम। पशुकर्माणि सर्वाणि कुर्वन्नेवं ब्रवीषि हि॥
परोपदेशं कुर्वंस्त्वमात्मानं प्रथमं स्मर। जानामि मन्त्रसिद्धेस्ते प्रभावमतुलं तदा॥
किमासीद्रावणादीनां सिद्धानां स्मर वैभवम्। किं कुप्यसि वृथा ब्रह्मन्! शून्यवादो न पातकः॥
न श्रुतं किं पदं शून्यं पठितं विष्णुनामसु। तावद्दूरं गतश्चेत् त्वं नैवं वक्षि कदा च न॥
तत्कक्ष्यायां भवेच्छून्यपदं पूर्णसमार्थकम्। तावदज्ञातुं न शक्तश्चेत् व्याख्यां वा शरणं व्रज॥
सर्वापलापवादीति प्रथां मा गच्छ निन्दिताम्। प्राणिनां सुहृदं चापि शरणं गच्छ मा चिरम्॥ १९॥

एवं माध्यमिकसंमतं शून्यवादं विमृश्य, तत्कनिष्ठं **विज्ञानवादं** विमृशति—**ज्ञानेत्यादि**। योगाचारा वदन्ति—विज्ञानं नाम किञ्चित्तत्त्वं निर्धर्मकं स्वतस्सिद्धं क्षणिकम्, अथापि प्रवाहतोऽनाद्यस्ति। तदेव संवृत्त्याख्यदोषवशात् प्रमाणप्रमेयप्रमातृरूपेण भासते। तदाहुः—'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥' इति। तदेतत्प्रतिवक्ति—**'इदम्' इति बाह्यं श्वेतपीतादि ज्ञानाकाराधिकम्**=ज्ञानाकारापेक्षया अतिरिक्तम् **हि प्रथितम्**=प्रसिद्धम्=सर्वानुभवसिद्धम्। अर्थसद्भावे हि ज्ञानमेव प्रमाणम्। ज्ञानञ्च ज्ञेयमन्तरा नानुभूयते। एवं ज्ञानार्थयोः सहैवोपालंभात्; प्रत्येकं केनाप्यनुपलंभात्

**ग्राह्यात्मत्वान्मृषा स्यान्मतिरपि, यदि वा ग्राह्यमप्यस्तु तथ्यं**
**किञ्चान्योन्यं विरुद्धैर्युगपदवगतैर्धीरभिन्ना कथं स्यात् ॥ २० ॥**

वस्तुद्वयं तत्र वर्तत इत्यत्र किं प्रमाणमिति प्रश्नः । अयं प्रश्नो गुणगुणिनोरपि समानः गुणगुणिभावविषये वक्तव्यं पूर्व(जड.8)मेवोक्तम् । ज्ञानार्थयोर्विषये वक्तव्यमत्रोच्यते ॥

ज्ञानं ह्यान्तरं सर्वानुभवसिद्धम् । अर्थस्तु घटादिर्बाह्य इत्यपि सर्वानुभवसिद्धम् । आन्तरे ज्ञाने अर्थोऽध्यस्त इति कथने तु, आन्तरस्य ज्ञानस्य 'अहम्' इत्येवानुभवात्, विषयस्य बाह्यस्य 'इदम्' इत्येवानुभवाच्च विरोधः । अध्यस्तस्य अधिष्ठानसमानाधिकरणतया निर्देश एवाध्यासस्थले सर्वत्र । यथा 'इदं रजतम्' 'अयं सर्पः' इति । प्रकृते विज्ञानात्मनः 'अहम्' इत्येवप्रतीतेः, तस्मिन्नध्यस्तं रजतादिकं 'अहं रजतम्' इत्येवानुभूयेत, न तु 'इदं रजतम्' इति बाह्यतया । यथा बाह्यं शरीरमात्मन्यहमर्थेऽध्यस्तं 'अहं स्थूलः' इत्येव व्यवह्रियते, तथा ॥ ननु 'अर्थः ज्ञानाभिन्नः, ज्ञानेन सहैवोपलंभात्, यद्यतो भिद्यते, तत् सहैव नोपलभ्यते । यथा घटपटौ' इति व्याप्तेस्सत्त्वादुक्तानुमानेन ज्ञानार्थयोरभेदसिद्धिः । न च तदा 'इदम्' इति प्रतीतिर्न स्यादिति शङ्क्यम्, 'यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासते' इति कथनात्, 'इदम्' इति बाह्यतयोल्लेखः संवृत्त्या भवतीति मिथ्यैव । यथा स्वप्ने विज्ञानात्मन्यध्यस्तमपि इदमित्येव सर्वं प्रतीयते, न त्वहमिति, तथा। सर्वमिदं संवृतेः प्रभाव इति चेत्, तत्राह—**तादात्म्य** इत्यादि । **अत्र**=अर्थे बाह्ये **तादात्म्ये**=ज्ञानाभेदे **साध्ये**=उक्तेनानुमानेन **साध्ये**=साध्यमाने सति **सहमतिनियमादि**=सहोपलंभनियमादि **अन्यथैव**=ज्ञानस्यार्थस्य चाविनाभावादिना **उपपन्नम्**=युक्तम् । 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो दर्शनान्न नदर्शनात् ॥' (प्र.वा.1-33) इति कार्यकारणयोरविनाभावमङ्गीकृतवता त्वया अविनाभावमात्राद्यद्यभेदः, तर्हि कार्यकारणयोरप्यभेदापत्तिः कुतो विस्मृतेत्यर्थः । तथा च हेतोरन्यथासिद्धत्वादप्रयोजकमनुमानम् । एवमनङ्गीकारेऽनिष्टमप्यापादयति—**ग्राह्येत्यादि** । **ग्राह्यात्मत्वात्**=ज्ञानस्य ग्राहकस्य ग्राह्येण विषयेणाभेदात् ग्राह्यं यदि मिथ्या, तर्हि तदभेदात् **मतिरपि**=ग्राहकं ज्ञानमपि **मृषा**=मिथ्या स्यात् । **यदि वा**= अथवा **ग्राह्यमपि**=विषयोऽपि **तथ्यम् अस्तु,** ज्ञानस्य सत्यत्वाङ्गीकारात् ज्ञानाभिन्नः विषयः सत्यो भवतु ॥

ननु ज्ञानार्थयोरभेदेऽपि ज्ञानाधीनसिद्धिकस्य विषयस्य ज्ञानव्यतिरेकेणैव मिथ्यात्वम्, ज्ञानात्मना तु सत्यत्वमिष्टमेवेति चेत्, दूषणान्तरमाह—**किञ्चेत्यादि** । यदि ज्ञानार्थयोरभेदः, तर्हि **अन्योन्यं विरुद्धैः**= परस्परविरुद्धैः **युगपत् अवगतैः**=एकस्मिन्नेव काले ज्ञायमानैः विषयैः सह **धीः**=ज्ञानम् **अभिन्ना कथं स्यात्?** अग्निं जलं च यदा पुरतो युगपत्पश्यति, तदा तदुभयविषयकं प्रत्यक्षं भवति । ज्ञानविषययोः अग्निजलयोः तदुभयविषयकस्य ज्ञानस्य चाभेदे, अग्निजलयोरप्यभेद आवश्यकः । एकमेव ज्ञानं परस्परवस्तुद्वयात्मकमेकं कथं स्यात्? ज्ञानैक्ये तु तदभिन्नविषययोर्विरोधान्न संभवति । **'तदभिन्नाभिन्नस्य तदभिन्नत्व'**-नियमात् अग्निजलयोरप्यैक्यप्रसङ्गः । अग्न्यभिन्नं तद्विषयकज्ञानम् । तस्मिन्नेव ज्ञाने जलमपि विषयः । अतः जलमपि ज्ञानाभिन्नम् । तथा च अग्न्यभिन्नज्ञानाभिन्नं जलम् अग्न्यभिन्नं स्यादिति लोके कुत्रापि विरोध एव न स्यात् । अतो ज्ञानार्थयोर्नाभेदसंभवः ॥

**पूर्वपक्षिणोऽयमाशयः**—यदा घटादिवस्तुविषयकं ज्ञानं भवति, तदा 'अयं घटः' इत्युल्लेखो भवति। अयमुल्लेखः किं ज्ञानस्य, उत विषयस्य, उतोभयोः? न केवलं ज्ञानस्य, निर्विषयस्य ज्ञानस्योल्लेखासंभवात्। अत एव न विषयस्य, ज्ञानाविषयस्य घटादेरुल्लेखासंभवात्। नाप्युभयोः, उल्लेखद्वयादर्शनात्। एवं समस्यायाम् उल्लेखद्वयादर्शनात्, 'अयम्' इति विषयस्यैव स्पष्टं निर्देशात्। पुरोवर्तिवस्तुविषयकत्वात्, आन्तरस्य ज्ञानस्य तथोल्लेखासंभवाच्च। ज्ञानमन्तरा कथं विषयोल्लेख इति चेत्, ज्ञानं त्वस्त्येव। परन्तु तदानीं नोल्लिख्यते, आकारद्वयानुल्लेखात्। समनन्तरक्षणे तु 'घटमहं जानामि' इत्यनुव्यवसायेन सविषयकज्ञानविषयकमानसप्रत्यक्षेण ज्ञानं गृह्यत इति **नैय्यायिकाः**। एवमेव मीमांसकेषु **मिश्राश्च**। **भाट्टास्तु,** सत्यमुल्लेखो विषयस्यैव। ज्ञानमन्तरा एवमुल्लेखासंभवात् अनेन ज्ञानमनुमीयत इत्याहुः। ज्ञानस्वप्रकाशत्ववादिनः **प्राभाकरास्तु** ज्ञानमन्तरा विषयप्रकाशाभावत्, निर्विषयस्य ज्ञानस्याप्यदर्शनाच्च, ज्ञानार्थयोरुभयोरप्युल्लेखस्य एकरूपत्वादयमुल्लेख उभयोरेव। **योगाचारास्तु** आकारद्वयानुल्लेखस्तु सिद्ध एव। परन्तु ज्ञानार्थयोर्मध्ये ज्ञानस्यैव प्राधान्यात् ज्ञानस्यैवायमुल्लेखः। यद्यपि ज्ञानं स्वतो निराकारमेव। आकारोल्लेखस्तु विषयसान्निध्ये तस्यैव वासनावशाद्भवति। अतश्च ज्ञातापि कल्पित एव। ज्ञानमेकं तु स्वतस्सिद्धम्। इतरत्सर्वं कल्पितमेवेत्याहुः। अत्र च मूलयुक्तिः 'सहोपलंभनियमः' एव। यत्र यत्राविनाभावः, तत्र सर्वत्राप्येवं विवदन्त एव विद्वांसः प्रस्थानभेदान् वर्णयामासुः। यथा ज्ञानार्थयोः, शब्दार्थयोः, गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्त्योः, अवयवावयविनोरित्यादौ द्रष्टव्यम्। किं बहुना! जीवब्रह्मणोर्विषयोऽप्येतादृश एव, क्षीरसर्पिषोरिव उभयोरविनाभावादिति सिद्धान्तिनः॥

एतादृशस्थले सर्वत्रापि सहोपलंभः कयोः? इति प्रश्नस्य जागरूकत्वात् वस्तुद्वयमावश्यकमेव। किञ्च सहोपलंभनियमादित्यादि वदद्भिः पूर्वपक्षिभिः, व्याप्तेरपि अविनाभावरूपताऽङ्गीक्रियते—'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमो दर्शनान्न नदर्शनात्॥' इति। (दर्शनात्=अन्वयदर्शनात्। नदर्शनात्=व्यतिरेकदर्शनात् नेत्यर्थः।)। कार्यकारणयोरप्यविनाभावस्य, तत्प्रयुक्तसहोपलंभस्य च दर्शनात्, उभयोरभेदप्रसङ्गः। अन्ततः अविनाभावस्य पदार्थद्वयसापेक्षत्वात्पदार्थद्वयमस्त्येव। केचित्तु एतादृशस्थले भेदाभेदवादमवतारयन्ति। भेदाभेदयोः परस्परविरुद्धात् भेद एव साधीयान्। अभेदस्त्वन्यथासिद्धः। अभेद एव साधीयान्, भेद एवान्यथासिद्ध इत्यद्वैतिनः॥

परं तु 'नाभाव उपलब्धेः' (ब्र.सू.2-2-27) इत्याद्यधिकरणं ज्ञानार्थयोरभेदवादनिरसनपरमेव सर्वैरप्याचार्यैर्व्याख्यायीत्ययमंशोऽवधेयः। अतोऽत्र कुमारिलश्लोक एव स्मर्तव्यः—'युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम्। आस्थानिवृत्त्यर्थमवादिबौद्धैः ग्राहंगतास्तत्र कथं चिदन्ये॥' इति॥

परिक्षणीयः स्वात्मैव सर्वेण स्वहितेप्सुना। यद्यपीदं कष्टसाध्यं, साधनीयं तथापि तत्॥

यद्यपि **कुमारिलश्शंकराचार्यात्प्राचीनः**, अथापि 'अन्ये' इति **मण्डनमिश्रादयः** स्युः। सर्वेषां वादानां प्राचीनत्वं हि सर्वैरप्यङ्गीक्रियत एव, अतः अर्थात् **शाङ्करमतमपि** कटाक्षयतीदम्॥ २०॥

[बाह्यार्थस्य दुर्निरूपत्वनिरासः]

246. हन्त त्र्य्यन्तपक्षे कणभुगभिमतो नावयव्यस्ति कश्चित्
सङ्घातो नांशतोऽन्यः; तदणुषु न भवेत् दृश्यतेत्यन्धचोद्यम्।
संसर्गैर्विश्वमेतद् घटत इह यथादृष्टि दृश्याणुपक्षे
नादृष्टं कल्पयामः परिणतिभिरसौ दृश्यतादिः श्रुते स्यात्॥ २१॥

श्वेतपीतादीनां बाह्यानां भेदस्य प्रत्यक्षसिद्धत्वमङ्गीकृत्य, तद्विषयिण्यां बुद्धौ विषयविषयिणोरभेदात्, 'तदभिन्नाभिन्नस्य' इत्यादिनियमात्, श्वेतपीतादिभेदोऽपि न स्यात् इति प्रत्यक्षविरोध आपादितः। परं तु बाह्यस्यार्थस्यैव दुर्निरूपत्वात् प्रत्यक्षमपि दुर्निरूपमित्याशंक्य समाधत्ते—**हन्ते**त्यादि। हन्तेत्याश्चर्ये, अनुकंपायां वा। एतावदपि न जानासि किल इति। पूर्वपक्षमनुवदति।**त्र्य्यन्तपक्षे**=वेदान्तिनां मते **कणभुगभिमतः**= कणाददर्शनसंमतः **कश्चित्** अवयवातिरिक्तः **अवयवी न अस्ति**=नास्त्येव, अवयवातिरिक्तावयविनो विस्तरेण पूर्वमेव निरासात् (जड.20)। अस्तु नाम! प्रकृते किमायातमित्यत्राह—**संघात** इत्यादि।**संघातः**=अवयव-संघातः **अंशतः**=तद्घटकैकदेशापेक्षया **नान्यः**।**तत्**=तस्मात् एवमवयवविवेचने **अणुषु**=परमाणुषु अन्त्यावयवेषु **दृश्यता**=प्रत्यक्षसिद्धता **न भवेत्**। परमाणूनामतीन्द्रियत्वात्। तत्संघातोऽवयवी कथमैन्द्रियकः स्यात्। तथा च जगति प्रत्यक्षमेव दुर्निरूपम्। एवं सति तदादाय श्वेतपीताद्यभेदापादनमत्यन्तासम्बद्धम्॥

अयं विचारो यद्यपि पूर्वमेव विस्तरेण निरूपितः। अथापि पुनः स्मारयाम इत्यभिप्रायेणोत्तरयति— **इति अन्धचोद्यमिति**। स्पष्टमुपपादितमपि न जानासि किलेति **अन्ध**पदमुक्तम्। किमुक्तं पूर्वमित्यत्र— **संसर्गै**रित्यादि। **एतत् विश्वम्**=उक्तं सर्वमपि **इह**=एतन्मते **संसर्गैः**=अवयवानां परस्परसंयोगविशेषैः **घटते**=युज्यते। एवञ्च प्रत्येकावयवापेक्षया यद्यपि संघातो नातिरिक्तः, परं तु कणादमते संमतः अवयवानां संबन्धविशेषो न निराक्रियते। परस्परसंयोगविशेषविशिष्टत्वेन संघातः प्रत्येकापेक्षया विलक्षण एवेति परमाणूनामतीन्द्रियत्वेऽपि अवयविन ऐन्द्रियकत्वं संगच्छत एव। इदं च परमाणूनामतीन्द्रियत्वमभ्युप-गम्योक्तम्। वस्तुतस्तु—**यथादृष्टि**=यथोपलंभम् **दृश्याणुपक्षे**=दृश्य एवाणुरपि, अवयवपरंपरायाः तत्संमत-त्र्यणुक एव विश्रान्तेरिति सिद्धान्ते **अदृष्टम्**=अतीन्द्रियम् किञ्चित् **न कल्पयामः**=अनुमानान्न साधयामो वयम्। अतश्च अदृश्यैः परमाणुभिः कथं दृश्यत्र्यणुकोत्पत्तिः? इत्याक्षेपस्य नास्त्यवकाशः। परिणाममूलकैरवस्थाभेदैरेव एतादृशानां विरोधानां सुपरिहरत्वेऽतिरिक्तावयविनो निराकरणेऽप्युपपत्तेः प्रदर्शि तत्त्वात्। नन्वस्त्विवदं सर्वम्। ब्रह्मैव भवतां जगत उपादानम्। ब्रह्म तु सर्वथा नैन्द्रियकम्। तर्हि तत्कार्यभूतं जगत् कथमैन्द्रियकं स्यादिति चेत्तत्राह—**श्रुते**=श्रुतिसिद्धे जगदुपादानभूते ब्रह्मणि **असौ दृश्यतादिः**=लोके प्रत्यक्षसिद्धो दृश्यत्वादिस्तु **परिणतिभिः स्यात्**=परिणामविशेषैः स्यात्॥

अत्रैव चिन्त्यं वैजात्यं **परिणामविवर्तयोः**। परिणामविशेषः स्याद्विवर्त इति निश्चयः॥
वृथा तु पण्डितैस्सर्वैः शब्दमात्रपरायणैः। शब्द एवाभिवृद्धोऽभूत् नार्थो लब्धः समग्रतः॥
सर्वं खल्वीश्वरसरे विस्तरेणैव वर्णितम्। पश्यन्तु सर्वं तत्रैव को लाभः पिष्टपेषणे॥ २१॥

[आत्मख्यातिविमर्शः]

247. **आत्मख्यातौ मतीनां मिथ इतरतया संविदन्या न सिध्येत्**
**अन्योन्यार्थानभिज्ञाः कथमिव च धियो वादजल्पादि कुर्युः ।**
**मानाभासादिसीमा न कथमपि भवेद् ग्राह्यमिथ्यात्वसाम्यात्**
**सर्वं तत् संवृतेश्चेत्, न खलु सदितरा साऽपि तत्तन्नियन्त्री ।। २२ ।।**

ख्यातिवादप्रसक्तावागतं शून्यवादविचारं परिसमाप्य, शून्यवादिकनिष्ठस्य योगाचारस्य संमतामात्मख्यातिं विमृशति—**आत्मख्याताविति** । **आत्मख्यातौ**=अहंप्रतीतिनियामकं विज्ञानाख्यं वस्तु स्वयं विषयरूपेण भासते, न तु विषयो बाह्यस्सत्योऽस्ति इत्यङ्गीकारे **मतीनाम्**=क्षणिकविज्ञानानाम् **मिथः**=परस्परम् **इतरतया**=भिन्नत्वात् **संविदन्या**=विज्ञानव्यतिरिक्तमन्यत् **न सिद्ध्येत्**=बाह्यं वस्तु न सिद्ध्येदेव । इष्टमेवास्माकमिति चेत्, तत्राह—**अन्योन्येत्यादि** । अथवा, **अन्या संवित्**=स्वात्मव्यतिरिक्ता **संवित्**=विज्ञानम् न **सिद्ध्येत्**=न प्रसिद्ध्येत्=न प्रकाशेत, विज्ञानानां स्वप्रकाशत्वेऽपि, स्वं प्रत्येव स्वस्य प्रकाशत्वात् परात्मनः स्वं प्रत्यप्रकाशरूपत्वात्, परात्मा न ज्ञायेत । अस्तु का हानिरित्यत्र—**अन्योन्येत्यादि** । **अन्योन्यम्**=परस्परं ये **अर्थाः**=ज्ञानाज्ञानसुखदुःखादयः **तदनभिज्ञाः**=तद्विषयज्ञानशून्याः **धियः**=विज्ञानरूपाः (पुमांसः) **वाद-जल्पादि च**=वादकथाम् जल्पकथां वा, आदिपदेन व्यवहारसामान्यं ग्राह्यम्, **कथमिव कुर्युः**, न कथञ्चिदपि । अपि च **ग्राह्यमिथ्यात्वसाम्यात्**=ग्राह्याणां विषयाणाम् मिथ्यात्वस्य समानत्वात् **मानाभासादिसीमा**=प्रमाणाप्रमाणादिविषयिणी मर्यादा=व्यवस्था **कथमपि न भवेत्**=सर्वथा न भवेत् । एतत्सर्वं संवृतिपदवाच्यया वेदान्तिसंमतया अविद्ययैव प्रचलति, अविद्याया माहात्म्यादेवेति चेत्, तत्राह—**तत् सर्वम्**=उक्तं सर्वमपि **संवृतेश्चेत्**=संवृत्त्यैव संपद्यत इति चेत्, **सापि**=संवृतिरपि **सदितरा**=सद्रूपविज्ञानभिन्ना मिथ्याभूता संवृतिरपि **तत्तन्नियन्त्री**=तत्तद्व्यवस्थायाः प्रयोजिका **न खलु**=नैव भवेत्, मिथ्यात्वादेव । अतश्च सर्वव्यवहारविलोपः ।।

**अयमत्र संग्रहः**—विज्ञानपदवाच्या धातु(वस्तु)विशेषाः क्षणिकपरंपरारूपा अनन्तास्सन्ति । त एव संवृतिवशात् अहमर्थाः आत्मपदवाच्या भवन्ति । वस्तुतस्त्वहमर्थः आत्मा नाम कश्चिन्नास्ति । **नैरात्म्यवादिनो हि** ते । तदेव विज्ञानं संवृतिवशादेवार्थान् कल्पयित्वा विहरति, व्यवहारादिकं करोति । शुक्तिरजताद्यध्यासोऽपि संवृतिवशादात्मन्येव कल्पितः । विज्ञानस्यैव तन्मते आत्मस्थानापन्नत्वात्, एतत्संमतख्यातिवादस्य आत्मख्यातिः इति संज्ञा । परं त्वेतत्पक्षे क्षणिकपरंपरायाः परस्परं भिन्नत्वात्, विषयाणां तत्तद्विज्ञान अध्यासस्य वैय्यक्तिकत्वेन, एकस्य ज्ञानाज्ञानादिकम् अन्येन ज्ञातुं न शक्येत । अतश्च 'अयं मदुक्तं जानाति, न वा भ्रान्तो, वा न वा' इत्यादिकं ज्ञातुं न शक्येत । अतश्च लोकव्यवहारस्सर्वोऽप्युच्छिद्येत । वादादिकथा अपि न कर्तुं शक्याः, परस्पराभिप्रायज्ञानासंभवात् । सर्वमिदं मायास्थानापन्नसंवृतिप्रभावादुपपद्यत इत्यपि न, संवृतेरपि मिथ्यात्वात्, सापि स्वयमात्मानं कल्पयेदित्यपि वक्तुं न शक्यम्, तर्हि स्वतन्त्रपदार्थान्तरत्वापत्तेः,

[ज्ञानार्थभोर्भेद आवश्यकः]

248. **एकाकारप्रतीतिर्निजमतिविहता; नैव दृष्टे गुरुत्वम्**
**व्यर्थाऽस्मिन् संमतिस्ते; बहिरपि नियतं वक्ष्यते ग्राह्यलक्ष्म।**
**व्याघातो लिङ्गसंख्यापरिमितिवचसां नास्त्युपाधिप्रभेदात्**
**एकं नानाकृति स्यात्; निजगुणभिदया बाधिते धीः स्वहेतोः ॥ २३ ॥**

विज्ञानवदेव सत्या स्यात्। किञ्च बाह्यार्थस्य सत्यस्याभावात्, प्रमायाम् अप्रमायां वा विषयभूतस्य च मिथ्यात्वात्, मिथ्याविषयत्वादुभयोर्वैलक्षण्यं वा कथम्? इदमपि संवृतिप्रभावादिति चेत्, तर्हि न क्वापि व्यवस्था स्यात् जगति। ततश्च जगदान्ध्यमेव स्यात्। बन्धमोक्षव्यवस्थाद्यपि न स्यात्, गुरुशिष्यभावादिरपि न स्यादिति सर्वैर्मौनिभिर्भवितव्यमिति ॥ २२ ॥

ज्ञानार्थयोरभेदे परस्परव्यवहारो न स्यादित्युक्तम्। वस्तुतस्तु स्वव्यवहारोऽपि न स्यादिति प्रदर्शयति— **एकाकारेत्यादि**। **एकाकारप्रतीतिः**=एकरूपा प्रतीतिः, बाह्यार्थस्याभावात्, ज्ञानस्य चैकत्वात्, विषयाणां तदभिन्नत्वात्, विलक्षणविषयिण्यः प्रतीतयो न स्युः। अतश्च सा **निजमतिविहता**=स्वानुभवविरुद्धा। किं कुर्मः आकारद्वयानुपलंभात्, एक एव पदार्थः सिद्धः। स च बाह्यो वा स्यात्, आन्तरो वा स्यात्। आन्तरज्ञानमन्तरा बाह्यप्रकाशस्यैवासंभवात्, आन्तरमनिवार्यं तदङ्गीकुर्मः, लाघवात्। अन्यथा गौरवमनिवार्यमिति चेत्—**दृष्टे**=प्रत्यक्षदृष्टे विषये **गुरुत्वम्**=गौरवम् नैव भवेत्। युक्त्या वस्तुकल्पने लाधवगौरवविचारः, न तु प्रत्यक्षदृष्टेऽपि। अन्यथा क्षणिकपरंपराऽपि भिन्ना न स्यात्। तथा चापसिद्धान्तः। ननु ज्ञानार्थयोर्मध्ये ज्ञानमुभयसंमतम् अर्थस्तु नास्मत्संमतः। उभयसंमतं गृह्यताम्, विप्रतिपन्नं त्यज्यतामित्यत्र—**अस्मिन्**=बाह्येऽर्थे **ते संमतिः व्यर्था,** न हि भवत्संमत्यैव सर्वं भवेत्, असंभवाददर्शनाच्च। नन्वान्तरं वस्तु सर्वसंप्रतिपन्नम्। बाह्यं तु दुर्निरूपमित्यत्र—बहिर्विषयेऽपि ज्ञानप्रत्यनीकम् **अप्रकाशत्वम्,** प्रकाश्यत्वं वा **लक्षणं वक्ष्यत एव**=उच्यत एव सामान्यलक्षणम्। विशेषलक्षणान्यपि गन्धवत्त्वादीनि, सास्नादिमत्त्वादीनि। न हीमानि बुद्धिरूपाणि। बाह्यान्तरविभागस्य दुर्निरूपत्वप्रसङ्गात्, तयोः परस्परसापेक्षत्वादन्यतरापह्नवेऽन्यस्याप्यपायात्। अतोऽस्मत्संमतः, युष्मत्संमत इति विभाग एव दुर्निरूपः ॥

ननु बाह्यं तावद्दुर्निरूपम्। लिङ्गभेदोऽपि दृश्यते, एकस्यां स्त्रियाम् 'दाराः' इति पुंलिङ्गशब्दः, संख्याभेदश्च विरुद्धः। अणु, महत्, ह्रस्वम्, दीर्घमिति परिमाणभेदोऽपि दुर्निरूपः, परस्परसापेक्षाणीमानि परिमाणानि, नेत्थमिति निष्क्रष्टुं शक्यन्ते। ह्रस्वोऽपि दीर्घःस्यात्, दीर्घोऽपि ह्रस्वःस्यात्। अल्पमपि महत् स्यात्। महदपि अल्पं स्यात्। एवमनन्ताव्यवस्थादर्शनात् बाह्यं नाम किञ्चिन्नास्त्येवेत्यत्राह—**व्याघात** इत्यादि। **लिङ्गम्** पुंस्त्वादि। **संख्या**=एकत्वादिः। **परिमितिः** अणुत्वादिः। एतत्प्रतिपादकानां **वचसां**=शब्दानाम् **उपाधिभेदात् व्याघातः**=विरोधः **नास्ति**। प्रथमं शब्दार्थयोरत्यन्तं भिन्नत्वात्। स्त्रियामपि पुंलिङ्गशब्दः, एकस्यामपि बहुवचनप्रयोगश्च न विरुद्धः, शब्दगतं हि पुंल्लिङ्गबहुवचनत्वादिकम्,

[अनुमानेन बाह्यार्थनिरासविमर्शः]

249. **धीत्वात् स्वान्यार्थशून्या विमतमतिरिति स्वोक्तिबुद्ध्यादिभग्नम्**
**ज्ञानज्ञानेऽतिचारः क्षणिकविविधधीसन्ततेः संमतत्वात् ।**

न त्वर्थगतम् । तर्हि 'एको घटाः' इत्यपि प्रयुज्यताम् । कं पृच्छसि? नाहं नियन्ता व्यवहाराणाम् । अनूचानः खलु व्यवहारः । तदेव कथमिति पृच्छामः । तात्पर्यभेदादपि स्यात् । शब्दगतानां लिङ्गानां प्रयोजकाः सत्त्वादिगुणा एवेति वदन्ति शब्दतत्त्वज्ञाः । सत्त्वगुणप्रधानं **पुंस्त्वम्**, रजोगुणप्रधानं **स्त्रीत्वम्**, उभयसाम्ये **नपुंसकत्व**मिति । अधिकं तत्तच्छास्त्रादवगम्यताम् । परिमितिभेदस्तु सापेक्ष इति प्रसिद्धमेव । अणु, अणुतरम्, अणुतममित्यादयोऽपि सन्ति । तत्राप्यवान्तरभेदाश्च प्रत्यक्षसिद्धाः । प्रत्यक्षमेव यदि दूरीक्रियेत, तर्हि भोजनादिकमपि त्याज्यं स्यादिति वृथा चर्चेयम् ॥

नन्वस्त्विदं सर्वं कथञ्चित् । 'एकं नीलं महदुत्पलम्' इत्यादिप्रतीतौ, एकस्मिन्नेव वस्तुनि संख्यारूपपरिमाणजातीनां सत्त्वदर्शनात्, एषां परस्परं विरोधाच्च सा प्रतीतिर्विरुद्धा, गुणानामेकाधिकरणकानां सांकर्यं च दुर्वारमिति सर्वं बुद्धिमात्रकल्पितं वदाम इत्यत्राह—**एक**मित्यादि । **एकं** वस्तु **निजगुणभिदया**=स्वीयगुणानां रूपरसादीनां भेदेन **नानाकृति स्यात्**=नानाधर्मविशिष्टं भिन्नमेकं स्यात् । तथा च धर्मी नैकरूपं स्यात्, धर्माश्च परस्परं संकीर्येरन् । न दोषः परस्परविरोधाभावात् । अविरुद्धास्तु धर्माः धर्मिणं न भेदयेयुः । एक एव निरूपकभेदात् पिता भवति, पुत्रो भवति, पौत्रो भवति, पतिर्भवति, भ्राता भवति । कथं सांकर्यम् । एकमेव नीलं, पीतं च न स्यात् । एकं द्वे च न स्यात् । विचारितमिदं बहुधा पूर्वमेव । वस्तुतो ज्ञानार्थयोरभेदवाद एवैषां साङ्कर्यमनिवार्यम्, एकस्मिन्नेव ज्ञाने सर्वेषां मेलनात् । ननु **'एकश्चन्द्रः'** इति ज्ञाने सत्यपि **'द्वौ चन्द्रौ'** इति प्रत्ययोऽपि दृश्यते किल दोषवशादिति चेत्, तदपि समानम्, अनादिवासनाया दुर्निरूपत्वादिति चेत्, न । कुतः—**बाधिते विषयेऽपि धीः**=विपरीतधीः **स्वहेतोः**=अंगुल्यवष्टंभादितत्कारणाद्भवति । एतच्च सर्वानुभवसिद्धम् । अन्यत्रापि तदनुगुणानादिवासनैव कारणं स्यादिति चेत् । हन्त! 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' इत्यस्य लक्ष्यभूतोऽसि । एवं संशयभीतः भोजनादिकं कथं स्वीकुर्यात् । मा देह्यवकाशं हृदयदौर्बल्यस्य । बहुधा विचारितोऽयं बाह्यमिथ्यात्ववादः । अतो बाह्यं वस्तु दुरपह्नवम् ॥ २३ ॥

अनुमानात् बाह्यापलापवादमनूद्योत्तरयति—**धीत्वादि**त्यादि । **विमतमतिः**=विप्रतिपन्नं ज्ञानम् **स्वान्यार्थशून्या**=स्वव्यतिरिक्तविषयशून्या, **धीत्वात्**=ज्ञानत्वात् । तथा चानुमानम्—विमतं ज्ञानम्, स्वव्यतिरिक्तविषयशून्यम्, ज्ञानत्वात् । स्वाप्नधीवत् इति दृष्टान्त ऊह्यः । उत्तरम्—**इति**=इत्येतत् **स्वोक्तिबुद्ध्यादिभग्नम्**=स्ववचनविरुद्धं स्वानुभवविरुद्धं च । स्वव्यतिरिक्त इत्यनेनैव स्वभिन्नं किञ्चित् तच्छब्देन वक्तव्यम्, अन्यथा शब्दभेदः कथमिति वचनविरोधः । स्वानुभवविरोधः तत्तन्मनस्साक्षिकः । ज्ञानं ह्यान्तरम्, विषयास्तु बाह्याः स्पष्टं सर्वानुभवसिद्धाः । किञ्च—**ज्ञानज्ञाने**=ज्ञानविषयकज्ञाने **अतिचारः**=

**दृष्टान्तः साध्यशून्यो, न च निरुपधिकासत् प्रतीतं क्वचिन्नः**
**तावन्मिथ्यात्वक्लृप्तौ न तु फलति तवाशेषबाह्यार्थभङ्गः ॥ २४ ॥**

**[निरुपाधिकासतः प्रतीतिविमर्शः]**

250. **प्रत्यक्षं संप्रयुक्ते, स्मृतिरपि विदिते, व्याप्तिसिद्धेऽनुमा स्यात्**
**शाब्दी धीरन्वितादौ भवति, तदनुगा भ्रान्तिधीः क्वाप्यसिद्धेः ।**

व्यभिचारः । तादृशं ज्ञानमेव नास्तीत्यत्र—**क्षणिकविविधधीसन्ततेः**=स्वभिन्नानां क्षणिकविज्ञानपरंपराणां भेदस्य **संमतत्वात्** । न हि यूयमैकात्म्यवादिनः । अनन्तक्षणिकपरंपराणामङ्गीकृतत्वात् । ताश्च परंपरा न स्वलक्षणप्रत्यक्षसिद्धाः अङ्गीकृताः, किन्त्वनुमानेनैव ज्ञेयाः । एवञ्च तेषां ज्ञानविषयत्वं सिद्धमेव । ता न मिथ्याः । अतो व्यभिचारः । स्वान्यार्थविषयवति तादृशानुमाने धीत्वहेतोः सत्त्वात् । किञ्च—**दृष्टान्तः**= स्वाप्नधीः **साध्यशून्यः**=स्वान्यार्थशून्यत्वाभाववान्, स्वाप्नार्थविषयत्वात् । तत्रापि विषयविषयिभावस्यानुभवसिद्धत्वात् । ननु भोः! भ्रमे असन्त एव विषया भासन्त इति सर्वानुभवसिद्धम् । अतो गत्यन्तराभावात् बाह्यविषयशून्याः स्वाभिन्नविषयका एव स्वाप्नप्रत्यया इति कथमसिद्धिरिति चेत् न । कुतः? **निरुपधिकासत्**=कुत्राप्यविद्यमानं वस्तु **नः क्वचित्**=कुत्रापि **न च प्रतीतम्**=न ह्यनुभवसिद्धम् । न हि शशशृङ्गादिकं केनापि स्वप्ने दृष्टमिति कश्चित् ब्रवीति । तत् कुतः? सर्वथासतो भानं भ्रमेऽपि निराकृतमेव । स्वाप्नविचारोऽपि कृतचर एव बहुधा । अतः स्वप्नोऽपि नासद्विषयकः । ततश्च दृष्टान्तासिद्धिः । **तावन्मिथ्यात्वक्लृप्तौ**=कालदेशाद्युपाधिभेदेनासद्विषयत्वसाधने **तव**=निरुपाधिकासद्विषयत्वं साधयितुं प्रवृत्तस्य तव **अशेषबाह्यार्थभङ्गः**=कयापि रीत्या बाह्यं किञ्चिन्नास्तीति बाह्यार्थनिराकरणम्, **न तु फलति**= नैव सिद्ध्यति, सोपाधिकासद्विषयकत्वस्यैवाङ्गीकारात् । अतः स्वप्नदृष्टान्तेनापि बाह्यवस्तुनिराकरणं सर्वथा न संभवति । तथोक्तं सूत्रकारेणापि—'वैधर्म्याच्च न स्वप्नादिवत्' इति । 'न स्वप्नादिवत् जाग्रत्प्रत्यया भवितुमर्हन्ति ।' कस्मात्? वैधर्म्यात् । वैधर्म्यं हि भवति स्वाप्नजागरितयोः । किं पुनर्वैधर्म्यम्? बाधाबाधाविति ब्रूमः । बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य 'मिथ्या मयोपलब्धो महाजनसमागमः' इति । नैवं जागरितोपलब्धं वस्तु स्तम्भादिकं कस्याञ्चिदप्यवस्थायां बाध्यते' (ब्र.सू.2-2-29-शं) इति । अतः स्वप्नदृष्टान्तेन ज्ञानानां विषयशून्यत्वं न साधयितुं शक्यम् ॥ २४ ॥

'न च निरुपधिकासत्प्रतीतं क्वचिन्नः' इत्युक्तं विशिष्य प्रदर्शयति—**प्रत्यक्षमित्यादि** । **प्रत्यक्षम् संप्रयुक्ते**=इन्द्रियसम्बद्धे विषये स्यात् । इन्द्रियसंबन्धः असता कथं स्यात्? **स्मृतिरपि विदिते**=पूर्वमेवानुभूते विषये स्यात् । **व्याप्तिसिद्धे**=व्याप्त्या गृहीते विषये **अनुमा**=अनुमितिः च स्यात् । **शाब्दी धीः**= शब्दजन्यं ज्ञानमपि **अन्वितादौ**=पूर्वावगतशक्त्योपस्थितानां अर्थानां परस्परमन्वयविषयकं भवति । प्रमास्थले यथा तथा भवतु । भ्रमस्थले असद्विषयत्वमनिवार्यं किल! 'असदेव रजतं मया गृहीतम्' इत्यनुभवोऽपि । ततश्च तत्र सिद्धं ज्ञानानामालम्बनशून्यत्वमित्यत्राह—**तदनुगा**=प्रत्यक्षादिप्रमाणैः पूर्वमवगतार्थविषयिणी **भ्रान्तिधीः**=भ्रमात्मकं ज्ञानमपि **क्वापि असिद्धे**=कुत्रचित् असति भवति, न तु सर्वथा असति । परत्र पूर्व-

**व्योमाम्भोजादिशब्दोऽप्यनियतमतिकृत् स्यात् पदार्थं त्यजेच्चेत्**
**नो चेत् स्यादन्यथाधीर्ध्रुवमिह, यदि वाऽनन्वितत्वाप्रतीतिः ।। २५ ।।**

**[विषयाणां वासनाकल्पितत्वविमर्शः]**

251. **नेष्टः स्वान्यग्रहश्चेत्, क्वचिदपि न हि धीर्धर्मिणी वः कृतान्ते**
**बुद्ध्यात्मा वासनाऽतो न च किमपि तयाऽपेक्षणीयं बहिष्ठम् ।**
**धीसन्ताने त्वनादौ भवति च निखिला वासनैकः क्षणस्तत्**
**निश्शेषध्वंसिनी सा युगपदखिलमप्युद्वमेत् कल्पनौघम् ।। २६ ।।**

दृष्टावभासः खलु भ्रमः। न हि सर्पं पूर्वमदृष्टवतः रज्जौ सर्पभ्रमः संभवति । पुरोदेशेऽसतो भानम्, न सर्वथाऽसतः । अतश्च निरुपाधिकासद्विषयज्ञानं जगति कुत्रापि नास्त्येवेत्यसत्ख्यातिः न कथञ्चिदपि साधीयसी।।

ननु गगनकुसुमादिपदानि लोके श्रुतचराणि । तेन च जायमानो बोधोऽसद्विषय एव दृष्टान्तोऽस्तीति चेत्—**व्योमाम्भोजादिशब्दो**ऽपि=गगनारविन्दादिपदमपि **पदार्थम्**=समासघटकपदानामर्थं यदि **त्यजेत्**, तदा **अनियतमतिकृत् भवेत्**। तत्पदं शृण्वतां नियतविषयकबोधाजनकमेव भवेत् । तदा सति हि गगनारविन्दशशशृङ्गवन्ध्यासुतादिपदानि शृण्वतां नियतबोधजनकानि न भवेयुः, दृश्यते च नियतकल्पितविषयकबोधः । परन्तु न निरुपाधिकासद्विषयकबोधः । अयमंशः पूर्वमेव (श्लो.18) विस्तरेण विमृष्टः । अथवा अव्युत्पन्नानामर्थबाधमजानतां यदि कश्चन बोधः तेन पदेन जायेत, तदा—**नो चेत्**=तादृशबोधो न भवतीति यदि नाङ्गीक्रियते, बोधो यदि भवेदित्यर्थः । तदा तादृशधीः **इह**=एतद्विषये **अन्यथाधीः**=अन्यथाख्यातिरेव ध्रुवम् । **यदि वा**=अथवा **अनन्वितत्वाप्रतीतिः**=असंसर्गाग्रहः, तथा चाख्यातिः । भ्रमस्थलेऽन्यतरवाद एव पर्यवसानस्य पूर्वं प्रदर्शनात् । निरुपाधिकासत्ख्यातिस्तु न साधीयसी ।। २५ ।।

ननु विषय एव नास्तीति न वयं ब्रूमः, किन्तु ज्ञानातिरिक्तो विषयो बाह्यो नास्तीत्येव ब्रूमः । अतोऽसत्ख्यातिः कथमित्यत्राह—**नेष्ट** इत्यादि । **स्वान्यग्रहः**=स्वलक्षणविज्ञानातिरिक्तवस्तुविषयकज्ञानम् **इष्टो न चेत्**=यदि न संमतः, **तर्हि वः कृतान्ते**=स्वलक्षणविज्ञानातिरिक्तानङ्गीकर्तॄणां मते **धीः**=ज्ञानम् **क्वचिदपि**=कस्मिन्नपि विषये **धर्मिणी**=विषयवती **न हि भवेत्** । अतो बाह्यार्थस्य कस्याप्यनङ्गीकारे असत्ख्यातिरनिवार्या । ननूक्तमेव किल स एव विषय इतीति चेत्, एकस्यैव विषयत्वं विषयित्वं च कथम्? वासनावशादिति चेत्, तत्राह—**वासना**=बाह्यवस्तुकल्पिका वासनापि **बुद्ध्यात्मा**=विज्ञानाभिन्नैव, अतिरिक्तस्यानङ्गीकारात् । अतः **तया**=स्वलक्षणधिया **अपेक्षणीयम्**=स्वभिन्नवस्तुदर्शने अपेक्षणीयम्= कारणतयापेक्षितम् **बहिष्ठम्**=बाह्यं स्वव्यतिरिक्तम् **किमपि**=किञ्चिदपि **न च**=नैवास्ति । अतो बाह्यवस्तुकल्पनापि न संभवति ।।

ननु स्वभिन्नं वस्त्वेव नास्तीति न, स्वभिन्नक्षणिकविज्ञानपरंपराणामनन्तानां सत्त्वादिति चेत्, ता अपि परंपराः स्वतन्त्राः परस्परं नोपकुर्युरेव । यद्युपकुर्युः तर्हि, अनादौ तु धीसन्ताने वर्तमाना **निखिला** च

[सौत्रान्तिकमतविमर्शः]

252. **स्वाकारोऽर्थैः स्वबुद्धौ निहित इति च नाऽऽधारहानाद्ययोगात्**
**स्वच्छे छाया परस्मिन् न च भवति; न च स्यादसौ रूपशून्ये ।**

**वासना एकः क्षणः भवति**=भवेत् । अनादित्वकथनं वासनानामानन्त्यप्रदर्शनार्थम् । सर्वेऽपि क्षणाः= पदार्थाः क्षणिकाः, तेषु तारतम्यादिकमपि नास्ति, निर्धर्मकत्वात् तत्प्रयुक्तं तारतम्यमपि नास्ति । पूर्वक्षणः उत्तरक्षणं प्रति कारणमुच्यते । एवं सर्वेषामप्युत्तरक्षणानां सर्वेऽपि क्षणाः पूर्ववर्तिनः । ततश्च सर्वान् प्रति सर्वस्यापि पूर्वत्वाविशेषेण कारणत्वानपायात्, सर्वेऽपि क्षणाः=क्षणिकविज्ञानपरंपरा अविशेषादेकीभवेयुः । ततश्च वासना अप्यनादिकालप्रवृत्ताः तत्तत्परंपरायामेव संक्रमेरन्, नान्यपरंपरायामिति व्यवस्था च दुर्वचा । ततः किमित्यत्र—**तदित्यादि । तत्**=तस्मात् **सा**=वासना **निश्शेषध्वंसिनी**=यदा निरवशेषं नश्यन्ती= निरन्वयविनाशिनी भवति, तदा **अखिलमपि**=समस्तमपि **कल्पनौघम्**=स्वकार्यकल्पनासमुदायम् **युगपत्**= एकस्मिन्नेव क्षणे, **उद्वमेत्**=बहिः प्रकाशयेत् । सर्वा अपि वासनाः स्वाः स्वाः कल्पनाः युगपदेव कुर्युः, सन्तानैक्यव्यवस्थाया दुर्वचत्वात्, कल्पनाव्यवस्थापि दुर्वचा भवेदेव । कल्पनास्तु अनन्ता विचित्राश्च । कल्पका वासना अपि क्षणिकाः । युगपत्सर्ववासनानां नाशात् सर्वा अपि क्षणिकविज्ञानपरंपरा युगपत् मुच्येयुरिति जगदेव निष्क्रियं स्यात् । सन्तानैक्यव्यवस्थाया असंभवात् । उच्छेदो नाम निरन्वयविनाशः= संपूर्णनाशः । अतश्च युगपत्सर्वकल्पनाप्रादुर्भावात्, न स्यादिति पूर्वमेव (जड.29) प्रतिपादितम् । स एव न्यायो वासनाविषयेऽपि समान इति प्रदर्शनाय श्लोकः ॥ २६ ॥

एवं माध्यमिककनिष्ठस्य योगाचारस्य मतं परीक्ष्य, प्रत्यक्षं प्रति विषयः कारणम् । कारणत्वं पूर्वक्षणवर्तिन एव, न समानकालिकयोः । सिद्धस्यैव कारणत्वात्, कार्यत्वस्य च साध्यत्वरूपत्वात् । अतः पूर्वक्षणवर्ती विषयः स्वाकारं ज्ञाने आदधाति, स्वसमानाकारं ज्ञानं करोति । इदमेव ज्ञानेनार्थग्रहणमित्यस्यार्थः। तथोक्तम्—'भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञाः ज्ञानाकारार्पणक्षमम् ॥' इति । एवं वदतः योगाचारकनिष्ठस्य सौत्रान्तिकस्य घटादिभिः **स्वाकारः**=पृथुबुध्नोदरत्वादिरूपः आकारः **स्वबुद्धौ**=स्वविषयकबुद्धौ **निहितः**=आरोपितः **इति च**=इत्येवं वादश्च **न**=न युक्तः । कुतः—**आधार-हानाद्ययोगात्**=आकारस्य यः आधारः व्यक्तिः, तस्य हानम्—त्यागः तस्यासंभवात् । पृथुबुध्नोदरा-द्याकाराः आश्रयं द्रव्यं परित्यज्यान्यत्र कथं संक्रमेरन्? कथम् स्वाकारस्य अन्यत्रारोपः? न जानास्यभिप्रायम्। यथाऽतिसन्निहितमपि मुखं न गृह्यते, दर्पणप्रतिबिम्बितं तु गृह्यते, तथा पुरः स्थितोऽप्यर्थः बुद्धौ प्रति-बिम्बितो गृह्यते । स एव ग्रहणपदार्थ इत्यत्राह—**स्वच्छ** इत्यादि । **स्वच्छे**=स्फटिकवदनाच्छादके **परस्मिन्**=विज्ञाने छाया=प्रतिफलनम् न च भवति । दर्पणादौ हि रसलेपवशात् प्रतिफलनम् । विज्ञानं हि न तादृशम्, किन्तु स्फटिकवदतिस्वच्छम् । तथा च चक्षुरिन्द्रियं न तत्र प्रतिबद्धं भवेत् । प्रत्युत तत् प्रविश्य तत्पार्श्ववर्तिनं वस्तु गृह्णीयात् । अतः प्रतिबिम्बस्य न प्रसक्तिः । किञ्च—**असौ**=प्रतिबिम्बः

**साम्यासत्त्याद्ययोगाद्विषयविषयिणोर्नापि भेदाग्रहः स्यात्**
**नैकाकारोपरक्तं द्वयमपि; स च ते ग्राह्यतो नातिरिक्तः ॥ २७ ॥**

**[संसर्गजाकारवादनिरासः]**

**253. संसर्गात् बोध्यबुद्ध्योरभिदधति सिताद्याकृतेस्सिद्धिमन्ये**
**सादेश्यात् तन्मतेऽसौ न तु भवति; तथा कालजोऽतिप्रसक्तः ।**
**व्यंशे नैवाभिमुख्यम्; विषयविषयिताऽत्राकृतेः प्रागसिद्धा**
**क्वास्याः संसृष्टनाशे जनिरिति कुसृतिः पूगताम्बूलनीतिः ॥ २८ ॥**

---

**रूपशून्ये** विज्ञाने **न च स्यात्**=नैव स्यात् । रूपवद्वस्तु रूपवत्येव दर्पणजलखण्डादौ प्रतिबिम्बेत । विज्ञानं तु रूपशून्यम् । अतस्तत्र प्रतिफलनं न संभवति ॥

ननु माषराशिगता मषीगुळिका न पृथग्ज्ञायेत, तथा ज्ञानविषययोः संबन्धात् ज्ञानाद्भिन्नतयाऽर्थो न ज्ञायते इति चेत्, तदपि न । कुतः? **विषयविषयिणोः**=ज्ञानार्थयोः **साम्यासत्त्याद्ययोगात्**=माषमषी-गुळिकयोरिव साम्यस्य, सामीप्यस्य चासंभवात् **भेदाग्रहोऽपि**=ज्ञानार्थयोः परस्परभिन्नाकारताया **अग्रहो**ऽपि न स्यात् । अर्थस्तु बाह्यः, ज्ञानं तु आन्तरम् । कथं तयोरेकराशिता? आदिना कालदेशभेदग्रहणम् । माषमषीगुळिकयोः समानदेशत्वं समानकालत्वं च प्रत्यक्षसिद्धम् । नैवं विषयविषयिणोः । ननु आकारद्वया-नुपलंभे हेतुर्वक्तव्यः। ज्ञानं तु निराकारम् । ज्ञानमन्तरा अर्थाकारो न ज्ञायेत । एवं सति तयोः परस्परापेक्षत्वेन परस्परोपरञ्जनेनाकारो भिन्नतया नोपलभ्यत इति चेत्तत्राह—**नैके**त्यादि । **द्वयमपि**=ज्ञानम्, अर्थश्च **एका-कारोपरक्तं न**=ज्ञानस्य स्वतो निराकारत्वेन, दृश्यमानाकारः अर्थस्यैव । अत उभयोरेकाकारत्वं नास्त्येव । यतः—**स च**=आकारोऽपि **ते**=निराकारज्ञानवादिनः तव **ग्राह्यतः**=ज्ञानविषयत्वापेक्षया **नातिरिक्तः**, आकार-स्यापि बाह्यत्वात् । बाह्य आकार आन्तरस्य ज्ञानस्य कथं भवेत् ॥ २७ ॥

बौद्धैकदेशिसंमतं ग्राह्यग्राहकप्रकारमनूद्य निरस्यति—**संसर्गादि**त्यादि । **बोध्यबुद्ध्योः**=विषय-विषयिणोः **संसर्गात्**=परस्परसंबन्धात् **सितात्याद्याकृतेः**=सितनीलादिविषयस्य सिद्धिम् **अन्ये** बौद्धाः **अभिदधति**। अनुभूयमान आकारः अर्थस्य वा, ज्ञानस्य वा? इति संशये, उभयोरपि प्रत्येकं नायमाकारः, किन्तु परस्परसंबन्धान्नूतन एवायमाकारो जातः । यथा ताम्बूलस्य, पूगस्य, चूर्णस्य च संयोगे पूर्वं प्रत्येकमसतो रक्तरूपस्योत्पत्तिः, तद्वदेवेत्याशयः । तदेतन्न संभवति । कुतः—**तन्मते सादेश्यात्** अति-रिक्तस्य देशस्य कालस्य वानभ्युपगमात् तस्य मते **असौ**=परस्परमेलनम् **न तु भवति** । प्रत्युत—**कालजः**=कालकृतस्तु संसर्गः **तथा**=उक्तरीत्यैव **अतिप्रसक्तः**=अनुमानादौ भिन्नकालवर्तिनो विषयस्यापि ज्ञानेन ग्रहणदर्शनात् । ननु एकदेशावच्छेदेन, एककालावच्छेदेन वा न तयोर्मेलनमुच्यते । किन्तु अर्थो ज्ञानं च परस्परसापेक्षपदार्थौ, यथा अयः अयस्कान्तश्च । एतौ हि उभौ प्रत्येकं न किञ्चिद्विकारं प्रदर्शयतः । उभौ यदा मिलतस्तदा आकर्षणाख्यो व्यापारो दृश्यते । तद्वदेव ज्ञानार्थयोः परस्परविलक्षणसान्निध्यात् विलक्षणमर्थ-प्रदर्शनं नाम व्यापारो भवतीति ब्रूम इत्यत्राह—**व्यंशे**=पूर्वं विषयविषयिभावरहिते वस्तुनि **आभिमुख्यम्**=

[निरधिष्ठानख्यातिवादनिरासः]

254. भ्रान्तौ रूप्यादिरर्थो विलसति निरधिष्ठान इत्याहुरेके
तन्नाधिष्ठानदृष्टेरनियतिविरहादन्यथाऽतिप्रसङ्गात्।
निष्ठ्यूतस्वाक्षिदोषप्रभृतिषु च भवेत् केशगुच्छादिबुद्धिः
किञ्चैषाऽप्यन्यथाधीर्यदनिदमिदमित्यत्र भातं ब्रवीषि ॥ २९ ॥

अभिमुखीभावरूपो धर्मः नैव भवति। स्वतो विषयविषयिभावं निराकुर्वताम्, पूर्वं विषयविषयिणोरसिद्ध्या आभिमुख्यं वा तयोः कथं वक्तुं शक्यम्, अन्योन्याश्रयात्। अन्योन्याश्रयमेवोपपादयति—**अत्र**=प्रकृते **आकृतेः**=परिदृश्यमानाकारात् **प्राक् विषयविषयिता असिद्धा**। उभयोस्संसर्गात् खलु आकारः सिद्ध्यतीत्युच्यते। संसर्गश्च विषयविषयिभावश्चेत् अन्योन्याश्रयदोषे पर्यवसानम्=आकारसिद्धौ विषयविषयिभावसिद्धिः, विषयविषयिभावसिद्धावाकारसिद्धिरिति। किञ्च पूर्वं प्रत्येकमसत आकारस्य नूतनतया सिद्धिरपि दुर्वचेत्याह—**क्वेत्यादि**। **संसृष्टनाशे**=संसर्गाधारभूतयोः ज्ञानार्थयोः **नाशे**=प्रतिक्षणं नाशे, **अस्याः**= तदाधारकस्याकारस्य **जनिः**=उत्पत्तिः **क्व**=कुत्र भवेत्, न हि निराधारं किञ्चिदुत्पद्येत। आहत्य— **इति**=इति हेतोः, **पूगताम्बूलनीतिः**=पूगताम्बूलचूर्णानां संयोगात् नूतनस्य रक्तरूपस्योत्पत्तिन्यायः पूर्वं प्रदर्शितः **कुसृतिः**=कुकल्पना। क्षुद्रकल्पना, उक्तबहुविधदोषग्रस्तत्वात्। अन्ततः—सर्वं क्षणिकम्, परस्परमननुगतं स्वलक्षणमात्रमिति मते, प्रत्येकमसतः द्वाभ्यां जातः आकारः उभयोश्चेत्, उभयानुगतः कश्चन पदार्थोऽङ्गीकृतो भवति। तथा च सामान्याख्यानुगतवस्तुनिराकरणव्यग्रस्य बौद्धस्य, उभयाधिष्ठानक आकारः कण्ठे गडुरेव स्यात्॥ २८॥

सौगतसंमतामन्यामसत्ख्यातिं **निरधिष्ठानख्याति**रूपामनूद्य निरस्यति—**भ्रान्तावित्यादि**। **भ्रान्तौ**= विप्रतिपन्ने भ्रमात्मकज्ञाने **रूप्यादिः अर्थः**=रजतादिरूपः पदार्थः **निरधिष्ठानः विलसति**= प्रतिभाति **इति एके**=केचित् आहुः। अधिष्ठानाङ्गीकारे हि इन्द्रियसन्निकर्षाद्युपपादनक्लेशः। शुक्त्या साकमिन्द्रियसन्निकर्षः, भातं तु रजतस्य। कथमेवमित्याद्याक्षेपाणामवकाशः साधिष्ठानभ्रमवादे। निरधिष्ठानभ्रमवादे तु न कोऽपि क्लेशः। ननु तर्हि पुरतश्शुक्तिशकलं दृष्ट्वैव रजतमिति भ्रमति। तत्कथं निरधिष्ठानो भ्रम इति चेत्— वासनोद्बोधकतया तदुपयुज्यते। उद्बुद्धा वासना तु असन्तमप्यर्थं प्रदर्शयति॥

बौद्धाः खलु महाबुद्धियुक्ताः मायावशीकृताः। बुद्धिरेव महामाया व्यक्ताप्यत्यन्तदुस्त्यजा॥
ज्ञानबुद्ध्योस्तु गंभीरं वैषम्यं वेत्ति को बुधः। परस्परोपरक्ते ते बन्धं पोषयतो वत!॥

तदेतन्निराकरोति—**तन्नेति**। कुतः? **अधिष्ठानदृष्टेः**=अधिष्ठानस्य शुक्तिशकलादेर्दर्शनात्। तत्त्वाकस्मिकमित्युक्तम्, उद्बोधकविधया सहकरिष्यतीत्यत्र—**अनियतिविरहादिति**। रजतभ्रमस्य शुक्तिदर्शनान्वयव्यतिरेकानुविधायित्वदर्शनात्। अन्वयव्यतिरेकौ हि कार्यकारणभावग्राहकौ। न चोद्बोधकत्वेनाप्यन्वयव्यतिरेकौ गतार्थाविति शक्यम्, आकाशे रजतभ्रमप्रसङ्गात्। भ्रान्तस्तु पुरतः स्थितं शुक्तिशकल-

**[निर्विषयख्यातिनिरासः]**

255. **ख्यातिं भ्रान्तिस्वरूपां जगदुरविषयां केऽपि; तत् धीविरुद्धम्**
**ख्यातिः कस्यापि पुंसः क्वचिदपि विषये सिद्धिरूपा हि सिद्धा।**
**अत्रार्थासत्त्वतः स्यादियमविषयता, सर्वथाऽसत्त्वतो वा**
**तादृक्त्वेऽप्यन्यथाख्यात्यसदधिगमयोरेव पर्याय एषः ॥ ३० ॥**

मङ्गुल्या निर्दिश्य हि वदति 'अत्र रजतं दृश्यते' इति । **अन्यथा**=एतत्सर्वनिरासे **अतिप्रसङ्गात्**=प्रवृत्त्याद्यनुपपत्तिरूपातिप्रसङ्गस्य प्रसङ्गात् । तर्हि कामुकः कामिनीं पुरतः कथं पश्यति । कदाचिच्चक्षुषः पुरतः केशपुञ्जादेरसतो भानं वा कथमित्यत्र—**निष्ठ्यूते**त्यादि । **केशगुच्छादिबुद्धिः**=केशसमूहादिभ्रमश्च **निष्ठ्यूतस्वाक्षिदोषप्रभृतिषु**=निष्ठ्यूतम्=बहिर्गळितः यः चक्षुर्गोळकगतः तिमिरादिदोषः तत्प्रभृतिषु भवेत् । **प्रभृति**पदेन चक्षुर्गोळकोपरिभागगतान्त्रादिपरिग्रहः । पुञ्जादीत्यत्र **आदि**पदेन उन्दुकपरिग्रहः । **उन्दुकम्**= उदरस्याधोभागे अन्तः परिवृत्त्य वर्तमानोऽतिदीर्घावयवविशेषः । कामुकस्य तदीयमस्तिष्कस्यान्तर्वर्तमानं कामिन्या आकारं गाढभावनारूपदोषवशाद्बहिरिव स पश्यति । पूर्वदृष्टं वस्तु यदा स्मरन्ति पुरुषाः, तदा तद्वस्तुन आकारादिकमपि स्मरन्ति । कदाचित्तु वस्तु सामान्यतः स्मरेयुः, आकारस्य स्मरणमस्फुटं भवेत् । तत्र कारणं तद्वस्तुनि विद्यमानप्रीत्यादेस्तारतम्यमेव । प्रीतेरतिगाढत्वे तु पुरतः पश्यन्त इवानुभवो भवति । एवमेव रामाद्भीतस्य मारीचस्य च वचनम्—'वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्' इत्याद्यपि । किं बहुना! **किञ्च**=अपि च **एषा अन्यथाधीः**=अन्यथाख्यातिरेव । **यत्**=यस्मात् **अनिदम्**=अपुरःस्थितम् **भातम्**=पुरःस्थितमिव भातीति **ब्रवीषि,** अतः अन्यथाख्यातिरेव ॥ २९ ॥

भ्रान्तौ विषयस्यैवाभावात् चर्चा व्यर्थेति वादं निराकरोति—**ख्याति**मित्यादि । **केऽपि**=केचित् बौद्धाः, **भ्रान्तिस्वरूपां ख्यातिम्**=विलक्षणज्ञानम् **अविषयाम्**=विषयरहितां **जगदुः** । सर्पासक्तमनसः रज्ज्वभानम्, रजतासक्तस्य शुक्त्यभानमात्रं भ्रमस्थले । यथा अख्यातौ विशेषाकाराभानमात्रम्, तद्वत् । एकत्रासक्तस्य मनसोऽन्यत्रासक्त्यसंभवात्, अन्यांशाभानात् भ्रान्त इत्युच्यते । यथा **'मधु पश्यसि, दुर्बुद्धे!** प्रपातं नैव पश्यसि' इति । अत्र मध्वासक्तस्य प्रपाताभानं स्पष्टम् । विषयासक्तमनसः पापाभानवत् । सिद्धान्तसंमतेऽख्यातिवादेऽपि समानमिदम् । अतो भ्रान्तिः निर्विषयैवेति । तत्प्रतिवक्ति—**तत्**=ख्यातेर्निर्विषयत्वम् **धीविरुद्धम्**=ज्ञानस्वरूपस्य विरुद्धम् । न हि निर्विषयं ज्ञानं कुत्रचित् कस्याप्यनुभवसिद्धम् । धीस्वरूपं प्रदर्शयति=**ख्यातिः**=ज्ञानं नाम **कस्यापि पुंसः**=कस्यचित्पुरुषस्य **क्वचिदपि विषये**=कस्मिंश्चिद्विषये **सिद्धिरूपा हि सिद्धा**=प्रकाशरूपा हि लोके सर्वत्र प्रसिद्धा । अतो ज्ञाने विषयः आश्रयश्चात्यन्तमावश्यकौ। विषयो ज्ञेय इत्युच्यते । आश्रयः ज्ञाता इत्युच्यते । एवञ्च ज्ञानं चेत् ज्ञेयमावश्यकम्, ज्ञाताप्यावश्यकः । अतो जगत्सर्वं त्रिपुट्यात्मकम्, अन्यतमलोपे त्रिपुट्या एव नाशः, व्यवहारस्य सर्वस्याप्यभाव एव ॥

ननु 'भ्रान्तं मया, विषयो नासीदेव' इति प्रतिसन्धानस्यानुभवसिद्धत्वात् विषयाभावो भ्रान्तावुल्लिख्यते किलेति चेत्तत्राह—**अत्रे**त्यादि । **इयम् अविषयता**=निर्विषयता **अत्र**=पुरोदेशे **अर्थासत्त्वतः स्यात्?** उत

[ज्ञानविभागः, लक्षणं च]

256. **प्रत्यक्षादित्रयं च स्मृतिरिति च मतिः श्रुत्यभीष्टा चतुर्धा**
**प्रत्यक्षं त्वत्र साक्षात् प्रतिपदनुमितिर्व्याप्यतो व्यापके धीः ।**

**सर्वथाऽसत्त्वतो वा**=कुत्राप्यसत्त्वाद्वा स्यात्। नान्या गतिः। **तादृक्त्वेऽपि**=पुरतोऽसत्त्वे सर्वथाऽसत्त्वे वा **एषः**=भवद्वादः **अन्यथाख्यात्यसदधिगमयोः**=अन्यथाख्यात्यसत्ख्यात्योः अन्यतरस्य **पर्यायः**=पर्यायेणाभिधानम्। पुरतोऽसत्त्वेऽन्यथाख्यातिः, सर्वथाऽसत्त्वेऽसत्ख्यातिः। न नूतनं किञ्चित्॥

ननु भोस्तव पक्षेऽपि समानमिदमुच्यते। यद्यख्यातिस्तदाऽपि स्याद्विरोधो दर्शनात्पुरः॥
पुनः पुनस्तु मा पृच्छ, मां मा मज्जय संकटे। सर्वमुक्तं पूर्वमेव वृथा कालं तु मा कुरु॥
परश्शतपरिक्षोदादितिन्यायेन कथ्यते। प्रवर्तकं तु नाज्ञानं कुत्राऽपि स्यान्मनीषिणः॥
हेतुःस्यादन्यथाज्ञाने त्वज्ञानं तावदेव हि। अख्यातिः स्यात्तु विज्ञानम् ज्ञानं स्यादन्यथामतिः॥
प्रभाकर उपादेयो वैदिकानां विशेषतः। केवलेभ्यः तार्किकेभ्यः इति सारोऽत्र गृह्यताम्॥ ३०॥

प्रसक्तं ख्यातिवादं समाप्य, प्रकृतं बुद्धिविचारमुपक्रमते—**प्रत्यक्षादीति**। **प्रत्यक्षादित्रयम्**=प्रत्यक्षानुमानागमाः त्रीणि च प्रसिद्धानि, तद्वत् वैदिकानां **स्मृतिरिति च मतिः**=प्रमारूपा बुद्धिः **चतुर्धा**=चतुर्विधा **श्रुत्यभीष्टा**=श्रुतिसंमता। 'स्मृतिः प्रत्यक्षमैतिह्यम्। अनुमानं चतुष्टयम्' इति श्रुतिः। **ऐतिह्यम्**=शब्दः। ननु स्मृत्युपक्रमो विभागः श्रुत्या प्रदर्शितः। आचार्यैस्तु प्रत्यक्षोपक्रमः प्रदर्श्यते। एतत्कस्य हेतोः॥

बहुग्रन्थप्रसाध्योऽयं विषयोऽद्यतनस्थितौ। क्व तद्वैदिकविज्ञानम्, क्व चाद्यतना नराः॥
स्वयं प्रमाणरूपास्ते ऋषयो धूतकल्मषाः। प्रमाणं परमात्मैव तेषां तत्र रतात्मनाम्॥
तत् स्मृत्वा दयया किञ्चिद्ब्रूयुस्तेऽन्यदपि स्वयम्। स्मृतिरेव ततस्तेषां प्रमाणं प्रथमं मतम्॥
प्रत्यक्षादीत्यादिकं तु लोकसिद्धमनूद्यते। अलमेतावदेवात्र प्रकृतं कथ्यतेऽधुना॥

एतन्निष्कर्षः अग्रे तत्तत्प्रकरणे (श्लो.77,127) द्रष्टव्यः॥

क्रमशो लक्षणानि—**प्रत्यक्षमित्यादि**। इतरप्रमाणवैलक्षण्यं सर्वेतरमूलत्वञ्च 'तु'शब्देनोच्यते। **साक्षात् प्रतिपत्**। साक्षात्काररूपा संवित् प्रत्यक्षमित्युच्यते। सक्षात्काररूपा प्रमा प्रत्यक्षमित्यर्थः। 'अहमिदं साक्षात्करोमि' इत्यनुव्यवसायप्रयोजकसाक्षात्कारत्वरूपानुगतधर्मवत्त्वे सति प्रमात्वं प्रत्यक्षलक्षणम्। प्रथमदलमात्रोक्तौ भ्रमेऽतिव्याप्तिः। द्वितीयमात्रोक्तावनुमित्यादावतिव्याप्तिः। **व्याप्यतः**=व्याप्यस्य ज्ञानात् **व्यापके धीः**=व्यापकविषयकं ज्ञानम् **अनुमितिः**। अत्र व्याप्यज्ञानादिति वक्तव्ये व्याप्यतः इति कथनम्, व्याप्यस्य धूमादेरेव हेतुतया लोके प्रयोगात्। 'पर्वतो वह्निमान्, धूमात्' इत्येव सर्वोऽपि वदति। धूम एव हेतुः। वस्तुदृष्ट्या धूमं प्रति वह्निः हेतुः। वह्निज्ञानं प्रति तु धूमज्ञानं हेतुः। प्रकृते धूमज्ञानस्य हेतुत्वे तस्य पक्षनिष्ठत्वं न स्यात्। धूमज्ञानं किलात्मनि वर्तते। वह्निस्तु पर्वतेऽनुमेयः। अतो धूम एव हेतूकर्तव्यः।

**शाब्दी वाचाऽर्थबुद्धिः; स्मृतिरपि कथिता संस्क्रियामात्रजाता**
**येषामिष्टाऽन्यथाधीः पृथगभिदधिरे तैरिहान्येऽपि भेदाः ॥ ३१ ॥**

**[निर्विकल्पकसविकल्पकविमर्शः]**

**257. ईदृक्त्वात्यन्तशून्ये न हि मिषति मतिर्नापि युक्तिस्तथात्वे**
**सामग्रीभेदवेद्ये पृथगवगतिरस्त्वत्र नैषाऽन्यथात्वात् ।**

अधिकं पश्चात् । **वाचा**=शब्देन **अर्थबुद्धिः**=वाच्यभूतार्थविषयकं ज्ञानम् **शाब्दी**=शब्दजन्या प्रमा । **स्मृतिरपि संस्क्रियामात्रजाता कथिता**=तल्लक्षणज्ञैरभिहिता 'संस्कारमात्रजन्यं ज्ञानं स्मृतिः' इति । ननु संशयविपर्ययादीनां कुत्रान्तर्भावः? इति चेत्तत्राह—**येषामित्यादि** । **येषाम्**=विदुषाम् **अन्यथाधी**=अन्यथा-ख्यातिः **इष्टा, तैः इह**=ज्ञानविभागे **अन्येऽपि भेदाः**=संशयविपर्ययतर्करूपा भेदाः **पृथक्**=अप्रमा-विभागतया प्रत्येकम् **अभिदधिरे**=अभ्यधायिषत, इष्टं चेद्गृह्यताम् ॥

वयं तु वैदिकाः कालं वृथा नैव क्षिपेमहि । इदं वेदान्तशास्त्रं हि न लोकायतमुच्यते ॥ ३१ ॥

एवं प्रमाणविभागं सामान्यलक्षणं चोक्त्वा, तद्विभागं परीक्षितुकामः, प्रथमं प्रत्यक्षे सर्वसंमतं निर्विकल्पकसविकल्पकविभागं विमृशति—**ईदृक्त्वेत्यादि** । **ईदृक्त्वात्यन्तशून्ये**=ईदृक्त्वेन **अत्यन्तं शून्ये**=रहिते विषये **मतिः न हि मिषति**=न प्रसरति ॥

अत्र तार्किकः प्रत्यवतिष्ठते । अनुक्तोपालंभ एवेदं सर्वम् । को वा वदति निर्विकल्पकं ज्ञानमनुभव-सिद्धमिति । अतीन्द्रियमेव तत्सर्वदा सर्वेषाम् । इत्यत्राह—**नापीत्यादि** । **तथात्वे** प्रकारशून्यज्ञाने **युक्तिरपि न** । निर्विकल्पकम् इति पदं हि विकल्परहितमित्यर्थकम् । तेन निर्विकल्पकं ज्ञानम् 'इदं विशेषणम्' 'इदं विशेष्यम्' इत्यादिकल्पनारहितम्, अत एव वस्तुस्वरूपमात्रविषयकम्, अत एव विशेष्यविशेषणभावरहितम्, अत एवातीन्द्रियमिति ते वदन्ति । ज्ञानं स्वप्रकाशमिति वादिनां वेदान्तिनां तु अतीन्द्रियं किमपि ज्ञानं न भवितुं अर्हति । किन्तु 'इत्थमिदम्' इत्युल्लेखार्हमेव सर्वमपि ज्ञानं लोकेऽनुभवसिद्धम् । अतस्सर्वमपि ज्ञानं विशेषणविशेष्यभावसहितमेव । तस्य निर्विकल्पकपदवाच्यत्वं कथमिति चेत्, विवक्षितविशेषणरहितत्वादेव । यथा दूरात् जनसमुदायं पश्यन् पृच्छति 'को विशेषस्तत्र' इति । प्रतिवक्ति कश्चित्तद्देशादागतः 'न कोऽपि विशेषः' इति । अस्य प्रतिवचनस्य 'भवत्कुतूहलहेतुर्विशेषः न कोऽप्यस्ति' इत्येवार्थः, न तु तत्र जना एव न सन्ति इति । अतस्सर्वमपि ज्ञानं किञ्चित्प्रकारकमेव, अत एव किञ्चिद्विशेष्यकं च ॥

ननु तर्हि विशेषणविशेष्ययोर्भिन्नेन्द्रियग्राह्यत्वे का गतिः? यथा 'सुरभि कुसुम'मित्यादौ । विशेषणं गन्धः घ्राणेन्द्रियग्राह्यः । विशेष्यं तु कुसुमं चक्षुरिन्द्रियग्राह्यम् । न च युगपदिन्द्रियद्वयेन ज्ञानद्वयं जायेत, मनसोऽणुत्वेन युगपदिन्द्रियद्वयेन संयोगासंभवात् । अतस्तत्र विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्व-स्यावश्यकत्वात्सर्वत्रापि एकरूपेण विशेषणज्ञानस्य कारणत्वं युक्तम्, लाघवादिति चेत्तत्राह—**सामग्रीत्यादि** । **सामग्रीभेदवेद्ये**=सामग्र्योर्भेदेन ग्रहणस्थले **पृथगवगतिः**=प्रत्येकं विशेषणज्ञानं पूर्वम् अस्तु । **अत्र**=

**धीत्वादेर्वा विशिष्टं प्रथयति जनिता बुद्धिराद्याक्षयोगैः**
**तस्मात् संस्कारशून्येन्द्रियजनितमतिर्निर्विकल्पेति वाच्या ॥ ३२ ॥**

विशेषणविशेष्ययोरुभयोरपि एकसामग्रीवेद्ये विषये गवादिज्ञाने **एषा न**=प्रत्येकं विशेषणस्यावगतिः मा अस्तु, का हानिः? कुतः? **अन्यथात्वात्**=विलक्षणत्वात्। विशेषणविशेष्ययोर्भिन्नेन्द्रियग्राह्यविषयापेक्षया एकेन्द्रियग्राह्यविषयस्य विलक्षणत्वेन तदनुगुणतया कार्यकारणभावस्यापि विलक्षणत्वस्य सहजत्वात्। 'येन इन्द्रियेण या व्यक्तिर्गृह्यते, तन्निष्ठा जातिस्तेनेन्द्रियेणैव गृह्यते' इति तेऽपि वदन्ति ॥

नन्ववं तर्हि विशेषणस्य भिन्नेन्द्रियेण ग्रहणस्थले आद्यं ज्ञानं निर्विशेषणकं स्यादेवेत्यत्राह— धीत्वादेरिति। **आद्याक्षयोगैः**=प्रथमेन्द्रियसंयोगैः **जनिता बुद्धिः, धीत्वात्**=बुद्धित्वादिकारणात् **विशिष्टं प्रथयति**=विशेषणविशिष्टमेव वस्तु प्रकाशयति। तथा च तत्राप्यन्ततो जात्यादिविशेषणविशिष्टमेव ज्ञानं भवति, एकेन्द्रियग्राह्यत्वात्। अतः सर्वमपि ज्ञानं विशिष्टविषयकमेव ॥

तर्हि निर्विकल्पकसविकल्पकयोः को भेद इत्यत्र—**तस्मात्**=सर्वबुद्धेरप्येवं विशिष्टविषयत्वात् **संस्कारशून्येन्द्रियजनितमतिः**=संस्काररहितेन इन्द्रियेण जाता बुद्धिः **निर्विकल्पेति वाच्या**=निर्विकल्पकज्ञानमित्युच्यत इति वक्तव्यम्। संस्कारसहितेन्द्रियजन्यं ज्ञानं सविकल्पकमुच्यत इति अर्थात्सिद्धम् ॥

ननु दूरात् मन्दालोके स्थितं वस्तु पश्यन् वदति 'किञ्चिदस्तीति तु ज्ञायते। तत्किम्, कीदृशम् इति तु न ज्ञायते' इति। तत्र वस्तुमात्रविषयं दर्शनम् तत् न विशेषणविषयकमिति तन्निर्विकल्पकं कुतो न स्यादिति चेत्, किञ्चित्वमेव तत्र विशेषणम्। अशक्यनिर्णयत्वमेव वा तत्र प्रकारोऽस्त्येव। रूपजात्याद्यज्ञानात् 'न ज्ञायते' इति वदन्ति। सर्वथाऽज्ञाने 'किञ्चिद्दृश्यते' इति कथं वदेत्? अतो निष्प्रकारकमित्यस्य विवक्षिताप्रकारकत्वमित्येवार्थः। न तु सर्वविशेषरहितमिति, तदा हि शब्द एव न प्रसरेत् ॥

ननु तादृशोऽप्यस्त्यनुभवः। 'किमिति मया वक्तुमेव न शक्यते' इत्यपि कदाचिद्व्यवहारादिति चेत्, तदापि पुरोवर्तित्वादिकं प्रकारो भवत्येव। अन्ततः अज्ञायमानत्वमपि प्रकार एव। पुरतः पश्यति कथमज्ञायमानत्वमिति चेत्, विशिष्य ज्ञानाभावात्तथेति स्वरसत एव ज्ञायते। न हि कश्चिदन्धस्तथा व्यपदिशेत्। यदा चान्धो वदेत् 'न किञ्चिन्मया ज्ञायते' इति, तत्र धर्म्यपि न ज्ञायत इत्येवार्थः। अतो ज्ञानं चेत्, नियमेन किञ्चित्प्रकारकमेव भवेत् इति सम्यगुक्तम्—**ईदृक्त्वेत्यादि** ॥

ननु अस्ति 'विशिष्टबुद्धिर्विशेषणज्ञानजन्या, विशिष्टबुद्धित्वात्, दण्डीति विशिष्टबुद्धिवत्?' इति। दण्डमेव यो नापश्यत्, स तदा 'दण्डी' इति कथं जानीयात्? अतः दण्डीतिबुद्धौ दण्डज्ञानं कारणम्। कारणत्वं च पूर्ववृत्तित्वनियतम्। अतः पूर्वं विशेषणज्ञानम्, अनन्तरं विशिष्टज्ञानमिति आवश्यकम्। ननु तर्ह्यनवस्थेति चेत्, नानवस्था। दण्डीति बुद्धौ पूर्वं दण्डज्ञानमावश्यकम्, दण्डबुद्धिं प्रति तु कारणभूतं दण्डत्वज्ञानं न विशिष्टबुद्धिरूपम्, किन्तु तदेव निर्विकल्पकमित्युच्यते। ननु 'जात्यखण्डोपाध्यतिरिक्तपदार्थानां किञ्चिद्रूपेण भानम्, जात्यखण्डोपाध्योस्तु स्वरूपतो भानम्' इति हि भवतां गीतम्। जातिभानं निर्विशेषणकमपि भवेदिति, किमर्थं ज्ञानान्तरानुधावनमिति चेत्, शब्दो ज्ञातो भवता, न

प्रमेयरहस्यम्। 'दण्डी' इति बुद्धौ दण्डो विशेषणतया भासते। तद्ज्ञानं च दण्डीति विशिष्टबुद्धिं प्रति कारणम्। कारणभूतं दण्डज्ञानमपि दण्डत्वविशिष्टविषयकत्वात्, पूर्वं दण्डत्वज्ञानमपेक्षते। तत्तु न विशिष्ट-विषयकम्, अनवस्थाप्रसङ्गात्। किन्तु दण्डत्वमात्रविषयकम्। अत एव तदतीन्द्रियम्, निर्विशेषणकज्ञानस्य कुत्राप्यदर्शनात्। 'दण्डी' इति ज्ञाने, यदा विशेषणतया दण्डो भासते, तदा तत्र भासमानं दण्डत्वमेव स्वरूपतो भासते निर्विकल्पके तु 'भासते' इति वक्तुमशक्यत्वादेवातीन्द्रियं तदित्युच्यते। तथा च दण्डबुद्धौ यदा दण्डत्वं विशेषणतया भासते, तदा तन्निर्विशेषणकनिर्विकल्पकेनोपस्थापितम्। यथा गोज्ञानं गोत्वज्ञानमन्तरा न भवितुमर्हति, गोः गोत्वविशिष्टत्वात्। तत्र विशेषणतया भासमानं तु गोत्वम् आत्मानमश्वत्वादिभ्यो व्यावृत्तं प्रदर्शयदेव गामप्यश्वादिभ्यो व्यावर्त्य प्रदर्शयति। केवलगोत्वमात्रविषयकं ज्ञानं तु निर्विकल्पकमतीन्द्रियमेव॥

ननु 'गोत्वम्' इति पदेन जायमानं ज्ञानं किंरूपम्? तेन हि पदेन गोत्वजातिबोधो भवति सर्वेषाम्। तद्ज्ञानं किं निर्विशेषणकं उत सविशेषणकम्? आद्ये तस्यातीन्द्रियत्वप्रसङ्गः। द्वितीयेऽनवस्थाप्रसङ्गः इति चेत्, गोत्वत्वरूपेणैव तत्र गोत्वभानम्। न चानवस्था, गोत्वत्वस्य गवेतरासमवेतत्वे सति, निखिलगो-समवेतत्वरूपत्वेनातिरिक्तत्वाभावादित्यादिकं पूर्वमेव(जड.9) गतम्। परन्त्विदमपि शास्त्रीये व्यवहारे, लौकिके व्यवहारे तु गोपदस्यैव प्रयोगान्न काचिदनुपपत्तिः। न हि लोको गोत्वपदं जानाति, किन्तु पण्डित एव। एवञ्च चक्षुषा गोत्वविशिष्टबोधे जननीये गोत्वरूपविशेषणज्ञानमावश्यकम्। तच्च निर्विकल्पकम् अतीन्द्रियम्। अतो नानवस्था इति निष्कर्षस्तार्किकाणामस्वप्रकाशज्ञानवादिनाम्। एवं सति युक्तिर्नास्तीति कथमुच्यत इति चेत्—

स्वप्रकाशज्ञानदृष्ट्या तद्युक्तीनां अप्रतिष्ठितत्वात्तथोक्तम्। 'येनेन्द्रियेण या व्यक्तिः गृह्यते, तन्निष्ठा जातिरपि तेनैव गृह्यते' इति न्यायात् गोगोत्वयोरुभयोरपि चक्षुर्ग्राह्यत्वेन युगपद्ग्रहणे विरोधाभावात्। अत्र सर्वत्र पण्डितैर्लौकिको व्यवहारः कीदृशः? शास्त्रीयो विश्लेषणप्रकारः कीदृश इति विमर्शनीयम्। लोकदृष्टव्यवहारविश्लेषणमात्रमेव शास्त्रस्य=विज्ञानस्य कृत्यम्। केवलं शास्त्रीयव्यवहारमवलम्ब्य पुनःपुन-श्शब्दवर्धने विषया एवापगच्छेरन्नित्याद्यवधेयम्॥

**अयमत्र सारसंग्रहः**—सर्वप्रमाणमूर्धन्ये प्रत्यक्षेऽपि विवदन्ते मेधाविनः। इन्द्रियार्थसन्निकर्षजन्यं प्रत्यक्षं कीदृशं विषयं प्रदर्शयति? इन्द्रियं कथं वस्तु प्रदर्शयति? प्राप्यकारि, उताप्राप्यकारि? इत्यादिरूपेण बहुधा विचारयन्ति। कीदृशं विषयं प्रदर्शयतीति प्रकृतो विचारः॥

तत्र **बौद्धाः** प्रत्यक्षज्ञानं **स्वलक्षणपदवाच्यं** पुरोवर्ति वस्तु प्रदर्शयतीति वदन्ति। स्वलक्षणं नाम स्वमेव लक्षणं निरूपकं यस्य तत्। प्रथमाक्षसंयोगो यत्र, तन्मात्रविषयकं स्वलक्षणमित्युच्यते। चक्षुरिन्द्रियं हि पुरोवर्तिना गवादिना प्रतिफलनरूपेण संयुज्यते। अतस्तावन्मात्रं इन्द्रियग्राह्यम्। पुरोवर्ति विशेष्यरूपं सर्वव्यावृत्तं वस्तु प्रथमं गृह्यत इत्यर्थः। अनुवृत्ताकारभानं प्रति सजातीयानां ज्ञानस्य, व्यावृत्ताकारभानं प्रति विजातीयानां ज्ञानस्यावश्यकत्वात्, प्रथमाक्षसंयोगकाले एतदुभयस्याभावत् वस्तुमात्रविषयकं तत्। इदमेव

स्वलक्षणप्रत्यक्षमित्युच्यते, निर्विकल्पकं व्यक्तिमात्रविषयकमिदमेव प्रमाणम्। अनन्तरं ये विकल्पे भासन्ते, ते वासनाकल्पिताः, न वस्तुरूपाः। अत एव विकल्पा इति एतेषां संज्ञा। एत एवेतरैः सविकल्पकपदेनोच्यन्ते। एते विकल्पा न प्रमाणम्। एवं वदतामेषां सामान्यनिराकरणमत्र प्रधानापेक्षितम्॥

एतद्विपरीततया **मण्डनमिश्रादयः**—विशेषस्य दुर्निरूपत्वात् सामान्यमेव प्रत्यक्षेण गृह्यत इति वदन्ति। इदमेव **महासामान्यं** सत्तेत्युच्यते। सन्मात्रमनुवृत्तं सत्यम्, व्यावृत्तं मिथ्येति साधने व्यग्रा एते॥

एवं परस्परं प्रतीपगामित्वे युक्तीनां समानत्वे वस्तुतत्त्वं किम्? इति ज्ञेयं चेत् तटस्थदृष्टिः आवश्यकी। इन्द्रियं किं करोति, तस्य व्यापारः कीदृशः? कियान्? बुद्धिः कथं विकसति? कथं प्रसरति? इत्यादिकं सावधानं परीक्षणीयम्। बाला अपि कदाचित् एकस्मिन् देशे विलक्षणं कञ्चन प्राणिनं पश्यन्तः, अनन्तरं देशान्तरं गताः, तत्सदृशं प्राणिनं तत्रापि यदा पश्यन्ति, ते तदा वदन्ति 'अयं प्राणी पूर्वमेव मया तत्र दृष्टः' इति। 'अयम्' इति पुरतः स्थितं निर्दिश्य वदन्ति। पुरतः स्थिता व्यक्तिस्तु पूर्वं न दृष्टा। तत्तुल्या अन्या व्यक्तिरत्र दृश्यते। अथापि वदन्ति पूर्वमेव दृष्टः इति। प्रत्युत 'पूर्वं नायं दृष्टः' इति कथनमसत्यरूपमिति सर्वे जानन्ति। कथमिदं युज्यते? अत्रैवं निर्णेतव्यम्—चक्षुरिन्द्रियं यद्यपि पुरोऽवस्थितेनैव संयुक्तम्। परन्तु चक्षुरिन्द्रियद्वारा मनोऽपि तत्र व्यापृणोत्येव। मनोऽपि ज्ञानकारणम्। अतः प्रथमं यदा चक्षुः व्यक्तिं गृह्णाति, तदा मनः अन्यत्किञ्चित् तत्र गृह्णाति। तत् ज्ञाने मुद्रितं भवति। प्रथमव्यक्तिग्रहणे न तत् स्फुटीभवति। यदा च तज्जातीयं, तत्समानाकारं वान्यत् कालान्तरे पश्यति, तदा व्यक्तिमपि पश्यति, अन्यदपि सहैव स्मरति। यत् पश्यति स विशेषात्मा व्यक्तिः, यत् स्मरति स सामान्यात्मा। अतश्च सर्वं सामान्यविशेषात्मकम्। प्रत्यक्षं विशेषद्वारा सामान्यं गृह्णाति, शब्दानुमाने सामान्यद्वारा विशेषं गृह्णीतः॥

एवञ्च यदा इन्द्रियं प्रप्रथमं नूतनं वस्तु गृह्णाति, तदेन्द्रियं विशेषमात्रं गृह्णाति, बुद्धिस्तु तद्द्वारा सामान्यमपि गृह्णात्येव। परं तु तदा तथा न ज्ञायते। अतः तदा तद्ज्ञानं निर्विकल्पकमित्युच्यते। तादृशवस्त्वन्तरमनन्तरं यदा पश्यति, तदा प्रत्यभिजानाति 'तदेवेदम्' इति। एवं सामान्यमूलकं ज्ञानं सविकल्पकमित्युच्यते। अतश्च संस्कारसहितेन्द्रियजन्यं ज्ञानं सविकल्पकम्, संस्काररहितेन्द्रियजन्यं ज्ञानं निर्विकल्पकमिति निष्कर्षः। ज्ञानस्य स्वप्रकाशत्वमते नित्यातीन्द्रियं किञ्चिद्ज्ञानं सर्वथा न संभवति। लोकानुभवदृष्ट्या तु ज्ञानमनुव्यवसायगम्यम्। अनुव्यवसायः स्वप्रकाशः स्याद्वा। तस्यान्तरत्वात् तार्किकाणां न तत्रास्था। **आन्वीक्षिकी** किल लोकदृष्टवस्तुविषयकं **लोकायत**मित्युच्यते॥

ननु तर्हि प्रत्यभिज्ञायाः सविकल्पकस्य च को विशेष इति चेत्, प्रत्यभिज्ञापि सविकल्पकप्रभेद एव। भिन्नदेशे, भिन्नकाले वा दृष्टयोः व्यक्त्यैक्यावगाहिनी प्रत्यभिज्ञा। व्यक्तिभेदे सत्यपि साजात्यमूलकैक्यावगाहि सविकल्पकम्। यथा 'सैवेयं गूर्जरी' इति। इयमेव व्यक्त्यैक्यावगाहिनी चेत्, प्रत्यभिज्ञैव। साजात्यमूलौपचारिकैक्यावगाह्ययमपि प्रत्यभिज्ञाविशेष एव। संस्कारो न्यग्भूय, इन्द्रियमेव यदा सजातीयव्यक्त्यन्तरं गृह्णाति, तदा शुद्धं सविकल्पकम्। यथा द्वितीयादिसिंहदर्शनम्। अत्र संस्कारोऽतीन्द्रियः

[वैभाषिकोक्तसविकल्पकबाधपरिहारः]

258. लिङ्गाद्यव्यापृताक्षान्वयवति विषयेऽक्षार्थजन्यो विकल्पः
संस्कारस्त्विन्द्रियाणामिह सहकुरुताम्; तावता न स्मृतित्वम्।
न स्यात् तस्यान्यथात्वं बहुविहतिहतैः कल्पनात्वादिलिङ्गैः
स्याद्वाऽनैकान्त्यमेषामनियतिमविसंवादिबाधश्च सूते ॥ ३३ ॥

सहकरोति। अतीन्द्रियं तु ज्ञानं नास्त्येव। संमुग्धं ज्ञानम्, बालमूकादिसदृशज्ञानमित्यादिकं तु इक्षुक्षीरगुडादिमाधुर्यानुभववत् वक्तुमशक्यमपि ज्ञानस्य निष्प्रकारकत्वं साधयितुं न प्रभवति। अतो विवक्षित-विकल्पाभावमात्रान्निर्विकल्पकपदं प्रयुज्यत इत्येव तत्त्वम्॥

नन्वस्त्विदं सर्वं तत्तथैव। भिन्नसामग्रीवेद्यस्थले विशिष्टबुद्धिं प्रति विशेषणज्ञानहेतुतायामनवस्था-प्रसङ्गः कथं वारणीयः। 'सुरभि कुसुमम्' इत्यादौ हि घ्राणेन्द्रियेण पूर्वं सौरभे गृहीते, अनन्तरं चक्षुषा कुसुमे गृहीते च तद्ज्ञानं भवति। अत्रानवस्थायाः कथं वारणमिति चेत्, तत्र विशेषणस्य सौरभस्य ग्रहणवेलायां सौरभ्यमितरव्यावृत्तमेव गृह्यते। अतस्तत्र ज्ञानान्तरापेक्षा न भवत्येव। यथा एकसामग्रीवेद्यत्वात् जातेः स्वतो-व्यावर्तकत्वम्, तथैव विशेषणस्य भिन्नसामग्रीवेद्यत्वेन, पूर्वं जायमानं विशेषणज्ञानमेकसामग्रीवेद्यत्वात् सुगन्धत्वाविशिष्टमेव सौरभ्यं विषयीकरोतीति, एकसामग्रीवेद्यविशेषणविशेष्यज्ञानपर्यन्तं विशेषणज्ञानपरंपरा आवश्यक्येव। परं तु सर्वमपि ज्ञानं सप्रकारकमेव, न निष्प्रकारकं किञ्चिदनुभवसिद्धम्, अतीन्द्रियं तु ज्ञानं वेदान्तिनां नास्त्येव ॥ ३२ ॥

ननु यदि संस्कारसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकम्, तर्हि तस्य प्रामाण्यं डोलायितमेवेति वदन्तं बौद्धं वैभाषिकं समाधत्ते—**लिङ्गेत्यादि**। **लिङ्गाद्यव्यापृताक्षान्वयवति**=लिङ्गव्यापाररहितेन्द्रियान्वय-व्यतिरेकानुविधायिनि **विषये** पुरोवर्तिनि जातः **विकल्पः**=सविकल्पकं ज्ञानम् **अक्षार्थजन्यः**=इन्द्रि-यार्थसन्निकर्षजन्य एव भवति, निर्विकल्पकवत्। अतो निर्विकल्पकं यदि प्रमाणम्, तर्हि तद्वदेवेदमपि प्रमाणमेव। लिङ्गादीत्यादिना शब्दपरिग्रहः। लिङ्गशब्दे हि परोक्षसामग्र्यौ। तथा न विकल्पकसामग्रीत्यर्थः। अतः परोक्षस्थले यथा तथा वा भवतु, इन्द्रियान्वयव्यतिरेकानुविधानस्थले प्रामाण्यं न डोलायेत, तदा हि सर्वोऽपि लोकव्यवहार उच्छिद्येत। ननु 'संस्कारसहकृत' इत्युक्तत्वात्, सविकल्पकेंऽशतः स्मृतित्व-मायातम्। स्मृतिश्च न प्रमेति सर्वतीर्थकारसंमतम्। अतश्च सविकल्पकस्य प्रामाण्यं संशयितमेवेति चेत्, तत्राह—**संस्कारस्त्विति**। **संस्कारस्तु इह**=सविकल्पके **इन्द्रियाणां सहकुरुतां** कामम्, न तु तत्करणम्। **तावता**=तावन्मात्रेण सविकल्पकस्य स्मृतित्वं न। ततश्चेन्द्रियजन्यनिर्विकल्पकवदेव सवि-कल्पकमपि प्रमाणमेव ॥

ननु सविकल्पकमिति संज्ञैव तस्याविश्वसनीयत्वं वदति इत्यत्राह—**न स्यादित्यादि**। **बहुविहति-हतैः**=बहुविधव्याघातैः **हतैः**=ध्वस्तैः **कल्पनात्वादिलिङ्गैः तस्य**=सविकल्पकस्य **अन्यथात्वम्**=भ्रमत्वम्

**न स्यात्**। आदिपदेन निर्विकल्पकभिन्नत्वम्, संस्कारजन्यत्वादिकं गृह्यते। **एषाम्**=उक्तहेतूनाम् **अनैकान्त्यं वा स्यात्**=क्षणिकत्वाद्यनुमानानामपि विकल्पत्वात्, तस्य भ्रमत्वाभावात् व्यभिचारः स्पष्टः। यदि तान्यनुमानानि भ्रमरूपाणि, तर्हि तैः क्षणिकत्वादिकं न सिद्ध्येत्॥

ननु शुक्तिं दृष्ट्वा रजतबुद्ध्या प्रवृत्तस्य रजतं न प्राप्यते। तद्वत् सुखसाधनं जानन् धनवनिताद्यार्जयति। अन्ते च 'भ्रान्तं मया' इत्यनुसन्धत्ते च। एवं विसंवादित्वदर्शनात् विकल्पा न प्रमाणमिति चेत्, तत्राह—**अविसंवादिबाधश्च**=अविसंवादिनोऽपि ज्ञानस्य बाध यद्युच्यते, तर्हि स बाधः **अनियतिम्**=अव्यवस्थामेव **सूते**=जनयति=जनयेत्। यत्र कुत्रचित् विसंवाददर्शनमात्रेण सर्वमपि अप्रमेति कथने, सत्यरजतं दृष्ट्वा प्रवृत्तस्य रजतप्राप्तिदर्शनात्, शुक्तिरजतज्ञानस्य सत्यरजतज्ञानस्य च वैलक्षण्यमेव न स्यात्। तदेवं कुत्रचित् सुखदुःखादिभावनादृष्ट्या भ्रन्तित्वमात्रेण, सर्वाधारभूतवस्तुविषयकमपि ज्ञानं भ्रान्तिरेवेति साधनम्, मरुमरीचिकाजलज्ञानाद्दुःखे पतितस्य दीनस्य नदीजलादपि पलायनायते। आनुकूल्यप्रातिकूल्यविषयोऽन्यः, अन्यच्च वस्तुस्वरूपमिति भावः॥

**अत्रैवं संग्रहः**—सर्वकनिष्ठा **वैभाषिक**संज्ञकबौद्धाः स्वलक्षणज्ञानसंज्ञकं निर्विकल्पकमेकमेव प्रमाणम्। तच्च प्राथमिकेन्द्रियसंयोगजन्यम्, वस्तुस्वरूपमात्रावगाहि। अनन्तरं पुरुषवासनावशाद्विविधा धर्माः कल्पिताः तत्र भासन्ते। यथा 'परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ। कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः॥' इति। अतः 'विकल्पोऽवस्तुनिर्भासाद्विसंवादादुपप्लवः'। भवद्भिरपि संस्कारासहकृतेन्द्रियजन्यं ज्ञानं निर्विकल्पकम्, संस्कारसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकमित्यङ्गीकृतम्। संस्कार एव भावना, वासना इत्युच्यते। वासनानां पुरुषभेदेन, कालभेदादिना च भेदात्, तत्तत्पुरुषस्य हेयत्वोपादेयत्वानुगुणं धर्माः कल्प्यन्ते। अतस्ते न वस्त्वनुबन्धिनः। अत एव तादृशकल्पितधर्मविशिष्टविषयकं सविकल्पकज्ञानम्, विकल्पपदवाच्यं न प्रमाणम्। तथा चानुमानम्—विमतं ज्ञानम् अप्रमा, विकल्परूपत्वात्, शुक्तिरजतादिविकल्पवत् इति। **तदेतन्न क्षोदक्षमम्**। यद्यपि मानववासनाकल्पितास्सन्ति बहवः आकाराः हेयत्वोपादेयत्वप्रयोजकाः तत्तदर्थेषु। परन्तु बुद्धिषु उदासीनत्वरूपा तृतीयाऽपि कक्ष्या प्रामाणिकी। न हि सर्वेऽपि परिव्राजकाः कामुका वा। सन्त्येव शान्तस्वान्तास्साधवोऽपि। तेषां दृष्टिस्तु न कल्पितविषयिणी, किन्तु यथार्थविषयिण्येव। अतः तत्कक्ष्यायां पुरोवर्तिनि भासमाना आकारा मिथ्या न भवितुमर्हन्ति, तादृशाकाराणां कदापि बाधाद्यदर्शनात् अन्यथा अधिष्ठानमपि मिथ्या भवेत्। पुरोवर्तिनि अध्यासहेतुभूता ऊर्ध्वत्वादयः सत्या यदा स्युः, तदैव स्थाणुत्वादेरध्याससंभवः। तत्र यद्यूर्ध्वत्वादिकमपि मिथ्या, तर्हि कल्पना कथं प्रवर्तेत। सर्वमेतत्परित्यज्य यद्याग्रहः क्रियते, तदा विकल्पमिथ्यात्वसाधकानुमानानामपि विकल्परूपत्वात् मिथ्यात्वप्रसक्त्या, तैरिष्टसाधनमेव न स्यात्। अतश्च—

वैराग्यजननार्थं चेदुच्यते, न निषिध्यते। वस्तुतत्त्वोपदेशे तु यद्यथा, तत्तथा वदेत्॥

यच्च संस्कारजन्यत्वादप्रमाणमित्यादि, तत्सर्वं पूर्वमेव (जड.26) समाहितम्॥ ३३॥

[शब्दाध्यासानुमाननिरासः]

**259. शब्दात् प्रागर्थसिद्धेः, परमपि च तयोरक्षभेदादिबोधात्**
**शब्दैक्ये वाच्यभेदादपि बहुषु पदेष्वेकवाच्यप्रसिद्धेः ।**
**साम्यासत्त्याद्ययोगात्, युगपदवगतेर्व्यक्तिजात्यादिशब्दैः**
**शब्दाध्यासो न युक्तः; प्रथयति विषयं किन्तु संज्ञा तटस्था ।। ३४ ।।**

**शब्दाध्यासवादं** विमृशति—**शब्दादित्यादि** । लोके हि सर्वोऽपि प्रत्ययः शब्दानुविद्ध एव दृश्यते । न हि शब्दमन्तराऽर्थः, अर्थमन्तरा शब्दो वा कुत्रचिदनुभूयते । तेन तत्तद्वाचकशब्दस्य वाच्यस्य अर्थस्य चाविनाभावो वर्तते । यत्राविनाभावस्तत्रान्यतरेणैव निर्वहि अन्यतरन्नास्तीति सहोपलंभनियमवादप्रसरणेन शब्द एवार्थात्मना भासते इति **शब्दविवर्तवादिनो** वदन्ति । तदेतन्न युज्यते, उभयोरविनाभावस्यासिद्धत्वात्। कुतः? **शब्दात् प्राक् अर्थसिद्धेः**=अर्थस्य प्रसिद्धेः । अर्थं दृष्ट्वा शब्दं स्मरन्ति । तत्र प्रथममर्थः, अनन्तरं शब्दः । **परमपि** च अर्थस्य सिद्धेः । शक्तिज्ञानरहितस्य हि शब्दे श्रुतेऽप्यर्थप्रतीतिर्न भवति । अनन्तरं तु भवति । ततश्च तयोर्नाविनाभावः । किञ्च—**तयोः**=शब्दार्थयोः **अक्षभेदादिबोधात्**= तत्तद्ग्राहकस्येन्द्रियस्य भिन्नतयावगमात् । अर्थः चक्षुरादिग्राह्यः, शब्दस्तु श्रोत्रग्राह्यः । एवं भिन्नेन्द्रिय-ग्राह्यत्वस्य सर्वविदितत्वान्न तयोर्युगपदवगतिसंभवः । ततश्च कुत्रापि न शब्दाध्याससंभवः, भिन्नेन्द्रिय-वेद्यत्वात् । अपि च—**शब्दैक्ये** सत्यपि **वाच्यभेदात्**=वाच्यस्य अर्थस्य भिन्नत्वात् । यथा हर्यादिपदं नानार्थकम् । तस्य पदस्य केनार्थेनाविनाभावः? कथं वा तन्निर्णयः? न तावन्मात्रम् । एकस्यैवार्थस्य वाचकानि भाषापदान्यनन्तानि सन्ति, भाषाणामसंख्येयत्वात् । अतः कीदृशभाषापदेनार्थस्याविनाभावः? कथं वा तन्निर्णयः? विनिगमकं वा किमस्ति? एवम्—**बहुष्वपि पदेषु सत्सु एकवाच्यप्रसिद्धेः**=एकस्यैवार्थस्य प्रसिद्धेः । स्वर्गनाकत्रिदिवादिपदानि स्वर्गवाचकानि । केन पदेन स्वर्गस्याविनाभावः? कथं वा निर्णयः? अपि च **साम्यासत्त्याद्ययोगात्=साम्यम्**=उभयोस्समानधर्मता, तस्या अयोगात् । शब्दस्तु आहंकारिको भिन्न-जातीयः । अर्थास्तु भिन्नजातीयाः । एवम्—**आसत्तिः**= एकदेशवर्तित्वम्, तस्याप्ययोगात् । शब्द आकाशगतः, अर्थस्तु यथायथं तद्व्यतिरिक्ते भूतलादौ । **आदिपदेन**=शब्दे तीव्रत्वमन्दत्वादयोऽनुभूयन्ते, नैतेऽर्थे दृश्यन्ते । किञ्च—**व्यक्तिजात्यादिशब्दैः युगपदवगतेः**=व्यक्तिवाचकजातिवाचकगुणवाचकपदैः द्रव्यवाचकपदैश्च सहैव प्रयोगे तेषां सर्वसांकर्यप्रसङ्गात् । एकदैव बोधजननात् । 'नीलमुत्पलम्' इत्यादिसमानाधिकरणवाक्येषु जातिगुणादिपरस्परविरुद्धधर्मैर्विशिष्ट एकोऽर्थः एकदैव प्रतीयते, न तु क्रमेण । यदि शब्दार्थयोरभेदः, तर्हि जातिगुणयोरप्यभेदप्रसङ्गः । न चैष युक्तः । एभिः कारणैः शब्दाध्यासो न युक्तः ।. कथं तर्हि कदाचित् शब्दानुविद्धोऽपि अनुभूयते? इत्यत्र—**किन्तु**=परंतु **संज्ञा**=वाचकपदम् **तटस्था**=प्रत्येकमेव वर्तमाना सती **अर्थं प्रथयति**=प्रकाशयति । वाच्यवाचकयोरविनाभावाभावेऽपि तयोर्वाच्यवाचकभावसंबन्धस्य नियतत्वात्, एकसंबन्धिज्ञानविधया शब्दः अर्थं स्मारयति, अर्थो वा शब्दं

[शब्दाध्यासानुमाननिरासः]

**260. धीत्वाच्छब्दानुविद्धां विमतमतिमुशन्त्यत्र शाब्दाः, न सत् तत्**
**तस्यार्थस्मार्यभावात्; स्फुरतु च स कथं बालमूकादिबोधे।**
**सूक्ष्मा वाङ्नात्र कल्प्या; न हि समधिगता तादृशी क्वापि संज्ञा**
**वाचः सूक्ष्माद्यवस्थाकथनमपि विदुर्भावनाद्यर्थमाप्ताः ॥ ३५ ॥**

स्मारयति। अपि च शब्दार्थयोरविनाभावे हि अग्निपदोच्चारणे जिह्वा दग्धा स्यादित्यादि न्यायसूत्रभाष्यादौ द्रष्टव्यम्। अतः शब्दाध्यासो न युक्तः ॥ ३४ ॥

शब्दाध्यासानुमानं निरसितुमनुवदति—**धीत्वादित्यादि**। **अत्र**=शब्दाध्यासविषये **शाब्दाः**= वैय्याकरणाः हरिप्रमुखाः, **विमतमतिम्**=विवादविषयां बुद्धिम् **धीत्वात्**=बुद्धित्वादेव हेतोः **शब्दानुविद्धाम्** **उशन्ति**=इच्छन्ति इति पूर्वपक्षः। तथा चेत्थमनुमानम्—'विमता बुद्धिः शब्दानुविद्धा, बुद्धित्वात्, संप्रतिपन्नतादृशबुद्धिवत्' इति। वाच्यवाचकयोरत्यन्तपरिचये सति उभयोस्सहैव भानं सर्वानुभवसिद्धम्। तद्दृष्टान्तेन सर्वा अपि बुद्धयः शब्दानुविद्धा एवेति साधयाम इति ते वदन्ति। तदेतन्निराकरोति—**तत् न सदिति**। कुतो न सत्? इत्यत्र—**तस्य**=शब्दस्य **अर्थस्मार्यभावात्**=अर्थेन स्मार्यमाणत्वात्। हस्तिदर्शने हस्तिपकस्मरणवत्, एकसम्बन्धिज्ञानविधया अर्थे दृष्टे तद्वाचकस्य शब्दस्य स्मरणं भवेत्। एतदेव ज्ञापयति तयोर्भेदं हस्तिहस्तपकयोरिव। अतोऽप्रयोजकं तदनुमानम्। किञ्च—**बालमूकादिबोधे**=बालानां पदज्ञानशून्यानाम्, तथा **मूकानाम्**=जन्मनैव शब्दानभिज्ञानां **च बोधे**=अनुभवे **सः शब्दः कथं स्फुरतु**= कथं स्फुरेत्, तेषां शब्दपरिचयस्यैवाभावात्। तथा चोक्तानुमाने बाधः। आदिपदेन अव्युत्पन्नपुरुषग्रहणम्। ननु तत्रापि सूक्ष्मः शब्दो भासत एवेत्यत्र—**अत्र**=उक्तबालमूकादिबोधस्थले **सूक्ष्मा वाक् न कल्प्या**= कल्पयितुं न शक्या, केवलयोगिगम्यस्य तादृशशब्दतत्त्वस्य लौकिकानुभवविषयत्वासंभवात्। यतः— **क्वापि**=लोके कुत्रापि **तादृशी सूक्ष्मा संज्ञा न हि समधिगता**=प्रसिद्धा, अलौकिकत्वादेव। ननु तन्त्र-शास्त्रेषु सूक्ष्मशब्दसद्भावः प्रतिपाद्यते। अतः सूक्ष्मश्शब्दो वर्तत एवेत्यत्र=**वाच** इत्यादि। **वाचः**= शब्दस्य **सूक्ष्माद्यवस्थाकथनमपि**=स्थूलत्वसूक्ष्मत्वाद्यवस्थाभेदकल्पनमपि **भावनाद्यर्थम्**=तथानुसन्धाना-द्यर्थम्, **आप्ताः**=प्रामाणिकाः **विदुः**। स्थूलस्यैव शब्दस्य मनसा तथानुसन्धानार्थम्, धर्मविशेषोत्पत्त्यर्थं वा तथा विदुः। एतत्तु लेशतोऽपि शब्दपरिचयशून्यस्य बालमूकादेरसंभवि। अतोऽनुमानेन सर्वत्र शब्दानु-वेधसमर्थनम् आग्रहमात्रम् ॥

ननु वेदान्ती सन्नपि कथमेवं भाषसे? नामरूपव्याकरणश्रुतिरेव किं विस्मृता। नामरूपव्याकरणमेव किल सृष्टिं वदन्ति श्रुतयः। अतो रूपेण साकं नामाप्यविनाभूतमेवेति चेत्,

तिष्ठन्नाकाश एव त्वं भाषसे चेत्, अहो, बुध! अवरुह्य भुवं पश्य सर्वं शान्तं भविष्यसि ॥
लौकिकीं वृत्तिमाश्रित्य वयमत्र वदाम भोः! साङ्कर्यं नैव कर्तव्यं तत्त्वलौकिकमार्गयोः ॥ ३५ ॥

[सर्वप्रत्यक्षत्ववादनिरासः]

**261. सत्त्वाद्यैरक्षगम्यं विमतमिति वदन् वक्तु बाधं विपक्षे**
**श्रुत्यालम्बे तु सैव प्रसजति शरणं तादृशादृष्टसिद्धौ।**
**अध्यक्षं लौकिकं चेत्, अधिगतिविहतम्; भावनोत्थं न युक्तम्**
**नित्यं त्वक्षानपेक्षम्; निरुपधिरिह ते दुर्वचोऽक्षप्रकर्षः ॥ ३६ ॥**

एवं निर्विकल्पकसविकल्पकविचारं परिसमाप्य, प्रसङ्गात् धर्माधर्मादीनामपि प्रत्यक्षत्वं वदतां जैनानां मतं विमृशति—**सत्त्वाद्यैरित्यादि । सत्त्वाद्यैः**=सत्त्वप्रमेयत्वादिहेतुभिः **विमतम्**=धर्माधर्मादिकमपि **अक्षगम्यम्**=इन्द्रियग्राह्यम् **इति वदन्** सः, **विपक्षे**=अप्रयोजकशंकायामापादितायाम् **बाधम्**=बाधकतर्कम् **वक्तु**=शक्यं चेद्वदतु । बाधकतर्को न वक्तुं शक्य इत्यर्थः । 'विमतं प्रत्यक्षगम्यम्, सत्त्वात्, यथा घटादि' इत्यनुमानेन धर्माधर्मादयोऽपि चक्षुर्ग्राह्या इति दिग्वाससो वदन्ति । एवं प्रयोगे 'सत्त्वमस्तु, प्रत्यक्षगम्यत्वं मास्तु' इत्यापादने 'यदि प्रत्यक्षगम्यत्वं न स्यात्, तर्हि सत्त्वं न स्यात्' इति तर्को वक्तव्यः । स वक्तुं न शक्यते, वस्तुसत्तायां शब्दानुमानयोरपि प्रमाणत्वात् । स्वर्गनरकादीनां शास्त्रैकगम्यत्वात् । स्वर्गनरकादयोऽपि कस्यचित् महात्मनः प्रत्यक्षाःस्युरिति कथने, किं तत्र प्रमाणमिति वक्तव्यम् । किं प्रत्यक्षपदं प्रत्यक्षसामान्यपरम्, उत ऐन्द्रियकप्रत्यक्षपरम् । आद्ये सिद्धसाधनम्, ईश्वरप्रत्यक्षगम्यत्वस्य संमतत्वात् । ऐन्द्रियप्रत्यक्षपरत्वे प्रमाणाभावात् । किं त्वया तादृशः कश्चिद्योगी दृष्टः? 'आम्' इति चेत्, भ्रान्तोऽसि त्वम् । न तेऽनेन चक्षुषा अतीन्द्रियवस्तूनि पश्यन्ति, दिव्येन चक्षुषा । तद्रहस्यं न जानासि त्वम् । एतदेव प्रदर्शयति—**श्रुत्यालम्ब** इति । **श्रुत्यालम्बे तु**=तादृशप्रत्यक्षसद्भावे श्रुतिप्रमाणाश्रयणे, श्रुतिसिद्धमिदं विलक्षणं प्रत्यक्षमिति चेत्, **सैव**=श्रुतिरेव **तादृशादृष्टसिद्धौ शरणम्**=आश्रयणीयम् प्रसजति । श्रुत्यैवातीन्द्रियधर्माधर्मादीनां सिद्ध्या, योगिप्रत्यक्षमन्यथासिद्धम्॥

अपि च, किं प्रत्यक्षं लौकिकम्, उत संस्कारविशेषजन्यम्, उतेश्वरीयम्? इति विकल्प्य दूषयति—**अध्यक्षमित्यादि । अध्यक्षम्**=साध्यकोटिप्रविष्टं प्रत्यक्षम् **लौकिकं चेत्**=लौकिकमेव प्रत्यक्षं चेत्, तत् **अधिगतिविहतम्**=अनुभवविरुद्धम्, अलौकिकधर्माधर्मादेः लौकिकचक्षुषा ग्रहणासंभवात् । **भावनोत्थम्**=भावनापदवाच्यसंस्कारविशेषजन्यमिति तु **न युक्तम्**, कामुककामिनीदर्शनवदविश्वासात् । **नित्यं तु**=ईश्वरप्रत्यक्षं तु, **अक्षानपेक्षम्**=इन्द्रियजन्यं न भवति । अतः धर्मादीनां चाक्षुषत्ववादः भ्रान्तिमूलः । ननु इन्द्रियशक्तिः तरतमभावापन्ना दृष्टा । अन्येन द्रष्टुमशक्यमपि कश्चित् पश्यति । अतः कस्यचिच्चक्षुः धर्माधर्मादिग्रहणसमर्थमपि स्यादित्यत्राह—**इह**=एतद्विषये **अक्षप्रकर्षः**=इन्द्रियस्य शक्त्यतिशयः **ते**=श्रुतिप्रामाण्यानङ्गीकर्तुस्तव **दुर्वचः**=वक्तुमशक्यः । लोकदृष्ट्योच्यते चेत्, न हि लङ्घनाभ्यासेन कश्चित् वातात्मजवत् समुद्रमपि लङ्घयेत् । अतो लौकिकी शक्तिरत्यन्तं परिमितैवेति योगिप्रत्यक्षमपि न धर्माधर्मग्रहणसमर्थम्, किन्तु मातापितृशतसहस्रेभ्योऽपि वत्सलतरं वेदाख्यं शास्त्रमेवेति निष्कर्षः॥

[ऐन्द्रियकशक्तेः परिमितत्वसमर्थनम्]

**261. प्रत्येकं ह्यक्षवेद्यं प्रतिनियततया सर्वलोकप्रसिद्धम्**
**काकोलूकादिकानामपि निजविषये ह्यैक्षि चक्षुःप्रकर्षः ।**

ननु भोः किमेवं शपथं करोषि? त्वया न शक्यं चेत्, अन्येनाप्यशक्यमिति कोऽयं न्यायः? तर्हि वातात्मजदृष्टान्तः कथमुक्त इति चेत्, अत्रत्यमार्षसंप्रदायरहस्यं न जानासि त्वम् । येनैवं भुजमास्फालयसि निर्भयः ॥

वेदस्य तत्त्वं परमं रहोमयं सर्वे जितास्तेन हि बुद्धिजीविनः ।
अजानतां ज्ञातमथैव जानतामज्ञातमेतत्किल तेन बुद्ध्यते ॥

'इतरेषां चानुपलब्धेः' (ब्र.सू.2-1-2) इत्येकं सूत्रमस्ति भगवतो बादरायणस्य । तस्य प्राचीना व्याख्या(शं)तत्कालानुगुणा—प्रधानेतरेषां महदादितत्त्वानां वेदेष्वनुपलब्धेरिति । भगवद्रामानुजस्य तु वस्तुतत्त्वानुगुणा—इतरेषां वेदविदग्रेसराणां मन्वादीनां कपिलदृष्टरीत्या तत्त्वानामनुपलब्धेरिति । प्रथमव्याख्यानमुपलंभप्राधान्येन प्रवृत्तम् । द्वितीयं तूपलब्धृप्राधान्येन प्रवृत्तम् । सर्वत्र प्रथमव्याख्यातृणामसञ्जातविरोधित्वन्यायेन यथावदेव प्रवृत्तिः स्यादित्युत्सर्गः । अनन्तरव्याख्यातृणां निर्णये तु, निरवकाशन्यायस्यैव प्रवृत्तिः । यथा—'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये' (गी.7-3) इत्यस्य वाक्यद्वयात्मकं व्याख्यानं पूर्वतनम् । श्रीमद्रामानुजस्य तु 'तत्त्वतः' इति वर्तमानत्वात् मध्ये सामान्यतस्सिद्धेरावश्यकत्वात् वाक्यत्रयात्मकं व्याख्यानम् । इदं सर्वं ग्रन्थरचनायां सहजम् । तावता पूर्वतनव्याख्यानं दुष्टमिति नार्थः । तद्वदेव 'इतरेषां चानुपलब्धेः' इत्यत्रापि उपलब्धिप्रधानव्याख्यानापेक्षया उपलब्धृप्रधानं व्याख्यानं श्रेयस्करम् । उपलब्धिः खलु कदाचिदन्यथासिद्धापि भवेत् । मानवबुद्धेः प्रमादशीलतायाः सहजत्वात् । अतो **भगवद्रामानुजैः** 'इतरेषां=वेदविदग्रेसराणां महात्मनां मन्वादीनाम्' इत्युपलब्धृवैशिष्ट्यप्रधानं व्याख्यानमवश्यमादरणीयम्; यतस्तेषामुपलब्धिर्नान्यथासिद्धा भवेत् । 'श्रुतिश्च भिन्ना स्मृतयश्च भिन्नाः नैको ऋषिर्यस्य मतं प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां **महाजनो** येन गतस्स पन्थाः ॥' इति हि व्यासवचनम् । अतोऽस्त्येव वेदमार्गस्य महाजनपरिगृहीतस्य महान् विशेषः इति सन्तोष्टव्यम्, नासूयितव्यं कदापि केनापीत्यवधेयं सर्वत्र परमं रहस्यम् । एतदुपर्यपि 'के ते महाजनाः? कीदृशाः? किं देशीयाः? किं गोत्राः? किं नामधेयाः?' इत्यादिप्रश्नसहस्रवर्षः भवेदेव । परं तु—

दैवी संपद्यदि भवेत् आर्तिर्वा हृदये भवेत् । साहाय्ये तस्य वर्तेत रक्षको भगवान् सदा ॥ ३६ ॥

'निरुपधिरक्षप्रकर्षो दुर्वचः' इत्येतदेव विवृणोति—**प्रत्येक**मित्यादि । **अक्षवेद्यम्**=इन्द्रियग्राह्यम् **प्रत्येकम्**=तत्तदिन्द्रियानुगुणम् **प्रतिनियततया सर्वलोकप्रसिद्धं हि**=व्यवस्थितमिति सर्वजनप्रसिद्धमेव । रूपादि चक्षुषः, रसः रसनायाः, गन्धः घ्राणस्य, स्पर्शादि त्वचः, शब्दः श्रोत्रस्येति इन्द्रियाणां ग्राह्याः विषयाः व्यवस्थिताः । एषु चक्षुस्त्वचावेव द्रव्यग्राहके । अत एव 'दृष्टमेव स्पृशामि' इति प्रत्यभिज्ञा दृश्यते । इतरत्रयं तु गुणग्राहकम् । एवं विषयव्यवस्थायास्सत्त्वात् धर्मादीनां चाक्षुषत्वं सर्वथा न

**मान्धालव्यालपूर्वेष्वपि खलु रसनास्पर्शनादिक्रमात् स्यात्**
**अक्षस्थानैक्यमात्रम्; स्थितविषयमतस्त्वक्पिपासादिवाक्यम् ॥ ३७ ॥**

संभवत्येव। नन्वस्ति मनस्सर्वसमर्थं विस्मृतं किम्? न विस्मृतं भोः? किं सर्वसमर्थं मनः गुरुत्वादिकमपि ज्ञातुं प्रभवेत्? गुरुत्वमतीन्द्रियं चेत्, धर्माधर्मयोरपि तुल्यमेतत्। गुरुत्वं तु बाह्यम्, धर्माधर्मौ त्वान्तरौ। मनश्चान्तराणामात्मगुणानां प्रकाशकं दृष्टमिति चेत्, सत्यम्, सुखदुःखादीनां प्रकाशकम्, न त्वात्मगत-धर्माधर्मयोः, कस्याप्यननुभावात्। 'अहं सुकृती' 'अहं पापी' इति किं न जानाति? को वा जानाति! ॥

आत्मानं भावयेत्सर्वोऽप्यतिधार्मिकसत्तमम्। न श्रुता भवता वत्स! 'स्तेनं मन' इति श्रुतिः ॥
यत्र क्वापि च धर्मादेः मनोग्राह्यत्ववर्णनम्। विशुद्धं तु मनस्त्वन्यत् तद्ग्राह्यत्वपरं विदुः॥

ननु अस्माभिर्द्रष्टुमशक्यानर्थान् काकादयः पश्यन्ति। अतः स्वात्मैव सर्वत्र नादर्शीकर्तव्य इति चेत्, तत्राह—**काकेत्यादि। काकोलूकादिकानामपि**=काकघूकादीनामपि **चक्षुःप्रकर्षः**=चक्षुरिन्द्रियातिशयः **निजविषये हि**=चक्षुर्विषये रूपादावेव हि **ऐक्षि**=आलोकि। न हि काकश्चक्षुषा रसमपि पश्यति। रात्रिचक्षुरपि घूकः रूपमेव चक्षुषा पश्येत्, न रसादिकम्। ननु संपातिर्नाम गृध्रः शतयोजनस्थितां जानकीमपश्यदिति किं न श्रुतम्। तद्वद्भवेदिन्द्रियातिशयः निरवधिकः कस्यचिद्दिति चेत्,

मार्गं पौराणिकं वत्स ह्यवतीर्णोऽसि दुस्तरम्। असीत्कश्चिद्दशमुखः त्रिशिरा अन्य एव च॥
इत्यादीनां गतिः केति चिन्त्यतां गाढमुत्तरम्। गुरवस्तूपसर्प्यन्तामध्यात्मशिखरस्थिताः॥

ननु मान्धालस्य मुखं गुदं चैकमेव। सर्पाश्चक्षुःश्रवस इति च प्रसिद्धम्। अत इन्द्रियव्यतिक्रमो दृश्यते किलेत्यत्र—**मान्धालव्यालपूर्वेष्वपि**=मान्धालसर्पप्रभृतिष्वपि **मान्धालः**=शिर अधोकृत्य वृक्ष-शाखासु लम्बमानः पक्षिविशेषः। **रसनास्पर्शनादिक्रमात् खलु**=रसनेन्द्रियत्वगिन्द्रियक्रमात् खलु **अक्षस्थानैक्यमात्रम्**=इन्द्रिययोः स्थानैक्यमात्रम्, स्यात्, न त्विन्द्रियैक्यम्। नराणामपि जिह्वायां रसनेन्द्रियं त्वगिन्द्रियं च मिलितं वर्तते। तावता त्वगिन्द्रियं रसम्, रसनेन्द्रियं स्पर्शं च गृह्णीयात् किम्। अत इन्द्रियव्यवस्था दुरतिक्रमा। धर्मस्तु वेदैकवेद्यः। नो चेदुच्छृङ्खलस्स्याल्लोकः॥

ननु तर्हि **श्रीवत्साङ्कमिश्रैः** 'त्वक्च दृक्च निपिपासति जिह्वा विह्वला श्रवणवत् परवृत्तौ। नासिका त्वयि करीश तथेति प्राप्नुयां कथमिमां स्विदवस्थाम्॥' (व.रा.स्त.) इतीन्द्रियविषयातिवर्तनं कथं प्रार्थ्यते? इत्यत्राह—**स्थितेत्यादि। अतः**=इन्द्रियविषयव्यस्थायास्सत्त्वात् **त्वक्पिपासादिवाक्यम्**=उक्तश्लोकरूपं वाक्यम् **स्थितविषयम्**=निर्णीतविषयमेव। मुक्तौ ज्ञानप्रसरस्येन्द्रियाधीनत्वाभावसूचकमित्यर्थः। कदा सर्वविधनिर्बन्धरहितां मुक्त्यवस्थां प्राप्नुयामिति भावः। मुक्तानां नित्यानाञ्च सर्वेषामपि शरीरेन्द्रियादिकं केवलविहारार्थमेव, यतो ज्ञानं तेषां न इन्द्रियाद्यधीनं, संपूर्णतया विकसितत्त्वात्। एतादृशविचित्रविलक्षणा-वस्थां कदा प्राप्नुयामित्यर्थः। अतो मुक्त्यवस्थायाम् इन्द्रियव्यवस्थाया अभावेऽपि संसारावस्थायामिन्द्रिय-विषयव्यवस्था दुरभिलपेत्यर्थः ॥ ३७ ॥

[अनुमानस्यानन्यथासिद्धत्वम्]

**262. संयुक्तव्यापकत्वप्रभृतिसहकृतैर्व्याप्तिधीसव्यपेक्षैः**
**अक्षैरेवानुमा धीर्भवतु, किमितरत् कल्पयित्वेति चेन्न।**
**निर्व्यापारेन्द्रियस्याप्युदयति खलु सा भूतभाव्यादिलिङ्गैः**
**स्मृत्यारूढैः श्रुतैर्वा; मन इह सकलज्ञानसामान्यमिष्टम्॥ ३८॥**

समाप्तः प्रासङ्गिको विचारः। अनुवर्तते उपक्रान्तो विचारः। ननु धूमाद्वह्निज्ञानमैन्द्रियकमेव भवतु, किमतिरिक्तप्रमाणेनेत्याशंक्य समाधत्ते—संयुक्तेत्यादि। **संयुक्तव्यापकत्वप्रभृतिसहकृतैः**=चक्षुस्संयुक्तव्यापकत्वरूपसन्निकर्षसहकृतैः, **व्याप्तिधीसव्यपेक्षैः**=व्याप्तिज्ञानादिसहकारिसहितैः **अक्षैरेव**=चक्षुरादीन्द्रियैरेव **अनुमा धीः**=अनुमित्यात्मकं ज्ञानं भवतु। **इतरत्**=प्रत्यक्षातिरिक्तमनुमानाख्यं प्रमाणं **कल्पयित्वा किम्**=किं साधनीयम्? इति पूर्वपक्षः॥

अयमाशयः—इन्द्रियं साक्षात् स्वसंयुक्तमेव घटादिकं गृह्णातीति न, जातिगुणादीनामतीन्द्रियत्वप्रसङ्गात्। न च साक्षादिन्द्रियसंयोगाद्यभावेऽपि संयुक्तसमवाय-संयुक्तसमवेतसमवायादीनामपि सन्निकर्षाणां सत्त्वात्तैरपि प्रत्यक्षं भवतीति चेत्, तर्हि चक्षुस्संयुक्तव्यापकत्वमपि सन्निकर्षोऽस्तु। ननु चक्षुस्संयुक्तव्यापकत्वं वह्नौ यदि सन्निकर्षः, तर्हि वह्निव्याप्यत्वज्ञानं धूमस्य आवश्यकमिति चेत्, व्यापकत्वोपयोगितया व्याप्तिज्ञानमपि सहकारितया भवतु, अतिरिक्तकल्पनापेक्षया लाघवात्। प्रभृतिपदेन संयुक्तव्यापकतावच्छेदकस्य ग्रहणम्। तेन च वह्नित्वग्रहणं भवेत्॥

एतन्निराकरोति—**इति चेत्, नेति**। तत्र कारणमाह—**निर्व्यापारेन्द्रियस्यापि**=चक्षुरिन्द्रियव्यापाररहितस्यापि पुरुषस्य **स्मृत्यारूढैः**=स्मृतिविषयीभूतैः **श्रुतैर्वा**=अथवा शब्देनोपस्थापितैर्वा **भूतभाव्यादिलिङ्गैः**=भूतभविष्यद्धेतुभिः **सा**=अनुमितिः **उदयति खलु**=उत्पद्यते खलु। अतः पूर्वोक्तं न युक्तम्। भाव्यादीत्यत्र 'आदि'ना वर्तमानग्रहण्, 'पर्वते धूमो दृश्यते' इति श्रवणेऽपि हि, 'पर्वतो वह्निमान्' इत्यनुमितिर्दृश्यते। एवञ्च धूमदर्शने तथोपपादनसंभवेऽपि, स्मृतानां धूमादीनां संबन्धविधयानुमितिजनकत्वासंभवात् अनुमितिरतिरिक्ता प्रमितिः। ननु तर्हि भवतु अनुव्यवसायादिवत् मानसमेवेदं ज्ञानम्, इत्यत्राह—**मन** इत्यादि। मनस्तु ज्ञानसामान्यकारणम्। अनुमितिस्तु ज्ञानविशेषरूपा। अतो विशेषसामग्र्यप्यावश्यकी॥

किञ्च—एवं येन केन प्रकारेण संबन्धोपपादने शाब्दबोधोऽपि श्रावणप्रत्यक्षरूपस्स्यात्। श्रोत्रसमवेतवाच्यत्वरूपसंबन्धस्यार्थे सद्भावात्। श्रोत्रसमवेतः शब्दः, तद्वाच्यत्वमर्थे वर्तत इति श्रौत्रःस्यादर्थबोधः। न चेष्टापत्तिः, श्रोत्रेन्द्रियस्य शब्दानुपूर्वीग्रहणमात्रे उपक्षीणत्वस्य स्पष्टमुपलंभात्। 'साक्षात्करोमि' इत्यभिलापार्हापरोक्षानुभवस्यैव प्रत्यक्षरूपत्वानुभवात्, अनुमितावपि चक्षुषो धूमप्रदर्शनमात्रे उपक्षीणत्वात्, सन्निकर्षस्य सत्तयैव कार्यकारित्वात्। अनुमितौ, शाब्दे च मध्ये ज्ञानस्यापेक्षिततत्वाच्च तिस्रः प्रमितयः परस्परं विलक्षणा भिन्ना एषितव्याः॥ ३८॥

[अनुमितेरतिरिक्तत्वम्]

263. **पक्षस्थं व्याप्यमादौ विदितमिह तु न व्यापकस्य प्रसक्तिः**
**व्याप्तिस्तेन स्मृता स्यात् न च तत उभयोर्निश्चयः पक्षयोगे।**
**तादृग्व्याप्यान्वितोऽसाविति मतिरपि न व्यापकं तत्र यच्छेत्**
**तस्मात् तद्व्यापिपक्षान्वयनियतमतिर्नाक्षतः संस्कृतेर्वा ॥ ३९ ॥**

अनुमितेरतिरिक्तत्वमनिवार्यमिति प्रदर्शयति—**पक्षस्थमि**त्यादि। **आदौ**=प्रथमम् **व्याप्यम्**=साध्यनिरूपितव्याप्तिविशिष्टम् लिङ्गम्=हेतुः **पक्षस्थम्**=पक्षे वर्तमानम्, विधेयविशेषणमिदम्, **विदितम्**=गृहीतम्। 'हेतुः पक्षवृत्तिः', अथवा 'हेतुमान् पक्षः' इति ज्ञानं प्रथमं जायते। इदमेव 'पक्षधर्मताज्ञानम्' इत्युच्यते। **इह तु**=एतद्दशायां तु **व्यापकस्य**=हेतुव्यापकस्य, अथवा हेतुनिष्ठव्याप्तिनिरूपकस्य साध्यस्य **प्रसक्तिः न**=हेतुज्ञानवेलायामेव न निश्चयो भवेत्। **तेन**=एवं पक्षे हेतुज्ञानेन, **व्याप्तिः**=हेतुसाध्ययोस्संबन्धरूपा पूर्वं सपक्षे गृहीता **स्मृता स्यात्**=पूर्वगृहीतत्वादुद्बोधकविधया हेतुसाध्ययोस्संबन्धरूपा व्याप्तिः हेतुदर्शनेन स्मृता कदाचिद्भवेत्। दर्शनकाले सर्वत्राप्यनुमित्या भाव्यमिति निर्बन्धाभावस्सूच्यते 'स्यात्' पदेन। स्मृतिर्हि तद्धेतोः संस्कारस्योद्बोधादेव भवेत्। अयं चादृष्टाधीनः। अतो हेतुदर्शनकाले सर्वत्रानुमितिर्भवेदेवेति न निर्बन्धः इत्यर्थः। **ततः**=तावन्मात्रेणापि **उभयोः**=हेतुसाध्ययोः **पक्षयोगे**=पक्षसंबन्धविषये=पक्षवृत्तित्वविषयकः, **निश्चयः न च**=नैव भवति। महानसादौ पूर्वगृहीतव्याप्तिस्मरणवेलायां पक्षज्ञानस्यासंभवात्, तत्क्षणेऽनुमितेर्न प्रसक्तिरित्यर्थः। व्याप्तिस्मरणानन्तरम्, **असौ**=पक्षः **तादृग्व्याप्यान्वितः**=साध्यनिरूपितव्याप्तिविशिष्टहेतुमान् इति **मतिरपि**=इति ज्ञानमपि **व्यापकम्**=साध्यम् **तत्र**=पक्षे **न यच्छेत्**=न नियमयेत्, विशिष्टहेतुमत्ताज्ञानमात्रं न खल्वनुमितिः, न वा युगपद्ज्ञानद्वयं भवेत्। **तस्मात्**=एतादृश्याः महत्याः प्रक्रियायाः सत्वात् **तद्व्यापिपक्षान्वयनियतमतिः**=हेतुव्यापकस्य साध्यस्य पक्षवृत्तित्वविषयिणी निश्चयात्मिकानुमितिरूपा मतिः **अक्षतः**=इन्द्रियात् **न, संस्कृतेर्वा**=संस्कारजन्यव्याप्तिस्मरणमात्राद्वा **न**=न भवति। अनुमितिरतिरिक्तैव प्रमितिः॥

ननु पक्षधर्मताज्ञानं नाम पक्षविशेष्यकहेतुप्रकारकज्ञानम्। एतत्तु 'हेतुमान् पक्षः' इति ज्ञानमेव। न तु 'हेतुः पक्षवृत्तिः' इति ज्ञानम्। अत्र हेतोर्विशेष्यत्वात् कथमिदं पक्षधर्मताज्ञानमित्युक्तम्?

इयं भाषा देवभाषा, देवास्सर्वे स्वशक्तितः। भवन्ति मायिनो नूनमतस्स्युः सावधानतः॥
स्युः परोक्षप्रिया देवाः तपसा स्यात्तदर्थधीः। अत्रैव वर्तते गर्तं, जागरूकस्सदा भवेत्॥
'न ऋते श्रान्तस्य सख्याय देवाः' (ऋ.4-33-11) इति हि भगवती श्रुतिः॥

पूर्वश्लोके चक्षुस्संयुक्तव्यापकत्वरूपसंबन्धादेव 'चक्षुस्संयुक्तसमवायादिसन्निकर्षजन्यजातिगुणादिबुद्धिवत् 'वह्निनिश्चयो भवतु' इत्याशंकायाः स्पष्टोत्तरदानार्थम्, अनुमितौ कियान् प्रबन्धो वर्तत इति प्रदर्शनमेवास्य श्लोकस्य विषयः। प्रथमं पर्वते धूमं पश्यति। अनन्तरं पूर्वं महानसादौ गृहीताम् 'यत्र

[अनुमितेः प्रमात्वम्]

264. नायोग्यस्याक्षबाधः; स्वविषयविहतिं न क्षमेतानुमानम्
स्वस्यैवापेक्षितत्वादनुमितिमखिलां बाधते नागमोऽपि ।

धूमस्तत्राग्निः' इति व्याप्तिम् **'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्'** इति रीत्या स्मरति । एतत्कालेऽपि वह्नेः पर्वतस्य च न कोऽपि संबन्धो भातुमलम् । एवं व्याप्तिस्मरणानन्तरम्, प्रकृते 'वह्निव्याप्यो धूमः पर्वते वर्तते' इति परामर्शसमयेऽपि पर्वते वह्निनिश्चयो न भवति । अन्ते एतादृशस्य वह्निव्याप्यस्य धूमस्य पर्वते सत्त्वात् 'पर्वतो वह्निमान्' इति निश्चयो भवति । प्रथमं पक्षधर्मताज्ञानम्, अनन्तरं व्याप्तिस्मृतिः, अनन्तरं तादृशव्याप्तिविशिष्टधूमवैशिष्ट्यज्ञानात् पक्षे तादृशहेतोरुपसंहाररूपः परामर्शः । अन्ते च 'पर्वतो वह्निमान्' इति निश्चयः । केवलाद्धूमदर्शनाद्वा, पूर्वं कदाचित् व्याप्तिग्रहणमात्राद्वा अनुमितिर्न भवति । किन्तु मध्ये महान् प्रबन्धो वर्तते । एवं सति 'चक्षुस्संयुक्तव्यापकत्वसन्निकर्षात् अनुमितिः प्रत्यक्षमेव भवत्वि'ति कथनमतिबालिशभावमावेदयतीति भावः । एवं प्रतिपादनेन परार्थानुमाने पञ्चावयवानामावश्यकता प्रतिपादिता । परार्थानुमानविचारस्त्वग्रे (57) भविष्यति ॥

नन्वस्त्विदं सर्वम् । परं तु एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन खलु धूमदर्शनं वह्निज्ञानजनकम् । तर्हि वह्निज्ञानं स्मृतिरूपमेव कुतो न स्यात् । स्मृतिश्च न प्रमेत्यनुमितिः कथं प्रमा स्यादिति चेत्, न । व्याप्तिस्मरणवेलायां वह्निज्ञानं स्मृतिरूपमेव । न हि सैवानुमितिः । व्याप्तिर्हि 'यत्र धूमस्तत्र वह्निः' इति न व्यक्तिविषयिणी, किन्तु सामान्यविषयिणी 'यत्र धूमत्वावच्छिन्नं तत्र वह्नित्वावच्छिन्नम्' इत्येतादृशव्याप्तिस्मरणानन्तरं पर्वतीयधूमे 'अयमपि धूमः वह्निव्याप्यः' इति व्याप्तेः प्रकृतविषये समन्वयज्ञानम्, ततः वह्निव्याप्यधूमवत्त्वात् 'पर्वतो वह्निमान्' इत्युपसंहाररूपं पर्वते वह्निविशेषज्ञानं कथं स्मृतिरूपं भवेत्? न हि पूर्वं पर्वते वह्निः ज्ञातः । प्रत्यक्षरूपं तु न, इन्द्रियसन्निकर्षाभावात् । न शाब्दः, शब्दश्रवणाभावात् । नापि मानसम्, मनसः बाह्ये स्वातन्त्र्येणाप्रवृत्तेः । नापि स्मृतिः, पूर्वं पर्वते वह्निज्ञानाभावात् । पूर्वगृहीतवस्तुविषयकं हि ज्ञानं स्मृतिः । अतथात्वात्पर्वते वह्निज्ञानं विलक्षणम् । एतदेवानुमितिरुच्यते । अनन्तरं बाधादर्शनाच्च सा नाप्रमा । अतोऽनुमितिर्विलक्षणा प्रमा अनु=प्रत्यक्षमवलम्ब्य जाता मितिः=अनुमितिः ॥ ३९ ॥

अनुमितौ बाधाभावमेवोपपादयति—**नायोग्यस्येत्यादिना** । धूमदर्शनादिना जातं पर्वते वह्निज्ञानं अबाधितत्वेऽप्यप्रमा स्यात्, उत बाधितत्वात् । अबाधितत्वेऽप्यप्रमात्वे, भवदिष्टमपि न सिद्ध्येदित्यादिकं पूर्वमेवाभिहितम्(श्लो.9) । द्वितीयकल्पे, किं प्रत्यक्षेण बाधः, उतानुमानेन, अथवा शब्देन, अथवा संशयरूपत्वादप्रमात्वम्, अथवा स्मृतिरूपत्वात्? इति विकल्प्य क्रमश उत्तरयति—**अयोग्यस्य**=इन्द्रियग्रहणायोग्यस्य **अक्षबाधः**=प्रत्यक्षेण बाधः **न**=न वक्तुं शक्यः । न हि पर्वतस्थवह्निना सहेन्द्रियसन्निकर्षस्य संभवः नाप्यनुमानेनैवानुमानबाधः । कुतः? **अनुमानम् स्वविषयविहतिं**=स्वाघातमेव **न क्षमेत**=न सहेत । स्वाघातं कश्चित् स्वयं कथं कुर्यात् । येनानुमानेनानुमानाप्रामण्यं साध्यते, तदेतदनुमानं प्रमाणं न वा? प्रमाणत्वेऽनुमानस्य

निस्सन्देहप्रवृत्तेरिह निपुणधियां नाप्यसौ संशयात्मा
वैशिष्ट्यान्न स्मृतिश्चेत्यनुमितिरुदिताऽध्यक्षवन्मानमन्यत् ॥ ४० ॥

[अनुमानबाधोद्धारः]

265. सामान्यं प्राक् प्रसिद्धम्; न पुनरनुगमः सिद्धपूर्वो विशेषे
व्याप्तिः सर्वाऽपि भग्ना, क्वचिदपि सकलव्याप्यसङ्गत्यदृष्टेः ।
भूयोदृष्टेर्व्यवस्था न हि भवति; तथोपाधयः स्युर्दुरूहाः
इत्याद्याः स्वेष्टतर्कस्थिरनियमजुषां दर्शनेनैव बाध्याः ॥ ४१ ॥

प्रमात्वसिद्ध्या नानुमानाप्रामाण्यसिद्धिः । अस्याप्रमाणत्वे तु न तेनाप्रामाण्यसिद्धिः । अतो नानुमानेनानुमान-बाधः । **आगमोऽपि**=शब्दोऽपि **स्वस्यैव**=शब्दस्यैव **अपेक्षिततत्वात्**=शक्तिग्रहणादौ अनुमानसाहाय्यस्या-वश्यकत्वात् **अखिलाम् अनुमितिम्**=अनुमितिसामान्यं **न बाधते** । वेदविरुद्धाम् अनुमितिम् वेदाख्यः आगमः बाधत एवेत्यतः अखिलामिति विशेषणम्॥

एवम्—**निपुणधियाम्**=सूक्ष्ममतीनाम् **इह**=अनुमितिविषयविषये **निस्सन्देहप्रवृत्तेः**=निस्संशयं यथा तथा प्रवृत्तेः दर्शनात् **असौ**=अनुमितिः **संशयात्मापि**=संशयस्वरूपोऽपि **न** । धूमेन वह्निं निश्चित्य खलु प्रवर्तते । एवम्—**वैशिष्ट्यात्**=स्मृतिविलक्षणत्वात् **स्मृतिश्च न**=स्मृतिरपि न भवति । स्मृतिर्हि नियमेन गृहीतग्राहिणी, अनुमितिस्तु न तथा। पर्वते वह्नेः पूर्वमदृष्टत्वेन गृहीतग्राहित्वाभावस्यानुपदमेव प्रदर्शितत्वात् । **इति**=इति हेतोः **अनुमितिः अध्यक्षवत्**=प्रत्यक्षवदेव **अन्यत् मानम्**=अतिरिक्तप्रमिति-रूपा **उदिता**=महर्षिभिरेवाभिहिता । 'प्रत्यक्षवत्' इति निर्देशात् अनुभवरूपत्वमुच्यते शाब्दानु-मित्योः । अनुभवः खलु प्रत्यक्षः परोक्षश्चेति द्विविधः । स्मृतिभिन्नं ज्ञानं हि अनुभवपदवाच्यम् । अत्रोऽनुमितिरतिरिक्तं अनुभवान्तर्गतं प्रमाणम् ॥ ४० ॥

केवललोकायतिकाः प्रत्यवतिष्ठन्ते । निरङ्कुशाः खल्वेते ऐहिकमात्रपरायणाः परोक्षं प्रमाणं किञ्चिदपि नाङ्गीकुर्वन्ति, ईश्वरधर्माधर्मादिसिद्धेर्भीताः—'अपरस्परसंभूतं किमन्यत् कामहेतुकम्' इति मन्यमानाः । तेषां पूर्वपक्षं प्रथममनुवदति—**सामान्यमित्यदि** । **सामान्यम्**=अनुमानेन साध्यं यत्, तत्सामान्यम् **प्राक्**=पूर्वमेव महानसादौ **प्रसिद्धम्**=निश्चितमेव । सिद्धस्य साधनं कथम्? ननु महानसे हि वह्निः सिद्धः, न तु पर्वते । अतः पर्वतेऽसिद्धः वह्निविशेषः प्रकृते सिसाधयिषितः इति चेत्, तत्राह—**न पुनरित्यादि** । **विशेषे पुनः**=पर्वतीयवह्निरूपे विशेषे पुनः **अनुगमः**=व्याप्तिः **न सिद्धपूर्वः**=पूर्वं न सिद्धः । न हि 'यत्र पर्वतीयधूमः, तत्र पर्वतीयवह्निः' इति व्याप्तिः पूर्वं गृहीता, किन्तु सामान्यरूपेणैव 'यत्र धूमः, तत्राग्निः' इति । वस्तुतस्तु व्याप्तिरेव दुरुपपादा, यतः **क्वचिदपि**=कुत्रापि **सकलव्याप्यसंगत्यदृष्टेः**=सकलानां व्याप्यानाम्=हेतूनाम् संगतेः=व्यापकेन साकं संबन्धस्य **अदृष्टेः**=अदर्शनात्=दर्शनासंभवात् । न हि जगति विद्यमानास्सर्वेऽपि वह्निधूमाः दृष्टाः । अतः **सर्वापि व्याप्तिः**=व्याप्तिसामान्यमेव **भग्ना**=ध्वस्ता । किञ्च व्याप्तिग्रहणोऽपायोऽपि सुदुर्वचः । भूयोदर्शनेन व्याप्तिर्गृह्यत इति चेत्, **भूयोदृष्टेः**=भूयोदर्शनेन **व्यवस्था**=व्याप्तिग्रहणव्यवस्था **न**

[व्यभिचारशङ्काविधूननप्रकारः]

**266. दृष्टेऽतीचारशङ्का न भवति; यदि सा क्वापि देशान्तरादौ सिद्धा तत्रानुमानस्थितिरथ न, तदा क्वातिशङ्कावकाशः? ।**

**हि भवति**=नैव भवत्येव। भूयोदर्शनं नाम किम्? भूयसां दर्शनानां समाहारो वा, भूयः=पुनःपुनः दर्शनं वा, भूयस्सु अधिकरणेषु दर्शनं वा। 'विमतं लोहलेख्यं पार्थिवत्वात्' इति प्रयोगे, यत्र यत्र पार्थिवत्वं तत्र सर्वत्र लोहलेख्यत्वम्=लोहेन कीलादिना लेख्यत्वं दृश्यत एव, वज्रमणिव्यतिरिक्ते। एवं भूयसां दर्शनानां सत्त्वेऽपि वज्रमणौ लोहलेख्यत्वं नास्त्येव। एवं भूयस्सु अधिकरणेषु दर्शनमिति पक्षे अधिकरणस्य भूयस्त्वं लभ्यते, न तु व्याप्यव्यापकयोः अनेकत्वम्, एवं सति एकव्यक्तिसाध्यकस्थले 'एतद्रूपवान् एतद्रसात्' इत्याद्यनुमितिर्न स्यात्। पुनःपुनर्दर्शनमित्यर्थे एतद्दोषपरिहारेऽपि सकृद्दर्शनेनापि व्याप्तेर्ग्रहणस्य वक्ष्यमाणत्वात् (श्लो.47) विरोधः। अतः भूयोदर्शनतः व्याप्तिव्यवस्था दुर्वचा। **तथा**=एवमेव **दुरूहाः**=अल्पप्रज्ञैर्मानवैः ऊहितुमशक्याः **उपाधयः स्युः**। उपाधिशङ्काया अपि व्याप्तिनिश्चयविरोधित्वं वक्ष्यते। व्याप्तेः निरुपाधिक-संबन्धरूपत्वात् अतीन्द्रियाणामप्युपाधीनां संभवात्, कथं निश्चयः? तथैवास्फालयन्ति भुजम्— 'विशेषेऽनुगमा-भावात् सामान्ये सिद्धसाधनात्। अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः।' इति॥

उत्तरमाह—**इत्याद्याः** आक्षेपाः **स्वेष्टतर्कस्थिरनियमजुषाम्**=स्वस्वाभिमतानां तर्काणामपेक्षणीयाः ये स्थिरा नियमाः, तादृशनियममङ्गीकर्तॄणां वादिनाम् **दर्शनेनैव**=अनुभवेनैव **बाध्या** भवन्ति। तथा च स्वानुभवविरोधः, स्ववचनविरोधः, स्वपक्षासिद्धिश्चेति अनुमानप्रामाण्यसिद्धिर्निष्प्रत्यूहा। 'अनुमानमप्रमाणम्' इति पक्षस्यासिद्धौ हि तत्प्रामाण्यसिद्धिः स्वयंसिद्धा भवति। एवमनुमानाप्रामाण्यसाधकहेतावप्रयोजकशङ्कायां तत्परिहारायानुकूलस्तर्को वक्तव्यः। तर्के हि आपाद्यापादकयोर्व्याप्तिरावश्यकी। आपाद्यापादकयोर्व्याप्तिर्हि तर्कस्य प्रधानमङ्गं वक्ष्यते (श्लो.60)। 'यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यात्' इति तर्को यदि वक्तव्यः, तर्हि वह्न्यभावधूमाभावयोर्व्याप्तिरावश्यकी। व्याप्त्यभावे कथं तथापादनम्। अतो व्याप्तिं निराचिकीर्षुणा प्रथमं व्याप्तिरङ्गीकार्यैवेति स्वानुभववचनविरोधादिकम् अपरिहार्यमिति वैतण्डिकास्ते भवेयुः। ननु प्रतिबन्देरनुत्तरत्वात्, उत्तरमुच्यतां समीचीनम्—

महातार्किकसिंहोऽयम् उत्तरं वक्त्यनूपदम्। विस्तरेणैव किञ्चित्त्वं सावधानमिहास्यताम्॥ ४१॥

व्याप्तिग्रहणप्रकारं विस्तरेणोपपिपादयिषुः प्रथमं 'भूयोदृष्टेर्व्यवस्था न भवती'त्यनेनोक्ताया व्यभिचार-शङ्काया विधूननप्रकारमाह—**दृष्ट** इत्यादि। भूयोदर्शनतो व्याप्तिग्रहो न संभवति, व्याप्यव्यापकस्थलाना-मनन्तत्वेन यत्र कुत्रचित् व्यभिचारशङ्कायास्संभवादित्यत्र, किं दृष्टे—असकृत्परिचिते वह्निधूमादौ व्यभिचारः शंक्यते, उतादृष्टे देशान्तरादौ तथा स्यादिति शंक्यते? असकृद् दृष्टे विषये **अतीचारशङ्का**=व्यभिचार-शङ्का **न भवति**=न भवितुमर्हति। 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात्। असकृदनुभूतेऽपि विषये व्यभिचारशङ्का कस्यचिद्भवेच्चेत्, स एव 'संशयात्मा विनश्यति' इति न्यायस्य प्रथमं निदर्शनम्॥

**व्याघातान्ता तु शङ्का न पुनरुदयति स्वप्रवृत्त्यादिभङ्गात्**
**यावच्छङ्कं च तर्कप्रसृतिरिह ततो नानवस्थादिदोषः ॥ ४२ ॥**

उत्तरं तूच्यतां ब्रह्मन्! मा शप त्वं मुधाग्रहात्। नैतद्विभीषिकाभीता वयं सुदृढचेतसः ॥
समाश्वसिहि ब्रह्मर्षे! न शपामः स्वयंहतम्। भुङ्क्षे किल भवान्नित्यम् कथमेतद्विचार्यताम्॥
कोऽयं प्रश्नो महाबुद्धे! यथा त्वं हि तथा वयम्। जानाम्येतत्तु किन्त्वत्र प्रवृत्तिः कथमुच्यताम्॥

अनिष्टनिवर्तनायेष्टप्राप्तये वा प्रवृत्तिर्भवति। पुरतः स्थितस्यान्नस्य क्षुण्णिवर्तकत्वं तृप्तिसाधनत्वं वा कथं त्वयाऽवगतम्। प्रतिदिनमनुभवादिति चेत्, पूर्वं तथात्वेऽपि, अद्य तथात्वं न स्यादित्याक्षेपे किं समाधानं पश्यति भवान्। एवं निष्कर्षाभावे भोजने प्रवृत्तेर्विरतौ, संशयात्मा भोजनाभावाद्विनश्येदेव यः कश्चिदपि॥

ह्यो दृष्टं तृप्तिहेतुत्वं स्मृत्वा भुङ्क्तेऽद्य मानवः। अत्रैव सिद्धं प्रामाण्यमनुमानस्य पश्यतु॥

अत एव सम्यगुक्तम्— 'अनुमानमप्रमाणमिति वदन्तश्चार्वाकवराका हन्त निराहारा म्रियेरन्' इति। ननु भोः! वयं हि आकस्मिकतावादश्वासाः कदापि निराहारा न म्रियेमहि। अनुमानाश्वासेन त्वया व्याप्तिग्रहः कथमित्युच्यताम्। भूयोदर्शनत इत्यादिकं तु दूरतो निरस्तम्। अये मेधाविन्! प्रथमं दूषणमुद्धरामः, व्याप्तिग्रहोपायमपि अग्रे (श्लो.47) प्रदर्शयामः। समाश्वसिहि तावत्। एवं भोजनप्रवृत्त्यैव देशान्तरविचारोऽपि समाहितप्राय एव। न तावन्मात्रम्—यदि **देशान्तरादौ क्वापि**=सा व्यभिचारशङ्का देशान्तरादौ क्वापि स्यादिति यदि, तर्हि **तत्र**=देशान्तरविषय एव **अनुमानस्थितिः**=अनुमानस्य सत्ता सिद्धा। देशान्तरं न हि प्रत्यक्षसिद्धम्। 'अत्रैवं दर्शनेऽपि क्वापि नारिकेलद्वीपादावन्यथा स्यात्' इति वदता हि देशान्तरानुमानमङ्गीकृतमेव। न हि देशान्तरं प्रत्यक्षसिद्धम्। नानुमानेन वदाम भोः! जनश्रुत्यैव ज्ञास्यामो देशान्तरमिति चेत्, शब्दस्य बोधनशक्तिरनुमानमूलैवेत्यसकृदुक्तम्। वक्ष्यामश्च पुनरप्यग्रे (श्लो.72)। **अथ न**=यदि देशान्तरमेव न सिद्धम्, तर्हि **अतिशङ्कावकाशः**=व्यभिचारशङ्कायाः प्रसक्तिः **क्व?** जिज्ञासयैव पृच्छामः। असर्वज्ञदुर्विज्ञेयत्वात् कथं व्यभिचारशङ्कानिरासंभव इति चेत्, ऋजुमतेः प्रवृत्तिस्सहजैव। किञ्चिद्वक्रबुद्धेरपि—**शङ्का**=व्यभिचारशङ्का **व्याघातान्ता**=विरुद्धदर्शनपर्यन्तैव। 'वह्निमन्तरापि धूमः स्यात्' इति व्यभिचारशङ्का हि स्वानुभवविरुद्धा हि। स्वानुभव एव दृढीकरणीयः इत्येव जिज्ञासामि भोः! 'यदि वह्निमन्तरा धूमः स्यात्, तर्हि कारणमन्तरापि कार्यं स्यात्' इति प्रतितर्केण बुद्धिर्दृढीक्रियताम् भोः! व्यामोहयसि पुनरपि माम्॥

कार्यकारणभावोऽपि व्याप्तिग्रहणमूलतः। भवेत्, तत्राप्येवमेव भवेदन्योन्यसंश्रयः॥
कार्यकारणभावादिः प्रागेवासाधि विस्तरात्। पुनः पुनः पेषणं हि पिष्टस्य कति वा भवेत्॥

ननु बुद्धिर्नास्मदधीना। पुनरपि शङ्का भवेच्चेत् किं कर्तव्यमिति चेत्, **व्याघातान्ता तु शङ्का पुनर्न उदयति**=उदियात्, कुतः—**स्वप्रवृत्त्यादिभङ्गात्**=य एवं पृच्छति, स किञ्चित्, कदाचित् करोत्येव।

[उपाधिलक्षणं, तद्विधूननप्रकारश्च]

**267. व्याप्यत्वं यस्य यत्र स्फुरति सहचरे, सोऽस्य हेतोरुपाधिः**
**साध्यव्यापी समोऽयं समगणि निपुणैः साधनाव्यापकश्च।**

अन्ततो भोजनादौ। अतः स्वस्वानुभव एवान्ते शरणीकर्तव्यः। अन्ततस्तूक्तमेवानुमानप्रामाण्यानङ्गीकारे चार्वाकवराका निराहारा म्रियेरन्नित्यादि। अन्ततः—

शरणीक्रियतां वत्स! भगवान् भक्तवत्सलः। सर्वभूतसुहृच्छ्रेष्ठः सर्वभूतगुहाशयः॥

परोक्षे तु विषये—**यावच्छङ्कम्**=संशयो यावत्पर्यन्तं तिष्ठेत्, तावत्पर्यन्तम् **तर्कप्रसृतिः**= तर्कस्यापेक्षा दुस्त्यजैव। अतः—एवमन्ते शङ्कानिवृत्त्या पुनस्तर्कापेक्षाया क्षये, अनवस्थादिदोषः **न**=नैव भवति। पर्वते धूमेन वह्नेस्साधने प्रसक्ते, अप्रयोजकशङ्कायां, कार्यकारणभावमूलकस्तर्कः प्रदर्शनीयः। कार्यकारणभावेऽपि व्याप्तेरावश्यकत्वात्, पुनस्तत्राप्यप्रयोजकशङ्कायामापादितायां पुनस्तत्रापि प्रवृत्त्यनुपपत्ति- रूपस्तर्कः प्रदर्शनीयः। पुनरत्रापि कार्यकारणभावोऽवर्जनीयः। एवं कार्यकारणभावपरंपरापाते ह्यनवस्था दुस्त्यजेति शङ्कायाम्, आत्मसाक्षिके स्वानुभवे पर्यवसानात्, पुनस्तत्र शङ्काया न संभवः। तावत्पर्यन्तं तु कुशलमतीनां तर्कान्वेषणमवर्जनीयम्। इदमेव शास्त्रमुच्यते। अत एव प्रवृत्तम्—'शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम्। उपदेशाद्धरिं बुद्ध्वा विरमेत्सर्वकर्मसु।' इति॥

परं त्वस्मिन्ननाश्वासः सहजो बुद्धिजीविनाम्। 'उद्धरेदात्मनात्मानम्' एतदेवान्तिमं मतम्॥

पिपासितः कश्चिज्जलमन्विष्यन् दूराज्जलं पश्यन्, तदादातुं यदेच्छति, तदैव पूर्वानुभूतमरीचिका- जलप्रतारणमनुस्मरन्, कथं चित्तत्रागतपुरुषवचनं यदा शृणोति, तदा तदीयाप्ततां यदि सन्देग्धि, तदा धैर्येण तदुपसर्पन्, जलं पश्यन्, स्पृशन्, पिबन्, मज्जन्, निवृत्तपिपासश्शीतलितचित्तश्च भवति, न पुनस्तस्य तत्र शङ्काङ्कुरोन्मेषावकाश इति तावद्दूरा पुरुषबुद्धिरित्यनिवार्योऽयं संशये सति विचारस्तर्कश्चेति॥ ४२॥

'उपाधयः स्युर्दुरूहाः' (41) इत्युक्तम्। अनौपाधिकसंबन्धस्यैव व्याप्तित्वात्, उपाधिशंकायामपि व्याप्तिनिश्चयासंभवात् शंकितोपाधिनिवर्तनाङ्गतयोपाधिलक्षणं प्रथमं प्रदर्शयति—**व्याप्यत्वमित्यादि। यस्य व्याप्यत्वम्**=यन्निरूपितव्याप्तिविशिष्टत्वं हेतौ वर्तते, तत् तस्य हेतोः यत्र **सहचरे**=यादृशे तत्सहवर्तिनि **स्फुरति**=भासते **सः**=तादृशसहचरः=हेतोस्सहवर्तमानः **अस्य हेतोः उपाधिः** इत्युच्यते। लोके सर्वत्र उपाधिर्नाम स्वस्मिन् विद्यमानं धर्मं स्वसन्निहिते आरोप्य प्रदर्शयति यः, स उपाधिरित्युच्यते। यथा 'लोहितः स्फटिकः' इत्यत्र जपाकुसुमं स्वस्मिन् वर्तमानं लौहित्यं स्वसन्निहिते स्फटिके आरोप्य लौहित्यव्यवहारहेतु- र्भवति। अतोऽत्र जपाकुसुममुपाधिरित्युच्यते। एवमेव 'धूमवान् वह्नेः' इति प्रयोगे वह्निना धूमसाधनमभि- मतम्। परन्तु धूमव्याप्तिर्वह्नेर्नास्ति, अयोगोलके व्यभिचारात्। अतो 'यत्र वह्निः, तत्र धूमः' इति व्याप्तेरसंभवेऽपि 'यत्रार्द्रेन्धनसंयुक्तो वह्निः, तत्र धूमः' इति व्याप्तिस्संभवति। ततश्च प्राप्ताप्राप्तविवेकन्यायेनेयं व्याप्तिः आर्द्रेन्धनसंयोगे वर्तमाना तत्सन्निहिते वह्नौ भासत इति वह्नेरार्द्रेन्धनसंयोग उपाधिरित्युच्यते॥

**योग्यादृष्ट्या च तर्कैरपि तमपनुदेच्छङ्कितं निश्चितं वा**
**साम्यं नात्राऽऽहुरेके; तदभिमतमिह व्यापकादर्शनादि ॥ ४३ ॥**

उपाधेर्लक्षणमाह—**साध्येत्यादि** । **अयम्**=उपाधिः **साध्यव्यापी**=साध्यव्यापकः **समः**=साध्यव्याप्यश्च । व्याप्तिः किल द्विविधाः समा, विषमा च । यथा यत्र यत्र पृथिवीत्वम्, तत्र गन्धवत्त्वम्; यत्र यत्र गन्धवत्त्वम्, तत्र सर्वत्र पृथीवीत्वमिति समव्याप्तिः । यत्र यत्र घटत्वम्, तत्र सर्वत्र पृथिवीत्वम्, यत्र यत्र पृथिवीत्वं, तत्र सर्वत्र न घटत्वम्, पटे व्यभिचारात् । इयं विषमव्याप्तिः । प्रकृते साध्यस्योपाधेश्च समव्याप्तिः वर्तते । **साधनाव्यापकश्च निपुणैः**=उदयनादिभिः **समगणि**=परिगणितः । नव्यैः साध्यव्याप्यत्वपरित्यागः न नैपुण्यसूचक इत्यभिप्रायेण 'निपुणैः' इत्युक्तम् । आर्द्रेन्धनसंयोगादेरुपाधित्वं हि स्वगतसाध्यव्याप्यत्वस्य स्वसन्निहिते वह्नावारोपणादेव । एवं सति उपाधिलक्षणे साध्यव्याप्यत्वानिवेशे तस्योपाधित्वं कथं स्यात्? अतस्तद्विशेषणमावश्यकमित्यभिप्रायः । एवं तर्हि नवीनैस्तद्विशेषणं कथं परित्यक्तमिति चेत्, तद्विशेषणम् उपाधेः स्वरूपं यद्यपि प्रदर्शयति, तथापि प्रयोजनाभावाल्लक्षणे न निवेश्यते, अन्यूनानतिप्रसक्तलघुधर्मस्यैव लक्षणत्वौचित्यादिति तेषामभिप्रायः । अधिकमनुपदं व्याक्तीभविष्यति ॥

उपाधेर्निरसनप्रकारमाह—**योग्येत्यादि** । **योग्यादृष्ट्या**=योग्यानुपलब्ध्या=अभावग्राहकसहकारिणोऽभावेन, **तर्कैर्वा**=अनुकूलतर्कैर्वा **शंकितम्**=सन्दिग्धम्, **निश्चितं वा तम्**=उपाधिम् **अपनुदेत्**=निराकुर्यात् । उपाध्यभावः कुत्रचित् प्रत्यक्षेणैव निश्चेतुं शक्यः । अथवा तर्केण तदभावो निर्णेयः । शंकाविषस्तु सर्वत्र सहजः । बुद्धिमता तु यत्नशीलेन भवितव्यमित्यर्थः । नवीनतार्किकाणां पक्षमाह—**साम्यमित्यादि** । **एके**=गङ्गेशोपाध्यायादयः **अत्र**=उपाधिलक्षणे **साम्यम्**=साध्यसमव्याप्तिम् **नाहुः**= नाङ्गीचक्रुः । कुत इत्यत्र—**तदित्यादि** । **इह**=उपाधिलक्षणे **व्यापकादर्शनादि**=साध्यव्यापकस्योपाधेः अनुपलंभमात्रम् उपाधेर्दूषकत्वे पर्याप्तमिति **तदभिमतम्**=तेषामभिप्रायः । उपाधेर्दूषकत्वं हि व्यभिचारोन्नायकत्वात् बाधोन्नायकत्वाद्वा वक्तव्यम् । तावतैवोपाधेर्दोषत्वे सिद्धेऽधिकं लक्षणे न प्रसक्तमिति ते मन्यन्त इत्यर्थः ॥

तथा च साध्यव्यापकत्वे सति साध्यव्याप्यत्वे सति साधनाव्यापकत्वमुपाधेर्लक्षणम् । यथा—वह्निना धूमसाधनं मन्वानेन 'धूमवान् वह्नेः' इति प्रयोगे कृते, आर्द्रेन्धनसंयोग उपाधिर्भवति । यत्र धूमः तत्रार्द्रेन्धनसंयोगः, यत्रार्द्रेन्धनसंयोगस्तत्र धूमः इति समव्याप्तेः सत्त्वात् आर्द्रेन्धनसंयोगः धूमव्यापकः धूमव्याप्यश्च । एवं साधनस्य वह्नेः अव्यापकः, वह्नेरधिकरणेऽयोगोलके आर्द्रेन्धनसंयोगस्यासत्त्वात् । अतोऽत्रार्द्रेन्धनसंयोग उपाधिर्भवति । केवलवह्निर्न धूमसाधकः, किन्तु आर्द्रेन्धनसंयुक्तः वह्निर्धूमसाधक इत्यर्थः । 'धूमवान्, आर्द्रेन्धनसंयुक्तवह्नेः' इति प्रयोक्तुं शक्यत इति यावत् ॥

अत्र लक्षणे साध्यव्यापकत्वमात्रोक्तौ 'वह्निमान् धूमात्' इति सद्धेतावपि आलोक उपाधिः स्यात्, यत्र वह्निः, तत्रालोक इति साध्यव्यापकत्वसत्त्वात् । अतः साधनाव्यापकत्वमुक्तम् । आलोकस्य धूमव्यापकत्वान्नातिव्याप्तिः । साधनाव्यापकत्वमात्रोक्तौ 'शब्दः अनित्यः कार्यत्वात्' इत्यत्र कपालजन्यत्वमुपाधिः स्यात् ।

[उपाधेर्दुर्निरसनत्वशङ्कापरिहारः]

**268. नित्यो व्यापी च न स्यादुपधिरिह, सदा सर्वतस्तत्प्रसङ्गात्**
**नाप्येष व्याप्यमात्राकृतिरवियुतितो नैकलिङ्गोपपत्तेः ।**

यत्र यत्र कृतकत्वं तत्र सर्वत्र कपालजन्यत्वस्याभावात्, पटे कृतकत्वसत्त्वेऽपि कपालजन्यत्वाभावात् । अतः साध्याव्यापकत्वम् । इदानीं तु कपालजन्यत्वस्य अनित्यत्वव्यापकत्वाभावान्न दोषः । अनित्यत्वं पटादावस्ति । तत्र कपालजन्यत्वाभावात् । साध्यव्याप्यत्वानुपादाने तत्रैवाश्रावणत्वमुपाधिःस्यात्; यत्र यत्र कार्यत्वं तत्र सर्वत्राश्रावणत्वमिति नास्ति, पक्षे शब्दे कार्यत्वसत्त्वेऽपि अश्रावणत्वस्याभावात् । अतः साध्यव्याप्यत्वमुक्तम् । अश्रावणत्वे साध्यव्याप्यत्वाभावान्नातिव्याप्तिः । यत्र यत्रानित्यत्वं तत्र सर्वत्राश्रावणत्वमस्ति । अतः साध्यव्यापकत्वे सति साध्यव्याप्यत्वे सति साधनाव्यापकत्वमुपाधिः ॥

ननु तर्हि नव्यतार्किकैः साध्यव्याप्यत्वदलं कुतः परित्यक्तमिति चेत्, श्रावणत्वस्य शब्दासाधारणधर्मत्वेन अश्रावणत्वं पक्षेतरत्वतुल्यं भवतीत्यन्योऽयं विचार इत्यभिप्रायः । सिद्धान्तिनां तु साध्यव्याप्यत्वस्योपाधित्वप्रयोजकत्वात्, तत्परित्यागो न युक्त इत्यभिप्रायः । तस्योपाधिस्वरूपे सत्त्वेऽपि लक्ष्ये वर्तमानं सर्वं लक्षणे निवेशनीयमिति नास्ति निर्बन्ध इत्यादिकं तु विचारान्तरमिति॥

इदमत्र तत्त्वम्—नवीनाः खलु विजिगीषुकथारूपजल्पप्रियाः व्यावर्तकत्वमेव लक्षणस्य परमं प्रयोजनं मन्वानाः गौरवं न सहन्ते । प्राचीनास्तु प्रमेयनिश्चयरूपतत्त्वबुभुत्सुकथारूपवादप्रियाः व्यावहारिकत्वमेव लक्षणस्य परमं प्रयोजनं मन्वानाः उपाधित्वप्रयोजकाकारस्यापरित्यागं मन्वानास्तदनुगुणमेव लक्षणं निरूपणीयमित्याशेरते । तदेतत् सूचितमाचार्यैः— 'अन्यत्सर्वं विस्तरभयान्न लिख्यते'(स.सि.) इति । श्रुत्यैकशरणानां वेदान्तिनां नास्त्युत्साह एतादृशविचार इत्याशयः ॥ ४३ ॥

ननु भोः 'उपाधयःस्युर्दुरूहाः' इत्युक्तेः(श्लो.41) गहनतां न जानीषे त्वम्, इति भीषयन्तं प्रत्याह—**नित्य** इत्यादि । **इह**=अनुमाने **नित्यः**=कालतो दूरीकर्तुमशक्यः **व्यापी च**=देशतोऽपि दूरीकर्तुमशक्यः **उपधिः**=उपाधिः कश्चित् **न स्यात्**=नैव भवितुमर्हति । कुतः? **सदा**=सर्वस्मिन् काले **सर्वतः**= सर्वत्र सर्वस्मिन् देशे च तत्प्रसङ्गात् । सर्वदेशकालवर्तित्वात्, उपाधिर्नियमेन साध्यव्यापकः स्यात् । न हि तावन्मात्रमुपाधिः, साध्यव्याप्यत्वस्यापि सत्त्वात् । मास्तु साध्यव्याप्यत्वमिति चेत् अनुमानसामान्यस्यैव विलोपप्रसङ्गात् । न चेष्टापत्तिः, अनुमानमूलकप्रवृत्तेस्साफल्यस्य सर्वत्र दर्शनात् । सफलप्रवृत्तिजनकज्ञानस्य भ्रमत्वासंभवात् । न चेदं सर्वमाकस्मिकम्, कारणान्वयव्यतिरेकानुविधानदर्शनात् । निरुपाधिकाकस्मिकतावादस्य ग्रन्थारंभ एव(जड.33) निरासात् । अस्तु तर्हि साध्यव्याप्य उपाधिरिति चेत्, **एषः**=उपाधिः **व्याप्यमात्राकृतिरपि न**=साध्यव्याप्यमात्रस्वरूपोऽपि न भवितुमर्हति । कुतः? **अवियुतितः**=अविनाभावाद्धेतोः **अनेकलिङ्गोपपत्तेः**=एकस्य साध्यस्यानेकहेतूनामपि संभवात् । न हि क्वाचित्कसाहचर्यं व्याप्तिः, आर्द्रेन्धनसंयोगस्य महानसादौ वह्निसाहचर्यसत्त्वेन, सोऽपि वह्नौ हेतुः स्यात् । अतः नियतसाहचर्यमेव व्याप्तिः । अत **एवाविनाभावो व्याप्तिरित्यप्युच्यते** । धूमो यथा वह्न्यविनाभूतः, तथाऽऽलोकोऽपि वह्न्यविनाभूतः । अतश्च

**नासौ पक्षेतरत्वप्रभृतिरपि भवेत् व्यापकोऽतिप्रसङ्गात्**
**तुल्यस्साध्येन पक्षे सह यदि घटते, साधनं व्याप्नुयात् सः ॥ ४४ ॥**

**[उपाधेर्दूषकत्वप्रकारः]**

269. **दृष्टं साध्यस्य यत् स्यात् सममधिकमपि क्वापि पक्षान्यता वा**
**तस्याभावेऽपि साध्ये सति यदि न भवेत् बाधकं, व्यापि नैतत् ।**
**दुर्वारि बाधके तद्द्वयमपि दहनानुष्णतादावुपाधिः**
**साध्यं तद्व्याप्यतां वा हरतु स विरहात् पक्षतो हेतुतश्च ॥ ४५ ॥**

'वह्निमान्, आलोकादि'त्यपि वक्तुं शक्यते । एवञ्च एकस्यानेकहेतुसंभवात्, एकस्य हेतोः अन्यो हेतुरुपाधिः स्यात् । तथा चानुमानसामान्योच्छेदप्रसङ्गः पूर्ववत् । अतः साधनाव्यापकत्वमप्युपाधावावश्यकम् । आलोकादीनां साधनव्यापकत्वान्नोपाधित्वम् ॥

नन्वेवमपि पक्षेतरत्वं सर्वत्रोपाधिः स्यात् । यत्र यत्र वह्निः, तत्र सर्वत्र महानसादौ पर्वतेतरत्वसत्त्वात्, पर्वते वह्नेस्सन्दिग्धत्वात् । यत्र धूमः पर्वते, तत्र तु पर्वतेतरत्वं न संभवत्येव, स्वस्मिन् स्वभेदाभावात् । अतस्साधनाव्यापकत्वमप्यायातमिति चेत् तत्राह— **व्यापकः**=साध्यव्यापकः, इदमितरविशेषणयोरप्युपलक्षणम्, **पक्षेतरत्वप्रभृतिरपि असौ**=उपाधिः **न भवेत्** । कुतः—**अतिप्रसङ्गात्**=सर्वत्रास्य सुलभत्वेन पूर्ववदेवानुमानमात्रोच्छेदप्रसङ्गात् । सारतः कथने— **साध्येन सह तुल्यः कश्चित्**=आलोकादिः **पक्षे यदि घटते**=वर्तेत, तदा **सः**=आलोकादिः **साधनम्**=हेतुमपि **व्याप्नुयात्**= हेतुमति सर्वत्र स्यात् साध्यवत् । तथा च सः साधनव्यापक एव भवेत्, न तु साधनाव्यापकः । अतः उपाधिः सर्वत्र सुलभ इति वा 'उपाधयः स्युर्दुरूहाः' इति वा केवला वार्ता । पक्षेतरत्वविचारोऽनुवर्तते ॥ ४४ ॥

उपाधेर्दूषकत्वप्रकारप्रदर्शनेन पक्षेतरत्वमपि क्वचिदुपाधिर्भवतीति पूर्वोक्तोपाधिलक्षणानुवादपूर्वकं प्रदर्शयति—**दृष्टमित्यादि । यत् साध्यस्य समम्, अधिकमपि**=साध्यसमव्याप्तम्, उपाधेर्दूषकत्वे साध्यव्यापकत्वमेवोपयुज्यत इत्येतत्प्रदर्शनार्थम्—साध्यव्यापकं वा **दृष्टम्, सः उपाधिः स्यात् । क्वापि**=पक्षे साध्याभावनिश्चयस्थले **पक्षान्यता वा**=पक्षेतरत्वं वा उपाधिः स्यात् । उपाधेर्दृढीकरणं कथमित्यत्राह— **तस्य**=उपाधेः अभावे साध्ये सति **बाधकम्**=बाधकतर्को यदि न भवेत्, तदा **एतत्**=उपाधित्वेनावगतम् **न व्यापि**=न व्यापकं भवेत् । यथा 'धूमवान् वह्नेः' इत्यत्र 'आर्द्रेन्धनसंयोगः' उपाधिरुच्यते । तत्र तस्योपाधित्वाभावे 'उपाधिर्मास्तु साध्यमस्तु' इत्यापादिते— 'यद्युपाधिर्न स्यात् तर्हि साध्यमपि न स्यात्' इति यदि तर्को वक्तुं शक्यते, तदा तत्र स उपाधिर्भवेदेव । प्रकृते 'यद्यार्द्रेन्धनसंयोगो न स्यात्, तर्हि धूमोऽपि न स्यादेव' इति तर्कः संभवत्येव । न ह्यार्द्रेन्धनसंयोगमन्तरा धूमो भवितुमर्हति । अतः 'साध्यमस्तु, उपाधिर्मास्तु' इत्यप्रयोजकशंकायाम् 'यद्युपाधिर्न स्यात्, तर्हि साध्यमपि न स्यात्' इति यदि वक्तुं न शक्यते, तदा उपाधौ साध्यव्यापकत्वाभावात् तत्र स उपाधिर्न स्यात् । यत्र वक्तुं शक्यते तत्र स उपाधिर्भवत्येव । अत एव—**बाधके**=बाधकप्रमाणे **दुर्वारि**=वारयितुमशक्ये=स्पष्टे सति **दहनानुष्णतादौ**=

'वह्निरनुष्णः, पदार्थत्वात्' इत्यादिसाधने **तद्द्वयमपि**=समव्याप्तं वा, केवलव्यापकं वा यत् पक्षेतरत्वादिः उपाधिः भवेदेव। 'वह्निमान् धूमात्' इत्यादावपि हि पर्वतेतरत्वं साध्यसमव्याप्तम्, अथवा साध्यव्यापकं साधनाव्यापकं च भवेदेवेत्यनुपद(पूर्वश्लोकान्ते)मुपपादितम्। एवञ्च सर्वत्रोपाधिः सुलभ एवेति चेत्, सत्यम्, अनुकूलतर्कविरहदशायाम् पक्षेतरत्वमपि भवतूपाधिः का हानिः। यथा— 'वह्निरनुष्णः पदार्थत्वात्' इति प्रयोगः प्रत्यक्षविरुद्धः। अत एतादृशस्थले वह्नीतरत्वरूपं पक्षेतरत्वम् उपाधिः भवतु का हानिः? अत्र हि पक्षेतरत्वाभावेन=वह्नीतरत्वाभावेन=वह्नित्वेन हेतुना साध्याभावः=अनुष्णत्वाभावः=उष्णत्वम् साधयितुं शक्यमेव। अतो हेतुः बाधितः, व्याप्यत्वासिद्धश्च भवति 'दुष्टसंकरेऽपि दोषासंकरः' इति न्यायात्॥

उपाधेर्दूषकत्वप्रकारमाह— **साध्यम्, तद्व्याप्यताम्**=साध्यव्याप्यतां **वा सः**=उपाधिः **विरहात्**=स्वविरहात्=स्वस्याभावात् **पक्षतः, हेतुतश्च हरतु**। उपाध्यभावः साध्यं पक्षात् हरति, साध्यव्याप्यत्वं हेतुतो हरति इति यथासंख्यमन्वयः। सर्वार्थसिद्धिदृष्ट्या 'हरति' इति पाठः स्वरसः। 'अयोगोळकं धूमवत्, वह्नेः' इति प्रयोगे आर्द्रेन्धनसंयोग उपाधिः। एवञ्च 'अयोगोलकं धूमाभाववत्, धूमव्यापकार्द्रेन्धनसंयोगाभावात्। यत्र यद्व्यापकाभावः, तत्र तदभावः, यथा घटत्वव्यापकपृथिवीत्वाभावः यत्र जले वर्तते, तत्र घटत्वाभावः वर्ततैव' इति पक्षे साध्याभावसाधनप्रकारः। इदमेव 'बाधोन्नायकत्वम्' इत्युच्यते। 'बाधोन्नायकत्वम्=बाधानुमितिप्रयोजकत्वम्। एवं व्यभिचारोन्नायकत्वम्— 'वह्निः धूमव्यभिचारी=धूमाभाववद्वृत्तिः, धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात्—धूमव्यापकार्द्रेन्धनसंयोगाभाववद्वृत्तित्वात्। यः यद्व्यापकव्यभिचारी, सः तद्व्यभिचारी=यः यद्व्यापकाभाववद्वृत्तिः, स तदभाववद्वृत्तिः=यथा घटत्वव्यापकपृथिवीत्वाभाववद्वृत्ति जलत्वम्, घटत्वाभाववद्वृत्ति भवति' इति बोध्यम्। तथा चोपाधेः स्वरूपस्य ज्ञातुं शक्यत्वात् अनौपाधिकसंबन्धरूपव्याप्तिरपि निश्चेतुं शक्येति 'उपाधयः स्युर्दुरूहाः' इति न साधीय इति अनुमानप्रामाण्यं सुस्थितमित्याशयः। अनौपाधिकसंबन्धः, अविनाभावः, नियतसाहचर्यमिति त्रयं समानम्॥

ननु भोः! 'उपाधयःस्युर्दुरूहाः' इत्यस्यार्थ एव नावधृत आयुष्मतोत्तानप्रज्ञेन भवता। अतीन्द्रिया अप्युपाधयः स्युः, ऐन्द्रियका अप्यसर्वज्ञदुर्ज्ञेया अप्युपाधयः स्युः। अतस्सर्वोपाधिविधूननं कथं केन शक्यमिति पृच्छामो वयमिति चेत्, सत्यम्। किं तर्हि कर्तव्यमिति मन्यसे त्वं महामेधाविन्। 'अनुमानं न विश्वासार्हम्' इति वदामः। किं तर्हि विश्वासार्हम्? अस्ति किल प्रत्यक्षं प्रमाणं सर्वाश्रयणार्हम्। अये बालिश! किं प्रत्यक्षं न सर्वथा व्यभिचरति?। व्यभिचरति कदाचित्, न तु सर्वदा। तर्ह्यनुमानमपि तथैव। अथवा मास्तु प्रत्यक्षमपि। अस्त्यस्माकं वेदाख्यं परमं चक्षुस्सनातनम्। तेनैव सर्वं संपत्स्यत अस्माकम्। अलं तदेकम्। हन्त! वैदिकाग्रेसर! भवादृश एव 'वेदाभ्यासजडः' इत्यादिप्रथानां मूलकारणभूतः। वेदः किं कुर्यादर्थज्ञानमन्तरा। वेदार्थःखलु तत्तन्मतस्थैर्नानादिक्ष्वाकृष्यमाणो न क्वचिदपि प्रतितिष्ठतीति न जानासि कूपकूर्मस्त्वम्, यत एवं ब्रवीषि। किं वेदार्थविवरणेऽपि विप्रतिपद्यन्ते विद्वांसः। आश्चर्यमेव। परन्तु मम मन्मतेऽस्ति श्रद्धा। अलं तावदेव॥

**[सद्धेतुदुष्टहेतुलक्षणम्]**

**270. व्याप्तिः पक्षान्वयश्चेत्युभयमविकलं यस्य हेतुः स सम्यक्**
**आभासौ तद्विहीनौ; तदुभयविततिस्स्यादनैकान्तिकादिः ।**
**तत्तद्वक्रानुमोत्प्रेक्षणमपि घटते न क्वचित् साध्यसिद्ध्यै**
**स्वव्याघातादिदोषादविषयनियतेर्वाञ्छितालाभतश्च ॥ ४६ ॥**

---

सम्यगुक्तं महाबुद्धे! घट्टकुट्यां प्रभातवत् । नैतन्नूतनमस्माकं प्रोक्तं सर्वं मनीषिभिः ॥
'शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् । उपदेशाद्धरिं बुद्ध्वा विरमेदिति' घोषितम् ॥

किं बहुना! ब्रह्मर्षिप्रवरस्यापस्तम्बस्य वचः शृणु— 'वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' (आ.ध.सू.2-25-13) इति ॥

ये तु सर्वं परित्यज्य ह्यात्मान्वेषणतत्पराः । धन्यास्ते तु महात्मानः नमस्कुर्मो महात्मनः ॥
तावद्भाग्यविहीनानां नराणां बुद्धिजीविनाम् । कर्तव्यं किं वद ब्रह्मन्! उपदेश्या वयं तव ॥
बुद्धेस्सुशिक्षणार्थं हि शास्त्रमाहुर्महर्षयः । तच्छस्त्रं मा कृथा वत्स! स्वपराघातकं मुधा ॥
ब्रह्मर्षिभिः कृतं शास्त्रं लोकानुग्रहकाम्यया । अधिकार्यादिभेदेनोपादेयं सर्वमेव तत् ॥ ४५ ॥

एवम् 'उपाधयः स्युर्दुरूहाः' इत्यादिकं समाधाय, सद्धेतूनां हेत्वाभासानां च स्वरूपं प्रदर्शयति— **व्याप्तिरित्यादि** । **व्याप्तिः पक्षान्वयश्च**=पक्षधर्मता च **इत्युभयम् यस्य हेतोः अविकलम्**=संपूर्णम् **सः सम्यक्**=समीचीनः हेतुः । **तद्विहीनौ**=व्याप्त्या, पक्षधर्मतया वा विहीनौ **आभासौ**=हेत्वाभासौ=दुष्टहेतू । व्याप्तिपक्षधर्मताविशिष्टत्वं **सद्धेतूनां** लक्षणम् । दुष्टहेतूनां तु उभयशून्यत्वं न लक्षणम्, अन्यतरशून्यत्वस्यैव पर्याप्तत्वात् । तथा च 'व्याप्तिपक्षधर्मत्वान्यतरशून्यत्वम्' **दुष्टहेतूनां** लक्षणम् । एतत्प्रदर्शनाय 'आभासौ' इति द्विवचनम् । **अनैकान्तिकादिः**='सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः'(न्या.सू.1-2-4) इति गौतमोक्ताः, 'असिद्धानैकान्तिकविरुद्धा हेत्वाभासाः' (न्या.त) इति श्रीनाथमुन्युक्ता वा **तदुभयविततिः स्यात्**='तद्विहीनौ' इत्युक्तस्य व्याप्तिरहितत्वस्य पक्षधर्मतारहितत्वस्य वा विस्तारो भवति । प्रकरणसमः=सत्प्रतिपक्षः । साध्यसमः=असिद्धः । कालातीतः=बाधितः एतेषां विवरणमाकरादौ द्रष्टव्यम् । त्रिविधो वा पञ्चविधो वा हेत्वाभासो भवतु, व्याप्तिहीनत्वे, पक्षधर्मताहीनत्वे वा विश्रान्तिरनिवार्येत्यर्थः ॥

ननु **वादीन्द्रोक्तेषु महाविडम्बनानुमानेषूक्तदोषद्वयस्याप्यभावात्** किं तेषां सद्धेतुत्वमेवेत्याशङ्कायामाह— **तत्तद्वक्रानुमानोत्प्रेक्षणमपि**=वादीन्द्रस्य विचित्रवक्रानुमानकल्पनमपि **स्वव्याघातादिदोषात्**=स्ववचनविरोधादिदोषसद्भावात् **अविषयनियतेः**=विषयव्यवस्थाया एव भङ्गप्रसङ्गात् **वाञ्छितालाभतश्च**=अभिमतार्थासिद्धेश्च **क्वचित्**=क्वचिदपि विषये **साध्यसिद्ध्यै न घटते**=स्वलक्ष्यसाधनाय न समर्थम् । केवलान्वय्यनुमानमनङ्गीकुर्वन् **भट्टवादीन्द्रः** केवलान्वय्यनुमानं **'महाविद्या'** इति नर्मसंज्ञया निर्दिशति ।

[व्याप्तिग्रहणप्रकारः]

270. साध्येन व्याप्तिमेके जगदुरिह सकृद्दर्शनेनैव गम्यां
शङ्कानिर्धूतिमात्रं फलमिति च परं भूयसां दर्शनानाम्।
धूतोपाधिस्तु योगः स्फुरति बहुविधैर्दर्शनैरेव पश्चात्
तज्जात्याधारभावात् युगपदखिलमप्यक्षसंबन्धि तत्र ॥ ४७ ॥

केवलान्वय्यङ्गीकारे प्रमेयत्वादिरूपकेवलान्वयिहेतुना सर्वं साधयितुं शक्यमित्यभिप्रैति सः। दृश्यन्ते किल वेदबाह्यानामनुमानानि 'विमतं क्षणिकम्, प्रमेयत्वात्' इत्यादीन्यनुमानानि। 'शब्दः अनित्यः, उत्पन्नत्वात्' इति ऋजुमार्गेण वक्तुं शक्यत्वे, 'शब्दः स्वस्वेतरावृत्त्यनित्यवृत्तिधर्मवान्, प्रमेयत्वात्' इति वक्रमार्गेण तदेव साध्यते चेत्, इदं वक्रानुमानम्। शब्द इति पक्षः। स्वं शब्दः, स्वेतरत् जगत्सर्वम्। सर्वत्र जगति वर्तमानो धर्मः प्रमेयत्वादिः। अतस्तद्व्यावृत्त्यर्थं 'तदवृत्ति' इति विशेषणम्। एवञ्च प्रमेयत्वातिरिक्तः, अनित्यवृत्तिधर्मः अनित्यत्वम्। तद्वानित्यर्थः। एतादृशवक्रानुमाने यत्किञ्चित्सर्वमपि साधयितुं शक्यमिति केवलान्वयि न प्रमाणमित्याशयः। सिद्धान्ते केवलव्यतिरेकिणोऽनङ्गीकारेऽपि केवलान्वयिनोऽङ्गीकारात्, तन्निराक्रियत आचार्यैः। तत्र स्वव्याघातादिदोषात्=सर्वं साधयितुं शक्यत इति वदतैव, तस्यासाधकत्वप्रतिपादने स्ववचनविरोधः। एवम्=**अविषयनियतेः**=उक्तानुमानेन साध्यस्य विषयस्य व्यवस्थितेरभावात्। 'स्वस्वेतरावृत्तिनित्यवृत्तिधर्मवान्' इति विपरिणामेन नित्यत्वमपि साधयितुं शक्यते। अतो विषयनैय्यत्याभावात्, अत एव—**वाञ्छितालाभतश्च**=केवलान्वय्यनुमाननिरसनरूपस्वाभीष्टासिद्धेश्च वक्रानुमानानि वक्राण्येव। 'घटः अभिधेयः, प्रमेयत्वात्, पटवत्' इत्याद्यनुमाने दोषाभावात् केवलान्वय्यनुमानमेवाप्रमाणमिति न वक्तुं शक्यमिति वक्रानुमानप्रदर्शनं विफलमित्यर्थः ॥ ४६ ॥

व्याप्तेरनौपाधिकसंबन्धरूपत्वात् प्रथममुपाधिविधूननप्रकारं प्रतिपाद्य, इदानीं व्याप्तिग्रहणप्रकारं प्रतिपादयति—**साध्येनै**त्यादि। **इह**=व्याप्तिग्रहणप्रकारविषये **एके**=केचिन्नव्याः साध्येन सह हेतोः **व्याप्तिम् सकृद्दर्शनेनैव गम्यां जगदुः**=वदन्ति। ननु साध्यहेत्वोस्साहचर्यमेकस्थल आकस्मिकमपि भवेत्। कथं तावता अविनाभावरूपव्याप्तिर्निश्चीयेत? इति चेत्—**परम्**=किन्तु **शङ्कानिर्धूतिमात्रम्**=व्यभिचारशङ्काविधूननमात्रम् **भूयसां दर्शनानाम्**=पुनःपुनः साध्यहेत्वोस्सहचारदर्शनानां **फलम् इति च**=इत्यपि **ते जगदुः**। **तु**=किन्तु **धूतोपाधिः**=तर्केण, प्रत्यक्षादिना वा निरस्तोपाधिः **योगः**=व्याप्तिरूपः संबन्धः **पश्चात्**=उपाध्यभावनिश्चयानन्तरम् **बहुविधैः दर्शनैरेव**=संशयपरिहारार्थैः नानाप्रकारैः अनुभवैरेव **स्फुरति**=निश्चितो भवति। 'सामान्यं प्राक् प्रसिद्धम्' (श्लो.41)इत्यादेस्समाधानमाह—**तज्जात्याधारभावात्**=तयोः=हेतुसाध्ययोः या जातिः=धूमत्ववह्नित्वादिः, तादृशजातेः आधारत्वात् **तत्र**—तत्र तत्र **अखिलमपि**=जगति सर्वत्र वर्तमानो हेतुः साध्यश्च **युगपदेव**=एकस्मिन्नेव क्षणे **अक्षिसंबन्धि**=चक्षुस्संबद्धं भवति। अतो जातिमूलकतयैव सर्वव्यक्तीनां भानात् 'यत्र यत्र धूमः, तत्र सर्वत्र वह्निः' इति व्याप्तिर्गृह्यते॥

[व्याप्तिप्रभेदप्रदर्शनम्]

271. अस्मिन् सत्येतदस्तीत्यवितथनियतेरन्वयव्याप्त्यभिख्या
तस्याभावे तु तन्नेत्ययमपि नियमः; तौ पृथक् चापृथक् च।

**इदमत्राकूतम्**—अनुमानप्रामाण्यविषये विद्यमानः क्लेशः व्याप्तिग्रहणानुपपत्तिरेव। तत्र युक्तयः 'सामान्यं प्राक् प्रसिद्धम्' (श्लो.41) इत्यत्र संगृहीताः। नियतसाहचर्यं व्याप्तिः। सा चानौपाधिकसंबन्धरूपा। इदं सर्वं दुरुपपादमिति पूर्वपक्षिणामाशयः। 'विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्' इत्यादिरेको हेतुः। 'उपाधयःस्युर्दुरूहाः' इत्यपरो हेतुः। भूयोदर्शनादीनां दुरुपपादत्वात् व्याप्तिग्रहणोपायोऽपि नास्ति इत्यन्यो हेतुः। असर्वज्ञदुर्विज्ञेयत्वमन्तिमो हेतुः। एवं चतस्रोऽनुपपत्तयः प्रदर्श्यन्ते। अत्रेत्थं समाधयो ज्ञेयाः—'उपाधयस्स्युर्दुरूहाः' इत्येतत्तु 'व्याघातान्ता तु शङ्का न पुनरुदयति' इत्यादिना विस्तरेण समाहितम्। भूयोदर्शनं तु पोषकम्, न तु तदेव मूलमिति केचन। एतेषामयमाशयः—महानसादौ हि वह्निधूमयोर्व्याप्तिर्गृह्यते। तत्र साक्षादेव वह्नेर्धूमकारणत्वस्य दर्शने, किमन्यत्प्रत्यक्षापेक्षयातिरिक्तं प्रमाणमपेक्षितम्। कार्यात् कारणानुमानं हि धूमाद्वह्न्यनुमानम्। दुरपह्नवेन प्रत्यक्षेणैव वह्नेर्जायमानं धूमं चक्षुषा पश्यति। यत्रैवं प्रत्यक्षं न भवति, तत्र स्याक्लेशो लेशतः। तावतानुमानमेव दुर्घटमिति कथम्? अन्नस्य तृप्तिसाधनत्वं पश्यन्तो हि प्रतिदिनमन्नं भुञ्जते। तृप्तिस्तु भोजनानन्तरम्, पूर्वं तु सानुमानैकगम्या हि। एवं यत्र भूयोदर्शनापेक्षा, तत्र प्रातिस्विकतया सर्वव्यक्तिग्रहासंभवेऽपि सामान्यद्वारैव त्रिकालवर्तिनामपि व्याप्यव्यापकानामुपस्थित्या 'यत्र कार्यम्, तत्र कारणम्' इत्यनुगमः संभवत्येव। तेन नासर्वज्ञदुर्विज्ञेयत्वम्। 'सामान्यं प्राक् प्रसिद्धम्' इति तु सपक्षे। पक्षे तु पक्षधर्मताज्ञानबलादेव सामान्यस्य विशेषे पर्यवसानात् वह्निविशेषसिद्धिर्निष्प्रत्यूहा। अत एवानुमितिः न स्मृतिरूपा, पूर्वं पर्वते वह्नेरननुभूतत्वात्। सामान्यद्वारानुगमग्रहणं तु प्रत्यक्षस्थले व्यक्तिभेदेऽपि 'सैवेयं गूर्जरी' इत्यादीनां व्यवहाराणां आबालपण्डितं पूर्वमेव प्रदर्शितम्। आहत्य सर्वा अप्यनुपपत्तयः परिहृता इति अनुमानं प्रमाणमेव॥

यदि क्वाप्यपवादःस्यात् पुमांस्तत्रापराध्यति। नापराध्यति संवित्तु पूज्या भगवती प्रमा॥
प्रत्यक्षेऽप्यपवादः स्यात् तावता त्यज्यते कथम्। सर्वत्र माया जागर्ति तिष्ठ त्वं सावधानतः॥
वृथाचर्चाःपरित्यज्य शरणं याहि मायिनम्। सुहृदं सर्वभूतानां नान्या गतिरिहास्ति नः॥ ४७॥

एवं व्याप्तिग्रहणप्रकारादिविचारं परिसमाप्य तद्विभागं प्रदर्शयति—**अस्मिन् सति**=वर्तमाने **एतत्**= एतदपि **अस्ति** 'धूमो यद्यस्ति, तर्हि वह्निरप्यस्ति' इति **अवितथनियतेः**=अव्यभिचरितनैयत्यसत्त्वात् अन्वयव्याप्त्यभिख्या एका अस्ति। तथा—**तस्य अभावे तु, तन्न**=तदपि न 'वह्नेरभावे धूमोऽपि न स्यात्' **इत्ययमपि नियमः**=इत्याकारकाव्यभिचरितनियमः=व्यतिरेकव्याप्तिः। एवं व्याप्तिः द्विविधैव। **तौ**=एते अन्वयव्याप्तिः, व्यतिरेकव्याप्तिश्च **पृथक्**=प्रत्येकमपि भवतः, **अपृथक् च**=मिलितावपि भवतः। व्याप्तेर्द्विविधत्वेऽपि तद्विशिष्टास्तु व्याप्याः हेतवः त्रेधा भवन्ति—केवलान्वयी हेतुः, केवलव्यतिरेकी हेतुः, अन्वय-

**तस्मात् त्रेधाऽनुमानं कतिचिदकथयन्; एकहानात् द्विधैके**
**कश्चिश्चेत् व्याप्तियुग्मप्रिय इह भविता, वर्णयत्वैकविध्यम् ॥ ४८ ॥**

**[केवलान्वयव्याप्तिसमर्थनम्]**

272. **सर्वस्थः केवलान्वय्यघटितसरणिः स्यात् स्ववृत्तेर्विकल्पे**
**साध्ये स्वस्मान्निवृत्ते भवति च स तदा साध्यहानेर्विपक्षः ।**
**हेतोस्तद्वृत्त्यवृत्त्योरभिमतविहतिस्तत्र चैवं विकल्पात्**
**इत्युत्प्रेक्षा विभागं विघटयतु न वा सर्वथा व्याप्तिसिद्धिः ॥ ४९ ॥**

व्यतिरेकी हेतुरिति व्याप्या हेतवस्त्रिधा भवन्ति । **तस्मात्** कारणात् अनुमानम् एवं **त्रेधा**=त्रिप्रकारम् **कतिचित्**=गौतमीयाः **अकथयन्** । **एकहानात्**=केवलव्यतिरेकिणस्त्यागात् **द्विधा एके**=सिद्धान्तिनः अकथयन्, केवलान्वयिनो हानात् द्विधेति **भट्टवादीन्द्रः** । एवमेव **इह**=एतद्विषये **कश्चित्** सैद्धान्तिकः **व्याप्तियुग्मप्रियः**=अन्वयव्यतिरेकीति व्याप्तिद्वयविशिष्टहेतुमात्राङ्गीकर्ता भविता चेत्, सोऽपि व्याप्यो हेतुः 'अन्वयव्यतिरेकी' इति एक एवेति **ऐकविध्यम्**=एकविधतामेव **वर्णयतु**! बुद्धिभेदस्यानिवार्यत्वादेवं वादा अनिवार्या एवेत्याशयः । अन्वयव्यतिरेकभेदेन व्याप्तिर्द्विविधा दुर्वारैव । अथापि व्याप्यस्तु—व्याप्तिविशिष्टस्तु हेतुः केवलान्वयी, केवलव्यतिरेकी, अन्वयव्यतिरेकीति त्रिविधः । 'वह्निमान् धूमात्' इत्यादौ 'यत्र यत्र धूमः, तत्र वह्निः' इति अन्वयव्याप्तेः, 'यत्र वह्निर्नास्ति, तत्र धूमोऽपि नास्ति' इति व्यतिरेकव्याप्तेश्च संभवात् अयं हेतुः 'अन्वयव्यतिरेकी' इत्युच्यते । 'घटः अभिधेयः, प्रमेयत्वात्' इत्यत्र 'यत्र प्रमेयत्वम्, तत्राभिधेयत्वम्, यथा पटादौ' इति अन्वयमात्रव्याप्तिः संभवति, न तु 'यत्राभिधेयत्वं नास्ति, तत्र प्रमेयत्वमपि नास्ति' इति व्यतिरेकव्याप्तिः संभवति, अभिधेयत्वप्रमेयत्वयोर्जगति सर्वत्र सत्त्वेन, तदभावस्याप्रसिद्धेः । अतोऽयं केवलान्वयी । ननु 'यत्राभिधेयत्वं नास्ति, तत्र प्रमेयत्वं नास्ति, यथा शशशृङ्गे' इति कुतो न वक्तुं शक्यत इति चेत्, शशशृङ्गपदस्यैव शशशृङ्गायमानत्वात्, तत्पदप्रयोग एवाप्रामाणिकः । एवम् 'पृथिवी जलादिभिन्ना, गन्धवत्त्वात्' इत्यत्र 'यत्र गन्धवत्त्वम्, तत्र जलादिभेदः' इति अन्वयव्याप्तिर्न संभवति, गन्धवत्त्वजलादिभेदयोः पृथिवीमात्रवृत्तित्वेन, कृत्स्नपृथिव्याश्च पक्षत्वेन, सपक्षस्यैवाभावेन व्याप्तिग्राहकस्थलाभावात् । किन्तु, 'यत्र जलादिभेदो नास्ति, तत्र गन्धवत्त्वं नास्ति, यथा जलादौ' इति व्यतिरेकव्याप्तिमात्रं संभवति । अतोऽयं हेतुः केवलव्यतिरेकीत्युच्यते। एवं व्याप्तेर्द्वैविध्येऽपि व्याप्यास्तु त्रिविधाः ॥ ४८ ॥

अन्वयव्याप्तेस्सुवचत्वेऽपि केवलान्वयिहेतुर्दुर्वच इत्याक्षिप्य समाधत्ते—**सर्वस्थ** इत्यादिना । **सर्वस्थः**=जगति सर्वत्र वर्तमानः, **केवलान्वयी**=केवलान्वयी धर्मः **स्ववृत्तेः विकल्पे**=सः स्वस्मिन् वर्तते, न वा? नाद्यः, अभिधेयत्वम् अभिधेयत्वे स्याच्चेत्, स्वस्य स्वाधारत्वप्रसङ्गः । न द्वितीयः, तदा हि केवलान्वयित्वमेव न स्यात्, सर्वत्र वर्तमानत्वं हि केवलान्वयित्वम् । न तावन्मात्रम्— **साध्ये**=अभिधेयत्वरूपे साध्ये **स्वस्मात् निवृत्ते**=अभिधेयत्वशून्ये सति, **तदा सः**=अभिधेयत्वरूपः साध्यो धर्मः **साध्यहानेः**= साध्याभाववत्त्वात् **विपक्षश्च भवति**=विपक्षोऽपि भवति । भवतु! ततः किम्? इति चेत्, **हेतोः**=प्रमेयत्व-

[केवलान्वयिहेतुसमर्थनम्]

273. तत्तद्धीव्यक्तिभेदात् प्रमितिविषयता मानसिद्धा घटादौ
प्रत्यक्षत्वं च तद्वत्; तदिदमुभयमध्यक्षसिद्धं तथैव।
इत्थं तद्वृत्त्यवृत्तिव्यतिकरकलहैः केवलान्वय्यपोहे
दुर्वारः शून्यवादो न तमभिमनुषे स्थापयन् किञ्चिदिष्टम्॥ ५०॥

---

रूपहेतोः **तद्वृत्त्यवृत्त्योः**=अभिधेयत्वरूपविपक्षे वर्तने, अवर्तने वेति विकल्पयोःप्रसक्तौ **अभिमतिविहतिः**= स्वेष्टव्याघातः। तत्र हेतोर्वर्तने, विपक्षे साध्याभाववति हेतोस्सत्त्वात् व्यभिचारदोषः। अवर्तने प्रमेयत्वं केवलान्वयि न स्यात्। अतो द्वेधापि विरोध एव। न तावन्मात्रम्—**तत्र च**=हेतावपि **एवम्**=साध्य इव विकल्पात् **अभिमतिविहतिः**=स्वेष्टव्याघातः। प्रमेयत्वे प्रमेयत्वं वर्तते, न वा? वर्तते चेत्, स्वस्य स्वाश्रयत्वप्रसङ्गात् व्याघातः। न वर्तते चेत्, केवलान्वयित्वभङ्गः। एवम्—प्रमेयत्वे हेतौ अभिधेयत्वं वर्तते, न वा? न वर्तते चेत्, केवलान्वयित्वं न स्यात्। वर्तते चेत्, स एव सपक्षः स्यात्। तत्र सपक्षे प्रमेयत्वे प्रमेयत्वहेतुर्वर्तते, न वा? वर्तते चेत्, स्वस्य स्वाश्रयत्वप्रसङ्गः। न वर्तते चेत्, सपक्षात् व्यावृत्तो हेतुरसाधारणः स्यात्, केवलान्वयित्वभङ्गश्च। **इत्युत्प्रेक्षा**=इत्यादिकल्पना **विभागम्**=केवलान्वयिविभागम् **विघटयतु**=ध्वंसयतु, **न वा**=मा ध्वंसयतु। **व्याप्तिसिद्धिः**=अन्वयव्याप्तिसिद्धिस्तु **सर्वथा** अस्त्येव। अतः केवलान्वयिनिराकरणेन प्रकृते न कापि हानिरित्यर्थः। अथवा इत्यादिकल्पनया=वाग्वादेन अनुभवो नापलपितुं शक्यते। यत्र प्रमेयत्वम्, तत्राभिधेयत्वं वर्तत एवेति सत्यांशापलापः केन कर्तुं शक्य इत्यर्थः। प्रमेयत्वादौ प्रमेयत्वादेरङ्गीकारे न कापि हानिः। तथा च केवलान्वयिहेतोर्विवादेऽपि केवलान्वयव्याप्तिरस्त्येव॥ ४९॥

ननु शपथमात्रेण न वस्तुसिद्धिः। उक्ताक्षेपाः परिहार्यन्तामिति वदत उत्तरमाह—**तत्तद्धी**त्यादि। **घटादौ** प्रमेये **प्रमितिविषयता**=प्रमेयत्वम् **तत्तद्धीव्यक्तिभेदात्**=प्रातिस्विकतत्तद्ज्ञानभेदात् **मानसिद्धा**= भिन्नतयैव प्रमाणसिद्धा, न तु प्रमेयत्वं नाम कश्चनाखण्डः पदार्थः। प्रमाविषयत्वरूपप्रमेयत्व एवैवमिति न मन्तव्यम्। प्रमाविशेषरूपप्रत्यक्षविषयत्वादावपीदं समानमित्याह—**प्रत्यक्षत्वं च**=प्रत्यक्षविषत्वमपि **तद्वत्**=तत्तद्ज्ञानभेदेन विषयभेदेन भिन्नमेव। **तदिदम् उभयम्**=प्रमेयत्वं प्रत्यक्षत्वं चेति तदिदमुभयमपि **तथैव अध्यक्षसिद्धम्**=प्रत्यक्षत्वेनैव प्रत्यक्षानुभवसिद्धम्। न्यायशास्त्रेऽनुव्यवसायरूपमानसप्रत्यक्षविषयम्, सिद्धान्ते तु स्वप्रकाशत्वात्, स्वप्रकाशत्वेऽपि वेद्यत्वाङ्गीकारात् तथैव प्रत्यक्षसिद्धम्। 'ममोत्पन्नं ज्ञानं प्रमा' 'घटविषयकप्रत्यक्षज्ञानवानहम्' इत्याद्यनुभवस्य संप्रतिपन्नत्वात्। एवं प्रत्यक्षविषयप्रत्यक्षादीनामनुभवसिद्धत्वेन, विषयभेदादात्माश्रयादीनां नैवावकाशः॥

एवं सत्यपि **इत्थम्**=पूर्वोक्तरीत्या **तद्वृत्त्यवृत्तिव्यतिकरकलहैः**=तद्वृत्यवृत्त्योः=प्रमेयत्वं प्रमेयत्वे वर्तते, न वा? इत्यादिभिः आत्माश्रयादिमिश्रणपूर्वकैः कलहैः=दूषणोद्भावनैः केवलान्वय्यपोहे=केवलान्वयिनो

निरासे **शून्यवादः**=सर्वापलापवादः **दुर्वारः**=वारयितुमशक्यः। 'घटः अनित्यः' इत्युक्ते अनित्यत्वं नित्यम्, उतानित्यम्? आद्ये अनित्येऽनित्यत्वे नित्यत्वं कथं स्यात्? द्वितीये अनित्यत्वं यद्यनित्यम्, तर्हि घटस्यानित्यत्वनिवृत्त्या घटनित्यत्वप्रसङ्गः इत्येवं रीत्या सर्वस्यापि खण्डयितुं शक्यत्वात् शून्यवाद एव पर्यवसानं स्यात्। न चेष्टापत्तिः, कुतः? **किञ्चिदिष्टं स्थापयन्**=केवलान्वयिनं निराकुर्वन्नपि त्वं न हि शून्यवादी। इतरानुमानं स्थापयन् **तम्**=शून्यवादम् **न अभिमनुषे**=न ह्यङ्गीकरोषि। वादीन्द्रः खलु केवलान्वयिनं परं खण्डयति, न तु माध्यमिकवत् सर्वम्। अतस्तस्यानिष्टप्रसङ्गः प्रतिपाद्यते। तथा च केवलान्वय्यङ्गीकारे न किमपि बाधकमित्यर्थः॥

ननु भोः!'घटोऽनित्यः' इति व्यवहारः कथं समर्थनीयः? युक्तं समाधानमुच्यताम्। न भेतव्यम्। अनित्यत्वं घटेऽनित्यमेवास्तु। तावता तन्निवृत्तौ घटस्य नित्यत्वं स्यादित्यापादनं तु बालिशभावकृतम्। घटगतमनित्यत्वं घटस्य सत्ताकाल एव निवर्तत इति को वा वदति बुद्धिमान्। घटस्य यावान् कालः, तावानेव कालस्तद्गतानामनित्यत्वादिधर्माणाम्। अत एव घटेन साकमेव अनित्यत्वादयो निवर्तेरन्। तथा च तदा घटस्यापि निवृत्तत्वात्, कस्य नित्यत्वमापाद्यते मेधाविना तेन? अत एवैतादृशास्तर्का कुतर्का इत्युच्यन्ते। वस्तुतस्तु एतादृशा धर्मा एव शब्दविकल्परूपाः। अत एव प्रमेयनिश्चयमन्तरा तर्कप्रयोगः वक्तुः श्रोतुश्च न कदापि हितमावहेत्॥

अत एवोच्यते शब्दवर्धनं वर्ज्यतामिति। प्रमेयश्चिन्त्यतां गाढमसंकीर्णं यथा तथा॥
न शक्नुवन्ति ये वैतन्मृदुलास्तु स्वभावतः। तेषां कृते हि खल्वाहुरिदं वचनमादरात्॥
शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम्। उपदेशाद्धरिं बुद्ध्वा विरमेदिति निश्चितम्॥
रागद्वेषादिना ख्यातिलाभपूजादिनापि वा। स्वैरं हि वदतां नूनं दुर्गतिः स्यान्न संशयः॥

नन्वेवं प्रमेयत्वं प्रमारूपज्ञानभेदेन भिन्नं यदि, तर्हि केवलान्वयित्वं कथं स्यात्। एवञ्च 'घटोऽभिधेयः, प्रमेयत्वात्, पटवत्' इति प्रयोगो वा कथम्? पटगतप्रमेयत्वस्य घटगतप्रमेयत्वस्य च भिन्नत्वेन व्याप्तिग्रहणं वा कथमिति चेत्, अये सुरगुरो! 'पर्वतो वह्निमान् धूमात्' इति प्रयोगे किं पर्वतीयवह्निधूमयोर्व्याप्तिः महानसे गृहीता, येन महानसादिः दृष्टान्तीक्रियते। हन्तैवं वदता त्वया 'विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्' इत्यादिकमेव पुनर्गीयते। तर्हि समाधानमपि तत्रोक्तमधीयताम्। अतः सामान्यरूपेण प्रयोगेऽपि न कश्चिद्दोषः॥

ननु कं वञ्चयसि? तत्र हि धूमत्वादिर्जातिरनुगमकोऽस्ति। प्रमेयत्वादौ तु जातिर्नास्ति किलेति चेत्; जातिशून्यासु जातिषु जातिरित्यनुगतप्रतीतिः किं नास्ति? अस्ति, किन्तु न जातिः, किन्तूपाधिरिति चेत्, तद्वदेवात्रापि भविष्यति। वस्तुतस्तु जातेस्तत्त्वं तन्निरूपणे भविष्यति (अद्र.111)। बहुषु पदार्थेषु अनुगतव्यवहारः प्रायः अनुगतबुद्ध्युपाधिक एव। शास्त्रकाराः किल शास्त्रीयव्यवहारार्थमेव कांश्चिच्छब्दान् प्रकल्पयन्ति। यथा शशशृङ्गादिशब्दाः। अयं विषयः पूर्वमेव (बु.18) निरूपितः। तादृशाः शब्दाः लोके

**[केवलान्वयिन आवश्यकता]**

**274. ख्यातत्वात् शब्दवाच्यो विमतिविषय इत्यादिरूपे तु साध्ये**
**व्यर्थोऽसौ हेतुरित्थं विमतिसमुदयासंभवादित्ययुक्तम्।**
**व्याघातव्यक्त्यभावात् श्रुतिशकलबलात् कूटयुक्त्यादिभिर्वा**
**पाकः कश्चित् प्रमुह्यन् प्रमितिगतिकथापक्त्रिमैर्हि प्रबोध्यः ॥ ५१ ॥**

न क्वापि दृश्येरन्। अत एवासकृदुच्यते शब्दवर्धनं न कर्तव्यमिति। अर्थशून्यशब्दानां वर्धनेन बुद्धिरपि शब्दमात्रालम्बना तथैव वर्धेत चेत्, सिकतानिर्मितप्रासादवत् स्वयं विशीर्येत। अत एव शिक्षणीयं भवति—

शब्दस्य वर्धनं नैव कर्तव्यं स्वहितेप्सुभिः। शब्दराशिमहारण्यप्रवेशात्किल पण्डिताः॥
दिङ्मूढा इव तत्रैव भ्रमेयुर्विफलं बत! बुद्धिभ्रंशः क्रमेण स्यात् बुद्धिनाशस्ततो भवेत्॥
बुद्धिनाशात्प्रणाशः स्यादिति गीताऽवधार्यताम्। यावत्प्रमेयशुद्धिः स्यात् वक्तव्यं तावदेव हि॥
सर्वत्रैव ह्यनुभवोऽन्वेषणीयो विमर्शकैः। शब्दराशिमहारण्यप्रवेशो वर्ज्यतां ध्रुवम्॥
प्रशाम्येयुर्विवादास्तु स्वयमेव क्रमेण हि। शान्तिश्च सुलभा सर्वश्रेयोमूलं न संशयः ॥ ५० ॥

ननु यदि हेतुः केवलान्वयी स्यात्, तर्हि साध्यः किं व्यतिरेकी, उत केवलान्वयी? आद्ये हेतोः साध्याभाववति सत्त्वस्यानिवार्यत्वात् व्यभिचारः। द्वितीये सर्वत्र वर्तमाने विषये, अभावाप्रसिद्ध्या साध्यसन्देहासंभवेन साधनस्यैवानवकाशः। अतः केवलान्वयिहेतोः कथं प्रसक्तिरिति शंकायां केवलान्वयिन आवश्यकतां प्रदर्शयति— **ख्यातत्वादित्यादि**। **विमतिविषयः**=विवादविषयः **शब्दवाच्यः**=शब्दबोध्यः, ख्यातत्वात्=ज्ञातत्वात्=ज्ञेयत्वादित्यर्थः। ख्यातिः=ज्ञानम्। तथा च 'विमतम् वाच्यम्, ज्ञेयत्वात्' इत्यनुमानम्। 'विमतम् अभिधेयम्, प्रमेयत्वात्' इति वा। इत्यादिरूपे तु साध्ये विवक्षिते, असौ हेतुः व्यर्थः। कुतः? **इत्थम्**=एवंरीत्या **विमतिसमुदयासंभवात्**=वैमत्यस्य समुदयः=प्रसक्तिः, तस्यासंभवात्; केवलान्वयिनः अभावासंभवात् 'अभिधेयं न वा' इति संशयप्रसक्तेरेवाभावात्। साध्यस्य व्यतिरेकित्वे तु व्यभिचारोऽनिवार्य एव। इत्ययुक्तम्। कुतः? **व्याघातव्यक्त्यभावात्**=वाच्यत्वस्य, अभिधेयत्वस्य वा अभावो न संभवति, केवलान्वयित्वादिति विरोधस्फूर्त्यभावात्, **श्रुतिशकलवशात्**='यतो वाचो निवर्तन्ते' 'यद्वाचानभ्युदितम्' इत्यादिश्रुत्येकदेशदर्शनवशात्, **कूटयुक्त्यादिभिर्वा**=ब्रह्मणो निर्विशेषत्वेन निर्धर्मकत्वनिश्चये सति प्रवृत्तिनिमित्ताद्यसंभवात् वाच्यो न भवतीत्यादिशून्यवादियुक्तिभिर्वा **प्रमुह्यन्**=मोहमापन्नः कश्चित् **पाकः**=बालः=मृदुमतिर्हि **प्रमितिगतिकथापक्त्रिमैर्हि**=प्रमाणप्रवृत्तिरीतिपरिष्कारैः किल **प्रबोध्यः**=अज्ञानात् ज्ञानं नेयः। निर्विशेषे वस्तुनि शशशृङ्ग इव प्रमाणमेव न प्रवर्तेत, सविशेषवस्तुविषयत्वात्सर्वप्रमाणानामिति सयुक्तिकप्रतिपादनेन तादृशभ्रमनिवृत्त्यर्थं तादृशकेवलान्वयिप्रयोगा अत्यन्तमावश्यकाः इत्यर्थः॥

**इदमत्राकूतम्**— 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.4-4-5, 6-5-6) इति श्रवणमननादीनामात्मदर्शनोपायत्वं श्रुतम्। तत्र श्रवणं=वेदान्तवाक्यार्थश्रवणम्। मननं श्रुतस्यार्थस्य

[केवलव्यतिरेकिविमर्शः]

275. **पक्षेऽन्यत्रापि साध्यं न मितमविदिते नापि संबन्धधीः स्यात्**
**क्वापीत्यप्यस्य सिद्धौ; ऋजुरविहतिमान्नास्ति सामान्यहेतुः ।**

युक्तिभिः प्रतिष्ठापनमित्यादिकं पूर्वमेव (ईश्वर.) गतम्। एवञ्च विचारशास्त्रस्यावश्यकतायास्सर्वसंमतत्वेन, विचारस्य संशयपूर्वकत्वावश्यंभावेन मृदुमतीनां संशयाङ्कुरमवर्जनीयम्। स च संशय उत्कटकोटिको वा, अनुत्कटकोटिको वा भवतु। अथवान्तत आरोपितो वा भवतु। तत्तदधिकारिणां संस्कारानुरोधेन सर्वमेतन्नेयम्। एवञ्च बुद्धिजीविनां विचारस्यावश्यकताया अनिवार्यत्वात् 'विमतं ब्रह्म, अभिधेयम्, प्रमेयत्वात्' इत्यादि-प्रयोगा आवश्यकाः। ब्रह्मणोऽवेद्यत्वावाच्यत्वादिविचारास्तु पूर्वमेव (ईश्वर.) विस्तरेण परिशीलिताः। अतः केवलान्वयिसाध्यकोऽपि हेतुर्युज्यत एव। किं बहुना! नवीनैः प्रत्यक्षेऽपि विषये सिषाधयिषयानुमानप्रवृत्तेरङ्गी-कारात् कल्पितं संशयमादायापि तथा प्रयोग आवश्यक एवेति केवलान्वय्यनुमानमावश्यकम्॥ ५१॥

एवं केवलान्वयिविचारं परिसमाप्य, केवलव्यतिरेकिणं विचारयितुमुपक्रमते—**पक्ष** इत्यादि। केवलव्यतिरेकिण आवश्यकता द्वेधा प्रतिपाद्यते, प्रथमं परिशेषानुमानम्, द्वितीयं लक्षणैरितरभेदानुमानम्। तत्र द्वितीयमग्रे भविष्यति। आद्यमत्र विमृशति। 'त्रिविधमनुमानं पूर्ववत्, शेषवत्, सामान्यतोदृष्टं च' (न्या.सू.1-1-5) इति गौतमीयं सूत्रम्। 'शेषवन्नाम परिशेषः। स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे संप्रत्ययः' इति भाष्यम्। शब्दस्य श्रोत्रग्राह्यत्वेन गुणत्वे सिद्धे, गुणस्य द्रव्याश्रितत्वात्, पृथिव्याद्यनाश्रितत्वाच्च तदाश्रयतया नवमद्रव्यस्याऽऽकाशस्य सिद्धिः। तथा च प्रयोगः 'शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः, पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्' इति। श्रोत्रग्राह्यत्वाच्छब्दः आकाशस्य विशेषणगुणः। अतः स न पृथिव्याद्याश्रितः, आकाशमात्राश्रित इति वैशेषिकाः। अत्र, यत्र पृथिव्याद्यनाश्रितत्वे सति द्रव्याश्रितत्वम्, तत्र पृथिव्याद्यतिरिक्तद्रव्याश्रितत्वमित्यन्वयव्याप्तिर्न संभवति, दृष्टान्ताभावात्। किन्तु 'यत्र पृथिव्याद्यतिरिक्तद्रव्याश्रितत्वं नास्ति, तत्र पृथिव्याद्यनाश्रितत्वे सति द्रव्याश्रितत्वं नास्ति, यथा रूपादौ' इति व्यतिरेकव्याप्तिरेव संभवति। यद्यपि रूपादौ द्रव्याश्रितत्वं वर्तते, अथापि पृथिव्यादिद्रव्याश्रितत्वमेव वर्तते, पृथिव्याद्यनाश्रितत्वं नास्ति। अतो विशेषणाभावप्रयुक्तविशिष्टाभावो वर्तत इति वैशेषिकाः। तदेतन्न संभवति। कुतः? **पक्षे, अन्यत्र वा**=पक्षे सपक्षे वा **साध्यम् न मितम्**=प्रमाणसिद्धम्। पक्षे सिद्धत्वे हि सिद्ध-साधनात् अनुमानान्वेषणवैयर्थ्यम्। सपक्षे प्रसिद्धं चेत्, अन्वयव्याप्तिरेव, केवलव्यतिरेकी न भवति। एवम् **अविदिते**=कुत्रापि पूर्वमज्ञाते **संबन्धधीः**=व्याप्तिनिश्चयः **नापि स्यात्**=नैव संभवति॥

ननु भोः! किमिदमकाण्डताण्डवाडम्बरः? केवलव्यतिरेकीति वयं वदामः। भवांस्तु अन्वयव्याप्त्य-संभवं प्रदर्शयति। सर्वमिदं पृष्ठताडने दन्तभङ्गापादनम्। व्यतिरेकव्याप्तिः खलु विपक्षे गृह्यते। सन्त्येव विपक्षा रूपादयः। न हि साध्यमेवाप्रसिद्धं शशशृङ्गवत्। अभावः खलु प्रतियोगिसापेक्षः। रूपादयश्च दृष्टान्ताः प्रसिद्धाः। रूपाद्याश्रयपृथिव्याद्यनाश्रितत्वं शब्दे साध्यते। एवञ्च यत्र जलादिभेदाभावः, तत्र गन्धाभावः, यथा जलादौ इति व्याप्तिर्भवत्येव। किञ्च—श्रोत्रेन्द्रियं हि न द्रव्यग्राहकम्। अतः श्रोत्रग्राह्यश्शब्दो

सत्यप्यस्मिन्न शक्याऽधिकरणनियतिः स्वेच्छया सर्वसाम्यात्
वैषम्यं दुर्वचम्; तत् प्रमितिकरणता क्वापि नावीतहेतोः ॥ ५२ ॥

[केवलव्यतिरेकिनिराकरणम्]

276. साध्याभावो विपक्षे कथमिव विदितस्तस्य साध्याप्रसिद्धेः
भावात्मन्यप्यमुष्मिन् प्रतिभटवपुषा ह्यत्र ते व्याप्तिसिद्धिः ।
इत्यज्ञातान्वयेऽस्मिन् कथमिव सुशकः स्यादभावो नियन्तुम्
हेतौ सारोऽन्वयोऽतः; क्वचिदनुपधिकः केवलान्वय्यपीष्टः ॥ ५३ ॥

न द्रव्यम्, किन्तु गुणः । गुणश्च नियमेन किञ्चिद्द्रव्याश्रित एव भवेत् । पृथिव्यादेस्तदाश्रयत्वे गुणस्याश्रयं परित्यज्यागमनाभावात् श्रोत्रदेशागमनानुपपत्त्या अतिरिक्तमेकं द्रव्यं सिद्ध्यतीति कं क्लेशं पश्यसि? इति चेत्, तत्राह—**क्वापीत्यादि** । **क्वापीत्यप्यस्य सिद्धौ**='क्वचिदाश्रित एव भवेदयं शब्द' इति सामान्यरूपेण अस्याश्रयसिद्धावपि, **ऋजुः**=साक्षात्तत्साधकः **अविहतिमान्**=बाधादिरहितश्च सामान्यहेतुः, सामान्यरूपेण कश्चन हेतुः **नास्ति**=नोपलभ्यत एव । क्लृप्तभूतैरेवान्यथासिद्धेरित्याशयः । विशेषरूपेण एकस्मिन्नाश्रये आवश्यके सत्यपि **सर्वसामान्यात्**=इतरेषामपि भूतानां तदाश्रयत्वसंभवसामान्यात् **स्वेच्छया अधिकरण-नियतिः**=अतिरिक्तस्य कस्यचिद्भूतस्यैव शब्दाश्रयत्वेन नियमः, **न शक्या** । यतः **वैषम्यं दुर्वचम्**=न पृथिव्यादिः आश्रयः इत्यत्र वैषम्यं न वक्तुं शक्यम् । **तत्**=तस्मात्कारणात् **अवीतहेतोः**=केवलव्यति-रेकिहेतोः **प्रमितिकरणता**=अनुमित्यात्मकप्रमाकरणता **क्वापि** विषये **न**=न भवति ननु शब्दस्य पृथिव्यादि-गुणत्वे तस्य श्रोत्रदेशागमनं कथमिति चेत्, श्रोत्रस्य किल आकाशः आप्यायकः । तत्साहाय्येन श्रोत्रदेश-प्राप्तिः तन्मत इव भवेदिति न कश्चन दोषः । अतः परिशेषानुमानं निरवकाशम् ॥ ५२ ॥

व्याप्तिग्रहणासंभवमेव विशदतयोपपादयति—**साध्येत्यादिना** । केवलव्यतिरेकिणः व्याप्तिः विपक्षे खलूपपादनीयो भवता । **साध्याभावः विपक्षे कथमिव विदितः?**=साध्याभाववान् खलु विपक्षः । अतो विपक्षत्वादेव तथा विदित इति चेत्, **तस्य**=केवलव्यतिरेकिहेतोः **साध्याप्रसिद्धेः**=साध्यस्यैवाप्रसिद्धेश्च । प्रतियोगिन एवाप्रसिद्ध्याऽभावाप्रसिद्धेः । साध्यस्य प्रसिद्धौ हि केवलव्यतिरेकी कथं स्यात्? ननु 'पृथिवी जलादिभिन्ना, गन्धवत्त्वात्' इत्यादौ हि केवलव्यतिरेकिणि जलादिभेदः साध्यः । तदभावः=जलादिभेदाभावश्च जलत्वादिरूपः । ततश्च 'यत्र यत्र जलत्वादिः, तत्र सर्वत्र गन्धवत्त्वाभावः' इति व्याप्तिर्भवति एवञ्च परिशेषानुमाननिराकरणेऽपि लक्षणानामितरव्यावर्तकत्वात्, तत्र केवलव्यतिरेक्यावश्यक एवेति चेत्, तत्राह—**अमुष्मिन्**=साध्याभावे **भावात्मन्यपि**=भावरूपे सत्यपि **अत्र**=केवलव्यतिरेकिणि **प्रतिभटवपुषा हि**= साध्यप्रतियोगिकाभावरूपतया हि **ते व्याप्तिसिद्धिः**=व्याप्तिनिश्चयः वक्तव्यः । **इति**=इतिहेतोः **अस्मिन्**= केवलव्यतिरेकिणि **अज्ञातान्वये**=अज्ञातव्याप्याख्यसंबन्धस्वरूपे सति, **अभावः**=तस्य व्यतिरेकः **नियन्तुम्**=व्याप्यत्वेन व्यवस्थापयितुम् **कथमिव सुशकः?**, न कथञ्चिदपि । अतः **हेतौ** सर्वत्र **अन्वयः**=अन्वयव्याप्तिरेव **सारः**=बलम् । व्यतिरेकी तु तस्य पोषकः स्यात् कामम् । केवलव्यतिरेकी तु

[लक्षणसार्थक्यवर्णनम्]

277. **संत्यक्तावीतहेतोरभिदुरमखिलं लक्षणाभावतः स्यात्**
**मैवं लक्ष्मैव भेदस्तदवगमकमित्याप्तवाक्ये तदुक्तिः ।**

दुर्निरूप एव । **क्वचित्तु अनुपधिकः**=उपाधिरहितः, अनुकूलतर्कसत्त्वात् **केवलान्वयी अपि इष्टः**=संमत एव— 'विमतम् अभिधेयम्, प्रमेयत्वात्' इत्यादेः ब्रह्मणो वाच्यत्वादिसमर्थनात् । 'यद्यभिधेयं न स्यात्, तर्हि प्रमेयमपि न स्यात्' इत्यनुकूलतर्कसत्त्वात् । 'ब्रह्म यदि प्रमेयं न स्यात्, तर्हि शशशृङ्गवत् वस्तु न स्यात्' इत्यादिवादाः पूर्वमेव (ईश्व.3) प्रदर्शिताः ॥ ५३ ॥

'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इति न्यायविदः । लक्षणस्य व्यावर्तकत्वं च केवलव्यतिरेकिविधयैव । अतस्तत्कथं निरस्यत इत्यांशक्य समाधत्ते—**सन्त्यक्तेत्यादि** । **संत्यक्तावीत-हेतोः**=सन्त्यक्तः अवीतहेतुः=केवलव्यतिरेकिरूपो हेतुः येन, तादृशस्य तव **लक्षणाभावतः**= इतरवैलक्षण्यसाधकस्य लक्षणस्यैव वैय्यर्थ्यप्रसङ्गात् **अखिलम्**=ब्रह्मादिस्थावरान्तं सर्वम् **अभिदुरम्**= परस्परवैलक्षण्यहीनम्, अत एवैकरूपं स्यात् । ततश्च सर्वसांकर्यप्रसङ्गः । 'गन्धवती पृथिवी' इति पृथिव्या लक्षणमुच्यते । असाधारणधर्मो हि लक्षणम् । साधारणत्वं च सर्वानुगतत्वम् । तद्व्यतिरेकः स्वेतरसर्वविलक्षण-त्वमेव । अतो लक्षणानीतरभेदसाधकानि । 'पृथिवी स्वेतरसमस्तभिन्ना, गन्धवत्त्वात्' इत्यनुमानविधया पृथिव्याः, तद्व्यतिरिक्तजलादिभेदो वर्णनीयः । अत्र 'यत्र यत्र गन्धवत्वम्, तत्र सर्वत्र जलादिभेदः' इत्यन्वयव्याप्तिर्न संभवति, साध्यस्य जलादिभेदस्य हेतोः गन्धवत्त्वस्य पृथिवीमात्रवृत्तित्वेन सपक्षस्याभावात् । किन्तु 'यत्र साध्याभावः=जलादिभेदाभावः, तत्र हेत्वभावः=गन्धवत्त्वाभावः, यथा जलादौ' इति केवलव्यतिरेकव्याप्तिरेव संभवति । एवं सर्वेषामपि पदार्थानां स्वेतरवैलक्षण्यस्य निरूपणीयत्वे, यदि केवलव्यतिरेकी निराक्रियते, तर्हि सर्वेषां परस्परभेदस्य दुर्निरूपत्वापत्त्या सर्वसांकर्यप्रसङ्गः । इतीमं वादं निराकरोति—**मैवमिति** । कथमित्यत्र—**लक्ष्मैव**=लक्षणमेव हि **भेदः**=भेद इत्यस्यार्थः । एवञ्च लक्षणमिति यद्भवति, तदेव तदसाधारणधर्मरूपत्वात् स्वेतरव्यावृत्तिरूपमेव भवति । तेनैव तस्येतरभेदे सिद्धे कथं सांकर्यप्रसङ्गः? **आप्तवाक्ये**=लक्षणप्रतिपादके प्रामाणिकानां वाक्ये तु **तदवगमकमिति**=तादृश-लक्षणस्वरूपवाचकमिति हेतोः **तदुक्तिः**=लक्षणत्वोक्तिः । उपनिषच्छब्दस्य ब्रह्मविद्यावाचकस्य ब्रह्मविद्याप्रति-पादके ग्रन्थे यथा प्रयोगस्तथैव । एवञ्च भेदाभावस्य भेदप्रतियोगितावच्छेदकरूपत्वात्, तस्यैव लक्षणत्वात्, लक्षणज्ञानमेवेतरसकलवैलक्षण्यज्ञानरूपमित्यनुमानान्वेषणं व्यर्थमेव । अयि भोः!

प्रतारयसि बालांस्त्वमेवमार्भटयन् मुधा । सत्यं लक्ष्मैव भेदस्तु सांकर्यं तेन वारितम्॥
वस्तुस्थितिस्तथैवास्तु विज्ञानं कथमुच्यताम् । एतदर्थं हि शास्त्राणि प्रणीतानि महात्मभिः॥
**न हि पञ्चाङ्गनाशेन नश्येयुस्तारकादयः** । इति न्यायोऽत्र चिन्त्यः स्यात् वृथैवेतरदुच्यते॥
प्रश्ना एतादृशाः पूर्वं बहुधैव समाहिताः । **गुरोश्शापस्तु शिष्यःस्यादित्याद्यप्यत्र** दर्शितम्॥
शिष्याणां बुद्धिवैशद्यसिद्ध्यर्थं प्रोच्यतेऽखिलम् । बुद्धिस्तु विशदा सर्वं तत्त्वं निश्चिनुयात् स्वयम्॥

**यद्वा गन्धादिरप्त्वप्रभृतिविरहितेष्वेव दृष्टो घटादि-**
**ष्वाज्यादावन्वयी स्यात्; अयमिव विमतेष्वेकलक्ष्मण्यपोहः ॥ ५४ ॥**

ज्ञानमन्यत्तु संप्रोक्तं विज्ञानं तद्विलक्षणम् । व्यावर्तकानुमानादि विज्ञानमिति गृह्यताम् ॥
मान्या भगवती संवित् प्रमाणं ज्ञानमुच्यते । तस्य विश्लेषणं यत्तत् **विज्ञान**मिति कथ्यते ॥

अतो व्यावर्तकानुमानं दुस्त्यजमिति चेत् तत्रापि कथ्यते— **यद्वे**त्यादि । **यद्वा**=अथवा **गन्धादिः**= पृथिवीलक्षणभूतगन्धादिः हेतुः **अप्त्वप्रभृतिविरहितेषु**=अप्त्वादिपृथिवीभिन्नवृत्तिधर्मरहितेषु घटादिषु दृष्टः, **आज्यादौ**=घृतादौ पृथिवीत्वसाधने **अन्वयी**=अन्वयव्याप्तिमानेव स्यात् । तथा च लक्षणं केवलव्यतिरेक्येव भवेदिति न निर्बन्धः, किन्त्वयमन्वयव्यतिरेकी भवेदिति न कापि हानिः । घृतादौ करकादिवत् नैमित्तिकद्रवत्व-सत्त्वात् गन्धस्याप्यनुभवात् घृतं पृथिवी उत जलम्? इति संशये सति 'घृतं पृथिवी, गन्धवत्त्वात्' इति प्रयोगे 'यत्र गन्धवत्त्वम्, तत्र पृथिवीत्वम्, यथा घटे' इत्यन्वयः, 'यत्र पृथिवीत्वं नास्ति, तत्र गन्धवत्त्वं नास्ति, यथा जलादौ' इति व्यतिरेकः। अतो लक्षणज्ञानं सन्दिग्धेष्वितरभेदसाधकं सार्थकं भवेदिति लक्षणवर्णनं सार्थकमेव ॥

नन्वस्त्विदं यथातथा वा । परं तु घृतादिपक्षकानुमितिः पृथिवीत्वसामानाधिकरण्येनानुमितिः । अन्योऽप्यनुमितिभेदोऽस्ति—अवच्छेदकावच्छेदनानुमितिरिति । प्रकृते पृथिवीत्वावच्छेदकावच्छेदेन यद्यनु-मितिः, तदा का गतिः? पृथिवीसामान्यस्य पक्षत्वेनान्वयव्याप्तेरसंभवात् । न चावच्छेदकावच्छेदेनानुमित्य-नङ्गीकारे का हानिरिति शंक्यम्, 'शब्दोऽनित्यः, कृतकत्वात्' इत्याद्यनुमितीनामावश्यकत्वात् । किञ्च एकव्यक्तिमात्रवृत्तिलक्षणानां का गतिः? यथा ब्रह्मणो जगत्कारणत्वं लक्षणमुच्यते । शब्दसमवायि-कारणत्वमाकाशलक्षणमुच्यते । अत्र 'ब्रह्म जीवादिविलक्षणम्, जगत्कारणत्वात्' इत्यत्र सपक्षस्याभावेन अन्वयव्याप्तेरसंभवात् केवलव्यतिरेक्यावश्यक्येवेत्यत्राह—**अयमिवे**त्यादि । **अयमिव**=गन्धादिरिव **एकलक्ष्मणि**=एकमात्रवृत्तिलक्षणे **अपोहः**=इतरव्यावृत्तिः **विमतेषु**=विप्रतिपन्नेषु ज्ञेय इति शेषः ॥

नन्वेतेन किमुक्तं स्यात् किं वौदासीन्यसूचना? वद त्वमेव मेधाविन्! वयं जिज्ञासवोऽत्र ते ॥
न्याय्यमाचार्यकल्पानामौदासीन्यं महात्मनाम् । काकदन्तपरीक्षादितुल्ये व्यर्था विचारणा ॥
कौतूहलं तु यस्य स्यात् करोत्वीदृग्विचारणम् । अन्वेषणादिभावेन, वयमप्यत्र मौनिनः ॥
अनेनैव तु सुज्ञेयं तत्त्वमत्र मनीषिभिः । चिन्तासाफल्यमान्द्येन त्यक्त्वोपरि तु गम्यताम् ॥

**इदमत्रावधेयम्**—सास्नादिमन्तं गां प्रथमं पश्यन् पामरोऽपि तं गवेतराश्वादिसकलविलक्षणमेव पश्यति । भगवताप्युक्तम्='यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम् । भेदश्च विकल्पासहत्वाद् दुर्निरूप इत्युक्तम्—तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात्, जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्' (ब्र.सू.भा.1-1-1) इति । एवञ्च 'अयं गौः अश्वादिविलक्षणः, सास्नादिविलक्षणसंस्थानवत्त्वात्' इति प्रयोगः सर्वेषां स्वरसः । अत्र 'यत्र यत्र सास्नादिविलक्षणसंस्थानवत्त्वम्,

[लौकिकविषयस्य लोकेनैव निर्णयः]

278. भेदोऽबादेर्घटादौ विदित इतरथा त्वप्रसिद्धिः पुरोक्ता
कृत्स्नक्षोण्यन्वितोऽसौ न विदित इति चेत्, पक्षसिद्धिः कथं स्यात्।

तत्र गवेतरभेदः' इति कथमन्वयव्याप्तेः संभवः? सर्वगवां पक्षत्वेन सपक्षाभावात्। किन्तु 'यत्र यत्र गवेतरभेदाभावः, तत्र सास्नादिमत्त्वाभावः, यथा अश्वादौ' इति व्यतिरेक एव प्रदर्शनीयः। न चेदं सर्वं प्रत्यक्षे घटेत, प्रत्यक्षानुभवस्यापह्नोतुमशक्यत्वात्। अनुमाने कथमिति शंक्यम्—परार्थानुमानपरिभाषाया अनभ्युपगमेऽपि 'अन्यस्मै स्वप्रतीतम्' (श्लो.57) इत्यादिना तदर्थस्योपपादयिष्यमाणत्वात्। कथं तर्ह्याचार्याणां केवलव्यतिरेकिनिराकरणमिति चेत्, 'क्वचिदनुपधिकः केवलान्वय्यभीष्टः' (53) इति न्यायेनेति गृह्यताम्। अथवा परिशेषानुमानदृष्ट्येति गृह्यताम्। ईश्वरसाधकपरिशेषानुमानविषयं तदिति वा गृह्यताम्। परिशेषानुमानसाध्यानां श्रुत्यैव सिद्ध्या तादृशपरिशेषानुमानावश्यकता वेदान्तिनां नास्तीति वा गृह्यताम्॥

वृथैतादृशतर्केषु समयो नैव नीयताम्। इति बोधयितुं शिष्यानाचार्याणां प्रवृत्तयः॥
'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥'
इत्युक्तं स्मर्यतां नित्यम् तत्राप्येतद्विचिन्त्यताम्। अन्यदध्ययनं प्राहुः पठनं चान्यदेव हि॥
कालो वृथा यथा न स्यात् तथा ब्रह्म विचिन्त्यताम्। इत्येव सारस्सर्वत्र ज्ञेयं तत्त्वं मनीषिभिः॥

तर्ह्याचार्या वा कथमेवं कालमनयन्निति चेत्, शान्तं पापम्। दुष्टशिक्षणार्थमेवावतीर्णाः खल्वाचार्याः, न हि निन्दान्यायेनैवेदमकुर्वन् वेदवैदिकसंरक्षणाय। 'न देवचरितं चरेत्' इति न्याय एवेतरैरनुसर्तव्यम्। [1]'वेदे संजातखेदे' इति श्लोकोऽत्रानुसंन्धेयः॥

**वस्तुतस्तु**—'विमतं मिथ्या, दृश्यत्वात्, यत् न मिथ्या, तन्न दृश्यम्, किन्तु दृशिः' 'ब्रह्म न वेद्यम्, दृशित्वात्' इत्यादीनां बहूनां प्रयोगानां केवलव्यतिरेकिरूपाणां स्वेच्छया परैः प्रयोगात्, तन्निराकरणमावश्यकम्। न्यायाचार्य **उदयनोऽपि** व्यतिरेकव्याप्तिरन्वयपोषिकेत्येव(कुसु.1) आह। परन्तु परिशेषानुमानं सर्वं केवलव्यतिरेक्येव। एतेन साद्ध्यस्य श्रुत्यैव सिद्ध्या मास्तु परिशेषानुमानमिति वेदान्तिनः। अत इदं सर्वं वेदान्तिदृष्ट्येति भाव्यम्॥

पश्यन्तु तर्कपाण्डित्यमाचार्यस्य ह्यनुत्तमम्। पिशाचानां पिशाचस्य भाषयेत्यादिनीतितः॥
प्रादर्शयन् स्वपाण्डित्यमेवमेते न चान्यथा। एतैस्तु रक्षितो वेदः पश्यन्तु शतदूषणीम्॥ ५४॥

पूर्वश्लोकान्त्यभागसूचितमेव विवृणोति—**भेद** इत्यादि। **घटादौ** पृथिव्याम् **अबादिभेदः**=जलादिभेदः **विदितः**=लोकत एव विदितः। 'घटः जलं वा, तेजो वा, वायुर्वा' इत्यादि संशयः कस्य वा भवेल्लोके?

---

[1]वेदे संजातखेदे मुनिजनवचने प्राङ्नित्यावमाने संकीर्णे सर्ववर्णे सति तदनुगुणे निष्प्रमाणे पुराणे।
मायावादे समोदे कलिकलुषवशाच्छून्यवादेऽविवादे धर्मत्राणाय योऽभूत् स जयतु भगवान् विष्णुघण्टावतारः॥
महाचार्यकृता वैभवप्रकाशिका।

**व्याहारेऽप्येवमूह्यम्; न खलु न विदितं तन्निमित्तं घटादौ**
**नो चेत्, तत्तन्निमित्तव्यवहृतिनियमस्थापनं दुश्शकं ते ॥ ५५ ॥**

**[न्यायशास्त्रस्य स्थानम्]**

279. **विद्यास्थानेषु धर्म्येष्विह यदगणयन् विस्तरं न्यायपूर्वं**
**तत्रापि ह्याक्षपादः स इति न नियतिर्न्यायतत्त्वेऽनुगम्ये ।**

'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इत्यादिकमप्येतदर्थकमेव । **इतरथा**=एवमनङ्गीकारे च=पृथिवीत्वावच्छेदकावच्छेदेनैवेतरभेदानुमितिरावश्यकीत्याग्रहे तु **अप्रसिद्धिः**=साध्याप्रसिद्धिः **पुरा उक्ता**=अनुपदमेव प्रदर्शिता । पृथिवीत्वावच्छेदकावच्छेदेनेतरभेदः न ज्ञातः खलु । तदर्थं केवलव्यतिरेक्यावश्यकीत्याशंक्य समाधत्ते—**असौ**=जलादिभेदः **कृत्स्नक्षोण्यन्वितः**=सकलपृथिवीगतः **न विदितः**=न ज्ञातः इति चेत्, **पक्षसिद्धिः**=पक्षस्यैव प्रसिद्धिः कथं स्यात्? पक्षशब्दस्य सपक्षविपक्षपदसापेक्षत्वात् सपक्षस्यैवाभावात् कथं पक्षस्य सिद्धिः । विपक्षस्य सत्त्वेऽपि, तस्य साध्याभाववत्तया निश्चितत्वेन, तेनैव पक्षेऽपि इतरवैलक्षण्यस्यापि सिद्ध्या सिद्धसाधनम् । किञ्च पृथिवीत्वावच्छेदकावच्छेदेनेति वचने किं नाम पृथिवीत्वम्, न तावज्जातिः, अनुगताकारव्यङ्ग्यत्वाभावात् । आकारव्यङ्ग्या हि जातिः, यथा गोत्वादिः । न तथा पृथिव्यामनुगत एकाकारो वर्तते । पृथिवीपदप्रवृत्तिनिमित्ततया सिद्ध्यतीत्यपि न, संज्ञाशब्दानामपि सत्त्वेन, तावता प्रवृत्तिनिमित्तस्य जातित्वासिद्धेः । अतोऽवच्छेदकावच्छेदेनानुमितेर्न संभवः ॥

नन्वेवमपि व्यवहारस्यापि लक्षणप्रयोजनत्वात् पृथिवीति असंकीर्णव्यवहारस्य इतरभेदसिद्धिमूलकत्वात् इतरभेदानुमानमावश्यकमिति चेन्न, लोकत एव तत्सिद्धिसंभवेनानुमानावश्यकत्वाभावात् । अत एव 'इयं पृथिवीति व्यवहर्तव्या, गन्धवत्त्वात्' इत्यादिकमप्यनावश्यकमित्याह—**व्याहार** इत्यादि । **व्याहारेऽपि**=पृथिव्यादिव्यवहारेऽपि **एवम्**=लोकानुभवानुरोधेनैव ऊह्यम् । तदेव प्रदर्शयति—**न खल्वित्यादि । घटादौ तन्निमित्तम्**=पृथिवीति व्यवहारनिमित्तम् गन्धवत्त्वादि **न खलु न विदितम्**=आपामरपण्डितं सर्वैर्विदितमेव तत्र गन्धवत्त्वम् । को वा जडः 'घटः जलं वा' इति संदिह्यात्? **नो चेत्**=एवं व्यवहारस्यासंकीर्णस्याभावे **तत्तन्निमित्तव्यवहृतिनियमस्थापनम्**=गन्धवत्त्वादिप्रयुक्ततत्तत्पदव्यवहारव्यवस्थापनम् **ते दुश्शकम्** । व्यवहाराणामसंकीर्णानां सत्त्वाद्धि तत्तल्लक्षणमसंकीर्णं निर्वक्तुं शक्यम् । अतो विलक्षणव्यवहाराणां लोक एव प्रसिद्धत्वात्, प्रसिद्धस्थलमादायाप्रसिद्धस्थले इतरभेदानुमानसंभवात्, पूर्वोक्तरीत्या अन्वयव्यतिरेकिणैव निर्वाहात् केवलव्यतिरेकी दुस्साध एव ॥ ५५ ॥

न्यायशास्त्रप्रक्रियाया विरोधमाशङ्क्य समाधत्ते—**विद्यास्थानेष्वित्यादि ।इह विद्यास्थानेषु**='अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥' इति ख्यातेषु चतुर्दशविद्यास्थानेषु **धर्म्येषु**=धर्मादनपेतेषु=धर्मनिर्णयसहकारिषु— 'पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति 'धर्मस्य च स्थानानी'ति परिगणितेषु**न्यायपूर्वं विस्तरम्**=न्यायविस्तराख्यम्**यत्**

**नार्षत्वादि प्रधानं क्वचिदपि यदि वा वार्तिकं क्वापि युक्तं**
**यद्वा नेयं कथञ्चिन्निखिलमपि न किं निर्वहन्त्येवमन्ये ॥ ५६ ॥**

शास्त्रम् **अगणयन्**=गणनां कृत्वा क्रोडीचक्रुः **तत्रापि**=तस्मिन्नपि विषये **अनुगम्ये**=अस्माकमनुसरणार्हे **न्यायतत्त्वे**=श्रीमन्नाथमुनिप्रणीते न्यायतत्त्वाख्ये ग्रन्थे, सतीति शेषः । **सः**=न्यायविस्तरः **आक्षपादः**= अक्षपादप्रणीतः, गौतमस्यैव संज्ञान्तरमक्षपाद इति । अक्षपादप्रणीतः योऽयमद्य प्रसिद्धः स एव इतिन **नियमः,** न ह्यस्ति तादृशं राजशासनम् । ननु गौतमो हि महर्षित्वेन प्रसिद्धः । तदुक्तं कथमप्रमाणं स्यादित्यत्र— **आर्षत्वादीति** । **क्वचिदपि**=कस्मिन्नपि विषये **आर्षत्वादि**=ऋषिप्रणीतत्वादि **न प्रधानम्**= परिग्राह्यत्वे न प्रधानम् ।**वार्तिकम्**=उक्तानुक्तदुरुक्तचिन्तारूपं हि वार्तिकम्**क्वापि**=कुत्रचित्**युक्तम्** स्यात्, न तु सर्वत्र । तर्हि **कात्यायना**दीनामपि त्यागः स्यादिति चेत्, तत्राह— **यद्वेति** । पक्षान्तरं वा भवत्वित्याशयः ।**निखिलमपि**= वेदान्तविरुद्धं सर्वमपि **कथञ्चित् अविरुद्धं नेयम्,** वेदान्तस्याध्यात्मशास्त्रत्वात् । एवं निर्वाहः क्लेशः किलेत्यत्र— **अन्ये**=इतरेऽपि**एवम्**=विरुद्धस्थलेषु कथञ्चिन्निर्वाहम्**किं न निर्वहन्ति,** अपि तु विरोधे प्राप्ते वैभववादः, परानुकरणम्, अनास्थावादः—इत्यादिरीत्या सर्वैरपि अयं क्रम आश्रयणीय एव । अतो न विरोधः॥

अत्रेदमवधेयं स्याद्वैदिकैर्विद्वदुत्तमैः । हन्त! दुर्बलबुद्धीनां बुद्धेः शिक्षा ह्यपेक्षिता ॥
यत आहुर्महात्मानस्तादृशानां हिताय हि । 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ॥
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।' तर्कस्त्वत्यन्तगहनः पञ्चाङ्गो द्विफलो मतः ॥
तस्य स्वरूपशिक्षादिः प्रथमं दृष्टवस्तुनि । मत्वा तु यत्कृतं शास्त्रं तर्कशास्त्रं यदुच्यते ॥
न्यायविस्तरनाम्नाऽपि प्रसिद्धं विदुषां हितम् । निर्दुष्टं तत्स्वविषये प्रमाणादिनिरूपणे ॥
अतःप्रमाणशास्त्रत्वं प्रसिद्धं तस्य वर्तते । यद्वक्तव्यं तूपमानप्रमाणेऽग्रे (श्लो.77,127) भविष्यति ॥
प्रमाणानां चतुष्ट्वं च न्याय्यमित्यापि वक्ष्यते । किन्तु लोकप्रसिद्धानां पदार्थानां विचारणात् ॥
**लोकायतं** तदित्येव संज्ञामाहुर्मनीषिणः । **अक्षपादो गौतमाख्य** एतत्कर्ता प्रकीर्तितः ॥
पदार्थशास्त्रं **काणादं** त्वस्य शास्त्रस्य पूरकम् । लोकप्रसिद्धिमाश्रित्य पदार्थानां विचारणा ॥
असाधारणमस्य स्यादुद्देश्यं नातिरिच्यते । आत्मतत्त्वविचारादिः नैवास्य विषयो मतः ॥
अध्यात्मशास्त्रं नैवैतत् नास्थास्यात्मविचारणे । असंकीर्णप्रमेयत्वाच्छास्त्राणां नैव घर्षणा ॥
न हि निन्दानयेनैव नेये खण्डनमण्डने । न वेदविमुखा आसन्नादौ बौद्धाःस्वमार्गगाः ॥
क्रमात्तु वैदिकान्मार्गात् भ्रष्टाः बुद्धेर्विपर्ययात् । वेदादिसर्वशास्त्राणां खण्डनैकपरायणाः ॥
स्वकीयं न्यायशास्त्रं च पृथगेव विनिर्ममुः । तच्छायया वैदिकाश्च हन्त चक्रुः पृथक् पृथक् ॥
न्यायशास्त्रं स्वानुगुणं कर्तुमारेभिरे क्रमात् । गतानुगतिको लोको न लोकः पारमार्थिकः ॥
इत्येतत्सर्वकालेऽपि समानं हि श्वपुच्छवत् । शक्यं नैवान्यथा कर्तुं युगभेदादिकं विना ॥
युगरूपी कालरूपी भगवानेक एव हि । सर्वं शक्तोऽन्यथाकर्तुं तावत्सह्यं महाजनैः ॥
कथंचित्स्थापयेयुश्चेदास्तिक्ये ते जनान् अलम् । तदर्थं बहुधा यत्नः कदाचित्स्यान्महात्मनाम् ॥

[न्यायावयवाः]

280. अन्यस्मै स्वप्रतीतं प्रकटयति यया वाक्यवृत्त्याऽनुमानं
तत्रोदाहृत्युपेताऽप्यविकलमिह तत् बोधयेन्नोपनीतिः ।
युक्ता तूदाहृतिः सोपनयनिगमना, सप्रतिज्ञादिका वा
वक्तव्या वावदूकैस्तदधिकमपि वा संमतेः स्यात् यथेष्टम् ॥ ५७ ॥

न बुद्धिभेदं ते कुर्युः नराणां मूढचेतसाम् । तदीयमार्गे गत्वैव नयेयुस्तान् स्वकेऽध्वनि ॥
**गुरोस्तु शापशिश्यः स्यादिति** गाथा ततोऽभवत् । किं कुर्युर्गुरवो शिष्यान् विहाय क्वनु यान्तु ते ॥
विद्यास्थानानि सर्वाणि मानान्येव न संशयः । आचार्यवर्यैरेवेयं मर्यादा दर्शिता पुरा(जड.64) ॥
परस्परं च कलहः बौद्धकालादनन्तरम् । बुद्धिर्हि माया सर्वेषां वञ्चितास्ते तयैव हि ॥
अतस्तु तपसान्वेष्यो गुरोर्भावोऽन्तरङ्गगः । अथवा भगवान् सेव्यः श्रद्धया परया सदा ॥
शास्त्रज्ञानं बहुक्लेशमित्युक्तं सर्वदा स्मरेत् । शास्त्रं हि न ग्रन्थरूपं विज्ञानं तन्निगद्यते ॥
'एवं नानाप्रसंख्यानं तत्त्वानामृषयो विदुः । सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥'
इत्येतद्भगवद्वाक्यं गंभीरं सत्यमद्भुतम् । स्मरन्तस्सावधानाः स्युः हिताय जगतां बुधाः ॥ ५६ ॥

न्यायविस्तरशास्त्रे **परार्थानुमान**पदवाच्यन्यायावयवस्वरूपं शिक्षयति—**अन्यस्मै** इत्यादिना । **स्वप्रतीतम्**=स्वेन पूर्वमनुभूतम् **अनुमानम्**=अनुमानरूपम् **यया वाक्यवृत्त्या**=यादृशवाक्यप्रयोगेण **प्रकटयति** कश्चित्, **तत्र इह**=एतादृशे अन्यस्य बोधनेच्छया वाक्यप्रयोगे प्रसक्ते **उदाहृत्युपेता**=उदाहरणेन सहिता **उपनीतिः अपि**=उपनयप्रयोगोऽपि **अविकलम्**=समग्रं यथा तथा **तत्**=अनुमानम् **बोधयेत्**=ज्ञापयेत्, शिक्षयेद्वा । तथोच्यते—'यत्तु स्वयमेव पर्वते धूमं पश्यन् यादृशक्रमेण वह्निमनुमिनोति प्रथमम्, अनन्तरमन्यस्मै कस्मैचित् स्वानुभवक्रमं तथैव प्रदर्श्य, तस्याप्यनुमानं शिक्षितुं कतिपयवाक्यानि यदा प्रयुङ्क्ते; तत् 'परार्थानुमानम्' इति । अत्रत्यः प्रमेयभागः सर्वेषामपि संमत एव । परं तु 'परार्थानुमानम्' इति संज्ञा केवलं सङ्केत इत्यभिप्रायः । अनुमित्यात्मकं ज्ञानं हि सर्वस्यापि स्वार्थमेव किल भवेत् । तत्प्रतिपादकवाक्यश्रवणेन व्युत्पन्नः पुरुषः स्वयमेव तादृशानुभवं प्राप्नोति । तत्र वाक्यप्रयोगः सहकारिमात्रम् । तावता तस्यानुमितिकरणत्वं बहुव्यवहितत्वान्न युक्तमिति सिद्धान्त्याशयः । परं तु वादकेलिषु एतद्वाक्यस्य वादिप्रतिवादिभिः अवश्यं प्रयोगात्, तत्प्राधान्याभिप्रायेण तद्वाक्यसमुदायस्य **न्यायसंज्ञ**कस्य महत्त्वं नैयायिकैरुच्यते ॥

तादृशानि न्यायवाक्यानि कतीत्यत्र विप्रतिपत्तीः प्रदर्शयति—**युक्ते**ति । यद्यपि बौद्धोक्तप्रक्रियया **उदाहृत्युपेता उपनीतिरेव** अनुमित्युपयोगिसर्वार्थप्रतिपादकत्वात् पर्याप्ता । अथापि पक्षसाध्ययोस्साक्षात्संबन्धस्यालाभात् **युक्ता**=औचित्यवती—**सोपनयनिगमना**=उपनयनिगमनवाक्यसहिता **सप्रतिज्ञादिका वा**=प्रतिज्ञावाक्येन युक्ता वा **उदाहृतिस्तु**=उदाहरणवाक्यप्रयोगस्तु **वावदूकैः**=वादकुशलैः **वक्तव्या**=प्रयोक्तव्या । उदाहरणोपनयनमात्रेण साध्यस्य पक्षसंबन्धस्याप्रतीत्या तदर्थं आदौ प्रतिज्ञा वा, अन्ते निगमनं वा आवश्यकम् । तथा च प्रतिज्ञोदाहरणोपनया वा, उदाहरणोपनयनिगमना वा प्रयोक्तव्याः । त्रयस्त्ववयवा

[कथारम्भसमर्थनम्]

281. **कार्यैर्वा कारणैर्वा स्वगुणत उत वा किञ्चिदस्तीति सिद्धं**
**पक्षीकारादियोग्यं, समयनियमितव्यक्तिभेदो न दोषः ।**
**सिद्धान्तास्पृष्टचित्तैरिति खलु पशुभिः पामरैर्वाऽनुमेयम्**
**नो चेत्, रोचेत कस्मै विषमितमनसे वादसंग्रामकेलिः ॥ ५८ ॥**

---

अत्यन्तमावश्यका इत्याचार्याशयः । **वा**=अथवा **संमतेः**=परस्परसमयकरणेन संमतेर्हेतोः **यथेष्टम्**=यथासौकर्यम् यथेष्टम् **तदधिकमपि**= अवयवत्रयादधिकमपि, क्रियाविशेषणं वा, **वावदूकैः**=वादकुशलैः वक्तव्यमिति विपरिणामः । परस्यार्थबोधस्यैव प्रधानोद्देश्यत्वात् अवयवसंख्यानिर्बन्धो न युक्त इत्याशयः । अन्ये तु मध्ये केन, कुतः, कथम्, इत्यादिप्रश्नवाक्यान् क्रोडीकृत्य दशावयवानप्याहुः । एतादृशेष्वल्पविषयेषु विवादपरित्यागो वरमित्याशयः ॥ ५७ ॥

ननु प्रतिज्ञादिप्रयोग एवासंभवी । 'आत्मा नित्यः' इति प्रतिज्ञा यदा क्रियते, आत्मैव नास्तीति वदन् प्रतिवादी प्रतिज्ञामेवाक्षिपेत् । एवं सर्वेष्वपि प्रमेयेषु सर्वतीर्थकाराणां परस्परं विवादात् प्रतिज्ञैव कर्तुमशक्या चेत्, कथं कथाप्रवृत्तिरिति शङ्कां परिहरति—**कार्यैर्वे**त्यादिना । **कार्यैर्वा**=कार्यस्वरूपैर्वा **कारणैर्वा**=कारणस्वरूपैर्वा **उत वा**=अथवा **स्वगुणतः**=तत्तद्वस्तुगतासाधारणगुणधर्मादिभिर्वा **किञ्चिदस्ति**=यत्किञ्चित् अस्तीति व्यवहारादिना **सिद्धम्**=लोकसिद्धं **किञ्चित् पक्षीकारादियोग्यम्**=पक्षत्वेन, सपक्षत्वेन, विपक्षत्वेन निर्देष्टुमर्हं भवति । **समयनियमितव्यक्तिभेदः**=तत्तत्सिद्धान्तैः व्यवस्थापितः पदार्थस्वरूपविशेषः **दोषो न**=प्रतिज्ञादिनिर्देशप्रतिबन्धको न भवति । एतावन्मात्रेण कथाप्रवृत्तिस्संभवेदेव ॥

आत्मनः नित्यत्वं यदा साध्यम्, तदा 'आत्मा नित्यः, अनुत्पन्नत्वात्' इति प्रयोगः कर्तव्यः । 'आत्मैव नास्ति' इति वदता विवादे तथा पक्षनिर्देशः कथं कर्तुं शक्यः? 'शब्दो द्रव्यम्, अवस्थावत्त्वात्' इति प्रयोगे कर्तव्ये, शब्दो गुण इति वदन् प्रतिवादी, 'गुणं पक्षीकृत्योच्यते, उतान्यत्?' इति यदि पृच्छेत्, तदा पक्षस्वरूप एव विवादग्रस्तो भवति । एवमेव शास्त्रकाराणां सर्वेष्वपि विषयेषु विवादात्, पक्षस्य हेतोश्चोभयसम्मतत्वस्यावश्यकत्वात् पक्षनिर्देशस्यैवासंभवे प्रतिज्ञा कथं कर्तुं शक्या? अनन्तरविचारस्सुतरां न शक्यः इति प्रश्नस्याशयः । उत्तरं तु—'आत्मा' इति निर्देष्टुमशक्यत्वेऽपि 'अहम्' इति प्रत्यक्तया प्रतीयमानः' इति, 'अहमित्यनुभूयमानः' इति वा निर्देष्टुं शक्यते । न ह्यनुभव एव नास्तीत्यपलपितुं शक्यम् । एवं 'शब्दः' इति निर्देश एव यदि विकल्पः, तदा श्रोत्रग्राह्यत्वेनोभयसंमताकारेण निर्देशः शक्यः । श्रोत्रेन्द्रियेण शब्द एव नानुभूयत इति न हि वक्तुं शक्यम् । अतो येनाकारेण यद्वस्तूभयसंमतम्, तेनाकारेण निर्देशः शक्यः । तत्तत्सिद्धान्तसङ्केतः नात्र प्रतिबन्धकः । अथवा 'विमतम्' इति उभयोर्विवादविषयो वस्तु पक्षतया निर्देष्टुं शक्यः ॥

अनुभवेऽपि विप्रतिपत्तिः न कर्तुं शक्येति प्रदर्शयति तृतीयपादेन । **इति खलु**=एवं किल, खल्विति प्रसिद्धौ । **सिद्धान्तास्पृष्टचित्तैः**=तत्तत्सिद्धान्तगन्धरहितचित्तैः **पशुभिः**=तत्तुल्यैः **पामरैर्वा**

[आभासोद्धारानावश्यकता]

282. **आभासोद्धारवाक्ये स्वयमिह पठितेऽप्यक्षताऽन्यस्य शङ्का**
**स्याच्चेत्, व्यर्थोपनीतिर्निगमनमपि; ते तत्तदर्थे यदात्थ।**
**तस्मादुद्घाटितानां परिहृतिरुचिता जेतुमिच्छोर्विशेषात्**
**उक्ते माने विमर्शो यदि भवति, परं तत्र तर्कोऽपि वाच्यः ॥ ५९ ॥**

जनैरपि **अनुमेयं वस्तु किञ्चिदस्त्येव,** अन्यथा आहारस्वीकार एव न भवेत्। अतोऽनुभवे विप्रतिपत्तिर्न कार्या। **नो चेत्**=अनुभवेऽपि संमतिर्नास्ति चेत्, **एवं विषमितमनसे**=परस्परवैषम्यपूर्णमनसे **कस्मै वादसंग्रामकेलिः**=वादविवादप्रक्रिया **रोचेत**=सन्तोषाय भवेत्। अनुभवमेवापलपता वादविवादो न कर्तव्य एव। अस्य विषयस्य पूर्तिरुत्तरत्र (श्लो.61) द्रष्टव्या ॥ ५८ ॥

पञ्चावयवप्रयोगानन्तरम्, प्रयुक्ते बाधव्यभिचाराद्यभावप्रकटनमपि कार्यमिति केचन मन्यन्ते। एतादृशवाक्यस्य **आभासोद्धारवाक्यमिति, कण्टकोद्धारवाक्यमिति** वा संज्ञा। परन्त्वस्यावश्यकता नास्तीति प्रतिपादयति—**आभासेत्यादि। आभासोद्धारवाक्ये**='मत्प्रयुक्ते दोषो नास्ति' इति सामान्य-वाक्ये **स्वयं पठितेऽपि**=प्रयोक्त्रा स्वयमेव पठितेऽपि **इह=अस्मिन्** विषये **अन्यस्य**=प्रतिवादिनः **शङ्का**=दोषशङ्का **अक्षता**=न हि क्षीयेत। तावन्मात्रात् दोषोद्धारः स्याच्चेत्, **उपनीतिः**=उपनयवाक्यम् **व्यर्था, निगमनमपि** व्यर्थम्। **यत्**=यस्मात् **ते**=उपनयनिगमने **तत्तदर्थे आत्थ**=बाधादिदोषपरिहाराय त्वं ब्रवीषि। आभासोद्धारे कृतेऽनयोः प्रयोगो व्यर्थ एव। पञ्चावयवैः पक्षसत्त्वसपक्षसत्त्वविपक्षा-सत्त्वासत्प्रतिपक्षितत्वाबाधितत्वानि सूच्यन्त इति हि भवतां घोषः। एवं तर्हि पुनराभासोद्धारवाक्यस्य क्वावकाशः? **तस्मात्**=एवं स्वयमुद्धारप्रयत्नापेक्षया **जेतुम् इच्छोः**=कथायां जिगीषोः **उद्घाटितानाम्**=प्रतिवादिना उद्घाटितानां दोषाणाम् **विशेषात्**=विशेषरूपेण परिहृतिः=परिहारप्रयत्नः **उचिता**=औचित्य-वती। **उक्ते**=एवं परिहारार्थं प्रदर्शिते **माने**=प्रमाणे **विमर्शः**=सन्देहः **यदि भवति,** तदा **तत्र परम्**=एतत्संशयपरिहारविषये तु **तर्कोऽपि वाच्यो** भवति॥

**पञ्चावयव**वाक्यैः पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वासत्प्रतिपक्षितत्वाबाधितत्वानि सूच्यन्ते इति तार्किकाः। प्रतिज्ञाहेतुभ्यां पक्षसत्त्वम्, उदाहरणेन द्विविधेन सपक्षसत्त्वं विपक्षासत्त्वम्, उपनयेनासत्प्रतिपक्षि-तत्वम्, निगमनेनाबाधितत्वं च सूच्यत इति तेऽभिप्रयन्ति। प्रयोक्त्रा एवमभिप्रायेण जागरूकेण प्रयोक्तव्यमित्येव तेषामप्यभिप्रायः। आभासोद्धारवाक्यानि तु नावयवरूपाणि, तदतिरिक्तानि। विशिष्य 'नात्र व्यभिचारः, एवंत्वात्। नापि बाधः, एवंत्वात्, नापि सत्प्रतिपक्षः, असंभवात्' एवंरीत्या प्रतिज्ञाद्यनन्तरं निर्दोषत्वप्रतिज्ञापि कार्येति केचिन्मन्यन्ते। 'स्वबाहुकीर्तिं स्वयमेव गायेत्' इतिवत् स्वयं स्वोक्ते निर्दोषत्वप्रकटणमात्रेण प्रतिवादी किं तूष्णीं तिष्ठेत्? अत एवमाभासोद्धारवाक्यप्रयोगः, तादृशसमयबन्धाभावे विफलः। परन्तु समयबन्ध एव तथा स्यात् चेत्, तदा तद्वाक्यप्रयोगः कर्तव्य एव ॥ ५९ ॥

[तर्कस्वरूपम्]

283. **तर्को व्याप्याभ्युपेतावनभिमतिपदव्यापकस्य प्रसक्तिः**
**मानप्रत्यूहघाती द्विविषय उदितः; पञ्चधाऽऽत्माश्रयादिः ।**
**विश्रान्तिर्वैपरीत्ये प्रतिहतिविरहोऽनिष्टताऽनानुकूल्यं**
**व्याप्तिश्चास्याङ्गम्; एनं कतिचिदनुमितेस्तादृशं भेदमाहुः ॥ ६० ॥**

'तत्र तर्कोऽपि वाच्यः' इति प्रसञ्जितं तर्कं साङ्गं निरूपयति—**तर्क** इति । **व्याप्याभ्युपेतौ**= व्याप्यस्याभ्युपगमे सिद्धे, **अनभिमतव्यापकस्य**=अप्रयोजकशंकाकर्तुः अनभिमतं यत् व्यापकम्, तस्य **प्रसक्तिः**=प्रसञ्जनम् **तर्कः** । 'पर्वतो वह्निमान्, धूमात्' इति प्रयोगे, 'हेतुरस्तु साध्यं मास्तु' इति हेतोरप्रयोजकत्वशङ्का प्रतिपक्षिणा यदि क्रियेत, तदा वादिना 'यदि साध्यं न स्यात्, तर्हि हेतुरपि न स्यात्' इति तस्योत्तरतया तर्क उच्यते । उक्तप्रयोगे धूमो व्याप्यः व्यापको वह्निः । अप्रयोजकशङ्काकर्तुः व्याप्यो धूमः पर्वते संमतः । व्यापको वह्निस्तु नेष्टः । यदि साध्यः व्यापकश्च यो वह्निः न स्यात्, तर्हि व्याप्यो हेतुश्च यो धूमः, सोऽपि न स्यात् इति वक्तव्यम् । अयमेव तर्कः । अत्र हि व्याप्यस्याभ्युपगमे, तदनभिमतस्य व्यापकस्य आपादनं क्रियत इति तर्कस्येदं स्वरूपम् । अयं च तर्कः **मानप्रत्यर्थिघाती**=प्रमाणस्य विरोधे आपादिते, तन्निरुणद्धि, प्रमाणस्य प्रमाणत्वं रक्षतीति तर्कस्य प्रधानं प्रयोजनमित्यर्थः । स च तर्कः **द्विविषयः**=प्रामाणिकपरित्यागाप्रामाणिकस्वीकारापादानरूपविषयद्वयगर्भः । **उदितः**=कथितः । स च तर्कः **आत्माश्रयादिः**=आत्माश्रयादिरूपः **पञ्चधा**=पञ्चविधः । **आत्माश्रयः, अन्योन्याश्रयः, चक्रकम्, अनवस्था, अनिष्टप्रसङ्गश्चे**ति पञ्चविधः । **प्रतिबन्द्यप्यतिरि**क्तः कश्चनेति केचन । परन्तु तस्यानिष्टापादनरूपत्वात् पञ्चमप्रकार एवान्तर्भावः । आत्माश्रयस्योदाहरणम्—'तद्विशिष्टे तु वृत्तौ स्वाधारत्वप्रसङ्गः' (जड.8) घटविशिष्टे भूतले घटोऽस्ति चेत्, स्वस्य स्वाधारत्वप्रसङ्गः । अथवा ज्ञानार्थयोरभेदवादे—ज्ञानवैलक्षण्यं विषयाधीनम् इति चेत् आत्माश्रयः । अन्योन्याश्रयः—रूपरसादिभेदः इन्द्रियाधीनश्चेत्, इन्द्रियभेदस्य विषयाधीनत्वादन्योन्याश्रयः । अत्रैव विषयभेदः बुद्धिभेदाधीन इति योजने, त्रयाणां परस्पराश्रयात् चक्रकम् । अनवस्था—अप्रामाणिकानन्तपदार्थपरंपराकल्पना । **प्रतिबन्दिलाघवगौरवादयो**ऽतिरिक्ततर्करूपभेदा इति केचन ॥

तर्काङ्गान्याह—1) **वैपरीत्ये विश्रान्तिः**=आपाद्यस्य विपर्यये पर्यवसानम् । 2) **प्रतिहतिविरहः**= प्रतितर्कापराहतिः । 3) **अनिष्टता**=आपाद्यस्य परानिष्टत्वम् । 4) **अनानुकूल्यम्**=परपक्षासाधकत्वम् । 5) **व्याप्तिश्च**=आपाद्यापादकयोर्व्याप्तिश्च इति पञ्च । **अस्य**=तर्कस्य अङ्गानि आहुरित्याकर्षः । 'यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इत्यत्र आपादकः वह्न्यभावः, धूमाभावः आपाद्यः । 1) अनयोर्व्याप्तिर्वर्तते— यत्र वह्न्यभावः, तत्र धूमाभाव इति । 2) आपाद्यस्य विपर्यये पर्यवसानम् । पर्वते खलु धूमः प्रत्यक्षसिद्धः। 3) प्रतिवादिनोऽनिष्टः, 'धूमोऽस्तु' इति खलु वदति सः । 4) परपक्षाननुकूलत्वं तु स्पष्टमेव । 5) एवं प्रतितर्केणापराहतिश्चावश्यकी । 'वह्निर्यदि न स्यात्, तर्हि धूमोऽपि न स्यात्' इति तर्के प्रदर्शिते, 'कुतो

**[कथानधिकारविवरणम्]**

**284. यस्सर्वं नाभ्युपेयात्? स्वपरमतविदा केन किं तस्य साध्यं**
**प्रश्नोऽसावुत्तरं नः कथमनधिकृते कल्पनीयाः कथाः स्युः।**
**मध्यस्थोऽप्येतदेवं यदि न न मनुते, योजयेन्नात्र वादम्**
**नो चेत्, माध्यस्थ्यहानिः; परमनधिकृतिस्तत्र शिष्याय वाच्या॥ ६१॥**

---

न स्यात्?' इति पुनस्तेनोक्ते, 'यदि वह्न्यभावेऽपि धूमः स्यात्, तर्हि कारणं विनापि कार्यं स्यात्, धूमः खलु वह्निजन्यः' इति कार्यकारणभावरूपस्यानुकूलतर्कस्य सत्त्वात् प्रतितर्कपराहतिः वर्तते। एवं पञ्चाङ्गानि ज्ञेयानि॥

अत्र मतभेदमाह—**कतिचित्**=बौद्धैकदेशिनः नवीनाः **एनम्**=तर्कम् **अनुमितेः तादृशम्**=तर्करूपं भेदम् आहुः। अनुमितिस्तूद्देश्यविधेयवती, तर्कस्तु आपाद्यापादकभाववान्। एवं सति तर्कः अनुमितिविशेषरूपः कथं स्यात्? इत्यत्र—**तादृश**मिति। आपाद्यापादकयोः एवं हेतुसाध्यभावापन्नत्वेन तर्कोऽप्यनुमितिविशेष एव। प्रतितर्कपराहतिः स्याच्चेत्, अलम्। किमधिकापेक्षया **अतस्तर्कोऽपि** अनुमिति-विशेषरूपः, अत एव स्वतन्त्रं प्रमाणमिति ते मन्यन्ते। प्रमाणस्य वस्तुप्रदर्शनफलत्वात्तर्कस्यातथात्वादेतन्न युक्तमित्यत आहुरिति॥

**वस्तुतस्तु**—तर्को नानुमितिः, किन्त्वनुमानाङ्गम्। अनुमितिर्हि फलरूपा, तर्कस्तु न फलरूपः, किन्तु साधनाङ्गमेव। प्रमाणं तु त्रयम्, चत्वार्येव वा, नातिरिक्तम्। तर्कस्तु प्रमाणानुग्राहक एव॥ ६०॥

एवं साङ्गं सत्तर्कं निरूप्य, दुस्तर्कावलम्बे कर्तव्यमाह—**य** इत्यादि। **यः** कश्चित् सर्वापलापवादी **वैतण्डिकः** कथोपक्रमे समयबन्धवेलायाम् **सर्वम्**=प्रमाणप्रमेयादिकं किञ्चिदपि **नाभ्युपेयात्**=नाङ्गीकुर्यात्, तादृशः कश्चित् जल्पार्थमाह्वयेच्चेत्, **तस्य**=तादृशस्य वैतण्डिकस्य कृते, अथवा देशभाषादृष्ट्या तस्मै **स्वपरमतविदा**=स्वपक्षपरपक्षविभागज्ञानादिमता **केन**=कीदृशेन **किं साध्यम्**=कर्तव्यम्? **असौ प्रश्नः** विनीतस्य कस्यचित्। **अत्र नः**=अस्माकम् **उत्तरम्**। किमिति? **अनधिकृते**=अर्हतारहिते सति कस्मिंश्चित् **कथाः**=वादजल्पादयः **कथम्**=केन प्रकारेण **कल्पनीयाः**=कर्तव्याः **स्युः**? अतस्तत्र सभायामेव तस्य कथानधिकारं सप्रमाणं प्रदर्शनीयम्। **मध्यस्थोऽपि**=कथासाक्षिभूतोऽपि **एतत्**=कथायां तस्यानधिकारम् **न न मनुते यदि**=वादानधिकारं यदि न जानाति **तदा अत्र**=अस्मिन् प्रकरणे **वादं न योजयेत्**=न कुर्यात्। **नो चेत्**=मध्यस्थोऽप्येतत् नाङ्गीकरोति चेत् **माध्यस्थहानिः**=तस्य माध्यस्थ्यस्यैव हानिः। अस्तु माध्यस्थस्य हानिः, अस्माभिः किं तदा कर्तव्यमित्यत्र—**परम्**=किन्तु तस्य **अनधिकृतिः**=केवलवैतण्डिकस्य कथायाम् अनधिकारः **शिष्याय**=आप्ताय, इतरतटस्थजनेभ्यश्च **वाच्या**=उपपादनीया॥

किमर्थं तर्हि महर्षिणोपदिष्टा **वितण्डा**? इति चेत्, न जानीषे ऋषीणां मनः। ते किल जल्पमपि नाङ्गीचक्रुः, किन्तु केवलं वादम्, यतस्तत्त्वबुभुत्सुकथा वादः। **जल्पवितण्डे द्वे अपि स्वपक्षरक्षणार्थम्**, न

[कथास्वरूपादिवर्णनम्]

285. निर्दिष्टा व्युत्थितोक्तेर्विततिरिह कथा; सा त्रिधा; तत्र वादः
कर्तव्यो मानतर्कैरभिमतिनियतैस्तत्त्वसिद्ध्यै विरागैः ।
जल्पाख्याऽन्या जयार्था भवति कथकयोः साधनाक्षेपवत्त्वे
सैव प्रोक्ता वितण्डा त्यजति परमते साधनम्; तां द्विधैके ॥ ६२ ॥

वा किञ्चिदर्थनिर्णयार्थम् । अत एव माहर्ष सूत्रम्='तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे, बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्' (न्या.सू.5-2-50) इति । वितण्डाद्युपयोगं प्रदर्शयति **न्यायमञ्जर्यां भट्टजयन्तः**— 'यदि हि क्वचिदाश्रमे सुखमासीनमनेकशिष्यगणोपास्यमानं रहस्यतत्त्वमुपदिशन्तं शान्तमानसमाचार्यमनार्यः कश्चित् विपश्चिदागत्य दुरधिगतकतिपयाक्षरचयजनितगुरुतरगर्वगद्गदया गिरा 'भोस्तपस्विन्! किं व्याख्यायते?' 'हुम्! आन्वीक्षिकी! सरलमतिप्रियेयं विद्या । क्व वेदाः! क्व वेदप्रामाण्यम्! क्वात्मज्ञानम्! क्वापवर्गः!' इत्यादि मन्दं मन्दं विहस्य दुष्टमेघ इव प्रकटिताकाण्डदण्डकाशदम्बरविस्तारिताश्रममृगवर्गमुद्ग्राहयन्नाकुलयति, तदा जगज्जालमिन्द्रजालपण्डितविलसितमिति जानन्नप्याचार्यः यदि तमुपेक्षते तिरस्करोति, सद्यस्सम्यक्साधनाप्रतिभासेऽपि यदि छलवितण्डादिभिरेनं न शमयति, तदा तस्मिन् गते तत उत्थाय शिष्यगणा ब्रूयुः—'कष्टमस्थाने क्लिष्टाः स्मः' इत्यादि । अधिकरणसारावल्यामपि='भूयः किं वीतरागो वदति परपरीवादमत्रेत्ययुक्तम् । प्रख्यातप्राच्यनैकप्रतिसमयभवन्मन्दसन्देहशान्त्यै' (अधि.सा.2-2-1) इति । अधिकं समनन्तरश्लोके ॥ ६१ ॥

कथाप्रसङ्गात्तां निरूपयति—**निर्दिष्टेत्यादि** । **व्युत्थितोक्तेः वितति:**=व्युत्थितयोः=विरुद्धतयोत्थितयोः या उक्तिः वाक्यसंदर्भः, तस्या विततिः=विस्तरः इह=एतच्छात्रे **कथा निर्दिष्टा** । **सा त्रिधा**—वादः, **जल्पः, वितण्डेति** त्रिप्रकारा । तत्र वादः अभिमतिनियतैः=वादिप्रतिवादिभ्यां प्रमाणत्वेनाङ्गीकारेण व्यवस्थितैः **मानतर्कैः**=प्रमाणैस्तर्कैश्च **विरागिभिः**=रागद्वेषरहितैः **तत्त्वसिद्ध्यै**=तत्त्वनिर्णयार्थम् **कर्तव्यः** । अत एवात्र जयपराजयाद्युद्देशो न भवति । **अन्या च जल्पाख्या**=जल्पसंज्ञिका कथा **कथकयोः साधनाक्षेपवत्त्वे**= स्वपक्षसाधनपरपक्षनिराकरणप्रधानत्वे **जयार्था**=विजयप्रधाना, अत एव तत्त्वबुभुत्साऽप्रधाना भवति । **सैव**= जल्पकथैव **परमते**=परपदं वैतण्डिकपरम्, परपक्षे **साधनं त्यजति**=वादिनो मतमात्रं दूषयति, न तु स्वपक्षं साधयति वैतण्डिकः । इयं कथा **वितण्डा प्रोक्ता** । **ताम्**=वितण्डां **एके द्विधा मन्यन्ते**=वीतरागवितण्डा विजिगीषुवितण्डेति द्विप्रकारां मन्यन्ते॥

एतादृशकथादीनां स्वरूपलक्षणादि न्यायसूत्रभाष्यवार्तिकादौ विस्तरेणावर्णि 'प्रमाणतर्कसाधनोपालंभः सिद्धान्ताविरुद्धः पञ्चावयवोपन्नः पक्षप्रतिपक्षपरिग्रहो वादः' (न्या.सू.1-2-1) 'यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालंभः जल्पः' (2) 'स प्रतिपक्षस्थापनाहीनो वितण्डा' (3) 'तत्त्वाध्यायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्' (4-2-50) इत्यादौ । त्रिषु तत्त्वनिर्णयैकलक्ष्यत्वाद्वाद

[वितण्डायाः शिक्षणम्]

**286. कर्तव्यत्वेन यत्तु प्रमितिपरवशैः कल्पितं स्वेच्छया वा**
**यच्चाकर्तव्यमेवं, परिभवनपदं तत्प्रहाणग्रहौ स्तः ।**
**स्वाचारद्यूतसंयत्प्रभृतिषु च तथा स्वीकृतेयं व्यवस्था**
**नैनामीषत् वितण्डाऽप्यलमतिपतितुं साधनांशोज्झिताऽपि ।। ६३ ।।**

एक एवोपादेयः । अत एवागायि='वादः प्रवदतामहम्' (गी. 10-32) इति । अभाषि च 'तत्त्वनिर्णयाय प्रवृत्तो वादो यस्सोऽहम्' इति । **न्यायपरिशुद्धौ** च कवितार्किकसिंहैः अनुमानाध्याये बहुविस्तरेणैतादृशा विषया अवर्णिषत । वितण्डानां द्वैविध्यं केचिदाहुः । अत्र पूर्वोद्धृतं न्यायमञ्जरीप्रकरणमत्र द्रष्टव्यम्।।

बौद्धदुर्वासनाक्रान्तचेतसां हन्त ! वादिनाम् । **श्रीहर्ष**प्रमुखानां या कथासीत् कलिवैभवात्।।
हयास्यरूपैराचार्यैर्वेदरक्षापरायणैः । कवितार्किकसिंहैस्तु वारितः कलिरीदृशः ।।
एतादृशकथानां तु कथैवाद्य वृथा सताम् । अतो वृथाश्रमस्तत्र न कर्तव्यो मनीषिभिः।।
धर्मो नष्टो तथा ज्ञानं तपो नैवास्ति कुत्रचित् । दृश्यन्ते हन्त सर्वत्र प्रायः स्वार्थपरायणाः।।
ख्यातिर्लाभश्च पूजा च जातास्तूपास्यदेवताः । प्रायस्समेषां विप्राणां जगदाचार्यमानिनाम्।।
भगवानपि सर्वात्मा किं वा कुर्याच्च सर्ववित्? दयामयः शक्तिमयः सर्वदेवमयश्च सः।।
प्रभो! पश्य भवद्विश्वं भारतं तु विशेषतः । कुरु त्वमस्मान् धर्मैकनिष्ठान् त्वन्मुखसंभवान् ।
उपेक्षसे कथं न्वस्मान् प्रपन्नान् पाहि नः प्रभो ! त्वत्सेवैकरतान् शीघ्रं कुरु लोकहिताय च ।। ६२ ।।

श्रीमन्त एत आचार्याः तत्काले खण्डनकारानुयायिभिः प्रवर्तितं क्रमं साक्षादेव पश्यन्तः ताम-व्यवस्थामपि शिक्षयितुं प्रयतन्ते— **कर्तव्यत्वेने**त्यादिना । **प्रमितिपरवशैः**=प्रमाणाधीनैः सभ्यैः वादिप्रतिवादिभिः संप्रदायानुसारेण वा, **स्वेच्छया**=तत्कालानुरोधेन नूतनप्रक्रियया वा **कर्तव्यत्वेन**=अनुसर्तव्यत्वेन कथारंभ एव **यत्तु** नियमादिकं **कल्पितम्**, एवम् **यच्च अकर्तव्यत्वेन कल्पितम्**, अनयोरेव **'समयः'** इति संज्ञा । **तत्प्रहाणग्रहौ**=तयोः कर्तव्यत्वेन, अकर्तव्यत्वेन चाङ्गीकृतयोः मध्ये कर्तव्यस्य प्रहाणम्, अकर्तव्यस्य ग्रहश्च **परिभवपदम्**=पराजयविषयौ **स्तः**=भवत एव । पक्षद्वयस्यापि पराजयकारणत्वं समानमिति सूचनायैक-वचनम् । एतावदपि यदि नानुस्रियते, तर्हि तस्य सभ्यतैव गलिता स्यात् । इयं व्यवस्था जल्पकथायामेवेति मन्तव्यम्, न तु वादकथायाम् । वादे जयपराजययोः, निग्रहस्य वा निषेधात् । सर्वजनसंमतेयं व्यवस्थेति प्रदर्शयति— **स्वाचारद्यूतसंयत्प्रभृतिषु**= स्वाचाराः तत्तत्कुलाचाराः, द्यूतानि=पणबन्धपूर्वकक्रीडाः प्रसिद्धाः, **संयत्**=तस्करादेः निगलस्थापनादि एतादृशेष्वपि लौकिकव्यवहारेषु, 'बद्धे कीलितसंमतौ' इत्यमरः । **इयं व्यवस्था च**=कर्तव्यत्वाकर्तव्यत्वरूपव्यवस्था च **तथा**=सर्वैरनुसर्तव्यत्वेन **स्वीकृता**=सर्वैरप्यङ्गीकृता । कुलाचाराद्भ्रंशादौ ग्रामाद्बहिः स्थापनादि तत्काले आसीत् । एवं द्यूतादावपि व्यवस्थास्सन्ति । एवं निगळस्थापनादावपि सर्वसंमता व्यवस्थास्सन्ति । लौकिककार्येष्वप्येवं व्यवस्थाया अवश्यं पालनीयत्वे, तत्त्वनिर्णयप्रधानकथासु परं कथं व्यवस्था न स्यात्?

[निग्रहस्थानानि]

**287. सद्दोषोक्त्या कथायां परपरिभवनं स्वोक्तहान्यादिनाम्ना**
**तत्त्वाबोधस्य लिङ्गं विविधमकथयन्निग्रहस्थानमाप्ताः ।**
**तत्राचोद्यानुयोगं द्विविधमशकनासिद्धिभेदादवोचन्**
**पूर्वो जातिः परस्तु च्छलमनृतवचः स्यादकालग्रहश्च ॥ ६४ ॥**

ननु भोः! इदं सर्वं वादजल्पयोरेव, न वितण्डायाम् । 'प्रतिपक्षस्थापनाहीनो वितण्डा' इत्येव किल लक्षणम् । अस्माकं स्वपक्ष एव नास्त्यन्यत् परपक्षनिराकरणादृते । अतो भवदुक्तं नास्माकमन्वेतीति चेत्, तत्राह—नैनामित्यादि । **साधनांशोज्झितापि**=स्वपक्षसाधनरूपांशवर्जितापि वितण्डा **एनाम्**=उक्तव्यवस्थाम् **अतिपतितुम्**=उल्लंघितुम् **ईषदपि नालम्**=न समर्था ॥

**अयमाशयः**—'स प्रतिपक्षस्थापनाहीनो वितण्डा' इति समग्रं सूत्रम् । 'सः=जल्पः' इति भाष्यम् । तेन जल्पे विद्यमानानि 'प्रमाणतर्कसाधनोपालंभः, सिद्धान्ताविरुद्धः, पञ्चावयवोपन्नः, पक्षप्रतिपक्ष-परिग्रहः' इत्यादीनि विशेषणान्यत्रापि सन्त्येव । एवं सति परपक्षनिराकरणैकव्यग्रः, तदीयपक्षप्रश्नप्रसक्तौ 'वयं तु निर्गुणेऽनिर्वचनीये ब्रह्मणि भारं निक्षिप्य सुखमास्महे' इत्याद्युद्गारमात्रेण तृप्यन् स प्रामाणिकपण्डित एव न स्यादित्याशयः ॥

बौद्धागमानां वेदानां समं प्रामाण्यमुद्गिरन् । तदात्वे वैदिकत्वेन कथं ज्ञेयो भवेद्बुधैः ॥
तद्ग्रन्थं शतदूषणीं च विबुधाः पश्यन्तु निर्मत्सराः मानामानविवेचनेऽतिचतुराः वेदप्रियाः पण्डिताः ।
**विद्यारण्यमुनौ** वदत्यपि हि तं श्रीशङ्करार्यैर्जितं हन्ताद्यापि न तं त्यजन्ति किल ते वैतण्डिकाग्रेसरम् ॥ ६३ ॥

कथाशेषभूतानि निग्रहस्थानानि निरूप्यन्ते—**सद्दोषे**त्यादि । **कथायाम्**=जल्पवितण्डारूपायां, वादे निग्रहस्थानाभावात्, **सद्दोषोक्त्या=सतः**=विद्यमानस्य **दोषस्य**=पराजयहेतुभूतस्य प्रतिज्ञाहान्यादेः **उक्तिः**=उद्धाटनम्, तया अविद्यमानस्य दोषस्योद्धाटने उद्धाटयितुरेव निरनुयोज्यानुयोगरूपनिग्रहसंभवात् **'सत्'** इत्युक्तम् । **परिभवनपदम्**=प्रतिवादिपराजयहेतुभूतं यत्, तादृशम्, निग्रहस्थानसदृशं पदं 'परि-भवन' पदम्, **तत्त्वाबोधस्य लिङ्गम्**=तत्त्वस्य अबोधस्य=अज्ञानस्य=लिङ्गम्=सूचकम् **स्वोक्तहान्यादि-नाम्ना**=प्रतिज्ञाहान्यादिसंज्ञया **विविधम्**=एकविंशतिविधम्, अधिकं वा **आप्ताः**=गौतमादयः **अकथयन्** न्यायविस्तराख्ये शास्त्रे । प्रतिज्ञाहान्यादयः अपसिद्धान्ताः निग्रहस्थानभेदाः एकविंशतिविधाः न्यायसूत्र-भाष्यादिषूक्ताः, प्रत्येकं विवृताश्च । **तत्र**=एकविंशतिविधनिग्रहस्थानमध्ये **अचोद्यानुयोगम्**=निरनुयोज्या-नुयोगम् **अशकनासिद्धभेदात्**=असामर्थ्यम्, असिद्धिश्चेति द्विविधम् **अवोचन्** । आद्यं दोषे सत्यप्युद्भावन-सामर्थ्याभावरूपम्, द्वितीयं तु साम्यर्थ्ये सत्यपि दोषानुद्भावनरूपम् । **पूर्वः**=असामर्थ्यरूपः निरनुयोज्या-नुयोगरूपः **जातिः**=समनन्तरश्लोके प्रतिपाद्यमाना असदुत्तररूपा भवति । **परस्तु**=असिद्धिस्तु **छलम्**= समनन्तरश्लोके वर्ण्यमानम्, **अनृतवचः**, **अकालग्रहश्च**=अप्राप्तकालोद्धाटनरूपश्च भवति । एतद्विस्तरस्तु न्यायभाष्यवार्तिकन्यायपरिशुद्ध्यादौ द्रष्टव्यः ॥

[जात्यादिनिरूपणम्]

288. जातिः स्वव्याहता वाक्; उपधिनियतिभिर्भिद्यतेऽनेकधा सा
युक्तत्यागस्त्वयुक्तग्रहणमविषये वृत्तिरप्यत्र दोषाः ।
स्वव्याघातोऽनुवृत्तश्छलमपि वचसां कल्पितार्थे निषेधः
तत्तद्वृत्तिप्रभेदादिदमपि विविधं विस्तरेणालमत्र ।। ६५ ।।

आचार्याणां कालदेशौ तथाऽऽस्तां कलिवैभवात् । वेदबौद्धागमानां च साम्यमुद्घोषितं तदा ।।
सम्यक् स्पष्टमिदं भूयात् **खण्डनग्रन्थ**दर्शनात् । सर्वमेतन्निराकार्षीत् कवितार्किककेसरी ।।
स्थापयामास वेदानां प्रामाण्यं परिपूर्णतः । प्रादुर्भूतं धर्मराज्यं वेदप्रामाण्यरक्षणात् ।।
अतो वादकथानां तु स्वरूपमतिविस्तरात् । अवर्णि परमाचार्यैः कवितार्किकतल्लजैः ।।
एतादृशानां त्वर्थानां सर्वथाद्यानपेक्षणात् । उदासि सर्वथा व्यर्थकालयापनभीतितः ।।
धर्मो हीनः कलिर्वृद्धः विज्ञानं कुत्र वा गतम् । एतादृशस्थितौ ज्ञानं कथं जीवेद्विचिन्त्यताम् ।।
सर्वं तु दूरतस्त्यक्त्वा सर्वैरात्महितेप्सुभिः । ज्ञानं विशुद्धं संपाद्यं कथञ्चिद्देवसंश्रयात् ।। ६४ ।।

'पूर्वो जातिः परस्तु छलम्' इत्युक्तं विवृणोति—**जातिरित्यादि** । **स्वव्याहता वाक् जातिः**= स्वस्यैव निग्रहपर्यवसायि उत्तरं जातिरित्युच्यते । वादिना किञ्चिदर्थसाधनाय न्यायप्रयोगे कृते, तस्य समीचीनमुत्तरं दातुमशक्तः प्रतिवादी स्वस्य पराजयं स्वीकर्तुमशक्तः यत्किञ्चिदुत्तरं यदि ब्रूयात्, तदा तेनैवोत्तरेणायं निगृहीतो भवति । अत एव 'स्वव्याघातमुत्तरं जातिः' इत्याद्युच्यते । अत्रोत्तरदातुरशक्तिः प्रकटिता भवति । यथा 'शब्दः अनित्यः, प्रयत्नानन्तरभावित्वात्' इति प्रयोगे शब्दस्य नित्यत्वं मन्वानः, उत्पत्तेः पूर्वं शब्दः प्रयत्नानन्तरभावी न भवत्येव । उत्पत्त्यनन्तरं हि तद्ज्ञायेत । अतश्च 'शब्दः नित्यः, प्रयत्नानन्तरभावित्वाभावात्' इति प्रतिवादी यदि वदेत्, इदमुत्तरं न समीचीनम्, असदुत्तररूपम् । प्रयत्नानन्तरभावित्वं लोकदृष्टं यदा हेतूकृतम्, तदा शब्दस्योत्पत्तेः पूर्वं तन्नास्तीति स्वपक्षं शब्दनित्यत्वं मनसि कृत्वोच्यते । अत इदमुत्तरं प्रतिवादिनोऽशक्तिमेव सूचयतीति अप्रतिभारूपनिग्रहस्थाने पर्यवसानम् । अतश्च निग्रहस्थानानि साक्षान्निग्रहप्रयोजकानि, जात्यादीनि परंपरया निग्रहप्रयोजकानीति विशेषः । एतद्विस्तरः न्यायशास्त्रे पञ्चमाध्यायप्रथमाह्निके द्रष्टव्यः । **सा**=जातिः **उपधिनियतिभिः**=भेदकोपाधीनां भेदात् **अनेकधा भिद्यते** । न्यायसूत्रे (5-1-1) चतुर्विंशतिधा जातिः परिगणिता । परन्तु सूक्ष्मपरिशीलने तु ततोऽप्यधिकं वक्तुं शक्यमित्यादिकं **न्यायपरिशुद्धौ** द्रष्टव्यम् । अत्र जातौ मूलभूता दोषास्तु **युक्तत्यागः**=युक्तस्याङ्गस्य त्यजनम्, **अयुक्तग्रहणम्**=अयुक्ताङ्गस्वीकारः, **अविषये वृत्तिरपि**=विषयं परित्यज्यान्यत्र वर्तनम् इति त्रयो दोषाः । सर्वत्र **स्वव्याघातः अनुवृत्तः**=अनुगतः, तस्य सामान्यलक्षणत्वात् । **छलमपि वचसां**= वादिवाक्यानाम् **कल्पितार्थे**=स्वेन कल्पिते अर्थे **निषेधः**=बन्धनम् । यथा 'आकारो ह्रस्वः, कीर्तिस्तु महती'ति वादिना शरीराकृत्यभिप्रायेणाभिधाने, प्रतिवादी, 'आकारस्य ह्रस्वत्वं कथम्?' इति वर्णार्थकत्वं स्वीकृत्य तं प्रतिषेधति । इदमेव छलम्—वादिप्रतिवादिनोः प्रतिभादिप्रदर्शनरूपम् । **इदमपि**

[षट्पक्षीनिरूपणम्]

289. **यस्मिन् मानप्रवृत्तिस्तदिदमशरणैरभ्युपेत्यं हि सर्वैः**
**व्याघातो यत्र दृष्टस्तदपि न शरणं साधने दूषणे वा ।**
**इत्थं सिद्धे कथानां रहसि कथकयोस्सावधानत्वभूम्ने**
**षट्पक्ष्यन्तासदुक्तिः परिषदनुमता रुद्धरोधावकाशा ।। ६६ ।।**

छलम् तत्तद्वृत्तिभेदात्=मुख्यवृत्त्युपचारवृत्त्यादिभेदात् **विविधम्**=अनेकविधम् । **अत्र**=अस्मिन् ग्रन्थे **विस्तरेण अलम्**=मास्तु विस्तरः, न्यायसूत्रभाष्यवार्तिकादौ (5-1-1) न्यायपरिशुद्धौ च निरूपितत्वादित्याशयः ।। ६५ ।।

कथाया विराममर्यादां वर्णयति— **यस्मिन्नित्यादि** । **यस्मिन्** विषये **मानप्रवृत्तिः**=प्रमाणस्य प्रवृत्तिः भवति तदिदं प्रमेयं हि **अशरणैः**=गत्यन्तररहितैः **सर्वैः**=सभ्यैः वादिप्रतिवादिमध्यस्थपारिषदैः **अभ्युपेत्यम्**=अङ्गीकरणीयम् । एवम् **यत्र व्याघातः**=असदुत्तररूपो जातिप्रयोगादिः **दृष्टः**=मध्यस्थेन गृहीतः, तावता **तदपि**=तावन्मात्रमपि **साधने दूषणे वा**=प्रसक्तविषयस्य निर्धारणे परित्यागे वा **न शरणम्**=न पर्याप्तः । जल्पकथाया विजयैकप्रयोजनत्वेन तत्त्वनिर्णयासंभवात् एवम् । तथोक्तं **न्यायपरिशुद्धौ**=‘अत्र (वादे) च बुद्धिपूर्वदुष्टवचनानि न संभवन्ति, अन्यान्युद्भावितान्यभ्युपगन्तव्यानि, तत्त्वनिर्णयाय प्रवृत्तत्वात् । विजिगीषुकथायां तु गत्यन्तरमलभमानस्य परव्यामोहनेनापि पाक्षिकविजयः, समत्वं वा संभवेदिति बुद्धिपूर्वकदुष्टप्रयोगसंभवः’ (न्या.प.अनु.2) इति । **कथानाम्**=जल्परूपाणां कथानाम् **रहसि**=रहस्ये **इत्थम्**=एवंरीत्या **सिद्धे**=निश्चिते सति, विजिगीषामात्रप्रधानत्वाज्जल्पस्य मोहकछलदुर्युक्त्यादीनामनिवार्यत्वे सिद्धे **कथकयोः**=वादिप्रतिवादिनोः **सावधानत्वभूम्ने**=पुनःपुनः सावधानत्वाय **रुद्धरोधावकाशा**=रुद्धः=प्रतिरुद्धः रोधस्य=वाक्यार्थविरामस्य अवकाशः यत्र, तादृशी **असदुक्तिः**=जात्युत्तरादिः । **षट्पक्ष्यन्ता**=वादिनस्त्रिवारम्, प्रतिवादिनस्त्रिवारमित्यवकाशस्य मध्यस्थेन दानात् षट्पक्षपर्यन्ता **परिषदनुमता**=**परिषदा**=जल्पसभया अनुमता । अनन्तरं तु सभा विसर्जनीयेत्यर्थः ।।

**जल्पस्तु** विजिगीषुकथा । सा च स्वपक्षस्थापनार्था, परपक्षनिराकरणार्था चेति द्विविधा । तत्र तत्त्वनिर्णय आकस्मिक एव, अन्यतरविजयस्यैव प्रधानोद्देश्यत्वात् । एवं वादिप्रतिवादिनोः कथायां वर्धमानायाम् कश्चिदन्यतरः असदुत्तरं यदा ददाति, तदाऽन्येन तदनुद्भावने, समयबन्धानुसारेण पराजयो वा विरामो वा घोषणीयः, असदुत्तरपर्यनुयोज्योपेक्षणात् प्रतिवादिनो वा निग्रहात् । एवमसदुत्तरदानात् निग्रहप्राप्त्या कथासमाप्तिर्मध्यस्थेन घोषणीया । परन्तु भ्रमप्रमादयोस्सहजत्वदृष्ट्या उभयोरपि स्वस्वदोषशुद्धये परिषदनुमोदनेन त्रित्रिवारमवकाशो दीयते मध्यस्थेन । तावत्येवान्यतरेण दोषो यदि परिह्रियते, तदान्यस्य पराजयं घोषयित्वा सभा विसर्जनीया । यदि त्रित्रिवारमवकाशदानेऽपि उभावपि स्वदोषं परिहर्तुं न शक्नुतस्तदा जयपराजयनिष्कर्षमन्तरैव कथा समापनीया । पक्षद्वयस्यापि त्रित्रिवारावकाशदानात् ‘षट्पक्षी’ इति संज्ञा । एवं कक्ष्याभेदेन पञ्चमकक्ष्यायां वा अन्ततः षष्ठकक्ष्यायां वा विरामः ।। ६६ ।।

[शाब्दस्यातिरिक्तत्वम्]

290. **वाक्यार्थो यस्त्वपूर्वो न खलु किमपि तद्व्याप्यमस्मिन् पदादौ**
**साङ्गत्यं बोधकत्वादधिकमनुमितौ ग्राह्यमत्रैतदेव ।**
**वक्तृज्ञानानुमानादिकमपि न भवेत् अन्ततो व्याप्त्यभावात्**
**तत्तल्लिङ्गप्रतीतावपि मतिजननात्; वक्त्रभावाच्च वेदे ॥ ६७ ॥**

एवं साङ्गां सपरिकरां चानुमितिं निरूप्य क्रमप्राप्तां शाब्दीं प्रमितिं निरूपयितुमुपक्रममाणः प्रथमं तस्या अतिरिक्तत्वं साधयति—**वाक्यार्थ** इत्यादि । **यस्तु वाक्यार्थः**=परस्परान्वितपदार्थविषयकः वाक्यजन्यो बोधः सः **अपूर्वः**=न पूर्वदृष्टवस्तुविषयकस्मृतिरूपः । **एवम् अस्मिन् पदादौ किमपि**=पदत्वादिरूपं **तद्व्याप्यम्**=बोधौपयिकरूपविशिष्टहेतुरूपं च **न खलु** भवति । शाब्दबोधे वाच्यवाचकभावरूपं बोधकत्वं पदपदार्थयोस्संबन्धः । अनुमितौ तु बोधकत्वात् **अधिकम्**=अतिरिक्तम् व्याप्यव्यापकभावरूपं **साङ्गत्यम्**=संबन्धः । **अत्र तु** शाब्दबोधे तु **एतदेव**=बोधकत्वमेव **ग्राह्यम्**=संबन्धतया ग्राह्यम् । अतश्शाब्दबोधोऽनुमितेरत्यन्तविलक्षणातिरिक्ता प्रमितिः ॥

**प्राभाकरादिसंमतं** वक्त्रनुमानमपि न युज्यत इत्याह—**वक्तृज्ञानानुमानादिकमपि**=कस्यचित् पुरुषस्य वाक्यश्रवणेन 'तद्वक्ता एतादृशज्ञानवान्' इत्यनुमानेन वाक्यार्थो ज्ञायते इत्यादिकमपि **अन्ततो व्याप्त्यभावत्**=कथञ्चिदपि व्याप्तिग्रहणासंभवात् **न भवेत्** । न तावन्मात्रम्, **तत्तल्लिङ्गप्रतीतावपि**=अनुमानस्यावश्यापेक्षितस्य तत्तादृशलिङ्गस्याज्ञानेऽपि **मतिजननात्**=शाब्दबोधजननात् शाब्दबोधो नानुमितिः। किं बहुना! **वेदे वक्त्रभावाच्च**=अपौरुषेयत्वेन वक्तुरभावाच्च शाब्दबोधो न वक्तृज्ञानानुमानरूपः, किन्त्वतिरिक्ता प्रमितिरेव ॥

**अत्रायमाशयः**—शाब्दबोधे किल एकसम्बन्धिज्ञानमपरसंबन्धिस्मारकमितिविधया पदज्ञानं तद्वाच्यमर्थमुपस्थापयतीत्युच्यते । एवं तर्हि पदजन्यपदार्थोपस्थितेः स्मृतिरूपत्वेन बोधस्य प्रमारूपत्वं कथम्? इति प्रथमः प्रश्नः । एकसंबन्धिज्ञानविधया बोधजनकत्वस्यानुमानेऽपि समानत्वेन तद्विलक्षणत्वमस्य कथमिति द्वितीयः प्रश्नः । प्रथमस्योत्तरम् 'वाक्यार्थः अपूर्वः' इति । पदजन्यपदार्थोपस्थितिरन्या, तदनन्तरं जायमानः शाब्दबोधश्चान्यः । न हि शाब्दबोधः स्मृतिरूपः, पूर्वाननुभूतवस्तुविषयकत्वात् । अनुमानरूपत्वनिरासः **'न खलु'** इत्यादिना कृतः । यत्र धूमस्तत्राग्निरितिवत् शब्दस्यार्थस्य च न हि व्याप्यव्यापकभावः कश्चिद्वर्तते ॥

ननु व्याप्यव्यापकभावः न शब्दार्थयोस्संबन्धः, किन्तु वाच्यवाचकभाव एव । परं तु एकसंबन्धिज्ञानविधया बोधजनकत्वं शब्दानुमानयोस्समानं किल । अतश्शब्दोऽप्यनुमानमिति स्यादिति चेत्, येन केन प्रकारेण सादृश्यं प्रत्यक्षेऽपि समानम् । तत्रापि इन्द्रियसंबन्धमूलकत्वं वर्तते । अतः 'वह्निमान् धूमात्'=इत्यादिवत्प्रयोगादीनामदर्शनात् शब्दो नानुमानम्, किं त्वतिरिक्तं प्रमाणम् ॥

[शाब्दस्यानुभवरूपत्वम्]

291. **प्रत्येकं स्वानुभूतात् तदुभयमधिकं संस्कृतिद्वन्द्वयोगात्**
**स्मृत्यारूढं विजानन्त्यनुमितिवचसोर्वेद्यमप्येवमस्तु।**
**पारोक्ष्यं तत् स्मृतित्वादनधिकमिति न, प्रागनिर्धारितांश-**
**ज्ञानस्य स्पष्टदृष्टेः परिहितहरितस्त्वेतदस्पष्टमाहुः ॥ ६८ ॥**

प्राभाकरास्तु ब्रुवते—शाब्दबोधे तात्पर्यज्ञानस्यावश्यकत्वं सर्वसंमतम्। तात्पर्यं नाम वक्तुरिच्छा। सा च 'एतद्वाक्यमेतदर्थबोधजनकमस्य भवतु' इतीच्छा। ततश्च वाक्यश्रवणानन्तरम्, तत्प्रयोक्तुरिच्छाम्, तत्पृष्ठभाविनं च ज्ञानमनुमिनोति श्रोता। एतदेव ज्ञानं शाब्दबोध उच्यते। अतश्च 'इदं वाक्यम् एतादृशार्थबोधजनकम्, एतादृशेच्छयोच्चरितत्वात्' इत्यनुमानं शब्दः, तदनन्तरबोधः शाब्दबोधः। न च नानार्थकस्थल एव तात्पर्यज्ञानं कारणम्। न त्वन्यत्रेति वाच्यम्, शब्दस्य सामान्यरूपेणैव बोधकत्वस्वाभाव्यात्, व्यक्तिविशेषनिर्णयार्थं तात्पर्यज्ञानस्यावश्यकत्वात्। यथा वानुमाने व्यक्तिविशेषनिर्णयः पक्षधर्मताज्ञानादित्युच्यते तद्वत्। अतो वक्तृज्ञानानुमानमेव शाब्दबोध इति वर्णयन्ति। **एतदपि द्राविडप्राणायामायेत**। न हि वक्तृज्ञानावगम एव शाब्दबोधः। वक्तृज्ञानं हि वक्तरि वर्तते। परं तु अन्यार्थं प्रयुक्तस्य वाक्यस्याकस्मादन्येनोदासीनेन श्रवणेऽपि बोधजननेनापि चरितार्थत्वात्, वाक्यस्य अन्यार्थबोधेच्छयोच्चरितत्वाभावात् न वक्तुरुद्देशः पूर्णो भवेत्। तदर्थं पुनरनुमानान्तरान्वेषणमावश्यकमिति शब्दः सुदूरमपवारित इति स शाब्दबोध एव न स्यात्। किञ्चापौरुषेये वेदे वक्तुरभावाद्बोधानापत्तिश्च। अतः अनुमानविधया बोधजनकत्वमपि बुद्धिमतां न शोभते इति शब्दोऽतिरिक्तं प्रमाणम्॥ ६७॥

**प्रत्यक्षं परोक्षं चेति ज्ञानं द्विविधमेव**। प्रत्यक्षं त्विन्द्रियजन्यमपरोक्षरूपम्। तदितरत्सर्वं परोक्षं नानाविधसंस्कारजन्यं स्मृतिसमुच्चयरूपमेव, नानुभवरूपमिति वदतां सौगतानां मतमनूद्य निराकरोति—**प्रत्येकमित्यादि**। **प्रत्येकं स्वानुभूतात्**=पूर्वं स्वेन प्रत्येकमनुभूतवस्तुनः **अधिकम्**=अतिरिक्तं **संस्कृतिद्वन्द्वयोगात्**=संस्कारद्वयवशात् **तदुभयम्**=उभयमित्युपलक्षणम्, पूर्वानुभूतानेकपदार्थान् युगपत् **स्मृत्यारूढं विजानन्ति**=पर्वतं धूमं च प्रथमं प्रत्यक्षतः पश्यति। धूमदर्शनोद्भूतसंस्कारवशात् वह्निं व्याप्तिं च स्मरति। एवं प्रत्यक्षजन्यानां स्मृतिजन्यानां च संस्काराणामनेकानां युगपदुद्बोधात् आहत्य पर्वते वह्न्यादिकं विजानन्ति जनाः। एतादृशस्मृतिसमुच्चयरूपैवानुमितिः, शाब्दश्च। अतः **अनुमितिवचसोरपि**=अनुमितेः, शाब्दबोधस्य च **वेद्यम्**=विषयः **एवमस्तु**=एवमेव भवतु। अतो नानासंस्कारजन्यस्मृतिसमुच्चयरूपे एव ते। **तत्**=तस्मात् **पारोक्ष्यम्**=परोक्षत्वम् **स्मृतित्वात् अनधिकम्**=स्मृतित्वापेक्षया नातिरिक्तम्, सेनावनादिवत्। न हि प्रत्येकवृक्षापेक्षया वनमतिरिक्तःपदार्थः। प्रत्येकं वृक्षान् पश्यति। समनन्तरं सर्वमाहत्य स्मृत्वा वनमिति वदति। न चेदं स्मरणम्, 'वनं पश्यामि' इत्येवानुव्यवसायदर्शनात्। एवञ्च अनुमितिः शाब्दबोधश्च विकल्परूपावेवेति, तयोरनुभवत्वं नास्ति, तदेव परोक्षमित्युच्यते॥

**इति न**=इत्येतदपि न युक्तम्। कुतः? **प्रागनिर्धारितांशज्ञानस्य**=पूर्वमननुभूतस्य नूतनस्य विषयस्य शब्दानुमानयोर्भानस्य स्पष्टमनन्तरमनुभवात्। स्मृतिस्तु नियमेन पूर्वानुभूतानधिकविषया। धूमात् जायमानं पर्वते वह्निज्ञानं तु, न पूर्वानुभूतविषयकम्, एवम् 'नद्यास्तीरे फलानि सन्ति' इति वाक्येन जायमानं ज्ञानं न हि पूर्वानुभूतवस्तुविषयकम्, तावद्वस्तुविषयकज्ञानस्याधिकविशिष्टविषयकत्वात्। अत उभयमिदमनुभवरूपमेव, न स्मृतिरूपम्॥

**परिहितहरितस्तु**=जैनास्तु **एतत्**=परोक्षं ज्ञानम् **अस्पष्टम्**=अस्पष्टरूपम्, **प्रत्यक्षं तु स्पष्टमिति** विभागम् आहुः। प्रत्यक्षत्वपरोक्षत्वविभागस्य शब्दान्तरमिदम्, न नूतनं किञ्चिदुक्तमेतेनेति भावः। **बौद्धास्त्वाहुः**—प्रत्यक्षं परोक्षं चेति विषयद्वैविध्यात् ज्ञानमपि द्विविधमेव। प्रत्यक्षेऽपि निर्विकल्पकं स्वलक्षणज्ञानपदवाच्यमेव प्रमाणम्। इतरत् सर्वं सविकल्पकं न प्रमाणम्। किमुत परोक्षज्ञानप्रामाण्ये वक्तव्यमिति वदन्ति। **वैदिकास्तु**—करणाधीनं प्रत्यक्षत्वं परोक्षत्वं च, न विषयाधीनम्। अन्यथा शाब्दानुमित्योः स्मृत्यविशेषप्रसङ्गः। न चेष्टापत्तिः, शाब्दानुमितिभ्यां प्रवृत्तस्य विषयलाभेन सफलप्रवृत्तिजनकत्वात्। स्मृतेरतथात्वात्। पूर्वदृष्टं स्मरन् हि वदति 'पूर्वं तु तत्र दृष्टम्, इदानीमस्ति नवेति न जानामि' इति। नैवं शाब्दानुमितिस्थले कश्चिद्वदति। कदाचिद्विसंवादस्तु प्रत्यक्षेऽपि समानः। इष्टापत्तौ तु सर्वव्यवहारोच्छेदप्रसङ्गः। श्रुतिर्हि भगवती शब्दरूपा प्रत्यक्षादपि प्रमाणतमा वैदिकानाम्। अतः शाब्दस्याननुभवरूपत्वं सर्वथा दुर्वचम्। अतः प्रत्यक्षम्, अनुमितिः, शाब्दश्चेति त्रयमप्यनुभवरूपमेव। अनुभवो द्विविधः—प्रत्यक्षः परोक्षश्चेति। परोक्षश्च अनुमितिः शाब्दश्चेति द्विविधः। इन्द्रियं प्रत्यक्षकरणम्। व्याप्तिज्ञानं शक्तिग्रहश्च परोक्षकरणे। एवं परोक्षापरोक्षज्ञानकरणयोः व्यवस्थितत्त्वादेव **शाब्दापरोक्षवादो**ऽवैज्ञानिक आग्रहमूलकश्चेति तत्प्रकरणे (जीव.46) विस्तरेण परीक्षितम्॥

**जैनोक्तः स्पष्टत्वास्पष्टत्वविभागोऽपि** न क्षोदक्षमः। किं नाम स्पष्टत्वम्? किं वाऽस्पष्टत्वमिति विविच्य वक्तव्यम्। किं वा प्रमात्वशङ्कास्पदत्वमस्पष्टत्वम्, तदभावः स्पष्टत्वम्? उत वस्तुविषयकत्वं स्पष्टत्वम्? वस्त्वविषयकत्वमस्पष्टत्वम्, अथवा विषयजन्यत्वं स्पष्टत्वम्? विषयाजन्यत्वमस्पष्टत्वम्, यद्वा संवादसौलभ्यं स्पष्टत्वम् संवाददौर्लभ्यमस्पष्टत्वम्? अन्यद्वा यत्किञ्चित्। नाद्यः, प्रत्यक्षेऽपि तस्य समानत्वात्। न द्वितीयः, इदं हि भ्रमप्रमापर्यायरूपम्। ततश्च आद्य पक्ष इव प्रत्यक्षाविशेष एव। भ्रमो ह्यपरोक्षः, रज्जौ सर्पभ्रमदर्शनात्। न तृतीयः, विषयजन्यस्यापि प्रत्यक्षस्यान्यथासिद्धिदर्शनात्। न हि भ्रमो विषयाजन्यः, सविषयतयैवानुभवात्। नापि चतुर्थः, अतीन्द्रियवस्तुसाधनस्यैवासंभवापत्तेः। अन्तत आगमजन्यज्ञानस्य न हि संवादापेक्षा मतद्वयेऽपि। अतः प्रत्यक्षं सर्वं स्पष्टमिति वा, परोक्षं सर्वं अस्पष्टमिति वा न शपथयितुं शक्यम्। अत एव प्रकारान्तराभावात् पञ्चमोऽपि निरस्तः। समनन्तरश्लोके चेदं पुनः स्पष्टीक्रियते॥ ६८॥

ननु यथा तथा वा भवत्वनुमानम्। महानसादौ पूर्वानुभवमूलकं हि तत्कथञ्चिद्भवेदपि। शब्दस्तु नैवम्, सर्वथाऽसत्यप्यर्थे निर्निरोधं निरङ्कुशं च प्रवर्तितुमलं शब्दः। 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' 'सूच्यग्रे

[शब्दानामर्थासंस्पर्शित्ववादनिरासः]

**292. प्रत्यक्षादीव मानं विमतिपदवचो हेतुदोषाद्यभावात्**
**वाक्यत्वादप्रमाणं विमतमिति यदि, स्वोक्तिबाधादयः स्युः ।**
**अव्युत्पन्नस्य बोधं न जनयति वचः सङ्गतिज्ञानहानेः**
**लिङ्गं व्याप्तिप्रतीतेः पुरत इव, न चावद्यमेतावताऽस्य ॥ ६९ ॥**

कूपषट्कम्' इत्यादि न हि न श्रूयते? अतः शब्दार्थयोस्संबन्धस्यैवाभावात्, शब्दोऽतीवाविश्वसनीय इति वदन्तं प्रत्याह—प्रत्यक्षादीति । **विमतिपदवचः**=विवादविषयः शब्दः **हेतुदोषाद्यभावात्**=अप्रामाण्यहेतुभूतानां दोषादीनामभावात् **प्रत्यक्षादीव**=प्रत्यक्षानुमाने इव **मानम्**=प्रमाणम् । ननु शब्दानामर्थासंस्पर्शित्वे बहुधाभिहितेऽपि केन वा धैर्येणोच्यते 'हेतुदोषाद्यभावात्' इति । अतः 'विमतम् अप्रमाणम्, वाक्यत्वात्, अङ्गुल्यग्रादिवाक्यवत्' इति यदि, तर्हि **स्वोक्तिबाधादयः**=स्ववचनविरोधादयः स्युः । किं सर्वं वाक्यमप्राणम्, उत कतिपयवाक्यम्? द्वितीये सिद्धं कुत्रचित्प्रामाण्यं शब्दस्य । आद्ये भवदीयवाक्यमप्यप्रमाणं स्यात् । ततश्च 'शब्दः अप्रमाणम्' इति वाक्यस्याप्रामाण्ये, सिद्धं हि प्रामाण्यं शब्दस्य । ननु भोः! न मदीयं परमप्रमाणम्, भवदीयमप्यप्रमाणमेवेति अप्रमाणशब्दपरंपरा वितन्यते त्वयेति चेत्—

अहो! प्रतारितस्त्वं भोः! नूनं पूर्वं तु वञ्चकैः । बिभेषि शब्दश्रवणेऽप्येवं यः सर्पभीतवत् ॥
किं वा नाप्तः कश्चिदाप्तः जातु ते हितचिन्तकः । येनैवं वक्षि भीतस्त्वं सर्वशब्दाप्रमाणताम् ॥
साधूनन्विष्य सत्यस्थान् सत्यान् सत्यप्रियांस्तथा । उद्विजन्ते यथा सर्पादनृतात्ते हि साधवः ॥
प्रमाणवर्गे शब्दो हीतरेभ्योऽधिकवीर्यवान् । ऐहिकं वाऽऽमुष्मिकं वा शब्दायत्तं हि दृश्यते ॥
तस्यैतस्य परित्यागेऽन्योन्यभावज्ञता कथम्? सर्वो लोको भवेन्मूको निष्क्रियस्सर्ववञ्चितः ॥

अतोऽलमनया प्रमाणमूर्धन्यवेदमहत्त्वपरिचयविधुरमूर्खजनसंभाषणया ॥

ननु शब्दो यदि प्रमाणं प्रत्यक्षवत्, तर्हि चक्षुर्यथा पुरःस्थितमर्थं अपेक्षितं वाऽनपेक्षितं वा सर्वं स्वयं प्रकाशयति, तथार्थं शब्दः श्रुतमात्रः प्रकाशयेत् । न हि तथा दृश्यते । परस्परभाषानभिज्ञाः भ्राम्यन्तः किल जना दृश्यन्त इत्यत्राह—**वचः**=शब्दः **संगतिज्ञानहानेः**=संकेतरूपशक्तिज्ञानाभावात् **अव्युत्पन्नस्य**=संकेतज्ञानरहितस्य **बोधं न जनयति**। अत्र दृष्टान्तः— **व्याप्तिप्रतीतेः**=व्याप्तिग्रहणात् **पुरतः**=पूर्वम् **लिङ्गम् इव**=सद्धेतुरिव । **एतावता**=तावन्मात्रेण **अस्य**=शब्दस्य **अवद्यम्**=दोषः **न च**=नैव भवति ॥

सूच्यग्रे कूपमित्यादिवाक्यान्यन्यानि वा तथा । बुद्धिदोषप्रयुक्तानि नरस्तत्रापराध्यति ॥
वाग्देवी परमा पूज्या सर्वदोषविवर्जिता । उपास्यतां सदा भक्त्या शब्ददोषः प्रशाम्यतु ॥
सद्भिः संगः सदा कार्यः सर्वदोषहरो नृणाम् । तदा ज्ञायेत भवता वैभवं वचसां तथा ॥ ६९ ॥

ननु सर्वमिदं करणस्वरूपापरिज्ञानमूलम् । व्यापारवत्कारणं हि करणम् । पदार्थोपस्थितिद्वारा हि पदज्ञानं शाब्दबोधहेतुः । पदार्थोपस्थितौ च संगतिज्ञानं सहकरिष्यति । न हि तावता पदानां करणत्वमप-

**[ज्ञानशक्तिवादविमर्शः]**

293. **वक्त्री व्युत्पत्तितः प्राक् यदि निजविषयं वाक् विभक्त्यन्वयाद्यैः**
**किं व्युत्पत्त्या तिरश्चामपि न कथमितो बालकानां च बोधः ।**
**स्वार्थे शब्दस्तथा चेत्, तदपि न, विषयैस्तस्य साम्यात् तदन्यैः**
**अव्युत्पन्नत्वतो वा स्वमपि न गमयेदेष तद्वत् स्ववाच्यम् ।। ७० ।।**

---

गच्छति । एवञ्च पदेषु विषयविधया पदज्ञानकारणत्वोपयोगिनी शक्तिरेका, करणत्वनिर्वाहिका चापरा शक्तिश्च वर्तेतां कामम् । का हानिः? अयमेव **ज्ञानशक्तिवादः** अतश्चास्मिन् सहजशक्तिवादे को दोषः? इति मन्यमानं **जरन्मीमांसकं** प्रत्याह— **वक्त्रीत्यादि । ते ह्येवं मन्यन्ते**=शक्तिर्हि द्विविधा— **सहजा, आधेया च** । सहजा शक्तिः तत्तत्कार्योपयोगिनी तत्तत्कारणगता— यथा दहनादौ दाहानुकूला शक्तिः । द्वितीया तु संस्कारविशेषैराधेया व्रीह्यादिषु प्रोक्षणाद्यैरिव । शक्तेः पूर्णं स्वरूपं त्वग्रे (अद्र.98) परीक्ष्यते । प्रकृते शब्दानां बोधकत्वोपयोगिनी शक्तिः सहजेति ज्ञानशक्तिवादः निराक्रियते । **वाक्**=वाक्यरूपः शब्दः **व्युत्पत्तितः प्राक्**=शक्तिग्रहणादितः पूर्वमेव **विभक्त्यन्वयाद्यैः**=प्रकृतिप्रत्ययाद्यन्वयग्रहणात्पूर्वमेव **निजविषयम्**=स्वप्रतिपाद्यमर्थम् **यदि वक्त्री**=बोधयेदिति चेत्, शब्दानां बोधकत्वं यदि सहजशक्तिप्रयुक्तम्, वह्न्यादेर्दाहानुकूलशक्तिवत्, **व्युत्पत्त्या किम्**=अस्य पदस्य अयमेवार्थः इति संगतिग्रहणादिना किं साध्यम्? पूर्वमेव बोधस्य जातत्वात् । अत्रेष्टापत्तौ— **तर्हि तिरश्चाम्**=पशुपक्ष्यादीनाम् **बालानां च**=बालमूकादीनामपि **इतः**=शब्दश्रवणमात्रात् **बोधः**=शब्दजन्यः शाब्दबोधः **कथं न**=कथं वा न भवेत्? अतः शब्दानां बोधकत्वं न **सहजशक्तिप्रयुक्तम्,** न वाऽऽ**धेयशक्तिप्रयुक्तम्,** किन्तु व्युत्पत्त्यपेक्षम् ।।

ननु शब्दे विद्यमाना शक्तिः शब्दविषयकबोधकारणत्वोपयोगिनी सर्वकारणेष्वपि वर्तमाना कार्यानुकूला शक्तिः । इयं शक्तिस्तु श्रोत्रेन्द्रियेण शब्दग्रहणोपयोगिनी । अन्या च शक्तिः अर्थबोधोपयोगिनी । अत्र च संगतिज्ञानं सहकारीति तिरश्चाम् एतदभावान्न बोधः इति शङ्कते— **शब्दः स्वार्थे तथा**=श्रुतः खलु शब्दः, स्वविषयकं बोधमात्रं जनयति, अर्थबोधने तु संगतिज्ञानं सहकारि । तावता पदेषु सहजशक्तेर्नापोह इति चेत्, **तदपि न**=एतदपि न समर्थयितुं शक्यम् । कुतः? **तदन्यैः**=शब्दातिरिक्तैः **विषयैः**=घटादिविषयैस्सह तस्य शब्दस्य **साम्यात्**=समानत्वात् । प्रत्यक्षे विषयस्य कारणत्वात् शब्दविषयकश्रावणप्रत्यक्षं प्रति शब्दः कारणं भवत्येव । तर्हि ध्वन्यात्मकशब्दस्य वाक्यात्मकशब्दस्य च को विशेषः । वाक्यात्मकशब्दः खलु शाब्दबोधजनने शक्तश्चेत्, बोधं जनयेदेव । अतश्च— **एषः**=वाक्यरूपः शब्दः **अव्युत्पन्नत्वतः**=अर्थे बोधजनकव्युत्पत्त्यभावादेव हेतोः **स्वमपि**=आत्मानमपि **न गमयेत्**=न बोधयेत्, यदि बोधयेत्, तद्वत् **स्ववाच्यं वा**=स्वबोध्यमर्थं वा **न गमयेत्**=न बोधयेत् । यदि शक्तिज्ञानं सहकारि, तर्हि तावतैव निर्वाहे सहजशक्तिर्व्यर्था ।।

**अत्रेदं हृदयम्— पूर्वमीमांसकाः** खलु **द्रव्यातिशयवादिनः** । दाहादिकं प्रति कारणभूता वह्न्यादयः, मणिमन्त्रादिसन्निधाने न दाहं जनयन्ति, तदसन्निधाने च जनयन्तीति प्रत्यक्षसिद्धम् । वह्नेरेकरूपतयाऽवस्थानेऽपि

[शक्तेस्संकेतरूपत्वनिरासः]

294. **शब्दः सङ्केतितोऽर्थं गमयति विमतोऽपीति शास्त्रप्रतीपम्**
**तत्कर्ताऽद्य ह्यसिद्धः, स च दुरधिगमः सृष्टिकालेऽनुमानैः ।**

मणिसमवधाने यस्य वैकल्यात् दाहः=वह्निसंयोगजः पीडाविशेषः, रूपादिपरावृत्तिर्वा न भवति, मण्यभावे च भवति, सोऽयमतिरिक्तः कश्चनातिशयः कारणद्रव्ये आवश्यकः । स एवातिशयः शक्तिरित्युच्यते । एतद्विचारो विस्तरेण भविष्यति (अद्र.98-99) । प्रकृते च शाब्दबोधो नाम शब्दजन्यो बोधः । एवञ्च बोधं प्रति शब्दस्य करणत्वात् करणे शब्दे बोधानुकूला काचिच्छक्तिरावश्यकी । अत एव सा सहजा च । वर्णात्मकशब्दे तु द्विविधा शक्तिर्वर्तते, एका पदविषयकश्रावणप्रत्यक्षरूपकार्यानुकूला । अपरा तु शाब्दबोधरूपज्ञानानुकूला । एषा च किंरूपेत्येव प्रकृते विचारः । शब्दस्य बोधजनकत्वस्य सहजशक्तिमूलत्वादेव वेदेऽपि बोधजनकत्वमनादिकालादेव सहजसिद्धमिति तत्र सङ्केतयितृपुरुषापेक्षा नास्तीति वेदानामपौरुषेयत्वसिद्धिरिति तेऽभिप्रयन्ति । एतदंशस्य सिद्धान्ते समानत्वेऽपि अविशेषेण शब्दानां बोधकत्वे व्युत्पत्त्याद्यपेक्षापि वक्तुं न शक्येत । तदा हि शब्दस्सर्वोऽपि श्रुतमात्र एव प्रकृतिप्रत्ययाद्यर्थस्मरणादिकं विनापि बोधजनकः स्यात् । तदा हि तिरश्चामपि शाब्दबोधापत्तिर्दुर्वारा । अतो वेदानामपौरुषेयत्वेऽपि प्रकृतिप्रत्ययादिविभागस्य वेदेऽपि समानत्वात्, अनादितात्पर्यवशादेव व्युत्पत्तेर्निर्णयात्, तेनैव वेदवाक्यजन्यशाब्दबोधनिर्वाहः । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः' इत्येव तैरप्यङ्गीकारात्, तावतैव निर्वहेऽतिरिक्तज्ञानशक्तिकल्पनस्यानपेक्षितत्वात् न सहजा ज्ञानजननशक्तिः । ततश्च तावन्मात्रेण शब्दानां बोधकत्वनिर्वाहो न संभवति ज्ञानशक्तिवादो न साधीयानित्येतावन्मात्रमत्र विवक्षितमाचार्यवर्याणाम्, न तु शब्दप्रत्यक्षोपयोगिसहजशक्तिनिराकरणमिति न पूर्वापरग्रन्थविरोधः ॥ ७० ॥

एवं शब्दानां बोधकत्वं यदि व्युत्पत्तिसापेक्षम्, तर्हि व्युत्पत्तिनिर्णयस्य तात्पर्यज्ञानपूर्वकत्वनियमात् वेदानां पौरुषेयत्वं स्यादिति शङ्कां परिहरति—**शब्द** इत्यादिना । **विमतः शब्दोऽपि**=वैदिकशब्दोऽपि **सङ्केतितः**=सङ्केतपूर्वक एव **अर्थम्**=स्वार्थ **गमयति**=बोधयति । **इति** इत्येतत् **शास्त्रप्रतीपम्**='वाचा विरूपनित्यया' इति श्रुतिविरुद्धम् । 'वेदाच्छास्त्रं परं नास्ति' इत्यादिप्रमाणादत्र शास्त्रं श्रुतिरेव । 'अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतश्शक्तिः' इति तार्किकाः । सङ्केतो नामैतादृशीच्छैव । वेदापौरुषेयत्ववादिनामेतन्न संभवतीति पूर्वोक्तपूर्वमीमांसाप्रक्रियैव साधीयसीत्याशयः । परं त्वनुपदमेव लोकवेदाधिकरणन्यायेन वेदानामपि बोधकत्वमिति वेदे नूतनसङ्केतकल्पना नापेक्ष्यते । तथा च 'विमतश्शब्दः सङ्केतपूर्वकः, शब्दत्वात्, चैत्रादिशब्दवत्' इत्यनुमानं श्रुतिबाधितम् । एतदेवोपपादयति—**तत्कर्ता**=वेदकर्ता सङ्केतकर्ता वा **अद्य**=इदानीं **असिद्धो हि**=नास्तीति प्रसिद्धमेवैतत्, सृष्ट्याद्यकालस्य केनाप्यदर्शनात् । अस्ति खल्वीश्वरानुमानमित्यत्र—**स च**=सृष्टिकर्ता च **सृष्टिकाले**=सृष्टेः पूर्वकाले **अनुमानैः**=ईश्वरसाधकानुमानैः **दुरधिगमः**=साधयितुं न शक्य एव । यतः पूर्वमेव (नायक.15-24) सर्वमेतद्विस्तरेण परीक्षितम् ॥

**श्रुत्या चेत् प्रत्युतैतत् विभुरपि तनुते वेदतो नामरूपे**
**व्याकृत्यादेर्विरुद्धौ क्रमजनिविलयौ; क्षुद्रभाषासु नैवम् ॥ ७१ ॥**

**[कार्यवाक्यार्थवादविमर्शः]**

**295. व्युत्पत्तिः कार्य एव प्रथमसमुदिता वृद्धवाक्यात् प्रवृत्तौ**
**तत् सर्वास्तत्पराः स्युर्गिर इति यदि, न, क्वापि सिद्धेऽपि सिद्धेः ।**

ननु 'छन्दांसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत' इत्यादिश्रुतयः ईश्वराज्जातं वेदं वदन्ति किलेत्याशङ्क्य समाधत्ते—**एतत्**=वेदस्रष्टृत्वम् **श्रुत्या चेत्**=उक्तश्रुत्यैव सिद्ध्यति किलेति चेत्, नेदं तथ्यम् । प्रत्युत—एतद्विपरीतमेव **विभुरपि**=जगत्स्रष्टापि **वेदतः**=वेदादेव **नामरूपे**=सृज्यमानानां नाम रूपं च तनुते । एवञ्च जगत्स्रष्टापि नामरूपकरणे वेदमाश्रयति चेत्, किं वक्तव्यं वेदस्यानादित्वे । 'नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥' (वि.पु.1-5-63) इत्यादिप्रमाणसिद्धमेतत् ॥

ननु 'छन्दांसि जज्ञिरे' इति श्रुतिः । 'नामरूपं च भूतानाम्' इत्यादि तु स्मृतिः । श्रुतिविरुद्धा स्मृतिरेवान्यथा नेया, न तु स्मृतिविरोधेन श्रुतिः, स्मृतेर्दुबलत्वात् इति चेत्, सत्यम्—परं तु 'छन्दांसि जज्ञिरे' इत्येतावन्मात्रं यदि स्यात्, तदा भवदुक्ताक्षेपस्स्यात् । किन्तूपरि 'तस्मात्' कुत आच्छादितम् । ततश्च वेदस्य तस्मादेवोत्पत्तेरभिधानात् न भवदिष्टसिद्धिः । ननु भोः! स एषः वृश्चिकाद्भीतस्य सर्पमुखपातः। वैदिकाद्भीतो तार्किकमुखे च्युतोऽसीति चेत्, नेश्वरोपदिष्टा वेदा इत्यग्रे(श्लो.111) भविष्यति ॥

ननु चेदं पुराणवचनं कथं विश्वसनीयमिति शङ्क्यम्, 'धाता यथापूर्वमकल्पयत्' (तै.ना) इति श्रुत्या सृष्टिप्रलयप्रवाहस्यानादित्वश्रवणात् । अतः—**क्रमजनिविलयौ**=वेदानां क्रमादुत्पत्तिः लयश्च **व्याकृत्यादेः**= नामरूपव्याकरणादेः **विरुद्धौ**, 'धाता यथापूर्वम्' इत्यादिश्रुतिविरुद्धौ ॥

ननु लोके हि पुरुषाः स्वबुद्ध्या नूतनानि वस्तूनि निर्मान्ति, तेषां संज्ञां च कुर्वन्ति । इतरेऽपि तथैव व्यवहरन्तो दृश्यन्ते । एवं सति बोधकत्वं सङ्केतमूलकमेव नेति कथमुच्यत इति शङ्कायामाह— **क्षुद्रभाषासु**=लौकिकदेशीयभाषासु तु **एवं न**=वेदेषूक्तक्रमो नास्त्येव । न वयं सङ्केतं सर्वत्र निषेधामः, किन्त्वपौरुषेये वेद एव । अत एव 'विमतोऽपि' इत्युक्तः 'अपि'शब्दः । किं बहुना! नदीवृद्ध्यादिसङ्केताः केन वा निराकर्तुं शक्यन्ते । अतश्च वेदानां बोधकत्वं पुरुषसङ्केतमूलकं नेत्येतावन्मात्रमस्मदभिप्रेतमिति गृह्यतामिति भावः ॥ ७१ ॥

शब्दस्य बोधकत्वं शक्तिग्रहणमूलकमित्युक्तम् । शक्तिग्रहश्च कथमिति शङ्कायाम्, वृद्धव्यवहाराच्चेत्, कार्यान्वित एव पदानां शक्तिः सिद्ध्येत् । तेन सिद्धब्रह्मबोधनं वेदेन न भवेदिति शङ्कामनूद्य परिहरति—**व्युत्पत्तिरित्यादि** । **वृद्धवाक्यात्**=प्रयोजकवृद्धस्य 'गामानय' इत्यादिवाक्यादेव **प्रवृत्तौ**= प्रयोज्यवृद्धस्य गवानयनादिप्रवृत्तौ सत्याम्, इदम् 'गां नय' इत्यादिनिवृत्तिवाक्यस्याप्युपलक्षणम् । **कार्य**

**स्याद्वा कार्यैकलक्ष्या प्रथममिह कुतः शब्दशक्तिं नियच्छेत्?**
**तात्पर्यं चान्यथाऽपि ह्यनितरशरणैर्लोकवेदप्रयोगैः ॥ ७२ ॥**

---

**एव**=आनयनादिकार्य एव **व्युत्पत्तिः**=शक्तिग्रहः **प्रथमसमुदिता**=प्रथममुत्पन्ना दृष्टा । **तत्**=तस्मात् **सर्वाः गिरः**=सर्वे शब्दाः **कार्यपराः**=कार्यतात्पर्यकाः, अत एव कार्यान्वितस्वार्थबोधका एव **स्युः**। अतश्च सिद्धब्रह्मबोधनं वेदान्तानामसंभवि । **इति यदि**=इति चेत्, **न**। कुतः? **सिद्धेऽपि**=सिद्धरूपेऽपि **क्वापि** कुत्रचित् **सिद्धेः**=व्युत्पत्तेर्निश्चयात् ॥

ननु प्रथमं कार्यान्वित एवार्थे शक्तिग्रहणमभ्यस्तवतामनन्तरमपि बुद्धिः क्रियान्वयमपेक्षेतैव, पूर्वाभ्यासादिवशादिति शङ्कां समाधत्ते—**स्यादित्यादि**। **प्रथमम्**=आदौ **शक्तिः कार्यैकलक्ष्या**=कार्यान्वित-बोधनपरैव **स्याद्वा**=भवेद्वा, तावता **शब्दशक्तिम्**=शब्दानां बोधनशक्तिम् **इह**=कार्य एव **कथं नियच्छेत्**=कथं व्यवस्थापयेत् । कार्यान्विततया प्रथमं शक्तिग्रहणेऽपि गृहीतशक्तिकः पुरुषः तानि पदानि स्वेच्छयापि प्रयोक्तुं शक्नोत्येव । गवादिपदानां शक्तिग्रहणानन्तरम् 'कीदृशी गौः' इति प्रश्नः, 'शुक्ला' इत्याद्युत्तरं च पश्यन्त्येव जनाः । प्रथमशक्तेस्तथात्वमात्रात्, अनन्तरमपि तथैवेति को वा आज्ञापयेत् । बालानां गणितशास्त्रशिक्षणमारंभकाले तिन्त्रिणीबीजादिरूपं किञ्चिदालम्बनाधीनं स्यात् । तावन्मात्रेण प्रौढानामपि तिन्त्रिणीबीजापेक्षा भवेत् किम्? तद्वदेव प्रकृतेऽपि॥

ननु **'भूतं भव्यायोपदिश्यते'** इति **'सिद्धं साध्यायोपदिश्यते'** इति वा न्यायः प्रसिद्धः । गौः, पशुः इत्यादिनामपदानि सिद्धं गवादिकं वस्तु बोधयन्ति । आनय, नय इत्यादिपदानि साध्या-मानयनादिक्रियां बोधयन्ति । 'गामानय' 'परशुना छिन्धि' इत्युक्ते गवादीनि आनयनादिरूपायै क्रियायै उच्यन्ते । तदैव गवादीनां पदानां सार्थक्यम् । 'घटोऽस्ति तत्र' इति यदि कश्चिद्वदति, तदा पार्श्वस्थः पृच्छत्येव 'ततः किम्?'इति । 'पश्य' इति कथनेऽपि, पुनः पृच्छेत्='दृष्ट्वा किं कर्तव्यम्?' इति । यावता 'तं नय' इति वा 'तमानय' इति वा क्रियां न शृणोति, तावत्पर्यन्तं पुनःपुनराकाङ्क्षा भवेदेव । क्रियाबोधे जात एवाकांक्षा निवर्तेत । 'चैत्र! पुत्रस्ते जातः' इति वाक्येनार्थबोध एव न भवतीति न, किन्तु प्रयोजनशून्यानि तादृशवाक्यानि, साध्यांशस्य कस्यापि तेनाबोधनात् । अतः सिद्ध-परवाक्यानि हि न निराकांक्षबोधजनकानि, अत एवासमग्रबोधजनकानि । एतादृशानि वाक्यानि कथं प्रमाणानि भवेयुः? इत्यत्राह—**तात्पर्यमित्यादि**। **अनितरशरणैः**=गत्यन्तररहितैः **लोकवेदप्रयोगैश्च**= लौकिकैः वैदिकैश्च शब्दप्रयोगैः **अन्यथापि**=कार्यानन्वितप्रकारेणापि **तात्पर्यम्**=शब्दानां बोधनसामर्थ्यम् **'अस्त्येव'** इत्यादि किञ्चिदूह्यम् । पूर्वकाण्डोक्तानां यागादिकर्मणां पुरुषार्थभूतस्वर्गसाधनत्वेनैव सार्थकत्वं वक्तव्यम्, न तु तानि कर्माणि स्वयं पुरुषार्थरूपाणि । ब्रह्मणस्तु स्वयं पुरुषार्थरूपत्वात् तत्प्रतिपादक-वाक्यानां स्वत एव निराकाङ्क्षत्वात् नैवं क्लेशः इत्यादिकं समन्वयाधिकरणन्यायेन सिद्धम् । उत्तरश्लोकस्यै-तद्विस्तररूपत्वादत्र न वितन्यते ॥ ७२ ॥

[सिद्धेऽपि शक्तिग्रहणप्रदर्शनम्]

**296. कोऽसौ, पाञ्चाल इत्याद्यनुभवतु वचः सिद्धतात्पर्ययोगम्**
**शास्त्रं कार्यैकशेषं गमयति निखिलं सिद्धमित्यर्धरम्यम्।**
**यत्र ज्ञानं पुमर्थस्तदवधि वचनं तत्र; बाधोऽपि नास्मिन्**
**नातो नाट्यादिनीतिर्निधिवचननयात्; अन्यथा स्यात् विरोधः ॥ ७३ ॥**

---

ननु भोः! 'भूतं भव्याय' इत्यादिके पूर्वश्लोकप्रदर्शिते सर्वसंमते न्याये चक्षुःप्रसार्यताम्। अत एव किलोपनिषद्यपि ध्यानादिनियोगवाक्यार्थोऽवतीर्ण इति वदन्तं वादिनं प्रति विस्तरेणाह—**कोऽसावित्यादि**। **'असौ कः'** इति कश्चित् पृच्छति। **'पाञ्चालः'** इत्यन्य उत्तरति। **इत्यादि वचः सिद्धतात्पर्ययोगम्**= सिद्धेऽप्यर्थे वस्तुस्वरूपबोधनतात्पर्यवत्ताम् **अनुभवतु**=अश्नुतां कामम्। तन्निरोद्धुं कस्त्वम्? अयि भोः! किं त्वं बधिरः? 'भूतं भव्याय' इत्यादि कियद्वारं वक्तव्यम्? इत्यस्य निर्दिष्टमुत्तरमाह—**शास्त्रमित्यादि**। अये कर्मब्रह्मवादिन्! **निखिलं शास्त्रम्**=सर्वमपि शास्त्रम् **सिद्धम्**=सिद्धं वस्तु **कार्यैकशेषम्**=कार्यान्वितमेवार्थम् **गमयति**=बोधयति **इति**=इत्येतत् **अर्धरम्यम्**=अर्धांशसत्यम्। भवदुक्तं सर्वमशृणुम एव वयम्। त्वमेव नान्यत्किञ्चन शृणोषि। कुतोऽर्धरम्यत्वमित्यत्र—**यत्र**=यस्मिन् उत्तरभागे **ज्ञानम्**=ब्रह्मस्वरूपज्ञानम् **पुमर्थः**=स्वयं पुरुषार्थः, न तु कार्यशेषतया, **तत्र**=तस्मिन् भागे **वचनम्**=शब्दः **तदवधि**= तादृशपरमपुरुषार्थभूतसिद्धब्रह्मस्वरूपबोध एव विश्रान्तम्। **अस्मिन्**=एतादृशब्रह्मबोधने **बाधः**= बाधकं प्रमाणम् **नापि**=नैष किञ्चिदस्ति। ब्रह्मणः पुरुषार्थरूपत्वे न हि किञ्चिद्बाधकं दृश्यते। **अतः**=अत एव **नाट्यादिनीतिः**=मुद्रादिना परंपरयार्थप्रकाशनरीतिः न, **किन्तु—निधिवचननयात्**=निधिवाक्यन्यायानुसारात्। 'तव गृहे निधिरस्ति' इति वचनश्रवणमेव श्रोतुरानन्दावहम्। तद्वदेव ब्रह्माधिकृत्यापि 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्यः इमं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' (छां.8-3-2) इति गृहान्तर्निहितहिरण्यनिधितौल्यं श्रूयते। 'अहरहर्गच्छन्त्यः' इति जीवानां प्रतिदिनं सुषुप्तिसमये परमात्मसंपत्तिरुच्यते। अतः स्वयं निरतिशयपुरुषार्थभूतब्रह्मप्रतिपादनपरा वेदान्ताः स्वप्रामाण्येऽन्यशेषतां न निरीक्षन्त इति पूर्वकाण्डन्यायः नात्रानुसरणीयः। **अन्यथा**= एवमनङ्गीकारे **विरोधः**=पूर्वोत्तरकाण्डयोर्विरोधः **स्यात्**। नियोगवादश्च पूर्वमेव (जीव.43-44) परीक्षितः॥

ननु न वयमुत्तरकाण्डमप्रमाणं ब्रूमः, किन्तु कर्मकर्तुरात्मनः स्तुतिपरा इत्येव वदाम इति चेत्, स्वार्थे प्रामाण्यानङ्गीकारादिदमप्रामाण्यपर्यायमेव। न चेयमतिरेकोक्तिः, विपरीतस्यापि प्रसङ्गात्। वर्णयन्ति किल परे पूर्वकाण्डमतत्त्वावेदकमिति। एवं काण्डद्वयस्य स्वार्थे प्रामाण्यसंशयेऽन्ततो वेदप्रामाण्यमेव परस्परविरोधात्कण्ठगतप्राणं भवेत्। ननु 'त्रैगुण्यविषया वेदाः' इति वेदानां प्राकृतजनाधिकारकत्वमुक्त्वा, 'निस्त्रैगुण्यो भवार्जुन' (गी.2-45) इति वेदान् परित्यज्य वेदान्तनिष्ठामुपदिशता भगवतैव पूर्वकाण्डस्य त्याज्यत्वमुच्यत इति पूर्वकाण्डस्यातत्त्वावेदकत्वं स्पष्टमेवोक्तमिति चेत्, तर्हि 'वेदैश्च सर्वैरहमेव वेद्यः'

[आद्या व्युत्पत्तिरपि सिद्धे संभवति]

297. कस्मैचित् ज्ञापयैतत् त्वमिति परकृतां वीक्ष्य चेष्टां तदन्यः
तस्मै ब्रूते; ततस्तत् गमकमिह वचो वेत्ति चेष्टाविदन्यः ।
तत्तद्वाच्येषु शब्दैर्हितविदभिहितैरङ्गुलीयोगपूर्वं
जानन्नन्यत्र तत्तत्स्वहितजनकृतिं शिक्षणार्थामवैति ॥ ७४ ॥

इत्यादीनां का गतिः । अपि चैवं तर्हि वेदान्तानां वेदत्वमपि न स्यात् । न हीदं कस्यापि वेदान्तिनस्संमतम्। अतो 'निस्त्रैगुण्यो भव' इत्येतत् वेदानां परित्यागपरापस्तंबवचनवन्नेयम् । अन्यथा 'नास्तिको वेदनिन्दकः' इति वचनविपयत्वं स्यात् । किमधिकोक्त्या ! अत एव किल भगवद्रामानुजैर्वेदार्थसंग्रहो व्यरचि, न वेदान्तार्थसंग्रहः॥

एतत्तत्त्वं यदि ज्ञेयं पश्य वेदार्थसंग्रहम् । वेदानां यत्र सर्वेषां प्रामाण्यं स्थापितं समम्॥
अधिकारादिभेदः स्यात् कामं, नामानता क्वचित् । पूर्वोत्तरविभागादिकल्पनानन्तरागता॥
प्रकाशयामः सर्वं च रहस्यं समये स्फुटम् । वेदस्यामानतां किञ्चित्सहन्ते नैव वैदिकाः ॥

इत्यलमनया पापैकफलया चर्चया ॥ ७३ ॥

प्रपूर्वश्लोके प्रथमव्युत्पत्तेः कार्यपरत्वेऽपि द्वितीयव्युत्पत्तेः सिद्धपरत्वसंभवमुपपाद्य, पूर्वश्लोके स्वयंपुरुषार्थभूतसिद्धवस्तुप्रतिपादनपराणां वाक्यानां स्वार्थपरत्वं प्रत्यपादयत् । इदानीं स्वयं पुरुषार्थत्वाभावेऽपि प्रथमव्युत्पत्तिरपि सिद्धपरा भवितुमर्हतीति प्रतिपादयति— **कस्मैचिदित्यादि** । **त्वम् एतत्**='**पुत्रस्ते जातः**' **इत्याद्युदन्तम्,** सामान्ये नपुंसकम्, **कस्मैचित् ज्ञापय**=एतादृशाय बोधय इति कस्मैचित् पुरुषाय **परकृतां चेष्टाम्**=अन्येन केनचित् कृतां हस्तचालनादिरूपां चेष्टाम् **वीक्ष्य ततः**=तदनन्तरम् तदन्यः पुरुषः **तस्मै**= उद्दिष्टाय पुरुषाय **ब्रूते**=तमुदन्तं वाक्येन वक्ति । तदा **चेष्टावित्**=परकृतां चेष्टां पश्यन् स्थितः अन्यः कश्चित् तद्वाक्यमपि यदा शृणोति, तदा **तत् वचः**=तद्वाक्यम् **इह**=अस्मिन्नर्थे **गमकम्**=बोधकमिति वेत्ति। प्रथमपुरुषेण चेष्टाभिस्सूचितमुदन्तम् 'पुत्रस्ते जातः' इत्यादिरूपम् जानन् कश्चित् अन्यस्मै तदुदन्तं यदा ब्रूते, तदा तत्सर्वं पश्यन् स्थितोऽन्यः कश्चित् सूक्ष्ममतिः 'एतद्वाक्यम् एतादृशबोधकम्' इति स्वयमेव जानाति । नात्र किञ्चिदपि कार्यस्य प्रतीतिः । अथापि बोधो भवतीति सिद्धेऽपि व्युत्पत्तिस्सुगमैव॥

पुनः प्रकारान्तरम्— **अङ्गुलीयोगपूर्वम्**=अङ्गुल्या प्रदर्शनपूर्वकम् **तत्तद्वाच्येषु**=तत्तत्पदार्थेषु **हित-विदभिहितैः**=परमाप्तोच्चरितैः **शब्दैः जानन्** कश्चित् बालः, **अन्यत्र**=कालान्तरे **तत्तत्स्वहितजनकृतिम्**= तत्तादृशस्वाप्तजनानां प्रयत्नम् **शिक्षणार्थाम्**=स्वस्य तत्तत्पदानां तत्तदर्थशिक्षणप्रयोजनाम् **अवैति**=जानाति । आप्तः कश्चित् स्वमित्रस्य शिशोः व्युत्पादनार्थम् तत्पितरम् मातरं वा अङ्गुल्या निर्दिश्य निर्दिश्य 'अयं पिता' 'इयं माता' 'अयं भ्राता' इत्यादिशब्दोच्चारणपूर्वकं शिक्षयतीति लोकप्रसिद्धम् । शिशुरपि क्रमशः तत्तत्पदानि, तत्तदर्थांश्च स्मरन् स्मरन्, कालान्तरे 'अयं पिता' 'इयं माता' इत्यादि जानन् तेषु तेष्वर्थेषु तत्तत्पदं प्रयुङ्क्ते । अत्र सर्वत्र कुत्रापि कार्यान्वयप्रसक्तिरेव नास्ति । अथापि पदानां प्राथमिक एव शक्तिग्रहस्तु

[प्रकारान्तरेण सिद्धे शक्तिग्रहोपपादनम्]

298. **कश्चित् कस्यापि पुंसः सुतजनिमिह तत्प्रीतिकृत्त्वं च जानन्**
**तज्जन्मोक्तिप्रहृष्टे पितरि सुतजनेर्वेत्ति तद्वाच्यभावम्।**
**शक्यं तद्धर्षहेतुः स इति नियमनं सन्निधानादियुक्तेः**
**आसीदत्सु प्रसूत्याद्यनियतिकथनं कार्यवाक्येऽपि शक्यम्॥ ७५ ॥**

सर्वानुभवसिद्धः। अतः कार्यान्वय एव पदानां शक्तिग्रहो भवेत्, नान्यथा इति नियमस्य वक्तुमशक्यत्वात् सिद्धेऽपि वस्तुनि प्राथमिकशक्तिग्रहणसंभवे न काप्यनुपपत्तिः। तावता कार्यान्विते शक्तिर्न भवतीति नार्थः, सिद्धेऽपि भवतीत्येतावन्मात्रमर्थः॥ ७४ ॥

सुप्रसिद्धं सिद्धे व्युत्पत्तिग्रहणप्रकारान्तरं वर्णयति—**कश्चिदित्यादि**। **कस्यापि पुंसः**=कस्यचित्पुरुषस्य **सुतजनिम्**=पुत्रोत्पत्तिम् **तत्प्रीतिकृत्त्वं च**=पुत्रोत्पत्तिः तस्य सन्तोषकरीति च जानन् कश्चित् तदन्यः कश्चित् **इह** पितरि=तत्सुतस्य पितरि **तज्जन्मोक्तिप्रहृष्टे सति**=पुत्रोत्पत्तिवार्तया प्रहर्षमनुभवति सति **सुतजनेः**=पुत्रोत्पत्तेः **तद्वाच्यभावम्**=तद्वाक्यस्यार्थताम् **वेत्ति**॥

अयमर्थः—चैत्रस्य पुत्रोत्पत्तिं जानन् मैत्रः 'अयं वृत्तान्तश्चैत्रस्य हर्षहेतु'रिति च जानन् चैत्रं प्रति वक्ति—'चैत्र! ते पुत्रो जातः' इति। तत् शृण्वन् चैत्रः हर्षोत्फुल्लनयनो भवति। पार्श्वस्थोऽन्यः जैत्रः तद्वाक्यस्य हर्षहेतुत्वं निश्चिनोति। अथापि तद्वाक्यस्यार्थं तु न ज्ञातुं समर्थो भवति तदा, पदानां शक्तिग्रहणस्याभावात्। यदा च जैत्रः स्वयं तत्सुतवृत्तान्तं जानीयात्, तदा तद्वाक्यस्य पुत्रोत्पत्तिरेवार्थ इति अर्थं निश्चिनोति। अत्र प्रकरणे कार्यस्यार्थस्य कस्याप्यप्रतीतावपि शब्दशक्तिग्रहो जायत एव। अतः कार्यान्वये सत्येव शक्तिग्रहः, नान्यथेति नियन्तुं न शक्यम्॥

तद्वाक्यश्रवणमेव तस्य हर्षहेतुरिति कथं जानीयाज्जैत्र इत्यत्राह—**शक्यमित्यादि**। **तद्धर्षहेतुः**= चैत्रस्य हर्षहेतुः **सः**=पुत्रोत्पत्तिवृत्तान्त एवेति **नियमनम्**=व्यवस्थापनम् **सन्निधानादियुक्तेः**=तद्वाक्यश्रवणानन्तरमेव हर्षदर्शनात्, आवापोद्वापादियुक्तिवशात् **शक्यम्**=अयमेव तद्धर्षहेतुरिति निर्णेतुं शक्यमेव। अन्वयव्यतिरेकौ हि कार्यकारणभावे प्रमाणम्। ननु पुंसां हर्षहेतवो बहवो वर्तन्ते। गतहर्षहेतुस्मरणमपि कदाचिद्धर्षहेतुर्भवेदपि। एवं सति एतद्वाक्यश्रवणमेव तस्य हर्षहेतुरिति निर्णयोऽन्यथासिद्धः स्यात्, घटं प्रति रासभादिरिवेति शङ्कामुत्तरति—**आसीदत्सु**=तत्प्रकरणे बहुषु हर्षकारणेषु संभवत्सु **प्रसूत्याद्यनियतिकथनम्**=पुत्रोत्पत्तिरेव हर्षकारणमिति नियतेरसंभवापादनम् **कार्यवाक्येऽपि**=कार्यपरवाक्येऽपि **शक्यम्**। 'गामानय' इति वाक्यश्रवणसमनन्तरं प्रयोज्यवृद्धः गामानयतीति पश्यन् पार्श्वस्थो बालः गवानयनरूपकार्यस्य तद्वाक्यश्रवणमेव कारणमिति जानन् हि क्रमेण व्युत्पद्यत इत्युच्यते। एवं सति तद्वाक्यस्यानयनस्य च कार्यकारणविषयेऽप्येवमाशङ्कायास्संभवात् कार्यान्विते वा कथं पदानां शक्तिग्रहणसंभवः? तथा च एवमतिशङ्का कार्यकारणनिर्णयसामान्यविरोधिनीति 'न निरोधो न चोत्पत्ति'रिति न्यायाच्छून्यवादावतारप्रसङ्ग इति सिद्धेऽपि व्युत्पत्तिस्समानैव॥ ७५ ॥

**[सिद्धे शक्तिग्रहणं सुलभमेव]**

299. **शब्दस्यैतस्य वाच्यस्त्वयमिति च तथा वाचकोऽसावमुष्ये-**
**त्येवं शिक्ष्येत पश्चात् कतिपयवचसां पूर्वनिर्ज्ञातशक्तिः।**
**इत्थं व्युत्पन्नतत्तत्सहपठितिवशात् वाचकान् वेत्ति कांश्चित्**
**ये लोके ते हि वेदे; समधिकमिह यत्, तत्तु तत्रैव वेद्यम्॥ ७६॥**

प्राथमिकः शक्तिग्रहो यथा तथा वा भवतु। द्वितीयादिशक्तिग्रहस्तु सर्वेषां सुलभस्सर्वसंमतश्चेति प्रदर्शयति— **शब्दस्येत्यादि**। **कतिपयवचसां पश्चात्**=कतिपयपदानां शक्तिग्रहणानन्तरकाले **पूर्वनिर्ज्ञातशक्तिस्तु**=कार्यान्वयवशादेव कतिपयानामवश्यापेक्षितपदानां पूर्वमेव निर्णीतशक्तिकस्तु कश्चित् **'एतस्य शब्दस्य तु अयं वाच्यः'** इति वा, तथैव **'अमुष्य अर्थस्य अयं च वाचकः'** इति वा प्रसिद्धं वस्तु प्रदर्श्य 'अस्यायं वाचकः शब्दः'—**इत्येवम् शिक्षेत**=पदानामर्थं स्वयं जानीयात्। शिक्ष्येतेति पाठे तु आप्तैरेवं **शिक्ष्येत**=शिक्षितो भवेदेवेति प्रौढानां सिद्धे शक्तिग्रहणं सुलभमेव। एवं **कतिपयवचसां पूर्वनिर्ज्ञातशक्तिः**= निश्चितशक्तिकः, **पश्चात् इत्थम्**=एवम् **व्युत्पन्नतत्तत्सहपठितिवशात्**=गृहीतशक्तिकैः तत्तत्पदैस्सह पाठवशादेव कांश्चित् **वाचकान्**=अन्यानपि नूतनान् कांश्चित्पदान् **वेत्ति**=स्वयमेव जानाति। अयं प्रकारो लौकिकपदेषु स्यात्कामम्। वैदिकपदविषये का गतिरिति चेत्— **ये लोके**=ये शब्दा लोके प्रयुज्यन्ते **ते हि वेदे**=त एव हि वेदेऽपि समानाः। अयमंशो लोकवेदाधिकरण(पू.मी.1-3-30) न्यायसिद्धः। इन्द्रादिपदानां लोकेऽप्रयोगात्कथं शक्तिग्रह इति चेत्— **इह**=वेदे **यत् समधिकम्**=लोकतोऽवगन्तुमशक्यम् **तत्तु**= अन्यत्तु **तत्रैव**=वेद एव, उपमानादिना वा वेद्यम्। एवञ्च प्रसिद्धपदसान्निध्यादिना सिद्धे व्युत्पत्तिस्सुलभैव॥

**शक्तिग्राहकप्रमाणान्येवं** संगृहीतानि— 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः॥' 'भूसत्तायाम्' इत्यादिव्याकरणाच्छक्तिग्रहः प्रसिद्धः। गवयादिपदानामुपमानाच्छक्तिग्रहोऽपि प्रसिद्धः। कोशादपि तथैव। आप्तवाक्याच्च शक्तिग्रह लोके प्रसिद्धः। व्यवहारत इत्येतदेव कार्यशक्तिवादः। वाक्यशेषात्—अर्थवादादिरूपात् 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम्॥' इत्यादेः स्वर्गादिपदानां शक्तिग्रहः। विवृतिः='यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति' इत्यादिव्याख्यानानि। प्रसिद्धपदसान्निध्यात् अप्रसिद्धस्यैकपदस्य शक्तिग्रहः 'इह सहकारतरौ मधुरं पिको गायति' इत्यादौ पिकादिपदानाम्। परं तु प्रथमशक्तिग्रहः कथमित्यत्रैव विवादः। तत्तु कार्यान्वित एव स्वरसः। इतरत्सर्वं तु केवलं लौकिकम्। लौकिके विषये प्राभाकराणां न श्रद्धा, यतस्त एव शुद्धवैदिका दार्शनिकानाम्। मास्तु लौकिके विषये। वैदिके च हिरण्यनिधिदृष्टान्तादौ किं वदन्त्येत इति चेत्—

अहो बत भवान् बालः न जानीषे तदाशयम्। **वेदोषरा हि वेदान्ता** इत्येवं घोषयन्ति ते॥
अन्यत्र तत्सर्वमेव विशदीक्रियते क्रमात्। समाहितमनास्तावत् तिष्ठ वत्स! स्वके पथि॥
स्मर्यतामपि भगवद्वचनं त्वर्थगर्भितम्। 'सर्वं न्याय्यं युक्तिमत्वात्' इत्यादि च पुनःपुनः॥ ७६॥

**[अलौकिकपदशक्तिग्रहणप्रकारः]**

**300. व्युत्पाद्यं नाप्रतीतं प्रसजति विदिते नैरपेक्ष्यं श्रुतीनां**
**इन्द्राद्यर्थे पदानामिति दुरधिगमा नामतेत्यप्ययुक्तम्।**
**अप्रत्यक्षेषु सिंहप्रभृतिषु वचनैः कैश्चिदारण्यकोक्तैः**
**व्युत्पद्यन्ते हि पौराः; स्वयमपि च वदन्त्येवमत्रापि वार्ता ।। ७७ ।।**

**[जातिविशिष्टव्यक्तौ पदानां शक्तिः]**

**301. व्यक्तिः शब्दैर्न बोध्या यदि, न खलु भवेदन्वितज्ञप्तिसिद्धिः**
**तच्छक्तिर्व्यक्तिमात्रे न च भवति, यतः स्वोपलम्भादिबाधः ।**

---

अत्यन्ताप्रसिद्धानामिन्द्रादिपदानां शक्तिग्रहणमाशंक्य परिहरति—**व्युत्पाद्य**मित्यादि । **अप्रतीतम्**= अत्यन्ताप्रसिद्धम् **व्युत्पाद्यं न**=शब्दशक्तिग्रहणयोग्यं न भवति । **विदिते**=अत्यन्तं विदिते विषये **श्रुतीनाम्**=वेदानाम् **नैरपेक्ष्यम्**=अपेक्षाभावः **प्रसजति**='अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् । **इति**=इति हेतोः **पदानाम्**=इन्द्रादिपदानाम् **इन्द्राद्यर्थे**=इन्द्रादिरूपेऽर्थे **नामता**=संज्ञात्वम्=वाचकत्वम् **दुरधिगमा**= ज्ञातुमशक्या । इन्द्रादिपदानि अत्यन्तालौकिकार्थबोधकानि कार्यान्वितार्थबोधकानि तु न भवन्ति । लौकिक-व्यवहारागोचरत्वादेव प्रसिद्धपदसान्निध्यादिनापि न शक्तिग्रहसंभवः । अत एतादृशपदगर्भवेदार्थज्ञानं कथम्।।

**इत्यपि**=इत्येतदपि **अयुक्तम्**=नौचित्यवत् । कुत इत्यत्र—**अप्रत्यक्षेषु**=कदापि नागरिकेण द्रष्टुम-शक्येषु **सिंहप्रभृतिषु**=सिंहादिपदेषु **आरण्यकोक्तैः**=आरण्यकपुरुषप्रोक्तैः **कैश्चित् वचनैः**=तद्विवरणपरैः कतिपयवाक्यैः **पौराः**=नगरजनाः **व्युत्पद्यन्ते हि**=शक्तिं गृह्णन्ति हि । अत्र च प्रमाणम्—**स्वयमपि च**= स्वयं तत्प्राणिपरिचयवन्त इवैव **वदन्ति**=अनन्तरं व्यवहरन्ति । **अत्रापि**=प्रकृतेन्द्रादिपदेष्वपि **वार्ता**= समाचारः **एवम्**=एवमेव । सादृश्यमूलकविवरणवशात् इन्द्रादिपदानामपि शक्तिग्रहः सुगमः ।।

**अत्रेदं रहस्यम्**—न केवलमिन्द्रादिपदेष्वेव समस्या । इतिहासपुराणादिनायकप्रतिनायकवाचिनां रामलक्ष्मणरावणकुम्भकर्णादिपदानां शक्तिग्रहः कथं भवति? किं बहुना! वर्तमानकालिकानामपि देशान्तरगत-मानवानां नगराणां संज्ञादीनां वा शक्तिग्रहः अत्रत्यमानवानां सर्वेषामपि कथं भवति । तानधिकृत्य कियद्व्यव-हरन्ति जनाः । न तावन्मात्रम् । परमपूज्यानामाचार्यादीनां महात्मनां वा गतकालिकानां चरितादिकं कथं पठन्ति? एतेषां विषये प्रत्यक्षानुमानशब्दानां व्याप्तिः कीदृशी? एवं सत्यपि एतादृशव्यवहाराः प्रत्यक्षदृष्ट-वस्तुष्विव निश्शङ्कं परस्परं कथं प्रवर्तन्ताम् । इदं सर्वं केवलमुपमानमूलमेवेति सुसूक्ष्मालोचने सुगमं पूर्वाग्रह-विधुराणां विवेकिनाम् । अत एव शक्तिग्राहकप्रमाणस्यापि सत उपमानस्य वस्तुग्राहकप्रमाणमध्ये ग्रहणमकारि महर्षिणा गौतमेन । एतत्तत्त्वमग्रे तत्प्रकरणे (श्लो.127) विस्तरेण भविष्यतीत्यलमत्राधिकोक्त्या ।। ७७ ।।

अथेदानीं चिन्त्यते—पदानां **जातौ शक्तिः**, उत व्यक्ताविति । **पूर्वमीमांसकास्तु** जातावेव शक्ति-मङ्गी कुर्वन्ति । एतन्न क्षोदक्षममिति दर्शयिति—**व्यक्तिरि**त्यादिना । **शब्दैः**=गवादिपदैः **व्यक्तिः**=गवादिव्यक्तिः

**धर्मो धर्मी च नैकं किमपि; न च तयोर्भिन्नयोरप्यभेदः**
**तस्मात् तां तद्विशिष्टामभिदधति पदान्यन्यथागत्यभावात् ।। ७८ ।।**

**[पदानां व्यक्तिलक्षणापक्षविमर्शः]**

302. **जातिं व्यक्त्या विहीनां स्पृशति न धिषणा; तेन जातौ प्रवृत्ता**
**शक्तिर्व्यक्तिं स्पृशेच्चेत्, स्थित इह वचसां तद्विशिष्टावगाहः ।**

---

यदि न बोध्या=यदि न वाच्या=गवादिपदानां जातावेव शक्तिः, न व्यक्तौ इति यद्युच्यते, **तदा अन्वितज्ञप्तिसिद्धिः**=परस्परान्वितबोधस्य सिद्धिः **न खलु भवेत्**=नैव भवेत् । परस्परान्वितस्वार्थबोधकत्वं हि पदानामावश्यकम्, अन्यथा विशकलिततया पदार्थानां स्मरणमात्रं स्यात्, न शाब्दबोधः। परस्परमन्वयश्च व्यक्तीनामेव, न जातेः । अतो व्यक्तिबोधनं पदैरावश्यकमिति व्यक्तौ शक्तिरावश्यकी । एतदर्थं व्यक्तिमात्रे पदानां शक्तिः, न तु जाताविति पक्षोऽपि न युक्तः । **तच्छक्तिः**=पदानां बोधनशक्तिः **व्यक्तिमात्रे न च भवति**=नैव भवति । कुतः=**यतः स्वोपलंभादिबाधः**=स्वानुभवव्यवहारयोर्विरोधो भवेदेव । आनयनादिक्रियान्वितायां एकस्यामेव शक्तिग्रहे, कालान्तरे देशान्तरे गोपदेन व्यक्त्यन्तरबोधः, तन्मूलकव्यवहारो वा न भवेदेव, अनुगमार्थं जातिरावश्यकी । अतो व्यक्तिमात्रेऽपि शक्तिर्नास्ति, न वा जातिमात्रे ।।

धर्मधर्मिभावस्यैव कल्पितत्वात्, जातिरिति कश्चन धर्मः, व्यक्तिरिति कश्चन धर्मी वा पृथङ्नास्त्येव, द्वयोरैक्यादिति शङ्कायामाह—**धर्मः, धर्मी च**=धर्मी वा द्वयम् **किमपि एकम्**=अभिन्नम् **न** । तर्हि धर्मधर्मिणोर्भेदाभेदौ स्यातामिति चेत्, एवम् **भिन्नयोः तयोः** जातिव्यक्त्योः **अभेदोऽपि न च**=नैव । एवञ्च तयोरभेदोऽनुभवविरुद्धः । भेदाभेदौ तु परस्परविरुद्धौ । अतश्च गत्यन्तराभावात् तयोर्भेद एव । **तस्मात्**=तयोर्भेदात् **अन्यथागत्यभावात्**=गत्यन्तराभावात् **तद्विशिष्टाम्**=जात्यादिविशिष्टाम् **ताम्**=व्यक्तिम् पदानि गवादिपदानि **अभिदधति**=शक्त्यैव बोधयन्ति । गत्यन्तराभावश्च समनन्तरश्लोकाभ्यां विव्रियते ।।

गवादिपदानां यदि गवादिव्यक्तयोऽर्थाः, तदा व्यक्तीनामनित्यत्वे प्रलये संपूर्णनाशात्, वेदस्य च नित्यत्वात् प्रलये वेदपदानामर्थशून्यत्वप्रसङ्गभिया जातावेव शक्तिः पदानाम् । जातेश्च नित्यत्वात् प्रलये पदानां नार्थशून्यत्वमिति **पूर्वमीमांसका** मन्यन्ते ।**वेदान्तिनस्तु** ब्रह्मणस्सकाशादेव जगदुत्पत्त्या वेदस्यापि जगदन्तर्गततया प्रलये लयाङ्गीकारान्नेयमापत्तिः । जातिरतिरिक्ता न वेत्यादिकमग्रे (अद्र.111-118) बहुविस्तरेण विचार्यते । जातिपदम्, तस्यार्थः, तस्यानुगतत्वमित्यादीनां निराकर्तुमशक्यत्वाल्लोकानुभवानुरोधेन पदानां जातिविशिष्टव्यक्तावेव शक्तिरित्याहुः ।**नैयायिकास्तु** जात्याकृतिव्यक्तिषु शक्तिमङ्गीकुर्वन्ति । आकृतेरेव जातित्वाभिप्रायेण द्वयोरेव शक्तिरिति स्थाप्यते । एतत्तत्त्वं तु जातिविचार एव (अद्र.111) द्रष्टव्यम् ।। ७८ ।।

'अन्यथागत्यभावा'दित्येतदाक्षिपतो मीमांसकस्य मतं निराकरोति—**जातिमित्यादि** । ते ह्येवं मन्यन्ते—व्यक्तौ यदि शक्तिः, तर्हि प्रलये वैदिकपदानामर्थशून्यत्वप्रसङ्गः, इदानीमपि 'पशुना यजेत'इत्यादौ यदि पशुपदं व्यक्तिमात्रवाचकम्, तर्हि त्रैकालिकानां कर्मणां कथमेकव्यक्त्या निर्वाहः? अतः जात त्रेव शक्तिः।

**जातेर्बोधः स्वहेतोः; स्थितिरपि हि भवेत् क्वापि गोत्वोक्तिनीत्या**
**शब्दात् तत्पारतन्त्र्यं स्फुरति यदि, पराबोधने तन्न शक्यम् ॥ ७९ ॥**

**[जातिशक्तिवादविमर्शः]**

**303. जातौ शक्तिर्लघुत्वात्, भवति च वचसां भाषणं जातिमात्रे**
**भेदो निष्कर्षकेभ्यस्त्विह परमजहल्लक्षणाया निरूढिः ।**

'गामानय' इत्युक्ते जातेः क्रियान्वयानुपपत्त्या लक्षणया, अर्थापत्त्या वा व्यक्तेर्भानसंभवात्, 'अनन्यलभ्यः शब्दार्थः' इति न्यायेन व्यक्तिः न शब्दार्थः । तदेतन्निराकरोति—**धिषणा**=अस्मदीया बुद्धिः व्यक्त्या **विहीनाम्**=व्यक्तिरहितां जातिम् **न स्पृशति**=न बोधयितुमलम् । न हि जातिर्निराधारा तिष्ठेत्, गृह्येत वा । **इति हेतोः शक्तिः**=पदानामभिधानशक्तिः **व्यक्तिं स्पृशेच्चेत्, इह**=एवमनुभवे **वचसाम्**=गवादि-पदानाम् **तद्विशिष्टावगाहः**=जातिविशिष्टव्यक्तिविषयकत्वम् **स्थितः**=निश्चित एव । यत्पदं यदर्थविषयकं बोधं नियमेन जनयति, तत्पदं तत्र शक्तमित्येव खलु लोकानुभवः । अतो जातिं विना व्यक्तेर्वा, व्यक्तिं विना जातेर्वा गवादिपदेन बोधाभावात्, उभयत्रापि शक्तिरनिवार्येति जातिविशिष्टव्यक्तौ शक्तिरनिवार्या॥

एतदेव विशदतयोपपादयति—**जातेः**=गोत्वादेः **बोधः स्वहेतोः**=तत्र शक्तेस्सत्त्वादेव । एवमेव **तस्याः**=जातेः **क्वापि स्थितिरपि हि** =कस्यांचिद्व्यक्तावेव, निराश्रयतया स्थितेरसंभवात् । अतश्च गामन्तरा गोत्वबोधः, गोत्वमन्तरा गोबोधो वा यदि न भवति, तर्हि तद्विशिष्ट एव शक्तिरङ्गीकार्या, न त्वन्यतर-स्मिन् । तत्र दृष्टान्तः—**गोत्वोक्तिनीत्येति** । गोत्वपदं हि 'गोर्भावः' इति व्युत्पत्तिसिद्धम्, एवं गोपदमपि गोत्वप्रवृत्तिनिमित्तकं सिद्धम् । एवमुभयोः परस्परसापेक्षत्वेऽन्यतरस्मिन्नेव शक्तिरिति कथम्? ननु व्यक्तिर-प्रधाना, नश्वरत्वात्, जातिस्तु प्रधाना, प्रलयेऽप्यवस्थानात्, अनुगमकत्वाच्च । गोपदस्य गोव्यक्तौ शक्त्यङ्गीकारे, गोत्वं तद्विशेषणतया प्रतीयेतेत्यप्राधान्यं स्यात् । गोत्वे शक्त्यङ्गीकारे तु स्वप्राधान्येन बोधः स्यात् । अतः गोत्व एव शक्तिर्गोपदस्येति चेत्, तत्राह—**शब्दात्**=गोशब्दात् **तत्पारतन्त्र्यम्**=गोत्वस्य पारतन्त्र्यम् किल स्फुरति । अतो गोत्व एव शक्तिरिति यदि, तर्हि **पराबोधने**=व्यक्तेरनवगमे **तत्**=गोत्वज्ञानमेव **न शक्यम्,** गामेवाजानता गोत्वं कथं ज्ञायेत । अतः गोत्वस्य प्राधान्यमनुगमापेक्षया, न व्यवहारापेक्षया । ननु प्रलये गवामभावेऽपि गोत्वस्य सत्त्वादस्यैव प्राधान्यमावश्यकमिति चेत्, क एवमाह प्रलये गोत्वमवतिष्ठत इति । गामन्तरा गोत्वं कुत्र तिष्ठेत्? ब्रह्मैकमेवावशिष्यते प्रलये । जातेर्नित्यत्ववचनं हि व्यक्त्यपेक्षया । अत उभयोः परस्परसापेक्षत्वाद्विशिष्ट एव पदानां शक्तिः । किञ्चाभिहितमेव बहुवारम्—प्रत्यक्षं वर्तमान-प्राधान्याद्व्यक्तिप्रधानम्, शब्दानुमाने तु त्रैकालिकत्वाज्जातिप्रधाने इति । अत उभयोरपि स्वस्वप्राधान्य-मवर्जनीयमिति जातिविशिष्टव्यक्तावेव शक्तिः, न केवलमन्यतरस्मिन्निति ॥ ७९ ॥

'अनन्यलभ्यश्शब्दार्थः' इति प्रदर्शितनियमस्य मौल्यमेव न ज्ञातमायुष्मतेति मन्यमानस्याशयं प्रदर्श्योत्तरयति—**जातावित्यादि** । **जातौ**=जातावेव **शक्तिः**, न तु व्यक्तौ । कुतः? **लघुत्वात्** । व्यक्तौ

इत्युक्तं कैश्चिदेवं यदि भवति तदोपाधिशब्देऽपि नीतिः
मन्दं वैषम्यमात्रं भवतु च नियतिः प्रत्ययैर्लक्षणायाः ॥ ८० ॥

[गुणवाचिनामपि शब्दानां गुणिपर्यन्तत्वम्]

304. मत्वर्थीयानुशिष्टिर्गुणवचनगणे वैभवात् स्यादसौत्री
शक्तिस्तत्रापि तत्तद्गुणवति नियता जातिशब्दाविशेषात् ।

शक्त्यङ्गीकारे व्यक्तीनामानन्त्यात् शक्तिग्रहणासंभवः । किञ्च देशान्तरकालान्तरव्यक्तिषु शक्तेः पूर्वमग्रहणात् बोधानुपपत्तिः । तदर्थमनुगमकतया जातावपि शक्त्यङ्गीकार आवश्यकः, अतश्च जातौ शक्तेर्दुस्त्यजत्वात्, व्यक्तेः 'अनन्यलभ्यः' इति न्यायेन अन्यथानुपपत्त्यादिनापि बोधसंभवात्, व्यक्तौ शक्त्यनङ्गीकारेऽपि दोषाभावात् लाघवं जातिशक्तिवादिनाम् । अतः **वचसाम्**=पदानाम् **जातिमात्रे**=जातावेव **भाषणं च**=अभिधानसामर्थ्यम्=शक्तिः **लघुत्वात्**=लाघवात् **भवति** । नन्वेवं तर्हि गोपदगोत्वपदयोरविशेषप्रसङ्गः । गोपदं गोत्वे शक्तम्, गोत्वपदमपि तत्रैव शक्तमिति तयोः को विशेष इति चेत्, तत्राह—**भेद** इत्यादि । **निष्कर्षकेभ्यः**=जातिमात्रवाचकेभ्यो गोत्वादिपदेभ्यः **इह परम्**=गोपदस्य तु **भेदः अजहल्लक्षणायाः**=गोत्वस्य, तदाश्रयगोव्यक्तेश्च बोधः अजहत्स्वार्थलक्षणाया अपि **निरूढिः**=शक्तितुल्यया निरूढलक्षणयापि भवेत् । एवञ्च गोत्वपदं स्वप्राधान्येन जातिमाह, गोपदं तु व्यक्तिप्राधान्येन गोत्वम्, निरूढाजहल्लक्षणया व्यक्तिमपि बोधयतीत्येतावन्मात्रमस्तु तयोः पदयोर्विशेषः इति कैश्चिन्मीमांसकैरुक्तम् ॥

**एवं यदि**=यद्येवं जातावेव शक्तिः, **तदा उपाधिशब्देऽपि**=जात्यतिरिक्तप्रवृत्तिनिमित्तकनीलादिशब्देऽपि **नीतिः**=अयं न्यायः **भवति** । तथा च नीलादिपदानि नैल्यादिगुणवाचकान्येव भवेयुः । न द्रव्यवाचकानि । ननु जातेः अखण्डत्वात् तत्र शक्त्यङ्गीकारे लाघवम् । उपाधीनां त्वतथात्वान्नैवं लाघवमित्यस्ति तयोः पदयोर्वैषम्यमिति चेत्, **वैषम्यमात्रम्**=बोधस्य समानत्वे एतादृशं केवलं वैषम्यम् **मन्दम्**=विनिगमनेऽसमर्थम् । अतो द्रव्यगुणक्रियाजातिप्रवृत्तिनिमित्तकानां **चतुर्विधानां पदानां** मध्ये जातिप्रवृत्तिकपदेष्वेव जातौ शक्तिः, व्यक्तौ तु लक्षणा, न त्वितरपदेष्विति विभागोऽनुभवविरुद्धः । चतुर्विधानि हि पदान्येकरूपेणैव शाब्दबोधजनकतयानुभवसिद्धानि । किञ्च गो-गोत्वपदयोः पर्यायत्वापत्तिस्तु दुर्वारा । गोत्वपदेन हि विशेषणतया गोभानमावश्यकम् । यदि तत्र गोत्वत्वं विशेषणम्, तर्हि तस्य गवेतरासमवेतत्वादिरूपत्वात् गोत्वेऽनन्तगोव्यक्तीनां भानमावश्यकमिति गौरवं दुष्परिहरम् । नन्वेवं तर्हि गङ्गादिपदानां वा गङ्गातीरे कथं लक्षणा? इत्यत्राह—**लक्षणायाः**=गङ्गातीरादिलक्षणायाः **नियतिश्च**=व्यवस्था च **प्रत्ययैः**=तत्तदनुभवैः **भवतु**, का हानिः? गोपदगङ्गापदयोरस्ति महद्वैलक्षण्यम् । गोपदेन मतद्वयेऽपि जातेः, व्यक्तेश्च भानमनिवार्यम् । नैवं गङ्गापदं सर्वत्र गङ्गातीरोपस्थापकम्, 'गङ्गायां मत्स्याः' इत्यत्र तीरबोधाभावात् । अतो लक्षणाया नियामकमन्यदेवेति नानयोः समानो न्यायः । अतो गवादिपदानां जातिविशिष्टव्यक्तावेव शक्तिः, न तु गोत्वादिजातिमात्रे ॥ ८० ॥

जातिवाचिनां गवादिपदानामिव गुणवाचिनां नीलादिपदानामपि द्रव्यपर्यन्तबोधनं शक्त्यैव । एवं सति मतुप्प्रत्ययाभावेऽपि द्रव्यवाचित्वे 'गुणवचनान्मतुबो लुगिष्यते' इति वार्तिकं किमर्थमित्यत्राह—**मत्वर्थीये**त्यादि।

**निष्कृष्यैषां प्रयोगे क्वचिदगतितया द्रव्यवृत्तिर्निरुद्धा**
**शक्तिः साम्ये विभक्तेस्तदवधिररुणाधिक्रियायामभाषि ॥ ८१ ॥**

**गुणवचनगणे**=गुणवाचिनीलादिपदसमुदाये **असौत्री**=सूत्रभिन्नवार्तिकोक्ता **मत्वर्थीयानुशिष्टिः**=मत्वर्थीयप्रत्ययानुबन्धिनी लोपस्य शिष्टिः=शासनम् 'गुणवचनात्' इत्यादिरूपं वार्तिकम् **वैभवात्**=वैभववादात्स्यात्, न पुनर्मत्वर्थीयप्रत्ययस्यावश्यकत्वतात्पर्येण । अत एव नीलादिपदानि विशिष्टे लक्षणामन्तरापि नीलरूपविशिष्टद्रव्यवाचीनि स्वत एव । 'असौत्री' इत्यनेन तद्वार्तिकं त्यक्तुमपि शक्यम्, 'देवानां प्रिय इति मूर्खे' इत्यादीनां तादृशानां वार्तिकानां दर्शनात् इति सूच्यते । अत एव **जातिशब्दाविशेषात्**=गवादिजातिप्रवृत्तिनिमित्तशब्देभ्यो विशेषाभावात् **तत्रापि**=नीलादिगुणवाचिपदेष्वपि **तत्तद्गुणवति**=नीलादितत्तद्गुणवति द्रव्ये **शक्तिः नियता**=नियमेन स्थितैव । ननु तर्हि 'गुणे शुक्लादयः पुंसि' इति शुक्लादिपदानां गुणमात्रवाचकत्वं कोशेनोक्तं किल । तत्कथमित्यत्राह—**एषाम्**=गुणिपर्यन्तानामपि शुक्लादिपदानाम् **क्वचित्**=कदाचित् **निष्कृष्य प्रयोगे**=विशेषणमात्रबोधेच्छया प्रयोगे **द्रव्यवृत्तिः**=द्रव्यबोधनशक्तिः **अगतिकतया**=गत्यन्तराभावात् **निरुद्धा**=प्रतिरुद्धा भवति । एवमेव **विभक्तेस्साम्ये सति**='नीलो घटः' इत्यादिसमानविभक्तिकस्थले **शक्तिः**=पदशक्तिः **तदवधिः**=विशेष्यपर्यन्तबोधकत्वम् **अरुणाधिक्रियायाम्**=अरुणाधिकरणे **अभाषि**=भाष्यकारैर्व्याख्यातम् ॥

'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति कोशात्, गुणे गुणवति च शुक्लादिशब्दाः शक्ताः इति केचित् । गुण एव शक्ताः, गुणिनि तु लक्षणा, 'अनन्यलभ्यश्शब्दार्थः' इति न्यायेन उभयत्र शक्त्यङ्गीकारे गौरवादिति केचन । वयं तु वदामः 'गुणिन्येव शक्ताः, सति बाधके लक्षणया गुणवाचिनः' इति । 'अपृथक्सिद्धविशेषणवाचिनां पदानां विशिष्टपर्यन्तत्वं शक्त्यैवे'ति नियमात्, जातिगुणादिवाचिनश्शब्दाः स्वत एव तत्तद्विशिष्टबोधका इत्येव प्रयोगबाहुल्यात्सिद्ध्यति । अत एव 'अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यत्र एकहायिनीपिङ्गाक्षिपदयोः द्रव्यपर्यन्तत्वेऽपि अरुणया इति पदस्य मीमांसकप्रक्रियया आरुण्यमात्रबोधकत्वे तस्याद्रव्यत्वेन दानासंभवेन क्रयसाधनत्वासंभवमाशङ्क्य, लक्षणया द्रव्यपर्यन्तत्वस्य व्याख्याकारैर्वर्णनेऽपि श्रीमद्भिर्भाष्यकारैः तयोः पदयोरपृथक्सिद्धविशेषणवाचित्वेन विशेष्यपर्यन्तत्वं शक्त्यैवेति जैमिनेराशय इति स्थापितं श्रीभाष्ये आनन्दमयाधिकरणे । अत्र अरुणया इत्यस्य गवा इति विशेष्यवाचकपदमध्याहार्यम् । सोमक्रयसाधनत्वं गोरुच्यत इति गोपदात् तृतीया । तद्विविशेषणवाचकपदस्योपरि तृतीयायाः कोऽर्थः? साधुत्वार्थं तृतीयेति विद्वद्भिरुच्यते । तर्हि प्रातिपदिकार्थमात्रे प्रथमैव स्यात् । अतः विशेषणवाचकपदानां विशेष्यवाचकपदसमानविभक्तिकत्वं सर्वसंप्रतिपन्नं कथं निर्वाह्यमिति तदर्थकानुशासनाभावात् किं कर्तव्यमिति क्लिश्यन्ति विद्वांसः । व्याकरणस्य पदशास्त्रत्वेन तत्र तादृशनियमस्याप्रसक्त्या, तदर्थं वाक्यशास्त्रेण मीमांसयैव नियमः करणीय इति तदर्थम् 'अर्थैकत्वे'त्यादि सूत्रितं जैमिनिनेति श्रीभाष्यकाराणामाशयः । अधिकं तु **अरुणाधिकरणसरणिविवरण्यादिषु** द्रष्टव्यम् । आहत्य तु गुणवाचिशब्दा अपि शक्त्यैव गुणिवाचकाः ॥ ८१ ॥

[शरीरवाचिशब्दानां शरीरिबोधकत्वम्]

305. **जीवं देवादिशब्दो वदति तदपृथक्सिद्धभावाभिधानात्**
**निष्कर्षाभावयुक्तात् बहुरिह च दृढो लोकवेदप्रयोगः ।**
**आत्मासंबन्धकाले स्थितिरनवगता देवमर्त्यादिमूर्तेः**
**जीवात्मानुप्रवेशाज्जगति विभुरपि व्याकरोन्नामरूपे ॥ ८२ ॥**

'अपृथक्सिद्धविशेषणवाचिनां पदानां विशेष्यपर्यन्तत्वम्' इति नियमं शरीरवाचिपदेष्वप्यतिदिशति— जीवमित्यादिना । **देवादिशब्दः**=देवमनुष्यादिशब्दोऽपि **निष्कर्षाभावयुक्तात्**=विशेषणमात्रबोधनतात्पर्याभावसहकृतात् **तदपृथक्सिद्धभावाभिधानात्**=तत्तद्विशेषणापृथक्सिद्धवस्तुबोधनशक्तेः **जीवम्**=तत्तच्छरीरविशिष्टं शरीरिणं जीवमेव **वदति** । 'मनुष्योऽयं मृतः' 'देवो जातः' इत्यादौ तु जीवस्य मरणासंभवात् मनुष्यादिपदं शरीरमात्रपरतया प्रयुक्तमिति न जीवपर्यन्तवाचि, अतः 'निष्कर्षाभावयुक्तात्' इति विशेषणम् । यद्यत्र—'शिखी ध्वस्तः' इतिवन्निर्वाहः, तदात्रापि 'जीवो मृतः' इत्यादिप्रयोगाः स्युः कामम् । ननु 'मनुष्योऽहम्' इत्यत्र मनुष्यपदं लक्षणयैव तद्विशिष्टवाचीत्येवान्ये मन्यन्ते । एवं सति विशिष्टशक्तिः कथमित्यत्र—**इह च**= एतद्विषये च **दृढः**=अन्यथाकर्तुमशक्यः **बहुः लोकवेदप्रयोगः**=अनेके लौकिका वैदिकाश्च प्रयोगा एव **प्रमाणम्** । लोके किल सर्वेऽपि शरीरवाचकाः पशुः, मनुष्यः इत्यादिशब्दाः शिष्टैरेव शरीरिबोधनेच्छया प्रयुज्यन्ते । 'स्वायत्ते शब्दप्रयोगे' इति न्यायेन बुद्धिपूर्वकमौपचारिकं कथं प्रयुञ्जते शिष्टा अपि । वेदे तु प्राणादिशब्दाः तदविनाभूतं जीवमभिदधतीति प्रसिद्धम् 'प्राणो ह पिता प्राणो ह माता' (छां.7-15-1)इत्यादौ दृष्टम् । तथैव विज्ञानवानिति वक्तव्यत्वे 'विज्ञानम्' इति प्रयोगः । अयमंशः 'व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः' (ब्र.सू.2-3-35) इत्यत्र 'न चेत् बुद्धेः करणत्वात् 'विज्ञानेन' इति करणविभक्तिनिर्देशःस्यात्' । 'जीवस्यैष निर्देशः, न बुद्धेः । न चेज्जीवस्य स्यात्, निर्देशविपर्ययः स्यात्=विज्ञानेनेत्येवं निरदेक्ष्यत्' (शं.भा.2-3-36) इति भाष्ययोः स्पष्टम् । एवमेव वर्णिनः आश्रमिणश्चेति वक्तव्ये 'वर्णाश्चैवाश्रमाश्च' (गौ.ध.सू.) योगिनः इति स्थाने 'योगाः' (न्या.भा.1-0) इत्यादयः प्रयोगाः । अतो बहूनां प्रयोगाणां गौणत्वकल्पनापेक्षया विशिष्टवाचकत्वकल्पनमेव वरम् ॥

ननु 'चैत्रोऽयं मृतः' 'पशुरयं मृतः' इति मृतशरीरेऽपि चैत्रपश्वादिप्रयोगदर्शनात्, अत्र शरीरे जीवसम्बन्धाभावात् कथं शरीरवाचिनां शरीरिपर्यन्तत्वमिति शङ्कां परिहरति—**आत्मासंबन्धकाले**=मृतशरीरे आत्मनस्संबन्धाभावसमयेऽपि **देवमर्त्यादिमूर्तेः**=देवमानवादिशरीराणाम् **स्थितिः**=शरीरत्वेन स्थितिः **अनवगता**=नावगता भवति, तदानीं तच्छरीरस्य 'शव' इत्येव संज्ञा । देवमूर्तेस्तथात्वकथनमस्पृश्यस्पर्शादौ शास्त्रतस्तथाव्यवहारात् । किं बहुना! **विभुरपि**=परमात्मापि जगति **नामरूपे**=स्थूल एव जगति नामरूपं च **जीवात्मानुप्रवेशात्**=द्वारभूतजीवात्मनस्संबन्धादेव **व्याकरोत्**=व्यवास्थापयत् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिना जीवसंबन्धमन्तरा नामरूपं च सर्वथा न भवत्येव । अतस्सर्वेऽपि शब्दाः जीवविशिष्टवाचका एव । एवं ज्ञानिनां तु तद्विशिष्टपरमात्मवाचकाश्च ॥ ८२ ॥

**[शरीरलक्षणम्]**

**306. संस्थानैक्याद्यभावे बहुषु निरुपधिर्देहशब्दस्य रूढिः**
**लोकाम्नायप्रयोगानुगतमिह ततो लक्ष्म निष्कर्षणीयम्।**
**अव्याप्तत्वादिदुःस्थं परमतपठितं लक्षणं तत्र; तस्मात्**
**यद्धीतुल्याश्रयं यत् वपुरिदमपृथक्सिद्धिमद् द्रव्यमस्य ॥ ८३ ॥**

---

शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्थापनेन जगतः परमात्मशरीरत्वात्, जगद्वाचिशब्दैः परमात्माभिधानं स्वरसतस्सङ्गच्छत इति परमात्मनः जगच्छरीरित्वोपयोगितया शरीरलक्षणं परिष्कर्तुमुपक्रमते— **संस्थानैक्यादीति**। **संस्थानम्**=आकारः। तस्यैकरूपताया अभावेऽपि **बहुषु**=बहुविधेषु प्राणिनां शरीरेषु **देहशब्दस्य**=शरीरशब्दस्य **निरुपधिः**=निरुपाधिका=सहजा **रूढिः**=संज्ञा दृश्यते। प्राणिनां शरीराणि नानाविधाकाराणि दृश्यन्ते। अतः 'हस्तपादादिवत् शरीरम्' इत्यादिकमव्याप्तम्, स्थावरादिष्वसंभवग्रस्तं च। स्थावराणामपि 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इत्यादिना जीवसंबन्धादिकं संप्रतिपन्नम्। किञ्च 'यस्य पृथिवी शरीरम्' (बृ.5-7-3) इत्याद्यन्तर्यामिब्राह्मणेन पृथिव्यादीनामपि परमात्मशरीरत्वं श्रुतिसिद्धम्। ततः सर्वविधशरीरानुगतमेकं निष्कृष्टं लक्षणम् **लोकाम्नायप्रयोगानुगतम्**=लोकप्रयोगानुगुणम्, शास्त्रप्रयोगानुगुणं च सर्वानुगतम् **लक्ष्म**=शरीरस्य लक्षणम् **इह**=अस्मिन् शास्त्रे **निष्कर्षणीयम्**=निष्कृष्य सर्वानुगतं सर्वदोषरहितं च किञ्चिल्लक्षणं वक्तव्यम्॥ नन्वस्ति 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' (न्या.सू.1-11) इत्यादिकं परोक्तं शरीरस्य लक्षणम्। **परकल्पिततडाकोपजीवनन्यायेन** तदेवास्तु शरीरलक्षणमिति चेत्— तत्र न्यायसूत्रे **परमतपठितम्**=नैयायिकैरुक्तम् **लक्षणम्**=शरीरस्य लक्षणम् **अव्याप्तत्वादिदुःस्थम्**= अव्याप्त्यादिदूषितम्। चेष्टाश्रयत्वम्, इन्द्रियाश्रयत्वम्, अर्थाश्रयत्वं चेति त्रीणि लक्षणान्युक्तानि। तत्र चेष्टाश्रयत्वलक्षणम् मूर्छितादिशरीरे चेष्टाया अभावादव्याप्तम्। न च चेष्टाश्रयजातिमत्त्वविवक्षणादव्याप्तिपरिहारः, शरीरत्वस्य जातित्वाभावात्। न च चेष्टाश्रयशरीरसदृशत्वं लक्षणम्, सादृश्यस्याननुगतत्वेनानुगतप्रतीतिनिर्वाहकत्वासंभवात्। न च चेष्टाश्रयत्वार्हत्वं लक्षणम्, अर्हताया एव दुर्वचत्वात्। एवम् इन्द्रियाश्रयत्वम्, किं समवायेन, उत संयोगेन? नाद्यः, अवयवावयविनोरेव समवायात्। इन्द्रियशरीरयोरवयवावयविभावाभावात्, पञ्चभूतानामेव शरीरं प्रत्युपादानत्वाङ्गीकारात्। नापि संयोगेन? अर्थैरपि तत्संयोगस्य सत्त्वेन तेषामपि शरीरत्वापातात्। एवम् अर्थाश्रयत्वमपि न लक्षणम्। अर्थो नाम पुरुषार्थः भोगरूपः। तदाश्रयस्तु जीव एव, न भौतिकं शरीरम्। न च भोगहेतुत्वं लक्षणम्, गृहादीनामिन्द्रियादीनामपि भोगहेतुत्वेन तेष्वतिव्याप्तेः। न च भोगावच्छेदकत्वं शरीरत्वम्, किं नामावच्छेदकत्वम्? गृहारामादीनामपि भोगस्थानरूपत्वेन भोगावच्छेदकत्वेन शरीरत्वापत्तेः। अन्ततः 'यस्य पृथिवी शरीरम्' इत्यादिना परमात्मशरीरत्वेन प्रतिपन्नेषु पृथिव्यादिषु लक्षणत्रयमप्यव्याप्तम्। अधिकं श्रीभाष्यादिषु द्रष्टव्यम्॥

अतः एतच्छास्त्रानुगुणं शरीरलक्षणं प्रदर्शयति— **तस्मादित्यादि**। **यत् यद्धीतुल्याश्रयम् अपृथक्सिद्धिमद् द्रव्यम्, इदम् अस्य वपुरित्यन्वयः**। यस्य चेतनस्य यद्द्रव्यम् अपृथक्सिद्धम् भवति, तत्

[जगतः परमात्मशरीरत्वम्]

307. शब्दैस्तन्वंशरूपप्रभृतिभिरखिलः स्थाप्यते विश्वमूर्ते-
रित्थंभावः प्रपञ्चः; तदनवगमतस्तत्पृथक्सिद्धिमोहः ।
श्रोत्राद्यैराश्रयेभ्यः स्फुरति खलु पृथक् शब्दगन्धादिधर्मः;
जीवात्मन्यप्यदृश्ये वपुरपि हि दृशा गृह्यतेऽनन्यनिष्ठम् ।। ८४ ।।

तस्य शरीरम्—इति शरीरलक्षणम् । आत्मनः शरीरस्य च संबन्धः संयोग एवेति बहवो मन्यन्ते । आत्मतत्त्वं हि क्रमेणावरुह्य जीवम्, बुद्धिम्, अन्तःकरणम्, प्राणान्, सर्वाणि बाह्यकरणानि, पञ्चभूतानि चाभिव्याप्य सर्वत्र स्वधर्मं चैतन्यम्, प्रत्यक्त्वं चापादयत् पेपीयमानं मोदमानञ्च तिष्ठति, तत्तादृशस्संबन्धः केवलसंयोगरूपः कथं स्यात्? किं बहुना ! 'ओतं मनः प्राणैश्च सर्वैः' इति परमात्मन एव मनःप्राणाद्यै-रोतप्रोतत्वमुच्यते चेत्, किमुत जीवस्य! वस्तुतस्तु जीवद्वारैव ब्रह्मणोऽपि तत्त्वम् । वस्त्रे तन्तूनामिवोत-प्रोतत्वं हि अपृथक्सिद्धिरूपम् । अत एव ब्रह्मापि जगच्छरीर्येव । एवञ्चेदं शरीरं जीवस्यापृथक्सिद्धविशेषणं द्रव्यम् । अत एव तस्येदं शरीरम् । जीववियोगानन्तरमस्य शवत्वमेव मुख्यम् । कैश्चित्तथाव्यपदेशोऽपि भूतगत्याश्रयणादेव । धर्मभूतं ज्ञानमपि द्रव्यम्, अपृथक्सिद्धं च । तद्व्यावृत्तये यस्य चेतनस्येति चैतन्याश्रयस्यो-द्देश्यत्वोक्त्या तस्य न शरीरत्वम् । वस्तुतस्तु धर्मभूतज्ञानस्वरूपं पूर्वमेव (जीव.4) विस्तरशो विचारितम्। अधिकं तु भाष्ये, **न्यायसिद्धाञ्जनादौ** च द्रष्टव्यम् । किमधिकोक्त्या! अन्तर्यामिब्राह्मणे हि एकविंशतिकृत्वः, द्वाविंशतिकृत्वश्चाभ्यस्यमानं जगतः शरीरत्वं कथं त्यक्तुं शक्यं वैदिकैः । उपबृंहणेऽपि 'जगत्सर्वं शरीरं ते' इत्यादिकं हि प्रसिद्धम् । एतदुपर्यपि यदि दूषणं किञ्चिदुच्यते, तत् उक्तिदोषरूपं स्यात्, न प्रमेयदूषणम्।।

क्रियतां तु परिष्कारः यदि त्वमसि वैदिकः । त्यक्त्वा शब्दाडंबरं त्वमृजौ मार्गे विचिन्तय ।। ८३ ।।

अपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यन्तबोधकत्वस्थापनार्थं जगतः ब्रह्मशरीरत्वं यद्युच्यते, तर्हि जगद्ब्रह्मणोरविनाभावोऽपि वक्तव्यः । तत्र प्रमाणं किमित्यत्राह—**शब्दैरित्यादि** । **विश्वमूर्तेः**=जगच्छरीर-कस्य परमात्मनः **अखिलः प्रपञ्चः**=चेतनाचेतनात्मकः सर्वोऽपि प्रपञ्चः **तन्वंशरूपप्रभृतिभिः शब्दैः**= शरीरपर्यायभूतैः तन्वादिशब्दैः **इत्थंभावः**=अपृथक्सिद्धविशेषणत्वम् **स्थाप्यते**=निरूप्यते श्रुतिस्मृतिषु । **आदि**पदेन कायादिशब्दाः ग्राह्याः । 'जगत्सर्वं शरीरं ते' 'तत्सर्वं वै हरेस्तनुः' 'ममैवांशो जीवलोके जीवभूतः' 'रूपान्तरं तद्द्विज कालसंज्ञम्' 'यदम्बु वैष्णवः कायः' इत्यादि । अन्तर्यामिब्राह्मणं तु शरीर-पदगर्भमेव । शरीरशरीरिणोर्मध्ये शरीरस्यैकांशत्वात् अंशपदमपि शरीरपरम् । एवं जगतः ब्रह्मापृथक्सिद्धत्वं सिद्धं चेत्, जगद्दर्शनवेलायामेव सहैव ब्रह्मदर्शनमप्यावश्यकं किलेति चेत्—**तदनवगमतः**=जगतः ब्रह्मा-पृथक्सिद्धत्वाज्ञानात्, अथवा—शरीरिणो ब्रह्मणः अप्रत्यक्षत्वात् **तत्पृथक्सिद्धिमोहः**=ब्रह्मणः पृथक्सिद्धत्व-रूपमज्ञानम् । ब्रह्मज्ञानिनां तु तत्सुगममित्यर्थः । अपृथक्सिद्धत्वे द्वयोरेकस्य ग्रहणम्, अन्यस्याग्रहणमिति कथमिति शङ्कायाम्, स्थूलं लोकदृष्टान्तमाह—**श्रोत्राद्यैरित्यादि** । **शब्दगन्धादिधर्मः**=आकाशधर्मः शब्दः,

**[चेतनाचेतनवाचिपदानां परमात्मपर्यन्तत्वम्]**

**308. निष्कर्षाकूतहानौ विमतिपदपदान्यन्तरात्मानमेकं**
**तन्मूर्तेर्वाचकत्वादभिदधति, यथा रामकृष्णादिशब्दाः ।**
**सर्वेषामाप्तमुख्यैरगणि च वचसां शाश्वतेऽस्मिन् प्रतिष्ठा**
**पाकैस्तस्याप्रतीतेर्जगति तदितरैः स्याच्च भङ्क्त्वा प्रयोगः ॥ ८५ ॥**

---

पृथिवीधर्मो गन्धः । आदिना रसो ग्राह्यः । पञ्चस्विन्द्रियेषु चक्षुः त्वक् च द्रव्यग्राहके, इतराणि तु घ्राणश्रोत्ररसनेन्द्रियाणि गुणमात्रग्राहकाणि । अतः शब्दगन्धरसाः **श्रोत्राद्यैः**=श्रोत्रघ्राणरसनाभिः **आश्रयेभ्यः**=आकाशादिभ्यः पृथक् **स्फुरति खलु**=भासते किल—शब्दादयो गृह्यन्ते, न तु तदाश्रयाः पृथिवीजलाकाशादयः । अस्ति च आकाशस्य शब्दस्य चापृथक्सिद्धिः, गन्धस्य पृथिव्याः, रसस्य पृथिवीजलयोश्चापृथक्सिद्धिः । अथाप्यन्यतरदेव गृह्यते, नोभयम् । स्थूलदृष्टान्तोऽयम्, ब्रह्मणोऽतीन्द्रियत्वात्, जगत ऐन्द्रियकत्वाच्च । गन्धादिभ्यः किञ्चिदिव सूक्ष्मो दृष्टान्तः—**जीवात्मनि अदृश्येऽपि**=चक्षुषा अग्राह्येऽपि **अनन्यनिष्ठमपि वपुः**=जीवात्मापृथक्सिद्धमपि तदीयं वपुः **चक्षुषा गृह्यते हि**=चक्षुरिन्द्रियेण गृह्यत इति प्रसिद्धं खलु । एवञ्च आश्रयस्याश्रितस्य चापृथक्सिद्धत्वेऽपि भिन्नसामग्रीग्राह्यत्वे सति उभयोर्युगपद्ग्रहणं न भवेत् । गन्धग्रहणसामग्री घ्राणेन्द्रियम् । कुसुमग्रहणसामग्री तु चक्षुरिन्द्रियम् । अत उभयं सहैव न गृह्येत, युगपद् ज्ञानद्वयानुत्पत्तेः, कुसुमं साक्षात्पश्यतः गन्धग्रहणमपि एककाले न भवेदेव । तथा भानमपि कालभेदस्यातिसूक्ष्मत्वमात्रात् । घटभूतलयोरुभयोरपि पृथक्सिद्धावप्युभयोरपि चाक्षुषत्वात् युगपद्ग्रहणोपपत्तिः । अत्र **सर्वार्थसिद्धौ** जीवात्मनो मनोग्राह्यत्वकथनम् परमतानुरोधेन, सिद्धान्ते जीवात्मनः स्वप्रकाशत्वात् । अथवा 'अहम्' इत्यादिपदजन्यबोधविषयत्वदृष्ट्या स्यात् । स्वप्रकाशस्यापि वेद्यत्वं न विरुद्धम् (बुद्धि.2) । एवञ्च प्रकृते जगतो ब्रह्मापृथक्सिद्धत्वेऽपि, परमात्माग्रहणं युज्यत एव । सर्वेऽप्यात्मानः यद्यपि स्वप्रकाशाः । परं तु तत् स्वप्रकाशत्वं तत्तदात्मदृष्ट्या । न हि परशरीरवर्त्यात्मा अन्यस्य कस्यचित् स्वप्रकाशो दृष्टः । अतः परमात्मनः स्वप्रकाशत्वेऽप्यग्रहणमुपपद्यते । अधिकमन्यत्र ॥ ८४ ॥

जगतो ब्रह्मापृथक्सिद्धत्वसाधनस्य फलभूतं विषयमाह—**निष्कर्षेत्यादि** । **विमतिपदपदानि**=विवादविषयभूतानि चिदचिद्वाचीनि पदानि **निष्कर्षाकूतहानौ**=विशेषणमात्रबोधकतात्पर्याभावे सति **तन्मूर्तेः वाचकत्वात्**=परमात्मशरीरभूतचेतनाचेतनवाचकत्वात् **रामकृष्णादिशब्दाः यथा**=रामकृष्णादिशब्दवत् **एकम् अन्तरात्मानम्**=सर्वान्तर्यामिणं परमात्मानम् **अभिदधति**=वदन्ति । अत्र प्रमाणमाह—**सर्वेषामित्यादि** । **च**=किञ्च **सर्वेषां वचसाम्**=चेतनाचेतनवाचिनां सर्वेषामपि शब्दानाम् **शाश्वते**=सनातने **अस्मिन्**=भगवति **प्रतिष्ठा**=पर्यवसानम् **आप्तमुख्यैः**=परमाप्तैः महर्षिभिः **अगणि**=स्पष्टमभ्यधायि । 'वचसां वाच्यमुत्तमम्' 'नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती' इत्यादिना । 'वेदैश्च सर्वैरहमेव वेद्यः' (गी.15-15) 'सर्वे वेदा यत्रैकं भवन्ति' (तै.आ.3-21) इति स्पष्टवचनमपि । एवं तर्हि 'देवदत्त गामभ्याज'

इत्यादावपि देवदत्तपदं परमात्मपरं स्यात्। तथा च सर्वव्यवहारवैयाकुलीत्यत्राह— **पाकै**रित्यादि। पाकाः= बालाः अव्युत्पन्नाः। **जगति**=स्थूले जगति **तदितरैः**=महर्षिभिन्नैः **पाकैः**=पदानां पर्यवसानानभिज्ञैः अव्युत्पन्नैः **तस्य**=परमात्मपर्यन्तबोधकत्वस्य **अप्रतीतेः**=अस्फुरणात् **भङ्क्त्वा**=विभज्य अर्धभागत्यागेन **प्रयोगश्च**=प्रयोगोऽपि **स्यात्**। तावता पदानां भगवत्पर्यन्तबोधनशक्तिः न कुण्ठिता भवेत्॥

'शरीरम्' इत्यादयः शब्दाः विशेषणमात्रवाचकाः। 'आत्मा' इत्यादयस्तु विशेष्यमात्रवाचकाः। एतादृशशब्दाः **'निष्कर्षकशब्दाः'** इत्युच्यते। देवमनुष्यादिशब्दास्तु तत्तच्छरीरविशिष्टशरीरिवाचकाः। यथा 'चैत्रो देवो जातः' इत्यादौ। परं तु 'चैत्रः स्थूलो बभूव' इत्यादौ तु चैत्रादिपदं शरीरमात्रवाचि, स्थौल्यस्य शरीरमात्रनिष्ठत्वात्। तद्वत् 'चैत्रो मुक्तः' इत्यत्र चैत्रपदमात्ममात्रवाचि, शरीरस्य मुक्त्यभावात्। एतादृशपदानि निष्कर्षकतात्पर्यवन्ति भवन्ति। एतादृशतात्पर्याभावे तु विशिष्टवाचीनीति ज्ञापनाय 'निष्कर्षाकूतहानौ'। आकूतम्=अभिप्रायः॥

**इदमत्र तात्पर्यम्**— 'मनुष्योऽहम्' 'पशुरयम्' इत्यादयो हि व्यवहारास्सर्वजनप्रसिद्धाः मनुष्यशरीरकोऽहम्, पशुशरीरकोऽयमित्याद्यर्थवर्णने तु औपचारिकत्वं स्यात्। तावतां दैनन्दिनव्यवहाराणां आपामरपण्डितं क्रियमाणानां औपचारिकत्वकल्पनं साहसमेव। जीवशरीरयोस्संबन्धः न संयोगमात्रम्, उभयोरपृथक्सिद्धत्वस्यानुभवसिद्धत्वात्। जीवेन शरीरत्यागानन्तरं तस्य द्रव्यस्य शवत्वव्यवहारस्यैव प्रामाणिकत्वात्। **कैश्चित्** क्रियमाणशरीरत्वव्यवहारः भूतपूर्वस्थित्याश्रयः। अपृथक्सिद्धविशेषणवाचिनां शब्दानां विशेष्यपर्यन्तबोधस्य 'खण्डो गौः' 'मुण्डो गौः' इत्यादौ 'नीलो घटः' इत्यादौ च दर्शनात् शरीरशरीरिभावकृतमेव सामानाधिकरण्यम् 'मनुष्योऽहम्' इत्यादौ स्वरसम्। अतश्च 'सर्वं खल्विदं ब्रह्म' इत्यादौ सर्वशरीरकत्वाद्ब्रह्मणस्सामानाधिकरण्यनिर्देशः। अयमर्थः **वेदार्थसंग्रहश्रीभाष्यश्रुतप्रकाशिकादौ** विस्तरेण प्रसाधितः॥

परन्तु 'अहं ब्रह्मास्मि' (बृ.3-4-10) इति सामानाधिकरण्यं त्वेवमपि दुर्निर्वहम्। अत्र 'अहं'-शब्दः खलु ब्रह्मशरीरभूतजीववाची। अतः 'मच्छरीरकं ब्रह्म' इत्यर्थो वक्तुं शक्यः। तदानीम् 'अस्मि' इति उत्तमपुरुषासांगत्यम्। 'ब्रह्मान्तर्यामिकोऽहमस्मि' इत्यर्थकत्वे ब्रह्मपदस्य शरीरिवाचित्वात्, लक्षणैव वक्तव्या। 'जीवोऽहम्' इति ब्रह्मणोऽनुभवे 'जीवशरीरकोऽहम्' इति विवरणं संगच्छेत। अत एव 'क्षेत्रज्ञं चापि मां विद्धि' (गी.13-2) इत्यत्र 'मां मदात्मकं विद्धि' इत्येव विवृतम्। आचार्यैरपि तात्पर्यचन्द्रिकायाम् 'फलितमाह मदात्मकं विद्धी'ति इत्येतावन्मात्रमुक्त्वा तूष्णीं स्थितम्। एतत्सर्वपरिशीलने इदमत्र युक्ततमं प्रतिभाति। जगद्ब्रह्मणोश्शरीरशरीरिभावोऽन्तर्यामिब्राह्मणादिसिद्धः। अत्र किं नाम शरीरत्वमित्यादिचर्चां परित्यज्य, शरीरशरीरिभावाङ्गीकारेण तयोरनुभवे कीदृशं परिवर्तनं भवतीत्यन्वेषणीयम्। 'परिदृश्यमानमिदं यथा वा जीवात्मनः शरीरं भवति, तद्वदेव जीवोऽपि परमात्मनः शरीरं भवति' इति बहुवारं श्रीभाष्यकारैस्सदृष्टान्तं प्रादर्शि। अस्य स्थूलशरीरस्य जीवात्मापृथक्सिद्धत्वेऽपि, संसारदशायां 'अहं मनुष्यः' इत्यादिविशिष्टव्यवहारदर्शनेऽपि, उभयोर्भेदात्, 'मम शरीरम्' इति भेदानुभवोऽपि प्रामाणिकः। कस्यचिद्योगिन आत्मानुभवदशायाम् 'अहम्' इति जीवात्मनः ज्ञानानन्दमयस्वरूपानुभववेलायां तु, शरीरं तत्र

[परमात्मनः सर्वशब्दवाच्यत्वेऽविरोधः]

**309. व्युत्पत्तिर्वाचकानां स्थिरचरविषये लोकतो नेश्वरादौ**
**अव्युत्पन्नार्थवृत्तिस्त्वधिपतिनयतः स्यादमुख्येति चेन्न ।**

न भायादेव, आत्मस्वरूपापेक्षया शरीरस्य बाह्यपदार्थत्वात् । एवमेव परमात्मनः शरीरस्थानापन्नत्वाज्जीवस्य जीवान्तर्वर्तिपरमात्मानुभववेलायां च, 'अहं मनुष्यः' 'मम शरीरम्' इत्युभयविधानुभवयोः प्रामाणिकत्ववत्, 'परमात्मशेषभूतोऽहम्' इति प्रतीतिवत् 'अहम्' इति प्रत्यक्त्वानुभवः 'अहं ब्रह्मास्मि' इत्येवंरूप एव भाव्यः । शरीर्यनुभववेलायां शरीरस्य बाह्यत्वेन अहन्त्वम् शरीरिणमेव नूनं स्पृशेत् । अतश्च शरीरशरीरिभावः विज्ञानरूपः । 'अहं ब्रह्मास्मि' इति तु अनुभवरूपं ज्ञानम् । ज्ञानविज्ञानयोर्विविच्य स्वरूपे ज्ञाते इदं सुज्ञं भवेत् । **ज्ञानं** नामानुभवः, **विज्ञानं** तादृशानुभवकारणविश्लेषणरूपम् । अतश्च जीवब्रह्मणोः शरीरशरीरिभावे सत्येव 'अहं ब्रह्मास्मि' इत्यनुभवस्संगच्छेत, न तु ब्रह्मातिरिक्तजीवस्याभावे । तदा हि 'केन कं पश्येत्' इत्युक्तरीत्यानुभवो न कस्यापि भवेत् । अतश्च जगद्ब्रह्मणोः शरीरशरीरिभावसत्त्वादेव 'अहं ब्रह्मास्मि' 'अहमेवेदं सर्वम्' इत्याद्यनुभवानां संभव इत्यवधेयम् । एवं प्रमेयस्वरूपे, तदनुगुणानुभवस्वरूपे च निर्णीते सति, शरीरलक्षणस्य कतिपयपदावापोद्वापादिना परिष्करणमत्यल्पो विषयः । आचार्याणां महता प्रयासेन शरीरशरीरिभावसाधनतात्पर्यं च सम्यगवगतं भवति । 'अहम्' इति प्रत्यक्त्वानुभवस्य परमात्मन्येव विश्रान्तिः भूमाधिकरणे (ब्र.सू.1-3-8) स्पष्टमभिहिता द्रष्टव्या । एवमस्मिन्नेव मते 'अहं ब्रह्मास्मि' इति वर्तमानकालिकानुभवोद्गारस्सङ्गच्छते, न तु केवलाभेदवादे, केवलभेदवादे वा । अत्र **श्रीशठकोपसूरेः 'कडन्ज्ञान'** इत्याद्यद्भुता दश गाथा अप्यनुसन्धेयाः ॥ ८५ ॥

परमात्मनः सर्वशब्दवाच्यत्वे मूलविरोधमाशंक्य परिहरति—**व्युत्पत्तिरित्यादिना** । **वाचकानाम्**= शब्दानाम् **लोकतः**=लोकव्यवहारादेव **स्थिरचरविषये**=अचेतनबोधकत्वे चेतनबोधकत्वे वा **व्युत्पत्तिः**= शक्तिग्रहणम् **ईश्वरादौ**=परमात्मनि **न**=न दृष्टः । शब्दानां सिद्धे वा कार्ये वा व्युत्पत्तिः लोकव्यवहारादेवेत्यधस्तात् विस्तरेणोपपादितम् । 'घटमानय' 'गामानय' इत्यादिव्यवहारेषु न हि कस्यापि परमात्मबोधः भवति । एवं शक्तिग्रहकाल एव परमात्मपर्यन्तत्वबोधे असति, 'य एव लौकिकास्त एव वैदिकाः' इति न्यायेन वैदिकपदानामपि तावत्येव बोधनसामर्थ्यमिति परमात्मनस्सर्वशब्दवाच्यत्वं शक्तिग्राहकप्रमाणविरुद्धम् । तर्हि 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिकं कथमित्यत्र—**अव्युत्पन्नार्थवृत्तिस्तु**=पदानां यस्मिन्नर्थे शक्तिः, तदतिरिक्तार्थबोधनं तु **अधिपतिनयतः**='राजा राष्ट्रम्' इत्यादिन्यायात् **अमुख्या**=प्राधान्यादिविवक्षया औपचारिकी **स्यात्** । न हि समानाधिकरणव्यवहारमात्रात्प्रतीयमानेष्वर्थेषु बोधनशक्तिः पदानां स्यात् । 'अग्निर्माणवकः' 'सिंहो देवदत्तः' 'राजा राष्ट्रम्' इत्यादयः किल सन्त्यनेके समानाधिकरणव्यवहाराः। न ह्येषां स्वार्थे तात्पर्यं कश्चिन्मतिमान् वदेत् । तद्वदत्रापि प्राधान्यविवक्षया 'वेदैश्च सर्वैरहमेव वेद्यः' इति स्यात् । तावता वैदिकास्सर्वेऽपि शब्दाः साक्षादेव परमात्मवाचका न

**व्युत्पत्तेः पूरणं हि श्रुतिशिरसि कृतम्; नोपरोधः कथञ्चित्**
**देहित्वं चाऽऽधिपत्यात् समधिकमिह खल्वक्षपादप्रणीतात् ॥ ८६ ॥**

भवेयुः । अतः परमात्मनस्सर्वशब्दवाच्यत्वम् औपचारिकमेव । अत एव नव्यवेदान्तिप्रक्रियैवाद-र्तव्या । परमात्मनस्सर्वशब्दवाच्यत्वं न शरीरशरीरिभावकृतम्, जगद्ब्रह्मणोश्शरीरशरीरिभावस्य मुख्यस्य तैरनङ्गीकारात् । किन्तु विद्वद्रूढिमहायोगाभ्यामिति **नव्यवेदान्तिनो** वेदन्ति । विदुषां ब्रह्मज्ञानिनां रूढिरेव तादृशी विलक्षणा । अथवा महायोगः—'अग्रे नयतीत्यग्निः' इति योगः परमात्मनि मुख्यतया पर्य-वसानम् । अत एव सर्वेऽपि शब्दाः चकारतुकारादयोऽपि साक्षादेव परमात्मवाचकास्तेषाम् । सिद्धान्ते तु शरीरशरीरिभावकृतमेव परमात्मवाचकत्वम् । अत एव द्रव्यवाचिनामेवैतत्संभवति । न तु गुणादिवाचीनां नीलादिपदानाम् । अतः नव्यवेदान्तिप्रक्रियैवादर्तव्या ॥

गौतमीयादि तन्त्रं तु लोकायतमितीर्यते । सर्वातीतेन वेदान्तशास्त्रेण स्पर्धते कथम्? ॥

**इति चेत्, न**। कुतः? **श्रुतिशिरसि हि**=वेदान्ते हि **व्युत्पत्तेः**=शब्दशक्तिग्रहणस्य **पूरणम्**= इयत्तानिर्णयः **कृतं**=भवति । व्यवहारस्सर्वोऽपि हि अध्यात्मप्रधानः, अहमर्थस्यैव सर्वव्यवहाराधारत्वात् । स चाहमर्थो लोके शरीरप्रधानः । पूर्वकाण्डे शरीरातिरिक्ताहमर्थास्तित्वज्ञानवत एवाधिकारः, स्वर्गादीनां पार-लौकिकत्वात् । एतावतापि नाहमर्थस्य व्याप्तिः पूर्णा भवति । ऐहिकामुष्मिकसकलपुरुषार्थातिरिक्तनिः-श्रेयसाधिकारात् । अतश्च लौकिकानामहमर्थोऽन्यः, आमुष्मिकभागार्थिनां च सोऽन्यः । अन्य एव च विशुद्धात्मार्थिनाम् । अत एवोक्तम्—**'वेदान्ताध्ययनेन हि व्युत्पत्तिः पूर्यते'** (वे.सं.) इति । अतश्चाधिकारिभेदेनाहमर्थभेदात्—**कथञ्चिदपि उपरोधः**=व्याघातः **न**। ननु परमात्मनस्सर्वेश्वरत्वं सर्वै-रप्यङ्गीक्रियत एव । को विशेषो वेदान्तिनां भवतामित्यत्र—**अक्षपादप्रणीतात्** न्यायशास्त्रात् **इह च**=वेदान्ते तु **आधिपत्यात्**=लोकेश्वरत्वात् **समधिकम्**=अत्यन्तविलक्षणम्, उत्तमं च **देहित्वम्**=सर्वशरीरित्वं परमात्मनोऽवगन्तव्यम् । आधिपत्यं हि राजभृत्ययोरिव विनाभूतयोः । देहित्वं तु शरीरशरीरिणोरिवा-विनाभावसंबन्धमूलम्, अन्तःप्रविश्य नियमनरूपम् । अतः परमात्मन ईशितृत्वं न राज्ञामिवेति न विस्मर्तव्यम् । अत एव **'अहं ब्रह्मास्मि'** इत्यनुभवोऽप्यत्रैव ॥

वाक्यानि तु समानान्यप्यधिकारादिभेदतः । अर्थसंकोचविस्तारान् कुर्वन्त्येव न संशयः ॥
सर्वशास्त्रेषु वेदान्तशास्त्रं स्यादुत्तरोत्तरम् । व्युत्पत्तिश्चात्र शब्दानां भवेत् पूर्णा स्वयं नृणाम् ॥

या चोक्ता **नव्यवेदान्तिप्रक्रिया,** सापि न लोके कुत्रचिद्दृष्टचरी । चकारतुकारादयोऽपि साक्षादेव परमात्मवाचका इत्यादिकं तु लोके, शास्त्रे वा कुत्रापि न दृष्टमेव । व्युत्पत्तिग्रहस्तु आद्यः लोकत एवेति प्रामाणिकी । शरीरशरीरिभावकृतं सामानाधिकरण्यं तु लोक एव दृष्टम् । ब्रह्मणस्सर्वशरीरित्वमप्यन्तर्यामि-ब्राह्मणादिसिद्धम् । अत एतत्कृतमेव सर्वपदवाच्यत्वं ब्रह्मणः स्वरसम् । अत एव द्रव्यवाचिनामेव तथात्वम् अन्यथा हि ध्वन्यात्मकपदान्यपि ब्रह्मवाचीनि भवेयुरित्यादिकं **तत्त्वमार्तण्डादिषु** द्रष्टव्यम् ॥ ८६ ॥

[स्फोटवादविमर्शः]

310. न ह्यक्षैः केऽपि वर्णाभ्यधिकमिह विदुर्वाचकं सावधानाः
शब्दादर्थं प्रतीमस्त्विति च जनवचो नैकमन्यत् व्यनक्ति ।
सामग्र्यैक्यादिनीत्या भवति मतिरियं तादृशे वर्णसङ्घे
सम्भेदे वा पदानामिति न तदधिकः कोऽपि शब्दोऽपरोक्षः ॥ ८७ ॥

एवं शब्दानां बोधकत्वविचारप्रसङ्गात्, तेषां ब्रह्मपर्यन्तत्वं स्थापयित्वा, पुनः शब्दानां बोधकत्व-प्रकारे शाब्दिकैकदेशिमतं विमृशति—**न हीत्यादि**। **स्फोटवादिनंमन्याः** केचनैवं ब्रुवते—शब्दाः किल श्रूयमाणा आशुतरविनाशिनः देशकालव्यक्तिभेदेन भिन्नाः कथं कालत्रयेऽप्येकयैव रीत्या बोधं जनयितुं शक्नुयुः? गौश्शब्दो हि कालत्रयेऽप्येकत्वेन प्रत्यभिज्ञायमानः स्थूलो न भवितुमर्हति । अतः श्रूयमाण-शब्दातिरिक्तः कश्चित् स्फोटसंज्ञक एवार्थबोधजनकः । श्रूयमाणस्तु तद्व्यञ्जकत्वात्तच्छब्दवाच्यः । वर्णानां सर्वेषां सकृदुच्चारणासंभवात्, क्रमेणैवोच्चरितैर्वर्णैः पदानि वाक्यानि च भवन्ति । अनन्तरवर्णश्रवणवेलायां पूर्वपूर्ववर्णस्य नाशात्, कथं पदानि वा, वाक्यं वा विवक्षितं बोधं जनयेत्? अतस्तत्तत्कक्षायां वर्णस्फोटः, पदस्फोटः, वाक्यस्फोट इति तत्तद्वर्णाद्यभिव्यङ्ग्यः स्फोट एव बोधजनकः । स च नित्यः, विभुश्चेति सर्वदेशसर्वकालबोधानां एकरूपत्वनिर्वाहः सुलभ इति । न चान्तिम एक एव स्फोट एवालम्, किमितरैरिति शंक्यम्, अन्तिमत्वस्य निर्धारणासंभवात् । प्रत्येकमसतः बोधकत्वस्य समुदायेऽप्यसंभवात् । न हि **शतमप्यन्धाः पन्थानं पश्येयुः, शतं पङ्गवो धावेयुः** । अतः नानाविधः स्फोट आवश्यक इति ॥

तदेतद्विमृशति—किमयं स्फोटः प्रत्यक्षसिद्धः, उतार्थापत्तिसिद्धः? उतागमसिद्धः? नाद्यः, कुतः? **सावधानाः**=अत्यन्तावहितधियः केऽपि जनाः **वर्णाभ्यधिकम्**=वर्णापेक्षयातिरिक्तं किञ्चित् **वाचकम्**=बोधजनकम् स्फोटाख्यम् **अक्षैः**=इन्द्रियैः प्रत्यक्षकरणैः आन्तरबाह्यैः **इह**=लोके **न हि विदुः**=न जानन्ति हि । अतो नाद्यः । न द्वितीयः, कुतः? **तु**=प्रत्युत **शब्दात्**=श्रोत्रग्राह्यात् शब्दादेव **अर्थम्**=तदर्थम् **प्रतीमः**=जानीमः **इति च जनवचः**=जनानां व्यवहारः **अन्यत्**=शब्दातिरिक्तम् **एकम्**=किञ्चित् तत्त्वम् **न च व्यनक्ति**=व्यञ्जयति । अतश्शब्दस्यैव वाचकत्वमापामरपण्डितं सर्वानुभवसिद्धमन्यथानुपपत्तिं दूरतो निराकरोति । अयि भोः! किं बधिरस्त्वम्? यो विस्तरेणोक्तामनुपपत्तिं न शृणोषि? इत्यत्र=**इयं मतिः**=‘शब्दादर्थं प्रतीमः’ इत्यविप्रतिपन्नः सार्वजनिकोऽनुभवः **तादृशे वर्णसङ्घे**=श्रूयमाण एव वर्णसमुदायपद-समुदायात्मके शब्द एव, अथवा **पदानां संभेदे वा**=पदसमुदाये वाक्ये वा, न तु तदतिरिक्ते स्फोटाख्येऽतीन्द्रियशब्दतत्त्वे **सामग्र्यैक्यादिनीत्या**=एकं कार्यं प्रति एकैव सामग्री जनयित्रीति न्यायेन भवति । पटसामग्री तन्त्वादिघटिता एकैव पटजनिकेति त्रैकालिकी नीतिरस्ति । तत्रैक्यं न व्यक्तिगतम्, किन्तु ऐकजात्यकृतम् । तद्वदेव शाब्दबोधेऽपि । **इति तदधिकः**=श्रूयमाणशब्दातिरिक्तः **अपरोक्षः**=अतीन्द्रियः **शब्दः**=स्फोटाख्यं शब्दतत्त्वम् **कोऽपि न**=कश्चिदपि न प्रामाणिकः । तृतीयकल्पस्योत्तर-मन्तरितश्लोके भविष्यति ॥ ८७ ॥

[स्फोटस्य ज्ञानेनान्यथासिद्धिः]

311. **यादृग्भिः स्फोटधीस्ते भवति, भवतु तैरर्थधीरेव वर्णैः**
**वर्णेषूक्तो विकल्पः समगतिरुभयोर्यौगपद्यक्रमादिः ।**
**वाक्यस्फोटेऽपि तुल्यं तदिदमिह पदैरक्षरैर्वाऽवगम्ये**
**स्फोटे तद्बुद्धिबोध्ये सति च न घटते तत्तदध्यासक्लृप्तिः ॥ ८८ ॥**

[स्फोटस्यागमादपि न सिद्धिः]

312. **शब्दो ब्रह्मेति यत्तन्मुनिभिरभिदधे, स ह्यचिद्वेद इष्टः**
**सूक्ष्माकारस्तु सोऽर्थं न गमयति; यतः सत्तया नैष हेतुः ।**

---

अर्थापत्तेः स्फोटे प्रमाणत्वासंभवाङ्गतया अन्यथासिद्धिं विशदयति—**यादृग्भिरित्यादिना** । **यादृग्भिः वर्णैः**=श्रोत्रगृहीतैः यादृशैः **वर्णैः ते**=स्फोटब्रह्मवादिनस्तव **स्फोटधीः**=स्फोटकल्पना भवति, **तैः**= स्फोटकल्पकैः **वर्णैरेव अर्थधीरेव**=अर्थविषयकं ज्ञानमेव भवतु, 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायात् । ननु वर्णानां बोधकत्वं क्रमशः, उत यौगपद्येन? न यौगपद्येन, 'वाचः क्रमवर्तित्व'नियमात् । न क्रमशः, वर्णानां नाशात् इत्याद्युक्तं नावहितमायुष्मतेत्यत्र—**वर्णेषु उक्तः यौगपद्यक्रमादिः यो विकल्पः, सः उभयोः**=पक्षद्वयेऽपि **समगतिः**=समप्रसरः । आशुतरविनाशिभिर्वर्णैः अतिरिक्तः स्फोटः अभिव्यज्यत इति पक्षेऽपि अभिव्यञ्जकानां वर्णानां नाशेऽपि वर्णजन्यसंस्कारैः पदज्ञानादिक्रमेण स्फोटः अभिव्यज्यते इत्येव वक्तव्यम् । स्फोटव्यञ्जकैः तादृशसंस्कारैरेव 'तद्धेतोरेव तद्धेतुत्वे' इत्यादिन्यायेन शाब्दबोधस्यैव संभवात् 'भक्षितेऽपि लशुने न शान्तिः' इति न्यायेन यदि स्फोटकल्पनायामपि दोषः समानः, तर्हि दृष्टेष्वेव तद्द्वारो निक्षिप्यताम् । दृष्टानां क्षणिकत्वात्तदसंभव उक्त एवेति चेत्, पूर्वपूर्ववर्णादिसंस्कारसहकृतैरुत्तरोत्तरवर्णादि-ज्ञानस्यापेक्षाबुद्धिन्यायेनोत्पत्त्या पदज्ञानवाक्यज्ञानानामेवार्थबोधकत्वसंभवादलमतीन्द्रियकल्पनाक्लेशैः । तदेतदाह—**पदैः, अक्षरैर्वा अवगम्ये**=अभिव्यङ्ग्ये **इह**=वाक्यस्फोटेऽपि—**तदिदम्**=अन्यथासिद्धत्वम् **तुल्यम्,** लोकदृष्टैस्तत्तद्वर्णज्ञानपदज्ञानवाक्यज्ञानैरेवार्थबोधनिर्वाहे नित्यातीन्द्रियस्य स्फोटस्यान्यथासिद्धयति-क्रमणासमर्थत्वात् । एवञ्च पदैः अक्षरैर्वा अवगम्ये सति **स्फोटे, तद्बुद्धिबोध्ये च सति**=अक्षरज्ञान-पदज्ञानवाक्यज्ञानबोध्ये च **सति, तत्तदध्यासकलृप्तिः**=वर्णाध्यासपदाध्यासवाक्याध्यासानां कल्पनम्, जगदध्यासकल्पनवत् **न घटते**=न युज्यते । स्फोटस्य स्वरूपमेव हि वर्णादिज्ञानाधीनम् । एवं सति स्फोटस्य सर्वाध्यासाधिष्ठानत्वकल्पनं हास्यास्पदमित्यर्थः । अतश्च अन्यथासिद्धत्वान्नार्थापत्तेः प्रसक्तिः, तस्य अनन्यथासिद्धत्वाभावात्॥

स्याद्वा किञ्चित् स्फोटतत्त्वं शब्दब्रह्माभिधं महत् । लौकिके शाब्दबोधे तु विषयो न भवेत्तु तत् ॥ ८८ ॥

एवमुपक्रमोक्तकल्पेषु द्वये निरस्ते, तृतीयमपि निरस्यति—**शब्द** इति । **मुनिभिः**=महर्षिभिः **'शब्दो ब्रह्म'** इति **यत्तत् अभिदधे**=**'शब्दब्रह्मणि** निष्णातः परं ब्रह्माधिगच्छति' 'जिज्ञासुरपि योगस्य

**स्फोटस्त्वं वर्णजुष्टस्त्विति यदभिहितं भारते, साऽपि शक्तिः**
**वर्णानां स्यात्; तयाऽर्थः स्फुट इति घटते स्फोटशब्दोऽपि तस्मात्॥ ८९॥**

**[प्रतिभायाः वाक्यार्थत्वनिरासः]**

313. **यत् प्रत्येकादिकल्पे गमकविषययोरप्रतीत्यादिदोषात्**
**बौद्धाः शाब्दाश्च बुद्धिं कतिचिदभिदधुर्वाक्यवाक्यार्थरूपाम्।**

शब्दब्रह्मातिवर्तते' (गी.6-44) इत्याद्यभिहितम्, **सः अचिद्भेदो हि**=शब्दरूपजडवस्तुविशेष **एव इष्टः**=संमतः='शब्दब्रह्म'पदेनोच्यते। 'शब्दब्रह्मणि' इत्यत्र प्रणवरूपशब्दनिष्ठः इत्यर्थः। प्रणवोपासक इति यावत्। वाच्यवाचकयोरभेदान्निर्देशः। गीतायामपि 'तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्'। 'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः' इत्यादिपूर्ववचनबलात्, 'योगभ्रष्टः योगस्य जिज्ञासुरपि पूर्वसंस्कारवशात्, शब्दप्रपञ्चं योगविषयकं सर्वमतीत्य योगपदार्थमेव सुलभतयाधिगच्छति' इत्येवार्थः। ब्रह्मवत् बहुविस्तृतत्वात् शब्दराशेः शब्दप्रपञ्चस्य, स एव तत्पदेनोच्यते अर्थप्रपञ्चपदवत्। 'एतद्वै सत्यकाम परञ्चापरं च ब्रह्म यदोंकारः' (प्रश्न.5-2) इत्यत्र अपरं ब्रह्म ओंकार इति स्पष्टम्। वाच्यवाचकयोरभेदोपचारात् 'परञ्च' इत्युक्तिरिति सर्वसंमता। अतिसूक्ष्मब्रह्मतुल्यः स्फोट एव 'शब्दब्रह्म' पदवाच्य इति चेत्, **सूक्ष्माकारः स तु** तत्त्वरूपः **अर्थम्**=वाच्यमर्थम् **न गमयति**=न बोधयति। यतः— **एषः**=शब्दः **सत्तया**=स्वस्वरूपेण **न हेतुः**=नार्थबोधहेतुः। शक्तिज्ञानात् खलु शब्दोऽर्थं बोधयति, न सत्तामात्रेण। ननु महाभारते 'स्फोटस्त्वं वर्णजुष्टः' इति स्फोटपदमेव श्रूयते किलेत्यत्र—**'स्फोटस्त्वं वर्णजुष्टः' इति भारते यदभिहितं** व्यासेन **सापि वर्णानाम्** बोधनानुकूला **शक्तिः** स्यात्। 'सापि' इति स्त्रीलिङ्गनिर्देशः विधेयप्राधान्यात्। शक्तेः कथं स्फोटपदवाच्यत्वमित्यत्र—**तया शक्त्या अर्थः स्फुटः**= व्यक्तः भवति इति, तस्मात् **स्फोटशब्दोऽपि घटते**। स्फुट्यते अर्थोऽनेनेति व्युत्पत्त्या वर्णानामर्थबोधन-शक्तिरेव स्फोटपदवाच्या, न तु सूक्ष्मः शब्दः। अतः स्फोटब्रह्मवादोऽपि केवलं काल्पनिकः। अतः शब्दप्रयोगमात्रात् नातिरिक्तस्फोटसिद्धिः॥

यद्यप्येतत्सर्वस्योपरि सूक्ष्मं नादाख्यं परं शब्दतत्त्वं योगिगम्यं प्रामाणिकं स्याद्वा, परं तु तदपि परं तत्त्वमित्यादिकमापेक्षिकमेव स्यात्। वस्तुतस्तु परब्रह्माख्यं परं तत्त्वं न केवलं शब्दात्मकम्, किन्तु सर्वात्मकमेव 'इदं सर्वं यदयमात्मा' इत्यादिश्रुत्युक्तात्मेत्यादिकम् 'वाचस्सूक्ष्माद्यवस्थाकथनमपि' इत्यादौ पूर्वमेव (बुद्धि.35) गतमिति न पुनः पिष्टपेषणावश्यकता॥ ८९॥

एवं **शब्दविवर्तवादं** निराकृत्य, प्रतिभापदवाच्यो बुद्धिविशेष एव वाक्यरूपेण तदर्थरूपेण च भासत इति वादिनं **बौद्धैकदेशिनं शाब्दिकैकदेशिनं** च निराकरोति—**यदित्यादि**। **गमकविषययोः**= **गमकम्**=वाचकं पदादि, **विषयः**=वाच्यः अर्थः। एतदुभययोः **प्रत्येकादिकल्पे**=प्रत्येकं अक्षरम्, पदम्, वाक्यं वा बोधकम्? उत समुदितं वा? इति वाचके विकल्पः। एवं वाच्येऽपि प्रत्येकमर्थो वाच्यः,

**नैतत् बाह्येन बाह्यो विदित इति मतेः; बाधकोक्तेश्च साम्यात्**
**वाक्यादावैक्यबुद्धेस्त्वनुकथितनयादन्यथासिद्धितश्च ॥ ९० ॥**

**[अन्विताभिधानवादः]**

**314. आचष्टे प्रत्ययश्च प्रकृतिरपि मिथःश्लिष्टमित्यभ्युपेतम्**
**स्पष्टं दण्ड्यादिशब्देष्वपि तदितरथा धीविरोधप्रसङ्गात् ।**

उत समुदितोऽर्थः? इति तदर्थे विकल्पः । एवं विकल्पे कृते, **अप्रतीत्यादिदोषात्**=विकल्पद्वयेऽपि अर्थप्रतीतेः, अर्थवाचकत्वे च दोषस्यापरिहार्यत्वात् **वाक्यवाक्यार्थरूपाम्**=वाक्यरूपां बुद्धिम्, वाक्यार्थरूपां च **बुद्धिम्**=प्रतिभापदवाच्यबुद्धिविशेषरूपामेव **कतिचिद्बौद्धाः**=बौद्धैकदेशिनः, **शाब्दाश्च**=शाब्दिकैकदेशिनश्च यत् **अभिदधुः**, **एतत् न**=एतदपि न युक्तम् । कुतः? **बाह्येन**=श्रोत्रग्राह्येण बाह्येन शब्देन **बाह्यः**=अर्थो गवादिः **विदितः**=बोधितः **इति मतेः**=इत्यनुभवात्, **बाधकोक्तेः**=प्रत्येकसमुदायादिविकल्पादिदूषणस्य **साम्यात् च**=प्रतिभापक्षेऽप्यनतिक्रमाच्च, **'भक्षितेऽपि लशुने न शान्तो व्याधिः'** इति न्यायावतारः । तर्हि वर्णपदसमुदायात्मके वाक्ये, तद्बोध्ये चार्थे एकत्वबुद्धिः कथमिति चेत्तत्राह—**वाक्यादौ**, आदिना अर्थस्य ग्रहणम्, **ऐक्यबुद्धेः अनुकथितनयात्**='सामग्र्यैक्यादिनीत्या भवति मतिरियम्' (श्लो.87) इत्यनुपदकथितन्यायात्, अत एव **अन्यथासिद्धितश्च नैतत्** इत्यन्वयः ॥

तर्कमात्रशरणाः 'यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासते' इति कपिमुष्टिं सर्वत्र प्रसारयन्तः शब्दाच्छाब्दबोधस्थलेऽपि प्रसारयामासुः । वाक्यं नाम पदसमूहः । पदं नाम वर्णसमूहः । वाक्यं हि श्रुतं कंचिद्विशिष्टवैशिष्ट्यावगाहिरूपं बोधं जनयति । तत् कथं भवेत्? बोधस्तु एकः किं प्रत्येकं पदैः भवति, उत मिलितैः? पदस्य वर्णसमूहरूपत्वात्, तत्रापि पदार्थः किं एकैकेन वर्णेन बोध्यते, उत मिलितैर्वर्णैर्बोध्यते? इत्यादिविकल्पैः वर्णपदवाक्यानां बोधकत्वम्, बोध्यस्याप्येवं प्रत्येकसमुदायविकल्पेनासंभवं चोपपाद्य, सर्वमिदं विज्ञानस्य माहात्म्यम् । बोधकमपि विज्ञानमेव, बोध्यमपि विज्ञानमेवेति संगीतके पर्यवसानमाहुः । परन्तु, हेतुभूतं विज्ञानं किं प्रत्येकं अक्षरपदादिभिर्भवति? उत समुदितेन भवति? एवम् फलभूतमर्थज्ञानमपि, किमेकैकशो भवति, उताहत्य भवति? इति विकल्पे, दोषस्य साम्ये सति वृथा मरीचिकाजलानुधावनं न युक्तम् । अन्ते शब्दज्ञानमपि दुरुपपादम्, अर्थज्ञानमपि दुरुपपादं भवेदिति शून्यवादावतारः । अतः—

**विज्ञानं तु विवेकाय** नानुष्ठानाय जातु चित् । भवेदिति दृढं मत्वा स्वात्मा संरक्ष्यतां द्रुतम् ॥
परश्शतपरिक्षोदात्परस्तादपि वादिभिः । उपलंभबले स्थेयं घट्टकुट्यां प्रभातवत् ॥
सर्व एते न जानन्ति मायां तर्कस्य दुस्तराम् । मरीचिकाजलं दृष्ट्वा मृगाणां धावनं यथा ॥
प्राणानामपहाराय भवेन्नूनं विरम्यताम् । आत्मैवान्विष्यतां धैर्यात् चिन्त्यतां वा हरिस्सदा ॥ ९० ॥

शाब्दबोधप्रक्रियायां पक्षद्वयं वर्तते, एकः **अन्विताभिधानवादः**, अपरः **अभिहितान्वयवादः** । आद्यः **प्राभाकराणाम्**, तदनुयायिनां **वेदान्तिनां च** । द्वितीयो **नैयायिकानाम्**, तदनुयायिनां **भाट्टानां च** । आद्यं पक्षं वर्णयति—**आचष्ट** इत्यादिना । **प्रकृतिरपि, प्रत्ययश्च मिथः श्लिष्टम्**=परस्परम् अन्वितम्

**अन्योन्यस्मारितार्थान्वितमभिदधति स्वार्थमेवं पदानि**
**स्यान्नातश्चक्रकादिः, न च पुनरभिधा; नापि वाक्यस्य भेदः ॥ ९१ ॥**

**अर्थम् आचष्टे**=अभिदधाति **इत्यभ्युपेतम्**, प्रायस्सिद्धान्ते, वैदिकप्राभाकरानुकरणस्यानेकविषयेषु दर्शनात्। **तत्**=तदेतदन्विताभिधानम् **दण्ड्यादिशब्देष्वपि स्पष्टम्। इतरथा**=एवमनङ्गीकारे **धीविरोधप्रसङ्गात्**= अनुभवविरोधप्रसङ्गात्। एवं पदानि सर्वाणि **अन्योन्यस्मारितार्थान्वितम्**=अन्योन्यं स्मारिताः ये अर्थाः, तदन्वितम् **स्वार्थम् अभिदधति**=वदन्ति। **अतः**—एवमङ्गीकारात् **चक्रकादिः न**=न स्यात्। **न नच पुनरभिधा**= पौनरुक्त्यम् अपि **न, वाक्यस्य भेदोऽपि न**=वाक्यभेददोषोऽपि न॥

अत्रैवं शिरश्शूलः परीक्षकाणाम्—'भूतले घटः' इति वाक्यात् बोधः कथं भवतीति। भूतलपदस्य भूतलमर्थः। सप्तम्या अधिकरणत्वमर्थः। अधिकरणत्वस्य प्रकृत्यर्थे आधेयतासंबन्धेन अन्वयो वाच्यः। सा चाधेयता केनोच्यते? तद्वाचकाभावात्। एवमधिकरणताया निरूपकत्वसंबन्धेन घटेऽन्वयो वाच्यः। निरूपकत्वं केनोच्यते? इति। समभिव्याहाररूपाकांक्षावशात्तयोर्भानमिति **नैयायिकाः**। पदैरभिधानानन्तरमेवौचित्यादि-वशात् अन्वयभानमिति कथनात् अस्य **'अभिहितान्वयवादः'** इति नाम। पदजन्यपदार्थोपस्थितिमन्तरा शाब्दबोधे पदार्थभानासंभवात्, भूतलपदेनैव अन्वयोऽप्युच्यत इति **प्राभाकराः**। सप्तम्यर्थाधिकरणत्वान्वित-भूतलमेव भूतलपदस्यार्थः। एवं प्रकृत्यर्थभूतलान्वितम् अधिकरणत्वमेव सप्तम्यर्थः। एवं परस्परमन्विता एवार्थाः तत्तत्पदैरभिधीयन्त इति कथनात् अस्य **'अन्विताभिधानवादः'** इति नाम॥

'द्वारं पिधेहि' इति वक्तव्ये, त्वरादिकारणैः 'द्वारम्' इत्येतावन्मात्रोक्तावपि इङ्गितप्रकरणादिवशात् द्वारकर्मपिधानान्वयबोधो जायते लोके। अत्र पिधानरूपस्यार्थस्य वाचकशब्दाश्रवणेऽपि कथं तावद्विषयकशाब्दबोधो जायते? इति प्रश्ने पण्डितानां विवादो वर्तते। शब्दादनुपस्थितोऽप्यर्थश्शाब्दबोधविषयो भवति। 'घटेन जलमाहर' इत्युक्ते हि 'अच्छिद्रेन घटेन जलमाहर' इति बोधदर्शनेन, अच्छिद्रत्ववाचकपदाभावेऽपि अर्थोपस्थितेस्सर्वैरप्यवश्यमङ्गीकार्यत्वेन, अर्थाध्याहार एव युक्तः। 'द्वारम्' इति पदश्रवणसमनन्तरक्षण एव, 'पिधेहि'पदाध्याहारव्यवधानमन्तरा द्वारकर्मकपिधानक्रियान्वयबोधदर्शनात् **अर्थाध्याहार** एव युक्त इति अर्थाध्याहारवादिनः **प्राभाकराः**॥

**इदमत्र चिन्तनीयम्**—अर्थाध्याहार इत्यस्य कोऽर्थः? उक्तमेव किल, 'घटेन जलमाहर' इत्युक्ते अच्छिद्ररूपं विशेषणमर्थाल्लभ्यत इति शब्दादनुपस्थितोऽप्यर्थः शाब्दबोधे विषयीभवेत्। तद्वत् 'द्वारम्' इत्युक्ते वक्तुरिच्छानुरोधेन 'पिधान'रूपोऽर्थः उपस्थितो भवेच्छब्दं विनैवेति—इति चेत्, बालिशानामयं वादः। घटपदं हि घटत्वावच्छिन्नवाचकम्। घटविशेषनिर्णयस्तु प्रकरणादिवशात्। नीलत्वपीतत्वादिकं वा, अल्पत्वमहत्त्वादिकं वा, सच्छिद्रत्वाच्छिद्रत्वादिकं वा विशेषधर्माः। 'निर्विशेषं न सामान्यम्' इति न्यायेन, सामान्यस्य यावद्विशेषरूपत्वात्, घटविशेषास्सर्वेऽपि घटत्वावच्छिन्ना एवेति सच्छिद्रघटोऽपि घटपदस्यैव शक्यार्थः, अच्छिद्रघटोऽपि तथैव। प्रत्यक्षं विशेषद्वारा सामान्यग्राहि, शब्दानुमाने तु सामान्यद्वारा विशेष-

ग्राहके इत्यसकृत्प्रदर्शितम्। अतो घटपदं घटत्वावच्छिन्नं सर्वं बोधयति। एवं सामान्यवाचिनश्शब्दस्य विशेषपर्यवसानं तु, तात्पर्यादिवशात्। काञ्चीस्थितेन पुरुषेण 'घटमानय' इत्युक्ते, तत्र सन्निहितः कश्चन घटविशेष एव घटपदस्यार्थः, न तु काशीस्थो घटः इति सर्वोऽपि निश्चिनोति। तावता काशीस्थघटो वा, कञ्चीस्थघटो वा न घटपदशक्यार्थः इति नार्थः, यतः शब्दानुमाने सामान्यविषये, प्रत्यक्षं तु विशेषविषयम्। अथापि अनुमाने पक्षधर्मताज्ञानाद्विशेषपर्यवसानम्, शाब्दे तु तात्पर्यादिवशाद्विशेषपर्यवसान मित्यादिकमसकृदुक्तम्। एवञ्चाच्छिद्रघटोऽपि घटपदस्यार्थः। तत्राच्छिद्रत्वादिरर्थः औचित्यादेव भासते, न त्वध्याहार्यः॥

'द्वारम्' इत्यादौ नास्य न्यायस्य लेशगन्धोऽपि। अतोऽत्र पिधानक्रियाया उपस्थापकं प्रमाणं किमिति वक्तव्यम्। न प्रत्यक्षम्। तत्र बाह्यं त्विन्द्रियं नात्र पिधानक्रियोपस्थापकम्। नापि मनः, मनसो बाह्येऽर्थे प्रवृत्तेरसंभवात्। नापि स्मृतिः, पूर्वानुभवाभावात्। नाप्यनुमानम्, अनुमानोपस्थापितस्य पिधानस्य शब्देनोपस्थापितस्य द्वारकर्मत्वस्य च संबन्धोपस्थापकप्रमाणाभावात्। न चेतरान्वितस्वार्थस्यैव शब्दार्थत्वात्, पिधानान्वितकर्मत्वमेव द्वितीयार्थ इति शक्यशङ्कम्, 'घटमानय' इत्यत्र तथा भवता वर्णनेऽपि 'पिधेहि'पदाभावेन तथा वर्णयितुमशक्यत्वात्, अन्वयभानं कथमित्येव विचार्यमाणत्वाच्च। पिधानवत् उद्घाटनस्यापि समयविशेषे भानावश्यकत्वेन पिधानान्वयनियमाभावात्। नापि तात्पर्यादिकमर्थोपस्थापकम्, तात्पर्यस्योपस्थितेष्वर्थेष्वन्यतरनिर्णयादिमात्रार्थकत्वेनापूर्वार्थोपस्थापकत्वासंभवात्। नाप्यर्थापत्तिः, पूर्वोक्तरीत्योद्धाटनस्यापि समये आवश्यकत्वे निर्णायकाभावेन तात्पर्यमेव शरणीकरणीयम्। अतः **शब्दाध्याहार** एव गतिः। पदजन्यपदार्थोपस्थितेरेव शाब्दबोधकारणत्वात्। न च द्वारकर्मत्वस्य पदादुपस्थितिः, पिधानस्य तु तात्पर्यवशादुपस्थितिरिति भवत्विति वाच्यम्, विशिष्टबोधे कारणाभावस्योक्तत्वात्। अतः पदाध्याहारमन्तरा जातस्य बोधस्य शाब्दत्वासंभवात्, शाब्दत्वानुमितित्वादेः नरसिंहावतारप्रसङ्गात्पदाध्याहार एव साधीयान्। अन्यथा प्रत्यक्षेणोपस्थितानां बहूनामप्यर्थानां शाब्दबोधे प्रवेशापत्त्या वक्तृश्रोत्रोः केशाकेशिप्रसङ्गः। अतः **पदाध्याहार** आवश्यकः। न च पदाध्यारेऽपीदं समानम्, आकाङ्क्षया एव व्यवस्थापकत्वात्। तात्पर्यज्ञानस्य पूरकत्वात्। अतः बोधस्य शाब्दत्वात्**पदाध्याहार** एव न्याय इति पदाध्याहारवादिनो **न्यायनयज्ञाः**॥

ननु भोः पदजन्यपदार्थोपस्थितिरेव शाब्दबोधं प्रति कारणमित्युक्तत्वात्पदाध्याहारं समर्थयसि। संबन्धांशे पदशक्तिर्नास्तीति च वक्षि। किमिदं स्ववचनविरोधमपि न जानाति भवान्?

नमो वैदिकविद्वद्भ्यः, न क्षेत्रं भवतामिदम्। चर्चादूरा पद्धतिस्तु वैदिकी वर्तते हि वः॥
परश्शतपरिक्षोदात् परस्तादपि वादिभिः। व्यवहारे **न्यायनयस्त्व**ङ्गीकार्यः परीक्षकैः॥
बौद्धैरवैदिकैर्धाष्ट्यात् गौतमीयो नयो बत! खण्डितो, नैव युक्तं तत् वैदिकानां विनाग्रहात्॥
शास्त्राणामस्ति मर्यादा लङ्घनात्तस्य पण्डितैः। जातो वृथा कलिरिति समये तत्प्रदर्श्यते॥

'पदजन्यपदार्थोपस्थितिः' इति ह्युक्तम्। अन्वयस्तु न पदार्थः। अत एव न वाक्यार्थः, किन्तु संसर्गमर्यादापदवाच्यसमभिव्याहारविशेषेणैव लभ्यः। संबन्धः खलु नियमेन पदार्थान्तरसापेक्षः नैकरूपः। अत एवाननुगतः। नाप्यनुगतो धर्मोऽपि तेषां वक्तुं शक्यः। शाब्दे संबन्धस्तु नैकरूपः कुत्रापि वक्तुं शक्यः।

[अभिहितान्वयवादविमर्शः]

315. **स्वार्थे शब्दः, स चासावपि मिलितमतौ व्यापृतावित्यनेकाः**
**कल्प्यास्ते शक्तयः स्युः; कथमपि न भवेत् तादृशी शक्तिरेका।**

विशिष्य समभिव्याहृतपदानामनेकरूपत्वेन तावत्स्वननुगतासु अनुगतशक्तेर्वक्तुमशक्यत्वेनान्वयांशे शक्तिः क्लिष्टैव। एकत्रानयनान्वितं कर्मत्वं द्वितीयाया अर्थश्चेत्, अपरत्र नयनान्वितम्, अपरत्र नाशनान्वितम्, अपरत्र च दर्शनान्वितमित्यादिरूपत्वादनन्ताननुगतशक्त्यङ्गीकारासंभवात्। पदार्थानामनेकधाभानम्, पौनरुक्त्यमित्यादयोऽपि दोषाः। न चेतरत्वेन सामान्येनानुगमसंभवान्न गौरवमिति वाच्यम्, तेन रूपेण पदार्थभानस्य शाब्दबोधे कुत्राप्यननुभवात्। अत एव प्रथमं क्रियान्वितस्वार्थबोधकत्ववादः, इतरान्वितस्वार्थबोधकत्ववादः ततः अन्वितस्वार्थबोधकत्ववादः इत्यव्यवस्था संजाता तेषाम्। शब्दस्तु यावान् प्रयुज्यते, तावानेव शाब्दबोधः स्यात्, अतिरिक्तस्तु आर्थिको मानस एव बोधः। करणानुगुणा हि मतिर्भवेत्। अत एव किल 'सर्वं वाक्यं सावधारणम्' इति न्यायः, पुनस्तत्र 'असति बाधके' इत्यपवादयोजनमित्यादिकोलाहलाश्शाब्दे अनिवार्यास्संवृत्ताः। एतत्सर्वस्यैव हि फलं सर्वत्र शब्दानामनन्तमपारं च वर्धनमद्यापि न विश्रान्तम्॥

नन्वेवं सत्याचार्यैरन्विताभिधानवाद एव कथं समर्थ्यत इति चेत्, उक्तमत्रोत्तरं ख्यातिवादावसरे। अत एव 'अभिहितान्वयपक्षेऽपि नास्माकं काचित् क्षतिः' इति स्पष्टमनुपदमुच्यते (श्लो.93)। अधिकं तत्रैव द्रष्टव्यम्॥

हन्तैवं पण्डितैस्सार्धसहस्रैः किल वत्सरैः। कालो नीतो वृथा हन्त! तर्कमात्रपरायणैः॥
श्रीमद्भिरेभिराचार्यैर्हयग्रीवप्रसादतः। बहुधाऽकारि यत्नस्तु प्रमेयानां विशुद्धये॥
'सर्वं साधयितुं शक्ताः यत्किञ्चिदपि मेधया। प्रमाणोल्लङ्घिनो नैव वय'मित्युदघोषि तैः॥
अथापि वर्धतेऽद्यापि कलिस्तस्यैव वैभवात्। उपर्युपरि चर्चा तु मास्त्वस्मान् रक्षताद्धरिः॥

**वस्तुतस्तु**— 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति स्वर्गार्थमग्निहोत्रं विधीयत इति वैदिकाः। मध्यमकालिकबौद्धास्तु, तेन वाक्येन स्वर्गस्य यागस्य च साध्यसाधनभावः कथं सिद्ध्येदित्याक्षेपे, 'क्षुन्निवृत्तिकाम ओदनं पचेत्' इत्युक्ते ओदनं क्षुन्निवृत्तिसाधनम्, तत्कामनावत्पुरुषकृतत्वात्, इत्यनुमानेन सिद्ध्यतीति **नैयायिकाः**। एवं सति वेदस्यानुमानापेक्षत्वेऽनपेक्षप्रमाणत्वमपगच्छेदिति भीत्या, **जरन्मीमांसका**स्तस्यापि वेदमूलत्वसाधनार्थं शब्दादनुपस्थितस्यापि स्वर्गसाधनत्वस्य शाब्दबोधविषयत्वसाधने व्यग्रा अभूवन्। परं तु वेदस्य शब्दरूपत्वेन तद्बोधे शक्तिग्रहापेक्षायाः. शक्तिग्रहस्य च व्यवहाराधीनतायाश्चानिवार्यत्वेन, प्रामाण्ये परमुखनिरीक्षणाभावाङ्गीकारमात्रेणेष्टार्थसिद्धेः, न कश्चिद्दोष इति न भीतेरवकाशः॥ ९१॥

एवं सत्यपि '**कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्वते**' इति न्यायनिदर्शनतया अभिहितान्वयवादं विमृशति— **स्वार्थ** इत्यादिना। **शब्दः**=गवादिशब्दः प्रथमम् **स्वार्थे**=स्वशक्यार्थे व्यापृतः। अनन्तरम् **स च**=शब्दश्च **असावपि**=अर्थश्चेत्युभावपि **मिलितमतौ**=अन्वयबोधने **व्यापृतौ इति शक्तिः, ततः**

**अर्थेषु स्मारितेषु प्रथममथ च तद्योग्यतादौ विमृष्टे**
**शब्दैरेवान्विते धीर्मम भवति, तव स्वार्थबोधव्यवेतैः ॥ ९२ ॥**

**[अभिहितान्वयवादे न विद्वेषः]**

**316. संसर्गं वाक्यवेद्यं स्फुटमभिदधते कानिचित् भाष्यवाक्या-**
**न्याद्यव्युत्पत्तिरुक्ता प्रतिपदमिह च क्वापि नान्यस्य हानिः ।**

**विशिष्टशाब्दबोधनशक्तिः अनेकाः शक्तयः ते**=अभिहितान्वयवादिनस्तव **कल्प्याः स्युः** । 'गामानय' इत्युक्ते हि प्रथमं गवादिपदैः तत्तदर्थानां विशकलिततयाभिधानशक्तिरेका । अनन्तरं समभिव्याहार-ज्ञानवशादन्वयभासनशक्तिः द्वितीया । तदनन्तरं पूर्वोच्चरितपदज्ञानम्, अन्वयज्ञानं चेत्युभौ मिलित्वा यदा विशिष्टवाक्यार्थं जनयतः, तदा तदुभययोः विशिष्टबोधजननशक्तिरप्यङ्गीकार्या । एवञ्च शक्तित्रयमावश्यकम् अभिहितान्वयवादे । ननु पदशक्तिरेकैव तावद्दूरं स्वकार्यं निर्वर्तयतीत्यत्राह—**तादृशी एका शक्तिः कथमपि**=कथञ्चिदपि **न भवेत्** । अन्विताभिधानवादे नायं क्लेश इति प्रदर्शयति—**प्रथमम्** गवादिपदैः **अर्थेषु स्मारितेषु अथ च**=अनन्तरं च **तद्योग्यतादौ**=तदनुगुणाकांक्षायोग्यतादौ **विमृष्टे** सति **शब्दैरेव** अन्विते शक्तिमद्भिः पूर्वोक्तशब्दैरेव **अन्विते**=परस्परान्विते **धीः**=बोधः **मम**=अन्वयांशेऽपि शक्तिवादिनो मम भवति । **तव**= अभिहितान्वयवादिनस्तु **स्वार्थबोधव्यवेतैः**=शब्दशक्तेः अर्थस्मारण एव क्षीणत्वात् अनन्तरं पदार्थाभिधानम्, ततः अन्वयभानम्, ततो विशिष्टबोध इति बहुव्यवहितैः शब्दैः शाब्दबोधो वर्णनीय इति महदिदमनौचित्यम् । सिद्धान्ते तु अन्वयांशेऽपि शक्तेरङ्गीकारान्नैवं व्यवधानमित्यर्थः । ततश्च स्मारकशक्तिः, आनुभावकशक्तिश्चेति शक्तिद्वयमेवेति लाघवमित्यन्विताभिधानमेव वरम् ॥

**इदमत्राकूतम्**—प्राभाकरा अतिरिक्तशक्तिवादिनः । शाब्दबोधस्थले च पदेषु **स्मारकशक्तिः, आनुभावकशक्तिरिति** शक्तिद्वयं वर्तते । स्मारकशक्त्या परस्परान्वितानामर्थानां अर्थोपस्थितिः स्मृतिरूपा भवति । तदनन्तरमाकाङ्क्षादिवशात् परस्परमन्वयविशेषविशिष्टा एव अर्थाः आनुभावकशक्त्या अभिधीयन्त इति तेषामाशयः । आनुभावकशक्तिरेव **ज्ञानशक्तिः** । नैयायिकास्तु नातिरिक्तशक्तिवादिनः । अतः शक्तित्रयकल्पनाप्रसङ्गादिकं स्वमतदृष्ट्या । पदशक्तिरपि सङ्केतरूपा, नातिरिक्ता । तया शक्त्या एकसंबन्धि-ज्ञानविधया अर्थानां स्मृतिः प्रथमं भवति । अनन्तरमाकाङ्क्षादिवशादन्वयभानम् । अनन्तरं विशिष्टवाक्यार्थबोधः इति सर्वं प्रथमश्रुतशब्दसामर्थ्यवशादेव भवतीति, न कुत्रापि कस्याप्यतिरिक्तस्य कल्पनम् । पदैरर्थाभिधान-मन्यत्, अर्थस्य प्राथमिकं स्मरणं चान्यत् । अर्थस्मरणादीनां व्यापाररूपत्वात्, व्यापारेण व्यापारिणो नान्यथासिद्धिरिति **नैयायिका भाट्टाश्च** । आचार्याशयस्समनन्तरश्लोके ॥ ९२ ॥

वस्तुतस्तु वेदान्तिनामेतादृशविषयेषु नाभिनिवेशः । किन्तु 'न सर्पमारः, न वा दण्डवारणम्' इति न्याय एवोचित इत्याह—**संसर्गमित्यादि** । **कानिचिद्भाष्यवाक्यानि**—'पदसंघातरूपस्य वाक्यस्या-नेकपदार्थसंसर्गविशेषाभिधायित्वेन' इत्यादीनि श्रीभाष्यवाक्यानि **संसर्गम्**=पदार्थानां परस्परान्वयम्

**इत्थं मत्वा सयूथ्याः कतिचिदभिहितान्योन्यसंसर्गमीषुः**
**तत्तत्स्वारस्यलोकप्रतिपदनुगमात् तच्च नाधिक्षिपामः ।। ९३ ।।**

**वाक्यवेद्यम्**=समभिव्याहारगम्यम् **स्फुटम् अभिदधते**=कण्ठत एव स्पष्टं वदन्ति । न तावन्मात्रम्– **आद्यव्युत्पत्तिः**=प्राथमिकशब्दशक्तिग्रहः **प्रतिपदम् उक्ता**=प्रत्येकं प्रत्येकमेव पदानां शक्तिग्रह एवाभिहिता । अयमंशः पूर्वं (श्लो.73-76) विस्तरेणोक्तः । **इह च**=एतस्मिन्नभिहितान्वयवादेऽपि **क्वापि**= कस्मिन्नपि विषये **अन्यस्य**=सिद्धान्तप्रधानप्रमेयस्य कस्यापि **न हानिः** । सामानाधिकरण्यविचारेऽन्विताभिधान-वादस्सिद्धान्तस्यानुकूलः, न त्वभिहितान्वयवाद इति चिन्ता नावश्यकी, वादद्वयेऽपि नास्माकं कापि हानिः । **इत्थम्**=एवम् **मत्वा**=विचिन्त्य **सयूथ्याः कतिचित्**=अस्मदेकदेशिनः केचित् **अभिहितान्योन्य-संसर्गम्**=परस्परान्वयम् अनन्तरमेवाभिहितम् **ईषुः**=ऐच्छन् । **तत्तत्स्वारस्यलोकप्रतिपदनुगमात्**= तत्तत्स्वारस्यम्=तत्तद्भाष्यादिवचनस्वारस्यम्, **प्रतिपत्**=प्रतिपत्तिः=लोकानुभवः, अनयोरानुगुण्यात्, **तच्च**= अभिहितान्वयवादं च **नाधिक्षिपामः**=न निराकुर्मः ।।

अयं विचारः **न्यायपरिशुद्धौ** शब्दाध्यायप्रथमाह्निके विस्तरेण प्रत्यपादि । अन्ते च सामान्यरूपेणान्विताभिधानम्, विशेषरूपेणाभिहितान्वयवादश्चेति मध्यस्थकक्ष्यानुसरणादुभयसमन्वय एव सिद्धान्तसंमत इति च प्रादर्शि । वाक्यश्रवणकाल एव हि सामान्यतः परस्परमन्वयो भूयादेव, वाक्यत्वात् । स चान्वयः कीदृशः? इति विशेषनिश्चयश्चानन्तरमेवेति भावः । वाक्यत्वात्सामान्यरूपेण संसर्गभानमित्येतदपि अन्ततः अभिहितान्वय एव । प्रत्यक्षं विशेषद्वारा सामान्यग्राहकम् । शब्दानुमाने तु सामान्यद्वारा विशेषग्राहके इत्यसकृदुपपादितम्। संबन्धस्तु सर्वत्राप्यननुगतत्वेनैव भासते, संबन्धानां बहुविधत्वात् । तदंशे शक्तिस्वीकारो वृथैव । वाक्यश्रवणे हि परस्पराकाङ्क्षादिभानमपि सहजं सहैव, वाक्यत्वादेव । परं त्विदमपि **दशदाडीमादि-**वाक्येषु व्यभिचरितम् । अत एव पदार्थो वाक्यार्थापेक्षयातिरिक्तो न वेत्यपि कलहायन्ते । आहत्य तु पदानामन्विते शक्तिस्तु दुस्साधा । पदार्थानामनेकधाभानादेरवर्जनीयत्वात्, संबन्धानामननुगतत्वाच्च । अन्ततः सिद्धे व्युत्पत्तिर्यदाऽऽवश्यकी, तदाऽन्वयानामननुगतत्वेनान्वयभानस्यासंभवेनाभिहितान्वयवादस्त्ववर्जनीयः । असकृदनुभूतार्थकवाक्येषु तु अन्विताभिधानमप्यनुभवसिद्धमित्यादिकं तु भगवत्यास्संविदः प्रभावातिशयमावेदयेदित्यन्ते तत्रैव वादानां समाप्तिरिति वृथा चर्चा न वर्धनीयेत्याचार्याणामाशयः ।।

पदजन्यपदार्थोपस्थितेस्सामान्यविषयकत्वेऽपि व्यवहारस्सर्वोऽपि विशेषविषय एव । एवञ्च शक्तिग्रहस्य सामान्यमूलकत्वस्यावश्यकत्वेऽपि शाब्दव्यवहारस्य विशेषे पर्यवसानमनिवार्यम् । तथा च वाक्यार्थ एव संसर्गभानमनुभवसिद्धम् । अत एव पदार्थापेक्षया वाक्यार्थोऽतिरिच्यते, संसर्गस्यापूर्वत्वात् । अथापि संसर्गस्याननुगतत्वेन तस्य समभिव्याहारलभ्यत्वेन च संसर्गः न पदार्थः इत्यपि प्रतिपादयति **जयन्तभट्टः** । संसर्गांशेऽनुगता शक्तिस्तु दुर्वचेत्यप्युपपादितम् । संसर्गः सामान्याकारेण वाक्येन भासत इत्यस्यापि समभिव्याहार एव कारणम् । अत एव पदजन्यपदार्थोपस्थितिः प्रकारतया वा विशेष्यतया वा

[सामानाधिकरण्यं न भेदाभेदवादानुकूलम्]

317. **द्वारे भिन्ने समानाधिकरणवचसामैक्यतात्पर्यसिद्धेः**
**भेदाभेदस्थितानामिदमनुगुणमित्याार्हतादेर्दुराशा ।**
**वस्तुस्थित्यैकरूप्ये वचनमितरथा बोधयत् स्यान्न मानं**
**तन्मानत्वात् द्विधैकं स्थितमिति च न सत्, भेद एवोपपत्तेः ॥ ९४ ॥**

किञ्चिदर्थविषयकशाब्दबोधं प्रत्येव कारणम्, न तु संसर्गभानं प्रत्यपि, संसर्गस्य पदार्थत्वाभावात् । अत एव 'द्वारम्' इत्यादौ पदाध्याहार एव, न त्वर्थाध्याहर इत्यपि पूर्वं (पु.641) प्रत्यपादि । अतश्चाभिहितान्वय एव स्वरसः । इतरत्सर्वं न केवलं वार्तम्, अपि तु पण्डितानां तत्तच्छास्त्रमर्यादोल्लङ्घनव्यसनस्य फलमित्यवधेयम् ॥ ९३ ॥

एवं वाक्यविचारप्रसङ्गात्, समानाधिकरणवाक्यविचारं चिकीर्षुः, सामानाधिकरण्यस्य भेदाभेदवादानुकूलत्वं निरस्यति—द्वार इत्यादि । **द्वारे**=पदानां प्रवृत्तिनिमित्ते **भिन्ने**=सिद्धे **इदम्**=सामानाधिकरण्यम् **समानाधिकरणवचसाम्**='नीलमुत्पलम्' इत्यादिसमानाधिकरणवाक्यानाम् **ऐक्यतात्पर्यसिद्धेः**=ऐक्ये तात्पर्यस्य निश्चयात् **भेदाभेदस्थितानाम्**=भेदाभेदवादिनाम् **अनुगुणम्**=अनुकूलम् इति **आर्हतादेः**=जैनादीनां भेदाभेदवादिनाम् **दुराशा**=विफलाशा । आदिपदेन भेदाभेदवादिनां भाट्टभास्करादीनामपि ग्रहणम् ॥

एवमाशा न सेत्स्यति । कुतः? **वस्तुस्थित्यैकरूप्ये**=वस्तूनां=पदार्थानाम् स्थितेः=स्वरूपस्थितेः ऐकरूप्ये=एकरूपत्वे सति, **तन्मानत्वात्**=वस्तुनि विकल्पायोगात्, भेदप्रतिपादकव्यधिकरणवाक्यानामेव प्रमाणत्वात् **इतरथा**=तद्विरुद्धतया **बोधयत्**=बोधं जनयत् **वचनम्**=वाक्यम् **मानम्**=प्रमाणं **न स्यात्** । **तन्मानत्वा**दित्यस्य उत्तरत्र वान्वयः । तथा च, वचनं हि सर्वत्रानुभवपूर्वकम् । अतः समानाधिकरणवचनस्यापि प्रमाणत्वानपायात् **एकम्**=एकमेव वस्तु **द्विधा**=भिन्नमभिन्नं च स्थितम् इति च **न सत्**=न युक्तम् । कुतः? **भेद एव**=भेदे सत्येव **उपपत्तेः**=सामानाधिकरण्यस्योपपत्तेः । अयमर्थो धर्मधर्मिभावसमर्थनेन पूर्वमपि (जड.8,9, 10,57) बहुधा प्रपञ्चितः । प्रपञ्चयिष्यते च विस्तरशः (अद्रव्य.3-11) । अर्थगतं सामानाधिकरण्यं तु एकाधिकरणवृत्तित्वरूपम् । यथा 'घटपटौ भूतले' इत्यादौ । 'घटवत् भूतलम्' इति शब्दगतसामानाधिकरण्यस्थलेऽपि घटभूतलत्वयोरस्ति सामानाधिकरण्यम्, उभयोर्भूतले विशेषणत्वात् । अत एतादृशेऽर्थे विशेषणद्वयस्यैकाधिकरणवृत्तित्वात् शब्दः सामानाधिकरण्ये पर्यवस्यति, न त्वखण्डार्थे । शिष्टमन्ते (श्लो.99) भविष्यति ॥

**अयं भावः**—शब्दप्रयोगः खलु समानाधिकरणव्यधिकरणभेदेन द्विविधो दृश्यते । 'घटवद्भूतलम्' इत्यादिः समानाधिकरणः प्रयोग उच्यते । 'भूतले घटः' इत्यादिः व्यधिकरणप्रयोग उच्यते । समानविभक्तिकपदघटितः समानाधिकरणः, भिन्नविभक्तिकपदघटितः व्यधिकरणः प्रयोग इति विभागः । शब्दप्रयोगभेदः तद्धेतुभूतज्ञानभेदनिबन्धनः । ज्ञानभेदश्च विषयभेदनिबन्धनः । 'भूतले घटः' इत्यादिव्यधिकरण-

[सामानाधिकरण्यं नाभेदवादानुकूलम्]

**318. ऐकाधार्यात् विगीतं तदिदमिति नयाल्लक्षयेन्निर्विशेषम्**
**मैवं, बाधातिचारस्ववचनहतिभिः स्वोक्तदृष्टान्तदौस्थ्यात्।**
**तत्तेदन्ताविरोधो वचसि न हि भवेत् तादृशाध्यक्षनीत्या**
**नो चेत्, स्याद्वस्समस्तं क्षणिकमिह पुनर्देशभेदः क्रमात् स्यात्॥ ९५॥**

प्रयोगे घटभूतलयोराधाराधेयभावप्रतीत्या उभयोर्भेदः स्पष्टः। 'घटवत् भूतलम्' इत्यत्र तु पदद्वयेनाप्येकमेव वस्तु बोध्यते। घटवत्पदेन घटस्य विशेषणत्वम्, भूतलपदस्य विशेष्यत्वं च प्रतीयते। एवं 'नीलमुत्पलम्' इत्यादिसमानाधिकरणस्थले तु अभेदान्वयबोधः। घटभूतलयोरत्यन्तं भेदात् घटपदोपरि मतुप्प्रत्यय आवश्यकः। नैल्यघटयोरपृथक्सिद्ध्या नीलादिपदोपरि मतुप्प्रत्ययो नापेक्ष्यते। शिष्टमग्रे (श्लो.90)। एवञ्चायुतसिद्धस्थलेऽपि सर्वत्र भेदस्यैव सिद्ध्या न भेदाभेदौ सिद्ध्यत इति॥ ९४॥

एवं सामानाधिकरण्येन भेदाभेदसिद्धिं निरस्य, तेन निर्विशेषवस्तुसिद्धिमप्यनूद्य निरस्यति— **ऐकाधार्यादि**त्यादिना। **विगीतम्**=विमतम् 'नीलमुत्पलम्' इत्यादिवाक्यावगतं सामानाधिकरण्यं **निर्विशेषम्**= वस्तूनां निर्विशेषत्वम् **लक्षयेत्**=ज्ञापयेत्, लक्षणया बोधयेदिति वा, **ऐकाधार्यात्**=समानाधिकरणत्वात्, **'तदिदम्' इति नयात्**='सोऽयं देवदत्तः' इत्यादिन्यायात्। 'सोऽयं देवदत्तः' इत्यादावनुपपत्तिपरिहारादिकं पूर्वमेव (जड.26) यद्यपि कृतम्, तथापि प्रकृतविचारोपयोगितया तदुपादानम्। प्रमेयनिष्कर्षस्य तत्रैव कृतत्वादेव, 'यक्षानुरूपो बलिः' इति न्यायेन प्रकारान्तरेण प्रतिवक्ति—**मैवमि**त्यादिना। कुतः? **बाधातिचारस्ववचनहतिभिः**=**बाधः**=वस्तुविरोधः। 'नीलम् उत्पलम्' इत्यनुभवेनैकस्मिन् धर्मद्वयभानस्यानुभवसिद्धस्य परित्यागे बाधः। अथवा निर्विशेषवस्तुन एव शशशृङ्गतुल्यत्वात् तादृशवस्तुबोधने बाधः। एवम् **अतिचारः**=व्यभिचारः। 'दण्डी पुरुषः' इत्यादिसमानाधिकरणवचनानि हि भेदपराणीति संप्रतिपन्नम्। तत्र भेदस्संप्रतिपन्नः, नैवमत्रेति चेत्, अत्राप्यभेदः न हि संप्रतिपन्नः। सामानाधिकरण्यं भेदेऽपि 'दण्डी पुरुषः' इत्यादौ दृश्यत इति तु निर्विवादम्। अतश्चातिचारोऽनिवार्यः। **स्ववचनहतिः**='तयोः सामानाधिकरण्यात्' इत्यत्र हि द्विवचनेन भेद उच्यते, तयोर्धर्मत्वं चोच्यते। ऐक्यमप्युच्यते इति वचनानां परस्परव्याघातः। सामानाधिकरण्यमप्येको धर्मः। अतश्च निर्विशेषत्वं कथं तेन सिद्ध्येदिति वा व्याघातः। एवम्—**स्वोक्तदृष्टान्तदौस्थ्यात्**='सोऽयं देवदत्तः' इति दृष्टान्तस्यैवासिद्धेः **मैवमि**त्यन्वयः। ननु कथं दृष्टान्तासिद्धिः? 'सोऽयम्' इति निर्देशस्यैव विरुद्धत्वात्। 'सः' इति परोक्ष उच्यते, 'अयम्' इति प्रत्यक्ष उच्यते। एक एव प्रत्यक्षश्च परोक्षश्चेति कथमित्यत्राह—**तत्तेदन्ताविरोधः**='सोऽयम्' इति वचसि विरोधः **तादृशाध्यक्षनीत्या**=प्रत्यभिज्ञाप्रत्यक्षन्यायेन **न हि भवेत्**। परोक्षत्वं पूर्वकाले, इदानीं तु प्रत्यक्षत्वम्। को विरोधः। ननु प्रत्यभिज्ञाप्रत्यक्षं तत्तांशे स्मृतिरूपं कथं प्रमाणं भवेदित्यत्र—**नो चेत्**=एवं प्रत्यभिज्ञाया एवापलापे **वः समस्तं क्षणिकं स्यात्**। क्षणिकवादस्तु सूत्रकृतैव निरस्त इति भवतामपि

[अखण्डार्थसामानाधिकरण्यनिरासः]

319. **सत्याद्युक्तिः प्रकृष्टद्युतिरुडुपतिरित्यादिवत् वस्तुमात्रं**
**ब्रूते लक्ष्मोक्तिभावादिति यदि, न तथा, स्वोक्तिबाधादिदोषात्।**
**रोधः सद्वाक्यभावात्; भवति च कथितोदाहृतिः साध्यहीना**
**प्रश्नोक्तेश्चाविशिष्टं न विषय इति नापृष्टजल्पोपहासः ॥ ९६ ॥**

संमतम्। एकस्य कालद्वयसंबन्धो देशद्वयसंबन्धो वा कथमित्यत्र—**इह पुनः**=वस्तूनां स्थिरत्वे हि **देशभेदः**=देशद्वयसंबन्धः **क्रमात्**=कालक्रमात्=कालभेदात् **स्यात्**। कालद्वयसंबन्धश्च वस्तूनां स्थिरत्वान्न विरुद्ध इत्यादिकं तु पूर्वमेव (जड.26) विस्तरेणोक्तम्। अत एव प्रत्यक्षत्वपरोक्षत्वे एकस्य कालभेदेन न विरुद्धे। धूमेन वह्न्यनुमाने हि, प्रथमं परोक्षो वह्निः उपसर्पणे प्रत्यक्षोऽपि भवति। अतस्सामानाधिकरण्येन न निर्विशेषसिद्धिः ॥ ९५ ॥

लोके यथा तथा वा भवतु। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यानि तु अखण्डार्थपराण्येव इत्याशंक्य समाधत्ते—**सत्याद्युक्तिरित्यादि**। **सत्याद्युक्तिः**='सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यम् '**प्रकृष्टद्युतिः उडुपतिः**' इत्यादिवत्='प्रकृष्टप्रकाशश्चन्द्रः' इति वाक्यवत् **वस्तुमात्रम्**=वस्तुस्वरूपमात्रम् **ब्रूते**=वक्ति, **लक्ष्मोक्तिभावात्**=लक्षणवाक्यत्वात् इति पूर्वपक्षः। 'सत्यादिवाक्यम् स्वरूपमात्रपरम्, लक्षणवाक्यत्वात, प्रकृष्टप्रकाशचन्द्रवाक्यवत्' इत्यनुमानाकारः। अयमाशयः पूर्वपक्षिणाम्—आकाशे नक्षत्रादिकं पश्यन्, तन्मध्ये चन्द्रः कः? इत्यजानन् पृच्छति 'कश्चन्द्रः' इति। 'तावत्सु यः प्रकृष्टप्रकाशः, स चन्द्रः' इत्युत्तरं कश्चिदाप्तो वक्ति। अत्र प्रष्टुः चन्द्रस्वरूपविषयक एव प्रश्नः। तस्योत्तरमपि स्वरूपविषयकमेव भवेत्। नो चेत् '**आम्रान् पृष्टः कोविदारानाचष्टे**' इतिवदुपहास्यं स्यात्। अतश्च प्रकृष्टप्रकाशत्वादिकं नात्र विवक्षितम्, चन्द्रस्वरूपपरिचयमात्रम्। तद्वदेव सत्यज्ञानादिकं ब्रह्मस्वरूपपरिचायकमात्रम्, न स्वार्थतात्पर्यवदिति, ब्रह्मणो निर्विशेषत्वसिद्धिरिति ॥

समाधत्ते—**इति यदि, न तथेति**। तत्र हेतुः—**स्वोक्तिबाधादिदोषादिति**। लक्षणवाक्यमिदम् इत्युच्यते, तेन स्वरूपमात्रमुच्यत इत्यप्युच्यते। इदं परस्परविरुद्धम्। असाधारणधर्मो हि लक्षणम्। तेनासाधारणधर्मवैशिष्ट्यमेव यदि न स्यात्, तर्हि कथं तल्लक्षणवाक्यं स्यात्, धर्ममन्तरा वस्तुपरिचयो वा कथं स्यात्? **आदिना** 'परास्य शक्तिर्विविधैव' 'सर्वधर्मोपपत्तेश्च' इत्यादिश्रुतिसूत्रविरोधग्रहणम्। एवं सत्प्रतिपक्षमप्याहोक्तानुमाने—**रोध** इति। **रोधः**=प्रत्यनुमानञ्च भवति। विमतं सत्यादिवाक्यम् सविशेषपरम्, लक्षणवाक्यत्वात् इति। स्वार्थविवक्षैव यदि न स्यात्तर्हि, तत् उन्मत्तवाक्यं स्यात्। **कथितोदाहृतिश्च साध्यहीना**=प्रकृष्टप्रकाशश्चन्द्रः इति वाक्यं किल दृष्टान्तः। चन्द्रे प्रकृष्टप्रकाशाभावे इतरव्यावृत्तचन्द्रज्ञानं कथम्? ननु मद्वाक्याशयमेव ज्ञातुमशक्तस्त्वं श्रुत्यर्थं कथं जानीयाः? कश्चन्द्रः? इति स्वरूपपरप्रश्नस्योत्तरमपि स्वरूपपरमेव वक्तव्यम्, अन्यथाऽपृष्टोत्तरं स्यात्। अतः प्रकृष्टप्रकाशवाक्यं न स्वार्थे तात्पर्यवत्, किन्तु

[विशेषणभेदमात्रं न विशेष्यभेदप्रयोजकम्]

320. **एकत्रार्थे समानाधिकरणवचसां वृत्तिरुक्ता; ततोऽत्र**
**स्थाप्ये तत्तन्निमित्ते प्रसजति हि भिदा धर्मिणोऽपीति चेन्न।**
**नेतव्यं लक्ष्मवाक्यं प्रतिपदनुगणम्; साऽत्र सिद्धा विशिष्टे**
**व्युत्पत्तेः तादृशत्वात्; भवति तु विहतेः क्वापि भिन्नं विशेष्यम्॥ ९७॥**

---

चन्द्रस्वरूपपरिचये उपक्षीणम्। अतश्च नात्र धर्मप्रतिपत्तौ विवक्षा। अतश्च निर्विशेषत्वसिद्धिरित्यत्राह—**प्रश्नोक्तेश्च**=प्रश्नवाक्यस्यापि **अविशिष्टम्**=निर्विशेषं वस्तु **न विषयः इति** हेतोः **अपृष्टजल्पोपहासः न**=अपृष्टोत्तरत्वरूपहास्यं न भवति। प्रष्टा खलु 'एतेषु कश्चन्द्रः?' इति मात्रं पृच्छति, न तु तस्य सविशेषत्वनिर्विशेषत्वजिज्ञासा। निर्विशेषमेव चन्द्रस्य स्वरूपं चेत्, तत्तथैवोत्तरमपि वक्तव्यम्। निर्विशेषं हि लोके शशशृङ्गायितम्, तदा तादृशः प्रश्नः कथम्? आकाशे चन्द्रमपि पश्यति, नक्षत्राण्यपि पश्यति। 'एतेषु कश्चन्द्रः' इत्येव जिज्ञासा। तेन चन्द्रसंज्ञाया संज्ञिप्रश्नः। प्रकृष्टप्रकाशोक्त्या संज्ञिनिर्णयः। अतः प्रकृष्टप्रकाशत्वकथनं नापृष्टोत्तरम्। अतो लक्षणवाक्यं न निर्विशेषपरम्॥ ९६॥

अयि भोः! भेदवासनादूषितान्तःकरणं त्वां कथं वयं बोधयेम? अथापि पुनःप्रयतामहे कारुण्यात्कथंचिदिति वदत आशयमुपवर्ण्य समाधत्ते—**एकत्रे**त्यादि। **समानाधिकरणवचसाम्**='नीलमुत्पलम्' इत्यादिसमानाधिकरणवाक्यानाम् **एकत्र अर्थे**=एकस्मिन् वस्तुनि **वृत्तिः**=बोधनम् **उक्ता**=यद्यप्युक्ता। परन्तु **ततः**=तस्मादेव **अत्र**=प्रकृते एकस्मिन् विशेष्ये **तत्तन्निमित्ते**=तत्तत्पदप्रवृत्तिनिमित्तभूतधर्मे **स्थाप्ये, तदा धर्मिणः अपि**=विशेष्यस्यापि **भिदा**=भेदः **प्रसजति हि**। विशेषणं नाम व्यावर्तकम्। एवञ्च पदद्वयेनैकार्थाभिधाने हि पदद्वयप्रवृत्तिनिमित्तयोः भेदावश्यंभावात्, पदद्वयं विशेष्यं द्रव्यं विभजेदेव, अथवा विशेषणयोस्सांकर्यमनिवार्यम्। अतः नीलमुत्पलमित्युक्ते हि नीलत्वमुत्पलत्वं च नैकत्र स्याताम्। अतो नीलत्वं रक्ताद्विशेष्यं व्यावर्तयति, उत्पलत्वं च घटान्नीलं व्यावर्तयति। तावन्मात्रं तयोः फलम्। न तु तयोरेकाधिकरणवृत्तित्वम्, सांकर्यप्रसंगात्। भिन्नप्रवृत्तिनिमित्तानामित्यादेरपि पदानां प्रवृत्तौ निमित्तभेदं वदति। न तु वस्तुनि धर्मद्वयसत्ताम्। 'एकस्मिन्नर्थे' इत्यनेन हि एकत्वमात्रे पर्यवसानं लभ्यते। अतः प्रवृत्तिनिमित्तयोस्त्यागेन द्रव्यैक्यमात्रबोधने पर्यवसानमेव सामानाधिकरण्यफलमिति निर्धर्मकमेकं वस्तु सामानाधिकरण्येन बोध्यते॥

इति चेन्न। कुतः? **लक्ष्मवाक्यम्**=लक्षणवाक्यं हि **प्रतिपदनुगुणम्**=लक्ष्यविषयकं ज्ञानं तेन यथा भवेत्, तथा **नेतव्यम्,** लक्ष्यज्ञानार्थत्वाल्लक्षणस्य। **अत्र**=प्रकृते **सा**=लक्ष्यप्रतिपत्तिः **विशिष्टे**=विशिष्ट एव सिद्धा, लोके नियमेन लक्ष्यस्य लक्षणाश्रयत्वात्। **व्युत्पत्तेः**=लक्षणवाक्येन बोधनक्रमस्य **तादृशत्वात्।** लक्ष्यतावच्छेदकसमनियतं हि लक्षणमुच्यते; यत्र गोत्वम्, तत्र सास्नादिमत्त्वम्; यत्र सास्नादिमत्त्वम्, तत्र गोत्वमिति। एवं सति 'सास्नादिमान् गौः' इति वाक्येन गोत्वरहितम्, सास्नादिरहितं किञ्चिद्द्रव्यं तेन

[नानाधर्मविशिष्टैकवस्त्वभिधाने विरोधाभावः]

**321. नानाधर्मप्रणाड्या बहुभिरपि पदैर्धर्मिणोऽत्रैक्यसिद्धौ**
**नान्योन्याधारतैक्ये प्रसजत उचितज्ञापनैकप्रवृत्तेः ।**

वाक्येन बोध्यत इति कथने किं रोदितव्यम्, उत हसितव्यम्? ननु विशेषणानां व्यावर्तकत्वाद्विशेष्यं भिद्येत, छिद्येत वा । किं कर्तुं शक्यत इति चेत्, अतीव भ्रान्तोऽसि निर्विशेषवादिन्! नीलमित्यनीलाद्व्यावृत्तिं वदति । उत्पलमिति घटादिव्यावृत्तिं वदति । व्यावृत्तिं वदतीत्यस्य पदार्थमेव भिनत्तीति न ह्यर्थः । किन्तु बुद्धौ तदितरेभ्यो विलक्षणं प्रदर्शयतीत्यर्थः । न तु द्रव्यमेव भिनत्ति । उत्पलपदं हि नीलोत्पलं रक्तोत्पलं च बोधयति । नीलमिति विशेषणकथने रक्तात् वैलक्षण्यसिद्धिः । उत्पलपदेन नीलपटादिभ्यो वैलक्षण्यसिद्धिः । नीलत्वविशिष्टे उत्पलत्वसत्त्वे, उत्पलत्वविशिष्टे, नीलत्वसत्त्वे वा सांकर्याद्यापादनं तु शब्दार्थप्रत्ययानां सांकर्यकृतः भ्रम एव । इदमपि पूर्वमेव (जड.10) समाहितम् । अत एव सामानाधिकरण्यलक्षणविवरण-क्लेशोऽपि भ्रममूलः, आग्रहमूलो वा भवतैव निर्णेयम् । शब्दानामेकस्मिन्नर्थे वर्तनमेकविशेष्यकबोधजनकत्वमेव स्वरसं, संप्रतिपन्नं च । तदेतत्समनन्तरश्लोके स्पष्टीभविष्यति । तर्हि 'खण्डो मुण्डो गौः' इत्यादावपि विरुद्धा धर्मा एकत्र स्युरित्यत्र वैलक्षण्यं वक्ति—**क्वापि**=कुत्रचित् 'खण्डो मुण्डो गौः' इत्यादौ **विहतेः**= खण्डत्वमुण्डत्वयोर्विरोधात् **विशेष्यं तु** गवादिकं **भिन्नं** भवति । गौरिति जातावेकत्वम् । अतोऽविरुद्ध-विशेषणानि एकत्रानेकधर्मवत्तां बोधयेयुरिति न कश्चिद्विरोधः ॥ ९७ ॥

शब्दार्थप्रत्ययानां सांकर्यवादिनमुद्बोधयितुं शब्दप्रमाणप्रवृत्तिक्रमं विशोध्य प्रदर्शयति—**नानेत्यादि** । पूर्वपक्षी मन्यते—'श्यामो युवा सुन्दरः देवदत्तः' इति वाक्येन श्यामत्वयुवत्वादिधर्मविशिष्टो धर्मी देवदत्तो बोध्यते चेत् तत्र श्यामत्वयुवत्वादिधर्मविशिष्टत्वं देवदत्तस्य तत्तत्पदैः क्रमेण बोध्यते, उत युगपत्? न क्रमेण, देवदत्तपदेन हि देवदत्तत्वधर्मविशिष्टो विशेष्य उच्यते । तत्र प्रथमं श्यामत्ववैशिष्ट्यं, ततः युवत्व-वैशिष्ट्यं ततः सौन्दर्यवैशिष्ट्यं च बोधनीयम् । एवं बोधनेन श्यामत्वयुवत्वसौन्दर्याणां सांकर्यवारणभावना-संभवेऽपि देवदत्तत्वविशिष्टे श्यामत्वान्वये, देवदत्तत्वेऽपि श्यामत्वान्वयबोधप्रसङ्गः । 'नीलो घटो दृष्टः' इत्यभिधाने हि दर्शनकर्मत्वं घटे, घटत्वे, नैल्ये च प्रतीयते । तद्वदेव श्यामत्वं देवदत्ते, देवदत्तत्वे चान्वियात् । ततः युवत्वस्य श्यामदेवदत्तान्वये, युवत्वं देवदत्ते, देवदत्तत्वे श्यामत्वे चान्वियात् । सौन्दर्यान्वयेऽपि एवमेव सांकर्यप्रसङ्गः । युगपदिति द्वितीयपक्षे तु चतुर्णामपि धर्माणां परस्परं सांकर्यप्रसङ्गः स्पष्टः । अतस्सामानाधिकरण्यं विशेषणविशेष्यभावप्रयुक्तमेव सर्वत्र ॥

एवं भ्रममग्नमुद्बोधयति=**अत्र**=समानाधिकरणवाक्ये **बहुभिरपि पदैः**=श्यामयुवसुन्दरपदैः **नानाधर्मप्रणाड्या**=श्यामत्वयुवत्वसुन्दरत्वादिभिन्नभिन्नधर्मपुरस्कारेण **धर्मिणः**=विशेष्यस्य **ऐक्यसिद्धौ**= ऐक्यनिश्चये **अन्योन्याधारतैक्ये**=परस्परमाधाराधेयभावः, परस्परसांकर्यं च **न प्रसजतः** । कुतः—**उचित-ज्ञापनैकप्रवृत्तेः**=यत्रयत्र यावदन्वेतुं योग्यम्, तावदन्वयबोधनमात्रे तद्वाक्यप्रवृत्तेः । यथा 'नीलघटवद्भूतलम्'

**बोध्ये सर्वैर्विशिष्टे, न च वचनभिदा, तच्च सूत्रादिसिद्धं**
**तात्पर्यं च स्वरूपे क्वचिदपि न भवेन्निर्निमित्तेऽनुपाख्ये ॥ ९८ ॥**

इत्युक्ते, नीलरूपवैशिष्ट्यं घटे, घटवैशिष्ट्यं च भूतले बोध्यते, न तु भूतलत्वेऽपि नैल्यवैशिष्ट्यम्, घटत्ववैशिष्ट्यं च कस्यचिद्भासते। अत एव परस्परसांकर्यमपि न कस्यापि मनसि भासते। न चात्र घटस्य पृथक्सिद्धत्वात्तथात्वेऽपि 'श्यामो युवे'त्यादौ न तथा संभव इति शंक्यम्, पदानां भिन्नत्वेनार्थभेदे सिद्धे पृथक्सिद्ध्यपृथक्सिद्ध्योः अव्यावर्तकत्वात्। अन्यथा एकस्मिन् कुसुमे रूपरसगन्धस्पर्शानां विविक्तानुभव एव न स्यात्। न च सर्वस्यापि मायिकत्वात्, विशेषणानि कल्पितान्येवेति वाच्यम्, विशेष्यस्यापि मायिकत्वात् तर्हि निर्विशेषं वस्तु वा कथं सिद्ध्येत्? गुणगुणिभावस्तु पूर्वमेव (जड.8) साधितः। एवं **सर्वैः विशेषणैः विशिष्टे** विशेष्ये एकस्मिन् पदार्थे **बोध्ये** सति **वचनभिदा**=द्विवचनादिभेदोऽपि **न च**= नैव भवति। तच्च **सूत्रादिसिद्धम्**=एकवचनादिविधायकसूत्रादिसिद्धम्। नैल्यघटत्वरूपविशेषणनानात्वेऽपि हि 'नीलघटः' इत्येकवचनमेव, न तु 'नीलघटौ' इति द्विवचनप्रसङ्गः, विशेष्यस्यैकत्वात्। अतः समास-घटकपदार्थानां स्वतन्त्रत्वे, अनेकत्वे च वचनभेदः—'घटपटौ' इत्यादौ, न त्वन्यत्र। ननु वयमखण्डार्थे तात्पर्यमेव वदामः, न तु तस्य पदलभ्यत्वमित्यत्र—**तात्पर्यं च**=तात्पर्यमपि **निर्निमित्ते**=प्रवृत्तिनिमित्तरहिते, अत एव **अनुपाख्ये**=शब्दानभिलप्ये **क्वचिदपि स्वरूपे**=स्वरूपमात्रे कुत्रापि **न भवेत्**। अबाधितानुभवस्या-पलपितुमशक्यत्वात्। अतस्समानाधिकरणवाक्यानां नाखण्डार्थे तात्पर्यसंभवः। विस्तरस्तु **शतदूषण्यादौ** ॥

**अत्रेदं परमं रहस्यम्**। 'उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्' इति बौद्धवादाद्भीताः केचन ब्रह्म निर्विशेषमातस्थुः। नात्रैव पर्यवसानम्। तस्य फलमेव निर्गुणवादः। 'नान्तं गुणानां तस्यास्ति तेनानन्तोऽयमुच्यते' इत्यार्षोपबृंहणे सत्यपि पूर्ववासनाग्रस्ताः ब्रह्मैव निर्गुणं सगुणमित्यभिन्दन्। एतत्परिणाम एव 'सत्यं ज्ञानम्' इत्यादावपि सत्यत्वादिधर्माणामपि निरासः। एवमेव युक्तिवादं प्रवर्धयामासुस्ते ॥

**प्रकृते**—वाक्यं समानाधिकरणं व्यधिकरणमिति द्विविधम्। आद्यं 'घटवद्भूतलम्' इत्यादि समानविभक्तिकपदघटितम्। द्वितीयं 'भूतले घटः' इत्यादि विरुद्धविभक्तिकपदघटितम्। प्रथमवाक्ये अभेदान्वयबोधः, द्वितीये तु भेदान्वयबोधः । एवं सत्यपि प्रत्यक्षदृष्ट्याऽनयोर्वाक्ययोर्विषये वस्तुनि न कोऽपि विशेषः। पृथक्सिद्धधर्मस्थले एवं सत्यपि, अपृथक्सिद्धविशेषणस्थले समानाधिकरणवाक्ये अभेद एव बोध्यते। यथा 'नीलमुत्पलम्' इत्यादौ । एवं 'सत्यं ज्ञानम्' इत्यादावपि। एवं सति शक्यार्थस्य परित्यागेन लक्षणा स्यादिति चेत्, इष्टापत्तिः। सर्वपदलक्षणा स्यादिति चेत्, 'विषं भुङ्क्ष्व' इत्यादौ सर्वपदलक्षणाया दर्शनान्न दोष इति तर्कं वर्धयामासुः ॥

परन्त्विदं सर्वमपि अर्थप्रत्ययशब्दानां साङ्कर्यस्य फलम्। 'घटवत् भूतलम्' 'भूतले घटः' इति शब्दप्रयोगभेदमात्रेण वस्तुनि किं परिवर्तनं भवेत्? 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधि-करण्यम्' इति सामानाधिकरण्यं तु पृथक्सिद्धिस्थलेऽपृथक्सिद्धिस्थले च सर्वत्रापि समानम्। 'घटवद्भूतलम्'

[शब्देन निर्विशेषबोधासम्भवः]

**322. बोध्यं चेत् निर्विशेषं बहुभिरपि पदैरेकतोऽन्यत् वृथा स्यात्**
**अन्यव्यावृत्तिभेदात् फलमभिदधतः स्यादखण्डत्वहानिः ।**

इत्यत्र घटभूतलत्वयोरेकाधिकरणवृत्तित्वं प्रतीयते । 'नीलमुत्पलम्' इत्यादावपि नैल्योत्पलत्वयोरेकाधिकरणवृत्तित्वं प्रतीयते । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्रापीदं समानम् । 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्यनेनोक्ता गुणगुणिभेदस्यानिवार्यता सम्यगवधेया पण्डितैः । 'उपयन्नपयन्' इत्यादेरुत्तरं तु बहुधा प्रतिपादितम् ॥

शब्दं संत्यज्य योऽर्थं तु चिन्तितुं शक्नुयाद्बुधः । विचारशास्त्रेऽधिकृतः स एवेति न संशयः ॥
वक्ष्यामि सर्वं समये सुविस्तरं श्रीरङ्गविष्णुर्भगवान् यदीच्छेत् ।
तथाऽनुगृह्णीयुरिमं कृपावशादाचार्यवर्या अपि शिष्यवत्सलाः ॥

ननु 'विषं भुङ्क्ष्व' इत्यादेरुत्तरं किमिति चेत्, एकस्मिन्नेव पदे लक्षणा, अन्यच्च तात्पर्यग्राहकमित्येव **न्यायविदः** । एतदपि वाच्यार्थविरोधे सत्येव । प्रकृते तदभावश्चोपपादितः । 'गच्छ, गच्छसि चेत् कान्त! तत्रैव स्याज्जनिर्मम' इत्यादौ विधेर्निषेधावगतिः कथम्? 'विधेर्निषेधावगतिर्विधिबुद्धिर्निषेधतः' इति खल्वाभटयन्ति ध्वनिकारा इति चेत्, ध्वनेर्वक्रोक्तिरित्येव खलु प्राचीनं ऋजु नाम । नाम यद्वा भवतु । उत्तरमुच्यताम्।

विस्तृतमुत्तरं यद्यपेक्षितं, **भट्टजयन्तस्य न्यायमञ्जर्यधी**यताम् । वस्तुतस्तु—

एषां पित्तविकाराणां शास्त्रत्वं नानुमन्वते । यतो न तत्र नियमः नौषधं न प्रतिक्रिया ॥
ननु भोः! प्रेमभक्तावप्येषैव गतिरुच्यते । सत्यं तल्लौकिकं नैव, दिव्यं नैव च पित्तजम् ॥
अत्राप्येवं ब्रुवन्त्येते रसिका ह्युत्तरं वद । जानामि तद्रहस्यं भोः! कथं त्वां बोधये, बत!
पित्तादिजाद्विकारात्तु ज्ञानोन्मादो विलक्षणः । तेजोऽन्धकारयोर्यावद्वैलक्षण्यं तथा भवेत् ॥
नष्टमध्यात्मविज्ञानं ब्राह्मणानां तपःक्षयात् । अस्यैव फलमद्यैते भुञ्जते ब्राह्मणा अमी ॥
अर्थकामपराः केचित् केचिन्मौढ्येन वञ्चिताः । अज्ञानमेव सञ्जातं सुज्ञानं कलिवैभवात् ॥
सर्वमेतत्परित्यज्य तपः कुर्मो वयं द्विजाः । सत्यमन्वेषयामोऽद्य, साह्योऽस्ति भगवान् सदा ॥
सत्यरूपी किलायं सः सदाऽस्ते भक्तवत्सलः । बहु दूरं गतास्सत्यात्सन्निपातेन पीडिताः ॥
मानसभ्रममूलानां नैव शास्त्रं न च क्रमः । व्यवस्थितानां शास्त्राणां सांकर्यं नैव भावयेत् ॥
ध्वनिस्थले च सर्वत्राप्यनुमानं प्रचक्षते । शास्त्रकारास्तदेव स्याद्युक्तमत्रेति मन्महे ॥ ९८ ॥

निर्विशेषं वस्तु शशशृङ्गायितमिति शतशो बोधनेऽपि पुनःपुनः तदेव गायन्तं प्रबोधयितुमन्तिमोपायतया 'सविशेषविषयत्वात् सर्वप्रमाणानाम् । शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम्' इत्युक्तं स्मरन् बोधयति—**बोध्यमित्यादि** । **बहुभिरपि पदैः निर्विशेषं बोध्यं चेत्, एकतः**=एकस्मात्पदात्**अन्यत्** पदं **वृथा स्यात्** । स्पष्टोऽर्थः । 'अनन्तम्' इत्येकेनैव सर्वव्यावृत्तेस्सिद्ध्या सत्यज्ञानादिपदं व्यर्थमेव स्यात् । सत्यं तथैव । परन्तु लोकप्रसिद्धचिदचिद्वैलक्षण्यस्य कण्ठत एवाभिधातुं ते पदे इत्याशंकायाम्—**अन्यव्यावृत्तिभेदात्**=

**व्यावृत्तिश्चेत् स्वरूपं भ्रम इह न भवेत् भासमाने तु तस्मिन्**
**तस्मात् स्वार्थेषु मुक्तेष्वखिलपदगता लक्षणैवात्र लाभः ।। ९९ ।।**

**[बाधार्थसामानाधिकरण्यनिरासः]**

323. **बाधार्थं यत् समानाधिकरणवचनं नाविशिष्टं वदेत् तत्**
**तत्रैकोऽध्यासयोग्याकृति वदति; परो भेदयुक्तं तु शब्दः ।**

---

ब्रह्मान्ययोः जडचेतनयोः व्यावृत्तिञ्चाभिधातुं पदद्वयस्य**फलम् अभिदधतः, अखण्डत्वहानिः स्यात्**, व्यावृत्तिद्वयबोधनात्। व्यावृत्तेरपि विशेषणत्वानपायात् ब्रह्मणः अखण्डत्वहानिः स्यात्, भवदुक्तन्यायेनैव ।।

न च व्यावृत्तेरभावरूपत्वेनाधिकरणात्मकत्वात्, नाखण्डार्थत्वहानिरिति वाच्यम्, तस्या अभावरूपत्वेऽपि अभावस्य नियमेन प्रतियोगिनिरूप्यत्वात् प्रतियोगिभेदेन अभावभेदस्यावश्यकत्वात् । अन्यथा हि पदद्वयं व्यर्थम् । किञ्च—**'व्यवहारे भट्टनयः'** इति वदतां युष्माकम्, हठादिदानीं कथं प्राभाकरनयप्रवेशः । किञ्च—**व्यावृत्तिः** न धर्मः, किन्तु **स्वरूपं चेत्, तस्मिंस्तु भासमाने**=स्वरूपस्य स्वप्रकाशत्वात् सदा भासमाने सति; स्वरूपातिरिक्तांशस्य धर्मादिः तस्मिन्ननङ्गीकारात् **इह**=ब्रह्मणि **भ्रमः**=जडत्वासत्यत्वादिभ्रमः **न भवेत्** । अंशतो ज्ञाते, अंशतोऽज्ञात एव भ्रमसंशयादेः संभवस्य बहुधोपपादितत्वात्।।

एवञ्च प्रतीयमानमर्थं परित्यज्य सर्वपदानां निर्विशेषे लक्षणाया अङ्गीकारेऽपि 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्याय आपतेदेवेत्याह—**तस्मात्**=एवं लक्षणाङ्गीकारात् **अत्र**=अस्मिन् विषये **स्वार्थेषु**=शक्यार्थेषु **मुक्तेषु**=त्यक्तेषु, न भवतः कश्चिल्लाभः, **अखिलपदगता लक्षणैव लाभः** इत्युपहासः। लाक्षणिकमपि पदं न निर्विशेषबोधनसमर्थम् । गङ्गापदस्य तीरे लक्षणायामपि तीरत्वेनैव तीरबोधात् । लोके कस्यापि प्रमाणस्य निर्विशेषवस्तुबोधनसामर्थ्याभावस्य बहुधोपपादितत्वात् । अतः सत्यादि वाक्यानां निर्विशेषे लक्षणापि न संभवति । सर्वपदलक्षणाविषये वक्तव्यं पूर्वस्मिन् श्लोके एवोक्तम्।। ९९ ।।

एव**मखण्डार्थसामानाधिकरण्य**विचारं परिसमाप्य, तत्संमतं **बाधार्थसामानाधिकरण्यं** विमृशति—**बाधार्थ**मित्यादि । ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनो हि सामानाधिकरण्यं द्विविधं वर्णयन्ति । चेतनवाचिशब्दसमभिव्याहारस्थले 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादौ हि ब्रह्मण एव जीवभावात्, उभयोरप्यभेदात् अखण्डार्थे **सामानाधिकरण्यम्** । जगद्वाचिपदैस्साकं सामानाधिकरण्यस्थले 'सर्वं खल्विदं ब्रह्म' इत्यादौ तु जगतो मिथ्यात्वात् ब्रह्मणोऽपि मिथ्यात्वापत्त्या अखण्डार्थत्वासंभवात् **बाधार्थसामानाधिकरण्यं** तत्रेति वदन्ति । अत्र दृष्टान्तः 'चोरः स्थाणुः' इति । स्थाणुं दृष्ट्वा चोर इति भ्रान्तं प्रत्युच्यते 'त्वद्दृष्टः चोरः स्थाणुः' इति । अत्र स्थाणौ चोरत्वाभावो बोध्यत इति चोरत्वबाधात् बाधायां सामानाधिकरण्यमित्युच्यते । एवं प्रकृते 'इदं ब्रह्म' इत्युक्ते ब्रह्मणि जगदभावो बोध्यते । तेन निर्विशेषं ब्रह्मैव सत्यमुक्तं भवतीति वदन्ति । एतन्निराकरोति । **बाधार्थं यत् समानाधिकरणवचनम्, तदपि अविशिष्टम्**=निर्विशेषं वस्तु **न वदेत्** । **तत्र**='चोरः स्थाणुः' इत्यत्र **एकः**='चोरः' इति पदम् **अध्यासयोग्याकृति**=अध्यासस्य=चोरत्वप्रतीतेः

**निर्दिष्टे वस्तुमात्रे भवतु कथमिहारोपितं बाधनीयं**
**भ्रान्तिर्भेदाप्रतीतौ विरमतु च कथं हेतुपौष्कल्ययुक्ता ॥ १०० ॥**

**[वेदानां स्वतःप्रामाण्यम्]**

324. **मानं बाधाद्यभावान्निगम इतरवत्; वक्तृदोषस्तु नास्मिन्**
**बाधोऽप्यस्यानुमाद्यैरपि न हि सुवचस्तद्बलेनैव बाध्यैः ।**

योग्याकृतिविशिष्टत्वम्, अर्थात् चोरत्वप्रतीतिविषयीभूतं वस्तु वदति । **परः शब्दस्तु**=इतरः स्थाणुशब्दस्तु **भेदयुक्तं वदति**—चोरभेदरूपस्थाणुत्वविशिष्टं वस्तु वदति । चोरभेदरूपस्थाणुत्वाग्रहणेन हि भ्रमः । तद्ग्रहणाच्च भ्रमनिवृत्तिः । अतश्च पदद्वयमपि सविशेषमेव वस्तु वदति; न तु निर्विशेषं किञ्चिद्वस्तु वदति । चोरपदेन स्थाणौ चोरत्वाभावो न हि बोधयितुं शक्यः, तत्र चोरत्वप्रसक्तेरसंभवात् । किन्तु 'चोरत्वेन प्रतीतः' इत्येवार्थस्तस्य वक्तव्यः । 'त्वया चोरत्वेन गृहीतः स्थाणुः' इत्येव विविक्षितोऽर्थः । ततश्च 'चोरत्वप्रकारकज्ञानविषयः स्थाणुः' इति विशेषणविशेष्यभाव एव सामानाधिकरण्यम्, न बाधायाम् । तथाऽङ्गीकारेऽपि, स्थाणुपदेन **वस्तुमात्रे**=निर्विशेषस्थाणुपदार्थे **निर्दिष्टे**=अभिहिते **इह**=स्थाणौ **आरोपितं चोरत्वम् कथं बाधनीयम्**=बाधयितुं शक्यम् । स्थाणुत्वाग्रहणेन **हेतुपौष्कल्ययुक्ता**=विशेषाग्रहणरूपभ्रमहेतोः तथैवावस्थानप्रयुक्ता **भ्रान्तिः**=चोरत्वभ्रमः **भेदाप्रतीतौ**=चोरभेदरूपस्थाणुत्वस्याग्रहे **कथं विरमतु**=निवर्तताम् । स्थाणुत्वाग्रहणमेव किल भ्रमहेतुः । यदि तेन वाक्येन निर्विशेषणकं स्थाणुमात्रं बोध्येत, तर्हि भ्रमनिवृत्तिः कथम्? अतोऽत्रापि न निर्विशेषवस्तुप्रतीतिसंभवः ॥

यद्यपि शाङ्करभाष्ये (3-3-9) अध्यासापवादैकत्वविशेषणत्वरूपं चतुर्विधं सामानाधिकरण्यमुक्तम् । परन्तु अनन्तरकालिकैः तात्पर्यतः अपवाद-एकत्व(अखण्डर्थत्व)रूपद्वयोरेव पर्यवसानकरणादत्रापि तावदेव परीक्षितम् । सिद्धान्ते तु सर्वत्र एकरूपमेव **विशेषणविशेष्यभावे** सामानाधिकरण्यमिति ज्ञेयम् ॥ १०० ॥

अत्र **खण्डनकारः** प्रत्यवतिष्ठते—मास्तु नाम श्रुतयो निर्विशेषवस्तुबोधनसामर्थ्याभावात्तत्र प्रमाणम् ब्रह्मव्यतिरिक्तत्वेन हि ताः व्यावहारिकप्रामाण्यवत्यः । न तावता निर्विशेषवस्तुनोऽसिद्धिः, स्वयंप्रमाणरूपस्य ब्रह्मणः स्वसिद्धौ परमुखनिरीक्षणदैन्यं कुतः? इति । अस्योत्तरतया वेदप्रामाण्यं प्रतिपिपादयिषुः 'प्रत्यक्षादीव मानं विमतिपदवचः' (69) इत्यादिना शब्दानां प्रामाण्ये सामान्यतस्साधितेऽपि, विशिष्य वेदप्रामाण्यं प्रदर्शयति—**मानमित्यादि** । **निगमः**=वेदः **बाधाद्यभावात्**=अप्रामाण्यहेतुभूतानां कारणदोषबाधकप्रत्ययादीनामभावात् **इतरवत्**=संप्रतिपन्नाप्तवाक्यवदिति । तथा च 'वेदः प्रमाणम्, कारणदोषबाधकप्रत्ययाभावे सति वाक्यत्वात्, यथा संप्रतिपन्नमाप्तवाक्यम्' इति प्रयोगः । हेत्वसिद्धिं परिहरन् प्रथमं कारणदोषरूपविशेषणासिद्धिं परिहरति—**अस्मिन्**=वेदे **वक्तृदोषस्तु**=शब्दाप्रामाण्यहेतुभूतो वक्तृदोषस्तु **न**=न शक्यशङ्कः । कुतः? इत्यत्र 'तु'कारो वक्तृदोषप्रसक्तेरभावं इतरवाक्यवैलक्षण्यमपौरुषेयत्वं सूचयति । इदमपि यदि स नाभ्युपगच्छेत्, तदैवोक्तमन्यत्र (श.दू.) 'अलं तर्हि वैदिकत्वकञ्चुकवहनवृथाप्रयासेन' इति । वेदानामपौरुषेयत्वमेव संदिहानं प्रति तु वक्तव्यमग्रे (111) विस्तरेण वक्ष्यति ॥

संदिग्धा नात्र बुद्धिः; न च न समुदिता; तेन विज्ञानसिद्धौ
उत्सर्गाम्नानमेतत्, मतिकलुषजयः स्याच्च मीमांसयैव ।। १०१ ।।

[वेदानां प्रामाण्यं न परतः]

325. मानं वेदोऽपि वक्तुर्गुणत इति परं न्यायवित् साधयिष्यन्
सामान्यात् बुद्धिहेतोः प्रमितिमधिकतः साधयत्यन्यनीत्या ।

अथ विशेष्यासिद्धिं परिहरिष्यन्, वेदाप्रामाण्यापादकं बाधकज्ञानं 1) किं प्रत्यक्षम्, 2) उतानुमानम्, 3) उतागमः, 4) उत वेदजन्यज्ञानस्य संदेहरूपत्वात्, 5) उतोन्मत्तवाक्यवत् तेन ज्ञानस्यैवाजननात्, 6) उत मत्तवाक्यवत् परस्परविरुद्धार्थाभिधायित्वादिति विकल्प्य, क्रमेणोत्तराण्याह । तत्र प्रत्यक्षेण बाधस्तु अदर्शनेनैव निरस्तः । अत एवानुमानमपि तद्बाधकं न किञ्चिदुत्तिष्ठेत्, व्याप्तिग्रहणादीनां प्रत्यक्षमूलकत्वात् । नापि शब्दः । स किं वैदिकः, उत स्मार्तः? वैदिकश्चेत्, तर्हि सिद्धं तत्र वेदप्रामाण्यम् । स्मृत्या चेद्बाधस्तत्राह—**बाध** इत्यादि । **तद्बलेनैव**=वेदबलेनैव **बाध्यैः अनुमाद्यैरपि**=स्मृत्यादिभिरपि **अस्य**=वेदस्य बाधोऽपि **न हि सुवचः**=वक्तुं न शक्यः, श्रुतिस्मृत्योर्विरोधे हि श्रुतिविरोधात् स्मृतिरेव बाध्येत । चतुर्थं प्रतिवक्ति—**अत्र**=वेदे **बुद्धिः**=तज्जन्यं ज्ञानम् **संदिग्धा**=संदेहरूपा **न** । पञ्चमं प्रत्याह—**तेन**=वेदवाक्येन **विज्ञानसिद्धौ**=विशिष्टस्यैव ज्ञानस्य सिद्धौ—**न समुदिता न च**=ज्ञानमेव न भवतीति नैव । ज्ञानविज्ञानमयो हि वेदः । षष्ठं प्रत्याह—**मतिकलुषजयः**=वेदाप्रामाण्यहेतुभूतविरुद्धार्थकत्वादिप्रयुक्तबुद्धिदोषपरिहारस्तु **मीमांसयैव**=तदर्थमेवावतीर्णया पूर्वोत्तरमीमांसयैव **स्याच्च**=स्यादेव । बाधकाभाव उदितः। साधको हेतुः कः? इत्यत्र—**एतत्**=वेदप्रामाण्यम् **उत्सर्गाम्नानम्**=उत्सर्गन्यायसिद्धम्, ज्ञानानां प्रामाण्यस्य स्वतस्त्वात् । तदेतत् स्पष्टीक्रियते समनन्तरश्लोकेषु । तथा च यदि त्वमात्मानं वैदिकं मन्यसे, तर्हि ब्रह्मण्यपि वेद एव प्रमाणमित्यभ्युपगच्छ । अथवा हैतुकत्वप्रथां वा वह । बुद्धिशुद्ध्यै शास्त्रयोनित्वाधिकरणं वाऽधीयताम् । वेदास्तु मेरुवत्, ब्रह्मवदेव सदा सुप्रतिष्ठिता एव आचन्द्रार्कं विराजेरन् ।। १०१ ।।

उत्सर्गाम्नानमेतदिति कथम्? वेदस्यापि परत एव प्रामाण्यादिति वदन्तं प्रत्याह—**मानमित्यादि** । **न्यायवित्**=नैयायिकः **परम्**=परमात्मानम् **साधयिष्यन्**=साधयितुमिच्छन् **वेदोऽपि वक्तुः**=तदुपदेष्टुः **गुणतः**=सर्वज्ञत्वपरमाप्तत्वादिगुणत एव **मानम्**=प्रमाणम्, न स्वतः इति, **सामान्यात् बुद्धिहेतोः**=ज्ञानसामान्यकारणापेक्षया **अधिकतः**=अधिकेन आप्तोक्तत्वहेतुना गुणेन जन्याम् **प्रमितिम्**=प्रमाम् **अन्यनीत्या**=अप्रमान्यायेन **साधयति** ।।

**नैयायिकाः** खलु ज्ञानसामान्यकारणापेक्षया अतिरिक्तो दोषः अप्रमायाः यथा कारणम्, तथा प्रमायाः गुणः कारणम् । अतश्च वेदप्रामाण्यं तदुपदेष्टुः पुरुषस्य गुणात् भवति इत्याशेरते । तथा चात्रानुमानम् 'प्रमा ज्ञानहेत्वतिरिक्तहेतुजन्या, कार्यत्वे सति ज्ञानविशेषरूपत्वात्, अप्रमावत्' इति । ईश्वरीयप्रमाव्यावृत्त्यर्थं कार्यत्वे सतीति विशेषणम् । अप्रमाया ज्ञानविशेषरूपत्वेन तत्र ज्ञानहेत्वतिरिक्तदोषरूपविशेषकारणजन्यत्वं हि सर्वसंमतम् । तद्वदेव प्रमाया अपि गुणरूपविशेषहेतुजन्यत्वमावश्यकमिति भावः । एवञ्च वेदोपदेष्टृतयेश्वरसिद्धिः।।

**कार्यत्वं भेदकं स त्विह वदतु कथं धीविशेषत्वहेतौ**
**सिद्धेऽसिद्धेऽपि नित्यप्रमितिमति विभौ निष्फलत्वादमुष्य ॥ १०२ ॥**

तस्योत्तरमाह—**कार्यत्वमित्यादि । स तु**=नैयायिकः **इह**=उक्तानुमाने **धीविशेषत्वहेतौ**=उक्तानुमाने ज्ञानविशेषत्वरूपहेतौ **कार्यत्वम्**=कार्यत्वरूपम् **भेदकम्**=विशेषणम् **कथम्**=कीदृशफलाय **वदतु**= वदेत् । कुतः? **अमुष्य**=कार्यत्वरूपविशेषणस्य **नित्यप्रमितिमति**=नित्यप्रमात्मकज्ञानवति **विभौ**=परमात्मनि **सिद्धे** अथवा **असिद्धेऽपि वा निष्फलत्वात्** । अतः व्यर्थविशेषणघटितत्वात् व्याप्यत्वासिद्धिः ॥

अत्र पक्षभूतप्रमापदेन ईश्वरप्रमाया अपि क्रोडीकारे, तस्या नित्यत्वेन जन्यत्वाभावात् बाधः । तस्या अपक्षीकारे व्यर्थविशेषणत्वमिति उक्तानुमानेन नेष्टसिद्धिः । वस्तुतस्त्विदमुक्तिदूषणम् ॥

विषयेष्वपि सर्वेषु विवदन्ते परीक्षकाः । तत्कालसदृशं हन्त ह्यवर्धत कलिस्ततः ॥
स्थूलेष्वपि प्रमेयेषु विवदन्ते यदा वृथा । किमु सूक्ष्मप्रमेयेषु विज्ञानाभावकारणात् ॥
जानन्त एव ह्याचार्याः सर्वं देवकृपाबलात् । तत्कालसदृशं किञ्चिद् ब्रूयुस्ते धर्मसंकटात् ॥
विषयग्रहणं त्वन्यत् ज्ञानस्य ग्रहणं तथा । प्रमात्वग्रहणं त्वन्यदित्याहुस्ते परीक्षकाः ॥
त्रयं युगपदित्येके द्वयं युगपदित्यथ । प्रत्येकमेव त्रितयं इत्यन्ये च बुधा विदुः ॥

प्रकृते—प्रमात्वमप्रमात्वं चोभयं परत इति **नैय्यायिकाः** । उभयं स्वत इति **सांख्याः** । अप्रमात्वं स्वतः, प्रमात्वं परत इति **सौगताः** । प्रमात्वं स्वतः, अप्रमात्वं तु परत इति **वेदान्तिनः** ॥

'सर्वं न्याय्यं युक्तिमत्त्वात् विदुषां किमशोभनम्' । इत्याह भगवान् स्पष्टं कथमेतद्विचिन्त्यताम् ॥
सप्तभङ्गीनयः स्याद्धि ह्येवं यदि च कथ्यते । व्यवस्थितं न किञ्चित्स्यात् इत्याद्याशंक्यते पुनः ॥
अत्र तत्त्वं यथावद्धि वक्ष्यामस्समयान्तरे । प्रामाण्यविषये त्वत्र वक्ष्ये वेदान्तिसंमतम् ॥
तत्राप्यस्ति विकल्पोऽसावुत्पत्तिज्ञप्तिभेदतः । विकल्पयोर्द्वयोरस्ति स्वतस्त्वपरतस्त्वयोः ॥

प्रामाण्यस्य स्वतस्त्वपरतस्त्वविचारे प्रथमम् प्रामाण्योत्पत्तौ स्वतस्त्वपरतस्त्वविचारः, ततः प्रामाण्यज्ञप्तौ=प्रामाण्यग्रहणे स्वतस्त्वपरतस्त्वविचार इति कक्ष्याद्वयं वर्तते इत्यवधेयम् ॥

तत्रोत्पत्तौ स्वतस्त्वं नाम ज्ञानसामान्यसामग्रीजन्यत्वम् । ज्ञप्तौ स्वतस्त्वं नाम ज्ञानग्राहकसामग्री-ग्राह्यत्वम् । उत्पत्तौ परतस्त्वं नाम ज्ञानसामान्यसामग्र्यतिरिक्तविशेषसामग्रीजन्यत्वम् । ज्ञप्तौ परतस्त्वं नाम ज्ञानग्राहकसामग्र्यतिरिक्तसामग्रीग्राह्यत्वम् । नैयायिकानामयमाशयः—कार्यं हि सामान्यविशेषरूपेण भिद्यते । यथा पटादिकार्यं पटत्वादिना सामान्यरूपेण, नीलपटत्वरक्तपटत्वादिना विशेषरूपेण च भिद्यते । अत एव पटसामान्यसामग्री तुरीवेमतन्तुवायादिरूपा । एवं नीलपटादिरूपविशेषसामग्री च नीलतन्त्वादिरूपा । एवमेव ज्ञानमपि सामान्यविशेषरूपेण भिद्यते । ज्ञानसामान्यमन्यत् । तद्विशेषे प्रमाप्रमे भिन्ने । न हि सामान्यं विशेषो भवेत्, विशेषो वा सामान्यं भवेत् । अत एव ज्ञानसामान्यसामग्री अन्या, ज्ञानविशेषसामग्री च अन्या । आत्ममनस्संयोगादिस्सामान्यसामग्री । तया सह गुणदोषादिः विशेषसामग्री । ततश्च गुणजन्या प्रमा, दोषजन्या

अप्रमा। इदमेवोत्पत्तौ परतस्त्वम्। एवं प्रमात्वाप्रमात्वे ज्ञानग्रहणसामान्यसामग्र्यतिरिक्तसामग्रीग्राह्ये। ज्ञानग्रहणसामान्यसामग्री अनुव्यवसायरूपा। तया ज्ञानमात्रं गृह्येत, न तु तद्विशेषे प्रमात्वाप्रमात्वे, अनुव्यवसायस्य सामान्यसामग्रीत्वात्। अतः प्रमात्वं अनुव्यवसायातिरिक्तया सफलप्रवृत्तिजनकत्वहेतुकानुमित्या गृह्यते—इदं ज्ञानम् प्रमा, सफलप्रवृत्तिजनकत्वात् इति। एवमेवाप्रमात्वमपि अनुव्यवसायातिरिक्तया विफलप्रवृत्तिजनकत्वहेतुकानुमित्या गृह्यते—इदं ज्ञानम् अप्रमा, विफलप्रवृत्तिजनकत्वात्—इति। इदमेव ज्ञप्तौ परतस्त्वम्। एवञ्च प्रमात्वमप्रमात्वं च ज्ञानसामान्यसामग्र्यतिरिक्तगुणदोषजन्यत्वादुत्पत्तावपि परतस्त्ववादिनः, ज्ञानग्राहकसामग्र्यतिरिक्तानुमितिग्राह्यत्वात् ज्ञप्तावपि परतस्त्ववादिनो **नैय्यायिकाः**॥

**वेदान्तिनः प्राभाकराश्च**—प्रामाण्यम् उत्पत्तौ ज्ञप्तौ च ज्ञानसामान्यकारणातिरिक्तं विशेषकारणं नापेक्षते, जायमानस्य सर्वस्यापि ज्ञानस्य स्वत एव प्रमारूपत्वात्। सत्यरजतज्ञानं यादृशं अनुभवसिद्धम्, शुक्तिरजतज्ञानमपि तादृशमेवादावनुभवसिद्धम्। समीपोपसर्पणानन्तरमेव 'इदं ज्ञानमप्रमा' इति जानन्ति। अतः प्रामाण्यं ज्ञानसामान्यसामग्र्यैव स्वयमुत्पद्यते, अप्रामाण्यं तु दोषवशात्। ननु दोषो यत्र मिलितो भवति तत्राप्रमा इति यदि, तर्हि दोषाभाव एव प्रमां प्रति कारणमिति, दोषाभाव एव प्रमासामग्री जातेति कथं प्रमात्वं स्वत इति चेत्, अभावस्यातिरिक्तपदार्थत्वाभावेन, अतिरिक्तसामग्र्या असिद्धेः। अतः प्रामाण्यं स्वत एवोत्पद्यते। एवं प्रामाण्यं स्वत एव ज्ञायते च। यदि सफलप्रवृत्तिजनकत्वेन प्रामाण्यमनुमीयते, तर्हि तादृशानुमाने प्रामाण्यं कथं ज्ञायेत। यदि स्वतः, तर्हि सिद्धं स्वतःप्रामाण्यम्। यद्यन्येन ज्ञानेन, तर्ह्यनवस्था। अतः प्रामाण्यं स्वतः, अप्रामाण्यं तु परतः=विफलप्रवृत्तिजनकत्वानुमानेन। तथा च ज्ञानजनकसामग्रीजन्यत्वमुत्पत्तौ स्वतस्त्वम्। ज्ञानग्राहकसामग्रीग्राह्यत्वं ज्ञप्तौ स्वतस्त्वम्। ज्ञानस्य स्वप्रकाशत्वेन स्वत एव ग्रहणात्, ज्ञानग्राहकसामग्रीग्राह्यत्वमेव स्वतस्त्वम्। ननु नैयायिकमतेऽपि—'इदं ज्ञानं प्रमा, सफलप्रवृत्तिजनकत्वात्' इत्यनुमितिसामग्र्या पक्षीभूतज्ञाने प्रामाण्यग्रहणात् ज्ञानग्राहकसामग्रीग्राह्यत्वं प्रामाण्ये सिद्धमिति सिद्धसाधनमिति चेत्, ज्ञानग्राहकसामग्र्यां यावत्त्वस्य विशेषणात्। ज्ञानग्राहिकाः यावत्यः सामग्र्यः, ताभिस्सर्वाभिरपि ग्राह्यत्वलाभात् 'इदं रजतम्' इति प्रमासामग्र्या अपि तदन्तर्गतत्वात्, तया ज्ञानमात्रग्रहणेऽपि प्रामाण्यस्याग्रहणेन दोषाभावात्॥

ननु तर्हि—'इदं ज्ञानम् अप्रमा, विफलप्रवृत्तिजनकत्वात्' इत्यनुमानेनाप्रामाण्यस्यैव ग्रहणात्, ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वं प्रमात्वे नास्तीति व्यभिचार इति चेत्, अप्रामाण्याग्राहकत्वस्य सामग्रीविशेषणत्वेन, तत्सामग्र्या व्यावृत्तेः। अथैवमपि उक्तानुमितिसामग्र्या पक्षीभूतभ्रमेऽप्रामाण्यग्रहणेऽपि अनुमित्यात्मकज्ञाने प्रामाण्यस्य स्वत एव ग्रहणात्पुनरपि बाध इति चेत्, न। 'अप्रामाण्याग्राहक' इत्यनेन तदप्रामाण्याग्राहकत्वविवक्षणात्। 'तत्'पदस्य बुद्धिस्थपरामर्शकत्वात्, अप्रामाण्याग्राहकतादृशानुमितिः तत्पदेन ग्राह्या। तयाऽनुमितिसामग्र्या पक्षीभूतज्ञानेऽप्रामाण्यग्रहणेऽपि अनुमित्यात्मके विषयीभूते ज्ञानेऽप्रामाण्याग्रहणेन बाधपरिहारः। तथा च 'तदप्रामाण्याग्राहकज्ञानग्राहकयावत्सामग्रीग्राह्यत्वं स्वतस्त्वम्, तदभावश्च परतस्त्वमिति निष्कर्षः॥

ननु यदि प्रामाण्यं सर्वत्र स्वत एव गृह्यते, तर्हि कुत्रचित् 'ममोत्पन्नं ज्ञानं प्रमा, न वा?' इति संशयः कथं स्यात्, प्रामाण्यस्य गृहीतत्वादिति चेत्, प्राथमिकज्ञानस्यानवधारणात्मकत्वेन संशयसहत्वात्। अनन्तरं सफलप्रवृत्तिजनकत्वेन हेतुना तत्प्रामाण्येऽवधृते संशयपरिहारात्, पूर्वं गृहीतं प्रामाण्यमेव दृढीक्रियते। ननु तर्हि अनवधारणात्मके प्राथमिकज्ञाने प्रामाण्यं न गृहीतमेवेत्यायातम्। ततश्च ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वं गतमेवेति कथं स्वतस्त्वसंरंभ इति चेत्, अनवधारणत्वेन रूपेणैव प्रथमं ग्रहणेन संशयसहत्त्वात्। अथैवमपि विषयांश एव तत्र संशयजननात्, विषय्यंशे संशयस्याभावात्, विषयांशेऽनवधारणरूपत्वम्, विषय्यंशेऽवधारणरूपत्व-मेवेति प्राप्तो विषयविषयिभेदः, तयोर्ग्रहणेऽपि भेदश्चेति विषयग्रहणमन्यत्, विषयिग्रहणं चान्यद्यदि, तर्हि ज्ञानग्रहण-मन्यत्, प्रामाण्यग्रहणञ्चान्यदेवास्तु, का हानिः। तथा च ज्ञानग्रहणेनैव प्रामाण्यमपि गृह्यत इति शपथः कथमिति चेत्, अहो दुष्टतार्किक! हैतुकोऽसि त्वम्। कथमेवं तर्कयन्, तावतैव ब्रह्मदर्शनं भविष्यतीति मन्यसे किम्? भो महावेदान्तिन्! मास्तु कोपः। नाहं भवच्छापभीरुः। पृच्छामि भवन्तमेव किमनया चर्चया जातं तव ब्रह्मदर्शनमिति। अरे! पुनरपि तर्कयसि। 'तर्काप्रतिष्ठानात्' इति किं जानासि? जानामि भो अहम्॥

वेदान्तिनो भवन्तो हि न जानन्ति कुतस्त्विदम्। मायाया वैभवं ह्येते न जानन्ति किल ह्यहो!॥
सगुणं परमात्मानं मिथ्येति किल मन्वते। अत एते तत्कृपातो वञ्चिता हन्त! मन्महे॥
अत एवोच्यतेऽस्माभिरसकृच्च मुहुर्मुहुः। वेदान्तशास्त्रं सर्वं हि तर्कशास्त्रीकृतं परैः॥
तस्यैव च फलं लोके दृश्यते सर्वशून्यता। तर्कशास्त्रं हि विद्वद्भिः लोकायतमितीरितम्॥
पर्याप्तं बाह्यजगति सर्वस्मिन्नपि वस्तुषु। नात्र वेदान्तिभिः कार्यं किञ्चिदस्ति समीक्ष्यताम्॥
तपसा ब्रह्म जानीहीत्युक्तेऽप्येवं कुतो ह्यमी। तर्कमेवावलम्ब्यैवं वृथा निन्युर्हि वत्सरान्॥
विचारशास्त्रं वेदान्त इत्येवं कथमुच्यते?। इति चेत् हन्त बालोऽसि त्वरितं श्रय सद्गुरुम्॥
स सीमां दर्शयेन्नूनं विचारस्य समञ्जसाम्। समापयामो वयमप्यत्रैवेमां विचारणाम्॥

ननु वेदानां प्रामाण्यं असाधारणमिति तवापि संमतम्। एवं सति कथं खण्डयसि स्वतस्त्वम्? अये मुग्धवैदिक! न वयं वेदानां स्वतःप्रामाण्यवादिनः। किं न श्रुतम् 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्य-माप्तप्रामाण्यात्' (न्या.सू.2-1-69) इति। तद्वा कथमिति चेत्, एतद्वा कथमिति समानम्। सत्यं वेदानां प्रामाण्यमसाधारणमेव। तत्तु तदुपदेष्टृवैशिष्ट्यादेव। तर्हि कुत्र विश्रामः? किं नैतदपि श्रुतम्? 'श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।' (गी.4-39) 'श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः' (गी.17-3) इत्यादि। सा वा श्रद्धा कथं भवेत्? सम्यक् पृष्टमायुष्मता। उत्तरं केन वक्तव्यम्? साधवः सेव्यन्ताम्। के ते साधवः? कुत्र सन्ति ते? अयि भोः!

नाहं त उपदेशाय प्रवृत्तः, नाप्यहं गुरुः। दिग्दर्शनं कथंचित्तु दर्शितं, सेव्यतां हरिः॥
सर्वयोगक्षेमकरः स शेते हृदये तव। आर्तिः प्रामाणिकी स्याच्चेत्, स मार्गं दर्शयिष्यति॥
समाप्तस्तर्ककालोऽयमित्येवमवधार्यताम्। वृथाविचारं सन्त्यज्य कार्येष्ववतर द्रुतम्॥
'उद्धरेदात्मनात्मानं नात्मानमवसादयेत्'। इत्याद्युक्तं भगवता गाढं तच्चिन्त्यतां सदा॥ १०२॥

[ज्ञानानां प्रामाण्यमौत्सर्गिकम्]

326. **संवित्तीनां यथावस्थितनिजविषयोल्लेख औत्सर्गिकः स्यात्**
**वह्न्यादेर्दाहकत्वप्रभृतिवदुपधेरन्यथात्वं भ्रमांशे ।**
**नित्यज्ञानप्रमात्वं वदसि च निरुपाध्येव निर्हेतुकत्वात्**
**दोषाभावात् प्रमा चेत्, श्रुतिरपि जयिनी दोषदूरोज्झिता नः ।। १०३ ।।**

[ज्ञानानां स्वतःप्रामाण्यमवर्जनीयम्]

327. **सर्वं साक्षात्करोति स्वत उपधिगणैरुज्झितः संप्रसादः**
**प्रामाण्यं तत्र नोपाध्युपनतमिति तत्तुल्यताऽन्यत्र युक्ता ।**

---

वेदानामेव प्रामाण्यं स्वतो न, सर्वस्यापि ज्ञानस्य प्रामाण्यं स्वत एवेत्याह—**संवित्तीनामि**त्यादि । **संवित्तीनाम्**=ज्ञानानां सर्वेषामपि **यथावस्थितनिजविषयोल्लेखः**=यथावस्थितस्य स्वविषयस्य प्रदर्शनम् **वह्न्यादेः**=वह्निप्रभृतीनाम् **दाहकत्वप्रभृतिवत्**=दाहकत्वादिशक्तिवत् **औत्सर्गिकः**=सहजसिद्धः **स्यात्** । **भ्रमांशे**=अप्रमाविषयेषु **अन्यथात्वम्**=अप्रमात्वम् **उपधेः**=उपाधिकृतं स्यात् । मणिमन्त्रौषधादिप्रतिबद्धो हि वह्निः न दहति । दाहकत्वं सहजम्, अदाहकत्वमौपाधिकम् । किं बहुना! वेदानां प्रामाण्यमीश्वरोपदिष्टत्वादिति वदन् **नित्यज्ञानप्रमात्वम्**=तदीयं ज्ञानं नित्यमिति तत्प्रमात्वं **निर्हेतुकत्वात्**=हेतुजन्यत्वाभावात् **निरुपाध्येव**=निरुपाधिकं स्वत एवेति **वदसि च** । अतः कुत्रचित् ज्ञानप्रामाण्यं स्वत इत्यङ्गीकृतमेव । ननु ईश्वरज्ञानस्य स्वतः प्रमात्वे नित्यत्वं न प्रयोजकम्, किन्तु **दोषाभावात्**=ईश्वरस्य भ्रमप्रमादाद्यभावात् तद्ज्ञानम् **प्रमा चेत्**, तर्हि—**नः**=परमवैदिकानामस्माकम् **दोषदूरोज्झिता**=दोषगन्धरहिता **श्रुतिरपि जयिनी**= जयशालिनी=नित्यं प्रमारूपैव भवति । वस्तुतस्तु नैयायिकानामाशयः पूर्वमेव (नायक.) प्रदर्शितः ।।

वेदा नित्या हि केषाञ्चित् अन्येषामीश्वरोदिताः । अपौरुषेयाः केषाञ्चित् सर्वेऽप्येते तु वैदिकाः ।।
मतिभेदः कथं न्वेषामिति चेत् पृच्छ सौगतान् । ये वेदं दूषयामासुः बहुधा ब्रह्मराक्षसाः ।।
तदुत्तरप्रदानाय तेऽयतन्त ह्यनेकधा । तद्देशकालानुगुणं महात्मानो महाधियः ।।
लक्ष्यं तु तेषां सर्वेषां वेदप्रामाण्यरक्षणम् । तदेव ग्राह्यमस्माभिः वृथा चर्चा तु वर्ज्यताम् ।।
आविर्बभूवुर्वेदास्तु ब्रह्मर्षीणां तपोबलात् । अन्तर्वाणिस्वरूपेण हृदयेषु स्वयं पुरा ।।
अतस्ते पौरुषेया न, पुंबुद्ध्या रचिता न हि । अतः प्रामाण्यमेषां हि न प्रश्नार्हमितीर्यते ।। १०३ ।।

श्रुतार्थापत्त्यापि ज्ञानानां प्रामाण्यं स्वतस्सिध्यतीत्याह—**सर्वमि**त्यादि । **संप्रसादः**=मुक्तात्मा, 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.8-12-2) इत्यत्र मुक्तात्मनि स शब्दः प्रयुक्तः । **उपधिगणैः**=पुण्यपापादिभिः, तत्कार्यभूतैः रागद्वेषादिभिश्च **उज्झितः**=त्यक्तः **सर्वं स्वतः साक्षात्करोति** । 'सर्वं ह पश्यः पश्यति'(छां.7-26-2) इति पश्यः=ब्रह्मसाक्षात्कारवान् सर्वं स्वतः पश्यति इति श्रुतिः । मुक्तात्मनां सर्वकर्मविनिर्मुक्तत्वात् तदीयं ज्ञानं स्वतःप्रमाणं भवेत् । यतः

आत्मस्वात्मांशयोश्च क्वचिदपि न भवेत् भ्रान्तिरंशान्तरेऽपि
स्यादेषा न स्वरूपे क्वचन; परमसौ द्विप्रकारे प्रकारे ॥ १०४ ॥

[अप्रामाण्यस्य स्वतस्त्वनिराकरणम्]

328. भ्रान्तिज्ञानेऽपि सत्यं किमपि तव मतेऽप्यस्त्यधिष्ठानपूर्वे
सत्यैकालम्बि चैकं समयिभिरखिलैर्दुस्त्यजं स्वार्थसिद्ध्यै ।

---

तत्र=मुक्तात्मनां ज्ञाने **प्रामाण्यम् उपाध्युपनतं न**=सोपाधिकं न, सर्वोपाधीनां निवृत्तत्वात् इति हेतोः **अन्यत्र**=इतरेषां ज्ञानेऽपि **तत्तुल्यता**=मुक्तात्मज्ञानतुल्यता युक्ता, ज्ञानानामेकजातीयत्वात्। तर्हि भ्रमप्रसक्तिः कुत्र? कुतः? इति प्रश्नस्योत्तरं प्रमेयविश्लेषणेन प्रदर्शयति—**आत्मेत्यादि** । **भ्रान्तिः**=भ्रान्तिरूपं ज्ञानम् **आत्मस्वात्मांशयोश्च**=आत्मस्वात्मपदयोः प्रथमं द्वंद्वः, ततः अंशपदेन ततपुरुषः । तथा च **आत्मा**=भ्रान्तिज्ञानस्वरूपम्, स्वात्मा=तस्याश्रयभूत आत्मा, एतदुभयांशयोस्तु **क्वचिदपि न भवेत्** । ज्ञानं भ्रमो वा भवतु, प्रमा वा भवतु । सर्वत्र हि ज्ञानाश्रयस्य आत्मनो भानम्, ज्ञानस्वरूपस्य च भानमवर्जनीयम् । 'अहमस्मि, न वा' इति भ्रमः संशयो वा कस्यापि न भवति । एवं प्रमाभ्रमसाधारणं ज्ञानस्य स्वरूपं यत्, तदंशेऽपि कस्यापि भ्रमः संशयो वा **क्वचिदपि**=कस्यापि न भवेत् । 'ज्ञानमेव नोत्पन्नम्' इति भ्रमो वा, 'ज्ञानमुत्पन्नं न वा' इति संशयो वा न हि कस्यचिद्भवति । एवमेव **अंशान्तरेऽपि**=विषयरूपे अंशान्तरे वा भ्रमः न भवति, निर्विषयस्य ज्ञानत्वासंभवात् । एवम् **एषा**=भ्रान्तिः **स्वरूपे**=भ्रमाधिष्ठानभूतवस्तुस्वरूपे वा **क्वचन**=कुत्रापि **न**=निरधिष्ठानभ्रमासंभवात् । 'सर्वं ज्ञानं धर्मिण्यभ्रान्तम्' इति न्यायात् । तर्हि भ्रमः कुत्रेति चेत्, **परम्**=परं तु **असौ**=भ्रमः **द्विप्रकारे**=द्विविधे **प्रकारे**=धर्मे भवति । धर्मो हि द्विविधः, स्वरूपनिरूपकः, निरूपितस्वरूपविशेषणं चेति । आद्यः रज्जुत्वशुक्तित्वादिः । अत्र भ्रमः सर्पत्वरजतत्वाद्यात्मना । द्वितीयः शंखत्वेन निरूपिते विशेष्ये पीतत्वादिधर्मः । अत्र सर्वत्र भ्रमः दोषौपाधिकः । दोषाभावे तु प्रमात्वमेवोत्सर्गः । अतः स्वतः प्रामाण्यमेवोत्सर्गसिद्धम् । यद्यपि कुत्रचिद्धर्म्यंशेऽपि भ्रमः प्रतिपाद्यते, शुक्तौ रजततादात्म्यभ्रमः, रज्जौ सर्पभ्रम इति । परन्तु तत्रापि सूक्ष्मविमर्शे धर्मितावच्छेदकांश एव पर्यवसानम् । एवञ्च भ्रमत्वस्यौपाधिकत्वात् प्रमात्वस्यैव सहजत्वात् प्रामाण्यं स्वत इत्युत्सर्गः ॥

तथा चेश्वरस्य मुक्तानां च ज्ञानं दृष्टान्तीकृत्य संसारिणां ज्ञानस्यापि प्रमात्वमेव सहजमित्युत्सर्गः । न तावन्मात्रम्, ज्ञानसामग्र्या इन्द्रियादिरूपाया अपि प्रमाजनकत्वमेव स्वभावः । अप्रमाजनकत्वं तु दोषादिति निष्कर्षः । न्यायशास्त्रं हि लोकायतमित्यसकृत्प्रतिपादितम् । एतद्दृष्ट्या नैयायिकैः परतस्त्वसमर्थनमनिवार्यमायातम् । सांसारिकदशाया एव न्यायशास्त्रविषयत्वादित्यभ्यूह्यम् ॥ १०४ ॥

बौद्धोक्तम् अप्रामाण्यस्वतस्त्वं निराकरोति—**भ्रान्तीत्यादि** । **तव**=बौद्धस्य **मतेऽपि भ्रान्तिज्ञानेऽपि**=भ्रमात्मकज्ञानेऽपि **अधिष्ठानपूर्वम्**=**अधिष्ठानादिरूपम् किमपि सत्यम्**=सत्यभूतम् **अस्ति**=अस्त्येव । बौद्धेषु माध्यमिक एक एव निरधिष्ठानभ्रमवादी । विज्ञानवादी स्वलक्षणज्ञानं प्रमाणरूपम्,

**बुद्धेस्तत्पक्षपातः स्वयमपि कथितः सौगतैरेव कैश्चित्**
**स्वात्मांशे सत्यता च स्वत इति तदसौ वैदिकोक्ते वृथेर्ष्या ॥ १०५ ॥**

**[अप्रामाण्यस्वतस्त्वासम्भवः]**

**329. अप्रामाण्यं स्वभावो गुणत इतरदित्यत्र न ह्यस्ति हेतुः**
**नाभावो हेत्वपेक्षस्त्विति च न, नियमात्; अन्यथाऽतिप्रसङ्गात् ।**

---

विकल्पस्त्वप्रमाणमित्यङ्गीकरोति । **अखिलैः समयिभिः**=सर्वैरपि सैद्धान्तिकैः **स्वार्थसिद्ध्यै**=स्वपक्ष-स्थापनाय **सत्यैकावलम्बि**=सत्यमात्रविषयकम् **एकम्** ज्ञानम् **दुस्त्यजम्** । स्वमतपरमतविभागज्ञानवता 'मम मतमेव प्रामाणिकम्' इति वक्तव्यं चेत्, एतद्वाक्यजन्यं ज्ञानं सर्वांशेऽपि प्रमाणमित्यङ्गीकार्यमेव, अन्यथा स्वमतस्थापनस्यैवासिद्धिप्रसङ्गात् । अयमंशः पूर्वमेव (श्लो.9) प्रदर्शितः । **सौगतैरेव कैश्चित्**=बौद्धैरेव विज्ञानवादिभिः **स्वयमपि**=स्वयं कण्ठत एव **बुद्धेः**=ज्ञानस्य **तत्पक्षपातः**=प्रामाण्यापरित्यागः कथितः । अन्ततः भ्रमात्मकज्ञाने विषयांशस्य मिथ्यात्वेऽपि **स्वात्मांशे च**=विषयिरूपज्ञानस्वरूपे च **सत्यता**= सत्यरूपता **स्वत** एव **इति** अवश्यमङ्गीकार्यमेव । अत एव किल स्वलक्षणज्ञानमेकमेव सत्यमित्यङ्गीकृतम्। **तत्**=तस्मात् **असौ**=अप्रामाण्यमेव स्वत इति वार्ता **वैदिकोक्ते**=वैदिकैरस्माभिरुक्ते 'सर्वं ज्ञानं स्वतो यथार्थम्' इति वादे **ईर्ष्या**=असहना **वृथा**=व्यर्था । 'सुभगाभिक्षुकन्यायानुसारात्' इति नर्मोक्तिः ॥

**इदमत्र सारभूतम्**—विज्ञानवादिनो बौद्धा बाह्यार्थमपलिलपयिषवः प्राथमिकं वस्तुस्वरूपमात्र-विषयकं स्वलक्षणज्ञानमेव प्रमा । परन्तु तत् क्षणिकम् । तद्बलेन द्वितीयक्षणे जायमानं विकल्पपदवाच्यं त्वप्रमा, कल्पिताकारविषयत्वात् । प्राथमिकं स्वलक्षणज्ञानं तु निर्विकल्परूपम्, अत एव प्रमारूपम् । परन्त्विदं न लोकव्यवहारारूढम्, क्षणिकत्वात् । यत्तु लोकव्यवहारारूढं तत्तु अप्रमेति ज्ञानव्यतिरिक्तविषय-निराकरणेच्छया वदन्ति । विकल्पे विषयविषयिभावस्य कल्पितत्वेऽपि निर्विषयत्वं तस्य नास्ति, विज्ञानातिरिक्तत्वं विषयस्य नास्तीत्येव तैरुच्यते । 'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥' इति विज्ञानमेकमेव त्रिपुट्यात्मना भासत इत्येवोच्यते तैः । कुत एवं त्रिपुट्यङ्गीक्रियत इति चेत्, ज्ञानस्य सविषयकत्वं स्वभाव इत्युच्यते—'अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥' इति । विपर्ययैः=अप्रमारूपैः विकल्पैः वस्तुस्वभावस्य बाधितुमशक्यत्वात्, स्वलक्षणज्ञानस्य बाधो यत्नकरणेऽपि न कर्तुं शक्यः । बुद्धेः **तत्पक्षपाततः**=स्वस्वरूपांशे प्रामाण्य-निराकरणासंभवादित्यर्थः । एवञ्च बुद्धेः सविषयकत्वस्य दुस्त्यजत्वात् ज्ञानमेव विषयरूपतां भजते इति वदता, ज्ञानस्य सत्यत्वात् सत्यविषयकत्वमागतमिति कथं स्वतोऽप्रमात्वम्? ननु यद्यपि ज्ञानं सत्यम्, अथापि विषयात्मता न सत्येति चेत्, तर्हि विषय्यात्मना सत्या, स्वप्रकाशा चेति सत्यांशाङ्गीकारात् सर्वांशेऽप्रमात्वं न भवत्येव । एवञ्च भ्रमात्मकेऽपि विकल्पे विषय्यंशे सत्यत्वं सिद्धमेव ॥ १०५ ॥

अप्रामाण्यस्य स्वतस्त्वासंभवमुपपादयति—**अप्रामाण्यमित्यादि** । **अप्रामाण्यम्**=ज्ञानस्याप्रामाण्यमेव **स्वभावः**, व्यवहारविषयाणां विकल्पानां कल्पिताकारविषयकत्वात् । **इतरत्**=प्रामाण्यं तु **गुणतः**=

**किञ्चाभावोऽपि भावान्तरमतिमथने स्वेष्टभङ्गश्च भावी**
**मुक्तौ शुद्धां हि बुद्धिं वदसि न यदि सा विभ्रमःस्यान्न वा स्यात्॥१०६॥**

**[प्रमात्वाप्रमात्वयोस्स्वतस्त्वनिरासः]**

330. **मानत्वामानते द्वे स्वत इति वदतः सांख्यसिद्धान्तिनस्ते**
**व्यक्तिद्वैतं तयोश्चेत्, प्रतिनियततयोपाधिभेदोऽभ्युपेत्यः ।**

गुणरूपोपाधिकृतत्वात् इत्यत्र हेतुः कश्चित् **न ह्यस्ति**। विकल्पानां कल्पितविषयकत्वरूपदोषमूलकत्वाद-प्रमाण्यमेव परतः, स्वलक्षणज्ञानं तु स्वतश्शुद्धत्वात् स्वतः प्रमाणमिति विपरीतमेव न्याय्यम्। तत्रापि ज्ञानस्वप्रकाशत्ववादिनस्तव स्वलक्षणज्ञानस्य स्वतस्सिद्धस्य प्रामाण्यमपि स्वत एव सिद्धं वक्तव्यम्, अन्यथा तस्याप्रामाणिकत्वापत्तेः, पूर्वश्लोकान्तिमभागे 'बुद्धेस्तत्पक्षपातः' इत्यनेन प्रदर्शितत्त्वात्। अतोऽप्रामाण्यस्य स्वतस्त्वं वैदिकविद्वेषादेव स्यात्। ननु प्रामाण्यं भावरूपत्वात् हेतुसापेक्षम्, अप्रामाण्यं तु प्रामाण्याभावः। अभावस्तु तुच्छो हेतुनिरपेक्ष इति स्वतस्त्वं तस्येति शङ्कते—**अभावस्तु**=अप्रामाण्यं तु **हेत्वपेक्षः न**= तुच्छत्वात् हेतुजन्यो **न**=इति न युक्तम्। कुतः? **नियमात्**=तस्यापि कादाचित्कत्वात्। **अन्यथा**=ध्वंसादेः कादाचित्कत्वानङ्गीकारे **अतिप्रसङ्गात्**=शून्यवादावतारप्रसङ्गात्। अयमंशः पूर्वमेव(जड.28) निरूपितः। अतोऽप्रामाण्यस्याप्यौपाधिकत्वमुच्यताम्, न स्वतस्त्वम्॥

वस्तुस्थितिमाह—**किञ्चेत्यादि**। **किञ्च**=अपि च **अतिमथने**=गाढविचारणे कृते **अभावोऽपि भावान्तरमेव**। स्थाप्यते चेदमुपरिष्टात् (अद्रव्य.129-132)। एवमनङ्गीकारे **स्वेष्टभङ्गश्च**=स्वपक्षा-सिद्धिरपि **भावी**=अनिवार्यः स्यात्। कुतः? **मुक्तौ हि**=मुक्तिकाले हि **बुद्धिम्**=विज्ञानसन्ततिम् **शुद्धाम्**= वासनादिनिवृत्त्या उपप्लवरहिताम् **वदसि**। **न यदि**=विशुद्धापि चित्सन्ततिः स्वतःप्रमा यदि न स्यात्, तदा **सा**=चित्सन्ततिः **विभ्रमः स्यात्**=अप्रमा स्यात्, तृतीयराशेरभावात्। **वा**=अथवा **न स्यात्**=न किञ्चिदपि स्यात्, तथा च शून्यवादावतारः॥

प्रथमाक्षपातजन्यं सर्वव्यावृत्तवस्तुमात्रविषयं निर्विकल्पात्मकमेव स्वलक्षणं ज्ञानं शुद्धम्, वस्तुस्वरूप-मात्रविषयकत्वात्। परन्तु तत् शब्दानभिलप्यं व्यवहाराय नोपकल्पते। तत्पृष्ठभावि च ज्ञानं धर्मधर्मिभावादि-विषयकं विकल्पपदवाच्यमेव सर्वव्यवहारनिर्वाहकम्। परन्तु कल्पितविषयकत्वात् स्वत एवाप्रमाणम्। स्वलक्षणज्ञानस्य प्रमात्वं तु युक्तिनिरूप्यम्, अत एव तत् परतः। अतश्च प्रमात्वं परतः, अप्रमात्वं स्वत इति ते वदन्ति। एवञ्चेत् स्वपक्षसाधनादीनां विकल्पसाध्यत्वात् विकल्पस्य स्वतः अप्रमात्वे, तेन साध्यः स्वपक्षोऽप्यप्रामाणिकः स्यात्। अतोऽप्रामाण्यस्वतस्त्वं न युज्यते, किन्तु प्रमात्वं स्वतः, दोषमूलकत्वादप्रमात्वं परत इत्येव युक्तम्॥ १०६॥

प्रामाण्याप्रामाण्ययोरुभयोरपि स्वतस्त्वमिति वदन्तं सांख्यं प्रत्याह—**मानत्वेत्यादि**। **मानत्वामानते द्वे**=प्रामाण्यम्, अप्रामाण्यं चेति द्वयमपि **स्वतः इति वदतः** सांख्यसिद्धान्तिनः **ते** किं प्रमात्वाप्रमात्वे द्वे अपि

**व्यक्त्यैक्ये व्याहतिः स्यादथ निजविषयेष्वंशतस्ते, तथाऽपि**
**स्याद्धीः सर्वा तथेति स्वपरसमययोर्द्वेषरागौ जुषस्व ॥ १०७ ॥**

**[प्रामाण्यस्वतस्त्वे बाधपरिहारः]**

**331. ज्ञानं मानं स्वतश्चेत्, कथमिव विशयः कस्यचित् क्वापि भावी**
**मीमांसा चानपेक्ष्येत्यसदुपधिकृताकारशङ्कोपपत्तेः ।**

एकाधिकरणके, उत भिन्नाधिकरणके? यदि **तयोः**=प्रामाण्याप्रामाण्ययोः अधिकरणभूतं ज्ञानं **व्यक्तिद्वैतम्**=भिन्नं भिन्नम् **चेत्**, तदा **प्रतिनियततया**=ज्ञानयोः भेदव्यवस्थापकतया **उपाधिभेदः**=प्रयोजकभेदः **अभ्युपेयः**=अङ्गीकर्तव्यः । किञ्चित्कारणविशेषवशात् प्रामाण्यम्, तद्विलक्षणकारणविशेषवशादप्रामाण्यमिति वक्तव्यम् । तदिदं नैयायिकमतमेव । को विशेषः? **व्यक्त्यैक्ये**=प्रमात्वाप्रमात्वयोरेकाधिकरणवृत्तित्वरूपप्रथमकल्पे तु **व्याहतिः स्यात्**=परस्परं व्याघातः स्पष्टः । **अथ निजविषयेषु**=ज्ञानस्य विषयेषु **अंशतः**=अंशभेदेन **ते**=प्रमात्वाप्रमात्वे भवतः, हेरम्बनरसिंहवत्, **तथापि सर्वा धीः**=सर्वमपि ज्ञानम् **तथा**=प्रमात्वाप्रमात्वमिश्रितं स्यात् **इति** हेतोः **स्वपरसमययोः**=स्वमतपरमतयोः **द्वेषरागौ**=स्वमते द्वेषम्, परमते रागञ्च **भजस्व**=भज, विनिगमकाभावात् । एवञ्च स्वमते रागः परमते द्वेषश्चाहेतुक एव स्यादिति न किञ्चिदपि सिद्ध्येत् ॥

**अत्रेदं तत्त्वम्**—सांख्यं हि तत्त्वशास्त्रम्, न लौकिकम् । चतुर्विंशतितत्त्वानि यानि, तान्यलौकिकानि। आन्तराणां तेषां बाह्यजगतश्च संबन्धनिरूपणाय प्रवृत्ताः विद्वांसः बुद्धिपदवाच्यं महत्तत्त्वसात्त्विकपरिणाम-विशेषरूपमन्तःकरणं तत्तदिन्द्रियद्वारा बहिर्निसृत्य, विषयमुपसृत्य, तदात्मना परिणमते । यथा वा तटाकस्थं जलं बहिः निसृत्य क्षेत्रं भजत् क्षेत्रं सर्वं व्याप्य क्षेत्राकारतां प्रतिपद्यते । एवञ्चान्तःकरणवृत्तेरेव तथा परिणामात् प्रमात्वाप्रमात्वे भिन्नाधिकरणके, अन्तःकरणवृत्तेरेव भिन्नत्वात् । इन्द्रियव्यापारस्तावानेव । इतरत्सर्वं पूर्ववासनया कल्प्यत इत्यादिकं पूर्वमेव(श्लो.15) विस्तरेणोपपादितम् । तथा च शुक्तीन्द्रियसन्निकर्षजन्यं ज्ञानं प्रमास्थले भ्रमस्थलेऽप्येकरूपमेव । सिद्धान्ते यथा प्रथमं जातमनवधारणारूपं संशयसहम्, तादृशसंशयसहत्वम् अत्रापि समानम् । अत एव ज्ञानद्वयमपि प्रथमं समानमेवेत्यभिप्रायेण द्वयं स्वत इत्युच्यते । बाह्यकरणव्यापारो हि अधिष्ठानप्रत्यक्षे विश्रान्तः । तावानंशः प्रमाभ्रमयोः समानः । इतरत्सर्वं मानसिकमित्यभिप्रायः । शिष्टं तत्रैव (श्लो.102) द्रष्टव्यम् । पूर्णा सांख्यप्रक्रिया पूर्वमेव (जीव.70-72) परीक्षिता ॥

शिष्यबुद्धेः शिक्षणाय श्रद्धायै स्वमतेऽपि च । आचार्या ब्रुवते सर्वं न हि निन्दानयेन हि ॥ १०७ ॥

प्रामाण्यस्य स्वतस्त्वे नैयायिकोक्तां शङ्कां परिहरति—**ज्ञान**मित्यादि । **ज्ञानम्**=सर्वमपि ज्ञानम् **स्वतः मानं चेत्**=स्वत एव प्रमाणमिति यदि, **कस्यचित्** पुरुषस्य **क्वापि** कुत्रचिद्विषये **विशयः**=संशयः **कथमिव भावी**=भवेत्, प्रामाण्यस्य स्वत एव गृहीतत्वात् । किं बहुना! **मीमांसा च**=पूर्वोत्तररूपे द्वे मीमांसाशास्त्रम् **अनपेक्ष्या**=नावश्यकी स्यात् । मीमांसाशास्त्रं हि प्रत्यधिकरणं संशयमुत्थाप्य सिद्धान्तं प्रदर्शयति । स्वतःप्रामाण्यसिद्धौ कथमेवमिदं शास्त्रं प्रावर्तत? **इति** प्रश्नः **असत्**=न समीचीनः । कुतः?

नेत्रालोकादिनीतेर्भवति च निगमोऽप्यत्र मीमांसयाऽर्थी
हेतूनां साध्यसिद्धौ सहकृदनुविधिर्हेतुभावं न हन्ति ॥ १०८ ॥

[स्वतःप्रामाण्यं कुत्रचिदनिवार्यम्]

332. सर्वज्ञस्य प्रमाया न खलु न विषयः स्यात् स्वकीयं प्रमात्वम्
निर्बाधा धीः प्रमेति प्रमितिरपि निजं गाहते मानभावम् ।

**उपधिकृताकारशङ्कोपपत्तेः**=केनचिदुपधिना=व्याजेन कृताया **आकारे**=प्रकारे शङ्काया **उपपत्तेः**, न तु प्रधानांशे संशयात् । **च**=अपिच **निगमोऽपि**=प्रमाणमूर्धन्यो वेदोऽपि **अत्र**=स्वप्रतिपाद्यार्थे **नेत्रालोकादिनीतेः**=मुख्यकारणसहकारिकारणन्यायात् **मीमांसया अर्थी भवति**=मीमांसासहकारापेक्षावान् भवति । चक्षुरिन्द्रियं हि रूपसाक्षात्कारकरणं संप्रतिपन्नम् । अथाप्यन्धकारे न तत् कार्यकारि, आलोके सति तु कार्यकारि । एवमालोकापेक्षामात्रात् चक्षुषो रूपसाक्षात्कारकरणत्वं नापगच्छति । तद्वन्मीमांसापेक्षामात्रात् वेदानां प्रमाजनकत्वं नापगच्छति । वस्तुतस्त्विदं बुद्धिजीविदृष्ट्या । आर्षदृष्ट्या तु सर्वं सहजमेवेति न संशयाद्यवकाशः । विचारमर्थान्तरन्यासेनोपसंहरति— **हेतूनाम्**=सर्वेषामपि कारणानाम् **साध्यसिद्धौ**=स्वकार्यसाधने **सहकृदनुविधिः**=सहकार्यपेक्षणम् **हेतुभावम्**=कारणत्वम् **न हन्ति**=नापहरति । कुलालस्य घटकरणे दण्डचक्रादिसहकारिसापेक्षत्वमात्रात् 'स्वतन्त्रः कर्ता' इत्युक्तं स्वातन्त्र्यं क्व गच्छेत् ॥

**वस्तुतस्तु**— 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' इत्यत्र तर्केण वेदार्थनिर्धारणमिति केचिन्मन्यन्ते । एवं सति 'वेदशास्त्राविरोधिना' इत्यनेनान्योन्याश्रयो भवेत् । वेदार्थे निर्धारिते हि तदविरोधस्तर्कस्य वक्तव्यः । यदि तर्काधीनं तदर्थनिर्धारणम्, तर्हि अन्योन्याश्रयः दुरुद्धरः । अतः श्रुत्युक्तार्थे संशयान्न विचारे प्रवर्तते, किन्तु निर्धारितेऽर्थे तर्कयोजनं क्रियते । अत एव तत्तदधिकरणेषु संशयादिप्रदर्शनं कल्पनारूपं मन्तव्यम् । अतश्च विचारशास्त्रं वादरूपम् । न जल्परूपम् । तत्त्वबुभुत्सुकथा वादः, विजिगीषुकथा जल्प इति तयोर्महदन्तरम् । एवञ्च 'श्रोतव्यः' इत्युक्तस्य प्रमितस्यैव श्रुतार्थस्य स्थूणानिखननन्यायेन दृढीकरणं मीमांसया क्रियत इति तत्त्वम् ॥

इदमेव वैदिकानां हैतुकबौद्धानां च मूलभूतं वैषम्यम् । वेदजन्यज्ञाने प्रामाण्यसंशयान्न विचारः । तर्केण दृढीकरणं पूर्वगृहीतप्रामाण्यस्य । बौद्धास्तु तर्केणैवार्थनिर्णय इति तर्कः सर्वोत्तमं प्रमाणमित्याहुः । अत एव ते हैतुकप्रथाम् 'हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इति निन्दाविषयतां चाप्नुवन् । अत एव 'तर्काप्रतिष्ठानात्' (ब्र.सू.2-1-11) इति वैदिककुलपतिः ॥ १०८ ॥

स्वतःप्रामाण्यस्याविचाल्यं स्थलं दर्शयति— **सर्वज्ञस्येत्यादि** । **सर्वज्ञस्य**=परमात्मनः **प्रमायाः**=प्रमात्मकज्ञानस्य **स्वकीयम्** तादृशज्ञानगतम् **प्रमात्वम् न खलु न विषयः**=न विषयो भवतीति न खलु वक्तुं शक्यम् । परमात्मा खलु सर्वज्ञ इति तस्य च ज्ञानं नित्यम्, एकं च, प्रमारूपं चेत्यपि नैयायिकानामपि संमतम् । तदीयज्ञानगतं प्रमात्वं केन गृह्यते? अन्येन चेत्, ज्ञानद्वयापत्तिः । तेनैव ज्ञानेन गृह्यते चेत्, तस्य

मानेऽर्थः स्वात्मनैव स्फुरति; न च परं भाति शङ्कानिरासे
भ्रान्त्या स्वार्थान्यथात्वं स्वयमनवगतं बाधकैर्वेद्यतेऽतः ॥ १०९ ॥

[अद्भुतोक्तीनां याथार्थ्यम्]

333. दृष्टं मान्थालभोगिप्रभृतिषु करणस्थानभेदादि चित्रम्
तादृक् द्वीपान्तरादौ श्रुतमपि न मृषा; वेदसिद्धे तथा नः ।

---

सर्वज्ञत्वं न स्यात्। अतः ईश्वरीयज्ञानगतं प्रामाण्यं स्वतोग्राह्यमेव। ननु न्यायशास्त्रं लोकायतमिति बहुश उक्तम्। अतो लौकिकं ज्ञानमधिकृत्यैव प्रमात्वं परतोग्राह्यं वदाम इति चेत्, दृष्टान्तान्तरमाह—**निर्बाधा**=बाधकज्ञानरहिता **धीः**=ज्ञानम् प्रमा इति **प्रमितिरपि**=लक्षणज्ञानमपि **निजं मानभावम्**=लक्षणज्ञानगतं **प्रमात्वम् गाहते**=विषयीकरोति। 'अबाधितं ज्ञानं प्रमा' इति प्रमाया लक्षणमुच्यते। इदं च लक्षणं स्वमपि विषयीकरोत्येव। अन्यथा तल्लक्षणज्ञानमप्रमा स्यादित्यादिकं प्रथमश्लोक एव गतम्। न च जीवानां ज्ञानस्य नानात्वात् अन्येनैव ज्ञानेन तद्गृह्यताम्, का हानिः? इति चेत्, तर्हि अनवस्थाप्रसङ्गः॥

नन्वस्तु कुत्रचित् स्वतस्त्वम्, लक्षणप्रदर्शनादीनां शास्त्रत्वात्। लोके व्यवहारहेतूनां ज्ञानानां प्रामाण्यं स्वतः, अप्रामाण्यं तु परत इति कथं विभाग इति शङ्कां परिहरति—**मानेऽर्थ** इत्यादि। **माने**=प्रमाणभूते ज्ञाने **अर्थः**=घटादिर्विषयः **स्वात्मनैव**=स्वासाधारणस्वरूपेणैव **स्फुरति**=भासते। तेन चाबाधितार्थकत्वं सिद्धम्, तदेव च स्वतःप्रमात्वम्। अतः प्रमात्मकज्ञाने प्रामाण्यं स्वत एव। ननु यदि प्रथममेव प्रामाण्यं गृहीतम्, तर्हि अनन्तरमप्रामाण्यशङ्का कथम्? एतच्छङ्कावारकज्ञानस्य वा कोऽधिको विषयः? अनधिकविषयत्वे कथं शङ्कापरिहारः? इत्यत्र—**शङ्कानिरासे**=शङ्कानिरासे कृते सति **परम्**=अधिको विषयः, **न च भाति,** किन्तु पूर्वगृहीतस्य दृढीकरणमेव। एवं दृढीकरणार्थं ज्ञानापेक्षा पुनःपुनरपि स्यात् कस्यचिन्मन्दमतेः, संशयात्मनो वा। तावता न प्रथमग्रहणस्य वैयर्थ्यम्। अप्रामाण्यं परत इत्यत्र तु विशेषं दर्शयति—**भ्रान्त्या**=अप्रमात्मकज्ञानेन तु **स्वार्थान्यथात्वम्**=तद्विषयीभूतस्यार्थस्यातथात्वम् स्वयम् अनवगतमेव, प्रथममुत्सर्गतः प्रमात्वस्यैव ग्रहणात्। **अतः**—प्रथममप्रामाण्याग्रहणात् **बाधकैः**=बाधकज्ञानादिभिः **वेद्यते**=अप्रामाण्यं ज्ञायते। अतोऽप्रमात्वस्य परतस्त्वमनिवार्यम्। तथा चोत्सर्गतो गृहीतं प्रामाण्यमनन्तरमपोद्यते। अतोऽप्रमात्वं परत एव॥

**इदमत्र रहस्यम्**—ऋजुप्रकृतीनां मतिः ऋज्व्येव भवेत्। संशयात्मनां मतिः संशयितैव स्यात्। अत्र सर्वत्र पूर्वकर्मैव कारणम्। ये तु शुद्धात्मानो महात्मानः तेषां मतिः स्वत एव शुद्धा यतः, तेषां भ्रमप्रमादादिकं न संभवि। ओषधिगुणादिकं कश्चित् परीक्षयैव जानीयात्। कश्चित्तु स्पर्शनमात्रेण। अन्यस्तु दर्शनमात्रेण। अतः प्रामाण्यमुत्सर्गतः स्वत एवेति तत्तत्कक्ष्यादृष्ट्या ज्ञेयम्। अत एव लोकदृष्ट्या **लोकायत**दर्शनमेव गतिः॥ १०९ ॥

ननु वेदस्य सर्वस्यापि कथं प्रमाणत्वम्? 'आदित्यो यूपः' 'ग्रावाणःप्लवन्ते' 'यदश्रव्यशीयत तद्रजतं हिरण्यमभवत्' इत्यादिलोकविरुद्धं वाक्यं कथं प्रमाणं भवेदिति शङ्कां समाधत्ते—**दृष्टमि**त्यादि।

**यत्रानाप्तोक्ततधीर्न भवति, विहतिर्नापि संभावनायाः**
**किं व्याप्त्याऽत्रोपचारो विहतिमति भवेत्; नैव तद्व्याप्तिदौस्स्थ्ये॥ ११०॥**

**[वेदानामपौरुषेयत्वम्]**

**334. वाक्यत्वात् कर्तृमत्यः श्रुतय इति यदि, ब्रूहि बाधं विपक्षे**
**श्रुत्या स्मृत्या च बाध्या त्वदनुमितिरियं कर्तुरत्रास्मृतेश्च।**

**मान्धालभोगिप्रभृतिषु**=**मान्धालः**=पक्षिविशेषः, **भोगी**=सर्पः, एतदादिषु **करणस्थानभेदादि**=मान्धालस्य मुखमेव पायुः, सर्पस्य चक्षुरेव श्रोत्रम्। इत्यादि **चित्रम्**=विचित्रम् **दृष्टम्**। **तादृगेव**=तादृशमेव विचित्रम् **द्वीपान्तरादौ अपि**=प्लक्ष-शाल्मलिप्रभृतिषु इतरद्वीपेष्वपि श्रुतम्। अस्मज्जम्बूद्वीपेऽदृष्टाः विचित्राः प्राणिन इतरद्वीपेषु सन्तीति श्रूयते। एवमस्मिन्नेव लोके तत्तादृशानि अद्भुतानि प्रत्यक्षतो दृश्यन्ते। **तथा**=एवमेव **वेदसिद्धेऽपि** विचित्रविषये **नः न मृषा** भवितुमर्हति। ननु वेदोक्तं सर्वं तथैवाङ्गीकार्यं चेत्, वेदस्यानन्तत्वात्, अल्पज्ञैः ज्ञातुमशक्यत्वात् लोके विरुद्धोक्तिरेव काचिदपि न स्यात्। आदित्योऽपि कुत्रचित् यूपः स्यात्। तथाच तत्र लक्षणाङ्गीकारः कथमिति चेत्—**यत्र**=यस्मिन् विषये **अनाप्तोक्तताधीः**=एतद्वक्ता न आप्तः=न विश्वसनीयः इति ज्ञानम् न भवति, अत एव **संभावनायाः विहतिः न**=व्याघातो न भवति **अत्र**=एतादृशाद्भुतोक्तौ **व्याप्त्या**=अन्यत्र दृष्टान्तव्याप्त्याद्यन्वेषणेन **किम्** साधनीयम्? अद्भुतोक्तेरसाधारणत्वात् एकमेव स्थलं तादृशं भवेत्। अतस्तत्र दृष्टान्तप्रदर्शनं सर्वथाऽसंभवि। श्रीकृष्णेन विश्वरूपं प्रदर्शितमिति भारते उच्यते। अन्येन केनैवं प्रदर्शितमिति दृष्टान्तो दर्शयितुं शक्यः किम्? श्रीकृष्णस्यासाधारणं स्वरूपं स्मरताम् 'इदं तस्य संभवि' इति संभावनाज्ञानं स्याच्चेत्तावदेवालम्, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इतिवर्ण्यमानविषये, दृष्टान्तप्रदर्शनं कथं शक्यम्। अत एवात्र **सर्वार्थसिद्धौ** व्याप्तिपदं व्याप्तिग्रहणस्थलभूतदृष्टान्तपरं व्याख्यातम्। अत एतादृशविषयेषु अप्रामाण्यशङ्काया नावसरः। एतादृशविषयेष्वविश्वासं कुर्वत उद्दिश्यैव 'न च मां योऽभ्यसूयति' इति वक्ति स भगवान्। ननु तर्हि 'आदित्यो यूपः' इत्यादावुपचारोऽपि न स्यादित्यत्र—**उपचारः**=उपचरितार्थत्वम् **विहतिमति**=विरोधे स्पष्टे सति भवेत्। यूपस्य भूमिस्थस्य आकाशस्थादित्यस्य च प्रत्यक्षसिद्धत्वेनैक्यासंभवात्, द्वीपान्तरेऽपि तस्य यूपत्वासंभवात् तत्रोपचार आदित्यसदृशे। नैवं प्रत्यक्षविरोधः विश्वरूपदर्शनादौ, तस्य तदानीन्तनैः प्रत्यक्षदृष्टत्वात्। अतः **व्याप्तिदौःस्थ्ये**=असाधारणघटनादौ तु **तत्**=उपचरणम् **नैव**=न सर्वथा शक्यम्, तत्तथैवाङ्गीकर्तव्यम्। अतो दिव्यघटनाविषयेष्वविश्वासो न कर्तव्यः। एतद्विषयेऽधिकं पूर्वमेव (नायक.75) गतम्॥ ११०॥

पूर्वं (श्लो.102) सामान्यत उक्तमेव प्रकारान्तरेण विशदयति—**वाक्यत्वादि**त्यादि। **श्रुतयः**=वेदाः **कर्तृमत्यः**=सकर्तृकाः, **वाक्यत्वात्** इति **यदि** वदसि, तर्हि **विपक्षे**='वाक्यत्वमस्तु, सकर्तृकत्वं मास्तु' इत्यप्रयोजकशङ्कायाम् **बाधम्**=तस्याः बाधकं तर्कम् ब्रूहि। ननु 'यदि सकर्तृकत्वं न स्यात्, तर्हि वाक्यत्वमपि न स्यात्' इति अनुकूलस्तर्को वर्तत एवेति चेत्—इयं **त्वदनुमितिः**='वेदाः सकर्तृकाः, वाक्यत्वात्' इत्यनुमितिः **श्रुत्या**='वाचा विरूपनित्यया' इति श्रुत्या **स्मृत्या**='अनादिनिधना ह्येषा वाक्'

**त्वं तावत् तिष्ठ; लोकैर्न हि पुरुषगुणप्रत्ययात् तद्गृहीतिः**
**सन्तश्चापह्नुवीरंस्तमिह न मुनयः सत्यनिष्ठाः कृतज्ञाः ॥ १११ ॥**

इति स्मृत्या च बाध्या। अतश्च श्रुतिविरुद्धमनुमानं न प्रतितिष्ठेत। किञ्च **अत्र**=वेदे कर्तुरस्मृतेश्च बाध्या। 'वेदाः सकर्तृकाः, वाक्यत्वात्' इत्यनुमाने, स्मर्यमाणकर्तृकत्वमुपाधिः। यत्र यत्र सकर्तृकत्वम्, तत्र सर्वत्र कर्तृस्मरणं वर्तते, यथा भारतादौ इति साध्यव्यापकत्वम्। 'यत्र वाक्यत्वम्, तत्र कर्तृस्मरणं नास्तीति पक्षान्तर्भावेण साधनाव्यापकत्वं च वर्तते। उपाध्यभावेन कर्त्रस्मरणेन साध्याभावस्य सकर्तृकत्वाभावस्य साधनात् बाधः॥

ननु तर्हि प्राचीनेषु गोपुरप्रासादेषु, घटादिषु वा यत्र तत्कर्ता न केनापि स्मर्यते, ऐतिह्यरूपेणापि न श्रूयते, तत्राप्यकर्तृकत्वं स्यात्। न च संप्रतिपन्नेषु नैवं प्रसङ्ग इति शंक्यम्, अत्राप्यस्माकं विप्रतिपत्तेस्सत्त्वादिति चेत्, तत्राह—**त्वं तावत्, तिष्ठ**! यतस्त्वं शुष्कतार्किकोऽसि। **लोकैः**=महात्मभिः **पुरुषगुणप्रत्ययात्**=वेदवक्तृपुरुषस्य गुणेषु विश्वासात् **तद्गृहीतिः**=वेदपरिग्रहणम् **न हि**, किन्तु स्वतःप्रमाणत्वादेव। 'गुणकृतं प्रामाण्यम्, दोषकृतमप्रामाण्य'मिति तैः कथनात् 'पुरुषगुणप्रत्ययात्' इत्युक्तम्। ननु ईश्वरो हि जगत्स्रष्टा। वेदो हि शब्दरूपो जगदन्तर्गतः। यदि वेदस्य सकर्तृकत्वं निराक्रियते तर्हि, ईश्वरोऽपि निराकृतप्राय एव। ततश्च स्वयमेव संकटे पतितस्त्वमित्यत्राह—**सन्त** इत्यादि। **इह**=एतद्विषये **सत्यनिष्ठाः**=सत्यैकपरायणाः **सन्तः**='अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति' इत्युक्तरीत्या ब्रह्मविदः **मुनयश्च तम्**=ईश्वरम् **नापह्नुवीरन्**=कथमपि न निराकुर्युः। यतः ते **कृतज्ञाः**='सुहृदं सर्वभूतानाम्' इत्युक्तरीत्या सर्वसुहृदम्, सर्वोपकारकमनिशं जानन्तस्ते कथमीश्वरं निराकुर्युः। द्वयोरपि स्वरूपमसंकीर्णं जानन्तः द्वयमप्यङ्गीकुर्वन्त्येवेति वेदानामपौरुषेयत्वमात्रात् नेश्वरापलापः सिद्ध्येत्। अतो वेदा अपौरुषेया एव॥ ननु भोः!

किमिदं क्रियते नाट्यमपूर्वं कस्य वा कृते। कं वञ्चयसि साधो त्वम् आत्मानमथवा परान्॥

'शास्त्रयोनित्वात्' इत्यत्र शास्त्रस्य योनिरिति तत्पुरुषाङ्गीकारे, जन्माद्यधिकरणेन पौनरुक्त्यं वदता कथं वेदकर्तृत्वमीश्वरस्य निराक्रियते। पूर्वमीमांसकवत् न हि वेदनित्यत्ववादिन उत्तरमीमांसकाः। ननु 'धाता यथापूर्वमकल्पयत्' इति श्रुत्या संसारस्यानादित्वात् पूर्वकल्पस्थितं वेदं स्मृत्वा तथैवोपदिशति। यथोक्तम्—'स भगवान् पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत् स्मरन् 'बहु स्याम्' इति संकल्प्य' (श्री.भा.1-3-29) 'अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात् कल्पान्तरव्यवहारानुसन्धानक्षमत्वाच्चेश्वराणाम्' (ब्र.सू.1-3-30.शं.) इत्यादि। तथा च पूर्वमीमांसकवत् न वयं स्वरूपनित्यत्ववादिनः, किन्तु प्रवाहनित्यत्ववादिनः इति चेत्; भो वेदान्तिन्! शब्दं कथंचिदपि मा वर्धय। वर्धने च परस्परविरोधोऽप्यन्ते न ज्ञायेत। को वा विरोधो दृष्टो भवता महतां सूक्तिषु? हन्त महावेदान्तिन्! सत्यं ते महात्मानो न संशयः। परन्तु भवादृशा एव शुष्कतार्किकाः तेषां शिष्या यदि, ते किं कुर्युस्तदा? किं न श्रुता गाथा?

**गुरोश्शापस्तु शिष्यः स्यात्** भक्तो भगवतस्तथा। धर्मसंकटहेतुत्वात्तथोच्यन्ते महात्मभिः॥

**[वेदापौरुषेयत्वे विरोधपरिहारः]**

**335. आदौ वेदैक्यवादस्त्वविभजनवशात्; तावता नान्यसृष्टिः**
**सर्वेषामेकवेदान्वयमपि जगदुः कालभेदप्रतिष्ठम्।**
**तद्वच्छाखाविभागः; प्रवचननियताः काठकाद्याः समाख्याः**
**द्रष्टा मन्त्रादिकर्ता; परिहृत इह चानित्ययोगः प्रवाहैः ॥ ११२ ॥**

**[वेदानित्यत्वे श्रुतिस्मृतिविरोधपरिहारः]**

**336. भेदो मन्वन्तरादौ भवति च नियतोऽनादिसिद्धे तदंशे**
**पुंसूक्तादौ श्रुतीनां जनिवचनमपि प्राग्वदाविष्कृतौ स्यात्।**

'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः', तत्तादृशस्य पूर्वकल्पः कथं स्यात्? उत्तरकल्पो वा कथम्? तत्तत्स्मरणं च कथम्? सर्वजगत्कारणत्वं वा कथम्?

मा वर्धय विचारं त्वं वृथैव तु मुहुर्मुहुः। वचनोपरि विश्वासं त्यक्त्वा, तं कुरु माधवे ॥
यावद्वेदः शब्दरूपस्तावत्स्यात् संशयादिकम्। ज्ञानविज्ञानरूपा हि वेदाः तस्मात्सनातनाः॥
ज्ञानविज्ञानरूपो हि भगवान् इति कथ्यते। ज्ञानं विज्ञानमुभयं ब्राह्मणानां परं धनम्॥
चक्षुर्द्वयसमानं तत् क्व वा गतमिदं द्वयम्? अन्विष्यामः पुनरपि तपसाऽस्मत्परं धनम्॥
तदैव सर्वं निश्चेयं, न स्याच्छङ्का पुनस्तथा। सर्वं सुविहितं नूनं स्यात्तदैव न संशयः ॥ १११ ॥

एक एव वेद इति केचन, त्रयीति परे, चत्वार इति केचन, अनन्ता इति चान्ये। इत्यादिरूपान् वेदविषयविरोधाभासान् परिहरति—आदावित्यादिना। **आदौ**=सृष्ट्यारंभे **वेदैक्यवादः**—एक एव वेद आसीदिति प्रवादस्तु **अविभजनवशात्**= चतुर्धा वेदानां विभागात्पूर्वकालिकः। **तावता**=तावन्मात्रेण अनन्तरकाले **अन्यसृष्टिः**=इतरवेदानां सृष्टिः **न**। अत एव **सर्वेषाम्**=सर्वेषामप्यविशेषेण **एकवेदान्वयमपि**= एकवेदाधिकारमपि **कालभेदप्रतिष्ठम्**=कृतयुगादिकालभेदेन व्यवस्थितम् **जगदुः**। भारतभागवतादिष्वस्य विस्तरो द्रष्टव्यः। **तद्वत्**=एवमेव **शाखाविभागोऽपि** कालभेदप्रतिष्ठः। **काठकाद्याः समाख्याः**=संज्ञा अपि **प्रवचननियताः**=तत्तच्छाखाप्रवक्तृत्वेन व्यवस्थिताः, न तु तेन तेन रचितत्वात्। सर्वमेकवचनान्तं वा। **मन्त्रादिकर्ता**='मन्त्रकृतः' इत्याद्युक्तिः मन्त्रकर्तृत्वादिप्रयुक्तः न, किन्तु—**द्रष्टा**=द्रष्टैव कर्तेत्युच्यते **इह च**=अस्मिंश्च वेदे **अनित्यसंयोगः**=इन्द्राग्न्याद्यनित्यवस्तुसंबन्धश्च **प्रवाहैः**=सृष्टिप्रवाहस्यानादित्वात् **परिहृतः**। अतः वेदस्सर्वप्रमाणमूर्धन्यः न केनापि चालयितुं शक्यः॥

वेदोऽतिगहनो वत्स! क्रीडेथास्सह तेन न। बौद्धांस्तु वेदविद्वेषान्निरस्तान् दूरतः स्मर ॥
सत्यं धर्ममयो वेदः सत्यं देवमयस्तथा। सत्यं सत्यमयो वेदः नास्ति किञ्चित्तु तत्समः ॥ ११२ ॥

कथं तर्हि 'छन्दांसि जज्ञिरे तस्मात्' 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्यादिश्रुतिस्मृती-त्येतत्परिहरति—**भेद** इत्यादि। **मन्वन्तरादौ**=तत्तन्मन्वन्तरारंभे **भेदः**=अन्यो वेदः भवतीति च

आज्ञारूपत्वमासां न च गलति विभोरैक्यरूप्याभिसन्धेः
योऽसौ देवः प्रमाणं स च न शिथिलयेत् शक्तिमन्तं क्रमं तम्॥ ११३ ॥

**[वेदानामन्यागमानां च वैषम्यम्]**

337. **प्रेक्षावन्तो महान्तः परिजगृहुरिमं सार्धमङ्गैरनन्तम्**
**नेत्थं बाह्यागमानां प्रसृतिरनुपधेः तद्गृहीतेरभावात्।**

---

**अनादिसिद्धे**=अनादिकालादेव सिद्धे **तदंशे**=वेदैकदेशे भवति। अनन्तानां वेदानां मध्ये तत्तन्मन्वन्तरे एकैको भाग आविर्भवतीत्यभिप्रायेण 'प्रतिमन्वन्तरम्' इत्याद्युच्यते। **पुंसूक्तादौ**=पुरुषसूक्तादौ **श्रुतीनाम्**=वेदानाम् **जनिवचनमपि**=उत्पत्तिकथनमपि **प्राग्वत्**=पूर्ववदेव **आविष्कृतौ**=आविर्भावरूपार्थे **स्यात्**। 'जनी प्रादुर्भावे' इति खलु धातुः। 'श्रुतिःस्मृतिर्ममैवाज्ञा' इति भगवदाज्ञारूपत्वाद्वेदादीनां भगवद्वचनरूपत्वं भवतीति चेत्—**आसाम्**=श्रुतीनाम् **विभोः**=परमात्मनः आज्ञारूपत्वमपि **ऐकरूप्याभिसन्धेः**=वेदानां भगवतश्च **अभिसन्धेः**=अभिप्रायस्य एकरूपत्वतात्पर्यात् **न च गलति**=नैवापगच्छति। 'राजद्वयं राज्य-विनाशहेतुः' इति न्यायेन द्वयोरेकाभिसंन्धिमत्त्वं कथम्? एकेनैव कार्ये सिद्धे द्वयोरावश्यकता च कीदृशी? इत्यत्र—**योऽसौ देवः**=परमात्मा **प्रमाणम्**=प्रमाणभूतः सर्वेषां सर्वेषु विषयेषु **स च**=सोऽपि **शक्ति-मन्तम्**=अद्भुतशक्तियुक्तम् अनुल्लङ्घनीयऋतरूपम् **तम् क्रमम्**=वेदेषु निहितम् नियतम्, शब्दतोऽर्थतश्च विद्यमानं क्रमम् **न शिथिलयेत्**=नान्यथयेत्=न व्यत्यस्येत्॥

वेदस्य वेदवेद्यस्य स्वरूपं तत्त्वतो यदि। ज्ञातव्यं चेत् बहु तपःकर्तव्यम्, नान्यथा गतिः॥
ज्ञानविज्ञानसंपन्नैः तपस्सिद्धैर्महात्मभिः। गृहीतत्वात् परैर्ग्राह्या वेदा निस्संशयं दृढम्॥
परमात्मा तु दूरेऽस्ति समीपस्थोऽपि देहिनाम्। कियद्दौर्भाग्यमस्माकम्, क्रियतां किं विचिन्त्यताम्॥
वेदो हि वैदिकानां स्यात् साक्षाद्भगवतो तनुः। सर्वदेवमयो विष्णुः देवाः स्युर्मन्त्रमूर्तयः॥
सर्वमन्त्रमयो वेदः मूर्तिस्तस्य न संशयः। स्थानं तस्मात्तु वेदानामसाधारणमुच्यते॥
गावो घ्राणेन पश्यन्ति राजानश्चारचक्षुषा। पश्यन्ति मनसा सिद्धाः विप्रा वेदेन चक्षुषा॥
वेदप्रामाण्यरक्षार्थं स्वतः प्रामाण्यसाधनम्। आचार्याणां च तात्पर्यमत्रैवेति विचिन्त्यताम्॥
**अनाहताख्यनादोऽस्ति कश्चिद्दिव्योऽद्भुतो महान्। अपौरुषेयोऽहेतुश्च दिव्याकाशसमुद्भवः॥**
**तन्नादरूपा वेदाश्च हार्दाकाशसमुद्भवाः। अन्तर्वाणिं तु विद्वांसमाहुस्तत्त्वविचक्षणाः॥**
वृथा चर्चा परित्यज्य त्वन्तर्वाणिर्भवेर्यदि। तदा नश्येयुरखिलास्संशयाद्याः क्षणात् ध्रुवम्॥ ११३ ॥

वेदानामितरागमानां च तारतम्यं प्रतिपादयति—**प्रेक्षावन्त** इत्यादि। **प्रेक्षावन्तः**=विवेचनकुशलाः **महान्तः**=महाजनाः **अनन्तम् इमं वेदम् अङ्गैस्सार्धम्**=षडङ्गैस्सार्धम् **परिजगृहुः**=स्वीकृतवन्तः। 'सार्थम्' इति पाठे तु अर्थसहितं मूलम्; इति तात्पर्यात् मूलस्यापि प्रत्येकं स्थानमस्तीति सूच्यते। तर्हि बाह्यागमानां स्थानमस्मिन् देशे कथमभूदित्यत्र—**अनुपधेः**=उपाधिरहितायाः **परिगृहीतेः**=स्वीकारस्य **अभावात्**=अदर्शनात्

दृश्यन्ते गत्यभावो नियतिषु लघिमा वञ्चनं तर्कमोहो
वृत्तिस्वास्थ्यादि चैषामुपधिरधिगमे; वैपरीत्यं तु वेदे ॥ ११४ ॥

[इतरागमानामनुपादेयत्वम्]

338. नित्यैरस्पृष्टदोषैर्भवति च निगमैः पौरुषेयेषु बाधः
पाषण्डत्वप्रथैषां जगति न च मृषा पक्षपातप्रहाणे ।
अन्योन्यं चैषु बाधः प्रसजति कृतकेष्वाप्तिमोहादिसाम्यात्
संवादोंऽशेषु तुल्यः; परमिह कुहनासिद्धयेऽन्यप्रवेशः ॥ ११५ ॥

**बाह्यागमानाम्**=वेदबाह्यानामागमानाम् **इत्थम्**=वेदवत् **प्रसृतिः**=प्रसरणम्=व्याप्तिः **न** अस्ति । अद्यापि हि वेदस्येयत्तायाः पारं गन्तुं न प्रभवन्ति महामेधाविनोऽपि । 'अनुपधेः गृहीतेरभावा'दित्येतद्विशदयति, इतरागमपरिग्रहोपाधिप्रदर्शनेन **दृश्यन्त** इत्यादि । **गत्यभावः**=वेदेष्वनधिकारे ज्ञाते गत्यन्तराभावः इतरागमाश्रयणे उपाधिः । एवम्—**नियतिषु**=इतरागमोक्तेषु नियमादिषु **लघिमा**=लाघवम्, सुकरत्वम्, **वञ्चनम्**=आमिषदर्शनादिभिः वञ्चनम्, **तर्कमोहः**=तर्कव्यामोहः **वृत्तिस्वास्थ्यादि** च=अशनवसनसौलभ्यम् इत्यादि च **एषाम् अधिगमे**=बाह्यागमपरिग्रहे **उपधिः**=उपाधिः दृश्यन्ते । उपधिरित्येकवचनं प्रत्येकान्वयतात्पर्येण । **वेदे तु वैपरीत्यम् दृश्यते** । अयमंशो **न्यायकुसुमाञ्जलौ** (2स्तबक) विस्तरेणावर्णि । अतो वेदानां महत्त्वं न वर्णयितुं शक्यम् । एवमशक्त्याऽवरोहणं क्षयः ब्राह्मणानामपि समानम् ॥ ११४ ॥

इतरागमानामनुपादेयत्वे हेतुमाह—**नित्यैरित्यादि** । **नित्यैः**=अनादिभिः, प्रवाहत इति पूरणीयम् **अस्पृष्टदोषैः**=अपौरुषेयत्वादेव दोषशङ्कारहितैः **निगमैः पौरुषेयेषु**=इतरागमेषु **बाधश्च भवति** । **पक्षपातप्रहाणे**=पक्षपाताभावे, **जगति**=लोके **एषाम्**=इतरागमानाम् **पाषण्डत्वप्रथा**=धर्मविरुद्धत्वप्रवादः **मृषा न च**=मिथ्या नैव भवति । 'पालनात्तु त्रयीधर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ये, तस्मात् पाखण्ड इति ते स्मृताः ॥' इति निर्वचनम् । षकारखकारयोः परिवर्तनं देशाचारः । इदं पक्षपातं परित्यज्यालोचने सम्यक् ज्ञायेतेत्यर्थः । **कृतकेषु**=पौरुषेयेषु **एषु**=इतरागमेषु **आप्तिमोहादिसाम्यात्**=आप्तत्वस्य, अज्ञानमूलकत्वस्य च समानत्वात् **अन्योन्यम्**=परस्परं **बाधश्च** प्रसजति । **अंशेषु**=कतिपयविषयेषु अहिंसादिषु **संवादः**=वेदेन संवादः **तुल्यः**=समानः एषु । **परम्**=किन्तु **इह**=एष्वागमेषु **कुहनासिद्धये**=परवञ्चनायास्साफल्यार्थमेव **अन्यप्रवेशः**=वैदिकैकदेशसंयोजनम् । यदिदं दृश्यते एषु अहिंसादिरूपवैदिकधर्मैकदेशसंयोजनम्, तदपि न हि सद्बुद्ध्या, किन्तु दुर्बलवैदिकजनवञ्चनार्थमेव । अत एते आगमा अनुपादेया एव । अथवा न सर्वोपजीव्याः । वेदा एव सर्वोपजीव्याः ॥

बौद्धजैनागमावेव ह्याचार्यैः प्राक्तनैरपि । व्यासाद्यैरखिलाचार्यैः विमृष्टावखिलैरपि ॥
इतोऽप्यन्ये हि सन्त्येव विदेशीयागमा भुवि । न विमृष्टा लेशतोऽपि न विघ्नः कुत इत्यहो ॥
विस्तरेणैव तावत्र पूर्वमेव विचारितौ । न वेदेन समं किञ्चित् वाङ्मयं जगतीतले ॥

[स्मृत्यादेर्वेदमूलत्वात्प्रामाण्यम्]

330. **संवादे मानवादेः श्रुतिभिरविरले, संग्रहे तत्समाने**
**ताभिश्चाप्तत्वसिद्धौ, स्वकथित उचितस्तस्य तन्मूलभावः ।**
**नाक्षं लिङ्गं नरोक्तिर्भ्रम इह घटते विप्रलिप्साऽपि मूलम्**
**नाज्ञाते भावनाऽपि; श्रुतिविषयतया भाति योगे तु धर्मः ।। ११६ ।।**

---

नूनमत्यद्भुता वेदाः समग्रा निस्समाधिकाः । वोढुं भारं सर्वमपि क्षमा विश्वहितास्सदा ।।
प्रशंसा क्रियते यावद्वेदानामल्पबुद्धिभिः । यादृशैस्तदिदं सर्वम् अल्पमित्यवधार्यताम् ।। ११५ ।।

एवं वेदविचारं परिसमाप्य तत्समनन्तरकक्ष्यास्थितानां स्मृत्यादीनां प्रामाण्यं विमृशति—**संवाद** इत्यादि । **मानवादेः**=मन्वादिस्मृतीनां **श्रुतिभिः**=वेदैस्साकम् **अविरले**=संपूर्णे **संवादे** सति, एवम् **संग्रहे**=महाजनपरिग्रहे **तत्समाने**=वेदसमाने च सति, **ताभिः**=श्रुतिभिः 'यद्वै किञ्च मनुरवदत्तद्भेषजम्' 'स होवाच व्यासः पाराशर्यः' इत्यादिभिः **आप्तत्वसिद्धौ च**=मन्वादीनां परमाप्तत्वनिश्चये च सति **तस्य**=मन्वादिस्मृतेः **स्वकथितः**=ताभिः स्मृतिभिरेव कथितः **तन्मूलभावः**=वेदमूलकत्वम् **उचितः**=युक्त एव । स्मृतिकारैस्स्वग्रन्थस्य वेदमूलकत्वं स्वयमेवाङ्गीकृतम्—'वेदोऽखिलो धर्ममूलम्' इति गौतमः । 'चोदनालक्षणोऽर्थो धर्मः' इति जैमिनिः इति ।।

तैः कथनमात्रेण कथं ततो निर्णयः? इत्यत्र—**नाक्षमित्यादि** । **अक्षम्**=प्रत्यक्षम् **मूलम् न**=तासां स्मृतीनां न मूलम् । **लिङ्गम्**=अनुमानम् **न मूलम्** । **नरोक्तिः**=वेदातिरिक्तं पौरुषेयं वचनम् **मूलं न** । **इह**=स्मृतिषु **भ्रमः मूलं न** घटते । **विप्रलिप्सापि**=वञ्चकत्वमपि **मूलं न** । **अज्ञाते**=पूर्वमज्ञाते तद्विषये **भावना**=कल्पिता वासनापि **मूलं न** । यदि पूर्वज्ञानं मूलं वक्तव्यम्, तर्हि तत् वेदमूलमेव स्यात्, वेदानामनादित्वात् । अतो वेदा एव स्मृतीनां मूलम् । नन्विदं सर्वमत्युक्तिरेव । योगप्रभाववशादेव ते स्वग्रन्थान् रचयामासुः, न वेदमूलकतयेति चेत्—**योगे तु**=तत्तादृशसमाधिस्थितावपि **धर्मः** तेषाम् **श्रुतिविषयतया**=श्रुतिप्रतिपाद्यतयैव **भाति**, न तु स्वतन्त्रतया । अतो वेदमूलकत्वादेव मन्वादिस्मृतीनां प्रामाण्यम्, न स्वातन्त्र्यात् । उक्तमेवात्र—

यावान्निक्षिप्यते भारस्तावद्वोढुं क्षमो ह्ययम् । वेदस्सर्वनराणां हि हितायैवागतः स्वतः ।।
**इतिहासः पुराणं** वा सर्वं तन्मूलकं भवेत् । प्रमाणं भारतीयानां धर्मैकनिरतात्मनाम् ।।
मूलं प्रमाणं वेदास्स्युः ततश्च ऋषयो मताः । ततस्तु **शीलं तेषां** तु ततश्च **स्मृतयो** मताः ।।
ततश्चैवेतिहासाःस्युः पुराणानि ततो मताः । ततश्चाप्यागमाः प्रोक्ताः वैखानसमुखैः कृताः ।।
एवं समग्रो धर्मोऽयं जीवत्यद्यापि भारते । जीविष्यति पुनस्त्वग्रे निखिलान् जीवयिष्यति ।।
जयतु जयतु वेदः तेन वेद्यश्च धर्मः जयतु जयतु शुद्धस्संप्रदायस्समूलः ।
जयतु जयतु धन्यो भारतीयश्च मार्गः जयतु जयतु पृथ्वी वेदमार्गावलम्बा ।। ११६ ।।

**[नित्यानुमेयो वेदः कश्चिन्नास्ति]**

**340. या मूलं त्वष्टकादेरियमपि मनुजैः क्वाप्यधीता श्रुतित्वात्**
**सा चेन्नित्यानुमेया, प्रसजति न कथं तादृशाध्यक्षक्लृप्तिः ।**
**सर्वस्मिन् पूर्वपूर्वस्मृतिरपि निगमोपज्ञमित्याचरिष्णौ**
**नित्यादृश्ये च मूले नियतमिह भवेदन्धसन्ताननीतिः ॥ ११७ ॥**

वेदेषु केचन भागा नित्यानुमेया इति वदतः **प्राभाकरस्य** पक्षं विमृशति—**या मूलमित्यादि** । अष्टकाश्राद्धं वैदिकैराचर्यते । तस्या मूलभूता श्रुतिस्तु न दृश्यते । वैदिकानां सर्वाण्यपि कर्माणि वेदमूलानीति विश्वासः । अतोऽत्र प्रत्यक्षश्रुतेरभावेऽपि शिष्टाचारात् मूलभूता श्रुतिरनुमेयेति सिद्धान्तितम् । किं सा श्रुतिः यदा कदाचित् येन केनचिदधीता स्याद्वा न वा? प्रथमपक्षे, तस्याः श्रुतेरिदानीमदर्शनेऽपि कदाचित्पूर्वमध्ययन-परंपरायामासीदिति एकः पक्षः । प्राभाकरास्तु स वेदः कदाप्यधीयमानो न, किन्तु नित्यमेवानुमेयस्स वेद इत्याहुः । इमं पक्षं निराकरोति **अष्टकादेः**=अष्टकाश्राद्धादेः=अष्टकाश्राद्धाचरणस्य **या तु श्रुतिः मूलम्, इयमपि**=इयं श्रुतिरपि **क्वापि**=कदाचित् कुत्रचित् **अधीता**=अधीतैव, **श्रुतित्वात्,** इदानीन्तनश्रुतिवत् इत्यनुमानेन तादृशश्रुतेस्सिद्धिः । **सा श्रुतिः नित्यानुमेया चेत्, तादृशाध्यक्षक्लृप्तिः**=नित्यानुमेयप्रत्यक्ष-कल्पनम् **प्रसजति**=अनुमेयं भवेत् । नित्यानुमेयत्वप्रत्यक्षत्वयोर्यथा विरोधः, तद्वदेव नित्यानुमेयत्वश्रुतित्वयो-रपि विरोध एव । 'श्रूयते' इति खलु श्रुतिः । श्रूयत इति श्रोत्रेन्द्रियजन्यं प्रत्यक्षमुच्यते । नित्यानुमेयत्वे कथं **श्रुतित्वम्**=श्रूयमाणत्वं स्यात्?

ननु यथेदानीमष्टकानुष्ठातारः स्मृतिं दृष्ट्वैव तामनुतिष्ठन्ति, तथैव पूर्वपूर्वानुष्ठातारोऽपि स्मृतिं दृष्ट्वैव तदन्वतिष्ठन्निति कुतो न स्यात्? एवञ्च तेषां कालेऽपि प्रत्यक्षवेदस्यादर्शनात् तन्मूलभूतवेदः सदैवानुमेयोऽभूदिति नित्यानुमेयत्वं वेदस्येति शङ्कते—**सर्वस्मिन्नित्यादि** । **सर्वस्मिन् अपि आचरिष्णौ**= इदानीं यथा अष्टकानुष्ठातारः स्मृतिं दृष्ट्वैव तामाचरन्ति, तथैव पूर्वपूर्वमपि 'इयं स्मृतिर्वेदमूला स्यात्' इति भावनयैव **पूर्वपूर्वस्मृतिरपि**—अष्टकास्मृतिरपि **निगमोपज्ञमिति आचरिष्णौ** सति मूलभूता श्रुतिः, तदाप्यनुमेयैवासीदिति तच्छ्रुतेर्नित्यानुमेयत्वमिति चेत्—एवम्, **मूले**=मूलवेदे **नियतं नित्यादृश्ये च सति इह**=अष्टकाश्राद्धे **अन्धसन्ताननीतिः**=अन्धपरंपरान्याय एव **भवेत्**='अन्धेनैव नीयमाना यथान्धाः' (कठ.1-25, मुण्ड.1-2-8) इति भवेत् । विवेकिनः एतत् कथमङ्गीकुर्युः? ननु यूपसर्ववेष्टनविषयेऽद्यापि अयं न्यायो दृश्यत एवेति चेत्—

वृथा चर्चेयमद्यत्वे ज्ञायतां समयो गतः । वेदो ज्ञानस्वरूपश्चेत् कथं वाऽऽपत्तिरीदृशी ॥
सर्वेऽप्येवं वदेयुश्चेत् व्यवस्था वा कथं भवेत्? इति भीत्या शब्दरूपो वेदोऽभूत् समयान्तरे ॥
स सर्वोऽपि गतः कालः विचारोऽद्य वृथैव नः । त्यक्त्वा दूरे विचारं तं गच्छामो धार्मिके पथि ॥
निर्णीय तपसा सत्यं ज्ञातुं कालोऽयमागतः । कुर्मः स्थाने विचारस्य तप एवाद्य नो वरम् ॥ ११७ ॥

[उच्छिन्नशाखामूलकत्वनिरासः]

341. **शाखोच्छेदस्त्विदानीमिह यदि, स मतः; सर्वतश्चेत्, असिद्धिः**
**व्यासागस्त्यप्रधानैर्भवति च मुनिभिर्भूषिताऽद्यापि भूमिः।**
**उच्छिन्ना सा यथैवाऽऽचरितुरविदिता तत्तदाचारमूलं**
**तद्वत् सा विप्रकीर्णा क्रमसमधिगमः कालवत् देशतोऽपि॥ ११८॥**

[पुराणानां प्रामाण्यम्]

342. **दृष्टे वेदैर्विरोधे स्मृतिपरिहरणं सूत्रभाष्यादिसिद्धम्**
**तद्वन्नीतिः पुराणप्रभृतिषु भविनां संभवाद्विभ्रमादेः।**

---

नित्यानुमेयवेदवादं निराकृत्योच्छिन्नमूलशाखावादं नैयायिकसंमतमपि निराकरोति—**शाखोच्छेद** इत्यादि। **यदि इदानीम् इह शाखोच्छेदस्तु**=अष्टकाश्राद्धस्य मूलभूता वेदशाखा एतद्देशे एतत्समये इति **यदि स मतः**=अस्माकमपि स पक्षः **संमत एव। सर्वतश्चेत्**=सर्वदेशेषु सर्वकालेष्विति यदि, **असिद्धिः**= अयं वादः न सिद्धः, देशकालादीनामानन्त्येनासर्वज्ञदुर्ज्ञेयत्वात्। तदा—**व्यासागस्त्यप्रधानैः मुनिभिः**= ब्रह्मर्षिप्रवरैः व्यासागस्त्यादिभिः **भूमिः**=अनन्तब्रह्माण्डे यःकश्चन प्रदेशः अद्यापि **भूषिता च भवति।** ब्रह्मर्षीणां परंपरा चिरजीविनीति भावः। एतदेवाह—**आचरितुः** इदानीमत्राचरितुः **तत्तदाचारमूलम्** सा शाखा **अविदिता**=न विदिता, अत एव **उच्छिन्ना सा**=इति यदि, उच्छिन्ना सा यथैव आचारमूलम्, **तद्वत्सा विप्रकीर्णा**=तथैव सा यत्र कुत्रचित् अध्ययनपरंपरायां स्यात्, **देशतोऽपि**=देशदृष्ट्यापि **क्रमसमधिगमः**=क्रमशः यदा कदाचित् ज्ञेयः स्यात्। अतस्सर्वदेशसर्वकालेषु उच्छिन्ना शाखा दुर्वचा॥

**उच्छिन्ना**=कुत्रापि कदापि केनापि न दृष्टा। **विप्रकीर्णा**=कुत्र चित् कदाचित् कैश्चिददृष्टापि, यत्र कुत्रचित् येन केनचित् यदाकदाचित् दृष्टाखिलरूपा स्यात्॥ ११८॥

स्मृतीतिहासयोः प्रामाण्यं पूर्वं(श्लो.116) प्रतिपादितम्। इदानीं पुराणानां प्रामाण्यं परीक्षयति—**दृष्ट** इत्यादि। ननु तत्र (श्लो.116) मन्वादिस्मृतीनामेव प्रामाण्यं प्रतिपादितम्, न तु इतिहासस्य। कथं तर्ह्युच्यते 'स्मृतीतिहासयोः' इतीति चेत्, सत्यम्। श्लोके तत् कण्ठतः नोक्तम्। परन्तु सर्वार्थसिद्धौ तत्रोक्तन्यायः इतिहासेऽप्यतिदिष्टोऽवतारिकायाम्। अतस्तत्रोभयोर्न्यायस्तुल्यः। वेदः प्रमाणमूर्धन्यः। तत्र परस्परं विरोधे न्यायेन समन्वयः कर्तव्यः, न कस्यापि परित्यागः। इतरग्रन्थेषु प्रथमं स्मृतयः। ततः इतिहासः, ततः पुराणानीति प्रामाण्यक्रमः। एतदेव दर्शयति अत्र—**वेदैः विरोधे दृष्टे, स्मृतिपरिहरणम्**= स्मृतेः परित्यागः **सूत्रभाष्यादिसिद्धम्**='विरोधे त्वनपेक्षं स्यात्' इत्यादिपूर्वमीमांसासूत्रभाष्यादिभिः सिद्धम्। ननु भाष्ये 'विरोधे त्वनपेक्षं स्यात्' इति जैमिनिसूत्रमेवोपात्तम्। सूत्रभाष्यादिष्विति किं तत्? सत्यम्। किं जैमिनिसूत्रेषु तद्भाष्येष्वेव प्रद्वेषोऽस्माकम्? 'मीमांसाशास्त्रम् 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम्' इति हि **श्रीभाष्यकाराः।**

**स्यादन्योन्यं विरोधे त्विह बलनियतिस्सात्त्विकत्वादिभेदात्**
**मात्स्यादौ दर्शितं तत् श्रुतिहतिरहितैस्तत्परैरेव वाक्यैः ॥ ११९ ॥**

**[पाशुपताद्यागमानां स्थानम्]**

343. **भागे वेदाविरुद्धे पशुपतिकपिलाद्यागमाः स्युः प्रमाणम्**
**मोहाद्यर्थे तु शेषं मुनिभिरभिहितं यत्र मज्जन्ति डिम्भाः ।**
**भूयस्यर्थे प्रधाने विहतिमति सतां संशयश्च क्वचित् स्यात्**
**श्रुत्या बाधं न रुन्धे श्रुतिसहपठितिर्हेत्वहन्तव्यता च ॥ १२० ॥**

---

**पुराणप्रभृतिषु**=श्रुतिविरोधे **तद्वत् नीतिः**=परिहरणनीतिः ग्राह्या । कुतः? **भविनाम्**=संसारिणाम्, चतुर्मुखपर्यन्तास्सर्वेऽपि संसारिण एव । **विभ्रमादेः**, आदिना समयानुसरणादि ग्राह्यम्, **संभवात्** । कालाधिकारानुसरणस्यापि उपदेष्टुरावश्यकत्वात् । ननु तर्हि मन्वादेरपि भवित्वात्तेषां वा वचने कथमाश्वास इत्याक्षेपे, समाधानान्तरमाह— **इह**=एतद्विषये **अन्योन्यं विरोधे तु बलनियतिः**=बलाबलव्यवस्था **सात्त्विकादिभेदात्**=सात्त्विकराजसतामसभेदात् **स्यात्** । संसारिजीवेषु सात्त्विकराजसतामसभेददर्शनात्, तदनुगुणं पुराणान्यपि त्रिविधानीति विरोधपरिहारो ज्ञेय इत्यर्थः । अत्र किं प्रमाणमित्यत्र— **मात्स्यादौ**=मात्स्यपुराणादौ **श्रुतिहतिरहितैः**=श्रुतिविरोधरहितैः **तत्परैः**=विरोधपरिहारैदंपर्येण प्रवृत्तैः **वाक्यैः तत्**=विरोधशमनं प्रदर्शितम् । यथा— 'अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः॥ संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते । सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धाः गमिष्यन्ति परां गतिम्' इति ॥

**अत्रेदमवधेयम्**—पुराणानां परस्परविरोधपरिहारे वक्तव्यं सर्वं नायकसरे गतम् ॥
अव्यवस्था पुराणानां दृश्यते बहुधा यतः । तद्द्रष्टृभिस्तु ज्ञायेत क्लेशो वाचामगोचरः ॥
एकैवास्ति गतिस्तत्र त्वध्यात्मपदरोहणम् । यावन्न गच्छेत् पुरुषः देवतावादतो बहिः ॥
तावत्तु नूनं स्यादेव वादो बहुविधो नृणाम् । अध्यात्ममार्गाश्रयणमेकमेव हितं भवेत् ॥ ११९ ॥

पाञ्चरात्रस्य प्रामाण्यं प्रतिष्ठापयिष्यन्, तत्पीठिकात्वेन पाशुपताद्यागमान् विमृशति—**भाग** इत्यादि। **पशुपतिकपिलाद्यागमाः**=पाशुपतादिशैवागमाः, सांख्यागमाश्च **वेदाविरुद्धे भागे प्रमाणम् स्युः**, न सर्वांशे। नाप्यप्रमाणं सर्वांशे इति पूर्वपक्ष्याशयः । यथा वा पुराणानां परस्परविरोधेऽपि सात्त्विकादिविभागादिना सर्वं प्रमाणमित्युच्यते, तथात्रास्तु का हानिरिति चेत्, पुराणेषु परस्परं विषयभेदात् तथा विभजनं सुकरम् । पाशुपताद्यागमानां तथात्वाभावात्, एकस्मिन्नेव विषये कथं विभागसंभव इत्याशंकायाम्—**शेषं तु**=प्रमाणेतरभागस्तु । **मोहाद्यर्थम्**=आसुरीप्रकृतीनां मोहनाय । तादृशभागं दृष्ट्वा सात्त्विकास्त्यक्त्वा गच्छन्तु इत्येतदर्थमेव **मुनिभिः**=कपिलादिभिः महर्षिभिः **अभिहितम्, यत्र**=यादृशेऽस्मिन् भागे **डिंभाः**=अपक्रमतयः **मज्जन्ति**=तत्रैव लीनाः समीचीनमपि भागं त्यजन्ति । इमां शङ्कां परिहरति—**भूयसीत्यादि** । **प्रधाने**=प्रधानभूत

**[पाञ्चरात्रस्य वैशिष्ट्यम्]**

**344. निर्दोषाम्नायमौलिश्रुतनिखिलजगन्मूलसर्वज्ञमूले**
**हेतुर्व्यूढे चतुर्धा क्वचिदपि न भवेत् विभ्रमः पञ्चरात्रे।**
**युक्ता भक्तानुकम्पागरिमसमुदिते विप्रलिप्साऽपि नास्मिन्**
**वेदाच्छ्रैष्ठ्योक्तिरर्थस्थितिविशदतया भूमविद्यादिवच्च ॥ १२१ ॥**

एव **भूयसि अर्थे**=बहुष्वर्थेषु **विहतिमति**=विरोधे स्पष्टे सति **क्वचित्** विषये **सतां संशयश्च स्यात्**। संशयितस्य कथं प्रामाण्याभ्युपगमः? ननु 'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः॥' (म.भा.) इति सांख्यपाशुपतादीनां हेतुभिरहन्तव्यत्वे, कथमेवं हेतुवादः क्रियत इत्यत्र—**श्रुत्येत्यादि**। एषामागमानाम् **श्रुतिसहपठितिः**='वेदाःपाशुपतम्' इति श्रुत्या सहपाठः **हेत्वहन्तव्यता च**=कुयुक्तिभिरखण्ड्यत्वं च **श्रुत्या**=वेदेन **बाधम्**=**बाधितत्वम् न रुन्धे**=न रुणद्धि। केनचिदुपाधिना सहपठनमात्रात्सर्वांशसाम्यं कथं भवेत्। एवं चेत् शुनामपि मघवता साम्यं स्यात्। शुनां मघवता पाठः शब्दशास्त्रे, इदं त्वर्थप्रधानशास्त्रमिति चेत्, अत्रापि 'आत्मप्रमाणान्येतानि' इत्युपाधिरुक्त एव। आत्मसद्भावाङ्गीकारप्रयुक्तगौरवात्, नैरात्म्यवादिनां माध्यमिकानामागमापेक्षया सहपठनम्। अंशतः प्रामाण्यात्सर्वप्रामाण्ये, अहिंसाङ्गीकाराद्बौद्धागमा अप्युपादेयाः स्युः। अतस्त आगमास्सर्वथा नोपादेया एव। वेदाविरुद्धांशे प्रामाण्याङ्गीकारेण साधनीयं किमस्ति वैदिकानाम्? तस्यार्थस्य वेदेनैव सिद्धत्वादित्याशयः॥

कियत् क्लिश्यन्ति गुरवः मुग्धो मा नश्यतादिति। समन्वयं तु वचसां कथंचित्प्रत्यपादयन्॥
तादात्विकी स्थितिस्त्वेवमासीत्, कालो गतस्तु सः। चिन्ता ह्यन्यादृशी कार्या ह्येतत्काले बुधोत्तमैः॥
ब्राह्मणाः के वैष्णवाः के के वा शैवास्तथापरे। वेदे जीवति सर्वार्थपूर्णे एते कुतोऽभवन्?॥
आगमा इति संज्ञायास्तात्पर्यं वा विचिन्त्यताम्। तस्य प्रतीपसंज्ञा च का वा स्यादिति चिन्त्यताम्॥
त्यक्त्वा मूलं वयं सर्वे बहुदूरं समागताः। मार्गं सम्यङ्न जानीमो बाला भ्रष्टा गृहादिव॥
आश्रयामः पुनरपि तपसा श्रद्धया सदा। वेदकल्पतरुं शीघ्रं स नः श्रेयो विधास्यति॥ १२० ॥

पाञ्चरात्रस्येतरागमाद्वैशिष्ट्यं प्रतिपादयति—**निर्दोषेत्यादि**। **निर्दोषाम्नायमौलिश्रुतनिखिलजगन्मूलसर्वज्ञमूले**=निर्दोषाः ये आम्नायाः=वेदाः, तेषां मौलिषु शिरस्तुल्यासूपनिषत्सु श्रुतः यः निखिलजगन्मूलम् **सर्वज्ञः**—परमात्मा, तन्मूले=तेनैवोपदिष्टे **चतुर्धा व्यूढे**=चतुःप्रकारैः विभक्ते पञ्चरात्रे **क्वचिदपि**=कस्मिंश्चिदपि विषये **विभ्रमः**=अप्रामाण्यशंकाहेतुभूतः भ्रमः **न भवेत्**=नैव संभवेत्। तन्त्रमन्त्रशिल्पसिद्धान्तभेदेन, क्रियाचर्यायोगज्ञानपादैर्वा चतुर्धा पाञ्चरात्रस्य विभागः दृश्यते। एतादृशस्य पाञ्चरात्रस्योपदेष्टा हि साक्षान्नारायण एवेति—'सांख्यस्य कपिलो वक्ता' इत्युपक्रम्य, 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्॥' इति स्पष्टमुच्यते। अतस्तत्र भ्रमप्रमदादीनां नावकाशः। ननु माभूद्विभ्रमः, प्रमादो वा। विप्रलिप्सा तु संभाव्यते। दृश्यते हि विप्रलंभः 'त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय' इति रुद्रस्य प्रेरणया भगवत इत्यत्र—**युक्तेत्यादि**। **भक्तानुकंपागरिमसमुदिते**=भक्तेषु अनुकंपाया यो गरिमा=आधिक्यम्,

[पाञ्चरात्रप्रामाण्यम्]

345. **जीवोत्पत्त्यादिवादो निगमवदिह, तन्नित्यतोक्तेश्च साम्यात्**
**जीवाद्याख्यानिरूढिस्त्वभिमतिभिदया स्याच्च सङ्कर्षणादौ ।**
**मन्वादेश्चोपजीव्यं हिततममिदमित्यादिकं भारतोक्तम्**
**तत् क्वाप्यैक्यं विकल्पः क्वचिदभिमतवत् तादृशाम्नायभेदात् ॥१२२॥**

---

तेन सहिते=अत्यन्तभक्तवत्सले **अस्मिन्**=भगवति नारायणे **विप्रलिप्साऽपि**=वञ्चनेच्छापि **न** । अत एव खल्वन्यं प्रेरयति तत्कार्ये । सापि तामसमोहनार्थम् । अत एव सात्त्विकानां कृते पाञ्चरात्रं स्वयमेवोपादिशत्। ननु 'साङ्गेषु वेदेषु निष्ठामलभमानश्शाण्डिल्यः पाञ्चरात्रमधीतवान्' इति वेदनिन्दायाः श्रवणात् कथमुपादेयं पाञ्चरात्रं वैदिकानामित्यत्र—**वेदादित्यादि** । पाञ्चरात्रस्य **वेदात् श्रैष्ठ्योक्तिः**=वेदादप्यलभ्यं पुरुषार्थं पाञ्चरात्रेण शाण्डिल्यो लेभे—इति कथनात् सिद्धं यत् वेदात् श्रैष्ठ्यम्, तदपि **अर्थस्थितिविशदतया**=अर्थस्य वेदार्थस्य=नारायणपारम्यरूपस्य स्थितेः अत्र विशदतया निरूपणात्, न तु वेदस्य हेयत्वप्रतिपादनाय । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वेदार्थविशदीकरणे पाञ्चरात्रमत्यभ्यर्हितमिति सूचनाय तथा प्रशंसा क्रियते । 'नाहं वेदैर्न तपसा न दानेन न चेज्यया' इत्युक्त्वा, 'भक्त्या त्वनन्यया शक्यः' इति भगवताभिधानम्, यथा न वेदनिन्दारूपम्, यतस्तत्रैव स एव 'वेदैश्च सर्वैरहमेव वेद्यः' इति प्राह, तद्वत् । अत्रैव दृष्टान्तः—**भूमविद्यादिवच्चेति** । भूमविद्योपक्रमे हि नारदः—'ऋग्वेदं भगवोऽध्येमि यजुर्वेदम्' इत्याद्यध्ययनेऽपि स्वस्यात्मज्ञानाभावं वक्ति । न तावता वेदाध्ययननिन्दा सा, किन्तु अध्येतुर्न्यूनतामेव तत्प्रकाशयेत्, अथवाऽध्यात्मविद्याया अत्यन्तगहनताम्, दौर्लभ्यं वा वदेत् । तद्वदेव 'चतुर्षु वेदेषु' इत्यादिकमपि । पाञ्चरात्रविषये वक्तव्यं सर्वं पूर्वमेव (नायक.) विस्तरेणोक्तम् ॥

सांख्याद्योगो गरीयानित्याह यन्माधवः स्वयम् । पर्याप्तं स्यात्तदेवात्र पाञ्चरात्रस्य वैभवे ॥ १२१ ॥

पाञ्चरात्रेऽपि वेदविरोधमाशंक्य परिहरति—**जीवेत्यादि** । **इह**=श्रीपाञ्चरात्रे **जीवोत्पत्त्यादिवादः**= 'वासुदेवात्संकर्षणो नाम जीवो जायते' इति जीवोत्पत्तिवादः, आदिपदात् 'संकर्षणात्प्रद्युम्नसंज्ञं मनः' इति संकर्षणपदवाच्यात् जीवात् मनस उत्पत्तेः ग्रहणम् । मनसस्तु अहंकारादुत्पत्तिः श्रौती । एवं वेदविरुद्ध-वादोऽपि **तन्नित्यतोक्तेः च**=जीवनित्यत्ववचनस्यापि **साम्यात्**=तत्रैव तथैव दर्शनात् **निगमवत्**=तथैव भवेत् । वेदेऽपि 'प्रजापतिः प्रजा असृजत' 'तोयेन जीवान् व्यससर्ज भूम्याम्' 'अजो नित्यः शाश्वतोऽयम्' 'नित्यो नित्यानाम्' इत्यादौ जीवोत्पत्तिनित्यत्वश्रुतिवत् सर्वं नेयम् । स्वरूपतो नित्यत्वम्, शरीरविशिष्टरूपेण जननं चाभिप्रेत्य निर्वाह उभयोस्समानः । एवम्—**संकर्षणादौ जीवाद्याख्या निरूढिस्तु**='संकर्षणो नाम जीवः' इति संकर्षणे जीवशब्दस्य प्रयोगश्च **अभिमतिभिदया च स्यात्**=तत्तत्तत्त्वाभिमानिरूपभेदात्तथा तथा व्यवहारश्च स्यात् । किञ्च इदं पाञ्चरात्रम् **मन्वादेश्च**=मनुप्रभृतीनामपि **उपजीव्यम्**=आश्रयणीयम् **हिततमम् इत्यादिकं च भारतोक्तम्**=महाभारत उक्तम् । **तत्**=तस्मात् **क्वापि**=कुत्रचित् **ऐक्यम्**=एकाभिप्रायत्वादविरोध

[पाञ्चरात्रेतराप्रामाण्यम्]

**346. सर्वे सर्वज्ञबुद्धेर्ननु विषयतया नित्यसिद्धाः कृतान्ताः**
**तस्मात् तेन प्रवर्त्ये सति समयगणे कस्यचित् को विशेषः ।**
**मैवम्; तत्त्वे विकल्पत्यजि विहतिमतामेकशेषत्वमानात्**
**तन्निष्ठा स्यात् कनिष्ठा; नमति न विदुषोऽनामिकादिः परस्मै ॥ १२३ ॥**

एव । **क्वचित् अभिमतवत् विकल्पः**=वेदे यथा 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति परस्परविरोधे विकल्पः, तद्वदत्रापि विरोधे विकल्पो ज्ञेयः । कुत इत्यत्र—**तादृशाम्नायभेदात्**= तादृशस्य प्रमाणमूर्धन्यस्य आम्नायस्य=एकायनीयशाखानाम्नः **भेदात्**=प्रसिद्धश्रुतेर्भिन्नत्वात् परस्परश्रुति-विरोधे क्रियादिषु विकल्पः, तत्त्वेषु तात्पर्यभेदेन समन्वयश्चेत्यादिकमुत्सर्गन्यायसिद्धम् । अतः पाञ्चरात्रं तु सर्वांशे प्रमाणम् । अधिकं **त्वागमप्रामाण्यपाञ्चरात्राधिकरणपाञ्चरात्ररक्षादिषु** द्रष्टव्यम् ॥

वस्तुतस्त्वत्र वक्तव्यं सर्वं पूर्वं तु विस्तरात् । अभ्यधायि पुनः पिष्टपेषणं विफलं किल ॥
'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । द्वाविमौ सुखिनौ लोके क्लिश्यत्यन्तरितो जनः ॥'
इत्येतच्छुकवाक्यं तत् सर्वकालहितं भवेत् । परं तु कष्टं द्वयमप्यत्यन्तं किं विधेमहि ॥
अस्त्येव भगवत्पादशरणागतिरप्यसौ । क्षुरधाराव्रतं सापि तथाप्यन्या गतिर्न हि ॥ १२२ ॥

पाञ्चरात्रविचारमुपसंजिहीर्षुः, परेषामन्तिमं ब्रह्मास्त्रमपि नारायणास्त्रेण विफलयति—**सर्व** इत्यादि । **सर्वे कृतान्ताः**=सिद्धान्ताः **सर्वज्ञबुद्धेः**=सर्वज्ञस्य परमात्मनो ज्ञानस्य विषयतया **नित्यसिद्धाः ननु**= नित्यमेव सिद्धाः किल! अन्यथा हि तस्य सर्वज्ञत्वमेव त्याज्यं स्यात् । अतश्च सर्वं सदा पश्यतः तस्य परमात्मनो ज्ञानविषयत्वात् सर्वे त्रैकालिकं सिद्धाः । त्रैकालिकं नित्यं सिद्धाः । **तस्मात्**=एवं सर्वेषामपि नित्यसिद्धत्वात् **समयगणे**=सकलसिद्धान्तसमुदाये **तेन**=नित्यसर्वज्ञपरमात्मनैव **प्रवर्त्ये सति कस्यचित्**= पाञ्चरात्रस्यास्य **को विशेषः**? 'तेन विना तृणाग्रमपि न चलति' इति न्यायेन सर्वस्यापि परमात्माधीनत्वे, अस्यैव नारायणप्रवर्तितत्वात् प्रामाण्यम्, न त्वन्येषाम् आगमानामिति कथं निर्णीयते भवता? तदेतन्निराकरोति— **मैवमिति** । कुतः? **तत्त्वे विकल्पत्यजि** सति—वस्तुनि विकल्पायोगेन, तत्त्वस्य सदैकरूपत्वे सिद्धे **विहतिमताम्**=परस्परविरुद्धानां मध्ये **एकशेषत्वमानात्**=एकस्यैव परिशेषावश्यकत्वात् **तन्निष्ठा**=पाञ्चरात्रस्य प्रमाणतमत्वम् **कनिष्ठा**=अद्वितीया कनिष्ठाङ्गुलीगणनीया, तस्याङ्गुलेः कनिष्ठत्वमेव प्रमाणमिति वा स्यात्, न त्वन्यत्र । **विदुषः**=तत्त्वतस्तत्त्वज्ञस्य **अनामिकादिः**=अनामिकाप्रभृतिरङ्गुलिः **परस्मै**=अन्यागमगणनाय **न नमति,** अतोऽद्वितीयं पाञ्चरात्रप्रामाण्यमित्यवधार्यताम् ॥

किमियं त्वार्भटी ब्रह्मन्! किं प्रश्नस्योत्तरं न्विदम्? किं कुर्मो वयमप्यत्र? यक्षस्यानुगुणो बलिः ॥
परमात्मैव न ज्ञातः, तं तु पृच्छसि बालवत् । किमुत्तरं ते वक्तव्यम् न जानीमस्तु वस्तुतः ॥
परमात्मा यदि ज्ञातः प्रश्नो नैवं भवेत्तव । त्वदन्तरेव स ह्यस्ति दृष्ट्वा तं पृच्छ कामतः ॥

**[स्मृतेःस्वरूपं विभागश्च]**

347. **अर्थे पूर्वानुभूते सहमितसदृशख्यात्यदृष्टप्रभेदैः**
**संस्कारानुग्रहे या परिणमति मतिः, सा स्मृतिस्त्रिप्रकारा।**
**याथार्थ्येऽपि स्वपूर्वानुभवमनुसरेत्; बाह्यशून्या न चैषा**
**हेतुश्चार्थक्रियादेः; स्मृतिवदनुभवोऽप्यस्ति नष्टादिकेषु ॥ १२४ ॥**

यस्य स्मरणमात्रेण देहविस्मरणं भवेत्। सर्वस्याप्युत्तरं लब्धुं शक्यं तस्य प्रसादतः॥
सृष्टिं भगवतः क्रीडाम् आहुर्व्यासादयः, शृणु। एवं नानाविधैर्जीवैः स क्रीडति जगत्प्रभुः॥
मतसिद्धान्तसमयपदानां न समानता। चिन्त्यतामर्थभेदं तं समस्या स्यात्समाहिता॥
यदि ज्ञातुं शक्यमिदं नन्द त्वं विवशो मुहुः। न शक्यं चेद्द्रुदन्नेव नयस्व निखिलं वयः ॥ १२३ ॥

एवं प्रमाणविचारे अन्तिमं शाब्दानुभवविचारं परिसमाप्य, अनन्तरं स्मृतिं विचिचारयिषुः प्रथमं स्मृतेः स्वरूपं तद्विभागं च प्रदर्शयति—**अर्थ** इत्यादि। **पूर्वानुभूते**=कदाचित् पूर्वमनुभूते **अर्थे**=विषये **सहमितसदृशख्यात्यदृष्टप्रभेदैः**=सहमितस्य सदृशस्य च **ख्यात्या**=दर्शनादिना **अदृष्टप्रभेदैः**=अदृष्टविशेषैश्च **संस्कारानुग्रहे**=संस्कारस्य उद्बोधे जाते **या मतिः परिणमति**=परिणामविशेषं प्राप्नोति **सा स्मृतिः त्रिप्रकारा**=त्रिविधा, स्मृतिहेतुभूतानुभवत्रित्वात्। अनुभवःखलु प्रमाभ्रमसंशयभेदेन त्रिविधः। तज्जन्यः संस्कारोऽपि त्रिविधः। तज्जन्या स्मृतिरपि त्रिविधा। संस्कारस्योद्बोधकानि च तद्वस्तुना सह दृष्टान्यवस्तु-दर्शनम्, सदृशवस्तुदर्शनम्, अदृष्टविशेषश्च। आद्यं हस्तिहस्तिपकयोस्सहदृष्टयोः कालान्तरेऽन्यतरदर्शनमन्य-स्मरणं जनयति। द्वितीयं तु शुक्तिदर्शनं रजतं स्मारयति। तृतीयं तु कार्यानुमेयम्, धर्माधर्माख्यस्यादृष्टस्याती-न्द्रियत्वात्। समये अपेक्षितस्मरणं धर्मात्। असमयेऽनपेक्षितस्मरणमधर्मात्। आद्यं सर्वविदितम्। द्वितीयं भोजनादावस्मरणीयवस्तुस्मरणम्। एवं स्मृतेरनुभवजन्यत्वेऽपि स्मृतेरव्यवहितपूर्वक्षणेऽनुभवस्याभावात्, अनुभवे सति च स्मृतेर्नैरर्थक्यात्, संस्कार एव स्मृतिकारणमातिष्ठन्ते विद्वांसः। तत्रापि प्रत्यभिज्ञाप्रत्यक्षेंऽशतस्संस्कार-जन्यत्वाच्च स्मृतेर्लक्षणं संस्कारमात्रजन्यत्वं वदन्ति। प्रत्यभिज्ञा त्विन्द्रियमप्यपेक्षते। अधिकमन्यत्र॥

स्मृतेः प्रमात्वस्यान्यमुखनिरीक्षणात् स्वतःप्रामाण्यवादिनां कथं स्मृतिर्यथार्था स्यादित्यत्र—**याथार्थ्येऽपि**=स्मृतेर्यथार्थत्वेऽपि **स्वपूर्वानुभवम् अनुसरेत्** स्मृतिः। तावता न याथार्थ्यभङ्गः। ज्ञानसामान्यस्य स्वतःप्रमात्वमुत्सर्गसिद्धमत्रापि नापैति। गृहीतग्राहित्वमात्रान्न ज्ञानानामयथार्थत्वम्। अनधिगतार्थगन्तृत्वस्य प्रमालक्षणत्वानङ्गीकारात्। स्मृतेरर्थजन्यत्वाभावं केचिद्वदन्ति। तदपि नेत्याह—**एषा**=स्मृतिः **बाह्यशून्या**=बाह्यार्थविषयिणी **न च**=नैव भवति। यतः स्मृतिः **अर्थक्रियादेः हेतुश्च**=व्यवहाररूपार्थक्रियाकारित्वादर्थ-विषयिणी, अर्थजन्या च सा। अर्थस्य नष्टत्वेऽप्यर्थजन्या कथमित्यत्र—**नष्टादिकेषु**=आदिपदेन भावि-परिग्रहः। भूतभविष्यद्विषयेषु **स्मृतिवत् अनुभवोऽपि अस्ति**=दृश्यत एव। अनुमानं शब्दश्च त्रैकालिकवस्तु-विषयके सर्वसंमते। प्रत्यक्षमेकमेव वर्तमानमात्रविषयकम्, वर्तमानवस्तुजन्यम्। शब्दानुमाने तु त्रैकालिकवस्तु-विषयके वस्तुनोऽभावेऽपि तयोरर्थविषयकत्वादर्थजन्यत्वमप्यावश्यकम्। शिष्टं समनन्तरश्लोके॥

[स्मृतेर्याथार्थ्यसमर्थनम्]

**348. पूर्वं श्यामत्वमात्रात् भवति न हि मितिः पाकरक्तेऽपि तद्धीः**
**तत्ताभानं तथा चेत्, प्रसजति तदिदं प्रत्यभिज्ञादिकेऽपि।**

**इदमत्रावधेयम्**—स्मृतिः प्रमाणं न वा? इति विचारोऽन्यः। प्रमाणानि कति? इति प्रमाणविभागप्रश्नोऽन्यः। विभागदृष्ट्या तु 'त्रिविधं प्रमाणम्—प्रत्यक्षानुमानशब्दभेदात्' इति **न्यायपरिशुद्धौ** (1-2) स्पष्टमभिधानात् त्रीण्येव प्रमाणानि। अत्र तु 'प्रत्यक्षादित्रयं च स्मृतिरिति च मतिः श्रुत्यभिष्टा चतुर्धा' (श्लो.31) इत्युक्तं यद्यपि। तथापि 'श्रुत्यभीष्टा' इति कथनात् श्रुतिप्रणयिनामयं भाव इत्युक्तं भवति। एवञ्चेत्, 'स्मृतिः प्रत्यक्षमैतिह्यम्। अनुमानं चतुष्टयम्' इति श्रौतक्रमदर्शने स्मृतिरेवाग्रताम्बूलमर्हति। नैतत् कस्यापि संमतम्। न वेयं श्रुतिः प्रमाणविभागायावतीर्णा। अतो वैदिकानां स्मृतेरत्यन्तमुपादेयत्वात्पृथग्गणनमिवार्हति। 'श्रुतिस्मृती' इति वक्तव्ये 'प्रत्यक्षानुमाने' 'दृष्टस्मृतिभ्याम्' इति खलु निर्दिशन्ति वैदिकाः। अतीन्द्रियविषये वैदिकानां श्रुतिरेव चक्षुः, स्मृतिरेवानुमानम्। तद्दृष्ट्या स्मृतिरप्रमाणमिति शब्दमपि श्रोतुं नेच्छेयुस्ते। एवंत्वेऽपि असंकीर्णविभागप्रदर्शनवेलायाम् न्यायपरिशुद्धिरेव ग्राह्या। धर्मशास्त्रपदपर्यायायाः स्मृतेश्च शब्दप्रमाण एवान्तर्भावः। अस्य स्मृतित्वसंज्ञा तु, यथा वा लोकप्रसिद्धा स्मृतिः, न तथा प्रत्यक्षस्मृतिः काचिदस्ति। अर्थान् तपोबलात् ज्ञात्वा, अनन्तरं तान् स्मृत्वा स्मृत्वा ग्रन्थरचनात् 'स्मृतिः' इति संज्ञा। स्मृतेरतिरिक्तप्रमाणत्वे तद्धेतोः संस्कारस्य प्रमाकरणत्वात् प्रमाणत्वप्रसङ्गः। एतत्तु दार्शनिकस्य कस्यापि नेष्टम्। अत्र कारणं कार्यानुमेयस्य संस्कारस्यातीन्द्रियस्य विचारानर्हत्वमेव, स्वप्रामाण्ये नियमेन परमुखनिरीक्षणं च। ज्ञानानां स्वतःप्रामाण्यवादिनामपि वेदान्तिनां स्मृत्यात्मकज्ञानस्य प्रामाण्यम्, तद्धेतुभूतानुभवाधीनमेव वाच्यम्, नान्या गतिः। एवं सति स्मृतेः स्वतन्त्रप्रमितिवर्गे ग्रहणं केवलं धर्मश्रद्धामूलकमेव ॥ १२४ ॥

ननु पूर्वं श्यामे, पश्चात् पाकवशात् रक्ते घटे श्यामत्वधीः कथं यथार्था भवेत्। एवञ्च रक्तत्वज्ञानं तत्र भ्रम एवेति स्मृतिः कथं यथार्था भवेदित्येतत्समाधत्ते—**पूर्व**मित्यादि। **पूर्वम्**=पूर्वकाले **श्यामत्वमात्रात्**=श्यामत्वसद्भावमात्रात्, अनन्तरम् **पाकरक्तेऽपि**=पाकेन रक्ते जातेऽपि घटे **तद्धीः**=श्यामत्वबुद्धिः **मितिः**=प्रमितिरूपा **न हि भवति**। अतो रक्ततादशायां श्यामत्वावगाहिनी स्मृतिः कथं यथार्था भवेदित्याक्षेपः। रक्ततादशायामस्तित्वेन श्यामत्वग्रहण एव विरोधः, न तु रक्ततादशायाः पूर्वकालिकत्वस्मरणमपि बाधितं भवेत्, 'पूर्वं न रक्तमासीत्' इति स्मृतिरेव बाध्यते। ननु 'सोऽयं रक्तः' इति ग्रहणे 'अयम्' इति प्रत्यक्षप्रतिपन्नं रक्तं घटं निर्दिश्य 'सः' इति रक्तताग्रहणे विरोधः कथं नेत्याशंक्य समाधत्ते—**तत्ताभानम्**='सः' इति रक्तताभानम् **तथा चेत्**=बाधितं खल्विति चेत्, तर्हि—**तदिदम्**=बाधितत्वम् **प्रत्यभिज्ञादिकेऽपि**=प्रत्यभिज्ञाप्रत्यक्षेऽपि प्रसजति। एवञ्च प्रत्यभिज्ञाया अयथार्थत्वे वस्तुस्थैर्यमेव न सिद्ध्येत्। अतश्च कालद्वयसंबन्धः एकस्य न विरुद्ध इति चेत्, कालभेदेन धर्मद्वयसंबन्ध एकस्याविरुद्ध एव 'बालो युवा जातः' इतिवत् ॥

**याथार्थ्यं पारतन्त्र्यात् न च गलति, न चेत्, अभ्युपेतातिवृत्तिः**
**वेदे मानैस्सहोक्ता स्मृतिरपि; विफला त्वक्षपादाद्यनुक्तिः ॥ १२५ ॥**

**[स्मृतेरपूर्वविषयकत्वासम्भवः]**

**349. जातः पूर्वानुभूत्या स्मृतिमुपजनयेत् क्वापि संस्कार एव**
**प्राग्दृष्टव्यक्तिमात्रप्रतिनियतिमती कीदृशादन्वयात् स्यात्।**
**मैवम्; कार्ये त्वबाध्ये ननु तदनुगुणः कल्प्यते हेतुयोगः**
**तज्ज्ञानोत्पाद्यभावः स इति च विदितः किं तदन्येन नाम्ना ॥ १२६ ॥**

---

ननु स्मृतिः स्वयाथार्थ्ये स्वहेतुमनुभवमेव निरीक्षत इति, स्वतो नास्य याथार्थ्यमिति चेत्— **पारतन्त्र्यात्**=तावन्मात्रपारतन्त्र्यात् **याथार्थ्यम्**=यथार्थता **न च गलति**=नापगच्छति। **न चेत्**=एवमनङ्गीकारे **अभ्युपेतातिवृत्तिः**=स्वाभ्युगमपरित्यागः। प्रत्यक्षापेक्षानुमानस्य, अनुमानापेक्षा च शब्दस्य संमतैव किल। ननु प्रत्यक्षापेक्षत्वमनुमानस्य न स्वप्रामाण्ये, किन्तु व्याप्तिदर्शन एव। एवं शब्दोऽपि प्रामाण्ये स्वहेतुभूतशब्दं न निरीक्षते, किन्तु शक्तिग्रहण एव। स्मृतिस्तु स्वप्रामाण्य एवान्यमुखं निरीक्षत इत्यस्ति महद्वैलक्षण्यमिति चेत्, तत्राह—**वेदे**='स्मृतिः प्रत्यक्षमैतिह्यम्। अनुमानं चतुष्टयम्' इति वेदे स्मृतिरपि **मानैः**=प्रत्यक्षादिप्रमाणैः सह **उक्ता**=कण्ठत एवाभिता। तर्हि गौतमसूत्रे कुतो नोक्तमित्यत्र—**अक्षपादाद्यनुक्तिः विफला**=गौतमेनापरिगणनमत्र प्रकृते विफलमेव, श्रुतिविरोधात्। आदिपदेन कपिलग्रहणम्॥

**वस्तुतस्तु** स वेदः प्रमाणगणनार्थं नागतः, यादृच्छिकानुवादमात्रः सः। किञ्च तत्र स्मृतिः=धर्मशास्त्रपदवाच्यं विद्यास्थानमभिधत्ते, न लौकिकीं घटादिस्मृतिमित्यादिकं पूर्वश्लोकोक्तं स्मर्तव्यम्॥

वैदिका वैदिका एव स्युश्चेन्नास्ति विपर्ययः। यदि स्युस्तार्किका एते क्लेशः स्यान्नैव संशयः॥
नप्रामाण्यं स्मृतेः प्रोक्तं तार्किकैरपि वस्तुतः। तस्याः स्वतन्त्रमानत्वं नेष्टं सर्वमनीषिणाम्॥
तदा खलु भवेन्मानं संस्कारोऽप्यधिकं बत। कस्यापि नेष्टमेतत्तु पूर्वोक्तं स्मर्यतामतः॥
निदर्शनं भवेदेतन्मर्यादातिक्रमे स्फुटम्। मर्यादास्त्येव शास्त्राणां सांकर्यं क्रमशस्त्वभूत्॥
गतानुगतिको लोकः काल एवात्र कारणम्। काले प्रदर्श्यते सर्वं सप्रमाणं सुविस्तरम्॥ १२५॥

ननु यदि स्मृतिरतिरिक्ता प्रमितिस्तर्हि तस्या अपूर्वविषयकत्वमावश्यकम्, अतिरिक्तप्रमितित्वं वा त्याज्यमित्याशंकां परिहरति—**जात** इत्यादि। **पूर्वानुभूत्या**=पूर्वानुभवेन **जातः संस्कार एव क्वापि**= कुत्रचिद्विषये कदाचित् **स्मृतिम् उपजनयेत्**। **प्राग्दृष्टव्यक्तिमात्रप्रतिनियतिमती**=पूर्वानुभूतवस्तुमात्रविषयिणीति **कीदृशात् अन्वयात्**=नियमात् स्यात्? एवमनुभूतं सर्वं स्मर्यत इति नियमाभाववत्, अननुभूतमपि स्मर्येतेति चेत्, **मैवम्**। अनुभूतं सर्वं न स्मर्यते किलेति, अननुभूतं स्मर्यतामित्याक्षेपः न संगच्छते। दृष्टस्य कारणोपपत्तिप्रदर्शनमात्रं शास्त्रकृत्यम्, न तु अनुभवोत्पादनमित्याह—**कार्ये**=कस्मिंश्चित् कार्ये **अबाध्ये सति तु, तदनुगुणः हेतुयोगः**=कारणसंबन्धः **कल्प्यते ननु**=कल्प्यते किल, न त्वदृष्टापादनं कल्पयितुं

**[उपमानं नातिरिक्तप्रमाणम्]**

**350. तुल्यात् तुल्यान्तरे धीः स्मृतिः; इयमिव गौः सेति बोधोऽनुमानम्
यत्तुल्यो यः स चैतत्सम इति निजयोर्हस्तयोर्व्याप्तिसिद्धेः ।**

शक्यम । प्रकृते तु दर्शनमेतावदेव—**तद्ज्ञानोत्पाद्यभावः स**=स्मृतिरूपो ज्ञानविशेषः यद्विषयकः, तद्विषयकज्ञानेन उत्पाद्यत्वमेवेति **इति च विदितः**=लोकेऽनुभवसिद्धः । 'सः' इति संस्कारो वा । अनुभवसंस्कारस्मृतयः समानविषयकतयैवानुभवसिद्धा इति **तदन्येन**=कार्यकारणभावातिरिक्तेन **नाम्ना किम्**=किं साधनीयम् । अतः अनुभूतं सर्वं न स्मर्यत इतिवत्, अननुभूतमपि स्मर्यतामित्यापादनं न कर्तुं शक्यम् ॥

श्रुतिष्वदृष्टमपि हि धर्मशास्त्रेषु कथ्यते । मुनिभिःकथमित्येतत् विचारो युज्यतेऽत्र हि॥
अदृष्टं स्मर्यते चेद्धि स्मृतिः सा तु कथं भवेत्? लोके स्मृतिर्दृश्यतेऽन्या धर्मशास्त्रं स्मृतिः परा ॥
दृष्टं यत् स्यात्तु मुनिभिः स्वान्तर्योगस्य वैभवात् । व्युत्थिताः ते तु तत्स्मृत्वा प्रोचुस्तस्मात् स्मृतिः स्मृता ॥
अतस्तत्राप्यनुभवमूलत्वं स्मृतिलक्षणम् । वर्तते धर्मशास्त्राणामिति ज्ञेयं मनीषिभिः ॥ १२६ ॥

परसंमतामुपमानस्यातिरिक्तप्रमाणतां निरस्यति—**तुल्यादिति** । उपमानस्वरूपं नैयायिका अन्यथा प्रदर्शयन्ति, अन्यथा च मीमांसकाः । गवयपदस्यार्थमजानन् कश्चिदारण्यकपुरुषं पृच्छति । स च गृहे वर्तमानं गावं प्रदर्श्य 'एतत्संदृशः गवयः' इति वदति । कालान्तरे अरण्यं गतः, गवयं यदा पश्यति, तदा तत्सादृश्यं स्वगृहे वर्तमाने गवि स्मरति । तेन च 'अयं गवयः' इति जानातीति मीमांसकाः । नैयायिकास्तु, गवयप्राणिदर्शनिन गृहे विद्यमानगोः स्मरणमात्रेण, पुरोवर्तिनि गोसदृशे प्राणिन्युपसंहारमन्तरा गवयपदार्थनिर्णयः कथं भवेत्? अतो नेदमुपमानम् । किन्तु—आरण्यकपुरुषवाक्यं श्रुत्वा यदा कदाचिद्वनं गतः, यदा गवयप्राणिनं पश्यति, तदाऽऽरण्यकपुरुषवाक्यार्थं 'गोसदृशो गवयपदवाच्यः' इत्येवंरूपं स्मरन्, अस्य प्राणिनः गोसदृशत्वात् 'अयं गवयः' इति गवयपदसंज्ञायाः संज्ञिनं तं निश्चिनोतीत्याहुः । तयोः प्रथमं मीमांसकमतं प्रत्याह—अरण्ये गवयं पश्यन् 'मदीया गौः गवयसदृशः' इति सदृशगोस्मरणमुपमानम्? उत सादृश्यप्रतीतिमात्रमुपमानम्? आद्ये तु—**तुल्यात्**=पुरोवर्तिनः गवयस्य तुल्यस्य दर्शनात् **तुल्यान्तरे**=तत्सदृशवस्त्वन्तरे गृहवर्तिनि गवि **धीः**=या बुद्धिः, सा **स्मृतिरेव**, नातिरिक्तं किञ्चित् । द्वितीयं प्रत्याह—**सा गौः**=मदीया गौः **इयमिव**=पुरोवर्तिगवयसदृशः इति बोधस्तु अनुमानम्, नान्यत् । अनुमाने व्याप्तिमुपपादयति—**यदित्यादि** । **गौः**=मदीयो गौः एतद्गवयसदृशः, एतद्गवयगतसादृश्यप्रतियोगित्वात्, **यश्च यत्तुल्यः**=येन तुल्यः, **स च एतत्समः, इति निजयोः हस्तयोः** दृष्टान्तत्वेन **व्याप्तिसिद्धेः** अनुमानमेव तत् । 'तुल्यवित्तिवेद्यत्वन्यायः' इति किल प्रसिद्धम् । एतच्चानुमानमेव ॥

सुभगाभिक्षुकन्यायं बुधाः प्रायोऽनुकुर्वते । किं कारणं स्याज्जानन्तु मध्यस्थाः कुशला जनाः ॥
तेन प्रोक्तं कथं सोऽहमङ्गीकुर्यामिदं न्विति । भावयन्ति मुधा हन्त! कारणं स्पष्टमेव हि॥
अवर्धतैवं शब्दानां राशिः सागरसन्निभः । मज्जयन्ति जनान्, अन्ते मज्जन्ते स्वयमप्यमी॥

**चिह्नोन्नीते निमित्ते पदमपि विदितं शक्तमाप्तातिदेशे**
**व्युत्पत्तिर्लक्षणैः स्वैः क्वचिदपि न भवेदन्यथाऽतीन्द्रियेषु ॥ १२७ ॥**

नैयायिकं प्रत्याह—**निमित्ते**=गवयपदप्रवृत्तिनिमित्ते **चिह्नोन्नीते**=चिह्नैः=गोसदृशचिह्नैः **उन्नीते**=ऊहिते सति **आप्तातिदेशे**=आप्तोपदेशविषये प्राणिनि **पदमपि**=गवयादिपदमपि **शक्तम्**=बोधनशक्तिविशिष्टम् विदितम् भवति । एवं शक्तिग्रहणम् सादृश्यानुयोगिनि प्रत्यक्षे सत्येव भवतीति न नियमः । **अन्यथा**=तत्प्रत्यक्ष एव शक्तिग्रहो भवतीति नियमश्चेत्, **अतीन्द्रियेषु**=श्रुत्येकसमधिगम्येषु ब्रह्मेन्द्रादिषु **स्वैः**=तत्तदसाधारणैः **लक्षणैः व्युत्पत्तिः**=शक्तिग्रहणम् कदापि **क्वचिदपि**=कस्मिंश्चिदपि विषये **न भवेत्**, तेषां सर्वथाऽतीन्द्रियत्वात् । तथा चातीन्द्रियवस्तुव्यवहार एव लुप्येत । वस्तुतस्तु प्रत्यक्षस्थलप्रदर्शनं सुग्रहत्वायैव ॥

एवं बहूनामर्थानां प्रत्यक्षासंभवेऽपि नः । लौकिके वैदिके वापि व्यवहारः प्रवर्तते ॥
रामकृष्णादयश्शब्दाः, तथा देशान्तरार्थकाः । शब्दाः सर्वैः प्रयुज्यन्ते निरातङ्कैः स्वदृष्टवत् ॥
व्यवहाराः किल प्राय एवमेव चरन्ति हि । सादृश्यमूलं सर्वं हि ज्ञायते सर्वदा जनैः ॥
सादृश्यवैभवादेव लोको व्यवहरत्यभीः । शक्तिग्राहकमानं तत् वस्तुग्राहकवत्कृतम् ॥
सर्वं विचारं संत्यज्य प्रगाढं चिन्त्यतां बुधाः! ज्ञायेतोपमितेःस्थानं यद्दत्तं तन्महर्षिभिः ॥

**वस्तुतस्तु**—इन्द्रादिपदानां नियमेन परोक्षार्थविषयबोधजनकत्वात्, तत्रोपसंहारः कर्तुमशक्य इति भीत्यैव मीमांसकाः, अप्रसिद्धपदार्थस्य प्रसिद्धे प्रत्यभिज्ञानमेव उपमानमिति व्याचख्युः । परन्तु इन्द्रादिपदानां कथं शक्तिग्रहः? इति समस्यायाः परिहारः, अस्मत्परिचिते वस्तुन्युपसंहारेण कथं भवेत्? लौकिकेऽपि हि विषये द्वीपान्तरादौ वर्तमानानां नदीपर्वतादीनाम् राज्ञां राजमात्राणां वा संज्ञायाः श्रवणेऽपि बोधादिकं सर्वानुभवसिद्धं सादृश्यमूलकमेवेति सर्वहृदयसाक्षिकम् । अतश्च परोक्षेऽपि विषये मानसिकः ज्ञानलक्षणामूलक उपसंहार इत्येव वक्तव्यम् ।एवञ्चोपमानाख्यं प्रमाणमेव किञ्चिन्न स्याच्चेत्, प्रायस्सर्वैः मूकैरेव भवितव्यं भवेत् । लोके हि प्रत्यक्षप्रमाणस्य विषयोऽत्यन्तमल्प एवेति सर्वेऽपि जानन्ति । तदपेक्षयानुमानस्य व्याप्तिरधिका । एतदपेक्षयापि शब्दस्य व्याप्तिरधिका । स चाप्यत्यन्तातीन्द्रियपारलौकिकादिविषये उपमानाधीनस्वरूपः । बाला अपि इतिहासपुराणादिश्रवणकुतूहलिताः रामकृष्णादिशब्दानामर्थमनायासेन सहजत एव जानन्तस्संतुष्यन्ति । अन्नस्य तृप्तिसाधनत्वमनुमानाधीनमपि, प्रत्यक्षं मन्यन्तेऽभ्यासातिशयात् । तद्वदुपमानमपि वस्तुग्राहकमिव संवृत्तम् । अत एव महर्षिः वस्तुग्राहकप्रमाणमध्ये उपमानमप्यगणयदित्यहो कियान् सूक्ष्मदर्शी सः। अन्यथा हि वेद एव निरर्थकः स्यात् । तर्ह्याचार्याः कुत एतन्नागणयन्निति चेत्, शक्तिग्राहकप्रमाणत्वमात्राकारेण तथाऽकुर्वन् । उक्तं चासकृत्—शास्त्राणां मर्यादोल्लङ्घनं बौद्धैरुपक्रान्तमनन्तरं निर्विशेषाद्वैत्यादिभिरनुसृतमाचार्याणामपि दुस्त्यजमभूत्कालप्रभावादिति । अन्ततः शिष्यबुद्धिपरीक्षणार्थं वेत्यवगन्तव्यम् ॥

तादात्विकी स्थितिर्हेतुः सर्वत्राप्यवलोक्यताम् । आचार्या अपि किं कुर्युः शिष्यवात्सल्यमूर्तयः॥ १२७॥

[अर्थापत्तिर्नातिरिक्तं प्रमाणम्]

**351.** **अर्थापत्तिः परोक्ता न पृथगनुमितेर्व्याप्तिबोधादिसाम्यात्**
**अव्याप्यानामयुक्तिर्न हि भवति; न चाव्यापकाः स्थापकाः स्युः ।**
**जीवन् क्वापीति बोधो न गृह इति मतिं निश्चितां नोपरुन्धे**
**नातस्तच्छान्तये सा; न यदि, सममिदं सम्मते चानुमाने ।। १२८ ।।**

उपमानवत् अर्थापत्तेरप्यतिरिक्तप्रमाणतां निराकरोति—**अर्थापत्तिरिति** । **परोक्ता**=मीमांसकोक्ता **अर्थापत्तिः व्याप्तिबोधादिसाम्यात्**=व्याप्तिज्ञानादिसामग्रीणां समानत्वात् **अनुमितेः**=अनुमित्यपेक्षया **पृथक् न** । **अव्याप्यानाम्**=व्याप्तिरहितानाम् **अयुक्तिः**=अनुपपद्यमानता **न हि भवति** । **अव्यापकाश्च स्थापकाः**= नियामकाः **न च स्युः** । व्याप्ये सति हि व्यापकेन भाव्यमेव । व्यापकाभावे च व्याप्यमपि नोपपद्येत इति खलु अनुमानम् । तदत्रापि समानम् । ननु प्रमाणद्वयविरोधपरिहारोऽर्थापत्तिसाध्यः । जीवतो देवदत्तस्य गृहासत्त्वे बहिस्सत्त्वनिर्णयः खल्वर्थापत्त्या भवति । अत्र जीवनप्रमाणं तस्य देवदत्तस्य सत्त्वमात्रं बोधयति । प्रत्यक्षप्रमाणं तु गृहासत्त्वं वक्ति । एवं जीवनप्रमाणस्य प्रत्यक्षस्य च विरोधे, बहिस्सत्त्वनिर्णयमन्तरा तत्परिहारो नैव भवतीत्यर्थापत्तेः प्रयोजनमेवानुमानादन्यदिति नानुमानमर्थापत्तिरिति चेत्, तत्राह—**जीवन्नित्यादि** । **क्वापि जीवन्**=गृहे वा बहिर्वा जीवन् देवदत्तः इति बोधः **न गृहे**=गृहे नास्ति इति **निश्चितां मतिम् नोपरुन्धे**=न प्रतिरुणद्धि । जीवनं गृह एवेति न हि निर्बन्धयति जीवनबोधकं प्रमाणम् । अतस्तयोर्विरोधप्रसङ्ग एव नास्ति । **अतः**=विरोधाभावादेव **तच्छान्तये**=**विरोधशान्तये सा**=अर्थापत्तिः **न**=नाङ्गीकार्या । **न यदि**= एवमनङ्गीकारे **संमते**=संप्रतिपन्ने **अनुमाने च**=धूमात् वह्न्यनुमानादावपि **इदम्**=एवमनुपपत्त्यापादानम् **समम्**=समानमेव ।।

जीवनं सत्त्वव्याप्तम् । सत्त्वं च गृहे बहिर्वा । गृहे तु नास्ति । अर्थात् बहिस्सत्त्वे पर्यवस्यति । 'पीनो देवदत्तः, दिवा न भुङ्क्ते' इत्यादावपि पीनत्वं भोजनव्याप्तम् । भोजनं च रात्रौ, दिवा वा इति न ज्ञायते । दिवा यदि न भुङ्क्ते अर्थात् रात्रिभोजने पर्यवस्यति । एवमेव धूमः वह्निव्याप्तः । अतश्च वह्निमन्तरा धूमस्य सत्त्वमनुपपन्नम् । वह्निस्तु परोक्षोऽपरोक्षो वा भवेत् । यदा अपरोक्षत्वं नास्ति, यतः प्रत्यक्षतो न दृश्यते, तदा अर्थात् वह्नेः परोक्षत्वे पर्यवसानम् । द्वयोः प्रमाणयोः विरोधशमनमपि अर्थापत्तौ अनुमाने च तुल्यम् । पीनत्ववत् धूमदर्शनम् । भोजनस्थाने वह्निः । यथा भोजनं रात्रौ वा स्यात्, दिवा वा, एवं वह्निः प्रत्यक्षो वा परोक्षो वा स्यात् । दिवाभोजनादर्शनात् यथा रात्रिभोजने विश्रान्तिः, तथैव वह्नेः प्रत्यक्षतोऽदर्शनात् परोक्षत्वे विश्रान्तिः । एवमुभयोः समानयोगक्षेमत्वात् अर्थापत्तिः अनुमानमेव । विस्तरो **न्यायमञ्जर्यादौ** । तथा चात्र निर्णयः—प्रमाणानि सर्वाण्यपि नैकरूपतया प्रवर्तन्ते । सुसूक्ष्मो भेदस्तत्र तत्र विषयाद्यनुरोधेन भिद्येतैव । तावत्सूक्ष्मान्तरमादाय भेदकल्पने प्रमाणानामियत्तैव न स्यात् ।।

यदर्थं निर्मितं शास्त्रमृषिभिः क्रान्तदर्शिभिः । तथैव तद्रक्षणीयं कलहस्तु वृथा मतः ।। १२८ ।।

[अभावो नातिरिक्तं प्रमाणम्]

**352. तत्तद्भावैरभावव्यवहृतिनियतौ मानमन्यत् किमर्थं**
**स्मर्तव्यस्मृत्यभावात् परमनुमिमते प्रातरश्वाद्यभावम्।**
**स्यादक्षाद्भावधीवत् विमतिविषयधीरन्वयादेस्समत्वात्**
**भावग्राहीण्यभावं तदुचितसहकार्यागमे बोधयन्ति ॥ १२९ ॥**

एवं भाट्टसंमतमभावाख्यं प्रमाणमपि प्रतिक्षिपति—**तदित्यादि**। **तत्तद्भावैः**=अभावस्य भावान्तर-रूपत्वात् तत्तद्भावपदार्थैरिव **अभावव्यवहृतिनियतौ**=अभावव्यवहारस्य व्यवस्थापने सति, एतदर्थम् **अन्यत्**=अतिरिक्तम् **मानम्**=अभावाख्यम् अनुपलब्ध्याख्यं वा **किमर्थम्?** अतो नास्त्यतिरिक्तम्। ननु—प्रातश्चत्वरं गतः कश्चित्। सायं तम् अन्यः पृच्छति 'प्रातश्चत्वरे अश्व आसीद्वा' इति। 'नासीत्' इति प्रतिवक्ति। 'यदि तत्र प्रातः अश्वस्तिष्ठेत्, उपलभ्येत। तथानुपलंभान्नासीदश्वः' इति खलु तदर्थः। अतोऽनुपलंभः प्रमाणमावश्यकमिति चेत्, तत्राह—**स्मर्तव्येत्यादि**। **परम्**=किन्तु **स्मर्तव्यस्मृत्यभावात्**=स्मर्तव्यस्याश्वस्य स्मृत्यभावादेव, **प्रातः अश्वाद्यभावम् अनुमिमते** जनाः। प्रातश्शून्यचत्वरदर्शनात्, 'तत्राश्वो यदि स्यात्, दृश्येत सः। यदि दृष्टः, तर्हि स्मर्येत। अस्मरणात् नासीदश्वः' इति खलु तदभि-प्रायः। तथा च प्रतियोगिस्मरणपूर्वकशून्यचत्वरस्मरणमेवाश्वाभावस्मृतौ कारणमिति अश्वाभावः चत्वररूप एवेति प्रमेयस्यातिरिक्तस्याभावादतिरिक्तं प्रमाणमपि नापेक्षितम्॥

ननु नेदमश्वाभावस्मरणरूपम्, प्रातस्तदनुभवाभावात्। स्मरणं प्रति पूर्वानुभवस्यावश्यकत्वात्। अतो विलक्षणं ज्ञानमिति, तत्करणमतिरिक्तमेवेति चेत्, तर्हि तद्ज्ञानं किंरूपमिति वक्तव्यम्। उत्तरस्य दौर्लभ्यात् नास्त्यभावाख्यं प्रमेयमित्यादिकमग्रे (अद्रव्य.129-131) भविष्यति॥

अभावस्य भावान्तररूपत्वात्तस्य चाक्षुषत्वेऽनुमानमप्याह—**स्यादित्यादि**। **विमतिविषयधीः**= विवाद-विषयस्याभावस्य धीः **अन्वयादेः**=अन्वयव्यतिरेकयोः **समत्वात् भावधीवत्**=भावपदार्थप्रत्यक्षवदेव **अक्षात्**=तत्तदिन्द्रियात् **स्यात्**। 'अभावबुद्धिः इन्द्रियजन्या, इन्द्रियान्वयव्यतिरेकानुविधायित्वात्, घटादिभावबुद्धिवत्' इत्यनुमानम्। ननु परस्परविरुद्धौ तत्तदभावौ कथमेकप्रमाणगम्यौ स्याताम्। तर्हि प्रमाणप्रमेयव्यवस्थैव न स्यादिति चेत्, तत्राह—**भावेत्यादि**। **भावग्राहीणि**=भावविषयकज्ञानजनकान्येव इन्द्रियादिप्रमाणानि **तदुचित-सहकार्यागमे**=अभावग्रहणोपयोगिसहकारिसमागमे **अभावम्**=तदभावमपि **बोधयन्ति**। यथा एक एव दण्डः घटजनकोऽपि भवेत्, घटध्वंसकोऽपि भवेत्। किं बहुना ! 'अन्नं मृत्युं तमु जीवातुमाहुः' इति श्रुतिरेव न श्रुता किम्? एवञ्च घटग्राहकमेव चक्षुः प्रतियोगिस्मरणप्रतियोग्यनुपलंभसहकृतं घटाभावमपि गृह्णाति। अत एव किल तार्किकाः 'येनेन्द्रियेण यद्गृह्यते, तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते' इति वदन्ति। अभावातिरेकवादेऽप्येवं चेत्, अभावस्यानतिरिक्तत्ववादिनां किमु वक्तव्यम्। अतोऽभावोऽपि नातिरिक्तं प्रमाणम्। अभावस्यानतिरिक्तता चाग्रिमसरे (129-131) व्यक्तीभविष्यति॥ १२९ ॥

[ऐतिह्यसम्भवौ नातिरिक्तप्रमाणे]

**353. ऐतिह्यं वृद्धवाक्यं बहुदिवसगतेर्यत्त्वनिर्धार्यमूलं**
**मानं चेत् आगमस्तत् तदितरदपि च स्यात् तदाभास एव।**
**लक्षादिभ्यः शतादिप्रमितिरनुमितिर्व्याप्यतादेरबाधात्**
**चेष्टालिप्यादि लिङ्गं शितमतिभिरतः शिष्टमप्येवमूह्यम्।। १३०।।**

[अधिकप्रमाणगणनानिर्वाहः]

**354. मानत्रित्वे तु मन्वाद्यनुमतिविषये तत्र यत् कैश्चिदाप्तै-**
**राधिक्यं क्वाप्यधीतं, तदपि सुघटितं गोबलीवर्दनीत्या।**
**उक्तार्थोदाहृतिर्वा भवतु बहुमुखी शिष्यमेधामहिम्ने**
**सर्वे च स्वेष्टतन्त्रेष्वनुकथनशतं निर्वहन्त्येवमूहैः।। १३१।।**

---

ऐतिह्यम्, संभवश्चेति प्रमाणद्वयमतिरिक्तमातिष्ठन्ते पौराणिकाः। तन्निराकरोति—**ऐतिह्य**मित्यादि। **यत्तु वृद्धवाक्यम्**=वृद्धानां वाक्यम् **बहुदिवसगतेः**=बहूनां दिवसानाम्, संवत्सराणां वा गतेः गतत्वात्, अत एव **अनिर्धार्यमूलम्**=मूलप्रमाणं किमिति निर्धारयितुमशक्यम् **ऐतिह्यम्**=शब्दात्मकं किंवदन्तीरूपम् तत् **मानं चेत्**=प्रमाणं यदि भवेत् **आगमः**=शब्द एव, नातिरिक्तम्। प्रमाणं चेदिति कथमिति चेत्, बाधकप्रमाणादर्शनादेवेत्यवगन्तव्यम्। **तदितरदपि तत्**=अप्रमाणं चेत्, **तदपि तदाभास एव**=प्रमाणाभास एव=अप्रमाणमेव स्यात्।।

एवम्—**लक्षादिभ्यः**=लक्षसहस्रादिभ्यः **शतादिप्रमितिः**=लक्षे सहस्रादिरन्तर्गतः, सहस्रे शतादिरन्तर्गतः इति निर्णयोऽपि व्याप्यतादेरबाधात् अनुमितिकारणीभूतव्याप्यव्यापकभावादेः बाधाभावात् **अनुमितिः**=अनुमितिरेव। अयमेव **शते पञ्चाशन्न्याय** इत्युच्यते।।

एवम्—**चेष्टालिप्यादि लिङ्गम्**=हस्तचेष्टादिना अर्थबोधनात् चेष्टाप्यतिरिक्तं प्रमाणम्। **एवंलिपिः** अक्षरज्ञानजनकमपि अतिरिक्तं प्रमाणम्। एवमन्यदपि रेखागजादिकमूह्यम्। इत्याद्यपि लिङ्गरूपत्वादनुमानमेव। **अतश्शिष्टमप्येतादृशमन्यदपि शितमतिभिः**=निशितबुद्धिभिः ऊह्यम्। अतश्च प्रमाणानि त्रीण्येव।। १३०।।

एवं प्रमाणशास्त्रत्वेन प्रतिपन्ने शास्त्रे सत्यपि प्रथमं बौद्धैः, तदनन्तरमन्यान्यैरपि मर्यादाभङ्गे जाते, सयूथ्या वा अन्ये वा नूतननूतनतया यत्किञ्चिद्ब्रूयुश्चेत् किं कर्तव्यमिति शङ्कां समाधातुमनुसरणीयं क्रमं शिक्षयति—**माने**त्यादि। **मन्वाद्यनुमतिविषये**=मन्वादीनां संमते सति **मानत्रित्वे तु**=प्रत्यक्षम्, अनुमानम्, आगमश्चेति प्रमाणानां त्रित्वे तु **तत्र**=प्रमाणसंख्याविषये **आप्तैः कैश्चित् यत् आधिक्यम् क्वापि अधीतं** चेत्, **तदपि गोबलीवर्दनीत्या**=‘गामानय, बलीवर्दमानय’ इति न्यायेन **सुघटितम् भवेदेव**, आप्तोक्तत्वात्। **वा**=अथवा **शिष्यमेधामहिम्ने**=शिष्यबुद्धिवैशद्याय **बहुमुखी**=नानाप्रकारा **उक्तार्थोदाहृतिर्वा**= परैरुक्तस्यैवार्थस्य केवलमनुवादो वा स्यात्।।

[प्रमाणसङ्ख्यायां श्रीभाष्यकाराशयः]

355. प्रत्यक्षादित्रिकं यत् पृथगभिदधता भाष्यकारेण शेषं
नैव क्षिप्तम्; न चोपस्कृतमिह; न ततः स्यात् तदाधिक्यसिद्धिः ।
रीतिः सर्वोदितानामियमिति हि तथोदासि सङ्ख्याविवादे
तेनान्वारुह्य तत्तत्समधिकगणना स्वीकृता नस्सयूथ्यैः ।। १३२ ।।

[प्रमाणविचारफलम्]

356. मानं सर्वोपजीव्या प्रथममिह भवेदक्षजन्या मनीषा
तन्मूला चानुमा स्यात् तदुभयजनितस्त्वागमो द्विप्रकारः ।

---

कथमेवमव्यवस्थेत्यत्र— **सर्व** इत्यादि । **सर्वे** च शास्त्रकाराः **स्वेष्टतन्त्रेषु**=स्वसंमततत्तच्छास्त्रेषु **अनुकथनशतम्**=अनूक्तिपुनरुक्त्यादिरूपमनेकम् **ऊहैः**=ऊहापोहैः **एवम्**=एवमेव **निर्वहन्ति** । किं कर्तुं शक्यते? पुरुषाणां विचित्रबुद्धित्वात् । अतोऽस्माकमेव नायं दोषः, गुणो वा । अथवा त्रित्वादिसंख्याविषये किमर्थं वृथा कलहः? प्रधानविरोधाभावात् ।। १३१ ।।

ननु भोः! अस्तु भवदीया सरणिः, सयूथ्यानां वा । **श्रीभाष्यकाराणा**मस्मिन् विषये आशयः कः? इत्यत्राह— **प्रत्यक्षादी**ति । **प्रत्यक्षादित्रिकम्**=प्रत्यक्षमनुमानमागम इति प्रमाणत्रिकं **पृथक्**=प्रत्येकम् **अभिदधता**=प्रसङ्गादभिदधता **भाष्यकारेण**=श्रीभाष्यकारकृता **इह**=प्रमाणसंख्यादिविषये **शेषम्**=अधिकं प्रमाणम् **नैव क्षिप्तम्**=नैव निराकृतम्, **न चोपस्कृतम्**=नवा अङ्गीकृतमिति यत्, **ततः**=तावन्मात्रात् **तदाधिक्यसिद्धिः**=प्रमाणाधिक्यसिद्धिः **न स्यात्** । **सर्वोदितानाम्**=सर्वैरपि शास्त्रकारैरुदितानां प्रमाणानाम् **रीतिः**=प्रवृत्तिक्रमः **इयम्**=एवमेव इति हि संख्याविवादे तथा उदासि भाष्यकारैः । न हि वेदान्तशास्त्रं काकदन्तपरीक्षाशास्त्रम् । तदर्थमेव क्लृप्तानां तत्तच्छास्त्राणां सत्त्वे, सर्वमत्रैव कथं कर्तुं शक्यम्? **तेन**=एवमौदासीन्यप्रदर्शनेन **नः सयूथ्यैः**=एकदेशिभिः कैश्चित् **वरदनारायणभट्टारकादिभिः अन्वारुह्य**=परवादानुकरणेन **तत्तत्समधिकगणना**=चतुर्विधत्वपञ्चविधत्वादिरूपा अधिकप्रमाणगणना **स्वीकृता** । 'स्वयंसिद्धिस्तथा दिव्यं प्रत्यक्षमनुमागमः । पञ्च सन्ति प्रमाणानि जैमिनिव्यासयोर्हृदि ।।' इति वचनेनैतद् ज्ञायते । **प्रज्ञापरित्राण**वचनमिदं **न्यायपरिशुद्धा**वुदाहृतम् । स्वयं सिद्धिः=स्वप्रकाशरूपं ज्ञानम् । दिव्यम्=योगजम् । आहत्य प्रमाणानि पञ्च । एवं सयूथ्यानां मतभेदानां समन्वय उक्तरीत्या ज्ञेय इति भावः ।।

वादव्यसनिनो जाताः पण्डितास्सर्वदैव हि । वचनान्यवलम्ब्यैव विवदन्ते परस्परम् ।।
यदि विज्ञानमाश्रित्य दैवानुग्रहमूलकम् । अन्विष्येयुः परं सत्यं विवादो नैव संभवेत् ।।
यश्च मूढतमो लोक इत्याद्यं परमं हितम् । मा विस्मर कदापि त्वं सर्वसारतमं सदा ।।
अन्तराले तु मा तिष्ठ चिरकालं त्रिशंकुवत् । मूढो वा भव, बुद्धेस्त्वं पारं वा गच्छ मा चिरम् ।। १३२ ।।

एवं प्रमाणविचारस्य प्रयोजनं प्रदर्शयति— **मानमित्यादि** । **इह**=प्रमाणानां मध्ये **अक्षजन्या मनीषा**=इन्द्रियजन्या बुद्धिः प्रत्यक्षरूपा **सर्वोपजीव्या**=इतरप्रमाणानामपि प्राणप्रदात्री, सर्वैरपि आश्रयणीया ।

**मूलं न क्वापि बाध्यम्; क्वचिदधिकबलैर्मूलजातीयबाधः**
**स्यादेतैः कर्ममालाघटितभवघटीयन्त्रजभ्रान्तिशान्तिः ॥ १३३ ॥**

**प्रथमम्**=मुख्यम् **मानम्**=प्रमाणं भवति। तन्मूला च=**प्रत्यक्षमूला च अनुमा**=अनुमितिः **स्यात्**, व्याप्तिदर्शनादेः प्रत्यक्षरूपत्वात्। **तदुभयजनितः**=प्रत्यक्षानुमानमूलः। शब्दश्रवणं प्रत्यक्षरूपम्, शक्तिग्राहकप्रमाणं व्यवहारः आवापोद्वापादिः प्रत्यक्षानुमानरूपः। एतादृशः **आगमस्तु**=शब्दस्तु **द्विप्रकारः**=लौकिको वैदिकश्चेति। **मूलम्**=सर्वव्यवहाराणां मूलकारणं प्रत्यक्षमनुमानं शब्दो वा तु **क्वापि**=कुत्रापि **न बाध्यम्**=न बाधार्हम्, मूलघातप्रसङ्गादेव। ननु ज्वालाभेदानुमानेन ज्वालैक्यप्रत्यक्षं बाध्यत इति सर्वसंमतं खलु। एवं सति प्रत्यक्षं क्वापि न बाध्यमिति कथमित्यत्राह—**क्वचित्**=कुत्रचित् स्थलविशेषे **अधिकबलैः**=स्वतः बाधितुमशक्यत्वात् **अधिकबलैः**=अधिकबलवद्भिः मूलिप्रमाणैः **मूलजातीयबाधः** प्रत्यक्षाभासस्य बाधः, न तु मूलबाधः। तथा च 'मानं न क्वापि बाध्यम्' इत्यपि पठनीयम्। मानम्=प्रमाणं कुत्रापि न बाध्यते, किन्तु प्रमाणाभास एव बाध्यते, प्रमाणं तु अन्यथा व्यवस्थाप्यत इत्यर्थः। एवम्—**एतैः**=प्रमाणविचारैः **कर्ममालाघटितभवघटीयन्त्रजभ्रान्तिशान्तिः**=कर्मपरंपरया घटितः यः संसाररूपो घटीयन्त्रः उन्नमननमनाद्युच्चावचावस्थाघटितः यः संसाररूपो घटीयन्त्रः=जलस्य उपर्यानयनसाधन यन्त्रः, **तज्जः**=तज्जन्यः यो भ्रमः, तस्य **शान्तिः**=निवृत्तिः **स्यात्**=नूनं भवेत्॥

अत्रैवं **वैतण्डिकः** प्रत्यवतिष्ठते—सर्वमिदमापातरमणीयम्। सर्वप्रमाणमूर्धन्यमिति यदुच्यते प्रत्यक्षम्, तत् तदुपजीव्येनानुमानेन बाध्यते। यथा—ज्वालैक्यप्रत्यक्षं ज्वालाभेदानुमानेन बाध्यते। शुक्तिरजतादिप्रत्यक्षम्, आप्तवाक्येन बाध्यते। किं बहुना! शुक्तिरजतप्रत्यक्षम्, स्वयं समीपोपसर्पणेन 'नेदं रजतम्' इति प्रत्यक्षेणैव स्वीयेनैव बाध्यते। एवं बहुधाऽव्यवस्थादर्शनात् प्रमाणानां प्रामाण्यं दुर्निरूपम्। अतश्च एभिः न किञ्चिन्निर्णेतुं शक्यते। अत एव बाध्यबाधकभावस्यापि दुर्निरूपत्वात् सर्वमविचारितरमणीयम्, अत एवानिर्वचनीयञ्चेत्येतादृशविचारो व्यर्थ एवेति॥

**अत्रोच्यते**—प्रत्यक्षत्वं वा परोक्षत्वं वा बाध्यत्वे, बाधकत्वे च न प्रयोजकम्। किन्तु सावकाशं बाध्यम्, निरवकाशं बाधकमित्येव निष्कर्षः। सावकाशत्वं नाम अन्यथा नेतुं शक्यत्वम्, अत एव दुर्बलत्वम्। निरवकाशत्वं नाम अन्यथा नेतुमशक्यत्वम्, अत एव प्रबलत्वम्। तैलवर्त्यादिनाशात् ज्वालाभेदोऽनुमीयते। इदमन्यथा नेतुं न शक्यम्। ज्वालैक्यप्रत्यक्षं तु साजात्यादिमूलकत्वेन नेतुं शक्यम्, अत एव बाध्यम्। शुक्तिरजतस्थलेऽपि प्रत्यक्षाभासः शुद्धेन प्रत्यक्षेण बाध्यते, न तु प्रत्यक्षं प्रत्यक्षेण बाध्यते। ज्वालाभेदानुमितिरपि तैलनाशप्रत्यक्षमूलैवेति, लौकिकविषये प्रत्यक्षमेव सर्वोपजीव्यम्। अलौकिके तु विषये वेद एव सनातनं चक्षुः। अत एव सूत्रेषु श्रुतिपदस्थाने प्रत्यक्षदृष्टादिपदम्। एवं सूक्ष्ममतिभिरिदं सर्वं ज्ञातुं शक्यमिति, दुर्निरूपत्वकथनं बालिशभावमूलकम्, बुद्धिदौर्बल्यमूलकं वा। एवमेव बाध्यबाधकभावनिर्णय इत्ययमंशः 'स्मृत्यनवकाशदोषप्रसङ्गः' इति सूत्रोक्तन्यायमूलकः। अतश्च प्रमाणप्रमेयव्यवस्थादिकं सुनिरूपमेव॥

**अत्रेदमवधेयम्**—प्रमाणानां स्वरूपप्रवृत्त्यादीनां वैज्ञानिके निर्णये जाते, प्रमाणानां विषयव्यस्थया बाध्यबाधकभावादीनामपि सुनिर्णेयत्वात्, सर्वेऽपि वादविवादाः शमं गच्छेयुः। यथा वा ज्वालैक्यज्वालाभेद-प्रमाणयोः। तत्रहि—ज्वालाभेदानुमानं कारणविषयकम्। 'कारणभेदात् कार्यभेदः' इति सामान्यमुखव्याप्त्या किल ज्वालाभेदः सिद्ध्यति। एतद्व्याप्तेः निर्णयस्य 'एतत्पटः तत्पटभिन्नः, एतत्तन्तुभिन्नतन्तुजन्यत्वात्' इत्यादिस्थलान्तरव्याप्तिदर्शनाधीनत्वात् परंपरया प्रत्यक्षमेव तत्रापि मूलम्। एवञ्च ज्वालैक्यप्रत्यक्षं कार्य-विषयकम्, ज्ञानाभासरूपम्। ज्वालाभेदानुमानं तु कारणविषयकं विज्ञानरूपम्। अनुमानेन प्रत्यक्षबाधो नाम, विज्ञानेन ज्ञानस्यान्यथानयनमात्रम्, न तु ज्ञानस्य बाधः। कारणभेदेन कार्यभेदस्यावश्यंभावो हि विज्ञानाधीनः। अत एवैतन्निर्णयानन्तरमपि ज्वालैक्यदर्शनमप्यनुवर्तत एव, 'सैवेयं गूर्जरी' इतिवत्। एवञ्चाभिज्ञाप्रत्यभिज्ञयोर्मध्येऽभिज्ञा प्रबला, प्रत्यभिज्ञा तु दुर्बला, सावकाशा, साजात्याद्यवलम्बनत्वात्॥

'इदं रजतम्' इति प्रत्यक्षं तु 'नेदं रजतम्' इति प्रत्यक्षेणैव बाध्यते। अत्रापि 'नेदं रजतम्' इति प्रत्यक्षम्, 'इदं रजतम्' इति प्रत्यक्षाभासं सादृश्यमूलकत्वे पर्यवसाययति। सादृश्यमूलकं तु प्रत्यक्षं बाधकज्ञानानन्तरमपि भवत्येवेत्यादिकं विस्तरेण पूर्वमेवोपपादितम्। विज्ञानस्य मूलभूतं प्रत्यक्षं यदि भ्रमो भवेत्, तदा विज्ञानमपि दुर्बलमेव। यथा 'सैवेयं गूर्जरी' इत्यत्रैव, इयं प्रत्यभिज्ञा साजात्यमूला, उत व्यक्त्यैक्यमूला? इति संशये द्वेधाप्यनुभवस्य सत्त्वात्, द्विविधोऽप्यनुभवः प्रामाणिक एव। विशेषस्थले तु व्यक्त्यैक्यनिर्णायकव्यक्तिभेदनिर्णायकप्रमाणानुरोधेनैव तन्निर्णयः। एवमेव क्षणिकवादस्थिरत्ववादयोरपि ज्ञानविज्ञानभेदमूलकत्वान्न विरोधः। पदार्थास्सर्वेऽपि प्रतिक्षणं परिणामशीला इति को वा न जानाति। परन्त्वेतत् विज्ञानाधीनम्, ज्ञानं तु 'इदम्' इत्येवं साक्षात्काररूपम्। एवञ्च—

प्रत्यक्षमेव ज्ञानं स्यात् विज्ञानमनुमा भवेत्। शब्दस्तूभयमूलःस्यात्प्रमाणानामियं स्थितिः॥
विज्ञानस्यापि मूलं हि ज्ञानमेव भवेत्सदा। अतो ज्ञानस्य माहात्म्यं सर्वत्रैव प्रतिष्ठितम्॥
विज्ञानं तु विवेकाय नानुष्ठानाय कर्हिचित्। भिन्नक्षेत्रगते ह्येते वृथा चर्चा विवर्ज्यताम्॥

तथा हि—ज्ञानं हि प्रथमं प्रत्यक्षपरोक्षभेदेन द्विविधम्। प्रत्यक्षं 'साक्षात्करोमि' इत्यनुव्यवसाय-प्रयोजकमत्यन्तं प्रबलम्। इतरत्सर्वं परोक्षम् 'श्रृणोमि' 'अनुमिनोमि' 'स्मरामि' 'परिशीलयामि' इत्याद्यनु-व्यवसायप्रयोजकम्। मानवानां बुद्धौ परोक्षापरोक्षादिरूपाणामनुभवानामसंकीर्णं स्थानं वर्तते। एवं ज्ञान-विज्ञानयोरपि प्रत्येकं स्थानं वर्तते। व्यवहारास्सर्वेऽपि प्रत्यक्षानुमितिशाब्दरूपप्रमाणत्रयमूलाः, अथापि प्रत्यक्षमेव सर्वोपजीव्यम्। अत एवाचार्यैः—'परश्शतपरिक्षोदात्परस्तादपि वादिभिः। उपलंभबले स्थेयम्' (न्या.सि.1) इत्युदघोषि। अतस्सावकाशत्वनिरवकाशत्वे एव प्रतिबध्यत्वप्रतिबन्धकत्वप्रयोजके॥

ननु भोः! किमिदं बालानामिव नाट्यप्रदर्शनम्। कियद्गहनमिमं प्रतिबध्यप्रतिबन्धकभावं महता परिश्रमेण निर्णीतवन्तो महामेधाविन इति न जानासि त्वमिव भाति। एवं हि प्रादर्शि—'लौकिकसन्निकर्षजन्य-दोषविशेषाजन्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति. अनाहार्यप्रामाण्यज्ञानानास्कन्दिततदभाववत्तानिश्चयः प्रतिबन्धकः'

[प्रमाणविवेचनमेव वादकृत्यम्]

**357. सर्वं सन्दिग्धसत्त्वं क्षणिकमगुणकं नित्यमाकस्मिकं वा**
**बुद्धिः कृत्स्ना न मानं निखिलमपि ततः स्यान्मृषा धीतरद्वा ।**

इति मूलरूपम् । विस्तरस्तु वाचामगोचरः । त्वं तु कूपकूर्म इव न जानासि किञ्चिदपीति भाति । एतदुपर्यपि कियद्दूरं गतास्ते इति किं जानीषे?

अये! शब्दाडम्बरप्रिय! कथं वा त्वं विहगराजराट्पदाश्रितानस्मान् ज्ञास्यसि? भवादृशैर्यावद्वा शब्दराशिमहारण्यं वर्धितम्, तत्सर्वमपि सावकाशनिरवकाशपदाभ्यां चुलकितमिवाभूत् । महर्षयःखलु न शब्दवर्धनप्रियाः । निष्कृष्टप्रमेयतत्त्वनिर्णयपरास्ते सर्वदा । एतत्पदयोरेव रूपान्तरेण विवरणपराणि लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यादिविशेषणानीति ज्ञायताम् ॥

'तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयः प्रतिबन्धकः' इत्येतावन्मात्रमेव प्रतिबध्यप्रतिबन्धकभावस्य मूलं रूपम् । एवं सति 'शङ्खः श्वेतः' इति निर्णयवतामपि पित्ताधिक्ये शङ्खःपीतः इति प्रत्यक्षं भवति । इदं ज्ञानद्वयमपि परस्परं प्रतिबन्धकं न भवत्येव । कुत इति चेत्, उभयोरपि सावकाशत्वात् । तत्र निदानम् 'शङ्खःपीतः' इत्यस्य दोषजन्यत्वमेव । दोषजन्यं हि ज्ञानं प्रतिबन्धकमपि न भवति, प्रतिबध्यमपि न भवति । एवमेव 'घटाभाववत् भूतलम्' इति ज्ञाने सत्यपि, यदि कश्चित्तत्र घटमानीय निक्षिपेत्, तदापि घटाभाववत्ताज्ञानं घटवत्ताज्ञानं प्रति न प्रतिबन्धकम्, घटवत्ताज्ञानं इन्द्रियसन्निकर्षजन्यत्वात् प्रबलम्=निरवकाशम् । घटाभाववत्ताज्ञानं तु भूतले घटसत्ताकाले अनिन्द्रियसन्निकर्षजन्यत्वात्, कालभेदेन नेतुं शक्यत्वात् सावकाशम्=अन्यथा नेतुं शक्यम्, अत एव दुर्बलम्, अत एव बाध्यञ्च । एतदर्थं लौकिकसन्निकर्षाजन्यत्वं प्रतिबध्यविशेषणम् । एवमेवानाहार्यत्वादीनि प्रतिबन्धकज्ञानविशेषणानि ज्ञेयानि । अतस्सर्वत्रापि बाध्यबाधकस्थले सावकाशं बाध्यम्, निरवकाशं बाधकमित्येव प्रमेयनिष्कर्षः । सावकाशमन्यथासिद्धम्, निरवकाशमनन्यथासिद्धमित्यपि समानम् । अतो बलाबलनिर्णयोऽप्येतन्मूलक एवेति प्राचीनप्रक्रिया चतुरस्रा ॥

आहत्य तु ऋजुमतयस्सर्वं ऋजुमार्गेणैव ब्रूयुः, न तु द्राविडप्राणायामेन । 'न हि भिक्षुकास्सन्तीति स्थाल्यो नाधिश्रीयन्ते' इतिवत् आपातबाध्यबाधकभीरुभिः यत्किञ्चिदपि सत्यं कदापि न ज्ञातुं शक्यम् । तत्रापि वैतण्डिकैः । सहजऋतुमतीनां तु सुज्ञं तत्सर्वमिति, बुद्धेरपलापो वा, वस्तूनामपहारो वा न कस्मा अपि फलाय कल्पेतेत्यवगम्यताम् । 'ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्' इत्युक्तिरत्रावधेया ॥

कथञ्चित् सात्त्विकी बुद्धिः वत्स! संपाद्यतां द्रुतम् । यथावदेव सर्वं हि तदा भायान्न संशयः ॥ १३३ ॥

प्रमाणानां विज्ञाननिकषापरीक्षणाभाव एव सर्वविधवादानां मूलमिति दर्शयति— **सर्वमित्यादि** । 'सर्वम्' इति उत्तरत्राप्यन्वेति । **सर्वमपि सन्दिग्धसत्त्वम्**=सत्ताया दुर्वचत्वात् सर्वेषामपि पदार्थानां सत्ता सन्दिग्धा, प्रमाणानामपीदं समानमेवेति **खण्डनकारः** । **सर्वं क्षणिकम्** इति **वैभाषिकसौत्रान्तिकयोगाचाराः** । **सर्वम् अगुणकम्**=निर्गुणमित्यत्रास्ति विशेषः— गुणनिषेधेन द्रव्यमात्राङ्गीकर्तारः **निर्विशेषाद्वैतिनः**।

**प्रख्योपाख्यादवीयः किमपि नियतिमन्नामरूपं च नेत्या-**
**द्युद्वेलापार्थजल्पान् अपहसितुमसौ वर्णितो मानभेदः ॥ १३४ ॥**

**[बुद्धिसरोपसंहारः]**

**358. प्रज्ञाव्युत्पत्तिपाकव्यवहरणफलश्रेणिनिःश्रेणिकायां**
**आरूढा निष्प्रकम्पा प्रमितिगुणकरालम्बनात् सत्परीक्षा ।**

द्रव्यं निषिध्य गुणमात्राङ्गीकर्तारः **सांख्याः, वैभाषिकाद्याश्च** । **सर्वं नित्यम्**=इति **सांख्याः** 'सर्वं सांख्यास्तु नित्यम्'(220) इत्यधिकरणसारावल्यामाचार्याः । अभिव्यक्तिवादिनः खल्वेते । **वा**=अथवा **सर्वम् आकस्मिकम्**= अनित्यमहेतुकं चेति कार्यकारणभावनिराकर्ता माध्यमिकः । **कृत्स्ना बुद्धिः**= सर्वमपि ज्ञानम् **न मानम्**=न प्रमाणम्, अनिर्वचनीयत्वादेवेति **अनिर्वचनीयतासर्वस्वकारः श्रीहर्षः**, एष एव **खण्डनकारः** । **ततः**=सर्वज्ञानस्याप्यप्रमाणत्वादेव निखिलमपि **मृषा**=मिथ्या स्यात् इति 'तद्गुरुः **माध्यमिकः**' इति **सर्वार्थसिद्धिः** । वा=अथवा **धीतरत्**=विज्ञानव्यतिरिक्तम् मिथ्या इति **योगाचाराः, निर्विशेषाद्वैतिनश्च** । **प्रख्योपाख्यादवीयः**=प्रख्या=बुद्धिः उपाख्या=व्यवहारः, एतदुभयदूरं तत्त्वम्, इदमित्थमिति व्यवस्थैव नास्ति, सर्वं सर्वात्मकम्, अत एव विरोधगन्धरहितम् **किमपि** तत्त्वम्, अत एव **नियतिमन्नामरूपं च न**=व्यवस्थितनामापि नास्ति, व्यवस्थितरूपमपि नास्ति इति **स्याद्वादी जैनः** । **इति**=एवंरीत्या वर्तमानान् **उद्वेलापार्थजल्पान्**=उद्वेलाः=मर्यादातीताः, अत एव **अपार्थाः**=अर्थरहिताः **जल्पाः, तान् अपहसितुम्**, न तु खण्डयितुम्, यद्बलेनैवं विवदन्त्येते, तदेव सर्वमूलमिदं तत्त्वमपलपेयुश्चेत्, नैते खण्डनायाप्यर्हाः, किन्त्वनुकंपार्हाः । सर्वमिदमाडोलातः आचापवर्गं या **भगवती सात्त्विकी बुद्धिस्सर्वा**नप्यविशेषेण वात्सल्यातिशयात् रक्षति, तादृश्याः 'प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिस्सा पार्थ! सात्त्विकी ।' इति भगवतैव प्रशस्यमानायाःसात्त्विक्या बुद्धेर्विषये अपचारस्य फलमिति सूचयत्याचार्यसार्वभौमोऽयम् । एवम् **असौ मानभेदः**=प्रमाणभेदविचारः **वर्णितः** अस्माभिः ॥

परस्परविरुद्धं ये प्रोचुर्विद्वत्तमा अपि । उपहास्यास्तु विज्ञानमूर्तिना वञ्चिता बत ॥
सर्वेषां किल वादानां युक्त्याभासा अनेकशः । सन्त्येव कूटरूपास्तु किं कुर्युर्मृदुबुद्धयः ॥
वयं तु तस्य कृपया रक्षितास्सत्यनिश्चयाः । आस्महे भृशनिश्चिन्ता इत्याहाचार्यतल्लजः ॥
मत्तःस्मृतिर्ज्ञानमिति यः प्राह भगवान् स्वयम् । तमेव शरणं यामः स नस्सर्वं विधास्यति ॥ १३४ ॥

सर्वव्यवहारनिदानभूताया बुद्धेः परीक्षणमुपसंहरति—**प्रज्ञेत्यादि** । **प्रज्ञाव्युत्पत्तिपाकव्यवहरणफल-श्रेणिनिश्रेणिकायाम्**=**प्रज्ञायाः**=बुद्धितत्त्वस्य **व्युत्पत्तिः**=व्युत्पादनम्=सम्यक् विज्ञानपरिशीलनम्, तस्य **पाकः**=परिपाकः, तेन **व्यवहरणम्**=स्वपरपक्षपरिशीलनम्, तस्य **फलानां श्रेणयः**=क्रमाः, त एव **निःश्रेणिका**=आरोहणसाधनम्, तस्याम् **आरूढा—सत्परीक्षे**त्यन्वयः । लोकव्यवहारानुकरणम् 'निःश्रेणिका-याम्'इति । 'सर्वव्यहारहेतुर्ज्ञानं बुद्धिः' इति खलु बुद्धिलक्षणज्ञाः । सैव बुद्धिर्यदि नष्टा, भ्रष्टा, दुष्टा वा,

**मिथ्यालीकादिशापैरपि न न भवति प्राप्तविस्रम्भसौधा**
**तत्साह्यात् बाह्यपाटच्चरमुषितमिदं सद्धनं प्रत्यनैष्म ॥ १३५ ॥**

**इति तत्त्वमुक्ताकलापे**

## बुद्धिसरः

तदनन्तरं सर्वमनर्थायैव । मायापरिणामरूपापीयमेवाद्यास्माकं ज्ञानपदवाच्या । अत एव बुद्धितत्त्वपरीक्षायां वयमत्यादराः । स्वयंप्राप्तविज्ञानदेवानुग्रहाः खलु वयं तत्परीक्षां साङ्गोपाङ्गं सविस्तरं समापयाम । एवमुत्तमकक्ष्यामारूढा, **प्रमितिगुणकरावलम्बनात्, निष्प्रकम्पा**=अप्रकम्पा च **इयं सत्परीक्षा**= समीचीनसंपूर्णपरीक्षा, एवमुत्तमकक्ष्यारूढत्वादेव—**मिथ्यालीकादिशापैरपि**=ज्ञानं सर्वं मिथ्या, तुच्छं वा इत्यादिदुराग्रहिशापैरपि, एवंवादस्तेषां शापफलमिति भावः, **प्राप्तविस्रम्भसौधा**=प्राप्तः विस्रंभरूपः सौधः यया, निःश्रेणिकया खलु प्रासादमारुहन्ति । विस्रंभस्य परां काष्ठां प्राप्ता **न भवतीति न**=तां परां काष्ठामारूढैव सत्परीक्षा । **तत्साह्यात्**=एतत्परीक्षाया सहायेन **बाह्यपाटच्चरमुषितम्=बाह्याः**= सत्यबाह्याः=वेदबाह्याः **पाटच्चराः**=तस्कराः **बौद्धास्तदनुकारिणश्च,** तैः **मुषितम्**= चोरितम् **इदम् सद्धनम्**=बुद्धितत्त्वरूपमिदं समीचीनं धनम् **प्रत्यनैष्म**=पुनस्समपादयाम । 'प्रज्ञाप्रासादमारुह्य त्वशोच्यः शोचतो जनान् । भूमिस्थानिव शैलस्थो ह्यज्ञान् प्राज्ञोऽनुपश्यति ॥' इति महर्षिवचनं स्मारयत्याचार्यः॥

ज्ञानावस्थां नाप्नुयाचेत् बुद्धिर्हन्त! विपत्करी । यतस्त्वियं बुद्धिरेव माया स्यात्प्राकृता सती ॥
मायातत्त्वमजानानाः तयैवाहोऽतिवञ्चिताः । अनृतासत्यपदयोरर्थभेदाविवेकिनः ॥
स्वयं नष्टा बुद्धिवादात् बौद्धाः हन्तापरानपि । विमूढा नाशयामासुः आगता सा परंपरा ॥
बुद्धितत्त्वाधिदैवेन हयास्येन स्वयं वृतैः । आचार्यवर्यैरेभिर्नः रक्षितं तद्धनं पुनः ॥
सर्वेषां व्यवहाराणां निदानं बुद्धिरेव हि । निर्णयो यदि तत्रैव न स्याच्चेत् का गतिर्नृणाम् ॥
यद्यपि त्रिविधा बुद्धिस्सत्त्वादिगुणभेदतः । तथापि स्यात्सैव गतिः विवेकाय न चान्यथा ॥
संपाद्यतां सात्त्विकी सा यया बन्धाद्विमुच्यसे । सत्संगः क्रियतां तूर्णं सर्वकष्टहरस्स हि ॥
सर्वंकषेयं बुद्धिरेव यदि शत्रुर्भवेत्तव । का गतिर्हन्त! शीघ्रं त्वं शरणं याहि हृच्छयम् ॥

वेदा हृता ये मधुकैटभाभ्यां तानानयद्वाजिमुखो हि देवः ।
स्वयंवृतस्तेन गुरूत्तमोऽयं प्रज्ञाधनं नष्टमदात्पुनर्नः ॥ १३५ ॥

**इति तत्त्वमुक्ताकलापव्याख्यायां सर्वङ्कषाख्यायाम्**

## बुद्धिसरः



# अद्रव्यसरः



[अद्रव्यपरीक्षाफलम्]

361. तत्तद्द्रव्येषु दृष्टं नियतिमदपृथक्सिद्धमद्रव्यजातं
तद्वत् विश्वं परस्य; व्यवधिनियमनान्न स्वरूपेऽस्य दोषः ।
इत्थं निर्धार्य भाव्ये भगवति विविधोदाहृतिव्यक्तिसिद्ध्यै
निर्बाधान् द्रव्यधर्मान् निरनुगतिगलद्दुर्नयान् निर्णयामः ॥ १ ॥

---

यथोद्देशमद्रव्यं निरूपयितुमुपक्रममाणः प्रथमं तन्निरूपणस्य प्रयोजनं विशदयति—**तत्तदित्यादि**। **तत्तद्द्रव्येषु**=पृथिव्यादिप्रविभक्तद्रव्येषु **नियतिमत्**=व्यवस्थितरीत्यैव वर्तमानम् **अपृथक्सिद्धम्**=पृथक् स्थातुं ज्ञातुं चाशक्यम् **अद्रव्यजातम्**=अद्रव्यवर्गः **दृष्टम्**=प्रत्यक्षसिद्धम्, अत एवापलपितुमशक्यम्। **विश्वम्**=चेतनाचेतनात्मकमिदं जगत् **परस्य**=परमात्मनः **तद्वत्**=अद्रव्यवदेव नियतिमत् अपृथक्सिद्धं च **दृष्टम्**=श्रुतिसिद्धम्। वैदिकानां श्रुतिरेव चक्षुः। चेतनाचेतनयोः परमात्मापृथक्सिद्धविशेषणत्वे विशेषणगतानां विकाराणां विशेष्येऽप्यन्वयात् परमात्मनोऽपि जगद्गता विकाराः संक्रमेरन्, इत्यत्र—**व्यवधिनियमनात्**= परमात्मनो विकाराणां च मध्ये व्यवधायकतया चेतनाचेतनयोः नियततया मर्यादारूपेण वर्तमानत्वात् **अस्य**= परमात्मनः **स्वरूपे न दोषः**=विकारादयो न भवन्ति। यथा बाल्ययुवत्ववृद्धत्वादयो विशेषणभूतस्य शरीरस्य धर्माः शरीरिणं चेतनं न विकारयन्ति। **इत्थं निर्धार्य**=निश्चित्य, अयं विचारः नायकसरे विस्तरेण गतः। **भाव्ये**=उपास्ये **भगवति**=परमात्मनि **विविधोदाहृतिव्यक्तिसिद्ध्यै**=अनेकोदाहरणपदार्थानां परिचयाय **निर्बाधान्**=निराकर्तुमशक्यान् **द्रव्यधर्मान्**=अद्रव्यपदस्य अर्थभूतान् तद्वृत्तिधर्मान् **निरनुगतिगलद् दुर्नयान्**= निरनुगत्या=अव्याप्त्यादिना गलन्तः=स्वयमेवापगच्छन्तः दुर्नयाः=प्रतिवादिनां दुस्तर्काः येषु इति बहुव्रीहिः, प्रतिवाद्युक्तदुस्तर्कप्रवेशरहितान् यथा तथेति विधेयविशेषणम्, तथा **निर्णयामः**=निश्चित्य प्रदर्शयामः॥

ननु सृष्टिप्रक्रियायां कुत्राप्यद्रव्याणां सृष्टेरदर्शनादेषामतिरिक्तानां सद्भावे प्रमाणं किम्। परमवैदिकानां भवतां श्रुतिः किल परमं प्रमाणमिति चेत्, 'अपृथक्सिद्धम्' इति कथनादेवैतेषामपि सहैव सृष्टिस्सिद्धा। अन्यथा 'चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च' (प्रश्न.4-8) इत्यादिश्रुतयो निर्विषयाः स्युः। चक्षुः, त्वक्चेति द्वयमेव हि द्रव्यग्राहकम्। घ्राणरसनश्रोत्राणि न हि द्रव्यग्राहकाणि। अतश्च 'श्रोतव्यं च' इत्यादिश्रुतिरेवाद्रव्यसद्भावे प्रमाणम्॥

अद्रव्यपदं नञ्तत्पुरुषत्वात् भावरूपं द्रव्याश्रितं द्रव्यादन्यं पदार्थमेव वक्ति—इत्यादिकं ग्रन्थारंभ एव 'द्रव्याद्रव्यप्रभेदात्' (जड.6) इत्यत्र विस्तरेण विचारितम्। द्रव्याश्रितं 'गुण'पदवाच्यमेव अद्रव्यमित्युच्यत इत्यपि अग्रे(श्लो.15) व्यक्तीभविष्यति॥

[अद्रव्यलक्षणादि]

**362. व्याख्यातं द्रव्यषट्कं व्यतिभिदुरमथद्रव्यचिन्ताऽस्य सत्ता**
**धीभेदादेः पुरोक्ता निजगदुरनुपादानतां तस्य लक्ष्म ।**
**द्रव्यादत्यन्तभिन्नं त्विदमनुपधिकं तद् विशिंष्यात् स्वभावात्**
**दृष्टे न ह्यस्त्ययुक्तं; न कथमितरथा विश्वतत्त्वापलापः ।। २ ।।**

[द्रव्याद्रव्यभेदसमर्थनम्]

**363. अद्रव्यं द्रव्यसिद्धौ, तदुपहिततया तच्च लक्ष्येत; तस्मात्**
**एकासिद्धौ द्वयं नेत्यपि न सत्; उभयान्योन्यवैशिष्ट्यदृष्टेः ।**

---

नन्वस्त्विदं सर्वमस्तु यथोक्तमेव । एवमपि अद्रव्यमिति कुतस्संज्ञा कृता, 'गुणः' इत्येव भावरूपेणैव संज्ञा क्रियताम् अभावस्यातिरिक्तत्वमनभ्युपगच्छद्भिर्भवद्भिः एवमेव कर्तव्यमिति चेत्, सत्यम् । परं तु गुणगुणिभावस्य बहुधा स्थापनेऽपि (जड.9) तदभेदभ्रमवतां दृष्ट्या प्रकाशान्धकारवत्तयोरभेदा-संभवप्रदर्शनार्थं द्रव्य-अद्रव्येति विभागः प्रदर्शितः । किञ्च गुण-क्रिया-जातीनामपि द्रव्यैकाश्रयत्वेन, तेषामनतिरिक्तविचारस्य सत्त्वेऽपि, तद्व्यवहारस्य दुस्त्यजत्वेन, अद्रव्यपदेन तेषामपि संग्रहात्, तादृशसंज्ञाऽऽ-दृतेति ज्ञेयम् ।। १ ।।

यथाप्रतिज्ञम् अद्रव्यं वक्तुमुपक्रमते—व्याख्यातमित्यादि । **द्रव्यषट्कम्**=प्रकृति-काल-जीव-ईश्वर-नित्यविभूति-धर्मभूतज्ञानभेदेन षड्विधम् **व्यतिभिदुरम्**=परस्परासंकीर्णम् **व्याख्यातम्**=एतावता ग्रन्थेन सम्यङ् निरूपितम् । अथ प्रथमं द्वेधा विभक्तयोराद्यस्यैवं निरूपितत्वात् अनन्तरम् **अद्रव्यचिन्ता**=अद्रव्यपरीक्षा प्रारभ्यते । **धीभेदादेः**=विलक्षणानुभवादिप्रमाणात् **अस्य सत्ता**=द्रव्यभिन्नतया स्वरूपादिः **पुरोक्ता**=पूर्वमेव (जड. 8)उक्ता । **अनुपादनताम्**=उपादानत्वाभावम् **अस्य**=अद्रव्यस्य **लक्ष्म**=लक्षणम् **निजगदुः**=प्राहुः।।

अद्रव्यस्य स्वरूपमाह—**इदम्**=अद्रव्यम्, **द्रव्यादत्यन्तभिन्नम्** । नाभिन्नं सांख्यादिवत्, न वा भिन्नाभिन्नं कुमारिलादिवत् । **इदम् अनुपधिकम्**=उपाधिमन्तरा स्वभावादेव **तत्**=द्रव्यम् **विशिंष्यात्**=विशेषणम्=व्यावर्तकं भवेत् । स्वभावादिति कथमित्यत्र—**दृष्टे**=प्रत्यक्षसिद्धे विषये **अयुक्तम्**=असामञ्जस्यम् **न हि अस्ति**='न हि दृष्टेऽनुपपन्नं नाम' इति खलु न्यायः । न्याय एव न न्याय्य इति चेत्, **इतरथा**=प्रत्यक्षसिद्धस्याप्यपह्नवे **विश्वतत्त्वापलापः**=जगतस्सर्वस्यापि निराकरणम्=शून्यवादः **कथम् न**=न भवेत्? भवेदेव । अत्रापीष्टापत्तौ, तस्य कथायामनधिकार एवेत्यसकृदुक्तम् । अतो द्रव्यवत् अद्रव्यमपि तदतिरिक्तं तदाश्रितं च सिद्धम् ।। २ ।।

सर्वापलापवादी प्रत्यवतिष्ठते—**अद्रव्यमित्यादि** । **द्रव्यसिद्धौ**=द्रव्यस्य सिद्धावेव तदाश्रितम् अद्रव्यम् सिद्ध्यति । अद्रव्यमिति पदमेवैतद्बोधयति । **तच्च**=द्रव्यं च **तदुपहिततया**=अद्रव्यरूपोपाधि-विशिष्टतयैव **लक्ष्येत**=लक्षणमुखेन ज्ञाप्येत । गुणवत्त्वमेव हि द्रव्यसामान्यलक्षणम् । द्रव्याणां प्रत्यक्षमेव

**आधारे द्रव्यशब्दस्तदधिकरणकेऽनाश्रये त्वन्य इत्थं**
**व्युत्पत्तिर्विश्वहृद्या;' न तदपलपति स्वर्गकर्णीसुतोऽपि ।। ३ ।।**

**[अद्रव्यं न निराकर्तुं शक्यम्]**

364. **सामान्यात्मा विशेषाकृतिरपि यदि न स्वीकृतो धर्मवर्गः**
**स्यातां न भ्रान्तिबाधौ; न किमपि कथकाः साधयेयुः स्वसाध्यम् ।**
**यस्मिन् बाधानवस्थे क्वचन, न खलु तन्नीतिरन्यत्र दृष्टे**
**नो चेत्, निश्शेषकुक्षिम्भरिरुनिपतन् दुस्तरः शून्यपक्षः ।। ४ ।।**

खलु रूपाद्यद्रव्याधीनम् । **तस्मात्**=एवं तयोः परस्पराश्रितत्वात् **एकासिद्धौ**=अन्यतरपरित्यागेऽन्योन्याश्रयदोषपरिहाराय **द्वयम्**=द्वयमपि **न**, परस्परापेक्षत्वादेव । इत्यपि **न सत्** । कुतः? **उभयान्योन्यवैशिष्ट्यसिद्धेः**=उभयेषां परस्परं वैशिष्ट्यस्य प्रत्यक्षेणैव सहैव सिद्धेः ॥

**अयं भावः**—उभययेषाम् अन्योन्याश्रयः स्वरूप एव आपाद्यते? उत तद्ज्ञाने? नाद्यः, अद्रव्यमेव द्रव्याश्रितम्, न तु द्रव्यमद्रव्याश्रितम् । अतो नान्योन्याश्रयः । न द्वितीयः, एकेनैव प्रत्यक्षेण द्वयोरपि निश्चयात् । लक्षणेऽन्योन्याश्रयो यद्यप्यस्ति, वस्तुनोः सिद्धत्वे, लक्षणनिरूपणक्लेशमात्रान्न हि वस्तुनोः प्रत्यक्षसिद्धयोरपलापः । लक्षणानिरूपणं हि पुरुषबुद्धेरकुशलतां दर्शयेत्, न तु वस्तूनि निराकुर्यात् । वस्तुतस्त्विदमपि न, यतो वयमेव तत्प्रदर्शयाम इति तत्प्रदर्शयति—**आधार** इत्यादिना । चक्षुषा नीलं घटं यदा पश्यति, तदा घटमपि पश्यति, तदाश्रितं नीलरूपमपि सहैव पश्यति, उभयोरपि चक्षुषा युगपदेव ग्रहणात् तयोर्ग्रहणे नान्योन्याश्रयः । आधारभूतं वस्तु द्रव्यशब्देन व्यवहरति । आधेयं च अद्रव्यशब्देन, गुणपदेन वा व्यवहरति । नात्राप्यन्योन्याश्रयः । आधाराधेयभावस्तु परस्परसापेक्षः, पितृपुत्रभाववत् । तयोः सापेक्षत्वेऽपि युगपदेव सिद्धत्वान्नान्योन्याश्रयः । शब्दव्यवहारोऽन्यः, वस्तुज्ञानमन्यत्, वस्तुसत्ता चान्या । एषां सांकर्यात् विवादा वर्धन्ते । शब्दव्यवहारे क्लेशात् अन्योन्याश्रयाभासः स्यादिव । तत्रापि शब्दप्रयोक्तुरकुशलत्वे दोषाः प्रादुर्भवेयुरेव । शब्द-ज्ञान-पदार्थानां विवेचनेनेदं सर्वं परिहर्तुं शक्यम् । तदेतत्सर्वं हृदि मत्वाह—**आधारे**=आधारतयाऽवगते वस्तुनि द्रव्यशब्दो भवति । **तदधिकरणके**=द्रव्याश्रिते च **अनाश्रये**=आधारभिन्ने आधेये तु **अन्यत्**=अद्रव्यपदं भवति । **इत्थम्**=एवं प्रकारा **व्युत्पत्तिः**=पदयोश्शक्तिग्रहः **विश्वहृद्या**=सर्वसंमता । **तत्**=तदेतत् **स्वर्गकर्णीसुतोऽपि**=स्वर्गादवतीर्णः कश्चिन्महाचोरोऽपि **न अपलपति**=अपलपितुं न प्रभवति । चौर्यशास्त्रप्रवर्तिका देवता 'कर्णी' इति पौराणिकाः । तत्सुतः अतिचतुरचोरः न कोऽप्युक्तमर्थमपलपितुं शक्तः, स्वव्याघातप्रसङ्गादित्यर्थः ॥ ३ ॥

धर्मधर्मिभावस्यानिवार्यतामाह—**सामान्यात्मे**त्यादि । **सामान्यात्मा**=सामान्यस्वरूपः कश्चित्, **विशेषाकृतिरपि**=विशेषरूपश्च कश्चित् इति **धर्मवर्गः**=द्विरूपो धर्मः **यदि न स्वीकृतः**, तदा **भ्रान्तिबाधौ**=प्रथमं भ्रान्तिः, अनन्तरं तन्निवृत्तिश्च **न स्याताम्** । एवं संशयोऽपि न स्यात् । प्रश्नोत्तरादिकमपि न स्यात् । सामान्यतोऽवगते विशेषजिज्ञासायामेवैते भवेयुः । न तावन्मात्रम्—**कथकाः**=कथायामवतीर्णा विद्वांसः

[अद्रव्याणां न मिथ्यात्वम्]

365. **चादीनां वृत्तियोग्यं यदुत पदविदोऽसत्त्वमद्रव्यमाहुः**
**नैतावत् तन्मृषात्वं गमयति; न च तद्बाधकं किंचिदस्ति।**
**तात्पर्यं चान्यदत्र स्फुटविदितम्; अतस्तत्र सत्त्वेतरत्वात्**
**अन्यः कश्चिन्नञर्थः; परमिह निपुणैर्द्योतकत्वादि चिन्त्यम्॥ ५॥**

**स्वसाध्यं किमपि न साधयेयुः**। पक्षसाध्यहेतूनां निर्देशस्य धर्मधर्मिभावमन्तरा कर्तुमशक्यत्वात्। ननु धर्मः सधर्मकः, उत निर्धर्मकः? आद्येऽनवस्था। द्वितीये निर्धर्मकवस्तुसिद्धिरिति चेत्, तत्राह—**यस्मिन्नित्यादि**। **यस्मिन् क्वचन**=यत्र कुत्रचित् **बाधानवस्थे**=बाधो वा अनवस्था वा भवतीति, **अन्यत्र दृष्टे**=अनुभवसिद्धे विषये **तन्नीतिः**=उक्तबाधानवस्थाप्रसक्तिनीतिः **न खलु**=नैव भवितुमर्हति। अनुभवानुरोधेनैव सर्वस्य निर्णेयत्वे सति, यत्र यत् अनुभवसिद्धम्, तत्तथैवाङ्गीकार्यम्। यस्यां कक्ष्यायां बाधः अनवस्था वा भवति, स विषयोऽन्यः। यत्र च यत् अबाधितप्रत्यक्षादिसिद्धं भवति, तस्याङ्गीकारे बाधकं किम्? **नो चेत्**=अनुभवतिरस्कारे तु भिक्षुपादप्रसरणन्यायेन **उपनिपतन्**=स्वयमागच्छन् **निश्शेषकुक्षिंभरिः** = सर्वभक्षकः **शून्यपक्षः**= शून्यवादः **दुर्वारः**=वारयितुमशक्यः स्यात्। न चेष्टापत्तिः, बहुधा दत्तोत्तरत्वात्। अत्र वक्तव्यं सर्वं ग्रन्थोपक्रम (जड.8-9-10) एव प्रतिपादितम्। अतो धर्मधर्मिभावो दुरभिलपः॥ ४॥

अद्रव्याणां मिथ्यात्वं पाणिन्याचार्यसंमतमित्याशङ्क्य समाधत्ते—**चादीना**मित्यादि। **यदुत**=यदपि च **चादीनाम्**='च' इत्यादीनामव्ययानाम् **वृत्तियोग्यम्**=वाच्यार्थम्, वृत्तिः=शक्तिः, तद्योग्यः=तद्बोध्यः अर्थः, अद्रव्यम् **असत्त्वम्**=असद्रूपम्=मिथ्यारूपम् **पदविदः**=पाणिन्यादिवैय्याकरणाः **आहुः** इति, **एतावत्**= एतावन्मात्रम् **तन्मृषात्वम्**=चाद्यर्थानां मिथ्यात्वम् **न गमयति**=न बोधयति। **तद्बाधकम्**=तेषां सत्यत्वे बाधकं वा किञ्चित् **न चास्ति**=नैवास्ति। प्रत्युत—**अत्र**=एतद्विषये **अन्यत्**=अन्यरूपम् मृषात्वाभाव एव **तात्पर्यं च**=तेषां तात्पर्यमपि स्फुटविदितम्। अतः **तत्र**=पाणिनिसूत्रे **सत्त्वेतरत्वादिः**=असत्त्वादिः **अन्यः**=कश्चित् नञर्थः विवक्षितः। ननु भोः! चाद्यव्ययानां द्योतकत्वमेव, न वाचकत्वमिति कथनात् तेषां अद्रव्याणां पदार्थत्वस्यैवाभावात् मिथ्यात्वं स्वतः सिद्धमिति चेत्, तत्राह—**परम्**=किन्तु इह=चाद्यर्थविषये **द्योतकत्वादि**=चादयः द्योतका वा, वाचका वा इत्यादिकं तु **निपुणैः**=शब्दप्रमाणनिपुणैः **चिन्त्यम्**=परीक्षणीयम्। चादयः वाचका वा द्योतका वा इत्यन्योऽयं विचारः, चाद्यर्थः मिथ्या, उत सत्यः? इत्यन्यो विचारः। उभयोस्सांकर्यं तु नास्त्येव॥

**अत्रायं विचारसारः**—'चादयोऽसत्त्वे' (पा.सू.1-4-57) इति भगवान् पाणिनिः। असत्त्वे=असदर्थे चादयः अव्ययास्सन्तीत्यर्थः। 'अद्रव्यवाचकाः' इति वक्तव्ये 'असत्त्वे' इति कथितम्। असत्त्वं सद्रूपाभावः, अतश्च अद्रव्यं सर्वं असद्रूपम्=मिथ्या इत्यर्थः सिद्ध इति अद्रव्यवर्गः नास्त्येवेति पूर्वपक्ष्याशयः। **सिद्धान्तस्तु** 'द्रव्यासुव्यवसायेषु सत्त्वम्' इति कोशात् सत्त्वपदं द्रव्यवाचकम्। तद्भिन्नवाचकमित्यभिप्रायेण

**[जैनबौद्धसंमतगुणपदार्थविमर्शः]**

**366. आहुर्द्रव्येषु धर्मान् कतिचन गुणपर्यायवैषम्यभिन्नान्**
**पर्यायाणां गुणत्वे स्थितवति सहजागन्तुतामात्रमेतत् ।**
**मिथ्याभूतान् विकारान् अभिदधति परे सत्यरूपान् स्वभावान्**
**तान् एकद्व्यादिरूपान्; अभिदधतु कथं निर्गुणानां क्षणानाम् ।। ६ ।।**

'अद्रव्यवाचिनः चादिशब्दाः' इत्यर्थे 'चादयोऽसत्त्वे' इति सूत्रं प्रणीतम् । 'लिङ्गसंख्याद्यन्वययोग्यं द्रव्यम्' इति परिभाषा । लिङ्गाद्यन्वयायोग्यमद्रव्यम् । चाद्यर्थभूतस्तु समुच्चयादिः न लिङ्गसंख्यान्वययोग्यः । चादीनामर्थ एतादृशः, न द्रव्यरूप इत्येतावन्मात्रमत्र पाणिनेस्तात्पर्यम्, न चाद्यर्थानां मिथ्यात्वे । पदानि चतुर्विधानि द्रव्यादिवाचकानि । अव्ययानि तु न तादृशार्थवाचकानीत्येतावन्मात्रेणासत्त्वपदं प्रयुक्तम्, न तु तेषां मिथ्यात्व-तात्पर्येण । अव्ययं परित्यज्य समुच्चयपदप्रयोगे तु तदा तस्यैव लिङ्गाद्यन्वयः आरोपरूपो भवत्येव, 'कृदभिहितो भावः द्रव्यवत्प्रकाशते' इतिवत् । अतोऽत्र पदशास्त्रे एतादृशविचारस्य न प्रसक्तिः ॥

अन्विष्यन्ति कियच्छिद्रं बतैते ब्रह्मराक्षसाः । अन्विष्येयुर्यदि ब्रह्म तदा स्याज्जन्म सार्थकम् ॥
जगन्मिथ्यात्वविषये वक्तव्यं गदितं पुरा । पिष्टस्य पेषणं माऽस्तु वृथा शब्दविवर्धनम् ॥
परमात्मविभूतीनामपलापो हिताय न । एतावदेव स्मर्तव्यम् पुनरात्महिताय नः ॥ ५ ॥

द्रव्याश्रितानां धर्माणां विषये जैनोक्तं विमृशति—**आहुरित्यादि** । **द्रव्येषु धर्मान्**=द्रव्यगतान् धर्मान् **गुणपर्यायवैषम्यभिन्नान्**=गुणरूप-पर्यायरूपवैषम्येन भिन्नान् **कतिचन**=केचित्=जैनाः **आहुः** । सहजा धर्माः **गुणाः**, आगन्तवो **धर्माः** पर्याया इति तेषामभिप्रायः । **पर्यायाणाम्**=आगन्तुधर्माणाम् अवस्था-रूपाणामपि **गुणत्वे स्थितवति**=द्रव्याश्रितत्वे समाने सति **एतत्**=एवं विभज्य संकेतनम्, **सहजागन्तुता-मात्रम्**=कस्यचित् सहजत्वम्, कस्यचिदागन्तुकत्वमिति स्वरूपे न कश्चन विशेष उक्तो भवति । इतरत् संकेतमात्रमित्यल्पमेतत् ॥

**परे**=केचन विज्ञानवादिनः बौद्धास्तु **विकारान् मिथ्याभूतान् अभिदधति** । तेष्वेव वैभाषिकाः विकारान् **सत्यरूपान् स्वभावान्**=वस्तुस्वभावरूपानतिरिक्तान् अभिदधति । क्षणिकविज्ञानरूपत्वं सर्वेषा-मङ्गीकुर्वद्भिः योगाचारैः बाह्यार्थस्यैवापलापात्, तत्र विकाराणां मिथ्यात्वप्रतिपादनेन को विशेष उक्तो भवतीत्युपहास्यत्वं स्पष्टमेव । वैभाषिकमते बाह्यार्थसत्यत्वाङ्गीकारात्, सत्यानाम् अथापि **निर्गुणानाम् क्षणानाम्**=पदार्थानाम् स्वरूपे एवं रूपे सति, **तान्**=विकारान् **एकद्व्यादिरूपान्** कथम् अभिदधतु? रूपरसगन्धस्पर्शस्वभावा पृथिवी रूपरसस्पर्शस्वभावं जलम्, रूपस्पर्शस्वभावं तेजः, स्पर्शस्वभावो वायुरिति ते वदन्ति । गुणगुणिभेदस्यैवाभावे एवमभिधानं कथं घटते? एषां संघातरूपत्वादिक-मपि प्रागेव(जड.8) विस्तरेण परीक्षितम् । सर्वेऽप्येतादृशा वादाः प्रायो गतार्था इति विस्तरे नासक्ति-राचार्याणां सूच्यते ॥ ६ ॥

[बौद्धानामपि धर्मा आवश्यकाः]

367. **बाह्यार्थे बौद्धतोकाः किल जननजराभङ्गरूपान् विकारान्**
**आद्यन्तौ चित्तचैत्तेष्वपि जगदुरमी तत्स्वरूपं न वा स्युः ।**
**पूर्वस्मिन् न क्रमः स्यात्; उपरि तु न कथं तस्य धर्मास्त एते?**
**तन्मिथ्यात्वे तु नित्यं निखिलमपि भवेत्; तुच्छमेवान्यदा स्यात् ।। ७ ।।**

[प्रत्यक्षभेदाभेदवादविमर्शः]

368. **आदावैक्येन बुद्धिर्द्वयमपि मिलितं गृह्णती व्यक्तिजात्योः**
**भेदाभेदाविरोधं दिशति यदि, न तत्; तद्विशिष्टैक्यबुद्धेः ।**

सधर्मवादो बौद्धानामावश्यक इति दर्शयति— **बाह्यार्थ** इत्यादि । **बौद्धतोकाः**=बौद्धाभासाः इति **सर्वार्थसिद्धिः** । तेषां मेधाप्रौढिमाभावसूचनाय बालपर्याय'तोक'पदम् । **बौद्धतोकाः किल** भूतभौतिकरूपे **बाह्यार्थे जननजराभङ्गरूपान् विकारान्,** आन्तरेषु **चित्तचैत्तेषु अपि आद्यन्तौ**=जन्मभङ्गौ **जगदुः** । एतदपि न विचारसहम् । **अमी** विकाराः किं **तत्स्वरूपं स्युः, न वा? पूर्वस्मिन्**=विकाराणां स्वरूपपक्षे **क्रमः न स्यात्**=जन्मजराभङ्ग इति क्रमो न स्यात्, स्वरूपस्यैकत्वात् त्रयाणामैक्यप्रसङ्गात् । **उपरि**=स्वरूपातिरेके तु, **त एते**=जन्मजराभङ्गविकाराः **तस्य** वस्तुनः **धर्माः कथं न स्युः,** स्वरूपातिरेके धर्मत्वावश्यंभावात् । यद्यपि ते धर्माः स्युः व्यवहारदृष्ट्या, परं तु ते न सत्या इति न हानिरिति चेत्, **तन्मिथ्यात्वे तु**=जन्मजराभङ्गानां मिथ्यात्वे हि **निखिलमपि नित्यम् भवेत्** , जन्मादीनां मिथ्यात्वात् । अयि भोः! कीदृशस्त्वं बालः? सर्वे धर्मा यदि मिथ्या, तर्हि नित्यत्वमपि मिथ्यैवेति किं न जानीषे? इत्यत्र— **अन्यदा**=सत्यत्वस्यापि मिथ्यात्वे **निखिलमपि तुच्छमेव स्यात्** । इदमपीष्टमेवेति मूढस्त्वं न जानासि किलेति चेत्, किमर्थं तर्हि, एतावत्क्लेशेन त्वन्मतसमर्थनम्?

सुखं निद्राहि मेधाविन् भुक्त्वा सुप्त्वा दिनान् नय । यत् ते त एव सत्यं स्युः, मिथ्या तदितरत् किल ।।
एतादृशा हि वादाः स्युः कस्य वा हितदा वद । कति वा वञ्चिता हन्त! मुग्धास्तर्कपरायणैः ।।
पुनः पुनः सत्यमिदं पुरोक्तम् मेधाविना वैदिकतल्लजेन ।
'आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहं गतास्तत्र कथञ्चिदन्ये ।।' इति ।। ७ ।।

एवमद्रव्यस्य=द्रव्याश्रितस्य धर्मस्य द्रव्याद्भेदं प्रसाध्य, तयोर्भेदाभेदवादनिराकरणप्रकारं संजिघृक्षुः प्रथमं प्रत्यक्षत एव भेदाभेदसिद्धिं वदतामाशयमनूद्य निराकरोति— **आदा**वित्यादिना । **आदौ**=प्रथमपिण्ड (व्यक्ति) ग्रहणे **ऐक्येन बुद्धिः**=एकत्वसंख्याविशिष्टतयैव **द्वयमपि**=व्यक्तिं जातिं च मिलितं गृह्णती=युगपदेव विषयीकुर्वन्ती **व्यक्तिजात्योः**=आश्रयव्यक्तेः, आश्रितजातेश्च **भेदाभेदाविरोधम्**=तयोर्भेदस्य, तथाभेदस्य चाविरोधम् **दिशति**=स्पष्टमेव प्रदर्शयति । अतो जातिव्यक्त्योर्भेदाभेदावेव प्रत्यक्षेणैव सिद्ध्यतः।।

इमं वादं समाधत्ते— **इति यदि, न**=इति चेत्, न । कुतः? **तत्तद्विशिष्टैक्यबुद्धेः**= तत्तद्विशेषणविशिष्टविशेष्यगतस्य ऐक्यविषयत्वाद्बुद्धेः । तथा च ऐक्यं विशिष्टनिष्ठम्, भेदस्तु विशेषणगत

**इत्थंत्वेदंत्वशून्यं न हि किमपि कदाऽप्यर्भकोऽपि प्रतीयात्**
**तद्वैशिष्ट्यप्रतीतिर्निरुपधिरपृथक्सिद्धिमात्रेण सिध्येत् ॥ ८ ॥**

इति भेदाभेदयोः भिन्नाधिकरणत्वात्, उभयोः कथं विरोधः? सामानाधिकरण्यं खलु अविरोधसाधकम्। एतदुपपादयति—**इत्थंत्वेदंत्वशून्यम्**=इदंत्वं विशेष्यतावच्छेदकम्, इत्थंत्वं तु विशेषणतावच्छेदकम्। एतदुभयरहितम् **किमपि**=किञ्चिदपि वस्तु **अर्भकोऽपि**=बालोऽपि **कदापि न हि प्रतीयात्**=न हि जानीयात्। 'इदमित्थमिति हि सर्वा प्रतीतिरुपजायते' इति श्रीमद्भाष्यम्। घटपटयोरिव यदि जातिव्यक्त्योरत्यन्तं भेदः, तर्हि नियमेन तयोर्विशिष्टबुद्धिः कथमिति चेत्, तत्राह—**निरुपधिः**=निरुपाधिकी, हेत्वन्तराप्रयुक्ता **तद्वैशिष्ट्यप्रतीतिः**=नियततया जातिविशिष्टप्रत्ययः **अपृथक्सिद्धिमात्रेण**=तयोः अपृथक्सिद्धत्वादेव **सिद्ध्येत्**, न ह्येवं घटपटाद्योरपृथक्सिद्धत्वम्। अतश्चापृथक्सिद्धविशेषणविशेष्यभावस्थले ऐक्यप्रत्ययोऽपि नियतः सहजश्चेति, भेदाभेदयोः भिन्नप्रयोज्यत्वात् एकाधिकरणवृत्तित्वाभावात् न भेदाभेदयोरविरोधसिद्धिरिति भेदाभेदवादो न प्रामाणिकः ॥

धर्मधर्मिभावस्य प्राणप्रदातारौ **जातिव्यक्ति**पदार्थाविव। बालोऽपि कश्चित् प्रथमं कुत्रचित् प्राणिविशेषं पश्यति। तदानीं तु तेन पुरोवर्तिव्यक्तिमात्रमेव गृह्यते। प्रौढानामप्ययमनुभवस्समानः। एतन्मूलक एव **स्वलक्षण**प्रत्यक्षवादोऽपि। कालान्तरे देशान्तरं गतस्स बालः, प्रौढो वा यदा तादृशमेवान्यं प्राणिनं पश्यति, तदा 'पूर्वमेवायं दृष्टो मया' इत्येव प्रत्यभिजानाति। शतशः मथनेऽपि तथैव सर्वोऽपि प्रत्यभिजानाति, सशपथं प्रतिवक्ति च। पूर्वदृष्टा तु प्राणिव्यक्तिः भिन्ना, भिन्नप्रमाणापि कदाचित्। अथापि कथमेवमनुभव आबालगोपालं भवति? प्रथमदर्शनकाल एवं निरीक्षापि कस्यापि न भवति—पुरोवर्तिपिण्डेन साकमन्यदपि मया गृह्येत एवेति। कालान्तरे तु 'दृष्टमिदं पूर्वमेव' इति कं विषयं दृष्ट्वा वदति? पूर्वग्रहणवेलायामेव व्यक्त्यतिरिक्तमन्यदपि तेन गृहीतमेव। परं तु तत्, कालान्तरेऽन्यपिण्डदर्शन एव स्फुटीभवति। सोऽयं व्यक्तेरतिरिक्तः पदार्थः कः? आकार इति चेत्, आकारो नाम कः? शिरःकण्ठपादादिरेवेति चेत्, शिरःकण्ठपादादिर्हि प्रतिव्यक्ति भिन्नः, भिन्नपरिमाणश्च। कथमयमुभयव्यक्त्यनुगतो भवेत्? सादृश्यमिति चेत्, सादृश्यं नाम किम्? प्रसिद्धं किलैतत्, 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमेव सादृश्य'मितीति चेत्, तत्र धर्मपदार्थः कः? तत्तु विवेक्तुं न शक्यते किलेति चेत्, मास्तु। स धर्मः किमुभयानुगतः, उतोभयाननुगतः? उभयाननुगतत्वे हि **'घट्टकुट्यां प्रभातम्'**। उभयानुगतश्चेत्, किमुभयोरेवानुगतः, उत त्रयाणाम्, उत चतुर्णाम्? किञ्च कालदृष्ट्यापि, स धर्मः केवलमद्यतनः, उतासीत्, उतागामिकालेऽपि भविष्यति। प्रत्यक्षं तु वर्तमानमात्रग्राहकमिति पुरोवर्तिवर्तमानव्यक्तिमात्रनिष्ठश्चेत् स धर्मः, अननुगतः स्यात्। वर्तमानकालिकसर्वव्यक्तिनिष्ठश्चेत्, कालान्तरे, देशान्तरे अन्येषामपि जनानां कथं तथा पूर्वदृष्टत्वप्रत्ययो भवेत्? अतस्स धर्मः त्रैकालिकः, नित्यश्चेति सिद्धः। स एव **जाति**रित्युच्यते ॥

एवञ्च नामकरणमात्रमवशिष्टम्। स एव **'सत्ता'** इत्युच्यत इति सन्मात्रग्राहिप्रत्यक्षवादिनः **मण्डनादयः**। एते स्वलक्षणप्रत्यक्षत्ववादिनां साक्षात्प्रतिकोटिभूताः। अयं च वादः पूर्वमेव (नायक.58)

[अनुमेयभेदाभेदवादविमर्शः]

**369. व्यक्त्या जातेरभेदं यदि वदसि पृथक्सिद्ध्यभावादिलिङ्गैः**
**भेदाभावोऽक्षबाध्यः; तव च न हि मतो, नान्यथाऽत्रास्य युक्तिः ।**

परीक्षितः । अस्तु तत् । परं तु 'अस्ति' इति प्रत्ययः वर्तमानमात्रविषयः, 'आसीत्' इति प्रत्ययस्तु भूतविषयकोऽपि दृष्टः, स कथं सन्मात्रब्रह्मविषयकः स्यात्, तस्य भूतत्वाभावात् । किञ्च सत्तामात्रं तु सर्वसाधारणम् । इदानीमस्मत्प्रश्नस्तु, पूर्वदृष्टसिंहव्यक्तेर्भिन्नत्वेऽप्यद्यदृष्टसिंहव्यक्तेः, 'पूर्वमेवेदं मया दृष्टम्', इति ऐक्यप्रत्यये को विषयः । नात्र सत्तामात्रं विषयः, सिंहविलक्षणेष्वप्यस्या अनुवृत्तत्वात् । अयं तु प्रत्ययः सिंहव्यक्तिमात्रविषयकः, न तु गर्दभादिदर्शने भवति । **अपोहो** विषय इत्यपि न, कस्यापि वस्तुनोऽभावमात्ररूपत्वासंभवात्, भावात्मकस्यापि तत्र विषयतया भानस्य स्वरसतः सिद्धत्वात् । अपोहवादस्योत्तरत्र (श्लो.111) परीक्ष्यमाणत्वात् । त्रैकालिकसिंहाद्यनुगुणं किं तत्र दृष्टत्वेन प्रत्यभिज्ञायत इत्येवेदानीं वक्तव्यम् । तच्च त्रैकालिकं सर्वसिंहानुगतञ्च । तदेव सिंहत्वमिति वयं वदामः । नामेदं न रोचते चेत्, आधीयतामन्यदेव नाम यथेच्छम् ॥

अत्र वृत्तौ (सर्वार्थसिद्धौ) '**निरुपधिः**=उपाधित्वेन स्वीकृतसमवायाभावेऽपि स्वाभाविकापृथक्सिद्धिमात्रेण वैशिष्ट्यप्रतीतिः सिद्ध्येत्' इत्यस्य तत्त्वं समवायप्रकरणे स्पष्टीभविष्यति । वैशिष्ट्यमेव किल संबन्धः विशिष्टस्य सिद्धौ वैशिष्ट्यमपि सिद्धमेव । विशिष्टेत्येतत्कथं सिद्धम्? अन्योन्याश्रयपरिहारः कथम्? इत्यादिकम् अधिकं तत्रैव । गतचतुर्थश्लोकस्यायमेव मुख्यो विषयः ॥

पुरोवृत्तिव्यक्तिमात्रं गृह्णीयादिन्द्रियं किल । नानुवृत्तिं निवृत्तिं वा गृह्णीयात्पश्य जातुचित् ॥
अनुवृत्त्यादिकं बुद्धिः पूर्वं गृह्णाति तत्त्वशः । इन्द्रियं द्वारभूतं स्यादत्र सर्वत्र चिन्त्यताम् ॥
दुर्निरूपं दुर्बलानां तत्त्वं भवति सर्वदा । तावता वस्तुतत्त्वं तु गच्छेत् कुत्र विमृश्यताम् ॥
बुद्धिर्भवन्ती स्वच्छा तु सर्वं साधयति ध्रुवम् । तस्या अप्यपलापे तु मौनीभव सदैव च ॥ ८ ॥

यदि धर्मधर्मिणोरत्यन्तं भेदो गवाश्वयोरिव, तर्हि नियमेन सहैवोपलंभः कथम्? यदि चात्यन्तमभेदः, तर्हि वा कथं शब्दभेदः? घटकलशाविव स्यातां तदा । तेन ज्ञायते तयोर्भेदाभेदावुभावपि भवत इति भेदाभेदवादिनः शङ्कां समाधत्ते—**व्यक्त्येत्यादि** । **पृथक्सिद्ध्यभावादिलिङ्गैः**=जातिव्यक्त्योः पृथक्स्थितेः, उपलंभस्य वाननुभवादिभिः हेतुभिः **व्यक्त्या जातेः**, जात्या व्यक्तेर्वा **अभेदम्**=भेदाभावम् यदि वदसि, तर्हि **भेदाभावः**=उभयोरभेदः **अक्षबाध्यः**=पूर्वश्लोकोक्तरीत्या प्रत्यक्षबाधितः । बाधितत्वादनुमानं वह्न्यनुष्णत्वानुमानवत् न प्रमाणम् । सर्वात्मनाऽभेदस्तु **तव च**=तवापि **न हि मतः**=न हि संमतः । **अन्यथा**=सर्वथाभेदे **अस्य**=सहोपलंभस्य **अत्र**=उक्तानुमाने **युक्तिः**=हेतुतया योजनम् **न**=न घटते । सहैव उपलंभ इत्युक्ते, कयोः? इति प्रश्नस्योत्तरमावश्यकम्, सहत्वस्य नियमेन भेदमूलकत्वात् । ननु तर्ह्येकेनैव पदेनोभयोरभिधानं कथम्? न हि गवाश्वावेकेनैव पदेन बोध्येते । ननु सन्ति हर्यादिपदान्येकेनैवा-

**धर्म्यैक्यादेकवाक् स्यात्; न तु भवति ततो धर्मधर्म्यैक्यबुद्धिः**
**तद्बोधश्चाप्युपाधिः; न स इह भवता दृश्य इत्यभ्युपेते ॥ ९ ॥**

**[अनेकान्तवादविमर्शः]**

370. **सत्त्वान्नैकान्तमाहुर्विमतमितरवत् केऽपि तद् धीविरुद्धं**
**न ह्यत्राऽऽकारभेदात् परिहृतिरनवस्थानदोषप्रसङ्गात् ।**

नेकाभिधायीनीति चेत्, पदवृत्त्यनभिज्ञस्त्वम्, न हि हरिपदमेकदैवानेकार्थाभिधायकम्, '**सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयती**'ति न्यायात् । सकृदुच्चरितं गवादिपदं तु सहैव गोत्वं गां चाभिधत्त इति संप्रतिपन्नम् । तत्कथमिति चेत्, **धर्म्यैक्यात्**=धर्मिणः=जात्याकृत्योराश्रयस्यैकत्वात् **एकवाक्**=एकशब्दः स्यात् । ननु 'जात्याकृत्योः' इति कथम्, आकृतिरेव किल जातिर्वैदिकानामिति चेत्, माऽस्तु संरंभः । एतत्तत्त्वमग्रे (श्लो.116) भविष्यति । **ततः**=एकपदबोध्यत्वमात्रात् **धर्मधर्म्यैक्यबुद्धिः**=धर्मधर्मिणोरभेदनिश्चयः **न तु भवति**, धर्मः धर्मी इति पदद्वयमेव हि तयोरभेदं प्रतिरुणद्धि । यद्यभेदः, तर्हि कथं पदद्वयम्? शब्दविकल्प एवायमित्यादिकं पूर्वमेव गतम् । ननु पदद्वयमत्र नास्ति किल । 'गौः' इत्येकमेव हि पदम् । अतः कथं भेद इत्यत्र—**तद्बोधश्च**=धर्मधर्मिणोरुभयोरपि सहैवोपलंभः अत्र उपाधिः । ततश्च प्रवृत्तिनिमित्तरहितपदस्यैवाभावात् नियमेन एकपदबोध्यत्वात्तथा प्रतीतिः । अतश्चैक्यमिव भ्रमः । न त्वैक्यम् । यतः भवता **दृश्यः**=चक्षुषा ज्ञायत एव भेदः इति भवतैवाभ्युपेते सति **सः**=अभेदः **न**, भवतैव तथानभ्युपगमात् । भेदस्तु दृश्यते, अभेदस्तु ज्ञायते इति यदा, तदा उभयोरेकप्रमाणगम्यत्वाभावात् न तयोर्बाध्यबाधकभावः । अभेद एव दृश्यते, भेदस्तु ज्ञायते इति विपरीतं किं न स्यादिति चेत्, अयमेव **सन्मात्रग्राहिप्रत्यक्षवादः** । स च पूर्वमेव परीक्षितः । विवेचयिष्यते च पुनरपि । परन्तु, अन्ततः अन्यतरस्य सावकाशत्वमागच्छति । कस्य सावकाशत्वमिति प्रश्ने, अभेदस्य सहोपलंभनियमलिङ्गकानुमितिगम्यत्वात्, सहोपलंभस्यान्यथासिद्धेरुक्तत्वात्, भेदप्रत्यक्षमेव दृढं जातम् । सहोपलंभस्तु एकसामग्रीवेद्यत्वात्, एकाधिकरणकत्वात्, समानाधिकरणशब्दप्रयोगाच्च सावकाश इति उभयोर्न समानप्रमाणगम्यत्वमिति **भेदाभेदवादो** न प्रामाणिकः । अधिकमुत्तरत्र क्रमशो भविष्यति ॥ ९ ॥

ननु कोऽयं कलिर्भवतोः? करिष्येऽहं सन्धानमुभयोः इति वादिनं **जैनं** प्रतिवक्ति—**सत्त्वादित्यादि**। **केऽपि**=जैनाः **विमतम्**=विवादविषयपुरोवर्तिपिण्डादिकम् **नैकान्तम्**=भिन्नमभिन्नं च, **सत्त्वात्**, इतरवत् 'घटाकाशमहाकाशवत्' इति दृष्टान्तः । अयमपि दृष्टान्तः स्थूलबुद्धीनां बुद्ध्यारोहार्थम् । घटाकाशः किलौपाधिकः । जैनास्तु द्वयम् अनौपाधिकं सहजम् **आहुः** । 'अनेकान्तं जगत्सर्वं हेरम्बनरसिंहवत्' इति तेषां गाथा । 'उत्पादव्ययध्रौव्ययुक्तं सत्'(त.सू.5-36) इति तदीयं सूत्रम् । वस्तूनां स्वभाव एव परस्परविरुद्धानेकरूपः । अतो विरोध एव नास्ति जगति इति वादिनस्ते । तथा च 'विमतम्, अनेकान्तिकम्, सत्त्वात्, आकाशादिवत्' इत्यनुमानम् । इदं निराकरोति—**तत्**=अनेकान्तत्वम् **धीविरुद्धम्**=प्रत्यक्षविरुद्धम् । न हि प्रत्यक्षेण भिन्नत्वमभिन्नत्वं चेति द्वयमपि तदा गृह्यते । विविच्यते पश्चात्तत् । प्रत्यक्षेण

**स्वव्यापारोक्तिचर्यासमयनियतयोऽप्येवमेवाऽऽकुलाः स्युः**
**दृष्टान्तेऽपि ह्युपाधिद्वयवति नियतः स्थौल्यसौक्ष्म्यादियोगः ॥ १० ॥**

**[अनेकान्तवादविमर्शः]**

371. **सिद्धे वस्तुन्यशेषैः स्वमतमुभयथा वर्ण्यते तत्र तत्र;**
**स्यादर्थस्यैकरूप्ये कथमिदमिति चेत्, तन्न भिन्नाशयोक्तेः ।**
**मन्तव्या वैभवोक्तिः क्वचिदनभिमते; संशयोक्तिः क्वचिद्वा**
**भागद्वैतान्नृसिंहप्रभृतिषु घटते चित्रसंस्थानयोगः ॥ ११ ॥**

भिन्नाभिन्नत्वसिद्धिरनुभवविरुद्धा । अन्यतरस्यौपाधिकत्वे तु उभयं न सहजमिति कथमनेकान्तं जगत् । हेरम्बनरसिंहदृष्टान्तस्तु पौराणिकः, न प्रात्यक्षिकः । अस्तु पौराणिकः, प्रामाणिकश्चेत् गृह्यतामिति चेत्, प्रत्यक्षेण भेदाभेदसिद्धिरिति मा वोचः । इतरत्परीक्षयामोऽनन्तरम् । ननु व्यक्त्यात्मना भेदः, जात्यात्मना चाभेद इति विरोधपरिहार इति चेत्—**अत्र आकारभेदात्**=व्यक्ति-जातिरूपात्मके वस्तुनि आकारभेदात् **परिहृतिः**=विरोधपरिहारः **न हि** । भेदाभेदयोर्निरुपाधिकत्वाभावेन उभयोस्सहजत्वाभावादुभयं नैकगतम् । ननु व्यक्तिजात्योः अभेदनिर्वाहार्थमुपाध्यन्तरमेव किञ्चिद्ब्रूम इत्यत्र—**अनवस्थानदोषप्रसङ्गात्**=परिकल्प्यमानोपाध्यन्तरस्य, आश्रययोश्च भेदो वा, अभेदो वा? इति विकल्पे, अभेदे आरंभकालिकदोषो नातिवर्तते । भेदे चानवस्था । विरोध एव लोके कुत्रापि नास्तीत्यत्रानिष्टप्रसङ्गानाह—**स्वव्यापारोक्तिचर्यासमयनियतयोऽपि एवमेव आकुलाः**=संकीर्णमयाः **स्युः**। स्वव्यापारः=स्वव्यवहारः, स्वोक्तिः=स्ववचनम्, चर्याः= आचरणम्, समयः=सिद्धान्तः, एष्वपि कुत्रापि नियतिः=व्यवस्थैव न स्यात्, सर्वमव्यवस्थितमयं स्यात् । दृष्टान्तोऽप्यसिद्ध इति प्रदर्शयति—**दृष्टान्त** इति । **दृष्टान्तेऽपि हि**=घटाकाशादौ हि **उपाधिद्वयवति**=घटाकाशगृहाकाशादिरूपोपाधिद्वयवति महाकाशे **नियतस्थौल्यसौक्ष्म्यादियोग एव दृश्यते**=गृहाकाशे स्थौल्यम्, घटाकाशे सौक्ष्म्यम्, महाकाशेऽतिमहत्त्वमित्यादिकमुपाधियोगाद्व्यवस्थितमेव दृश्यते, न त्वेकत्रैव महाकाशे सर्वं सहजतयान्वितं दृश्यत इति स्वभावत एव सर्वमनैकान्तिकमित्यत्यन्तविरुद्धम् ॥ १० ॥

ननु कोऽयं **सुभगाभिक्षुकन्यायः**? यदि वस्त्वेकरूपमेव, तर्हि परस्परं वादिनां कलहः कथम्? 'वस्तुनि विकल्पायोगात्' । कथं वा एकस्मिन्नपि मते सयूथ्यमतभेदः । एतन्निर्वाहार्थं मयोपाये प्रदर्शितेऽस्मभ्यमेव कुप्यसि किलेत्यत्राह—**सिद्ध** इत्यादि । **अशेषैः**=सर्वैरपि समयिभिः **सिद्धे वस्तुनि**=तत्तत्सिद्धान्तसिद्धे प्रमेये तत्र तत्र क्वचित्प्रमेये **उभयथा**=पक्षभेदेन वस्तुन एव द्वेधा स्वरूपं **स्वमतं वर्ण्यते** इति प्रसिद्धम् । यथा उपक्रम एव 'जडामादिमां केचिदाहुः' (जड.6) इत्यादिः । एवमन्तेऽपि 'यत्रोदासि, द्विधा वा समगणि' (अद्रव्य-135) इति । **अर्थस्य**=वस्तुनः **ऐकरूप्ये**=एकरूपत्वे **इदम्**=द्वैविध्यम् **कथम्** स्यात्? 'वस्तुनि विकल्पायोगात्' । एतन्निराकरोति—**इति चेत्, तन्न** इति । नेदं प्रश्नस्य समाधानमिति चेत्, तत्राह—**भिन्नाशयोक्तेः** इति प्रथमोत्तरम् । इदमपि नोत्तरम्, कथं वाऽऽशयभेदः? इत्यत्र—**मन्तव्येत्यादि** द्वितीयमुत्तरम् । **अनभिमते क्वचित्**=स्वासंमतेऽपि क्वचिद्विषये **वैभवोक्तिः मन्तव्या**=वैभववादरूपः

**[सप्तभङ्गीभङ्गः]**

372. **स्यादस्ति; स्याच्च नास्ति; द्वितयमनुभयं; स्यात् त्रिभिश्चान्तिमं त्रिः**
**सैषोक्ता सप्तभङ्गी जिनसमयजडैर्द्रव्यपर्यायवर्गे।**
**इष्टां सार्वत्रिकीं तां स्वपरमतकथातत्फलादौ विवक्षन्**
**कक्षीकुर्वीत धूतः कथकपरिषदा कां दिशं कान्दिशीकः ॥ १२ ॥**

सः, अङ्गीकृत्यवादः, प्रौढिरित्यत्र भागेत्यादि तृतीयमुत्तरम् **क्वचिद्वा संशयोक्तिरिति**। तथा च न सिद्धान्तस्सः। चतुर्थमुत्तरम्—**नृसिंहप्रभृतिषु भागद्वैतात्** इति। ऊर्ध्वभागाधोभागादिरूपांशभेदात् **चित्रसंस्थानयोगः**=विरुद्धाकारद्वयसंबन्ध एकस्मिन्नेव शरीरे **घटते**। अनेकान्तवादस्तु नास्त्येव॥

क्रियासु हि विकल्पस्तु द्विविधः कथ्यते बुधैः। व्यवस्थितः कुत्रचित्स्यात्तथान्यत्राव्यवस्थितः॥
वासनाभेदतो वस्तुष्वपि पश्यन्त्यनेकताम्। वनितायां कामुकादि व्यक्तिभेदाद्धि दृश्यते॥
अवस्थाभेदतो वस्तु बहुधा दृश्यते क्वचित्। रुचकः कटकश्चेत्यादि दृष्टं हि हाटके॥
बालो युवा वृद्ध इति एक एव नरो भवेत्। कृमिर्माक्षिकमित्यादिभेदो ह्येकस्य दृश्यते॥
भेदाभेदौ तु युगपत् न स्तः कुत्रापि वस्तुनि। इति नानायुक्तिभिश्चानुपदं दर्शितं स्फुटम्॥
वासानाभ्रान्तिमोहादिदेशकालदशादिभिः। कल्पनाः स्युर्बहुविधाः तत्त्वं क्वापि न भिद्यते॥
तत्तत्कक्ष्यादिभेदानामज्ञानाद्वर्धते कलिः। सांकर्याद्वा भवेच्चर्चाऽभिमानाद्वा भवेत्कलिः॥
अत एव किल प्रोक्तं वादानां मूलकारणम्। यथाकथञ्चिदज्ञानमिति सर्वज्ञमूर्तिना॥
'एवं नानाप्रसंख्यानं तत्त्वानामृषयो विदुः। सर्वं न्याय्यं युक्तिमत्त्वात् **विदुषां** किमशोभनम्॥'
चर्चाः सर्वाः परित्यज्य यो याति शरणं प्रभुम्। सर्वमेतत्तरत्येव कश्चित् धन्यो न संशयः॥ ११॥

एवं भेदाभेदवादिनोः कलहेऽनेकान्तवादेन सन्धानं मन्यमानः स एव पूर्वपक्षी सर्वत्र **सप्तभङ्गी**नयमवतारयति—**स्यादित्यादि**। 'स्यात्' इत्यविरोधसूचकं विभक्तिप्रतिरूपकमव्ययम्। किञ्चिद्वस्तु, 'एवं वा एवं वा' इति प्रश्ने, द्वयमप्यस्तु, को विरोधः? इत्यभिप्रायेण एकैकस्मिन्नपि विषये सप्तप्रकाराः—तरङ्गरूपा भवेयुः, भङ्गः—तरङ्गः इति सप्तप्रकारप्रतिपादकत्वात् 'सप्तभङ्गी' इति संज्ञा। **स्यादस्ति** इति प्रथमा। **स्यान्नास्ति च** इति द्वितीया। **द्वितयम्**=उभयमपि स्यात् इति तृतीया। **अनुभयं स्यात्**=स्यादस्तिनास्तिविलक्षणम् इति चतुर्थी। **त्रिभिश्च**=आद्यकल्पैः त्रिभिस्सह **अन्तिमम्**=विलक्षणम् **त्रिः**=त्रिवारमिति स्यादस्ति विलक्षणम्, स्यान्नास्ति विलक्षणम्, स्यादस्ति नास्ति विलक्षणम् इति चत्वारि। आह सप्तप्रकाराः। अत्र 'अनिर्वचनीयम्' इति स्थाने विलक्षणपदप्रयोगः कुत्रचित् दृश्यते। कुत्रचित् 'अवक्तव्य'पदप्रयोगो दृश्यते। किमयं नित्यः, उतानित्यः? इति प्रश्ने 1) स्यान्नित्यः, 2) स्यान्न नित्यः, 3) स्यान्नित्यः, अनित्यश्च, ४) अत एव अनिर्वचनीयः, 5) स्यादस्त्यनिर्वचनीयः, 6) स्यान्नास्त्यनिर्वचनीयः, 7) स्यादस्तिनास्ति चानिर्वचनीयः॥

**सैषा**=उक्तप्रकारा **सप्तभङ्गी द्रव्यपर्यायवर्गे**=द्रव्यवर्गे, तस्य विकारवर्गे च **जिनसमयजडैः उक्ता**। 'जडैः'इति सूचितमज्ञानं विशदयति—**सार्वत्रिकीं इष्टां ताम्**=सर्वत्रापि संमताम्, तां सप्तभङ्गीम्

[भेददूषणपरिहारः]

**373. भेदे वस्तुस्वरूपे भ्रम इह न भवेत्; धर्मपक्षेऽनवस्था**
**स्याद्वाऽन्योन्याश्रयादिः; तदयमनृत इत्युक्तिबाधादिदुःस्थम्।**
**धर्मः क्वापि, स्वरूपं क्वचिदिति च यथादृष्टि नोक्तप्रसङ्गौ**
**यद्दृष्ट्या यत्र यस्याध्यसनपरिहृतिः सोऽस्य तस्मात्तु भेदः ॥ १३ ॥**

---

**स्वपरमतकथातत्फलादौ**=स्वमतोपदेशे, परमतनिरसने, जल्पकथायाम्, तत्फलभूतजयपराजयादौ, आदिना हानोपादानादिव्यवहारादिः ग्राह्यः, एवं सर्वत्र तां **विवक्षन्**=वक्तुमिच्छन् स जिनसमयजडः **कथकपरिषदा**= अन्ततः जल्पकथासदसा **धूतः**=खण्डितः **कांदिशीकः**=भयद्रुतः **कां दिशं कक्षीकुर्वीत?** इति हास्योक्तिः॥

जानीमो वयमप्येतत् शान्त्यर्थमुपदिश्यते। इति चेत्, तर्ह्यपि ह्येवमसंबद्धं न कथ्यताम्॥
पलायनप्रवादोऽयं दुर्बलानां कथादिषु। तत्त्वस्य निर्णयेऽपि स्यादशक्तानामियं कथा॥
शिक्षणीयो विवेकस्तु यथावत्तत्त्वनिर्णयात्। मायिनोऽनुग्रहादेव विवेकस्योदयो भवेत्॥
तत्त्वं निश्चेतुकामश्चेत् संस्कारं सुदृढं कुरु। श्रयस्व सर्वसुहृदं सत्यमार्गप्रदर्शकम्॥ १२ ॥

एवं भेदाभेदवादे निरस्ते, भेदोऽप्येवमेव दुर्निरूप इत्याग्रहिणोऽभेदवादिन आक्षेपमनूद्य परिहरति—**भेद** इत्यादि। **भेदे वस्तुस्वरूपे** सति **इह**=लोके कुत्रापि **भ्रमः न भवेत्**। **धर्मपक्षे**=न वस्तुस्वरूपम्, किन्तु अतिरिक्तो धर्मः इति पक्षे **अनवस्था स्यात्**। **वा**=अथवा **अन्योन्याश्रयादिः**, आदिना चक्रक-ग्रहणम्। **तत्**=तस्मात् **अयम्**=भेदः **अनृतः**=मिथ्या इति पूर्वपक्षस्य संग्रहः॥

इत्याक्षेपे उत्तरमाह—**इति**=इत्येतत् **उक्तिबाधादिदुःस्थम्**=स्ववचनविरोधस्वानुभवविरोधादिभिः दुरवस्थं भवति। किमेवं भोः मद्दूषणेनैवात्मानं रिरक्षिषसि त्वम्। प्रश्नस्योत्तरमुच्यतामित्यत्राह—**धर्म** इत्यादि। भेदः **क्वापि**=कुत्रचित् **धर्मः**। **क्वचित् स्वरूपम् इति यथादृष्टि**=यथादर्शनम् अङ्गीकारात् **उक्तप्रसङ्गौ**=भ्रमानुपपत्तिः, अन्योन्याश्रयादिर्वेत्यापादनञ्च **न**=न भवतः। कुत्र भेदः स्वरूपम्, कुत्र धर्मः? कथं वा व्यवस्था इत्यत्राह—**यत्र**=यस्मिन् शुक्त्यादौ वस्तुनि **यद्दृष्ट्या**=यस्य शुक्तित्वादेः **पुरोवर्तिनि** दर्शनेन **यस्य अध्यसनपरिहृतिः**=रजतत्वादेरध्यासस्य परिहारः—**सः**=शुक्तित्वादिः **अस्य**=शुक्त्यादेः **तस्मात्तु**=रजतादेस्तु **भेदः**। शुक्तौ विद्यमानः रजतभेदः, शुक्तित्वरूपः, शुक्तौ विद्यमानः शुक्तित्वभेदस्तु शुक्तिस्वरूप एवेत्यनवस्थादीनां न प्रसक्तिः॥

**अयं भावः**—'स्वरूपं धर्मो वा' इति विकल्पद्वयं प्रदर्शयता, किं तृतीयमपि कल्पमङ्गीकृत्य एवं विकल्प्यते, उतानङ्गीकृत्य? आद्ये, तृतीयकल्पमङ्गीकृत्यापि विकल्पद्वयमात्रप्रदर्शने न्यूनं नाम निग्रहस्थानम्, सर्वविकल्पानामप्रदर्शनात्। तृतीयविकल्पाभावादेव न प्रदर्श्यत इति चेत्, अज्ञानमिति निग्रहः स्यात्, तृतीयविकल्पस्य सत्त्वात्। गवि अश्वभेदः स्वरूपं धर्मो वेति विकल्पमात्रे कृते, गजादिभेदस्यापलापे गौर्गजादिः स्यात्। अतो गजादिभेदस्य सत्त्वात्तद्विकल्पाज्ञानादज्ञानमिति निग्रह एव। अयि भो मेधाविन्! अश्वेतुप-

लक्षणं गोव्यतिरिक्तानामपीति चेत्, तावतां प्रतियोगिनामनन्तानां कथमनुगमः? यदि गवेतरत्वेन तर्ह्यन्योन्याश्रयः। किञ्चापोहवादोऽयम्, तच्च निराक्रियतेऽग्रे(श्लो.115)। ननु भवतामपि गवेतरसमस्तभेदः गव्यङ्गीक्रियत एवेति, कथं तावतामनुगम इति चेत्, अस्माभिरपोहातिरिक्तस्य गोत्वस्याङ्गीकारात्, गोत्वेन गवाम्, तद्भिन्नत्वेनैव तद्भिन्नानां सर्वेषामनुगमः संभवत्येव। भवता तु गोत्वस्यानङ्गीकारान्न तथा वक्तुं शक्यम्॥

अथ यया कयाचन बुद्ध्या क्रोडीकारसंभवात्, तृतीयः कल्पो नास्त्येवेति चेत्, अभ्युपगम्य पृच्छामः। स्वरूपं धर्मो वेति विकल्पयोर्द्वयोर्भेदोऽस्ति, न वा। यदि भेदो नास्ति, तर्हि विकल्पद्वयप्रदर्शनं स्ववचनविरुद्धम्। यद्यस्ति तयोर्भेदः, तर्हि स भेदः स्वरूपं धर्मो वा? स्वरूपपक्षे भेदानुपपत्त्यादिः। धर्मपक्षेऽनवस्था। अतो विकल्प एव दुःस्थ इति स्ववचनविरोधादिभिर्दूष्यम्॥

**अथैवमपि**— गवि विद्यमानः अश्वादिभेदः किं गोस्वरूप एव, उतातिरिक्तः? स्वरूपपक्षे, गोस्वरूपे गृहीते, अश्वादिभेदस्यापि गृहीतत्वात्, कदाचिद्दूराद्गां पश्यतः, तदानीमेवाश्वादिभेदस्यापि गृहीतत्वात् 'अयमश्वः' इति भ्रमः, 'अयं गौः, उताश्वः?' इति संशयो वा न स्यात्। स्वरूपे गृहीते तद्गतासाधारणधर्मेऽगृहीते च खलु भ्रमः, संशयो वा भवति लोके। अश्वभेदस्य गोस्वरूपरूपत्वे गोस्वरूपग्रहणकाल एवाश्वादिभेदस्यापि गृहीतत्वात् कदाचिदपि अश्वादिभ्रमः, संशयो वा न स्यात्। किञ्च अश्वादिभेदो हि सप्रतियोगिकः पदार्थः। गवादिस्तु भावरूपत्वात् न सप्रतियोगिकः। अभावस्य भावान्तररूपत्वेऽपि अभावप्रतीतिं प्रति प्रतियोगिज्ञानस्यावश्यकत्वात्, अभावत्वेन रूपेणाभावः सप्रतियोगिक एव। गोस्वरूपज्ञानं तु प्रतियोगिस्मरणमन्तरापि अनुभवसिद्धम्। अतः गोस्वरूपं न अश्वादिभेदमात्रम्, किन्तु अतिरिक्तमेव भवेत्। किञ्च अश्वादिभेद एव यदि स्वरूपम्, तदा 'अश्वादिभेदः गौः' इत्येव प्रतीतिः स्यात्, न तु 'अश्वादिभिन्नो गौः' इति। अतो भेदो न स्वरूपम्॥

अस्तु तर्हि अश्वादिभेदः गोस्वरूपातिरिक्त इति चेत्, तदपि न संभवति। तदा हि अश्वादिभेदः गोनिष्ठः गवादिभिन्नः, उताभिन्नः? अभिन्न इति पक्षे 'गौः अश्वादिभेदः' इत्येव प्रतीतिः स्यात्, न तु 'अश्वादिभिन्नः' इति। तदर्थमश्वादिभेदस्य गोश्च आश्रयाश्रयिभावकृतः भेदोऽङ्गीकर्तव्यः। 'गौः नाश्वः' इति प्रथमप्रतीतिः। अनन्तरम् 'गौः नाश्वभेदः, किन्तु अश्वभिन्नः' इति प्रतीतिः। अत्र गवि अश्वभेदः किं स्वयमेव सिद्ध्यति, उत भेदात् सिद्ध्यति? स्वयं सिद्ध्यति चेत्, आत्माश्रयः। तयोर्भेदात् सिद्ध्यतीति चेत्, अन्योन्याश्रयः। अश्वभेदस्य भेदः गवि वर्तमानः, पुनः कथं सिद्ध्यतीति प्रश्ने, भेदान्तराङ्गीकारे चक्रकम्। अतश्च भेदस्यातिरिक्तत्वे आत्माश्रयः, अन्योन्याश्रयः, चक्रकम्, अन्तेऽनवस्था वा। अतो भेदस्य दुर्निरूपत्वात् भेदो मिथ्या इति॥

किञ्च गवि अश्वभेदः स्वतन्त्रतया गृह्यते, उत धर्मिप्रतियोगिग्रहणसापेक्षो गृह्यते? आद्ये, स भेद एव न स्यात्, भेदस्याभावविशेषरूपत्वेन अनुयोगिनः प्रतियोगिनश्च ग्रहणमन्तरा ग्रहणासंभवात्, अनुयोगिप्रतियोगिनिरूप्यो ह्यभावः। अस्तु तथैव, अनुयोगी गौः, प्रतियोगी अश्वः। 'गौः अश्वो न' इत्येव प्रतीतेः इति चेत्, तर्हि पूर्वम् अनुयोगिप्रतियोगिनोः परस्परं, ततो भेदस्य च परस्परं भेदग्रहणमावश्यकम्। यद्येतेषां परस्परं भेदो न गृहीतः, तर्हि परस्परं भेदाग्रहणेऽपि भेदप्रतीतिर्यदि स्यात्, तदा घटस्य स्वस्माद्भेदस्य

ग्रहणाभावात् 'घटभिन्नो घटः' इत्यप्यनुभवप्रसङ्गः। अनुयोगिप्रतियोगिनोर्भेदाग्रहणेऽपि भेदप्रतीतेरङ्गीकारात्। तथा च अनुयोगिप्रतियोगिनोरुभयोरप्यैक्येऽपि भेदप्रतीतिस्संभवेदित्यङ्गीकृतं भवति। एवञ्च स्वस्यैवानुयोगित्वे, प्रतियोगित्वेऽपि भेदप्रतीतिरुक्ता भवतीति 'घटभिन्नो घटः' इति प्रतीत्यापत्तिः। अतः अनुयोगिप्रतियोगिनोः प्रथमं भेदग्रहणमावश्यकम्। तथाचान्योन्याश्रयः, तयोर्भेदग्रहणे गवि अश्वभेदग्रहणम्, अश्वभेदग्रहणे तयोर्भेदग्रहः इति। अथवा वस्तुत आत्माश्रयो वा। गवि अश्वभेदग्रहण एव 'गौः अश्वो न' इति प्रतीतेस्संभवेन, उभयोरेकत्वात्। न च तयोर्युगपदेव ग्रहणमस्त्विति शङ्क्यम्, अभावबुद्धिं प्रति प्रतियोगिज्ञानस्य कारणत्वात्। घटमेवाज्ञातवतः घटाभावप्रतीतेरसंभवात्, प्रतियोगिनिरूप्यो ह्यभावः। एवमनुयोगिग्रहणमप्यभावग्रहणस्यावश्यकम्— 'घटः पटो न' इत्येव किल प्रतीतिः। अतश्च भेदग्रहणं कदापि न संभवति, भेदस्य दुर्निरूपत्वात्, दुर्ग्रहत्वाच्च। अत एव मिथ्येति चेत्—

**अत्रोच्यते**—शुक्तौ शुक्तित्वाग्रहणादेव रजतभ्रमो भवतीति संप्रतिपन्नम्। तथैव शुक्तित्वे गृहीते रजतभ्रमो न भवेदित्यपि। तथा च शुक्तौ विद्यमानो रजतभेदः शुक्तित्वरूप एव, अतिरिक्तत्वे प्रमाणाभावात्। भेदस्यातिरिक्तत्ववादिभिरपि हि रजते विद्यमानो रजतभेदाभावः भेदप्रतियोगितावच्छेदकरूप इत्युच्यते। रजते रजतभेदो न वर्तते। अतो रजतभेदाभावः रजतत्वरूपः, रजतत्वरजतभेदाभावयोस्समनियतत्वात्। एवमेव शुक्तौ वर्तमानः रजतभेदः शुक्तित्वरूपः। ननु रजतत्वरजतभेदाभावयोस्समनियतत्वात्तयोरैक्यमुच्यते। शुक्तित्वरजतभेदयोस्तु न तथा समनियतत्वमस्ति। यत्र शुक्तित्वम्, तत्र रजतभेदः। यत्र रजतभेदः तत्र शुक्तित्वं नास्ति, रजतभिन्ने घटादौ शुक्तित्वाभावादिति शुक्तित्वव्यापकत्वस्य रजतभेदे सत्यपि, रजतभेदव्यापकत्वं तु शुक्तित्वे नास्त्येव, रजतभेदस्य रजतव्यतिरिक्ते सर्वत्र रङ्गादावपि सत्त्वेन, तत्र शुक्तित्वस्याभावादिति चेत्, 'शुक्तिः रजतं न' इतिप्रतीतिसिद्धस्य शुक्त्यनुयोगिकरजतभेदस्यैवात्र रजतभेदपदेन विवक्षणात्। शुक्त्यनुयोगिकरजतभेदस्य शुक्तिव्यतिरिक्तेऽसत्त्वेन, शुक्तावेव सत्त्वेन, तत्र शुक्तित्वस्य सत्त्वेन समनियतत्वसिद्धेः। न चाधिकरणभेदेनाभावभेदः कथम्? प्रतियोगिभेदः खल्वभावभेदप्रयोजक इति रजतभेदः कथं शुक्तिमात्रे स्यादिति वाच्यम्, अभावस्यातिरिक्तत्वपक्ष एव तथा वक्तुं शक्यत्वात्। अभावस्याधिकरणात्मकत्वपक्षे तथा निर्बन्धाभावात्। नन्वेवं तर्हि रजतभेदः शुक्तिरूप एवास्त्विति चेत्, तर्हि 'शुक्तिः रजतभिन्ना' इति व्यवहारो न स्यात्। 'शुक्तिः रजतभेदः' इत्येव स्यात्, न तु 'भिन्ना' इति। अभावाभावस्य प्रथमाभावस्वरूपत्वेऽपि भेदाभावस्य भेदप्रतियोगितावच्छेदकरूपत्ववत्, अनुभवानुरोधेनैव विषयव्यवस्थापनात्। अथवा शुक्त्यनुयोगिकत्वविशिष्टरजतभेदस्य विशिष्टवेषेण भिन्नत्वात्समनियतत्वाविरोधात्। अतो रजतभेदः शुक्तित्वरूपः। शुक्तौ विद्यमानस्तु शुक्तित्वभेदः नातिरिक्तः, तद्व्यक्तिरूपः। अतश्च भेदः कुत्रचिद्धर्मरूपः, कुत्रचित्तु स्वरूपात्मकः। कुत्रचित्स्वरूपपररूपत्वे, स्वरूपस्य सप्रतियोगिकत्वाभावात्, कथं भेदरूपत्वम्? भेदस्य नियमेन सप्रतियोगिकत्वादित्यादिकं तु, अभावस्य कुत्रचिदनतिरिक्तवादिनां मत इव प्रतीतिभेदेन निर्वाह्यम्। जातिव्यक्त्योस्तु भेदे एतादृशापादनादीनामभावात् तयोर्भेद एव। अतो भेदो न दुर्निरूपः। भेदग्रहणानुपपत्तिस्तु समनन्तरश्लोके समाधीयते॥

[भेदग्रहणानुपपत्तिपरिहारः]

374. भेदो गृह्येत बुद्ध्वाऽधिकरणमवधिं चेति न ह्यक्रमोऽस्मिन्
प्रत्यक्षस्य क्रमोऽपि क्षणभिदुरतया नेति तुल्यं भ्रमेऽपि ।

**अत्रेदमवधेयम्**—इक्षुक्षीरगुडादिमाधुर्यवत् सर्वेषामपि वस्तूनां कस्याञ्चिदवस्थायां दुर्निरूपत्वं स्यादेव । तावता तद्विषयकोऽनुभवः, व्यवहारश्च आबालवृद्धं सिद्धः केन वारयितुं शक्यः? दुर्ज्ञेयत्वमन्यत्, दुर्निरूपत्वमन्यत् । सर्वत्र संविदेव हि भगवती प्रमाणम् । सुखदुःखादयोऽपि हि स्वानुभवमात्रसिद्धाः कथं परस्मै निरूपयितुं शक्याः? दुर्निरूपत्वमात्रात् मिथ्यात्वमिति त्वाग्रहमूलकम्, बुद्धिदौर्बल्यमूलकं वा ॥

किमधिकोक्त्या? कारणदोषबाधकप्रत्यययोरभावेऽपि मिथ्यात्वं यदि स्यात्, तर्हि लोकशास्त्रव्यवहारस्सर्वोऽप्युच्छृङ्खलः स्यात् । अविचारितरमणीयोऽयं लोकव्यवहार इति चेत्, पुरतः प्रोक्तमपि नावहितमायुष्मता । लोकव्यवहारस्तथा स्यात्, न शास्त्रव्यवहारः । शास्त्रव्यवहारोऽपि तादृश एव कश्चित् इति चेत्, शोभते किलेदमर्थकामव्यतिरिक्तमिथ्यात्ववादिनाम् । लौकिकाः, परीक्षकाश्चेति द्वयोरपि प्रामाणिकत्वं तु परीक्षकजनसंमतम् । तत्राप्युभयोर्मध्ये परीक्षका उपादेयतराः । यत एते शास्त्रनिष्णाताः । शास्त्रं हि विज्ञानरूपम्, न केवलशब्दराशिरूपम् । वैज्ञानिकानामपि विषयाणां मिथ्यात्वे पुनरुल्लोलकल्लोलतैव सर्वत्र ॥

अयि भोः! ब्रह्मभिन्नत्वात् भेदस्य मिथ्यात्वमनिवार्यमिति चेत्, हन्त घट्टकुट्यां प्रभातम् । ब्रह्मभिन्नत्वमिति वदतः स्ववचनमपि नावधृतम् । तत्रैव किल भेदोऽङ्गीकृतः । भेदो दुर्निरूप इति वदतैव कथमेवं भेदो हेतूकृतः । किं बहुना! भेदस्यापलापे हि—

स्वभार्यापरभार्यादिभेदज्ञानं कथं तव? नास्त्येव भेद इति चेत् विटानामग्रणीर्भवान् ॥
न केवलं हि वादेषु विटा नाधिकृता मताः । असंभाष्याश्च साधूनां समाजात्ते बहिष्कृताः ॥
अग्रासनं वा ताम्बूलद्वयं वा गृह्यतां मुदा । स्त्रियो वापि यथैवेच्छा, यतो मिथ्याखिलं हि ते ॥
धर्ममोक्षौ हि मिथ्या ते त्वर्थकामौ परं त्वृतम् । नैवं नाशय तत्त्वस्य क्षेत्रं साधुभिरादृतम् ॥
किञ्च भेदापलापो हि न शक्यो ब्रह्मणापि हि । यन्न वेत्ति गजाश्वादिभेदं तान् स कथं सृजेत्?
नामरूपादिभेदो हि सृष्टिरित्यभिधीयते । यो न जनाति जीवेशभेदं तं खण्डयेत् कथम्?
सर्वं मिथ्येति वदतां ब्रह्मापि स्यात्तथा बत । मनस्साक्ष्यादिहीनैस्तु विचारो व्यर्थ एव हि ॥
यावद्बुद्धिः प्रसरति शब्दो यावत्प्रवर्तते । तावत्स्याद्द्वयसांकर्यं तावत्सर्वं तु वर्तते ॥
ब्रह्मविद्यापि नैका स्यात् भेदस्यैव तु रक्षणात् । सत्यमिथ्याविभागादिसिद्धिरप्यत एव हि ॥
शिष्टं पृथक्त्वे द्रष्टव्यं भेदसिद्धिस्ततो भवेत् । व्यावहारिकमेतत्स्यादित्याद्यं बहुधा गतम् ॥ १३ ॥

भेदग्रहणे पूर्वोक्तामनुपपत्तिं परिहरति—**भेद** इत्यादि । **भेदः अधिकरणम्**=अनुयोगिनम् **अवधिम् च**=प्रतियोगिनं च **बुद्ध्वा**=ज्ञात्वैव **गृह्येत** इति हेतोः **अस्मिन्**=भेदग्रहणे **अक्रमः**=यौगपद्यम् **न हि** भवितुं शक्यम्, अभावबुद्धौ प्रतियोग्यनुयोगिज्ञानस्य कारणत्वेन, कारणस्य च पूर्ववृत्तित्वनियमात्, पूर्वं तयोर्ज्ञाने चात्माश्रयादिप्रसङ्गात् । अस्तु तर्हि क्रमश एव ग्रहणमिति चेत्, **प्रत्यक्षस्य**=विशेष्यविशेषणज्ञानयोः

**अक्षान्धादिव्यवस्थाक्षतिरपि; युगपत् योग्यधर्मैर्ग्रहोऽतः**
**तद्युक्ते भिन्नशब्दः कथिततदुपधिज्ञप्त्यपेक्षः क्रमात् स्यात् ।। १४ ।।**

**क्रमोऽपि, क्षणभिदुरतया**=ज्ञानानां क्षणिकत्वात् विशेषणज्ञानविशेष्यज्ञानयोः भिन्नक्षणवृत्तित्वेन, उभयोरपि ज्ञानयोः स्वतन्त्रत्वेन 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति न्यायेन परस्परमुपकारोपकार्यभावासंभवात् **नेति**=न संभवतीति भेदग्रहणानुपपत्तिरिति न, यत इद **भ्रमेऽपि**=भेदभ्रमेऽपि **तुल्यम्**, भ्रम ज्ञानस्यापि कारणजन्यत्वात् एते आक्षेपास्सर्वे समानाः। उत्तरं च यद्भवति तत्र, तच्च भेदज्ञानस्य प्रमात्वेऽपि भविष्यति॥

अपि चैवं भेदग्रहणानुपपत्तिं वदता भेदाख्यप्रमेयस्य सत्तामङ्गीकृत्यैवमुच्यते, उतानङ्गीकृत्य? भेदस्य सत्ता यदि सिद्धा, तर्हि तत्र ज्ञानादिकमप्यावश्यकम्, कारणमपि तदनुगुणमुपपादनीयमेव। यदि भेद एव नास्तीत्युच्यते, तर्हि रूपरसादिभेदो वा, तद्ग्राहकेन्द्रियभेदो वा न स्यादिति—**अक्षान्धादिव्यवस्थाक्षतिरपि**=इन्द्रियव्यवस्थाया नाशः, अन्धबधिरादिव्यवस्थाया अपि नाश इति जगदिदं सांकर्यमयमेव **स्यात्**। **अतः योग्यधर्मैः**=ग्रहणयोग्यैः=एकेन्द्रियग्रहणयोग्यधर्मैः विशिष्टस्यैव विशेष्यस्य **युगपत् ग्रहः** भवति। एवं भेदस्य ग्रहे **तद्युक्ते**=तद्विशिष्टे विशेष्ये **भिन्नशब्दः**=भिन्न इति व्यवहारः **कथिततदुपधिज्ञप्त्यपेक्षः**=कथितः यः प्रतियोगिग्रहणसापेक्षत्वरूप उपाधिः, तद्ज्ञानजन्यः **क्रमात्**=अनन्तरं **स्यात्**। अतो भेदः, भेदग्रहणम्, तद्व्यवहारश्च युज्यत एव॥

**अयमत्र संग्रहः**—भेदग्रहणस्य प्रतियोग्यनुयोगिग्रहणसापेक्षत्वात्, अन्योन्याश्रयादिप्रसङ्गादिर्य उक्तः, तत्रेदं वक्तव्यम्। भेदस्य दुर्निरूपत्वेन भेदाख्यपदार्थस्यैवाभावात् तद्ग्रहणं भ्रम इति विवक्षितम्? उत तद्ग्रहणमेव लोके न दृश्यत इति विवक्षितम्? नाद्यः, अनुपदमेव भेदस्य निरूपितत्वात्। न द्वितीयः, लोकेऽनुभूयमानत्वात् 'घटः पटो न' इति व्यवहाराच्च। विषयस्य सत्त्वेऽपि ज्ञानं भ्रमात्मकं कदाचित् कथं भवतीति प्रश्ने उत्तरं वक्तव्यमेव। न हि निराधारम्, निर्हेतुकं च किञ्चित्कार्यं भवितुमर्हति, तदा हि सर्वं सर्वत्र संभाव्येत। घटं दृष्ट्वापि सर्पभ्रमः स्यात्, रज्जुं दृष्ट्वैव सर्पभ्रम इति परिदृश्यमानव्यवस्थादिर्न स्यात्। सर्वमविचारितरमणीयमिति चेत्, इयं चर्चाप्यविचारितरमणीया स्यात्। अत्रापीष्टापत्तौ मौनिना भवितव्यम्। जिज्ञासून् प्रति त्वस्माभिरुच्यते इति यदि,—भ्रमत्वेऽपि ज्ञानस्य कारणोपपत्त्यादिप्रदर्शनं तेभ्यः कर्तव्यमेव। सर्वथाऽसतः शशशृङ्गादेर्भ्रमः कस्य वा भवेत्? ज्ञानकारणमन्यत्, वस्तुनः कारणं चान्यत्। दण्डचक्रमृदादिकं घटात्मकवस्तुनः कारणम्। चक्षुरिन्द्रियादिकं च ज्ञानकारणम्। ज्ञानकारणं चक्षुरिन्द्रियादिकं ज्ञानस्य प्रमात्वे, भ्रमत्वे वा समानम्। न हि सर्पभ्रमः इन्द्रियाद्यजन्यः, तदा हि अन्धस्यापि सर्पभ्रमः स्यात्, चक्षुष्मतः अन्धकारेऽपि सर्पभ्रमः स्यात्। अतः प्रत्यक्षादिज्ञानकारणानि प्रमाभ्रमसाधारणान्येव। एवञ्च प्रमात्वभ्रमत्वयोः 'वीवधघट'न्यायेन[1] परस्परसमतोलनस्यावश्यकत्वात्, कारणोपपादनमुभयत्र समानमेव। वस्तुनस्सत्त्वे प्रमा,

---

[1]वीवधो नाम व्यामप्रमाणदीर्घवेणुदण्डस्याग्रद्वयेऽपि शिक्यं बद्ध्वा जलाद्यानयनार्थं घटादिकं नीयते। भाषायां 'कावडि' इत्युच्यते। तत्रोभयोस्समतोलनमावश्यकम्। समतोलनमेव 'योगः'। अन्यतराभावेऽन्यतरदपि न स्यात्॥

[अद्रव्यविभागः]

375. अद्रव्ये नैकरूपे ह्यगणिषत गुणाः सत्त्वमुख्याः द्विधाऽऽद्यं;
शुद्धं तन्नित्यभूतौ; त्रितयमिह चतुर्विंशतौ व्याप्तितः स्यात्।

असत्त्वे भ्रम इत्येतावन्मात्रं वैलक्षण्यम्। एतदपि कथं भवतीत्यादिकं हि विस्तरेण विचारितं पूर्वमेव (श्लो.11-15)। एवञ्च भेदज्ञानस्य भ्रमत्वेऽप्युक्ताक्षेपाणां समानत्वात्तत्र यदुत्तरं भविष्यति, तत् प्रमात्मकज्ञानेऽपि भविष्यति। भेदाख्यप्रमेये सत्ये, ज्ञानं प्रमा भविष्यति, न चेत् भ्रम इत्यस्त्वेतत्॥

**भेदाख्यं प्रमेयमधिकृत्य वदामः**—भेदः सुनिरूपो वा, दुर्निरूपो वा भवतु, तदेतत्पुरुषसामर्थ्याधीनम्। वस्तुतत्त्वं तु नास्मत्सामर्थ्याधीनम्। सूर्यस्तूदेत्येवान्धस्यापि चक्षुष्मतोऽपि। भेदाख्यं किञ्चित्तत्त्वमेव यदि न स्यात्, तर्हि रूपरसादिभेदोऽपि न स्यात्, चक्षुरादीन्द्रियभेदोऽपि न स्यात्। अन्धोऽपि रूपं गृह्णीयात्, बधिरोऽपि शब्दं गृह्णीयात्। 'चक्षुष्मते शृण्वते ते ब्रवीमि' इत्यपौरुषेयी वागपि निरर्था स्यात्॥ सर्वमिदं मायिकमविचारितरमणीयमिति न जानासि किल भोः!॥ जानामि भोः! तद्वदेवाविचारितरमणीयं कारणादिकं व्यवस्थादिकमपि खलु दृश्यते भोः! किं कुर्मो वयम्? मायाविचारोऽपि पूर्वमेव (नायक.41) गतः। मायालोक एव वयं वसामः, व्यवहरामश्च। त्वमपि तथैवोत्तरं वद॥ अयि भोः! प्रशंसामस्तव चातुरीम्। जिज्ञासया पृच्छामः। वस्तु,स्थितिः प्रदर्श्यताम्—कथं ग्रहणमिति॥ गवि अश्वभेदः गोत्वरूप एव। गौः, गोत्वं चेत्युभयमेकसामग्रीवेद्यत्वात् युगपदेव गृह्यते। कार्यकारणभावोऽपि एकसामग्रीवेद्यस्थले समानकालिकयोरपि भवति, अनुभवात्। गोत्वं निष्प्रतियोगिकं किल स्वत इति चेत्, सत्यम्, स्वतः। परं तु तदेव अश्वादिप्रतियोगिन उपस्थितौ भेदरूपोऽपि भाति, तथा व्यवह्रियते च। गोग्रहणकाले तु स्वरूपतः स्वत एव गृह्यते. सामग्र्या एकत्वात्। अतो न कश्चन क्लेशः संविदो भगवत्याः। निर्वृतः स्वपिहि!। अतो भेदोऽस्त्येव, तद्ग्रहणमपि भवत्येव, एतदपि प्रमैव, सर्वं सुनिरूपमेव। अतश्च—

'भेदग्राहि न नो मानं लौकिकं वैदिकं च यत्। अविचारितसंसिद्धिस्तस्माद् भेदोऽवसीयताम्॥'(बृ.वा.)
इत्यादिवचनं सम्यक् भुक्तस्य स्वप्नवद्भवेत्। ज्ञेयं विवेकिभिर्लोके परमार्थस्थितैर्दृढम्॥
सर्वं मिथ्येति वादानामर्थ एव न विद्यते। यतस्सर्व निराबाधं दृश्यते निखिलैरपि॥
वैराग्यादिप्रसिद्ध्यर्थमुच्यते चेत्, तथोच्यताम्। न तु लौकिकशास्त्रीयव्यवहारेषु कथ्यताम्॥ १४॥

प्रसक्तं विचारं परिसमाप्य, अद्रव्यपदवाच्यान् गुणान् विभजते—**अद्रव्य** इत्यादि। **नैकरूपे**= अनेकविधे अद्रव्ये=अद्रव्यवर्गे हि **सत्त्वमुख्याः गुणाः**=सत्त्वरजस्तमोगुणाः **अगणिषत**=परिगणिताः, इतरेषामेतद्विवरणरूपत्वात् प्रथममुक्तिरेषाम्। तत्र **आद्यम्**=सत्त्वम् **द्विधा,** शुद्धम्, अशुद्धमिति। तत्र **शुद्धं तत्**=सत्त्वम् **नित्यभूतौ**=नित्यविभूतौ 'त्रिपादस्यामृतं दिवि' इति त्रिपाद्विभूतिपदवाच्ये वैकुण्ठाख्येऽप्राकृतलोके शुद्धसत्त्वमयं सर्वम्। वस्तुतस्तु तत् न त्रिगुणान्तर्गतस्य सत्त्वस्य रूपम्, किन्त्वतिरिक्तमेव, अथाप्येवमुक्तिः तस्याजडत्वेऽपि चेतनत्वं नास्तीति परिज्ञानायेत्यादिकं पूर्वमेव गतम्। **इह त्रितयम्**=गुणत्रयं

**पञ्चान्ये शब्दपूर्वा अपि परिगणिता भूतवर्गेष्वथान्यः**
**संख्यानादिश्च भेदः परिणमति यथासंभवं द्रव्यवर्गे ॥ १५ ॥**

**[सत्त्वरजस्तमोनिरूपणम्]**

376. **स्थित्युत्पत्त्यन्तलीलाविधिषु भगवताऽधिष्ठिताः शास्त्रवेद्याः**
**सत्त्वाद्याः स्थूलसूक्ष्मप्रकृतिगतगुणा हेतुभूतास्सुखादेः ।**
**साम्ये तेषां त्रयाणां सदृशपरिणतिः स्यादिहान्याऽन्यथात्वे**
**क्लृप्ताऽन्यैर्द्रव्यतैषां श्रुतिपथविहता; कुत्रचित्तूपचारः ॥ १६ ॥**

---

तु **चतुर्विंशतौ**=चतुर्विंशतितत्त्वेषु **व्याप्तितः स्यात्**—सर्वेषु व्याप्यैव वर्तते । **शब्दपूर्वाः**=शब्दाद्याः **पञ्च अन्ये अपि गुणाः**=शब्दस्पर्शरूपरसगन्धरूपाः **भूतवर्गेषु**=पञ्चभूतेषु स्थिता अपि परिगणिताः । एते पञ्च गुणाः सृष्टौ एकोत्तरवृद्ध्या पञ्चभूतेषु भवन्ति । लये च एकैकशः क्षीणाश्च भवन्ति । इदं सर्वं श्रीशङ्कराचार्यादिसंमतेषु पर्यङ्कविद्यादिषु विस्तरेण द्रष्टव्यम् । **अथ अन्यः संख्यानादिश्च**=संख्यानम्= संख्या । संख्यादयश्चेतरः **भेदः**=गुणभेदः **द्रव्यवर्गे यथासंभवम् परिणमति** । परिणामो द्रव्यस्यैव, न तु गुणानाम् । अत एव गुणान् प्रति द्रव्यस्य समवायिकारणत्वम्, अथवोपादानत्वमपि नास्ति । किन्तु पूर्वावस्थाविशिष्टं द्रव्यम् उत्तरावस्थाविशिष्टद्रव्यात्मना परिणमते । तत्तद्गुणा एवावस्थापदवाच्याः । अत एव **अवस्था**पदमपि अद्रव्यवर्गस्य साधारणश्शब्दः । 'शब्दोऽवस्थाविशेषः'(22) इति निर्देशो द्रष्टव्यः । संख्यादयोऽपि गुणास्सन्त्येव, व्यवहारे दर्शनिन निराकर्तुमशक्याः । किन्तु तेऽतिरिक्ता न वेत्यन्यदेतत् । परं तु सत्त्वम्, रजः, तमः, शब्दः, स्पर्शः, रूपम्, रसः, गन्धाः, संयोगः, शक्तिश्चेति दशद्रव्याणीति संप्रदायः । शिष्टं तत्तत्प्रकरणे भविष्यति । सर्वमिदमतिस्थूलदृष्ट्येति मन्तव्यम् ॥ १५ ॥

आद्यानां सत्त्वरजस्तमसां निरूपणम्—**स्थिती**त्यादि । **सत्त्वाद्याः** त्रयो गुणाः **स्थित्युत्पत्त्यन्त-लीलाविधिषु**= सृष्टिस्थितिप्रलयरूपलीलाव्यापारेषु **भगवता**=परमात्मना **अधिष्ठिताः**= शरीरितयाधिष्ठाय प्रेरणविषयाः शास्त्रवेद्याः, न तु ऐन्द्रियकाः **स्थूलसूक्ष्मप्रकृतिगतगुणाः**=प्रकृतेः स्थूलावस्थायां सूक्ष्मावस्थायां वा, सर्वत्रानुवर्तमानाः **सुखादेः**=सुखदुःखमोहादेः **हेतुभूताः** भवन्ति । सत्त्वं सुखहेतुः, रजः दुःखहेतुः, तमः आवरणहेतुरित्यादिकं गीताशास्त्रे विस्तरेण प्रतिपादितम् । **तेषां त्रयाणां** गुणानाम् **साम्ये**=साम्यावस्थायां प्रलये **सदृशपरिणतिः स्यात्** । 'सततविक्रिया' इति कथनात् प्रलयावस्थायामपि त्रिगुणानां परिणामास्सन्त्येव, किन्तु **सदृशपरिणतिः**=सदृशपरिणामपरंपराः स्युः । **अन्यथात्वे**=सृष्टौ तु **अन्या**=अन्यादृशी=विषमा परिणतिः । **एषाम्**=सत्त्वरजस्तमसाम् **द्रव्यता**=द्रव्यत्वम् **अन्यैः**=सांख्यैः **क्लृप्ता**=कल्पिता अत एव—**श्रुतपथविहता**=वैदिकमार्गविरुद्धा । परिणामवत्त्वमेव द्रव्यत्वम् । गुणानां स्वतन्त्राणां कथं परिणामः? ननु तर्हि 'नान्यं गुणेभ्यः कर्तारम्' (गी.14-19) इत्यादौ गुणानामेव कर्तृत्वं कण्ठत उक्तं कथं संगच्छेत? इत्यत्राह—**कुत्रचित्तु उपचारः** इति । 'प्रकृतेः क्रियमाणानि गुणैः' (गी.3-27)'प्रकृतेर्गुणसंमूढाः'

[प्रकृतेः परिणामाः]

377. **बुद्धित्वादिः प्रधाने समपरिणतिरित्येवमागन्तुधर्माः**
**द्रव्येष्वन्येषु चान्ये, कतिचन कथिताः केचिदध्यक्षसिद्धाः ।**
**आनन्त्यादर्थमान्द्यात् दुरवगमतया सूक्ष्मवैषम्यभेदै-**
**रेकैकश्येन चिन्तामिह जहति बुधा निश्चितापेक्षितार्थाः ॥ १७ ॥**

[शब्दाद्यद्रव्यपरीक्षा]

378. **शब्दाद्याः तत्तदक्षप्रतिनियतिजुषः सर्वतन्त्रप्रसिद्धाः**
**तैरेकद्व्यादिसंख्यैर्द्युपवनहुतभुग्वारिभूम्यस्समेताः ।**

---

(गी.3-29) इत्यादौ गुणाश्रयत्वस्यापि कण्ठत एवाभिधानात् 'नान्यं गुणेभ्यः' इत्यादिकमौपचारिकम् । कथमेवं निर्णयः, द्वेधापि दर्शनादिति चेत्, गतोऽयं विचारः पूर्वमेव (जीव.8) विस्तरशः । अतो गुणवती प्रकृतिः, न तु गुणा एव ॥ १६ ॥

प्रधानपदवाच्यायाः प्रकृतेः परिणामान् प्रदर्शयति—**बुद्धित्वादिरिति** । **प्रधाने**=प्रकृतितत्त्वे **बुद्धित्वादिः**=महत्तत्त्वप्रभृतिः, व्यक्ततत्त्वेषु प्रथमस्य बुद्धितत्त्वस्य महत्त्वात् तत् महदित्युच्यते । तत्र सात्त्विकमहतः प्रकाशकत्त्वात् बुद्धितत्त्वमिति संज्ञा; **असमपरिणतिः**=विषमपरिणामः **इत्येवम्** रीत्या **अन्येषु**=द्रव्येषु च **आगन्तुधर्माः**=आगन्तव अहंकारादिषु इन्द्रियादिरूपाः **अन्ये कतिचन** परिणामाः **कथिताः**=शास्त्रेषूक्ताः, **केचित्**—स्थूलाः परिणामाः पृथिव्यादयः **अध्यक्षसिद्धाः**=प्रत्यक्षसिद्धाः । चतुर्विंशतितत्त्वानीति परिगणितान्यतीन्द्रियाण्येव । तद्विकारास्तु केचनैन्द्रियका इत्यादिविभागाः ग्रन्थारंभ एव सृष्टिप्रक्रियायां विवृताः (जड.11-12) । परन्तु इतोऽप्यन्ये विचित्रा विकारा अपि सन्ति । परन्तु, तेषाम् **आनन्त्यात्**=परिगणितुमशक्यत्वात्, **अर्थमान्द्यात्**=क्लेशेन परिगणनेऽपि काकदन्तपरीक्षावत् अत्यल्पप्रयोजनत्वात्, **दुरवगमतया**=अध्येतृभिः अत्यन्तं कष्टेनैव ज्ञातुं शक्यत्वाच्च **एकैकश्येन**=प्रत्येकमेकैकशः **सूक्ष्मवैषम्यभेदैः**=परस्परं वैषम्यविशेषस्यातिसूक्ष्मत्वाच्च **इह चिन्ताम्**=एतस्मिन् विचारम् **निश्चितापेक्षितार्थाः**=अत्यन्तावश्यावगन्तव्ये विषये निश्चयवन्तः **बुधाः जहति**=त्यजन्ति । 'चिन्तासाफल्यमान्द्यात् श्रमबहुलतया तत्र तद्ज्ञैरुदासि'(जड.15) इत्यादिन्यायेन उदासते । एतादृशेषु वृथाश्रमो न कार्यः॥ १७ ॥

गुणत्रयनिरूपणानन्तरं शब्दादिपञ्चगुणान् निरूपयति—**शब्दाद्या** इति । **शब्दाद्याः**=शब्दस्पर्शरूपरसगन्धाः पञ्चगुणाः । **तत्तदक्षप्रतिनियतिजुषः**=तत्तद्ग्रहणसमर्थतत्तदिन्द्रियस्य विषयतया व्यवस्थिताः **सर्वतन्त्रप्रसिद्धाः**=सर्वशास्त्रसंमताः, नास्त्येषु कस्यापि विवादः । **एकद्व्यादिसंख्यैः तैः**=एकः, द्वौ, त्रयः, चत्वारः, पञ्चेति एकैकोत्तरवृद्धसंख्यैः तैः गुणैः क्रमात् **द्युपवनहुतभुग्वारिभूम्यः**=आकाशः, वायुः, तेजः, जलम्, पृथिवी इति पञ्चभूतानि **समेताः**=युक्ताः । शब्दैकगुणक आकाशः, शब्दस्पर्शगुणको वायुः, शब्दस्पर्शरूपगुणकं तेजः, शब्दस्पर्शरूपरसगुणका आपः, शब्दस्पर्शरूपरसगन्धगुणका पृथिवी ।

**पञ्चीकारादिनैषां विनिमितगुणता व्योमनैल्यादिबोधे**
**तद्योगात् तत्र तत्तद्गुणजनिरिति चेत्, नान्यथाऽत्रोपपत्तेः ॥ १८ ॥**

**[शब्दादिषु दिव्यादिव्यभेदः]**

379. **कस्तूरीचम्पकादौ समविषमतया सम्मतः सौरभादिः;**
**तद्वच्छब्दादयोऽमी त्रिगुणतदधिकद्रव्यनिष्ठा गुणाः स्युः ।**
**निष्कृष्टे शास्त्रदृष्ट्या न कथमपि मिथस्संकरः शङ्कनीयः**
**स्वाच्छन्द्याच्छङ्कमानः स्वमिव सुरगुरुं किं न शङ्केत मुग्धम् ॥ १९ ॥**

---

**व्योमनैल्यादिबोधे**=‘नीलं नभः’ इत्यादिज्ञाने **एषाम्**=पञ्चभूतानाम् **पञ्चीकारात्**=पञ्चीकरणप्रक्रियया **विनिमितगुणता**=परस्परविनिमयात्=मिश्रणात् तत्तद्गुणविशिष्टता भवति । पञ्चीकरणप्रक्रियापि पूर्वमेव (जड.17) निरूपिता । तथा च ‘नीलं नभः’ इति प्रतीतिः आकाशेऽपि पार्थिवभागसंबन्धात् भवति । अयमपि विषयः पूर्वमेव (जड.42) न्यरूपि । किमर्थमेवं क्लेशः? यथा वायौ तेजस्संबन्धादौष्ण्यम्, पार्थिवसंबन्धात् गन्धः, एवमेवाकाशेऽपि पार्थिवाणुसंबन्धादेव नीलिमोत्पत्तिर्भवतु, किं पञ्चीकरणकल्पनयेत्यत्राह—**तद्योगात्**=तत्तद्भूतसंबन्धादेव **तत्र**=तत्तद्भूतेषु **तत्तद्गुणजनिः**=तत्तद्गुणानामुत्पत्तिः **इति चेत्**, न । कुतः? **अत्र**=व्योमनैल्ये **अन्यथा**=नूतनगुणोत्पत्त्यपेक्षया प्रकारान्तरेणैव **उपपत्तेः** संभवात् । न वयं आकाशे नैल्योपपादनार्थं पञ्चीकरणं ब्रूमः, किन्तु सृष्टिप्रक्रियासिद्धेनैव पञ्चीकरणेनास्याप्युपपत्तिं प्रदर्शयामः, **कूपखननन्यायेन** । भवतैवाव्यवस्थापादिका नूतना प्रक्रिया प्रारब्धा । अतोऽस्मदुक्तमेव वरं त्वन्निर्वाहापेक्षया । अत्रापि वक्तव्यं सर्वं तत्रैवोक्त(जड.42)मिति नाधिकं वक्तव्यमत्र ॥ १८ ॥

कौषीतकीब्राह्मणोपनिषदः पर्यङ्कविद्यायां नित्यविभूतिपदवाच्येऽप्राकृते ब्रह्मलोके शब्दस्पर्शरूपरसगन्धा वर्ण्यन्ते । किमेते एतल्लोकगतगन्धादिसजातीयाः, उत विलक्षणा इति विमृशति—**कस्तूरी**त्यादि । **कस्तूरीचम्पकादौ**=कस्तूर्याम्, चम्पककुसुमादौ **समविषमतया**=गन्धत्वसामान्यात्मना तत्तद्विशेषात्मना च **सौरभादिः**=सौगन्ध्यादिः सर्वसंमतः । अत्यन्तवैलक्षण्ये सत्यपि एकजातीयत्वं सर्वसंप्रतिपन्नम् । **तद्वत्**=एवमेव **अमी**=लीलाविभूतौ नित्यविभूतौ च वर्तमानाः **शब्दादयः**=शब्दस्पर्शरूपरसगन्धाः **त्रिगुणतदधिकद्रव्यनिष्ठाः गुणाः स्युः**=प्राकृतलोके, वैकुण्ठादिलोके च वर्तमानद्रव्यनिष्ठा शब्दादिगुणा अपि स्युः । अत्यन्तवैलक्षण्यमस्तु कामम् । रूपरसगन्धादिपदानां समानत्वात्, लोकवेदाधिकरणन्यायेन शब्दानां समानत्वे अर्था अपि समाना एव स्युः, न तु भिन्नजातीयाः । तथा चाप्राकृतपदमपि तादृशवैलक्षण्यसूचकमात्रम् इति पूर्वपक्षः ॥

समाधत्ते—**शास्त्रदृष्ट्या निष्कृष्टे**=एवमेवेति वेदाख्यशास्त्रदृष्ट्यैव **अप्राकृतत्वेन**=दिव्यगन्धादिपदवाच्ये तल्लोकगतगन्धादौ निर्णीते विषये **कथमपि**=येन केनापि प्रकारेण **मिथस्संकरः**=परस्परसांकर्यम् न शङ्कनीयम् । **स्वाच्छन्द्यात्**—स्वेच्छया शङ्कमानस्तु कश्चित् **सुरगुरुम्**=बृहस्पतिमपि **स्वमिव**=स्वात्मानमिव

[शब्दः पञ्चभूतगुणः]

380. शब्दो नैकेषु युक्त्याऽप्युचित इह पुनः पारिशेष्यं तु मन्दं
वायुः शब्दस्वभावः श्रुतिशिरसि यतः स्मर्यते च स्वरात्मा ।
गन्धालोकादिनीतिं यदिह निजगदुर्यामुनाद्याः ततोऽपि
स्पष्टो भेर्यादिनिष्ठोऽयमिति गतिवचो गन्धवत्तद्विशिष्टे ।। २० ।।

**मुग्धम्**=मूढम् किं न शङ्केत? शङ्केतैव कश्चिन्मूढः । विषयस्तु न तथा । 'दिव्य'पदविशेषणेनैव वैलक्षण्ये प्रदर्शिते कथमुभयोरेकजातीयत्वसंभवः । ननु लोकवेदाधिकरणन्यायस्य का गतिः? तन्यायः कर्मकाण्डीयः। कर्मकाण्डीयपश्वादिपदानामर्थनिर्णयार्थः स न्यायः । यज्ञसंबन्धिनः पदार्था लोकदृष्टा एव, न लोकविलक्षणाः। उपनिषदस्तु लोकविलक्षणमर्थमुपदेष्टुं प्रवृत्ताः । अतो नात्र तन्न्यायप्रवृत्तिः । एतत्सूचनायैव 'दिव्य'पद-प्रयोगः । ननु उत्तमं संगीतं श्रुत्वा 'दिव्यं संगीतम्'इति वदन्ति । उत्तमं भक्ष्यं भुक्त्वा 'दिव्यमिदं भक्ष्यम्' इति वदन्ति । तद्वद्भविष्यतीदमपि; न भविष्यति । पदान्तरालाभाद्दिव्यपदेन तृप्यन्ति नराः । कथं तत् दिव्यं भवेत् । एतत्तत्त्वं पूर्वमेव(नायक.) प्रदर्शितम् ।।

**वस्तुतस्तु**—अत्रैवास्ति सविशेषाद्वैतस्य भगवद्रामानुजप्रदर्शितस्य महत्त्वम् । निर्विशेषवादे हि सर्वपदानां लक्षणामङ्गीकृत्य 'सर्वात्मकं ब्रह्म' इत्यस्यासर्वात्मकत्वाभावरूपं ब्रह्मेति व्याख्यायते । एवञ्चेत् ब्रह्म शून्यपर्यायमेव । तदा हि 'पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि' 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' (छा.8-1-3) इत्यादीनां का गतिः? अतस्सविशेषवादमन्तरा नान्या गतिः प्रामाणिकी ।। १९ ।।

एवं सामान्यतश्शब्दादीन् परीक्ष्य, अथ क्रमशो विशेषपरीक्षामुपक्रममाणः प्राथमिकं शब्दं परीक्षयति—**शब्द** इत्यादि । **शब्दः युक्त्यापि नैकेषु**=पञ्चस्वपि **उचितः** । 'युक्त्यापि' इत्यपिना श्रुतिर्हि एकैकगुण-वृद्ध्या शब्दं पञ्चभूतगुणं वक्ति । युक्तिपरिशीलनेऽपि एतदेव युक्तमिति सूच्यते । पञ्चस्वपि भूतेषु शब्द उपलभ्यते । उपलब्धिपरित्यागे मानाभावाच्छब्दः पञ्चभूतगुणः । **इह पुनः**=एतच्छब्दविषये तु **पारिशेष्यं तु**=परिशेषात् आकाशमात्रगुणत्वसाधनं तु **मन्दम्**=दुर्बलम् । श्रुतिप्रत्यक्षयोस्तद्विरुद्धत्वेन युक्तेर्दौर्बल्यस्य सिद्धत्वात् । किञ्च—**यतः श्रुतिशिरसि**='नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि' इति वेदान्ते **वायुः शब्दस्वभावः** श्रुतः । ब्रह्म—शब्दरूपो वेदः । सः त्वमसि इति वायुं वेदरूपशब्दात्मानं वदति श्रुतिः । **च**=अपि च **वायुः स्वरात्मा**=स्वररूपः, नादरूपः स्मर्यते । यथा 'वेणुरन्ध्रविभेदेन भेद-षड्जादिसंज्ञितः । अभेदव्यापिनो वायोः' इति विष्णुपुराणम् । एक एव वायुः षड्जादिरूपेण वर्तत इत्यर्थः । यत एवं स्मर्यते, अतश्शब्दो नाकाशैकगुणः । अपि च—**इह**=एतद्विषये **यामुनाद्या** अप्याचार्याः **गन्धालोकादिनीतिं जगदुः**, ततोऽपि पञ्चभूतगुण एवायम्, नाकाशैकगुणः । 'शब्दगन्धसूर्यालोकरत्नप्रभादयो गतिमन्तः' (आ.सि) इति गन्धवदेव शब्दस्य प्रसरणशीलत्वमुक्तम् । 'स खलु शंखमुखादेर्दवीयसोऽपि

[बौद्धसंमतशब्दपरीक्षा]

381. सत्यान् सत्यापयन्तः कतिचन चतुरः स्पर्शरूपादिधातून्
शब्दं स्वार्हाक्षसिद्धं चतुरधिकरणं प्राहुरेभ्यो न भिन्नम्।
किं तत् भेदाप्रतीतेः, प्रबलविहतितः, संमतैक्यप्रमातः
स्वाच्छन्द्यात्, देशनाया विभवत इति वा वीक्ष्य शिष्टा विजह्युः ॥ २१ ॥

देशान्नोदनविशेषेण लोष्टादिरिव यावद्वेगमभिप्रतिष्ठते स्पर्शरहितोऽपि' इति च कथनात् शंखादिगुणत्वं शब्दस्योक्तम्। ततोऽपि **अयम्**=शब्दः **भेर्यादिनिष्ठः इति स्पष्टः**। ननु गन्धस्य प्रसरणं तदाश्रय-कुसुमभागानां वायुना सह प्रसरणात्। तथा भेर्यादेः शब्दस्य प्रसरणं कथमिति शंकायाम्—**गतिवचः**= गमनवचनं श्रीयामुनाचार्याणाम् **गन्धवत् तद्विशिष्टे**=शब्दविशिष्टे द्रव्ये गतेस्सत्त्वात् युज्यते। ननु तर्हि भेर्यवयवानां विशरणं वक्तव्यम्। 'वेदध्वनिः श्रूयते' इत्यादौ माणवकशरीरावयवानां विशरणं वक्तव्यम्। कथमिदं युज्यत इति चेत्, तत्तत्प्रदेशावच्छिन्ने वायावपि शब्दोत्पत्तेः शब्दस्य वायुना साकं प्रसरणसंभवादिति गृह्यताम्॥

यावद्वचनमालम्ब्य चर्चादि क्रियते बुधैः। तावत्त्वेवं भवेत्सर्वं विपरीतं फलं ततः॥
अद्यत्वे यत्तु विज्ञानं, न तादृशमभूत्तदा। ज्ञानमन्यत्तथा चान्यत् विज्ञानमिति गृह्यताम्॥ २०॥

बौद्धास्तु स्पर्शरूपरसगन्धस्वभावान् धातूनङ्गीकृत्य, द्रव्यं निराकुर्वन्ति। शब्दस्तु एतच्चतुर्धात्वात्मकं वदन्ति। तदनूद्य निराकरोति—**सत्यानित्यादि**। पूर्वमेवाचार्यैः (जड.8) 'वात्सीपुत्रास्तु शब्दादीन् पञ्च-वैभाषिकान् विदुः। शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन्॥'(वृत्तिः) इत्येतन्मतमुट्टङ्कितम्। कतिचन वैभाषिकैकदेशिनो बौद्धाः **चतुरः**=चतुर्विधान् **स्पर्शरूपादिधातून्**—स्पर्शरूपरसगन्धात्मकान् जगन्मूल-कारणभूतान् धातून् **सत्यान्**=सत्यस्वरूपानेव **सत्यापयन्तः**=शपथयन्तः **शब्दम् स्वार्हाक्षसिद्धम्**=शब्दाख्यं तत्त्वम् तद्ग्रहणशक्तश्रोत्रगम्यम् **चतुरधिकरणम्**=पूर्वोक्तधातुचतुष्टयाधिकरणकम्, अत एव **एभ्यः**=चतु-र्धातुभ्यः **नभिन्नम्**=अभिन्नम् प्राहुः॥

तदेतद्विकल्प्य निराकरोति—**किमित्यादि**। **तत्**=शब्दस्य चतुर्धात्वभिन्नत्वम् **किं भेदाप्रतीतेः?** **उत प्रबलविहतितः**=भेदे प्रबलविरोधप्रमाणात्? अथवा **संमतैक्यप्रमातः**=अभेदसाधकसंप्रतिपन्नप्रमाणसत्त्वात्? किं वा **स्वाच्छन्द्यात्**=स्वेच्छयैव? किं वा **देशनाया विभवतः**=बुद्धोपेदशवैभवात् इति वा? **इति वीक्ष्य**=परीक्ष्य **शिष्टाः**=वैदिकाः **विजह्युः**=न स्वीकुर्युः=त्यजेयुः। उक्तविकल्पेषु आद्ये बाधः स्पष्टः, भेदग्रहणस्यैव दर्शनात्। द्वितीये तु असिद्धिः। तृतीयेऽप्यसिद्धिरेव। चतुर्थेऽप्यसिद्धिः, संप्रतिपन्नप्रमा-णाभावात्। पञ्चमे त्वप्रयोजकत्वम्। षष्ठेऽप्यप्रयोजकत्वम्, कस्यचिद्वचनमात्रेण कस्यचिदर्थस्य सिद्ध्य-संभवात्। ननु तर्हि वेदेषु कथमाश्वासः कर्तव्य इति चेत्, सत्यम्, सम्यक्पृष्टम्। किन्तु,

वेदानां स्थानम् अयि भोः! असाधारणमीर्यते। नान्येन तस्य तुलनं पौरुषेयेण युज्यते॥

**[शब्दो न द्रव्यम्]**

**382. शब्दोऽवस्थाविशेषः श्रुतिभिरभिहितस्तेन नैष स्वनिष्ठो**
**व्योमादेश्चाविभुत्वात् क्वचिदपि न तु तत्सन्निधिस्तद्विदूरे ।**
**साक्षादक्षाप्तिसाक्षात्कृत इति घटवद् द्रव्यमित्यप्यसारं**
**साध्यात् प्राग्घेत्वसिद्धेः न हि परमतवन्नाभसं श्रोत्रमत्र ॥ २२ ॥**

ननु भोः! अस्तु तत्सत्यम् इदमन्यद्विचिन्त्यताम् । व्याख्यानं बहुधा ह्यस्ति कृतं सर्वं महात्मभिः ॥
श्रद्धैव चेदुत्तरं ते, कस्य कस्मात् क्व वा वद । विवेकं वद वा श्रद्धाजाड्ययोस्सर्वसंमतम् ॥
विज्ञानिनस्तु प्रथमे बौद्धा एवेति मन्वते । तटस्थाः, अपि चाप्याहुस्त्वादौ वेदाविरोधिनः ॥
किन्तु बुद्ध्येकशरणा हेतुवादपरायणाः । वेदवैदिकविद्वेषशालिनः क्रमशोऽभवन् ॥
विप्रा अप्येवमेवाद्य हेतुवादपरायणाः । प्रायस्सन्ति तपोहीना अर्थकामपरायणाः ॥
जागृयुर्यदि ते शीघ्रं हितं तावद् भवेद् ध्रुवम् । स्वेषां वापि परेषां वा, सत्यं सत्यं न चान्यथा ॥
तदानीमेव वेदस्य वैशिष्ट्यमितरागमात् । वक्तुं श्रोतुं तथा ज्ञातुं शक्येतेति विरम्यते ॥ २१ ॥

शब्दो न गुणः, किन्तु द्रव्यमिति कुमारिलः, हरिश्च । तन्निरूपयति—**शब्द** इत्यादि । **शब्दः अवस्थाविशेषः**, न त्ववस्थावान् । अवस्थावत्त्वं द्रव्यलक्षणमित्येवमभिधानम् । तथा च गुण एव शब्दः, न तु द्रव्यम् । कुतः? **श्रुतिभिः अभिहितः** । 'श्रोत्रं च श्रोतव्यं च' (प्रश्न.4-87) इत्यादिश्रुतिभिः उक्तः। तत्तत्तन्मात्रातिरिक्तगन्धादयः गुणा इति शब्दोऽपि गन्धवत् गुण एव । तेन **एषः**=शब्दः **न स्वनिष्ठः**= स्वतन्त्रः, किन्तु द्रव्याश्रितः । ननु यदि पञ्चभूतगुणः शब्दः, तर्हि आकाशादेः सिद्धान्तेऽविभुत्वात्, तद्रहितस्थले—शब्दो न स्यादिति चेत्, तत्रेष्टापत्तिमाह—**व्योमादेश्च**=आकाशादिभूतानाम् **अविभुत्वात्**= परिमितत्वात् **तद्विदूरे**=तद्रहिते **क्वचिदपि**=नित्यविभूतौ **तत्सन्निधिः**, शब्दस्य स्थितिः **न तु**=नैव भवति । नित्यविभूतिपर्यन्तं तु आकाशस्य व्याप्तिरस्ति । नित्यविभूतौ तु प्रकृतिसंबन्धाभावेऽपि अप्राकृतशब्दानां सद्भावात् प्राकृतशब्दाभावेऽपि न क्षतिः । ननु गुणानां गन्धादीनामिन्द्रियसन्निकर्षः तदाश्रयपृथिव्यादि-भूतद्वारा । शब्दस्य तु साक्षादेव श्रोत्रसम्बन्धः घटादिवत् । अतो घटवदेव शब्दो द्रव्यमिति शङ्कते—**साक्षात् अक्षाप्तिः**=इन्द्रियसंबन्धः, तेन **साक्षात्कृतः** शब्द **इति घटवत् द्रव्यम्** । तथा चानुमानम्—'शब्दः द्रव्यम्, साक्षादिन्द्रियसंबन्धग्राह्यत्वात्, घटादिवत्' इति । **इत्यपि असारम्**=न बलवत्=नेष्टसाधनक्षमम् । कुतः? **साध्यात् प्राक्**=अनेनानुमानेन शब्दस्य द्रव्यत्वसिद्धेः पूर्वम् **हेत्वसिद्धेः**=हेतोरेवासिद्धेः । तथा चासिद्धिरुक्तानुमाने । कथं हेत्वसिद्धिः, श्रोत्रसमवायः किल सन्निकर्षः । समवायानभ्युपगमपक्षेऽपि तत्स्थानेऽ पृथक्सिद्धेरेव संबन्धत्वात्, ततोऽपि निकटः संबन्धः इति चेत्—**अत्र**=एतत्सिद्धान्ते **श्रोत्रम्**=श्रोत्रेन्द्रियम् **परमतवत्**=वैशेषिकमतवत् **नाभसं न हि**=आकाशरूपं नैव हि । इन्द्रियाणि किलाहंकारिकाणि । अतः यथा घ्राणेन्द्रियम्, तथैव श्रोत्रेन्द्रियमपि आकाशेन संबद्धं सत् तद्गुणं शब्दं गृह्णाति । अतश्च साक्षादिन्द्रियसंबन्धग्राह्यत्वहेतुरसिद्ध एव । ननु इन्द्रियाणामाहंकारिकत्वेनाभौतिकत्वेऽपि, तत्तद्भूतानामेव

[जैनोक्तशब्दपुद्गलवादविमर्शः]

**383. वर्णानां सध्वनीनामभिदधति हरिद्वाससः पुद्गलत्वं**
**नाक्षादेस्सिद्धमेतत्; न च तदभिमते शब्दितः शब्दशब्दः ।**
**सूक्ष्मद्रव्ये हि धर्मः श्रुतिविषयदशालक्षणो दुस्त्यजस्तैः**
**तस्मान्नास्मत्समीक्षामतिपतितुममी शक्नुयुः; तद्वदन्ये ॥ २३ ॥**

---

तत्तदिन्द्रियाप्यायकत्वात् आकाशे उत्पन्नस्य शब्दस्य श्रोत्रेण ग्रहणेऽपि भेर्यादावुत्पन्नस्य शब्दस्य कथं श्रोत्रेण ग्रहणम्, भेर्याः पार्थिवत्वेन श्रोत्राप्यायनासंभवादिति चेत्, आकाशद्वारैव श्रोत्रेन्द्रियसंबन्धो भेर्या सह वर्तत एव । अन्ततः पञ्चीकरणप्रक्रियया भेर्यामप्याकाशांशसत्त्वात् श्रोत्रसंबन्धस्सूपपादोऽस्माकमिति न कापि हानिरिति गृहाण ॥ २२ ॥

शब्दस्य द्रव्यत्वं वदतां जैनानां मतमनुवदति—**वर्णाना**मित्यादि । यद्यपि पूर्वश्लोकेऽपि शब्दस्य द्रव्यत्वं निरस्यत इति, तेनैव गतार्थत्वसंशयः स्यात् । किन्तु पूर्वपक्षसिद्धान्तयोरत्यन्तविलक्षणत्वात् पृथग्विचारः । तथा हि—**हरिद्वाससः**=दिगम्बराः=जैनाः **सध्वनीनां वर्णानाम् पुद्गलत्वम्**= पुद्गलाख्य-द्रव्यरूपत्वम् **अभिदधति** । पूर्वश्लोकनिरस्तौ हरिकुमारिलौ तु वर्णात्मकशब्दस्यैव द्रव्यत्वं वदन्ति, ध्वनिं तु वायोर्गुणत्वमिति महदन्तरम् । तत्रापि, पुद्गलाख्यमेकमेव द्रव्यं जगदात्मना परिणमते (जड.14) । अतश्शब्दोऽपि पुद्गलपरिणामविशेष एवेत्याशय एतेषाम् । एतन्निराकरोति—**एतत्**=शब्दस्य पुद्गलरूपत्वम् **अक्षादेः**=इन्द्रियादिभ्यः **न सिद्धम्** । न हि पुद्गलाख्यं द्रव्यं वा तत्परिणामरूपमिदं सर्वमिति वा प्रत्यक्षसिद्धम् । **तदभिमते**=पुद्गले **शब्दशब्दः**=शब्द इति संज्ञा **न च शब्दितः**=नैव केनचित् संज्ञितोऽन्येन, लोके कुत्रापि पुद्गलशब्दव्यवहारादर्शनात् । लोकव्यवहारः कुत्रेति प्रश्ने, तं प्रदर्शयति—**श्रुतिविषयदशा-लक्षणः**=श्रोत्रेन्द्रियग्राह्यावस्थाविशेषस्वरूपः शब्दः **सूक्ष्मद्रव्ये**=श्रोत्राग्राह्यपृथिव्यादौ वर्तमानः **धर्मो हि**= गुणः खलु । शब्दतन्मात्रपदवाच्यस्य सूक्ष्मद्रव्यस्य धर्मः शब्द इति नार्थः, पञ्चभूतधर्मत्वाच्छब्दस्य । तैरप्ययमर्थः दुस्त्यजः, पुद्गलाख्यमेकमेव द्रव्यं जगदात्मना परिणमत इत्यङ्गीकारात् । तर्ह्युभयोस्सामरस्ये कुतो निरासः? इत्यत्र—**तस्मात्**=एवमस्माभिः श्रुतिप्रामाण्येनार्थनिर्णयात् **अमी**=वेदबाह्याः **अस्म-त्समीक्षाम्**= वैदिकनिर्णयम् **अतिपतितुम्**=उल्लङ्घितुम् **न शक्नुयुः** । नैते केवलम्, **तद्वदेव अन्ये** ये केऽपि वैदिकं निर्णयम् नातिक्रमितुमलम् । वेदस्य महिमा तादृशः ॥

एतेनायमर्थः सूच्यत आचार्येण—भवतां वेदाः प्रमाणं चेत्, अस्माकमप्यस्मदागमाः प्रमाणं कुतो न स्युरिति चेत्, वेदेभ्योऽपौरुषेयेभ्यः स्पर्धितुं केनाप्यागमान्तरेण न शक्यम्, अपौरुषेयत्वादेवेति वैदिकनिर्णय-वैशिष्ट्यं प्रदर्शयत्याचार्यः । अत एव 'इतरेषां चानुपलब्धेः' (ब्र.सू.2-1-2) इत्यत्र, इतरपदस्य प्रमेयपरतया परैर्व्याख्याने, भगवद्रामानुजैः वैदिकोत्तममन्वादिप्रमातृपरतया व्याख्यानं कृतम् । प्रमेयपरतया व्याख्याने 'इतरेषां प्रमेयाणां वेदेऽदर्शनात्' इत्येवार्थः स्यात् । एवं चेत्, विपरीतं किं न स्यात्?

[वर्णनित्यत्वसमीक्षा]

384. **वर्णे स्थैर्यं विरुद्धान्वयविरहवति प्रत्यभिज्ञा नियच्छेत्**
**तैव्र्यादि व्यञ्जकस्थं भ्रमवशघटितं तत्र कल्प्येत दिग्वत् ।**
**एकाक्षग्राह्यसंवित्प्रतिनियतिरपि ह्यञ्जनादाविव स्यात्**
**व्यक्त्या स्यात् कार्यताधीः, यदि न निगदितो नैगमैरस्य नाशः ।। २४ ।।**

भवदभिमतप्रमेयाणामस्मदागमेऽदर्शनात् भवदीयमेवाप्रमाणं स्यादिति प्रश्ने, वेदस्यापि महत्त्वं महाजनपरिग्रहादेव । के ते महाजनाः? वयमपि महाजना एवेति वदेयुश्चेत्, न वा वयम्, न वा यूयम्, अस्माकं सर्वेषामपि मूलभूता ये मन्वादयः, त एव भवतामपि ग्राह्याः, यतो वयं सर्वे मानवाः । तव मम चानुपलब्धिः उपलब्धिर्वा किं कुर्यात्? वेदबाह्या हि स्वस्वानुभवं प्रमाणतया प्रदर्शयन्ति । अतो विवादेऽनुभवोऽपि न प्रमाणत्वेन दर्शनीयः । किन्तु ततोऽपि मनुकुलमूलपुरुषवचनं बलवत् इति प्रदर्शनाय भगवता प्रमातृपरतया व्याख्यातम् । अत एव भाष्ये परैः तत्र तत्र स्वानुभवस्य प्रमाणतया प्रदर्शनेऽपि भगवता तथा कुत्रापि न प्रदर्शितमिति ज्ञेयम्॥

वेदानां वैदिकार्थानां महिमा केन वर्ण्यते । मन्वादीनां वैदिकानां रहस्यमिह चिन्त्यताम् ॥
रहस्यं वैदिकैश्चिन्त्यं वेदे किं वास्ति तादृशम् । भवेयुर्दूर एतेन संशया निखिला अपि ॥
भगवन्मूर्तिरूपा हि वेदास्सर्वात्मकास्ततः । को वा स्पर्धेत तैस्साकं सर्वज्ञानमया हि ते ॥
मातापितृसहस्रेभ्योऽप्यधिका वत्सला हि सा । वेदमाताऽखिलानेव क्षमा पोषयितुं जनान् ॥
वृथा चर्चाः परित्यज्य श्रयध्वं वेदमातरम् । रक्षेत्सा सकलान् नूनम्, सर्वकामदुघा हि सा ॥ २३ ॥

एवं शब्दविचारं परिसमाप्य, शब्दविशेषस्य वर्णस्य विचारे प्रथमं तन्नित्यत्वं विमृशति—**वर्ण** इत्यादि । **विरुद्धान्वयविरहवति**=तीव्रत्वमन्दत्वादिविरुद्धधर्मसंबन्धरहिते **वर्णे**=विशुद्धे वर्णे **स्थैर्यम्**=नित्यत्वम् **प्रत्यभिज्ञा**='स एवायं गकारः' इत्यादिप्रत्यभिज्ञा **नियच्छेत्**=स्थापयेत् । तीव्रत्वादीनां का गतिः? इत्यत्र—**तैव्र्यादि**=तीव्रत्वमन्दत्वादिकम् **व्यञ्जकस्थम्**=वर्णव्यञ्जकवायुगतम् **भ्रमवशघटितम्**=भ्रमवशात्कल्पितं सत् **तत्र**=वर्णेषु **दिग्वत्**=प्राच्यादिदिग्वत् **कल्प्येत**=आरोप्येत । 'तीव्रो घकारः, मन्दो गकारः' इत्यादौ वर्णाभिव्यञ्जके वायौ वर्तमाना तीव्रता मन्दता वा, तत्संयुक्ते वर्णे आरोप्यते, 'प्राच्यां शब्दः श्रूयते' इतिवत् । अत एव घकारादीनां महाप्राणा इति, गकारादीनाम् अल्पप्राणा इति संज्ञा । प्राणो हि वायुविशेषः । अधिकप्राणव्यापारे घकारः, अल्पप्राणव्यापारे गकारः इति प्रत्यक्षसिद्धमेव । एवञ्च तीव्रत्वादीनामभिव्यञ्जकवायुगतत्वात् 'स एवायं गकारः' इति प्रत्यभिज्ञा वर्णानां स्थिरत्वं साधयेदेव । वर्णव्यवहारस्य त्रैकालिकत्वात् स्थिरत्वं चैतत् नित्यत्वे पर्यवस्यतीति वर्णा नित्याः । ननु यदि वर्णा नित्याः, वायुना अभिव्यज्यन्त इत्युच्यते, तदा घटदर्शनायारोपितो दीपः घटं यथा प्रकाशयति, तथैव तत्रस्थं पटमपि प्रकाशयत्येवेति दर्शनात्, एकेन्द्रियग्राह्याणामेकत्रस्थितानामेकाभिव्यङ्ग्यत्वदर्शनात् वायुना सर्वेऽपि वर्णा युगपदेवाभिव्यज्येरन्, अभिव्यञ्जकस्य एकत्वादिति चेत्, तत्राह—**एकाक्षग्राह्यसंवित्प्रतिनियतिरपि**=

[ध्वनिरपि शब्द एव न वायुः]

**385. ध्वन्यात्मा वायुभेदः श्रुतिविषयतयाऽपाठि तौताततिताद्यैः**
**तद्वत् पञ्चाशदेते समकरणतया वर्णिताः किं न वर्णाः ।**
**तैव्र्यादिर्वर्णधर्मो नियत इति यथादर्शनं स्थापनीयम्**
**स्पर्शादौ चैवमिष्टं; तदिह न सुलभा द्रव्यता नित्यता च ॥ २५ ॥**

---

एकेनैवेन्द्रियेण ग्राह्याणामपि **संविदः**=ज्ञानस्य **प्रतिनियतिरपि**=उक्तव्यवस्थापि—**अञ्जनादाविव हि स्यात्**=निधिदर्शकाञ्जनं निधिमेव प्रदर्शयेत्, न पिशाचादीनीतिवत्, व्यञ्जकसामग्र्यां सूक्ष्मतारतम्यात् स्यात्। वायुः सर्ववर्णव्यञ्जकोऽपि, तत्र सूक्ष्मतारतम्यात् एकेनैव सर्वाक्षराभिव्यक्तिर्न भवेत्। अनुभवसिद्धं खलु कवर्गस्य कण्ठादभिव्यञ्जनेऽपि ककारगकारयोरुच्चारणे तारतम्यम्। तद्वत् वायावपि तारतम्यं सूक्ष्मं वर्तत एवेति युगपत्सर्ववर्णाभिव्यक्तिर्न भवति। ननु 'ककार उत्पन्नः, गकारो नष्टः' इत्याद्यनुभवात्, कथं नित्यत्वं वर्णानामित्यत्र—**कार्यताधीः**=वर्णानामुत्पन्नत्वज्ञानमपि **व्यक्त्या**=अभिव्यक्त्या **स्यात्**। 'नूतनोऽयं कूपः कृतः' इतिवत्, कूपः खलु आकाशदेशः। स पूर्वमेवासीत्, आवरणानां मृदामपनयनादभिव्यज्यते, तद्वत्। **यदि न**=इति चेन्न। यतः **अस्य**=वर्णस्य **नाशः नैगमैः**=वेदवाक्यैरेव **निगदितः**=स्पष्ट-मुक्तः। 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना सर्वस्यापि ब्रह्मकार्यत्वात्, वेदानामपि कार्यत्व-मावश्यकम्। अतो वर्णा न नित्याः। अधिकमग्रे(26) वक्ष्यते ॥ २४ ॥

ध्वनिस्तु वायोर्गुण इति वादमपि विमृशति—**ध्वन्यात्मेति** । **ध्वन्यात्मा**=ध्वनिस्वरूपः **वायुभेदः**=वायुविशेषः **श्रुतिविषयतया**=श्रोत्रग्राह्यतया **तौताततिताद्यैः**=**कौमारिलाद्यैः अपाठि**=अभ्य-धायि। 'कौमारिलः' इत्यत्र व्यञ्जनस्थाने ककारं निष्कास्य तकारयोजनया 'तौताततिः' इति व्यङ्ग्यं नाम कृतं बौद्धैः। एवञ्चेत्, **तद्वत्**=तथैव **एते** पञ्चाशत् वर्णाः **समकरणतया**=समानेन्द्रियग्राह्यतया **किं न वर्णिताः**=कुतो न वर्ण्यन्ते? तीव्रत्वमन्दत्वादयः वायुगता एव विकाराः तत्सन्निहिते वर्णे आरोप्यन्त इतिवत् कवर्गटवर्गाद्यक्षराणां कण्ठताल्वादिसमानकरणव्यङ्ग्यत्वात् करणगता एव वर्णभेदाः, सर्वेषामाधारभूतो नाद एक एवेति वर्णभेदोऽपि कल्पित इति कुतो न स्यात्। अतः **तैव्र्यादिः**=तीव्रत्वमन्दत्वादिः **नियतः वर्णधर्मः व्यवस्थितः** वर्णानामेव धर्माः, न तु वायोः इति **यथादर्शनम्**=यथानुभवम् **स्थापनीयम्**, नो चेत्, **एवमेव**=महत्तारतम्यम् **स्पर्शादौ च** दुरालभास्पर्शतूलिकास्पर्शादौ **इष्टम्**=सर्वसंमतम्। तद्वदेवात्र **स्पर्शादौ**=कादिमावसानान्ते, तदुपलक्षिते व्यञ्जने चास्तु तारतम्यम्। नो चेत् ककारादिपञ्चाशद्वर्णभेदोऽपि न स्यात्, नाद एक एवावशिष्येतेति वेदा अपि केवलं नादरूपा इति स्यात्। ततश्च वेदसंरक्षणार्थं प्रवृत्तस्य **'विनायकं प्रकुर्वाणो रचयामास वानरम्'** इतिवत् नादसंरक्षणमेव कृतं स्यात्। न चात्रेष्टापत्तिः, व्यञ्जनानां स्वतः स्थानाभावादिति वाच्यम्, वेदस्य नादमात्रावशेषे इन्द्राग्न्यादिपदानां सप्रवृत्तिनिमित्तानां तिलाञ्जलिप्रसङ्गात्, न चात्रापीष्टापत्तिः, प्रणवविस्तारत्वाद्वेदस्य, प्रणवस्य नादरूपस्यैव पर्याप्तत्वात्। 'ओंकार एवेदं सर्वम्' इति हि श्रुतिः=इति चेत्, सत्यम्। परं तु—

**[शब्दनित्यत्वं न वेदप्रामाण्याङ्गम्]**

**386.** **शब्दानित्यत्वतोऽपि श्रुतिषु न विलयः स्यात् क्रमव्यक्तिनीत्या**
**तन्नित्यत्वे च काव्यादिकमपि न कथं नित्यमित्यभ्युपैषि।**
**तस्मान्नित्यैकरूपक्रमनियमवशान्नित्यभावः श्रुतीनाम्**
**ईशोऽप्यध्यापको नः परमतिचकितैर्वर्णनित्यत्वमुक्तम्॥ २६॥**

अश्वस्तना ये ऋषयस्तेषामुक्तिरियं भवेत्। प्रणवस्य तु माहात्म्यं को वा जानाति तत्त्वतः॥
भुक्त्वाऽऽकण्ठं शयानानां तूद्गारः प्रणवो भवेत्। इति स्याच्चेद्रतिः का ते विरम त्वं विचारतः॥

अतोऽङ्गीक्रियते चेत्, सर्वमङ्गीक्रियताम्, त्यज्यते चेत्, सर्वं त्यज्यताम्। न **चार्धजरती युक्ता**। **तत्**=तस्मात् **इह**=वर्णेषु **द्रव्यता नित्यता च न सुलभा**॥

कियद्विजृंभते भट्टः द्रष्टव्यं श्लोकवार्तिके। वेदनित्यत्वसिद्ध्यर्थं हन्त श्रद्धा गरीयसी॥
कर्मकाण्डप्रक्रिया तु तादृश्यासीत्तदा किल। तत्र श्रद्धादिरक्षार्थं तत्प्रयत्नस्तथाऽभवत्॥
श्रद्धैव तस्य च श्लाघ्या, तर्ककर्कशता न च। स्मर तर्काप्रतिष्ठानं ध्यायस्व सततं हरिम्॥ २५॥

ननु वर्णा यद्यनित्याः, तर्हि वेदप्रामाण्यस्य का गतिः? इति विह्वलं सान्त्वयति—**शब्दे**त्यादि। **शब्दानित्यत्वतोऽपि**=शब्दस्यानित्यत्वमात्रात् **क्रमव्यक्तिनीत्या**=वर्णानां क्रमवर्तित्वनियमात् **श्रुतिषु विलयः**=हानिः काचित् **न स्यात्**। वर्णानां नित्यत्वमात्रान्न कोऽपि विशेषः। **तन्नित्यत्वे च काव्यादिकमपि**=कालिदासकृतरघुवंशादिकमपि **नित्यमिति कथम्**=कुतः नाभ्युपैषि। ननु रघुवंशकाव्यघटकवर्णा यद्यपि नित्याः, परन्तु वर्णानां क्रमयोजनरूपपदानि, पदानां क्रमयोजनरूपवाक्यानि च **कालिदासेन** योजितानीति तान्यनित्यानीति यदि, तर्हि वेदेऽपि आनुपूर्वी नियता, न केनापि योजितेत्यङ्गीकारमात्रेणेष्टसिद्धौ वर्णनित्यत्वं मास्तु नाम। तदिदमाह—**तस्मात्**=वर्णानामनित्यत्वेऽपि दोषाभावात् **श्रुतीनाम् नित्यैकरूपक्रमनियमवशात्**=नित्यः एकरूपश्च यः क्रमनियमः, तद्वशात् श्रुतीनाम् **नित्यभावः**=नित्यत्वम्॥

ननु किमिदमुच्यते **'तण्डुलेऽप्याशा, बन्धुष्वपि प्रीतिः'** इतिवद्वदति भवान्। वर्णास्त्वनित्याः, आनुपूर्वी तु नित्या, इति कथं संभवि? आनुपूर्व्याः प्रत्येकवर्णानतिरिक्तत्वेन, वर्णानामनित्यत्वे, तदभिन्नानुपूर्वी परं कथं नित्या? इति चेत्, कथं भवान्निरीक्षसेऽस्मन्मुखात् आत्मान्यनित्यत्वम्? ये वयम् परमात्मा हि जगतः कारणम्, वेदाश्च जगदन्तर्गता इति वदामः 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्या। 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इति स्मृत्या च जानीमः। **ईशोऽपि**=जगत्स्रष्टा परमेश्वरोऽपि नः=अस्माकम् केवलम् **अध्यापकः**। सोऽपि पूर्वकल्पस्थं वेदं समानानुपूर्वीकं स्मृत्वा स्मृत्वा तत्तथैवाद्योपदिशति। ननु भोः! किमुक्तम् 'स्मृत्वा स्मृत्वा' इति? तस्य स्मरणमप्यस्ति, यो वेत्ति निखिलं प्रत्यक्षेण सदा? न, न, 'दृष्ट्वा दृष्ट्वा' इति पठ्यतां तर्हि। किं 'दृष्ट्वा' इति, नष्टं वेदं कथमपश्यत् सः?

नास्तिकस्त्वं भवान्मूर्खो ह्यसंभाष्यस्तु मादृशाम्। कोपेन पूरितं सर्वम् अस्तु तत्तु यथा तथा॥

[वायुपृथिव्योः स्पर्शनिरूपणम्]

**387. नैवोष्णौ नापि शीतौ क्षितिसततगती तत्र तोयादियोगात्**
**शीतत्वादिप्रतितीस्तदुपधिकतया तत्र तत्रैव दृष्टेः ।**
**आयुर्वेदे तुषारो मरुदिति कथनं त्वद्भिराप्यायिकाभिः**
**वृद्धिह्रासौ समाद्यैर्भवत इति परं तच्चिकित्सानियत्यै ॥ २७ ॥**

---

महतां वचनं नैवोपहसामि कदाचन । तात्पर्यस्यापरिज्ञाने सर्वं हास्यास्पदं भवेत् ॥
सारतस्त्वत्र वक्तव्यं वेदा नः परमं धनम् । तस्य संरक्षणायैव ह्याचार्याः क्लेशमावहन् ॥
प्रवाहतस्तु नित्यत्वं वेदानां संमतं सताम् । व्याख्यातं तावतैवात्र सकलम्, विरमामहे ॥

अत एव—**परम्**=परं तु **अतिचकितैः**=वेदप्रामाण्यरक्षणसंरंभशंकितैः, **भीतैश्च** वैदिकैः **वर्णनित्यत्वम्**=वर्णानां नित्यत्व**मुक्तम्**। वर्णनित्यत्वमन्तरापि सुप्रतिष्ठितं वेदप्रामाण्यम् । इतरच्च पूर्वश्लोकान्त एवोक्तम् ॥

वेदान्तिनां किलास्माकं ब्रह्मान्यन्निखिलं जगत् । ब्रह्मजन्यत्वतोऽनित्यं न किञ्चिन्नित्यमिष्यते ॥
नित्यानित्यव्यवहृतिः तथापि स्यात्कथंचन । स्थिरत्वक्षणिकत्वाभ्यां स्वतो वाथ प्रवाहतः ॥
औपाधिकी व्यवहृतिः सा स्यान्नूनं न चान्यथा । अधिकन्यूनकालेषु वर्तनाद्वा भवेत्तथा ॥ २६ ॥

श्रौतप्रक्रियामनुसृत्य शब्दानन्तरं स्पर्शं निरूपयति—**नैवेत्यादि** । **क्षितिसततगती**=क्षितिः=पृथिवी, सततगतिः=वायुः । एतावुभौ **नैव उष्णौ, नापि शीतौ** । अतोऽनयोः स्पर्शयोः समावस्थायाः शब्दान्तरालाभात् 'अनुष्णाशीतस्पर्शः' इति संज्ञा । **तत्र**=पृथिव्याम्, वायौ च **तोयादियोगात्**=जलसंबन्धात्, अग्निसंबन्धाच्च **शीतत्वादिप्रतीतिः**=शीतत्वस्य, उष्णत्वस्य चानुभवः । कुतस्तयोर्न सहजतेत्यत्र—**तत्र तत्र तदुपधिकतयैव दृष्टेः**=तत्तत्समये, तत्तदवस्थायां वा अन्वयव्यतिरेकाभ्यां जलसंबन्धे शैत्यस्य, अग्निसंबन्धे औष्ण्यस्य चोपलंभात्, उभौ औपाधिकौ, अनुष्णाशीतस्पर्श एव सहज इत्यवगम्यते । **आयुर्वेदे**=वैद्यशास्त्रे **मरुत् तुषारः**=शीतः **इति कथनं तु आप्यायिकाभिः अद्भिः**=वायोः पोषिकाभिः अद्भिः, न तु वायोः गुणः शैत्यमिति तेन सिद्ध्येत् । एतदपि **समाद्यैः वृद्धिह्रासौ भवत इति**=समेन वृद्धिः, विषमेन ह्रासः इति, **परम्**=केवलम् **तच्चिकित्सानियत्यै**=तेषाम् चिकित्साव्यस्थापनार्थम्, शीतवायुः, उष्णवायुरिति रोगनिदानं ज्ञात्वा चिकित्साक्रमनिश्चयार्थम्, न तु वायोर्गुणः शैत्यमिति बोधनाय, उष्णवायुरित्यपि व्यवहारदर्शनात् ॥

**अयमाशयः**—'तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम्' इति गर्भोपनिषत् । तत्=शरीरं सप्तधातु=रसरक्तमांसमेदोमज्जास्थिशुक्ररूपसप्तधात्वाधारकम्, त्रिमलम्=सत्त्वरजस्तमोमूलकश्लेष्मपित्तवातरूपत्रिमलविशिष्टम् । द्वियोनि=पुण्यपापनिदानकम् । चतुर्विधाहारमयम्=भक्ष्यभोज्यपेयचोष्यरूपचतुर्विधाहारविकारम् इत्यर्थः । भक्ष्यस्थाने कुत्रचित् खाद्यपाठः । स्थूलतः पञ्चभूतात्मकं शरीरमिति सर्वे जानन्ति । वातपित्तश्लेष्मनाडीपरिज्ञानाद्रोगचिकित्सा आयुर्वेदे प्रतिपाद्यते । वातनाड्याः मूलं तमः, पित्तनाड्या

[अप्तेजसोः स्पर्शनिर्णयः]

**388. स्यादुष्णः कृष्णवर्त्मा, सलिलमपि तथा शीतमस्तु प्रकृत्या**
**स्पर्शोऽन्योऽप्यत्र दृष्टः; स तु भवतु रुमाक्षिप्तलावण्यवच्चेत्।**
**मैवं संसृष्टवस्तूपधिनियततया तद्विवेकस्य युक्तेः**
**प्रायः शीतो भवेतिप्रभृतिकमपि तद्दाहकत्वादिरोधात्॥ २८॥**

मूलं रजः, श्लेष्मनाड्या मूलं सत्त्वम्, क्रमात् ब्रह्मरुद्रविष्ण्वधिष्ठानकं च। वातादिप्रकोपाद्व्याधयो भवन्ति। आहारस्सर्वोऽपि पञ्चभूतविकार एव। पञ्चभूतानामपि असाधारणगुणास्सन्ति। 'वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः' इति शीतोष्णवाय्वाहारैः तत्तन्नाडीपोषणं शोषणं च ज्ञात्वा व्याध्युपशमौषधानि, आहार-पथ्यानि च निर्णेयानीति आयुर्वेदशास्त्रस्य मूलस्वरूपम्। नात्र पञ्चभूतानां गुणव्यवस्थानिर्णयः परमोद्देश इति यथोक्त एव पृथिव्यादीनां स्पर्शनिर्णयः युक्तः॥ २७॥

वायुपृथिव्योः स्पर्शं निरूप्य, अप्तेजसोस्तं निरूपयति—**स्यादित्यादि**। **कृष्णवर्त्मा**=अग्निः, अथवा तेजः **प्रकृत्या**=स्वभावतः **उष्णः**=उष्णस्पर्शवान् अस्तु। तथा **सलिलमपि**=आपोऽपि **प्रकृत्या**=स्वभावतः **शीतम्**=शीतस्पर्शवत् स्यात्। यद्यपि—**अत्र**=जलतेजसोः=जले तेजसि च **अन्योऽपि स्पर्शः**=जलेऽपि तप्ते औष्ण्यम्, तेजसि चन्द्रमसि शैत्यं च **दृष्टः**=दृश्यते, इदं कथमिति प्रश्ने **स तु**=स्पर्शभेदः **रुमाक्षिप्तलावण्यवत् भवतु** रुमायां=ऊषरभूमौ=लवणप्रदेशे क्षिप्तस्य वस्तुनः, यथा क्रमात् **लावण्यम्**=लवणता भवति, तादृशलावण्यवत् स्यात्। लवणनिक्षिप्तं दारुखण्डादि क्रमात् लवण-रूपमेव परिवर्तितं भवति, तद्वत् जलमेवाग्निसंबन्धात् तेजो भवतु, चन्द्रतेजोऽपि शीतद्रव्यसंबन्धात् शीतो भवतु, वस्त्वेव तथा परिणमते इति भवतु। **चेत्**=इति चेत्, **मैवम्**=एवम् मा—मा भवतु—न भवति, किन्तु=**संसृष्टवस्तूपधिनियततया**=तत्संसृष्टस्य अग्न्यादिवस्तुरूपस्य उपाधितया नियतत्वात्—अन्वय-व्यतिरेकसिद्धत्वात् तद्विवेकस्य जलौष्ण्यादिविवेचनस्य **युक्तेः**=युक्तत्वात्। जलेन संयुक्तवह्निभागगत-मेवौष्ण्यम्, न तु जलमेव तथा परिणमतीत्यस्यैवोचितत्वात्। एवमेव—**'शीतो भव हनूमतः'** (रामायणे) इतिप्रभृतिकमपि सीतातपःप्रभावात् **तद्दाहकत्वादिरोधात्**=वह्नेर्दाहकत्वस्य प्रतिबन्धात् भवति। मणिमन्त्रौषधतपःप्रभृतिभिः एतादृशसहजशक्तिप्रतिबन्धः प्राचीनग्रन्थेषु, लोकेऽपि कुत्रचित् दृश्यते। यद्य-प्यत्रास्ति बहु वक्तव्यम्, तत्तु समयान्तरे भविष्यति॥

यथा तथा वा भवत्वितरत् त्विदमुच्यताम्। कथं वा चन्द्रमास्तेजः इदं प्रथममुच्यताम्॥
गताश्चन्द्रमसं मर्त्याः तेजस्तत्र न दृश्यते। तपनस्य रश्मिप्रतिफलनं तद्विनिश्चितम्॥
महात्मनां तपोदृष्ट्या सर्वमौपाधिकं मतम्। 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्॥
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।' इत्येवं भगवद्वाक्यात् सर्वमौपाधिकं भवेत्॥
फलतश्चन्द्रमा लोके ददात्येव प्रभां निशि। तत्प्रभायां नैव शैत्यम्, प्रभा तेजो भवेत्किल॥
ज्ञानमन्यत्तु विज्ञानमन्यदेवेति निश्चितम्। विवृतं बहुधा पूर्वमितरद् बुध्यतां स्वतः॥ २८॥

[रूपनिरूपणम्]

389. पीता भूः श्वेतमम्भो हुतवहपवनौ रक्तधूम्रौ तथा द्यौः
नीलेति क्वापि शिष्टं तदिह न नियतां वर्णसत्तां ब्रवीति।
ध्यानार्थं मन्त्रवर्णेष्विव कथितमिदं व्योमवातौ ह्यरूपौ
पीतैकान्त्यं भुवोऽक्षश्रुतिहतमथ तत्प्राचुरी साऽस्तु मा वा ॥ २९ ॥

[पाकजापाकजरूपे]

390. कृष्णामाम्नासिषुः क्ष्मां तदिह न विरहं वक्ति रूपान्तराणां
प्रत्यक्षादेर्विरोधात्; पचनविषमितं स्पर्शगन्धादि चास्याः।
पाथस्तेजोविशेषे स्फुरति वसुमतीभागतो वर्णभेदः
न ह्यम्भः क्वापि दृष्टं विपरिणतगुणं पाकसंस्कारतोऽपि ॥ ३० ॥

---

क्रमप्राप्तं रूपं निरूपयति—**पीतेत्यादि**। प्रथमं मन्त्रशास्त्रविरोधं परिहरति। **भूः**=पृथिवी पीता=पीतवर्णा। **अंभः**=जलम् श्वेतम्=श्वेतवर्णम्। **हुतवहपवनौ**=अग्निः वायुश्च **रक्तधूम्रौ**=अग्निः रक्तवर्णः, वायुः धूम्रवर्णः। तथा **द्यौः**=आकाशः **नीला**=नीलवर्णः इति **क्वापि**=कुत्रचिन्मन्त्रशास्त्रे **शिष्टम्**=उपदिष्टम्। 'पञ्चभूतानि देहेषु संहरेद् ध्यानमादितः' इत्यारभ्य 'पीता भूःश्वेतमंभोऽग्नी रक्तो धूम्रः समीरणः। नीलं नभस्तथा मन्त्रा अपि तादृशवर्णकाः॥' इति **आनन्ददायिनी**। इति यत् शिष्टम्, **तत् इह**=पञ्चभूतेषु **नियतां वर्णसत्ताम्**=व्यवस्थितां रूपाणां सत्ताम् **न ब्रवीति**। **किन्तु**=**मन्त्रवर्णेष्विव**=मन्त्रगताक्षरेषु यथा तथा **ध्यानार्थम्** इदं **कथितम्**। **व्योमवातौ**=आकाशः वायुश्च अरूपौ हि। **भुवः**=पृथिव्याः **पीतैकान्त्यम्**=पीतमात्ररूपवत्त्वम् **अक्षश्रुतिहतम्**=प्रत्यक्षबाधितम्, 'यत् कृष्णं तदन्नस्य' इतिश्रुतिबाधितं च। **अथ**=यदि **तत्प्राचुरी**=पीतरूपाधिक्यम् **सा**=प्राचुरी **अस्तु, मा वा**। तावता नेतररूपनिषेधः। अतस्सर्वरूपवती पृथिवी ॥ २९ ॥

रूपनियमे श्रुतिविरोधं परिहरति—**कृष्णामित्यादि**। **क्ष्माम्**=पृथिवीम् **कृष्णाम्**=कृष्णवर्णाम् **आम्नासिषुः**='यत्कृष्णं तदन्नस्य' (अन्नम्=पृथिवी) इति श्रुतयोऽवदन्। **तत्**=तद्वचनम् **इह**=पृथिव्याम् **रूपान्तराणाम्**=इतररूपाणाम् **विरहम्**=असत्त्वं **न वक्ति**। कुतः? **प्रत्यक्षादेः विरोधात्**, 'आदित्यो यूपः' इति निदर्शनम्। परं त्वत्र नौपचारिकम्, इतरनिषेधाभावात्। **अस्याः**=पृथिव्याः **पचनविषमितम्**=पाकवशाद्वैषम्यं प्राप्तम् **स्पर्शगन्धादि च**=रूपवत् रसस्पर्शगन्धाश्च भवन्ति। फलादौ तथा चतुर्णां वैषम्य-दर्शनात्। **पाथस्तेजोविशेषे**=पाथः=जलम्, तद्विशेषे यमुनाजलादौ, तथा तेजोविशेषे च **वसुमती-भागतः**=पृथिवीभागसंबन्धवशात् **वर्णभेदः**=रूपभेदः **स्फुरति**=प्रकाशते, न तु स्वभावतः। कुतः? **अंभः**=जलम् **पाकसंस्कारतोऽपि**=अग्निसंयोगरूपसंस्कारविशेषादपि **क्वापि**=कुत्रापि **विपरिणतगुणम्**=परिवर्तितरूपम् **न हि दृष्टम्**। अतः पाकः पृथिव्यामेव, नान्यत्र। तत्रापि रूपरसगन्धस्पर्शानां चतुर्णामेव, नेतरगुणानाम् ॥ ३० ॥

[चित्ररूपपरीक्षा]

391. **आरब्धं रूपभेदैरवयवनियतैश्चित्रमन्यत्तु रूपं**
**काणादाः कल्पयन्तः क्व तदिति कथयन्त्वंशतस्तद्विकल्पे।**
**नांशेष्वेतत् तदिष्टं; न च तदभिहितः कश्चिदंशीति तूक्तं**
**स्वाधारव्यापकत्वं सुगममिह; तथा स्पर्शगन्धादिचैत्र्यम्॥ ३१॥**

---

चित्ररूपमतिरिक्तं वदन्ति **वैशेषिकाः**। तन्निराकरोति—**आरब्धमित्यादि**। **अवयवनियतैः**= पटादेरवयवेषु=तन्तुषु तत्र तत्र व्यवस्थितैः **रूपभेदैः**=नानारूपैः **आरब्धम्**=नूतनतया अवयविनि उत्पन्नम् **अन्यत् तु**=अतिरिक्तं तु चित्ररूपम् **कल्पयन्तः**=युक्त्या कल्पयन्तः **काणादाः**=वैशेषिकाः **अंशतः तद्विकल्पे**=चित्रं रूपं किम् अवयवांशे, उतावयव्यंशे इति विकल्पे कृते, **तत्**=चित्ररूपम् **क्व**=कुत्रेति **कथयन्तु**। **एतत्**=चित्ररूपम् **अंशेषु**=प्रत्येकतन्तुषु **न तदिष्टम्**=तत्संमतम्। अवयविन्येव तदिष्टम्। **तदभिहितः**=तदुक्तः **कश्चित्**=अतिरिक्तः **अंशी न च**=अवयवी नैवास्ति इति तु **उक्तम्**=पूर्वमेव (जड.18-22)। ननु तर्हि पटे किंरूपं वर्तते? इति प्रश्ने किमुत्तरं वक्तव्यम्। नीलपीतादिकं तु एकदेशेषु तन्तुषु। रूपं तु व्याप्यवृत्ति। अतः कथं पटप्रत्यक्षनिर्वाह इत्यत्र—**स्वेत्यादि**। **इह**=रूपे **स्वाधारव्यापकत्वम्**=यत्र यत् रूपं दृश्यते, तत्र तत् व्याप्यैव वर्तते। अतो रूपस्य व्याप्यवृत्तित्वे न विरोध इति सुगमम्। तर्हि पटप्रत्यक्षं कथमिति चेत्, अतिरिक्तावयव्यनङ्गीकारमते, अतिरिक्तः पटो नास्त्येवेति न कश्चित् क्लेशः। ननु 'चित्रमिदं रूपम्' 'चित्रोऽयं रसः' इत्यादिव्यवहारः कथमिति चेत्, तत्राह—**स्पर्शगन्धादिचैत्र्यम् तथा**=चित्रस्पर्शः, चित्रो रसः, चित्रगन्धः इत्यादिकमपि **सुगमम्**। एवञ्च चित्ररूपवदेवावयवगतगन्धादिविवक्षयोच्यते। तर्ह्यवयवी नीरूपः स्यादिति चेत्, उक्तं नास्त्यतिरिक्तः कश्चिदवयवीति॥

ननु तर्हि अनुष्णाशीतः स्पर्शः कथं पूर्व(27)मुक्त इति चेत्, किं कुर्मः? अवयवेष्वेव कश्चन स्पर्शो दृश्यते, तस्य कथं निर्वाहः? तदर्थं शीतोष्णविलक्षणः कश्चित् स्पर्श आवश्यकः। अतः स्पर्शस्तु त्रिविधः, रूपं तु षड्विधमेव॥

व्यवहारेऽन्ततस्स्याद्धि वैशेषिकपरिग्रहः। यतो लोकायतास्ते स्युः न भाट्टाः, नात्र संशयः॥

ननु नीलरक्तानां मिश्रणे किञ्चिद्विलक्षणं रूपं दृश्यते चक्षुषा। तस्य किं नाम? कपिशपदं तु गर्दभादिगतविचित्रवर्णस्यैवेति चेत्, इदमपि तथैव कपिशविशेषरूपमिति गृह्यताम्। तर्हि कपिशस्पर्शरसगन्धा अपि भवेयुरिति चेत्, भवन्तु, नास्माकं हानिः। तथा न व्यवहरन्तिं किलेति चेत्, वयं किं कुर्मः? लोकं पृच्छ। सिद्धान्ते अवयवातिरिक्तस्यावयविनः अनङ्गीकारात् अवयवगतरूपादिभिरेव अवयविनः प्रत्यक्षत्वस्य समर्थनीयत्वेन चित्ररसादीनामप्यङ्गीकारे न कापि हानिः॥

लोकायतं तु शास्त्रं स्यात्तर्हि मानं भवेत् किमु? उच्यतां स्वेच्छया किञ्चित् यावद्बाधं खलूच्यते॥
भट्टाश्रयापेक्षया हि वरं वैशेषिकाश्रयः। न शुद्धवैदिको भट्टः, किन्तु तार्किकवैदिकः॥ ३१॥

[स्नेहपरीक्षा]

392. स्नेहः प्रत्यक्षसिद्धो यदुपधिरुदके स्निग्धधीः स द्रवत्वात्
तोयत्वाच्चातिरिक्तः; क्वचिदिह यदसौ भाति ताभ्यां विनाऽपि।
सौवर्णादिद्रवाणां न च भवति यतः पांसुसंग्राहकत्वं
पर्यायानुक्तिरस्मिन्; भवति विषमता चेति केचित् गृणन्ति॥ ३२॥

[स्नेहविषये पक्षभेदौ]

393. अन्ये स्नेहं तु रूपं किमपि निजगदुः स्निग्धवर्णोक्त्यबाधात्
दृष्टत्वात् दुस्त्यजं तत्; भवति खलु भिदा काऽपि गन्धादिकेऽपि।
अप्त्वादेः पांसुसङ्गः; सुगममिदमयस्कान्तजात्यादिनीत्या
न ह्यन्यत् तत्र व ऌप्तं; न च न दृढमितं पार्थिवे पिच्छिलत्वम्॥ ३३॥

---

चतुर्णामाद्यानां गुणानां निरूपणानन्तरं संख्याया निरूपणीयत्वेऽपि स्नेहाख्यं रूपं केचिदेकदेशिनो वदन्तीति स्नेहस्य स्मरणात् स्नेहं निरूपयति—**स्नेह** इत्यादि। **उदके**=जले **स्निग्धधीः**=‘स्निग्धं जलम्’ इत्यनुभवः **यदुपधिः**=यादृशगुणसद्भावप्रयुक्तः, **सः स्नेहः** प्रत्यक्षसिद्धः। सः **द्रवत्वात्**=जलगतद्रवत्वापेक्षया **तोयत्वाच्च**=जलत्वाच्च अतिरिक्तः। **यत्**=यस्मात् असौ स्नेहः **ताभ्यां विनापि**=द्रवत्वजलत्वाभ्यां विनैव **इह क्वचित्**=पृथिव्यामपि **कुत्रचित्**=तैलघृतादौ भाति। द्रवत्वमेव यदि स्नेहः, तर्हि **सौवर्णादिद्रवाणाम्**=सुवर्णादिलोहद्रवाणाम् **पांसुसंग्राहकत्वम्**=चूर्णादिपिण्डीभावहेतुत्वम् **यतः न च भवति,** अतः न द्रवत्वं स्नेहशब्दार्थः। एवम् **अस्मिन्**=स्नेहे **पर्यायानुक्तिः**=पर्यायतया द्रवत्वजलत्वपदयोः अप्रयोगोऽपि **भवति**। एवम्, **विषमता च**=वैषम्यं च **भवति**। अतः स्नेहः अतिरिक्तः जलस्य गुणः **इति केचित्**=वैशेषिकादयः, अस्मदेकदेशिनश्च **गृणन्ति**=वदन्ति। अतस्स्नेहः, जलस्यैव गुणः॥ ३२॥

सयूथ्यपक्षान्तरमाह—**अन्ये**=सयूथ्या एव केचित् **स्निग्धवर्णोक्त्यबाधात्**=‘स्निग्धवर्णः’ इति रामवर्णने उक्तेः बाधादर्शनात् **स्नेहं तु रूपं किमपि**=विलक्षणं किञ्चित् रूपविशेषम् **निजगदुः**। **तत्**=तदेतत् **दृष्टत्वात्**=रूपे विलक्षणनिबिडताया दर्शनात् **दुस्त्यजम्**। किं बहुना! **गन्धादिकेऽपि**=गन्धादिगुणेष्वपि **कापि**=अनिर्वचनीया **भिदा**=विशेषः भवति। पद्मगन्धापेक्षया चम्पकगन्धे, दुरालभास्पर्शे, गुडादिमाधुर्ये च एतादृशी **स्निग्धता**=सान्द्रता भवति। एवं स्नेहस्य तत्र तत्र दर्शनात् नायमतिरिक्तो गुण इत्येव वरमित्याशयः। तर्हि जलेन वा कथं चूर्णादिपिण्डीभाव इति चेत्, तत्राह—**आप्त्वादेः**=जलत्वादिजातेरेव हेतोः **पांसुसङ्गः**=चूर्णादिपिण्डीभावः। ननु जातिः किल अनुगतप्रतीतिनिर्वाह्याङ्गीक्रियते। सा कथं पिण्डीभावहेतुर्भवेदित्यत्र—**अयस्कान्तादिनीत्या इदं सुगमम्**। न ह्ययस्कान्ते जात्यतिरिक्तः कश्चिद्विशेषः। न हि अन्यत् **तत्र**=अयस्कान्ते क्लृप्तम्। एवं **पार्थिवे**=घृतादौ **पिच्छलत्वम्**=स्नेहविशेषः **न च न दृढमितम्**=

[द्रवत्वविमर्शः]

**394. मासृण्यादिप्रभेदोपहितगुरुतयाऽबादिनिम्नाभिमुख्यम्
माषव्रीह्यादिराशौ भवति च पतने तादृशं तारतम्यम्।
किंचादृष्टान्यक्लृप्तिर्ज्वलनपवनयोर्न क्रियायां; तथाऽस्मिन्
इत्येकेऽन्ये तु दृष्ट्वा गुणमधिकमुशन्त्यादिमस्यन्दहेतुम्॥ ३४॥**

सर्वसंमतमेव। अतो वस्तुस्वभावविशेष एव कश्चित् स्नेहो नाम, नातिरिक्तः। नन्वेवं स्वभाववादश्चेत्, न किञ्चिदपि कुत्रापि सिद्ध्येत्किलेति चेत्,

त्वमेव पृच्छाचार्यं तं स्वतन्त्रं सर्वनिर्णये। वृथा चर्चेयमेतादृगिति बोधयितुं जनान्॥
उदासते कदाचित्ते तद्ग्राह्यं मादृशैर्जनैः। वेदान्तदूरा एते हि विषयाः कथिताः पुरा॥ ३३॥

स्नेहप्रसङ्गात् द्रवत्वप्रसक्त्या तदपि विचारयति—**मासृण्यादी**ति। स्यन्दनहेतुः खलु द्रव्यत्वम्। स्यन्दनं नाम **अबादिनिम्नाभिमुख्यम्**=जलादीनां निम्नप्रदेशं प्रत्याभिमुख्यमेव। **तच्च मासृण्यादिप्रभेदोपहितगुरुतया**=मासृण्यस्य वा, श्लक्ष्णत्वस्य वा **प्रभेदेन**=विशेषेण **उपहितं यद्गुरुत्वम्** तेन **अबादिनिम्नामुख्यम्**=अबादीनां निम्नप्रदेशाभिमुख्यरूपं स्यन्दनं भवति। अतो द्रवत्वमपि वस्तुनः वर्तुलत्वश्लक्ष्णत्वे च सति गुरुत्वेन भवेत्। अतोऽतिरिक्तं द्रवत्वं मास्तु॥

ननु किमिदं प्रतारणम्? गुरुत्वं वा कश्चन गुणोऽङ्गीक्रियते किम्? एवं सति गुरुत्वोपरि भारः कथमारोप्यते, **अजातपुत्रनामकरणवत्** इति चेत्, गुरुत्वस्यातिरिक्तस्याभावेऽपि गुरुत्वकार्यं पतनादिकं न ह्यहेतुकं भवेत्। पतनकारणेन तेनैव स्यन्दनकार्यस्यापि निर्वाहे मास्तु स्यन्दनकारणमतिरिक्तं द्रवत्वं नाम। ननु भोः! किमिदं पुनरपि प्रतारणम्। गुरुत्वं हि अदृष्टविशेषरूपं वक्ष्यसि(36)। उभयोरप्यदृष्टाधीनत्वे 'पाषाणः स्यन्दते' 'जलं पतति' इत्यपि व्यवहारापत्तिरिति चेत्, नावहितमायुष्मता। अदृष्टविशेषेत्युक्तम्। अन्यथा हि भवन्मतेऽपि 'वायुर्ज्वलति' 'अग्निर्वाति' इति व्यवहारापत्तिः। तत्रादृष्टविशेषेण सह वस्तुस्वरूपतारतम्यस्यापि सत्त्वात् क्रियाभेदव्यवहार इति चेत्, तदत्रापि समानम्। इदमुच्यते—**माषव्रीह्यादिराशौ पतने तादृशं तारतम्यं च भवति**=माषव्रीह्यादीनां श्लक्ष्णतायां तारतम्यं प्रत्यक्षसिद्धमेव। **किञ्च ज्वलनपवनयोः**=अग्नेः वायोश्च **क्रियायां अदृष्टान्यक्लृप्तिः न, तथा अस्मिन्**=स्यन्दनेऽपि अदृष्टविशेष एव कारणम्। ननु अदृष्टं तु कार्यसामान्यकारणमस्त्येव। विशेषकारणमन्तरा सामान्यकारणमात्रेण कार्यनिर्वाहे, प्रकारान्तरेणाकस्मिकतावाद एवापतेदिति चेत्, भवतां वा कथमग्नेरूर्ध्वज्वलनादौ अदृष्टविशेषकल्पना? कारणान्तरानुपलंभादिति चेत्, समानम्। न हि वयं स्वभाववादिनः, कल्पनायां तु अदृष्टविशेष एवालम्, लाघवादिति वदाम इति न काप्यनुपपत्तिः। एवं सत्यप्यस्त्येवाशयभेद इत्याह—**इत्येके** इति। **अन्ये तु दृष्ट्वा**=अन्वयव्यतिरेकौ दृष्ट्वा **आदिमस्यन्दहेतुम्**=द्रवत्वम् **अधिकगुणम्**=अतिरिक्तगुणमेव **उशन्ति**=इच्छन्ति॥ ३४॥

[सांसिद्धिकनैमित्तिकद्रवत्वभेदः]

395. तोये दृष्टं स्वभावात्; घृतकनकमुखे पाकजन्यं द्रवत्वं
तैलादौ नैव पाकानुगम इति भवेत् तादृशाबंशक्लृप्तिः ।
भस्मीभावाद्यनर्हे यदुत कणभुजा सूत्रितं तैजसत्वं
हेमादिश्लिष्टभौमावयवनयविदामित्थमेतन्न हृद्यम् ।। ३५ ।।

[गुरुत्वपरीक्षा]

396. पातस्तुल्योऽम्बुभूम्योः पवनदहनयोस्तिर्यगूर्ध्वप्रवृत्त्या
पाते भेदात् पलादिप्रतिनियतिरपि ह्यंशवैषम्यतः स्यात् ।
भागानां तारतम्याज्जलशिखिमरुतां स्यन्दनादेर्विशेषः
तस्मात् सर्वोऽप्यदृष्टादिह भवतु; न चेत् स्याद्गुणोऽन्योऽनलादौ ।। ३६ ।।

---

द्रवत्वे स्वाभाविकौपाधिकविभागं प्रदर्शयति—**तोय** इत्यादि । ननु द्रवत्वमेव निराक्रियते, तस्य विभागस्तु प्रदर्श्यते । किमिदं **मृतशिशोर्नामकरणोत्सवः** !

प्रायस्तत्त्वं न जानन्ति ह्यर्थेष्वेतादृशेषु हि । पदं तु वर्तते किञ्चित् कश्चिदर्थोऽपि वर्तते ॥
कीदृशोऽर्थस्स इत्यत्र चर्चा प्रचलति द्वयोः । अर्थास्सर्वे तथैव स्युस्तस्मात्तच्च निरूप्यते ॥

**तोये**=जले **द्रवत्वम्**=स्वभावात् **दृष्टम्** । **घृतकनकमुखे**=घृतसुवर्णादौ **द्रवत्वं पाकजन्यं** भवति । तैलादौ तु तत् स्वभावोऽपि न, पार्थिवत्वात्, **पाकानुगमः**=पाकान्वयोऽपि न, न हि तत्र पाकाद्द्रवत्वम्, इति हेतोः तत्र **तादृशाबंशक्लृप्तिः**=परिदृश्यमानस्य जलांशस्य कल्पनम् । 'कनक' इति परमतदृष्ट्या । वस्तुतस्तु **भस्मीभावाद्यनर्हे**=भस्मीभावस्य वा क्षयस्य वा अनर्हे सुवर्णादौ **यदुत कणभुजा**=कणादेन **तैजसत्वं सूत्रितम्, एतत् हेमादिश्लिष्टभौमावयवनयविदाम्**= सुवर्णसंयुक्त-पार्थिवावयवन्यायतत्त्वविदाम् **इत्थम्**=तदुक्तरीत्या **न हृद्यम्**=नाङ्गीकारार्हम् । सुवर्णतैजसत्वविचारः पूर्वमेव (जड.60) गतः ॥ ३५ ॥

अनुपदम् (34) गुरुत्वस्य प्रसक्तत्वात्, तदपि परीक्षयति—**पात** इत्यादि । **पवनदहनयोः**=वायोः, तेजसश्च **तिर्यगूर्ध्वप्रवृत्त्या**=वायोः तिर्यग्गमनप्रवृत्त्या, तेजस ऊर्ध्वज्वलनप्रवृत्त्या **तुल्यः**=समानः **अम्बुभूम्योः**=जलस्य पृथिव्याश्च **पातः**=पतनम् । अग्नेरूर्ध्वज्वनम्, वायोस्तिर्यग्गमनं च यथादृष्टकारित-मुच्यते, तद्वदेव पृथिवीजलयोः पतनमपि अदृष्टकारितमिति तयोः पतनहेतुतया न गुरुत्वसिद्धिः । ननु तुलादिभिः पलादितारतम्यनिर्णयः कथं भवेत्, तदप्यदृष्टादेवेति चेत्, वणिजस्तत्र किं कार्यमस्ति—इति चेत्—**पाते**=तुलायाः एकपार्श्वे पातस्य, अपरपार्श्वे तदभावस्य च **भेदात्**=वैलक्षण्यात् **पलादिप्रति-नियतिरपि**=पलभारादितोलनव्यवस्थापि **अंशवैषम्यतो हि**=वस्त्ववयवशैथिल्यसान्द्रत्वादिना स्यात् । एवम् **जलशिखिमरुताम्**=जलस्य, तेजसः, वायोश्च **भागानां तारतम्यात्**=उक्तरीत्या अवयवतारतम्यादेव

[गुरुत्वस्यातीन्द्रियत्वम्]

397. त्वक्संवेद्यं गुरुत्वं कतिचिदभिदधुः; तत्तु तेषां गुरुत्वम्
नोर्ध्वं स्पृष्ट्वा प्रतीमस्तदिह, परधृते नाप्यधस्तात् स्पृशन्तः ।
न ह्यन्यालम्बितोऽर्थो भवति लघुतरः; स्पर्शनं नोपरुद्धं
तेनाक्रान्तौ प्रणुत्तिक्रम इति गुरुणा तर्कितस्तोलनाद्यैः ।। ३७ ।।

[सांख्यसंमतगुरुत्वपरीक्षा]

398. क्षित्यादौ सांख्यदृष्ट्या यदि किमपि तमःकार्यमिष्टं गुरुत्वं
तद्वत् कल्प्येत वह्निप्रभृतिषु न कथं सत्त्वकार्यं लघुत्वम् ।

---

**स्यन्दनादेः**=स्यन्दनादिक्रियायाः **विशेषः**=परस्परवैलक्षण्यम् स्यात् । **तस्मात्**=एवं सर्वस्य निर्वाहात् इह सर्वोऽपि कार्यवैलक्षण्यादिः **अदृष्टात्**=अदृष्टविशेषवशात् भवतु । **न चेत्**=एवमनङ्गीकारे=अतिरिक्त-गुरुत्वाङ्गीकारे **अनलादौ**=अग्नौ वायौ च **अन्यो गुणः**=पतनहेतुभूतगुरुत्ववत् ऊर्ध्वज्वलनहेतुः कश्चन विलक्षणो गुणः, तिर्यग्गमनहेतुः अन्यो विलक्षणो गुणश्च **स्यात्**। तत्रादृष्टविशेषान्निर्वाहश्चेत्, पतनादावपि तथैव भवतु । मास्तु अतिरिक्तं गुरुत्वम् । कार्यमदृष्टवशाद्भवतु, हस्ताद्याकर्षणं कथमिति चेत्, एतादृश-विचारः केवलं शिष्यबुद्धिवैशद्यायैवेत्ययमंशः 38 श्लोकेन स्पष्टः ।। ३६ ।।

गुरुत्वस्यातीन्द्रियत्वं साधयति—**त्वगित्यादि**। ननु भोः! अदृष्टविशेषवशादेव पतनादिक्रियेति प्रतिपादितत्वात्, पतनहेतोः गुरुत्वस्यातीन्द्रियत्वमपि सिद्धमेवेति, कथं तस्य त्वगिन्द्रियग्राह्यत्वपूर्वपक्ष उदियादिति चेत्, एतत्सूक्ष्मज्ञानाभावादेव कस्यचिन्मुग्धस्यायं प्रश्नः स्यात् । अत एवोत्तरमपि नर्मोक्त्यैव दीयते । **कतिचित्**=केचित् गुरुत्वं **त्वक्संवेद्यम् अभिदधुः** । **तत्**=एवमभिधानम् **तेषां गुरुत्वम्**= बुद्धिसूक्ष्मत्वाभावप्रयुक्तम्. इत्युपहासः । मौग्ध्यमेव प्रकारान्तरेणापि प्रदर्शयति—**ऊर्ध्वं स्पृष्ट्वा**=वस्तुन ऊर्ध्वभागे हस्तेन स्पृष्ट्वा तत्=गुरुत्वम् **न प्रतीमः**=न जानीमः । **परधृते इह**=वस्तुनि अन्येन धृते सति **अधस्तात्**=अधोभागे स्पृशन्तः नापि प्रतीमः । त्वगिन्द्रियसंबन्धस्य उक्तस्थलयोः सत्त्वेऽपि न हि गुरुत्वं केनचिद् ज्ञायते । ननु तदानीं तत्र गुरुत्वमेव न स्यात्, अतो न गृह्यत इति चेत्, **अन्यालम्बितः अर्थः**=अन्येन धृतः पदार्थः **लघुतरः**=गुरुत्वशून्यः **न हि भवति** । **स्पर्शनम्**=त्वगिन्द्रियसंबन्धो वा **न उपरुद्धम्**=न हि त्रुटितमभूत् । **तेन** कारणेन **गुरुणा**=गुरुत्ववद्द्रव्येण तोलनसाधनेन **तोलनाद्यैः**= तोलनादिपरीक्षाभिः **प्रणुत्तिक्रमः**=अधस्तात् हस्तस्याकर्षणप्रक्रिया वर्तते **इति**=इत्येवम् धारकेण ज्ञायेतैव । **तर्कितः**=ऊहितः=अनुमितो भवति । अतश्च गुरुत्वम्=अधःपतनहेतुभूतमवयवसान्द्रत्वादिकं कार्यानुमेयम्, न तु त्वगिन्द्रियग्राह्यम् ।। ३७ ।।

सांख्यशास्त्रोक्तप्रक्रियया गुरुत्वं विमृशति—**क्षित्यादाविति** । **सांख्यदृष्ट्या**=सांख्यतन्त्रदृष्ट्या **तमःकार्यं किमपि**=तमोगुणस्य कार्यभूतं यत्किञ्चित् **गुरुत्वम्**=गुरुत्वं नाम **क्षित्यादौ**=पृथिवीजलयोः

**यादृग्भूताद् गुणात् तद्वदसि च पतनं, तादृशादस्तु तस्मात्**
**क्लृप्तिस्त्वन्यस्य गुर्वी; भवतु तदधिकं काममाप्तोपदेशात् ।। ३८ ।।**

**[तार्किकोक्तसंख्यापरीक्षा]**

399. **एकद्व्यादिप्रतीतिव्यवहृतिविषयो यो गुणः सा तु संख्या**
**क्वाप्यैक्यं नित्यसिद्धं; क्वचिदवयवगैर्जन्यते तत्तदैक्यैः ।**
**द्वित्रित्वाद्यं त्वनेकावगतिसहकृतैकैकनिष्ठैक्यजन्यं**
**तत्तत्पुंमात्रदृश्यं क्षणिकमिति कथा काऽपि कौतस्कुतानाम् ।। ३९ ।।**

**इष्टम् यदि**=संमतं यदि, तर्हि, तद्वत् **वह्निप्रभृतिषु**=तेजःप्रभृतिपदार्थेषु **सत्त्वकार्यम्**=सत्त्वगुणकार्यम् **लघुत्वम्** अपि **कथं न कल्प्येत? यादृग्भूतात् गुणात्**=यादृशात् तमोऽभिधात् गुणात् **तत् पतनम्**=पतनरूपं तत्कार्यं **वदसि च तादृशात् तस्मात्**=तादृशतमोगुणादेव पतनम् अस्तु, **अन्यस्य**=तदतिरिक्तस्य गुरुत्वस्य **क्लृप्तिस्तु**=कल्पनं तु **गुर्वी**=गौरवावहा भवति, 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायात्। ननु वयं स्वयमिदं न कल्पयामः। अत एव 'सत्त्वकार्यं लघुत्वमपि भवतु' इत्यपीष्टमेव। 'गुरुवरणकमेव तमः' इतिवत् 'सत्त्वं लघु' इत्यपि वदाम एव। अतश्शास्त्रादेवेदमङ्गीकुर्म इति चेत्, तत्राह— **आप्तोपदेशात् अधिकं तत्**=गुरुत्वं चेत्, **कामं** तथा **भवतु**, नास्माकं प्रद्वेषः ।।

मध्यकाले त्वभूदेवं पण्डितानां परिस्थितिः। सर्वमुच्छृंखलमभूत् हेतुवादप्रभावतः ।।
**सुभगाभिक्षुकन्यायः** सर्वत्राभूत् क्रमात्तदा। सर्वं तु संकेतमयं त्वनिवार्यमभूत्तदा ।।
यदा तु वेदवाक्यानां व्याख्याने कलहो महान्। कर्तव्यं किं तदा सर्वैः विज्ञानं दुर्बलं कृतम् ।।
तपसाध्यात्मविज्ञानं संपाद्यं गुर्वनुग्रहात्। दैवस्य कृपया चैव नान्या गतिरिहास्ति नः ।। ३८ ।।

प्रसक्तानुप्रसक्तं समाप्य क्रमप्राप्तां संख्यां विचिचारयिषुः प्रथमं वैशेषिकप्रक्रियां निरूपयति— **एकेत्यादि। एकद्व्यादिप्रतीतिव्यवहृतिविषयः**=एकम्, द्वे, त्रीणि, इत्यादिप्रतीतौ, तद्व्यवहारे च विषयतया भासमानः यः सा तु 'संख्या' इत्युच्यते। **ऐक्यम्**=एकत्वम् **क्वापि**=कुत्रचित्परमाण्वादौ **नित्यसिद्धम्**= नित्यं सिद्धम्, अतो **नित्यम्। क्वचित्**=कार्ये पटाद्यवयविनि **अवयवगैः**=तदवयवेषु तन्तुषु वर्तमानैः **तत्तदैक्यैः**=तत्तत्तन्तुगतैक्यैः **जन्यते,** अत एव कार्यभूतपटादिगतं तु एकत्वमनित्यम्। **द्वित्वत्रित्वाद्यं तु**=द्वित्वत्रित्वादिसंख्या तु **अनेकावगतिसहकृतैकैकनिष्ठैक्यजन्यम्**=अनेकाः अवगतयः=अपेक्षाबुद्धयः, ताभिः सहकृतम् **एकैकनिष्ठम्**=प्रत्येकवस्तुषु प्रातिस्विकतया वर्तमानम् यत् **ऐक्यम्**=एकत्वम्, **तज्जन्यम्**= एकत्वं प्रतिवस्तुगतम् केवलान्वयि, जगति सर्वत्र वर्तमानत्वात्। द्वित्वादिकं तु न प्रतिनियतम्, यदा गणना क्रियते तदैव तत्तद्वस्तुनि जायते। तच्च द्वित्वादिकं येन पुरुषेण गण्यते, तत्पुरुषापेक्षयैव जायते। अत एव **तत्तत्पुंमात्रदृश्यम्**=तत्तत्पुरुषेणैव ग्राह्यम्, **क्षणिकम्**=क्षणद्वयमात्रावस्थायि। अत एवान्यपुरुषस्य तत्र द्वित्वप्रत्यक्षं न भवति। एवं तत्तत्पुरुषापेक्षया तत्तद्विवक्षितपदार्थेषु तदा तदा द्वित्वादिकं जायते। ज्ञानानां

**[तार्किकोक्तसंख्याविमर्शः]**

**400. तत्र द्वित्वाद्यपेक्षामतिविषयभिदामात्रमेवास्त्वभीष्टं**
**द्वित्वाद्युत्पत्तिमूलं यदभिलपसि, तत् व्याहृतेरस्तु मूलम्।**
**द्वित्वादिप्रागभावैर्ध्रुवमिह हि विना धीविशेषोऽभ्युपेयः**
**तन्मूलं निर्गुणानां विगणनमपि च स्थापनीयं गुणानाम्॥ ४०॥**

द्विक्षणावस्थायित्वात् तृतीयक्षण एव द्वित्वादिकमपि नश्यति। पुनः गणने पुनरुत्पद्यते, पुनर्नश्यति च। द्वित्वमपि नश्यति, तद्ज्ञानमपि नश्यति। इति **कौतस्कुतानां**=तार्किकाणाम् **कापि कथा**। कुतः कुतः इति सर्वत्र प्रश्नं कुर्वन्ति=कारणमन्विष्य विचारं कुर्वन्ति यतः, अतस्ते कौतस्कुताः=तार्किकाः=वैशेषिकाः॥

एवञ्चात्र द्वित्वादिप्रत्यक्षोत्पत्तिक्रम एवम्—यस्य पुरुषस्य येषां वस्तूनां गणना यदा अपेक्षिता, तदा स पुरुषः प्रथमं प्रतिवस्तु 'अयमेकः, अयमेकः' इति गणयति। एकत्वं तु प्रतिवस्तु सदा वर्तते। एवमेकैकशः गणनायां कृतायां तत्तद्वस्तुनोः द्वित्वसंख्या उत्पद्यते। ततो द्वित्वत्वनिर्विकल्पकम्। अनन्तरं द्वित्वसविकल्पकमिति 'इमौ द्वौ' इति द्वित्वादिप्रत्यक्षक्रमः। अयमेकः, अयमेक इति प्रातिस्विकं ज्ञानम् अपेक्षाबुद्धिरित्युच्यते, तत्तत्पुरुषापेक्षयैव गणनात्। तथा च द्वित्वादिकमपेक्षाबुद्धिजन्यम्, अपेक्षाबुद्धिनाशे च नश्यति। अत एवोक्तम्='द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः। अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः॥ (कारिकावली.) इति। तत्तत्पुरुषेणैव गणनात्, द्वित्वादिकमपि तत्तत्पुरुषदृष्ट्यैव तदा तदा जायते। अत एवान्यस्य तत्र द्वित्वप्रत्यक्षं न भवति, तेन तथाऽगणनात्। तदिदमुक्तम्='अनेकावगति-सहकृतैकैकनिष्ठैक्यजन्यम्, तत्तत्पुंमात्रजन्यम्, क्षणिकम्' इति। अत्र क्षणिकत्वं न बौद्धसंमतम् एकक्षणमात्र-वर्तमानत्वं न, किन्तु द्विक्षणावस्थायित्वम्। अपेक्षाबुद्धिःपरं क्षणत्रयावस्थायिनी, मध्ये द्वित्वत्वनिर्विकल्पेन क्षणव्यवधानात् इति वैशेषिकाः॥ ३९॥

उक्तां तार्किककल्पनां निराकरोति—**तत्रे**त्यादिना। **तत्र**=पूर्वोक्तकौतस्कुतकथायाम् **द्वित्वाद्यपेक्षा-मतिविषयभिदामात्रमेव**=द्वित्वाद्युत्पत्तिहेतुभूतापेक्षाबुद्धिविशेषविषयत्वमात्रमेव **अभीष्टम् अस्तु**=अस्म-त्संमतं भवति, न तु द्वित्वोत्पत्त्यादिकम्। कुतः? **यत्**=उक्तापेक्षाबुद्धिविशेषविषयत्वम् **द्वित्वाद्युत्पत्ति-मूलम्**=द्वित्वादिसंख्याया उत्पत्तेः मूलकारणम् **अभिलषसि**=इच्छसि, **तदेव तद्व्याहृतेः**=द्वित्वादि-व्यवहारस्य **मूलम्**=कारणम् **अस्तु, 'तद्धेतोरेव तद्धेतुत्वे'** इत्यादिन्यायात्। तद्धेतोः=द्वित्वोत्पत्तिहेतोः अपेक्षाबुद्धिविशेषविषयत्वस्यैव तद्धेतुत्वे=द्वित्वादिव्यवहारहेतुत्वे संभवति मध्ये=अपेक्षाबुद्धिविशेष-विषयत्वद्वित्वव्यवहारयोर्मध्ये तेन=द्वित्वोत्पत्तिकल्पनेन किम्=को लाभः? इति न्यायस्यार्थः। ननु तद्धेतो-रेवेति न्यायाङ्गीकारे मध्ये व्यापाराणामपि कारणत्वं न स्यादिति शङ्क्यम्, दण्डादीनां करणत्वनिर्वाहार्थं मध्ये व्यापारकल्पनात्, व्यापाराभावे दण्डादीनां करणत्वमेव दुर्घटं स्यादिति न तत्र तन्न्यायावतारः। प्रकृते तु, द्वित्वादेस्तत्तत्पुरुषबुंद्ध्यपेक्षत्वात् बुद्धिविशेषविषयत्वमन्तरा द्वित्वोत्पत्तेरसंभवेन, तेनैव निर्वाहादित्याह—

[एकत्वपरीक्षा]

401. **कैवल्यं नैकसंख्या परविरहतया; नापि मुख्यान्यभावौ**
**सङ्घातैक्यं तु राशिक्रममवयवि तु प्राङ्निरस्तं ततोऽन्यत्।**
**तेनासङ्घातरूपे क्वचन निरुपधिः स्यादसावेकसंख्या**
**स्वाधारैकायुरेषा; परमुपचरिता सेयमद्रव्यवर्गे ॥ ४१ ॥**

**द्वित्वादीति । द्वित्वादिप्रागभावैर्विना इह**=द्वित्वोत्पत्तौ **धीविशेषः**=बुद्धिविशेषः ध्रुवम् **अभ्युपेयो हि,** अन्यथा सदा द्वित्वबुद्ध्यापत्तिः । द्वित्वप्रत्ययो हि न नियतः, कदाचित् घटयोः, कदाचिद्धटपटयोरित्येवं द्वित्वादिप्रत्ययस्य पुरुषकालापेक्षत्वात् । एवमनभ्युपगमेऽनिष्टापत्तिमप्याह—**निर्गुणानां गुणानाम् विगणनमपि**= 'चतुर्विंशतिर्गुणाः' इत्यादिगणनमपि **तन्मूलम्**=अपेक्षाबुद्धिमूलं **स्थापनीयं च** । गुणे गुणानङ्गीकारेण चतुर्विंशतित्वं तत्र कथं वक्तव्यम् । पञ्चकर्माणि, अभावश्चतुर्विधः इत्यादिगणनमपि बुद्धिविशेषविषयत्वमादायैव निर्वाह्यम् । एवं चेत्, तर्हि द्रव्यादावपि बुद्धिविशेषविषयत्वमादायैव संख्याव्यवहारनिर्वाहसंभवादतिरिक्ता संख्यापि नास्ति । ननु भोस्तर्हि—

**भिक्षुपादप्रसरणनीतिः** किं विस्मृता त्वया । न विस्मृता भोः, न वयं तर्कमात्रावलम्बनाः ॥
वयं तु वैदिका वेदे भारं निक्षिप्य शेमहे । स तु सर्वजगद्भारं वोढुं शक्तो न संशयः ॥
न भीतिर्न च संशीतिः रक्षिष्यति स एव नः । सर्वपलापवादस्य प्रसरो नैव जातुचित् ॥ ४० ॥

एकत्वं कीदृशमिति शोधयति—**कैवल्य**मित्यादि । 'मुख्यान्यकेवलेष्वेकम्' 'एके मुख्यान्य-केवलाः' इति कोशः । तत्र एकत्वसंख्या **कैवल्यं न**='केवलं राम इदं कर्तुं समर्थः' इत्यादिप्रयोगात् कैवल्यरूपम् एकत्वं न । **परविरहतया**=इतरनिवृत्तिरूपतया **एकसंख्या**=एकत्वसंख्या हि **भावरूपा । मुख्यान्यभावौ न**=मुख्यत्वरूपं वा अन्यत्वरूपं वा न । 'एकं स्थानं दर्शनीयमस्ति' इत्यादौ प्राधान्य-विवक्षया एकपदप्रयोगात् एकत्वं प्राधान्यरूपं न । 'एको घटः' इत्यादौ तादृशार्थाभावात् । एवम् 'मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यत् दुरात्मनाम्' इति स्थाने 'मनस्येकं वचस्येकं कर्मण्येकं दुरात्मनाम्' इत्यपि प्रयोगात्—**एकम्**=अन्यत्वरूपं न, यतः केवलान्वयिरूपं ह्येकत्वं सर्वत्र भावरूपं दृष्टम् । 'एका सेना' इत्यादौ एकपदप्रयोगात् योधसंघात इत्यर्थात् एकत्वं संघातरूपं तु **राशिक्रमम्**=राशौ—'एको धान्यराशिः' इत्यादौ यो क्रमः, तमनुसरति । एतत्सर्वमौपचारिकमिति सर्वे जानन्ति । **ततः**=संघातात् **अन्यत्**=अतिरिक्तम् 'एको घटः' इत्यादौ संघातातिरिक्तं अवयवि तु **प्राक्**=पूर्वमेव (जड.20) निरस्तम् । **तेन**=एवमेषां प्रयोगाणामौपचारिकत्वात् एतत्सर्वविलक्षणा **एकसंख्या**=एकत्वाख्यः मुख्यसंख्या-पदार्थः **असंघातरूपे**=पूर्वोक्तस्थलविलक्षणे **क्वचन**=कुत्रचित् **निरुपधिः**=अनौपचारिकः=सहजः स्यात् । निरवयवे परमाण्वादौ सा संख्या स्वीकार्येति **सर्वार्थसिद्धिः** । 'परमाण्वादौ' इत्यत्रादिना प्रत्येकस्वात्म-ग्रहणम् । न हि कस्यापि स्वात्मनि 'अहमेकः, उत द्वौ' इति संशयो भवति । तत्रैव संख्यारूपं मुख्यमेक-

[एकत्वस्वरूपे मतभेदः]

402. **ऐक्यं स्वाभेदमाहुः कतिचन, न भिदाऽस्त्येकमेवेति दृष्टेः**
**भेदादृष्ट्यैक्यमोहस्तदिति च वचनं तत्र तत्राभ्युपेतम्।**
**अन्ये त्वेतत् स्वसत्त्वं विदुरितरसमुच्चित्यवस्थानुवृत्तं**
**तत्पक्षेऽपि स्वरूपादधिकमिदमिह द्वित्वमोहादिसिद्धेः ॥ ४२ ॥**

त्वम्। परमात्मन्यपि 'एको देवः' इत्यादिशास्त्रात्। न च परमाणोर्निराकृतत्वात् (जड.18) कथं तत्रैकत्वसंख्या कथ्यत इति प्रष्टव्यम्, वैशेषिकसंमतपरमाणोरेव निराकरणात्। 'विश्रमस्त्वस्तु दृष्टे' इत्येव तत्रोपसंहारात्। परन्तु तस्यापि सृज्यत्वादनित्यत्वमिति विशेषः। अत एव—**एषा**=संख्या **स्वाधारैकायुः**=तस्या आधारानुगुणा, परमाणुगता अनित्यापि, आत्मगता तु नित्या। **परम्**=परं तु **सेयम्**=एकत्वसंख्या **अद्रव्यवर्गे उपचरिता**=औपचारिकी, अद्रव्ये अद्रव्यस्य सत्त्वासंभवात्—गुणे गुणानङ्गीकारात्॥

मुख्यैकत्वस्य विषये प्रोक्ता लोकायतक्रमात्। **न्यायभाष्ये** प्रक्रिया तु संद्रष्टव्या विमत्सरैः॥
**वात्स्यायनस्य** मेधायाः भाषाया वा विजृंभणम्। दृष्ट्वा स्वात्मा शिक्षणीयः हिताय श्रेयसे तथा॥
वेदान्तदृष्टिरन्या स्यात् अन्या लौकायती तथा। सांकर्यं नैव कर्तव्यं शास्त्रयोरुभयोरपि॥
**कालस्स तु गतः पूर्वः, नूतनः काल आगतः। कालस्यानुगुणं चिन्त्यं संकेतानुगुणं न च॥**
अणूनां परिमाणादिस्वरूपविषये बुधैः। नव्यविज्ञानिमूर्धन्यैः पराक्रान्तं च पश्यत॥
तत्कालसदृशं प्रोक्तमाचार्यैरिति भाव्यताम्। **कूपकूर्मनिभा** न स्मो वयमित्यपि चिन्त्यताम्॥
सत्यं नैकविधं प्रोक्तं सिद्धान्ते स्मर्यतां सदा। अबाधितं स्यात्सत्यं तत् तारतम्येन वर्तते॥
एकं स्यात्परमं सत्यमितरत्त्ववरं भवेत्। सत्यस्य सत्यं त्वित्यादि श्रुतिरेवाह पश्यत॥
हृदि द्रोहो न कर्तव्यः कदापि विबुधैः क्वचित्। राजते यत्र भगवान् सर्वसाक्षी सदैव नः॥ ४१॥

एकत्वविषये प्रकृतोपयोगिमतभेदं वर्णयति—**ऐक्यमित्यादि। ऐक्यम् स्वाभेदम्**=स्वतादात्म्यम्=स्वस्मिन् भेदाभावरूपम् **कतिचन**=निर्विशेषवादिनः आहुः। स्वस्मिन् विशेषाङ्गीकारे आधाराधेयभावकृतो भेद आगच्छति। अतश्च भेदाभावः, सजातीयविजातीयस्वगतभेदाभावः। अत एवाखण्डं ब्रह्मैकमेव परिशिष्यते। तत्र प्रमाणम्—**न भिदा अस्ति**='नेह नानास्ति किञ्चन', **एकमेव**='एकमेवाद्वितीयम्' इति **दृष्टेः**=श्रुतेः, वैदिकः खलु वेदचक्षुः। न केवलं वेदे, लोकेऽपि। **तत्**=तस्मादेव भेदादृष्ट्या **ऐक्यमोहः**='परस्परं भेदादर्शनात् ऐक्यभ्रमो जातः' इति च वचनम् **तत्र तत्र** लोके **अभ्युपेतम्**=सर्वैरङ्गीकृतम्। अतः ऐक्यम् अखण्डत्वरूपभेदाभाव एवेति ब्रह्मणः अखण्डत्वसिद्ध्या निर्विशेषत्वसिद्धिरित्यभिप्रयन्ति॥

**अन्ये तु**=सविशेषवादिनस्तु **एतत्**=एकत्वम् **इतरसमुच्चित्यवस्थानुवृत्तम्**=इतरस्य=विशेषणस्य समुच्चितिः=समुच्चयः=वैशिष्ट्यम्, एतादृश्यामपि अवस्थायामनुवृत्तम् **स्वसत्त्वम्**=स्वस्वरूपसत्तारूपम्,

[ऐक्ये विशेषप्रदर्शनम्]

**403. अन्यद् गृह्णात्यभिज्ञा; तददिमिति पुनः प्रत्यभिज्ञाऽन्यदैक्यं**
**कालक्षेत्रादिभेदग्रहजनितभिदाभ्रान्तिशान्तिस्ततः स्यात्।**
**मोहस्तत्रैकताधीर्ज्वलन इव भवेत् प्रत्यभिज्ञात्वतश्चेत्**
**स्वव्यघातोऽनुमायाः; भ्रम इह निखिला स्यादभिज्ञाऽपि तद्वत्॥ ४३ ॥**

तद्व्यक्तित्वरूपमिति यावत्, तादृशम् **विदुः**। इदं च तद्व्यक्तित्वं समुदायगतप्रत्येकवस्तुषु भवेत्। विशिष्टे वस्तुनि विशेषणविशेष्ययोः प्रत्येकं तद्व्यक्तित्वमपि वर्तत एव। वटबीजदृष्टान्तप्रदर्शनेनेदं स्पष्टीक्रियते छान्दोग्ये। निर्विशेषाज्जगदुत्पत्तिर्न स्यादित्येतदर्थमेव 'कथमसतस्सज्जायेत' इति सत एव सत उत्पत्तिः प्रतिपाद्यत इत्यादिकं सर्वं स्पष्टं वर्तते। अस्य विचारस्य विस्तरस्तु नायकसर एव गतः। एकत्वसंख्याविचारप्रसक्त्या पक्षद्वयसंमतमेकत्वस्वरूपमत्र प्रादर्शि। तर्हि निष्कर्षः क इत्यत्र— **तत्पक्षेऽपि**=निर्विशेषपक्षेऽपि **इह**=विशेष्ये **द्वित्वमोहादिसिद्धेः**=द्वित्वभ्रमसंशयविचारादिदर्शनात् स्वरूप एषामभावात् **इदम्**=एकत्वम् **स्वरूपात्**=वस्तुस्वरूपात् **अधिकम्**=अतिरिक्तमेव॥

विचारो यत्र नैव स्यात् तत्र तत्स्याद्यथा तथा। विचारः प्रसरेद्यत्र तत्र सर्वं सधर्मकम्॥
सृष्टिमूलस्य विषये मुधा चर्चा तु वर्धते। नोपादानं निर्विशेषं भवेन्नैवात्र संशयः॥
अत्र प्रदर्शितं स्पष्टं वटबीजनिदर्शनम्। यदि बीजं निर्विशेषं न किञ्चन ततो भवेत्॥
अथवा निखिलं तस्मात् भवेन्नैव व्यवस्थितिः। सर्वं विचारितं पूर्वं वर्ज्यते पिष्टपेषणम्॥
एतस्योपरि तत्त्वं तु तपसैवाधिगम्यताम्। त्यज्यतां च वृथा चर्चा रक्षतान्नो हरिस्सदा॥ ४२ ॥

एवमेकत्वे मतभेदं प्रदर्श्य, अभिज्ञाप्रत्यभिज्ञाविषययोरेकत्वयोर्वैलक्षण्यं प्रदर्शयति—**अन्यदि-त्यादि**। **अभिज्ञा**=सविकल्पकरूपं ज्ञानम् **अन्यत्**=अन्यादृशम् **ऐक्यम्**=एकत्वम् **गृह्णाति**। **प्रत्यभिज्ञा पुनः**=अभिज्ञानन्तरभाविनी प्रत्यभिज्ञा तु 'तदिदम्' इति 'तदेवेदम्' इति वा **अन्यत्**=अन्यादृशम् **ऐक्यम्**=एकत्वम् **गृह्णाति**। सिद्धान्तेऽपि निर्विकल्पकसविकल्पकभेदोऽस्त्येव। नैय्यायिकसंमतं तु निर्वि-कल्पकं नास्तीत्येतावानेव विशेषः इत्यादिकं बुद्धिसर एव गतम्। निर्विकल्पकं सविकल्पकं चेत्युभयमत्राभिज्ञा-शब्देनोच्यते। प्रत्यभिज्ञा देशान्तरकालान्तरदृष्टयोः व्यक्त्यैक्यावगाहिनी। इयमपि सविकल्पकप्रभेद एव। प्रत्यभिज्ञाया विविक्तं विषयं प्रदर्शयति—**कालेत्यादि**। **क्षेत्रम्**=देशः। **ततः**=प्रत्यभिज्ञातः **कालक्षेत्रादि-भेदग्रहजनितभिदाभ्रान्तिशान्तिः**=कालस्य देशस्य वा भेदवशात् यो भेदग्रहः=व्यक्त्योर्भेदग्रहः तज्जनिता या भ्रान्तिः=भिन्नव्यक्तित्वभ्रमः, तस्याः शान्तिः=निवृत्तिः स्यात्। 'कालक्षेत्रादि' इत्यत्र आदिपदेन शरीरकार्श्यस्थूलत्वादयः, वेषभूषादिश्च ग्राह्याः। पूर्वं कदाचित् दृष्टस्य पुरुषादेः, कालान्तरे देशान्तरे च पुनः कदाचिद्दर्शने 'स एवायं चैत्रः' इत्यादिज्ञानं जायते। स इति पूर्वकालिकपिण्डग्रहणम्, अयमित्येतत्कालिकपिण्डग्रहणम्। दर्शनं तु भिन्नमेव। अथापि विषयस्तु स एव। एवञ्च पूर्वापरकालिकयोः पिण्डयोरेकत्वग्रहात्, उभयोः भेदभ्रान्तिर्निवर्तते। **तत्र**=उक्तप्रत्यभिज्ञायाम् **एकताधीः**=ऐक्यबुद्धिः

**[संख्याविषये प्राभाकराशयविमर्शः]**

**404. अद्रव्येऽप्यस्ति संख्या व्यवहृतिबलतः, सा ततोऽन्या गुणादेः**
**मैवं; संख्यासु संख्याव्यवहृतिवदियं स्यात्त्विहोपाधिसाम्यात्।**
**नो चेत्, प्राप्ताऽनवस्था; व्यवहृतिनियतिस्थापनं तुल्यचर्चं**
**तस्मात् काणादक्लृप्तिर्गुरुमतकथकैर्युक्तमत्रापि सोढुम्॥ ४४॥**

**प्रत्यभिज्ञात्वतः**=प्रत्यभिज्ञात्वरूपहेतोः **ज्वलन इव**='सेयं दीपज्वाला' इत्यत्रेव **मोहो भवेत्**=भ्रान्तिः स्यात्। 'सोऽयं चैत्रः' 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञा भ्रान्तिः, प्रत्यभिज्ञात्वात् 'सेयं दीपज्वाला' इति प्रत्यभिज्ञावत्' इत्यनुमानाकारो ग्राह्यः। **चेत्**=एवं प्रत्यभिज्ञात्वसामान्येन 'सोऽयं घटः' इत्यादिप्रत्यभिज्ञाया अपि यदि भ्रान्तित्वम्, तर्हि—**अनुमायाः**=उक्तानुमानस्य **स्वव्याघातः**=स्वविरोधः, तस्या अपि प्रत्यभिज्ञात्वात्। 'तथा चायम्' इति खलु निगमनवाक्यम्। अतोऽनुमानमपि प्रत्यभिज्ञारूपमेवेति तदपि भ्रान्तिः स्यादिति। ननु न वयं निगमनवाक्यमङ्गीकुर्म इति चेत्, **'पञ्चाङ्गनाशेन किं नक्षत्रमपि नश्येत्'**। स्वलक्षणव्यतिरिक्तमिथ्यात्ववादिनामिष्टमेव तदपीति चेत्, **तद्वत्**=प्रत्यभिज्ञावदेव **इह**=भवन्मते **निखिला अभिज्ञापि**=स्वलक्षणज्ञानं सर्वमपि **भ्रमः स्यात्**। 'अभिज्ञा भ्रमः, अभिज्ञात्वात्, प्रत्यभिज्ञावत्' इति प्रयोगसंभवात्। अतस्सामान्याकारेण न किञ्चित्साधयितुं शक्यम्। प्रत्यभिज्ञाविषये वक्तव्यं सर्वं पूर्वमेव (जड.26) गतम्। अतः प्रातिस्विकव्यक्तिरूपमेकत्वमित्येव वरम्। इदमेवाभिज्ञायां विषयः। अतोऽभिज्ञाप्रत्यभिज्ञाभेदः स्पष्टः॥ ४३॥

संख्याया अतिरिक्तपदार्थत्ववादिनः **प्राभाकर**स्याशयमनूद्य निराकरोति—**अद्रव्य** इत्यादि। **व्यवहृतिबलात्**=प्रामाणिकव्यवहारबलात्, 'एकं रूपम्' 'रूपं रसात् पृथक्' इत्यादिव्यवहारस्य प्रामाणिकत्वात् संख्या **अद्रव्येऽपि**=द्रव्यभिन्ने गुणकर्मादिसर्वपदार्थेष्वपि अस्ति। **ततः**=तस्मात् कारणात् **सा**=संख्या **गुणादेः**=गुणादीतरसर्वपदार्थेभ्यः **अन्या**। एवमेव **शक्तिसादृश्यादयोऽपि** क्लृप्तसर्वपदार्थवृत्तित्वात् अतिरिक्ताः पदार्था इति ते वदन्ति॥

तदेतन्निराकरोति—**मैवमिति**। कुतः? **इयं तु**=अद्रव्येषु संख्याव्यवहृतिस्तु **संख्यासु संख्याव्यवहृतिवत्**='संख्याप्येकः पदार्थः' इति संख्यायामपि एकत्वव्यवहारवत् **उपाधिसाम्यात्**=उपाधेः अद्रव्यत्वस्य उभयत्र तुल्यत्वात् स्यात्। संख्याया अपि अद्रव्यत्वात् तत्र संख्याया अङ्गीकारासंभवात् प्रकारान्तरेण निर्वाहे, तस्य प्रकृतेऽपि समानत्वात्। **नो चेत्**=संख्यायामपि संख्याया अङ्गीकारे **अनवस्था**=पुनस्तत्रापि संख्या स्यादित्येवम् विरामो न स्यात् इति **प्राप्ता** अनवस्था। संख्यायां संख्या नास्त्येव। अतो नानवस्था। तर्हि तत्र एकत्वं नाम किमिति चेत्, बुद्धिविशेषविषयत्वमेवेति **व्यवहृतिनियतिस्थापनम्**=व्यवहारव्यवस्थाकल्पनम् **तुल्यचर्चम्**=समानयोगक्षेमवत्, अन्यत्राप्यद्रव्येषु एवमेव कल्पनात्। तस्मात् अत्रापि 'एकं रूपम्' इत्यादावपि **काणादक्लृप्तिः**=काणादसंमतव्यवस्थाकल्पनमेव **गुरुमतकथकैः**=

**[परिमाणस्वरूपम्]**

**405. देशाधिक्यादिसिद्धावुपधिभिरिह तद्युक्तसंयोगभेदात्**
**देशव्याप्तिप्रभेदः परिमितिरिति चेन्नोपधीनां मितत्वात्।**
**देशैस्तन्न्यूनतादौ प्रसजति हि मिथस्संश्रयः; तत् स्वतस्सा**
**मन्तव्या क्वापि; राशिप्रभृतिषु परं देशसंबन्धभेदः ।। ४५ ।।**

---

गुरुमतस्थविचारवादिभिरपि सोढुम् युक्तम्। तथा च 'एकं रूपम्' इति प्रतीतिः आधारगतैकत्वविषयिणीति कल्पनैव युक्तेति॥

'पदार्थ'पदप्रयोगस्य **वैशेषिकसूत्रे** दर्शनात् पदानां द्रव्यवाचकगुणवाचकक्रियावाचकजातिवाचक-भेदेन चतुर्विधत्वात्, तेषामर्था अपि चतुर्विधाः प्रथमं भवन्ति। एवं भेदस्य विशेषाख्यपदार्थमूलकत्वात् विशेषाख्यपदार्थः सिद्ध्यति। भेदे सिद्धे संबन्धस्यावश्यकत्वात् समवायोऽप्यावश्यकः। तथा च व्यवहारसिद्धाः पदार्थाः चत्वारः, शास्त्रसिद्धौ द्वावित्याहत्य पदार्थाः षडेव मूलतः। अभावस्तु न पदार्थः, 'अभाव'पदस्य समस्तत्वात्, नञ्समासः खलु 'न भावः' इति। अतः अभावः न पदार्थः, किन्तु वाक्यार्थः, अर्थसमाजरूपः इति पदार्थाष्षडेवेति साधीयान् क्रमः। इतरत्सर्वमनन्तरकालिकमर्यादातिक्रमणमेवेत्याद्यन्यत्र विस्तरेण द्रष्टव्यम्॥ ४४ ॥

क्रमप्राप्तं परिमाणं परीक्षयति—**देशे**त्यादि। परिमाणं नाम वस्तुनः देशव्याप्तिः। घटः यावन्तमाकाशदेशं व्याप्नोति, मठः तदपेक्षयाधिकमाकाशदेशं व्याप्नोति। अतो घटापेक्षया मठो महा-नित्युच्यते। माषसर्षपादिः न्यूनं देशं व्याप्नोति। अतस्सः अल्प इत्युच्यते। एवञ्च—**उपधिभिः**= परिमाणोत्पत्त्युपाधिभिः **तद्युक्तसंयोगभेदात्**=तादृशोपाधिसम्बद्धाकाशप्रदेशसंयोगविशेषेणैव **देशा-धिक्यादिसिद्धौ**=तत्तद्देशाधिक्यन्यूनत्वयोस्सिद्धौ सत्याम् यः **देशव्याप्तिप्रभेदः**=आकाशदेशव्याप्तिविशेष एव तद्धेतोरेवेत्यादिन्यायेन **इह**=वस्तुषु **परिमितिः**=परिमाणं नाम गुणः, नातिरिक्तः **इति चेत्, न**। कुतः? **उपाधीनाम्**=तत्तद्घटप्रभृतीनामेव **मितत्वात्**=स्वतःपरिमाणविशिष्टत्वात्, चक्षुरादीन्द्रियेण तादृशपरिमाणविशेषस्य तत्र तत्र दर्शनात्, अतिरिक्तं परिमाणमावश्यकम्। **देशैः**=तत्संयुक्ताकाशप्रदेशैः **तन्न्यूनतादौ**=परिमाणतारतम्ये सति **मिथस्संश्रयादिः**=आकारतारतम्यसिद्धौ प्रदेशतारतम्यसिद्धिः, प्रदेश-तारतम्ये सिद्धे आकारतारतम्यसिद्धिरिति अन्योन्याश्रयादिः। आकाशदेशव्याप्त्या घटादेः परिमाणसिद्धिः। घटाद्युपाधिनाऽऽकाशस्य परिच्छेद इति वाऽन्योन्याश्रयः। **ततः**=तस्मात् **सा**=परिमितिः **स्वत** इति मन्तव्या। **परम्**=किन्तु **क्वापि राशिप्रभृतिषु तु**=राशिसेनावनादौ तु कुत्रचित् **देशसंबन्धभेदः**= आकाशदेशसंयोगविशेष एव परिमाणम्। अतिरिक्तावयव्यनङ्गीकारेऽपि, तादृशद्रव्यस्य सेनावनादेश्च व्यवहारे तारतम्यं तत्तद्वस्तुस्वभावाधीनमभ्युपगन्तव्यमिति विवेकः। अतः परिमाणाख्यो गुण आवश्यक इति **वैशेषिकाणां** तदनुयायिनां चाशयः॥ ४५ ॥

**[बौद्धोक्तपरिमाणस्वरूपविमर्शः]**

**406. बौद्धास्तुच्छामणूनामभिदधति परिच्छित्तिमाकाशधातुं**
**वस्तुस्थित्या परिच्छित्त्यभवनवशतः स्यादमीषां विभुत्वम्।**
**'अन्यत्रासत्त्वरूपा परिमितिः' इति हि स्थापितं; सा मृषा चेत्**
**प्राप्तं सर्वत्र सत्त्वं; प्रथमसरगता स्मर्यतां व्योम्नि युक्तिः ॥ ४६ ॥**

**बौद्धाः अणूनां परिच्छित्तिं आकाशधातुम् तुच्छाम् अभिदधति**=बौद्धाः, अणूनां परिमाणम् आकाशधातुरूपत्वात् तुच्छरूपां वदन्ति । आकाशधातुरूपत्वात् तुच्छत्वमिति यदि तर्हि **वस्तुस्थित्या परिच्छित्त्यभवनवशतः**=परिच्छित्त्यभावस्य सिद्ध्या **अमीषाम्**=परमाणूनाम् **विभुत्वं स्यात्**। एतदेवोपपादयति—**परिमितिः**=परिमाणं नाम **अन्यत्रासत्त्वरूपा**=कुत्रचित् सत्त्वे सत्यन्यत्रासत्त्वरूपा **इति हि स्थापितम्**। यथा मूर्तत्वं नाम परिच्छिन्नपरिमाणत्वम्। एतदभावः परिच्छिन्नत्वाभावः। **सा**=परिच्छित्तिः=परिच्छिन्नत्वं **मृषा**=तुच्छम्, **चेत्**, तर्हि **सर्वत्र सत्त्वं स्वतः प्राप्तम्**। 'अतश्चाणूनां विभुत्वप्रसङ्गः । 'आकाशवत्' इति कथनात् **व्योम्नि**=आकाशविषये प्रथमसरगता(जड.46)**युक्तिः**=आकाशविचाररीतिः **स्मर्यताम्**=पुनश्चिन्त्यताम् ॥

वस्तुतस्त्वत्र वक्तव्यं बहु यद्यपि वर्तते । अथापि संग्रहाद्यावत् वक्तुं शक्यं तदुच्यते ॥

वस्तूनां स्वरूपपरिच्छेद एव परिमितिः=परिमाणमित्युच्यते । परितो मितिः परिमितिः । यदा घटादिकं पश्यामः, तदा तं परितः किं पश्यामः? आकाशमेव पश्यामः । अतश्च प्रदेशव्याप्तिरेव परिमाणम्। अनन्तप्रदेशव्याप्त्या आकाशोऽनन्तः अपरिच्छिन्नः। प्रदेशव्याप्तेरियत्ता यदा वक्तुं न शक्यते तदा विभुत्वे पर्यवसानम्। महत्त्वस्य विश्रान्तिः कुत्रचिच्चेत्, अणुत्वस्यापि विश्रान्तिः कुत्रचिदावश्यकी। ततश्च परममहत्त्वम्, परमाणुत्वं चेत्युभयमपि परिच्छेत्तुमशक्यत्वरूपमिति उभयोरप्यवध्योरभावरूपत्वमेव । तयोर्भावरूपत्वमन्तरा बुद्ध्या परिच्छेदोऽपि न कर्तुं शक्यः किलेति चेत्, हन्त!

तदिदं बुद्धिदौर्बल्यं बालानामिव विद्धि भोः! ज्ञानगम्या हि सर्वत्र परिच्छेदविहीनता ॥
अणुत्वं परमं वापि महत्त्वं वापि तादृशम्। दुर्ज्ञेयं सर्वथैव स्यादभावादवधेस्तयोः ॥
वस्तुस्वरूपरूपं स्यात्परिच्छेदविहीनता । अतः स्वयं तु ज्ञातं स्यात् स्वरूपेऽवगते तयोः ॥
भावान्तराभाववादेऽप्येतत्तुल्यं विचिन्त्यताम्। एतदेव ह्यनन्तत्वमपरिच्छित्तिमाह तत् ॥
बौद्धानां तुच्छशब्दोऽपि वस्तुतो गहनो मतः । नैवार्थः शशशृङ्गादितुल्यः स इति बुद्ध्यताम्॥
**नासदासीयसूक्ते** हि तुच्छशब्दः प्रदृश्यते । तत्र तस्य च कोऽर्थःस्यादिति गाढं विचिन्त्यताम् ॥
**श्रीहयग्रीवदेवस्य** करुणामृतवर्षणात्। आचार्यसार्वभौमोऽयमखिलं वेत्ति पश्यत ॥
ज्ञानबुद्ध्योरन्तरं च बहुधा दर्शितं पुरा। बुद्धेः परावधिर्हि स्यात् ज्ञानमित्यवधार्यताम्॥
बुद्धिर्हि संशयसहा ज्ञानं संशयनाशकम्। बुद्धिर्हि बाह्या संप्रोक्ता ज्ञानमत्यन्तमान्तरम्॥

[ब्रह्मपरिणामपरीक्षा]

407. स्थूलाणुह्रस्वदीर्घेतरदुपनिषदि स्थापितं ब्रह्म तस्मिन्
सर्वोत्कृष्टं महत्त्वं श्रुतमपि; तदिह स्थूलताऽन्या निषिद्धा।
अन्ये त्वाहुर्विभूनामपरिमितवचःप्रत्ययान्मित्यभावम्
भावैकात्मन्यभावे परिमितिविरहोऽप्यत्र भावान्तरं स्यात्॥ ४७॥

गतः कालो कलेः कष्टः, प्रकाशोऽप्यचिराद्भवेत्। ज्ञास्यन्ति सत्यं सकलम् सर्वे तत्त्वबुभुत्सवः॥
नष्टः कलियुगो वित्त यस्यान्तर्हृदये हरिः। भवेत् कृतयुगस्तस्य परिपूर्णहितावहः॥ ४६॥

ननु भवतापि विभोः परमात्मनः सर्वविधपरिमाणनिषेधात्, विभुत्वं परिमाणाभाव एवेति कः प्रद्वेषोऽस्मास्वित्याशङ्कां समाधत्ते—**स्थूलेत्यादि**। उपनिषदि **ब्रह्म स्थूलाणुह्रस्वदीर्घेतरत्**=स्थूलादिचतुर्विधपरिमाणवद्भिन्नं **स्थापितम्**। एवं सत्यस्मासु कः प्रद्वेष इत्याशङ्कान्तर्गता। उपनिषत्सु 'अस्थूलमनण्वह्रस्वमदीर्घम्'(बृ.5-8-3) इति परिमाणचतुष्टयमपि ब्रह्मणो निषिध्यते। परिमाणं च अणु महद् ह्रस्वं दीर्घं चेति चतुर्विधं प्रसिद्धम्। 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्या'मिति चतुर्णां निर्देशः। सूत्रे महदित्युक्तमेव उपनिषदि स्थूलपदेनोच्यते। स्थूल बृंहणे इति चुरादिः। बृंहणमेव ब्रह्मपदार्थः। तथा च महत्त्वम्, बृहत्त्वम्, स्थूलत्वमिति पर्यायाः। एवञ्च ब्रह्मणि चतुर्विधपरिमाणमपि निषिध्यते। ब्रह्म न परिमितम्=अपरिमितमिति च संमतम्। 'अनन्तम्' इति ह्युपनिषत्। अतश्च परिमाणशून्यत्वं ब्रह्मणस्सिद्धमेवेति को दोष इति आक्षेपगर्भं वचनम्। समाधानगर्भमुत्तरवाक्यम्—**तस्मिन्नित्यादि**। **तस्मिन्**=ब्रह्मणि **सर्वोत्कृष्टं महत्त्वमपि**=परममहत्त्वमपि **श्रुतम्** 'महतो महीयान्' इति। **तत्**=तस्मात् **इह**='अस्थूलम्' इत्यत्र **अन्या**=अन्यादृशी स्थूलता निषिद्धा, न तु परिमाणसामान्यं निषिद्धम्, 'महीयान्' इत्येव श्रवणात्। 'नित्यं विभुम्' (मुं.1-1-6) इत्यपि श्रवणात्। अतो ब्रह्म न परिमाणशून्यम् इत्येकः पक्षः॥

अत्रैव पक्षान्तरमाह—**अन्ये त्वित्यादि**। **अन्ये तु विभूनाम्**=विभुपदार्थानाम् **अपरिमितवचःप्रत्ययात्**='अनन्तम्' इत्यादिना परिच्छेदाभावबोधकवचनप्रामाण्यात् **मित्यभावम्**=परिमाणाभावं ब्रह्मण आहुः। **अनन्तम्**=अपरिच्छिन्नम्, देशतः, कालतः, स्वरूपतश्च परिच्छेदशून्यमिति खल्वर्थः। परिमाणपदं हि परिमितिमभिधत्ते। लोके हि परिमितमिति पदम् अल्पदेशव्याप्तिमभिधत्ते। अतः कालतः परिच्छेदाभावो नित्यत्वरूपश्चेत् देशतः परिच्छेदाभावः विभुत्वम्। अतः ब्रह्मणः परिमाणं नास्त्येव इत्याहुः॥

परं त्वेते न जानन्ति त्वभावस्य निजां स्थितिम्। अत एवं हि मन्यन्ते विकल्पे शब्दजे स्थिताः॥
गतश्लोकस्य टीकायामन्ते श्लोकैश्च विस्तृतम्। अत्राप्यधीयतां गाढं सर्वसंशयनाशकम्॥

परं तु—**अभावे**=अभावपदार्थे **भावैकात्मनि**=भावमात्रस्वरूपे सति **अत्र**=ब्रह्मणि **परिमिति-विरहोऽपि**=परिमाणाभावोऽपि **भावान्तरम्**=ब्रह्मस्वरूपरूपमेव **स्यात्**। अतो नास्ति महानपराधः॥

कियत् क्लिश्यन्त्यमी विप्राः हन्त! हैतुकभर्त्सिताः। यदि न स्यात्परिमितिः को भेदः शशशृङ्गतः?॥

**[विभुपरिमाणसाधनम्]**

**408. नात्यन्ताणोर्महत्ताऽस्त्यवयविनि हते मध्यमं क्वास्तु मानं**
**तद्धेतुष्वेव तद्धीरपि तव घटते लाघवोत्कण्ठितस्य।**
**एवं त्यक्ते महत्त्वे परममहदपि त्याज्यमेवेति चेन्न**
**त्यागाभावात्; तदिष्टादधिकमनधिकं वाऽस्तु न क्वापि दोषः ॥ ४८ ॥**

श्रुत्वा प्रश्नमिमं स्तब्धान् मुग्धान् सान्त्वयितुं जनान्। आचार्या अपि तत्त्वज्ञाः प्राहुस्तत्सदृशं वचः॥
परमाणोर्विभोर्वापि परिमाणं यदुच्यते। ज्ञानैकगम्यं; दुर्ज्ञेयं बुद्ध्या नूनं सदैव हि॥
सुखं जानन्ति दुःखं वा किं वा मानं तयोर्वद। अथापि ज्ञायते सर्वैः कथं न्विति विचिन्त्यताम्॥
शब्दमात्रेण संतुष्टिः स्यादुत्तानधियां नृणाम्। सन्तोष्टव्यं च तत्रैव तादृशैर्बुद्धिजीविभिः॥
वैदेह्यपहृता हन्त! रावणेन दुरात्मना। श्रुत्वेमं कथमेतत्स्यात् सती सा निर्दहेत्तु तम्॥
एवं स्तब्धं जनं मुग्धमाश्वासयति मर्मवित्। सत्यसीता नापहृता मायासीता हृता तदा॥
इति श्रुत्वा समाश्वस्तो जनो निर्याति निर्भरः। इतोऽप्यस्ति महत्कष्टं तत्त्वशास्त्रेष्वनेकधा॥
गुरोश्शापस्तु शिष्यः स्यात् भक्तो भगवतस्तथा। धर्मसंकटहेतुत्वादिति सत्यं वचस्सदा॥
कालक्षेपाय किञ्चित्तु शुश्रूषन्ते जना बुधान्। न बुद्धिभेदं जनयेदिति किञ्चिद्वदेच्च सः॥
किन्तु श्रोतुश्च वक्तुश्च भेदो न स्याद्यदा तदा। का कथा स्यात्? भवेन्नूनमज्ञानस्य विवर्धनम्॥
शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम्। शास्त्रज्ञानमतस्त्यक्त्वा भगवच्चिन्तनं वरम्॥
एतद्वा सुलभं किन्नु? सर्वान् रक्षतु नो हरिः। प्रपत्तेस्सदृशो मार्गः न ह्यन्योऽस्ति शरीरिणाम्॥
ज्ञातुं शक्या प्रपत्तिर्वा किं न्वहंकारपीडितैः। कियत् कष्टं नराणां हि दीनानां चिन्त्यतां मुहुः॥
दीनवत्सल! दीनानामस्माकं का गतिर्वद। नान्या गतिरिहास्माकं गतिं कल्पय नः, प्रभो! ॥ ४७ ॥

ननु महत्परिमाणमेव भवन्मते दुर्वचम्? परममहत्परिमाणं कुत्रास्तीत्याशङ्क्य समाधत्ते—**नात्यन्ते** त्यादि। अणु महत् इति द्वयं परस्परसापेक्षं परिमाणद्वयम्। एवं सति—**अत्यन्ताणोः**=अन्त्यावयवभूतस्य परमाणोः, स यः कोऽपि भवतु, तत्र तु **महत्ता**=महत्परिमाणम् **नास्ति,** अत्यन्ताणुत्वादेव। अवयव्यारब्धेऽवयविनि महत्त्वं स्यात्। परं तु **अवयविनि**=अवयवातिरिक्ते अवयविनि **हते**=निरस्ते सति **मध्यमं मानम्**=अणुत्वापेक्षयाधिकत्वात्, विभुत्वापेक्षयाल्पत्वात् मध्यमपरिमाणमपि **क्व**=कुत्र **अस्तु**। **अस्ति किल** लोके अणु, अणुतरम्, अणुतमम् इति, एवम्—महत्, महत्तरम्, महत्तममिति। अतः मध्ये यद्वर्तते, तदेव मध्यमपरिमाणम्—इति चेत्, 'तद्धेतोरेव तद्धीः' इति न्यायमनुसरतः **लाघवोत्कण्ठितस्य**=सर्वत्र लाघवान्वेषणमात्रपरायणस्य **तव तद्धेतुष्वेव**=मध्यमत्वहेतुष्वेवावयवसंयोगविशेषेषु **तद्धीः**=मध्यमत्वधीः **घटते**। अवयवसंयोगास्तु गुणाः, तेषु परिमाणं न स्यात्, अनवस्थाप्रसङ्गात्। अतो महत्परिमाणं कुत्रास्ति? **एवम् महत्त्वे**=महत्परिमाणे **त्यक्ते** सति, तदपेक्षत्वात् परममहत्त्वमपि त्याज्यमेव। एवं सति तच्चर्चा **वन्ध्यासुतनामकरणायिता**। **इति चेत्—न**। कुतः? **त्यागाभावात्**=कस्यापि त्यागाभावात्। कथम्?

[परिमाणतत्त्वमस्त्येव]

409. **द्रव्यं कृत्स्नं स्वभावात् परिमितिरहितं व्यापकैकत्वयुक्तेः**
**औपाधिक्यंशक्लृप्तिर्घटगगननयात् स्यादवस्था ह्युपाधिः ।**
**स्वाभावैर्वेष्टितत्वं घटत इह घटाद्याकृतौ द्रव्यधर्मे**
**पार्श्वोक्तिस्तावता स्यादिति न सदवधेरन्यथाऽप्यत्र सिद्धेः ॥ ४९ ॥**

**तदिष्टात्**=लोकायततार्किकेष्टात् **अधिकम्**=महत्त्वादिकम् अतिरिक्तं **वा अस्तु, अनधिकम्**=अनतिरिक्तं **वा अस्तु! क्वापि**=कुत्रापि पक्षे दोषो न। व्यवहारस्य दुस्त्यजत्वात्, निर्विषयज्ञानाभावाच्च॥

पश्यन्तु हेतुवादानां संप्राप्तं कीदृशं फलम्। हैतुकानां तु बौद्धानां वाक्यमेतत्समीक्ष्यताम्॥
'बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते'। 'यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा'॥
एतस्यामेव कक्ष्यायां शून्यवादोऽवतारितः। बुद्धेस्सीमान्त एवास्ति परं सत्यमितीर्यते॥
'परश्शतपरिक्षोदात् परस्तादपि वादिभिः। उपलंभबले स्थेयम्' इत्याचार्यवचः स्मर॥
लोकानुभवमूलत्वात्तल्लोकायतमुच्यते। व्यवहारे **न्यायनयस्सर्वेषां** क्षेमदो भवेत्॥
पारमार्थिकमार्गे तु वेदान्तः क्षेमदो मतः। द्वयमेव च पर्याप्तं कालक्षेपाय धीमताम्॥
सांकर्यं नैव कर्तव्यं कदाचिदपि पण्डितैः। पारमार्थिकमार्गस्थैः ख्यातिलाभादिदूरगैः॥
व्यवहारे **भट्टनय** इत्यादीनां तु कल्पना। स्यादवैज्ञानिकी नूनम् नर्षिः **भट्टकुमारिलः**॥
'अज्ञेभ्यो ग्रन्थिनः श्रेष्ठाः ग्रन्थिभ्यो धारिणो वराः। धारिभ्यो ज्ञानिनः श्रेष्ठाः ज्ञानिभ्यो व्यवसायिनः॥'
प्रथमे पर्वणि स्थित्वा मन्यते यो विमूढधीः। साधितं सर्वमेवेति का गतिस्तस्य चिन्त्यताम्॥ ४८॥

परिमाणमधिकं वास्तु, अनधिकं वास्तु। अतिरिक्तानतिरिक्तत्वविचारोऽन्यः। परिमाणं तु वर्तत एवेत्याक्षिप्य समाधत्ते—**द्रव्यमिति। व्यापकैकत्वयुक्तेः**=व्यापके प्रकृतितत्त्वे एकस्मिन् एकत्वं विभुत्वं च वर्तते। **इतरत्**=कृत्स्नं द्रव्यं **स्वभावात्**=स्वत एव **परिमितिरहितम्**=इतरा संख्या वा, परिमाणं वा वस्तुतो नास्त्येव। व्यवहारस्तर्हि कथम्? इत्यत्र—**अंशक्लृप्तिः**=अल्पपरिमाणकल्पना **औपाधिकी**। उपाधिः कः? इत्यत्र **घटगगननयात्**=घटाकाशमहाकाशन्यायात् **अवस्था हि**=प्रकृतेरवस्था हि **उपाधिः स्यात्**। आकाशस्य घटमठाद्युपाधिवशात् घटाकाशः अल्पः, मठाकाशस्तु महानितिवत् अल्पत्वमहत्त्वादिकमौपाधिकम्, स्वतः न किञ्चिदपि परिमाणं वर्तते। आकाशे अल्पत्वमहत्त्वव्यवहारयोः घटमठादिरूपोपाधिः कारणम्। घटे अल्पत्वम्, मठे महत्त्वं च कथमागतम्? स्वतश्चेदात्माश्रयः। कथं तत्राल्पत्वमहत्त्वबुद्धिरित्यत्र—**स्वाभावैरित्यादि। इह द्रव्यधर्मे**=प्रकृतेरेकस्यैव द्रव्यस्य धर्मः घटत्वाद्याकृतिः, तादृशे **घटत्वाद्याकृतौ स्वाभावैर्वेष्टितत्वं घटते**=घटस्य बहिः घटाभावो वर्तते। एवञ्च घटस्य षड्दिक्ष्वपि घटाभावो वर्तते तेन वेष्टितो घटः। एवं मठोऽपि तदभावैः वेष्टितः=आवृतः। एवञ्च घटाभावव्याप्त्यपेक्षया मठाभावव्याप्तिः न्यूना, घटबाह्यदेशापेक्षया मठबाह्यदेशस्य न्यूनत्वात्। घटाभावदेशस्याधिक्यात् घटः अल्पः दृश्यते। तथा,

[अणुपरिमाणपरीक्षा]

410. **अव्यक्ते स्यादणुत्वप्रभृतिपरिणतिः स्तम्भकुम्भादिनीत्या**
**नाणुत्वं पूर्वसिद्धं; नरमृगरचनाद्यप्यवस्थाक्रमेण।**
**इत्युक्तं सांख्यशैवप्रभृतिसमयिभिः; तत् तथैवास्तु, मा वा**
**नित्याणौ जीवतत्त्वे न कथमपि भवेत् अण्ववस्थाप्रसूतिः ॥ ५० ॥**

मठाभावदेशस्य तदपेक्षया न्यूनत्वात् मठः महान् दृश्यते, तथा उच्यते च। एवं घटाभावस्य मठाभावस्य च घटपटादिभ्यो बहिर्व्याप्यवर्तमानत्वात् घटस्य पूर्वपार्श्वः, पश्चिमपार्श्वः इति, मठेऽपि तथैव पार्श्वोक्तिः। अतः **तावता**=घटाभावदृष्ट्या **पार्श्वोक्तिः**=घटस्य बहिः पार्श्वे घटाभावात् तथोक्तिः **स्यात्**। इदमेवाल्पत्वं महत्त्वं वा। एवञ्च प्रकृतेरेकस्या एव नानावस्थाप्राप्त्या, तादृशावस्थौपाधिकः अल्पत्वमहत्त्वव्यवहार इति सर्वमौपाधिकमेव। **इति यदि**=इति चेत्, **न**। कुतः? **अन्यथापि**=प्रकारान्तरेणापि **अत्र घटादौ सदवधेः**=सद्रूपावधेः **सिद्धेः**=निश्चयात्। 'घटाद्बहिः' इति यदि वक्तव्यम्, तर्हि घटस्याकारदर्शनमावश्यकम्। तथा च प्रथमं घटाकारदर्शनम्। अनन्तरमेव तद्बहिः घटाभावदर्शनमिति घटदर्शनस्य प्रथमं सिद्धत्वात्, तत्र एकत्वसंख्याया, परिमाणस्य च दर्शनं सिद्धमेवेति सर्वमौपाधिकमिति न युक्तम्, तत्तत्कक्ष्यायां तत्तत् स्वाभाविकमेव ॥ ४९ ॥

मध्यमपरिमाणमहत्परिमाणे विचार्य, अणुपरिमाणं विचारयति—**अव्यक्त** इत्यादि। **अव्यक्ते**=प्रकृतितत्त्वे **स्तम्भकुम्भादिनीत्या**=स्तम्भकुम्भादिपरिमाणन्यायेन **अणुत्वप्रभृतिपरिणतिः**=अणुपरिमाणादिपरिणामः **स्यात्**। यथा **नरमृगरचनाद्यपि**=एकस्यैव जीवस्य नानाविधकर्मवशात् नरत्वमृगत्वादिकम् अवस्थाक्रमेण भवति, तथैव। ततश्च **अणुत्वम् न पूर्वसिद्धम्**=न अनादिसिद्धम्। तथा च प्रकृतेर्विभुत्वात् विभुपरिमाणमेकमेव नित्यम्, इतरत्सर्वमनित्यमेव। इति **सांख्यशैवप्रभृतिसमयिभिः**=सांख्यशैवादिमतीयैः उक्तम्। **तत् तथैव अस्तु मा वा**। परन्तु **नित्याणौ जीवतत्त्वे कथमपि**=केनापि प्रकारेण **अण्ववस्थाप्रसूतिः**=अणुत्वावस्थाया उत्पत्तिः **न भवेत्**। अन्यत्र परमाण्वादेः प्रकृत्यवस्थाविशेषरूपत्वात् अणुत्वस्यानित्यत्वेऽपि, जीवगतमणुत्वं तु नागन्तुकम्, नित्यमेव, जीवस्याप्राकृतत्वात्॥

एकस्मादेवात्मतत्त्वात् चेतनाचेतनात्मकम्। जगत्सर्वं समुत्पन्नमित्याह श्रुतिभारती॥
आत्मान्यत्सकलं तस्मात् नूनमाद्यन्तवद्भवेत्। स्वरूपपरिणामोऽयं **प्रपञ्चेनोप**वर्णितम्॥
स्वरूपपरिमाणे तु ब्रह्म स्यान्नश्वरं ध्रुवम्। इति तद्दूषितं बौद्धैः हेतुवादैरनेकधा॥
प्रकृतेः परिणामत्वात् परमाणोरनित्यता। युज्यते, न तु जीवानां कृतनाशादिसंभवात्॥

श्रुतिरपि 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (कठ.2-5-13, श्वे.6-13) इति जीवानां नित्यत्वं कण्ठत एव वक्ति। अतश्च जीवगतमणुत्वं नित्यमेव॥ वस्तुतस्तु—

अणुत्वे च विभुत्वे च रहस्यमति वर्तते। सुसूक्ष्मं चिन्त्यतां गाढं भौतिकाः परमाणवः॥

[पृथक्त्वगुणविमर्शः]

**411. चर्चा तुल्यैव भिन्नं पृथगितरदिति प्रत्यये; तत् पृथक्त्वं**
**भेदाख्यो नीलपीतप्रभृतिरभिमतः; किं मुधाऽन्यस्य क्लृप्तिः।**
**नाप्यज्ञातावधीनां पृथगिदमिति धीः नापि भिन्नादिवाचां**
**साकं क्वापि प्रयोगो; न च पृथगिति धीर्द्रव्य एवेति सिद्धम्॥ ५१॥**

आत्मा त्वभौतिकः, तस्मात् उभयोरेकरूपता। कथं भवेत् अतो चिन्त्यम्, त्यक्त्वा भौतिकरूपणम्॥
चर्चातीतप्रमेयेषु दिव्येष्वेतादृशेषु हि। न मानं भौतिकी प्रज्ञा, ज्ञानं दिव्यं तथा भवेत्॥
अतोऽणूनां विभूनां च परिमाणविचारणा। त्याज्यात्रैवेति युक्तं स्यात्, पश्यामस्समयान्तरे॥ ५०॥

एवं परिमाणविचारं समाप्य, अनन्तरप्राप्तं पृथक्त्वं विमृशति—**चर्चे**त्यादि। 'घटः पटो न' इत्यत्रान्योन्याभावः=परस्परतादात्म्याभावो भासते। 'अब्राह्मणः' इत्यादौ नञ्तत्पुरुषे तु ब्राह्मणेतरः ब्राह्मणसदृशः अर्थः। 'अयमस्मात्पृथक्' इत्यत्र तु पृथक्त्वं भासते। एवञ्च त्रिविधव्यवहारस्य परस्परं विलक्षणत्वात्, अन्योन्याभावोऽन्यः, इतरत्वमन्यत्, पृथक्त्वं चान्यत्। 'घटः पटो न' इत्यन्योन्याभावः। घटयोरुभयोर्न तथा। 'घटः घटो न' इति न हि भवति। व्यक्तिभेदः, न जातिभेदोऽत्र। व्यक्तिभेदे कारणं पृथक्त्वम् इति भेदव्यवहारेऽपि तारतम्यमस्तीति पृथक्त्वमतिरिक्तमिति **वैशेषिकाः**। **भिन्नम्, इतरत् पृथक्,** इति त्रिविधे **प्रत्यये चर्चा**=विचारः **तुल्यैव**। **तत्**=तस्मात् **पृथक्त्वम्**=पृथक्त्वाख्यो गुणः **नीलपीतप्रभृतिः**=नीलपीतादिरूपः **भेदाख्यः** अन्योन्याभाव एव अभिमतः। एवं सति **मुधा**=व्यर्थतया **अन्यस्य**=अतिरिक्तस्य **क्लृप्तिः किम्**=किमर्था? 'घटाद्भिन्नः पटः' 'घटादितरः पटः' 'घटात् पटः पृथक्' इति त्रिविधोऽप्यनुभव एकरूप एव। एवं सति पृथक्त्वं किमर्थमतिरिक्तो गुणः? ननु पृथक्त्वं भावरूपम्, भेदस्तु घटपटादावन्योन्याभावरूप इति महदन्तरमनयोरित्यत्र—**अज्ञातावधीनाम्**=प्रतियोगिज्ञानरहितानाम्, अभावस्यावधिः प्रतियोगी, **इदम् पृथक्**='इदमस्मात् पृथक्' **इति धीः नापि**=नैव। 'पृथक्' इत्युक्ते, 'कस्मात्?' इति प्रश्नः नियतः। 'भिन्नः' इत्युक्तेऽपि 'कस्मात्' इति प्रश्नः नियतः। अत उभयमप्येकरूपमेव। यद्युभयोर्भेदः, तर्हि 'घटात् पटः भिन्नः पृथक् च' इति वा। 'घटः पटात् पृथक् भिन्नश्च' इति वा कश्चिद्वदेत्। अनेनार्थैक्यं सिद्धम्। एवं **भिन्नादिवाचाम्**=भेदवाचिपदानाम् **साकं प्रयोगः**=सहप्रयोगः **क्वापि न**। संपूर्णार्थैक्ये हि 'घटः कलशः' इति सहप्रयोगो न भवति। तद्वदत्रादर्शनात् अर्थभेदो नास्तीति ज्ञायते। ननु पृथक्त्वं न भेदपर्यायः, किन्तु भेदे हेतुः। गुणक्रियादीनां भेदः किल तदाश्रयद्रव्यभेदादेव ज्ञेयः। अतश्च पृथक्त्वं द्रव्यमात्रवृत्तीति चेत्तत्राह—**न चे**त्यादि। **पृथगिति धीः**=ज्ञानम् **द्रव्य एव इति न च सिद्धम्**=गुणादावपि पृथग्व्यहारदर्शनात्। नीलघटद्वयवृत्तिनीलरूपयोर्भेदो यद्यप्याश्रयघटयोर्भेदादेव ज्ञेयः। न ह्येवं नीलपीतयोर्भेद आश्रयभेदादेव ज्ञायते, स्वयमेव तयोर्भेदस्य प्रत्यक्षत एवावगतेः। अन्यथा हि घटयोर्द्वयोर्भेदः कथमिति प्रश्ने निरुत्तरता स्यात्। अतः भेदातिरिक्तं पृथक्त्वं नास्त्येव। अधिकं विशेषविचारे (श्लो.123-125) भविष्यति॥ ५१॥

[संयोगोऽतिरिक्तः]

412. **तन्त्वादीनां पटादिव्यवहृतिनियता दृश्यते काऽप्यवस्था**
**सा चेद् द्रव्यस्वरूपं, भवति विफलता कारकव्यापृतीनाम्।**
**तत्रासंयुक्तबुद्धिः कथमिव च भवेत् स्थैर्यवादस्थितानां**
**नैरन्तर्यं च भावो मम, तदघटितं मध्यमेवान्तरं च ।। ५२ ।।**

क्रमप्राप्तं संयोगं निरूपयिष्यन्, तदतिरिक्तमनङ्गीकुर्वतो बौद्धस्याशयं विमृशति—**तन्त्वादीना**-मित्यादि । संयोगो नातिरिक्तः, किन्तु द्रव्यस्वरूपमेवेति बौद्धाः । यदि संयोगोऽतिरिक्तो नाङ्गीक्रियते, पटघटाद्यर्था एव न भवेरन् । तन्तूनां परस्परसंयोगात्खलु पटाद्युत्पत्तिः । अतः=**तन्त्वादीनाम्** अवयवानाम् **पटादिव्यवहृतिनियता**=पटादिशब्दप्रयोगव्यवहारेषु नियमेन विषयतया प्रतीयमाना **कापि**=काचित् **अवस्था दृश्यते**=प्रत्यक्षसिद्धा वर्तते । यद्यपि सिद्धान्तेऽवयवातिरिक्तोऽवयवी निरस्तः पूर्वमेव(जड.20-22) । अथाप्यवयवा एव नावयवी, तन्तुष्वपि पटबुद्धिप्रसङ्गात् । नापि तन्तूनां संयोगमात्रमपि पटः, तन्तूनां पिण्डेष्वपि परस्परसंयोगसत्त्वेऽपि पटबुद्धेरभावात् । किन्तु वैशेषिकसंमतपरस्परविलक्षणतन्तुसंयोगे सत्येव पटबुद्धिः । अतस्संयोगाख्यातिरिक्तगुणस्यानङ्गीकारे पटबुद्धिरेव निर्विषया स्यात् । अतोऽवस्थान्तरं प्राप्ता-स्तन्तवः पटः । अवस्था च तन्तुषु असमवायिकारणतया वैशेषिकाभिमतस्संयोग एव । अतस्संयोग आवश्यकः । ननु तन्तुषु सुसूक्ष्मदर्शनेऽपि तन्त्वपेक्षयातिरिक्तं किञ्चिन्न दृश्यत एव । तयोर्मध्येऽन्तरालं तु न दृश्यते । अतोऽन्तरालाभाव एव संयोगः । घटे कपालद्वयसंयोगस्थले इदमितोऽपि स्पष्टम् । प्रत्येकं स्थितयोः कपालयोस्संयोगे कृते, मध्येऽवकाशाभावापेक्षयातिरिक्तः को वा पदार्थो दृश्यते? अतोऽन्तरालाभाव एव संयोगः । अभावश्च वस्तुस्वरूपादनतिरिक्त एवेति, नातिरिक्तः संयोग इति चेत्—**सा संयुक्तावस्था द्रव्यस्वरूपं चेत्, कारकव्यापृतीनाम्**=कुविन्दव्यापाराणाम् **विफलता भवति,** तन्तूनां पूर्वमेव सत्त्वात्, कुविन्दादिना किं कर्तव्यम् ॥

ननु असंयुक्तद्रव्यस्वरूपमेवान्यत्, संयुक्तद्रव्यस्वरूपमेवान्यदिति न तयोरविशेषप्रसङ्गः, गुणगुणिनोर-भेदात्, सर्वेषां क्षणिकत्वाच्चेत्यत्राह—**तत्रे**त्यादि । **स्थैर्यवादस्थितानां**=क्षणिकवादखण्डनपूर्वकं (जड.25-30) वस्तुस्थैर्यं साधितवतां सिद्धान्तिनां **तत्र**=तन्तुषु **असंयुक्तत्वबुद्धिः**=पूर्वमसंयुक्तास्तन्तवोऽन्ये, अनन्तरं च संयुक्तास्तन्तवोऽन्ये इति बुद्धिः **कथमिव च भवेत्?** अतः पूर्वं संयोगशून्यास्तन्तव आसन्, अनन्तरं कारकव्यापारवशात् तन्तुसंयोगो जात इति वक्तव्यमिति संयोगो द्रव्यस्वरूपं न स्यात् । ननु तन्तवः पूर्वं परस्परमसंयुक्ताः अनन्तरं संयुक्ता अभूवन्नित्यत्र प्रत्यक्षेण किमीक्ष्यत इति वक्तव्यम् । असंयुक्तावस्थास्तन्तवः विरलाः मध्ये अन्तरालयुक्ता आसन् । अनन्तरं संयुक्ततावस्थायामन्तरालं नष्टमिति खलु वक्तव्यम् । इदं कपालद्वयसंयोगस्थलेऽतिस्पष्टम् । एवञ्च संयोगो नाम अन्तरालाभावः—**नैरन्तर्यमेव**। तदपेक्षयातिरिक्तः न कोऽपि पदार्थो दृश्यत इति चेत्, तत्राह—**नैरन्तर्यं च भावः**=नैरन्तर्यम्=अन्तरालाभवः **मम** मते **भावः**=भावरूप एव । अभावस्यातिरिक्तत्वाभावात्, तुच्छत्वाभावाच्च । ननु तर्ह्यन्तरालपदार्थः कः?

[सांशावयवविवादविमर्शः]

413. **सर्वं द्रव्यं सभागं; न यदि, कथमुपाध्यन्वयो भागतः स्यात्**
**कात्स्न्येनोपाधियोगे कथमणुविभुनोः सूक्ष्मतादीति जैनाः ।**

यस्याभावो नैरन्तर्यमित्युच्यत इत्यत्र—**अन्तरं च**=अन्तरं नाम **तदघटितम्**=संयोगरहितम् **मध्यमेव**= अवयवयोः मध्यप्रदेश एव । एवञ्चान्तरं नाम मध्यप्रदेशः=अवयवद्वयोर्मध्ये दृश्यमानः आकाशदेशः । नैरन्तर्यं तदभावः । मध्ये आकाशादर्शनम् । स एव संयोगपदार्थः ॥

तिष्ठ तिष्ठ किमुक्त्वा त्वं त्वरया कुत्र गच्छसि? अर्थमन्तरशब्दस्य प्रोच्यान्यत्र तु गम्यताम् ।
यद्यन्तरपदार्थः स्यादभावात्मक एव ते । परस्पराश्रयः स्पष्टः दुर्वारस्तु प्रसज्यते ॥
यदि भावस्तमाख्याहि कीदृशः, दर्शयाथवा । तृतीया तु गतिर्नास्ति ऋते तेऽत्र पलायनात् ॥

किमन्धस्त्वम्? मध्ये आलोकमपि न किं पश्यसि? पश्याम्यत्र । अन्धकारे किं पश्यस्यालोकम्? वस्तुद्वयं स्पृशतोऽन्तरालानुभवो भवत्येवान्धकारेऽपि । तर्ह्याकाश एवास्तु! किमाकाशस्तव स्पार्शनः? अस्तु कामम्, का हानिः? हानिर्न मम, किन्तु 'प्रत्यक्षं व्योम, नीलं नभः' इति वदतस्तवैव हानिः (जड.42)। न च जलसंयुक्तवह्नेः चक्षुषाऽग्रहणेऽपि त्वचा ग्रहणवत् अन्धकारे आकाशस्य ग्रहणमुपपद्यत इति शङ्क्यम्, जलसंयुक्तवह्नेस्त्वचा ग्रहणं तत्रोष्णस्पर्शसत्त्वात् । नैवमाकाशः स्पर्शवान्, येन त्वचा ग्रहणमुपपद्येत ॥

हन्त! वेदान्तिनो ह्येते तार्किकोपरि कोपतः । यत्किञ्चिदपि प्रब्रूयुः तर्कमाश्रित्य केवलम् ॥

भो दुष्टतार्किक! भवतो वान्तरालपदार्थः कः? कं पृच्छसि? किं संयोगनिराकर्तारं सौगतम्, उत संयोगमतिरिक्तं वदन्तं वैशेषिकम्? सौगतस्य तु तत् तुच्छरूपम् । वैशेषिकाणां तु मध्ये पदार्थान्तराभावः। एते तु अतिरिक्ताभाववादिनः । अथवा पूर्वसंयोगज्ञाने, विभागो वाऽन्तरालोऽस्तु । अभावमतिरिक्तमनङ्गीकुर्वतां भवतामेव क्लेशः । अत उच्यतामन्तरालपदार्थः । उच्यते—चाक्षुषस्त्वन्तरालः आलोकादिरेव । स्पार्शनस्तु भिन्नदेशवर्तित्वमेव । घटद्वयमन्धकारे त्वचा प्रत्येकं गृह्णन् हि उभयोर्देशभेदं जानात्येव । अतश्च संयोगाभावः मध्यदेश एव । पूर्वसंयोगमजानतः पुरुषस्य भवतोऽपि न विभागग्रहणसंभवः । हिमवद्विन्ध्ययोर्दूरत्वरूपं देशभेदमेव तयोरन्तरालं वदन्ति मानवाः । अतो नान्तरालाभावमात्रं संयोगः, किन्त्वतिरिक्त एव ॥

ननु भोः! पुनः कं वञ्चयसि? त्वचा तु घटद्वयं ज्ञायते, न तु मध्यदेशः । त्वगिन्द्रियं खलु स्पर्शं गृह्णाति, तदाश्रयं द्रव्यं च । मध्यदेशं कथं गृह्णीयात्? मध्ये यदि संयोगोऽङ्गीक्रियेत, तदा संयोगाभावोऽपि त्वचा गृह्येत । आम्! आम्!! अत एवोच्यते मयापि, संयोग आवश्यक इति ॥

त्यज्यतामीदृशी चर्चा वृथा शब्दविवर्धनी । स्मर नेदं तर्कशास्त्रं किन्त्वध्यात्मविचारणम् ॥ ५२ ॥

संयोगस्यानिवार्यत्वं प्रदर्शितम् । निरवयवेषु संयोगोपपादनं कथम्? तदसंभवस्य पूर्वं(जड.18) प्रदर्शनादिति शङ्कायाम्, तत्र जैनोक्तं समाधानं प्रथममाह—**सर्वं द्रव्यं सभागम्**=अवयव्यपि सांश एव, न

**सामग्रीशक्तिभेदप्रजनितविविधोपाधियोगस्वभावात्**
**औपाधिक्यंशक्लृप्तिः कथमिव न भवेत् द्विष्ठसंबन्धदृष्टेः ॥ ५३ ॥**

**[विभुद्वयसंयोगविमर्शः]**

414. **नैरन्तर्यं विभूनामपि भवति ततोऽन्योन्ययोगोऽपि योग्यः**
**केचित् तं हेत्वभावाज्जहति; विहतिकृन्नित्यधीकल्पने तत् ।**

**यदि**=न चेत्, निरंशेषु द्रव्येषु **भागतः**=एकदेशतः **उपाध्यन्वयः**=उपाधिसंबन्धः **कथं स्यात्?** निरवयवयोः संयोगः किं कात्स्न्र्येन भवति, उतैकदेशेन? कात्स्न्र्येन संयोगे उभयोः परस्परं विलीनत्वापत्त्यान्यतरदेव शिष्येत । एकदेशेन चेत्, निरवयवे एकदेशः कथं वक्तुं शक्यः? उपाधिविशेषसंबन्धादिति चेत्, तस्योपाधेस्संबन्धः कात्स्न्र्येन, उतैकदेशेन? इति विकल्पे, कात्स्न्र्येनासंभवात्, एकदेशस्यापि स्वतोऽसंभवात्, उपाध्यन्तरापेक्षायामनवस्थाप्रसङ्गात्, गत्यन्तराभावाच्च सर्वाणि द्रव्याणि सांशानीति । तदेतदाह— **कात्स्न्र्येने-त्यादि** । **कात्स्न्र्येनोपाधियोगे**=उपाधिसंबन्धे **अणुविभुनोः** द्रव्ययोः **सूक्ष्मतादि**=आदिना विभुत्वग्रहणम्, सूक्ष्मत्वविभुत्वरूपपरिमाणतारतम्यं कथम्? उभयोस्संपूर्णसंयोगे=परिमाणाधिक्यं न स्यात्— इत्यादि पूर्वमेव (जड.18) गतम् । अतः स्वतः सांशान्येव सर्वाणि इति जैनाः । तन्न । कुतः? **द्विष्ठसंबन्धदृष्टेः**=संबन्धस्य द्विनिष्ठत्वदर्शनात् **सामग्रीशक्तिभेदप्रजनितविविधोपाधियोगस्वभावात्**=सामग्रीणां शक्तिविशेषेण उत्पादितानां विविधोपाधिसंबन्धानां स्वभावा यस्य, तादृशात् **औपाधिक्यंशक्लृप्तिः कथमिव न भवेत्?** संयोगस्याव्याप्यवृत्तित्वनियमात् निरंशेष्वपि संयोगः एकदेशेनैव भवेत्, तथैव संयोगस्वरूपस्य दर्शनात् । न हि दृष्टेऽनुपपन्नं किञ्चित् । तथोक्तं पूर्वमेव— 'प्रदेशवर्तिसंयोगाद्याधाराणुविभुक्रमात् । निरंशस्यापि घटते प्रादेशिकविकारिता ॥' इति । अतो निरंशा एवावयविप्रभृतयः ॥ ५३ ॥

नित्ययोस्संयोगे संयोगोऽपि नित्यः स्यात् इत्याक्षेपमिष्टापत्त्या परिहरति— **नैरन्तर्यमित्यादि** । **विभूनामपि** कालेश्वरादिद्रव्याणाम् **नैरन्तर्यम्**=अन्तरालाभावः **भवति** । **ततः**=एवं नैरन्तर्यस्यैव संयोग-रूपत्वात् (श्लो.52) **अन्योन्ययोगोऽपि**=तयोः परस्परसंयोगोऽपि **योग्यः**=अनिवार्य एव । **केचित्**=वैशेषिकाः **हेत्वभावात्**=संयोगहेतुभूतक्रियाया विभुषु असंभवात् **तम्**=विभुद्वयसंयोगम् **जहति**=परित्यजन्ति=नाङ्गी-कुर्वन्ति । **तत्**=एवं हेत्वभावात्, तत्कार्यनिराकरणम् **नित्यधीकल्पने**=ईश्वरस्य नित्यज्ञानादिकल्पने **विहतिकृत्**=व्याहतं भवति । ईश्वरीयं ज्ञानं नित्यमिति तार्किकाः । लोके कुत्रापि नित्यत्वं ज्ञाने न दृश्यते । ईश्वरज्ञानं परं नित्यं कथं भवेदित्याक्षेपे, तदीयज्ञानस्य कारणजन्यत्वाभावात्, इत्युत्तरमुच्यते । ज्ञानं द्विविधम्, नित्यमनित्यं च । अनित्यं कारणजन्यम् । नित्यं कारणाजन्यमितिवत्, संयोगो द्विविधः, नित्यः अनित्यश्च । नित्यः कारणाजन्य इत्यप्युच्यताम् । नो चेत् ईश्वरज्ञानमपि नित्यं न स्यात् । ननु ईश्वरज्ञानस्य नित्यत्वं धर्मिग्राहकप्रमाणसिद्धम्, न युक्तिसिद्धम् । अनुमानेन जगत्कारणतया सिद्ध्यन्नीश्वरः, तदनुगुणज्ञानशक्तिमानेवानु-मानेन सिद्ध्यतीति नोक्तापत्तिः इति चेत्, तर्हि वयमपि विभुद्वयसंयोगमनुमानेन साधयामः । 'विभुद्वयं संयुक्तम्, निरन्तरत्वात्, यथा संयुक्तौ घटौ' इति चेत्, उक्तानुमाने क्रियाजन्यत्वमुपाधिः । यत्र यत्र संयुक्तत्वम्,

स्याद्वा तत्सिद्ध्यसिद्ध्योरनुमितिरपटुर्बाधहानेर्विपक्षे
शास्त्रैरन्यत् विभु स्यात् परधृतमपृथक्सिद्धिरेवं ततोऽस्य ॥ ५४ ॥

**[संयोगवैचित्र्यम्]**

415. संयोगात् विश्वसृष्टिः प्रकृतिपुरुषयोः; तादृशैस्तद्विशेषैः
ब्रह्मादिस्तम्बनिष्ठा जगति विषमता; यन्त्रभेदादयश्च ।
अक्षाणामर्थयोगात् विविधमतिरबाध्यन्वयादङ्कुरादिः
शुद्धाशुद्धादियोगान्नियतमपि फलं; न्यायतत्त्वेऽस्य घोषः ॥ ५५ ॥

---

तत्र क्रियाजन्यत्वम् इति साध्यव्यापकत्वम् । यत्र यत्र निरन्तरत्वम्, तत्र न क्रियाजन्यत्वम्, यथा पक्षे । विभौ क्रियाया न संभवः, चलनासंभवात्, मूर्तेष्वेव चलनसंभवः । अतश्च सोपाधिकत्वादनुमानेनापि न विभुद्वय-संयोगसिद्धिः । प्रत्यक्षत्वं तु विभूनां नास्तीति तयोस्संयोगस्य सत्त्वे प्रमाणाभाव एवेति चेत्, तत्राह— **स्याद्वेत्यादि । अनुमितिः**=विभुद्वयसंयोगसाधकानुमितिः **तत्सिद्ध्यसिद्ध्योः**=विभुद्वयसंयोगसिद्ध्यसिद्ध्योः **विपक्षे**=‘हेतुरस्तु साध्यं मास्तु’ इत्यप्रयोजकशङ्कायाम् **बाधहानेः**=बाधकतर्काभावात् **अपटुः**=अप्रयोजकः **स्याद्वा**, तथा चोक्तानुमानेन मास्तु विभुद्वयसंयोगसिद्धिः । अथापि— **शास्त्रैः**=‘सर्वाधारं धाम विष्णुसंज्ञम्’ इत्यादिभगवच्छास्त्रैः **अन्यत्**=परमात्मव्यतिरिक्तम् **विभु**=विभुद्रव्यम् **परधृतम्**=परमात्मना धृतं **स्यात्**= सिद्ध्येत् । **ततः** एतच्छास्त्रात् **अस्य**=विभोः कालादेः एवम् **अपृथक्सिद्धिः** आवश्यकीति नैरन्तर्यं सिद्धमिति श्रुतिसिद्धहेतौ अप्रयोजकत्वशङ्का न कार्येति विभुद्वयसंयोगसिद्धिः ॥

**इदन्त्वत्रावधेयम्**—एकत्रावस्थानमात्रादुभयोर्यदि संबन्ध आवश्यकः, तर्हि एकस्मिन् फलादौ वर्तमानानां रूपरसगन्धस्पर्शादीनां संबन्धः कः? । अत एतादृशस्थलेषु सम्बन्धो वक्तव्य इति यद्याग्रहः, तर्हि स्वरूपमेव संबन्ध इत्युक्त्वा सन्तुष्यताम् । तर्ह्याचार्यैः कथमेवमुक्तमिति चेत्? उक्तमेव बहुवारमुत्तरम्—

गुरोः शापस्तु शिष्यः स्यात् भक्तो भगवतस्तथा । इत्याद्यमत्र स्मर्तव्यम् गाढं चिन्त्यं च सूरिभिः ॥
सर्वं ब्रह्मेति वदतामन्यद्विभु कथं भवेत् । वेदान्तिनां तु नास्त्येव विभुद्वयमिति स्थितिः ।
अतिरिक्तस्तु कालोऽपि नास्तीत्युक्तं सयुक्तिकम् । विभुद्वयश्च संयोगः सिद्धान्ते नास्ति वस्तुतः ॥
श्रद्धाभिवृद्ध्यै शिष्याणामेवं ब्रूयुः कदाचन । शिष्यबुद्धिपरीक्षार्थमथवा ते दयालवः ॥
मृदुमध्यादिभेदेन शिष्याः स्युर्गुरुसन्निधौ । सर्वं सर्वैस्तु न ग्राह्यं सावधाना भवन्तु ते ॥ ५४ ॥

संयोगस्य दुरपह्नवत्वं तस्य सांप्रदायिकत्वं चाह—**संयोगादिति । प्रकृतिपुरुषयोः संयोगात् विश्वसृष्टिः**=जगत्सृष्टिः वर्ण्यते सांख्यैः । सिद्धान्तेऽपि प्रकृतिस्थाने कर्माङ्गीकृतम् । कर्मसंबन्धश्चेतनानां विलक्षणोऽस्त्येव । **जगति ब्रह्मादिस्तम्बनिष्ठा**=चतुर्मुखाद्यारभ्य तृणपर्यन्तं वर्तमाना **विषमता**=वैषम्यम् **तादृशैः**=प्रकृतिपुरुषसंबन्धसदृशैः **तद्विशेषैः**=संबन्धविशेषैः भवति । **यन्त्रभेदादयश्च**=आलानयन्त्र-विशेषादयश्च परस्परचक्रादिसंयोगविशेषादेव भवन्ति । एवम् **अक्षाणाम्**=इन्द्रियाणाम् **अर्थयोगात्**=पदार्थै-

[विभागविमर्शः]

416. संयुक्ते द्रव्ययुग्मे सति समुपनतो यस्तु संयोगनाशः
संग्राह्योऽयं विभागव्यवहृतिविषयः; सोऽपि तद्धेतुतस्स्यात्।
त्वन्निर्दिष्टे विभागे गतवति च सतोः स्यात् विभक्तप्रतीतिः
भूयस्संयोगसिद्धौ; कथमिति तु यथा त्वद्विभागान्तरादौ ॥ ५६ ॥

रसाकं संबन्धात् **विविधमतिः**=परस्परविलक्षणं ज्ञानम् भवति। एवम् **अङ्कुरादिः**=बीजेभ्यः अङ्कुरादीनि **अबाद्यन्वयात्**=जलपृथिव्यादिसंबन्धात् भवति। एवं **शुद्धाशुद्धादियोगात्**=शुद्धानां महात्मनां संबन्धात् अशुद्धानां पातकिनाम् संबन्धाच्च **फलमपि नियतम्**=व्यवस्थितम्, शास्त्रसिद्धम्। ओषधिविशेषयोगात् विचित्रगुणविशेषः, हरिद्राचूर्णसंयोगात् नूतनरक्तवर्णोत्पत्तिः, किण्वादिद्रव्यसंयोगात् अद्भुता मदशक्तिः इत्यादिकं लोकदृष्टम्। **अस्य**=एतादृशस्य संबन्धस्य प्रभावः **न्यायतत्त्वे**=श्रीमन्नाथमुनिविरचिते न्यायतत्त्वाख्ये ग्रन्थे **घोषः** श्रोतव्यः। अतो नैरन्तर्यमात्रं न संयोगः, किन्त्वतिरिक्तो विलक्षण एव सः ॥ ५५ ॥

एवं संयोगं निरूप्य विभागं विमृशति—**संयुक्त** इत्यादि। **द्रव्ययुग्मे**=द्रव्यद्वये संयुक्ते **सति**, अनन्तरम् **समुपनतः**=क्रियावशादागतः **यस्तु संयोगनाशः**=पूर्वस्थितस्य संयोगस्य नाशः, **अयम्**=संयोगनाश एव **विभागव्यवहृतिविषयः**=विभागपदेन व्यवहारस्य विषयः **संग्राह्यः**=अवगम्यः, न त्वतिरिक्तः कश्चिद्विभागो नाम। **सोऽपि**=एतादृशस्संयोगनाशरूपो विभागः **तद्धेतुतः**=संयोगनाशहेतुभूतक्रियया **स्यात्**। क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, तत उत्तर संयोगोत्पत्तिः, ततः क्रियानाशः इति खलु क्रम उच्यते। अत्र क्रियया विभागानन्तरं संयोगनाशः इति कथनापेक्षया, क्रिया, क्रियया पूर्वसंयोगनाशः इत्येव कथ्यताम्, **'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन'** इति न्यायात्। तद्धेतोरेव=विभागहेतुत्वेनाभिमतायाः क्रियाया एव तद्धेतुत्वे=संयोगनाशहेतुत्वे संभवति मध्ये=क्रियासंयोगनाशयोर्मध्ये तेन=अतिरिक्तेन विभागाख्येन गुणेन किं=किं कर्तव्यम्? अतो मास्तु विभागः। ननु संयोगनाश एव यदि विभागः, न त्वतिरिक्तः, तर्हि संयोगस्य नाशो नाम ध्वंसः। ध्वंसश्च नित्यः। एवञ्च ययोस्संयोगनाशो जातः, पुनस्तयोः मेलनेन संयोगे जातेऽपि तयोः विभागोऽपि तत्र स्यात्, संयोगनाशस्य नित्यत्वेन, विभागस्य संयोगध्वंसरूपत्वात्। एवं च संयोगसंयोगनाशरूपविभागयोरेकत्रैकदैव समावेशप्रसंगः। इदमत्यन्तविरुद्धम्। विभागाख्येऽतिरिक्ते गुणे सति तु, विभागस्यानित्यत्वात् पुनस्संयोगसमये पूर्वतनविभागस्य नाशात् पुनस्संयोगकाले न विभागप्रतीतिप्रसङ्गः। अतोऽतिरिक्तो विभाग आवश्यक इति चेत्, तत्राह—**त्वदित्यादि**। **त्वन्निर्दिष्टे**=भवदभिमते **विभागे च गतवति**=ध्वस्ते सति **सतोः**=तयोर्द्रव्ययोः भूयः **संयोगसिद्धौ**= पुनस्संयोगोत्पत्तौ सत्याम् **कथम् विभक्तप्रतीतिः**='इमौ विभक्तौ' इति प्रतीतिः कथम्? इति प्रश्ने **यथा त्वद्विभागान्तरादौ**=पुनः भवन्मते विभागान्तर उत्पन्ने यथा निर्वाह्यम्, तथा सिद्धान्तेऽपि निर्वाहस्समानः॥

**अयमत्र संग्रहः**—क्रिया, विभागः, पूर्वसंयोगनाशः, उत्तरसंयोगोत्पत्तिः, क्रियानाशः इति वैशेषिकक्रमः। सिद्धान्ते—क्रियापूर्वसंयोगनाशयोर्मध्ये मास्तु विभागः, क्रियायां जातायां, तया पूर्वसंयोगनाश एव भवतु, 'मध्ये विभागो मास्त्विवति कथ्यते। **वैशेषिकः पृच्छति**—अतिरिक्तविभागानङ्गीकारे, ययोः पूर्वसंयोगनाशो जातः, तयोरेव पुनः क्रियान्तरवशादुत्तरसंयोगनाशपूर्वकं यदा संयोगो भवति, तदा तत्र पूर्वजातसंयोगनाशस्य नित्यत्वेन तत्रैव संयोगनाशस्य सत्त्वे संयोगप्रतीतिः कथं स्यात्? विभागेऽतिरिक्तेऽङ्गीकृते तु, संयोगनाशमात्रं न विभागः, येन तस्य नित्यत्वात्संयोगप्रतीतिः कथमिति प्रश्नो भवति। विभागस्यातिरिक्तत्वेन तस्य नाशसंभवात् विभागे नष्टे ततः संयोगप्रतीतिः स्यात्। अतोऽतिरिक्तो विभाग आवश्यक इति **वैशेषिकवादः**। **सिद्धान्ती**—अतिरिक्तविभागाङ्गीकारेऽपि तस्यानित्यत्वेन उत्तरसंयोगोत्पत्तिः क्रियानाशः, पुनःक्रियान्तरोत्पत्त्या तयोरेव पुनस्संयोगो यदा जायते, तदा तत्र पूर्वजातस्य विभागनाशस्य नित्यत्वेन तत्र सत्त्वात् पुनर्विभागोत्पत्तिवेलायां विभागप्रतीतिः कथं भवेत्? इति पृच्छति। **वैशेषिको वदति**—प्रथमक्रियया जातः विभागः अन्यः। अयं तु नष्टः। द्वितीयक्रियया जातस्तु विभागोऽतिरिक्तः। अतो विभागव्यक्तिभेदादुभयोर्मेलने न दोष इति। **सिद्धान्ती**—एवञ्चेत्, पूर्वसंयोगनाशो यथा प्रथमक्रियया जातः, पुनः द्वितीयक्रियया यदा संयोग उत्पद्यते, स तु पूर्वसंयोगनाशप्रतियोगिसंयोगादन्य एव, कारणभूतक्रियाभेदात् विभागभेदवदेव। एवञ्च पूर्वसंयोगनाशस्य नित्यत्वेन तत्र स्थितावपि, संयोगान्तरोत्पत्तौ बाधकाभावेन संयोगप्रतीतिसंभवः। न च संयोगनाशस्यापि तत्र सत्त्वेन तस्यापि प्रतीतिप्रसङ्गः। तथा च कथं संयोगप्रतीतिवेलायामेव संयोगनाशस्यापि सत्त्वं भवेत् इति वाच्यम्, भवतोऽपि प्रथमविभागनाशस्य, द्वितीयक्रियाजन्यविभागस्य च सत्त्वेनोभयोरपि प्रतीतिप्रसङ्गः समानः। यदि च ध्वंसस्य सामान्यधर्मावच्छिन्नप्रतियोगिकत्वाभावात्, तत्तद्विभागमात्रं प्रतियोगि। एवं प्रतियोगिव्यक्तिभेदज्ञानवतः उभयोस्सत्त्वे न विरोध इति समाधानम्, तर्हि तदेतत्समाधानं संयोगनाशसंयोगयोरपि समानमेवेत्यवगम्यताम्। अतश्च विभागाभावे न काप्यनुपपत्तिः॥

पश्यन्तु तर्कपाण्डित्यमाचार्यस्य महात्मनः। एतादृशीषु गोष्ठीषु हयग्रीवो भवेत्स्वयम्॥
इतोऽपि तर्कचातुर्यं किमस्ति जगतीतले। अयमेव ततः प्राह ह्येवं हि समयान्तरे॥

'तर्केषु कर्कशधियो वयमेव नान्ये काव्येषु कोमलधियो वयमेव नान्ये।
तन्त्रेषु निश्चितधियो वयमेव नान्ये कृष्णे निवेशितधियो वयमेव नान्ये॥'

अन्तिमं वाक्यमस्माकमादर्शस्तस्य, गृह्यताम्। यतो गतस्स कालोऽद्य वैतण्डिकजनाकुलः॥
वैतण्डिकनिरासाय ह्याचार्योऽयमवातरत्। निर्मूलयित्वा तान् सर्वान् वेदमार्गं ररक्ष सः॥
वादजल्पवितण्डासु वादस्त्वेकस्तु सात्त्विकः। जल्पस्तु राजसः प्रोक्तः वितण्डा तामसी मता॥
तत्कालचरितं सर्वं पश्यतां बुद्धिशालिनाम्। तटस्थानामपि भवेत् निर्णयो नास्ति संशयः॥
परन्तु तर्कशास्त्रस्य वेदान्तस्य न किञ्चन। संबन्धोऽस्ति यतोऽयं तु तर्कातीतस्तु कथ्यते॥
बौद्धानां वैदिकानां च त्विदंमूला तु घर्षणा। ययैतद्देशसर्वस्वं ज्ञानं हन्त लयं गतम्॥

[संयोगनाशपदार्थः]

417. **कोऽसौ संयोगनाशस्तव मत इति चेत्, सोऽयमन्यत्र योगः**
**तस्य प्राचा विरोधात् स तु मिषति तथाऽऽलोचितस्तस्य नाशः ।**
**अज्ञातप्राच्ययोगः परमभिमनुते स्वेन रूपेण चैनं**
**सर्वोऽप्येवं ह्यभावः; स्फुटमिह न पुनः कश्चिदन्योऽस्ति दृष्टः ॥ ५७ ॥**

हयग्रीवस्वरूपोऽयमाचार्योऽवातरत्तदा । ररक्ष निखिलान् वेदान्, तथाप्यद्य पुनः कलिः ॥
वर्धतेऽद्यापि चर्चैव सर्वात्मगुणनाशिनी । चर्चां त्यक्त्वा साधनेषु स्थातव्यं हितमिच्छता ॥
शरणागतिरेवैक उपायोऽद्य तु वर्तते । शरण्यस्स तु सर्वेषां मार्गं दर्शयतात् द्रुतम् ॥ ५६ ॥

एवं विभागो नातिरिक्तः, न वा संयोगनाशरूपः, अनुपपत्तेरुक्तत्वात् । प्रसंगाच्च विभागनाश एव संयोग इत्यपि । तर्हि भावान्तराभाववादिनां स किंरूपः? इत्यस्योत्तरमाह—**कोऽसावित्यादि** । एवञ्चेत् **तव**=अतिरिक्ताभावानङ्गीकर्तुस्तव **असौ संयोगनाशः कः**=किंरूपः **मतः**=संमतः इति चेत्, **सः**=संयोगनाशः **अयम्**=परिदृश्यमानः **अन्यत्र संयोगः**=उत्तरदेशसंयोग एव । ननु पूर्वं(जड.27) 'तत्तदभावयोरेव विरोधः, न त्वन्येन' इति प्रत्यपादि । तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चय एव प्रतिबन्धकः, न तु तदन्यवत्ताबुद्धिः । 'भूतलं घटवत्' इति बुद्धिं प्रति हि घटाभाववत्तानिश्चय एव प्रतिबन्धकः, न तु पटवत्ताबुद्धिः । 'घटपटोभयवत् भूतलम्' इति प्रतीतेः प्रामाणिकत्वात् । अन्यथा हि जगत एव परस्परबाधात् व्यावर्तमानत्वहेतुना विश्वमिथ्यात्वप्रसङ्ग इत्यत्राह—**तस्येत्यादि** । **तस्य**=उत्तरदेशसंयोगस्य **प्राचा**=पूर्वदेशसंयोगेन विरोधात् **तथा आलोचितः**=पूर्वदेशसंयोगविरुद्धतया गृहीतः **स तु**=उत्तरदेशसंयोग एव **तद्विनाशः**=पूर्वदेशसंयोगनाशरूपः **मिषति**=भाति ॥

अत एव **अज्ञातप्राच्ययोगः परम्**=अस्मृतपूर्वसंयोगः पुरुषस्तु **एनम्**=उत्तरदेशसंयोगम् **स्वेन रूपेण**=उत्तरदेशसंयोगरूपेण भावरूपतया **अभिमनुते**=तथा जानाति । **इह** जगति **सर्वोऽप्यभावः एवम्**=प्रतियोगिस्मरणकालेऽन्याभावरूपः, **स्फुटम्**=स्पष्टमिदम् । प्रतियोग्यस्मरणे तु भावरूप एव । **अन्यः कश्चिदत्र**=अतिरिक्तः कश्चन पदार्थः **न पुनर्दृष्टः अस्ति**=नानुभवसिद्धो दृश्यते । तथा च भावानां सर्वेषां न परस्परं विरोधः, येन व्यावर्तमानत्वहेतुना जगत एवापलापः प्रसज्येत । केचन भावाः परस्परं विरुद्धाः । यथा जलवह्नी—'जलवान्' इत्युक्ते हि 'वह्न्यभाववान्' इति न पृथग्वक्तव्यम् । अत एव तदभावव्याप्यवत्तानिश्चयः, तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयश्च तद्वत्ताबुद्धिं प्रति प्रतिबन्धकतयाऽङ्गीकृतः । अत एव गोत्वं गवेतरव्यावृत्तरूपं वर्ण्यते । गौः इत्युक्ते हि अश्वादिव्यावृत्तिः सिद्ध्यति, न तु प्राणित्वव्यावृत्तिः । अतः पूर्वदेशसंयोगः, उत्तरदेशसंयोगश्च उपाधिभेदाद्विरुद्धावेव । अतोऽभावः तद्विरुद्धभावात्मकः, न तु यत्किञ्चिद्भावात्मकः । पूर्वमपि (जड.27) अवर्तमानत्वं न भूतत्वादिरूपम्, किन्तु वर्तमानत्वाभावरूपमितिमात्रमुक्तम्, न त्वभावरूपम् । अधिकं त्वभावप्रकरणे (129) ॥ ५७ ॥

[परत्वापरत्वविमर्शः]

418. **स्पन्दावृत्त्यादिभेदात् परमपरमिति प्रत्ययौ तत्तदर्थे**
**कालाधिक्यादिमात्रात् न खलु समधिकं शक्नुयातां विधातुम्।**
**दृष्टिर्नान्यस्य; क्लृप्तिर्भवति गुरुतराऽतिप्रसङ्गोऽन्यथा स्यात्**
**किं न स्यातां गुणाद्यैः परतदितरते; पूर्वभावादि चान्यत्॥ ५८॥**

[बुद्धिपरीक्षा]

419. **द्रव्यं प्राक् बुद्धिरुक्ता; परमिह विषयैस्सङ्गमादिर्निरूप्यः**
**संयोगं भाष्यकाराः प्रथममकथयन् न्यायतत्त्वानुसारात्।**

---

विभागानन्तरं क्रमप्राप्ते परत्वापरत्वे परीक्षयति—**स्पन्देत्यादि**। **तत्तदर्थे**=तत्तत्पदार्थे **स्पन्दावृत्त्यादिभेदात्**=सूर्यपरिस्पन्दादिरूपाणां दिनादीनां **आवृत्त्या**=पुनः पुनः प्राप्त्या **परम् अपरम् इति प्रत्ययौ**=प्रतीती, तन्मूलकव्यवहारभेदौ **कालाधिक्यादिमात्रात्**=कालाधिक्यन्यूनत्वापेक्षया **समधिकम्**= अतिरिक्तं वस्तु **विधातुम्**=अनुमातुम् **न शक्नुयाताम्**=न समर्थौ भवेताम्। **आदि**पदेन दैशिकपरत्वापरत्व-हेतुभूते देशाधिक्यन्यूनत्वे ग्राह्ये। ययोर्वस्तुनोर्मध्ये सूर्यपरिस्पन्दरूपदिनानामाधिक्यम्, न्यूनत्वं वा भवति, तत्र यस्य दिनाधिक्यम्, स ज्येष्ठः; यस्य दिनन्यूनता स कनिष्ठ इति कालिकपरत्वापरत्वयोः स्वरूपम्। एवं ययोः वस्तुनोर्मध्ये देशाधिक्यन्यूनत्वे, तत्राधिकदेशव्यवधाने दूरत्वम्, न्यूनदेशव्यवधाने समीपत्वमिति दैशिकपरत्वापरत्वयोः स्वरूपम्। अतिप्राचीनप्रासादादिकं पश्यतां पामराणामपि 'इदमतीव पुरातनम्' इति ज्ञानं सहजत एव जायते। तत्र दिनमाससंवत्सरादिगणनाया अवकाश एव नास्ति, न शक्यते च गणना। एवं दूरसामीप्यादिकमपि तथैव। कालदिशोश्चातीन्द्रियत्वेऽपि तत्परिणामस्यैन्द्रियकत्वात्, ते न कालदिग्रूपे। किन्तु अतिरिक्ते इति **वैशेषिकाः**॥

परन्तु—**अन्यस्य**=अतिरिक्तस्य परत्वस्यापरत्वस्य च **दृष्टिः**=प्रत्यक्षम् **न**, अतस्तयोः प्रत्यक्षेण सिद्धिर्न। **क्लृप्तिः**=अनुमानम्=**गुरुतरा**=गौरवग्रस्ता भवति। अनिवार्यत्वेन गौरवं सह्यमित्यपि न। 'तद्धेतोरेव' इत्यादिन्यायेन अन्यथासिद्धेः दर्शनात्। **अन्यथा**=बलात्कारे च **अतिप्रसङ्गः स्यात्**। अतिप्रसङ्गमेव प्रदर्शयति=**किं** नेत्यादि। **गुणाद्यैः**=ज्ञानशक्त्यादिभिरपि **परतदितरते**=परत्वापरत्वे उत्कृष्टत्वनिकृष्टत्वरूपे स्याताम्। एवं गुणे बुद्धिसुखदुःखादावेतादृशतारतम्यं प्रसिद्धमेव। एवम् **अन्यत्**=अन्यादृशम् **पूर्वभावादि च**=पूर्वसत्त्वपूर्वदृष्टत्वादि च स्यात्। इदं सर्वमापेक्षिकं चेत्, भवदुक्ते परत्वापरत्वेऽपि तादृशे एव। को विशेषः? पृथिवीत्वघटत्वादिरूपसामान्ये च परत्वापरत्वे त्वयैव स्वीकृते। अतोऽनेकविधातिप्रसङ्गात् बुद्धिविशेषविषयत्वरूपे एव परत्वापरत्वे, नातिरिक्ते॥ ५८॥

क्रमप्राप्ता बुद्धेः परीक्षा। परन्तु सिद्धान्ते तस्याः द्रव्यत्वात्, वक्तव्यस्याधिक्यात्, विषयगौरवाच्च तदर्थं प्रत्येकस्सर एव विनियुक्तः। ऐहिकामुष्मिकसकलव्यवहारनियन्त्री किल सा। अथापि पुनः विचारणीयं बह्वस्तीत्येतत्प्रदर्शनपूर्वकं बुद्धिं निरूपयति—**द्रव्यमित्यादि**।**प्राक्**=पूर्वम्=बुद्धिसरे बुद्धिः द्रव्यम्**उक्ता**=

**तत्संयोगे समेऽपि स्फुरति न निखिलं; तेन योग्यत्वमन्यत्**
**ग्राह्यं; संबन्धसाम्ये नियतविषयता दृश्यते हीन्द्रियेषु ॥ ५९ ॥**

**[बुद्धेस्संकोचविकासवत्त्वम्]**

420. **नित्यं नित्यादिबुद्धिर्निखिलविषयिणी; तद्वदेव स्वभावः**
**शास्त्रैः क्षेत्रज्ञबुद्धेरपि समधिगतः; कर्मभिस्तन्निरोधः ।**

प्रसाधिता यद्यपि ।**परम्**=परं तु**इह**=अस्मिन् सरे**विषयैः**=बाह्यैरान्तरैश्च विषयैः**सङ्गमादिः**=संबन्धादिः निरूप्यः अवशिष्टो वर्तते। आदिपदेन तस्याः प्रवृत्तिक्रमादिर्ग्राह्यः। तत्र ज्ञानार्थयोस्संबन्धं विचारयामः।**भगवद्भाष्यकाराः न्यायतत्त्वानुसारात्**=न्यायतत्त्वाख्यग्रन्थमनुसृत्य**संयोगं** संबन्धम्**प्रथमम् अकथयन्**= 'संबन्धश्च संयोगलक्षणः। ज्ञानमपि हि द्रव्यमेव' (ब्र.सू.2-2-27) इति। तर्हि किञ्चिद्वस्तु ग्रहीतुं बहिर्गतं ज्ञानं बाह्येन सर्वेणातीन्द्रियवस्तुनापि संबद्धं भवेदेव। अन्ततः विभोः परमात्मनः सर्वत्र सत्त्वात्तेन संयोगोऽवर्जनीय इति सोऽपि गृह्येतेति चेत्—**तत्संयोगे**=ज्ञानसंयोगे**समेऽपि**=समानेऽपि**निखिलमपि यतो न स्फुरति**=न विषयो भवति, **तेन** हेतुना**अन्यत्**=संयोगादतिरिक्तम् योग्यत्वमपि**ग्राह्यम्**=कारणत्वेनाङ्गीकार्यम्। उक्तार्थे दृष्टान्तमाह—**संबन्धसाम्ये** सत्यपि **इन्द्रियेषु नियतविषयता**=व्यवस्थितग्रहणम् **दृश्यते हि**। चक्षुरिन्द्रियमाहङ्कारिकमपि द्रव्यमेव। घटग्रहणवेलायां तत्संबन्धः रूपेण साकं रसादिभिरपि समानः। अथापि रूपमेव गृह्यते, न रसादिः एवमेवेतरेन्द्रियेष्वपि। अतः इन्द्रियसंयोगमात्रं न प्रत्यक्षकारणम्, वस्तुनो योग्यताऽप्यपेक्षिता॥

अत्र 'प्रथमम्' इति विशेषणात्, अत्र विचारस्यास्त्यवकाश इति सूचितम्। अतीतानागतैस्साकं संबन्धोपपादने च महानेव क्लेशो **न्यायसिद्धाञ्जनादि**ष्वनुभूयते इति स्पष्टम्। **शतदूषण्यां तु विषयविषयिभाव** एव वा भवतु संबन्धः, का हानिः? इत्यपि वदन्त्याचार्याः (17वादे)। अग्रे चेदं (श्लो.61) द्रष्टव्यम्। तर्हि भाष्यविरोधः कथं परिहरणीय इति चेत्, संयोगविशेष एवास्तु इत्यपि वदन्ति। अतः प्रसिद्धो **विषयविषयिभाव** एव संबन्ध इति साधीयान्, यतो 'व्यवहारे न्यायनयः' इत्युत्सर्गः॥

लोकदृष्ट्यनुसारेण चिन्तनं लौकिके भवेत्। अलौकिके त्वियं चिन्ता भवेत्त्वेवमलौकिकी॥
यावत्परिचयो नैव जायतेऽर्थे त्वलौकिके। तावत्प्रश्नोऽपि वर्धेत नूनं पश्यत मानवाः॥
सर्वमन्यत्परित्यज्य चिन्तयध्वं हरिं सदा। स तु सर्वं समीकुर्यात् अद्भुतं तच्च पश्यत ॥ ५९ ॥

चेतनज्ञानानां वैषम्ये कारणमाह—**नित्यमित्यादि**। **नित्यादिबुद्धिः**=नित्यमुक्तादीनां बुद्धिः=ज्ञानम् **नित्यम्**=सदैव **निखिलविषयिणी**। **तद्वदेव क्षेत्रज्ञबुद्धेरपि**=जीवानां ज्ञानस्यापि **स्वभावः शास्त्रैः**= 'सर्वं ह पश्यः पश्यति' (छां.7-26-2) इति श्रुत्या 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा। यथोदपानकरणात् क्रियते न जलाम्बरम्। सदेव नीयते व्यक्तिमसतस्संभवः कुतः। तथा हेयगुणध्वंसादवबोधादयो गुणाः। प्रकाश्यन्ते न जन्यन्ते नित्या ह्येवात्मनो हिते॥' (वि.ध.104-55,56,57) इत्यादिशौनकवचनादिभिश्च समधिगतः। संसारदशायां तु **तन्निरोधः**=तस्य प्रतिबन्धः **कर्मभिः**=पापविशेषैः भवति॥

**सङ्कोचोल्लासयोश्च प्रतिनियतिरिह स्यादुपाधिप्रभेदात्**
**निश्शेषोपाधिमोक्षे निखिलविषयतामश्नुवीत स्वभावात् ॥ ६० ॥**

**[मुक्तानां ज्ञानविकासानुपपत्तिपरिहारः]**

**421. मुक्तानां धीः क्रमाच्चेत् प्रसरति, न कदाऽप्यन्तमेषाऽधिगच्छेत्**
**संक्षिप्तायाश्च दूरान्तिकपरिपतने यौगपद्यं न शक्यम् ।**
**संयोगो भूतभाविष्वपि न हि घटते तत् धियः सांप्रतिक्याः**
**इत्याद्यैर्न क्षतिः स्यात् श्रुतिमुखविदिते योग्यतावैभवेऽस्याः ॥ ६१ ॥**

---

ननु चेतनानां ज्ञानेषु विचित्रं तारतम्यं बहुधा दृश्यते । संसारदशायामपि बहुज्ञाः केचन, अल्पज्ञाश्चापरे, अज्ञा एवेतरे बहुज्ञा अपि क्वचिद्विषये अज्ञाः इति प्रतिव्यक्ति प्रतिविषयं च वैलक्षण्यं दृश्यते । एवं सति कथमेषां सर्वेषां ज्ञानमेकरूपं स्यात् । वदन्ति च केचित् स्वभावत एव जीवानां तारतम्यं मुक्तावपीति चेत्—संसारदशायाम् **इह**=अस्यास्मिन् ज्ञाने **सङ्कोचोल्लासयोश्च**=सङ्कोचविकासयोश्च **उपाधिभेदात्**=पापविशेषवशात्, तत्प्रयुक्तभगवन्निग्रहसंकल्पाच्च संकोचः, एवं पुण्यविशेषाच्च विकासः । एवं **प्रतिनियतिः**=व्यवस्था स्यात् । एवं संकोचविकासयोरौपाधिकत्वात् मुक्तौ **निश्शेषोपाधिमोक्षे**=सकलकर्मक्षये **स्वभावात्**=स्वत एव **निखिलविषयताम्**=सर्वविषयकत्वम् **अश्नुवीत**=अनुभवेत् । बद्धदशायां जीवज्ञानतारतम्यमौपाधिकम् । सर्वज्ञत्वमेव स्वभावः । अधिकं जीवसर एव गतम् । जीवानां स्वरूप एव तारतम्यवादस्तु पूर्वमेव(जीव.10) परीक्षितः ॥ ६० ॥

मुक्तावस्थायां ज्ञानविकासेऽनुपपत्तिमाशङ्क्य परिहरति—**मुक्तानामित्यादि** । **मुक्तानाम्**=मुक्तात्मनाम् **धीः**=ज्ञानम् **क्रमात्**=मुक्तिप्राप्त्याद्यक्षणे **क्रमात् प्रसरति चेत् एषा**=धीः **अन्तम्**=पूर्णताम् **कदापि न अधिगच्छेत्**=प्राप्नुयात्, बाह्यदेशस्यानन्त्यात् । अतो युगपदेव प्रसरणं भवत्विति चेत्—**संक्षिप्तायाश्च**=संकुचितायाश्च धियः **दूरान्तिकपरिपतने**=दूरस्थितैः समीपस्थितैश्च वस्तुभिः संबन्धे **यौगपद्यं** च **न शक्यम्**=न संभवि । अपि च **सांप्रतिक्याः**=इदानीं संकुचितायाः **तद्धियः**=मुक्तबुद्धेः । **भूतभाव्येषु**=भूतकालिकभविष्यत्कालिकवस्तुषु **संयोगोऽपि** ज्ञानस्य **न हि घटते**=वस्तूनामसत्त्वात् । **इत्याद्यैः**=आक्षेपैः, अस्याः बुद्धेः **योग्यतावैभवे**=अत्यद्भुतस्वरूपयोग्यतामाहात्म्ये **श्रुतिमुखविदिते**=श्रुतिस्मृतिभिः निश्चिते सति **क्षतिः**=हानिः **न स्यात्** । सर्वोऽयमाक्षेपः भौतिकतेजसः प्रसरणक्रमं दृष्ट्वोदेति । ज्ञानं ह्यत्यन्तविलक्षणमभौतिकम् । बद्धदशायां परिदृश्यमानो ग्रहणप्रकार एवात्यन्तं विलक्षणो दुर्निरूपः परिदृश्यते चेत्, किमुत मुक्तौ ॥

मुक्तेः पुरुषप्रयत्नसाध्यत्वे तस्या अनित्यत्वप्रसङ्गं मन्वानाः पण्डिताः केचित्, प्रतिबन्धकनिवृत्तावेव पुरुषप्रयत्नापेक्षेति समादधते । एवं मुक्तेः ज्ञानविकासरूपाया विषयेऽपि, विकासो नूतनश्चेन्नाशप्रसङ्ग इति भीताः, विकासोऽपि न नूतनः; यतो धर्मभूतज्ञानं सदैव सर्वं व्याप्यैव वर्तते । प्रतिबन्धकवशादिदानीं नानु

[ज्ञानव्याप्तेर्वैशिष्ट्यम्]

**422. वेगस्याचिन्त्यरूपो रविशशिनयनाद्यंशुवर्गेषु भूमा**
**भागानन्त्येऽप्यणूनामतिपतनमतो ह्याहुरन्योन्यमेके।**
**इत्थं सर्वैरबाध्यं गतिमनुवदतां मुक्तबुद्धेर्विकासे**
**युज्यन्ते यौगपद्यप्रभृतय इति तु श्रद्दधीध्वं श्रुतार्थाः ॥ ६२ ॥**

[योगिज्ञानवैशिष्ट्यम्]

**423. यत् सूक्ष्मं विप्रकृष्टं व्यवहितमपि, तद् गृह्णती योगिबुद्धिः**
**भूयिष्ठादृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिद्धा।**

भूयते। प्रतिबन्धके निवृत्ते, सर्वविषयकत्वमनुभूयेतेति मन्वते। अयं पक्षः पूर्वमेव(जीव.) परिशीलितः। सर्वमिदं हास्यास्पदं प्रतिभाति। यतः—

अस्माकमेव बद्धानां स्वरूपं न हि निश्चितम्। मुक्तानां विषये हन्त! किं ज्ञातुं शक्नुमो वयम्॥
अहो कौतुकमेतेषां कियद्वा कति वा भवेत्। वृथैव कालहरणमेतादृशविचिन्तया॥
यावच्छक्यं हि कालोऽयं नीयतामात्मचिन्तया। आत्मचिन्तामणिस्सर्वं समये दर्शयिष्यति॥
प्रथमं ज्ञायतामात्मा सर्वं तत्र समाहितम्। नान्योऽस्त्युपायः शङ्कादेः परिहारे च तद्विना॥
यथा च व्यसनी स्वीयचिन्तायामनिशं भवेत्। मग्नः तथापि सकलं कुर्यादन्यदपि स्वयम्॥
तथैव भगवच्चिन्तामग्नैः याप्योऽखिलोऽपि हि। कालः, आत्महितासक्तैः नान्या गतिरिहास्ति नः॥ ६१॥

अचिन्त्याद्भुतस्वभावं ज्ञानस्य प्रदर्शयति—**वेगस्ये**त्यादिना। **रविशशिनयनाद्यंशुवर्गेषु**=सूर्यचन्द्रादीनां किरणवर्गेषु, अस्मन्नयनरश्मिषु वा **वेगस्य भूमा**=महत्त्वम् **अचिन्त्यरूपः**=चिन्तयितुमप्यशक्यः। 'शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः' (वि.पु.1-3-2) इति खल्वार्षवचनम्। एवम् **एके**=जैनाः **अणूनाम्**=अत्यन्तसूक्ष्माणामणूनाम् **भागानन्त्येऽपि**=अवयवानामनन्तत्वेऽपि **अतः**=वेगवशादेव **अतिपतनम्**=अन्योन्यातिक्रमणम् **आहुः**। अद्यतना नव्यभौतिकविज्ञानिनोऽपि एतत् द्रढयन्ति। **इत्थम्**=एवमेव **मुक्तबुद्धेः**=मुक्तज्ञानस्य **विकासे सर्वैः** युक्तिविशेषैः **अबाध्याम्**=बाधितुमशक्याम् **गतिम्**=सर्वविषयग्रहणरीतिम् **अनुवदताम्**=प्रमाणसिद्धमनुवदताम्, न तु कल्पयताम् अस्माकमपि **यौगपद्यप्रभृतयः**=युगपत्सर्वविषयत्वादयोऽपि युज्यन्त एव इति तु **श्रुतार्थाः**=श्रुत्युक्तार्थपर्यालोचनकुशलाः **श्रद्दधीध्वम्**=श्रद्धां कुरुध्वम्। एतादृशविषये वृथा चर्चया न किञ्चित्साधयितुं शक्यम्॥

अत आत्मव्यसनिभिर्भवितव्यं विवेकिभिः। सर्वमन्यत्परित्यज्य क्रियतां शरणागतिः॥
सर्वेषां हितदस्त्वात्मा प्रियः सर्वसुहृन्मतः। तमृतेऽन्या गतिर्नास्ति तमाश्रयत सत्वरम्॥ ६२ ॥

योगिनां ज्ञानस्य वैभवमाह—**यदि**त्यादि। **योगिबुद्धिः**=योगिनां ज्ञानम् **भूयिष्ठादृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन**=भूयिष्ठेन=अत्यधिकेन अदृष्टेन=पुण्यविशेषेण लब्धः अतिशयः येनान्तःकरणेन, तादृशस्य करणस्य वृत्तेः=व्यापारस्य आनुगुण्येन=अनुसारतः, अनेन योगिज्ञानेषु तारतम्यमप्युपपादितम्॥

नष्टादिष्वक्षतो धीः कथमिति यदि, न; प्रत्यभिज्ञादिनीतेः

चित्राः संबन्धभेदाः करणविषययोः तत्रतत्राभ्युपेताः ॥ ६३ ॥

[एकदेशिमतपरीक्षा]

424. नित्याया एव बुद्धेः स्वयमभिदधतः केचिदद्रव्यभावं

संबन्धं धर्मतोऽस्याः कृतकमकथयन् भूषणन्यायसक्ताः ।

स्वाभीष्टद्रव्यलक्ष्मस्मृतिविरहकृतं नूनमेषां तदेतत्

सौत्रं तल्लक्षणं तैरनुमतमिह च स्याद्धि कार्याश्रयत्वम् ॥ ६४ ॥

---

स्यादेव यावद्देहं तु तारतम्यं सदाऽऽत्मनाम् । देहस्वभाव एवायं रचना तस्य तादृशी ॥

तारतम्यप्रवादोऽयं जीवानामनिवारितः । स्थूलसूक्ष्मादिभेदेन देहोऽपि त्रिविधो मतः ॥

संपूर्णक्षय एतेषां दुर्ज्ञेयो मर्त्यजन्मनाम् । तारतम्यप्रवादोऽयमेतन्मूलस्तु युज्यते ॥

एवमतिशयशक्तियुक्तान्तःकरणानुगुण्येन **सूक्ष्मम्** स्वरूपतः, **विप्रकृष्टम्** देशतः कालतश्च **व्यवहितम्** कुड्यादिभिः, एतादृशं **यत्,** तत् **गृह्णती**=ग्रहणयोग्या **योगिबुद्धिः सिद्धा**=शास्त्रसिद्धा । **नष्टादिषु**=भूतभविष्यद्वस्तुषु विषयस्याभावात् **अक्षतः**=इन्द्रियेभ्यः **धीः**=ज्ञानम् **कथम्? इति यदि**=इति चेत्, **न** । कुतः?=**प्रत्यभिज्ञादिनीतेः**=प्रत्यभिज्ञान्यायादेव । **आदिपदेन** स्मृतिः, अनुमानं च ग्राह्यम् । अनुमानं हि त्रैकालिकवस्तुविषयकम् । किं बहुना? **करणविषययोः**=ज्ञानकरणानाम् इन्द्रियादीनाम्, ग्राह्याणां विषयाणां च **संबन्धभेदाः**=संबन्धविशेषाः विलक्षणाः **तत्र तत्र** शास्त्रेषु **अभ्युपेताः**=अङ्गीकृताः । अतश्शास्त्रैकगम्येषु विषयेषु चर्चा व्यर्थैव ॥

अचिन्त्यवैभवं ज्ञानं को वा चिन्तितुमर्हति । अद्भुतादद्भुतं ज्ञानं, किमु तद्योगिनां मतिः ॥ ६३ ॥

**केचित्**=असमदेकदेशिनः **नित्याया एव** अस्याः **बुद्धेः**=स्वरूपतो नित्यस्यैव ज्ञानस्य **अद्रव्यत्वम्**=गुणत्वम् **अभिदधतः भूषणन्यायसक्ताः**=भूषणकारोक्तन्याये आसक्ताः **संबन्धम्**=विषयसंबन्धम् **धर्मतः**=धर्मप्रभाववशात्=अदृष्टविशेषवशात् **कृतकम्**=आगन्तुकम् **अकथयन्** । न्यायभाष्ये (1-1-22)'नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यते । तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते' इत्येकःपक्षः परीक्ष्य निराकृतः । अयं च पक्षः प्राचीनस्य **भूषणकारस्येति** व्याख्यातारः। तमिमं पक्षमनुसरन्तोऽस्मदीया एव केचन भूषणकारमतवत् ज्ञानं गुण इत्यङ्गीकृत्य पूर्वमविद्यमान एव आनन्दरूपविषयसंबन्धः सुकृतविशेषरूपभगवदनुग्रहवशान्नूतनो भवति, आनन्दाविर्भाववचनादित्यभ्युपागच्छन् । परन्त्विदमयुक्तम् । यतः, **तदेतत्**=एवमेभिः कथनम् **एषाम्**=भूषणकारानुकारिणाम् **नूनम् स्वाभीष्टद्रव्यलक्ष्मस्मृतिविरहकृतम्**=भूषणकारेष्टत्वात् स्वाभीष्टं यत् द्रव्यलक्ष्म, तस्य स्मृतिविरहः=विस्मृतिः, तत्कृतम् । भूषणकारसंमतं द्रव्यलक्षणं यद्येते स्मरेयुः, तदा नैवं वदेयुः । **सौत्रम्**='क्रियावत् गुणवत् समवायिकारणं द्रव्यम्' (वै.सू.) इति सूत्रोक्तम् **तल्लक्षणम्**=द्रव्यलक्षणम्

**[प्राकट्यनिराकरणम्]**

425. **प्राकट्यं नाम धर्मं कतिचन विषये बुद्धिसंबन्धजन्यं**
**मन्यन्ते; तन्न दृष्टं; व्यवहरणविधावानुगुण्यं तु भानम्।**
**क्वापि स्वाभाविकं स्यात् क्वचन भवति धीगोचरत्वात्मकं तत्**
**भातीत्यादिप्रयोगः स्वदत इति नयात् तत्र कर्मत्वगर्भः ॥ ६५ ॥**

तैः अनुमतम्, भूषणकारानुयायित्वात्। **इह च**=ज्ञाने **कार्याश्रयत्वं हि स्यात्**=विषयविषयिभाव-रूपकार्यस्य आश्रयत्वं ज्ञाने वक्तव्यम्। एवं सति ज्ञानं विषयविषयिभावं प्रति समवायिकारणत्वात् ज्ञानं द्रव्यमेव स्यात्, न त्वद्रव्यम्। अत इदं सिद्धान्तभूषणकारमतयोस्सांकर्यकृतम्। अतः पूर्वोक्त एव सिद्धान्तो युक्तः ॥ ६४ ॥

पूर्वं (बुद्धि.3) प्राकट्यानुमानं यद्यपि निरस्तम्, न तु प्राकट्यम्, तत्राप्रसक्तेः। अत्रैव तन्निराकरणस्य प्रसक्त्या तन्निराकरोति—**प्राकट्यमित्यादि**। **कतिचन**=भाट्टाः **बुद्धिसंयोगजन्यम्**=विषयस्य बुद्धिसंबन्ध-वशात् जातम् **प्राकट्यं नाम**=प्राकट्यसंज्ञकम् **धर्मम्**=धर्मविशेषम् **विषये मन्यन्ते**। **तत्**=प्राकट्यं **न दृष्टम्**=न हि घटादौ विषये नैल्यादिवत् प्रत्यक्षसिद्धम्। ननु 'घटो भाति' इति व्यवहारात् भानं घटकर्तृकं दृष्टम्। तेन ज्ञानविषयत्वातिरिक्तो विषयगतो धर्मः भानमिति। तदेव प्राकट्यमुच्यत इत्यत्राह—**व्यवहरण-विधौ**=व्यवहारप्रक्रियायाम् **आनुगुण्यं तु**=योग्यत्वापादनं हि **भानम्**=भानपदार्थः। 'घटो भाति' इत्युक्ते, घटः व्यवहारयोग्यः इति निश्चीयते। अतश्च व्यवहारयोग्यतापादनमेव भानम्=विषयता वा, न त्वतिरिक्तः धर्मः। घटादीनां व्यवहारानुगुण्यापादनं ज्ञानेन क्रियते चेत्, तर्हि ज्ञानविषयकव्यवहारोऽप्यावश्यकः किल। तत्र व्यवहारयोग्यतापादनं केन क्रियते? अन्येन चेदनवस्था। स्वतश्चेत् घटादेरेव तदस्तु इति शङ्कायाम्, वस्तुद्वैविध्यं लोकेऽनिवार्यम्। एकमन्येन प्रकाश्यं जडमित्युच्यते। अन्यच्च स्वप्रकाशमजडमित्युच्यते। घटादिकमालोकमन्तरा कदापि न ज्ञायते। आलोकस्तु आलोकान्तरमन्तरापि ज्ञायते। आलोकः घटापेक्षया प्रकाशात्मकः। ज्ञानं तु आलोकस्यापि प्रकाशकम्। न हि निमीलितचक्षुषः आलोकः प्रकाशेत। अतो ज्ञानमेव सर्वस्य प्रकाशकमिति वस्तुद्वैविध्यमावश्यकमित्यभिप्रायेण समाधत्ते—**क्वापीत्यादि**। **तत्**=व्यवहारयोग्यतापादनम् **क्वापि**=कुत्रचित् ज्ञानादौ **स्वाभाविकं स्यात्**=अन्यानपेक्षं स्यात्। **क्वचन**=घटादौ जडवस्तुनि **धीगोचरत्वात्मकम्**=ज्ञानविषयत्वस्वरूपम्। एतदपेक्षयातिरिक्तं तु प्राकट्यादिकं वस्तुधर्मो नास्त्येव। ननु 'घटो भाति' इति प्रयोगात् भानं घटस्यैव धर्मः, धातोरकर्मकत्वेन धात्वर्थाश्रयत्वस्य घट एव भानादिति चेत्, तत्राह—**'भाति' इत्यादिप्रयोगः, तत्र**=अकर्मकप्रयोगस्थले **'स्वदते' इति नयात्**=न्यायेन कर्मत्वगर्भः प्रयोगः। 'स्वदते मोदकः' इत्युक्ते हि स्वादकर्तृत्वं मोदके न प्रतीयेत। किन्तु स्वादक-र्मत्वमेव। तच्च स्वादविषयत्वे पर्यवस्येत्। तथा च 'भाति' इत्यस्य धातोः ज्ञानविषयत्वमर्थः। तदाश्रय इति बोधः। न तु ज्ञानमेव धात्वर्थः। तदा हि घटादिविशेषणत्वं ज्ञानस्य भासेत। ननु 'ज्ञातो घटः' इत्यपि प्रयोगात् ज्ञानं घटधर्म एव, स एव ज्ञाततेत्युच्यते इति चेत्, तत्रापि ज्ञानविषयत्वमेव ज्ञातता। सविषयक-

[ज्ञातत्वं नातिरिक्तो धर्मः]

426. **इष्टद्विष्टप्रणष्टादिषु च परगतैः कथ्यतेऽन्यत् विशिष्टं**
**ज्ञातत्वोक्तावपीत्थं; व्यवहृतिनियमाः तावतैवोपपन्नाः।**
**प्राकट्येऽस्मिन्, गुणादिष्वपि, कथमधिकं भूतभव्येषु च स्यात्?**
**कर्मत्वं तु क्रियार्थे सति फल इति च प्रायिकं व्याप्तिहानेः ॥ ६६ ॥**

धातोः क्तप्रत्यये आश्रयत्वमेव प्रत्ययार्थः। ज्ञानस्य घटधर्मत्वे घटस्य चेतनत्वप्रसङ्गात्। विषयतासंबन्धेन घटधर्मत्वं तु ज्ञानस्येष्यते, 'ज्ञानविषयः' इत्यत्रैव पर्यवसानम्। अतश्च ज्ञातता वा प्राकट्यं वा न वस्तुन्यतिरिक्तो धर्मः ॥ ६५ ॥

नन्वात्मगतेन ज्ञानाख्यधर्मेणान्यो घटादिः कथं विशेष्येत? अतः ज्ञानविषयत्वमात्रं न ज्ञातता, किन्तु तज्जन्यस्तदतिरिक्त एव कश्चन घटादिगतो वक्तव्य इत्यतिरिक्तज्ञाततासिद्धिरिति शङ्कां निराकरोति— **इष्टेत्यादि। इष्टानिष्टप्रणष्टादिषु च**='इदं मदिष्टम्' 'इदं मम द्विष्टम्' 'घटः प्रणष्टः' इत्यादिव्यवहारेषु **परगतैः**=अन्यत्र वर्तमानैरेव इच्छाद्वेषप्रयत्ननाशादिभिः **अन्यत्**=बाह्यम् घटपटादि विशिष्टम्=इच्छादि-विशिष्टम् कथ्यते। **ज्ञातत्वोक्तावपि**='ज्ञातो घटः' इति वचनेऽपि इत्थम्=एवमेव चेतनगतेन ज्ञानेन विषयतासंबन्धेन विशेष्यते घटः। **इष्टम्**=इच्छाविषयः, द्विष्टम्=द्वेषविषयः, प्रणष्टः=नाशप्रतियोगी इत्येव खल्वर्थः कथ्यते। तद्वदेव ज्ञातः=ज्ञानविषयः इत्यर्थः। प्रतियोगितासंबन्धेन नाशविशिष्टो घटः प्रणष्ट इत्युच्यते। वस्तुतस्तु नाशः समवायिकारणे वर्तते। कार्यस्तु घटः नष्टः। आधारस्य नाशात् कथं तत्र नाशः स्यात्? अथापि तत्समवायिकारणगतो नाशः घटे विशेषणतया भातः 'प्रणष्टो घटः' इति व्यवहारहेतुर्भवति। अन्यनिष्ठोऽपि धर्मः अन्येन संबन्धेनान्यविशेषणं भवति। 'अनुरक्तः' इत्यादौ तु न तथा। अनुरागस्याश्रय एव तेन पदेनोच्यते। लोकप्रयोगः पर्यनुयोक्तुमनर्हः। एवम् **व्यवहृतिनियमाः**= व्यवहारव्यवस्थाश्च **तावतैव**=लोकप्रयोगादेव उपपन्ना भवन्ति। अतः इष्टत्वादिषु यथा कश्चिद्विषयतातिरिक्तो नास्ति, तथैव ज्ञाततादावपि। अन्यथा **अस्मिन्**=एतादृशेऽतिरिक्ते धर्मे प्राकट्ये अङ्गीकृते, **गुणादिष्वपि**=गुणक्रियादिष्वपि **अधिकम्**=अतिरिक्तम् **प्राकट्यम् कथम् स्यात्?** 'रूपं ज्ञातम्' 'क्रिया ज्ञाता' इत्यादिव्यवहारात्, गुणादावपि गुणः स्यात्। 'ज्ञातता ज्ञाता' इत्यपि व्यवहारात् ज्ञाततायामपि ज्ञाततान्तरं स्यात्। **च**=किञ्च **भूतभाव्यादिषु**=भूतभविष्यद्वस्तुषु **अधिकम्**=अतिरिक्तम् प्राकट्यम् **कथं स्यात्**, आधारस्य वस्तुन एवाभावात्। अतः प्राकट्यं नातिरिक्तम्। ननु 'क्रियाजन्यफलशालित्वं कर्मत्वम्'। तेन कर्मणि कश्चनातिशय एव यदि न स्यात्, तर्हि फलशालित्वरूपकर्मत्वं कथं स्यात्? इत्यत्राह—**कर्मत्वं तु**=फलशालित्वरूपं कर्मत्वं तु **फले क्रियार्थे सति**=क्रियाजन्ये सत्येव **इति च प्रायिकम्**। कुतः? **तथा व्याप्तिहानेः**=व्याप्त्यभावात्। 'ग्रामं गच्छति' इत्युक्ते गमनक्रियाजन्यं संयोगरूपं फलं ग्रामे वक्तुं शक्यम्। 'ग्रामं प्राप्नोति' इत्युक्ते प्राप्तेरेव संबन्धत्वात्, तज्जन्यं फलान्तरं नास्त्येव। 'घटं करोति' इत्युक्ते प्रयत्नजन्यं फलं घटे वर्णयितुं शक्यम्। 'प्रयत्नं करोति' इति कथने न हि प्रयत्नस्य

**[प्राकट्यसाधकानुमानविमर्शः]**

427. **आधत्ते धीः क्रियात्वात् किमपि गमनवत् कर्मणीत्यप्ययुक्तं**
**दत्तानेकोत्तरत्वात्; न च फलमधिकं भाति हानादिमात्रात्।**
**हेतुर्धात्वर्थता चेत्, अतिचरणम्; अथ स्पन्दता स्यादसिद्धिः**
**धीस्वारस्यानृशंस्यादनुमतमधिकं कैश्चिदस्मत्सयूथ्यैः ॥ ६७ ॥**

प्रयत्नान्तरजन्यत्वं वक्तुं शक्यम्। एवमेव 'घटं जानाति' इत्यादावपि क्रियाजन्यमतिरिक्तं फलं नास्त्येव, किन्तु विषयत्वमेवेति नातिरिक्तप्राकट्यसिद्धिः॥

शब्दः कियान् समस्यात्मा भवेत् सर्वत्र पश्यत। शब्दं त्यक्त्वाऽर्थ एवात्र चिन्त्यश्शङ्कापनुत्तये॥ ६६॥

माऽस्तु व्यवहारात्प्राकट्यसिद्धिः। अनुमानेनैव तत्साधयाम इति वदन्तं प्रत्याचष्टे—**आधत्त** इत्यादि। **धीः**=ज्ञानम् **क्रियात्वात्**=धात्वर्थत्वात् **किमपि** विशेषम् **कर्मणि आधत्ते**=स्वविषये जनयति, **गमनवत्**=गमनक्रियावत्। 'ज्ञानम् स्वकर्मणि किञ्चिदतिशयाधायकम्, क्रियात्वात्, गमनक्रियावत्' इति प्रयोगः। गमनक्रिया हि कर्मणि ग्रामे संयोगाख्यमतिशयं जनयतीति संप्रतिपन्नम्। अतः ज्ञानस्यापि 'जानाति' इति धात्वर्थत्वात् ज्ञानं विषये कञ्चन धर्ममापादयति। स एव ज्ञातता, प्राकट्यमित्यादिशब्दैरभिधीयत इति पूर्वपक्षः। तदेतन्निराकंरोति **इत्यप्ययुक्तमिति**। तत्र हेतुः—**दत्तानेकोत्तरत्वात्** इति। इष्टानिष्टप्रणष्टादिषु व्यभिचारस्य दर्शितत्वात्। किञ्च—हानोपादानस्थले **हानादिमात्रात्**=केवलात् हानादुपादानाद्वा **अधिकं फलं न च भाति**। क्रियाया अन्तिमं फलं हानमुपादानं वा। उपादत्ते इत्यत्र कथञ्चित् कर्मणि अतिशयस्य वक्तुं शक्यत्वेऽपि 'शोकं जहाति' इत्यत्र शोके कीदृशोऽतिशयो वक्तुं शक्यते। अतः क्रियाजन्यफलशालित्वं संभवस्थलाभिप्रायेण, न तु सर्वत्र। किञ्च— 'क्रियात्वात्' इत्यत्र किं नाम क्रियात्वम्? केवलं धात्वर्थत्वमात्रत्वम्, उत स्पन्दनरूपत्वम्? आद्ये **हेतुः धात्वर्थता चेत्**=धात्वर्थत्वमात्रं चेत्, **अतिचरणम्**= व्यभिचारः। 'घटोऽस्ति' इत्यत्रास्तित्वं सिद्धमेव। सत्त्वमेवातिशयश्चेत् 'घटे सत्त्वमस्ति' इति प्रयोगे का गतिः? **अथ**=अथवा द्वितीये **स्पन्दता**, तदा असिद्धिः स्यात्, न हि ज्ञानं स्पन्दनरूपम्। एवं सत्यपि **कैश्चित् अस्मत्सयूथ्यैः**=अस्मदेकदेशिभिः **धीस्वारस्यानृशंस्यात्**=आपाततो ज्ञायमानार्थस्य त्यागानौचित्यात् प्राकट्यम् **अधिकम्**=अतिरिक्तम् **अनुमतम्**=अङ्गीकृतम्॥

'अनुभूतिः अनन्याधीनस्वधर्मव्यवहारा, स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्' इति श्रीभाष्यम्। अत्र 'अनुभूतिः अनन्याधीनस्वधर्मा, स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वात्' इत्येकमनुमानम्। 'अनुभूतिः अनन्याधीनस्वव्यवहारा, स्वसंबन्धादर्थान्तरे तद्व्यवहारहेतुत्वात्' इति द्वितीयमनुमानम्। प्रथमानुमाने 'तद्धर्महेतुत्वात्' इत्यनेन विषये प्राकट्यरूपधर्महेतुत्वं ज्ञानस्याङ्गीकृत्य प्रयोगः। द्वितीये तदनङ्गीकृत्य प्रयोगः। एवं परस्परविरुद्धौ पक्षौ कथं संभवेताम्? अतः प्रथमानुमानमभ्युपगमवादरूपम्। द्वितीयं तु स्वमतम्। न च वैपरीत्यं किं न स्यादिति शङ्क्यम्, सिद्धान्ते ज्ञानस्य स्वयंप्रकाशत्वात्। प्राकट्यपक्षे ज्ञानस्य

**[इच्छादयो ज्ञानपरिणामाः]**

**428. इच्छाद्वेषप्रयत्नाः सुखमितरदपि ज्ञानतो नातिरिक्ताः**
**या धीस्तद्धेतुरिष्टा, न तदधिकतया कल्पने कोऽपि लाभः ।**
**पर्यायत्वं विशेषे न तु भवति, यथा प्रत्यभिज्ञादिभेदे**
**नो चेत्, ईर्ष्याभ्यसूयाभयधृतिकरुणाद्यन्यदन्यच्च कल्प्यम् ॥ ६८ ॥**

**[रागद्वेषादीनां कल्पितत्वनिरासः]**

**429. चेतःस्त्रोतस्स्रुतीनां चिदवधिकतया चैत्तसङ्केतभाजां**
**रागद्वेषादिकानामभिदधतु कथं भावमस्थेमभावाः ।**

---

नित्यानुमेयत्वप्रसङ्गात् । एवं प्रमेयसौक्ष्म्यमजानद्भिः कैश्चित् प्राकट्यं सिद्धान्तेऽपि संमतमित्यभिहितम् । ज्ञानस्वप्रकाशत्ववादे तु प्राकट्यं ज्ञानेनैवान्यथासिद्धमिति भाव्यम् ॥

नेत्रे निमील्य सर्वत्र चिन्त्योऽर्थः केवलं बुधैः । न शक्नुवन्ति ये त्वेवं ते त्यजन्तु विचारणाम् ॥
हन्त! पश्य गृहं वापि गृहिणीं वा सुतानपि । संत्यक्तुं प्रभवन्तीति दृष्टं ख्यातेरपेक्षया ॥
कथमेवं ख्यात्यपेक्षा नृणामिति विचिन्तय । अत्रैव वर्तते किञ्चिद्रहस्यं परमाद्भुतम् ॥
तज्जानाति नरो यस्तु ज्ञातं तेनाखिलं रहः । जितं तेन जगत्सर्वं शान्तिश्चापि स्वयं भवेत् ॥ ६७ ॥

बुद्धिनिरूपणानन्तरं क्रमप्राप्तान् सुखादीन् निरूपयति—**इच्छे**त्यादि । **इच्छाद्वेषप्रयत्नाः**, तथा **सुखतदितरदपि**=सुखदुःखे अपि **ज्ञानतः**=ज्ञानापेक्षया **न अतिरिक्ताः**, किन्तु ज्ञानस्यैवावस्थाविशेषाः । कुतः? **या धीः**=यादृशं ज्ञानम् **तद्धेतुः**=तेषां कारणतया **इष्टा**=संमता **तदधिकतया**=तदतिरिक्ततया कल्पने=इच्छादीनां कल्पने **कोऽपि लाभः न,** प्रत्युत गौरवाधिक्यम् । 'तद्धेतोरेव' इत्यादिन्यायस्य जागरूकत्वात् । ननु तर्हि सुखेऽपि ज्ञानपदप्रयोगः स्यात् इति चेत्—**प्रत्यभिज्ञादिभेदे यथा, विशेषे** सुखादौ **पर्यायत्वम्**=ज्ञानपदस्य पर्यायत्वम् **न तु भवति** । ज्ञानमिति सामान्यशब्दः, सुखमिति विशेषशब्दः । उभयोः घटकलशवत् कथं समानता स्यात्? यथा प्रत्यभिज्ञायास्सविकल्पकरूपत्वेऽपि सविकल्पकपर्यायत्वं नास्ति, तथा । **नोचेत्**=एवमनङ्गीकारे **ईर्ष्याभ्यसूयाभयधृतिकरुणादि** एवम् **अन्यत् अन्यच्च** वीर्यशौर्यादिकम् अनन्तम् **कल्प्यम्** भवेत् । अतः सुखादयो ज्ञानस्यावस्थाविशेषा एव, नातिरिक्ताः ॥

ननु प्रत्यभिज्ञा ज्ञानमिति सर्वे जानन्ति, व्यवहरन्ति च । न चैवं सुखं दुःखं वा तथा कश्चिद्व्यवहरति । सामान्यविशेषशब्दयोस्तु सामानाधिकरण्यं दृष्टम् 'द्रव्यं घटः' इत्यादाविति चेत्, परिणामपरिणामिनोः यत्र लेशतो वा प्रत्यभिज्ञा दृश्यते, तत्रैवैवं व्यवहारः स्वरसः, न तु सर्वत्र । यथा फेनबुद्बुदतरङ्गानां समुद्रपरिणामत्वेऽपि 'समुद्रस्तरङ्गः' इति न कदापि प्रयोगः, किन्तु 'समुद्रस्य तरङ्गः' इत्येव । एतादृशं शतसहस्रं वर्तते, अत्रैव **विवर्तवादस्यावकाशः**, अवतारश्चेत्यादिकं बहुवारं गतम् ॥ ६८ ॥

एवं सुखादीनां ज्ञानावस्थारूपत्वे वैभाषिकवादाद्भवतां को विशेषः? इति शङ्कामपनुदति—**चेत** इत्यादि । **चेतस्स्त्रोतस्स्रुतीनां**=चित्तपरिणामप्रवाहरूपाणाम् **चिदवधिकतया**=विज्ञानधातुपरिणामरूपतया,

**एतेषां हेतुसाध्यतक्रमनियतिमतां सर्वचित्साक्षिकाणां**
**कथ्येतातथ्यभावे कथमिव कथकद्वन्द्वयुद्धावतारः ॥ ६९ ॥**

**[इच्छाया नानारूपत्वम्]**

**430. तत्रेच्छैव द्विधोक्ता विषयनियमतो रागविद्वेषनाम्ना**
**पूर्वस्तीव्रस्तु कामः पर इह भजते तादृशः क्रोधसंज्ञाम्।**
**एकैवेच्छा सिसृक्षा भगवत उदिता संजिहीर्षेति चान्यैः**
**तद्वल्लोके न किं स्यात्; अधिकमिह तु चेत् कल्प्यतेऽतिप्रसक्तिः ॥ ७० ॥**

कार्यस्य कारणं हि पूर्वावधिः, **चैत्तसङ्केतभाजाम्**='चैत्तम्' इति संज्ञावताम् **रागद्वेषादिकानाम्**=इच्छाद्वेषादिकानाम् **कथं भावम्**=कथमेत एकस्यैवावस्थाविशेषा इति रहस्यम् **अस्थेमभावाः**=क्षणिकत्ववादिनः **अभिदधतु**। न कथञ्चिदपि वक्तुं शक्यम्। वैभाषिकाः खलु बौद्धाः पदार्थान् बाह्यान्तरविभागभिन्नान् प्रथमं वदन्ति। तत्र बाह्यं भूतभौतिकभेदभिन्नम्। आन्तरं तु चित्तचैत्तभेदेन भिन्नम्। चित्तमिति क्षणिकविज्ञानसन्ततिरुच्यते। तत्परिणामाः रागद्वेषादयः सुखदुःखादयश्च चैत्तशब्देनोच्यन्ते। एवञ्च भवतां तेषां च को भेदः? इति प्रश्नः। सत्यमिदं यद्यपि। परन्तु तेषां विज्ञानं प्रतिक्षणं भिन्नम्। एकत्वे एकस्यैवायं परिणाम इति वचनमर्थवत्। पूर्वक्षणं विनश्य नूतनं क्षणान्तरमुत्पद्यत इति पक्षे परिणामः कथमुपपादयितुं शक्यः? अतस्तत्पक्षे एकस्येमे परिणामा इति शब्दमात्रम्। वस्तुस्थैर्यवाद एव परिणामस्संगच्छेत। तर्ह्येषां वास्तविकतैव नास्तीति वदाम इत्यत्र—**हेतुसाध्यक्रमनियतिमताम्**=व्यवस्थितकार्यकारणभावक्रमवताम् **सर्वचित्साक्षिकाणाम्**=सर्वानुभवसिद्धानाम् **एतेषाम्**=रागद्वेषादिकानाम् **अतथ्यभावे**=मिथ्यात्वे **कथकद्वन्द्वयुद्धावतारः**=कथकानाम्=वादिनाम् द्वन्द्वयुद्धप्रसक्तिः कथमिव **कथ्येत**? ननु भोः!

कथं वाऽयं वदेदेवं कवितार्किककेसरी?। आत्मानं वादयुद्धादिशूरं प्रकटयन्नपि॥
सत्यं तत्र न जानासि पृच्छस्येवं ततो बत। कथं वदन्ति सन्तोऽपि रामं युद्धविशारदम्॥
रामरावणयोर्भेदं त्वं न जानासि तत्त्वशः। एनयोरन्तरं यावत् तावत्स्यात्प्रकृतेऽपि च॥
वेदप्रामाण्यरक्षार्थमवतीर्णोऽयमुच्यते। बौद्धानां पुनरुत्थानं संरुरोध गुरुस्त्वयम्॥
तदीयचरितं सम्यग्जानतां सत्यमत्र हि। स्वयं भायात्तदासीत् किमित्याद्यं सुविचार्यताम्॥ ६९ ॥

मानवस्य प्रवृत्तिषु सर्वत्रेच्छैव रूपभेदेन मूलकारणमिति प्रदर्शयति रागादिजयार्थम्—**तत्रेत्यादि**। **तत्र**=एवं इच्छादीनां ज्ञानपरिणामरूपत्वे **इच्छैव विषयनियमतः**=विषयवैलक्षण्येन **रागविद्वेषनाम्ना**=इच्छा द्वेषश्चेति **द्विधा उक्ता** तद्रहस्यज्ञैः। **तीव्रः पूर्वस्तु**=रागः **कामः** इत्युच्यते संसारिणाम्। अथवा **तीव्रस्तु कामः पूर्वः**=**राग** उच्यते। वस्तुतः कामापेक्षया रागो हेयः। 'धर्माविरुद्धो भूतेषु कामोऽस्मि' (गी.7-11) इति हि भगवद्वचनम्। 'योऽकामो निष्काम आप्तकाम आत्मकामः'(बृ.6-4-6) इति श्रुत्या आत्मकामो धर्मः, आत्मव्यतिरिक्तकामस्त्वधर्मः, अयमेव च रागः पुरुषविकारहेतुः। **इह परः**=द्वेषः **तादृशः**=तीव्रः **क्रोधसंज्ञां भजते**। कथमेवमेकैव नानाविधेत्युच्यत इत्यत्र—**भगवतः एकैवेच्छा**

**[प्रयत्नस्यावश्यकता]**

**431. इच्छातः कार्यसिद्धौ किमिह यतनमित्यन्तरा कल्प्यतेऽन्यत्;**
**तन्मोघत्वोपलब्धेरिति यदि, यतने कल्पितेऽप्येतदेवम्।**
**मैवं; व्यावर्तमानादनुगतमधिकं वर्ण्यते मानविद्भिः;**
**वाञ्छन्तोऽपि ह्ययत्ना वयमिह पवनस्पन्दनेन्दूदयादौ ॥ ७१ ॥**

---

**सिसृक्षा**=स्रष्टुमिच्छा **संजिहीर्षा**=संहर्तुमिच्छा, इदं रिरक्षाया अप्युपलक्षकम्, **इति च अन्यैः**=तार्किकैः **उदिता**। 'ईश्वरस्य सिसृक्षाबलात् परमाणुषु क्रियया द्व्यणुकाद्युत्पत्तिः। तथैव संजिहीर्षाबलात् क्रियया परमाणूनां विश्लेषात् जगन्नाशः' इत्यादिकं तैरुक्तम्। **ईश्वरस्यैवं चेत्**, तद्वत् लोके किं न स्यात्? **इह अधिकं कल्प्यते चेत् अतिप्रसक्तिः**=अतिप्रसङ्गः, बुभुक्षापिपासादिकमपि भिन्नं भिन्नं भवेत्। वस्तुतस्तु—

अभुञ्जानं हि बालं स्वं माता ताडयति क्रुधा। धनिकानां कोपतापं लुब्धो हि सहते सदा॥
कोपप्रीत्यादिकानां तु निष्कर्षो दुष्करो नृणाम्। आपातदृष्टिमात्रेण न भवेन्निर्णयस्त्विह॥
विवेकी सकलं ज्ञात्वा निर्लिप्तस्सुखमेधते। अविवेकी पथभ्रष्टस्सदा दुःखी भवेन्नरः॥ ७० ॥

ननु रागादिकं यदीच्छाया रूपान्तरम्, प्रयत्नोऽपीच्छाविशेष एवास्तु, लाघवात् इति वदन्तं प्रत्याह—**इच्छात इत्यादि**। **इच्छातः**=इच्छयैव **कार्यसिद्धौ अन्तरा**=मध्ये=इच्छाफलयोर्मध्ये **यतनमिति अन्यत्**=अतिरिक्तं यत्नाख्यं **किमिह कल्प्यते?** अभिमतस्य कार्यस्य निष्पत्तौ दृश्यमानायाम्, किमर्थोऽतिरिक्तः कल्प्यः? 'तद्धेतोरेव तद्धेतुत्वे' इत्यादिन्यायस्य जागरूकत्वात्। प्रत्युत—**तन्मोघत्वोपलब्धेः**= प्रयत्नस्य वैफल्यं सदा दृश्यते बहुषु कार्येषु। अतो व्यभिचारात् फलप्रयत्नयोर्न कार्यकारणभावः। न चेच्छायामपीदं समानमिति शङ्क्यम्, इच्छायामनौत्कट्यस्यैव वैफल्यप्रयोजकत्वात्। इच्छा उत्कटा चेत्, सिद्धमेव फलमित्येव दर्शनात्। ननु नैतद्युक्तम्, तन्मोघत्वोपलब्धेः=उत्कटाया इच्छाया अपि वैफल्यदर्शनात् **इति यदि**=इति चेत्, **यतने**=प्रयत्ने कल्पितेऽपि **एतत्**=वैफल्यम् **एवम्**=दृष्टमेव। एवञ्च **'भक्षितेऽपि लशुने न शान्तो व्याधिः'** इति न्यायेनाधिकप्रयत्नाकल्पनमेव वरमिति चेत्, **मैवम्**। कुतः? **मानविद्भिः**= प्रमाणतत्त्वज्ञैः **व्यावर्तमानात्**=व्यतिरेकात् 'प्रयत्ने सत्यपि फलाभावः' इति व्यतिरेकादपि **अनुगतम्**=अन्वय एव **अधिकम् वर्ण्यते**। अथवा—**व्यावर्तमानात्**=यत्ने कृते फलाभावापेक्षया **अनुगतम्**=यत्ने कृते फलम्, अकृते तु न फलम् इत्येव प्रमाणविन्निश्चयः। 'यत्न एव यदि न क्रियते, तर्हि कथं फलम्?' इत्येव कथनात्। अन्वयव्यभिचारस्तु सामग्र्यन्तराभावप्रयुक्तः इत्यपि स्पष्टम्। तदेतदाह—**इह**=जगति **वयम् पवनस्पन्दनेन्दूदयादौ**=वायुचलनचन्द्रोदयादौ **वाञ्छन्तोऽपि**=अपेक्षावन्तोऽपि **अयत्ना हि**=तदर्थप्रयत्नशून्या एव हि। घर्मपीडितो वायुस्पन्दनमत्यन्तमपेक्षते। रात्रौ प्रकाशमपेक्षमाणः चन्द्रोदयमपेक्षते। अकस्माद्वायुस्पन्दो भवति, तद्वदेव चन्द्रोदयोऽपि भवति। अत्र प्रयत्नाभावेऽपि सामूहिकन्यायात् इष्टप्राप्तिः। यदा च पवनो न स्पन्दते स्म, चन्द्रो नोदेति स्म, तदा व्यजनेन वायुं प्राप्नोति, प्रदीपेन प्रकाशं प्राप्नोति। एवञ्च फलसिद्धिर्द्वेधा

[जीवनयोनिप्रयत्नपरीक्षा]

432. **प्राणस्पन्दः सुषुप्तिप्रभृतिषु घटते तादृशादृष्टमात्रात्**
**यत् त्वं यत्ने निदानं वदसि, भवतु तल्लाघवात् प्राणवृत्तौ।**
**धीवृत्तिश्चैव यत्नः स्थित इति स कथं काष्ठकल्पे सुषुप्ते**
**नो चेत्; बाह्यानलादेर्ज्वलनमपि ततः कल्प्यतां; न त्वदृष्टात्॥ ७२॥**

[दुःखाभावमात्रं न सुखम्]

433. **स्यात् दुःखाभावमात्रं सुखमभिदधतो वैपरीत्यप्रसक्तिः**
**स्वापादौ दुःखसिद्धिर्न यदि, सुखमपि ह्यत्र नैवास्ति तादृक्।**

---

परस्परविलक्षणा दृश्यते। अत एव प्रयत्नस्वरूपमपि सर्वैः स्पष्टं ज्ञायते। अत उत्कटेच्छातः प्रयत्नोऽतिरिक्त एव। ननु तर्हि अत्युत्कटेच्छा प्रयत्नोऽस्त्विति चेत्, न, इच्छा त्वत्यन्तमान्तरा, प्रयत्नस्तु बाह्यव्यापारपर्यन्त इति तयोः स्वरूप एव वैलक्षण्यदर्शनात्। एतदुपर्यपि यदि पृच्छसि, उक्तमेवोत्तरं बहुधा (जीव.9)॥

एतादृशविचारेषु व्यर्थो वेदान्तिनां श्रमः। बहुकालात्पूर्वमेव मर्यादातिक्रमो ह्यभूत्॥
अद्यापि तत्प्रवाहो हि दृश्यते विदुषां बत! शिष्याधीनास्तु गुरवः ब्रूयुस्तन्मतिवृद्धये॥ ७१॥

जीवनयोनियत्न इति कश्चिदुच्यते वैशेषिकैः। अदृष्टेनायमन्यथासिद्ध इत्याह—**प्राणस्पन्दे**त्यादि। **सुषुप्तिप्रभृतिषु**=सुषुप्त्याद्यवस्थासु **प्राणस्पन्दः**=प्राणसञ्चारः **तादृशादृष्टमात्रात्**=जीवनादृष्टविशेषादेव **घटते**=युज्यते। **यत्ने**=जीवनयोनियत्ने **यत्**=यादृशमदृष्टविशेषम् **निदानम्**=कारणम् त्वम् **वदसि**, **तत्**=तदेवादृष्टम् **प्राणवृत्तौ**=प्राणव्यापारे **निदानं भवतु, लाघवात्**='तद्धेतोरेव तद्धेतुत्वे' इत्यादिन्यायेनातिरिक्ताकल्पनेन लाघवसद्भावात्। किञ्च—**यत्नश्च**=यत्नाख्यो गुणः **धीवृत्तिरेव**=बुद्धेरेवावस्थाविशेष इति **स्थिते**=इत्यनुपदमेव स्थापिते **सः**=यत्नविशेषः **काष्ठकल्पे**=बुद्धिशून्ये **सुषुप्ते** पुरुषे **कथं** भवेत्? **नो चेत्**=एवमनङ्गीकारे **बाह्यानलादेः**=लोके अग्न्यादेः **ज्वलनमपि ततः**=तदनुगुणयत्नादेव **कल्प्यताम्, अदृष्टात्**=अदृष्टविशेषात् **न तु** कल्प्यताम्। क्रियायाः प्रयत्नाधीनत्वनियमात् प्राणस्पन्दनं प्रयत्नाधीनं चेत्, अग्नेर्ज्वलनस्यापि क्रियात्वात् तद्धेतुतया प्रयत्नः कल्प्यताम्। अग्नेरूर्ध्वज्वलनमदृष्टकारितमिति तेषां सिद्धान्तः। एवञ्च जीवनयोनियत्नोऽतिरिक्तो नास्त्येव॥ ७२॥

ननु यदि जीवनयोनियत्नोऽदृष्टेनान्यथासिद्धः, तर्हि सुखमपि दुःखाभावेनान्यथासिद्धमित्याशङ्क्य समाधत्ते—**स्यादि**त्यादि। **दुःखाभावमात्रमेव सुखम्**=सुखरूपम् **अभिदधतः वैपरीत्यप्रसक्तिः**=सुखाभाव एव दुःखं किं न स्यात्? **स्वापादौ**=सुषुप्त्यादौ **दुःखसिद्धिः—न**। सुखाभावस्य संमतत्वात्, सुखाभाव एव यदि दुःखम्, तर्हि सुषुप्तौ दुःखानुभवो वक्तव्यः। सर्वोऽपि 'सुखमहमस्वाप्सम्' इत्येवानुसन्धत्ते। अतः सुषुप्तौ दुःखाभावात् सुखाभाव एव दुःखं न स्यादिति यदि, तर्हि **अत्र**=सुषुप्तौ **तादृक्**=तत्तादृशम् **सुखमपि नैवास्ति हि**। अतः दुःखाभावमात्रं न सुखं भवेत्। 'सुखमहमस्वाप्सम्' इत्यपि आत्मस्वरूपविषयः।

**शीतोष्णातीतनीतेर्द्वितयसमधिकावस्थितिर्दुस्त्यजाऽतः**
**तत्तच्छब्दप्रयोगेष्वनियतिरुचितैः संघटेतोपचारैः ॥ ७३ ॥**

**[मुक्तिर्नदुःखाभावरूपा]**

434. **भेदस्त्रेधा मतीनां ह्युपधिनियमितैरानुकूल्यादिधर्मैः**
**तस्यैवात्यन्तहानेर्निरुपधिकसुखस्तादृशो धीविकासः ।**
**निस्सीमब्रह्मतत्त्वानुभवभवमहाह्लाददुग्धार्णवेऽस्मिन्**
**निश्शेषैश्वर्यजीवानुभवरसभरो बिन्दुभावोपलभ्यः ॥ ७४ ॥**

**[सांसारिक सुखस्वरूपम्]**

435. **संसारे नास्ति किञ्चित् सुखमिति कतिचित्; तद् घटेतोपचारात्**
**नो चेत्, व्युत्पत्तिहीनं सुखपदमधिकं तत्सुखं नाभिदध्यात् ।**

---

**अतः शीतोष्णातीतनीतेः**=न शीतम्, नापि उष्णम्, उभयातिरिक्तं किञ्चित् अनुष्णाशीतमिति न्यायात् **द्वितयसमधिका**=सुखदुःखविलक्षणा उदासीनत्वरूपा **अवस्थितिः**=अवस्थाविशेषः **दुस्त्यजः** । एवं सति—**तत्तच्छब्दप्रयोगेषु**=दुःखाभावे सुखव्यवहारो वा सुखाभावे दुःखव्यवहारो वा **उचितैः**=तत्तत्पुरुष-समयाद्यनुगुणैः **उपचारैः**=उपचाररूपैः **संघटेत** । तादृशव्यवहारा औपचारिकाः । अतः सुखम्, दुःखम्, तटस्थतेति तिस्रोऽवस्था अनिवार्याः ॥ ७३ ॥

सुखस्य केवलदुःखाभावरूपत्वासंभवं प्रकारान्तरेण विशदयति—**भेद** इत्यादिना । **उपधिनियमितैः**= कर्मरूपोपाधिभिः व्यवस्थापितैः **आनुकूल्यादिधर्मैः**=आनुकूल्यप्रातिकूल्यौदासीन्यरूपावस्थाभिः **त्रेधा हि** =त्रिविधो हि **भेदः मतीनाम्**=चेतनबुद्धीनाम् अनुभवसिद्धः । **तस्य**=तादृशोपाधेः **अत्यन्तहानेरेव**= संपूर्णनाशादेव **तादृशः**=अनिर्वचनीयः **धीविकासः**=बुद्धेर्विकासः **निरवधिकसुखः**=अवधिशून्यसुखस्वरूपो भवति । अयमेव मुक्तिरुच्यते । **अस्मिन् निस्सीमब्रह्मतत्त्वानुभवभवमहाह्लाददुग्धार्णवे**= निस्सीमं यत् ब्रह्मतत्त्वम्, तस्यानुभवेन जातः यः महाह्लादः=महानानन्दः, तादृशेऽस्मिन् परमानन्दसागरे **निश्शेषैश्वर्यजीवानुभवरसभरः**=चतुर्मुखैश्वर्यपर्यन्तस्यैश्वर्यस्य, कैवल्यरूपजीवस्वरूपानन्दानुभवस्य चानुभवेन जायमानानन्दातिशयः **बिन्दुभावोपलभ्यः**=बिन्दुवदुपलभ्यो भवेत् । कैवल्यानन्दस्य ब्रह्मानन्दस्य च तारतम्यं तादृशं ग्राह्यम् । ब्रह्मानन्दानुभवो नाम कः? धर्मभूतेन ज्ञानेन ब्रह्मानन्दस्य विषयीकरणं वा? ब्रह्मस्वरूपस्य विषयीकरणं वा? अन्यचेतनगतानन्दस्यान्येन विषयीकरणं कथम्? अविभागाधिकरणस्य विषयः कः? कश्चाभावाधिकरणस्य? इत्यादिकं पूर्वमेव (जीव.61) विस्तरेण विचारितम् ॥ ७४ ॥

बुद्धेनोपदिष्टेषु चतुर्षु "सर्वं क्षणिकम्, सर्वं दुःखम्, सर्वं स्वलक्षणम्, सर्वं शून्यम्" इति मूलतत्त्वेषु, जगतस्सर्वस्यापि दुःखरूपत्वप्रतिपादनात् जगति सुखं नास्त्येव । अनुभूयमानं तु सुखाभासमात्रमिति बौद्धा वदन्ति । तदेतद्विमृशति—**संसार** इत्यादि । **संसारे**=अस्मिन् जगति **सुखमिति**

**तस्मात् दुःखोत्तरत्वप्रभृतिभिरिह तद्दुःखमित्युक्तमाप्तैः**
**क्ष्वेलोपश्लेषदुष्टे मधुनि विषमिति व्याहृतिः किं न दृष्टा ॥ ७५ ॥**

**[धर्माधर्मयोः स्वरूपम्]**

436. **धर्मोऽधर्मश्च तत्तत्फलकरणतया शास्त्रसिद्धं क्रियादि**
**द्वारं त्वेतस्य कालान्तरनियतफले स्यादिहादृष्टमन्यत् ।**

**किञ्चित्**=सुखपदवाच्यं किञ्चिद्वस्तु **नास्ति इति कतिचित्**=बौद्धाः, **आहुरिति** शेषः । **तत्**=एवं कथनम् **उपचारात्**=औपचारिकतया **घटेत** । संसारे दुःखस्याधिक्यात् तथा व्यवहारः । औपचारिकमिति वक्तव्यं चेत्, कुत्रचित् व्यवहारे मुख्ये सत्येव संभवेत् । तयोः परस्परसापेक्षत्वात् । **नो चेत्**=एवमनङ्गीकारे **अधिकं सुखपदम्**='सुखम्' इत्येकं प्रत्येकपदमेव **व्युत्पत्तिहीनम्**=बोधकशक्तिहीनम् **तत्**=सुखपदम् **सुखम्**=सुखाख्यमर्थम् **न अभिदध्यात्**=न बोधयेत्, शक्तेरेवाग्रहात् । शक्तं हि पदम् अर्थबोधकम् । 'सुखं नास्ति' इति निषेधे कर्तव्ये हि प्रतियोगिवाचकसुखपदेन बोध आवश्यकः, अभावबुद्धिं प्रति प्रतियोगिबुद्धेरावश्यकत्वात् । ननु विवेकिनस्सर्वेऽपि संसारस्य दुःखरूपत्वमेव मन्यन्ते । योगसूत्रमपि 'दुःखमेव सर्वं विवेकिनः' (पा.यो.सू.2-15) इति । किं बहुना! 'सर्वं दुःखान्धकारस्थगितम्' (जीव.26) इति हि त्वयाप्युक्तम् । कथमेवं 'सुभगाभिक्षुक' न्यायः । इति चेत्, तत्राह—**तस्मादित्यादि**। संसारस्य केवलदुःखरूपत्वासंभवात् **दुःखोत्तरत्वप्रभृतिभिः**=दुःखे पर्यवसानादिना **तत्**=जगत् **दुःखमिति आप्तैः**=प्रामाणिकैरपि उक्तम् । 'ये हि संस्पर्शजा भोगाः दुःखयोनय एव ते'(गी.5-22) इति त्वाह जगत्स्रष्टैव । अत्र च दुःखस्य योनय इति दुःखोत्तरत्वमुच्यते । दुःखं योनिः येषामिति विग्रहेण दुःखपूर्वत्वमपि विवक्षितम् । अतिपरिश्रमादिसाध्यं किल गृहारामादि सुखम् । अथापि मध्ये किञ्चिदिव सुखं वर्तत एव ॥

यद्यपि भट्टजयन्तः आभासरूपमपि सुखमस्त्येवेति बहुप्रयत्नेन साधयति (न्या.मं.2 आह्निक) प्रत्यक्षलक्षणस्थाव्यभिचारिपदप्रयोजनविचारावसरे । अथापि आभासप्रतिकोटिभूतः समीचीनोऽपि कश्चिदावश्यक एव । सद्धेतोरेवाभावे हेत्वाभासाः कथं स्युः? अतोऽस्त्येव लेशतस्सुखं संसारेऽपि । अत एव किलास्माभिरपि 'सर्वं दुःखान्धकारस्थगितम्' इत्येतावन्मात्रं नोक्तम् । 'सुखं त्वत्र खद्योतकल्पम्' इत्यपि तत्रैव सहैवोक्तम् । सर्वत्रैकदेशग्राहिणा त्वयैव नावधृतम् । किं बहूक्त्या! 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ.6-3-32) इत्यपौरुषेयी वाक् ब्रह्मानन्दकणरूपत्वं लौकिकसुखस्य वदति । वयमप्यत एव 'खद्योतकल्पम्' इत्यवोचाम । अतस्संसारस्य दुःखत्वकथनमौपचारिकमेव । तत्र दृष्टान्तः **क्ष्वेलेत्यादि** । **क्ष्वेळेन**=विषेण **उपश्लिष्टं**=मिश्रितम् अत एव—**दुष्टम्**=प्राणहारि, तादृशे **मधुनि**=मधुप्रभृतिषु **विषमिति** व्याहृतिः=**किं न दृष्टा,** एतावदपि न जानासि किल! अतः सांसारिकसुखमत्यल्पम्, दुःखपूर्वम्, दुखोदर्कं च । अथापि लेशतस्सत्त्वादेव मूढाः शलभा इव तत्र पतन्ति ॥ ७५ ॥

क्रमप्राप्तयोः धर्माधर्मयोः स्वरूपं विमृशति—**धर्म** इत्यादि । **तत्तत्फलकरणतया**=तरतमभावापन्नविविधेष्टानिष्टफलसाधनतया **शास्त्रसिद्धम्**=शास्त्रम्=शासनम् लिङर्थविधिरूपम् । तेन सिद्धम्

**आहुस्तत् केचिदन्तःकरणपरिणतिं; वासनां चेतसोऽन्ये**
**पुंधर्मं केचिदूचुः विभु किमपि परे; पुद्गलांस्तत्सयूथ्याः ।। ७६ ।।**

'चोदनालक्षणोऽर्थो धर्मः' इत्युक्तम् **क्रियादिः** धर्मः, अधर्मश्च भवति । आदिपदेन 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इति वार्तिकोक्तं द्रव्यादिकमपि ग्राह्यम् । धर्माधर्मौ द्रव्यादिवस्तुगताविति मीमांसकाः, पुरुषगताविति नैय्यायिकाः । **द्रव्यातिशयवादः, पुरुषातिशयवाद** इति एतद्वादद्वयं न्यायकुसुमाञ्जलौ प्रथमस्तबके विस्तरेण विचारितम् । वस्तुतस्तु पुरुषातिशयवाद एव वैज्ञानिकः, चैतन्याश्रयत्वात्पुरुषस्य ।।

चैतन्यतत्त्वं दिव्यं हि ज्ञानिभिः परिकीर्तितम् । तस्य प्रभावं कार्त्स्न्येन वेत्तुं कोऽर्हति तत्त्वशः ।।

**एतस्य**=क्षणिकस्य क्रियादेः **कालान्तरनियतफले**=कालान्तरभाविस्वर्गादिरूपव्यवस्थितफले **द्वारम्**=द्वारतया वर्तमानम् **अदृष्टं तु**=अदृष्टपदवाच्यं तु **इह**=एतच्छास्त्रे **अन्यत्**=परमात्मानुग्रहनिग्रहरूपं स्यात् । **केचित्**=सांख्याः **एतस्य**=फलस्य **द्वारम् तत् अन्तःकरणपरिणतिम्**=बुद्धिरूपस्य अन्तःकरणस्य परिणामविशेषम् **आहुः** । **अन्ये**=बौद्धाः **चेतसो वासनां** तत् आहुः । **केचित्**=नैयायिकाः **पुंधर्मम्**=पुरुषधर्मम् तत् आहुः। **एके** जैनाः **विभु किमपि** तत्त्वान्तरम् तत् आहुः । **तत्सयूथ्याः परे**=जैनैकदेशिनोऽन्ये तत् **पुद्गलान्**=पुद्गलशब्दवाच्यानाहुः । ईश्वरसङ्कल्पविशेष एवायमिति तत्त्वविदां संप्रदायः इति सर्वार्थसिद्धिः । अत्रापि वक्तव्यं सर्वं पूर्वमेवोक्तम् (जीव.19) ।।

सर्वेषामपि जीवानां सकलविधाभ्युदयनिःश्रेयसकारणभूतौ धर्माधर्मौ, अतीन्द्रियौ, अदृष्टपदवाच्यौ तत्तज्जीवगतौ गुणौ । न तावन्मात्रम्, तावेतौ जगत्सृष्टेः कारणभूतावित्यपि अङ्गीकृतौ । तावेतौ पुण्यपाप-पदाभ्यामप्युच्येते । कार्यकारणयोः सामानाधिकरण्यनियमात् जीवात्माश्रितावेतौ । परं तु 'फलमत उपपत्तेः', (ब्र.सू.3-2-37) इत्यत्र वेदान्तिभिः ब्रह्मण एव सर्वफलप्रदत्वस्थापनात्, **'तेन विना तृणाग्रमपि न चलति'** इति न्यायेन धर्माधर्मादीनामपि फलप्रदत्वं तत्संकल्पाधीनमेव । श्रीभाष्येऽपि 'अनभिज्ञो भवान् पुण्या-पुण्यकर्मस्वरूपयोः' (श्रीभा.2-2-3) इत्यादिना वेदान्तदृष्ट्या भगवन्निग्रहानुग्रहरूपे पुण्यापुण्ये इति प्रति-पादितम् । अतिरिक्तकारणकल्पने गौरवादिति भावः । परं तु स्मृतिहेतुः संस्कारो धर्मभूतज्ञानस्यावस्थाविशेषः तस्यावश्यकता अग्रे(श्लो.103) प्रदर्श्यते । तद्वत् धर्माधर्मावतिरिक्तगुणौ न, किन्तु धर्मभूतज्ञानस्यावस्थाविशेषौ तावित्यत्रैव तात्पर्यम् । अन्यथा हि लौकिकः व्यवहारः कार्यकारणभावश्च कुत्रापि न स्यात् । वस्तुतस्तु—

सर्वं ब्रह्मेति पश्यन्ति महात्मानस्तु तादृशाः । तेषां दृष्टिस्त्वन्यथा स्यात्सर्वत्रैव न संशयः ।।
लौकिको व्यवहारः स्यादन्यथैव न संशयः । सांकर्यं नैव कर्तव्यं वृथा चर्चादिकारणम् ।।
सर्वत्रापि च शास्त्रेषु लौकिकश्च परीक्षकः । द्वावेतावनिवार्यौ तौ सर्वेषामपि शास्त्रिणाम् ।।
तत्राप्यवान्तरा भेदाः स्युर्नैवास्त्यत्र संशयः । भवेयुर्व्यवहाराश्च विविधा नैव संशयः ।।
न किञ्चिदपि कुत्रापि प्रतितिष्ठेत तर्हि किम् । सर्वस्यापि तु मर्यादा काचिदस्ति विजानतः ।।
योऽसङ्कीर्णां वेत्ति सर्वां मर्यादां कुशली स हि । निर्वृतः सुखमेधेत योगयुक्तो न संशयः ।।

**[धर्माधर्मौ शास्त्रैकगम्यौ]**

**437. तुल्ये सेवादिहेतौ फलभिदुरतया साध्यते चेददृष्टं**
**हेतोः सूक्ष्मोऽस्तु भेदो, न खलु समुचिता धर्मिणोऽन्यस्य क्लृप्तिः ।**
**व्याख्यातं यत्तु बाह्यैर्विषयसमफलप्रापकत्वं क्रियाणां**
**तत् सूतेऽतिप्रसक्तिं, तदिह न निगमादन्यतोऽदृष्टसिद्धिः ॥ ७७ ॥**

**[शास्त्रीयहिंसाविमर्शः]**

**438. निस्संकोचान्निषेधात् क्वचन फलतयाऽनूदितांहस्तु हिंसा**
**रुन्धे सामान्यमङ्गे विधिरनुमितिरप्यत्र बाधादिदुःस्था ।**

अमर्यादो भवेत् क्षुद्रः सर्वदोषभाजनम् । भाजनं सर्वदुःखस्य इहामुत्र न संशयः ॥
**व्यवहारे न्यायनयः** यतो लोकायतस्स हि । तदेवाश्रितमाचार्यैः बहुधा दर्शितं च तत् ॥
शास्त्रज्ञानं बहुक्लेशमित्याद्युक्तं महर्षिभिः । भारो महान् शास्त्रिणां हि शस्त्रिणां च न संशयः ॥
भारमेतदविज्ञाय पराक्रान्तं यथातथम् । बहुभिः, तत्कृतो नाशः सर्वत्रापि विजृम्भितः ॥ ७६ ॥

धर्माधर्मयोः शास्त्रसिद्धत्वमाक्षिप्य समाधत्ते—**तुल्य** इत्यादि । 'सेवाध्ययनतुल्यत्वे दृष्टा हि फलविक्रिया' इति **कुमारिल**वार्तिकमनुवदति—**सेवादिहेतौ**=गुरुसेवादीनां हेतूनाम् **तुल्ये**=समानत्वेऽपि **फलभिदुरतया**=विद्याप्राप्तिरूपफलवैलक्षण्येन **अदृष्टम्**=धर्माधर्मादि साध्यते चेत्, अनुमीयते चेत्, **हेतोः**=गुरुसेवादेः शिष्ययोग्यतादेश्च **भेदः**=तारतम्यरूपविशेषः **सूक्ष्मः**=स्थूलबुद्ध्यगम्यः **अस्तु**=फलभेदे कारणमस्तु । **अन्यस्य**=अतिरिक्तस्य **धर्मिणः**=वस्तुनः **क्लृप्तिः**=कल्पनम् **न खलु समुचिता**—**'धर्मिकल्पनातो वरं धर्मकल्पना'** इति न्यायेन दृष्टकारणेष्वेव सूक्ष्मं तारतम्यं कल्प्यताम् । न त्वतिरिक्तमदृष्टाख्यं कारणं कल्पनीयम् । अतो दृष्टेनैवान्यथासिद्धेः अदृष्टं शास्त्रैकगम्यम्, न त्वनुमेयम् ॥

**बाह्यैः**=सौगतादिभिः **क्रियाणाम्**=स्थूलानां क्रियाणामेव **विषयसमफलप्रापकत्वम्**=क्रियाया विषयः=उद्देशः यादृशः सुखरूपो वा दुःखरूपो वा फलं तदनुगुणं भवतीति क्रियाणामेव फलहेतुत्वमिति **यत्तु व्याख्यातम्, तत् अतिप्रसक्तम्**=अल्पश्रमेणापि महत्फलदर्शनात्, महता परिश्रमेणापि अल्पफलस्याप्यदर्शनात् व्यभिचरितम् । **तत्**=तस्मात् **इह अदृष्टसिद्धिः**=अतीन्द्रियधर्माधर्मसिद्धिः **निगमात्**=वेदात् **अन्यतो न,** अतो धर्माधर्मयोः वेद एव प्रमाणम् ॥ ७७ ॥

ननु धर्माधर्मयोः श्रुतिरेव चेत्प्रमाणम्, 'अग्नीषोमीयं पशुमालभेत' 'श्येनेनाभिचरन् यजेत' इत्यनयोस्तारतम्यं न स्यात्, उभयोरपि श्रुतिविहितत्वादिति चेत्, तत्राह—**निस्संकोचादित्यादि । निस्संकोचात्** निषेधात्='न हिंस्यात्सर्वभूतानि' इति अविशेषेण हिंसायास्सर्वस्या अपि निषेधात् **क्वचित्**=श्येनयागादौ **फलतया**=श्येनयागफलत्वेन **अनूदिता,** न तु विहिता, फले विध्यसंभवात्, साधनस्यैव तत्संभवात्, **हिंसा तु**=शत्रुहिंसा तु **अंहः**=पापमेव । **अङ्गे**=यागाङ्गतया विहिते **अङ्गे विधिः**='अग्निषोमीयं

**स्वल्पो दोषो विमृष्टे सुपरिहर इह क्रत्वनुग्राहके स्यात्**
**इत्युक्तं सांख्यसक्तैः; पशुहितवचनान्नेति शारीरकोक्तम् ॥ ७८ ॥**

पशुमालभेत' इति हिंसाविधिः **सामान्यम्**=सामान्यविधिम् **रुन्धे**=प्रतिबध्नाति । **अत्र**=अग्नीषोमीयादि-हिंसायाम् **अनुमितिरपि**=हिंसात्वेन पापत्वानुमानमपि **बाधादिदुःस्था**=विहितत्वात् बाधितत्वादिदोषग्रस्ता । **क्रत्वनुग्राहके**=क्रत्वङ्गभूते **इह**=हिंसायाम् **दोषः**=पापम् **स्वल्पः**=फलापेक्षया न्यूनः । **विमृष्टे**=विमर्शे च **सुपरिहरः**=प्रायश्चित्तादिना परिहर्तुं शक्यश्च स्यात् इति **सांख्यसक्तैः**=सांख्यमतनिष्ठैः उक्तम् । किन्तु **पशुहितवचनात्**=पशोः=आलब्धस्य पशोः हितप्राप्तिवचनात् **न**=न हिंसा पशुवधः इति **शारीर-कोक्तम्**=शारीरकशास्त्रे ब्रह्ममीमांसायाम् 'अशुद्धमिति चेन्न शब्दात्'(ब्र.सू.3-1-25) इत्यत्रोक्तम् ॥

**अत्रेत्थं विचारधारा**—सामान्यतः प्राणिहिंसाविषय एव बहु वक्तव्यमस्ति । स चात्राप्रकृतः । एतदर्थं महाभारते वनपर्वणि **धर्मव्याधकथा** (अध्या.210-218) समग्रतस्सावधानमध्येया । यागीयपशुहिंसा-विषयेऽपि सन्ति पक्षभेदाः । वैदिकेष्वपि सूक्ष्माशयभेदो वर्तते । सारतः कथने सांख्यप्रक्रिया, योग(शुद्धवैदिक) प्रक्रियेति भेदो वर्तते । सांख्यप्रक्रियायां तु 'न हिंस्यात्सर्वभूतानि' इति निषेधस्य 'अग्नीषोमीयं पशुमालभेत' इति विधेश्च भिन्नविषयकत्वान्न विरोधः । पशुवधजन्यपापाक्षेया, यागजन्यफलस्यातिमहत्त्वात् सह्यं तत्पापम्, अथवा प्रायश्चित्तादिना परिहर्तुं शक्यम् । 'ओदनकामः पचेत्' इत्युक्ते, पाकजन्यः क्लेशः ओदनरूपफलापेक्ष-याल्पत्वात् यथा सह्यः तथा प्रकृतेऽपि । वैदिकप्रक्रियायामपि पक्षद्वयं वर्तते, एका **श्रौतिनाम्**, अपरा **पूर्वमीमांसकानाम्** । श्रौतिनस्तु अग्नीषोमीयपशोः संज्ञपनं न हिंसा, यतः रुग्णस्य शल्यचिकित्सावत् तस्य सद्गतिहेतुत्वम् । अत एवायमध्वर इत्युच्यते । ध्वरो नाम हिंसा । न ध्वरः यत्र, सोऽध्वरः इति व्युत्पत्तेः इति **यास्कनिरुक्तवृत्तौ दुर्गाचार्यैः** प्रतिपादितम् । **भगवद्रामानुजै**रप्ययमेव पक्ष आदृतः । तथोक्तम् 'अशुद्धमिति चेन्न शब्दात्' (ब्र.सू.3-1-25) इति । यज्ञकर्म अशुद्धम्, पशुहिंसारूपपापमिश्रितत्वादिति चेत्, न । शब्दात्=तस्य हिंसात्वाभावप्रतिपादकशब्दादित्यर्थः । पूर्वमीमांसकास्तु उत्सर्गापवादन्यायेन हिंसासामान्यनिषेधः, विहितव्यतिरिक्तविषयः सङ्कोचनीय इत्याहुः । श्रीशङ्कराचार्या अप्येवमेवाहुः ॥

**पाञ्चरात्रिकास्तु** 'कुर्याद्घृतपशुं संख्ये कुर्यातिपिष्टपशुं तथा । न त्वेव तु वृथा हन्तुं पशुमिच्छे-त्कदाचन ॥' (मनु.) इति स्मृत्या प्रत्यक्षपशुवध एव पापाय, न तु तत्प्रतिनिधिभूतपिष्टपशुसंज्ञपन इति पिष्टपशुयज्ञ एव वैष्णवानामिति वर्णयन्ति । अग्निष्टोमादीनां नित्यकर्मत्वेन विहितत्वात्पापप्रसक्तिरेव नास्तीति वैदिकानां प्रत्यक्षपशुयाग एवोपादेयः, न तु पिष्टपशुयाग इति **परे** । 'अजसंज्ञानि बीजानि' इति **गोपथब्राह्मणे** अजशब्दस्य बीजधान्यपरत्वविवरणात्, पिष्टपशुरेव श्रौतः, न प्रत्यक्षपशुरित्य**र्वाचीन-वैदिकाः** । आध्यात्मविज्ञानमूलकत्वात्सर्वस्य, सर्वमिदमधिकारिभेदान्नेतव्यमित्यन्ये । अधिकमन्यत्र ज्ञेयम् ॥

एतादृशो विचारस्तु नाद्य श्रेयस्करो भवेत् । यतो हि यज्ञविज्ञानं नष्टप्रायं तु मन्महे ॥
भारते तूपरिचरवसूपाख्यानमद्भुतम् । अध्येयं धर्ममर्मज्ञैर्नाधिकं वक्तुमीश्महे ॥
चिन्तासाफल्यमान्द्यादिन्यायस्तु स्मर्यतामिह । विरमामो वयमपि वृथाशब्दविवर्धनात् ॥ ७८ ॥

[धर्माधर्मनिर्णयेऽनुमानं न पर्याप्तम्]

439. सिध्येद्वा विश्ववृत्तेरनितरफलतास्थापनाद्यैरदृष्टं
तत्सत्त्वज्ञप्तिमात्रात् तदुचितनियतानुष्ठितिर्नैव सिध्येत्।
तस्मात् चर्याविशेषे श्रुतिरिह शरणं स्वर्गमोक्षादिहेतौ
सैवादृष्टस्वरूपं प्रथयतु बहुधा तत्तदुक्ताद्विविक्तम्॥ ७९ ॥

[कल्प्यापूर्ववादः,अदृष्टस्थाने शक्तिः न कल्प्या]

440. शक्तिर्यागादिकस्य स्वफलवितरणे, संभवे वा फलस्य
स्थाप्या मध्ये तयोरित्यबहुमतिपदं सत्सु तौताततिती वाक्।
शक्ताभावे हि शक्तिर्न भवति; शमितो धर्मधर्म्यैक्यजल्पः
तद्द्वारे शक्तिशब्दो यदि, भवतु; परं क्लृप्तिमस्य क्षिपामः॥ ८० ॥

'न निगमादन्यतोऽदृष्टसिद्धिः' (77) इत्युक्तं विवेचयति—**सिद्ध्येदित्यादि**। **विश्ववृत्तेः**= विवेकिनः प्रवृत्तेः **अनितरफलतास्थापनाद्यैः**=प्रकारान्तरेण साफल्यासंभवप्रतिपादनाद्यैः हेतुभिः 'विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा' (न्या.कु.1-1) इत्याद्यैः न्यायाचार्येण परमास्तिकेनोदयनेन प्रतिपादित-रीतिभिः। **अदृष्टम्**=अलौकिकं किञ्चित्साधनं **सिद्ध्येद्वा,** तावतापि नेष्टसिद्धिः। कुतः? **तत्सत्ताज्ञप्ति-मात्रात्**=सामान्यतः तादृशादृष्टसत्तासाधनमात्रेण **तदुचितनियतानुष्ठितिः**=तत्तत्फलोचितव्यवस्थित-साधनानुष्ठानप्रक्रियादिः तावतैव **नैव सिद्ध्येत्**। **तस्मात्**=सामान्यतो दृष्टानुमानेन साधनसामान्यसिद्धावपि विशेषस्य तेनासिद्धेः **स्वर्गमोक्षादिहेतौ**=स्वर्गमोक्षादिसाधनभूते **इह चर्याविशेषे**=आचरणीयक्रियादौ **श्रुतिरेव शरणम्**=गतिः। एवं सति **सैव**=श्रुतिरेव **बहुधा**=नानाप्रकारेण **तत्तदुक्तात्**=तत्तद्वादिभिः उक्तात् **विविक्तम्**= विलक्षणम् **अदृष्टस्वरूपम्**=अलौकिकश्रेयस्साधनस्य स्वरूपम् **प्रथयतु**=प्रकाशयतु। वृथा युक्त्यन्वेषण-श्रमः किमर्थः? वस्तुतस्तु नैयायिकानामप्येतावदेव संमतम्। विशेषनिर्णयः वेदादेवेति तेषामपि निर्णयः। 'मन्तव्यः' इत्युक्तमननप्रकार एवायमिति तत्रैव ग्रन्थारम्भेऽभिहितम्॥ ७९ ॥

नैय्यायिकेषु तार्किकभावनया श्रद्धातिशयात् प्रदर्श्यतामौदासीन्यम्। परमवैदिकं **कुमारिलं** कथ-मुपेक्षसे? इत्यत्राह—**शक्तिरित्यादि**। **यागादिकस्य**=क्षणिकक्रियारूपयागादेः **स्वफलवितरणे**=स्वर्गादि-फलदाने वा **फलस्य**=स्वर्गादेः **संभवे वा**=उत्पत्तौ वा **शक्तिः**=साधने यागे, साध्ये स्वर्गे च तत्तदनुगुणा शक्तिः **तयोः**=यागस्वर्गयोः **मध्ये**=व्यापारत्वेन स्थाप्या इति **तौताततिती वाक्**=कौमारिली वाक् **सत्सु**= ब्रह्मवित्सु **अबहुमतिपदम्**=बहुमानविषयो **न**। 'अ'इति नञर्थकमव्ययं भिन्नपदं वा। कुतः? **शक्ताभावे**= शक्तेराधारस्याभावे **शक्तिः न भवति,** यागः क्षणिकत्वान्नष्टः, स्वर्गो भावित्वान्नास्त्यद्य, कुत्र तिष्ठेत् शक्तिः? ननु शक्तिशक्तिमतोरभेदात् शक्तेराश्रयोऽपि सूक्ष्मरूपेण वर्ततैवेति चेत्—**धर्मधर्म्यैक्यजल्पः**=धर्मधर्मिणो-रभेदवादः **शमितः**=पूर्वमेव बहुधा समाहितः। **तत्**=तस्मात् **द्वारे**=फलसाधनयोर्मध्यवर्तिनि कुत्रचित् **यदि शक्तिशब्दः, भवतु**। **परम्**=परं तु **अस्य**=मध्यवर्तिनः **क्लृप्तिम्**=कल्पनाम् **क्षिपामः**=निराकुर्मः,

**[अदृष्टं देवताप्रीतिरूपम्]**

**441. द्वारं तत्तत्फलाप्तेः श्रुतिभिरवधृतौ देवताप्रीतिकोपौ**
**व्याचक्रे देवपूजा यजनमिति; न तन्न श्रुतं वाक्यविद्भिः ।**
**आम्नातेऽपेक्षितेऽर्थे न च नयनिपुणैरश्रुतं कल्पनीयं**
**नो चेत्, स्यात् दत्ततोयाञ्जलिरिह भवतां रात्रिसत्रादिनीतिः ॥ ८१ ॥**

**[मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यम्]**

**442. आराध्यादिप्रकाशः स्फुटमुपकुरुते मन्त्रसाध्ये विधीनां**
**प्राशस्त्यादिप्रतीतिर्न च भवति मृषावर्णनैरर्थवादैः ।**

---

श्रुतिसिद्धत्वात् किमर्थं कल्पना? ननु न वयं कल्पयामः । यागस्य फलहेतुत्वं कथमित्यत्र द्वारमावश्यकम् । द्वारमेव शक्तिपदवाच्यं चेत् 'भवतु' इत्यङ्गीकारानन्तरं चर्चा का? इति चेत्, भवदुक्ता शक्तिः न द्वारं भवेत्, तस्य स्वतन्त्रपदार्थत्वासंभवस्य, अद्रव्यत्वस्य चानुपदं वक्ष्यमाणत्वात् (श्लो.98) । तद्द्वारं कीदृशमित्येव विचारोऽनुवर्तते समनन्तरश्लोके ॥ ८० ॥

धर्माधर्मयोरन्तिमं निष्कृष्टं रूपं प्रदर्शयति—**द्वारमित्यादि** । **तत्तत्फलाप्तेः**=तत्तफलप्राप्तेः **देवताप्रीतिकोपौ**=तत्तद्देवताप्रीतिकोपावेव **द्वारम् श्रुतिभिः**='स एवैनं भूतिं गमयति' इत्यादिश्रुतिभिः **अवधृतौ**=निश्चितौ । **यजनम्**=यागादिः **देवपूजा इति व्याचक्रे**=व्याकरणमपि प्रादर्शयत् । 'यज देवपूजा ...' इति हि धातुः । **वाक्यविद्भिः**=वाक्यशास्त्रज्ञैः=मीमांसकैः **तत्**=व्याकरणम् **न न श्रुतम्** । मीमांसापेक्षया व्याकरणं हि साक्षाद्वेदाङ्गम् । तत्कथं मीमांसकैरज्ञातं स्यात्? एवं सति **नयनिपुणैः**=वाक्यन्यायविद्भिर्मीमांसकैः **अपेक्षितेऽर्थे आम्नाते**=वेदेनैव सिद्धे सति **अश्रुतम्**=वेदानुक्तम् **न च कल्पनीयम्** । **नो चेत्, इह**= एतद्विषये **भवताम्**=मीमांसकानामेव **रात्रिसत्रादिनीतिः** =रात्रिसत्रन्यायादिः **दत्ततोयाञ्जलिः**=संपूर्णतः परित्यक्तः **स्यादित्युपहासः** ॥

'विश्वजिता यजेत' इति विश्वजिद्यागोत्पत्तिविधिः । फलं तु न श्रूयते । अतः किं फलं तस्य? इति संशये पशुपुत्रादिदृष्टफलं न वक्तुं शक्यम्, अश्रुतत्वादेव । अतः 'स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात्' (जै.सू.4-3-13) इति सर्वेषामप्यपेक्षितः स्वर्ग एव तत्फलतया कल्पयितुं युक्तः इति सिद्धान्तितम् । अस्य विश्वजिन्न्याय इति नाम । एवमन्यो न्यायः रात्रिसत्रन्यायः (जै.सू.4-3-16) । 'तिस्रो रात्रीरुपयन्ति' इति कर्मविधिः । फलं न श्रुतम् । किं फलमिति संशये 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यर्थवादोक्ता प्रतिष्ठैव फलमिति सिद्धान्तितम् । तस्य फलस्यार्थवादिकत्वेऽपि, अश्रुतकल्पनापेक्षया श्रौतफलकल्पना वरमिति न्यायात् । अतः बुद्ध्या शक्त्यादिद्वारकल्पनापेक्षया 'स एवैनं भूतिं गमयति' इत्यर्थवादसूचितार्थाङ्गीकरणमेव वरम् । अतो देवताप्रीतिकोपावेव धर्माधर्मौ ॥ ८१ ॥

मन्त्रार्थवादयोः देवतापरत्वाङ्गीकारेऽपि वाक्यभेददोषाप्रसक्तिं वर्णयति—**आराध्येत्यादिना** । **मन्त्रसाध्यः**=मन्त्रप्रतिपाद्यः **आराध्यादिप्रकाशः**=तत्तत्कर्माराध्यदेवताप्रकाशनम्, **आदिपदेन** क्षेपिष्ठत्वादि-

**सत्येऽप्याकाङ्क्षितेऽर्थे तदुभयगमिते वाक्यभेदादि न स्यात्**
**लोकेऽप्येवं हि दृष्टं; तदनुगतिमुचां सर्वशास्त्रप्रकोपः ॥ ८२ ॥**

**[देवता न शब्दस्वरूपाः]**

443. **बुद्धिर्मन्त्रार्थवादैर्भवति दृढतरा देवतातद्गुणादौ**
**बाधश्चातीन्द्रियेऽक्षैर्न हि भवति; धियां मानता च स्वतो नः ।**
**दुःखासंभिन्नदेशादिकमिव फलदा देवता तत्रतत्र**
**प्राप्या च श्रूयतेऽतः कथय कथमियं शब्दमात्रादिरूपा ॥ ८३ ॥**

---

गुणप्रकाशनम् **विधीनाम्**=कर्मविधीनाम् **स्फुटम्**=स्पष्टम् **उपकुरुते**=उपकरोत्येव । प्राशस्त्ये यथोपकरोति, तथैव देवतास्वरूपगुणवर्णनादावप्युपकरोत्येव । एवं मन्त्रेष्वपि प्रयोगसमवेतार्थस्मारकत्वाङ्गतयैव स्वार्थेऽपि तात्पर्यवन्ति भवन्तु । नन्वेवं सत्युभयविधाने वाक्यभेदापत्तिरिति चेत्, प्राशस्त्यशेषतयैव देवतावैभवप्रकाशनात्, उभयविधानाभावात् । अर्थवादवाक्यानामर्थशून्यत्वे स्तुतिनिन्दाविभागस्यैव कर्तुमशक्यत्वात् । रुद्ररोदन-वाक्यानां निन्दारूपत्ववर्णनात् । अधिकं **सेश्वरमीमांसादौ** । अन्ततः 'अप्राप्ते तु विधीयन्ते बहवोऽप्येक-यत्नतः' इत्याद्यपवादभूयिष्ठे शास्त्रे किमधिकविचारेण । वस्तुतस्तु देवतातत्त्वं परमरहस्यमयमेव । अतोऽत्र वृथाविचारो वर्जनीय एव ॥

विषयस्यानुरोधेन शब्दा योज्या विचक्षणैः । शब्दानुरोधी नार्थः स्यात्, शब्दस्त्वर्थानुगो भवेत्॥

तदिदमाहाचार्यः—**मृषावर्णनैः**=मिथ्यावर्णनरूपैः **अर्थवादैः प्राशस्त्यादिप्रतीतिः**=प्राशस्त्यस्य निन्दाया वा प्रतीतिः **न च भवति**=न हि भवितुमर्हति । **आकाङ्क्षिते अर्थे**=अत्यन्तापेक्षिते अर्थे **तदुभयगमिते**=मन्त्रैः अर्थवादैश्च बोधिते **सत्येऽपि** वाक्यभेदादिदोषोऽपि **न स्यात्** । **लोकेऽपि हि एवं दृष्टम्**='इयं गौः बहुक्षीरा' इत्यादिवाक्येष्वपीदमेव दृष्टम्, अवयवार्थोऽपि विवक्षितः समुदायार्थोऽपि विवक्षितोऽत्र । लोकशास्त्रयोर्न कश्चन संबन्ध इति वदतां मौढ्यं प्रदर्शयति—**तदनुगतिमुचाम्**=लोकवृत्त-तस्कराणाम् **सर्वशास्त्रप्रकोपः**=सार्वशास्त्रमप्यर्थहीनमेव **स्यात्** । लोकशास्त्रयोर्विप्रतीपगामित्वंमन्यै-स्तूष्णीमेव स्थातव्यं भवेत् ॥ ८२ ॥

देवता न चेतनः, किन्तु शब्द एवेति वादं निराकरोति—**बुद्धि**रित्यादि । मन्त्रार्थवादैः देवता-प्रतिपत्तिर्न भवतीत्यत्र किं कारणम्? किं तैर्बोध एव न भवति? उत जायमानो बोधः संशयरूप इति? अथवा निश्चयरूपत्वेऽपि बाधितो भवति? अबाधितत्वेऽपि प्रामाण्यं नास्ति? इति । आद्यद्वयं निराकरोति—**मन्त्रार्थवादैः**=मन्त्रैः अर्थवादैश्च **देवतातद्गुणादौ**=देवतायाः तदीयस्वरूपस्वभावादिविषये च **दृढतरा**=अप्रकम्प्या **बुद्धिः**=ज्ञानम् **भवति** । **दृढतरा** इत्यनेन द्वितीयविकल्पनिरासः । तृतीयं समाधत्ते—**अतीन्द्रियेऽर्थे बाधश्च अक्षैः**=इन्द्रियैः **नं हि भवति** । चतुर्थस्योत्तरम्—**नः**=अस्माकम् **धियाम्**=ज्ञानानाम् **मानता**=प्रामाण्यम् **स्वतः** । ननु प्रामाण्यस्य स्वतस्त्वेऽप्यनन्तरं प्रमाण्यसंशयसंभवस्याभ्युपगतत्वात् ज्ञाने जातेऽपि

[देवतानां फलप्रदत्वेऽनुपपत्तिपरिहारः]

**444. प्राचीनेन्द्राद्यपाये दिशतु कृतफलं को नु कल्पान्तरादौ?**
**अन्ये तत्तत्पदस्था न तदुपजनकाः प्रागनाराधितत्वात्।**
**मैवं; यस्य श्रुतिश्च स्मृतिरपि नियतादेशरूपे, स एकः**
**सर्वाराध्यान्तरात्मा न हि गलितपदो नापि सुप्तस्तदाऽपि ॥ ८४ ॥**

---

को लाभ इति चेत्, वेदवाक्यजन्यत्वात् नात्र संशयावकाशः । तर्हि पण्डितानां वैदिकानामेव कथं परस्परं विवाद इति चेत्,

श्रद्धत्स्व सौम्य! तद्वाक्यं स्वैरं मा पृच्छ, मा मुहुः । एवं भर्त्सनमात्रेण बुद्धिः खलु न तृप्यति ॥
गहनं देवतातत्त्वम् न तावत्सुगमं नृणाम् । यथा जनास्तु मन्यन्ते, न फलं व्यर्थचर्चया ॥
प्रज्ञावतां तु सकलं भाति गम्भीरमद्भुतम् । ततोऽद्भुतं बालिशानां सकलं सुगमं ह्यभूत्! ॥

प्रतिबन्दीमप्याह—**'दुःखासंभिन्नदेशादिकमिव'** इति । 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम् ॥' इत्यर्थवादस्य स्वार्थविवक्षाप्यङ्गीक्रियते भवद्भिरेव । एवमेव **तत्र तत्र देवता फलदा, प्राप्या च श्रूयते** । 'स एवैनं भूतिं गमयति' इति फलप्रदत्वम्, 'तत्तत्सायुज्यमाप्नोति' इति देवताप्राप्तिश्च कथ्यत एव । अतः **इयम्**=देवता **शब्दमात्रादिरूपा कथम्? कथय** । आदिपदेन शब्दातिरिक्तः प्रत्यक्षदृष्टोऽग्निरेवेति पक्षो गृह्यते । आधिभौतिकमन्यत्, आधिदैविकं चान्यत् । अतो भौतिकाग्निरेव देवतेत्यपि न, शब्द एव देवतेत्यपि न । उभयातिरिक्ता चेतनरूपान्या देवता । अथवा शब्दर्थयोरभेदभावनया तथोच्यताम् ॥ ८३ ॥

देवतानां फलप्रदत्वे कल्पभेदेन तेषामागमापायित्वात् कथमाश्वास इत्याक्षिप्य समाधत्ते—**प्राचीने**त्यादि । **प्राचीनेन्द्राद्यपाये**=प्राचीनानां=पूर्वकल्पे स्थितानां इन्द्रादीनां निवृत्तत्वे **कृतफलम्**=कृतस्य कर्मणः फलम् **कल्पान्तरादौ**=अनन्तरकल्पादौ **को नु**=को वा **दद्यात्?** पूर्वमाराधितस्य नष्टत्वात्। नूतनस्यानाराधितत्वात् । एतदेवाह—**अन्ये**=नूतनतया आगता ये इन्द्रादयः तत्तत्पदस्थाः, **प्रागनाराधितत्वात्**=पूर्वमाराधितेन्द्रभिन्नत्वेन पूर्वकृतकर्मणा अनाराधितत्वात् । **तदुपजनकाः**=पूर्वकृतकर्मफलप्रदातारः **न**=न भवितुमर्हन्ति । इति चेत् **मैवम्** । कुतः? **श्रुतिश्च**=वेदश्च **स्मृतिश्च यस्य भगवतः नियतादेशरूपे**=अनुल्लङ्घनीयाज्ञारूपे, 'श्रुतिः स्मृतिः ममैवाज्ञा' इति वचनात्, **सः**=तादृशः **एकः सर्वाराध्यान्तरात्मा**=आराध्यानां सर्वेषामपि देवतानाम् अन्तरात्मरूपः परमात्मा **तदापि**=मन्वन्तरेऽपि **गलितपदः**=भ्रष्टाधिकारः **न हि, सुप्तः नापि** । 'यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः । शेषवृत्तिविधाने तु किं सुप्तस्सोऽथवा मृतः ॥' इति प्रमाणमनुस्मरन् 'मृतः' इति वक्तुमनिच्छन् 'गळितपदः' इत्याहाचार्यः ॥

जानतां सृष्टिनियमम् नियन्तारं च माधवम् । नैवंविधास्तु प्रश्नाः स्युः सृष्टिविज्ञानमीदृशम् ॥ ८४ ॥

[परमात्मना देवतानां नान्यथासिद्धिः]

445. **अस्त्वेवं कर्मवर्गे स्वयमिह फलदो हव्यकव्यैकभोक्ता**
**तन्निघ्नैस्तैः किमन्तर्गडुभिरिति च न; स्वोक्तिबाधप्रसक्तेः ।**
**कर्माराध्यत्वमेषां दिशति फलमसौ पूर्वमाराधितस्तैः**
**श्रद्धेयाः श्राद्धभोक्तृद्विजवदत इमे निर्जरास्तस्य देहाः ॥ ८५ ॥**

[अङ्गकर्मणां फलजनकत्वप्रकारः]

446. **विश्वेशाकूतभेदव्यवहितफलदे वैधघण्टापथेऽस्मिन्**
**संस्काराणां गतार्था सरणिरपि तथा मन्त्रणप्रोक्षणद्यैः ।**

---

यदि परमात्मैव भारवाही, तर्हि मास्तु मध्ये देवता इत्याशङ्क्य समाधत्ते—**अस्त्वित्यादि** । **एवम्**= उक्तरीत्या **हव्यकव्यैकभोक्ता**='हव्यकव्ये दैवपित्र्ये' इति कोशः । **तद्धोक्ता**='अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।' (गी.9-24) इत्यादिप्रमाणात् परमात्मा **इह कर्मवर्गे स्वयं फलप्रदः अस्तु**, अतिरिक्ताः देवताः किमर्थाः? **तन्निघ्नैः**=परमात्माधीनैः **अन्तर्गडुभिः**=गडुः कुब्जः=असमर्थः तस्य मध्ये स्थापितैः तादृशैः तैः देवैः अजागळस्तनप्रायैः **किम्? इति च न युक्तम्** । कुतः? **स्वोक्तिबाधप्रसक्तेः**= स्ववचनविरोधप्रसङ्गात् । हव्यकव्यपदप्रयोगं कृत्वा एवं प्रश्नः विरुद्ध इत्यर्थः । हव्यकव्यभोक्तेति परमात्मैवास्माभिर्निर्दिष्टः भगवद्वचनानुरोधेनेत्यत्र, अभिप्रायं विवृणोति—**पूर्वम्**=पूर्वस्मिन् कल्पे **तैः**= तत्तच्चेतनैः **आराधितः असौ**=परमात्मा **एषाम्**=इन्द्रादिदेवानाम् **कर्माराध्यत्वम्**=तत्तन्मानवकृतकर्मभि-राराध्यत्वम्, तदनुगुणफलप्रदशक्तिरूपं च **फलं** दिशति । **अतः तस्य**=परमात्मनः **देहाः**=देहरूपाः परमात्मनस्सर्वान्तर्यामित्वेन तद्देहरूपाः **इमे निर्जराः**=देवाः **श्राद्ध-भोक्तृद्विजवत्**=पितृप्रीत्यर्थं निमन्त्रित-ब्राह्मणानां भोजनेन पित्रादिप्रीतिवत् **श्रद्धेयाः**=श्रद्धया स्वीकर्तव्याः । 'स आत्मा । अङ्गान्यन्या देवताः' (तै.शि.) इति श्रुतिरप्यनुसन्धेया॥

पश्यतां सृष्टितत्त्वं वा लोकवृत्तमथापि वा । सुगमं सर्वमेतत्स्यात्, सारः श्रद्धात्र कथ्यते ॥ ८५ ॥

ननु यागादीनां प्रधानकर्मणां तत्तद्देवताः फलप्रदा भवन्तु । व्रीहिप्रोक्षणादिरूपाणामङ्गकर्मणां कीदृश-देवताप्रीतिजनकत्वमिति शङ्कां समाधत्ते—**विश्वेशेत्यादि** । अग्निहोत्रादीनि प्रधानकर्माणि तत्तद्देवताप्रीतिद्वारा तत्तत्फलदानि सन्तु कामम् । 'व्रीहीन् प्रोक्षति' इत्यादीनि अङ्गकर्माणि कस्य प्रीतिं जनयेयुः? किं तत्रापि क्षुद्रा देवतास्सन्ति? उत न? इति विचारे, तानि व्रीह्यादिद्रव्ये अतिशयशक्तिमापादयन्तीति **मीमांसकाः** । अस्य **'आधेयशक्तिवादः'** इति नाम । वह्न्यादौ सहजा शक्तिर्वर्तते । व्रीह्यादिषु प्रोक्षणादिभिश्शक्तिराधीयते इति कथयन्ति । नैयायिकास्तु 'पुरुषातिशयवादिनः' । प्रोक्षणादिसंस्काराः कर्तरि पुरुषे धर्मविशेषमुत्पादयन्तीति वदन्ति । 'संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः' (न्या.कु.1) इत्यत्र **न्यायाचार्यै**राधेयशक्तिवादो निराकृतः । एवं विवादे कथं निर्वाह इति शङ्कां समाधत्ते—**विश्वेशाकूतभेदव्यवहितफलदे**=**विश्वेशस्य**= परमात्मनः आकूतभेदाः=संकल्पविशेषाः । तद्द्वारा फलदातरि **अस्मिन् वैधघण्टापथे**=वेदविहितराजमार्गे

राजेच्छोपात्तभोग्यप्रभृतिनियमवत् तत्र कार्यान्तरादिः
सत्त्वादीनां गुणानां विपरिणतिभिदां तत्फलं केचिदूचुः ।। ८६ ।।

[कर्मणां स्वतःफलदातृत्वासंभवः]

447. कृष्यादौ मर्दनादावपि च न हि परप्रीतिमूला फलाप्तिः
तद्वत् स्याच्छास्त्रसिद्धेष्विति न सत्; अफलं ह्यत्र दृष्टान्तमात्रम् ।
दृष्टौ चाऽऽज्ञानुवृत्तिप्रभृतिषु फलदौ शासितुः प्रीतिकोपौ
शिष्टौ चातस्समीची तदुपगतिरिह; त्यक्तिरिष्टेऽपि वांशे ।। ८७ ।।

**मन्त्रणप्रोक्षणादिभिः**=अभिमन्त्रणप्रोक्षणादिभिः आधीयमानानां **संस्काराणाम् सरणिरपि**=रीतिरपि **तथा**=तादृशपरमात्मसंकल्पेनैव **गतार्थाः**=व्याख्यातप्रायाः । ननु ईश्वरेच्छयैव सर्वं स्याच्चेत्, प्रोक्षितव्रीहीणामप्रोक्षितव्रीहीणां चाविशेषे, अप्रोक्षितव्रीहिभिः पुरोडाशकरणमापद्येत, व्रीहिषु विशेषाभावादिति शङ्कां समाधत्ते सदृष्टान्तम्—**राजे**त्यादि । तत्र प्रोक्षणादिस्थले **कार्यान्तरादिः**=उपरिकर्तव्यावहननपुरोडाशकरणादिकार्यक्रमाः **राजेच्छोपात्तभोग्यप्रभृतिनियमवत् भवेयुः** । राजा स्वपरिवारेभ्यः तत्तत्स्वरूपानुगुणं भोग्यवस्तूनि=गृहवाहनादीनि व्यवस्थापयति यदा, तदा राजेच्छाया व्यतिक्रमणं न केनापि चिन्तितुमपि शक्यम् । न हि तत्र राजाज्ञया गृहादिषु कश्चनातिशयो जायते । एवं प्रकृतेऽपि शास्त्रोक्तक्रमेणैव सर्वं कर्तव्यमिति नियमोऽपि ईश्वरसंकल्परूप एव । अतो न काप्यनुपपत्तिः । **केचित्**=द्रव्यातिशयवादिनः केचित्तु सयूथ्याः **सत्त्वादीनां गुणानाम्**=सत्त्वरजस्तमोगुणानाम् **विपरिणतिभिदाम्**=परिणामविशेषम् **तत्फलम्**=प्रोक्षणादिफलम् **आहुः**। प्रोक्षणेन व्रीहिषु सत्त्वगुणाधिक्यम् । एतत् अप्रोक्षितव्रीहिषु नास्तीति तैः पुरोडाशो न कर्तव्य इति व्यवस्थासिद्धिरिति तेषामाशयः । परन्तु सत्त्वादीनामतीन्द्रियत्वेन, नूतनतयैतत्कल्पनापेक्षया मीमांसकमतमेव वरम् । वस्तुतस्तु सर्वत्र परमात्मसंकल्पेनैव निर्वाहेऽतीन्द्रियनूतनकल्पनाया नावकाशः ।। ८६ ।।

ननु कृष्यादौ धान्यादिफलं मध्ये द्वारमन्तरापि दृष्टम् । मर्दनाद्युपचारैः शरीरपीडापरिहारः दृश्यते । औषधसेवया व्याधिनिवृत्तिर्दृश्यते । न ह्येषु मध्ये द्वारं किञ्चिदपेक्ष्यते । तद्वदेव यागादावपि भवत्वित्याशङ्क्य समाधत्ते—**कृष्यादावि**ति । **कृष्यादौ, मर्दनादावपि च फलाप्तिः**=धान्यसुखादिरूपफलप्राप्तिः **परप्रीतिमूला**=अन्यस्य कस्यचित् प्रीत्यादिद्वारा **न हि भवति** । तद्वत् **शास्त्रसिद्धेष्वपि**=शास्त्रविहितेषु यागादिष्वपि **स्यात्**=फलं स्वतो भवतु । **इति न सत्**=न समीचीनम् । **अत्र हि**=प्रकृते हि इदं **दृष्टान्तमात्रम्** उक्तं भवति । न हि दृष्टान्तमात्रात् वस्तुसिद्धिः । 'चिरध्वस्तं फलायालं न कर्म' इति मूलभूतप्रश्नः। दृष्टान्तप्रदर्शनेनायं प्रश्नः न समाहितो भवति । कृष्यादौ च दृष्टा एव कर्षणावापनसेचनरक्षणादिव्यापाराः आधान्यप्राप्ति क्रमशोऽनुवर्तन्ते । मर्दनादावपि दृष्टया क्रियया दृष्टमेव सुखं लभ्यते । औषधादावपि दोषपरिहारेण दृष्टविधयैव व्याधिनिवर्तकत्वम् । न चैवं यागस्वर्गयोर्मध्ये किञ्चिदनुवृत्तं दृश्यते । अतश्च दृष्टान्तदार्ष्टान्तिकयोर्न कोऽपि संबन्धः । ननु च पूर्वं कदाचित् कृतमल्पमुपकारं हृदये स्मरन् राजादिः कालान्तरे फलं ददाति । तत्र न हि मध्ये किञ्चित् द्वारं पश्याम इति शङ्कां इष्टापत्त्या समाधत्ते—

[कार्यलिङर्थवादविमर्शः, वाच्यापूर्ववादः]

448. **प्रध्वस्तं कर्म कालान्तरभवितृफलासाधकं; तल्लिङादेः**
**वाच्योऽर्थः स्थायि कार्यं; न यदि, कथमिवान्वेतु कामी नियोज्यः ।**

**आज्ञानुवृत्तिप्रभृतिषु**=राजाज्ञापरिपालनं वा, अतिक्रमणं वा यत् कृतम्, तत्प्रभृतिषु कर्मसु **शासितुः**=राज्ञः **प्रीतिकोपौ फलदौ दृष्टौ, शिष्टौ च**=तथैव 'स एवैनं भूतिं गमयति' इत्यादिना देवताप्रीतिकोपावपि शास्त्रविहितौ । **अतः तदुपगतिः**=शास्त्रोक्तस्याङ्गीकारः **समीची**=समीचीना । **इह**=भवदुक्तौ शास्त्र-विहितयागादिकमङ्गीकृत्य तस्य फलदातृत्वप्रकारस्य परमनङ्गीकारे **इष्टेऽप्यंशे त्यक्तिर्वा**=त्यागो वा भवेत्= यागादिर्वा त्याज्यो भवेत्, यागमङ्गीकृत्य तस्य फलदातृत्वांशो वा त्याज्यो भवेदिति वा । सेयमर्धजरतीत्यर्थः।।

ननु 'प्रथमवयसि पीतं तोयमल्पं स्मरन्तश्शिरसि निहितभारा नारिकेला नराणाम् । सलिलममृतकल्पं दद्युराजीवितान्तम्' इत्यादौ कथं निर्वाहः? कदाचिद्दत्तस्य जलस्य फलं बहुकालानन्तरं भवति । न हि तत्र मध्ये द्वारं किञ्चित् दृष्टम् । न च तत्रापि मध्ये चेतनोऽस्ति, नारिकेलस्यापि स्थावरचेतनत्वादिति शङ्क्यम्, तस्योपकारस्मरणादीनामप्रसक्तेः । अतस्तत्र द्वारमन्तरापि कर्मणः कालान्तरे फलं दृश्यत इति कर्मणां द्वारं नापेक्षितमिति चेत्, नारिकेलबीजशक्तेरेव तादृशत्वेन=विलम्बेन फलदातृत्वस्य तद्बीजस्वभावत्वात् तत्रापि नारिकेलवृक्षः दृष्ट एव द्वारम्, नान्यदपेक्ष्यम् । यागादिक्रियायास्तु नाशदर्शनात्, जन्मान्तरकल्पान्तर-भाविफलदातृत्वं कथमित्येव प्रकृते प्रश्नः । अत्रापि शक्तिकल्पनं तु 'शक्ताभावेऽपि शक्तिर्न हि भवति' (श्लो.80) इत्यत्रैव समाहितम् । शक्तिः कुत्र तिष्ठेत्? यागस्तु नष्टः, यागशक्तिस्त्वनुवर्तत इति तु न समञ्जसम् । शक्तेः नियमेन शक्ताश्रितत्वात् । न चात्र शक्तिर्नाद्रव्यम्, किन्त्वतिरिक्तं कार्यपदवाच्यं अन्यद्वा किञ्चिदिति चेत्, एतदेतत्समनन्तरश्लोके परीक्ष्यते । आहत्य तु द्रव्यातिशयवादस्त्वत्र व्रीह्यादाविव न संभवति । **पुरुषातिशयवादे** च स पुरुषः अन्ततः परमात्मैवेति स्मर्यताम्।। ८७ ।।

यागस्वर्गयोर्मध्ये द्वारस्यावश्यकत्वेऽपि तद्द्वारमीश्वरप्रीतिकोपौ नेति वदतां निरीश्वरमीमांसकानां मतं विस्तरेण निराचिकीर्षुः प्रथमं **जरन्मीमांसकमतं** विमृशति—**प्रध्वस्त**मित्यादि । **प्रध्वस्तम्**=चिरध्वस्तम् **कर्म**=यागादिरूपं कर्म **कालान्तरभवितृफलासाधकम्**=कालान्तरभाविस्वर्गादिफलसाधकं न भवेत् । अतो मध्ये द्वारं किञ्चित् कल्पनीयमेव । **तत्**=तस्मात् **लिङादेः**=लिङ्लोट्लेट्तव्यप्रत्ययानाम् **वाच्यः अर्थः स्थायि**=स्थिरम् **कार्यम्**=कार्यं नाम अङ्गीकार्यम् । **न यदि**—न चेत् **नियोज्यः**=लिङर्थविध्यन्वयार्हः **कामी**=स्वर्गादिकामनावान् पुरुषः **कथमिव**=कथं वा **अन्वेतु**=अन्वितो भवेत्?

लिङ्श्रवणे कश्चित् कश्चित्प्रेरयतीति सर्वोऽपि जानाति । सा च प्रेरणा लोके प्रेरयितृपुरुषव्यापारः । वेदस्यापौरुषेयत्वेन तथा वक्तुमशक्यत्वात् शब्दनिष्ठोऽतिशयविशेष एव । स एव नियोग-कार्य-अपूर्व-भावनादिशब्दैः तत्तत्काले विद्वद्भिस्संकेतितः । नियोगश्चेदर्थः नियोजकः कश्चित्, नियोज्यः कश्चित्, नियोज्यस्य कार्यं किञ्चिच्च वक्तव्यम् । नियोगः कश्चित्, कस्मिंश्चित्कार्ये, कस्मैचित्फलाय प्रेरयति ।

**तच्चापूर्वं प्रधानं; फलजनकमपि स्यान्नियोज्यप्रसिद्ध्यै**
**नित्ये नैष्फल्यमस्येत्यभिदधुरपरे; तेऽपि निर्धूतकल्पाः ॥ ८८ ॥**

**[लिङर्थस्य प्राधान्यं न युक्तम्]**

449. **कृत्युद्देश्यं सुखादि स्वत इह; न परं स्यादनन्यार्थवेद्यं**
**क्लृप्तिश्चास्यान्यहेतोरपि च परिहृतं तत्परत्वं श्रुतीनाम्।**
**नित्ये चापूर्वतोऽन्यत् फलमनघगिरः सस्मरुर्दुस्त्यजं तत्**
**नो चेत्, स्वस्मिन् नियोगायुतमपि निपुणान्नैव शक्तं नियोक्तुम् ॥ ८९ ॥**

---

'स्वर्गकामनावान् अग्निहोत्रं कुर्यात्' इति वाक्यार्थः। स्वर्गकामनावान् नियोज्यः। कार्यस्य कस्यचिदभावे नियोज्यस्य कुत्रान्वयः स्यात्। अतः कार्यमेव लिङर्थः। तच्च कार्यत्वमतिरिक्तः स्वतन्त्रः कश्चन पदार्थः? न तु लोकदृष्ट्या प्रतीयमानः जन्यत्वादिरूपः। ततश्च यागादेर्नाशेऽपि तज्जन्यं कार्यमेव स्वर्गरूपं परिणमते। अतः यागस्वर्गयोः कार्यकारणभावः सिद्ध इत्याशयः॥

**तच्च**=एतच्च **अपूर्वम्** स्वदृष्ट्या **प्रधानमेव**, 'कृतिसाध्यं प्रधानं यत्, तत्कार्यमभिधीयते' इति वार्तिकम्। **नियोज्यप्रसिद्ध्यै**=राज्ञा स्वभृत्यपोषणन्यायेन कस्यचिन्नियोज्यस्य स्वरूपसिद्धये **फलजनकमपि स्यात्**। नियोज्यस्यालाभे हि नियोगो व्यर्थ एव स्यात्। प्रजानामभावे राजा केषां कृते स्यात्? ननु स्वर्गादिकामनावतो लाभात् नियोगस्सार्थकश्चेत्, नित्यकर्मणां फलाभावात्, नियोज्यालाभात् नियोगो व्यर्थः स्यादिति चेत्=**नित्ये**=नित्यकर्मणि **अस्य**=नियोगस्य **नैष्फल्यम्**=स्वापेक्षयातिरिक्तफलाभाव इष्ट एव। तत्र हि काम्यकर्मपिक्षया स्वप्राधान्यं स्पष्टम्। इति **ये अपरे=प्राभाकराः** अभिदधुः, **तेऽपि निर्धूतकल्पाः**= निरस्तप्रायाः। ईश्वराज्ञारूपत्वाद्विधीनाम्, तस्यैव तत्तद्देवताद्वारा फलदातृत्वादिनिर्वाहात् कार्यनियोगादीनामावश्यकतैव निरस्तेत्यर्थः॥ ८८॥

एवं कार्यस्य लिङर्थत्वं निराकृत्य, तस्य प्राधान्यं प्राभाकरोक्तमपि निराकरोति—**कृतीं**त्यादि। अपूर्वस्य वा कार्यस्य वा प्राधान्यं किंरूपम्? स्वतः कृत्युद्देश्यत्वमेव तस्य प्राधान्यमिति यदि, **इह**=जगति **कृत्युद्देश्यम्**=मनुष्यकृतेः परमोद्देश्यं **सुखादि**=सुखं वा दुःखनिवृत्तिर्वा, **स्वतः कृत्युद्देश्यम्**। यागादेरपि एतत्साधनत्वादेव कृत्युद्देश्यत्वम्। **परम्**=एतद्व्यतिरिक्तम् **अनन्यार्थवेद्यम्**=स्वयं पुरुषार्थतया वेद्यम् **न स्यात्**। अतश्चापूर्वादिकमपि न स्वयं पुरुषार्थरूपमिति तस्य प्राधान्यं न संभवति। यतः—**अन्यस्य हेतोः**= यागस्य फलजनकत्वनिर्वाहार्थमेव **क्लृप्तिश्च**=अस्य कल्पनम्, न तु करणतया, फलतया वा। उद्देश्यदृष्ट्या फलं स्वर्गादि प्रधानम्, करणदृष्ट्या यागादि प्रधानम्। मध्ये द्वारस्य प्राधान्यं कथं स्यात्? दूतवन्मध्यवर्तिनस्तस्य प्राधान्यं कथं स्यात्? अपि च **श्रुतीनाम् तत्परत्वम्**=कार्यपरत्वम् **परिहृतम्**=पूर्वमेव (बुद्धि-72) निरस्तम्। ननु सिद्धे व्युत्पत्तिसमर्थनेऽपि कार्ये व्युत्पत्तिर्न खण्ड्यते, लौकिकवाक्यानां गवानयनादिपराणां कार्यव्युत्पत्तेरावश्यकत्वात्। अतः 'यजेत' इत्यादिकं कार्यपरमवश्यमेषितव्यम्, अन्यथा यागादिविधाना-

[लिङादीनामपूर्वादौ शक्तिग्रहासंभवः]

450. व्युत्पत्तिश्चेल्लिङादेः स्वयमवगमिते, स्यान्मिथस्संश्रयादिः
नान्यैरत्रानुभूतिः स्मृतिरपि; न च वस्तद्द्वयान्यो विमर्शः ।
अर्थापत्त्या मिते चेत्, न गुरुमतमिदं; मन्यसे तत् तथा चेत्,
कल्प्येत द्वारमात्रं तदिति न खलु तद्वाच्यभावादि कल्प्यम् ।। ९० ।।

[अपूर्वादेः देवताप्रीतौ पर्यवसानं वरम्]

451. देवप्रीत्यादिकं वा विदितमिह विधिप्रत्ययस्यास्तु वाच्यं
नात्रान्योन्याश्रयो, न श्रुतपरिहरणं, नापि क्लृप्तिर्गरिष्ठा ।

---

संभवादिति चेत्, तत्संमतं कार्यपरत्वमत्रेदानीं खण्ड्यते । वास्तवो लिङर्थस्समनन्तरं विचार्यते । किञ्च **नित्ये** च=नित्यकर्मणि तु **अपूर्वतोऽन्यत्**=अपूर्वापेक्षयान्यदेव **फलम्**=अकरणे प्रत्यवायपरिहारादिरूपम् **अनघगिरः**=सत्यवचना महर्षयः स्मृतिकर्तारः **सस्मरुः**=स्मृतिषु निबबन्धुः । **तत् दुस्त्यजम्**=त्यक्तुमशक्यम् । **नो चेत्**=तत्रापि नियोगार्थत्वाङ्गीकारे **नियोगायुतमपि**=इमे नियोगाः स्वयमपुरुषार्थभूताः सहस्ररूपा अपि **निपुणान्**=चेतनान् फलदृष्टीन् **स्वस्मिन्**=स्वविषये नित्यकर्मणि **नियोक्तुम्**=प्रेरयितुम् **नैव शक्तम्**=नैव समर्थम्— 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् । अयमंशः पूर्वमेव (जीव.38-39) विस्तरेण विचारितः । अतो नित्यकर्मणामपि अकरणे प्रत्यवायपरिहारः फलं वक्तव्यमेव । परं त्विदं मानवानां मनोदौर्बल्यमूलमिति परमवैदिकाः ।। ८९ ।।

लिङः अपूर्वे शक्तिग्रहः न भवतीति प्रतिपादयति—**व्युत्पत्तिरित्यादि** । 'कार्यान्विते पदानां शक्तिः' इति तु 'गामानय' 'गां नय' इत्यादौ लौकिके क्रियारूपकार्ये शक्तिर्लोकाद्भवितुमर्हति । भवदीयं कार्यं त्वलौकिकम्, क्रियातिरिक्तम्, अत एवापूर्वादिपदवाच्यम् । एतदेव मुख्यं कार्यम्, क्रियारूपं कार्यं तु गौणम् । एतादृशलोकविलक्षणे शक्तिग्रहः कथं भवति? अनेनैव लिङादिनाऽवगते वा? प्रमाणान्तरेणावगते वा? **लिङादेः व्युत्पत्तिः स्वयमवगमिते चेत्**=अनेनैवावगते इति पक्षे, **मिथःसंश्रयादिः**=अन्योन्याश्रयादिः **स्यात्** । **अन्यैः** इति द्वितीयविकल्पे, प्रमाणान्तरं तत् किम्? शब्दस्तु प्रथमकल्पे गतः, लिङः शब्दरूपत्वात् । **अत्र**=द्वितीयकल्पे **अनुभूतिः, स्मृतिरपि तद्द्वयान्यः विमर्शः च**=औचित्यरूपं ज्ञानं वा **न** तत्र किञ्चित्प्रमाणम्, यतस्तस्य तैश्शाब्दत्वमुच्यते । **अर्थापत्त्या मिते चेत्**=तत्संमतातिरिक्तप्रमाणेन अर्थापत्त्या चेत्, **इदं न गुरुमतम्** । तथा च अपसिद्धान्तः । भाट्टमतं हि तत् । गुरुमतं खलु वाच्यापूर्ववादि । **तत् तथा मन्यसे चेत्**=यथातथा वा भवतु । तदेवाङ्गीकरिष्याम इति चेत्, तदा **द्वारमात्रं तत् कल्प्येत इति, तद्वाच्यभावादि**=तस्य लिङ्वाच्यत्वादिकम् **न खलु कल्प्यम्**=कल्पयितुं न हि शक्यम्। कल्प्यापूर्ववादस्तु पूर्वमेव निरस्तः । ततश्च लिङादीनां कार्यवाचकत्वपक्षो न साधीयान्।। ९० ।।

एवं माऽस्तु वृथा चर्चा, **घट्टकुट्ट्यां प्रभात**मनिवार्यमित्याह—**देवेत्यादि** । अन्ततः **विदितम्**='स एवैनं भूतिं गमयति' इत्यादौ विदितम् **देवप्रीत्यादिकं वा विधिप्रत्ययस्य**=लिङ्गादेः **वाच्यम् अस्तु,**

**प्राधान्यं स्याच्च किञ्चित् नृपभजननयात्; सिद्धमेतच्च शास्त्रैः**
**इत्थं त्वर्थाविरोधेऽप्यतिगरिमभयान्नेष्यते शब्दशक्तिः ॥ ९१ ॥**

**[शाब्दभावनाया लिङर्थत्वासंभवः]**

452. **स्वव्यापारं विशेष्ये स्वयमभिदधते नैव शब्दाः कदाचित्**
**श्रुत्वा लिङ्व्यापृतिं वा कुत इह यतनं स्वोपयोगाद्यबोधे।**
**तस्मात्, आस्माकतत्तद्यतनकृत् अभिधा स्वस्य वाच्या लिङादेः**
**इत्युक्तिं बह्ववद्याममनिषत बुधास्त्रस्तरीमात्ररूपम् ॥ ९२ ॥**

---

अप्रसिद्धकल्पनापेक्षया एतदेव वरम्, तत्र तत्र विदितत्वादिति 'विदित'पदेन सूच्यते। आदिपदेन निषेधस्थलीयदेवताकोपो ग्राह्यः। एतत्पक्षे नोक्तदोषाणामवकाश इति प्रदर्शयति—**अत्र**=एतत्पक्षे **अन्योन्याश्रयो न,** अन्येन विदितत्वात्। अत एव—**श्रुतपरिहरणम्**=श्रुतस्य अर्थस्य परित्यागोऽपि न। अत एव **गरिष्ठा**=गौरवग्रस्ता **क्लृप्तिरपि** कल्पनमपि **नास्ति**। किञ्च **भवदभिमतम् प्राधान्यं च किञ्चित् नृपभजननयात्**=राजसेवान्यायेन **स्यात्**। वस्तुतः फलस्यैव प्राधान्यात् 'किञ्चित्' इति। द्वारभूतस्य द्वितीयमेव स्थानम्। **एतच्च शास्त्रैः**='तस्मिन् प्रसन्ने किमिहास्त्यलभ्यम्' इत्यादिभिः **सिद्धम्**। तर्ह्ययमेव वा सिद्धान्त इति शङ्कायामाह—**इत्थम्**=उक्तरीत्या **अर्थाविरोधेऽपि**=अर्थविरोधाभावेऽपि **अतिगरिमभयात्**=सामान्यजनैः ज्ञातुमत्यन्ताशक्यत्वेन गौरवभयादेव **शब्दशक्तिः**=लिङादेः देवताप्रीत्यादौ शक्तिस्तु **नेष्यते**=नाङ्गीक्रियते सिद्धान्ते। सिद्धान्तस्तु समनन्तरं (94-95) कथ्यते॥ ९१॥

तर्हि कुमारिलसंमता **शब्दभावनैव** लिङर्थोऽस्तु—इति चेत्, तदपि न युक्तमिति प्रदर्शयति—**स्वव्यापार**मित्यादि। 'यजेत स्वर्गकामः' इत्यादौ तन्मते भावनामुख्यविशेष्यकशाब्दबोधाङ्गीकारे, सिद्धान्ते नैयायिकमतवत् लोकसिद्धस्य कर्तुः पुरुषस्यैव विशेष्यत्वात्, भवितुर्भवनानुकूलभावयितृव्यापारविशेषस्यैव भावनात्वेन, शाब्दीभावना किल पुरुषे व्यापारमापादयतीति **शब्दाः**=लिङादयश्शब्दाः **विशेष्ये**=**वाक्यविशेष्ये पुरुषे स्वव्यापारम्**=स्वस्य भावनारूपं व्यापारम्=प्रेरणाम् **कदाचित्**=कदाचिदपि **स्वयम् नैव अभिदधते**=नैव अभिधातुं समर्था भवन्ति। प्रमाणानि किल स्वविषयं प्रदर्शयेयुः, न तु स्वम्। यथा चक्षुरादीनि घटादीन् प्रदर्शयेयुः, न त्वात्मानमिन्द्रियम्। तद्वत् शब्दोऽपि अर्थमभिदध्यात्=अर्थं प्रदर्शयेत्, न त्वात्मानम्। ननु शब्दशास्त्रे सौत्राः मघवादिशब्दा आत्मानमेवाभिदधते, न त्वर्थमित्यस्ति किलेति चेत्, तत् शब्दशास्त्रम्, न त्वर्थशास्त्रम्। इतराणि त्वर्थशास्त्राणि, लौकिकोऽपि शब्दोऽर्थपर एव। तदेतदुपपादयति—**लिङ्व्यापृतिम्**=लिङः प्रवर्तकत्वात् लिङ्शब्दवाच्यं प्रवर्तनारूपं व्यापारं **श्रुत्वा**=श्रुत्वा **स्वोपयोगाद्यबोधे**='इदं ममोपयोगि=मम प्रयोजनं किञ्चिदभिधत्ते' इति ज्ञानाभावे **इह**=लोके पुरुषे **यतनम्**=प्रयत्नः **कुतो वा** भवेत्? **तस्मात्**=शब्दस्यैवं स्वभावत्वात् लिङादेः **अभिधा**=बोधनशक्तिः **आस्माकतत्तद्यतनकृत्**=प्रेर्यपुरुषगतव्यापाररूपामार्थीभावनां प्रयत्नपर्यायां जनयित्री सती **स्वस्य**=लिङादेः

**[इष्टसाधनत्वमात्रं न लिङर्थः]**

453. **न स्यात् पुंसः प्रवृत्यै विदितमपि गिरा स्वेष्टहेतुत्वमात्रं**
**दुस्साधादावयोगात्; अथ सहकुरुते साध्यतैकार्थयोगः ।**
**इत्थं शक्तिर्द्वये स्यात्; गरिमहतमिदं; किञ्चिदत्रार्थतश्चेत्,**
**इष्टोपायत्वमर्थादुचितमिह; ततः खण्डिता मण्डनोक्तिः ।। ९३ ।।**

वाच्या भवति, शाब्दीभावना आर्थीभावनां वदेत्, न तु शाब्दीभावनामेव वदेत् **इति**=इति हेतोः **बह्वबद्धाम्**=अत्यन्तासंबद्धाम् **उक्तिम्**=शाब्दीभावना लिङ्वाच्येत्युक्तिम् **बुधाः त्रस्तरीमात्ररूपाम्**=केवलं हास्यरूपाम् **अमनिषत**=मन्यन्ते स्म । त्रस्तरी=परिहासः इति वृत्तिः । अतः शब्दभावना लिङर्थो न भवितुमर्हति ।।

यथा वा शङ्खध्वनिर्मङ्गलरूपः, तथा लिङ्ध्वनिरेवाज्ञारूपः, अत एव प्रेरकश्च भवति । यथा राज्ञः आज्ञाध्वनिं श्रुत्वा सेवकश्चलति तथा । वेदे पुरुषाभावात् शब्द एव श्रुतस्सन् नरं प्रेरयति इति **भाट्टाः** । अत एव तस्याः शाब्दी भावनेति संज्ञा । परं तु वेदस्य भगवदाज्ञारूपत्वात्, स्रष्टुर्भगवतोऽभिप्राय एव प्रेरकः। अचेतनः शब्दः चेतनं कथं प्रवर्तयेत् । न चाशनिध्वनिं श्रुत्वा प्रतिदिशं भीत्या पलायन्ति जनाः, तद्वत् भवत्विति वाच्यम्, एवं चेत् वेदो ध्वनिरेव स्यात्, न तु वर्णः । ततश्च वेदः द्रव्यमपि न स्यात्, ततश्च वायुधर्म एव स्यान्न स्वतन्त्र इति मूलहानिरेव ।। ९२ ।।

**विधिविवेक**कारस्य **मण्डनस्य** मतं विमृशति—**न स्यादित्यादि** । **गिरा**=लिङा **विदितमपि**=ज्ञातमपि **स्वेष्टहेतुत्वमात्रम्**=मण्डनसंमतं स्वेष्टसाधनत्वमात्रम् **पुंसः**=पुरुषस्य **प्रवृत्त्यै न स्यात्**=प्रेरणाय पर्याप्तं न भवेत् । कुतः? **दुस्साधादौ**=कृत्यसाध्यत्वनिश्चये सति चन्द्रानयनादौ **अयोगात्**=पुरुषप्रवृत्तेरसंभवात् । अतः कृतिसाध्यत्वज्ञानमप्यावश्यकम् । आदिना बलवदनिष्टाननुबन्धित्वज्ञानग्रहणम् । **अथ**=अथवा तावता इष्टसाधनत्वज्ञानं सर्वथानपेक्षितमित्यपि न, किन्तु **साध्यतैकार्थयोगः**=साध्यतया=कृतिसाध्यतया सह एकस्मिन्नर्थे इष्टसाधनत्वसंबन्धः **सहकुरुते**=सहायको भवति । अस्तु तर्हि द्वयमप्यर्थ इति चेत्, तदपि नेत्याह—**इत्थम्**=इष्टसाधनत्वकृतिसाध्यत्वयोरावश्यकत्वेऽपि **द्वये**=उभयस्मिन्नपि शक्तिः **स्यात्** । परं तु **इदम् गरिमहतम्**=गौरवग्रस्तम् । यावान् कनिष्ठः भारः शब्दस्योपरि आधातुं योग्यः, तावत्येव शब्दस्य शक्तिर्वाच्या । अन्यथा अरोगतादेरपि प्रयत्नं प्रत्यावश्यकतया आरोग्यमपि लिङर्थः स्यात् । कृतिसाध्यत्वे तदन्तर्भवेच्चेत्, इष्टसाधनत्वमपि तत्रैवान्तर्भवेत् । अनयोर्मध्ये **किञ्चित्**=अन्यतरत् **अर्थतः** वक्तुं शक्यश्चेत्, अनयोर्मध्ये **इष्टोपायत्वम्**=इष्टसाधनत्वमेव अर्थात् सिद्ध्यतीत्येवोचितम् । कार्यं प्रति कृतेरेवाव्यवहितपूर्ववृत्तित्वात्, इष्टसाधनत्वस्यापि आर्थिकत्वात् कृतिसाध्यत्वमात्रं लिङर्थो युक्तः, न मुख्योऽर्थः अतः **इह**=एवं लिङर्थविषये **ततः**=उक्तहेतोः **मण्डनोक्तिः**=मण्डनमिश्रवचनमपि **खण्डिता**=निरस्ता । अतः 'अनन्यलभ्यः शब्दार्थः' इति न्यायेन कृतिसाध्यत्वमात्रं लिङर्थः । एवं बलवदनिष्टाननुबन्धित्वस्यापीष्टसाधनत्वनिश्चयाङ्गत्वादतिव्यवहितत्वेन न लिङर्थान्तर्भाव इत्याशयः ।। ९३ ।।

[कृतिसाध्यत्वमात्रं लिङर्थः]

454. धात्वर्थस्यैव रूपं किमपि हि कथयन्त्यत्र सर्वे लकाराः
कर्तृव्यापारसाध्यं त्वभिदधति विधिप्रत्ययास्तल्लिङाद्याः ।
वैघट्यं द्वारसिद्धिः प्रशमयति; तथा सन्ति लोकोक्तिभेदाः
सिद्धं शब्दानुशिष्ट्या त्विदमुचितमिति स्थापितं भाष्यकारैः ।। ९४ ।।

[इष्टसाधनत्वं न लिङर्थः]

455. *इष्टस्वर्गादिकस्य त्वितरदपि यदा साध्यमुक्तं तदाऽर्थात्
सिद्धं तत्साधनत्वं; सुगममिह तदाऽनर्थकृत्त्वं निषेध्ये ।
नित्यत्वेनोपदिष्टेष्वकरणमपि तत्तुल्यमेवार्थलब्धं
सामान्यात् प्राप्तमेतत्; फलनियतिरपि व्यज्यते तत्तदुक्त्या ।। ९५ ।।

---

अत्रैवं सति औचित्यप्रदर्शनपूर्वकं स्वमतमाविष्करोति—**धात्वर्थस्ये**त्यादि । **सर्वे लकाराः** लडादयः **धात्वर्थस्यैव हि किमपि रूपम्** प्रकृतिभूतधात्वर्थसंबन्ध्येव किञ्चिदाकारम् **कथयन्ति** । धातवश्च क्रियावाचिनः। **तत्**=तस्मात् धातोरेव संबद्धं **कर्तृव्यापारसाध्यं तु**=कृतिसाध्यत्वाकारविशिष्टमेव धात्वर्थसंबन्धिरूपम् **लिङाद्याः**=लिङ्लोडादयो **विधिप्रत्ययाः अभिदधति** । जानाति, इच्छति, यतते इति क्रमे यत्नस्यैव कार्याव्यवहितत्वात् । 'इदानीं क्रियमाणो यागादिः कालान्तरे कथं फलं दद्यात्?' इति द्वारविषयिणी शङ्का तु यद्यपि सहजा, तथापि—**द्वारस्यार्थात् सिद्धिः वैघट्यम्**=परस्परासंबन्धत्वशङ्कां **प्रशमयति** । अतोऽर्थात्सिद्ध्यत् द्वारम् अपूर्वादिरपि लिङर्थो न, अनन्यलभ्यत्वाच्छब्दार्थस्य । **तथा**=एवमेव **लोकोक्तिभेदाः**= 'अर्थार्थी राजगृहं गच्छेत्' इत्यादयो लोकव्यवहारविशेषा अपि **सन्ति** । राजप्रीतिरूपं द्वारं तु सर्वोऽपि स्वयं जानीयादेव, अतस्तस्य शब्दवाच्यता नावश्यकी, नापि तत्र तादृशश्शब्दः कश्चिदस्ति । **शब्दानुशिष्ट्यापि**=व्याकरणेनापि='विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' इत्यनेन । विधिनिमन्त्रणादीनां प्रेरणाविशेषत्वात् प्रेरणैव लिङर्थ इति पर्यवस्यतीत्युक्तं वैयाकरणैः । **इदमेव**=कृतिसाध्यत्वमेव **उचितम्**= औचित्यवद्भवतीति कृतिसाध्यत्वमात्रं लिङर्थ इति **भाष्यकारैः**=भगवद्रामानुजैः **स्थापितम्=वेदार्थसंग्रहे श्रीभाष्ये च** । अतः कृतिसाध्यत्वमात्रं लिङर्थः । इतरत्सर्वमार्थिकम्।। ९४ ।।

इष्टसाधनत्वस्य आर्थिकत्वे हेतुं प्रदर्शयति—**इष्टे**त्यादिना । **इष्टस्वर्गादिकस्य**=स्वर्गकामनावतः पुरुषस्य **इतरदपि**=स्वर्गादतिरिक्तं यागादिकमपि **साध्यम्**=कर्तव्यमिति **यदा उक्तम्** श्रुत्या, **तदा**=तदैव **अर्थात्**=अर्थादेव **तत्साधनत्वम्**=यागस्य स्वर्गसाधनत्वम् **सिद्धम्,** अन्यथा 'स्वर्गकामो यजेत' इति वाक्यम् **'आम्रान् पृष्टः कोविदारानाचष्टे'** इतिवत् स्यात् । **तथा**=तथैव **इह निषेध्ये**=निषेधविषये कलञ्ज-भक्षणादौ **अनर्थकत्वम्**=अनिष्टसाधनत्वमपि **सुगमम्**=अर्थादेव सिद्धम् । अतस्तद्विषये लिङश्शक्तिर्नावश्यकी, अनन्यलभ्यत्वात्पदार्थस्य । **नित्यत्वेन**=नित्यकर्तव्यत्वेन **उपदिष्टेष्वपि**=विहितेष्वग्निहोत्रादिष्वपि **अकरणमपि तत्तुल्यमेव**=निषिद्धकर्मतुल्यमेव, प्रत्यवायहेतुत्वात् । **फलम्**=प्रत्यवयपरिहारादिकमपि

**[ईश्वराज्ञाया एव लिङर्थत्वपक्षः]**

**456.** **सन्ति ह्यन्ये लिङर्थाः कथयितृपुरुषाकूतभेदास्तथाऽत्रा-**
**प्याप्तस्याहुर्नियोगं हितमभिलषितं केऽपि भाष्याशयस्थम्।**
**शास्त्राज्ञाचोदनात्वं श्रुतिषु विधिपदैरन्वितत्वं नञोऽपि**
**स्वादेशे चावधूते भवति समुचितः प्रत्यवायः स्वतन्त्रात्॥ ९६॥**

**[षाड्गुण्यनिरूपणम्]**

**457.** **षाड्गुण्यस्यैव कुक्षौ गुणगण इतरः श्रीसखस्येव विश्वं**
**षट्स्वन्ये ज्ञानशक्त्योर्विततय इति च व्यक्तमुक्तं हि तज्ज्ञैः।**

---

**अर्थलब्धम्**=अर्थादेव लब्धम्। एवं 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादौ नित्यकर्मसु इष्टाभावात् इष्टसाधनत्वं लिङर्थो वक्तुं न शक्यते। फलाभावे प्रवृत्त्यनुपपत्त्या अकरणे प्रत्यवायप्राप्त्या, करणे संभवत्पापपरिहार एवार्थादतिक्लेशेन वर्ण्यतेऽनन्तरकालिकैरित्यादिकं पूर्वमेव(जीव.) गतम्। इदं सर्वं लोकदृष्टन्यायत एव **सामान्यात्**=उत्सर्गत एव **एतत् प्राप्तम्**=निश्चितम्। तर्हि तत्र तत्र 'स्वर्गकामः' इत्यादिफलनिर्देशः किमर्थ इति चेत्—**तत्तदुक्त्या**=तत्तद्विशेषफलकथनेन **फलनियतिरपि**=फलानां व्यवस्थापि **व्यज्यते**=अभिव्यज्यते। 'कार्यसामान्यस्य किञ्चित्फलं स्यादेव' इत्युत्सर्गेऽपि सर्वैरपि सर्वं फलं नाद्रियेत। कर्मसु नित्यकाम्यादिविभागानाम्, अग्निहोत्रादीनां द्विरूपत्वादिकं सर्वं जीवसर एव(38-41) प्रदर्शितम्। अत इष्टसाधनत्वस्य लिङ्वाच्यत्वासंभवात् कृतिसाध्यत्वमात्रं लिङर्थः, इतरत्त्वर्थाल्लभ्यत इति **सिद्धान्तः**॥ ९५॥

सयूथ्यमतभेदमाह—**सन्तीत्यादि**। **अन्ये**=विध्यतिरिक्ताः **कथयितृपुरुषाकूतभेदाः**=शब्दप्रयोक्त्रभिप्रायविशेषरूपाः निमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनारूपा अनुपदमुक्ताः **लिङर्थाः सन्ति हि। तथा अत्रापि**=विधिस्थलेऽपि **आप्तस्य**=सर्वसुहृदः परमात्मनः **हितम्**=अभिलषितम्=प्रियञ्च **नियोगम्**=आज्ञामेव **भाष्याशयस्थम्**=भाष्याभिप्रायविषयम् **केऽपि** सयूथ्या **आहुः**। एतदपि वयं न प्रतिक्षिपाम इति वृत्तिः। तात्पर्यं समानमेवेत्याशयः। एतदेव विशदयति—**श्रुतिषु विधिपदैः**=लिङादिभिः **अन्वितत्वम्, शास्त्राज्ञाचोदनात्वम्**=शासितुः आज्ञारूपचोदनात्वमेव लिङर्थः। अतः अर्थे तात्पर्यैक्यमेवात्रापि स्पष्टम्। एवम् निषेधस्थले **नञोऽपि स्वादेशे**=स्वाज्ञायाम् **अवधूते च**=तिरस्कृते च स्वतंत्रात् परमेश्वरात् **समुचितः**=तत्तदाज्ञातिरस्कारानुगुणः **प्रत्यवायः**=पापरूपो निग्रहोऽपि **भवति**। अतः सयूथ्यमताभिप्राये नास्माकं विरोधः॥ ९६॥

एवं विधिविचारं परिसमाप्य विश्वनियन्तुरीश्वरस्य गुणान् निरूपयति—**षाड्गुण्यस्येति**। **श्रीसखस्य**=श्रियःपतेः **कुक्षौ**=उदरे **विश्वमिव**=सर्वजगदिव **षाड्गुण्यस्यैव**=षड्गुणेष्वेव **इतरः गुणगणः**=अनन्तगुणानां गणः अन्तर्भवति। 'तवानन्तगुणस्यापि षडेते प्रथमे गुणाः' इत्यादीनि प्रमाणान्यत्रानु-

**निस्सीमानन्दभावस्थिरचरचिदचिच्छासनप्रेरणाद्याः**
**ऐशानज्ञानधर्माः कतिचन नियताः, केचिदागन्तवश्च ॥ ९७ ॥**

**[शक्तिनिरूपणम्]**

458. **हेतोः कार्योपयुक्तं यदिह भवति तच्छक्तिशब्दाभिलप्यं**
**तच्चामुष्य स्वधर्मस्तदितरदपि वाऽपेक्षितत्वाविशेषात् ।**
**विश्वं तद्विष्णुशक्तिर्मुनिभिरभिदधे तत्र तत्रोपयोगात्**
**अन्या सर्वाद्भुतैकोदधिरगणि; न सा तत्स्वरूपादिमात्रम् ॥ ९८ ॥**

सन्धेयानि । अत्रापि विशेषः **षट्सु**=षड्गुणेष्वपि **अन्ये**=बलैश्वर्यतेजांस्यपि **ज्ञानशक्त्योः विततयः**=विस्तार इति च **तद्ज्ञैः**=तद्रहस्यज्ञैः **व्यक्तं हि उक्तम्** । एतेषु परमात्मगुणेषु **निस्सीमानन्दभावस्थिरचरचिदचिच्छासनप्रेरणाद्याः**=निस्सीमानन्दस्वरूपत्वम्, स्थावरजङ्गमात्मकनिखिलचेतनाचेतनशासनप्रेरणादिकं चेत्येते गुणाः **ऐशानज्ञानगर्भाः**=ईश्वरज्ञानपरिणामरूपत्वात् तत्रान्तर्गताः **कतिचन आगन्तवश्च**=तादात्विकसंकल्पादिरूपाश्च भवन्ति । 'इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥' इत्यादीनि प्रमाणान्यत्रानुसन्धेयानि । भगवतो गुणानुसन्धानप्रकारः गद्यत्रये, तद्व्याख्यायां च द्रष्टव्याः ॥

एतादृशप्रमेयेषु नाधिका स्याद्विचारणा । श्रुत्वा स्मृत्वा च तोष्टव्यम् स्मर्तव्यं च पुनःपुनः ॥ ९७ ॥

'ज्ञानशक्ती' इति शक्तेः प्रसङ्गात् शक्तिः परीक्ष्यते—**हेतोरित्यादि** । **हेतोः**=किञ्चित्कारणस्य **कार्योपयुक्तम्**=तत्संबन्धिकिञ्चित्कार्योपयुक्तम् **यत् इह**=कारणे **भवति, तत् शक्तिशब्दाभिलप्यम्**=शक्तिपदवाच्यं भवति 'कार्योपयोग्यपृथक्सिद्धविशेषणं शक्तिः' इति संक्षिप्तं लक्षणम् । एतच्च तत्तद्वस्तुस्वरूपयोग्यतारूपमिति वैशेषिकाः । अतिरिक्तो गुण इति सिद्धान्तिनः । **तच्च**=शक्तिपदवाच्यं च **अमुष्य**=कारणस्य **स्वधर्मः**=तदसाधारणधर्मरूपः । **वा**=अथवा **तदितरदपि**=वस्तुस्वरूपरूपं वा, **अपेक्षितत्वाविशेषात्**=कार्यजननं प्रत्यपेक्षिततत्वरूपधर्मस्य, वस्तुनश्च समानत्वात् । **तत्**=प्रमाणप्रतिपन्नम् **विश्वम्**=चेतनाचेतनात्मकं **विष्णुशक्तिः**=विष्णोश्शक्तिरूपम् **तत्र तत्रोपयोगात्**=तत्तद्विलक्षणकार्यं प्रत्युपयोगात् **मुनिभिः**=पराशरादिभिः **अभिदधे** । 'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा । अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥' (वि.पु.-6-7-61) इति । एतादृशानां श्लोकानां व्याख्यानानि नानाविधानि दृश्यन्ते । सारतस्तु—

अत एव हि देवानां शक्तिद्वयमुदीर्यते । एका सहजशक्तिः स्यादपरा सहकारिणी ॥
सर्वस्यापि च कार्यस्य कारणं द्विविधं मतम् । एकं प्रधानमपरं सहकारीति कथ्यते ॥
शक्तिरप्यत एव स्यात् द्विविधा संमता बुधैः । आद्या श्रीरुच्यते देवी द्वितीया भूमिरुच्यते ॥
नाम्नैवैतच्च व्याख्यातम् नाधिकं चर्चितुं क्षमम् । ऋषयस्तूग्रतपसः बहुकालेन साधितात् ॥

**[शक्तिदूषणोद्धारः]**

**459. यद्भ्रंशान्मन्त्ररुद्धो न दहति दहनः; शक्तिरेषाऽस्तु; सोऽयं**
**हेतुर्मन्त्राद्यभावः; स च गत इति तद्धेत्वभावाददाहः ।**
**शक्तेर्नाशे किमस्याः पुनरिह जनकं? वृत्तिरोधस्तु युक्तो**
**वह्नेरित्यादिघोषो विरमति विदिते शब्दतः शक्तितत्त्वे ।। ९९ ।।**

तपोबलात्तु ददृशुर्नानातत्त्वान्यनेकशः। नानारूपकरूपेण लोकानुग्रहकारणात् ।।
तत्तत्कालानुरूपेणाब्रुवन् तान्यनेकधा। व्याख्यानमपि चैतेषां दृश्यन्तेऽनेकधा तथा ।।
विज्ञानं यदि सिद्धं स्यात् ज्ञातं सर्वं तदा भवेत्। विज्ञानाभावतः क्लेशः सर्वत्र सहजो भवेत् ।।
एतादृशप्रमेयेषु वृथा स्यात्तु विचारणा । श्रद्धा वा क्रियतां तत्र त्यक्त्वा वा गम्यतां ततः ।।

एवं विष्णुशक्तिषु जगत्सृष्ट्याद्युपयोगित्वाचेतनाचेतने अपि शक्तिपदवाच्ये । परं तु नैते अद्रव्ये, किन्तु द्रव्ये । अन्या तु सहजाशक्तिः **सर्वाद्भुतैकोदधिः**=सकलविधाश्चर्यकार्यकारिणी **मायादि**पदवाच्यापि । **सा**=सेयं शक्तिः **न तत्स्वरूपादिमात्रम्**=तस्य परमात्मनः स्वरूपमात्रमपि न, कल्पितमपि न, यथाश्रुतं तत्तथैव ग्राह्यम्, अतिगहनत्वात् ।।

अस्त्विदं सर्वं यथा तथैव । शक्तिः द्रव्यम्, उताद्रव्यम्? तन्निर्धार्यताम् । जानामि क्लेशम् । किञ्चिदिव सह्यताम् । अग्रे(श्लो.100) भविष्यत्येतन्निर्धारः ।। ९८ ।।

नैयायिकैरुक्तं शक्तिनिराकरणप्रकारमनूद्य समाधत्ते—**यदि**त्यादि । **मन्त्ररुद्धः**=मन्त्रेण मणिविशेषेण वा प्रतिरुद्धः **दहनः**=वह्निः **यद्भ्रंशात्**=यस्यांशस्य भ्रंशात् **न दहति, एषा शक्तिः**=शक्तिपदवाच्या **अस्तु** इति स्वमतम् । नैयायिकमतमनुवदति—**सोऽयं मन्त्राद्यभाव** एव **हेतुः**=दाहहेतुः । मन्त्रे सति **स च**=मन्त्राभावरूपो हेतुः **गतः**=**अपगतः** । **इति तद्धेत्वभावात्**=दाहहेतोः मन्त्राभावस्याभावात् **अदाहः**= दाहो न भवति । दाहो नाम रूपपरावृत्तिः, वेदना, पीडा वा । एवञ्च किमर्थमतिरिक्तशक्तिकल्पनम्? अतिरिक्तशक्तिकल्पनेऽतिक्लेशोऽपि वर्तते । यतः मन्त्रादिना नाशे जाते, **पुनः**=मन्त्रनिवृत्त्यनन्तरम् **इह**=वह्नौ **अस्याः**=शक्तेः **जनकं** किम्? मन्त्राभाव एव यदि कारणम्, तर्हि सः दाहं प्रत्येव कारणमस्तु— 'तद्धेतोरेव' इत्यादिन्यायात् । ननु शक्तिर्न नष्टा, किन्तु वर्तत एव तत्रैव, मन्त्रनिवृत्तौ पुनर्दाहं विदधातीति चेत्—**वृत्तिरोधस्तु**=दाहजनकत्वनिरोधस्तु **वह्नेः**=वह्नेरेव **युक्तः**, अतिरिक्तशक्तिं कल्पयित्वा, तन्निरोध-कल्पनापेक्षया वह्निरेव मन्त्रयुक्तो दाहं न करोतीति कल्प्यताम्, अतिरिक्तशक्तिकल्पने तु 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति स्यात् । **इत्यादिरूपो घोषः** ***न्यायकुसुमाञ्जलि***वर्णितः, **शब्दतः**= श्रुतेरेव **शक्तितत्त्वे**=शक्त्याख्ये तत्त्वे **विदिते**=निश्चिते **विरमति**=स्वयं क्षिणोति । श्रुतिघोषस्य पुरतः युक्तिघोषः किं कुर्यात्?

पूर्वं यथा तथात्रापि विचारो नाति युज्यते । महात्मभिर्यदुक्तं तत् श्रोतव्यमनसूयुभिः ।। ९९ ।।

[शक्तेरद्रव्यत्वम्]

460. **शब्दादिष्वस्ति शक्तिर्यदि, कथमिव न द्रव्यतैषां गुणित्वे?**
**सा चेन्नास्त्येषु, कार्यं किमपि कथमितः स्यादितीदं न युक्तम्।**
**शक्तिः शक्ता न वेति स्वयमवमृशतः स्वोक्तदोषप्रसङ्गे**
**निस्तारश्चेत् स्वभावात्, फणिमरणमिह प्रस्तुते किं प्रवृत्तम्॥ १००॥**

शक्तेरतिरिक्तत्वे, तस्याः कुत्रान्तर्भावः? न द्रव्ये? कार्योपयोग्यपृथक्सिद्धविशेषणं शक्तिरिति लक्षणकरणेन, जगति कारणत्वस्य केवलान्वयित्वेन सर्वपदार्थवृत्तित्वावश्यकत्वेन, अद्रव्येष्वपि शक्तेरावश्यकत्वात्। यद्यद्रव्यम्, तर्हि अद्रव्ये अद्रव्यान्तरस्यासंभवः। तृतीयस्तु वर्गो नास्त्येवेति शङ्कां समाधत्ते—**शब्दादिष्विति। शक्तिः यदि** अद्रव्येषु **शब्दादिषु अस्ति,** तर्हि **एषाम्**=शब्दादीनाम् **गुणित्वे**=अद्रव्याधारत्वे **द्रव्यता**=द्रव्यत्वम् कथं न=कथं न स्यात्? गुणवत्त्वमेव खलु द्रव्यलक्षणम्। यदि **एषु**=शब्दादिषु **सा**=शक्तिः **नास्ति चेत्, इतः**=एभ्यः शब्दादिभ्यः **किमपि कार्यम् कथं स्यात्?** शक्त्यभावादेव। द्रव्याद्रव्यातिरिक्तं तु तत्त्वमेव नास्ति **इतीदं तु न युक्तम्।** कुतः? **शक्तिः शक्ता**= **शक्तिमती, न वा? इति स्वयम् अवमृशतः**=विमर्शने कृते सति, **स्वोक्तदोषप्रसङ्गे**=यदि शक्तिः शक्तिमती, तर्हि शक्तिः द्रव्यं स्यात्। यदि न, तर्हि तस्याः कार्यं किमपि न स्यादित्यापादने कृते **स्वभावात्**=शक्तौ अतिरिक्तशक्त्यङ्गीकारो नास्त्येव, अनवस्था प्रसङ्गात्। अतः कार्यजनकत्वं, शक्तेः स्वभावः, न तत्र शक्त्यन्तरापेक्षा इति **निस्तारश्चेत्** इह **प्रस्तुते**=शब्दादेरद्रव्यत्वं न स्यादित्याद्याक्षेपे **फणिमरणम्**=सर्पमारणं प्रवृत्तं किम्? सर्पमारणं यथा निर्दयया क्रियते, तथा शक्तिनिराकरणं कर्तव्यं किम्? अतो यथासंभवं निर्वाह्यताम्॥

ननु कोऽयं न्यायः? श्रुतिर्हि शक्तेः द्रव्यत्वमद्रव्यत्वं वा, अतिरिक्तत्वमनतिरिक्तत्वं वा न विचारयति। इदं सर्वं व्याख्यातृणामेव विजृम्भणम्। 'निशितः खलु खड्गः छेदने शक्तः, अनिशितः न शक्तः' इति खलु दृश्यते। तेन ज्ञायते कारणस्य सामीचीन्यमेव शक्तिपदस्यार्थ इति। बद्धपादः पुरुषो गन्तुं न शक्नोति। किं तत्रातिरिक्ता शक्तिर्दृश्यते? गमनप्रतिबन्धको बन्धः। प्रतिबन्धकेऽसति गच्छत्येव। किं बहुना? अबद्धपादोऽपि उपविष्टः पुरुषो न गच्छति। तस्य किं गमनशक्तिरस्ति, उत न? तिष्ठन्नपि यदि नेच्छति, तदा न गच्छति शक्त एव, निशितोऽपि खड्गः पुरुषानधिष्ठितो न किञ्चिच्छिनत्ति। किं स खड्गः छेदने शक्तः, उत न शक्तः? क्रियावेशाभावान्न छिनत्तीति चेत्, तर्हि शक्तिपदार्थः कः? न हि शक्तिः चक्षुषा दृश्यते। दण्डचक्रादिकं हि पुरुषाधिष्ठितं चेत् घटोत्पादने शक्तं भवति। अन्यदा तु न शक्तम्। दण्डः खलु पुरुषाधिष्ठतोऽपि कदाचित् घटं जनयति, कदाचित्तु घटं नाशयति च। किं दण्डः घटे शक्तः, उत घटनाशने? परस्परविरुद्धा शक्तिः कथमेकत्र समवेयात्? ननु विरुद्धा स्वरूपयोग्यता वा कथमेकस्य स्यादिति चेत्, अयं तु प्रश्नः सर्वत्रापि जागरूकः। वायुः अग्नेस्सखा वा शत्रुर्वा? तैलं दीपस्य प्राणो वा, प्राणहारि वा? किमन्नं नरस्य जीवातुः, उत मृत्युः? अत इदं सर्वं पुरुषप्रयत्नविशेषकालेश्वरादृष्टाद्यधीनं

**[संस्कारनिरूपणम्]**

**461. बाह्याक्षादेरवृत्तौ चिरविदितमपि स्मर्यते येन, सोऽयं**
**संस्कारस्तुल्यदृष्टिप्रभृतिसहकृतश्चेतसः साह्यकारी।**
**नासौ पूर्वाऽनुभूतिः; कथमुपकुरुतां सा पुरैव प्रणष्टा?**
**तुल्यादेर्नापि दृष्टिः; कथमनवगते सा स्मृतिं नैव कुर्यात्? ॥ १०१ ॥**

यथानुभवं निर्वाह्यं सर्वैरपि। अतस्साधनानां समीचीनतैव शक्तिः। सैव स्वरूपयोग्यतेत्युच्यते। फलोपधानं तु तत्तत्पुरुषकालेश्वरादृष्टाद्यधीनमिति शक्तिर्नातिरिक्तः पदार्थः। अधिकमग्रे(श्लो.120) भविष्यति॥

अपि च 'कार्योपयोग्यपृथक्सिद्धविशेषणं शक्तिः' इति लक्षणमुच्यते। द्रव्याणां चेतनादीनामपि शक्तिरूपत्वमुच्यते 'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा' इत्यादाविति प्रसिद्धम्। तर्हि शक्तेरत्रा-द्रव्यत्वं कथम्?

एतादृशः संकटस्तु समानो दृश्यते, बत। वदन्तु तार्किकास्त्वेते रूपे रूपं भवेन्न वा?॥
यदि स्यात् द्रव्यमेतत्स्यात् न स्याच्चेच्चाक्षुषं कथम्?। इत्यादयस्तु वादाश्च सर्वत्रापि समा मताः॥
स्वतो निर्वाहकत्वं तु केषाञ्चित् कुत्रचिद्भवेत्। इति निर्वाह्यमेतत्तु सर्वत्रापि समं त्विदम्॥
वस्तुतस्त्विदमध्यात्मशास्त्रं सर्वोत्तमं मतम्। अध्यात्मविद्या विद्यानामित्याह भगवान् स्वयम्॥
शास्त्राणां किल मर्यादा वर्तते नात्र संशयः। तदतिक्रमणे क्लेशोऽनिवार्यः स्यान्न संशयः॥
इदमध्यात्मशास्त्रं तु न लोकायतमुच्यते। कालान्तरे तु सांकर्यं शास्त्राणां हन्त दृश्यते॥
सर्वं हि संकेतमयं जातं कालप्रभावतः। सुभगाभिक्षुकन्यायः सर्वत्र प्रसृतोऽभवत्॥
सर्वमुच्छृंखलमभूत् हेतुवादप्रभावतः। क्रमशो गलितं ज्ञानं विज्ञानं कुत्र वा गतम्!॥
आचार्या अपि किं कुर्युः तत्त्वज्ञा अपि वस्तुतः। तदात्वे खल्वियं गाथा समभूत् सत्यवादिनी॥
गुरोश्शापस्तु शिष्यः स्यात् भक्तो भगवतस्तथा। धर्मसंकटहेतुत्वादित्याद्या सार्वकालिकी॥
कालोऽयमागतस्त्यक्त्वा सर्वमन्यद्विचिन्त्यताम्। सत्यमन्विष्यतां तूर्णं नान्या गतिरिहास्ति नः॥
भारो महान् पण्डितानां विप्राणां च विशेषतः। ज्ञानं विज्ञानमास्तिक्यं विप्राणां समुदीरितम्॥
द्वयं संपाद्यतां शीघ्रं सर्वक्लेशहरं नृणाम्। स्वपरोत्तारकं विष्णोः प्रसादं निरुपाधिकम्॥ १००॥

क्रमप्राप्तं संस्कारं निरूपयति—**बाह्याक्षादेरिति। बाह्याक्षादेः**=बाह्यवस्तुविषयकज्ञानसाधनानामि-न्द्रियादीनाम् **अवृत्तौ**=अप्रसरणे **चिरविदितमपि**=बहुकालात्पूर्वमनुभूतमपि **येन** साधनेन **स्मर्यते, सोऽयं हेतुः संस्कारः** इत्युच्यते। **तुल्यदृष्टिप्रभृतिसहकृतः**=सदृशवस्तुदर्शनाद्युद्बोधकसामग्रीसहकृतः **सोऽयम् चेतसः**=मनसः **सहकारी** मतः। **असौ**=स्मृतिहेतुः **पूर्वानुभूतिः**=पूर्वं जातोऽनुभवः **न**। **सा**=पूर्वानुभूतिः **पुरैव**=तदानीमेव **प्रणष्टा**=संपूर्णतो नष्टैव अद्य **कथम् उपकुरुताम्? तुल्यादेः दृष्टिः**=तुल्यवस्तुदर्शनम्, विरुद्धवस्तुदर्शनं वा नापि उपकुर्यात्। पूर्वदर्शने सति तत्तुल्यवस्तुदर्शनं किञ्चिद्भवेत्? पूर्वदर्शनाभावे केन

[अदृष्टेन संस्कारो नान्यथासिद्धः]

**462. यज्जन्यां संस्क्रियां यत् किमपि नियमतो बोधयिष्यत्यदृष्टं**
**तत् तद्वेद्यावलम्बिस्मृतिमुपजनयेत्; संमतं च द्वयोस्तत्।**
**न ह्यन्यद् दृश्यतेऽत्र क्वचन; तदधिके कल्पिते गौरवं स्यात्**
**इत्युत्प्रेक्षा न युक्ता; न हि परजनिते क्वापि तत्संस्क्रियोक्तिः ॥ १०२ ॥**

तुल्यं तद्भवेत्? तौल्यं हि वस्त्वन्तरसापेक्षम्। तौल्यज्ञानं विना तद्वस्तुदर्शनमात्रं स्मृतिहेतुर्यदि, तर्हि **अनवगते**=पूर्वमनवगतेऽपि वस्तुनि **सैव**=तुल्यवस्तुदृष्टिरेव **स्मृतिम् कथं न कुर्यात्?** अतः पूर्वानुभवे सति तुल्यवस्तुदर्शनि सति तौल्यज्ञानात् स्मृतिर्वक्तव्या। तौल्यज्ञानमावश्यकं चेत् पूर्ववस्तुस्मरणमावश्यकम्। केवलं तौल्यज्ञानमन्तरा तुल्यदर्शनं कथं पूर्ववस्तुस्मृतिं जनयेत्। अतः मध्ये द्वारं किञ्चिदावश्यकम्। तदेव संस्कारपदेनोच्यते। स च संस्कारः तुल्यदर्शनोद्बोधितः स्मृतिं जनयति। उद्बोधकाश्च 'प्रणिधाननिबन्धाभ्यास' (न्या.सू.3-2-41) इत्यादिना संगृहीताः। अतश्चानुभवजन्यः स्मृतिहेतुः संस्कार आवश्यकः॥ १०१॥

ननु संस्काराङ्गीकारेऽपि नेष्टसिद्धिरित्याशङ्क्य समाधत्ते—**यज्जन्यामि**त्यादि । **यज्जन्यां संस्क्रियाम्**=यादृशानुभवजन्यं संस्कारम् **अदृष्टं** नाम **यत्किमपि**=अदृष्टत्वादेवातीन्द्रियत्वस्य सिद्ध्या किञ्चित् नियमेन **बोधयति**=उद्बोधयति, **तत्**=तदेवादृष्टम् **तद्वेद्यावलम्बिस्मृतिम्**=पूर्वानुभूतवस्तुविषयिणीं स्मृतिम् **उपजनयेत्। तत्**=उद्बोधकं चादृष्टम् **द्वयोः**=वादिनोः संमतं च। न हि पूर्वानुभूतं सर्वं स्मर्यते, न हि स्मरणं वाऽस्मदधीनम्। समयेऽस्मरणम्, असमये स्मरणं च बहुधा दृश्यत एव। अतः संस्काराङ्गीकारेऽपि अदृष्टस्यैव संस्कारोद्बोधकत्वस्य सर्वैर्वक्तव्यत्वात् अदृष्टसहकृतः पूर्वानुभव एव स्मृतिजनकोऽस्तु—'तद्धेतोरेव तद्धेतुत्वे' इत्यादिन्यायात्। **अत्र क्वचन**=स्मृत्यनुभवयोर्मध्ये **अन्यत् किञ्चित् न हि दृश्यते**। दृश्यते चेत् गत्यन्तराभावादङ्गीकार्यम्। **तदधिके**=पूर्वानुभवादधिके **कल्पिते गौरवम् स्यादेव**। अदृष्टं नामैकमुद्बोधकं कल्पनीयम् अतीन्द्रियम्। पुनरप्यतीन्द्रियमन्यत् संस्काराख्यं कल्प्यते चेत्, अतीन्द्रियद्वयाङ्गीकारापत्त्या गौरवं स्पष्टम्। **अतोऽदृष्टसहकृतः** पूर्वानुभव एव स्मृतिं जनयतु। **इति**=इत्येवम् **उत्प्रेक्षा**=ऊहः **न युक्ता**। कुतः? **परजनिते**=अनुभवभिन्नेन कर्मविशेषेण जाते अदृष्टे **तत्संस्क्रियोक्तिः**=अनुभवद्वारत्वरूपसंस्कारशब्दः **न हि** युक्तः। अनुभवस्मृत्योः कार्यकारणभावे, अनुभवस्य नाशात् कालव्यवधानात् मध्ये द्वारमावश्यकम्। तच्च अनुभवजन्यं चेत्, अनुभवस्य द्वारं भवेत्। तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः। अदृष्टपदवाच्यधर्मस्तु न पूर्वानुभवजन्यः। किन्तु पूर्वजन्मकृतसत्कर्मजन्यः। स एतस्य द्वारं कथं भवेत्? एतज्जन्यत्वाभावात्। अदृष्टं तु कुत्रापि न द्वारम्, किन्तु साक्षात्कारणम्। अतोऽनुभवस्मृत्योर्मध्ये द्वारमावश्यकम्। द्वारे सत्यपि कदाचित् स्मृतेरदर्शनात् उद्बोधकतया अदृष्टपदंवाच्यो धर्मोऽपि कारणमिति अदृष्टेन संस्कारस्य नान्यथासिद्धिः। अतस्संस्कार आवश्यकः॥ १०२॥

**[संस्कारो बुद्धेरवस्थैव]**

**463. बुद्धेरर्थेषु पूर्वप्रसरणजनितस्तेषु भूयोऽवगाहे**
**संस्कारः कारणं तन्मतिगत उचितः सोऽत्र धीद्रव्यपक्षे।**
**आत्माधारस्य तद्धीप्रसरजनकताक्लृप्तिरौचित्यहीना**
**धीनिष्ठेनैव तेन ह्युचितमविकृतेरात्मनः कुण्ठतादिः ॥ १०३ ॥**

**[वेगाख्यः संस्कारो नातिरिक्तः]**

**464. शीघ्रं यातीति कर्मातिशयसमधिको दृश्यते कुत्र वेगः ?**
**तद्भेदैर्वेगभेदं कथयसि च समस्तीव्रमन्दक्रमादिः ।**

अस्तु तर्हि संस्कारोऽतिरिक्तः। स कुत्रान्तर्भवतीत्यत्राह—**बुद्धेरित्यादि**। **अर्थेषु**=विषयेषु **बुद्धेः पूर्वप्रसरणजनितः**=बुद्धेर्विषयीकरणेन उत्पादितः, पूर्वानुभवजन्य इति यावत्, **भूयोऽवगाहे**=बुद्ध्या कालान्तरे पुनस्तस्य विषयीकरणे **कारणम् संस्कारः** भवति। **धीद्रव्यपक्षे अत्र**=बुद्धेः द्रव्यत्ववादि-नामस्माकं पक्षे **सः तन्मतिगतः**=यया बुद्ध्या संस्कारो जातः, तद्गत एव **उचितः**। **आत्माधारस्य**=आत्म-निष्ठस्य संस्कारस्य **तद्धीप्रसरणजनकताक्लृप्तिः**=आत्मगतबुद्धिप्रसरणे हेतुत्वकल्पनम् **औचित्यहीना**= नोचितं स्यात्। ननु संस्कारस्य बुद्धिनिष्ठत्वे, जन्मान्तरसंस्कारवशात् काणत्वकुब्जत्वादिः कथम्? इति चेत्—**धीनिष्ठेनैव तेन**=बुद्धिगतेनैव संस्कारेण **अविकृतेः**=निर्विकारस्य **आत्मनः कुण्ठतादिः उचितः**= युक्तः। आत्मा तु स्वतः निर्विकारः। अतः कुब्जत्वकुण्ठत्वादयः न साक्षादात्मगताः, किन्तु तद्धर्मभूत-ज्ञानमनःप्राणेन्द्रियादिगताः। अतः संस्कारा अपि धर्मभूतज्ञानादिगताः तदुपहिते आत्मनि व्यवह्रियन्ते॥

ननु अस्त्वात्मनः स्वतः कुब्जत्वादीनामभावात् ते धर्मा औपधिका एव। परन्तु ज्ञानेच्छाप्रयत्नादीनां आत्मगुणानां सामानाधिकरण्यसंबन्धेनैव कार्यकारणभावः सर्वसंमतः। स्मृतिरपि स्वसमानाधिकरणानुभव-जन्यैव। एवमेव सामानाधिकरण्यसंबन्धेनैव संस्कारस्यापि स्मृतिं प्रति कारणत्वं वक्तव्यम्। एवं सति संस्कारस्य केवलबुद्धिधर्मत्वकथनं कथं संगच्छत इति चेत्, धर्मभूतज्ञानस्य द्रव्यत्वेन सर्वेषामेषां तत्परिणाम-रूपत्वात्, कपालत्वावस्थाविशिष्टमृदः घटत्वावस्थाविशिष्टमृदं प्रति कारणत्ववत् पूर्वावस्थाविशिष्टं ज्ञानमुत्तरावस्थाविशिष्टज्ञानं प्रति कारणमिति नानुपपत्तिः। 'धीर्नित्या यस्य पक्षे' (बुद्धि.4) इत्यादिषूक्तमनु-सन्धीयतां वा। अथवा शिष्यबुद्धिपरीक्षार्थमिति वा गृह्यतामिति न कश्चन दोषः॥ १०३॥

वेगाख्यस्संस्कारोऽपि नातिरिक्त इति निरूपयति—**शीघ्रमित्यादि**। **'शीघ्रं याति' इति कर्मातिशय-समधिकः वेगः कुत्र दृश्यते?** उक्तव्यवहारे हि 'शीघ्रम्' इति क्रियाविशेषणम्। अतो गमनादिक्रिया-गतोऽतिशयविशेष एव वेगः, न त्वतिरिक्तो गुणः। लोकेऽपि **तद्भेदैः**=कर्मातिशयभेदैरेव **वेगभेदं कथयसि**। एवमेव **तीव्रमन्दक्रमादिश्च समः**='तीव्रं गच्छति' 'मन्दं गच्छति' इत्यादिव्यवहारोऽपि **समः**=एतत्समः। ननु 'शरो वेगेन गच्छति' इत्येव प्रयोगः, न तु 'वेगं गच्छति' इति। अतो वेगः

**'तत्कर्मत्वात् विगीते प्रथमवदुचिता तद्गुणोत्पन्नता' चेत्**
**बाधो नास्मिन् विपक्षे; गुणपरिषदि वा कर्म सत्तत्त्वतस्स्यात् ।। १०४ ।।**

**[स्थितस्थापकसंस्कारविमर्शः]**

**465. शाखाकोदण्डचर्मप्रभृतिषु सति चाऽऽकर्षणादौ कुतश्चिद्**
**भूयः स्वस्थानयानं भवति; स तु गुणः स्यात् स्थितस्थापकश्चेत् ।**
**मैवं संस्थानभेदः स भवतु नियतो यद्विशिष्टे तवासौ**
**तेन द्रौत्यं विलम्बो विरतिरपि परावर्तने जाघटीति ।। १०५ ।।**

न क्रियाविशेषणम्, किन्तु शरविशेषणम्, इत्थंभूतलक्षणे तृतीया । अत एवानुमानमपि— 'शरादिगतं द्वितीयं कर्म, शरसमवेतगुणोत्पन्नम्, शरगतकर्मत्वात्, शरगतप्रथमकर्मवत्' इति । **अयमाशयः**—वायुगतवेगात् वृक्षादिषु चलनादिरूपा क्रिया जायते । एवं धनुर्गतसंस्कारविशेषात् शरेषु वेगो जायते । कर्मणः कर्मोत्पत्तौ तु क्रियाया विरतिरेव न स्यात्, चलनात्मकत्वात्कर्मणः । अत एव 'कर्म कर्मसाध्यं न विद्यते' (वै.सू.) इति सूत्रम् । शरे नोदनादिना प्रथमक्रियाया उत्पत्तौ, अनन्तरं धनुर्गतस्थितस्थापकसंस्कारेण शरे वेगो जायते । अनन्तरं वेगेन क्रियापरंपरया साकं वेगोऽपि शरे जायत इति शरगतकर्मणः वेगोऽसमवायिकारणं भवतीत्युक्तानुमानेन शरे वेगाख्यगुणसिद्धिरिति चेत्, तदेतन्निराकरोति—**तत्कर्मत्वादि**त्यादि । **विगीते**= शरगतद्वितीयादिकर्मणि **प्रथमवत्**=आद्यकर्मवत्, **तत्कर्मत्वात्**=शरकर्मत्वात् **तद्गुणोत्पन्नता चेत्**=तद्गत-गुणोत्पन्नत्वमावश्यकमिति **चेत्**, इति पूर्वपक्षानुवादः । उत्तरम्—**अस्मिन्न**नुमाने **विपक्षे**=अप्रयोजकशङ्कायां कृतायाम् **बाधः**=बाधकस्तर्कः **न** । अतः पुरुषप्रयत्नेनान्यथासिद्धत्वात् अप्रयोजकमिदमनुमानम् । ननु पुरुषप्रयत्नः प्रथमकर्मणि कारणं स्यात् । द्वितीयादिकं कर्म कुत उत्पद्यत इत्येव प्रश्नः । शब्दाच्छब्दान्तरवत् कर्मण एव कर्मान्तरोत्पादकत्वमस्त्वित्युत्तरम् । अत एवोक्तसूत्रमपि न प्रामाणिकम् । अतश्च कर्मणान्यथासिद्धिः । तदेतदाह—**गुणे**त्यादि । 'शरगुण' इत्यत्र गुणः शरगतं कर्मैव । **तत्त्वतः**=वस्तुतः **कर्म सत्**=कर्मरूपमेव सन् वेगः **गुणपरिषदि वा**=द्रव्याश्रितत्वात् गुणवर्गे वा **स्यात्** । तथा च कर्मणाऽन्यथासिद्धिः । ननु वेगकर्मशब्दौ न पर्यायौ दृष्टाविति चेत्, कर्मातिशयेत्युक्तम् । अतश्च कर्मविशेषरूपत्वान्न पर्यायत्वम्, द्रव्यघटशब्दवत् । आहत्य तु वेगोऽतिरिक्तो मास्तु । ननु धनुर्गतस्थितस्थापकसंस्कारस्यैव वेगजनकत्वं युक्तमिति चेत्—

अहो श्लाघ्योऽसि मेधाविन्! परीक्षायां यतो भवान् । उत्तीर्णस्सूक्ष्मदर्शी च श्रेयसो भाजनं भव ।। १०४ ।।

स्थितस्थापकाख्यसंस्कारस्याप्यन्यथासिद्धत्वं प्रदर्शयति—**शाखे**त्यादि । **शाखाकोदण्डचर्मप्रभृतिषु**=शाखाः=वृक्षशाखाः, कोदण्डः=धनुः, चर्म=कृष्णाजिनादि । प्रभृतिपदेन कटादि ग्राह्यम्, एवमादिषु **आकर्षणादौ सति च**—पुरुषैराकर्षणादौ कृतेऽपि **कुतश्चित्** कारणात् **भूयः**=पुनरपि **स्वस्थानयानम्**=पूर्वस्थितिप्राप्तिः **भवति** । **स तु**=एवं पूर्वावस्थाप्राप्तिः येन भवति स एव गुणः **स्थितस्थापकः**=

**[स्थितस्थापकः न पृथिवीमात्रवृत्तिः]**

466. **प्राग्देशप्रापकोऽसौ किमिति नियमितो मेदिनीमात्रनिष्ठः ?**
**तोयाग्न्यादावदृष्टेरिति यदि, न; पृथिव्येकदेशेऽप्यदृष्टेः ।**
**भूम्यंशे दृश्यते तत्फलमिति यदि, नाबादिभेदेऽपि साम्यात्**
**भूपष्टम्भादिभेदादिदमिति च विपर्यासकल्पेऽप्यपायात् ॥ १०६ ॥**

स्थितस्थापकसंज्ञकः **गुणः स्याच्चेत्, मैवम्** । कुतः? **यद्विशिष्टे**=यादृशसंस्काररूपावयवसंस्थानविशिष्टे **असौ**=स्थितिस्थापकाख्यो गुणः **नियतः**=अन्वयव्यतिरेकसिद्धः **तव** मते भवति, **असौ**=तादृशः **संस्थान-भेदः**=अवयवसन्निवेशविशेष एव **सः**=स्थितस्थापकाख्यो गुणः भवतु, 'तद्धेतोरेव तद्धेतुत्वे' इत्यादि-न्यायात् । **तेन**=अवयवसन्निवेशविशेषेणैव **परावर्तने द्रौत्यम्**=पूर्वावस्थाप्राप्तौ शैघ्र्यम्, अथवा **विलम्बः**, अन्ते **विरतिरपि** इति सर्वं **जाघटीति**=घटत एव । पूर्वावस्थाप्राप्तौ सर्वत्र न हि समानता दृश्यते, कार्ये तारतम्यं शैघ्र्यविलम्बादिरूपं दृष्टमेव । तत्रावयवसन्निवेशतारतम्यं वंशवेत्रवेतसादौ अनुभवदृष्टम् । अतः 'तद्धेतोरेव' इत्यादिन्यायात् स्थितस्थापकोऽन्यथासिद्धः ॥ १०५ ॥

स्थितस्थापकसंस्कारस्य पृथिवीमात्रवृत्तित्वमपि वैशेषिकसंमतं निराकरोति—**प्राग्देशे**त्यादि । **असौ प्राग्देशप्रापकः**=स्थितस्थापकसंस्कारः **मेदिनीमात्रनिष्ठः**=पृथिवीमात्रवृत्तिः **इति किमिति**=केन कारणेन **नियमितः**=व्यवस्थापितः? **तोयाग्न्यादौ**=जलतेजःप्रभृतिषु **अदृष्टेः**=अदर्शनात् **इति यदि**=इति चेत्, **न**। कुतः? **पृथिव्येकदेशेऽपि**=पाषाणादौ **अदृष्टेः**=अदर्शनात्, दर्शनं व्यभिचरितम् । 'शाखाकोदण्डादिः विलक्षणसंस्कारवान्, पृथिवीत्वात्' इति प्रयोगे, तादृशसंस्कारशून्ये पाषाणादौ पृथिवीत्वसत्त्वात् व्यभिचारः। ननु सप्तविधमपि रूपं पृथिवीवृत्तीति सर्वसंमतम् । तावता सर्वत्रापि सप्तविधरूपमिति न व्याप्तिः, किन्तु यत्र नीलपीताद्यन्यतरत्, तत्र पृथिवीत्वमित्येतावन्मात्रमत्रापि विवक्षितमिति शङ्कते—**भूम्यंशे**=भूम्येकदेशे **तत्फलम्**=स्थितस्थापकफलं दृश्यते । ततश्च 'विमतः गुणः पृथिवीमात्रवृत्तिः, पृथिव्यन्यत्रादर्शनात्, नील-रूपवत्' इत्येव विवक्षितम्, **इति यदि**=इति चेत्, **न** । **अबादिभेदेऽपि**=जलादिविशेषेऽपि **साम्यात्**=दर्शनस्य साम्यात् । तथा 'पृथिव्यन्यत्रादर्शनात्' इति हेतुरसिद्धः । नदीप्रवाहस्य शिलादिभिः प्रतिरोधे स्यन्दनविरुद्धा जलस्योर्ध्वगतिः, समनन्तरं पूर्ववत्स्यन्दनमपि दृश्यते । एवं वह्नेरूर्ध्वज्वलनमपि नाडिन्धमस्य धमनिवायुना प्रतिरुद्धं सत् तिर्यग्गमनं वह्निज्वालायां दृश्यते । धमनिवायुनिवृत्तौ च पूर्ववत् ऊर्ध्वज्वलनं परावृत्तं भवति । अतश्च जले, वह्नौ च स्थितस्थापकसंस्कारोऽङ्गीकर्तव्य इति पृथिवीमात्रवृत्तित्वमेवासिद्धमिति भावः । ननु नदीजलस्योर्ध्वगमनं पाषाणप्रतिबन्धौपाधिकम् । एवं वह्नेस्तिर्यग्गमनं वायुवेगौपाधिकम् । अतो नेदं स्थितस्थापकसाधनक्षममित्याशङ्क्य समाधत्ते—**इदम्**=जले तेजसि च दृश्यमानमिदं स्थितस्थापनम्, **भूप-ष्टम्भादिभेदात्**=**'भू'** इति वायोरप्युपलक्षकम् । शिलादिरूपभूभागोपष्टम्भप्रयुक्तादुपाधिविशेषात्, न तु सहज इति चेत्—**पृथिव्यादावपि अपायात्**=औपाधिकत्वेन स्थितस्थापकसंस्कारस्यासिद्धिप्रसङ्गात् न साधीयः । पृथिव्यामपि हि आकर्षणादीनां मनुष्यकृतत्वेन पृथिव्युपष्टम्भरूपत्वात्, स्थितस्थापनस्य पृथिवी-

[कर्मपदार्थोऽतिरिक्तो न वा]

**467. केचित् देशान्तराप्तेर्जनिमभिदधते कर्म, या कर्मजेष्टा**
**नेत्येकेऽम्भःप्रवाहस्थिरवपुषि झषे तत्प्रतीतेरभावात् ।**

गुणत्वमप्यौपाधिकं स्यात् । ननु आकर्षणादिना स्थितस्थापकसंस्कारो ज्ञायते, न तु जायते । जलादौ न ह्येवम् यत्रासीत् जलादिकम्, न हि तत्र पूर्वदेशप्राप्तिः पुनरपि भवति । अतः नेदं स्थितस्थापनम् इति चेत्—

असकृत् प्रोक्तमपि तन्न जानाति कथं भवान्? शिष्याणां स्वमतश्रद्धादार्ढ्ययेति विभाव्यताम् ॥
न हि निन्दानयोऽप्यस्ति न वृथा चर्चया फलम् । गतिरेतादृशी युक्ता गुणानामिह युज्यते ॥
किञ्च वेदान्तिनामद्य वृथा कालादियापनम् । न युक्तमित्यभ्यधायि बहुधा बहुशो मुहुः ॥ १०६ ॥

एवं गुणपरीक्षां परिसमाप्य, अनन्तरप्राप्तां कर्मपरीक्षामुपक्रमते—**केचिदि**त्यादि । **कर्मजा**=क्रियया जायमाना **या इष्टा**, ताम् **देशान्तराप्तेः**=देशान्तरसंबन्धस्य **जनिम्**=उत्पत्तिमेव **कर्म**=कर्मपदार्थम् **केचित् अभिदधते** । यत्रकुत्रचित् क्रियायां जातायां हि क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, ततः उत्तरसंयोगोत्पत्तिः, ततः क्रियानाशः इति क्रमोऽवर्जनीय इति **वैशेषिकाः** । अत्र क्रियायाः फलं यत् विभागादि, तत्र विभागस्यानुपदं निरस्तत्वात्, पूर्वदेशेन साकं स्थितस्य संयोगस्य नाशः, तत उत्तरदेशेन सह संयोगस्योत्पत्तिश्चावर्जनीयावेव । एवञ्च उत्तरदेशसंयोगोत्पत्तिरेव क्रियापदार्थो भवतु, 'तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेन' इति न्यायात् । ननु चोत्तरदेशसंयोगः स्थिरः । क्रिया तु क्षणिका । तत्कथमुत्तरदेशसंयोग एव क्रिया भवेदिति चेत्, न सूक्ष्ममतिस्त्वं सुधीबन्धो! न वयं संयोगमेव क्रियां ब्रूमः, किन्तु संयोगस्योत्पत्तिमेव । सैषा न स्थिरा । तर्हि का सा उत्पत्तिर्नाम, विविच्यताम् । संयोगस्याद्यक्षण संबन्ध एव । पूर्वमसन् खलूत्तरदेशसंयोगो नूतनो दृश्यते । तस्याद्यक्षण संबन्धो न स्थिर इति नानुपपत्तिः । अत आद्यक्षणावच्छिन्नस्संयोग एव क्रियेति चेत्, भो ब्रह्मवादिन्!

तर्कभाषां परित्यज्य वद त्वं तव भाषया । किं कुर्मो ब्रह्मसूत्रेषु क्वापि कर्म न दृश्यते ॥
संयोगो वा ब्रह्मसूत्रे किं प्रोक्तो वद वैदिक! लोकसिद्धस्स इति चेत् कर्माप्यस्तु तथैव नः ॥
वक्ष्याम एतदेवाग्रे इति चेत्, तन्न विस्मर । शिष्याणां बुद्धिवैशद्यहेतवे, तर्हि कथ्यताम् ॥

ननु भोः! पूर्वं(104)कर्मणा वेगस्यान्यथासिद्धिरुक्ता । अत्र तु कर्मैव नास्तीत्युच्यते । कोऽर्थः? साधो! स्मरणशक्तिस्ते तीव्रा, स्वस्त्यस्तु ते सदा । अथवा नाग्रहोऽस्माकं त्विह पक्षान्तरं शृणु ॥

नेत्यादि । **अम्भःप्रवाहस्थिरवपुषि**=अंभःप्रवाहे=नद्यादिप्रवाहे स्थिरम्=निश्चलम् वपुः=देहः यस्य तादृशे **झषे**=मत्स्ये **तत्प्रतीतेः**=कर्मप्रतीतेः **अभावात् न**=उत्तरदेशसंयोगस्य उत्पत्तिमात्रं न कर्म **इति एके**=सयूथ्याः अभिदधते । मत्स्याः खलु नदीप्रवाहे निश्चलतया स्थातुं शक्नुवन्ति । जलप्रवाहसंबन्धस्तु मत्स्यदेहे नूतननूतनतया प्रतिक्षणं जायते । अथापि 'मत्स्यश्चलति' इति व्यवहारो न दृश्यते । तत्रैव मत्स्यदेहे क्रियायां जातायां तु 'मत्स्यश्चलति' इति व्यवहारो दृश्यते । अत उत्तरदेशसंयोगमात्रं न

**खादौ स्रोतःप्रदेशान्तरयुतिरुदके खादिदेशान्तराप्ति-**
**स्तुल्या; तल्लौल्यदृष्टिः पयसि तदधिकं कर्म नालम्बते चेत् ॥ १०७ ॥**

**[सर्वकर्मणामनुमेयत्वनिरासः]**

**468. कर्मत्वान्नाक्षयोग्यं विमतमिति यदि, व्याप्तिशून्यं तदेतत्**
**योग्यत्वेऽपि ह्यदृष्टिः सहकृदपगमादर्यमादिक्रियाणाम् ।**
**नो चेत्, कर्मैव न स्यात्; फलमपि हि भवेत् कर्महेतोस्त्वदिष्टात्**
**द्विष्ठत्वाद्वा फलस्य द्वितयमपि भवेत् कर्मवत् सर्वदा वः ॥ १०८ ॥**

---

कर्म । किन्त्वतिरिक्तमेव कर्मेत्येते वर्णयन्ति । दृष्टान्तान्तरम्—**खादावित्यादि** । **खादौ**=आकाशादौ **स्रोतःप्रदेशान्तरयुतिः**=प्रवाहपदवाच्यस्य आगच्छतो गच्छतश्च जलस्य संबन्धः, एवम् **खादिदेशान्तराप्तिः**=आकाशादिदेशसंबन्धः **उदके**=जले च **तुल्या**=समानैव । वेगेन जले प्रवहति सति आकाशे उदकसंबन्धः, उदके आकाशसंबन्धश्च समानः, संबन्धस्य द्विनिष्ठत्वात् । अथापि **तल्लौल्यदृष्टिः**= 'चलति' इति प्रतीतिः **पयसि**=उदक एव भवति, न त्वाकाशे । अतो देशान्तरसंयोगमात्रं न कर्म, किन्तु तदतिरिक्त एव । अतः चलनात्मकं कर्म प्रत्यक्षेणैव सिद्ध्यति । न च पूर्वदेशस्थितस्य उत्तरदेशसंबन्धातिरिक्तं किमुपलभ्यते द्रव्य इति शङ्क्यम्, चलनस्यापि प्रत्यक्षसिद्धत्वात् । ननु द्रव्यं दृश्यते, न चलनमिति चेत्, क्रियाया द्रव्यापृथक्सिद्धत्वात् प्रत्येकोपलम्भासंभवात् । यदि सहोपलम्भनियमादभेदः, तर्हि रूपरसादयोऽपि द्रव्याद्भिन्ना न सिद्ध्येयुः । चलतीति प्रतीतिः **तत्**, सामान्ये नपुंसकम्, देशान्तरसंबन्धमात्रम् **नालम्बते चेत् कर्म अधिकम्**=अतिरिक्तमेव ॥

युक्तिस्तु दर्शिता स्पष्टा ह्याग्रहो मास्तु कुत्रचित् । इति शिक्षयितुं शिष्यानुदासि गुरुतल्लजैः ॥ १०७॥

भीताः केचित् कर्मसामान्यमनुमेयमेवेत्याहुः । तदनूद्य निराकरोति—**कर्मत्वादित्यादि** । **विमतं कर्म न अक्षयोग्यम्**=इन्द्रियगम्यम्, **कर्मत्वात्**, परमाणुकर्मवत्, **इति यदि**=इति चेत्, **तदेतत्**=अनुमानम् **व्याप्तिशून्यम्**=अनुपसंहारिरूपत्वात्, कर्मणां सर्वेषामपि पक्षत्वेन, सपक्षस्यासंभवेन व्याप्तिग्रहणस्थलाभावात् व्याप्तिशून्यम् । ननु यदि कर्म प्रत्यक्षगम्यम्, तर्हि सूर्यगतिरपि प्रत्यक्षेण गृह्येत । तथा चापसिद्धान्तः । प्रातर्दृष्टदेशाद्भिन्ने देशे सायं सूर्यस्य दर्शनाद्धि सूर्यस्य गतिरनुमीयते सर्वैरिति चेत्, तत्राह—**योग्यत्वेऽपि**=चक्षुरिन्द्रियग्रहणयोग्यत्वेऽपि **अर्यमादिक्रियाणाम्**=सूर्याचन्द्रमसोः क्रियाणाम् **अदृष्टिः**= अग्रहणम् **सहकृदपगमात् हि**=सहकार्यभावादपि उपलभ्यते । तत्तदिन्द्रियग्रहणयोग्यानामपि अग्रहणे हेतवः खलु संगृहीताः—'अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् । सौक्ष्म्यात् व्यवधानादभिभवात्समानाभिघाराच्च ॥' (सां.का.7) इति । प्रकृते चातिदूरत्वात्सूर्यगतिर्न दृश्यते । **नो चेत्**=एवमनङ्गीकारे **कर्मैव**= कर्माख्यः पदार्थ एव न स्यात् । देशभेददर्शनिन लोकेऽनुमानं दृश्यते किल, पूर्वं काश्यां दृष्टस्य देवदत्तस्यानन्तरं कदाचिदयोध्यायां दर्शनादाविति चेत्, सत्यम् । एतदपि घटपटादौ व्याप्तेर्ग्रहणादेव वक्तव्यम्, 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात् । प्रत्यक्षतिरस्कारे तु **फलमपि हि**=उत्तरसंयोगादिरूपं

[असमवायिकारणनिराकरणम्]

**469.** **केचित् कर्मादिरूपं जगदुरसमवाय्याह्वयं हेतुभेदं**
**किं तैरेवं निमित्ताश्रयमिह जनकं नानिमित्तं विभक्तम् ? ।**

फलमपि **त्वदिष्टात्**=त्वत्संमतात् **कर्महेतोः**=नोदनाख्यसंयोगादेः **भवेत्**। ततश्च 'तद्धेतोरेव तद्धेतुत्वे' इत्यादिन्यायेनातिरिक्तं कर्म माऽस्तु इति कर्मणः सिद्धिरेव न स्यात्। अतः सर्वमपि कर्म नातीन्द्रियम्। 'चलति' इति प्रत्यक्षतोऽपि चलनादिक्रियाया दर्शनात्। एवमनङ्गीकारेऽनिष्टमाह—**द्विष्ठत्वाद्वेत्यादि**। वैशेषिकमते किल संयोगः त्रिविधः—अन्यतरकर्मजन्यः, उभयकर्मजन्यः, संयोगजश्चेति। आद्यः श्येनकर्मजन्यः श्येनपर्वतसंयोगः। द्वितीयः मेषयोर्युद्धे, उभयोरपि मेषयोः चलनात्। तृतीयस्तु अवयविनोऽवयवातिरिक्तत्वात् हस्तपुस्तकसंयोगात् शरीरपुस्तकसंयोगः इति। यदि संयोगातिरिक्तं कर्म न स्यात्, तर्हि श्येनपर्वतसंयोगस्य श्येने, पर्वते च सत्त्वात् पर्वतेऽपि कर्मप्रतीतिः स्यात्। एवं कर्मणः प्रत्यक्षत्वापलापे= **फलस्य**=संयोगस्य **द्विष्ठत्वात्**=द्विनिष्ठत्वात् **द्वितयमपि**=श्येनः पर्वतश्चापि, सर्वदा संयोगस्य स्थिरत्वात् **वः**=कर्मानुमेयतावादिनाम् युष्माकम् **कर्मवत्**=कर्मविशिष्टं भवेत्। ततश्चान्यतरकर्मजः संयोगो न स्यात्। अतः पर्वते क्रियाव्यवहाराभावात् कर्म प्रत्यक्षसिद्धमेव, न सर्वत्रानुमेयमेवेत्येव युक्तम्॥

एवं वदत्यप्याचार्ये कुतोऽनन्तरकालिकैः? । निराकृतं तु कर्मादीत्यत्र सन्तस्तु साक्षिणः॥
उक्तमेवात्र बहुशः न वृथा चर्चया फलम्। मध्यकाले त्वियं जाता दुःस्थितिर्भाग्यहानितः॥
सर्वापि शास्त्रमर्यादाऽतिक्रान्ता शिष्यवत्सलैः। आचार्यैः शिष्यवर्गाणां श्रद्धारक्षणहेतवे॥
हैतुकानां तु बौद्धानां खण्डने बद्धकङ्कणैः। आचार्यैः तस्य सरणिरादृता प्रौढिवादतः॥ १०८॥

कर्मविचारप्रसङ्गात् वैशेषिकसंमतमन्यदपि निराकरोति—**केचिदि**त्यादि। 'समवायिकारणे, प्रत्यासन्नं कारणमसवायिकारणम्' इति **वैशेषिकाः**। यथा—पटादिकार्यसमवायिकारणे तन्तौ वर्तमानं तन्तुद्वयसंयोगादि पटं प्रत्यसमवायिकारणम्। एवं कुत्रचित् क्रियायामुत्पन्नायाम्, ततो विभागः, पूर्वसंयोगनाशः, उत्तरसंयोगोत्पत्तिः इति कार्यपरंपरायां हि क्रिया विभागं संयोगं प्रति चासमवायिकारणं भवति, संयोगविभागयोस्समवायिकारणे द्रव्ये क्रियाया जातत्वात्, क्रिया समवायिकारणे प्रत्यासन्ना विभागादिकारणं भवति। अतः क्रिया कुत्रचित्कार्येऽसमवायिकारणं भवति। एवमवयवगतरूपादिकमवयविरूपं प्रति असमवायिकारणम्, समवायिकारणे प्रत्यासन्नत्वात्। तथा चासमवायिकारणत्वं गुणकर्मणोः, समवायिकारणत्वं तु द्रव्यस्येत्याहुः। तदेतदनुवदति—**केचित्**=वैशेषिकाः **असमवाय्याह्वयम्**=असमवायिकारणसंज्ञकम् **कर्मादिरूपं हेतुभेदम्**=कारणविभागम् **जगदुः**। **आदि**पदेन गुणस्य ग्रहणम्। तदेतन्निराकरोति—**एवम्**= एवमेव इह **निमित्ताश्रयम्**=निमित्तकारणे प्रत्यासन्नम् **जनकम् अनिमित्तम्**=अनिमित्तकारणसंज्ञकम् **किं तैः न विभक्तम्**=कुतो न विभक्तम्। समवायिकारणे प्रत्यासन्नमसमवायिकारणं चेत्, निमित्तकारणे प्रत्यासन्नमनिमित्तसंज्ञकं चतुर्थं कारणमिति कुतो न सङ्केतितम्? ननु भोः किमिदमेवमुच्यते? समवायिकारणे प्रत्यासन्नं

**तत्प्रत्यासत्तिमात्रं व्यभिचरति यदि, स्वावक प्तेऽपि तुल्यं**
**युक्त्या नैयत्यमत्रेत्यपि समम्; अथवा स्वस्ति वः स्वैरवाग्भ्यः ॥ १०९ ॥**

**[पञ्चविधकर्मविमर्शः]**

470. **कर्मोत्क्षेपादिभेदात् कतिचिदकथयन् पञ्चधा; तच्च मन्दं**
**दिग्भेदात् तस्य भेदे दशविधमिति तत्कल्पनं सांप्रतं स्यात्।**
**यत्किञ्चिद्भेदकाचेत्, अनवधिकभिदा; कर्महेतोर्ध्रुवाचेत्**
**अव्याप्तिः; बुद्धितश्चेत्, इयमितरसमा; संकरस्त्वत्र सह्यः ॥ ११० ॥**

सर्वं कथं कारणं भवेत्? समवायिकारणं हि कारणविशेषः। कारणसामान्यलक्षणं हि अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववर्तित्वं वर्तत एव। अतश्च कार्यनियतपूर्ववर्ति समवायिकारणवर्ति अनन्यथासिद्धं च असमवायिकारणमुच्यते। अतोऽनिमित्तकारणत्वाङ्गीकारापादनं वृथाभियोगमात्रमिति शङ्कते—**तत्प्रत्यासत्तिमात्रम्**=निमित्तकारणे प्रत्यासन्नत्वमात्रम् **व्यभिचरति**=दण्डत्वदण्डरूपादाविवान्यथासिद्धं भवेदेव। **यदि**=इति चेत्—**स्वावक्लृप्तेऽपि**=स्वेनाङ्गीकृतेऽसमवायिकारणेऽपि **तुल्यम्**=अन्यथासिद्धत्वादिकं समानम्। समवायिकारणे प्रत्यासन्नेऽसमवायिकारणेऽपि दोषस्समानः। पटसमवायिकारणेषु तन्तुषु प्रत्यासन्नस्तन्तुसंयोग एवासमवायिकारणम्, न तु तन्तुत्वतन्तुरूपादिकम्। एवं सुखादिसमवायिकारणे आत्मनि प्रत्यासन्न आत्ममनस्संयोग एवासमवायिकारणम्, न तु तत्र वर्तमानानि ज्ञानादीनि। अतोऽनिमित्तकारणन्यायोऽसमवायिकारणेऽपि समानः। ननु भोः!

वेदान्तिनश्चेद्वेदान्ते यूयं तिष्ठत निर्भराः। वृथातितर्कजालेषु भो मा पतत वैदिकाः! ॥

उक्तमेव समाधानम्, तत्प्रत्यासन्नमिति स्वरूपकथनमात्रमित्यादि। आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वाभावात्, तद्भिन्नत्वं लक्षणे विशेषणं देयमिति मा कुरु वितण्डामित्याशङ्क्य समाधत्ते—**अत्र**=अवयवसंयोगादौ **नैयत्यम्**=कार्यनियतपूर्ववर्तित्वादिकं **युक्त्या**=अन्वयव्यतिरेकादिभिः वदामः **इत्यपि समम्** अनिमित्तकारणविषयेऽपि। युक्तेःसर्वत्र वक्तुं शक्यत्वात् ॥

तद्भिन्नत्वनिवेशेन लक्ष्म चेद्रक्ष्यते त्वया। एतादृशं लक्षणं तु स्यादव्यावर्तकं न किम्? ॥
शरणं चेदनुभवः सर्वत्र, त्यज जल्पनम्। वृथा विस्तरमात्रं हि त्वदुक्तं तु प्रसज्यते ॥

अतः—**स्वैरवाग्भ्यो वः स्वस्ति**=एवं तद्भिन्नत्वादिविशेषणैः लक्षणं परिष्कुर्वद्भ्यः नमोऽस्तु। गच्छत यूयं स्वीये मार्गे न वयं प्रतिवक्ष्यामः इत्युपहासः॥ १०९ ॥

एवमन्यदपि तदीयमचातुर्यं प्रदर्शयति—**कर्मेत्यादि**। **कतिचित्**=केचित् **कर्म उत्क्षेपादिभेदात्**=उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात् **पञ्चधा अकथयन्**। **तच्च मन्दम्**=साधितुं न शक्यम्। **दिग्भेदात्**=स्वशरीरदेशदृष्ट्या **तस्य भेदः**=एवं यदि विभागः, तर्हि **दशविधमपि तत्कल्पनम्**=कर्मभेदकल्पनम् **सांप्रतम्**=युक्तं स्यात्, दिशां दशत्वात्। **यत्किञ्चिद्भेदकाचेत्**=आकुञ्चनप्रसारणादीनां स्वशरीरदृष्ट्यैव

**[सांकर्यस्य दोषत्वविमर्शः]**

471. **मृत्स्वर्णादिप्रसूते भवति हि घटधीः; नान्यदन्यद् घटत्वम्**
**नैकं बाध्यं समत्वात्; तदिह परिहृतिः कुत्रचित्; क्वापि योगः ।**
**पारापर्यं विरोधः परिहरणसमावेशनं चास्त्युपाधौ**
**तुल्यं चातिप्रसङ्गादिकमिति, न यथादृष्टभङ्गः क्वचित् स्यात् ।। १११ ।।**

---

कथनात्, नात्र दिशामुपाधित्वं विवक्षितमिति चेत्, तदा **अनवधिकभिदा**=उपाधीनामनन्तत्वात् कर्मभेदः अनन्त एव स्यात् । **ध्रुवात् कर्महेतोश्चेत्**=कर्महेतूनां व्यवस्थितत्वात् नानन्तत्वम्, ऊर्ध्वगमनहेतुक्रियायाः, अधोगमनहेतुक्रियायाश्च हेतुभूतः प्रयत्नभेदो व्यवस्थिततयैव खलु दृश्यत इति चेत्— **अव्याप्तिः**=मानवप्रयत्नाभावेऽपि तादृशक्रियाणां लोके दर्शनात् व्यभिचरितम् । अवक्षेपणप्रयत्ने सत्यपि कन्दुकादय ऊर्ध्वमुत्प्लवन्ते । गिरिशिलादयः प्रयत्नमन्तराप्यधः पतन्ति । अतः कर्महेतवो न व्यवस्थिताः। **बुद्धितश्चेत्**=उत्क्षेपणादावनुभवभेदो दृश्यत इति चेत्, **इयम्**=विलक्षणबुद्धिः **इतरसमा**=भ्रमणादिष्वपि समा । अतोऽनन्त एव स्यात्कर्मभेदः । अन्ततः **अत्र**=कर्मसु संकरः=सांकर्यमपि **सह्य** एव । काञ्चीस्थः वदति 'चैत्रः काशीं गच्छति' इति । काशीस्थो वदति 'चैत्र काशीमागच्छति' इति गमनत्वागमनत्वादीनां सांकर्यमप्यवर्जनीयमेव । अतः पञ्चधा कर्मभेदः दुस्साध एव।। ११० ।।

कर्मानन्तरं सामान्ये निरूपयितव्ये, पूर्वश्लोके सांकर्यस्य प्रसक्तत्वात्, तेनैव विचारमुपक्रमते— **मृदित्यादि** । **मृत्स्वर्णादिप्रसूते**=मृदः सुवर्णाच्च जाते घटे **घटधीः**=घट इति ज्ञानम् **भवति हि** । अतः मृत्त्वसुवर्णत्वजात्योरेकत्र समावेशः आवश्यकः । ततश्च सुवर्णत्वं विहाय मृत्त्वं मृद्घटे वर्तते । एवं मृत्त्वं विहाय सुवर्णत्वं सुवर्णघटे वर्तते । सुवर्णघटे सुवर्णत्वघटत्वयोः, मृद्घटे च मृत्त्वघटत्वयोस्समावेशोऽवर्जनीय इति जातिसांकर्यं न दोषः । ननु सुवर्णघटत्वं मृद्घटत्वं च भिन्नमेवेति, न सांकर्यमिति चेत्—**घटत्वम्**=घटत्वजातिः **अन्यदन्यत्**=भिन्नभिन्नं **न** । कम्बुग्रीवाद्याकारस्योभयत्र समानत्वे घटत्वजातेः भेदे प्रमाणाभावात् सांकर्यं न दोषः । ननु मानवशरीरे पञ्चभूतानां सत्त्वेऽपि पृथिवीत्वमेव तत्र, इतरभूतानां जातयस्तु बाधिता भवन्तीति यथा न दोषः, तद्वत् सुवर्णघटे मृद्घटे वा अन्यतरस्मिन् जातिर्निवर्तत इति न दोष इति चेत्— **समत्वात्**=मृत्त्वसुवर्णत्वघटत्वादीनां समभागत्वात् **एकम्**=अन्यतरत् **बाध्यं न** । शरीरे तु पृथिवीभागाधिक्यात् इतरभागानां न्यूनतया बाधात् पृथिवीत्वेनेतरजातयो बाध्यन्ते । मृत्सुवर्णघटादौ तु एवं वक्तुमशक्यत्वात् अन्यतरबाधो दुर्वचः । ननु तर्हि गोत्वाश्वत्वयोरपि समावेशप्रसङ्ग इति चेत्, तन्न । कुतः? **तत्**=तस्मात् **कुत्रचित्**=गोत्वाश्वत्वादौ **परिहृतिः**=परस्परपरिहारः=असमावेश एव । **क्वापि**=कुत्रचित्तु मृत्त्वघटत्वादौ **योगः**=समावेशः । तर्हि कथं व्यवस्था? एवम्— गोत्वाश्वत्वादीनां जातित्वान्न समावेशः । उपाधीनां तु घटत्वपटत्वादीनां न तथेति तु न संभवति । **यतः— पारापर्यम्**=परापरभावः पृथिवीत्वघटत्वयोः । **विरोधः**=घटत्वपटत्वयोः । **परिहरणसमावेशनं च**=परिहरणम्=सुवर्णत्वं विहाय घटत्वादेः ।

[जातिगुणयोर्व्यावर्तकत्वप्रकारविमर्शः]

**472. जातिः; प्राणप्रदात्री; गुण इह तदनुप्राणिते भेदकं स्यात्**
**इत्याहुः केऽपि; नेत्थं नियतिः; उभयथाऽप्यर्थदृष्टेर्निशादौ।**
**तेनान्वेष्टव्यभेदप्रतिनियतिमता केनचिन्नित्यरूप्यं**
**प्राप्ता यादृच्छिकीषु प्रमितिषु तु यथादर्शनं तद्व्यवस्था॥ ११२॥**

समावेशनम्=सुवर्णत्वघटत्वयोः सुवर्णघटे इत्यादिकम् उपाधावप्यस्ति। एवम् अतिप्रसङ्गादिकमपि तुल्यमेव इति व्यवस्था नास्तीति न। अनुभवानुरोधेनैव व्यवस्थाप्यत्वात्। अत एव **क्वचित् यथादृष्टभङ्गः**= यथादृष्टस्य भङ्गोऽपि सह्य एव। उपाधावपि दृष्टत्वात् सांकर्यं न दोष इति चेत्, जातावपि यथादर्शनमेव व्यवस्थाङ्गीक्रियताम्। अत उपाधेर्वा जातेर्वा कुत्रचित्सांकर्यं दोषः, कुत्रचिन्नेति यथानुभवं व्यवस्था स्वीकार्या॥

**वस्तुतस्तु**—समानानां भावः सामान्यमिति निर्वचनात् अनुगतव्यवहारहेतुः सामान्यमित्युच्यते। तच्च **जातिः उपाधिश्चेति** द्विविधम्। गोत्वाश्वत्वादिकं जातिः। उपाधिरपि द्विविधः **सखण्डः, अखण्ड-श्चेति**। घटवत्त्वेन घटवतां बहूनां देशानामनुगमात्, घटवत्त्वादिकं घटादिरूपं सखण्डोपाधिः। कालत्वाभावत्वादिकं तु अखण्डोपाधिः। तत्र सखण्डोपाधीनामनित्यत्वेन तेषां सामान्यपदवाच्यत्वमप्यौपाधिकमेव, अनुगतप्रतीतिनिर्वाहकत्वात्। पदार्थेषु चतुर्थत्वेन परिगणितं सामान्यं तु नित्यत्वे सत्यनेकसमवेतत्वरूपं पारिभाषिकमेव। अथवा सामान्यैकदेशस्य लक्षणं तत्, अनित्यानामप्युपाधीनां सामान्यपदवाच्यत्वात्। अन्तत आकाशत्वादीनामनेकसमवेतत्वाभावेनाव्याप्त्यापत्तेश्च। अतो जातिपदवाच्यानामेव सामान्यानां लक्षणविचारादिकम्, दूषणादिकं वेति मन्तव्यम्। जातिसांकर्यस्य दोषत्वमपि जातिपदवाच्यानां गोत्वाश्वत्वादीनामेव, न तु मनुष्यप्रयत्ननिर्मितघटादिवृत्तिघटत्वादीनामित्यवधेयम्। शिष्टमग्रिमविचारेषु स्पष्टीभविष्यति॥ १११॥

कैश्चिदुक्तं जातिगुणयोर्वैषम्यमनूद्य निरस्यति—**जातिरित्यादि**। **जातिः**=गोत्वादिः **प्राणप्रदात्री**= तत्तद्वस्तूनां परिचायने प्रधानभूता। **तदनुप्राणिते इह**=तेन लब्धपरिचये वस्तुनि **गुणः**=रूपादिः **भेदकः**=इतरव्यावर्तकः स्यात् इति **केऽपि आहुः**। **निशादौ**=अन्धकारादौ वर्तमानवस्तुनि **अन्यथापि**= वैपरीत्येनापि रात्र्यादौ **अर्थदृष्टेः**=वस्तुनो दर्शनात् **इत्थम्**=जातेः प्राधान्यम्, गुणस्याप्राधान्यम् इति **नियतिः**=व्यवस्था **न**। **निशादावित्यत्र** आदिना दूरत्वादेर्ग्रहणम्। मन्दालोके दूरे वा वर्तमानस्य वस्तुनः ग्रहणे प्रसक्ते, कदाचित् जातेरेव प्रथमं ग्रहणम्, अनन्तरं गुणग्रहणम्। कदाचित् गुण एव प्रथमं गृह्यते, अनन्तरमेव जातेर्ग्रहणमित्यप्यनुभवात् एवमेवेति नियमोऽनुपपन्नः। अत एतावदेव वक्तुं शक्यमित्याह— **तेन**=एवं नियमासंभवेन **अन्वेष्टव्यभेदप्रतिनियतिमता**=अन्वेष्टव्यभेदस्य=विविच्यज्ञेयस्य लक्ष्यविशेषस्य प्रतिनियतिमता=समनियतिमता **केनचित्**=गुणेन जात्या वा नित्यरूप्या=नियमेन ज्ञाप्या जातिः भवति। यथा लिलक्षियिषितस्य पृथिव्यादेः समनियतेन—लक्ष्यतावच्छेदकपृथिवीत्वसमनियतेन गन्धवत्त्वादिना **निरूप्या** पृथिवीत्वजातिर्भवति। यदा च पृथिवीत्वजातिमत्त्वं पृथिवीत्वमिति लक्ष्यते, तदा **जातिः**

[वैशेषिकोक्तजातिनिरूपणम्]

473. **भिन्नेष्वेकावमर्शो न तु निरुपधिकः; तेषु चैक्यं विरुद्धम्**
**ज्ञानाकारोऽपि बाह्यो न हि भवति; न चासिद्धमारोपणीयम्।**
**तस्माद् गोत्वादिबुद्धिव्यवहृतिविषयः कोऽपि सत्योऽनुवृत्तः**
**तस्य त्यागेऽनुमादेः क्षतिरिति कणभुक्तन्त्रभक्ता गृणन्ति ॥ ११३ ॥**

---

पृथिवीपदप्रवृत्तिनिमित्ततया सिद्धा प्रथमं ज्ञायते, अनन्तरं गन्धवत्त्वं ज्ञायते । अतोऽनुभवानुरोधेनैव व्यवस्था । ननु रूढेषु डित्यादिविषयकज्ञानेषु जातेरप्रसक्त्या कथं परिचय इति चेत्, तत्राह—**यादृच्छिकीषु च**=रूढपदजन्यज्ञानेषु तु **यथादर्शनं तद्व्यवस्था प्राप्ता**='अयमेव डित्थः' इत्येवमाप्तोपदेशादिना व्यक्तिपरिचयस्यानुभवसिद्धत्वात्, न तत्र जातिपुरस्कारेण गुणपुरस्कारेण वा प्रमितेस्संभवः, किन्तु तद्व्यक्तित्वेनैव व्यक्तिपरिचयः, अनन्तरमेव गुणादिपरिचयश्च भवतीत्यपि यथादर्शनं व्यवस्था । अतः जातेः प्राधान्यं न नियतम् ॥

**वस्तुतस्तु**—'जातिः प्राणप्रदात्री' इति वदतामयमाशयः । एकं हि गवादिकं नानाधर्मखचितं दृष्टम् । तेषु गोत्वादिजातिरेव गोप्राणिनः सर्वस्वदात्री भवति । अतोऽत्र प्राधान्यं न ज्ञानदृष्ट्या, किन्तु तत्तद्वस्तुदृष्ट्यैव । गोः, अश्वस्य, गजादेर्वा आकारगुणविशेषादिकं हि व्यवस्थितमेव दृश्यते । कथमियं स्वरूपव्यवस्था? इति प्रश्ने, तत्तज्जातिरेवेत्येवोत्तरम् । अतो गवादीनां सर्वस्वदात्री जातिरेव । रूपादिकं त्वनन्तरमेव प्राप्तम् । अत एव 'समानप्रसवात्मिका जातिः'(न्या.सू.2-2-7) इति गौतमीयं सूत्रम् । एतन्मर्मादिकं समनन्तरश्लोकेषु व्यक्तीभविष्यति । **आचार्यैस्तु**—एतत्सिद्धान्ते व्यक्त्याश्रितानां धर्माणां स्वरूपनिरूपकधर्माः, निरूपितस्वरूपविशेषणधर्मा इति द्वेधा विभागः प्रदर्श्यते सर्वत्र । तत्र स्वरूपनिरूपकधर्माः तद्वस्तुस्वरूपपरिचयेऽत्यन्तं प्रधानभूताः । निरूपितस्वरूपविशेषणभूतास्तु स्वरूपपरिचयानन्तरं ज्ञेयाः। यथा ब्रह्मणः सत्यत्वज्ञानत्वानन्तत्वामलत्वानन्दत्वानि पञ्च स्वरूपनिरूपकधर्माः । जगत्कारणत्वादीनीतराणि तु निरूपितस्वरूपविशेषणभूताः स्वरूपपरिचयानन्तरं ज्ञेयाः । एवं कदाचिद्गुणमुखेन कदाचिज्जातिमुखेन वा वस्तुपरिचयात् तद्दृष्ट्या जातेरेव प्राधान्यमिति नियमो नास्तीत्यभिप्रायेणैवमनुगृहीतम् ॥ ११२ ॥

वैशेषिकसंमतां जातिनिरूपणप्रक्रियामनुवदति—**भिन्नेष्वित्यादि** । **भिन्नेषु**=अनेकेषु घटादिषु **एकावमर्शः**=एकरूपतया 'तदेवेदम्' इति प्रत्यभिज्ञानम् **निरुपधिकः**=निर्हेतुकः, **निर्विषयश्च न तु**=नैव भवितुमर्हति, बाधादीनां कदाप्यदर्शनात् । **तेषु च ऐक्यम्**=भिन्नानां व्यक्तीनाम् ऐक्यं **च**=एकता च विरुद्धा । ज्ञानस्यैकरूपत्वात्, तथा व्यवहारोऽस्त्विति चेत्, कथमेकाकारज्ञानं भवतीत्येव प्रश्नात् अन्योन्याश्रयः स्यात् । अपि च **ज्ञानाकारोऽपि बाह्यो न हि भवति**, दृश्यन्ते हि बहिर्घटादयः, ज्ञानं त्वान्तरम् । तर्ह्यारोपात्मकं भवत्विति चेत्—**असिद्धम्**=अन्यत्र कुत्राप्यसिद्धम् **न चारोपणीयम्**=नैवारोपयितुं शक्यम्। दृश्यते हि 'एका सेना' 'एको धान्यराशिः' इत्यादीनीति चेत्, एतत् कथमित्येव विचार्यतेऽद्य । **तस्मात्**

**[सौगतोक्तजातिदूषणसमाधाने]**

**474. मध्ये यद्यस्ति जातिर्मतिविहतमथो नास्ति, भिन्ना भवेत् सा**
**तस्मादन्यत्र वृत्तिर्न च सकलमतिः क्वापि कृत्स्नांशवृत्त्योः ।**
**धर्मिध्वंसे तु धर्मस्थितिरपि न भवेत्; नात्र गत्यादि च स्यात्**
**इत्याद्यैर्बाह्यजल्पैरनितरगतिका संविदक्षोभणीया ॥ ११४ ॥**

**गोत्वादिबुद्धिव्यवहृतिविषयः**=गोत्वशब्दस्य, तन्मूलकव्यवहारस्य च विषयभूतः **कोऽपि**=यःकश्चित् **सत्यः, अबाधितः अनुवृत्तः**=सर्वव्यक्त्यनुगतः सार्वदिकश्चाङ्गीकार्यः । **तस्य**=एतादृशस्यानुगतस्य कस्यचित् **त्यागे**=अनङ्गीकारे **अनुमानादेः**=अनुमानस्य शब्दस्य च प्रमाणस्य **क्षतिः**=हानिः । व्याप्तेः सामान्यमूलकत्वात् । गवादिशब्दशक्तिग्रहस्यापि सामान्यमूलवत्वात् । तदभावेऽनयोः प्रमाणयोः प्रवृत्तिरेव दुरुपपादा । इति **कणभुक्तन्त्रनिष्ठाः**=कणादतन्त्रनिष्ठाः **गृणन्ति**=वर्णयन्ति । अनेनास्य स्वासंमतत्वं सूच्यते । स्वमतं चाग्रे (116) वक्ष्यति ॥ ११३ ॥

एवं काणादैरुक्तां जातिं निराकुर्वतां सौगतानामाशयं वर्णयति—**मध्य** इत्यादि । **मध्ये**=व्यवहितयोर्घटयोर्मध्यप्रदेशे **जातिः**=घटत्वजातिः **यद्यस्ति**=अस्ति इति यद्युच्यते, **मतिविहतम्**=अनुभवविरुद्धम् । न केवलमनुभवविरोधः, निराश्रया जातिः कुत्र तिष्ठेत्? यदि जातिर्विभ्वी, सर्वजातीनां सर्वत्र सत्त्वप्रसङ्गात् सांकर्यमनिवार्यम् । **अथो**=अथ मध्ये यदि **नास्ति**, तर्हि **सा भिन्ना**=व्यक्तिभेदेन घटत्वादिर्भिन्ना **भवेत्**, तथा चानुगतत्वं गतम् । अपि च—**कृत्स्नांशवृत्त्योः**=कार्त्स्न्येन वृत्तौ, अंशतो वृत्तौ च=घटत्वम् एकस्मिन् घटे कार्त्स्न्येन वर्तते, उतांशतो वर्तते? इति विकल्पे, आद्ये एकस्मिन्नेव घटे घटत्वस्य कार्त्स्न्येन परिसमाप्तत्वात्, **तस्मात् अन्यत्र वृत्तिः**=व्यक्त्यन्तरे सत्त्वं **न च**=न भवेदिति अन्यो घटो घटत्वशून्यः स्यात् । यद्यंशतो वर्तते, तर्हि **क्वापि सकलमतिः न च**=घटत्वं कार्त्स्न्येन कुत्रापि नोपलभ्येत । अपि च घटत्वं सांशं स्यात्, सांशानामनित्यत्वनियमात् घटत्वमनित्यं स्यात् । अपि च **धर्मिध्वंसे तु**=धर्मिणो घटादेः ध्वंसे च **धर्मस्थितिरपि**=धर्मस्य घटत्वस्य **स्थितिरपि न भवेत्**=निराधारं घटत्वं कुत्र तिष्ठेत्? यदि घटेन साकं नश्येत्, तर्हि घटत्वमनित्यं स्यात् । घटत्वमन्यत्र कुत्रचित् गतमिति यदि, तर्हि कुत्र गतम्? यद्यन्यघटं प्रति गतम्, तर्हि घटान्तरे घटत्वद्वयं स्यात् । अपि च—**अत्र**=घटत्वे **गत्यादि च**=गमनागमनादि च **न स्यात्**=न वक्तुं शक्यम् । गमनागमनवत्त्वे घटत्वंस्य क्रियावत्त्वं स्यात् । न चेष्टापत्तिः, क्रियावत्त्वे द्रव्यत्वं स्यात् । न चेष्टापत्तिः, गुणादौ जातिर्न स्यात्, गुणे द्रव्यस्यासंभवात् । **इत्याद्यैः बाह्यजल्पैः**=बाह्यानां बौद्धानां जल्पैः **अनितरगतिका संवित्**=प्रकारान्तरेण निर्वोढुमशक्या आरम्भोक्ता अनुभवाः **अक्षोभणीया**=नापलपितुं शक्याः । पूर्वश्लोकोक्तानामनुभवानामन्यथा निर्वाहासंभवात्, जातेरावश्यकत्वे दूषणानि न लगेयुः । न चानुभवा मिथ्याः, कदापि बाधादर्शनात् ॥

दूषणानां समाधानं किमिति चेत्—प्रथमपाददूषणम्—घटद्वयं दृष्ट्वा 'द्वौ घटौ' इति सर्वे वदन्ति । तत्र द्वित्वं यदा घटद्वये वर्तते, तर्हि घटद्वयमध्ये द्वित्वमस्ति, न वा? यद्यस्ति, तर्हि मध्येऽपि

[अपोहवादविमर्शः]

475. **अन्यापोहस्तु गोत्वप्रभृतिरिति तु नेदंतया तत्प्रतीतेः**
**अन्योन्यापोहबुद्ध्या नियतिरिति मिथस्संश्रयस्तत्प्रतीतौ ।**
**विध्याक्षेपक्षमत्वात् विषमसमतया बुद्धिनैयत्यसिद्धेः**
**शब्दार्थत्वादपोहो विमतिपदमिति व्याप्तिभङ्गादिदुःस्थम् ॥ ११५ ॥**

द्वित्वोपलब्धिः स्यात् । किञ्च द्वित्वं निराधारं कुत्र वर्तेत? यदि मध्ये द्वित्वं न स्यात्, तर्हि द्वित्वं व्यासज्यवृत्ति न स्यात्, छिन्नं भिन्नं च स्यात् । ततः कुत्रापि द्वित्वप्रतीतिर्न स्यात् । द्वितीयपादोक्तदूषणमप्येवं निरस्यम् । द्वयोर्घटयोर्मध्ये अन्यतरस्य दूरतो नयने, पूर्वं स्थितं द्वित्वं कुत्र गतम्? न च नष्टम्, घटद्वयस्यानष्टत्वात् । अन्यस्मिन् घटे मिलितं यदि, तर्हि एकस्मिन् घटे द्वित्वद्वयं स्यात् । किञ्च, अन्यघटं विनाप्येकस्मिन्नपि द्वित्वप्रतीतिप्रसङ्गः । द्वित्वं केवलं कल्पितमिति यदि, द्वित्वस्य मिथ्यात्वप्रसङ्गः । न चेष्टापत्तिः, अनन्तरबाधादर्शनात् । तृतीयपादोक्तस्य दूषणमपि अन्यतरघटस्य नाशे, द्वित्वं कुत्र गतम्? अन्यस्मिन् घटे मिलितं चेत्, द्वित्वस्य गमनप्रसङ्गः । न चेष्टापत्तिः, क्रियावत्त्वेन द्वित्वं द्रव्यं स्यात्, न तु गुणः । किञ्च घटादेर्नयने, तेन साकं रूपादिकमपि देशान्तरं गच्छति, न वा? गच्छति चेत्, रूपं क्रियावत् स्यात् । न गच्छति चेत्, तत्रैव तिष्ठेत् । सर्वेषां मिथ्यात्वे, शून्यवादावतारः । स चाग्रे विचार्यते (132) । सारतः— उक्ताः प्रश्नास्सर्वे द्रव्य एव संभवन्ति, न तु द्रव्याश्रितेषु गुणक्रियासामान्येषु । अनुभवस्य दुरपह्नवत्वेन तत्तद्वस्तूनां स्वभावा न पर्यनुयोगार्हाः । वस्तुतस्त्विदं सर्वमनुगतप्रतीतिसिद्धाया दूषणम् । अन्यच्चात्र वक्तव्यं अग्रे(119) भविष्यति ॥ ११४ ॥

जातिवादं निरस्य, तत्स्थाने अपोहमभिषिक्तवतां सौगतानां मतं दूषयति—**अन्यापोह** इति । **गोत्वप्रभृतिस्तु**=गोत्वाश्वत्वादयस्तु **अन्यापोहः**=तदितराभाव एव, न त्वतिरिक्तः **इति तु न** युक्तम् । कुतः? **इदंतया**=भावरूपतया **तत्प्रतीतेः**=गोत्वाश्वत्वादीनामनुभवात् । अभावरूपत्वे तु नञुल्लेखः स्यात् । गोत्वम्, अश्वत्वम् इत्यादि खलु नञ्संबन्धमन्तरैव व्यवह्रियते । अतस्तानि नाभावरूपाणि । ननु तमःप्रतीतिवत्स्यादिति चेत्, दूषणान्तरमाह—**अन्योन्येति । अन्योन्यापोहबुद्ध्या**=गोत्वमश्वत्वाभावरूपम्, अश्वत्वं च गोत्वाभावरूपं वक्तव्यम् इति परस्पराभावरूपतया **नियतिः**=व्यवस्था वक्तव्या **इति तत्प्रतीतौ**=गोत्वप्रतीतौ, अश्वत्वप्रतीतौ च **मिथस्संश्रयः**=अन्योन्याश्रयः अनिवार्यः । गोत्वमश्वत्वाद्यभावरूपं चेत्, प्रथममश्वत्वादिज्ञानं किलावश्यकम् । अश्वत्वं च गोत्वाद्यभावरूपम् । ततश्चाश्वत्वे ज्ञाते, गोत्वं ज्ञातं भवेत्, गोत्वे ज्ञाते अश्वत्वं ज्ञातं भवेदित्यन्योन्याश्रयः स्पष्टः । ननु ज्ञानं नाम ज्ञेयपरिच्छेदः । परिच्छेदो नाम विषयस्य निष्कृष्य प्रदर्शनमेव । निष्कर्षश्च इतरव्यावृत्तिमन्तरा न सिद्ध्येदेव । अत इतरव्यावर्तनमेव ज्ञानकृत्यम् । अत एव 'गौरेव गौः' इति निष्कृष्य व्यवहारोऽपि दृश्यते । अतो व्यावृत्तिरेव पदार्थस्वरूपम्, नान्यत्स्वरूपमिति चेत्तत्राह—**विधीत्यादि । विध्याक्षेपक्षमत्वात्**=व्यावृत्तेः प्रतियोगितया विधिरूपं वस्तु आवश्यकम् । 'गौः' इत्युक्ते गोः इतरस्य प्रतीत्यनन्तरमेव, तद्व्यावृत्तिर्गवि सिद्ध्येत् । अतः अनुयोगितया विधिरूपं वस्तु

**[संस्थानातिरिक्तजातिनिरासः]**

476. **युज्येतोपाधितश्चेदनुगतधिषणा तत्र, नेष्टाऽन्यक्लृप्तिः**
**तस्मात् संघातवर्गेष्ववयवरचनाभेदतोऽन्यन्न सिध्येत्।**
**सौसादृश्यात्तु जातिव्यवहृतिनियमः; तेन नातिप्रसक्तिः**
**नो चेन्मूर्तत्वमुख्यैस्त्वदभिमतिनयात् व्यज्यतां जातिरन्या ॥ ११६ ॥**

इतरव्यावृत्त्या स्वतो लभ्येतैव। गोभिन्नाश्वादिव्यावृत्तौ च अश्वात् सर्वांशव्यावृत्तिः न भवेत्, अश्वगतप्राणित्व-व्यावृत्तेरसंभवात्। एवं **विषमसमतया** अपोहस्यापि **विध्याक्षेपक्षमत्वात्**=विधिरूपस्याप्याक्षेपादेव लाभात् **बुद्धिनैयत्यसिद्धेः** =ज्ञानेन परिच्छेदस्य सिद्धेः अपोहमात्रं न वस्तुस्वरूपम्, किन्तु भावरूपमपि। ननु 'विमतम् अपोहः, शब्दार्थत्वात्, अघटशब्दवत्' इत्यनुमानेन शब्दवाच्यं सर्वम् अपोहरूपम्। अघटपदं हि व्यावृत्तिमुखेनैव वस्तु बोधयति, तद्वदिति चेत्, तत्राह—**विमतिपदम्**='विमतम् अपोहः, शब्दार्थत्वात्' इत्यनुमानं च **व्याप्तिभङ्गादिदुःस्थम्**=प्रमेयस्वलक्षणादिपदं हि नापोहपरम्, प्रमेयव्यतिरिक्तस्यैवाभावात्। स्वलक्षणपदमपि तन्मात्रपरम्। अपोहस्तु विकल्पस्यैव विषयः, न तु स्वलक्षणनिर्विकल्पस्येत्यङ्गीकारात् मतद्वयेऽपि व्याप्तिभङ्गः। किञ्च अघटपदमपि समस्तपदमेव, न त्वखण्डं पदम्। अतो विधिबुद्धिमन्तरा निषेधबुद्धेरेवासंभवात् अपोहो न शब्दार्थः। वस्तुतस्त्वपोहः एकस्मिन् पदार्थे अर्धभाग इत्येव तत्त्वम्, सर्वस्यापि वस्तुनो भावाभावरूपत्वादिति **न्यायवार्तिकश्लोकवार्तिकादावस्य** विस्तरो द्रष्टव्यः॥ ११५॥

स्वमतेन सामान्यं निरूपयति—**युज्येतेत्यादि**। **तत्र**=एवमनुगतप्रतीतिहेतुविचारे **अनुगतधिषणा**=अनुगतप्रतीतिः **उपाधितश्चेत्**=उपाधिविशेषादेव भवेच्चेत् **अन्यक्लृप्तिः**=उपाध्यतिरिक्तजातिकल्पना **न इष्टा**=सिद्धान्ते न संमता। **तस्मात्**=नित्याया अतिरिक्ताया जातेरभावात् **संघातवर्गेषु**=अवयवसंघातरूपेष्वव-यविवर्गेषु **अवयवरचनाभेदतः**=अवयवसंस्थानविशेषापेक्षया **अन्यत्**=अतिरिक्तं सामान्यम् **न सिद्ध्येत्**। भूतत्वमूर्तत्वादिकं न जातिः, अथाप्यनुगतव्यवहारनिर्वाहकत्वं संप्रतिपन्नम्। तत्रापि भूतत्वादिकं नाखण्डो-पाधिः। बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वमेव हि भूतत्वम्। तच्च तत्तद्गुणरूपम्। एवं मूर्तत्वं क्रियावत्त्वम्, परिच्छिन्नपरिमाणवत्त्वं वा। एवमेषां सखण्डोपाधित्वे सत्यपि अनुवृत्तव्यवहारहेतुत्वमुच्यते यदि, उपाध्यतिरिक्त-जातिसद्भावे प्रमाणं किम्? अथवा तत्तत्पदप्रवृत्तिनिमित्ततया सिद्धा घटत्वादयः सन्त्वखण्डोपाधयः। जातिरिति प्रत्येकमतिरिक्तं किमर्थं कल्पनीयम्? जातिपदमप्येतद्विषयकम् अस्तु, का हानिः? प्रत्युत घटत्वादीनां जातित्वे साङ्कर्यं चानुपदं (111) प्रतिपादितम्। अतोऽतिरिक्ता जातिर्मास्तु, उपाधीनां सांकर्येऽपि न दोषः॥

ननु घटातिरिक्तं यत्किञ्चित् अनुगतप्रतीतिहेतुर्नित्यो यद्यङ्गीक्रियते, तर्हि नास्माकं काचन विप्रतिपत्तिः। तस्य नाम जातिर्वा भवतु, उपाधिर्वा भवतु—इति शङ्कायामाह—**जातिव्यवहृतिनियमः**=घटत्वादि-जातिव्यवहारव्यवस्था तु **सौसादृश्यात्**=अत्यन्तसादृश्यात्। **तेन**=एवं यत्किञ्चित्सादृश्यं विहाय अत्यन्त-सादृश्यस्य जातिव्यवहारनियामकत्वेन **अतिप्रसक्तिः**=किञ्चित्सादृश्यमादायावैलक्षण्यापादनम् **न**=न कर्तुं

[संस्थानस्य जातित्वे लाघवम्]

477. जातेर्यत् व्यञ्जकं ते, तदपि यदि मतं जातितस्संगृहीतम्
साऽपि व्यङ्ग्याऽन्यतः स्यात्, तदुपरि च, भवेज्जातिसंस्थानमाला।
स्वेनैव व्यञ्जकस्याप्यनुगतिरिति चेत्, तर्हि जातिः किमर्था?
व्यावृत्तानां स्वभावात् यदि तदनुगतव्यञ्जकत्वं, जितस्त्वम्॥ ११७॥

शक्यम्। 'चन्द्र इव मुखम्' इत्यादौ हि एकदेशत एव सादृश्यम्। सदृशघटयोस्तु व्यक्तिभेदं विहायेतरांशे सर्वशः सादृश्यं वर्तत इत्यतः सौसादृश्यमित्युक्तम्। एतद्विवरणं समनन्तरश्लोके भविष्यति। एवमनङ्गीकारेऽनिष्टापत्तिमाह—**नो चेदि**ति। क्लृप्तेनैव निर्वाहे संभवत्यपि लाघवादिभिः अतिरिक्ता जातिर्यद्यङ्गीक्रियते, तर्हि—**त्वदभिमतिनयात्**=भवदभिमतलाघवतर्कादिवशात् **अन्या**=अतिरिक्ता जातिः **मूर्तत्वमुख्यैः**=मूर्तत्वभूतत्वादिभिरपि **व्यज्यताम्**=तान्यपि जातिकक्ष्यायां प्रविशन्तु। न च तेषां जातित्वे सांकर्यप्रसङ्गः, भूतत्वं विहाय मूर्तत्वं मनसि वर्तते, मूर्तत्वं विहाय भूतत्वमाकाशे वर्तते। उभयोस्समावेशः पृथिव्यादिचतुष्टये इति चेन्न, सांकर्यस्य जात्यबाधकत्वस्य (111) प्रतिपादितत्वात्। तार्किकेष्वपि नवीनानामस्य संमतत्वात्। अतः सौसादृश्यातिरिक्ता जातिर्नास्त्येव॥ ११६॥

अतिरिक्तजातिवादेऽनवस्थां प्रदर्शयति—**जातेरि**त्यादि। **ते**=अतिरिक्तजातिवादिनस्तव **जातेः व्यञ्जकम् यत्** आकृतिपदवाच्यम्, **तदपि जातितः**=अनुगतया जात्या **संगृहीतम्**=अनुगतीकृतमिति **यदि मतम्**, तदा **सापि**=आकृत्यनुगतिकारणीभूता जातिः **अन्यतः**=व्यञ्जकान्तरतः **व्यङ्ग्या**=अभिव्यङ्ग्या स्यात्। **तदुपरि च**=तद्व्यञ्जकस्याप्यन्यत् अनुगतं व्यञ्जकान्तरं भवेत् इति **जातिसंस्थानमाला**=जात्याकृतिरूपा व्यङ्ग्यव्यञ्जकपदार्थपरंपरा **भवेत्** इत्यनवस्था स्पष्टा। सिद्धान्तेऽवयवसंस्थानमेव जातिरित्युच्यते। अवयवसंस्थानमेवाकृतिरित्युच्यते। इयं चाकृतिः प्रतिवस्तु भिन्नतयैव प्रत्यक्षतो गृह्यते। अतश्चाकृतेः तत्तद्वस्तुनि परिसमाप्तत्वात्=अननुगतत्वात् अनुगतव्यवहारहेतुत्वं न स्यादिति अनुगतव्यवहारहेतुतयातिरिक्ता जातिः सिद्ध्यतीति तार्किका वदन्ति। अननुगताभिराकृतिभिः अनुगता जातिर्यद्यभिव्यज्यते, तर्हि ताभिरनुगतव्यवहार एव भवतु, तद्धेतोरेव=जातिसिद्धिहेतोः आकृतेरेव तद्धेतुत्वे=अनुगतव्यवहारहेतुत्वे संभवति, मध्ये=आकृतेः अनुगतव्यवहारस्य च मध्ये तेन किम्=आकृत्यतिरिक्तजातिपदार्थेन किं साधनीयमिति न्यायात्। इति सिद्धान्तिनामाशयः॥

एवमनङ्गीकारे—जातिव्यञ्जकानामाकृतीनामननुगतानामनुगतः कश्चन धर्मोऽस्ति, न वा? यदि न, तर्हि अननुगताभिः ताभिः कथमनुगतं किञ्चिदभिव्यज्येत? अत आकृतीनामनुगतः कश्चन धर्मो वाच्यः। स च धर्मोऽनुगतो न वा? अननुगतैरभिव्यज्यमानः सः अनुगतः कथं स्यात्? अतस्तत्राप्यनुगमकान्तरं किञ्चिद्वाच्यमित्यनवस्था स्यात्। **व्यञ्जकस्य** अनुगत**स्यापि स्वेनैवानुगतिः**=व्यञ्जकान्तरानपेक्षत्वेऽप्यनुगमकत्वम् इति चेत्, **तर्हि जातिः किमर्था?** तद्धेतोरेवेत्यादिन्यायात्। एवमनवस्थाप्रसङ्गादेव **व्यावृत्तानाम्**=

**[जातिदूषणपरिहारः]**

**478. व्यावृत्तैर्व्यक्तिवन्न व्यवहृतिनियमः; साध्यता नानुवृत्तौ**
**तद्धर्मस्यानुवृत्तौ मदभिमतमिह स्वीक्रियेतेति चेन्न।**
**केचित् संस्थानभेदाः क्वचन खलु मिथो भान्ति सादृश्यरूपाः**
**तस्मादन्योन्यजैकस्मृतिविषयतया तत्तदेकावमर्शः ॥ ११८ ॥**

अननुगतानामप्याकृतीनाम् **स्वभावात्** इतरानपेक्षमेव **तदनुगतव्यञ्जकत्वम्**=तादृशानुगतजातिव्यञ्जकत्वम् **यदि** कथ्यते, तर्हि **त्वम् जितः**=पराजित एव, अननुगतैरवयवसंस्थानविशेषैरेवानुगतव्यवहारनिर्वाहसंभवात्। अननुगताभिराकृतिभिः अनुगता जातिः यद्यभिव्यज्यते, तर्हि ताभिः अनुगतव्यवहार एव चलतु कामम्, मास्तु अतिरिक्ता जातिः। ननु आकृत्या जातिरभिव्यज्यत इत्यस्य, जातिरुत्पद्यत इति नार्थः, किन्तु जातिर्ज्ञायत इत्येवार्थः, जातेर्नित्यत्वेनोत्पाद्यत्वासंभवादिति चेत्—

विलम्बः सह्यतां किञ्चित् सर्वमन्ते भविष्यति। प्रादर्शयन् किलाचार्या एवमत्र स्वकौशलम्॥
आस्वाद्यतां तत्प्रथमं तर्ककौशलमद्भुतम्। वेदप्रामाण्यरक्षार्थमवतीर्णस्य वैभवम्॥ ११७ ॥

ननु भोः! जातिवादिनामाशय एव भवता न ज्ञातः। अननुगतेष्वनुगतव्यवहारः कथं भवतीति, न केवलं कारणप्रश्नः। किन्तु विषयः कः? इत्येव प्रश्नः। अनुगतप्रतीतिः किं सद्विषया, उतासद्विषया? न तावदसद्विषया, अनन्तरकाले बाधादर्शनात्। यदि सद्विषया, स क इत्येव प्रश्नः? इति शंकामनूद्य परिहरति—**व्यावृत्तैरि**त्यादि। अनुवृत्तव्यवहारः चतुर्विधो दृश्यते। देशैक्यविषयकः, कालैक्यविषयकः, वस्त्वैक्यविषयकः, जात्यैक्यविषयकश्चेति। चतुर्थप्रकारमाश्रित्यैवेदानीं विचार्यते। 'सैवेयं दीपज्वाला' 'सैवेयं गूर्जरी' इत्यादयोऽत्र दृष्टान्ताः। अत्रानुभूयमानमैक्यं कीदृशम्? नायमनुभवो निर्विषयकः। तदात्वे भ्रमत्वप्रसङ्गात्। न चेष्टापत्तिः, साजात्यज्ञानवता दृष्टस्यानुभवस्य अनन्तरकाले बाधादर्शनात्। नाप्ययमवयवसंस्थानविषयकः, तस्य तत्तद्व्यक्तावेव व्यवस्थितत्वेनाननुगतत्वात्। अतोऽवयवसंस्थानातिरिक्तमेकमत्रैषितव्यमेव। तदेतदाह—**व्यक्तिवत्**=तत्तद्व्यक्तिवत् **व्यावृत्तैः**=अवयवसंस्थानरूपैः अननुगतैः **व्यवहृतिनियमः**=ऐक्यविषयकव्यवहारव्यवस्था 'सैवेयं गूर्जरी' इत्यादौ **न**=न भवितुमर्हति। आकारातिरिक्तस्य विषयस्य **अनुवृत्तौ** अङ्गीकृतायाम् तदा **साध्यता न,** सिद्धैव किल जातिः संस्थानातिरिक्ता। ननु संस्थानं यद्यप्यननुगतमेव। तथापि तेष्वनुगतः कश्चिद्धर्मो वर्तते। तेन तत्रैक्यव्यवहारो भवत्विति चेत्— **तद्धर्मस्य**=संस्थानगतधर्मस्य **अनुवृत्तौ** सत्याम्, अन्ततो 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायेन **इह**=एतद्विषये **मदभिमतम्**=अस्मत्संमता जातिरेव **स्वीक्रियेत**=अङ्गीकृतासीत्, संस्थानातिरिक्तत्वात्, अनुगतत्वाच्च। **इतिचेत्—न**। तर्ह्यनुवृत्तधीः कथम्? इत्यत्र—**केचित् संस्थानभेदाः**=अवयवसन्निवेशविशेषाः **क्वचन खलु**=कुत्रचित्तु **मिथः**=परस्परम् **सादृश्यरूपाः**=सौसादृश्यरूपाः **भान्ति**। **तस्मात्**=एवं सौसादृश्यग्रहणात् **अन्योन्यजैकस्मृतिविषयतया**=अन्योन्यम्=परस्परं जाता या तत्तत्सौसादृश्यग्रहणजा

[सौसादृश्यस्वरूपम्]

**479. सादृश्यस्यानुवृत्तौ भवति परमता जातिरेवान्यथा चेत्**
**तन्मूला नानुवृत्तव्यवहृतिरुचितेत्येतदप्यात्तसारम्।**
**एकैकस्थं तु तैस्तैर्निरुपधिनियतैः सप्रतिद्वन्द्विकं स्यात्**
**धर्माभावप्रतीतिप्रभृतिनियमवद्दुस्त्यजेयं व्यवस्था ॥ ११९ ॥**

एका स्मृतिः, तद्विषयतया उक्ताः संस्थानरूपाः भवन्तीति **तत्तदेकावमर्शः**=तत्तद्वस्तूनामेकरूपतानुभवो भवति। तथा च तादृशैक्यावमर्शः नैकवस्तुविषयकः, किन्तु सादृश्यौपाधिकः। अत एवानन्तरकालबाधादर्शनादि संगच्छते, उपाधेस्सत्यत्वेन, 'अयो दहति' इति प्रतीतितुल्यत्वात्। वह्नेरेव दाहकत्वं हि सर्वानुभवसिद्धम्। वह्निश्च न निराश्रयतया तिष्ठेत्। अतस्स व्यवहारः औपाधिकः। तद्वत्प्रकृतेऽपि च। तथाचोक्तचतुर्विधानुगतव्यवहारात् अतिरिक्तः पञ्चमोऽयमनुवृत्तव्यवहार इति न कश्चिद्दोषः॥ ११८॥

उक्तमर्थमजानानस्याक्षेपमनूद्य परिहरति उक्तार्थवैशद्याय—**सादृश्यस्येत्यादि**। **सादृश्यस्य**=सौसादृश्यस्य **अनुवृत्तौ**=अनुगतत्वे **परमता**=तार्किकसंमता **जातिरेव तत् भवति,** अतिरिक्तत्वादेव। **अन्यथा चेत्**=अननुगता यदि, तर्हि **अनुवृत्तव्यवहृतिः**=अनुगतव्यवहारः **तन्मूला**=सौसादृश्यमूला **न**=न भवितुमर्हति, अननुगतत्वादेव। **इत्येतदपि**=एवमाक्षेपोऽपि **आत्तसारम्**=दुर्बलम्, अन्यथासिद्धत्वात्। अन्यथासिद्धिमेवोपपादयति—सौसादृश्यम् **एकैकस्थं तु**=तत्तद्व्यक्तिषु परिसमाप्तत्वात् अननुगतमेव सत् **निरुपधिनियतैः**=स्वभावत एव सहजतया व्यवस्थितैः **तैस्तैः**=अनेकव्यक्तिनिष्ठैः **सप्रतिद्वन्द्वकम्**=परस्परसापेक्षम् स्यात्। 'सादृश्यम्' इत्युक्ते हि केन, कस्येति प्रश्नोऽनिवार्यः। अतो नानाव्यक्तिसंबन्धरूपमनुगतत्वं स्वत एव लभ्यते। अनुगतमिवैव भवेत्सादृश्यम्। यद्यपि केन कस्येत्याकांक्षाया एकैकवस्तूपस्थापनेनापि निवृत्तेः, त्रैकालिकानामनन्तानां वस्तूनां स्मरणं न नियतम्, अथापि विरोधाभावात् अनेकव्यक्तीनां स्मरणं संभवेत्। अतिरिक्तजातिवादेऽपीदं समानं किल। न हि तदानीमपि त्रैकालिकसकलव्यक्तीनां सकृदुपस्थितिसंभवः। साधर्म्यरूपस्य सादृश्यस्य ससंबन्धिकत्वे वैधर्म्यस्य दृष्टान्तत्वमाह—**धर्माभावेत्यादि**। **इयम् व्यवस्था**=ससंबन्धिकत्वनैयत्यम् **धर्माभावप्रतीतिप्रभृतिनियमवत्**=वैधर्म्यप्रतीत्यादीनामिव नियतससंबन्धिकत्ववत् **दुस्त्यजा**=सहजत्वादनिवार्या व्यवस्था। 'यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्' इति न्यायेन साधर्म्यमिव वैधर्म्यमपि सप्रतिद्वन्द्वमेव। एवं वैधर्म्यस्याप्यनुगतव्यवहारनियामकत्वे संभवति, अनुगतव्यवहारनियमार्था जातिरतिरिक्ता न कल्पनीया, गौरवात्। जातिः किल यथा साधर्म्यरूपा, तथा तदितरवैधर्म्यरूपापि किल भवति॥

ननु नियमेन साधर्म्यसापेक्षं वैधर्म्यं कथं स्वतोऽनुगतव्यवहारनियामकं भवेत्? साधर्म्यमपि प्रतियोग्यनुयोगिमात्रसापेक्षं व्यक्तिद्वयोपस्थितिमात्रेणापि निराकांक्षं त्रैकालिकानुगतप्रतीतिनिर्वाहकं कथं भवेत्। जातिस्तु व्यक्तिनाशेऽप्यविनश्यन्ती स्वतन्त्रा न केवलमनुगतप्रतीतिनियामिका, अपि तु उपक्रमोक्तरीत्या

व्यक्तीनां प्राणप्रदात्री स्वरूपनिरूपिका विनश्वरावयवसंस्थानरूपा कथं भवितुमर्हति? यद्यपि सन्त्यनुपपत्तयश्शतशोऽतिरिक्तजात्यङ्गीकारे याः सौगतैः प्रदर्शिताः। उच्छृङ्खलास्तु ते केवलबुद्धिजीविनः परंब्रह्माप्यपलपन्ति अप्रकम्प्याभिरनेकाभिर्दुर्युक्तिभिः। तर्हि परंब्रह्मापि त्यज्यतां सौगतेभ्यो भीत्या। परिमितप्रज्ञैः अप्रतिसमाधेयत्वमात्रात् तत्त्वानि प्रमाणसिद्धानि न हि विलुप्येरन्। अतः कथमेवं जातिनिराकरणव्यग्रता परावरतत्त्वयाथात्म्यविदामपि परमाचार्याणाम्? येन धर्माधर्मव्यवस्थापि सर्वा उल्लोलकल्लोला स्यात्। 'जनी प्रादुर्भावे' इत्यस्माद्धातोर्निष्पन्नं हि जातिपदं जन्मसिद्धं विशेषं व्यक्ति। सेयं जातिः यदि चक्षुर्ग्राह्यं अवयवसंस्थानमात्ररूपं स्यात्तर्हि 'ब्राह्मणमुपनयीत' इत्यादिविधयः किमवलम्ब्य व्यवस्थाप्याः? इति चेत्, अये साधो! न भेतव्यम्, न भेतव्यम्, यतः—

आचार्यो ह्ययमत्यन्तजागरूकस्सदैव हि। विज्ञानमूर्तिना योऽयं हयास्येन स्वयं वृतः॥
सादृश्येनान्यथासिद्धिमनुवृत्तधियां ह्ययम्। प्रादर्शयत्ततोऽप्यस्या जातेरस्ति महद्ग्रहः॥
जातिरुक्ता गौतमेन समानप्रसवात्मिका। अत्रैवालोच्यतां गाढं सर्वं स्पष्टं भविष्यति॥

तथाहि—'समानप्रसवात्मिका जातिः' (न्या.सू.2-2-71) इति सूत्रम्। समानानां प्रसवो यस्मात्, सा जातिरित्यर्थः। गौर्गामेव सूते, गजा गजमेव। नरात् नरा एव जायन्ते। किमधिकोक्त्या। आम्रबीजं स्वहेतुभूतवृक्षसदृशमेव वृक्षमुत्पादयति। अश्वत्थबीजमश्वत्थमेव। एवं समानसंस्थानस्य हेतुभूतोंऽश एव जातिरुच्यते। घटत्वपटत्वादीनां जातित्वमस्तु, मा वा। गोत्वाश्वत्वादयस्तु न घटत्वादितुल्याः। अश्वगर्दभयोस्सांकर्येण जाताश्वतरी न हि स्वसदृशं कञ्चित्प्रसूते। अत एव किलोच्यते 'स्वगर्भोऽश्वतरीमिव'(रा.)इति। जातिसांकर्यं सृष्टिरेव नानुमनुते इति जातिविज्ञानिनो वदन्ति। शुनामश्वानामन्येषां च प्राणिनां गुणस्वभावस्वरूपादिनिष्कर्षहेतुर्जातिरेवेति प्राणिशास्त्रविदः। अत एव हि सुरनरतिर्यक्प्रभृतिव्यवस्था जात्यधीनैव। शब्दस्पर्शरूपरसगन्धव्यवस्थैव जातिमूला। किं बहुना! प्राणिनामेषामवयवसंस्थानव्यवस्थैव जातिमूला॥

वर्णाश्रमविनाशाय प्रवृत्तास्सौगताः किल। जातिवादे बहुविधान् दोषानाहुस्तु युक्तितः॥
ब्राह्मणत्वादिविषये रहस्यं बहु वर्तते। वर्णाश्रमविचारस्तु न प्रसक्तोऽत्र सर्वथा॥
वर्णो वास्त्वथवा जातिः ब्राह्मण्यं त्वस्तु तत्तथा। मनुष्यत्वं तु जातिः स्यात् नूनं नास्त्यत्र संशयः॥
विरम्येताभावमात्रे नृणां बुद्धिः कदापि न। भावः कश्चिद्दर्शनीयः बुद्धेर्नूनं न संशयः॥
भावाभावात्मकं सर्वं स्वरूपपररूपतः। गोत्वं गवेतरावृत्ति सर्वगोवृत्त्यतो मतम्॥
जातेरर्धस्वरूपं स्यादपोहः सौगतोदितः। अपोहेनान्यथासिद्धिरतो जातेर्न जातुचित्॥
अतो बीजगता जातिस्सहैव व्यज्यते सदा। सहैव लीयते बीजे ह्यथ वा प्रकृतौ तथा॥
शक्तिवत्सा तु विज्ञेया सर्वभूताश्रिता सदा। व्यवस्थिता हि बीजानां शक्तिराश्चर्यरूपिणी॥
घटत्वादिकमादाय दूषणानीह सौगतैः। यान्युक्तानि न तान्यत्र गोत्वादिषु भवन्ति हि॥
जन्मसिद्धो विशेषस्तु जातिरित्यभिधीयते। अतो बीजगता जातिर्नापह्नोतुं तु शक्यते॥
नाम्रबीजात् निम्बवृक्षः कदाचिदपि संभवेत्। चर्चा वृथात्र बहुधा गृह्यतामात्मसाक्षिकम्॥

[सादृश्यादीनामतिरिक्तत्वनिरासः]

**480. सादृश्यं शक्तिसंख्याप्रभृति च कतिचित् भिन्नमूचुर्गुणादेः**
**स्यादत्रातिप्रसक्तिः प्रतिगुणमगुणीकारलिङ्गोपलब्धेः ।**
**साधर्म्यात् संग्रहश्चेत्, सममिदमुभयैर्येन केनापि; यद्वा**
**किं दन्तादन्ति कृत्वा फलमिह बलिभुग्दन्तचिन्तान्तरेऽस्मिन् ॥ १२० ॥**

---

जानन्तोऽप्यखिलं तत्त्वमाचार्याः ज्ञानमूर्तयः । अनुवृत्तधियां प्राहुरन्यथासिद्धिमत्र हि ॥
मीमांसकप्रक्रियया वैदिकत्वाभिमानतः । आकृतेरपि मूलं सा जातिरेव न संशयः ॥
शिष्यबुद्धिपरीक्षार्थं गंभीरं मौनमास्थिताः । वृथाचर्चां तु मन्वाना उदासुः शब्दवर्धनात् ॥ ११९ ॥

सादृश्यादीनामतिरिक्तत्वं प्राभाकरोक्तं निराकरोति—**सादृश्य**मित्यादि । **कतिचित्**=प्राभाकराः **सादृश्यम्, शक्तिसंख्याप्रभृति च** अतिरिक्तम् आहुः । **सादृश्यम्**=तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपम् । **शक्तिः**—कार्योपयोग्यपृथक्सिद्धविशेषणभूता तत्तत्कारणगता । **संख्या**=एकत्वादिव्यवहारहेतुः । एते त्रयोऽपि **गुणादेः**=गुणप्रभृतिक्लृप्तपदार्थेभ्यः **भिन्नम्**=विलक्षणम्=अतिरिक्तम् ऊचुः । एषां गुणत्वे, गुणे एषां व्यवहारो न स्यात्, गुणे गुणानङ्गीकारात् । अत एतेऽतिरिक्ताः पदार्था इति ते वदन्ति । 'रूपं यथा कश्चन गुणः, तथा रसोऽपि' इति गुणेष्वपि सादृश्यप्रतीतिरस्त्येव । एवं पारिमाण्डल्यभिन्नानां कारणत्वं साधर्म्यं चेत्, कारणत्वमपि सर्वपदार्थवृत्त्येव । अत एव कार्योपयोग्यपृथक्सिद्धविशेषणभूता शक्तिः षड्द्रव्येषु वर्तते। अत एव सातिरिक्ता । 'शक्तिः न षड्भावान्तर्भूता, सामान्यवृत्तित्वे सति सामान्येतरवृत्तित्वात्, अभाववत्' इत्यनुमानेन षड्भावानन्तर्भूतत्वं सिद्धम् । 'नाप्यभावान्तर्भूता, अस्तीति प्रतीतिविषयत्वात्' इत्यनुमानेनाभावातिरिक्तसिद्ध्याऽतिरिक्तपदार्थत्वसिद्धिः । इयमेव रीतिः सादृश्ये संख्यायां च ज्ञेया । 'यथा गोत्वं नित्यम्, तथाऽश्वत्वमपि नित्यम्' इति व्यवहारदर्शनात् । संख्याव्यवहारस्तु सप्तस्वपि पदार्थेषु वर्तते । 'अभावश्चतुर्विधः, समवायस्त्वेकः । सामान्यं द्विविधम् । पञ्च कर्माणि । चतुर्विंशतिर्गुणाः ।' इत्यादिव्यवहारात् । ननु तर्हि विशेषेऽस्त्वन्तर्भाव इति चेत्, विशेषस्तु नित्यद्रव्यमात्रवृत्तिः, संख्या तु सर्वपदार्थवृत्तिः । अतो न विशेषरूपा संख्या । ननु सादृश्यं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपमित्युक्तमिति चेत्, तदपि न । तद्गतधर्मस्यान्यत्र सत्त्वासंभवात् । न हि चन्द्रगतमाह्लादकत्वं मुखे स्यात्, तस्याश्रयभेदेन भेदात् । न च तद्गतधर्मसदृशधर्मवत्त्वविवक्षणान्न दोष इति शङ्क्यम्, सादृश्यलक्षण एव सादृश्यनिवेशने आत्माश्रयान्योन्याश्रयादिदोषप्रसङ्गात् । अत एते सप्तपदार्थातिरिक्ताः पदार्था इति भावः ॥

तदेतन्न युक्तम् । कुतः? **प्रतिगुणम्**=सर्वेष्वपि गुणेषु **अगुणीकारलिङ्गोपलब्धेः**= अगुणीकारस्य=गुणातिरिक्तत्वस्य यल्लिङ्गमुच्यते, गुणेऽपि वर्तमानत्वादिरूपम्, तस्योपलब्धेः । परिमाणपृथक्त्वादीनामपि गुणानां गुणेषु दर्शनात्, तेऽप्यतिरिक्ताः स्युरिति अतिप्रसक्तिः स्यात् । ननु रूपरसादयः नियमेन द्रव्याश्रिताः । द्रव्याश्रितत्वरूपधर्मस्य समानत्वात् रूपादीनां गुणत्वम्, न संख्यादेस्तथेति शङ्कते— **साधर्म्यादिति** । अन्याश्रितत्वादिरूपात् **संग्रहः**=गुणत्वेन तेषां परिगणनम् **चेत्, इदम्**=साधर्म्यम् **येन**

[गुणादावनुगतव्यवहारनिर्वाहः]

**481. गन्धादौ संनिवेशो न हि भवति; न च द्रव्यभेदे निरंशे**
**तस्माज्जात्याऽनुवृत्तव्यवहृतिरिति चेत्, उक्ततुल्योत्तरं तत्।**
**तत्तद्वस्तुस्वभावाद् घटत इह मिथस्सप्रतिद्वन्द्वकत्वम्**
**तज्जात्याधारतादेरपि तव नियतिस्तत्र न ह्यन्यतः स्यात्॥ १२१॥**

**केनापि**=अप्रधानत्वरूपगुणत्वप्रयोजकाकारेण **उभयोः**=विवादविषययोर्द्वयोः **समम्**=समानमेव । संख्याविषयेऽयमंशः पूर्वमेवोक्तः(44) काणादा कृतिरेव श्रेष्ठेति । सादृश्यादावप्यस्यातिदेशार्थमत्रानुवादः । 'येन केने'त्यौदासीन्यम् । औदासीन्यहेतुमाह—**यद्वेत्यादि** । **अस्मिन् बलिभुग्दन्तचिन्तान्तरे**= काकदन्तपरीक्षारूपे एतादृशविचारे **दन्तादन्ति**=तीक्ष्णखण्डनमण्डनादिकं कृत्वा **इह किं फलम्?** क्षुद्रोऽयं विचारो वेदान्तिनाम्॥

वयं हि ब्रह्मनिष्ठाः 'तच्चित्तास्तद्गतप्राणाः' । तर्हि कथमेतावल्लिखितमिति चेत्, वक्ष्यत्याचार्य एवोत्तरमग्रे(134) । विस्तरस्तु तत्रैव भविष्यति॥

दिक्सूचयत्यत्राचार्यः शक्तेरप्यत्र कीर्तनात् । वेदान्तिनां वस्तुतस्तु वृथा चर्चेति कण्ठतः॥
**गुरोश्शापस्तु शिष्यः स्यादित्युक्तं** स्मर्यतां मुहुः । तथावधार्यतां सत्यं गतः कालस्तु तादृशः॥
अन्ततः क्रियतां शीघ्रं भगवच्छरणागतिः । स एवैको ह्युपायः स्यादेतत्काले नृणां दृढः॥
वृथा चर्चेदृशीत्येवमसकृद्बोधनेऽपि यः । नेङ्गितज्ञो भवेत्तस्मै पुनः किञ्चित्तु कथ्यते॥ १२०॥

**गन्धादाविति** । **गन्धादौ**=रूपादिषु **गुणेषु**, 'रूपादौ' इत्येव वक्तव्ये 'गन्धादौ' इति कथनम्, रूपं हि आकारप्रदं द्रव्यस्य । अतो रूपं साकारमिति भ्रान्तेः संभवः, नैवं गन्धादाविति भावनया । **सन्निवेशः**=अवयवसंस्थानम् **न हि भवति**, द्रव्यव्यतिरिक्तस्याकाराभावात् । **न च**=नापि **निरंशे द्रव्ये**= निरवयवेद्रव्ये रूपरसादाविवाकारसंभवः । **तस्मात् जात्या**=जात्यैव **अनुवृत्तिव्यवहृतिः**=अनुगतव्यवहारः साध्यः। **इति चेत्, तत्**=एतत् **उक्ततुल्योत्तरम्**=अस्योत्तरम् उक्तेनैव तुल्यम् । किं तदुक्तमित्यत्र 'सौसादृश्यात्तु' (116-119) इत्याद्युक्तं स्मरन्नाह—**तत्तद्वस्तुस्वभावात्**=तत्तद्वस्तूनां प्रतिनियतस्वभावविशेषादेव **इह**=अनुगतव्यवहारे **मिथः सप्रतिद्वन्द्वकत्वं घटते**=परस्परसापेक्षत्वं युज्यत एव । आकाराभावेऽपि केनचिदुपाधिना सादृश्यादिकं व्यवहारनियामकमनुभवसिद्धमेव । अतिरिक्तजातिवादिनामपि सर्वत्र सा जातिः नाकारव्यङ्ग्या, सावयवद्रव्यव्यतिरिक्तस्य कस्याप्याकारस्यासंभवात् । न हि गुणकर्मादीनामाकारः कश्चनास्ति, येन तन्मूला जातिस्तेषु सिद्ध्येत् । तेषु हि **तवापि**=अतिरिक्तजातिवादिनोऽपि **तज्जात्याधारतादेः अन्यतः**= रूपत्वादिजात्याधारत्वातिरिक्तेन केनचित् **तत्र**=गुणादौ नियतिः **न हि स्यात्** । रूपत्वं रूप एव वर्तते, न तु रसे इत्यादिव्यवस्था हि न ह्याकारमादाय वक्तुं शक्या, तेषामाकाराभावात् । अतः तत्तद्वस्तुस्वभावानामसंकीर्णतया स्थितत्वादेव जातिव्यवहारव्यवस्था निर्वोढुं शक्यत एवेति गन्धत्वादयोऽपि नातिरिक्ता जातयः॥

[सत्तादिजातिस्वरूपम्]

**482. सत्तासामान्यमेके त्रिषु परिजगृहुः; केऽपि जातावपीदं**
**प्रख्यादीनां समत्वात् कथय न किमिदं सर्वनिष्ठं गृहीतम्।**
**किञ्च प्रामाणिकत्वप्रभृतिसमधिकं सत्त्वमन्यन्न दृष्टं;**
**तत् ब्रह्मेत्याश्रितं यैः, ध्रुवमपलपितं तत्तु तैर्धर्मतोक्तेः ॥ १२२ ॥**

---

वक्तव्यमत्रानुपदं (120) प्रोक्तमेव, न चाधिकम्। वर्ततेऽत्र पृथग्वक्तुं सर्वं तेन गतार्थकम्॥
चतुर्विधाः खलु प्रोक्ताः शब्दा द्रव्यादिवाचिनः। विविच्यन्ते स्वतो जातिनिमित्ताः शब्दसञ्चयाः॥
इतरेषूपाधिमात्रान्निर्वाहो नैव दुष्यति। वृथात्र चर्चा शास्त्रेऽस्मिन् अधिका त्यज्यतां हठः॥ १२१॥

अवयवसंस्थानविशेषस्यानुगतप्रतीतिनिर्वाहकत्वादेव सत्तादिजातिरप्यन्यथासिद्धेत्याह—सत्तेत्यादि। **एके**=वैशेषिकाः **त्रिषु**=द्रव्यगुणकर्मसु **सत्तासामान्यम्**=सत्ताख्यं जातिविशेषम् **परिजगृहुः**=अङ्गीचक्रुः। तथाहि **काश्यपः**—'सदिति यतो द्रव्यगुणकर्मसु सा सत्ता' (वै.सू.) इति। **केऽपि** जरन्मीमांसकाः **जातावपि**=सामान्येऽपि **इदम्**=सत्त्वम् **परिजगृहुः**। तत्रापि 'सत्'व्यवहारस्य समत्वात्। यद्येवम्, तर्हि **प्रख्यादीनाम्**=प्रतीतिव्यवहारयोः **समत्वात्**=सर्वत्र 'अस्ति' इति सद्व्यवहारस्य समानत्वात् **इदम्**=सत्त्वम् **सर्वनिष्ठम्**=सर्वपदार्थनिष्ठमेव **किम् न गृहीतम्**=नाङ्गीकृतम् कथम्? तथा च सत्त्वमपि केवलान्वयि भवतु, का हानिः? एवं विवादे स्वमतमाह—**किञ्चेति**। वस्तुतस्तु **प्रामाणिकत्वप्रभृतिसमधिकम्**= प्रमाणसिद्धत्वादतिरिक्तम्, आदिपदेन कालसंबन्धस्यापि ग्रहणम्। **अन्यत्**=अन्यादृशम् **सत्त्वम् न दृष्टम्**। तथा च प्रमेयत्वापरपर्यायं सत्त्वमुच्यताम्। किमतिरिक्तजातिकल्पनया!। ननु सत्त्वं यदि प्रमाणसंबन्धरूपम्, तर्हि स्वतस्सिद्धस्य ब्रह्मणः सत्त्वं न स्यात्। अतः सत्त्वम् असद्विलक्षणत्वमात्रम्। तथा च ब्रह्मैकमेव सत्, नान्यदिति सिद्धम्। ब्रह्मणः प्रमाणवेद्यत्वे, तस्य घटादितौल्यप्रसङ्ग इति निर्विशेषवादिनं प्रत्याह— **तत्**=सत्त्वम् **ब्रह्म इति यैः आश्रितम्**=अङ्गीकृतम्, **तैस्तु धर्मतोक्तेः**=सत्त्वस्य धर्मरूपत्वकथनात् **तत्**= ब्रह्मैव **अपलपितं भवति, ध्रुवम्**। ब्रह्मणो निर्धर्मकत्वात्, तस्मिन् सत्त्वमपि न भवितुमर्हतीति ब्रह्मैव नास्तीत्युक्तं भवेत्। अतस्सविशेषवाद एव ब्रह्मणस्सत्त्वसिद्धिः। अन्यथा ब्रह्म शशशृङ्गनिर्विशेषं स्यात्। अत्र वक्तव्यं सर्वं पूर्वमेव (नायक.) विस्तृतम्॥

**वस्तुतस्तु**—वैशेषिकैः जातिसाधनं प्रकारद्वयेन प्रदर्शितम्। एकः अनुगतव्यवहारविषयतया, अपरस्तु कारणतावच्छेदकतया, कार्यतावच्छेदकतया वा। 'सिद्ध्यतो धर्मस्य नित्यत्वे एकत्वे च लाघवम्' इति लाघवतर्कवशात् तस्य जातित्वसिद्धिः, जातिलक्षणाक्रान्तत्वात्। नित्यत्वे सत्येकत्वे सत्यनुगतत्वं हि जातेर्लक्षणम्। तत्र कार्यसामान्यसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिवत्, कार्यतावच्छेदकतया त्रितयानुगता काचिज्जातिः सिद्ध्यति। द्रव्यगुणकर्मस्वेव कार्यत्वसंभवात्। न च नित्यपरमाण्वादिसाधारणत्वं कथं तस्या जातेरिति शङ्क्यम्, परमाणुव्यावृत्ततयैव जातेः सिद्धेर्निष्प्रत्यूहत्वात्। अथवा द्व्यणुकपर्यन्तेषु

[विशेषपदार्थोऽन्यथासिद्धः]

483. **यज्जातीयं, यदा, यत् यदवधिगुणकं, यत्र; न ह्यन्यदीदृक्;**
**दृष्टैरित्थं विशेषैर्जगति विषमतां वक्ति वैशेषिकोऽपि।**
**नित्येष्वत्यन्ततुल्येष्वपि नियतदशाभेदयोगोऽस्ति शास्त्रात्**
**प्राच्योपाध्यादयो वा; विदुरतिभिदुरान् योगिवर्यादयस्तान्॥ १२३॥**

सत्तायास्सिद्धौ तज्जनकवृत्तित्वस्याप्यनन्तरं सिद्धिसंभवात्। बुद्धेर्लाघवपक्षपातित्वेनोक्तलाघवतर्कस्य प्रतितर्केण विरोधस्य वक्तुमशक्यत्वात्। अतोऽत्र प्रमाणसम्बन्धित्वं सत्त्वं तेषां न विवक्षितम्। अन्ततः तेषां जातित्वासंभवेऽपि अखण्डोपाधित्वे न कश्चन विरोधः। इयं तु शास्त्रान्तरचिन्ता। अस्तीति धात्वर्थभूता सत्ता अन्या, अन्या च द्रव्यगुणकर्मवृत्तिस्सत्तेति भाव्यम्। जातिसिद्धिस्तु समानप्रसवहेतुतयैवेति न कश्चन दोषः। इतरत्सर्वं शिष्यबुद्धिवैशद्यार्थमित्यवगन्तव्यम्॥ १२२॥

एवं सामान्याख्यं जातिपदार्थं परीक्ष्य विशेषाख्यः पदार्थोऽपि अन्यथासिद्ध इति प्रदर्शयति— **यदित्यादि**। **यत्**=यद्वस्तु **यदा**=यस्मिन् काले **यत्र**=यस्मिन् देशे **यज्जातीयम्**=यादृशविलक्षणजातिविशिष्टम् **यदवधिगुणकम्**= यदपेक्षया तरतमभावापन्नगुणकं भवति, **अन्यत्**=तदन्यत् **न हि ईदृक्**=न ह्येतत्तुल्यं भवेत्। **इत्थम्**=एवं देशकालरूपविशेषः, विलक्षणावस्थारूपो विशेषः, नानाविधगुणक्रियादिरूपो विशेषः इति लोके सर्वमपि वस्तु सदा **दृष्टैः**=प्रत्यक्षसिद्धैरेव **विशेषैः जगति**=लोके **विषमताम्**=परस्परवैषम्यम् **वैशेषिकोऽपि वक्ति**=अङ्गीकरोत्येव। अत एभिरतीन्द्रियो नित्यद्रव्यमात्रवृत्तिर्विशेषोऽन्यथासिद्ध एवेति विशेषो नातिरिक्तःपदार्थः। नन्विदं सर्वं स्थूले जगति संभवेत्। सूक्ष्मेषु परमाण्वात्मादिषु तादृशविशेषः कथं सिद्ध्येत्, परमाणूनामतीन्द्रियत्वात्, मुक्तात्मनां च ज्ञानाद्यभावादिति चेत्, तत्राह— **अत्यन्ततुल्येषु नित्येष्वपि**=जलपरमाण्वादौ मुक्तात्मसु वा **शास्त्रात्**=मुक्तिप्रतिपादकादिशास्त्रात् **नियतदशाभेदयोगः**=व्यवस्थितावस्थाविशेषसंबन्धादयो विशेषाः **सन्ति**। देशकालभेदानामतिसूक्ष्मत्वात्, तत्प्रयुक्तावस्थाविशेषसंबन्धः नूनं स्यादेव। मुक्तात्मनां ज्ञानादिविशेषगुणाभावात्, सिद्धान्ते सर्वेषां ज्ञानस्य समानत्वाच्च कथं वैलक्षण्यमित्यत्र— **प्राच्योपाधयो वा**। प्राचीनकर्मसंबन्धादिरूपोपाधयो वा स्युरेव। तेषां मुक्तौ निवृत्तत्वेऽपि उपलक्षकतयापि भेदकत्वं स्यादेव। 'यत्र सारस आसीत्, स देवदत्तकेदारः' इति गतैरुपाधिभिरपि भेदव्यवहारदर्शनात्। ननु मुक्तात्मनां ज्ञानाभावात् कथं ते तज्जानीयुः? इत्यत्र, अभ्युपेत्योत्तरमाह— **योगिवर्यादयः**=सर्वज्ञा योगिश्रेष्ठाः, **अतिभिदुरान्**=अत्यन्तविलक्षणान् **तान्**=**विशेषान् विदुः**। आदिपदेन परमात्मनो ग्रहणम्। मुक्तात्मनां ज्ञानाभावेन तेषां समस्यैव न भवति, इतरे तु जानीयुरेव, का वानुपपत्तिः?

ननु मुक्तावत्यन्ततारतम्यनिराकर्तॄणां भवतां कथं परस्परभेदसंभव इति चेत्, स्वरूपतारतम्याभावेऽपि, धर्मभूतज्ञानस्य पूर्णविकसितत्वेऽपि तत्तत्कैङ्कर्यादिप्रयुक्ता विशेषाः स्युरेव शतशः। अतः परस्परभेदो ज्ञायेतैवेति संप्रदायः। तत्त्वं त्वतिगहनमेवेत्यलमतिचर्चया॥

[पृथक्त्वगुणेन विशेषस्यान्यथासिद्धिः]

**484.** **मुक्तास्त्वत्पक्षक्लृप्ता न हि निगमदृशां तादृशाण्वादयो वा**
**येषामन्योन्यभेदी गजतुरगनयात् कल्प्यतेऽन्यो विशेषः ।**
**जात्यैक्याद्वः पृथक्त्वैरिह न यदि फलं स्याद्विशेषैः कथं तत्?**
**तेषामप्यस्त्युपाधिः सम इति न भिदाऽस्त्यत्र संरम्भमात्रात् ॥ १२४ ॥**

प्रष्टव्यं नाधिकं वत्स! प्रमेयेष्वीदृशेषु हि । भवेम पातिता धर्मसंकटे दुस्तरे वयम् ॥
आगच्छेत्तादृशः कालः सर्वं स्पष्टीभवेत्तदा । मुक्त्वा चर्चां श्रयस्व त्वं सर्वसंशयनाशनम् ॥ १२३ ॥

अन्ततः पृथक्त्वाख्यगुणेन विशेषपदार्थस्यान्यथासिद्धिमाह—**मुक्ता** इत्यादि । **येषाम्**=मुक्तात्मनां परमाणूनां च **अन्योन्यभेदी**=परस्परभेदकः **अन्यः**=अतिरिक्तः **विशेषः**=विशेषाख्यः पदार्थः **गजतुरगनयात्**=गजाश्वन्यायात्, गजाश्वानां हि जातिभेदादेव भेदः, नैवं मुक्तात्मनां परमाणूनां च, जातिभेदाभावात् । अतो विशेषाख्यः पदार्थः **कल्प्यते** । परं तु तादृशाः **त्वत्पक्षक्लृप्ताः**=भवन्मतकल्पिताः **मुक्ताः**=मुक्तात्मानः **तादृशाण्वादयो वा**=भेदकाकाररहिताः परमाणवो वा **निगमविदाम्**=वेदान्तिनाम् **न हि संमताः** । वैशेषिकाणामपि समानजातीयेष्वेव परस्परं व्यक्तिभेदः पृथक्त्वेनैव सिद्धः । ननु परमाणूनामतीन्द्रियत्वात्, मुक्तात्मनाञ्चालौकिकत्वात् परस्परं पृथक्त्वं स्वतो न सिद्ध्येत् । अतो विशेषापेक्षाऽनिवार्येति न पृथक्त्वेन गुणेन विशेषोऽन्यथासिद्धः । इति चेत्, तत्राह—**वः**=वैशेषिकाणाम् **जात्यैक्यात्**=पृथक्त्वत्वजातेरेकत्वात् **पृथक्त्वैः**=पृथक्त्वाख्यगुणैः **इह**=परमाण्वादौ **फलम्**=भेदसिद्धिः **न यदि**=यदि न भवेत्, तर्हि **विशेषैः**=विशेषपदार्थैर्वा **तत्**=तादृशं फलम्=भेदसिद्धिः **कथम् स्यात्?** न च विशेषत्वस्य जातित्वाभावान्नेयमापत्तिरिति वाच्यम्, भवत्संकेतितजातेर्निराकृतत्वात् । विशेषत्वस्याजातित्वेऽपि विशेषपदशक्यतावच्छेदकतया सिद्धस्य विशेषत्वस्यानुगमकत्वेनाव्यावर्तकत्वस्य समानत्वात् । तदेतदाह—**तेषामपि**=विशेषाणामपि **उपाधिः**=विशेषत्वरूपः **समः**=सर्वविशेषाणां समानः । **इति अत्र संरम्भमात्रात्**=अर्भाटमात्रात् **भिदा**=विशेषो **नास्ति** इति हास्यवचनम् । अतः पृथक्त्वेन विशेषस्यान्यथासिद्धिरनिवार्या॥

ननु भवत एवायं दोषः 'न भिदास्त्यत्र संरम्भमात्रात्' इति, यतोऽस्मदभिप्राय एव त्वया नावगतः । परमाण्वादयः कथं भिन्ना ज्ञायन्ते? इति न प्रश्नः । कथं भिन्ना अभवन्निति भेदकारणप्रश्नः प्रकृते । यथा—यदा घटद्वयं पश्यामः, 'इमौ कुतो भिन्नौ बभूवतुः?' इति प्रश्नस्योत्तरम्, भिन्नकपालजन्यत्वाद्भिन्नौ बभूवतुः इति खलु वक्तव्यम् । एवं द्व्यणुकपर्यन्तं वक्तुं शक्यम् । अनन्तरम् अयं परमाणुः तत्परमाणुतः कुतो भिन्नो बभूव? इति प्रश्नस्योत्तरं किम्? अवयविद्रव्याणि हि तत्कारणभूतानामवयवानां भेदाद्भिद्येरन् । इदं च द्व्यणुकपर्यन्तं वक्तुं शक्यम् 'इदं द्व्यणुकं तद्द्व्यणुकाद्भिन्नम्, एतत्परमाणुद्वयजन्यत्वादिति । परमाणोस्तु निरवयत्वान्नैवं भेदसिद्धिः । न च पूर्वमेव (जड.18) परमाणूनां निराकृतत्वात्

[विशेषाङ्गीकारस्य वैफल्यप्रतिपादनम्]

485. **नास्मद्दृश्या विशेषाः; प्रणिहितमनसां तद्धियां क्वोपयोगः?**
**तत्तद्वस्तुप्रकाशस्सुलभ इह पुनर्भिन्नधीरस्तु मा वा।**
**विश्वस्रष्टुर्विशिष्टप्रमितिमिह न ते कुर्वते नित्यसिद्धां**
**तस्मात् तत्सिद्ध्यसिद्ध्योर्न फलमनुमया; नागमोऽप्यत्र तादृक् ॥ १२५ ॥**

कथं प्रश्न इति वाच्यम्, परमाणवो न निराकृताः। किन्तु 'विश्रमस्त्ववस्तु दृष्टे' इति तत्संमतातीन्द्रियपरमाणवो निराकृताः। दृष्टे तु नोक्तदोषः 'न हि दृष्टेऽनुपपन्नं नाम' इति नयात्। तथा चेतरत्समानमेव। अत एव प्रश्नोऽपि समान एव। अतः पृथक्त्वकारणप्रश्नस्योत्तरमुच्यतामिति चेत्—स्वभावादेवेति कुतो न स्यात्। हन्त! स्वभावशब्दः सामान्यशब्दः 'विशेषः' इति तु प्रश्नानर्हतां वदति। को दोष इति चेत्—

प्रष्टव्यं नाधिकं वत्स! यतो वेदान्तिनो वयम्। भवांस्तु लोकायतिकः तर्कप्राणो मतो यतः॥
स्वभाववादे स्थातव्यं त्वन्ततो भवतापि हि। कं दोषं पश्यसि मयि मर्यादायां स्थितोऽस्म्यहम्॥
इति चेत्; ज्ञायतां सीमा तर्कस्येति वदाम्यहम्। तर्कद्वेदो हि बलवान् भवेन्नैवास्ति संशयः॥ १२४ ॥

प्राहाचार्यः पुनरपि शिष्यश्रद्धाभिवृद्धये। विशेषाणां च वैफल्यं स्वसिद्धान्तानुसारतः॥

**नेत्यादि। न अस्मद्दृश्याः विशेषाः**, तेषामतीन्द्रियत्वेन ग्रहणासंभवात् नास्माकं तेनोपयोगः। **प्रणिहितमनसाम्**=योगिनाम् **तद्धियाम्**=अतीन्द्रियग्रहणशक्तज्ञानानां विशेषैः **क्व उपयोगः**, स्वत एव तद्ज्ञानैः परमाणूनां ग्रहणात् **तत्तद्वस्तुप्रकाशः सुलभः। इह पुनः**=लोके तु विशेषाधीना **भिन्नधीः**=परस्परपृथग्दर्शनम् अस्तु, मा वा, न कश्चन विशेषैरुपयोगः। **विश्वस्रष्टुः**=परमेश्वरस्य **इह**=परमाण्वादिविषये नित्यसिद्धाम् **विशिष्टप्रमितिम्**=विलक्षणज्ञानम् **ते**=विशेषाः **न कुर्वते**=न कर्तुमलम्, नित्यत्वादेव। **तस्मात्**=एवं भेदज्ञानस्यान्यथासिद्धत्वात् **अनुमया**=अनुमानेन **तत्सिद्ध्यसिद्ध्योः**=विशेषसिद्धावसिद्धौ वा **न फलम्**=नोपयोगः, भेदप्रतीतेरन्यतस्सिद्धत्वात्। **अत्र**=विशेषसद्भावे **तादृक्**=तादृशः **आगमोऽपि**=श्रुतिरपि न=न दृश्यत एव। अतो विशेषसद्भावे प्रमाणमपि नास्ति, तेन साधनीयमपि न किञ्चिदस्ति॥

**अयमत्र संग्रहः**—विशेषसद्भावे प्रमाणं किम्? किं प्रत्यक्षम्, उतानुमानम्, उत श्रुतिः? एवं विशेषाङ्गीकारेण साधनीयं किम्? भेदज्ञानमिति यदि, तर्हि केषाम्? किं बद्धानाम्, उत सिद्धानाम्, उतेश्वरस्य? न प्रत्यक्षम्, नानुमानम्, नागमः प्रमाणम्। एवं बद्धानाम्, सिद्धानाम्, ईश्वरस्य च परमाण्वादिभेदज्ञानं विशेषमन्तरैव सिद्धम्। अतश्च प्रमाणप्रमेयानुपपत्तिभ्यां विशेषाः न सन्त्येव। ननु भोः!

भेदज्ञानं न पृच्छामः, भेदहेतुस्तु पृच्छ्यते। इति चेदुत्तरमपि प्रोक्तमत्रानुचिन्त्यताम्॥
न हि निन्दानयेनैव जानन्तः सर्वमेव हि। तारतम्यं दर्शयन्ति शिष्यश्रद्धाभिवृद्धये॥

**वस्तुतस्तु**—भेदो दुस्त्यजस्सर्वस्यापीति पूर्वमेव (श्लोक.13) प्रदर्शितम्। तत्र स्वभावपर्यायो विशेषः प्रथमः, द्वितीयं तु पृथक्त्वम्, एतदुभयाधीनो भेद इति भेदवादस्य क्रमः। विशेषस्य स्थाने

[समवायनिराकरणम्]

486. **बन्धं नाध्यक्षयामः समधिकमपृथक्सिद्धयोस्तत्स्वरूपात्**
**कल्प्ये तस्यातिरेके तदुपरि च तथेत्यप्रकम्प्याऽनवस्था।**
**ताभ्यामेष स्वभावाद्धटित इति कृता भक्तिरस्त्वेतयोस्ते**
**नो चेत्, ज्ञानादिकानां विषयविषयिताद्यापतेदन्यदेवम्॥ १२६॥**

---

तद्व्यक्तित्वं कथञ्चिद्वक्तुं शक्यम्। तदधीनं पृथक्त्वं त्वनिवार्यम्। अयमेव च स्वभाववादः। अतश्च 'व्यवहारे तर्कन्यायनयः' इत्येव साधीयः। अधिकं पुनरुक्तिरेव॥ १२५॥

एवं विशेषं निराकृत्यान्तिमं समवायमपि निराकरोति—**बन्धमि**त्यादि। किं समवायः प्रत्यक्षसिद्धः, उत विशिष्टप्रतीत्यन्यथानुपपत्त्या कल्पितः। नाद्यः, यतः—**अपृथक्सिद्धयोः** =गुणगुण्यादिरूपयोः अयुतसिद्धयोः **तत्स्वरूपात्**=अयुतसिद्धपदार्थद्वयस्वरूपात् **समधिकम्**=अतिरिक्तम् **बन्धम्**=समवायाख्यं संबन्धम् **नाध्यक्षयामः**=न साक्षात्कुर्मः। यद्यप्येतद्दोषपरिजिहीर्षया नव्याः केचित्समवायं प्रत्यक्षसिद्धं मन्यन्ते, परन्तु तदा समवायो नित्यः एकश्च न स्यात्। अनुमानेन समवायसिद्धावेव हि लाघवतर्कावतारात् नित्यत्वैकत्वयोः सिद्धिः। तथा च समवायस्य प्रत्यक्षत्वेऽपसिद्धान्तः। अधिकमन्यत्र। अस्तु तर्हि द्वितीयः कल्पः। समुच्चयसमूहालम्बनबुद्ध्यपेक्षया 'गुणी' इति विशिष्टबुद्धेर्हि वैलक्षण्यमावश्यकम्। अतोऽत्र वैशिष्ट्यप्रयोजकं किञ्चिद्वस्तुस्वरूपादधिकं वक्तव्यमेवेत्यधिकस्य सम्बन्धस्य सिद्धिरिति चेत्, **तस्य**—संबन्धस्य **स्वरूपातिरेके**=संबन्धिस्वरूपादतिरिक्तत्वे **तदुपरि**=समवायसिद्ध्यनन्तरमपि स तथेति अनवस्था अप्रकम्प्या। तथोक्तं सूत्रकृतैव—'समवायाभ्युपगमाच्च साम्यादनवस्थितेः'(ब्र.सू.2-2-12) इति। **अयं भावः**=अयुतसिद्धयोः वैशिष्ट्यसिद्ध्यर्थं यदि समवायोऽङ्गीक्रियते, तर्हि समवायः केन सम्बन्धेन समवायिनि वर्तेत? यद्यन्येन तर्ह्यनवस्था। यदि स्वस्वरूपतः, तर्हि समवायिनावेव तथा स्याताम्, किमतिरिक्तसमवायकल्पनेनेति। तदेतदाह—**ताभ्याम्**=अयुतसिद्धाभ्यां समवायिभ्याम् **एषः**=समवायः **स्वभावात्**=स्वस्वभावादेव घटत इति यदि, तर्हि **ते**=समवायिस्वरूपे एव **एतयोः**=समवायिनोः **भक्तिः**=संबन्धरूपः **कृता**=अङ्गीकृता **अस्तु**, किमतिरिक्तकल्पनेन? **नो चेत्**=एवमनङ्गीकारे **एवम्**=समवायवदेव **ज्ञानादिकानाम्**=ज्ञानार्थयोरपि **विषयविषयितादि** =विषयविषयिभावादिः **अन्यत्**=अतिरिक्तं संबन्धान्तरम् **आपतेत्**=सिद्ध्येत्॥

ननु गुणगुणिनोराधाराधेयभावमूला विशिष्टबुद्धिरुभयसंमता। नैवं ज्ञानार्थयोराधाराधेयभावस्संमतः। ज्ञानं ह्यान्तरम्, विषयस्तु बाह्यः। कथं तयोराधाराधेयभावसंभवः। तदा हि 'ज्ञानवान् घटः' इति 'घटवत् ज्ञानम्' इति वा प्रतीतिप्रसङ्गः। 'ज्ञातो घटः' इत्यत्र ज्ञानस्य विशेषणता तु विषयतासंबन्धेनैवेति सर्वसंमतम्। अतः कथमत्र प्रतिबन्दितया विषयविषयिभावः प्रदर्श्यत इति चेत्; विषयविषयिभावस्य अतिरिक्तसंबन्धरूपत्वाङ्गीकारेण तथापादनसंभवात्। अन्ततोऽनवस्थाया दुरतिक्रमात्। ननु भोः!

[समवायस्यैक्ये दोषवर्णनम्]

487. संबन्धे सर्वतुल्ये प्रसजति गुणजात्यादिसङ्कीर्णभावः
तत्तद्द्वन्द्वस्वभावादनियतिशमने निष्फलाऽन्यस्य क्लृप्तिः ।
त्यक्ते तत्तद्विशेषे स्वयमुभयसमे चात्र संबन्धरूपे
नानासंबन्धपक्षेऽप्ययमधिकरणाधेयभेदः कथं स्यात् ।। १२७ ।।

धर्मिग्राहकमानस्य महत्त्वं किं न निश्चितम्? जानन्नप्यथवा किं त्वं ब्रूषे स्वमतनिष्ठया? ।।
सूत्रकारः कथं ब्रूतेह्यनवस्थां तथेति चेत् । शास्त्रान्तरकथा सेयम् सत्यमन्यत्र वक्ष्यते ।।
बाह्यप्रपञ्चस्त्वन्यःस्यात् आन्तरोऽन्यो विलक्षणः । न सांकर्यं तयोः कार्यमेवं विज्ञाननिश्चयः ।।
न हि निन्दानयेनैव नीयतामथवाऽद्य तत् । ऋषयः कलहं कुर्युः कथमन्योन्यमुच्यताम् ।।
यदि भेदो वस्तुनोः स्यात् तयोस्संबन्धमन्तरा । कथं विशिष्टधीः स्यादित्यालोचय विनाऽऽग्रहम् ।।
विशिष्टबुद्धेर्वैशिष्ट्यं वक्तव्यं च समुच्चयात् । वैलक्षण्यं ज्ञानतश्चेत्, भेदोऽपि स्यात्तु तादृशः ।।
इन्त्यापत्तेर्वज्रघातः, रक्ष्यस्स्वात्मा कथं त्वया । अथवा समये सर्वं वक्ष्यामोऽन्यत्र, सह्यताम् ।।
तावद्यदि भवेदायुरुभयोरीश्वरेच्छया । तिष्ठत्वत्रैव चर्चेयं गच्छामश्चोपरि द्रुतम् ।।
व्यवहारे न्यायनयः, तत्त्वे वेदान्त एव च । इत्येव चान्ततः सिद्धं न भाट्टनयसंश्रयः ।। १२६ ।।

समवायस्य नित्यत्वे एकत्वे च दोषमाह—**संबन्ध** इत्यादि । **संबन्धे**=समवायाख्ये संबन्धे **सर्वतुल्ये**=एकत्वान्नित्यत्वाच्चायुतसिद्धानां सर्वेषामपि समाने सति **गुणजात्यादिसंकीर्णभावः**=जातिगुणक्रियादीनां सर्वेषामपि परस्परसांकर्यम् **प्रसजति**। किं बहुना! वायावपि रूपवत्ताबुद्धिप्रसङ्गः, स्पर्शसमवायस्य रूपसमवायस्य चैक्यात् । **तत्तद्द्वन्द्वस्वभावात्**=तत्तत्प्रतियोग्यनुयोगिनोर्नियतस्वभावत्वात् **अनियतिशमने**= अव्यवस्थापरिहारे **अन्यस्य**=तत्तद्वस्तुस्वरूपस्वभावातिरिक्तस्य समवायस्य **क्लृप्तिः**=कल्पनम् **निष्फला**= व्यर्था, वस्तुस्वभावादेव सर्वोपपत्तेः । तत्तद्वस्तुस्वभावादितीममंशं व्यतिरेकेणापि प्रदर्शयति—**तत्तद्विशेषे**= तत्तद्वस्तुगते विशेषे **त्यक्ते**=अनङ्गीकृते, यदि नाङ्गीक्रियत इत्यर्थः, **संबन्धरूपे अत्र**=उभयसंबन्धरूपे अस्मिन् समवाये **स्वयम्**=स्वत एव एकसंबन्धत्वात् **उभयसमे च**=गुणगुणिक्रियाक्रियावदादिरूपायुतसिद्धयोरुभयोस्समाने च **नानासंबन्धपक्षेऽपि**=एवं प्रतियोग्यनुयोगिभेदरूपोपाधिभेदात्संबन्धभेदपक्षेऽपि **अयम् अधिकरणाधेयभेदः**=आधाराधेयव्यवस्था वा **कथं स्यात्?** वस्तुस्वभावादित्येव खलु उत्तरं वक्तव्यम् । यथा कुण्डबदरयोस्संयोगस्योभयनिष्ठत्वेऽपि 'कुण्डे बदरम्' इत्येव प्रयोगः, न तु 'बदरे कुण्डः' इति व्यवस्था हि स्वभावादेव वक्तव्या । एवं सत्यतिरिक्तः समवायः किमर्थः? ननु तर्हि संयोगो वा किमर्थः? स्वभावादेव सर्वं व्यवस्थाप्यतामिति चेत्—

प्रष्टव्यं नाधिकं त्वत्रेत्यसकृत्प्रतिबोधने । इङ्गितं यो न जानाति किं वा तस्मै प्रकथ्यताम्? ।।
सर्वं स्वभावादिति चेदुत्तरं यदि कथ्यते । शास्त्रं तर्हि किमर्थं स्यात् त्यक्तव्यं सकलं ततः ।।
इत्यादिकं पुनर्नैव प्रष्टव्यं धीमता त्वया । वक्ष्यामस्समये सर्वमित्येव पुनरुच्यते ।।

[प्राभाकरसंमतसमवायनिराकरणम्]

488. धर्मो धर्मी द्वयं वा कृतकभिमममतं यत्र, संबन्धमत्र
प्राहुः कार्यं, स्वभावात् तदुभयघटितं केऽपि; दत्तोत्तरं तत्।
सिद्धेऽसिद्धे समं वा तदुदय इति तु प्रेक्ष्य पक्षत्रयेऽपि
प्रागुक्तेभ्योऽतिरिक्तान् प्रणिहितमनसः पश्यत प्रत्यवायान्॥ १२८॥

[अभावपदार्थपरीक्षा]

489. सोऽभावो, यः स्वभावं नियमयति दशादेशकालादिभेदो
नैवं सर्वाश्रितानां त्यजनमनितरस्थाप्यधीप्रापितत्वात्।

---

**वस्तुतस्तु**—समवायस्य नित्यत्वमेकत्वं च लाघवतर्कसिद्धम्, न तु प्रत्यक्षतः। एवमपि समवायिनां सांकर्यं नापादयितुं शक्यम्। संबन्धो हि संबन्ध्यधीनः। अत एव संबन्धः सर्वत्राप्यननुगत एव स्वकार्यं स्वतः कुर्यात्। संबन्धः खलु सत्तयैव विशिष्टज्ञानजनकः, न ज्ञाततया। ज्ञातश्चेत् प्रकारो वा भवेत्, विशेषो वा। शब्दमात्रशरणानामिदं यद्यपि ज्ञातुं श्रम एव स्यात्। अत एवोच्यतेऽसकृत्—शब्दं त्यक्त्वा अर्थं चिन्तयितुं शक्तानामेव विचारेऽधिकार इति। अत एवात्र—'नानासंबन्धपक्षेऽपि' इत्येतत्समवायनानात्व-पक्षदृष्ट्या योजनीयम्। उत्तरश्लोकविचारोपक्षेपकं स्यादेतदपि॥ १२७॥

प्राभाकरसंमतं समवायवादमपि निराकरोति—**धर्म** इत्यादिना। **केऽपि**=प्राभाकराः **धर्मः**=अयुत-सिद्धयोर्मध्ये धर्मः गुणादिः **धर्मी**=गुणादेराश्रयः द्रव्यम्, अनयोरन्यतरत् द्वयं वा **यत्र कृतकम्**=अनित्यम् **अभिमतम्, अत्र**=एतादृशस्थले **तदुभयघटितम्**=तदुभयवर्तिनम् संबन्धम्=समवायाख्यं संबन्धम् **कार्यम्**=अनित्यम् प्राहुः। **तत्**=तदेतदपि **दत्तोत्तरम्**=समवायनिराकरणेनैव निरस्तमेव। किञ्च तस्या-नित्यत्वकथनात् **सिद्धे**=धर्मे धर्मिणि च पूर्वसिद्ध एव **तदुदयः**=समवायसंबन्धस्योत्पत्तिः? उत **असिद्धे** धर्मे धर्मिणि च तदुदयः? **समं वा** तदुदयः? **इति तु प्रेक्ष्य**=विचार्य **पक्षत्रयेऽपि प्रागुक्तेभ्यः अतिरिक्तान् प्रत्यवायान्**=दोषान् **प्रणिहितमनसः**=सावधानचित्ताः **पश्यत**। पूर्वमेवोभयोस्सिद्धौ, सिद्धत्वादेव संबन्धो व्यर्थः। असिद्धौ च, कयोस्संबन्धः? संबन्धिनोरेवाभावात्। सममपि न युज्यते, आश्रितस्याश्रयस्य चैककालिकत्वं कथं स्यात्? आश्रयसापेक्षः खल्वाश्रितः। अत्र 'पूर्वसिद्धे हि घटादौ रूपादेरुत्पत्तिः' इति वृत्तिरवधेया। एतन्मूलक एव 'उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठति' इति न्यायः। परं तु—

किमेते वैदिका हन्त! ह्यथवा तेऽर्धतार्किकाः। किमर्थमेवं क्लिश्यन्ति त्यक्त्वाचारं तु वैदिकम्॥
आसीदेवं मध्यकाले शास्त्राणां विदुषामपि। सांकर्यं बहुधा, यस्य फलं सर्वविनाशनम्॥
शास्त्राणां किल मर्यादा नियतास्ति न संशयः। मर्यादातिक्रमादेव सर्वसांकर्यमागतम्॥
ज्ञानं ह्यकल्मषं नाभूत् तस्मात्सांकर्यवैभवात्। मर्यादा सा तु नियता समये दर्शयिष्यते॥ १२८॥

एवं षड्भावपदार्थान् विचार्य, क्रमप्राप्तमभावं परीक्षयति—**सोऽभाव** इत्यादि। **यः दशादेश-कालादिभेदः**=अवस्थायाः देशस्य कालस्य च विशेषरूपस्सन् प्रकारान्तरेण **स्वभावम्**=वस्तूनामसंकीर्ण-

**तत्तत्प्रत्यर्थिभावस्फुरणसहकृतो नञ्प्रयोगक्षमोऽसौ**
**नाभावानामभावं त्वमपि कलयसे भावभेदादितोऽन्यम्॥ १२९ ॥**

स्वभावम् भावरूपमेव नियमयति **सः अभावः**। अथवा, यः **स्वभावम्**=वस्तूनामसंकीर्णस्वभावम् **नियमयति**=व्यवस्थापयति, **सः अभावः**। पदार्थस्सर्वोऽपि यदा तत्तत्पदेनोपस्थाप्यते, अथवा प्रत्यक्षादिना वा गृह्यते, तदा नियमेन स्वेतरव्यावृत्ततयैव तत्तद् गृह्यते। गौः इत्युक्ते हि अश्वादिव्यावृत्तिरपि सहैव भात्येव। गोः स्वरूपं गोत्वेन यदा व्यवस्थाप्यते, तदा किल गोत्वादिः निखिलगोसाधारणः, अश्वादिव्यावृत्तश्च गृह्यते। अत एव गोत्वं गवेतरासमवेतं निखिलगोसमवेतमित्युच्यते। अतोऽभावो व्यावृत्तिरूपः। अतो वस्तुनोऽर्धांशरूपः, न स्वतन्त्रः पदार्थः। ननु नीलादीनामपीदं समानम्, अनील(पीतादि)व्यावृत्तिरूपत्वादिति चेत्, **सर्वाश्रितानाम्**=सर्वद्रव्याश्रितानां नीलादिविशेषणानामपि नैवं त्यजनम्। कुतः? **अनितरस्थाप्यधीप्रापितत्वात्**=इतरेण=अन्यविषयेण न स्थाप्या=अचरितार्था या धीः, तादृशप्रतीत्योपस्थापितत्वात्। नीलादिकं हि विशेषणत्वाद्व्यावर्तकस्वभावं सत् विशेष्यं पीतादिभ्यो व्यावर्तयति। न तावता नीलादीनां स्वरूपमेवासाधारणं नास्तीति न, नीलं स्वयं स्वस्वरूपेण गृह्यमाणमेव विशेष्यं पीतादिभ्यो व्यावर्तयति, गोत्वादिवत्। अतो नीलादिप्रतीतिर्न पीताभावमात्रेण निरूप्या, किन्तु स्वस्वरूपेणापीति न पीताद्यभावेनैव चरितार्था नीलबुद्धिः। अभावस्तु नैवम्, किञ्चिन्नास्तीत्युक्ते हि, तर्हि किमस्ति? इति अन्येन भावेन बुद्धिः पूरणीया, एकस्य निवृत्तौ, अन्यस्य प्राप्तेरावश्यकत्वात्। ननु अभावोऽपि यदि भावरूपः, तर्हि भावाभावयोरविशेषापत्तिरित्यत्राह—**तत्तदित्यादि**। **तत्तत्प्रत्यर्थिभावस्य**=तत्र तत्र तत्तत्पदार्थविरोधरूपस्य स्फुरणेन सहकृतः **असौ**=अभावः **नञ्प्रयोगक्षमः**=नञ्प्रयोगयोग्यो भवति। स्वरूपेण प्रतीतौ तु न नञपेक्षा। गौः स्वरूपेण प्रतीयते, इतरव्यावृत्तिस्तु अश्वाद्युपस्थितिसापेक्षा 'अयं गौः, नाश्वः' इति। अभावस्य भावात्मत्वं हि अतिरिक्ताभाववादिनामपि क्वचित्संमतं प्रदर्शयति—**त्वमपि**=अभावोऽतिरिक्त इति वदन् त्वमपि **अभावानामभावम्**=अभावाभावम् **भावभेदादितः**=भावविशेषरूपत्वापेक्षया **अन्यम्**=अतिरिक्तम् **न कलयसे**=न मनुषे। घटाभावाभावः घटस्वरूपः खलु भवताम्। 'घटाभावो नास्ति' इत्येतद्धि 'घटोऽस्ति' इत्यनेन समानार्थकम्। 'द्वितीयाभावः प्रथमाभावस्वरूपः' 'भेदाभावश्च भेदप्रतियोगितावच्छेदकरूपः' इति किल गायन्ति तेऽपि। कुत्रचित्तु अभावः भावरूपः संप्रतिपन्नश्चेत् कुत एवमर्धजरती। अतोऽतिरिक्तोऽभावो नास्त्येव॥

'नास्ति' इति प्रतीतिविषयः अभाव इत्युच्यते। निरुपाधिकः नास्तीति प्रतीतिस्तु कस्यापि कदापि कुत्रापि न हि भवति। प्रथमतः प्रतियोगिनिरूप्यः खल्वभावः। अतश्च प्रतियोगिनः स्वरूपविशेषं वा देशकालसंबन्धविशेषं वा यदा निषेधति, तदा अन्येन रूपेणान्यस्मिन् कालेऽन्यस्मिन् देशे प्रतियोगिनो भावमेवाभिधत्ते। 'नास्ति' इत्युक्ते हि समनन्तरमेव 'किम्?' इति प्रश्नोऽनिवार्यः। 'धनम्' इति यद्युत्तरम्, जगत्येव धनं नास्तीति नार्थः। अतः 'कदा?' इति वा 'कस्य?' इति वा प्रश्नोऽनिवार्यः। कदा इति कालप्रश्नः। तस्योत्तरम् 'इदानीम्' इति यदि, तर्हि 'पूर्वमासीत्, इदानीं नास्ति' इति पर्यवसानम्। अयमेव प्रध्वंसाभावः। 'श्वो भविष्यति' इति यदि, तर्ह्ययमेव प्रागभावः। 'पूर्वमासीत्' इति च प्रध्वंसाभावः।

[प्राक्प्रध्वंसाभावयोः स्वरूपम्]

490. प्रध्वंसप्रागभावो द्वितनुरभिमतः प्रागभावात्ययश्च
प्रागूर्ध्वानाद्यनन्तप्रतिनियतदशासन्ततिः स्यात् तथा नः ।

एतावुभौ कालपरिच्छेदरूपावनन्तरश्लोके परीक्ष्येते । 'अत्र नास्ति' इत्यनुयोगी, स एव देशपरिच्छित्तिं वदति । तेन देशान्तरसत्ता सूच्यते । अयमेवात्यन्ताभावः । एवम् 'अयमयं न' इति वस्तुनः स्वरूपपरिच्छेदं वदति । 'घटःपटो न' इत्युक्ते हि घटपटयोरन्योन्यात्मता निषिध्यते । अत एवायमन्योन्याभाव इत्युच्यते ॥

बुद्धिर्हि कदाप्यभावमात्रालम्बनी न भवेत् । निर्विषयं हि ज्ञानं न कुत्राप्यनुभवसिद्धम् । अतः विषयालाभे सैव लीयेत । सैव संसारिणां सुषुप्तिः, योगिनां तु समाधिः । अतः केवलनिषेधात्मकः कश्चन पदार्थो नास्त्येव । 'पदार्थ'पदमेवेममंशं वक्ति । अभावः कस्य पदस्यार्थः । 'अभाव' पदमेव समस्तपदम् न भावः=अभाव इति खलु विग्रहः । समस्तपदं च वाक्यरूपम्, अनेकपदात्मकत्वात् । अतश्चाभावो वाक्यार्थः राजपुरुषादिवत्, न पदार्थः । ननु 'न' इति पदस्यार्थोऽभावः, न वाक्यार्थ इति चेत्, 'न' इत्यस्याव्ययत्वेन पदत्वाभावात् । अव्ययानां स्वतन्त्रतया प्रयोगाभावात् । अत एवाव्ययानां द्योतकत्वमेव, न वाचकत्वमिति प्रामाणिकाः । न हि पदान्तरनिरपेक्षो नञ् कुत्रापि बोधं जनयितुमलम् । 'न' इत्युक्तमात्रे हि, किं न? इति प्रश्नोऽनिवार्यः । ननु पितृपुत्रादिपदान्यपि नियतसापेक्षाणि । न हि तान्यभावबोधकानि । तद्वदेव नञप्यस्त्विति चेत्, प्रामाणिकसंमतेषु चतुर्विधपदेषु नञोऽनन्तर्भावात् । पित्रादिपदानि तु न तथा, तानि संज्ञापदानि । नञः अभावोऽर्थः इति खलु वक्तव्यम् । अभाव इति च नैकं पदमित्युक्तम् । अतोऽर्थसमाजरूपोऽभावः । अथवा अभावः पदार्थस्यार्धांशरूपः । सर्वं हि वस्तु भावाभावात्मकम् । 'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि' इति खलु महामेधावी **भट्टः** । अत एव सदसदात्मकं सर्वम्, अनुवृत्तव्यावृत्त रूपम्, सामान्यविशेषरूपञ्च सत्त्वं सर्वानुवृत्तं **महासामान्य**पदवाच्यमेव प्रत्यक्षविषय इति **मण्डनमिश्रादयः**। (श्लो.वा.अभाव.11) व्यावृत्तं स्वलक्षणमेव प्रत्यक्षविषय इति बौद्धाः । उभयात्मकं सर्वमिति वैदिकाः । विस्तरस्तु श्रीमद्रङ्गनाथयतिविरचिते श्रीभाष्यगूढार्थसंग्रहे । अभावस्तु न स्वतन्त्रः कश्चित्पदार्थः । किन्तु तत्तद्देशकालावस्था एवाभावपदार्थः । तत्रान्योन्याभावस्य स्वरूपं तु पूर्वमत्रैव (श्लो.13) प्रसङ्गात्प्रदर्शितम् । सारतस्तु=भेदाभावो यथा भेदप्रतियोगितावच्छेदकरूपः, तथा भेदोऽपि भेदानुयोगितावच्छेदकरूप एव, न त्वतिरिक्तः । यथा—घटभेदाभावो घटत्वमेव, एवं घटभेदोऽपि पटत्वादिरेव । इतराभावानां स्वरूपं तु समनन्तरं प्रदर्श्यते । आहत्याभावो नातिरिक्तः पदार्थः ॥ १२९ ॥

नन्वन्योन्याभावस्तदनुयोगितावच्छेदकरूपोऽस्तु कामम्, समनियतत्त्वात् । प्रागभावप्रध्वंसाभावयोर्भावरूपता तु दुरुपपादा । प्रागभावः खल्वनादिस्सान्तश्च । स च यदि तत्तत्कार्यावस्थायाः पूर्वावस्थारूपः, तर्हि घटस्य प्रागभावः मृदः पिण्डत्वावस्थारूपः । इयं चावस्था सादिः, प्रागभावस्त्वनादिः । कथमयं पूर्वावस्थारूपः स्यात्? एवं प्रध्वंसाभावः उत्तरावस्थारूपः । इयं सान्ता, ध्वंसस्त्वनन्तः । कथमुभावभिन्नौ स्याताम् । अतः प्रागभावप्रध्वंसाभावावतिरिक्तावेव इति शङ्कां परिहरति—**प्रध्वंसे**त्यादि । **प्रध्वंसप्रागभावः**=

**क्लृप्तेऽन्यस्मिन् अभावे परमपि च पुराऽभावपारम्परीतः**
**संपाद्येतानवस्था; स्वत उपरमणं दृष्ट एवास्त्वभीष्टे ॥ १३० ॥**

प्रध्वंसस्य प्रागभावः **द्वितनुः**=द्विरूपः अभिमतः। घटप्रध्वंसस्य प्रागभावः घटरूपः। अतोऽयं भावोऽपि अभावोऽपि। एवम् **प्रागभावात्ययश्च**=प्रागभावध्वंसश्च **द्वितनुः**=द्विरूपः=द्विरूप एव। घटप्रागभावस्य ध्वंसः घटरूपः। घटे उत्पन्ने हि घटप्रागभावो नश्यति। अतोऽयमपि द्विरूपः। अत एतयोरुभयोरपि भावरूपत्वे को विरोधः? अभावरूपताप्यस्ति किलेति चेत्, हन्त! सर्वमपि भावाभावात्मकमित्युक्तं विस्मृतं भवता। अतः केवलं निषेधरूपता नास्त्येवानयोः॥

पूर्वोक्तानुपपत्तेरुत्तरं किमित्यत्र—**प्रागित्यादि**। **तथा**=प्रध्वंसप्रागभाव—प्रागभावप्रध्वंसवदेव **प्रागूर्ध्वानाद्यनन्तप्रतिनियतदशासन्ततिः**=प्राक् ऊर्ध्वं तु प्रागभावस्य प्राक्कालिकी, प्रध्वंसस्यानन्तरकालिकी च प्रतिनियतानां अवस्थानां सन्ततिः=परंपरा सर्वाऽपि **नः**=अस्माकम् **स्यात्**=प्रागभावः प्रध्वंसाभावो वा स्यात्। घटस्याव्यवहितपूर्वावस्था यद्यपि पिण्डत्वावस्थैव। न तन्मात्रः प्रागभावः, तत्पूर्वा मृत्त्वाद्यवस्थाः सर्वा अपि घटप्रागभाव एव। एवं घटस्योत्तराव्यवहितावस्था यद्यपि लोष्टत्वरूपा। परन्तु सर्वा अप्युत्तरावस्थाश्चूर्णत्वादिरूपा घटप्रध्वंसः। अतः प्रागभावोऽनादिः, प्रध्वंसाभावश्चानन्त एव भवत इति न कापि हानिः। तयोरतिरिक्तत्वे दोषमप्याह—**अन्यस्मिन्नभावे क्लृप्ते**=अतिरिक्ताभावरूपतायाः कल्पने **परमपि**=अनन्तरमपि, **पुरा च**=पूर्वं च यथासंख्यं प्रागभावप्रध्वंसाभावयोः **अभावपारंपरीतः**=अतिरिक्ताभावपरंपराया अनिवार्यतया **अनवस्था संपद्येत**। घटोत्पत्तौ हि घटप्रागभावस्य ध्वंसो वक्तव्यः। एवञ्च घटप्रागभावध्वंसस्य प्रागभावः, तस्य पुनर्ध्वंसः, अस्य च पुनः प्रागभावान्तरमित्यनन्ता अभावाः कल्पनीयाः। एवं प्रध्वंसाभावस्य प्रागभावः, तस्य ध्वंसः, पुनरस्य ध्वंसस्य प्रागभाव इत्यनन्ता अभावाः कल्पनीयाः। तथा चानवस्था दुर्वारा। ननु घटाभावाभावः यतो घटरूप एव नातिरिक्तः, एवं घटभेदाभावः यथा घटत्वरूपः, तथैव घटप्रागभावध्वंसः, घटरूप एव, घटप्रागभावध्वंसप्रागभावश्च घटप्रागभाव एव, स च घटपूर्वावस्थारूपः। एवं घटध्वंसप्रागभावः घट एव, घटध्वंसप्रागभावध्वंसः घटध्वंस एव, स च घटोत्तरावस्थारूप एव। अतोऽनवस्थाभिया कुत्रचिद्विश्रान्तिर्यत आवश्यकी, तत एव **अभीष्टे**=उभयसंमते **दृष्ट एव**=अनुभवसिद्ध एव विषये **स्वत एव उपरमणम्**=विश्रान्तिः **अस्तु**। अतश्च प्रागभावप्रध्वंसाभावावनतिरिक्तौ। प्राचीनानां नैयायिकानामिमावभावौ न संमताविति **न्यायमञ्जरीकारो जयन्तभट्टः** प्राहेत्येतदप्यत्रावधेयम्। अधिकमप्रस्तुतमत्र॥

नन्वस्त्वधिकमप्रस्तुतमन्यत्र। प्रस्तुतमेव विस्मृतं किलायुष्मता। अत्यन्ताभावः किंरूपः इति कुतो नोक्तम्? इति चेत्, सुज्ञत्वान्नोक्तमिति गृह्यताम्। पुरतः शून्यं भूतलं पश्यन् हि, यादृशं प्रतियोगिनं स्मरति, तदभावं जानातीति स्पष्टमिदम्। अत एव प्रातर्गजाभावज्ञानादिकं व्याख्यातम्। प्रातश्चत्वरं गतं, मध्याह्ने यदि कश्चित्पृच्छति 'किं प्रातश्चत्वरे गज आसीत्?' इति, 'नासीत्' इति प्रतिवक्ति। प्रातः गजाभावज्ञानं तु

नोत्पन्नमेव तस्य। अथापि गजाभावं कथं स्मरति? कथं च वक्ति? चत्वरस्य प्रातर्दृष्टत्वात्, यं यं प्रतियोगिनं स्मरति, तत्तदभावं ज्ञातमेव मन्यते जनः, शून्यचत्वरज्ञानात्। अतोऽत्यन्ताभावोऽधिकरणात्मक एव॥

ननु तर्हि जले गन्धाभावः कथं घ्राणेन गृह्येत? तत्र हि गन्धाभावो जलरूपः। जलं च न घ्राणग्राह्यमिति चेत्। भो बृहस्पते! जलं तु चक्षुषा गृह्यते, घ्राणेन तु गन्धो न गृहीतः। गन्धानुपलब्ध्या चाक्षुषं जलज्ञानमात्रं भवति। 'सुरभि कुसुमम्' इति ज्ञानमपि हि नैकेन्द्रियजन्यम्। चक्षुषा कुसुमं गृह्णाति, गन्धश्च प्रत्येकं घ्राणेन्द्रियेण गृहीतः ज्ञानविधया विशेषणं भवति। भिन्नेन्द्रियग्राह्यविशेष्यविशेषणस्थले हीदमनिवार्यम्। अतः ज्ञानेनोपस्थापितो गन्धो विशेषणतया भासते। तद्वत् 'येनेन्द्रियेण' इत्यादिन्यायेन विशेषणानुपलब्धौ च विशेष्यमात्रविषयिणी बुद्धिर्भवति। अभावग्रहणे किलानुपलब्धिस्सहकारिणी सर्वेषाम्। अतश्च तत्र जले न गन्धाभावग्रहणम्, किन्तु गन्धग्रहणाभावमात्रम्। गन्धग्रहणाभावो वा किंरूपः? इति चेत्, शून्यचत्वरग्रहणवत् केवलविशेष्यग्रहणरूपः। बुद्धिर्हि केवलमभावं न गृह्णीयात् कदापि, निर्विषयायास्तस्याः स्थातुमशक्यत्वात्। अत एवाभावविषयिणीति कल्प्यतामिति चेत्, अभावपदज्ञानेन जातं सांकर्यमिदम्। पदं विस्मृत्य तत्र ज्ञानं कीदृशमिति चिन्त्यम्। तत्राधिकरणेनैव बुद्धेः विषयलाभात् नान्यमपेक्षते बुद्धिः। अतोऽत्यन्ताभावोऽपि नातिरिक्तः। अत एवैतन्मते चतुर्थसामयिकाभावचर्चापि नोत्तिष्ठति; बुद्धेरेव सामयिकत्वात्॥

ननु तर्ह्यन्ततो ज्ञानाभावो वाऽतिरिक्तोऽङ्गीक्रियतामिति चेत्, अयि भोः! ज्ञानाभावः केन गृह्येत? ज्ञानस्वप्रकाशत्वपक्षे, मानसत्वपक्षे वा, ज्ञानाभावोऽन्यज्ञानरूप एवानुभूयेतेत्युक्तम्। अत एव 'न किञ्चिदहमज्ञासिषम्' इति सौषुप्तिकानुभवोऽपि निर्व्यूढतमः। निरूपाधिकज्ञानाभावस्तदधिकरणीभूतात्मस्वरूप एव। अत एव सुषुप्तौ सर्वज्ञाननाशात्, तदा आत्मस्वरूपमात्रप्रकाशः। अतोऽधिकरणमात्रज्ञानेनैवाभावव्यवहारनिर्वाहात्, अभावस्य स्वतन्त्रपदार्थत्वासंभवस्य प्रदर्शितत्वाच्चाभावो नातिरिक्तः पदार्थः॥

पुरतः शून्यं भूतलं यदा पश्यामः, तदा कश्चित् 'किं भूतले घटोऽस्ति?' इति पृच्छेच्चेत्, 'नास्ति' इति प्रतिवक्ति। पूर्वं प्रतियोगिस्मरणाभावेऽपि, अन्येन प्रतियोगिनः प्रसञ्जितत्वात्, तदभावमपि तदानीमेव गृह्णाति। एवं पटादिप्रश्ने कृतेऽपि पटाभावज्ञानमपि भवति। अतः पुरतः दृश्यमाने शून्यभूतले जगति वर्तमानानां सर्वेषामपि पदार्थानामभावात्, यदा यस्य वस्तुनः स्मरणम्, तदा तत्रैव तत्तदभावमपि पश्यति जनः। एतेन ज्ञायते शून्यभूतलज्ञानमितरसर्वपदार्थाभावज्ञानरूपमिति। एवञ्चेतरपदार्थज्ञानाभावः शून्यभूतलज्ञानरूप एव, नातिरिक्तः कश्चिदिति। ननु भोः! अभावोऽधिकरणात्मक इत्युच्यते। इदानीं शून्यभूतलज्ञानरूप इत्यप्युच्यते। कथमेवम्? अयि भोः! वस्तुतस्तु ज्ञानाभावः पर्यवसानतः तदधिकरणजीवात्मरूप एव। जीवात्मनि परिणामविशेषस्यादर्शनादनुपलब्ध्याऽभावज्ञानं भवतीति न कश्चिद्दोषः॥

अलमेतादृशैर्व्यर्थैर्विचारैश्शक्तिनाशकैः। ततोऽपि चिन्त्यतां श्रीशः श्रेयसे भूयसे सदा॥
अत एव कणादेनाप्यभावो नैव कीर्तितः। तस्यापदार्थरूपत्वमसकृच्च प्रदर्शितम्॥

ननु तर्ह्यनन्तरं कथं निरूपयेदभावं महर्षिः? इति चेत्, अभावो वर्तत एव, अतिरिक्तो नास्तीत्येव वदामः। यद्यभावस्तत्संमतोऽतिरिक्तः पदार्थः, कथं प्रथमं न गणयेत्। अथवा समवायानन्तरमेव कुतो

**[अभावस्यावस्थारूपत्वेऽनुपपत्तिपरिहारः]**

**491. द्रव्येष्वेव ह्यवस्था क्रमत उपनता जन्मभङ्गादिरूपा**
**नावस्थानामवस्थान्वय इति न भवेत् कार्यतादीति चेन्न।**
**ता एवान्योन्यवैरव्यतिभिदुरतयाऽन्योन्यनाशादिरूपाः**
**चिन्त्यो जन्मादिषट्कव्यवहृतिविषयस्तत्तदर्थे यथार्हम्॥ १३१॥**

**[अभावो न तुच्छरूपः]**

**492. नाभावः कारणानां कथमपि विषयो निःस्वभावत्वयुक्तेः**
**नाशोऽप्यस्यानपेक्ष्यः स्वयमसत इति प्रागभावादि नित्यम्।**

---

न निरूपितोऽभावः। अर्थसमाजरूपत्वमेवाभावस्य तस्यापि संमतत्वमिति तत्प्रकरणपरिशीलने स्पष्टं स्यादित्यलमतिविवादेन शास्त्रान्तरसंबद्धेन॥ १३०॥

प्रागभावप्रध्वंसाभावयोः 'प्रागूर्ध्वानाद्यनन्तप्रतिनियतदशासन्तति' रूपता ह्युक्ता। तर्हि तत्र दशानामागन्तुकत्वं वक्तव्यम्। तथाचावस्थानामुत्पत्तिनाशावनिवार्यौ। अवस्थानां नित्यत्वे हि सर्वं नित्यमेव स्यात्। तथा च तवाप्यनवस्थाऽनिवार्येत्याशङ्क्य समाधत्ते—**द्रव्येष्वित्यादि**। **जन्मभङ्गादिरूपा**=अस्ति, जायते, वर्धते, विपरिणमते, अपक्षीयते, नश्यति इति प्रतिपादिता **षड्भावविकार**पदवाच्या अवस्था द्रव्येष्वेव हि **क्रमतः**=क्रमादेव **उपनता**=प्राप्ता गच्छत्यागच्छति च। इमा अवस्थाः नित्याः? उतानित्याः? नित्यत्वं न संमतम्। अनित्यत्वे च तासामुत्पत्तिविनाशौ वाच्यौ। अत्रापि पुनः उत्पत्तेरुत्पत्तिरङ्गीकार्या। नो चेत्, उत्पत्तिर्नित्या स्यात्। तथा च भवतोऽप्यनवस्था। अतश्च—**अवस्थानाम्**=जन्मादीनाम् **अवस्थान्वयः**=जन्मादिमत्त्वम् **न इति कार्यतादि**=उत्पत्तिनाशादिकं **न भवेत्** कस्यापि लोके **इति चेत्**—**न**। कुतः? **ता एव**=उक्ताः षड्विधा अवस्था एव **अन्योन्यवैरव्यतिभिदुरतया**=परस्परं विरोधवत्त्वात् **अन्योन्यनाशादिरूपाः**=परस्परं जन्मोत्पत्त्यादिरूपाः भवन्ति। एकावस्थाया निवृत्तिः समनन्तरावस्थाया उत्पत्तिरूपा भवतीति, अवस्थानां प्रत्येकमुत्पत्तिनाशादिप्रश्न एव नास्ति, अवस्थानां द्रव्यत्वाभावात्। अयमर्थो ग्रन्थादावेव (जड.25) विस्तरेण न्यरूपि। अतश्च **जन्मादिषट्कव्यवहृतिविषयः**=जन्मादिषड्विधव्यवहारविषयः जन्मादिः **तत्तदर्थे**=तत्तदाश्रये द्रव्ये **यथार्हम्**=यथायोग्यम्=यथानुभवम् **चिन्त्यः**=सुधीभिरवगन्तव्यः। अतोऽवस्थानां प्रत्येकं जन्मादिप्रश्न एव नोदेतीति नानवस्था, न वा कार्यताया हानिः॥ १३१॥

अभावस्य शशशृङ्गवत्तुच्छत्वात्, तस्य भावरूपत्वसमर्थनमयुक्तम्। प्रत्युत सर्वोऽपि भावोऽभावरूप एवेति वदतां सर्वापलापवादमनूद्य निराकरोति—**नाभाव** इत्यादि। **अभावः**=अभावाख्यं तत्त्वम् **निःस्वभावत्वयुक्तेः**=स्वतः स्वभावरहितत्वात् **कारणानां विषयः**=कारणगोचरः=कारणजन्यः कथमपि न। वस्तूनां स्वभावः खलु त्रिविधो वर्ण्यते—किञ्चित् **परतन्त्रस्वभावम्**, किञ्चित् **परिनिष्पन्नस्वभावम्**, किञ्चित् **परिकल्पितस्वभावमिति**। आद्यः **परिणामवादः**, द्वितीय **आरम्भवादः**, तृतीयो **विवर्तवादः**।

**स्वाभावग्रस्तमेतन्निखिलमपि जगन्निःस्वभावं ततः स्यात्**
**मैवं; भावान्तरात्मन्यधिकवपुषि वा तत्स्वभावत्वदृष्टेः ॥ १३२ ॥**

**[तत्त्वविभागसमर्थनम्]**

493. **एतावन्तः पदार्थाः न तु पर इति तत्सिद्ध्यसिद्ध्योरयुक्तम्**
**मैवं; 'योऽस्त्येष सिद्धान्न पर' इति वचस्येष दोषो न तु स्यात्।**
**सत्येव स्यात् तवापि ह्यधिकमनधिकं वेति शङ्कावकाशः**
**नैवं चेत् नैव शङ्का; न च परिहरणं; भित्तिलाभे हि चित्रम् ॥ १३३ ॥**

---

उक्तत्रिविधस्वभावरहितत्वमेवाभावस्य स्वरूपम्। अत एव **निःस्वभावमि**त्युच्यते। एवं निस्स्वभावत्वादेव कारणजन्यो न भवत्यभावः। अत एव—**स्वयम् असतः**=निस्स्वभावस्य **अस्य**=अभावस्य **नाशोऽपि अनपेक्षः**=असंभवी। **इति**=इति हेतोः **प्रागभावादि**=प्रागभावः प्रध्वंसाभावश्च **नित्यम्**। प्रागभावस्य नित्यत्वादेव भावानामुत्पत्तिर्न भवति। प्रागभावध्वंसः खलूत्पत्तिः। एवं ध्वंसस्य नित्यत्वादेव निस्स्वभाव-त्वमेव तुच्छत्वमित्युच्यते। अतश्च **एतत् निखिलमपि जगत् स्वाभावग्रस्तम्**=स्वाभावपर्यवसायि (जड.28)। **ततः**=तस्मात् **निखिलमपि**=सर्वमपि **जगत् निस्स्वभावं स्यात्**। अत एव सर्वं शून्यम्, तुच्छमित्युच्यते। अतश्चाभावस्य भावरूपता कथमिति चेत्—**मैवम्**। कुतः? अभावे **भावान्तरात्मनि**=भावरूपे सति वा, **अधिकवपुषि वा**=अतिरिक्तरूपे वा सति **तत्स्वभावत्वदृष्टेः**=तस्यापि कस्यचित् स्वभावस्य **दृष्टेः**=अनुभवात् **मैव**मित्यन्वयः। निस्स्वभावत्वमेव यदि स्वभावः, सोऽपि कश्चन स्वभाव एवेति कथं निस्स्वभावोऽभावः। यदि निस्स्वभावत्वं न स्वभावः, तर्हि उक्तत्रिविधस्वभावेष्वन्यतमेन भाव्य-मेवेति, इदानीमपि निस्स्वभावत्वं विरुद्धं भवेत्। अतो निस्स्वभावं तत्त्वमिति कथनमेव स्ववचनविरुद्धम्। बुद्धिर्हि निर्विषया न कदापि तिष्ठेत् अतो विश्वं सर्वं स्वस्वभावेन युक्तमेवेति निःस्वभावत्ववादोऽ प्रामाणिकः ॥ १३२ ॥

एवं द्रव्याद्रव्यविभजनपूर्वकं सर्वं तत्त्वं निरूप्य, ग्रन्थं समापयितुकामः, अन्तिमामेकां शङ्कामुपक्षिप्य समाधत्ते—**एतावन्त** इति। **पदार्थाः एतावन्त एव, न परः**=अन्यो नास्ति इति खलु भवतोपसंहर्तव्यो विचारः। **इति**=इत्येवं शपथः **तत्सिद्ध्यसिद्ध्योः**=अतिरिक्तपदार्थसत्त्वेऽसत्त्वे वा **अयुक्तम्**। अतिरिक्त-सत्त्वे शपथः विफलः। अतिरिक्ताभावे किमर्थस्तर्हि शपथः? अत एवमभिधानं द्वेधापि न युज्यते इति वैतण्डिकाक्षेपं—समाधत्ते=**मैव**मिति। कुतो मैवमित्यत्र, तात्पर्यं वक्ति—**योऽस्ति लोके कश्चित् पदार्थः**, एषः **सिद्धात्**=अत्र निरूपितात् **न परः**=नातिरिक्तः, उक्तेष्वेवान्तर्भूत **इति वचसि तु**=अभिधाने तु **एषः दोषः**=सिद्ध्यसिद्धिभ्यां विरोधः **न स्यात्**। एवमेव सर्वैरपि शास्त्रकारैः वक्तव्यम्। अन्यथा भवतोऽपि वचनविरोधप्रसङ्गः। कथम्? **तवापि**=एवमाशङ्कितुः तवापि **सत्येव हि**=एकस्मिन् पदार्थे प्रमाणप्रतिपन्ने सत्येव हि, अथवा, सद्रूप एव वस्तुनि हि, **इदम् अधिकम्**=अतिरिक्तम्, **अनधिकं वा?**=अनतिरिक्तं वा?

[एतद्ग्रन्थवैशिष्ट्यम्]

494. **इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं**
**विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरो वाङ्मयं च।**
**यन्नास्मिन्, क्वापि नैतत्, क्षममिह कुहकैरिन्द्रजालं न तैस्तैः**
**एकं तत् सर्वसिद्ध्यै कलयत हृदये तत्त्वमुक्ताकलापम्॥ १३४ ॥**

**इति शङ्कावकाशः**=शङ्काया अवकाशः। सिद्ध्यसिद्धिभ्यां व्याघातमापादयन् त्वम् उक्तपदार्थातिरिक्तमेकं सिद्धवत् कृत्वा पृच्छसि, उतासिद्धं कृत्वा पृच्छसि? इति प्रश्ने, यदि प्रथमः कल्पः, तदा न शङ्का, किन्तु व्याघातः। यदि द्वितीयः कल्पः, तदा धर्मिण एवाभावात् कस्यातिरिक्तत्वमनतिरिक्तत्वं वा शङ्क्यम्? अतः, अधिक्षेपो न शक्यः। शङ्का तु स्यात्। तस्याश्च 'योऽस्ति, एषः सिद्धान्न परः' इत्येवोत्तरम्। 'यत्र प्रामाणिकम्, पदार्थत्वं तत्रोक्तान्तर्भूतत्वम्' इति व्याप्तिः। **एवं न चेत्**=एवनङ्गीकारे, **नैव शङ्का, न च परिहरणम्**=नैव परिहारः, उभयमप्यर्थशून्यम्। कुतः—**भित्तिलाभे हि**=आधारे सिद्धे हि **चित्रम्**=तदाधारीकृत्य विचारप्रवृत्तिः। आधारस्यैवाभावे, विचारोऽपि न प्रवर्तत एव। स्वस्यैकं पक्षमेवानङ्गीकृतवन्तं सर्वापलापवादिनं प्रतीदमुत्तरम्॥ १३३ ॥

स्वकृतेर्वैशिष्ट्यं प्रदर्शयितुमाचार्यसार्वभौमोऽयम् नायं ग्रन्थः केवलवाचाटताफलरूपः, परग्रन्थवदित्याह—**इत्थमित्यादि**। **श्रीवेङ्कटेशः**=श्रीवेङ्कटनाथनामायं ग्रन्थकारः **इत्थम्**=एतावतोक्तप्रकारेण **श्रुतम्**=गुरुमुखात् श्रुतं **जगन्मूलकन्दम्**=जगद्योनिभूतम् मुकुन्दम् सविशेषं ब्रह्म **अमत**=मननमकरोत्। 'श्रोतव्यो मन्तव्यः' इति खलु श्रुतिः। अत इदं सर्वम् 'निदिध्यासितव्यः' इत्युक्तध्यानोपयोगितयैव कृतम्, न तु वाक्शोषणरूपम्। ननु प्रकृतिपुरुषविचारः कथं ब्रह्मविचारःस्यादित्यत्र—**विश्वं** जगत्सर्वमिदं प्रकृतिपुरुषात्मकम् **यस्य मुकुन्दस्य विस्तारः**, बीजाद्वृक्षस्येव। **वाङ्मयं च**=शब्दप्रपञ्चश्च **यस्य विस्तरः मुनिभिः**=दृष्टपरावरैः पराशरादिभिः **अभिदधे**='यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम्' 'जगतोऽस्य जगच्च सः' इत्यादि। यद्यपि श्रुतिरेव वक्ति ब्रह्मणस्सर्वात्मकत्वम् 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्'(छां.8-1-3) 'इदं सर्वं यदयमात्मा' (बृ.4-4-6) 'सर्वं खल्विदं ब्रह्म' (छा.3-14-1) इत्यादौ, अथापि बहुभिर्बहुधा व्याख्यातत्वादेषां स्पष्टार्थमुपबृंहणापेक्षित्वान्मुनिभिः इत्युपात्तम्। एतादृशसर्वात्मकब्रह्मप्रतिपादनात्—**अस्मिन् यत् नास्ति**=न निरूपितम् **एतत्**=एतादृशम् **क्वापि**=अन्यत्र कुत्रापि **न**=न लभ्येतैव, 'यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्' इतिवत्। इदं समनन्तरश्लोके व्यक्तीभविष्यति। अत एव **इह**=एतद्विषये **तैस्तैः कुहकैः**=कुटिलैः **इन्द्रजालम्**=मायाप्रदर्शनम् **न क्षमम्**=न शक्यम्। **तत्**=तस्मात् **सर्वसिद्ध्यै**=सर्वार्थसिद्धये **एकम्** इमम् **तत्त्वमुक्ताकलापम् हृदये कलयत**=धरत। ग्रन्थोपक्रमस्थः (जड.3) श्लोकोऽप्यत्रानुसन्धेयः॥

आचार्योऽयं हि विज्ञानमूर्तिना स्वयंवृतः, तमेव प्रार्थयामास 'अकम्पनीयान्यपनीतिभेदैरलंकृषीरन् हृदयं मदीयम्। शङ्काकलङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात्॥' (हय.स्तो.31) इति।

[ग्रन्थस्यास्य समग्रता]

**495. निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे**
**यत्रोदासि, द्विधा वा समगणि गहने सम्मते सन्मतीनाम्।**
**निष्क्रष्टुं कश्चिदन्यः प्रभुरिह भगवल्लक्ष्मणाचार्यमुद्राम्**
**अक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥ १३५ ॥**

[एतत्सिद्धान्तस्य वैशिष्ट्यम्]

**496. दृष्टेऽपह्नुप त्यभावात् अनुमितिविषये लाघवस्यानुरोधात्**
**शास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात्।**

---

अत एवानन्तरम्—'सर्वतन्त्रस्वतन्त्रः' 'वेदान्ताचार्यः' इति च देवैरेव मानितश्च । एतद्विश्वासेनैवेत्थं वदत्ययमाचार्यः इति ज्ञेयम् ॥ अत्र सर्वार्थसिद्धौ 'श्रीवेङ्कटेशः' इति वक्तृवैलक्षण्यम्, श्रुतममतेति सत्संप्रदाय-सिद्धत्वम्, जगन्मूलकन्दं मुकुन्दमिति विषयवैलक्षण्यञ्च एतत्प्रबन्धस्योपादेयतमत्वप्रतिष्ठापनायेति विवृतम् ॥

अथाप्यस्त्येव सर्वत्र मायाया वैभवं महत्। आसन्नेव हि चैद्याद्याः कृष्णस्य पुरतः खलु ॥
यमेव वृणुते देवस्तस्यैव सुलभो ह्ययम्। स्मर्तव्यमेतदप्यत्र प्रमादरहितैस्सदा ॥ १३४ ॥

'यन्नास्मिन् क्वापि नैतत्' इत्युक्तमेव विवृणोति—**निश्शेषामित्यादि** । **निश्शेषाम्**=समग्राम् **वस्तुवृत्तिम्**=वस्तूनां गतिम् **निपुणं** यथा तथा **इह**=अस्मिन् ग्रन्थे **क्वापि कोणे न्यस्यता**=निरूपयता **मया,** यत्र विषयलेशे उदासि वा, तथा यत्रक्वापि **सन्मतीनाम्**=प्रामाणिकानां महताम् संमते गहने विषये **द्विधा वा समगणि, इह**=एतादृशविषये **भगवल्लक्ष्मणाचार्यमुद्राम्**=भगवतो रामानुजस्य संमतिम्, राज्ञां संमतिसूचिका राजमुद्रा प्रसिद्धा, **निष्क्रष्टुम्**=निष्कर्षयितुम् **अक्षुद्राचार्यशिक्षाशतगुणितमतेः**= **अक्षुद्राणाम्**=महताम् आचार्याणाम् शिक्षया, अक्षुद्रेति शिक्षाविशेषणं वा, **शतगुणिता**=शतशः आहितगुणा **मतिः**, यस्य, तादृशात् अत एव **अप्रमत्तात्**=प्रमादावकाशरहितात् **मत्तः अन्यः कश्चित् न प्रभुः**=समर्थः न भवेत् इति गुरुशिक्षणाहितात्मविश्वासोक्तिः । यत्रोदासीत्यस्योदाहरणम्—'चिन्तासाफल्यमान्द्यात् श्रमबहुल-तया तत्र तद्ज्ञैरुदासि' (जड.15) इत्यादिकम्। द्विधा समगणि इत्यस्योदाहरणम्—नित्यसंसारिपक्षादि ॥

एवं हि तत्त्वं समयानुरूपं शक्यं हि वक्तुं त्ववदाम तावत्।
व्यक्तं भवेत्सर्वमपीह काल इत्याह वागीशवृतो गुरुस्सः ॥

एवं निगूढास्सत्यार्था हृद्गताः, तदनुग्रहात्। व्यक्तीकृतास्तु समये सप्रमाणं सतां मुदे ॥ १३५ ॥

एतद्दर्शनस्येतरदर्शनापेक्षया वैशिष्ट्यं प्रदर्शयति—**दृष्ट** इत्यादि । प्रमाणानां परस्पराविरोधेन विषयव्यवस्थापनमेतद्दर्शनस्यासाधारणो विषय इति प्रदर्शयति—**दृष्टे**=प्रत्यक्षप्रतिपन्ने विषये **अपह्नुत्य-भावात्**=अपलापाकरणात् **अनुमितिविषये**=अनुमानगम्ये विषये **लाघवस्य अनुरोधात्**=अनुसरणात्, प्रत्यक्षे, वेदे च न लाघवान्वेषणसंभवः । **शास्त्रेणैव**=वेदेनैव **अवसेये**=अवगन्तव्ये विषये **विहतिविरहिते**=

**नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः**
**त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥ १३६ ॥**

**[एतद्दर्शनं देवोपज्ञम्]**

497. **हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष-**
**क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।**
**दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त-**
**त्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥ १३७ ॥**

---

प्रमाणान्तरप्रवृत्त्यवकाशाभावेन विरोधरहिते **नास्तिकत्वप्रहाणात्**=यथोक्तस्यैवाङ्गीकाराच्च **नः दर्शनम् निखिलतमः कर्शनम्** इत्यन्वयः । प्रत्यक्षमपि क्वचिद्व्यभिचरति ज्वालैक्यादौ । अनुमानं बहुप्रमादावकाशम् । शास्त्रमपि परस्परविरुद्धनानाव्याख्यानावकाशम् । एवं सति शब्दरूपं शास्त्रमेव बाधकम्, इतरे तु बाध्ये इति परोक्तिः कथम्? यत् सावकाशं तत् बाध्यम्, यच्च निरवकाशं तदेव बाधकम् इति निरपवादो बाध्यबाधकभावः प्रदर्श्यतेऽस्मिन् सिद्धान्ते । अनेन प्रमाणानां विषयव्यवस्थापनात्तेषां सौहार्दस्थापनात् एकेन नान्यस्यान्यथासिद्धिः, सांकर्यपरिहारश्चैतत्सिद्धान्ते । 'शब्देन' इति वक्तव्ये 'शास्त्रेण' इति कथनम्, निरवकाशत्वसूचनार्थम् । शास्त्रं हि विज्ञानरूपम् । एतत्सूचनायैव 'विहतिविरहिते' इत्यपि । एवं बाध्यबाधकभावस्य निष्कृष्टतया व्यवस्थापनात् एतद्दर्शनं निखिलतमःकर्शनक्षममित्यर्थः । संप्रदायवैशिष्ट्यप्रतिपादनाय—**नाथोपज्ञं प्रवृत्त**मित्यादि । इतरवेदान्तिनां नैवं संप्रदायशुद्धिरिति निश्चप्रचम् । अथ च **यामुनेयप्रबन्धैः**=सिद्धित्रयादिभिः **बहुभिः उपचितम्**=पोषितम् । **यतीन्द्रैः**=भगवद्रामानुजैः **सम्यक् त्रातम्**=सूत्रभाष्यरचनादिभिः रक्षितम्=प्रापितनिष्कृष्टशरीरम् । **नः दर्शनम् निखिलतमःकर्शणम्**=सर्वविधान्धकारनिरसनक्षमम् । इदन्तु दर्शनम् सर्वश्रुतीनां प्रामाण्यरक्षणेन सर्वविधान्धकारनिवर्तकसहस्रकिरणसदृशम् । परस्परविरुद्धभेदाभेदवादमन्तरैव भेदाभेदश्रुतीनां स्वार्थे प्रामाण्यप्रतिपादनात् सर्वोत्तमत्त्वमित्यादि ज्ञेयम् । अनेन 'परस्परविरुद्धभेदाभेदपक्षत्रयकक्षीकारेण क्षपणकपक्षनिक्षिप्तम्' इति कथनमज्ञानमूलकमवगन्तव्यमित्याशयः ॥

अनन्यप्रोक्ते गतिरत्र नास्तीत्येवं वदत्येव हि वेदमन्त्रे ।
बलेन तर्कस्य दुराग्रहादिमूलेन तत्त्वं प्रवदन्ति, हन्त! ॥ १३६ ॥

वस्तुतस्त्वेतद्दर्शनप्रवर्तकाचार्यो ज्ञानविज्ञानमूर्तिः श्रीहयग्रीव एवेत्याह—**हृद्येत्**यादि । हृत्पद्मेत्यादि दृप्तिरित्यन्तमेकं पदम् । '**हृत्पद्मसिंहासनरसिक**' इति हयग्रीवविशेषणात् हयग्रीवस्वयंवृतत्वं सूच्यते । तादृशस्य हयग्रीवस्य **हेषोर्मिघोषक्षिप्तप्रत्यर्थदृप्तिः**, अत एव **बहुगुणा** अत एव **हृद्या अस्मद्गुरूणां पङ्क्तिः जयति** । एतज्जयसूचकविशेषणम्—**दिक्सौधेत्**यादि । उत्तरार्धं सर्वमेकं पदम् । **दिश एव सौधाः**=दिगन्ता इति भावः । तेषु **आबद्धस्य जैत्रध्वजस्य पटपवनवेगेनैव निर्धूताः तत्तत्सिद्धान्तानां स्तोमरूपा तूलस्तबकाः** मार्गाच्छदका ये, तेषां **विगमेन व्यक्ता सद्वर्तनी** यस्याम्, तादृशी गुरुपङ्क्तिः **जयति** । वेदप्रवर्तकाचार्येण हयग्रीवेणैवोपदिष्टोऽयं सिद्धान्त इत्याशयः । हयग्रीवःखलु विज्ञानमूर्तिः ।

[कुतार्किकनिन्दा]

498. **अध्यक्षं यच्छ्रुतं वा लघु भवति तदित्यादिमो वादिमोहः**
**तत्त्वोदर्का न तर्कास्तदिह जगति किं मेधया साधयामः ।**
**तिष्ठत्वेतत्; लघिष्ठाः कतिचन दधतो मानसे मानसेतुं**
**हंहो सभ्यामसभ्यस्थपुटमुखपुटा दुर्जना निर्जयन्ति ।। १३८ ।।**

[एतद्ग्रन्थस्यावश्याध्येयत्वम्]

499. **स्यादित्थं शिक्षितार्थो य इह यतिपतिच्छात्रहस्ताग्रनृत्य-**
**न्नाराचन्यासरेखासहचरितमतिः सर्वतन्त्रस्वतन्त्रः ।**

---

अनुभवस्वरूप एव यदि विप्रतिपत्तिः, तर्हि विज्ञानेनैवानुभवविश्लेषणं कार्यम् । विज्ञानं च जगतोऽस्य ब्रह्मोपादानत्वम्, ब्रह्मशरीरत्वं च प्रतिपादयति । शरीरशरीरिभावमूलकानुभवो हीहैव भवितुमर्हति, **वामदेवप्रह्लादशठकोपमुन्यादी**नां तथा दर्शनात् । इयमेव जीवन्मुक्तावस्थेति परैरुच्यते । अत्र वक्तव्यं सर्वं पूर्वमेव(जीव.73) गतम् । अतोऽयमेव सिद्धान्तः पूर्णः, श्रौतः, वैज्ञानिकश्चेत्याशयः ।। १३७ ।।

वैतण्डिकान् **खण्डनकारादीन्** स्मरन् निर्वेदादाह—**अध्यक्षमित्यादि** । **अध्यक्षम्**=प्रत्यक्षम् **श्रुतम्**=शास्त्रम् । प्रत्यक्षं वा श्रुतिर्वा **यत्** तत् **लघु**=अतिदुर्बलम् **भवति इति आदिमः**=प्रथमः **वादिनाम्**=हैतुकानामयं **मोहः**, हैतुकाः खलु प्रत्यक्षापेक्षयाऽनुमानप्राणाः । द्वितीयस्तु मोहस्तर्क एव सर्वश्रेष्ठ इति । वस्तुतस्तु—**तर्काः न तत्त्वोदर्काः**=न तत्त्वनिर्णायकाः। प्रमाणानुग्राहकःखलु तर्कः, न स्वयं प्रमाणम् । **तत्**=तस्मात् एवं सति **इह जगति** केवलया **मेधया किं साधयामः**, न किञ्चित् । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' इति ह्याह भगवती श्रुतिः । तृतीयस्तु महामोहोऽतीव शोचनीयः। कस्सः? **एतत्**=उक्तमुभयमपि **तिष्ठतु । लघिष्ठाः कतिचन मानसे मानसेतुम्**=गर्वस्य परां काष्ठाम् **दधत एव असभ्यस्थपुटमुखपुटाः**=असभ्यशब्दपूर्णमुखाः **दुर्जनाः सभ्यानपि** वैतण्डिकवाग्झरीभिः **निर्जयन्ति किल! हंहो!** इत्यत्यन्तनिर्वेदसूचकमव्ययम् । एतादृशदुस्तार्किकनिरसनायैवास्याचार्यस्यावतार इति तदीयचरित्रेण ज्ञायते । अथवा—**मानसेतुम्**=परमात्मानम्, तत्त्वत्रये स एव मानस्थाने वर्तते । माता तु चित् । मेयम् अचित् । तं सर्वप्रमाणपारभूतम्, मानसे दधत इति सभ्यविशेषणम् ।।

विशुद्धविज्ञानघनस्वरूपस्वयंवृतो यद्यपि तादृशोऽसौ ।
अथापि कालानुगुणं हि सर्वं न्यरूपि यत् प्रेरणयैव तस्य ।।
तस्यास्य संपूर्तिरभूदिदानीं वेदेषु सर्वेषु निगूढमन्तः ।
प्राकाशि तस्यैव कृपालवेन किञ्चिद्यथाशक्त्यनघं रहस्यम् ।।
अर्थं बुद्धिञ्च शब्दञ्च पृथक्कृत्य तु चिन्तितुम् । शक्नोति यस्तु, तेनैव ज्ञातुं शक्यं रहः क्रमात् ।। १३८ ।।

एवं सभ्यानप्यसभ्याः कुतार्किका यतो निर्जयन्ति, अत एवायं ग्रन्थो जिज्ञासुभिरध्येय इत्याह—**स्यादित्यादि । यःकश्चित् इत्थम् इह**=अस्मिन् ग्रन्थे **शिक्षितार्थः, सः यतिपतिच्छात्रहस्ताग्रनृत्यन्नाराच-**

**शुष्कोपन्यासशिक्षापटिमकटुरटद्वैरिविद्वत्करोटी-**
**कुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु ॥ १३९ ॥**

**[ग्रन्थोपसंहारमङ्गलम्]**

500. **गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना**
**क्षीणा काणादवाणी द्रुहिणहरगिरस्सौरभं नारभन्ते ।**

**न्यासरेखासहचरितमतिः सर्वतन्त्रस्वतन्त्रः स्यात्**=भवेदेव असौ । **शुष्केत्यादि क्रीडमित्यन्तमेकं** पदम् । **शुष्कोपन्यासः**=निरर्थकशब्दजालजल्पनम्, तस्य **शिक्षायाः पटिमा**=पाटवं, तेन कटु यथा तथा **रटन्तः**=जल्पन्तः ये **वैरिविद्वांसः**=प्रतिपक्षविद्वासः तेषाम् **करोटीषु**=शिरस्सु **कुट्टाकक्रीडा** यस्य, तादृशम् **अष्टापदकटकम्**=सुवर्णकटकम् **वामपादे बिभर्तु** । कुतर्कवादीन् जित्वा, तद्द्योतकं सुवर्णकटकं वामपादे **बिभर्तु**=धरतु । तत्काले एतादृशी पद्धतिरासीदिति श्रूयते । तादृशविद्यावान् भवेदेतद्ग्रन्थाध्ययनेनेत्यर्थः । बिभर्तु इति परेभ्यः कथयत्ति । तेन स्वस्य तदपेक्षाभावः कथितः ॥ १३९ ॥

परमगुरोः स्मरणमङ्गलेन ग्रन्थमुपसंहरति—**गाथेत्यादि** ।**अत्रेदं तत्त्वम्**—वेदान्तोदितब्रह्मापरोक्ष्यस्य **परा** काष्ठा 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति.... यत्र त्वस्य सर्वमात्मैवाभूत् केन कं पश्येत्' इति श्रुत्या मौनमेवेति बहवो मन्यन्ते । इदमेव **निर्विशेषाद्वैतम्** । परं त्वितोऽप्यस्त्युत्तमा काष्ठा, यां तु 'त एते भगवद्रूपं विश्वं सदसदात्मकम् । आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन्महीम् ॥' (भाग.11-2-22) इत्यद्भुतं वर्ण्यते विलक्षणोऽनुभवः ।**इदमेव सविशेषाद्वैतम्**। 'आत्मनोऽव्यतिरेकेण जगत्सर्वं पश्यन्तः महीं व्यचरन्' इत्युक्तमवधेयम् । 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' (छा.8-1-3) 'पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि' इत्यदिश्रुतिसिद्धमिदम् । अतस्सविशेषाद्वैतमेव पूर्णदर्शनम् ॥

यद्यपि श्रीशङ्कराचार्याः वेदबाह्यनिरसनार्थमेव बहुधाऽयतन्त । तथापि माध्यमिकानां प्राबल्यात् स्पष्टं वैदिकपक्षं प्रकटयितुं नाचीकशन् । तच्छिष्यास्तु पूर्ववासनातः न सम्पूर्णमुक्ता अभूवन् । अतः बौद्धवैदिकसांकर्यमेव अन्ववर्तत । एतत्परिहारार्थमेव भगवद्रामानुजाचार्याणामवतार इत्येव तटस्थसाधूनां निर्णयः ॥

आरब्धं शङ्कराचार्यैः यद्वैदिकमतावनम् । समापितं लक्ष्मणार्यैः तदित्येव तु साधवः ॥
पुनःखण्डनकारेण श्वपुच्छीकृतमाग्रहात् । ऋजूकृतं पुनस्सर्वमाचार्यैरेभिरेव हि ॥

तदेतत्सूचयत्याचार्योऽस्मिन् श्लोके—**'भद्रवेदीं त्रिवेदीम्'** इत्युक्तवेदस्य तत्तादृशं महत्त्वं हृदि निधाय । वेदो हि ज्ञानविज्ञाननिधिः, तत्रानुपादेयांशो न कोऽपिति वैदिकाग्रेसराः । अत एव भगवद्रामानुजैः 'वैदार्थसंग्रहः' व्यरचि, न वेदान्तार्थसंग्रहः । **जगति त्रिवेदीम्**=वेदत्रयरूपाम् **भद्रवेदीम्**=मङ्गलपीठम् वेदप्रामाण्यप्रतिष्ठापनपीठम् **यतिपतौ**=भगवद्रामानुजे वेदानां समग्राणामपि प्रामाण्यस्थापनाचार्ये **भजति**=अलंकुर्वति, **ताथागतानां गाथा**=बौद्धानां वादः **गलति**=स्वयमेव दूरं गता । **कापिली गमनिका**=सांख्यमार्गः, **क्वापि लीना**=लयं गता । **काणादवाणी**=वैशेषिकस्य कणादस्य वाणी **क्षीणा** बभूव ।

क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवात् दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ १४० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु तत्त्वमुक्ताकलापे

## अद्रव्यसरः संम्पूर्णः

## तत्त्वमुक्ताकलापः सम्पूर्णः

**द्रुहिणहरगिरः**=**द्रुहिणस्य**=हिरण्यगर्भस्य **हरस्य**=पशुपतेश्च गिरः=योगशास्त्रपाशुपततन्त्रे **सौरभं नारभन्ते**=स्वगन्धं न प्रसारयन्ति । **कौमारिलोक्तिः**=कुमारिलोक्तभट्टमतम् **क्षामा**=क्षीणाऽभूत् । **गुरुमतम्**=जन्मीमांसकमतम् **गौरवात्**=गुरुत्वादेव **दूरवान्तम्**=दूरं गतम् । एवं बौद्धैराकुलितस्य वेदप्रामाण्यस्य पुनःप्रतिष्ठापने प्रयतितवतां प्रयत्ना न संपूर्णफलेग्रहयोऽभूवन् । एवं सति **शङ्करादेः**=शङ्करः आदिः येषाग्, अतद्गुणसंविज्ञानो बहुव्रीहिः, शाङ्कराणां **का शङ्का** वेदप्रामाण्यरक्षणे? यत एतेऽपि पूर्ववासनया तन्मार्गमेवान्वसरन् । अत एव **खण्डनकारादयः** वेदबौद्धागमयोस्समानतामप्युदघोषयन् ॥ १४० ॥

बौद्धवैदिकसांकर्यं यदभूद्वासनावशात् । तदेवं तत्परिहृतं वेदमूर्तेरनुग्रहात् ॥
गहनेऽध्यात्मविज्ञाने स्युःसोपानान्यनेकशः । अत एव किल प्रोक्तमेवं भगवता स्वयम् ॥
'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥'
कश्चित्तु तत्त्वतो वेत्तीत्युक्त्या पश्यत सूचितम् । **अन्धस्पृष्टगजन्यायात्** पक्षभेदास्तु दुस्त्यजाः ॥
पूर्णमध्यात्मविज्ञानं यस्य स्यात्स तु शक्नुयात् । वेत्तुं सर्वान् पक्षभेदान् असंकीर्णं सकारणम् ॥
लक्ष्मणार्योऽत एवायं धीरो **वेदार्थसंग्रहे** । विकल्प्यापि च भेदादीनुदासीन इवाभवत् ॥
मङ्गलं शठकोपाय यतिराजाय मङ्गलम् । मङ्गलं वेंकटेशाय विश्वरूपाय मङ्गलम् ॥

इति करतलामलकीकृतपरावरतत्त्वसर्वरहस्य-अनवधिकातिशयज्ञानविज्ञानसंपन्न-विदितसकलयोगविद्यारहस्य-श्रीश्रीरङ्गविष्णुभगवतः अपारकरुणापूरवर्षप्रशान्तान्त-रङ्गस्य नव्यमङ्गलाभिजनस्य वरदार्यस्य कृतिषु तत्त्वमुक्ताकलाप-व्याख्यायां सर्वङ्कषाख्यायाम् अद्रव्यसरःसम्पूर्णः

## संपूर्णा सर्वङ्कषाव्याख्या

**ग्रन्थश्च सम्पूर्णः**

कवितार्किकसिंहाय कल्याणगुणशालिने । श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥



# श्लोकानुक्रमणिका



# प्रमाणानुक्रमणिका



# नामपदसूची



# उदाहृताः न्यायाः





---

[1]कस्मिंश्चिद्ग्रामे कश्चिदेकादश्यां ताम्बूलं चर्वन्तमाप्तं पश्यन्नपृच्छत्। 'किं कुर्याम्? प्रातरेवाद्यातिक्षुत्पीडित आम्लभूयिष्ठं पर्युपितमन्नं भुक्तवावान्। तत् न जीर्णमभूत्। तदर्थं ताम्बूलं चर्वितम्' इत्युत्तरं ददौ। 'अये! किमिदम्? एकादश्यां पर्युषुपितान्नभोजनम्?' इति पुनः पप्रच्छ स आप्तः। 'तद्वा? अद्यं प्रातः भूमिमर्षणं कर्तव्यमभूत्'...... । इति निषिद्धस्योपरि निषिद्धाधरणवत्, अबद्धस्योपर्यबद्धाचरणदृष्टान्तकथेयम् ॥

[2]जात्यन्ध्यस्य शिशुः ममार। तच्छ्रवणे 'कथं ममार शिशुः' इति पप्रच्छ। 'क्षीरपानसमये क्षीरं श्वासनालप्रविष्टम्। अतो मृतः' इत्युत्तरे, पुनः पप्रच्छ 'क्षीरं वा, तत्कीदृशम्? तत्तु श्वेतवर्णं द्रव्यम्'। 'श्वेतवर्णं वा तत्कथं स्यात्?' 'तद्वा, तत् बकवत्'। 'बकः कथं स्यात्'। आप्तः स्वकरं बगवत् कृत्वा 'एवं स्यात्' इति



प्रदर्शयामास । जात्यन्धं तत् स्पृष्ट्वा 'एतादृशं वस्तु शिशोर्मुखं प्रविष्टं वा' इत्यपृच्छत् । दृष्टान्तवर्धने कियानार्थः स्यादित्यत्रायं न्याय उदाहरि ॥

ॐ

# कृतज्ञतासमर्पणम्

किं वदामि ? किं च लिखामि ? महतां विषये ।
यतो हि वीणापाणी सरस्वत्यपि न पारं यान्ति तद्गुणगणवर्णने ।
किमल्पज्ञोऽहं शक्नोमि अगाधमहाज्ञानसिन्धूनाम् , महागुरुणां,
भगवद्गुणगणमण्डितानां 'पण्डितरत्नम्' के. एस. वरदाचार्याणाम्
विषये इषद्वाविवेचयितुम् ?
महीशूर समीपे मेलुकोटे नामके ग्रामे वर्षपञ्चकमुषित्वा सांख्यकारिका,
उपनिषदः, तत्त्वमुक्ताकलापः एवं ब्रह्मसूत्रभाष्यादि ग्रंथानां अध्ययनं कृतं
तेषामेव पारावारासीमकृपया । तदेव मम सुमहत्सौभाग्यम् । तेन च
आत्मानं धन्यं मन्ये । तेषां गुरुवर्याणां
चरणनखमण्डलनिर्गततेजोकिरणप्रभावेण 'मद्हृत्स्थः गाढान्धकारः
विलयन्तु' इत्येव ममेष्टदेवस्य श्रीस्वामिनारायणभगवतः चरणकमलयोः
सन्निधौ असकृत् सम्प्रार्थना । तदृणात् विनिर्मुक्तिः
कोटिकोटिब्रह्माण्डान्तर्गतसंपत्तिसमर्पणेनापि न पूर्तिमेतीति जानन्
सप्तपर्वदास्याभिकांक्षी अहं 'नमः परम ऋषिभ्यः' 'नमः परम ऋषिभ्यः'
'नमः परम ऋषिभ्यः' इति मात्रं मदर्थं कृतभूरिपरिश्रमाणां
विधागुरुवर्याणां चरणकमलयोः सन्निधौ साष्टांगं
नतिततिमूलां कृतज्ञतां प्रेमपुरस्सरं समर्पये । सदैव अभिवर्षतु
मदुपरि परावरज्ञानां कृपामृतवृष्टिरिति च
अभ्यर्थये । अस्तु.....

भवदीय
सप्तपर्वदास्याभिकांक्षी
शास्त्री निर्मलदासजी स्वामी
(वेदांताचार्यः)
श्री स्वामिनारायण गुरुकुल
राजकोट-गुजरात